## साम्प्रतमिह लभ्या ग्रन्थाः

1 श्रीभाष्यम्—श्रुतप्रकाशिकायुतम् (संपुटद्वयम्) ₹ 50-00
2 श्रीभाष्यम्—भाष्यार्थदर्पणसहितम् ( ,, ) 25-00
3 परमार्थभूषणम् (शतदूषणीमण्डनम्) 25-00
4 वेदान्तदीपः (मूलमात्रम्) 4-00
5 वैशेषिकदर्शनम्—रसायनसहितम् 7-00
6 यादवाभ्युदयः (अप्पय्यदीक्षितसंस्कृतव्याख्या-द्राविडानुवादसहितः) 40-00
7 पादुकासहस्रम् (संस्कृतव्याख्या-द्राविडानुवादसहितम्) 35-00
8 संकल्पसूर्योदयः (संस्कृतव्याख्या-द्राविडानुवादसहितः) 30-00
9 सुभाषितनीवी (संस्कृतव्याख्या-द्राविडानुवादसहिता) 15-00
10 हंससंदेशः (संस्कृतव्याख्यासहितः) 4-00
11 हंससन्देशः (संस्कृतव्याख्या-द्राविडानुवादसहितः) 8-00
12 निक्षेपरक्षादयो रक्षाग्रन्थाः 10-00
13 सेश्वरमीमांसा—मीमांसापादुका च (व्याख्यया सह) 10-00
14 श्रीमद्भगवद्गीता (श्रीरामानुजभाष्य-श्रीदेशिकतात्पर्यचन्द्रिकासहिता) 35-00
15 केनाद्युपनिषद्भाष्यम् (पञ्चदशोपनिषदः, श्रीसूक्तपुरुषसूक्ते च) सपरिष्कारम्— 20-00
16 ईशावास्योपनिषद्भाष्यम्—विस्तृतव्याख्यानसहितम् 5-00
17 उपयुक्तपारायणम् 2-50
18 लघ्वाह्निकम्—हेयोपादेयदर्पणाख्य (श्रीमद्वररामानुजस्वामिकृतम्) 2-00
19 सिद्धित्रयम्—श्रीमद्यामुनाचार्यकृतं (संस्कृतव्याख्यान-आंग्लानुवादसहितम्) 12-50
20 तत्त्वमुक्ताकलापः सर्वार्थसिद्धिश्च (विशदव्याख्यया सह) 45-00
21 श्रीमद्भगवद्गीता—द्रमिडभाषादर्शितसर्वपदार्थविशेषार्था 20-00
22 तर्कसंग्रहः—सुखप्रवेशिनीसहितः 1-00

—o—o—

23 द्राविडदिव्यप्रबन्ध व्याख्यानानि च पट्टिकान्तरे ।

* * * * *

पुस्तकप्राप्तिस्थानम्— उभयवेदान्तग्रन्थमाला
25, नाथमुनिवीथी,
ति-नगर्, मद्रास्-17

श्रीः

# तत्त्वचिन्ता

भोक्तृभोग्यात्मना परिदृश्यमानं जगत् शोधने कतितत्त्वमयं स्यादिति चिन्तयितुं परीक्षकाः प्रवृत्ताः परश्शतान् सिद्धान्तान् प्रकटयन्ति। तदुक्तम्, "आवापोद्वापतः स्युः कतिकति कविधीचित्रवत् तत्तदर्थेष्वानन्त्यादस्तिनास्त्योरनवधिकुहनायुक्तिकान्ताः कृतान्ताः" इति। एतच्चिन्तनञ्च भोक्तॄणां प्रकृष्टभोगप्राप्तिपथविज्ञानायैव। परं भोगस्य सांसारिकस्य विषमधुसंसृष्टान्नसमानभोग्यायत्ततया हेयत्वमेव चार्वाकेतरेषां परीक्षकाणां बुद्ध्यारूढमासीत्। अतो वेदबाह्याः वैदिकाः सर्वेऽपि बौद्धजैनसांख्यतार्किकमीमांसकवेदान्तिप्रभृतयः एतच्छोधनफलं दृश्यमानभोग्यजातात् भोक्तॄणां निवर्तनेन शान्तपदप्रापणमेवेति एकवाक्यतां प्रतिपन्नाः। तदेव निःश्रेयसमिति निगद्यते। देहातिरिक्तानां नित्यानामात्मनां तथा ऐहिकभोग्यातिशयितानां पारलौकिकानां फलानां सद्भावनिश्चयात् यद्यपीदं तत्त्वज्ञानं सांसारिकस्यातिशयितस्य फलस्य प्रतिलम्भनेऽपि प्रगल्भते, अथापि तत्रापि हेयताबुद्धौ प्रतिष्ठितायां पर्यवसानं निःश्रेयस एव।

अत एव, 'पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य। पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः' इति प्रधानतत्कार्यप्रपञ्चिकपदार्थदर्शनं प्राधान्येन कैवल्यञ्च पुरुषस्य फलं सांख्या निर्दिशन्ति। काणादाश्च द्रव्यादीनां...तत्त्वज्ञानान्निःश्रेयसमिति। गौतमीयाः किञ्चिद्विशदमुपपाद्यापि तत्त्वज्ञानान्निःश्रेयसाधिगममेव फलमाहुः। इदञ्च प्रपञ्चादात्मनां पृथक्करणं विना न भवति। तत्र सर्वेषामपि पदार्थानां मिथस्साधर्म्यं वैधर्म्यं च सर्वस्मिन् परिशीलित एव सर्वेतरविलक्षणतया आत्मनामधिगमादिति व्युत्पादयामासुः। तत्रान्तरङ्गं कतिपयप्रमेयज्ञानमिति, यदज्ञानात् संसारः यज्ज्ञानाच्चापवर्गः, तदिदं द्वादशविधं प्रमेयमिति पर्यजीगणत् गौतमः, 'आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्' इति। वेदशास्त्रनिष्णातास्तु प्राप्तिरूपफलतद्विषय-तत्कर्तृ-तदुपाय-तद्विरोधिरूपेण विभज्याऽऽहुः, "प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः। प्राप्त्युपायं फलञ्चैव तथा प्राप्तिविरोधि च" इत्यर्थपञ्चकम्। इदं साक्षात् तत्त्वहितपुरुषार्थज्ञानरूपं सत् मुक्तिं साधयति। प्राप्तिविरोधिप्रधानभूतं देहात्मैक्यज्ञानं स्वतन्त्रात्मज्ञानञ्चेति तदुभयव्युदसने दत्तदृष्टिः श्रुतिः; "भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्" इति विशेष्यविशेषणरूपतत्त्वत्रयविभागं विधत्ते। तार्किकाश्च नित्यानित्यरूपेण पदार्थान् विभजन्त एव पुनः शरीरेन्द्रियविषयभेदेनापरमपि विभागमाद्रियन्ते भोक्तृभोग्यभोगसाधनविवेचनं भोग्यवृद्धये भोग्यत्यागाय वोपयुज्यत इति कृत्वा। अतः प्रपञ्चान्तर्गतानां तत्त्वानां सर्वेषां शोधनमवश्यकार्यं यथावद्विविच्यात्मविज्ञानेन निःश्रेयससंपत्तये इति सर्वैरपि तीर्थकरैः संप्रतिपन्नम्।

तत्र सांख्यबौद्धादयः धर्मधर्मिविवेकमलभमानाः समुदायरूपेण द्रव्यग्रहणेनोपरताः। तत एव कालक्रमेण भेदाभेदमतमुदतिष्ठत्। तत्र तार्किकाः धर्मधर्मिविवेचनचतुराः द्रव्यगुणकर्मसामान्यविशेषाद्यात्मना विभागमदर्शयन्। अत्र द्रव्याद्रव्यविभागभंगीरस्य अप्रामाणिकानेवद्रव्याद्रव्यकल्पनामपोह्य अद्वैतिप्रभृत्येकदेशिप्रदर्शिता अपि पद्धतीर्निरस्य वेदान्तविमर्शनिर्धारिततत्त्वविभागं यथावत् प्रतिपादयितुं श्रीभगवद्रामानुजसिद्धान्तप्रमेयनिष्कर्षैकमूर्धन्यैः सर्वतन्त्रस्वतन्त्रैरेभिराचार्यैः तत्त्वमुक्ताकलापः सव्याख्यः कृतः। एतत्प्रमेयविभागञ्चास्मद्व्याख्यानश्लोकानेवानन्तरपुटेऽनूद्य दर्शयामः—

# तत्त्वमुक्ताकलापसारः

द्रव्याद्रव्यविधात्मना प्रथमतस्तत्त्वं विभक्तं द्विधा,
तत्राऽऽद्यञ्च जडाजडात्मकम्, इहाप्येकैकमेवं द्विधा ।
माया काल इति द्वयं जडम्, अथ प्रत्यक्पराग्भेदतो
द्वैविध्यं त्वजडे, द्विधा पुनरिहाप्येकैकमाख्यायत ॥ १ ॥

व्याख्यातं प्रथमे सरे जडयुगं, जीवेशरूपं पुनः
प्रत्यग्युग्ममनन्तरे सरयुगे, तत्रैशरूपोक्तये ।
नित्या भूतिरपि न्यरूप्यथ परा बुद्धिश्चतुर्थे पराक्,
अद्रव्यं निखिलं ततोऽन्तिमसरेऽप्येपोऽत्र तत्त्वक्रमः ॥ २ ॥

एतत् भूषणमुत्तरोत्तरबहुश्लोकात्ममुक्तामयं
व्याकुर्वन् सरसं स्फुटं स्वयमसौ सर्वार्थसिद्धिप्रदः ।
बाह्यानां कुदृशाञ्च कल्पनविधा उन्मूल्य, नैजैः कृतान्
व्याहारांश्च तथा विलोड्य निखिलं निष्कृष्टमत्र न्यधात् ॥ ३ ॥

संग्रहेण सर्वेषां मतानां निराकरणप्रकारः संकल्पसूर्योदये द्वितीयाङ्के आस्वादनीयः ।

---

श्रीः

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥



श्रीमद्वेदान्तदेशिकः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

श्री

॥ श्रीमते वीरराघवार्यमहादेशिकाय नमः ॥



अभिनवदेशिक-उत्तमूर्-श्री. ति. वीरराघवाचार्यः

अद्भुतं यस्य विक्रान्तं वेदवीथीविशोधने ।
अपरं निगमान्तार्यं प्रपद्ये वीरराघवम् ॥

श्रीः

# भूमिका

श्रीमन्निगमान्तगुरुश्रीसूक्तिततिप्रकाशनप्रवणः ।
प्रथितानि पञ्च काव्यान्यथ रक्षाख्याः कृतीश्च त्रयः ॥ १ ॥
सेश्वरमीमांसामपि मीमांसापादुकाञ्च संमुद्य ।
तात्पर्यचन्द्रिकाञ्च प्रकाश्य सर्वार्थसिद्धिमंश्लिष्टम् ॥ २ ॥
व्याख्याय तत्त्वमुक्ताकलापमद्य प्रकाशयन् क्रमशः ।
सूक्तीनामन्यासां श्रीशदयैव प्रकाशमाशासे ॥ ३ ॥

आचार्यानुगृहीतेषु ग्रन्थरत्नेष्वन्यतमोऽयं तत्त्वमुक्ताकलापः। अयं विशिष्टाद्वैतसिद्धान्तसंमततत्त्वरूपाभिर्मुक्ताभिः आहितो भूषणविशेषः जडद्रव्य-जीव नायक-बुद्धि-अद्रव्यरूपपञ्चविधतत्त्वानुबन्धिप्रमेयविशेषात्मकमुक्ताकृते तावत्प्रमेयविशिष्टतत्त्वरूपसरैः संपादितः, तत्तत्प्रमेयप्रतिपादकपद्यरूपमुक्ताकृतसंदर्भविशेषरूपसरपञ्चकपरिकल्पित इति ग्रन्थसेवनं सुगमम् । ग्रन्थस्य भगवते समर्प्यमाणतया भगवतो भूषणत्वेनैव तत्त्वमुक्ताकलापो भावित इत्यनुक्तिसिद्धम् । अनेन तत्त्वानां तत्त्वानुबन्धिनां सर्वेषामाकाराणां तत्त्वाधिपदकानां पद्यानाञ्च मुक्तात्वमुक्तं भवति । श्रीविष्णुपुराणे चास्त्रभूषणाध्याये भूषणास्त्ररूपस्थं भगवन्तं गोऽखिलं जगदिति विस्तरेणोपपादि। यस्य श्रीमति रहस्यत्रयसारे भगवच्छास्त्रीयपर्वणि संग्रहो व्यधायि । तस्यायं विवरितो भवति एवम्—

'जीवः सन्मणिः अक्षता प्रकृतिरप्यङ्को गदा स्यान्महान्
ज्ञानञ्चासिरथाभ्यूर्दरवरः शार्ङ्गं तथाऽहंकृतिः ।
चक्रं हन्त दश चेन्द्रियाणि विशिखा भूतानि माला दशे-
त्यर्थस्तत्त्वमतनुभृतः कणिगिरौ कृष्णोऽस्ति विश्वात्मनः ॥' इति ।

अतो भूषणत्वं तत्त्वानां दृष्टम् इति तदर्थो ग्रन्थोऽपि तद्वत् भूषणमेव । सरपञ्चकात्मकमिदं भूषणं किं समानपरिमाणसरसमष्ट्यात्मकम्, उतान्यथेति विमर्शे उतान्तेषु सरेषु श्लोकसंख्याधिक्यात् पृथक्पृथक्परिहृतप्रभागसरपञ्चकात्मकमिति स्थितिः । कर्णाकर्णिकया च काचिद्गाथा श्रूयते किं वदन्ती, तुरुष्कदुराक्रमणलम्भितदुरवस्थे श्रीरङ्गे भगवतो रङ्गनाथस्य दिव्याभरणेषु मुक्तांगी(मुक्तांगि) रत्नांगीति द्वे आभरणे दिव्यसंस्थाने भग्ने हन्त नष्टे इति नितरां दूयमानमनसाऽस्मदाचार्यवर्येणानेन स्वमन्याहतभूषणनिर्माणोपयिकनिधिविरहेऽपि तत्प्रतिनिधितया तत्त्वमुक्ताकलापमिमं द्रमिडोपनिषत्तात्पर्यरत्नावलिञ्च निर्माय भगवते समर्प्य ततोऽधिकानन्दमेदुरं तमनुभूय धन्योऽभवदिति । तदेवं भगवद्भूषणस्यास्य ग्रन्थस्य मनसि धारणं यद् सहृदयैः तत् तैः स्वहृदयेन वक्षसा भूषणवद्धारणमेवेति ग्रन्थेऽस्मिन्नेव निरटङ्कि—

"प्रज्ञाबुद्ध्याऽनुविद्धा क्षतिमनधिगतः कर्कशात् तर्कशाणात्
शुद्धो नानापरीक्षास्वशिथिलविहिते मानसूत्रे निबद्धः ।
आतन्वानः प्रकाशं बहुमुखमखिलतासवैधुर्यधुर्यः
धार्यो हेतुर्जयादेः स्वहृदि सहृदयैस्तत्त्वमुक्ताकलापः" इति ॥ (२)

अस्य पद्यमयस्य स्रग्धरादुग्धराशेः ग्रन्थस्य प्रमेयम् एतदनन्तरकृतस्य एवमेव पद्यमयस्य अधिकरणसारावलि-ग्रन्थस्य प्रमेयं च विभिद्य प्रदर्श्य ग्रन्थयोरादरेणावश्यधार्यत्वम्, अत एवाऽऽचार्यैः शिष्याणामेनयोर्वाचो-विधेयत्वसंपत्तये प्रेरणस्य कार्यत्वं चाधिकरणसारावल्यावन्तेऽन्वगृह्यन्त—

'विश्वं द्रव्यादिभेदात् विशदमभिहितं तत्त्वमुक्ताकलापे
व्यूढं शारीरकस्य त्विह दृढघटितं रूपमापादचूडम् ।
तस्मादस्मच्छ्रुताब्धेरमृतमिव समुद्धृतमश्रान्तबद्ध-
श्रद्धैरन्योन्यहस्तप्रदमिदमुभयं धार्यमाचार्यवद्भिः ॥'

इति । भूषणत्वेनारूपिताया अधिकरणसारावलेरिवास्यापि मनसि धार्यत्वं ततोऽध्यवसितम् ।

यथावदर्थवैशद्येन धारणं स्थापयितुं स्वयमेवाऽऽचार्यैर्विशदं व्याख्यायत यथाऽयं सर्वार्थसिद्ध्या, तथा अधिकरणसारावलेरपि पद्यमय्याः स्वयमेव व्याख्या व्यधायीति । 'अधिकरणदर्पणे निपुणतरमुपपादितमस्माभिः' इति निक्षेपरक्षावचनात्, 'सारावलीव्याख्याधिकरणादर्शकारकः' इति श्रीदेशिकाष्टोत्तरशतनामस्तोत्राच्च निश्चीयते । किं मूलनिर्माणसमनन्तरमेव व्याख्याऽपि व्यधीयत, आहो विलम्बेनेति विमर्शे उत्तरमेवोत्तरमध्यवसीयते । श्रीदेशिकग्रन्थानां पौर्वापर्यस्य कार्त्स्न्येन निष्कर्षविरहेऽपि, कतिपये कृतपौर्वापर्यनिश्चया एव । तत्र पूर्वग्रन्थस्योत्तरग्रन्थे स्वयं कृतो निर्देशः प्रथमं प्रमाणम् । संकल्पसूर्योदयभूमिकायां श्री. वेंकटाद्रिहरकृष्णमाचार्यैर्निदिश्य बहूनामेवं पौर्वापर्यमदर्शि । अस्माभिश्च यादवाभ्युदयभूमिकायाम् । तथाच तत्त्वमुक्ताकलापः, अधिकरणसारावलिः, [अधिकरणदर्पणः] सच्चरित्ररक्षा, निक्षेपरक्षा, श्रीपाञ्चरात्ररक्षा, न्यायपरिशुद्धिः, सेश्वरमीमांसा, तात्पर्यचन्द्रिका, गीतार्थसंग्रहरक्षा, न्यायसिद्धाञ्जनमिति क्रमोऽवसीयते । अत्र न्यायसिद्धाञ्जने अद्रव्यपरिच्छेदे तत्त्वमुक्ताकलापो निरदेशि । तत्त्वमुक्ताकलापकृतनिरूपणापेक्षया न्यायसिद्धाञ्जने प्रमेयवैशद्यदर्शनादपि व्यक्तमेतत् । सर्वार्थसिद्धौ स्वेश्वर (५-३५) न्यायपरिशुद्धिर्निरदेशि । तत्त्वमुक्ताकलापात् अत्यन्तार्वाचीनस्य न्यायपरिशुद्धिग्रन्थस्य तत्र निर्देशात् परिशुद्धेः पश्चादेव सिद्धेः प्रादुर्भाव इति ज्ञायते । यदि तु सर्वार्थसिद्धौ न्यायपरिशुद्ध्युदाहारि वाक्यं प्रक्षिप्तमिति भाव्येत, [व्याख्या द्रष्टव्या ।] अद्रव्यपरिच्छेदे तत्र तत्र प्रक्षेपशंकादुरपह्नवनिर्देशात्—तदा कामं मूलेन सह व्याख्या विहितेति स्यात् । अधिकरणसारावल्यारम्भ एव वेदान्ताचार्यकविरुदप्रस्तावात् ततोऽपि गहने तत्त्वमुक्ताकलापे तदप्रस्तावात् तद्विरुदलाभात्प्रागेवायं ग्रन्थो प्रथितः स्यात् । सर्वार्थसिद्धावपि न तन्निर्देशः क्रमेणावदेव । सर्वार्थसिद्धौ, 'इति सेयं विशदरुचिरा

कल्प्यतेऽस्माभिरेव' इत्युक्त्यैव ग्रन्थकर्ताऽयमित्यवधारणम् । नामधेयस्याप्यनिर्देशात् । ग्रन्थान्ते च श्लोक एकोऽपि नास्ति । सोऽयमाचार्यलेखनशैलीविपर्यासोऽप्यन्ते तत्रतत्र प्रश्नेऽशंकामुपजनयति ।

पद्यमयत्वे धारणं सुकरमिति पद्यानि अद्भुतानि कर्णामृतायमानानि निर्माय, व्याख्यायां विशदं विहितायां धृतपथाः सर्वमपि व्याख्यागतमर्थं मौलेषु पदेषु निवेश्य विशिष्टं वैदुष्यं प्रतिसरस्यन्त इति सिद्धान्तपरिरक्षिषया सिद्धान्तनिष्प्रकल्पमेधस्समनुजिघृक्षया च तामपि विधायोपकृतवतामाचार्यवर्याणां विषये किमस्माभिः कर्तव्यं कैङ्कर्यमित्यनाकलयन्तः ईषद्भाष्यादिप्रवेशमात्रेण सर्वसिद्धिं मन्वानाः सर्वार्थसिद्धिप्रभृतिसुदूरा एवाऽऽसन् आचार्यचरणारविन्दैकसंश्रया अपीति अहो हस्तं प्राप्तमप्यन्नमेषां न मुखं प्राप्नोति । शारीरकादिमुखेन समधिगततत्त्वहितपुरुषार्थानामपि सिद्धान्ते प्रमाणप्रमेययथावधारणं न भवेदिति तदर्थं श्रीभाष्यकारशिष्यप्रशिष्यैः बहुभिस्तार्किकादिमतान्युपादाय तद्वैलक्षण्यमत्र व्युत्पादयितुं प्रक्रान्तम् । तेषां निरूपणप्रणाल्यपि परमतवासनापारवश्यदर्शनात् मिथोविरोधश्च तत्रतत्रोपेक्ष्या समलक्ष्यत । जगदन्तर्गतसर्वप्रमेयविषयस्वपक्षनिर्धारणं परपक्षदौर्बल्यप्रदर्शनमन्तरा न स्थास्यतीति तच्छेषतया बौद्धजैनसांख्यचार्वाकादिपक्षशोधनं वेदान्तव्याख्यानव्यापृताद्वैतिप्रभृतिपक्षपरिशीलनं श्रीभाष्यकार-भक्तप्राज्ञसरणिसमीक्षणञ्च कर्तव्यमत्रानुपेक्ष्य कृतमस्ति ।

एवमेतद्वत् प्रमेयनिरूपणार्थं प्रवृत्ता ग्रन्थाश्चैषां **न्यायपरिशुद्धिः न्यायसिद्धाञ्जनं परमतभंगश्च ।** मणिप्रवालरूपेऽपि परमतभंगे ग्रन्थान्तरापेक्षया परकीयग्रन्थानुवादतत्परीक्षणादिकमधिकम् । **न्याय-सिद्धाञ्जने** अद्रव्यविषये शोधनमन्यत्र प्रमेयविवरणञ्च सर्वार्थसिद्धितोऽप्यधिकम् । प्रथमग्रन्थश्च तत्त्व-मुक्ताकलापः प्रथमप्रवेशमर्हति पद्यमयत्वात् संग्रहरूपत्वाच्च । न्यायसिद्धाञ्जनजडपरिच्छेदे ईश्वरपरिच्छेदादौ च विशिष्य वाक्यविन्यासो गहनः सर्वार्थसिद्धिसमधिगमोन्मिषितमतीनां कथञ्चित् ग्राह्यः स्यात् । उपनिषद्भाष्यकारानुगृहीतव्याख्यामूलमर्थावधारणं सुकरमित्यन्यदेतत् । सर्वार्थसिद्धौ तु प्रथममत्यन्ता-परिचितबौद्धसांख्यवैशेषिकादिपक्षवैविध्यव्यापृततया सत्यपि काठिन्ये उपर्युपरि सरेषु सारल्यमेव, सुतरामद्रव्यसरे । एवं तारतम्यनिरीक्षणे सारल्यस्य स्वीकार्यत्वेऽपि व्याख्यानमन्तरा विचिकित्सा-विरहितबोधसंपत्तिर्न सुलभा, नतरां प्राच्यतार्किकादितत्तन्मतप्रक्रियामविदुषाम् ।

सर्वदेशजनसुगमत्वाय सर्वमेव **श्रीदेशिकग्रन्थं** कथमपि संस्कृतव्याख्यासनाथमेव मुद्रयता मया सर्वार्थसिद्धेरपि समुचितया व्याख्यया सहैव मुद्रणे चिकीर्ष्यमाणे श्रीमान् चिरञ्जीवी प्रियशिष्य न्याय वेदान्तव्याकरणनिष्णातः पेरुम्बाक्कं **चेट्लूर् श्रीवत्साङ्काचार्यः** इदमब्रवीत् , 'व्याख्याद्वयं स्वपितामह पादार्जितं तैः साक्षात् मत्पितृपादमुखेन च विलिख्य स्थापितं गृहे वरीवर्ति । तत् मुद्रणानुगुणं विलिख्य दित्सामि' इति । कार्यान्तरव्यापृततया अवसरस्यालाभेऽपि तदातदा मुद्रणे संग्रहं चिकीर्षितः कुर्वन्नस्य पितामहाः **श्रीवत्साङ्काचार्याः** तर्कवेदान्तनिष्णाताः प्रियसुहृदः परमैकान्तिन इति तेषु गौरवेण तत्पुत्र **श्रीवासुदेवार्य**विषयप्रीत्या अनायासलब्धं व्याख्यानमित्यास्थया च तदंगीकृतम् । उभयमपि शिष्यप्रेमसर-

विरचितमेव । परंतु ह्येकतरं नाम ग्रन्थनिर्माणप्रसिद्धमहाचार्यपूर्वगुरु वाधूलश्रीनिवासाचार्यविरचितं गद्यरूपव्याख्यानं तत्र तत्र सर्वार्थसिद्धौ किमपि विवृणोति । अन्यत्तु श्री[illegible]वरदरामानुजार्यनामधेय-महनीयविनिर्मितं तदपेक्षया विस्तृतमेव । तत्र प्रथमम् आन्तमुपलब्धमपि कतिपयश्लोक-तद्व्याख्यानसर्वार्थ-सिद्धिभागलेशमात्रस्पर्शि । द्वितीयं तु मनाग् विस्तृतमपि अष्टद्रव्यसरमात्रस्योपलब्धमासीत् । एवमुभयमपी-दृशमेवोपलब्धमिति यथालाभमार्पयत् । प्रतीकादि परामृश्य परिष्कृत्य लिखनेऽपि अनन्वयादय उपलब्धाः यथाशक्ति परिहृताः । तत्रतत्रान्वितपाठस्थले च तत्तद्व्याख्यानं साक्षीकृत्य यथावस्थितः पाठः पर्यगृह्यतेति अयमेको लाभ एतन्मुद्रणस्य मुख्यः । एवमपि पूर्णव्याख्यानमेकं विना ग्रन्थमुद्रणं न मनोरथपूर्तय इति निश्चिन्वन् श्रीमदाचार्य श्रीदेशिक-श्रीहयग्रीवप्रेरितः आदित आन्तं व्याख्यां विदधन एव मुद्रयितुं समचीकॢ-पम् । प्रचारहीनस्य प्रकृष्टस्य गहनस्यास्य ग्रन्थस्य सकृद्वा प्रवचनं विधाय व्याख्याने विधीयमाने तस्य स्वध्यता स्यादिति विमृशतोऽपि न कश्चिदध्येता संप्रति समुपनतः । साक्षादुपनिषद्व्याख्यानभूतशारीरक-मीमांसाभाष्याद्यध्ययनेऽपि अवसरालाभादज्ञातसंस्कारत्वाच्चाप्रवृत्ता जना इति स्थिते कः खल्वेतद-ध्ययनभारमुद्वहेत् । अत्र, 'तत्रतत्रोदाहृतग्रन्थपौर्वापर्यविमर्शाय अनेकग्रन्थदर्शनस्याऽऽवश्यकताऽपि पदं धत्ते । परं पुस्तकालयाद्यसंनिधानात् तादृशग्रन्थनिरीक्षणमपि न सुकरमस्ति' इति विमर्शोऽपि व्याख्याने त्वरायाः परिपन्थी । एवं स्थितेऽपि विंशतेर्वत्सरेभ्यः प्राक् सुबहुशोऽध्यापितप्राचीननव्यतर्कमीमांसा-शास्त्रग्रन्थनिवहतया, तत्तद्ग्रन्थगमनिकासौष्ठवासौष्ठवपरीक्षणेन स्वयं व्याख्यातन्यायकुसुमाञ्जलिन्याय वैशेषिकदर्शनतया च तत्संस्कारानुवृत्त्या तदनुबन्धिबहुग्रन्थविमर्शात्मन्यप्यत्र मूले सर्वार्थसिद्धौ च संक्षेपेण मुख्यांशव्याख्यामात्रेण कथंचिदात्मानं धन्ययितुं प्रावर्तिषि । श्लोकानां संग्रहेणान्वयार्थं विधाय व्याख्यागतकतिपयभागव्याख्यानं युक्तमित्यालोचयताऽपि श्लोकान्वयार्थवैशद्यायैव किंचिद्विस्तरेणार्थस्यो-पपादनावश्यकतामालक्षयता पौनरुक्त्यपरिहाराय श्लोकार्थवर्णनत एव वृत्त्यर्थविज्ञानमपि संपिपादयिषितम् । अतो वृत्तौ गहनकतिपयभागमात्रं विशिष्य पश्चात् व्याख्यातम् । श्लोकगाम्भीर्येण लक्ष्य संक्षिप्तसर्वार्थ-सिद्धावप्रदर्शितोऽपि अर्थान्तरवर्णनसरणिस्तत्रतत्र प्रादर्शि । प्राचीनैरपि व्याख्यातृभिस्तत्रतत्र पाठ-सौष्ठवं विचारितमस्तीति तदनुरोधेनात्रापि कर्तव्यं कृतम्, पठनपाठनप्रणालीग्रहणात् तालपत्राणा-मप्ययथाभूतत्वात् । श्लोकानां तत्तद्दृष्टानां संगतिविशेषश्च समदर्शयत । आचार्यानुगृहीतपरमतभङ्गादि-ग्रन्थान्तरसंवादेनाप्यर्थनिर्णयस्तत्रतत्र व्यधायि । सांख्यकारिकाक्रमप्रदर्शनेनास्मन्मतसौष्ठवञ्च विमृष्टम् ।

एवं प्रवृत्तस्य मे दैवायत्तं महान्तमुपकारमेकं प्रथममेव वक्तव्यं यथावसरं विनिवेदयामि । मयि विशेषतः स्वयं गौरवबुद्धिं वहन्तोऽपि वस्तुतो मे वेदान्ते सतीर्थ्याः मीमांसाशिरोमणयः द्राविडभाषायां प्रावीण्यभाजः आङ्ग्लभाषायामप्यधिगमातिशयितयोग्यतावत्ताः सूक्ष्ममतयः सकृत्पठन एव ग्रहणधारणवैशारद्येन पदवाक्यप्रौढ–भावस्फुटीकृतिपरामर्शे विलक्षणं नैपुण्यमाजानसिद्धं वहन्तः श्रीपदपुरे चिरं सद्देवाध्यापकपदे स्थिताः श्रीमन्तः आर्-श्रीनिवासराघवाचार्याः संप्रति पुना-

संस्कृतमहाविद्यालये कोशप्रकाशनाय लौकिकवैदिकपारिभाषिकविविधपदशोधनरूपे महति कर्मणि व्यापृता अपि श्रीदेशिकचरणारविन्दभक्तिप्रेरिताः तत्त्वमुक्ताकलापं सर्वार्थसिद्धिश्च सम्यगासेव्य प्रतिपद्यं प्रतिपुटश्च स्विन्नपाठानौचित्यमन्यादृशपाठरीत्यभ्यूहश्च कुर्वन्तः सन्तीति त्रिंशच्छ्लोकमुद्रणानन्तरं विज्ञाय तेभ्यः पत्रं व्यलेखिषम्। ते च समनन्तरमेव स्वकृतं शोधनं सर्वं क्रमेण प्रेषयन्त एवाऽऽसन्। को हि नाम गहनं ग्रन्थं पठितुमेव प्रवर्तते; पठन्नपि यथावदर्थग्रहणे कः सजति। तावत्यनुपरम्य पदवाक्यसौष्ठव-विमर्शे तु न कश्चित् प्रवर्तेत। प्रवर्तमानोऽपि सहृदयतां विहाय स्विन्नमेव पाठमादृत्य, स एव साक्षात् ग्रन्थकारमुखारविन्दनिस्सृत इति निर्युक्तिकमूढश्रद्धया स्वरसं पाठं सुबहूपपादनेऽपि न स्वीकुर्यात्। एते तु रीतिमेतामुपेक्ष्य स्वबुद्धिप्रतिभातं स्वयं धैर्येण विश्वस्य प्रकाशयन्तस्तृप्यन्ति। बहुषु श्रीदेशिक ग्रन्थेषु द्रमिडसंस्कृतमयेषु अन्यदीयग्रन्थेषु च शोधनमेभिः कृतमस्तीति जानामि। इदं चात्र सर्वे ब्रूयु — यदि कश्चित् निर्माय ग्रन्थं प्रचारणात् प्राक् परस्मै प्रदर्श्य परिष्कारमीप्सेत्, तत्र प्रतिवाक्यमपि शतं शोधनानि स्वबुद्धिबलेन कर्तुं युज्येरन्, बहोः कालात् लब्धप्रचरेषु ग्रन्थेषु यावति स्विन्ननिर्वाहः सुकरः, तावति न स्वसामर्थ्यमुपयोजनीयम्। बुद्धेर्वैचित्र्यात् ग्रन्थकारस्तमाहतवचनक्रमेऽपि सगतौ दृश्यमानायां स्वाभिमतसंगतिविशेषस्थापनचिकीर्षया पदवाक्यान्यथाकरणमपि न स्थाने। पदाशुद्धिः प्रयोगाशुद्धि अर्थासमञ्जस्यं तत्तदन्यप्रमेयविरोधशङ्का पूर्वापरसरणिविरोध इत्यादिकञ्चेत् लक्ष्यते, तदैव शोधनमवर्जनीयमिति। अत एवाविश्वासो मा भूत् ग्रन्थे मुद्र्यमाणे इति यथाशक्तिस्विन्नपाठरक्षण-परायणेन मया शोधनान्यवर्जनीयस्थलेष्वेव समादृतानि। सहस्रसङ्ख्यास्पर्शिषु तत्प्रेषितेषु शोधनेषु प्रागेव मया कृतैः शोधनैरेव यत्र यत्राऽऽस्यत, तत्र संवादसंपत्तिसन्तोषपूर्वकं समादर एवाकारि। इदमिदं तत्कृत-शोधनमिति विशिष्य निर्देशः कर्तव्योऽपि तदाविष्करणप्रयासबाहुल्यचिन्तया तदा न कृतः। तत्र तत्र विमर्शकाशयत्वेन कृतो निर्देशः एतद्विलिखितपाठप्रदिदर्शयिषयैव। प्राच्यशास्त्रलेखनशैलीदर्शनेन केचिदंशा उपेक्षिताः। स्विन्ननिर्वाह एव लक्ष्यत इति चान्ये।

किञ्चिदत्र स्थालीपुलाकनीत्योदाह्रियते—जडद्रव्यसरे चत्वारिंशे (४०) श्लोके, "वृत्तिं दृष्टेर्निरुन्धे" इत्यत्र नरुन्धे इति शोधनमसंस्कृतं तैरपि विलिखितम्। बुद्धिसरे ९२ श्लोके अन्ते, "स्वार्थबोधव्यपेतैः" इत्यत्र व्यवेतैरिति शोधितमस्माभिः। एतैरपि तथा व्यलेखि। नूनं 'व्यवायान्नानुषज्येत' इति मीमांसासूत्रादिपरिचयवतामेवेदं झटिति स्फुरेत्। परन्तु तदनन्तरे ९३ पद्ये 'नान्यस्य हानि' इत्यत्र 'नार्थस्य हानिः' इति शोधनं तदिदम्। तथा यत्र क्वापि पाठोपलम्भे तस्य स्वरसस्वीकार्यत्वेऽपि तद-भावात् न सहसा स्विन्नत्याग इति तदुपैक्ष्यत। तत्रैव सर्वार्थसिद्धौ, "यद्यप्यन्विताभिधानं तथापि" इत्यत्र उत्तरवाक्य इव 'यद्यन्विताभिधानं, तदा' इति पाठ एव युक्त इति व्यलिखन्। सत्यं; सम्यगयमभ्यूहः। तदाऽपि स्विन्न पाठे स्वारस्यप्रदर्शने बद्धपरिकराः परे स्युरिति विभाव्य ईदृशमप्युपैक्षि। जीवसरे १५ पद्ये अन्तिमभागव्याख्याने सर्वार्थसिद्धौ, "द्वितीयादिचन्द्राणां चन्द्रद्रष्टा कश्चिदन्यः प्रसिद्ध" इति पाठोऽ

नन्वित इति निश्चिनम्, तत्रेमे, **चन्द्रद्रष्टा** इत्यत्र न्द्र इत्यक्षरं त्याज्यमिति दर्शयन्तो वाक्यं समञ्जसयन्ति स्मेति प्रतिभाश्लाघनं प्राप्तमासीत्। एवं बहवः पाठाः श्लाघापूर्वकमादृता एवाऽऽसन्। सकृत्पठनमात्रेण एतावतः पाठान् अभ्यूहितवन्त इमे यदि पठनाम्रेडनेन किञ्चित् कर्तुं प्रवृत्ताः स्युः, नूनं पूर्वपरिकल्पितान् पाठान् कांश्चिदुपेक्षेरन्; अन्यांश्चापूर्वान् पाठान् परिगणयेयुः। यतस्तदनभ्यूहिताः पाठाः बहवोऽस्माभिः परिशीलिताः। अयमयं पाठ एतन्मात्रोपज्ञमिति यद्यपि सांप्रतं निर्धारयितुं न पारयामि, अथापि सर्वे पाठा अपूर्वास्तदुल्लिखिता एवेति यदि वक्तुं प्रवर्तेरन्, तत्र मे संपूर्णा तृप्तिः, यत ईदृशाः लोके व्यवसायिनः सर्वथैव दुर्लभाः। तदुल्लेखगोचराणां पाठानां बहूनामुपेक्षायां कृतायामपि तैस्तथा प्रदर्शनं पूर्वापरपरामर्शेन वाक्यार्थनिर्णयाय विशेषविचाराय च ममोपायुज्यतेति विमृश्य पूर्णलेखने मया प्ररोचिता एवासन्। तदेषां निरूपणसरणिर्यथावदायुरादिना साकमभिवर्धताम्। एवं साहाय्यलाभात् मदीयं व्याख्यानं मुद्रणस्याधिकं परिष्कारमलालभतेति एतदहं सर्वदा कृतज्ञः।

एवं प्रारब्धैतन्मुद्रणे बहुदूरं गमिते कश्चित् अन्तेवासी श्रीमान् मीमांसाशिरोमणिः **नल्लूर् गोपालदेशिकाचार्यः** विरामकाल इति श्रीभाष्ये प्रागनधीतं भागमध्येतुमागतः आवेदयति स्म अस्याः सर्वार्थसिद्धेर्व्याख्या काचित् बाल्ये स्वेन महतां सकाशाल्लब्धा अड्यार्कोशालयं प्रति देवनागरलिप्या विलिख्यार्पिताऽस्तीति। सा व्याख्या विस्तृतेति च। अथ तत्संपादने प्रयतमानेनापि स्वयं तत्र गन्तुमशक्ततया, तदधिकारिभिरमुद्रितस्य कोशस्य बहिः प्रेषणसंप्रदायाभावेन तद्दर्शनमेव न लब्धम्। परं तु पश्चात् महता प्रयत्नेनावलोक्य निश्चितमासीत् विपुलं सरलञ्च सदपि तद्व्याख्यानम् आदितः नायकसरे २९ श्लोकपर्यन्तमेवास्तीति। एवञ्चापेक्षितोपरितनभागव्याख्यानाभावात् असद्व्याख्यानस्याऽऽवश्यकतैवावधारितेति तत्प्रकाशनश्रद्धा त्यक्ता। अस्य च अड्यार्कोशालयस्थस्य व्याख्यानस्य सर्वार्थसिद्धिप्रकाशिकेति नाम। वृत्तिव्याख्यां समाप्य प्रतिपद्यं संग्रहेण पद्यान्वयार्थमपि दर्शयति। स्वतन्त्रविशेषविचारविरहेऽपि वाक्यानां यथावदर्थव्युत्पादने व्याख्यातुर्नैर्भर्यं लक्ष्यते। द्दष्टेषु स्थलेषु प्राचीनन्यायभाष्यग्रन्थाद्यनुवाददर्शनात् व्याख्याता नवीनोऽपि प्राच्यग्रन्थपरिचयवानिति विभाव्यते। अस्य व्याख्यातुर्नामकुलगोत्रादिकं न ज्ञायते। आनुपूर्व्या व्याख्याने दृष्टे तु साक्षात् अर्थापत्त्या वा केचिदंशा उद्धरेन्, न तदनुगुणोऽवकाशः।

**नरसिंहराजार्या** इति प्रकृतग्रन्थव्याख्यातॄन् अन्यान् नाम्ना निर्दिशति। तेन नृसिंहराजीयमिति प्रसिद्धव्याख्यानं तद्दृष्टमिति सिद्धम्। तच्च नृसिंहराजीयं प्रकृतवृत्तिश्लोकसहितं स्वकीयव्याख्यासहितञ्च जीवसरे किञ्चद्दूरपर्यन्तं श्रीपरकालसंयमीन्द्रैः संमुद्रितम्। तदुपरि तद्व्याख्या यत्रकापि स्थिताऽपि लेखकपुरुषदौर्लभ्यात् प्राप्तुं नापार्यत। तस्य नृसिंहराजीयस्याभावे जडद्रव्यसरप्रपञ्चिते बौद्धमते वैशद्यं दुर्लभमेव स्यात्। प्रायस्तद्दर्शितेन पथैव सर्वेषां गतिरिति भाव्यते। तस्य प्रतिज्ञाऽप्यादावेवम्—

"अपसिद्धस्य पक्षस्य विस्तरेण प्रकाशिकाम्। सर्वार्थसिद्धिसट्टीकां करोम्यानन्ददायिनीम्" इति।

इतोऽतिप्राचीनैवास्य मुद्र्यमाणा श्रीवःघूरश्रीनिवासाचार्यव्याख्या। प्रकृतप्रकाशिकाकारगतिविज्ञानाय

द्विनस्थलनिरीक्षणं विशिष्य व्यधायि। नायकसरे २३ पद्ये चतुर्थपादे शास्त्रानुक्तत्वेत्यत्र शास्त्रानूक्तत्वेति स्वारस्यदर्शासदाचार्यशोधितरीतिमेव प्रकाशिका परिगृह्णातीति स्पष्टमवगतम्। प्रागेवास्मदाचार्यदर्शित-तया पाठोऽस्माभिरयं बुद्धः। पूर्वोक्तश्रीनिवासराघवाचार्यविहितशोधनावलौ च अनूक्तत्वेति शोधनमपि निविष्टमस्ति। एवमप्यस्माभिर्व्याख्याविधानसमये अनूक्तत्वेत्येतदर्थः कथमप्यनुक्तत्वेति पाठेऽपि आनेतुं शक्यः, अज्ञातज्ञापकत्वरूपोक्तिविरहात् अप्राप्त एव शास्त्रस्यार्थवत्त्वात् यत् अनूक्तं तत् शास्त्रतात्पर्य-विषयत्वादनुक्तमेवेति चिन्तितम्। वस्तुतः शोधनमेव युक्तमिति शोधनिकायामदर्शि। प्रकाशिकाकारः अनूक्तत्वेति पाठमेवानुसरति। जीवसरे सप्तमे पद्ये, **"स्वस्मै स्वेनैव भानम्"** इत्यत्र वृत्तिविवक्षितं प्रत्यक्त्वद्वैविध्यं कीदृशमिति विचारे प्रथमपादोक्तमुदयनाचार्याभिमतमेकं द्वितीयपादोक्तमन्यदिति प्रायो गतिः। नृसिंहराजीयमपि तदनुगुणमिव। अस्माभिस्तु द्वितीयपादेनैव द्वैविध्यं प्रदर्श्यत इति व्याख्यातुं शक्यमिति **अलभ्यलाभे** प्रादर्शि। अयं प्रकाशिकाकारोऽप्येवं द्वितीयपादत एव द्वैविध्यं व्युत्पादयति, यदेवमाह—

"(सर्वार्थसिद्धौ) द्वैविध्यमिति। स्वस्मै भासमानत्वं एकम्, स्वेनैव भासमानत्वं अपरम्; मूले **स्वस्मै स्वेनैव** इत्यत्र एवशब्दोत्तरं वाकारोऽध्याहार्यः इति भावः। एवञ्च निजोपकारकप्रकाशा-श्रयत्वं एकं प्रत्यक्त्वम्; द्वितीयं तु स्वमात्रकर्तृकप्रकाशाश्रयत्वं प्रत्यक्त्वम्। एवकारेण धर्मभूतज्ञान-व्यवच्छेदः तस्य स्वप्रकाशत्वेऽपि सुषुप्तौ भानाभावात्। [एतदुपरि बहुपंक्तिभ्रंशः]। अत्र **श्रुतप्रकाशि-कादिषु रहस्यत्रयसारे** च स्वस्मै भासमानत्वं स्वप्रकाशजन्यफलप्रतिसंबन्धित्वमित्युक्तम्। प्रकाशो व्यवहारानुगुण्यम्। ज्ञाने व्यवहारजनकत्वं इच्छाजनकत्वम्; विषयस्य व्यवहारप्रयोजकत्वं यद्धर्मप्रकारकं ज्ञानं तद्धर्मवत्त्वम्; आत्मनो व्यवहारप्रयोजकत्वं तादृशज्ञानेच्छाश्रयत्वं ज्ञानविषयत्वं च। **साक्षा-त्स्वामिनस्तु** व्यवहारानुगुण्यं व्यवहारानर्हतानिवृत्तिः। **अनर्हता** च व्यवहारविशेष....सामान्याभावः। विषयस्य ज्ञानस्य च धर्मिभूतज्ञानस्य च अनुगतमिदम्। धर्मरूपस्य धर्मिरूपस्य च ज्ञानस्य तदर्हत्वं नाम तदापादनस्वभावत्वम् इति वदन्ति।" इति॥

अत्र मध्ये यदुपरि प्रक्रान्तविषयव्युत्पादनवैखरी प्रतीक्षिता, तदुपरि स्थिताः पंक्तयो भ्रष्टा इति किमत्र कर्तव्यम्। स्वेनैव इत्येवकारेण धर्मभूतज्ञानव्यवच्छेदः तत्प्रकाशस्य तन्मात्रकर्तृकत्वाभावात् विषयप्रकाशकाल एव धर्मभूतज्ञानप्रकाशात् प्रकाशोन्मुखस्य विषयस्यापि तत्र हेतुत्वात्। एवमहमर्थ-धर्मिणां प्रकाशोऽपि विषयनिरपेक्षत्वेऽपि सुषुप्तौ भवन्नपि धर्मिप्रकाशसापेक्षः। अत आत्मगतैकत्वादि-प्रकाशस्य एकत्वादिमात्रकर्तृकत्वं नास्तीति ग्रन्थकाराशय उन्नीयते।

धर्मधर्मिज्ञानगतधर्माणां स्वयंप्रकाशत्वं वा धर्मिभास्यत्वं वेत्यत्र **साक्षात्स्वामिनामुपनिषद्भाष्य-काराणाञ्चाभिप्रायभेदे** स्थिते तत्र केचिदेकतरपक्षावलम्बिनः; अन्ये अन्यतरपक्षमाद्रियन्ते। तत्र साक्षा-त्स्वामिपक्षः सामान्यतस्तत्र निर्दिष्टः। विशिष्य विचारे तु न व्यापृतम्। अस्माभिरपि यथाप्रतिभातमिहैत-

द्विमर्शो विहितः । अन्यस्यैव पक्षस्य सयुक्तिमन्यैः स्थापनेऽपि गृहीतपरित्यागो न कार्य इत्येवं नास्माकं निर्बन्धः । विचारस्तु प्राप्तो न शक्य उपेक्षितुमिति यथाभातं व्याख्यायामदर्शि । ज्ञानविषयत्वं नाम किं संयोग उतान्य इति विमर्शस्तु धर्मभूतज्ञानाधीनप्रकाशस्थल एव युज्यते, नान्यत्र । प्राज्ञाः प्रमाणम् ।

तदेवमुपलब्धानां व्याख्यानानामपूर्णत्वात् अखिलावश्यकांशव्याख्यानरूपत्वाभावाच्च विना विस्तरं व्याख्यान्तरालब्धानामर्थानां लम्भनं कार्यमित्याशयेनास्माभिः अलभ्यलाभः इति व्याख्यानस्य नाम कृतम् । अलभ्यलाभे सति सर्वार्थसिद्धिरिति । मुद्रितव्याख्यान्तरदर्शिताश्चार्थाः तत्रैव सुदर्शत्वान्न पुनर्लिखिताः । तत्रतत्र व्याख्यातृभिः पाठशोधनमपि कृतमस्ति. तदुल्लिखितपाठरीत्यावश्यकतायां तदुपन्यस्त-युक्तेरपर्याप्तत्वधिया क्वचित् तदनादरेण अन्य एव दृष्टः पाठोऽस्माभिरादृतः । क्वचित् क्वचित् स्वारस्यात् व्याख्यापाठ एव विशेषादरः प्रादर्शि । सर्वार्थसिद्धिग्रन्थेऽत्र प्रथमतो गहनत्वं कारिकाप्राचुर्यं च लक्ष्यते । अन्तिमसरद्वये कारिका न लक्ष्यन्ते. क्वचित् मूलव्याख्यानयोर्भेददर्शनात् मूलपाठोऽन्यः स्यादिति विमर्शेऽपि तथा पाठानुपलम्भात् साहसं परित्यज्य स्थित एव न्यवेशि । श्लोकसारस्य सर्वे न व्याख्यायां दर्शितमस्ति । अतः संग्रहेण धृतिसमापनं चिकीर्षितमिति ज्ञायते । सुस्पष्टार्थविषयविशदलेखनविस्तारोऽपि क्वचित् । अन्यादृशपाठानुपलम्भात् अन्यथाकर्तुमसमर्था वयं स्थितपाठाशयप्रदर्शनेन विवक्षितार्थान्तरोपलक्षणत्वबुद्ध्या न्यूनतापरिहारेण यावल्लभं संतुष्याऽऽचार्यपादविवक्षितमर्थमखिलं शब्दसहितं हृदये धारयन्तः प्रमाण-प्रमेयनिष्कर्षं प्राप्नुयाम । प्रमेयविभागे बुद्धेर्निरूपणावसरे प्रमाणावान्तरभेद इह ग्रन्थे विशेषतः कथितोऽस्ति । तार्किका अपि प्रमानिरूपणप्रकरण एव हि प्रत्यक्षानुमानोपमानशब्दरूपाणि प्रमाणान्यपि निरूपयन्ति । बुद्धिभेदरूपभ्रमनिरूपणावसरे च ख्यातिपक्षाः सर्वे विमृष्टाः । यथाविभाग नित्यविभूतेः पृथङ् निरूपणीयत्वेऽपि नायकसरमध्ये परव्यूहादिपञ्चरूपनायकदिव्यमङ्गलविग्रहप्रसक्त्या तच्छेषतया नित्यविभूतिनिरूपणमन्तर्भावितम् । न्यायसिद्धाञ्जने पृथक्कृत्य बहुप्रपञ्चः कृतः । मुक्तिनिरूपणावसरे जीवसरेऽपि तन्निरूपणसंभवेऽपि यथाविभागक्रमं नायकात् परं बुद्धेः पूर्वं तदुचितमिति विमृश्यैव क्रम आद्रियतेव । जीवसरे ६६ अन्ये चेत्यादिश्लोकस्तु नित्यसूरिरूपजीवविभागस्थापकः । नित्यविभूतिस्थापनं नायकसरमध्य एव । एवं स्वमतसंमन्तव्यप्रमेयेयत्तानिर्धारणप्रवृत्तैराचार्यैः तच्छेषतया द्रव्याद्रव्यधर्मधर्मि-तत्तदवान्तरभेदेषु प्रत्येकं संभावितचार्वाकबौद्धार्हत – सांख्ययोगतार्किकपाशुपतशांकरभास्करयादव-प्रकाशादिसरणिदूषणेऽप्यैदम्पर्यमिहोढमिति ग्रन्थोऽयमापादचूडं सर्वमतसंवलित एव संलक्ष्यते ।

परपक्षप्रतिक्षेपसंवलितस्वपक्षस्थापने क्रम एव तत्त्वनिर्णयः प्रतिष्ठितः स्यादिति सरणिरियं सूत्र-कारप्रभृतिसर्वाचार्यसमादृता । सूत्रकारो हि प्रत्यधिकरणं पूर्वपक्षं निराकुर्वन्नेव सिद्धान्तमाह । विशिष्य च शारीरकद्वितीये परमतानि प्रसिद्धानि प्रतिक्षिप्तानि । सर्वमिदं तच्छिष्यबोधायनमहर्षिकृते कृतकोटिग्रन्थे विस्तृतम् । अथोपवर्षेण कृतकोटिसंग्रहनामकेन ग्रन्थेन संग्रहो व्यधायि । तत्परम्परायां ब्रह्मनन्दीनाम कश्चित् छान्दोग्यं वाक्यनामकेन ग्रन्थेन व्याचख्यौ । तस्य भाष्यं द्रमिडाचार्येण व्यधायि । तस्यापि

वामनटीकेति व्याख्येति श्रुतप्रकाशिकायामादौ अदर्शि। बोधायनादन्य उपवर्ष इति प्रपञ्चहृदयादि प्रसिद्धस्य न तत्त्वटीकाविरोधः। तत्र तदैक्योहरूपवाक्यस्य लेखकपक्षिप्तत्वात्। "हलभूतिस्तूपवर्षः कृतकोटिमुनिस्तथा" इति वैजयन्तीकोशात् उपवर्षः कृतकोटिकेति न सिध्येत्। किंतु कृतकोटि· मननशीलः तत्प्रवचनसमर्थः संप्रदर्कनैत्येव। ब्रह्मनन्दिद्रमिडाचार्यादिविषये परिचयलेश मृषात्ववाद्वैति नामप्यस्ति। श्रीभाष्यकारैर्वेदार्थसंग्रहे, "भगवद्बोधायन-टङ्क-द्रमिड-गुहदेव-कपर्दि-भारुचिप्रभृति" इत्यन्येऽपि निर्दिष्टाः। एतत्परमाचार्यैश्चाऽऽत्मसिद्धावन्येऽपि। अत्र टङ्कब्रह्मनन्द्यैवं व्याख्यातृदर्शितम्। इयं प्राची गुरुपरम्परा। एतदुपपादितप्रमेयराशिरेव सांप्रतिकृया विशिष्टाद्वैतगुरुपरम्परया सम्यगनुस्त्रियत इति सुबहु परिश्रम्य ग्रन्थान्निरीक्ष्य वर्णितं वेदार्थसंग्रहे; प्रतिज्ञातञ्च श्रीभाष्ये। तद्वदियमपि परम्परा बाह्यकुदृष्टिनिरसनपूर्वकवास्तवमतस्थापने श्रीमन्नाथमुनिप्रभृति प्रवृत्ता। सर्वमिदमाशय्य नाथोपज्ञं प्रवृत्तमिति तत्त्वमुक्ताकलापान्ते न्यबन्धि। यथा श्रीभाष्यकारपूर्वपुरुषग्रन्था एवम्, एवं तत. पश्चात्तना अपि श्रीभाष्यप्रतिष्ठापनाय सिद्धान्तमेयशोधने प्रागतिषत। ते च श्रीराममिश्राः, श्रीविष्णुचित्ताः, वरदविष्णुमिश्राः, वरदनारायणभट्टारकाः, श्रीमद्भट्टपराशरपादाः, नारायणार्याः, वात्स्यवरदाचार्याः, वादिहंसाम्बुवाहाः, व्यासार्याः, मेघनादारिसूरयः इत्यादय इति न्यायपरिशुद्धिन्यायसिद्धाञ्जनादितः सुगमम्। तत्तद्ग्रन्थनामान्यपि ततोऽवगन्तव्यानि। सर्वार्थसिद्धौ तु न विशिष्य नामादिनिर्देशः; सामान्यतो विषयविमर्शमात्रम्। सम्प्रदायग्रन्थेष्वपि एषु बहूनां प्रस्तावो भवति। एतद्ग्रन्थस्था एव कतिपये श्लोकाः पश्चात् स्वग्रन्थान्तरेष्वप्याचार्यैर्निवेशिताः। ते आवापोद्वापतः, कर्मविद्यादिचक्रे, दृष्टेष्वनुपमावात्, हृयाहृत्पत्र, अध्यक्षं; स्यादित्थं, गाथाताथागतानाम् इत्येवम्॥ अत्र समुदितश्लोकसंख्या पञ्चशती। सर्वतन्त्रस्वतन्त्रैरत्र आपादचूडं बहुविधपरपक्षोपन्यासो निरसनाय व्यवीयतेत्येतत् अधस्तनवाक्योद्धारनिरीक्षणे सुमहम्।

अत्र सरश्लोकसंख्ययोर्निर्दिष्टत्वात् विषयसूचीदर्शनेन किंकिंविषये तत्तन्मतप्रदर्शनमिदमिति सुगमम्।

## ग्रन्थनिर्दिष्टतत्तन्मतग्रन्थतत्कर्त्रामोद्धारः

१—८. वैभाषिकाः, वात्सीपुत्राः.......केचिदित्यपरेऽब्रुवन्। विभज्यवैभाषिकवादस्तु।
यत्तु मतान्तरं......जैनमतावतारात्। यत्तु बौद्धैरुक्तम्—

९. धर्मकीर्तिर्हेतुबिन्दौ। अन्येऽपि; पारम्पर्येण........बौद्धानां रहस्यम्।

११. सुरगुरुर्लोकायतशास्त्रम्। केचित्तु....इत्याहुः, यथाऽऽह्रोदयनः। ननु सांख्योक्तैः...;
त्वप्यन्तवृद्धाः। एतेन सांख्यानां....; काणादादि....

१४. उक्तं च जैनैः...। यथा काणादप्रभृतीनाम्...

१५. केचित् आथर्वणिकाः, सांख्याः। पौराणिकाः

१६. अन्तर्यामिब्राह्मणसुबालोपनिषदादिप्रसिद्धम्,

१८. अच्छिन्ने तु भेदाभेदवाद एव शरणम् ।
१९. प्रक्रम्य सांख्यैः । व्याहतं सांख्यभाषितम् ।
२०. सत्कार्यवाद आरम्भणाधिकरणसाध्यः ।
२१. सर्वाग्रहणमवयव्यसिद्धेरित्यक्षपादोक्तम् ; या चासौ धारणाकर्षयोः । पक्षिलः—
न्यायवार्तिकटीकादौ । टीकाकारस्तु—
२२. न्यायवार्तिकटीका ; यथाऽऽहोदयनः—
२३. संघातवादे.......सर्वमुपादानम् । चतुर्विधाहारमयं....गर्भोपनिषत् ।
२४. यदाहुः सांख्याः ; माध्यमिकादिमतानां... । प्रागसत्.......कालत्वादिति वादिनः ।
उक्तं चाक्षपादेन ; इति सांख्यवृद्धगाथा...। सांख्यचार्वाकयोः....
२५. अर्धवैनाशिकनिरासाय....सांख्यो निरस्तः । यथाऽऽहुः—। एतेन....नष्टेऽप्यर्थे
स्मृतिदर्शनादिति । माध्यमिकमतापातः
२७. पूर्वापर.....सर्वक्षणिकवादिनः २८. चार्वाकवादः
३०. तस्य द्वैधर्म्यदृष्टान्ते.... (बौद्ध) ; अन्येऽपि केचिदाहुः— (कुमारिल) ;
नान्यदृष्टं स्मरत्यन्यः....(उदयन)
३१. स निरन्वय.... नियताविति सौगताः ॥
३२. ननु...चार्वाक उत्तिष्ठते(ति) । अन्यथा शून्यवाद... अनेकान्तवादो वा । तथा चेयं,
माध्यमिकगतिः । क्रमेणो.... स्थिरवादी... । सांख्यसौगतचार्वाकैः....
माध्यमिकमतस्थैरुच्यते (खण्डनकारः)
३५. ये तु...'शरीरयोगे....' इति लक्षयन्ति । (तार्किकरक्षा)
३६. यथाऽऽहुः ; सांख्यैरप्यत्र ; कणभक्षाक्षपादाद्यनुसारेण । ३९. यथोक्तं भाष्ये—
४०. तत्र बाह्यैरेवमुच्यते ; .... कैश्चिदुच्यते ; इत्येक इति । (वरदनारायणभट्टारकाः) ।
बुद्धयन्तरानुगुणमतान्तरमाह अन्ये त्विति ।.... आत्मसिद्धिवाक्ये...
४२. अत्रोदयनाद्युक्तमाशङ्कते—
४३. तथाऽपि.... सौत्रान्तिक एव समर्थः स्यात् ।
४६. अत्र केचिच्चार्वाकाः सौगताश्च प्राहुः । उक्तं च न्यायभाष्ये । माध्यमिकमतोत्थान....
४७. वैशेषिकादय । जैनास्तु.... । सांख्याः । भाट्टाः ।
५५. 'तस्य मध्ये महानग्निः' (जाठरानलः) तैत्तिरीये ।
५७ भाष्य इति । तथा हि सांख्या... आहुः—
५८. तथा च जितं चार्वाकैः ।
५९ यत्तु हेमाद्रेः तैजसत्वमाहुः— (काणादाः)

६०. तमः खलु.... इति य एवं वदन्ति । अद्वयत्वादि . . . केचिदुपाचान् ॥ (तत्त्वरत्नाकरकाराः) ; यत् कृष्णं. . . कैश्चिदुक्तम् । (अद्वैतिभिः)
६१. ये त्वाहुः ; अत्र यदुक्तं काणादैः—
६३. कार्तान्तिकैरपि । यथाऽऽह आर्यभटः । कैश्चित् ; जैनोक्तस्य ये ; च...इत्याहुः अन्ये....कल्पनागौरवोपहताः (धीवृद्धितन्त्रे) (आर्यभटलल्ल दयः)
६५. 'अपरस्मिन् परं . . . (वैशेषिकाः) । सांख्यसौगतचार्वाक. . . । उक्तं हि वैष्णवे पुराणे—ननु जैननिराकरणे...भाष्येण . . . . ।
६६. 'अनादिर्भगवान् कालः' इति पराशरेणोक्तमपि....।
६७. ये तु... ..तन्त्रा[न्तरा]नुसारिणो वदन्ति ।
६९. यादवप्रक शैरप्यभ्युपगतोऽयं पक्षः ; आश्रयैकदेशवृत्ति······इत्यन्ये मन्यन्ते । ये तु शैवादयः.... . ।

२—१. तत्र चार्वाकेणापि । प्रत्येकचैतन्यपक्षे दूषणान्तरमाह । यत्तु सूत्रितं सुरगुरुणा—
२. सांख्य युक्तानि......असाधकतमानि ।
३. सांख्ययोगिमतं तु वहिष्कार्यमेव । बौद्धास्तु......इत्याहुः ।
१६. ब्रह्मदत्तादिभिरुक्तं...... ; सुप्तिवादः—
१७. आत्मनित्यत्ववादिनः चतुर्विधाः 1) ज्ञानात्मवादिनः 2) प्राणेन्द्रियात्मवादिनः 3) पौराणिकैकदेशिनः 4) औपनिषदाभासाः
१९. देहैकदेशवर्तिनः......
२३. जैनास्त्वाहुः । अपरिमितस्यापि द्रव्यत्वं केचिदिच्छन्ति ।
२५. तथा च पातञ्जलम्—
२७. इह सयूथ्याः परे च केचिदाहुः—एकं पादं (सनत्सुजातीयम् ?)
२९. ननु, 'यस्य......महात्मनः ॥' इति कठवल्लीवाक्यात् । संजयश्चाह—
३१. तदुक्तमात्मसिद्धौ , तथा च संगृहीतम्— (गीतार्थसंग्रहः)
३५. 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते'.... कयाचित् वृत्त्या.... (पूर्वमीमांसा)
४३. अद्वैतिनः केचिदाहुः—
४४. अन्ये तु वर्णयन्ति— (अद्वैतिनः) अनधीत...... गौडमीमांसकास्तत्वोक्तिः ।
४५. यस्त्वाह आपस्तम्बोक्तम् । —
६०. शेषं भाष्यादौ । अत्रैव तत्त्वसारे संगृहीतम्—
६१. शौनकयुक्तनीत्या । ६६. यत्तु तन्त्रान्तरस्थैरुच्यते— (शैवैः)

६९. अथ वैशेषिकादिपठितं . . . ; भूषणस्य तु . . . यदि ; कश्चित् कौमारिल .

७०. एवं हि विविच्यते—"मूलप्रकृति...." (सांख्य) समीक्षाग्रन्थोक्तः... ।

७२. औलूक्यपठित....। ७३. आपस्तम्बादयः सांख्या जीवन्मुक्तिः। ७४. अद्वैतिनस्त्वाहुः।-

८५. पशुपतिसमतां तन्मतस्थाः प्राहुः । वासनोच्छेदमात्रं तु बौद्धैकदेशिनः। प्रज्ञाकरमतस्थाः न्यायैकदेशिनः । भाट्टाः । औलूक्याः । न्यायमीमांसैकदेशिनः । जैनाः । तत्र भूम्यां नित्यपतनवन्नित्योर्ध्वगमनमेके । अन्ये तु......वसन्त इति । माध्यमिकाः । तथा च तत्प्रतिक्षेपसूत्रम् । आयुर्वेदविद्भिरप्यन्वाख्यायते—

३—२ चार्वाकचोद्यं वारयति । किं चात्र नैयायिकादि । कपिलस्यागमेन । एवं निरीश्वरमीमांसका......

५. स तु...पुरुषनिर्णयादौ साधितं। यथा सुबालोपनिषदि, तथा च नारायणानुवाकेऽपि

६. 'अव्यक्तमक्षरे......' इति सुबालोपनिषद्वाक्येन । सौबालवाक्य... ; मानवे च । महोपनिषदि—

८. महाभारते । तैत्तिरीयाः । वाजसनेयिनस्तु । नारायणानुवाके—

९. कर्मविधिप्रकरणेषु— ......मीमांसभाष्यकारादिभिः

१०. तथाऽप्यथर्वशिखायाम् । भारतादौ......

११. मनुमुख्यमुनिभिः । कठवल्लीषु । तापनीयोपनिषत्सु । सुबालोपनिषच्च । ब्रह्मबिन्दूपनिषदि ।

१२. बोधायन-टङ्क-द्रमिड-गुहदेव-कपर्दि-भारुचि......

१८ 'इच्छा......' इत्याक्षपादी...... । 'क्रियावद्गुण......' इति काणभक्षीव......

२१. सांख्यसौगतचार्वाकवर्तन्या...... २३. न्यायाचार्यसंगृहीतानां

२४ तत्र हि......सूत्रभाष्याभ्यां साध्यते ; २६. ब्रह्मदत्तभास्करादिमतं.. ...

२७. अद्वैतव्याख्यायिनः आहुः । भास्करीयास्तु । यादवप्रकाशीयास्तु—

२८. 'ईश्वर......' इति कात्यायनकारिकया...... । अत्रानिष्टमाह सप्तभङ्गीति ।

३०. अन्ये तु भेदाभेदिन आहुः—

३१. भास्करपक्षमुपालभते— ३७. अथ पञ्चपादिकाविवरणोक्तम्

३४. चित्सुखोक्तभावरूपाज्ञानानुमानः । ४०. तन्निर्णीतं च मोक्षधर्मान्ते......

४१. नीतिशास्त्रेषु च...... ४४. न तु......सांख्यस्य......सूत्रकारैः......

४७. न हि तदेव......जैनैरप्यङ्गीकारात् । मन्यते च माध्यमिक...... न्यायभाष्यकारः—

५६. अत्र कैश्चित प्रपञ्चलुण्टाकैरेवं प्रत्यवस्थितम् । ५७. 'अवच्छेदन्याय (मीमांसा) ।

५९. एवमिह यादवप्रकाशीयः संग्रहः—। अद्वैतिनां सौगतसाम्यम् ।

६१. तदिदं. ... वेदार्थसंग्रहे स्थापितम् । शाट्यायनिनश्च... । कौषीतकी......पठितव्या । षडर्थसंक्षेपे । यथोक्तमुत्तररामायणे । महाभारते च । इति यादवप्रकाशोक्तं युक्तम् । । उक्तं हि महाभारते—
६२. अथ रहस्यागमवाक्यविशेषैः......। पक्षान्तरमुपक्षिपति—परे तु इति ।
६५. श्रीपौष्करे तावत् । श्रीसात्त्वते च । रहस्याम्नायोक्तमाह । श्रीवैष्णवे पुराणे...
६८. अथ लोकायतमतम् ......देवताधिकरणे च......। शिष्टाः=बोधायनटङ्कद्रमिडादयः ।
७०. यथैक एव......इति गुणोपसंहारपादे निरणायि ।
७१. तथा छान्दोग्ये भूतत्रयम् । तैत्तिरीयके......
७३. मायादायादपक्षः=मायार्जितभ्रान्तिविभागोपजीविपक्षः
७४. अस्ति तावत् सात्त्वतादिषु...... ७७. नो चेदेवं...... कश्च जैनेऽपराधः । (श्लोके)
७८. किमजागल.. ...काश्यपीयाः केचिदाचक्षते । अनुमानात्...... नैयायिका वैशेषिका
७९. धर्ममर्मज्ञचित्ताः
४—३. कौमारिलास्तु कथयन्ति— ४. वैशेषिकादयो वदन्ति । तदाह भगवान् शौनकः—
७. कथं तर्हि कणचरणादिभिः......
९. एवमन्यथा......भाष्योक्तं...। अतो......भाष्यकाराभिप्रेत...। पक्षद्वयोप...न्यायकुलिशे ।
१०. सा न्यायतत्त्वे आप्त्यधिकरणसिद्धान्ते । यथार्थं... .. भाष्यकारैरन्वभाषि ।
१३. योगाचारादयो हि... १४. भाष्यकारैर्निरणायि । ननु चाख्याति...भाष्ये कथं चोदितम्?
१७. न तावदहेतुकमिदं..... लोकायतमतप्रसङ्गात् ।
१९. समयिभिरखिलैः—प्रमाणस्थापकैरिव तद्दूषकैरपीति ।
२०. अथ...... योगाचाराणां...... । माध्यमिकमतप्रसङ्गः । अथ मन्यसे...... बुद्धस्यायमभिप्रायः । तथा च सूत्रम् । तदिदं..... सूत्राभिप्रेतम् ।
२४. तथा च सूत्रम्—
२६. सर्वकल्पना......माध्यमिकमध्यास्तेति ।
२७. अथ......बौद्धकल्पिताः...तत्र सौत्रान्तिकाः प्राहुः । अर्थनिरपेक्ष......योगाचार.... । अत एव वैभाषिकमुखेनापि......
२९. अथ कैश्चित्......सौगतैरुक्तां...... ३१. आह च भगवान् मनुः । ये त्वाहुः—
३२. ननु भाष्ये कथम्...... । एतेन......लोकायतो(तैरुक्त)मपि......
३३. सौगतास्तु...... ३५. अत्र केचित् (शाब्दिकाः) । सूक्ष्मा पश्यन्तीमध्यमावैखरी । "नसोऽस्तिप्रत्ययो..." । ४१. अत्र चार्वाकः प्रत्यवतिष्ठते—
४२.... एतत्......न्यायविद्भिः (उदयनः) । "व्याघातो यदि" खण्डनकारः

४३. नाप्ताहुरेके (श्लोके)। अत्र.....उपाधिरित्युदयनः। साधनाव्यापकत्वे......वादीन्द्रः। अतः......इत्यौदयनिकाः। आदिशब्देन बौद्धोक्तषोडशविधा......

४६. एतत् सर्वं विडम्बने... (महाविद्याविडम्बनग्रन्थे वादीन्द्रकृते)। -

४७. भूयोदर्शनेन...न्यायविदसंप्रदायः  ४८. कुमारिलादयो......; वादीन्द्रादयः......;

४९. एवं .....महाविद्या...... । इति वादीन्द्रविकल्पवैयर्थ्यम्।

५०. इति वादीन्द्रनिरासेन......निरूपणम् ॥

५६. विस्तरं न्यायपूर्वं (श्लोके)। अस्तु.....अक्षपादप्रणीत...... । कस्तर्हि......न्यायतत्त्वे इति। अनुगम्ये.....अक्षपादकल्पितेन। उक्तं खलु नाथमुनिभिः—न्यायतत्त्वाभिधानेन। तत्र......यामुनाचार्यादिभिः। अक्षपादप्रणीते......

५८. शब्दो..... इति कौमारिलाः। गुणो नित्य इत्यन्ये (प्राभाकराः)। वृक्षादिशब्द... शाब्दिकाः। पौराणिकादयः औलूक्याः, आक्षपादाः

६०. नेदं......केचित् न्यायवादिन इति।  ६२. वितण्डायामपि द्वैविध्यमेके।

६३. वितण्डायां....वैतण्डिकेनाप्यङ्गीकार्येत्यर्थः। ६५. जात्यादिविभागस्त्वनेकेषु ग्रन्थेषु।

६६. इति षट्पक्षीसंभवः ॥

६७. सौगताः वैशेषिकाश्च। प्राभाकरास्तु। अतो.....प्राभाकरस्योत्तरम्। वैशेषिकस्यापि......विरोधः। बुद्धप्रभाकरवैशेषिकाणां......

६८. क्षपणकाः......  ७१. कथं तर्हि काठकादि.....

७२. तत्र प्राभाकरमतमनुवदति.... अत्र.... प्राभाकरो ....

७३. कोऽसौ...... प्राभाकरं (रा?)...

७७. "सादृश्यस्य" (उदयनाचार्य)

७९. कौमारिलास्तु......

८०. असौती (पाणिनीयसूत्र)

८२. तथा वेदप्रयोगोऽपि— साम-ब्रा २३. ६ चेष्टेन्द्रिय" न्यायदर्शने

८६. अक्षपादप्रणीतात्। नन्वीश्वरस्य...अक्षपादेनाप्यभिधीयते। यद्यक्षपादोऽपीश्वरस्य.. स खलु... अक्षपादः।

८७. तत्र स्फोटवादिन आहुः।  ८९. तर्हि,....भारतोक्तं....

९१. अभिहितान्वयवादिनः—; अत्रान्विताभिधानवाद्याह—

९३. संसर्गमेव....भाष्यकारस्य। अतो....केचिदाचार्याः (एकदेशिनः) गुरुकुमारिल..

९४. इत्थं खरवार्हतादीनामालापः  ९६. उक्तमर्थं ..मृषावादी.... ..

...९९. प्रमाणरूपस्यैव......प्राभाकरस्यैव। धर्मस्य......कणभक्षाक्षपादादि......

१०१. वेदविरुद्धस्मृति......शारीरकस्मृत्यधिकरणे......

१०२. इत्थं किल परतः प्रामाण्यवादिनः......

१०५. अथ सौगताः...... १०७. तथा च नैयायिकानामयं......

११२. एवं काठकादि...... ११३. कथं तर्हि पुंसूक्तादौ......

११४. इदमेव न्यायविद्भिरपि— ११५. बौद्धचार्वाकार्हतसांख्यादीनां

११६. मानवादेः...... ११९. मात्स्यादौ (श्लोके)। उक्तं हि मात्स्ये—

१२०. कापिलादि... १२१. अयमर्थः...बादरायणेनैव; अत एव...शाण्डिल्यादय...।
शाण्डिल्यः पञ्चरात्रतन्त्रमधीतवान्......; तदेव......भूमविद्येति।

१२२. मन्वादेः (श्लोके)। इदं श्रेयः......महाभारते। एतच्चाऽऽगमप्रामाण्ये भाष्यादौ....

१२३. शाण्डिल्यादि...... १२५. न ह्यक्षपादः कणादः कपिल......

१३२. कथं तर्हि भाष्यकारैः...; अत एव...भाष्यकारैरुदासि। १३३. अत्राहुर्मृषावादिनः।

१३४. विश्वखण्डकाः (खण्डनकाराः) वैभाषिकसौत्रान्तिकयोगाचाराः; मृषावादी; सांख्याः; चार्वाकाः(काः); खण्डकाः; माध्यमिकाः; अनेकान्तवादिनः;

५—२. इदं......कौमारिलजैनादिवत्

३. एवं......दुर्वैतण्डिकाः। स्वर्गकर्णीसुतोऽपि.....

६. अत्र क्षपणका......; बौद्धास्तु...... ११. नृसिंहप्रभृतिषु (श्लोके)

१२. सप्तभङ्गी (श्लोके) १५. प्रमाण......वैशेषिकादीनां......

१६. सांख्याः...... २०. शब्दस्यापि......श्रीयामुनाचार्यादिभिः......

२२. अत्र केचिदाहुः। (मीमांसकाः) असत्पक्षे......नैयायिकादिमतवत्......

२३. हरिद्रासस्य पुद्गलत्वं (श्लोके) सध्वनीनां......क्षपणकाः

२४. वर्णात्मक...कौमारिलाः... २५. तौतातिताद्यैः

२७. आयुर्वेदे (श्लोके)। कथं तर्हि आयुर्वेदे...

३१. अंशेषु...काणादानामेव। ३५. अन्यत्सर्वं...न्यायपरिशुद्धौ...

३६. 'अग्नेरूर्ध्वज्वलनम्'...(वै. द.) ३८. सांख्यास्तु...

३९. तत्काल...कौतस्कुतानां... ४२. आचार्याः केचित्...

४४. वैशेषिकाः...प्राभाकरं... ४६. बौद्धास्तु ४७. केचिदाचार्याः प्राहुः।

५०. सांख्यशैवप्रभृति...(श्लोके)। ५३. एवं...जैनस्य...

५४. केचित्तु...(तार्किकाः केचित्); ईश्वर...काणादादयः...

५९. तत्र भाष्यकारा न्यायतत्त्वानुसारात्... ६२. इत्थमेव...जैनैरप्यङ्गीकृतम्...

६४. भूषणमतानुसारिणः ६५. केचिदूचिरे । ७०. यथा न्यायदर्शने...

७६. आहुः...केचित्...अन्ये......केचिदूचुः । पुद्गलांस्तत्सयूथ्याः (श्लोके) । ...सांख्याः आहुः । सौगताः न्यायवादिनः जैनैकदेशिनः तत्सयूथ्याः

७८. इत्युक्तं सांख्यसक्तैः (श्लोके) । अत्र सांख्याः... तत्रैवं शारीरकशास्त्रे...

७९. 'विफला विश्ववृत्तिर्नः' (उदयनाचार्यैः)

८०. अथः...कौमारिलैः... ; अपि तु भाट्टोक्ताम् ...प्राभाकरोक्ताम् ...

८१. अतो...वैदिकसिद्धान्तः । विध्यपेक्षित...मीमांसकमर्यादा । रात्रिसत्रन्याये । एवं...मीमांसकनिर्णयः

८६. सहकारिवशादेव...न्यायवित्संप्रदायः। ८८. एवं...प्राभाकरोक्ते...।नपुनः कौमारिल...

८९. 'कृतिसाध्यं...प्राभाकरमतानुवर्तिभिः,'

९०. कल्प्या...कौमारिला...; कुमारिलमतानुसारे

९१. यागादिगतं...वेदार्थसंग्रहादौ... ९६. तथाऽत्र...भाष्यकाराभिप्रायः...

१०९. इत्थं किल...वैशेषिकाणां १११. समाविष्टानां...न्यायवादिनाम् ।...

११५. इत्थं न्यायविदां...सौगतोक्तमपोह... ११६. एवमपोह...वैशेषिकाद्युक्तं

११७. यत्र...न्यायविद्रहस्यम् । ११९. यत् यथा...न्यायसंप्रदायः ।

१२२ अत्राद्वैतवादिनः... १२३. एवं...वैशेषिकोक्तं... ; इत्थं दृष्टैरेव...वैशेषिकोऽपि

१२४. किं च.. वैशेषिकादयः १२८. यत्र धर्मो...प्राभाकराः

१३५. तत्र भगवल्लक्ष्मणाचार्य... १३६. नाथोपज्ञं यामुनार्य....यतीन्द्रैः ।

एवं सर्वार्थसिद्धौ प्रायो ग्रन्थतत्कर्तृनामनिर्देशात् प्रसिद्धोपनिषदादिग्रन्थोद्धरणविषयसूच्याः भाष्यादिपरिचयशालिनामनपेक्षितत्वात् प्रमाणाकरनिर्देशो न कृतः । व्याख्याद्वयार्जकविद्वद्विषये, प्रकृतग्रन्थे अनन्तनवीनपाठाभ्यूहप्रदर्शिविद्वद्विषये च यथावत् कृतज्ञता भूमिकारम्भ एव विस्तरेणादर्शि ।

अस्य ग्रन्थस्यैवं संपूर्णशोधनभारम् ऊढवतोः आयुष्मतोः पुत्रयोः **श्रीनिवासराघवराजगोपालयोः** साहाय्यादेव वार्धकेऽप्येतन्मुद्रणं निरवर्तयम् । अत एव ग्रन्थान्तरापेक्षयाऽत्राशुद्धिर्न्यूना ।

एवं ग्रन्थमुद्रणं यथाकालं विधायोपकृतवतां **श्रीनिलयमुद्रणयन्त्राधिकारिणां** विषयेऽपि कृतज्ञोऽस्मि ॥

संपादकः

शुभमस्तु

# सव्याख्यतत्त्वमुक्ताकलापविषयसूची

## जडद्रव्यसरः

## जीवसरः

## नायकसरः

## बुद्धिसरः

## अद्रव्यसरः

शुभमस्तु ॥

श्रीः

श्रीमान् वेंकटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

# तत्त्वमुक्ताकलापः

## जडद्रव्यसरः 1

**लक्ष्मीनेत्रोत्पलश्रीसततपरिचयादेव संवर्धमानो**
**नाभीनाळीकरिङ्ग(ङ्ख)न्मधुकरपटलीदत्तहस्तावलम्बः ।**
**अस्माकं संपदोघान् अविरलतुलसीदामसञ्जातभूमा**
**काळिन्दीकान्तिहारी कलयतु वपुषः काळिमा कैटभारेः ॥ १ ॥**

## सर्वार्थसिद्धिः

जयति सकलविद्यावाहिनीजन्मशैलो
जनिपथपरिवृत्तिश्रान्तविश्रान्तिशाखी ।
निखिलकुमतिमायाशर्वरीबालसूर्यो
निगमजलधिवेलापूर्णचन्द्रो यतीन्द्रः ॥ (१)

ताराकल्पे स्फुरति सुधियां तत्त्वमुक्ताकलापे
दूराद्वृत्त्या दुरधिगमतां पश्यतां सर्वसिद्ध्यै ।
नातिव्याससव्यतिकरवती नातिसंकोचखेदा
वृत्तिः सेयं विशदरुचिरा कल्प्यतेऽस्माभिरेव ॥ (२)

आरिप्सितस्य प्रबन्धस्याविघ्नपरिसमाप्त्यादिसिद्ध्यै मङ्गलमाचरन् अर्थात् वक्ष्यमाणं द्रव्याद्रव्यविभागं प्रतितन्त्रविशेषांश्च संग्रहेण सूचयति **लक्ष्मीति** । यज्ञविद्येत्यादिना सर्वविद्यानां तादधीन्योक्त्या सा स्थाप्येति लक्ष्मीरादौ संकीर्त्यते । तन्नित्ययुक्तत्वसूचनाय **सततपरिचयो**क्तिः । **नाभीत्यादिना** पद्मभुवः कार्यत्वकर्मवश्यत्वसूचनात् ततोऽर्वाचामनीश्वरत्वं कैमुतिकसिद्धम् । **अस्माकमिति**— जीवानामीश्वरादन्योन्यञ्च भेदः प्रत्यक्त्वमहंशब्दार्थत्वञ्च प्रख्याप्यते । तेन स्थालीपुलाकन्यायेन परमतनिरासमप्युदाहरति । **सम्पदोघानिति** तत्त्वज्ञानादिकाः स्वप्राप्तिपर्यन्ताः सिद्धिपरम्पराः । **अविरले**त्यादिना सत्त्वाधिकप्रशस्ततमद्रव्यार्चनीयतया अन्येभ्यो व्यावर्तन(नीयत्व)मनुवर्ण्यते । **कालिन्दीकान्ति**हारीत्यनेन तद्गुणानां परगुणतिरस्कारकत्वमुपलक्ष्यते । **कैटभारेर्वपुष** इति व्यतिरेकविभक्त्या (व्यतिरेकेण) शुद्धसत्त्वमयविग्रहयोगः तत्स्वरूपादन्यत्वञ्च स्थाप्यते । **वपुषः कालिमेति** द्रव्याद्रव्यविभागप्रदर्शनार्थम् । एवं जडाजडाद्यपि यथास्थानमूह्यम् ॥ १ ॥

# सर्वार्थसिद्धितात्पर्यप्रकाशिका

## (वाधूल श्रीनिवासार्यविरचिता)

ஸ்ரீ— लक्ष्मीनाथमुखान् नत्वा गुरून् समरपुङ्गवम् ।
सर्वार्थसिद्धिगूढार्थविवृतिः क्रियते मया ॥

वेदान्ताचार्यापरनामधेयः श्रीमद्वेङ्कटनाथार्यो मुमुक्षुजनतत्त्वावबोधार्थं तत्त्वमुक्ताकलापाख्य-ग्रन्थेन तत्त्वानि परीक्ष्य तत्त्वमुक्ताकलापं स्वयमेव विवरीतुकामः प्रारिप्सितनिविघ्नपरिसमाप्तिकामः स्वगुरुपरम्पराप्रधानयतीन्द्रस्तुत्यात्मकं मङ्गलमारचयति—जयतीत्यादिना ।

चिकीर्षितस्य प्रेक्षावदुपादेयत्वज्ञापनार्थं प्रयोजनं दर्शयति—ताराकल्प इति । तारः—स्फुरन् आकल्पः—भूषणमित्यर्थः । स्फुरत्तया दुष्प्रापतया च नक्षत्रतुल्य इति वाऽर्थः । दूराद्-वृत्तिरस्य (भूषणादेः) देशविप्रकर्षः ; ग्रन्थस्य गूढार्थत्वम् । अस्माभिरेवेति । अनेन मूलग्रन्था-विवक्षितार्थप्रतिपादनशङ्कानिरासः ॥

प्रतितन्त्रविशेषाः—भगवतो लक्ष्मीनित्ययोगः, विधिशिवादिकारणत्वम्, तुलसीसम्बन्धः, शुद्धसत्त्वमयविग्रहयोगश्च ॥ १, २, ३ ॥

# सर्वार्थसिद्धिगूढार्थप्रकाशः

## (श्रीमत्सौम्यवरदरामानुजार्यविरचितः)

ஸ்ரீ:— श्रीनिवासगुरुं नत्वा श्रीमत्तातयदेशिकम् ।
सर्वार्थसिद्धिगूढार्थप्रकाशः क्रियते मया ॥ १ ॥

तत्त्वमुक्ताकलापाख्यप्रकरणं व्याचिख्या[सु·?] . . .. ग्रन्थकरणवेलायां सम्प्रदायपरम्परागतानां समीचीनानामर्थानां तत्साधकप्रमाणानां परपक्षप्रतिक्षेपयुक्तीनां च परि-स्फुरणम्, "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते(ऽ)कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" इति श्रुतेः गुरुप्रसादाधीनमिति मन्वानो गुरुपदविहारयतिनायकभूत श्रीमद्भाष्यकारं स्तुवन्, तत्स्मृतिरूपस्वनिर्मितयतिराजसप्तत्याख्यप्रबन्धमध्यपतित सकल मङ्गलमावहन् (न्तं?) (सकलमङ्गलावहं?) जयशब्दोपक्रमपद्यविशेषमनुसन्धत्ते—जयतीति ।

एवमदृष्टद्वारा विघ्नपरिसमाप्तिप्रचयगमनोपायभूतं गुरुनमस्कारात्मकं मङ्गलमारच्य्य प्रचय-गमनदृष्टोपायभूतं विषयप्रयोजनसम्बन्धाधिकारिरूपानुबन्धिचतुष्टय तत्तद्वस्तुशास्त्रादिप्रसिद्ध-जयादिहेतुभावमुक्ताकलापोपाय(?)समाधिमुखेन प्रदर्शयति—ताराकल्प इति । सुधियां ताराकल्पे-तारश्चासौ आकल्पश्च ताराकल्पः, तस्मिन् स्फुरति देदीप्यमाने, दूराद्वृत्त्या = अन्तःप्रवेशाभावेन दुरधिगम सर्वसिद्ध्यै परावरतत्त्वज्ञानाय । अतिव्यासः—अत्यन्तविस्तरः, व्यतिकरः-अन्यत्र वक्तव्यानामत्र निवेशनम्, तद्रहिता । अतिसंकोचन(चेन?)खेदः, तद्रहिता । सेयं वृत्तिः या भाष्यवार्तिकादिविलक्षणत्वेन लक्षणमालादौ प्रतिपादिता, विशदस्थिरा-सुसंग्राह्यसम्मन्तव्यार्थवती वृत्तिरस्माभिरेव कल्प्यत इति ।

(१) प्रथमपद्यस्य तात्पर्यमाह—आरिप्सितस्येति । मङ्गलमिति । लक्ष्मीवृद्धिसम्पद्भूमोत्पल-नालीक-तुलसीशब्दैः प्रशस्तपदार्थवाचकैः पदसामर्थ्यलब्धं, 'सम्पदोघान् कलयतु' इति वाक्यसामर्थ्यलब्धं चेत्यर्थः । मङ्गलमाचरन् इति । अनेन, "मङ्गलाचारयुक्तानां—" इति वचनं तत्कर्तव्यताया प्रमाणमभिप्रेति । विद्यानां तादधीन्योक्त्येति । 'राजा राज्यम्' इतिवत् सामानाधिकरण्यमिति भावः । तन्नित्य[युक्त?]त्वसूचनायेति । "नित्यानपायिनी ह्येषा",

"देवत्वे देवदेहेयम्" इत्यादिवचनात् यथा भगवान् दिव्यमङ्गलविग्रहविशिष्टवेषेण नित्यः, एवं लक्ष्मीरपि नित्येति, नित्यसम्बद्धेति वा सूचनायेत्यर्थः। कार्यत्वकर्मवश्यत्वसूचनादिति। "तस्य देवस्य सुप्तस्य नाभौ पद्ममजायत। तस्मिन् समभवद् ब्रह्मा......" इति, "युगकोटिसहस्राणि विष्णुमाराध्य पद्मभूः। पुनस्त्रैलोक्यधातृत्वं प्राप्तवानिति शुश्रुम" इति वचनद्वारेति भावः। ततोऽर्वाचीनाना(येचा?)मिति। तत्पुत्रपौत्रादितया प्रतिपन्नानां रुद्रादीनामित्यर्थः। अन्योन्यं चेति। "बहुषु बहुवचनम्" इति मुख्यबहुवचने सम्भवति, आत्मनि बहुवचनस्य अग्राह्यत्वादिति भावः। प्रत्यक्त्वमिति। यो यद्विषयं शब्दं प्रयुङ्क्ते, तस्मै स भासते। प्रयुङ्क्ते चायं स्वविषयं शब्दम् अस्माकमिति। अतः स्वयमपि स्वस्मै भासते। इदमेव प्रत्यक्त्वं नाम, यत् स्वस्मै भासमानत्वमिति भावः। अहंशब्दार्थत्वमिति। सम्पदोषफलनप्रतिसम्बन्धितयोक्तो ह्यहंशब्दार्थो जीव एव; न तु अहंकारः; तस्य मोक्षावस्थायां विलयाभ्युपगमात् इति भावः। स्थालीति। यथा स्थाल्यां पुलाकान् उद्धृत्य उदाहरन्ति—'यथैते तण्डुलाः पक्वा एवं सर्वेऽपि तण्डुलाः' इति; एवं सर्वेषां परमतानां दुष्टत्वं वक्तुं कतिचित्परमतदूषणानि सूचनद्वारेणोदाहृत्य दर्शयतीत्यर्थः। तत्त्वज्ञानादिकाः स्वप्राप्तिपर्यन्ता इति। "विवेकनिर्वेदविरक्तिभीतयः प्रसादहेतूत्क्रमणार्चिरादयः। प्रकृत्यतिक्रान्तपदाधिरोहणं परानुभूतिं नव(भूतिस्थिति?) (पराप्तिरित्यत्र तु) पर्वणां क्रमः॥" इति प्रतिपादिता इत्यर्थः। व्यावर्तनम्—आधिक्यम्। अनुवर्ण्यत इति। श्रुतिस्मृतिषु, 'नाभीनालीक' इति स्ववाक्ये च वर्णितं पुनरपि वर्ण्यत इति। परगुणतिरस्कारकत्वमुपलक्ष्यत इति। कालिम्नः कालिन्दीकान्तिहारित्वमुपलक्षणमात्रम्; अन्येषां सर्वेषामपि भगवद्गुणानां परगुणतिरस्कारकत्वमस्तीति प्रतिपाद्यत इत्यर्थः। व्यतिरेकेणेति(?)। [व्यतिरेकविभक्त्या: ?] व्यतिरिच्यमानपदार्थमन्तरेण अनुपपत्तेरिति। स्थाप्यत इति। 'नाभी' इत्यादिना सूचितः पुनरपि दार्ढ्यायोच्यत इत्यर्थः। प्रदर्शनार्थमिति। द्रव्यम् अद्रव्यम् इति द्विभागोऽस्ति, यथा वपुःकालिमानौ इति प्रदर्शनायेति। यथास्थानं ग्राह्यमिति। प्रत्यक्त्वपराक्त्वविभागोऽपि 'कैटभारेर्वपुः' इत्यादाविति। (१)

श्रीनिवासपरब्रह्मणे नमः
श्रीमते निगमान्तमहादेशिकाय नमः

## अलभ्यलाभः

श्रीवात्स्यवीरराघवार्यविहितः

श्रीमद्वृषगिरिव्यक्तं विश्वरूप(तत्त्व)प्रदर्शकम्।
अपार्थक्षेपिणं वन्दे वेंकटेशं परं महः॥ १॥
आनन्ददायिनीं दृष्ट्वा प्रकाशो विवृतिस्तथा।
प्रथमा मुद्रिता नान्यः पूर्णोऽल्पा विवृतिः पुनः॥ २॥
व्याख्यानामुपलब्धानामपूर्णत्वात् अमुद्रितः।
आवश्यकांशाः प्रायेण निवेश्यन्ते त्वविस्तरम्॥ ३॥
श्लोकार्थयोजनापूर्वं टीकावाक्यानि कानिचित्।
पूर्वैरव्याकृतान्यत्र विव्रियन्ते यथामति॥ ४॥
जडद्रव्यस्य जीवस्य नायकस्य तथा क्रमात्।
बुद्धेरद्रव्यतत्त्वस्य सरा मुक्ताकलापगाः॥ ५॥

पद्ये हि 'साधये सर्वमर्थम्' इत्याह तुर्यके ।
सर्वार्थसिद्धिरित्याख्या वृत्तेस्तस्मात् व्यधीयत ॥ ६ ॥

श्रीभाष्यकारश्रीसूक्तिप्रवगाह एव गाढ एवं प्रमेयनिष्कर्षमजनयदिति तद्विरुद्धपक्षनिरसनेन तत्स्थापनप्रवृत्तः निष्कृष्टभगवल्लक्ष्मणाचार्यमुद्रः तस्यैव जयशीलत्वमनुसंधत्ते जयतीति मंगलेन ।

व्याख्याविधाने हेतुमाह तारेति । तारकल्पे=नक्षत्रसदृशे । दूरादृदृश्या—स्वरससर्वसिद्धान्तविदां दानुसंधानाभावात् । दुरधिगमता—श्लोकार्थग्रहणसौकर्याभावः । वृतिशब्दाच्च वृत्येति रूपम् । तदा वृतिरावरणम् । सुधियां नक्षत्रवत् प्रकाशात एव मुक्ताकलापः । ये तु दूरात् वृत्या बहुदूरप्रवृत्त-मोहमेघाद्यावरणेन तद्दुर्महत्वं पश्यन्ति, तेषां सर्वाधिगमाय, दूरस्थतया नक्षत्रवत् सूक्ष्मतया पश्यतां सर्वांशविशदाधिगमाय च वृत्तिः क्रियते । वृत्तिश्चेयमिति पाठः स्यात् ; मूलवत् व्याख्याऽपि स्वकीयेति । सेयमिति पाठे भाष्यवार्तिकादिशब्दवत् वृत्तिशब्दो यत्रार्थे प्रसिद्धः, तादृशार्थ-भूतेत्यर्थः । सूत्रार्थः सवाक्यार्थश्च वर्ण्यते भाष्ये, उक्तानुक्तदुरुक्तार्थशीलत्वं वार्तिके इति तत्त-ल्लक्षणम् । विशदरुचिरव्याख्या वृत्तिः । नातिसंकोचखेदा—न विद्यते अतिसंकोचमूलकार्थ-ग्रहणक्लेशो यस्यां सा । अस्माभिरेवेति । मूलकृतैवेत्यर्थः । "नक्षत्रपक्षे दूरस्थित्येत्यर्थः ; ग्रन्थपक्षे वृत्याः व्याख्यायाः दूरात् अभावादित्यर्थः" इत्यानन्ददायिनी ।

अद्रव्यपर्यन्तसर्वविचारोऽत्र क्रियत इति ज्ञापनाय, अद्रव्यभूतभगवद्दिव्यमङ्गलपरविग्रहवर्ण-विषयकं मङ्गलमारचयति लक्ष्मीति । कालिमा-कालत्वं कृष्णरूपम् । कैटभारिवपुःकालिमा संपद्घो-घान् अस्माकं कलयतु इत्यन्वयः । कालिमविशेषणं सर्वं प्रथमान्तम् । प्रतियुगं व्यूहे वर्णभेदात् कलियुगे कृष्णरूपमिति संनिकृष्टतद्ग्रहणाय एव इत्युक्तम् । तस्य कालिम्नः उपचयहेतून् बहून् आह लक्ष्मीति । नित्यानपायिन्या लक्ष्म्या सततं दृश्यमानत्वात् तदीयोत्पलतुल्यनेत्रकान्त्या कालिम-वृद्धिः ; यथा लक्ष्मीविग्रहे रक्तिमवृद्धिरेतन्नेत्राम्भोजश्रीसततपरिचयात् । नाभ्यां नालीकं पद्मम् । तत्र रिंखन्मधुकरपटलीदत्तः हस्तावलम्बः= उल्लायहेतुः यस्येति कालिमविशेषणम् । रिंखदि-त्यादिना तदा विधिगृहीतवेदापहारार्थमधुकैटभाक्रमणसमये परितो निष्क्रम्य भृंगाणां परिभ्रमणं सूच्यते । तेन ब्रह्मणोऽतीव कर्मवश्यता ध्वन्यते । अविरलत्वं तुलसीदाम्नः आपादचूडं तुलसी-धारणात् । भूमा—बहुत्वम् आधिक्यं कृष्णरूपस्य । कालिन्द्याः—यमुनायाः कान्तिं हरतीति तन्मेलनादुपचयः । वस्तुतः कान्तिहारित्वं ततोऽतिशयितत्वम् । कैटभारेरिति अपहृतवेदपुनः-प्रदानाय कृतहयग्रीवावतारत्वमपि ज्ञाप्यते । तेन प्रतिकथकापहृततत्त्वपुनःप्रतिष्ठापनं चिकीर्षितं तदधीनमिति तदर्थमंगलमिदमिति व्यंग्यम् । कालिम्नि विशेषणचतुष्टयात् सामान्यतः अद्रव्येषु जड-जीवनायकबुद्धिरूपद्रव्यचतुष्टयगतत्वं ज्ञाप्यते । कालिमेति पुलिङ्गात् परिचयहस्तावलम्बादिपदत्तश्च तस्य पुरुषत्वेन रूपणं तस्य उत्पलश्री-पटली-तुलसीरूपसौभाग्यसंपन्नस्त्रीविशिष्टतया संवृद्धि-साहाय्यभूमवत्तया च संपदोघप्रदत्वशक्तिश्च व्यज्यते ।

वृत्तौ—प्रतितन्त्रविशेषान्—स्वसिद्धान्तासाधारणार्थान् । नित्यानपायिलक्ष्मीकत्व-सर्वजग-त्कारणत्व-अप्राकृतविग्रहकत्व-अप्राकृतद्रव्याराध्यत्व-अपवर्गान्तिफलप्रदत्वादीन् हि श्लोको दर्शयति । संपत्पदेन विद्यासंपदो विवक्षणात् तदुचितनिर्देश आदावित्याह यज्ञेति । "यज्ञविद्या महाविद्या गुह्यविद्या च शोभने । आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी" इति श्रीविष्णुपुराणे (१-४) इन्द्रकृतलक्ष्मीस्तोत्रे । लक्ष्मीत्यादि प्रथमविशेषणेन विद्याप्रदत्वं रिंखन्मधुकरेति गत्यर्थरिखिधातु-प्रयोगात् मधुकरगतेश्च रींकाराविनाभूतत्वात् मधुरव्याहारप्रदत्वं दामेत्यनेन ज्ञानशब्दयोः सा-

न्तत्वं संग्रथनावहत्वं कान्तिहारीति परज्ञानशब्दतिरस्कारकत्वञ्च ज्ञाप्यते। सम्प्रदायानितीति इतिशब्दसत्त्वात् परम्परा इत्यत्र उदाहरतीत्यनुषङ्गः। तद्गुणानामिति। अनेन कालिमेति उपलक्षणं वपुर्गतसौन्दर्यादीनां कैटभारिगतज्ञानशक्त्यादीनाञ्च गुणानाम्। तेन तेषां सर्वेषां जीवीयगुणातिशयितत्वं कान्तिहारीत्यनेनोपलक्ष्यत इत्युक्तं भवति। कैटभेति मधोरप्युपलक्षणम्।

कैटभः कीटवद्भातो मधुश्च मधुपोपमः। पुरो यस्य, परस्तस्य कः परो भवितुं क्षमः॥

श्रीहयमुखरूपेण रजस्तमोरूपमधुकैटभद्वयसंहारात् अयथार्थज्ञानवारणेन यथार्थज्ञानप्रदत्वमस्य कालिम्न उक्तं भवति। यथास्थानमिति। उत्पलनालीकादिशब्दाज्जडलाभः, मधुकरशब्देन अस्माकमिति च अजडजीवसूचनम्, अविरलतुलसीत्यादिना नायकवैलक्षण्यस्य, कान्तिपदं प्रभास्थानीयधर्मभूतज्ञानसूचकम्, कालिमशब्दश्चाद्रव्याणामिति वक्ष्यमाणसरक्रमेण सर्वलाभः। तत्र मध्यमसरत्रयमजडविषयकम्। (१)

नानासिद्धान्तनीतिश्रमविमलधियोऽनन्तसूरेस्तनूजो
वैश्वामित्रस्य पौत्रो विततमखविधेः पुण्डरीकाक्षसूरेः।
श्रुत्वा रामानुजार्यात् सदसदपि ततस्तत्त्वमुक्ताकलापं
व्यातानीत् वेङ्कटेशो वरदगुरुकृपालम्भितोद्दामभूमा॥ २॥

चिकीर्षितस्य श्रद्धेयत्वाय वक्तृसम्प्रदायवैलक्षण्यं दर्शयति—नानेति। सत् प्रामाणिकं मुमुक्षोरुपादेयञ्च; तदन्यदसत्। सतस्सत्त्वेन असतश्चासत्त्वेन श्रवणमिहेष्टम्, ततः श्रवणादेव हेतोः॥२॥

[illegible]— (२) वक्तृसम्प्रदायेति। वक्तृसम्प्रदाययोर्वैलक्षण्यं, वक्तुः सम्प्रदायवैलक्षण्यं चेति। प्रामाणिकं मुमुक्षोरुपादेयं चेति। सच्छब्दो विद्यमानवाची, साधर्थान्यवाची वेति भावः। श्रुत्वा = [इमे ?] पदार्थाः प्रामाणिकाः, एतेषु च अयं पदार्थो मुमुक्षोरुपादेय इति श्रुत्वेत्यर्थः। अन्यदिति। अप्रामाणिकं मुमुक्षोरनुपादेयं च। ननु सत्संप्रदायादसच्छ्रवणं व्याहतम्; अत्राह असतश्चासत्त्वेन श्रवणमिति। ननु ततश्शब्दस्य आनन्तर्यपरत्वे श्रुत्वा इत्यनेन पौनरुक्त्यं स्यादित्यत्राह तत इति॥(२)

[illegible]— (२) सत्संप्रदायसिद्धार्थानां सर्वेषामत्र यथावद्ग्रहणं भवतीति ग्राहयितुं स्वतातपादस्वपितामहस्वाचार्यतदाचार्यज्ञानशीलादिवेदनेन स्वस्याऽऽप्ततमत्वमावेदयति नानेति। "व्यतानीदित्याशंसायाम्। कर्तुमाशंसत इत्यर्थः। संकल्पमात्रेण सिद्धिं मत्वा वा भूतनिर्देशः" इति आ. दा.। यद्वा चिकीर्षितं ग्रन्थं करणानन्तरं पश्यद्भिर्यत् मनस्यनुसंधेयम्, तत् श्लोकद्वयेन दर्शयति नानेत्यादिना। अतो भाव्यनुसंधानवेलायां ग्रन्थस्य भूतत्वात् व्यातानीदिति निर्देशः। नानाविधानां स्वसिद्धान्तानां स्थापिका नीतयो यावद्दूरं गत्वा श्राम्यन्ति, तावद्दूरचिन्तया तच्छ्रमावगमेन सिद्धान्ते निर्मला धीर्यस्य। वैश्वामित्रस्येति च अनन्तसूरेर्विशेषणम्। सर्वं विशेषणमुभयान्वयि वा। रामानुजार्यात् आत्रेयात् स्वमातुलात्। विशिष्टयोः पुत्रपौत्रो भवन्नपि मातुलादश्रौषीदित्यनेनैव मातुलस्य तदतिशयितज्ञानानुष्ठानादिसिद्धिरित्याशयेन एतद्विशेषणानुक्तिः। भगवद्रामानुजोऽपर इति सूचनाच्च। चैत्रार्द्राजन्मभाक्त्वं चोभयोः। आचार्योपदिष्टसर्वगहनार्थधारणनैपुण्यं स्वस्य यन्मूलकं तं विशेषमाह वरदेति। वात्स्यवरदाचार्यः उक्तरामानुजार्यगुरुः। बाल्ये पञ्चवयस्कत्वदशायां प्रागेव देशिकस्य धारणसामर्थ्यमुपलभ्यायं तेनानुगृहीतः, "प्रतिष्ठापितवेदान्तः" इ—

रीत्येति निश्चप्रचमेतत्। उद्दामः सर्वातिशायी भूमा बुद्धिवैशाल्यं यस्य सः। तदन्यदिति। अप्रामाणिकं मुमुक्षुनुपादेयञ्च परसिद्धान्तभूतमन्यत्त्वेन श्रुतेत्यर्थः। इत्थमिदमेवं खण्डनीयमित्यपि आचार्योपदिष्टमिति भावः। (२)

प्रज्ञाख्यस्याऽनुविद्धः क्षतिमनधिगतः कर्कशात् तर्कशाणात्
शुद्धो नानापरीक्षास्वशिथिलविहिते मानसूत्रे निबद्धः।
आतन्वानः प्रकाशं बहुमुखमखिलत्रासवैधुर्यधुर्यो
धार्यो हेतुर्जयादेः सहृदि सहृदयैस्तत्त्वमुक्ताकलापः ॥ ३ ॥

प्रबन्धस्य स्वरूपातिशयादपि सुधीभिरङ्गीकार्यत्वमाह—प्रज्ञेति। ज्ञातस्यातिशयाधायिनी धीः प्रज्ञा। कलापस्यानुविद्धत्वादि प्रत्येकद्वारा। तत्त्वानां प्रज्ञया अनुविद्धत्वं सम्यङ्निर्धारितत्वम्। रत्नान्तरेषु शाणक्षतिसम्भवः, न मुक्तासु। प्रमाणतर्कैर्याथात्म्यान्वेषणं परीक्षा। तन्नानात्वं तर्कादिभेदात्। मुक्तासु स्वानुगुणपरिमाणयुक्तं सूत्रं मानसूत्रम्। अन्यत्र प्रमाणमेव सूत्रम्। तस्याशिथिलविहितिः—निर्बाधत्वेन विशेषतो धीस्थत्वम्। प्रकाशम् आलोकं बोधञ्च। बहुमुखं सर्वतोदिक्कं सर्वविषयं च। त्रासः मणिदोषः प्रतिपक्षाद्भीतिश्च। जयादेरित्यादिशब्देन क्वचिदैश्वर्यादेः, अन्यत्र तत्त्वनिर्णयस्य च सङ्ग्रहः। हृच्छब्दो वक्षश्चित्तं च वदति। सहृदयैः सारासारविवेचनार्हहृदयवद्भिः, धार्यः क्वचिदाभरणतया, अन्यत्रारोपेण ॥ ३ ॥

टिप्पणी— (३) ज्ञातस्येति। न ज्ञानमात्रवाची प्रज्ञाशब्दः, अपितु तद्विशेषवाची, अन्यथा अतिशयानुक्तेरिति। तर्कादिभेदादिति। तर्कमीमांसाशब्दच्छन्दोविचितिभेदादित्यर्थः। प्रमाणदार्ढ्ययोर [पुरुष?] तन्नत्वात् 'अशिथिलविहिते मानसूत्रे' इत्ययुक्तमित्यत आह—तस्येति। विशेषतो धीस्थत्वमिति। आगमगम्याः प्रकृत्यादयः, अनुमानगम्या इन्द्रियप्राप्त्यादयः, प्रत्यक्षगम्याः वियदादयः इत्यादिरूपेण विशेषतो धीस्थत्वमित्यर्थः। (३)

श्री— (३) तत्त्वान्येव मुक्ताः तत्कृतो भूषणं कलापः। तत्र मुक्तासाम्यप्रयोजकाकारान् दर्शयति प्रज्ञेति। नानापरीक्षासु—तत्तद्वादिभिस्सह चर्चावसरेषु, स्वयं शोधनेषु च। अशिथिलविहितत्वं सूत्रस्य दृढतया निर्मितत्वम्। निबद्ध इति। प्रोताः ततश्चलनाभावाय पार्श्वयोः कृतग्रन्थयश्च भवन्ति मुक्ताः। वैधुर्यधुर्यः त्रासाभावं पूर्णतया वहन् इत्यर्थः। स्वरूपातिशयादिति। पूर्वश्लोके प्रबन्धप्रभावप्रयुक्तोऽतिशयो दर्शितः, अत्र तु प्रबन्धस्वरूपेऽतिशय इति भेदः। प्रत्येकद्वारा एकैकमुक्ताद्वारा। क्वचित्—आभरणपक्षे। अन्यत्र प्रबन्धपक्षे। सारासारेत्यादि उभयसाधारणम्। (३)

शिष्टा जीवेशतत्त्वप्रमितिपुरुपरोपासना मुक्तिहेतुः
शब्दस्तत्तत्प्रकारावगतिविरहिभिर्नैव याथात्म्यबोधः।
ते ते चार्था विदध्युः कुमतिविरचितास्तत्त्वबोधोपरोधं
तस्मान्निर्धूतसर्वप्रतिमतविमतिं साधये सर्वमर्थम् ॥ ४ ॥

नन्वपवर्गसिद्धौ यत् अन्तरङ्ग तदेव विशद तदर्थिभिरवगन्तव्यम्, तावदेव शिष्यादिभ्योऽपि प्रवर्ति(र्तयि ?)तव्यम्, किमन्यैरिह कीर्त्यमानैरित्यत्राह **शिष्टेति** । **शिष्टा** चोदितेत्यर्थ । जीवेशावेव तत्त्वे **जीवेशतत्त्वे ;** तयो **प्रमितिरिह** आगमजन्या । परोपास्तेस्तत्त्वज्ञानमितिकर्त्तव्यता, न तु स्वयं साधनम् । **प्रमितियुता** । प्रमितिजनितानुस्मृतिपूर्विकेत्यर्थ । तदभिप्रायेणोक्तं **जीवपरमात्मयाथात्म्यज्ञानपूर्विकेत्यादि** । **परोपासनेति** सर्वविद्याभिप्रायम् । परस्य ब्रह्मण उपासनेति वा । **शक्य** इत्यादि-न हि द्रव्याद्रव्यविभागाभावे शिष्टोपासनमूलक(लभूत?)तत्त्वप्रतीतिसिद्धि , [सर्वे]तत्त्वनिरूपणाभावे च तत्त्वनिर्णयोपयुक्तयोस्तर्कानुमानयोर्व्याप्ति शङ्काकलङ्किता स्यात् । परोक्तानुमानानामन्यतरासिद्धयनैकान्तिकत्वाद्युद्भावन च कथ स्यात् । परो वा कथमस्मत्सिद्धान्तानभिज्ञ कथायामस्माभिरधिकुर्यात् ? परकल्पितार्थभङ्गेन तदहङ्कारखण्डनञ्च तत्त्वाध्यवसायसरक्षणार्थम् । **तत्तदिति** प्रस्तुतौ जीवेशौ गृह्येते । अथवा तत्तत्प्रकृत्यादिप्रकारबोधाभावे तत्तत्प्रतिसम्बन्धिक तयोरपि याथात्म्य नावगम्येत । **ते ते चार्थाः** ब्रह्मविवर्तपरिणामभिन्नाभिन्नत्वादय **कुमतिविरचिताः** कुमतिभि —कुदृष्टिभि कल्पिता । भ्रान्तिविजृम्भिता इति वा । अत एव कुमतिभिरर्थ्यन्त इति **अर्थाः ;** न तु परमार्था । प्रतिमतै **र्विमतिः** विवाद तत्प्रसूता वा विरुद्धबुद्धि । **सर्वमर्थम्** । मुमुक्षुभिर्ज्ञातव्य परम्परयेत्यर्थ ॥ ४ ॥

*ஸ்ரீ*— (४) प्र पदेनैव याथार्थ्यसिद्धे तत्त्वपद व्यर्थमित्याशङ्क्याह-जीवेशाविति । परोपासनेति । अत्र कर्मधारयस्यापि प्रकृतत्वात् परा चासावुपासनेति विवक्षितत्वात् तत्र "अथ परा" इत्याद्युक्तोपासनविशेषमात्रपरत्वशङ्का व्युदस्यति—परोपासनेति सर्वोपासनाभिप्रायमिति । उपासनाशब्दस्य उपास्याकाङ्क्षाया उत्कटत्वात् तच्छान्त्यर्थ सर्वोपासनसङ्ग्रहसौकर्यार्थं च अन्यथा व्याचष्टे—परस्य ब्रह्मण इति । परशब्दस्य(तच्छब्दस्य?) प्रकृतपरामर्शित्वस्वारस्यानुरोधेनाह तत्तदिति । तत्तदिति वीप्सास्वारस्यानुरोधेनान्यथा व्याचष्टे—अथवेति । कुमतिपद विरचितशब्दस्वारस्यानुरोधेन बहुव्रीहितया व्याचष्टे कुमतिभि कुदृष्टिभि इति । बहुव्रीहे कर्मधारयस्याभ्यर्हितत्वात् आह भ्रान्तिविजृम्भिता इति वेति । विमतिपदस्य विवादपरत्वमङ्गीकृत्य तस्य कैरिति प्रतियोगिसापेक्षत्वात् प्रतिमतपद प्रतियोगिपरतया व्याचष्टे—प्रतिमतैरिति । विमतिपदमुख्यत्वलाभाय अवयवशक्त्या विरुद्धबुद्धिपरत्वमङ्गीकृत्य प्रतिमतपद हेतुपरतया व्याचष्टे—तत्प्रसूता वेति ॥ ४ ॥

*ஸேவா*—

(४) अर्थान्तरभ्रान्ति वारयति—चोदितेति । "द्वे विद्ये वेदितव्ये" इति वाक्ये । प्रति[प्रमिति?] शब्दस्य यथार्थज्ञानवाचित्वात् त[त्त्व]शब्दस्य तदर्थान्वया[नु?]रूपतया व्याचष्टे—जीवेशावेव तत्त्वे इति । तयो प्रमितिरिति । सर्वविद्याकोडीकरणार्थं षष्ठीसमासमाश्रित्य व्याचष्टे—परस्येति । 'शक्य' इत्येतत् अनेकधा व्याख्यातुमुपक्रमते—शक्य इत्यादीति । नहीति । अय भाव —परोपासनविधायिकाया मुण्डकोपनिषदि न केवल ब्रह्मोपासन विधीयते, किन्तु अनेकगुणकमुपासनम् । तन्मूल च तादृशमेव ज्ञानम् । द्रव्याद्रव्यविभागपूर्वकनिरूपणाभावे कथमध्यवसीयेत विचायत, भूतयोनिशब्दार्थ, "इन्द्रियेभ्य परा ह्यर्था" 'गता कला पञ्चदश प्रतिष्ठा कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति । "अप्राणो ह्यमना शुभ्र", "सप्त प्राणा प्रभवन्ति' इत्यादि च? किञ्च, अत्र हि अनेकगुणविशिष्टपरमात्मोपासन विधीयते । एतत्कारण च अनेकगुणविशिष्टेश्वराध्य

वसायः, "नित्यं विभुम्" इत्यादिवाक्यजन्यः। अयं च अध्यवसायो द्रव्यवैलक्षण्याप्रतिपादने जडाजडवैलक्षण्याप्रतिपादने च न सम्भवति। द्रव्याद्रव्यविभागाभावेन गुणवैशिष्ट्यानुपपत्तेः। "यः सर्वज्ञः" इत्यादेः प्रधानेऽप्युपपत्तिशङ्कायाम् "अदृश्यत्वादिगुणको धर्मोक्तेः" इति न्यायस्य निश्चायकत्वात्। ततश्च तद्धर्मतत्स्वरूपतद्विजातीयपदार्थप्रतिपादकम्, "अध्यात्मयोगाधिगमेन" इति वाक्यान्तरविहितजीवयाथात्म्यप्रतिपादकं च सरपञ्चकं सार्थकमिति भावः। प्रकारान्तरेणापि सरपञ्चकोपयोगमाह—सर्वेति। "यः सर्वज्ञः" इत्यादिवाक्यं तर्कानुमानसहकृतं सत् ईश्वरसार्वज्ञ्यं प्रतिपादयेत्; तत्सहकाराभावे तु गौणमुख्यविभागानिर्धारणेन वाक्यस्यानिश्चायकत्वात्। तयोश्च तर्कानुमानयोः न व्याप्तिग्रहणमिति सर्वपदार्थप्रतिपादकं सरपञ्चकमपि सार्थकमिति भावः॥ इतोऽपि सरपञ्चकस्य सार्थकत्वमित्याह—परोक्तेति। यदाऽयं परवादी असद्सिद्धेन जातिसमवायमहत्त्वादिधर्मयोगेन जीवेश्वरयोरस्मदनभिमतमर्थं साधयेत्—तदाऽसिद्धिर्वक्तव्या। यदा तु उभयसिद्धेन प्रयत्नादिना असदनिष्टं साधयेत्—तदाऽनैकान्तिकत्वं वक्तव्यम्। यदा चायं जीवपरमात्मनोरुभयसिद्धेन धर्मेण जडत्वादिकं साधयेत्–तदा संशयाद्यगोचरत्वात् स्वयंज्योतिर्भूत(श्च) इति बाधो वक्तव्य इत्यादि स्वयमूहनीयम्। एतच्च सर्वनिरूपणाभावे न सम्भवतीति भावः। मूलार्थस्तु–तत्प्रकारावगतिविरहिभिः अनैकान्तिकत्वाद्युद्भावनद्वारा परपक्षनिरासपुरस्सरजीवपरयाथात्म्यावबोधः न शक्यत इति। इतश्च कृत्स्नप्रबन्धः सार्थक इत्याह–परो चेति। विवादाद्धि तत्त्वप्रतिपत्तिर्भवति, सर्वप्रतिपादनाभावे च परोऽस्मत्सिद्धान्तानभिज्ञतयाऽनैकान्तिकत्वादि उद्भावयितुमशक्तः सन् अस्माभिः सह वादे नावतरेत्। ततश्च तत्त्वप्रतिपत्तिर्न संभवतीति। ननु "शिष्यसब्रह्मचारिशिष्टश्रोत्रियैः [श्रेयोऽर्थिभिः] कुर्यात् (चारिशिष्टश्रेयोर्थिभिरनसूयुभिरभ्युपेयादितिन्यायसूत्रे") इति अक्षपादोक्तन्यायेन वादस्याधिकारिविशेषनियतत्वात्, तेषां च सिद्धान्ताभिज्ञत्वात्, जयादिहेतुभूतयोर्जल्पवितण्डयोश्च, "न विगृह्य कथां कुर्यात्" इत्यादिभिर्निषेधात् कथं वादिपदावतरणं (वादावतारणं) प्रयोजनमित्यत्राह–परकल्पितेति। परकल्पितपरमाणवयवविसमवायक्षणिकत्वप्रभृत्यनुमानभङ्गेन भग्नाहङ्काराः परवादिनो नार्थतत्त्वं विप्लावयन्ति इति, तत्खण्डनार्थमपि सर्वनिरूपणं कर्तव्यमिति भावः। "तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे; बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्" इति अक्षपादोक्तन्यायेन जल्पवितण्डयोरपि तत्त्वप्रतिपत्त्युपयुक्तत्वात्। निषेधस्य च "विद्याचोरो गुरुद्रोही वेदेश्वरविदूषकः। त एते बहुपाप्मानः सद्यो दण्ड्या इति श्रुतिः॥" इत्यहङ्कारखण्डनरूपदण्डस्यापि विहितत्वेन तद्व्यतिरिक्तवादविषयत्वाच्च जल्पवितण्डे कर्तव्ये एवेति भावः। प्रकारान्तरेण सार्थकत्वं वक्तुं पीठिकामाह—तत्तदिति। "अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमग(न्य)न्धवच्च यत्" इत्यादिसप्रतियोगिधर्मप्रतिपादनेन प्रतियोगितत्तत्पदार्थनिरूपणमावश्यकमिति। इतोऽपि प्रकरणं सार्थकमित्याह–तेते चार्था इति। विश्वस्य जगतो ब्रह्मविवर्तत्वपरिणामत्वभिन्नाभिन्नत्वादिरूपेष्वर्थेषु जाग्रत्सु "निष्कलं निष्क्रियम्" इत्यादिश्रुत्यर्थानां उपरोधो भवतीति, तन्मतनिरासार्थं विश्वनिरूपणं कर्तव्यमिति भावः।

विशिष्टबुद्धिहेतुत्वात् व्याप्तिसिद्ध्युपयोगतः। असिद्ध्याद्युद्भावकत्वात् वादिवादावतारणात्॥ २॥
दुर्वादिनां बहिःस्थित्या प्रतियोगिनिरूपणात्। अर्थतत्त्वावबोधित्वात् सार्थकं सरपञ्चकम्॥ ३॥ (४)

(४) धार्यो हेतुर्जयादेरित्युक्तम्। जयमनपेक्षमाणानां विरक्तानामपि स्वापेक्षिततत्त्वज्ञानशेषतयैव सर्वतत्त्वविषयवेदनमपेक्षितमिति बोधनीयम्; अन्यथा सर्वग्रहणे तेषां प्रवृत्तिर्मन्दा स्यादित्याशयेन प्रवृत्तं पद्यमवतारयति शिष्टेति। 'चोदितेति व्याख्याने शासेरिदं रूपम्, न तु शिष्टेरिति ज्ञापनाय' इति

आ. दा.। जीवेशतत्त्वेति तत्त्वपदप्रयोगः तत्त्वमुक्ताकलाप इत्यत्र तत्त्वपदेन एतद्द्वयमात्रं गृह्यतामिति शंकितुराशयस्फोरणाय। प्रमितिः शास्त्रजन्यं ज्ञानम्। तद्युता-तदधीना परोपासना। मुण्डकोपनिषदि "द्वे विद्ये वेदितव्ये परा चैवापरा च। तत्रापरा ऋग्वेद इत्यारभ्य, अथ परा यया तदक्षरमधिगम्यते" इति शास्त्रजन्यज्ञानोपासनज्ञानयोर्विधानम्। एतत्स्वारस्यात् परोपासनापदेन मुण्डकोक्ताक्षरविद्यामात्रं न ग्राह्यम्; किं तु सर्वापि मुक्तिविद्या ग्राह्येत्याह सर्वविद्येति। न मुण्डकोपनिषद्विद्याया एव परेति नाम, किं तु सर्वपरविद्याया अपीति भावः। तावन्मात्रस्य परार्थत्वेऽप्यत्र पष्टीतपुरुषोऽस्तु इत्याह परस्येति। यद्यपि जीवेशतत्त्वप्रमितिरेवेष्टा, तथापि साऽपि सर्वतत्त्वज्ञानसापेक्षेति सर्वतत्त्वनिरूपणमत्रेत्याह शक्य इति। सर्वतत्त्वनिरूपणेति। जडाजडद्रव्याद्रव्यादिसर्वज्ञानसत्त्वे एव व्याप्तेः साधुत्वासाधुत्वनिर्णयो भवेत्। व्याप्तिश्च सर्वप्रमाणेतिकर्तव्यताभूततर्कान्तर्भूता, क्वचिदर्थसाधकतयाऽनुमानग्रहणे तदन्तर्भूता चेत्यर्थः।

जगतो ब्रह्मविवर्तत्ववादो मृषावादिनाम्। ब्रह्मपरिणामवादो भास्करस्य। तस्य यादवप्रकाशस्य च भेदाभेदवादः। तत्र जडमात्रे तद्वाद आद्यस्य, जीवेऽपि तद्वादो द्वितीयस्य। अन्यतरासिद्धीति। वादिप्रतिवादिनोर्मध्ये एकस्य पक्षे असिद्धीत्यर्थः। पूर्वोक्तिदर्शिताया जयापेक्षाया दोषानावहत्वमाह परकल्पितेत्यादिना। प्रतिमतशब्दस्य प्रतिवादिपरतया प्रथमव्याख्या, सहयोगे तृतीया। प्रतिपक्षिपरत्वे वा प्रतिरक्षपरत्वे वा हेतुतृतीयया द्वितीयव्याख्या। परम्परयेति। यत् साक्षान्मोक्षोपयुक्तं तदर्थमिदं, तदर्थार्थमिदमिति क्रमेण सर्वमपेक्षितमिति भावः ॥ ४ ॥

(*तत्त्वज्ञानप्रयोजनम्*)

**आवापोद्वापतः स्युः कतिकति कविधीचित्रवत् तत्तदर्थे-**
**ष्वानन्त्यादस्तिनास्त्योरनवधिकुहनायुक्तिकान्ताः कृतान्ताः।**
**तत्त्वालोकस्तु लोप्तुं प्रभवति सहसा निस्समस्तान् समस्तान्**
**पुंस्त्वे तत्त्वेन दृष्टे पुनरपि न खलु प्राणिता स्थाणुतादिः ॥ ५ ॥**

तथाऽपि निर्धूतसर्वप्रतिमतविमर्दं सर्वमर्थं साधये इत्यशक्योक्तिः, त्रैकालिकसिद्धान्तभेदानन्त्यादित्याशङ्कोद्घाटनपूर्वकं प्रयोजकशिक्षया कृत्स्नानिष्टनिरासं कृत्स्नाभीष्टसाधनं च शक्यमिति स्थापयति-आवापेति। एकस्मिन्नेव हि दर्शने व्याख्यातृभेदात् केषांचित् प्रमेयानामावापोद्वापौ दृश्येते, यत एकदेशिव्यपदेशः। कविधीचित्रवत्—कवीनां धीभिः कृतं काव्यादिकं कविधीचित्रम्, तद्वत् मतभेदा अप्यनन्ताः सम्भवन्ति। तत्तदर्थेष्वस्तिनास्त्योरानन्त्यादित्यन्वयः। अस्तिनास्त्योरिति प्रयोगपरम्। कुहना—छद्म। तत्सम्बन्धिन्यो युक्तयः कुहनायुक्तयो हेत्वाभासच्छलजातिरूपाः। ताभिः कान्ताः सम्यक्त्वेनैव भाताः। तत्त्वालोकः — यथार्थाध्यवसायः। प्रस्तु(क्त)तत्शङ्कानिरासार्थमपेक्षणीयान्तराभावात् सहसेत्युक्तम्। निस्समः इति निरधिकत्वोपलक्षणम्। प्रतिरोधबाधरहित इत्यर्थः। उक्तस्यापकत्वस्य अन्यतार्थविशेषे यज्ञकमप्यर्थान्तरं न्यस्यति—पुंस्त्व इति। पुनर्न प्राणिता संशयविपर्ययसामग्री लोपान्न भासेतेत्यर्थः ॥ ५ ॥ इति तत्त्वज्ञानप्रयोजनम् ॥

*पूर्वं*— अस्तिनास्तिशब्दयोः तदर्थयोश्च द्वित्वात् कथमानन्त्यमित्याशङ्क्याह अस्तिनास्त्योरिति प्रयोगाभिप्रायमिति। त्रय्यन्तार्थविशेषः, इह—परतत्त्वे पुरुषोत्तमत्वेन निश्चिते तद्रुद्रत्वशङ्का पुनर्न प्रामाणिकीति ॥ ५ ॥

[illegible]— आवापेति । स्वज्ञातार्थविग्रह(निगूह ?)पूर्वकतद्विपरीतार्थव्यवहारस्य कुहनात्वेन छलप्रयोगस्य तादृशत्वात् तन्मात्रस्यैव परिग्रहः स्यादित्याशङ्क्य जातिहेत्वाभाससङ्ग्रहार्थं परव्यामोहकव्यवहाररूपच्छद्मपरत्वेन कुहनाशब्दं व्याचष्टे कुहना छद्मेति ॥ ५ ॥

[illegible]— पक्षाणामानन्त्येऽपि शास्त्रबाह्यकुतर्कमूलानां पक्षाणां शास्त्रेण बाधात् प्रायो भारः शमितः। ततः सर्वं सुकरमित्याशयेनाऽऽह आवापेति । आवापः संग्रहः; उद्वापः त्यागः। प्रयोगाभिप्रायमिति। अस्तित्वनास्तित्वयोरिति दुर्वचम्; एकत्रोभयाभावात् । अतः अस्तीति नास्तीति च प्रयोगयोरिति वक्तव्यमिति एवमुक्तमिति भावः । देहातिरिक्त आत्माऽस्ति नास्ति, आत्मनि नित्यत्वमस्ति नास्ति, आत्मनि जडत्वमस्ति नास्ति, ईश्वरोऽस्ति नास्ति इति आत्मेश्वरद्रव्यगुणादिषु तत्तदर्थेषु एवं प्रयोगादानन्त्यम् । एकपुरुषोक्तानामंशानां मध्ये कतिपयत्यागेनान्योक्तकतिपयावापेन स्वयमन्यकल्पनया च अस्तित्वनास्तित्वांशानन्त्यात् कृतान्ताः—निर्धारितांशाः सिद्धान्ताः बहवः अनन्ताः भवन्ति भविष्यन्ति च एकविषयेऽपि कवीनां काव्यरचनाभेदवत् । कतिकतीत्यस्य बहव इत्यर्थः। तथापि प्रत्यक्षमूलकः प्रत्यक्षतुल्यशास्त्रमूलकश्च तत्त्वनिश्चयः निस्समत्वात् प्रबलत्वात् सर्वतत्पक्षलोपकः। तत्र प्रत्यक्षमुदाहरति पुंस्त्व इति। स्थाणुर्वा शिला वा पुरुषो वेति विवादे स्थाणुत्वादिसाधककुतर्कनिरासः पुरुषत्वदर्शने स्वयमेव भवति। शास्त्रोदाहरणमपीदम्। जगत्कारणं किमिति विचारे तत्र पुरुषसूक्तादिबलात् श्रीमत्पुरुषोत्तमत्वे तत्र पुरुषसूक्तादिना दृष्टे-विशदंज्ञाते सति स्थाणुत्वं रुद्रत्वं विधित्वमित्यादयः पक्षा नोन्मिषन्तीति। इतरशंकापरिहाराय इतरस्वरूपज्ञानं नापेक्षितम्; तत्तद्वस्त्वसाधारणधर्मज्ञानमेवालमिति भावः। प्रतिरोधः-सत्प्रतिपक्षः ॥ ५ ॥

(तत्त्वविभागः)

> द्रव्याद्रव्यप्रभेदान्मितमुभयविधं तद्विदस्तत्त्वमाहुः
> द्रव्यं द्वेधा विभक्तं जडमजडमिति प्राच्यमव्यक्तकालौ ।
> अन्त्यं प्रत्यक् पराक् च प्रथममुभयधा तत्र जीवेशभेदात्
> नित्या भूतिर्मतिश्चेत्यपरमिह जडामादिमां केचिदाहुः ॥ ६ ॥

अथ निरूप्यमर्थजातं साधर्म्यवैधर्म्यभेदैः संगृह्य विभज्य च निर्दिशति द्रव्येति । अत्र तत्त्वमिति पदार्थमात्रोक्तिः । **मितं**—प्रमितम् । तथात्वं च सर्वसाधारणम् । तदपि हि सामान्यतः प्रमितम् । अन्ततः स्वपरनिर्वाहात् नानवस्था । इदं च साधर्म्योक्तिमात्रं व्यवच्छेद्याभावेन लक्षणत्वासिद्धेरित्येके । निर्दिष्टव्यापित्वे सति तदन्यवृत्तिविरहितत्वात् (विरहात्) लक्षणमपि स्यादित्यन्ये । बाह्यकुदृष्टिव्यावृत्ताः **तद्विदः** । अत्र तत्-तदन्यरूपेण विभागेषु न नीलपीतादिवत् कोट्यन्तरावकाशः । द्रव्यत्वात्यन्ताभाववत्त्वरूपेण तदन्यत्वस्य विवक्षितत्वात् । द्रव्यलक्षणं वक्ष्यति । जडमिह स्वगोचरज्ञानत एव प्रकाशमानम् । **अव्यक्त**शब्देन व्यक्तमपि लक्ष्यते तदनन्यद्रव्यत्वज्ञापनार्थम् । **प्रत्यक्**—स्वस्मै भासमानम् । **पराक्**—परस्मा एव भासमानम् । **भूतिः** विभूतिः—सातिशयाधानार्थं नियन्तव्यद्रव्यम् । **नित्या भूति**रिति नित्यप्राचुर्यतः शुद्धसत्त्वमुपलक्ष्यते । इह **आदिमां** नित्यभूतिं केचित् जडामाहुरिति सयूथ्यमतभेदोक्तिः ॥ ६ ॥ इति तत्त्व(द्रव्य)विभागः ॥ ६ ॥

ध्रु— स्वमते जातेरेवाभावात् द्रव्यत्वात्यन्ताभावेति कथमुच्यत इत्याशङ्क्य द्रव्यत्वं वक्ष्यमाणलक्षणरूपमित्यभिप्रेत्याह द्रव्यलक्षणमिति ॥ ६ ॥

भेलत्ता— सामान्यलक्षणं विशदयति—मितं प्रमितमित्यादिना । तदपीति । प्रमितत्वमपीत्यर्थः । अद्रव्यशब्देन द्रव्यान्यत्वस्य विवक्षितत्वे रूपसामान्ये नीलत्वपीतत्वाद्यवान्तरभेदवत् अद्रव्यसामान्ये घटपटादिप्रत्येकान्यत्वरूपावान्तरभेदविवक्षायां तस्यानन्तत्वेन ज्ञातुमशक्यत्वात् अद्रव्योक्तिः अयुक्ता स्यादिति शङ्कां परिहरन् अद्रव्यशब्दविवक्षितमाह—अत्रेत्यादिना । कोऽप्यन्तरशब्देनावान्तरभेदो विवक्ष्यते । अथवा, ननु न्यूनाधिकसंख्याव्यवच्छेदार्थं विभागकरणम्, अत्र तन्न सम्भवति—द्रव्यगुणकर्मभेदाद्वा, षोडशपदार्थादिभेदाद्वा विभागसम्भवादित्यत्राह—अत्रेति । अयं भावः—असाधारणरूपेण तदन्यरूपेण च विभागकरणे रूपे नीलपीतादिवत् भेदान्तरं न संभवति । गौरवात् विधान्तरेण विभागो न विवक्षित इति । ननु द्रव्यत्वं द्रव्यासाधारणधर्मः, तदनिर्वचने अद्रव्यत्वं कथमित्यत आह द्रव्येति । स्वेनाप्रकाशमानत्वमेव जडलक्षणं विवक्षितम् । प्रयोगप्रसिद्ध्यानुगुण्येनोक्तम्; स्वगोचरज्ञानवत एव प्रकाशमानमिति । स्वस्मा इति । स्वस्मै अवभासमानत्वमेव पराग्लक्षणम् । पराक्छब्दप्रयोगानुगुण्येन परस्मा एव भासमानमित्युक्तम् । परस्मै भासमानत्वं पराक्त्वमित्युक्ते प्रत्यग्वस्तुनोऽपि पराक्त्वप्रसङ्ग इति तन्निवृत्त्यर्थं परस्मा एवेत्युक्तम् ॥ ६ ॥

वी— तत्त्वमुक्ताकलापनाम्नैव नानातत्त्वसद्भावः तत्त्वपदेन सामान्यलक्षणञ्च सूच्यते । तदेव नानात्वं सामान्यनिर्देशपूर्वकं विशदयति द्रव्येति । तद्विदः तत्त्वविदः यद्वा द्रव्याद्रव्यविदः तत्त्वं मितमाहुः द्रव्याद्रव्यभेदात् द्विविधञ्चाहुः । आहुरित्यस्य उपरि प्रतिवाक्यमन्वयः । द्रव्यं जडमजडमिति द्वेधा विभक्तमाहुः । प्राच्यं जडमव्यक्तकालावाहुः । अन्त्यमजडं प्रत्यक् पराक् चाहुः । तत्र प्रथमं प्रत्यक् जीवेशभेदादुभयथा आहुः । तत्रापरं परागपि नित्यविभूतिर्मतिश्चेत्युभयथा आहुः । तत्राऽऽदिमां नित्यभूतिं एकदेशिनो जडामाहुः । तदा जडत्रैविध्यं पराच एकविधत्वञ्च भाव्यम् । तच्च प्रमाणस्वारस्यदर्शिनामस्माकं नेष्टमित्यर्थः । मितमित्यस्य सामान्यतः निश्चितमित्यर्थे अतत्त्वसाधारण्यात् तत्त्वपदार्थता न स्यादिति प्रमितमित्यर्थवर्णनम् । प्रमितत्वं सामान्यधर्मः । ननु प्रमितत्वमप्येकं तत्त्वम् । तत्र कथं प्रमितत्वम् । स्वस्मिन् स्ववृत्त्ययोगात् । अवृत्तौ, कथं स सामान्यधर्मः ? प्रमितत्वत्वेन रूपेण सामान्यतेति चेत्, एवं सति प्रमितत्वे प्रमितत्वं तदान्यत् प्रमितत्वं तत्रान्यत् तदित्येवमनवस्थेत्यत्राह स्वपरेति । प्रमितत्वं नाम विषये प्रमासंयोगः । तस्य प्रमायां विषये च स्वरूपमेव संबन्धः । तत्र नानवस्था । सैव प्रमा विषयव्यवहारं स्वव्यवहारं विषये स्वसंयोगव्यवहारञ्चापादयति ॥ तस्मिन् प्रमितत्वे स्वकीयपरकीयज्ञानान्तरवेद्यत्वमपि संभवतीत्यनवस्थेति चेत्—तस्यापि ज्ञानान्तरीयस्वरूपात्मकसंबन्धरूपतया नाधिकपदार्थकल्पनेति भावः । साधर्म्येति । अस्य वैधर्म्यरूपत्वं न भवति । लोके अप्रमितवस्त्वभावात् । व्यावर्तकत्वं हि लक्षणधर्मः; तदत्र नास्तीति भावः । पक्षान्तरमाह निर्दिष्टेति । निर्दिष्टपदं लक्ष्यार्थकम् । सर्वलक्ष्यवृत्तित्वे सति लक्ष्येतरवृत्तिरहितत्वं लक्षणलक्षणम् । वृत्तिः आधेयता; तद्रहितत्वम् । न च प्रकृते लक्ष्येतराप्रसिद्ध्या लक्षणमिदमनन्वितमिति वाच्यम्—इतरवृत्ति(भेदवद्वृत्ति)त्वसंबन्धेन लक्ष्याभावस्यैवोत्तरदलार्थत्वात् मितत्वरूपधर्मे तेन संबन्धेन घटादिधेदिष्ट्ये सत्यपि सामान्यतः लक्ष्यभूततत्त्ववैशिष्ट्यस्य दुर्वचतया तेन व्यधिकरणसंबन्धेन तत्त्वाभावसत्त्वात् । यद्वा स्वाश्रयभिन्नवृत्तिप्रकृतलक्षणको यो यो धर्मः तद्भिन्नप्रकृतलक्ष्यतावच्छेदकधर्मकत्वं द्वितीयदलार्थः । घटत्वादिकं स्वादग्राह्यम् । तत्त्वपदव्यवहार्यत्वं तु न तथा । अथवा लक्षणे व्याप्यत्वकथनात् लक्ष्यतावच्छेदके व्यापकत्वसिद्ध्या स्वव्यापकलक्ष्यतावच्छेदकव्यापकत्वं लक्षणलक्षणम् । तदिहाक्षतमिति ।

ननु पदपदार्थौ सप्तपदार्थाः षोडशपदार्था इत्येवं तत्र तत्र विभागे सति कथं द्वये सर्वान्तर्भाव इत्यत्राह अत्रेति। तत् तद्भिन्नञ्चेति विभागे तृतीयकोटिर्न भवति। यथा भावोऽभावश्चेति सर्वप्रमेयविभागे। तदुक्तम्, 'परस्परविरोधे हि न प्रकारान्तरस्थितिः' इति। परं तु अस्य पक्षे अभावस्य भावेऽन्तर्भावात् तथा विभागो नेष्टः। न च नीलपीतादिवत् परस्परविरोधः; किन्तु तत्प्रतियोगिकाभावरूपत्वेन। ननु अद्रव्यत्वं द्रव्यभेदः। द्रव्यत्वञ्च जातिर्नेष्यते। तथाच अद्रव्यत्वं पृथिवीभिन्नत्वजलभिन्नत्वादिरूपमेव। तत्रैकस्याद्रव्यत्वस्य विवक्षायां द्रव्यमेवान्यत् अद्रव्यं तृतीयं भवतीति नीलपीतादितौल्यात् कथं द्वैधमेवेत्यत्राह द्रव्यत्वात्यन्तेति। तत्र द्रव्यं दशावदिति सामान्य-लक्षणस्य वक्ष्यमाणत्वात् जात्यस्वीकारेऽपि तत्सामान्याभाव एवाद्रव्यत्वमिति न दोष इति भावः। लक्ष्यत इति। अव्यक्तपदं विशेषणोपलक्षणसाधारण्येन अव्यक्तत्वावस्थाश्रय इत्यर्थकम्। अतो व्यक्तव्यवच्छेदो नेति भावः। पृथक् व्यक्तवचनं हि अन्यद्रव्यत्व एव भवति। परस्मा एवेति। एकप्रत्यग्द्र-व्यस्य अन्यप्रत्यग्द्रव्यं प्रति (आत्मान्तरं प्रति) धर्मभूतज्ञानेन भासमानत्वात् पराक्त्वापत्तौ विभागव्या-घातः स्यात्। अत एवकारः। तथा च स्वस्मै अप्रकाशमानत्वं प्रकाशफलित्वानाश्रयत्वं पराक्त्वम्॥ ६॥

(द्रव्यतद्विशेषलक्षणम्)

तत्र द्रव्यं दशावत् प्रकृतिरिह गुणैस्सत्त्वपूर्वैरुपेता
कालोऽब्दाद्याकृतिस्स्यादणुरवगतिमान् जीव ईशोऽन्य आत्मा।
संप्रोक्ता नित्यभूतिस्त्रिगुणसमधिका सत्त्वयुक्ता तथैव
ज्ञातुर्ज्ञेयावभासो मतिरिति कथितं संग्रहाद् द्रव्यलक्ष्म॥ ७॥

प्रस्तुतस्य द्रव्यस्य तदवान्तरभेदानां च लक्षणमाह **तत्रेति**॥ **तत्र** — द्रव्याद्रव्ययोर्मध्ये। द्रव्यं **दशावत्**—विकारधर्मवदित्यर्थः। ईश्वरादावपि मूर्तसंयोगा आगन्तुकास्सन्ति। सञ्चरति हि मूर्ते तस्य विभुनश्च संयोगा विद्यन्त एव। **प्रकृति**शब्दः प्राकृत विकृतीनामप्युपलक्षकः; त्रिगुणशब्दाभि-लप्यद्रव्यमित्यर्थः। तत् स्वगुणैरेव लक्षयति **गुणैरित्यादिना**। **इह**— अव्यक्तकालयोर्मध्ये। त्रिगुणस्य रजस्तमसी पृथग् लक्षणे, सत्त्वं तु बन्धकत्वेन विशेषितम्। **कालोऽब्दाद्याकृतिरिति**। उपाधिकृतविभ-गैरब्दादिव्यवहारविषय इत्यर्थः। तत्तत्परिणामवान् काल इति पक्षोऽपि वक्ष्यते। ईश्वरात्, अचेतनादणोश्च व्यवच्छेदाय **अणुरवगतिमान्**इत्युक्तम्। **ईशोऽन्य आत्मा**— अणुव्यतिरिक्तश्चेतन इत्यर्थः। जीवे विभुत्वोक्तिरीश्वरेऽणुत्वोक्तिश्चान्यपरेति सूत्राद्युक्तम्। **सप्रोक्ता**; तत्परैः शास्त्रैरिति शेषः। **त्रिगुण समधिका**—त्रिगुणद्रव्यादन्या। **सत्त्वयुक्ता**—सत्त्वाख्यगुणविशेषवती। त्रिगुणान्यत्वं कालादेरप्य स्तीति तद्व्यवच्छेदोऽनेन कृतः। एतावन्मात्रेण त्रिगुणसाधर्म्यमित्यभिप्रायेण **तथैवे**त्युक्तम्। रजस्तमस्समा-नाधिकरणसत्त्व[वद?]स्यापि, "तत्र [सत्त्वात्,] सत्त्वं निर्मलत्वात् प्रकाशकम्" इत्यादि समानमिति वा। **ज्ञातुर्ज्ञेयावभासो मतिः**—अहमिदं जानामीत्यहमर्थाश्रयतया सिध्यन् सकर्मकः प्रकाशो मतिरित्यर्थः। तादृशावस्थयाऽपि तद्विशिष्टं गृह्यते। **द्रव्यलक्ष्म** – सामान्यतो विशेषतश्चेति शेषः॥ ७॥ इति द्रव्य-तद्विशेषलक्षणम्॥

*ध्रु*— विकारवदित्यर्थ इति। आगन्तुकधर्मो विकार, न तु जन्मादि। सत्त्वयुक्ता तथैवेत्यन धा(यथा?) प्रकृति सत्त्वोपेता, एवमियमपीत्येव तथाशब्दस्वारस्यानुरोधेन व्याचष्टे—एतावन्मात्रेणेति। अस्मिन् व्याख्याने तु तथाशब्दो मन्दप्रयोजन इति [? ग?], नित्यविभूतिगुणस्य कथ सत्त्वशब्दवाच्यत्वम् रजस्तमस्समानाधिकरण एव सत्त्वशब्दप्रसिद्धेरित्याशङ्क्य लक्षणसाम्यात् सत्त्वशब्दवाच्यत्व युक्तमिति परिहारपरतया अन्यथा व्याचष्टे—रजस्तमस्समानाधिकरणेति। ज्ञातृज्ञेयावभासशब्द करणे घञन्त व्यवहारानुगुण्यापादकपर। अवभासो मतिरित्युक्ते स्वव्यवहारानुगुण्यापादके आत्मनि अतिव्याप्तिरिति ज्ञेयावभास इत्युक्तम्। आलोकेऽतिव्याप्तिपरिहारार्थ ज्ञातुरित्युक्तम्। 'आलोकोऽपि ज्ञातुरेव ज्ञेयावभास इति नातिव्याप्तिपरिहार। किञ्च, जीवलक्षणे अवगतिमान् इत्युक्तम्, इह ज्ञानलक्षणे ज्ञातुज्ञेयावभास इत्युक्तम्, अतश्चान्योन्याश्रय' इत्याशङ्क्य लक्षण व्याचष्टे—अहमर्थाश्रयतयेति। ज्ञातुरिति षष्ठी आश्रयाश्रयिभावसम्बन्धपरेति नातिव्याप्तिरिति भाव। मतेरहमर्थाश्रयत्वस्य परानभिमतत्वात् तस्य प्रामाणिकत्वज्ञापनायोक्त इदमह जानामीति अहमर्थाश्रयतया सिद्ध्यन्तीति। विषयग्रहणोपक्षीयमाणाया मते कथ स्वाश्रयविशिष्टसग्राहकत्वमित्याशङ्क्याह तादृशावस्थयेति। विषयग्रहणावस्थया मत्या, तद्विशिष्ट—आश्रयविशिष्टं स्वरूप गृह्यत इत्यर्थ। प्रतीतिर्हि नियामिकेति भाव ॥ ७ ॥

*Q ल्ला*— [ज्ञातुरिति न लक्षणप्रविष्टम्।?] ज्ञानाश्रयत्वे (ज्ञानाश्रयत्वे? ज्ञानाश्रितत्वे?) सति, सकर्मकत्वे सति वा ज्ञेयव्यवहारानुगुणत्वमिति लक्षणद्वय वा ॥ ७ ॥

*वी*— द्रव्य दशावदिति। लक्ष्यतावच्छेदक सयोगवत्त्वम्। 'दशाशब्दस्यावयवार्थकत्वे नित्येष्व व्याप्ते विकारधमत्याह' इति–आ–दा। अद्रव्ये शब्दादावपि, वेदोऽनधीतो न भुनक्तीत्येवमधीतत्वानधीतत्वादिदशासत्त्वात् रूपादिषु प्राय उत्पत्त्यादिदशासत्त्वाच्चातिव्याप्ति अतोऽप्याह विकारेति। आगन्तुकापृथक्सिद्धधर्म इत्यर्थ। आगन्तुकत्व धर्म्यधिकरणक्षणोत्तरक्षणोत्पत्तिकत्वम्। अतो गुणगतशक्तिमादाय न गुणेऽतिव्याप्ति। तस्यास्तत्र सहजत्वात् सहजजातीयत्वाच्च। गुणविषयकज्ञानादिकमागन्तुकमादायातिव्याप्तिवारणायापृथक्सिद्धेति। ननु स्वरूपविकाररहितेश्वरादौ कथ मिद लक्षणमित्यत्राह ईश्वरादावपीति। तस्य मूर्तस्य। अव्यक्तकालयोर्मध्ये इति वेदान्ताचार्योक्तम्। इहेत्यस्य द्रव्यावान्तरभेदेषु उक्तेष्वित्यर्थ। सत्त्वपूर्व—सत्त्वादिभिर्गुणैरपेता भवति प्रकृति। रजोवत्त्व तमोवत्त्व बन्धकसत्त्ववत्त्व च प्रकृतिलक्षणम्। नित्यविभूतिवारणाय बन्धकपदम्। जडत्वे सति सत्त्ववत्त्वमपि नित्यविभूत्यजडत्वपक्षे सुवचम्। व्यवहारेति। 'हृतिराकारणाऽऽह्वाने' इत्यादा व्यवहारे आङ्पूर्वस्य हृञोऽनुशासनात् आकृतिशब्दस्य व्यवहारार्थत्वमिति आ–दा। काले क्षणरूपपरिणाममनङ्गीकारात् अब्दमासादिव्यवहारस्य क्षणसमुदायविशेषैरेव निर्वाहात् अवस्थारूपाद्याकृतेर्दुर्वचत्वात् व्यवहारेत्युक्तम्। सर्वविधपरिणामपक्षे आकृतिशब्दो मुख्यार्थ एवेत्याह तत्तत्परिणामेति। अणुत्वे सति ज्ञानवत्त्व जीवलक्षणम्। अणुभिन्नत्वे सति आत्मत्वमीशलक्षणम्। लक्ष्म्या अपि ईशत्वम्। त्रिगुणान्यत्वमित्यनेन रजोगुणरहितत्व तमोगुणरहितत्व वा विवक्षितम्। एवमबन्धकसत्त्ववत्त्वमपि पृथग्लक्षणम्। तथैवेत्येतत् व्यर्थमिति शङ्का परिहरति एतावदिति। तथा—प्रकृतिवत् सत्त्वयुक्ता ननु रजोयुक्ता तमोयुक्ता चेति मूलार्थ। अभिप्रायान्तरमाह रज इति। प्राकृतस्य सत्त्वस्य बन्धकत्वात् अन्यस्य तदभावात् वैलक्षण्येऽपि 'तत्र सत्त्व निर्मलत्वात् प्रकाशकम्' इति पूर्वार्धोक्तांशमात्रेण साजात्यमिति ज्ञापनाय तथैवेत्युक्तमिति भाव। अत्र, तत्र सत्त्वादिति पठित्वा वाक्यच्छेदनमशुद्धम्। एवं विविधभौतिकपरिणामवत्त्वरूपत्रिगुणसाम्यमपि तथैवेति पदविवक्षित भाव्यम्। ननु ज्ञातुज्ञेयावभास इति मतिलक्षणमयुक्तम्। ज्ञान

लक्षणमध्ये ज्ञानस्य [द्विः] घटनादात्माश्रयादिप्रसङ्गाऽऽशयं दर्शयति अहमित्यादिना । केचित् ज्ञातृव्यतिरिक्तज्ञानं न स्वीकुर्वन्ति वेदान्तिनोऽपि ; ज्ञेयमपि ज्ञानमेव मन्यन्ते यौद्धैकदेशिनः ; अनुभवविरोधात् तदुभयमुपेक्ष्यमिति ज्ञापनाय ज्ञातुर्ज्ञेयेति पृथक्करणम् । एवं भेदव्युत्पादनात् स्वभिन्नप्रकाशकत्वमिति धर्मभूतज्ञानलक्षणमुक्तं भवति । तदेवोक्तं श्रीमति रहस्यत्रयसारे 'धर्मभूतज्ञानस्य विषयित्वं विशेषः' इति । ननु सूर्यस्य प्रभाद्वारेणाऽऽत्मनोऽपि ज्ञानद्वारा वस्तुप्रकाशकत्वमस्ति । ततः तत्रातिव्याप्तिः । यदि अवभासपदेन विषयविषयकप्रसरणमात्रविवक्षा, तर्हि प्रसरणावस्थायामव्याप्तिरित्यत्राह तादृशेति । प्रसरणावस्थाश्रयत्वमेव लक्षणम् । न तत् आत्मनि । आश्रयत्वञ्च विशेषणोपलक्षणसाधारणमिति नाव्याप्तिरपीति भावः ॥ ७ ॥

(द्रव्यसिद्धि-द्रव्याद्वैतभङ्गौ)

एकार्थप्रत्यभिज्ञा भवति दृढतरा दर्शनस्पर्शनाभ्यां
संघातादेरयोगादवगमयति सा वस्तु रूपादितोऽन्यत् ।
एकस्मिन् दूरतादेरविशदविशदप्रत्यभिज्ञादि तद्वत्
नैकत्वेऽप्यक्षभेदाद्भिदुरमिव, मिथस्संश्रयादिप्रसङ्गात् ॥ ८ ॥

ननु द्रव्यमद्रव्यमित्युभयमसिद्धम्, रूपादेराश्रयाभावात्, रूपादितया विकल्प्यमानस्यैकस्यैव वा सत्त्वादिति पक्षद्वयमेकेनैव प्रतिक्षिपति एकार्थेति ॥ एवमाहुर्वैभाषिकाः—निराधारा निर्धर्मकाश्च रूपादयश्चत्वारः पदार्थाः । ते चक्षुराद्येकैकेन्द्रियग्राह्या इति ।

वात्सीपुत्रास्तु शब्दादीन् पञ्च वैभाषिका विदुः। शब्दात्मानश्चतुर्ष्वेव केचिदित्यपरेऽब्रुवन् ॥(३)

तत्र निराधारत्वं तावत् प्रतिसन्धानविशेषेण निरस्यति [एकार्थेति?]। अस्ति हि दृष्टमेव स्पृशामीति द्वीन्द्रियग्राह्यवस्तुविषया धी । सा तावन्न संशयात्मा; विरुद्धानियतकोट्यनवलम्बात् (नुपलम्भात्) । न च विपर्ययः,

---

टिप्पणी— रूपादितया विकल्प्यमानस्येति । आरोप्यमाणरूपादिविशिष्टतया ज्ञायमानस्येत्यर्थः । [शब्दात्मान इति?] । रूपादिषु चतुर्ष्वेव केचित् शब्दस्वरूपा इत्यर्थः । विरुद्धानियतेति । स्थाणुत्व-

व्याख्या— उभयमसिद्धमिति । द्रव्याद्रव्यप्रभेद उक्तो न युक्तः । तयोरेकतरमात्रसत्त्वादित्यर्थः । तत्र अद्रव्यमात्रस्वीकारपक्षखण्डनम् एकार्थेत्यादिपादत्रयेण । एकद्रव्यमात्रस्वीकारखण्डनं चतुर्थपादेन । रूपादेराश्रयाभावादिति प्रथमपक्षोपन्यासः । अथ द्वितीयस्य । रूपादितयेति । रूपत्वरसत्वादिनेत्यर्थः । आदिपदेन रूपवत्त्वादेरपि ग्रहणात् एकमेव रूपत्वादिना रूपवत्त्वरूपेण च विकल्प्यते—भ्रान्त्या विषयीक्रियत इत्यर्थः । एकेनैवेति । एकश्लोकेनैवेत्यर्थः । प्रथमपक्षोपन्यासः एवमाहुरित्यादिना । चत्वारः—रूपरसगन्धस्पर्शाः । यथा आकाशो न भूतान्तरम्, किं त्वावरणाभावमात्रम्, तथा तद्गतत्वेनेष्टः शब्दोऽपि न पृथक्; किं तु रूपादिकमेवेति प्रायो वैभाषिकाः । तदेकदेशिनो वात्सीपुत्रास्तु पृथक् शब्दं स्वीकुर्वन्ति । वत्सीपुत्रच्छात्राः वात्सीपुत्राः । अपरे-इतरवैभाषिकाः। एकार्थेत्यादिना । दृष्टमेव घटं स्पृशामीति ज्ञानं दृष्टत्वस्पृश्यमानत्वोभयाश्रयैकवस्तुविषयकम् । रूपस्पर्शव्यतिरिक्तद्रव्यास्वीकारे चेदं न घटते, दृष्टत्वस्य स्पर्शे, स्पृश्यमानत्वस्य च रूपे अभावात् । नन्वियं न दर्शनं भवति स्पृशामीत्यस्यायोगात्; नापि स्पर्शनम्, दृष्टमित्यस्यायोगादिति चेन्न—दर्शनस्पर्शनाभ्यां जाता प्रत्यभिज्ञा हीयम् । इदमहं पश्यामीति दर्शनम्; इदमहं स्पृशामीति स्पर्शनम्; अथ दृष्टमेव स्पृशामीति चाक्षुषसंस्कारसहकृतत्वगिन्द्रियाधीना प्रत्यभिज्ञा । अर्थसमा-

स्वारसिकबाधादृष्टेः; अनन्यथासिद्धेश्च । तदेतदुभयं दृढतरेति संगृहीतम् । ग्रहणमिति वक्तव्ये प्रत्यभिज्ञेत्युक्तिर्ज्ञातृज्ञेयस्थैर्यस्यापि व्यक्त्यर्था । सेयं न रूपमात्रगोचरा, तस्य स्पर्शनविषयत्वाभावात् । अन्यथा अन्धस्यापि स्पर्शनेन रूपोपलम्भ[न]प्रसङ्गात् । न च स्पर्शमात्रगोचरा, तस्यापि दृग्विषयत्वाभावात् । तथात्वे च अस्पृशतोऽपि दृशा स्पर्शधीप्रसङ्गात् । न चोभयविषया, दर्शनस्पर्शनयोः प्रत्येकविषयत्वादेव । अत इयं प्रत्यभिज्ञा रूपाद्यतिरिक्तं तदाश्रयभूतं वस्तु प्रकाशयति, इदं रूपस्पर्शवदिति ।

ननु रूपस्पर्शयोर्नियताक्षवेद्यत्वेऽप्यवस्थाभेदात् प्रतिसन्धानं स्यात् ॥ न स्यात् । न ह्यस्माकमिव स्थिरमवस्थान्तरभाक् किंचित् त्वन्मते । विभज्यवैभाषिकपक्षत्वतिमन्दः । तदिह संहतासंहतस्वलक्षणभेद-

---

श्रु॰— एकार्थेति श्लोके—अनन्यथासिद्धेश्चेति । दोषं ल.........च प्रामाण्यं विना सम्भवदुदयत्वाभावादित्यर्थः । तदेतदुभयमिति । असंशयात्मकत्वमविपर्ययात्मकत्वं चेत्यर्थः ।

विभज्यवैभाषिकपक्ष इति । [विभज्य?] वैभाषिकाख्येन वैभाषिकविशेषेण नित्यस्यापि कस्य-

भावप्र॰— पुरुषत्वादिद्वयस्य नियतत्वं नाम व्यवस्थितत्वम्; भिन्नाधिकरणवृत्तित्वमित्यर्थः । तदभावोऽनियतत्वम्; एकाधिकरणवृत्तित्वमित्यर्थः । एकस्मिन् धर्मिणि भासमानविरोधनानाकोटिकं ज्ञानं संशय इति फलितम् । शैत्यविरुद्धोष्णस्पर्शवत् तेजः इति ज्ञानेऽतिव्याप्तिवारणाय एकस्मिन्निति । दण्डी कुण्डली इति ज्ञाने अतिव्याप्तिवारकं भासमानविरोधेति । स्वारसिकबाधः—प्रत्यक्षबाध इत्यर्थः । स्वारसिकबाधादर्शनेऽपि, सेयं दीपज्वालेति प्रत्यभिज्ञानस्य भ्रान्तित्वं प्रतिपन्नमित्यत आह अनन्यथासिद्धेश्चेति । ज्ञातृज्ञेयस्य धर्मिणश्च सम्भवेऽपि तयोः क्षणिकत्वेन सम्भावितत्वात् स्वानन्तरक्षणोत्पन्नज्ञानरूपादिवैशिष्ट्यं तयोर्न सम्भवतीत्यत्राह ग्रहणमिति वक्तव्ये इत्यादि । बालातपश्चक्षुरेकवेद्योऽपि मध्याह्नेऽवस्थान्तरमापन्नः त्वचाऽपि गृह्यते । अत्यन्तविशीर्णाः तूलावयवाः चक्षुषा गृह्यन्ते । त एव सम्भृतास्त्वचाऽपि । तद्वत् रूपादीनामपि अवस्थान्तरापत्तौ द्वीन्द्रियग्राह्यत्वं सम्भवतीति शङ्कते नन्विति ।

व्री—

जयस्तत्रया उभयेन्द्रियजन्यैकज्ञानस्वीकारे तु दर्शनस्पर्शनाभ्यामित्यस्य चक्षुस्त्वगिन्द्रियाभ्यामित्यर्थः स्यात् । दृढतरेति । दृढत्वमसंशयरूपत्वम् । तरवर्थोऽतिशयः पश्चादप्यबाध्यत्वम् । संशयस्याप्येकधर्मिविषयकत्वमस्ति; अथापि तत्र विरुद्धनानाधर्मावगाहित्वमपि । नात्र तत्; धाकाराद्युल्लेखात् । स्वारसिकेति । बाधस्य स्वारसिकत्वे सर्वेषामपि स्यात् । बौद्धैः स्वसिद्धान्तानुरोधेन बाधकल्पने तु तस्य न स्वारसिकत्वम् । अनन्यथासिद्धे रति । दृष्टं स्पृशामीत्यस्य दृष्टरूपघटितसंघातघटकं स्पर्शमनुभवामीत्यर्थकल्पनेनान्यथासिद्धिवंचिया ; संघातादेर योगादिति तद्दूषणं समनन्तरमेवेति भावः । ननु "दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्" इति न्यायसूत्रार्थः किलायम् । ततः तत्रत्यग्रहणपदत्यागेन प्रत्यभिज्ञेति कुत इत्यत्राह ग्रहणमिति । व्यक्त्यर्थेति । सर्वेषां क्षणिकत्वात् दृष्टस्य स्पर्शनकालेऽभावात् अयं विपर्यय इति न युक्तम्; अबाधात् । प्रत्यभिज्ञयैव क्षणिकत्वभंगात् । अत एवाबाधात् ज्ञातुरैक्यमप्यतः सिध्यति । तथात्वे—स्पर्शस्यापि चक्षुर्विषयत्वे । अतः—दर्शनस्पर्शनोभयविषयविषयकत्वात् । ननु दर्शनस्पर्शनकालयोर्भिन्नत्वात् दर्शनकाले रूपत्वावस्थापन्नमेव पश्चात् स्पर्शत्वावस्थापन्नं जातं त्वचा गृह्यत इति प्रत्यभिज्ञोपपत्तिरिति शंकते नन्विति । क्षणिकत्ववादिनेदं दुर्वचमित्याह नहीति । नन्वस्मत्पक्षे स्थित्वा प्रश्ने कः समाधिरिति चेत्, एकेन रूपग्रहणकाल एवान्येन त्वचा ग्रहणात् अवस्थापक्षे तदयोगात् रूपस्पर्शौ द्वौ युगपत् स्थितौ भिन्नावेव । तत्र न कस्यापि

मात्रं तु स्यात्; तत्र संघातस्वरूपं तस्य प्रतिसन्धानविषयत्वं च न युज्यते इत्याह-**सङ्घातादेरयोगादिति।** सङ्घातोऽपि सङ्घातिस्वरूपः, तदन्यो वा ? पूर्वत्र न प्रतिसन्धानपदम्, द्वितीये सत्योऽसत्यो वा ? आद्ये द्रव्यवाद एव वरम्; संसर्गाख्यधर्मस्वीकारो वा। तेन परस्परविशिष्टस्वरूपमेवेत्यपि निरस्तम्; विशेषण-विशेष्यतत्संबन्धातिरिक्तविशिष्टायोगात्। द्वितीये कथं प्रत्यभिज्ञादेकार्थक्रियाकारित्वम्? निरन्तरस्वरूपं सङ्घात इति पक्षेऽपि प्रत्येकपक्षवत् नेन्द्रियान्तरेण प्रतिसन्धिः स्यात्। अन्यथा रसादिष्वपि संहतेषु तत्प्रसङ्गात्। एतेन, देशैक्यमेव संघात इत्यपास्तम्; एकदेशान्वयिनां त्रैकालिकानामेकसंघात-

---

पृ°— चित् तत्रस्याङ्गीकारात् तत्तन्मतावलम्बनेन प्रत्यभिज्ञानिर्वाहमाशङ्क्य तन्मतस्य...... स......कृत......सत्त्वहेतुना क्षणिकत्वसाधनेन प्रत्यभिज्ञानिर्वाहोऽनुपपन्न इति भावः।

आनन्द— तदिति। रूपमात्रस्य स्पर्शमात्रस्य उभयोश्च प्रत्यभिज्ञासम्भवादित्यर्थः। इह=प्रत्यभिज्ञायां संहतरूपादिस्वरूपविशेषमात्रं वा, असंहतरूपादिस्वरूपविशेषमात्रं वा विषयः स्यादित्यर्थः। संघातपक्षं दूषयति—तत्रेत्यादिना। रूपस्पर्शयोः प्रत्यभिज्ञासिद्ध्यर्थं सङ्घाततत्........... स्वीकारादपि द्रव्यस्य संसर्गाख्यधर्मस्य वा स्वीकारो वरमित्यर्थः। द्वितीय इति। संशयविपर्ययत्वासम्भवस्योपपादितत्वात् संघातस्यासत्यत्वे यथार्थप्रत्यभिज्ञाजनकत्वं कथमित्यर्थः।

श्री— दर्शनस्पर्शनोभयविषयत्वमिति। वैभाषिकैकदेशी विभज्यवैभाषिक इति कथितः, 'अत्थिहि भिक्खो अकदर्थं' (अस्ति हि भिक्षोरकृतकम्) इति नित्यमपि किञ्चित् बुद्धेष्टत्वेनाह। तदत्र, 'न हि किञ्चित् स्थिरं...त्वन्मते' इति कथमित्यत्राह विभज्यवैभाषिकेति। "विभागेन नित्यवस्त्वङ्गीकारात् विभज्यवैभाषिक इति नाम" इति श्रा. दा.। "वैभाषिकपक्षः विभज्य-विशिष्यातिमन्दः। सौत्रान्तिकपक्षे ज्ञाने बाह्यवस्तुना स्वाकारसमर्पणात् आकाररूपावस्थायाः सुवचत्वेऽपि वैभाषिकपक्षे तदयोगात्" इति केषांचिद् व्याख्यानमपि तत्रानूदितम्। परमतभङ्गे—'विभज्यवैभाषिकः' इति वैभाषिकविशेषस्य नामेति स्पष्टम्; अन्यथा तत्रानन्वयात्। अतः विभज्येति न पृथक्कार्यम्। परंतु द्विवचनविभज्योपपदेति पाणिनिसूत्रदर्शिततया विभक्तव्य इत्यर्थे विभज्य इति यत्प्रत्ययान्तस्य साधुत्वात् विभज्यः प्रसिद्धबौद्धगोष्ठीतो विभक्तव्यो वैभाषिक इति तदेकदेशिनामेदम्। यत् सत् तत् क्षणिकमित्यनुमानत्यागे तुल्यन्यायेन सर्ववस्तुस्थिरत्वापत्तौ अपसिद्धान्त इत्याशयेन तस्य विभज्यता। अत एवातिमन्द इत्युक्तम्। अयं रूपादिकमनेकं क्षणिकमेव स्वीकृत्यापि बौद्धागमबलात् स्थिरकिञ्चिद्वादी। चतुर्थपादेन निरसिष्यमाणस्तु कृपाणेऽनेक प्रतिबिम्बवत् एकत्र रूपादिकं कल्पितमिति वादी एतदन्यः। भावप्रकाशे वात्सीपुत्राणामेकात्मतत्त्ववादित्वमुक्तं तत्त्वसंग्रहपञ्जिकां प्रदर्श्य।

नन्वेकवस्त्वन्तराभावेऽपि रूपादिकमसंघातावस्थमेकैकेन्द्रियग्राह्यम्, संघातापन्नं तु द्वीन्द्रियग्राह्यमिति शंकते संघातादेरिति। आदिना अतिरिक्तद्रव्यं विना वक्ष्यमाण अनुमान-भेदाग्रह-वासनादिपक्षग्रहणम्। अवयवातिरिक्तावयव्यनंगीकारेपि अवयवसंसर्गविशेषस्यास्मन्मते स्वीकारवत् रूपस्पर्शातिरिक्तद्रव्यानिष्टावपि रूपस्पर्शसंसर्गोऽवर्जनीय इत्याशयेन संसर्गाख्यधर्मेत्युक्तम्। परं तु संसर्गस्य संबन्धिद्वयग्रहणाभावे ग्रहणायोगात् द्वीन्द्रियग्राह्यत्वं संसर्गे दुरुपपादम्, रूपादेराधेयतया प्रतीतिस्वारस्यभंगश्चेति ध्येयम्। तेनेति। एतेन संसर्गरूपधर्मपक्षनिरसनेनेत्यर्थः। अस्य निरस्तमित्यनान्वयः। द्वितीये—असत्यत्वपक्षे। सेनावनादौ देशैक्यमादाय संघातव्यवहाराद-त्राप्येवमिति पक्षं निरस्यति देशेति। तस्मिन्नेव देशे पूर्वोत्तरकालवर्तिनामप्येकसंघातनिवेशापत्ति-

स्वप्रसङ्गात् ॥ देशोऽपि तदातदा भिन्न एवेति चेन्न; क्षणभङ्गस्य निरसिष्यमाणत्वात् । न च ते देश आकाशादिरूपः, तस्य युष्माभिरावरणाभावादिमात्रत्वज्ञापनात् । न चोपादानरूपः, स्पर्शरूपादीनां भिन्नभिन्नक्षणोपादानत्वाभ्युपगमात् । एकोपादानत्वे तु तदेव द्रव्यम् । पृथिव्यादिदेशैक्यस्य सङ्घातत्वे तु तत्संघातस्यापि संघातान्तरापेक्षायामनवस्था, अन्योन्याश्रयो वा । [त्वन्मते पृथिव्यादिः रूपादिसंघातातिरिक्तो न; तथा पृथिव्यादेरपि देशैक्यं पृथिव्यादिसङ्घातातिरिक्तं न । अतिरिक्तं चेत्, पृथिव्यादेर्देशैक्येऽपि तद्देशसङ्घातातिरिक्तं पृथिव्यादिदेशानां देशान्तरैक्यमेव प्रयोजकं स्यात् । एवं सत्यनवस्थेत्यर्थः। एवं च पृथिव्यादिसङ्घातप्रयोजकैक्यदेशानपेक्षायां तु रूपादेस्संहतत्वे पृथिव्यादिसंहतत्वमेव प्रयोजकं स्यात्; पृथिव्यादेस्संहतत्वे तु रूपादेस्संहतत्वमेवेत्यन्योन्याश्रय इत्यर्थः ।]

अथ स्यात्—गृहीतेन रूपेण पूर्वमेव स्पर्शोऽनुमितः, तत्र दृष्टरूपानुमितमेव स्पृशामीत्येव प्रतिसन्धानम्–इति चेन्न; द्वयोरेकाश्रयत्वग्रहणमन्तरेण व्याप्तिग्रहणासंभवादनुमानासिद्धेः ॥ दृष्टे रूपे स्पृष्टे च स्पर्शे भेदाग्रहात् दृष्टमेव स्पृशामीति बुद्धिशब्दाविति चेन्न; भेदेनैव तयोर्गृह्यमाणत्वात्; रसादिष्वपि प्रसङ्गाच । ननु निर्विषयैवेयं प्रत्यभिज्ञा वासनावशात् स्यादिति चेन्न; योगाचारनीत्या रूपादेरपि निह्नवप्रसङ्गात् ॥ बाधाबाधाभ्यां विशेष इति चेन्न; स्वारसिकबाधादृष्टेः; यौक्तिकबाधस्य

---

Q॰ला— निरन्तरेति । नैरन्तर्यं निरवकाशत्वं नीरन्ध्रत्वं विश्लेषराहित्यमित्यर्थः ।

आकाशादीति । आदिशब्देन कालात्मदिङ्मनसां ग्रहणम् । आवरणाभावादीति कालाद्यनङ्गीकारग्रहणम् । पृथिव्यादिसंघातस्य रूपादिसंघातापेक्षत्वेऽन्योन्याश्रय इति भावः । संघातादेरित्यत्र आदिशब्दोक्तं असंहतरूपादिस्वरूपविशेषमात्रमेव प्रत्यभिज्ञाविषय इति द्वितीयपक्षमुत्थाप्य दूषयति अथ स्यादित्यादिना, तदिह प्रतिसन्धेयमित्यन्तेन । [बाधेति । ?] रूपादिप्रतीतिः सविषया, विषयस्य बाधाभावात्, प्रत्यभिज्ञा तु निर्विषया, विषयस्य बाधितत्वादिति विशेष इति भावः ।

ळी— रिति दूषणम् । क्षणिकत्वात् कालभेदेन देशभेद इति शंकते देशोपीति । अथ देशः क इति पृच्छन् निरस्यति न चेति । आकाशादीति । आदिपदेन दिगादिग्रहणम् । आवरणाभावादीति । आधारत्वानर्हपदार्थत्वान्न देशत्वमिति भावः । उपादानेति । तार्किकमते रूपादीनामाधारभूतद्रव्योपादानकत्वस्वीकारात् उपादानं देशः, न त्वन्मत इति भावः । तत्संघातस्यापीति । रूपादिसंघातात्मकघटाद्याधारदेशभूत पृथिव्यादेरपि रूपाद्यन्तरसंघातरूपतया तत्संघातस्य देशान्तरैक्यरूपत्वेऽनवस्था; पृथिवीरूपसंघातस्य स्वोपपाद्यघटात्मकसंघातमादायोपपादने चान्योन्याश्रयः ।

अत्र त्वन्मत इत्यादिः इत्यर्थ इत्यन्तः कुण्डलितो भागो लेखकवाक्यम्, न तु वृत्तिग्रन्थः ।

एवं दृष्टमेव स्पृशामीत्यस्य संघातघटनेनार्थवर्णनं निरस्तम् । अथ तद्घटनेन दृष्टवस्त्वनुमितं स्पृशामीत्यर्थवर्णनं शंकते अथस्यादिति । एकाश्रयत्वेति । रूपेण हेतुना रसानुमानं हि व्याप्तिग्रहात् । स च हेतुसाध्ययोर्नियतसामानाधिकरण्यग्रहः । अधिकरणभूतद्रव्यास्वीकारे कथमिदमिति भावः । अन्यथा शंकते दृष्टे इति । तयोः—रूपस्पर्शयोः । अन्यथा रसं पश्यामीत्यपि स्यात् । तत्र चेत् भेदग्रहः, सोऽत्राप्यविशिष्ट इति ।

यौक्तिकेति । ज्ञानगताकारेणेव निर्वाहे लाघवमिति बाह्यविषयतदाकारापलापो योगाचारस्य; इन्द्रियग्राह्यरूपादिभिरेव निर्वाहे लाघवमिति द्रव्यापलापस्त्वेति समत्वमेवेति ।

समत्वाच्च । अतो रूपस्पर्शवदिदमिति मिथो भिन्नविशेषणमेकं विशेष्यं सर्वलोकसिद्धं दुरपह्नवम् ।

यत्तु मतान्तरं-स्पर्शमात्रस्वरूपो वायुः स्वलक्षणः; तैजसादयस्तु द्वित्रिचतुस्स्वभावाः ; अतस्तेजः-प्रभृतीनां द्वीन्द्रियग्राह्यत्वमिति-तदप्यसत् ; एकस्यानेकस्वभावत्वायोगात् ; तदभ्युपगमे च जैनमतावतारात् । अनेकधर्मत्वे स्वसन्मतसिद्धेः ।। एकस्मिन्नेव रूपादिस्वभावभेदकल्पनेति चेन्न ; सर्वत्रासिद्धस्य कल्पनाऽयोगात् ; क्वचित्सिद्धौ द्रव्यवादसिद्धेश्च ।

एतेन भेदोपलम्भाभावादभेदसिद्धिरिति प्रत्युक्तम्, विपरिवर्तस्यैव सुवचत्वात् । न हि रूपमिदमिति पटादीन् कश्चित् क्वचित् प्रत्येति ; किंतु तद्वदिति । सहोपलम्भनियमादिति हेतुचतुष्टयं च निर[illegible]महे(मः ?) । न च रूपादेर्धर्मिणश्च सहोपलम्भनियमः ; पीतशङ्खादिभ्रमे रूपमन्तरेण रूपिणः तमन्तरेण तस्य चोपलब्धेः । न चात्रान्यश्शङ्खस्तदानीमुत्पन्नः ; नापि शङ्खरूपोऽयं पित्तविवर्तः; स्पर्शनेन स एवायं शङ्ख इति गृहीतेः । एवं स्पर्शादावपि । यदि चासौ हेतुरङ्गीक्रियते, किमपराद्धं-सहोपलम्भनियमादभेदो नीलतद्धियोरिति वदद्भिः । अतः सहोपलम्भनियमात् धर्मधर्मिभेद एव सिध्यति । किंच

---

[illegible]- एवं स्पर्शादावपीति । उष्णं जलम्, तिक्तं क्षीरम् इत्यादौ स्पर्शादिकमन्तरेणोपलब्धेरिति ।

[illegible]- एकत्वानेकधर्मवैशिष्ट्यस्य याथार्थ्ये हि युष्मन्मतसिद्धिः। अनेकधर्मवैशिष्ट्यस्यारोप्यमाणत्वे युष्मन्मतसिद्धिर्नास्तीत्यभिप्रायेण शङ्कते-एकस्मिन्नेवेति । निराधारत्वेन सिद्धस्य वा सर्वथाऽसिद्धस्यापि साश्रयत्वेन सिद्धस्य वा आरोपः इति विकल्पं हृदि निधाय, तत्र प्रथमे बाधाभावात्, अनन्यथासिद्धेश्चारोपस्यासम्भव इत्यभिप्रेत्य द्वितीयं दूषयति-सर्वत्रेति। तृतीयं दूषयति—क्वचिदिति। विपरिवर्तस्येति। वैपरीत्यस्येत्यर्थः। सहोपलम्भनियमादिति हेतुचतुष्टयं च-प्रथमपिण्डग्रहणेऽभेदेन ग्रहणम्, एकशब्दानुविद्धप्रत्ययः, मत्वर्थनिरपेक्षसमानाधिकरणप्रयोगः, सहोपलम्भनियमश्चेति । अत्र सहोपलम्भ-समानाधिकरणप्रत्ययौ भेदाभेदसाधकौ ; अन्यौ द्वौ अभेदसाधकौ ।

శ్రీ— द्रव्याद्रव्यद्वयमनंगीकृत्य एकस्यैवानेकस्वभावतया अनेकेन्द्रियग्राह्यत्वमिति वदतः पक्षमनुवदति यत्तु इति। स्वरूपपदेन गुणगुण्यैक्यमुक्तम्। स्वलक्षणपदं स्वात्मकार्थकं व्यक्तिपरम्। द्वित्रिचतुस्स्वभावा इति। द्विस्वभावः त्रिस्वभावश्चतुस्स्वभावश्चेति द्वन्द्वः। वक्रकुटिलदण्डावितिवत्। स्पर्शरूपे, स्पर्शरूपरसाः, स्पर्शरूपरसगन्धाश्च ते। तदप्यसदिति। किं स्वभावपदेन एकत्रैव स्पर्शत्वरूपत्वादिधर्मवत्त्वविवक्षा उत स्पर्शरूपादिधर्मवत्त्वस्य क्वचिदाधारे विवक्षेति विकल्पमभिप्रेत्य क्रमेण खण्डनम् एकस्येत्यादिना। एकस्य वस्तुतोऽनेकस्वभावत्वायोगेऽपि कल्पना युज्यत इतीदमाशंक्य निरस्यति एकस्मिन्नेवेति। सर्वत्रासिद्धस्येति। तदुक्तं वैशेषिकदर्शने, भाक्तं मुख्यसापेक्षमिति। विपरिवर्तस्येति। अभेदाग्रहात् भेदसिद्धेरित्यर्थः। भेदोपलम्भोऽप्यस्तीत्याह नहीति। गृह्यमाणस्य भेदस्य युक्त्या बाधोऽप्यशक्यः, युक्तीनामेव दुष्टत्वादित्याह सहेति। चतुष्टयं बुद्धिसरे व्यक्तम्। सहोपलम्भे नियमं निरस्यति न चेति। रूपिविषयकताव्यापकत्वं न तद्गतरूपविषयकत्वे ; शंखग्रहेऽपि श्वेतिमाग्रहात्। स्वगतरूपविषयकताव्यापकत्वं रूपिविषयकत्वेऽपि न ; शंखः पीत इत्यत्र पीतरूपग्रहेऽपि पित्तत्वेन पित्तद्रव्याग्रहात्। सहोपलम्भनियमो वैभाषिकेणैव दूषित इत्याशयेनाऽऽह किमपराद्धमिति। गुणगुण्यभेदवत् योगाचारसंमतज्ञानज्ञेयाभेदस्यापत्तिरित्यर्थः। तत्कृतं निरसनप्रकारमेवाह अत इति। साहित्यं हि उभयसापेक्षत्वात् भेदसाधकमिति। किंचेति। रूपि रूपाद्भिन्न

रूपस्पर्शयोस्सहधीनियमस्त्वयाऽपि दुस्साधः ; अतस्तयोरयुगपदुपलम्भादभेदासिद्धावेकस्य प्रत्यभिज्ञाविषयस्य ततोऽन्यत्वं [प्र]स्पष्टम् । यत्तत् अन्यत्र युष्माभिरुक्तम्—"अनुपप्लवभूतार्थस्वभावस्य विपर्ययैः । न बाधो यत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततः ॥" इति — तदिह प्रतिसन्धेयम् ।

बुद्ध्यन्तराणि च तद्बाधकानि अभिन्नेन्द्रियजन्यान्याह **एकस्मिन्निति**। आसन्नदेशे दृष्ट्वा दूरं गतस्याविशदा प्रत्यभिज्ञा ; दूरे दृष्ट्वा समीपं गतस्य तु विशदा ; एवं क्रमात् बहलविरलालोकादिवशादप्युभयथा ग्राह्या । अल्पधर्मविशिष्टतया ग्रहणम् अविशदग्रहणम् ; भूयोधर्मविशिष्टतया तु विशदग्रहणम् ; न तु न्यूनाधिकदर्शनमात्रम् ; तथा सति घटपटदर्शने घटमात्रदर्शने च विशदाविशदव्यवहारप्रसंगात् । न चात्र रूपमेवाविशदं विशदं च भाति, पीतशङ्खादिभ्रमे रूपान्तरवत्तया भातस्यापि तथा प्रत्यभिज्ञानात् । नापि परिमाणम् ; तस्य परमार्थस्य त्वयाऽनभ्युपगमात् । दूरे च परिमाणान्तरवत्तया वस्तुनः स्फुरणात् । अत एव नैकत्वसंख्या ; दूरासन्नयोरेकानेकत्वबोधे तदेवेति दर्शनात् । अत्रोत्तरेण आदिशब्देन [illegible]-

---

Ωळला— अनुपप्लवेति । अनुपप्लवस्य निर्दोषप्रमाणगम्यस्य अत एव भूतस्य-यथाभूत[illegible]प्य-माणस्य अर्थस्वरूपस्य विपर्ययैर्न बाधा, यत्नवत्त्वेऽपि बाधकयुक्तिचिन्तनप्रयासे च [illegible]तः बाधाविषयाभिनिवेशमात्रत्वेन बुद्धेरेव क्षतिः, नार्थस्येति ।

पीतशङ्खादिभ्रम इति । पूर्वं श्वेतत्वेन यो विशदतया भातः, स एव शङ्ख इदानीं पीतत्वेन विशदतया भातीति रूपान्तरवत् तया भातस्यापि तथा विशदाविशदतया प्रत्यभिज्ञानादित्यर्थः । धर्मोप-ळी— रूपाग्राहिस्पर्शग्राह्युपलम्भविषयत्वात् । एवं स्पर्शशब्दादिपक्षकानुमानमपीत्यर्थः । रूपादि साधकत्वाभिमतः बौद्धोक्ता युक्तिरेव तदन्यद्रव्यसाधनेऽपि क्रमत इत्याह यत्तदिति । अनुपप्लवेति । माध्यमिकेन शून्यत्वमास्थितम् । योगाचारेण विज्ञानम् । सौत्रान्तिकेनानुमेयत्वेन बाह्यम् । वैभाषिकेण प्रत्यक्षत्वेनापि रूपादिबाह्यम् । तत्तदिष्टांशबाधे प्रयस्यतः प्रतिवादिनः प्रति तैरिदमुच्यते— अनुपप्लवस्य दुष्टेन्द्रियजन्यज्ञानविषयत्वादिरूपोपप्लवरहितस्य भूतार्थस्य यथाभूतार्थस्य यः स्वभावः स्वारसिकबाधरहितज्ञानगृहीताकारः, तस्य यत्नवत्त्वेऽपि प्रयासकरणेऽपि विपर्ययैः प्रयासकल्पितबाधज्ञानैर्न बाधः । बुद्धेः—प्रागुत्पन्नस्य ज्ञानस्य तत्पक्षपाततः—स्वविषये आदरात् । बुद्धेः स्वविषये पक्षपात इति कृत्वैव हि बाधज्ञानविषय एषितव्यः, सोंशः पूर्वबुद्धेरपि समानः । अतो रूपादिसाधकानामिव द्रव्यबुद्धीनामपि प्रामाण्यात् तद्बाधकानामेव विपर्ययत्वमबाधकत्वञ्चेति । बाध इत्यत्र 'बाधा' इति, तत्पक्षपातत इत्यत्र सत्पक्षपातत इति च पाठान्तरम् ।

तृतीयपादमवतारयति बुद्ध्यन्तराणीति । अभिन्नेति । द्वीन्द्रियग्राह्यतामुखेन प्राक् गुणातिरिक्तं साधितम् ; इदानीमेकेन्द्रियजन्यज्ञानद्वयमुखेनैवेत्यर्थः । श्लोके प्रत्यभिज्ञादीत्येतदनन्तरम् 'अवगमयति वस्तु रूपादितोऽन्यत्' इत्यस्यानुषङ्ग इति तद्वदित्यनेन स्पष्टम् । प्रथमेन आदिना आसन्नान्यग्रहणम् । दूरादविशदं दृष्टं आसन्नत्वाद्विशदं पश्यामीति प्रत्यभिज्ञा ग्राह्या । प्रत्यभिज्ञादीति आदिना संशयविपर्ययग्रहणमिति वक्ष्यति । ननु द्रव्याभावेऽपि वैशद्यनिर्वाहः, रूपं यथा वर्तते तथा तद्ग्रहणं विशदग्रहणम्, अयथा ग्रहणमविशदग्रहणमित्यत्राह न चेति । पीतशंखभ्रमस्थले पीतरूपं पित्तगतं तथा पित्तगतत्वेन न गृह्यते, तथापि तत्र वैशद्यमिष्टमिति भावः । न च नील नीलतरमित्यादौ स्थितस्यातिशयस्याग्रहणे अवैशद्यमसदिष्टमिति वाच्यम् ; तथा तारतम्यरहितरूपादिस्थले वैशद्यादेः वक्तव्यत्वात् । परिमाणभानेन संख्याभानेन वा वैशद्यनिर्वाहं निरस्यति नापीत्यादिना ।

विपर्यय[धि]योर्ग्रहणम । सशयविपर्ययौ तावत् अधिष्ठानग्रहे विशेषाग्रहात् समानधर्मग्रहाच्च भवत । तथादृष्टिनियमश्च नान्यथयितु शक्य ।

(श्लो) अधिष्ठानस्य कार्त्स्न्येन भानेऽभाने च न भ्रम । भाताभाताकृतिभिदा कथ निर्धर्मके भवेत् ॥
बाधकधीश्च अधिष्ठानातिरिक्ततदसाधारणधर्मविषया, तत्स्वरूपग्रहस्यारोपासहत्वात् । जिज्ञासा च नात्यन्ता नुपलब्धे, अदर्शनात् । न च निश्शेषविदिते, वेद्याभावात् । अतस्तद्विषये विदिताविदिताकारत्व सिद्धम् । तदिद सर्वमभिप्रेत्य **भिन्नाभिन्नवादिभिरप्युक्तम्—**

"आविर्भावतिरोभावधर्मकेष्वनुयायि यत् । तत् धर्मि यत्र वा ज्ञान प्राग्धर्मग्रहणाद्भवेत्" इति ।
अत्रागृहीताशेषधर्मधर्मिग्रहण तु न मृष्यामहे । यत्तु **बौद्धैरुक्तम्** —

"धर्मोपकारशक्तीना भेदे, तास्तस्य किं ? यदि । नोपकारस्ततस्तासा तथा स्यादनवस्थिति ॥

---

भाव— अशेषधर्माणा धर्मिणो भिन्नत्वे उपकारानवस्थाप्रसङ्गात् अभेदस्यैव ग्राह्यत्वात् धर्मिग्रहे केषाञ्चिद्धर्माणा अग्रहण, केषाञ्चिद्ग्रहणञ्चायुक्तमित्याशङ्कामनूद्य परिहरति—यत्तु बौद्धे रित्यादिना । धर्मोपकारशक्तीनामिति । अयमर्थ —नैल्यादिधर्माणा सहकारित्वेनस्योपकारस्य

धारणा— कारेति । पूर्वार्धे तूलिकाया व्यक्तम् । तत इति । अनुपकारपक्षस्य दूषितत्वादित्यर्थ ।

श्री- विशेषाग्रहात्–स्थाणुत्वाद्यदर्शनात् । समानधर्म ऊर्ध्वत्वादि । तत्र स्थाणुत्वपुरुषत्वरूपानेक कोट्युपस्थितौ सशय विपरीतैककोटिमात्रोपस्थितौ विपर्यय इति । मा भूदधिष्ठानग्रहस्य कारणत्व मित्यत्राह तथादृष्टीति । तथैव दर्शनादेष्टव्यमेतत् । अन्यथा प्रकृधर्मिविशेष्यकत्वाद्यनिवेशे सशयत्वादि दुर्वच स्यादिति । अन्यान्यदृष्यादिपदग्राह्यमाह बाधकधीरित्यादिना ।

धर्मधर्मिणौ भिन्नाभिन्नाविति भेदाभेदवादिभिर्भेदाशसाधनायोक्तमत्र साधकतयोपन्यस्यति तदिदमिति । आविर्भावेति । अत्रानन्ददायिनी—शुक्तिगतेदन्त्वादि आविर्भाव, शुक्तित्वादि तिरोभाव । इदन्त्वादे सर्वदा आविर्भूतत्वात् प्रकाशमानत्वात्, शुक्तित्वादेर्विशेषस्य च कदाचिदप्रकाशात् तिरोभावात् । तत्रानुयायि धर्मि, अननुयायि अगृहीत धर्मभूतमिति तयोर्भेद । प्रकारान्तरमाह यत्र वेति । शुक्तित्वादिग्रहणात् प्रागेव इदन्त्वेन धर्मि गृह्यते, यत्र धर्मिणि ज्ञान धर्मग्रहणात् प्रागेव भवेत् तदन्यदिति । अत्राथ क्लेशात् प्रकारान्तरत्वाभावाच्चान्यथा व्याख्यातव्यम्—भेदाभेदवादिभि कार्यकारणस्थले तदिष्टि प्रथममुच्यते अन्यादृशधर्मधर्मिस्थले च पश्चादिति । अयमर्थ —घटत्वाद्यवस्थाविर्भावतिरोभावधर्मकेषु मृद्द्रव्यादिषु पिण्डत्वघटत्वकपालत्वाद्यवस्थास्वनुयायि धर्मि । अवस्थाश्च भिन्न । पिण्डघटादेर्भेदव्यवहारोऽप्यवस्थामादाय । ज्ञातत्वाज्ञातत्वरूपवैषम्यमादाय आस्थातदतिरिक्तसकलविशेषानुरोधेन चाह यत्र वेति । अतो धर्म धर्मिभेद स्वीकार्य । ननु धर्म विनापि धर्मिग्रहणमिष्टश्चेत्, कथ नैयायिकादिसमतनिर्विकल्पकज्ञाननिरासो भवद्भि क्रियत इत्यत्राह अगृहीतेति । प्रथमपिण्डग्रहणेऽपि इदमित्थमित्येव भानम् । गोत्वाद्यनुवृत्त्यग्रहणात्तु निर्विकल्पकत्वम् । दोषवशात् गोत्वगवयत्वादिरूपविशेषाग्रहोऽपि क्वचिद्भवति, तथापि मृगत्वादिरूपसाधारणाकारस्य रूपादेश्च ग्रहणमस्त्येवेति ।

अत्र धर्मिग्रहणे सर्वग्रहणमेव कतिपयधर्माग्रहण कतिपयधर्मग्रहणमिति वैषम्य न मृष्यामहे इति वदतो बौद्धस्य वचनमनूद्य निरस्यति यत्त्विति । धर्मेति । अत्र धर्मधर्मिस्थले धर्माणामुपकारकत्व धर्मिण उपकार्यत्वञ्चास्य कैश्चित् व्याख्यातम् । शेषशेषिभावस्थले शेषिण एवोपकार्यत्वम् । विशेष्यस्य

नानोपाध्युपकाराङ्गशक्त्यभिन्नात्मनो ग्रहे। सर्वात्मनोपकार्यस्य को भेदः स्यादनिश्चितः॥" इति—
तदपि मन्दम् । अन्वयव्यतिरेकसिद्धकारण[ा दि] वैचित्र्यनिबन्धनस्वभावभेदवतामुपाधीनां परस्पर-
व्यभिचारि(र)वृत्तिनियतसामग्रीबोध्यत्वेन ग्रहणाग्रहणयोरुपपत्तेरिति ।

---

ஸு– वस्तुशक्तेश्च धर्म्युपकार्यशक्त्यपेक्षया भेदे धर्मादिभिर्यदि द्रव्यादेर्नोपकारः, तदा तासां धर्मा-
दीनां तदीयत्वं न स्यात्,…………ततस्तासामुपकार इत्यनुपज्यते । धर्मादीनां तदीयत्वनिर्वाहार्थं
उपकारः स्वीकार्यः । तदा सत्त्वात् धर्मः………कार्यः । एवञ्च नानाविधैरुपाधिरूपैरवच्छेदकैः
उपकारांश(ङ्ग?) धर्मशक्तिधर्मभिः अभिन्नस्वरूपस्योपकार्यस्य सर्वात्मना ग्रहे को भेदः अनिश्चितः
स्यात् । सर्वोऽपि निश्चित एवेति । अतः केषाञ्चिद्ग्रहणं नोपपद्यत इति भावः ।

லெவகா– तासाम् धर्मोपकारशक्तीनां धर्मत्वसिद्ध्यर्थं उपकारे सतीति शेषः। तथेति । तत्राप्युप-
कारे तथा उपकारानुपकारविकल्पे सतीत्यर्थः। नानेति । नानाविधावच्छेदकरूपोपाधिधर्मैः उपकार-
रूपधर्मेण शक्त्या च अभिन्नस्वरूपस्येत्यर्थः। अंश(आत्म?)शब्दो धर्मिवाची । सर्वात्मना ग्रहे ।
धर्मिण एव सकलधर्मस्वरूपत्वात् धर्मिग्रह एव सकलधर्मग्रहोऽपीत्यर्थः ।

परस्परव्यभिचारित्वम्—परस्परासमवहितत्वम् ।

வீ– चाङ्गित्वं प्राधान्यं युक्तमिति तत् युक्तमिति। आ. दा. तु सिद्धिटीकां प्रमाणीकृत्य धर्माणा-
मुपकार्यत्वं धर्मिण उपकारकत्वञ्चैवाऽन्यथा व्याख्याति। प्रथमपक्षे धर्मोपकारशक्तीनामिति द्वन्द्वः।
घटादीनां स्थौल्यनैल्यादयो ये धर्माः, जलाहरणादिकार्यसहकारिकृतो य उपकारो घटादिनिष्ठः, या
चाऽऽहरणाद्यर्था शक्तिः, तासां धर्म्यपेक्षया भेदे सति, यदि ताभिः धर्मिणः कश्चिदुपकारो
नास्ति, तदा ताः तस्येति किम्—तदीया इत्यत्र किं नियामकम्? तदीयत्वे तदुपकारकत्वमावश्यक-
मिति भावः। ततस्तासामुपकारकत्वमस्ति। तथा—तेन प्रकारेणानवस्था आपद्यते। कथमिति चेत्—
तत्कृतोपकारस्यापि धर्मत्वात् तस्याप्युपकारकत्वम् तदुपकारस्याप्युपकारकत्वम्, तथा तासामुप-
कारशक्तत्वम्, तस्याः शक्तेरपि धर्मत्वादुपकारशक्तत्वम्, तस्या अपि शक्तेस्तथात्वमित्येवम्। एवं
भेदपक्षे दोषमुद्भाव्य, अभेदं स्वीकृत्याह नानेति। ये नाना उपाधयः—स्थौल्यादयो धर्माः, ये च
सहकारिकृता उपकाराः, याश्च धर्मिगताः शक्तयः तदभिन्नस्य आत्मनः स्वलक्षणस्य स्वमिति कथ्य-
मानस्य व्यक्तिविशेषस्योपकार्यस्य ग्रहे इष्टे, धर्मोपकारशक्तीनां तदभेदात् सर्वात्मना ग्रहो जात
एवेति, तत्र को वा भेदः—अंशः अनिश्चितः स्यात्। अतः सर्वधर्मसहितधर्म्येव गृह्यत इति। अत्र पक्षे
ततस्तासामिति पृथग्वाक्यम्। अभिन्नात्मन उपकार्यस्येति समानाधिकरणम्॥ द्वितीयपक्षेऽयमर्थः—
धर्मान् प्रति धर्मिणः, भृत्यान् प्रति राज्ञ इवोपकारकत्वात् तत्र धर्माणां ये उपकाराः, तदर्था
धर्मिगताः याः शक्तयः, तासां धर्मितो भेदे, ततः धर्मितः तासां शक्तीनां यदि नोपकारः, तदा
तास्तस्य किम्—शक्तीनां तदीयत्वं कथम्। तथा—तेन प्रकारेणोपकारकत्वे तदुपकारशक्तिमादा-
योपर्युपरीत्यनवस्था। अतः नानोपाधिरूपधर्मगतोपकारस्य अङ्गभूता—उपयुक्ता या शक्तिः, तदभेद
एव धर्मिणः। एवञ्च तद्ग्रहे उपकार्यस्य धर्मस्यापि धर्मोपकारशक्त्यन्तर्गततया ग्रहणमेवेति को
भेदः—विशेषः अगृहीतः स्यादितीत्यलम्।

अन्वयेत्यादि। अयमाशयः—रूपरसादीनां धर्माणां नानोपाधीति नानात्वस्य भवतैवोक्तत्वात्
रूपरसादीन् प्रति अन्वयव्यतिरेकाभ्यां कारणवैचित्र्यस्याप्यानुभविकत्वात् धर्मधर्मिभेदात्,
उत्पादकसामग्र्या इव तद्ग्राहकसामग्र्या अपि एकविषयकसामग्रीकालेऽन्यविषयकसामग्र्यभावेन

नन्वस्तु प्रतिसन्धानबलात् द्वीन्द्रियग्राह्यं किञ्चित्; तत्तु रूपरसाद्यात्मकमिति वा तदाश्रय इति वा न मृष्यामहे; तेषामेवाभावात्। एकस्मिन्नेव ग्राहकभेदात् तत्तद्धर्मधीः, यथा मणिकृपाणदर्पणादिव्यञ्जकभेदात् मुखादेरणुत्वपृथुत्वमलिनत्वविमलत्वादिधीः, सव्यदक्षिणविपर्यासश्चेति। तमिमं पक्षं प्रतिक्षिपति-**नैकत्वेऽप्यक्षभेदाद्भिदुरमिवेति**। इह तावत् सर्वेत्रासिद्धस्य कल्पनानुपपत्तिरुक्ता। बाधकान्तरमाह-**मिथ इति**। चक्षुरादिग्राहकवैजात्यं हि ग्राह्याकारभेदात् कल्प्यते। तदसिद्धौ कथं तद्ग्राहकभेदक्लृप्तिः, तदभावे च कथं तत एव ग्राह्याकारभेदक्लृप्तिरिति? इह तु मध्ये बुद्धिभेदप्रवेशो चक्रकम्॥

अस्तु कारणभेदादिन्द्रियभेदक्लृप्तिरिति चेन्न; इन्द्रियवैजात्यव्यवस्थापकस्य तस्यानुपलम्भात्। तत एव तत्क्लृप्तौ तत्रापि मिथस्संश्रयात्। ननु दर्पणादिग्राहकभेदाद् ग्राह्ये सव्यदक्षिणविपर्यासः, पृथुत्वाणुत्वविमलत्वमलिनत्वकल्पना च दृष्टेति चेत्—सत्यम्; दर्पणादेस्तद्धर्माणां च भेदेन दृष्टत्वात्

---

ஸ்ரீ— करणादिवैचित्र्यनिबन्धनस्वभावभेदवतामिति। स्वभावभेदः-इदं एतदीयं नेदमिति स्वभावभेदः कारणस्वभाववैचित्र्यनिबन्धनः। अतो धर्माणां भिन्नत्वेऽपि तदिदमुपपद्यत इति भावः। भिन्नत्वेऽपि कथं केषाञ्चिद्ग्रहणमित्यत उक्तम्—परस्परव्यभिचारीति।

லெளனா— श्लोकावतारिकायां वैभाषिकपक्षद्वैविध्यमुक्तम्, तत्र द्वितीयपक्षदूषणपरत्वेन तुरीयं पादमवतारयति नन्वस्तु इत्यादिना। तत एव तत्क्लृप्तौ-इन्द्रि[illegible]त्यादेव कारणवैजात्यक्लृप्तौ।

வீ— परस्परव्यभिचारिस्थितिकत्वात् धर्मिग्रहणे नियमेन सर्वधर्मग्रहणं नाऽऽपाद्यमिति। *अनवस्था दोषोऽपि न; भावनायाः कथम्भावाकांक्षाया इव* क्वचित् स्वरूपे विश्रमात्। धर्मधर्मिणोः स्वरूपात्मकसंबन्धस्यैवेष्टत्वात् तदतिरिक्तोपकारतच्छक्त्यादिकल्पनया अनुभवबाधायोगादिति।

द्रव्याद्रव्योभयमसिद्धमित्यत्र द्रव्यासिद्धिपक्ष एवं प्रतिक्षिप्तः; अथ द्रव्याद्वैतपक्षः एकमेव रूपाद्यात्मना भासत इत्येवंरूपः प्रतिक्षिप्यते चतुर्थेन पादेन। सव्यदक्षिणविपर्यासः—बिम्बे सव्यस्य प्रतिबिम्बे दक्षिणत्वमित्येवम्। नैकत्वेऽप्यक्षभेदात् भिदुरमिवेति। द्रव्यमेकमेव भिदुरमिव—भेदविशिष्टमिव विभिन्नतुल्यम् इन्द्रियभेदप्रयुक्तविभिन्नवस्तुतौल्यविशिष्टं न भवतीत्यर्थः। विभिन्नतौल्यञ्च रूपत्वस्पर्शत्वादिनानाप्रकारधीविषयत्वम्। सा च धीरिन्द्रियभेदकृता। एकस्मिन् तथाभावाच्च तस्याः भ्रमत्वम्। नेति एतत्पक्षनिरासः। तत्र मिथ इत्यादिवक्ष्यमाणमात्रं न हेतुः। नैकस्मिन्नित्यत्रैव कल्पनानुपपत्तिरूपहेतुरपि हृद्गत इत्याह इह तावदिति। भिदुरमिवेत्येतत् दूषितम्। अक्षभेदप्रयुक्तत्वांशायोगं दर्शयति मिथ इत्यादिना। श्लोकस्यादिपदार्थमुपरि वक्ष्यति। मिथः संश्रयः—अन्योन्याश्रयः। तमुपपादयति चक्षुरित्यादिना। ग्राहकस्येन्द्रियस्यातीन्द्रियत्वात् तद्वैजात्यं ग्राह्याकारभेदमूलकमेव साध्यमिति भावः। ननु नीलपीतादिभेदेपि घटपटादिभेदेऽपि चक्षुष एकस्यैव ग्राहकत्वात् कथं ग्राह्याकारभेदात् इन्द्रियवैजात्यमिति चेन्न—चक्षुर्ग्राह्यवर्गानन्तःपातित्वात् स्पर्शो विजातीयेन्द्रियग्राह्य इति विवक्षितत्वात्। तदसिद्धौ—पूर्वं ग्राह्याकारभेदाग्रहे। ननु अक्षभेदादेव ग्राह्याकारभेदः, अक्षभेदस्तु ग्रहणभेदादित्यत्राह इहत्विति। ग्रहणरूपप्रत्यक्षे विषयस्येन्द्रियस्य च कारणत्वात् तस्यापि घटने चक्रकं स्यात्। *त्रयाणां मिथस्सापेक्षत्वे हि चक्रकाख्यो* दोषः। ननु ग्रहणस्येन्द्रियकार्यत्वात् तद्भेदात् न तत्कल्पना; किंतु इन्द्रियोत्पादकसामग्रीभेदादिति शंकते कारणेति। नन्वक्षभेदस्य ग्राह्याकारवैजात्यप्रयोजकत्वाभावे दर्पणादिभेदस्यापि तद्वैजात्यप्रयोजकत्वं न स्यादिति शंकामनूद्य वैषम्यमाह नन्वित्यादिना।

तदधीनाध्यासभेदो यथादर्शनमङ्गीक्रियते । अत्र तु न तथा । अक्षेपु च ते बहिः कल्पनीयानां रूपादीनामसंभवात् ॥

उपाधिज्ञाननिरपेक्षेयमौपाधिकभेदधीरस्तु, मण्डूकवसाक्तदृष्टेर्वंशेषु उरगबुद्धिवदिति चेन्न; तत्तद्दोषशक्त्या तत्तद्भ्रान्तिभेदसिद्धेः, कल्प्याकारस्य क्वचित् संभवाच्च ॥ चक्षुरादिस्वभावा एवात्रापि रूपादिभ्रान्तिहेतवो दोषा इति चेन्न; सर्वकल्पनाधारे स्वलक्षणेऽप्यनाश्वासप्रसङ्गात् । ततश्च इन्द्रियस्वभावभेदोऽपि दुर्वचः ; अधिष्ठानाकाङ्क्षायामपि बुद्ध्यैव चरितार्थत्वात् । तथाचेन्द्रियस्वभावभेदोऽपि नापेक्ष्यः ; पूर्वपूर्वबुद्धिशक्तिभेदादेवोत्तरोत्तराकारभेदोपपत्तेः ।

ननु स्पर्शनेन्द्रियस्याज्ञातैर्भागभेदैः करतलप्रकोष्ठादिवर्तिभिरेकस्यैव दुरालभास्पर्शस्योल्लेखभेदा भवन्तीति चेन्न ; स्पर्शस्यात्र भेदेनानुल्लेखात् । दुरालभावयवानां तु वह्निकणवत् शरीरमाविशतां तद्विकृति-

---

भू०— रूपादिभ्रान्तीनामधिष्ठानतयाऽवश्यापेक्षिते स्वलक्षणे कथमनाश्वासः, अनाश्वासे वा कथमिन्द्रियस्वभावभेदस्य दुर्वचत्वमिति शङ्काद्वयं क्रमेण परिहरति अधिष्ठानाकांक्षायामित्यादिना ।

வ்யா— दुरालभा-समुद्रान्ता ; "रोदनी कच्छुरानन्दो समुद्रान्ता दुरालभा" इत्यमरः ।

श्री—अक्षेपु चेति क्वचित् सिद्धस्यान्यत्र कल्पना । रूपादि कुतः सिद्धम् । नाक्षेपु, न चाऽन्यत्र । अतो यत्र दृश्यते तत्रैव तत् बहिरस्तीति न कल्पनीयतेति भावः । अनेन दर्पणदृष्टान्तेनेदमपि निरस्तम्, यत्-नात्रान्योन्याश्रयः। ग्राह्यवैजात्यज्ञानं प्रति चक्षुरादिवैजात्यं स्वरूपसदेव प्रयोजकम्, न तु ज्ञायमानतया । अतः परस्परज्ञप्त्यधीनज्ञप्तिकत्वाभावादिति । निरासहेतुस्तु रूपादिताकल्पनं हि अस्वाभाविकत्वात् औपाधिकत्वात् । उपाधौ ज्ञायमानस्य चान्यत्राऽऽरोपः । तत्र चक्षुरादेरुपाधित्वे तज्ज्ञानस्यावश्यकत्वादन्योन्याश्रय एवेति ।

अथोपाधिज्ञानं विनाऽप्यारोपो भवतीति शंकते उपाधीति । अत्र दोषस्य दुर्वचत्वात् अन्यत्र रूपाद्यसिद्ध्या न स न्याय इत्याह तत्तदिति । अत्रापि भ्रान्तिप्रयोजकदोपोऽस्तीत्याशंकते चक्षुरिति । स्वलक्षणेऽपीति । निर्विकल्पकवेद्यं सर्वधर्मविकल्पमूलं व्यक्तिमात्ररूपं स्वलक्षणं तत्रतत्र स्वीकृत्यान्यत् कल्पितमित्युच्यते । इन्द्रियस्वभाव एव चेत् भ्रान्तिहेतुः, स्वलक्षणमपि कल्पितमेव स्यादिति भावः । इन्द्रियस्वभावेषु भेदं स्वीकृत्य तत्स्थापनमिति मतिमपाकरोति ततश्चेति । स्वलक्षणसत्यत्वसाधकप्रमाणाभावादित्यर्थः। ननु सर्वकल्पनाधारे इति भवतैवोक्तत्वात् अधिष्ठानं विना कल्पना न भवतीति तत्सत्यत्वसिद्धौ तदर्थतया इन्द्रियस्वभावविशेषोऽपि कल्प्य इत्यत्राह अधिष्ठानेति । बुद्ध्यैवेति । अधिष्ठानं किं बुद्ध्यारूढं कल्पनाधारीभवति, उत स्वरूपतः । अन्त्यस्यासंभवादाद्ये इष्टे अयस्तुत्वेऽपि कल्प्यत्वेनैवाधिष्ठानता । यथा धर्मेषु धर्मान्तरकल्पनायां धर्माः अवास्तवा एवाधारीभवन्तीति । अत्र पक्षे लाघवं दर्शयति तथाचेति । नीलपीतस्पर्शस्मार्थमपि नेन्द्रियस्वभावभेद आवश्यकः । पूर्वपूर्वबुद्धिरुत्तरोत्तरबुद्धौ कुर्पद्रूपा भवतीति योगाचारमतमेवास्तु, किमर्ध-जरतीयेनेति भावः ।

नन्वेकस्मिन् अनेकस्पर्शनाया आनुभविकत्वात् तद्दृष्टान्तेन द्रव्यमेव स्वीकृत्य धर्मा निषिध्यन्ते इति सोदाहरणं शंकते नन्विति । अज्ञातैरिति । प्रकृते एकस्यैवेति पदमेव मुख्यम् । अज्ञातैरिति पदं 'बुद्ध्यैव चरितार्थत्वात्' इत्येतन्निरासाय । दुरालभा कण्डूतिकर ओषधिविशेषः (காஞ்சொறி). आलम्भः स्पर्शः । दुःखेनाऽऽलभ्यत इति दुरालभेत्यवयवार्थोऽप्यस्ति । उल्लेखभेदस्तत्र नेत्याह स्पर्शस्येति । क्वचित् देहप्रदेशे कण्डूत्याधिक्यम्, क्वचिन्न्यूनतेत्यत्र कारणमाह वह्निकणवदिति । अत्रा-

जनकत्वमात्रम् ; प्रदेशभेदेन विकृतितारतम्यं च वह्न्यादिभिरिव नानुपपन्नम् ।

ननु मनुष्यपशुमृगादीन्द्रियभेदात् भक्ष्यादिष्वानुकूल्यादिवैपरीत्यं तत्तारतम्यं च दृश्यते । न च वस्त्वेवानुकूलप्रतिकूलस्वभावम्; विरोधात्, सर्वेषामविशेषेण सर्वदोभयविधानुपलम्भात्, अनेकान्तवादानभ्युपगमाच्च । एवं चक्षुरादिभेदात् रूपादिभेदभ्रमस्स्यादिति—तदपि न; तत्तत्कर्मशक्तिवैचित्र्यात् तत्तदनुकूलत्वादिव्यवस्थोपपत्तेः । वस्तुषु चानुकूलत्वप्रतिकूलत्वे सुखदुःखजनकत्वे एव ॥ तथाऽपि सुखदुःखे बुद्धिभेदावेव भवद्भिरपि स्वीक्रियेते(कृतौ) । ततश्चात्र विषयभेदात् धीभेदः, तस्मादेव च स इति प्रसङ्गः स्यादिति चेन्न—विषयभेदस्य स्वकारणाद्यधीनत्वात् ; तदुत्पाद्यबुद्धिभेदस्य तत्कारणत्वाभावात्; द्वयोरपि परस्परप्रतीतिनिरपेक्षप्रमाणसिद्धत्वाच्च ।

एवमुपाधिभेदैरेकस्मिन्नेव ह्रस्वत्वदीर्घत्वदर्शनान्यपि नेतव्यानीति ।

अत्रादिशब्देन पूर्ववत् संशयाद्यसंभवो नीलपीतशीतोष्णमधुराम्लादिभेदासंभवश्च गृह्यते ।

---

वी– तादृशस्वभावभेदनिबन्धनां विशेषबुद्धिं प्रदर्श्य शंकते नन्विति । मिथोविरुद्धोभयधर्मात्मकत्वस्वीकारे अनेकान्तवादः जैनसंमतः परिगृहीतः स्यादित्याह अनेकान्तेति । एवमिति । मनुष्यतिर्यगादिभेदेन इन्द्रियभेदात् आनुकूल्यादिभेदभ्रमवदित्यर्थः। अनुकूलत्वादिकं प्रतिसंबन्धिसापेक्षमनियतञ्च, न तथा रूपादिकम्, नहि नीलं कश्चित् प्रत्यनीलमिति वैषम्यमाह तत्तदिति । सुखदुःखजनकत्वे इति । तथा च तयोः पारमार्थिकत्वात् तत्र भ्रमकल्पना नेति भावः । शंकते तथापीति । सुखदुःखे अनुकूलप्रतिकूलवस्त्वनुभवजन्यौ गुणविशेषाविति तार्किकादयः । तदुक्तं कणादेन स्वदर्शने दशमे । वेदार्थसंग्रहादौ तन्निरस्तम्—अनुकूलं वस्तुज्ञानमेवाऽऽनन्दः, प्रतिकूलं ज्ञानमेव दुःखमिति कारणभूतज्ञानातिरिक्ते गुणे मानाभाव इति । अत उक्तं भवद्भिरपीति । बौद्धमतेपि तदिष्टेः अपिशब्दः । तस्मादेव च स इति । धीभेदात् विषयभेद इत्यर्थः । एवञ्च ज्ञानभेदप्रयुक्तत्वे विषयभेदस्य काल्पनिकत्वमिति भ्रमस्यावश्यकतेति शंकितुराशयः । प्रसंगः स्यादिति । अनुकूलवस्तुना अनुकूलज्ञानरूपसुखमुत्पाद्यते; सुखेन चानुकूलत्वं सुखजनकत्वं विषये उत्पाद्यत इत्यन्योन्याश्रयः स्यादिति तटस्थेन दोषोद्भावनम् । यो हि ज्ञानेन वस्तु कल्पयति, तस्य बौद्धस्यायं दोषः । अस्माकं तु विषयभेदः सर्वः बाह्यकारणमूलः, बुद्धिभेद एव विषयभेदमूल इति नान्योन्याश्रय इति भावः । यत्तु प्रकृते आनुकूल्यविषये आपादनम्, तत्रेदं वक्तव्यम्—तत्तत्कर्मवशात् किञ्चित् कदाचित् कस्यचिदिष्टं भवति । इष्टत्वमनुकूलत्वम् । इच्छापि ज्ञानविशेषः । चन्दनादिदर्शनानुसन्धाने जाते तत् ज्ञानं तद्वस्तु चेष्यते । विषयस्य प्रियत्वे ज्ञानमपि प्रियं भवति । एवम्भूतज्ञानमेव सुखम् । तत्र चन्दनादिर्विषयः बाह्यात् स्वकारणात्; तद्ज्ञानमिन्द्रियात्; तदिच्छा मनसः इति नात्रान्योन्याश्रय इति । कारणत्वाभावादिन्यन्तेन उत्पत्तावन्योन्याश्रयः परिहृतः ; ज्ञप्तावपि तं परिहरति द्वयोरपीति ।

एकस्यैव ह्रस्वत्वदीर्घत्वरूपेण ग्रहणवत् रूपत्वस्पर्शत्वादिना ग्रहणमित्येतत् निरस्यति एवमिति । एकमेव परिमाणं सापेक्षया ह्रस्वात् स्वयं दीर्घं भवति, दीर्घाच्च ह्रस्वम् । तद्वदत्रोपाध्यभावादिदमयुक्तमिति भावः ।

श्लोके मिथस्संश्रयादीति आदिपदग्राह्यं दर्शयति अत्रेति । चक्रकदोषः प्रागुक्तः मिथस्संश्रयेत्यत्रैव क्रोडीकृत इति आदिपदविवक्षितमन्यदिति भावः । पूर्ववदिति । प्रत्यभिज्ञादीत्यत्र आदिपदवदित्यर्थः । नीलपीतेति । इन्द्रियभेदस्यैव भेदकल्पकत्वे नीलपीतयोरेकेन्द्रियग्राह्यतया भेदो न

न हि नीलादिभेदेऽविन्द्रियभेदोपाधिकत्वं शक्यं वक्तुम् ॥ रूपादिभेदमिथ्यात्वे तदन्त.पातिनीलादिभेदोऽपि मरीचिकावीचिकान्यायेन मिथ्यैव स्यादिति चेन्न ; असिद्धस्यासिद्धेन दुस्साधत्वात् । मिथो [नि]दर्शनेन साधने मिथस्संश्रयात् । निदर्शनमात्रेण निश्शेषनिह्नवप्रसङ्गाच्चेति ॥

तथाऽप्येकमनेकस्वभावमिति व्याहतमिति चेन्न; स्वरूपभेदस्यानभ्युपगमात् । धर्मभेदस्याविरुद्धत्वात् ।

(श्लो) वेद्यहेतुफलाकारैर्भिन्नैरेका समेति धीः । तथा बाह्योऽपि दृष्टत्वात् युगपत् क्रमशोऽपि नः ॥ ५ ॥
प्रतिसंबन्ध्यनेकत्वं यथा नैक्यस्य बाधकम् । तथा संबन्ध्यनेकत्वम् ; स्वाभीष्टे च समत्वनः ॥६॥ (८)

(इति द्रव्यसिद्धि-द्रव्याद्वैतभंगौ)

---

पूर्ति– स्वाभीष्टेऽपि समत्वत इति । त्वदभ्युपगते युगपन्नीलाद्यनेकग्राहके ज्ञाने नीलाद्यनेकाकारा-न्वयस्य दर्शनाच्चेत्यर्थः ॥ ८ ॥

टिप्पणी— प्रतिसम्बन्ध्यनेकत्वमिति । घटादिसम्बन्ध्यन्तरानेकत्वं यथा घटैकत्वबाधकं न भवति, तथा सम्बन्धिधर्मानेकत्वं धर्म्यैक्यबाधकं न भवतीत्यर्थः ॥ ८ ॥

श्री—स्यात् । एवमुपर्यपि । निदर्शनमात्रेण–स्वप्नादिरूपयत्किञ्चिद्दृष्टान्तमात्रेण । साधकं विनापीति भावः । अनेकस्वभावमित्यत्र स्वभावपदं स्वरूपपरं वा धर्मपरं वा ; आद्ये आह स्वरूपेति ; अन्त्ये आह धर्मेति । अविरोधं तदङ्गीकृतस्थले दर्शयति वेद्येति । चक्षुरादिना घटादिविषयकं ज्ञानं जनितं हानोपादानादिरूपफलहेतुर्भवति । अत एका धीः वेद्येन–विषयेण, हेतुना चक्षुरादिना, फलेनोपादा-नादिना च त्रिभिरेभिराकारैः समेति–संबध्येत यथा, तथा बाह्येऽपि धर्मिणि अनेकधर्मसंबन्धः । अत्र युगपत् अनेकसंबन्धो बौद्धमते ; बुद्धीनां क्षणिकतया पश्चात् संबन्धायोगाच्च तथा । स्थिरवस्तुवादिनां नः एकस्मिन् घटादौ रूपस्पर्शसंयोगादिकं पश्चादपि भवेदिति भावः । प्रति-संबन्धीति, दारपुत्रभृत्यमातापित्रादीत्यर्थः । स्वाभीष्टे च समत्वत इति । अगोव्यावृत्तिरूपजातेः प्रतिसंबन्धिनः गोभिन्नाः अनेके, संबन्धिनो गावश्चानेके इति—तथा अधिपतिसहकार्यालम्बन-समनन्तरप्रत्ययाश्चत्वारो हेतवो ज्ञानोत्पत्ताविति बौद्धेष्टत्वात् एकत्र ज्ञाने अनेकसंबन्धः । एकस्मिन् क्षणे किञ्चित्क्षणपूर्वत्वकिञ्चित्क्षणोत्तरत्वकिञ्चिद्ज्ञानविषयत्वनानाकल्पनास्पदत्वाद्यनेक-धर्मस्वीकार इति च भावः ।

(इति द्रव्यसिद्धि द्रव्याद्वैतभंगौ) (८)

---

(धर्मनिर्धर्मकत्वनियमभंगः)

धर्मो निर्धर्मकश्चेत् कथमिव भविता सोऽभिलापादियोग्यो
धर्मेणान्येन योगे स च भवति तथेत्यव्यवस्थेति चेन्न ।
कश्चिद्धर्मोऽपि धर्मी स्फुटमतिमथने स्वान्यनिर्वाहकत्वं
तन्निष्कर्षप्रयोगेष्वपि भवति पुनस्तस्य धर्मो विशेषः ॥ ९ ॥

एवमेकाश्रयानेकदृष्टौ अन्यतरनिह्नवार्थिनौ पुनरपि धर्मधर्मिभावभङ्गमुखेन प्रवृत्तौ प्रतिहन्येते ;

ननु गौः शुक्ल इत्यादिविशेष्यपर्यन्तोक्तौ तथा स्यात्; क्वचिद्गुणमात्रविषयेषु शुक्लादिशब्देषु, भावप्रधानेषु द्व्येकयोरित्यादिषु, त्वतलाद्यन्तेषु, जातिर्गुणः क्रियेत्यादिषु च वाच्यानां तत्तद्धर्माणां इदंत्वेन निर्देशादित्थंभावसापेक्षत्वेऽनवस्था। अनपेक्षत्वे तु, "इदमित्थमिति हि सर्वा प्रतीतिः" इति भाष्यादिविरोध इत्यत्राह—**तन्निष्कर्षप्रयोगेष्वित्यादि**। अयं भावः—उदाहृतेषु नियतानियत निष्कर्षकशब्देषु जातिगुणादेः प्रधानतया निर्देशेऽपि सन्ति केचित् यथाप्रमाणमित्थंभावः। त्वयाऽपि हेतुसाध्यादि(दीनां)धर्माणां पक्षधर्मत्वादिधर्माः स्वीकार्याः। अनवस्था च कथञ्चित् उपशमनीया। स्वीकृतं च संवेदनसंवेदने शब्दशब्दादौ स्वपरनिर्वाहकत्वम्। न चात्र कर्मकर्तृविरोधः; स्वोत्पादकत्वादाविव पौर्वापर्यादिवैगुण्याभावात्। किंच स्वलक्षणादीनां जात्यादीनां च संवृतिसिद्धानां निर्धर्मकत्वेऽपि

---

Bhāṣya— गोत्वादिजात्यां गवेतरावृत्तित्वे सति गोवृत्तित्वादिकं इत्थम्भावत्वेनोह्यम्।

संवेदनसंवेदनेत्यत्र सकलसंवेदनविषयकस्य स्वस्यापि संवेदनत्वेन तद्विषयकत्वेन च स्वपरनिर्वाहकत्वम्। एवं शब्दशब्देत्यत्र; सकलशब्दवाचकशब्दस्यापि शब्दत्वात्। पूर्वं धर्मस्य व्यावर्तकं [illegible] वा, स्वपरनिर्वाहकत्वेन स्वीयमेवे(स्वमेव वे?)त्युक्तम्; इदानीम् पटस्य शौक्ल्यमित्यादौ [illegible] स्वस्य वा स्फुटं व्यावर्तकत्वाप्रतीतावपि धर्मिण एव व्यावर्तकत्वं स्फुटमित्यभिप्रेत्य,

Nī- इयं गौरिति प्रत्यक्षस्य गवि व्यावृत्तधीहेतोः स्वस्मिन् इतरव्यावृत्तधीरनन्याधीना। इदं गोत्वमिति प्रत्यक्षे कथमिति चेत्-तथा प्रत्यक्षं न भवति। प्रकारविशेष्योभयग्राहकसामग्र्यां सत्यां धर्म्यभाने मानाभावात्। अत एवोक्तं शास्त्रदीपिकायाम्, 'न जातु इदं गोत्वमिति प्रतीतिः' इति। ननु मा भूत् प्रत्यक्षं तथा। गोत्वमित्यादिशब्दप्रयोगे कथमित्यत्र तन्निष्कर्षेत्यादि। शुक्लादीति। गुणे शुक्लादयः पुंसीति गुणमात्रे प्रयोगस्येष्टत्वादिति भावः। अनुशासनाभावेऽपि लाक्षणिकप्रयोगो भवतीति दर्शयति द्वीति। तत्र द्वित्वविशिष्टैकत्वविशिष्टार्थकत्वे द्व्येकेष्विति बहुवचनापत्तेः संख्यामात्रार्थकता। त्वेति। द्वित्वं शुक्लत्वं गोत्वं द्विता द्विभाव इत्यादिष्वित्यर्थः। सामान्यशब्दान्तराण्याह जातिरिति। इत्थम्भावसापेक्षत्व इति। इदमित्थमिति हि सर्वा प्रतीतिरिष्यत इति भावः। नियतेति। नियतः निष्कर्षः धर्मस्य विशेष्यतया बोधो यत्र, ते जात्यादिशब्दाः नियतनिष्कर्षकाः, शुक्लादिशब्दा अनियतनिष्कर्षकाः। केचिदिति। जातौ जातित्वम्। तच्च एकगतस्य सौसादृश्यरूपधर्मसमुदायस्यान्यनिरूपितत्वम्। रसादीनां रसनेन्द्रियादिग्राह्यत्वम्, विषयतासंबन्धेन ग्रहविशिष्टत्वमेव। शुक्लत्वम् अयं शुक्ल इति गुणविशिष्टगुणिप्रतीतिप्रकारत्वरूपमित्येवं भाव्यम्। धर्मे धर्मिसंबन्धित्वमपि इत्थम्भावः इत्यस्य तदभ्युपगतत्वमाह त्वयापीति। कथञ्चिदिति। निरूपितत्वविषयत्वादीनां संबन्धमात्रत्वात् धर्मिप्रतीत्यादीनामेव विशेषणत्वात् नातिरिक्तवस्तुकल्पनेति भावः। संवेदनसंवेदन इति। ज्ञानमिति ज्ञानं हि ज्ञानत्वेन रूपेण ज्ञानान्तराणीव स्वमपि गृह्णाति। एवं शब्द इति शब्दश्च स्वमपि। तद्वत् सर्वं ज्ञानं विषयमिव स्वमपि प्रकाशयेत् विषय इव स्वविषयेऽपि संशयविपर्ययानुदयादिति भावः।

न चेति। स्वस्य स्वकर्मकग्रहकर्तृत्वे कर्मकर्तृविरोध इति न; तत्सत्त्वेऽपि विरोधाभावात्। स्वस्य स्वोत्पादकत्वे विरोधः पूर्वत्वतदभावरूपः; ग्राहकत्वे तु न तथेति। स्वपरनिर्वाहकत्वानिष्टावपि नानवस्था। तादृशस्थले कल्पितधर्ममादाय विशिष्टधीनिर्वाहात् तस्यावास्तवत्वात्। तावताऽनुभवसिद्धधर्माणां त्यागायोगादित्याशयेन [illegible] किञ्चेति। संवृतिसिद्धानाम्—अविद्याकल्पितानां

कथंचित् अभिलापार्हत्वं त्वयाऽपि ग्राह्यम्; अन्यथा तत्तत्संव्यवहारेण कथादिप्रवृत्त्ययोगात्। अतो निर्धर्मकं शब्दवाच्यं न भवतीति स्वसिद्धान्तविरोधः, स्ववचनव्याघातश्च। आस्तामेतत्।

समानाधिकरणस्येव व्यधिकरणस्यापि व्यावर्तकत्वादित्थंभावत्वं सिध्यति। तथा च नियतनिष्कर्षकप्रयोगेष्वप्येतेषु धर्मी धर्मं विशिनष्टि, यथा पटस्य शौक्ल्यम्, खण्डस्य गोत्वमित्यादिषु। *धर्मीविशेषः धर्मस्य स्वेतरनिष्ठात् व्यावृत्तिधीहेतुरित्यर्थः। न चात्र मिथस्संश्रयः;* विशेषणविशेष्यधियोस्तद्व्यवहारयोश्च मिथो जन्यत्वाभावात्। निष्कर्षानिष्कर्षव्यवहारयोश्च विवक्षाभेदायत्तत्वात्; उभयथा व्यवहारस्य सर्वत्र सर्वैरपि दुरपह्नवत्वात्। यश्चात्र समानाधिकरणप्रयोगे विशिष्टत्वेनावस्थितोऽप्यर्थतः स्वधर्ममन्यनिष्ठात् व्यवच्छिनत्ति, स एव पटस्य शौक्ल्यमित्यादिप्रयोगे गुणीभवन्

---

*Bhāvaprakāśa*— पुनस्तस्य धर्मी विशेष इत्यंशं व्याचष्टे आस्तामेतदित्यादिना। एतत्—धर्मान्तरस्य वा स्वस्य वा व्यावर्तकत्वम् आस्ताम्—तिष्ठतु। व्यधिकरणस्येति। सकृतव्यावृत्त्यधिकरणानधिकरणस्येत्यर्थः।

*Śrī*— गोत्वादीनाम्। कथादीति। कथा—वादजल्पादिर्वादिद्वयकार्या। आदिना लोकव्यवहारग्रहः। एवं कल्पितधर्ममादाय सधर्मकत्वमगत्या स्वीकार्यम्, बौद्धस्य कल्पितवैशिष्ट्योक्तेः सहजत्वादित्यन्वारुह्योक्तम् आस्तामेतदित्युपसंहृतम्। तदाशयस्तु तार्किकेष्वपि केचित् अधिकरणत्वप्रतियोगित्वविषयत्वादयो धर्माः तत्तद्वस्तुस्वरूपा एव; भेदकल्पनया व्यवहार इत्याहुः। अन्ये तु—धर्मत्वेन चानुभवात् भेद एवास्तु। लोके वस्त्वानन्त्यवत् धर्मानन्त्यस्यापि संमन्तव्यत्वात्। न हि अनवस्थेति दोषात् कर्मणामनादित्वं सृष्टिप्रलयानन्त्यञ्च त्यज्यत इति वदन्ति। यावच्छक्ति अनवस्थापरिहरणमेव ज्यायः।

श्लोकोक्तं स्वाभिमतं पक्षमाह समानेति। न चात्रेति। प्रत्यक्षे पटशौक्ल्ययोर्युगपदेव भानात् नान्योन्याश्रयः। शब्देऽपि पटशब्दार्थज्ञानं शौक्ल्यशब्दार्थज्ञानञ्च न मिथस्सापेक्षम्। विशेषणविशेष्यभावस्तु अयमयं समभिव्याहार एवं बोधक इति व्युत्पत्त्यनुसारेण भवति। अतः शुक्लः पट इत्यत्र यथा पटस्य शौक्ल्यं विशेषणं तथा पटस्य शौक्ल्यमित्यादौ गुणस्य द्रव्यं विशेषणम्। कृष्णस्याम्बरं पीतम्, रामस्याम्बरं नीलमित्यादौ व्यधिकरणविभक्त्यन्तेनापि व्यावर्तनादिति। विशेषपदस्य विशेषक इत्यर्थमाह विशेषो धर्मस्येति। मिथः संश्रय इति। यत् विशेष्यं यद् विशेषणमन्तरा न भासते, तस्य विशेषणस्य तत् विशेष्यमपि व्यावर्तकमित्युक्तौ अन्योन्याश्रयः स्यात्। गन्धशब्दस्य पृथिवीनिष्ठगुणविशेष इत्यर्थः पृथिवीशब्दस्य च गन्धवतीत्यर्थ इत्युक्तौ गन्धवती पृथिवीत्यादौ मिथःसंश्रयात् बोधो न स्यात्। न त्वीदृशस्थल इति भावः।

प्रत्यक्षे धर्मस्य विशेषणत्वं धर्मिणो विशेष्यत्वञ्च सहजं स्वरससिद्धम्; व्यवहारे तु यथाविवक्षं भवति। एवं धर्मिणो विशेष्यत्वे शाब्देऽपि, आर्थिकं विशेषणत्वं भवत् न वार्यमित्याह यश्चेति। समानाधिकरणप्रयोगे—निष्कर्षाविवक्षया धर्मशब्दप्रयोगे। विशिष्टत्वेनावस्थितोऽपि—पटः शौक्ल्यविशिष्टतया बोधितोऽपि। अर्थतः इति। अत एव शुक्लः पट इति ज्ञानस्य, पटस्य न शौक्ल्यमिति ज्ञानस्य च प्रतिबन्ध्यप्रतिबन्धकभावः। एकज्ञानेऽपि तुल्यवित्तिवेद्यतयाऽन्यभानमिष्यते। अत एव गामानयेत्यादौ अन्विताभिधानवादिभिः आनयनान्विता गोर्गोपदार्थः, गवान्वितमानयनम् उपसृष्टनीधात्वर्थ इत्याहुः। परं तत्र पटस्य शौक्ल्यव्यावर्तकत्वमार्थिकं न शौक्ल्यविशिष्टपटत्वेन रूपेण, किंतु पटरूपधर्मिमात्रेणेति भावः। ननु पटशब्दस्य शौक्ल्याबोधकत्वात्

अन्यथा अन्तस्तद्धर्मोपदेशादित्यादि अनिरूढप्रायं स्यात् ॥ ननु अनुमान प्रमाणमिच्छन् न धर्मधर्मिभाव बाधितुमर्हति, तस्य हेतुसाध्यधर्माश्रयावश्यभावात्। आह च **धर्मकीर्तिर्हेतुबिन्दौ** —

"पक्षधर्मस्तदंशेन व्याप्तो हेतुस्त्रिधैव स । अविनाभावनियमात् हेत्वाभासा तत परे(तोऽपरे)" इति ॥ अन्येऽपि, "ग्राह्यधर्मस्तदंशेन व्याप्तो हेतु " इति ॥ सत्यम् , काल्पनिकहेतुसाध्यधर्मद्वारा अनुमान प्रवृत्ति , पारम्पर्येण तु स्वलक्षणविश्रान्त्या भाक्तमनुमानप्रामाण्यमिति हि बौद्धाना रहस्यम् । तत्त्वगत्या चतुर्विधानामपि तेषा धर्मधर्मिभाव क्षेप्य । अतस्तद्भङ्गमनूद्य प्रत्याह-**धर्म** इत्यादिना । अयमर्थ —

यस्त्वया कश्चिद्धर्म इष्यते, स निर्धर्मक सधर्मको वा । आद्ये, तस्य शब्दवाच्यत्व न स्यात् ,

---

ठिप्पणी— अनिरूढप्रायम्—अनिर्णीतप्रायमित्यर्थ । हेतुसाध्येति । हेतो साध्यस्य, तयोर्धर्मिणा च अवश्यम्भावादित्यर्थ । अविनाभावनियमादिति । अन्वयव्यतिरेकतदुभयरूपाविनाभावाना हेतुविशेषेषु नियतत्वात् त्रिधेति भाव । ततोऽपरे—व्याप्तादन्ये । ग्राह्यधर्म इति । पक्षधर्मतया ग्राह्यो हेतुरूपधर्म । तदंशेन । अंशशब्दो धर्मवाची । पक्षधर्मेण—साध्येनेत्यर्थ ।

वी— पूर्वश्लोकव्याख्याया "धर्मोपकारशक्तीना भेदे" इति कारिकया धर्मपरम्पराकल्पनेऽनवस्थादोष उक्तस्तत्र विशिष्य न परिहृत । उपरितनश्लोके भविष्यतीति । स इह ज्ञातव्य । दृष्टो-अनुभवे । सत्यामिति शेष । अर्थिनो-अनेकधर्मस्वीकारेण द्रव्यापलापी एकधर्मिस्वीकारेणानेकधर्मापलापी च । अनिरूढेति । बहुषु सूत्रेषु विशिष्य धर्मशब्द प्रयुञ्जानो भगवान् बादरायणो धर्मधर्मिभेदस्थापने नैर्भर्य वहतीति तत्राऽऽदरातिशयात् पुनस्तद्विषय पद्यम् । बौद्धानामपि धर्मधर्मिभेद इष्ट इत्याशङ्क्य तद्धृदयमुद्घाटयति नन्वित्यादिना । हेत्विति । हेतुरूप साध्यरूपश्च धर्मौ तदाश्रयपक्ष सपक्षसापेक्षत्वादनुमानस्य । पक्षेति । पक्षस्य धर्म कश्चित् तदंशेन पक्षधर्मांशेन साध्येन व्याप्तो हेतुर्भवति । स च त्रिधा । त्रैविध्य केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदादिति केचित् । "कार्यस्वभावानुपलब्धिभेदेन" इति अन्ये । बौद्धैस्तादात्म्य तदुत्पत्तिरनुपलब्धिरित्यनुमानत्रैविध्यमुक्तम् । विस्तरोऽत्र बुद्धिसरे, न्यायकुसुमाञ्जलौ, तद्व्याख्याने चास्मदीये द्रष्टव्य । स्वभाव तादात्म्यम् अय वृक्ष शिंशपात्वादिति । तदुत्पत्त्या कार्यम् , अग्निमान् धूमादिति । अनुपलब्धि , नास्ति घट अनुपलब्धेरिति । इय बहुविधा । त्रिधेति न्यूनाधिकव्यवच्छेदे कारणमाह अविनाभावनियमादिति। अयञ्च नियम हेतो पक्षसत्त्व-सपक्षसत्त्व विपक्षासत्त्वाख्यरूपत्रयसद्भावसिद्ध । तदेकरूपहान्या तत —त्रिभ्य परे-अन्ये हेत्वाभासा भवन्तीति कारिकार्थ । न्यायकौमुदीकाराद्युक्त्याऽपि धर्मसिद्धिमाह अन्येऽपीति । ग्राह्यधर्म इति । ग्राह्य —साध्यवत्त्वेन ग्राह्य पक्ष तद्धर्म इत्यर्थ । ग्राह्यपदमत्र साध्यार्थक प्रसिद्धम् । साध्य च धर्मविशिष्ट धर्मि प्राचाम् । अर्धाङ्गीकारेण समाधत्ते सत्यमिति । पारम्पर्येणेति । विशिष्टविषयकज्ञानसामान्यस्य विकल्परूपत्वात् भ्रान्तत्वमिति, कल्पनापोढमभ्रान्त निर्विकल्पक स्वलक्षणापरपर्यायस्वरूपमात्रग्राहीत्येव मानमिति विशिष्टवस्तु न सिद्ध्यतीति सर्वबौद्धाशय इति भाव । तेषा बौद्धानाम् । ते हि चतुर्विधा प्रसिद्धा । अनूद्येति । पूर्वार्धेन तत्कृताक्षेपानुवाद तद्भञ्जनमुत्तरार्धेन ।

श्लोके भवितेति तृजन्तम् । घटे रूपाद्यात्मकधर्मस्वीकारे, तस्य निर्धर्मकत्वे अभिलापादियोग्यत्व-शब्दवाच्यत्वमनुमानादिग्राह्यत्वञ्च न स्यात् । 'इदमित्थमिति हि सर्वा प्रतीतिरुपजायते' इति भाष्यम् । सर्वासा धिया स्वरूपा शब्दानाञ्च विशिष्टपरत्वम् । शब्दस्य तु विशेषेणेति च भाष्यम् । आप्तत्वधि

अविशिष्टस्य व्युत्पत्त्याद्यगोचरत्वात् । सर्वधीशब्दानां विशिष्टविषयत्वं च भवतां भाष्यादिपूक्तम् । द्वितीये तु, येन धर्मेण धर्मः सधर्मकः सोऽपि पूर्ववत् धर्मान्तरेण धर्मी स्यादित्यपरापरापेक्षायामनवस्था ; द्वित्रादिपर्वमात्रे विश्रम इति व्यवस्थाऽभावात् । धर्मत्वं च धर्माणां भावः । अतस्तस्यापि धर्मत्वं वाच्यम् । न चैतत् तस्यात्मैव, आत्माश्रयात् । न चान्यत् ; अनवस्थानादेवेति चेत्—

तन्न ; सर्वेषां धर्माणां निर्धर्मकत्वानङ्गीकारात् । **कश्चित् धर्मोऽपि धर्मी स्फुटं**-स्पष्टम् । स्फुटदृष्टं हि नापह्नोतव्यम् । त्वयाऽपि हेतुसाध्यादिधर्माणां पक्षधर्मत्वादिधर्माः स्वीकार्याः ; अन्यथाऽनुमानासिद्धौ क्षणभङ्गादिसाधनायोगात् । **अतिमथने**-अत्यन्तचर्चायाम् । [1]यद्वा **स्फुटमतिमथने**-विशदबुद्ध्या सावधानं विमर्शे सतीत्यर्थः। **स्वान्यनिर्वाहकत्वं**-स्वपरव्यवहारादिव्यवस्थापकत्वम् । यत्र ह्यनवस्थाभयात् धर्मान्तरं नेष्यते, तत्र निमित्तान्तरनिरपेक्षौ तद्धीव्यवहारौ । यथा **गो**शब्दस्य व्यक्तिवृत्तौ इत्थंभावभूतं गोत्वं निमित्तम् ; गोत्वे तु न निमित्तान्तरमपेक्षते, आनन्त्यव्यभिचाररूपानुपपत्त्यभावात् । एवं शुक्लादिशब्देष्वपि।

---

ஸெலா— अविशिष्टस्येति । प्रवृत्तिनिमित्ताविशिष्टस्य शक्तिग्रहणाद्यगोचरत्वादित्यर्थः । आदिशब्देन पदार्थज्ञानवाक्यार्थज्ञानादिकं गृह्यते ।

आनन्त्यव्यभिचारेति । यथा गोशब्दस्य प्रत्येकं शक्तिग्रहे व्यक्तीनामानन्त्येन शक्तिग्रहो न सम्भवति, एकस्यां व्यक्तौ शक्तिग्रहे व्यक्त्यन्तरे व्यभिचारः (बुद्धिशब्दयोरभावप्रसङ्ग इत्यर्थः)—तथा गोत्वस्य एकत्वेन आनन्त्यव्यभिचारयोरभावात् प्रवृत्तिनिमित्तमन्तरेणापि शक्तिग्रहो सम्भवतीति भावः । शुक्लादौ साधारणधर्मः [रूपत्वादिकं?] एकत्वादौ गणनाप्रयोजकत्वादिकं

ஷீ— करणे चास्माभिः विशिष्टे शक्तिः स्थापिता । द्वितीयपक्षे आह धर्मेणेति । धर्मेऽपि धर्मस्वीकारे इत्यर्थः । अपरापरापेक्षायाम् । तस्यापि कश्चित् तस्यापीत्युपर्युपरि धर्मकल्पनायाम् । व्यवस्थाभावात्—नियामकाभावात् । रूपत्वरसत्वादिविशेषधर्मवत् धर्मत्वरूपसामान्यधर्ममादायाप्यनवस्थामाह धर्मत्वञ्चेति । धर्माणां भावः—सर्वधर्मगतो धर्मः । एतत् धर्मत्वगतधर्मत्वं तस्यात्मैव—आश्रयभूतधर्मत्वस्वरूपमेवेति न ; स्वस्य स्वाश्रयत्वायोगात् । न हि सुशिक्षितोऽपि नटवटुः स्वस्कन्धमारुह्य नृत्यति । अतः प्रथमधर्म एव न स्वीकार्य इति शंका । श्लोके अनवस्थेत्यनुक्त्या अव्यवस्थेति प्रयोगः प्रथमधर्ममात्रं वा कतिपयधर्मपरम्परां वा स्वीकृत्य तदुपरि धर्मनिषेधः सिद्धान्तीष्टो न युक्तः, व्यवस्थापकाभावादिति ज्ञापनाय । तत्खण्डनहेतुमुत्तरार्धेनाह । तद्विवरणं सर्वेषामित्यादिना । केचित् धर्माः ज्ञानालोकादयः गुणमात्रग्राहकेन्द्रियग्राह्यरसगन्धशब्दादयश्च धर्मिवत् धर्मवन्तो भवन्ति । स्फुटम्—अनुभवसिद्धम् । अतिमथने—तं धर्ममतिक्रम्य विचारे अन्यस्य धर्मस्य स्वपरनिर्वाहकत्वेष्ट्या धर्मान्तरप्रतिषेधः। ननु शब्दसामान्यस्य विशिष्टार्थपरत्वोक्त्या तद्धर्मवाचकपदस्य विशिष्टवाचकत्वं धर्मान्तरस्वीकारेणैव वक्तव्यमित्यत्राह तन्निष्कर्षेति । तन्निष्कर्षप्रयोगो नाम धर्मविशेष्यकधीहेतुपदप्रयोगः गोत्वं शुक्लत्वमित्यादिः । तत्र गोशब्दाद्यर्थस्य त्वप्रत्ययाद्यर्थेऽन्वयात् धर्म्येव विशेषणतया भासत इति न विशिष्टबोधकत्वभंग इति श्लोकार्थः ।

मतेर्मथनायोगात् स्फुटमिति पदच्छेदः । क्रियाविशेषणम् । दृश्यत इति वा भवतीति वा अध्याहृतक्रियायामन्वयः। निर्वाहकत्वमित्यत्रान्वयो वा । तृतीयातत्पुरुषस्वीकारे त्वाह यद्वेति । स्वान्येति । यथा ज्ञानस्य परप्रकाशकस्य स्वप्रकाशः अनन्याधीनः, यथा रूपस्य द्रव्यादौ चाक्षुषत्वापादकस्य स्वचाक्षुषत्वमनन्याधीनम्, एवं गोत्वादेः ।

कण्ठोक्तेन स्वसंबन्धेन विशिनष्टि । गोत्वं शौक्ल्यमित्यादिपदेष्वपि "तस्य भावस्त्वतलौ" इत्यादिविहित-तद्धिताश्रयवाच्यत्वेन धीस्थ एवार्थो निष्कृष्यमाणः स्वविशेषणनिरूपकतयाऽनुशिष्यते । एवं विशेष्य-स्यैव द्विधा विशेषणयोग इति व्यञ्जनाय **पुनश्शब्दः** ; निष्कर्षप्रयोगेषु विशेषं वा द्योतयति ॥ ९ ॥

(इति धर्मिनिर्धर्मकत्वनियमभंगः)

(धर्मवृत्तिविकल्पभंगः)

**तच्छून्ये तस्य वृत्तिः कथमिव घटते ? तद्विशिष्टे तु वृत्तौ**
**स्वाधारत्वप्रसक्तस्तत इह न गुणो नापि धर्मीत्ययुक्तम् ।**
**तद्वृत्तिर्धर्मिमात्रे, न भवति तत एवास्य तच्छून्यताऽतो**
**नोक्तौ दोषौ, स्वधीवाग्विहतिरितरथा, तद्वदन्येऽपि जल्पाः ॥ १० ॥**

पुनरपि धर्मस्य धर्मिणि वृत्तिं विकल्प्य तदुभयमपह्नुवानं प्रत्याह **तच्छून्य इति** । "योऽयं रूपादिः द्रव्यस्य गुणतयेष्टः, स किं स्वशून्ये वर्तते, स्वविशिष्टे वा, नाद्यः ; व्याघातात् । अन्यथा सर्वेषां सर्वत्र वृत्तिः किं न स्यात् ? खपुष्पादीनामपि कथं निषेधः ॥ योग्यानुपलब्धेरिति चेन्न ; त[द्व]दुपलब्धि-

---

टिप्पणी— द्विधा विशेषणयोग इति । अर्थात् शब्दाच्च द्वेधा विशेषस्य धर्मं प्रति व्यावर्तकत्वयोग इत्यर्थः । विशेषणशब्दो व्यावर्तकत्वधर्मपरः ॥ ९ ॥

तच्छून्य इति । अन्यथा = विरोधाभावे । खपुष्पादीनामपीति । अभावस्थले प्रति-

णी— पटमात्रं व्यावर्तकं स्यात् । गोत्वमित्यादौ गोशब्दस्य विशिष्टपरत्वात् त्वप्रत्ययार्थं स्वं गोत्वं प्रति स्वविशिष्टस्य व्यावर्तकत्वं स्वीकृतं स्यात् । धर्मित्यागे च निर्विशेषणकः प्रत्ययः स्यादित्यत्राह गोत्वमिति । विशिष्टस्यैव शब्दादुपस्थितिः ; व्यावर्तकत्वं तु धर्मोपलक्षितव्यक्तिमात्रस्य । अतो नाव्यावृत्तधीरित्यर्थः । निष्कृष्यमाण इति । धर्मोपलक्षितस्सन्नित्यर्थः । स्वविशेषणनिरूपकतयेति । धर्मं प्रति धर्मिणो विशेषणत्वाय त्वाद्यनुशासनमिति भावः । श्लोके प्रयोगेष्वपीति अपिशब्दः आशंकासूचनेन सविशेषणप्रतीतेस्ताविष्टत्वमसमुच्चायकः ।

पुनश्शब्दकृत्यं किमित्यत्र द्वेधा कृत्यं दर्शयति एवमिति । प्रथमपक्षे पुनरित्यस्य भूय इत्यर्थः ; धर्मस्य प्रकृत्या प्रत्ययेन चोपस्थापनात् । तेन प्रकृत्युपस्थाप्यतादशायां तस्योपलक्षणत्वसूचनम् । द्वितीयपक्षे पुनस्त्वर्थे । धर्मी तु विशेषकः इत्यर्थः । अन्यत्र विशेष्य एव अत्र विशेषको भवति, न धर्मान्तरकल्पनयाऽनवस्थादीति भावः । ननु गोत्वमित्यादौ धर्म्युपस्थापकपदसत्त्वात् तस्य विशेषकत्वं स्यात् । जातिः गुण इत्यादिप्रयोगे कथं तद्विशेषणमिति चेत्—अनेकानुगतधर्मो जातिः, स्वरसप्रतीतौ किञ्चित्प्रकारतया भासमानत्वं गुणत्वमित्यर्थवर्णनात् व्यक्तेर्विशेषणत्वमक्षतमिति ध्येयम् ॥ ९ ॥

श्लोके कथमिवेति । न कथमपीत्यर्थः । धर्मनिष्ठा धर्मिनिरूपिता आधेयता तद्धर्माभावविशिष्ट-तन्निरूपिता वा, तद्धर्मविशिष्टनिरूपिता वा । नाद्यः, व्याघातात् । तत्तदभावयोरेकदा एकत्राभावात् । नान्त्यः । विशिष्टस्याधिकरणत्वे विशेषणस्यापि धर्माधिकरणत्वापत्तेरित्यर्थः । श्लोकस्थस्य दोषौ इत्यस्य स्फुटप्रतिपत्तये व्याख्यायाम्, व्याघात—आत्माश्रयशब्दप्रयोगः । अन्यथेति । तदभाववत्यपि तत्स्वीकार इत्यर्थः । खपुष्पेति । खं पुष्पाभाववदिति कृत्वा किल खपुष्पमत्यन्तासदित्युच्यते । अभाव-

अनुपलब्ध्योरपि विरोधाभावात् । किं च[यदि ?] अनुपलब्धिरभावोपस्थापनेन भावं विरुन्ध्यात्; तदा कथं तच्छून्ये तस्य वृत्तिः ? न द्वितीयः; आत्माश्रयापातात् । विशिष्टं विशेषणविशेष्यतत्संबन्धातिरिक्तं न किंचित्; तस्मिन् प्रमाणाभावात् । न चोक्तेषु त्रिष्वन्यतममात्रम्; तावति विशिष्टधीव्यवहारयोरभावात् । अतः संबन्ध्युभयं विशिष्टशब्दार्थ इति स्यात् । तथाच स्वविशिष्टे वर्तमानो गुणः स्वविशेष्यमिव स्वात्मानमपि स्वाधारीकुर्यात् ॥ किमत्रानिष्टम् ॥ स्वस्य स्वस्मादन्यत्वम् । अभेदे कथमाधाराधेयभावः; प्रतिसंबन्धिभेदाभावात् । न चात्र भिन्नाभिन्नत्वं दृष्टं युष्मदिष्टं वा । एवं वृत्त्यनुपपत्त्या वा गुणगुणिनोरन्यतरपरिशेषः स्यात्, उभयपरित्यागो वा" इति परोक्तमयुक्तम् ।

कथमित्यत्राह— **तद्वृत्तिर्धर्मिमात्र इति** । न वयं तच्छून्ये तद्विशिष्टे वा तस्य वृत्तिं ब्रूमः, अपि तु वस्तुतस्तद्विशिष्टे विशेष्ये । तद्विशिष्टवृत्त्यभावे तच्छून्ये वृत्तिः स्यादेवेति चेत् तत्राह, **न भवति तत एवास्य तच्छून्यतेति** । यत्र यद्वर्तते, तस्य कथं तच्छून्यत्वम् ? न च तद्वति वर्तमानस्य

---

ஸேலவா— योगिवृत्तेर्विरोधाभावात् खपुष्पनिषेधो न सम्भवतीति भावः । तद्वदिति । अभावप्रतियोगिनोरिवेत्यर्थः । उपलब्ध्यनुपल ........रपि विरोधाभावादित्यर्थः । तथा च प्रतियोग्युपलम्भकाल एव विरोधाभावेन अनुपलब्धेरपि विद्यमानत्वात् कथं तस्याः निषेधकत्वमिति भावः । तदेति । प्रतियोगिविरोधिभूताभावोपस्थापनद्वारा अनुपलब्ध्याः प्रतियोगिविरोधाङ्गीकारे इत्यर्थः ।

श्री– विशिष्टऽपि वस्तु भवितुमर्हति चेत्, कथं तदसदिति । विरोधाभावादिति । तद्वदिति पाठे बाह्यवस्तुतदभावयोरिवेत्यर्थः । अभाववत्यपि प्रतियोगिसत्त्वे उपलब्ध्यभाववत्यपि उपलब्धिसंभवात्; अनुपलब्ध्या अभावसाधनेऽपि अभावेन सह पुष्पस्यापि संभवाच्च । भावाभावयोर्मिथोविरोधित्वोक्तौ व्याघातमप्याह किञ्चेति । विरुन्ध्यादित्यत्र यदीत्यर्थसिद्धम् । न द्वितीय इति । स्वविशिष्टे स्ववृत्तिरिति पक्षोऽपि नेत्यर्थः । तस्मिन्निति । त्रितयातिरिक्ते इत्यर्थः । विशिष्टेति । विशिष्टविषयकधियो विशिष्ट इति व्यवहारस्य चेत्यर्थः । पुत्रविशिष्टः पिता आगत इत्युक्तौ संबन्धांशे आगमनक्रियानन्वयात् विशेषणविशेष्यमात्रान्वय इति ज्ञापनाय संबन्ध्युभयमित्युक्तम् । किमत्रेति । अत्र—आधारत्वे । अन्यत्वमिति । अनिष्टमिति शेषः । अन्यत्वमनपेक्ष्यतामित्यत्राह न चात्रेति । गुणगुण्यादिस्थले अभेदवत् भेदस्यापि दृष्टत्वात् भिन्नाभिन्नत्वं कैश्चिदुक्तम् । स्वस्य स्वान्यत्वं तु न दृष्टमिति नेदमिष्टमित्यर्थः । न कुत्रापि भिन्नाभिन्नत्वमिति वादिनामेतदिष्टिर्न भवतीत्याह युष्मदिति । गुणगुण्युभयापलापघट्टे वृत्त्यनुपपत्तिविचारस्य संगतिः श्लोके दर्शिता तत इहेत्यादिना । तदर्थमाह एवमिति । वाकारेण पूर्वश्लोकोक्तधर्मानवस्थाविरहेऽपीति दर्शितम् । इत्ययुक्तमिति मूलं व्याख्याति इति परोक्तमयुक्तमिति । पूर्वपक्षिकृतो द्वेधा विकल्पो न युक्तः; तदभावविशिष्टे वा तद्विशिष्टे वेतिवत् केवलविशेष्ये वा इत्यपि विकल्पनीयम्; तथाच न प्रदत्तावकाश इत्याशयेनाह न वयमिति । धर्मिमात्रे इत्युक्तौ तदभाववति धर्मिणि वा तद्वति धर्मिणि वेति संदेहापाकरणाय तद्विशिष्टे इत्युक्तम् । विशिष्टपदलभ्यं विशेषणत्वमविवक्षितमिति ज्ञापनाय वस्तुत इति पदम् । तदाश्रयो यद् वस्तु तन्मात्रे; न तु तद्विशेषणेपीत्यर्थः । श्लोके न भवति तत एवेति । धर्मिणि सत्त्वादेव तच्छून्यता न भवति । तर्हि स्ववति स्वमस्तीति कस्मान्न प्रयोग इति चेत्—स्ववतीत्यनेनैव स्वस्य तद्वृत्तित्वस्य ज्ञातत्वात् तस्याज्ञाप्यत्वादेव, न तु स्वस्य स्वाधारत्वासंभवात् । विशेषणे विधेयधर्माधारत्वासंभवेऽपि प्रयोगदर्शनात् । यथा रूपवति रस इति । अत एव विशेषणान्वयानियमात् पूर्वपक्षिकृतमापादनमयुक्तमित्याह न चेति । एवं

तस्मिन्नपि वृत्तिरिति नियमः । घटवति भूतले वर्तमानानां गुणादीनां घटेऽपि वृत्तेरदृष्टेः । एवं घटस्यापि । ननु सर्वत्र वृत्तिविकल्पेन विशिष्टं दूषयतः किं निदानम् (निदर्शनम्)? किं क्वचिदपि विशिष्टप्रतीतिरेव नास्ति, सत्यपि वा निष्कारणिका, सकारणाऽपि वा दुर्निरूपकारणा, निरूपितकारणाऽपि वा निर्विषया, सविषयाऽपि वा बाधितविषयेति । नाद्यः, लौकिकपरीक्षकबहिष्कारप्रसङ्गात् । सर्वशून्यवादिनाऽपि हि संवृत्या विशिष्टधीरिष्यते । न द्वितीयः ; कार्यस्य कारणावश्यम्भावात् । तदनभ्युपगमे तु लोकायतावतारात् । इष्यते चाविद्यावासनादि भ्रान्तेरपि निदानं भवद्भिः । अत एव न तृतीयः । नापि चतुर्थः, स्वपरलोकव्यवहारविरोधादेव । कथं किलासौ विशिष्टप्रतीतिः, कथं च निर्विषया ? न पञ्चमः ; अद्यापि बाधस्याशामोदकायमानत्वात् । विकल्पप्रामाण्यं च वक्ष्यते । अतो यथादर्शनं, 'क्वचित् किंचिद्वर्तते, न स्वस्मिन् इति व्यवस्थिते त्वदुक्तौ व्याघातात्माश्रयदोषौ न स्त इत्याह- **अतो नोक्तौ दोषाविति** । अन्यथाऽनिष्टमाह-**स्वधीवाग्विहतिरिति** । स्वधीविहतिः स्ववाग्वि-

---

[illegible]– आशामोदकेति । आशामात्रफलकमोदकप्राप्तिवञ्चनावचनसदृशत्वादित्यर्थः । विकल्पेति । विकल्पः सविकल्पव्यवहारप्रवृत्तिः ।

श्री– घटस्यापीति । एवकारार्थनैर्भर्येण, घटशून्ये भूतले घटो न भवतीति ज्ञापनाय घटवत्येव घट इत्युक्तौ घटेपि घटोऽस्तीत्युक्तं न भवतीत्यर्थः । श्लोके 'अतो नोक्तौ दोषौ' इत्युपसंहारो नापेक्षितः, स्पष्टत्वादिति मनसिकृत्य, तत् वादिहृदयभेदनार्थमित्याशयेन वादिनमाक्षिपति नन्वित्यादिना । यदि क्वचित् कस्यचित् वृत्तिं स्वीकृत्य अन्यत्र तदयोगं ब्रूयात्, लोकमर्यादानुलङ्घी स्यात्, सर्वत्र धर्मधर्मिवृत्तिनिषेधात्तु लोकबाह्यत्वमेवेति भावः । विशिष्टवस्तुसिद्धौ विकल्पप्रामाण्यं स्यादिति, निर्विकल्पकमात्रप्रामाण्यसमर्थनाय अयमस्य वृत्तिदूषणसंरम्भ इति हृदयोद्घाटनमत्राभिमतम् । किमिति । विषयस्य ज्ञानाधीनसिद्धिकत्वात् ज्ञाने सति विषयापलापो न भवति । सत्यपि ज्ञाने तस्याप्रामाण्यनिश्चयेऽपि वस्तुसिद्धिरेव । तत्र किमत्रेति प्रश्नः । तत्राप्रामाण्यपक्षप्रपञ्चनं सत्यपीत्यादिना । निष्कारणिका प्रतीतिः स्वाप्नप्रत्यक्षे ; इन्द्रियाभावात् । जागरे शुक्तिरजतभ्रमे दुर्निरूपः इन्द्रियसंनिकर्षः रजतत्वे । गिरिरग्निमान् धूमादित्यनुमाननिरूपणेऽपि काञ्चनमयाग्निमानित्यनुमितौ *विषयाभावः । गिरिरधोदेशावच्छिन्नोऽग्निमानित्यनुमितौ विषयबाध इत्येवमूह्यम् ।*

परीक्षकेति । 'लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यम्' तत् अप्रतिषेध्यमिति गौतमः। त्वमपि परीक्षायां प्रवृत्तः धर्मस्य स्वशून्ये वृत्तिर्वा स्वविशिष्टे वृत्तिर्वेति विकल्पयन् स्वशून्यपदेन स्वाभावरूपधर्माश्रयं तद्वृत्तिरिति वृत्तिरूपधर्माश्रयं धर्मम् अन्यच्च व्यवहरसि । अतः कथं विशिष्टप्रतीत्यभाव इत्यर्थः। संवृत्या—अद्वैतिसंमताविद्यास्थानापन्नया । कार्यस्येति । कार्यत्वानिष्टौ प्रतीतेरनादित्वनित्यत्वापत्तिः । तदनभ्युपगमे—कार्यकारणभावं कृत्वाप्यनभ्युपगम्य स्वभावत एव सर्वम्, अकस्मादेव सर्वमिति न्यायकुसुमाञ्जलिप्रथमस्तबकप्रथमदूषितपक्षेऽत्रापि वक्ष्यमाणे । व्याघातमाह कथमिति । आशामोदकः—मनोरथमात्रसिद्धो भक्ष्यविशेषः । तस्य भोज्यतृप्तिहेतुत्वादिकं हि न भवति । ननु निर्विकल्पातिरिक्तस्य विकल्पाख्यस्य ज्ञानस्य सर्वस्याप्रमाणत्वात् विशिष्टासिद्धेरयं वृत्तिविकल्पोऽप्युपष्टम्भक इत्यत्राह विकल्पेति । निर्विकल्पकमेव नेति च वक्ष्यते । क्वचित्—स्वान्यस्मिन् । व्यवस्थित इति । सतीति शेषः । स्वधीवागिति । इदं लौकिकपरीक्षकेत्यत्र विवृतम् । प्रत्येक-

इति स्वधीवाग्विहतिरिति प्रत्येकसमुदायपर योऽयम् । कथं तत्रापि विशिष्टधीविरहे तद्विषयव्याहार व्यवहारौ उदाहरणोपनयौ च वस्तुतस्तद्धर्मविशिष्टविषयौ ? 'बुद्धिस्स्वप्रकाशा', 'अभिन्नदेशकाल स्वलक्षणम्' 'कल्पनापोढमभ्रान्तं प्रत्यक्षम्,' 'प्रतिवादिवाक्यमसाधकम्,' 'विशिष्ट नास्ति' इत्यपि विशिष्ट(नास्तीत्य विशिष्ट)मात्थ । तच्च विशिष्टविषयस्वधीविरुद्धमिति ।

ननु सन्त्यन्येऽपि धर्मधर्मिभावभञ्जकाः परेषा प्रसङ्गाः । ते कथमुद्धार्या इत्यत्राह—तद्वदन्येऽपि

---

लाला— विशिष्टधीविरह इति । विशिष्टाभिलपनस्य प्रवृत्तेश्च उदाहरणोपनययोश्च विशिष्टधीजन्यत्वात् कारणाभावे कार्यं न स्यादित्यर्थः । "त्रीन् उदाहरणान्तान् वा यद्वोदाहरणादिकान् । मीमांसका , सौगतास्तु सोपनीतिमुदाहृतिम्" इत्युक्तेः वाक्यद्वयस्यैव बाह्यैरङ्गीकृतत्वात् अवयवद्वयमुपात्तम् । पक्षदृष्टान्तयोः साध्यसाधनवैशिष्ट्यस्य सत्यत्वे स्वरूपासिद्धिः, बाधः, दृष्टान्ते साध्यसाधनवैकल्यं च स्यादिति दूषणव्यञ्जनाय वस्तुत इत्युक्तम् । ननु घटादावेव बाह्यविषये वृत्तिविकल्पेन धर्मधर्मिभावो मया निषिध्यते, न तु 'बुद्धिः स्वप्रकाशा' इत्यादावित्यत्राह—विशिष्ट नास्तीत्यविशिष्टमात्थेति । अविशिष्टम् = विषयविशेषरहितम्, सार्वत्रिकमित्यर्थः । 'शुक्लः पटः' इत्यादिवाचा, उदाहरणोपनयाभ्यां, बुद्धिः स्वप्रकाशेत्यादिवाग्भिश्च विशिष्ट नास्तीति वाचो विरोधः । तासां च तया विरोधः । बुद्धिः स्वप्रकाशेत्यादिबुद्धीनां विशिष्ट नास्तीति बुद्धेश्च परस्पर विरोध इति भावः । तच्चेति । अविशेषेण विशिष्टं नास्तीति वचनमित्यर्थः ।

श्री- समुदायपरम्—प्रत्येकपरं समुदायपरञ्चेत्यर्थः । प्रतिनियत एकः प्रत्येकः ; पर्यैक इति यावत् । परस्य धीरस्तीति कथ ज्ञायते, येन तद्विहतिरुद्भाव्येतेत्यत्राह कथमिति । कथमित्यस्य विशिष्टविषयो इत्यन्तेऽन्वयो वा व्याहारावित्येतन्मात्रेऽन्वयो वा । व्याहारः-उक्ति । व्यवहारः-कायिकव्यापार । वाग्विहतिमाह उदाहरणेति । पञ्चावयवन्यायस्थाने मीमांसकैस्त्रिकोक्तिवत् एतदवयवद्वयमेव पर्याप्तमिति बौद्धैः कथनात् तावन्मात्रोक्तिः । उदाहरण यो यो धूमवान् सोऽग्निमान्, यथा-महानसमिति , उपनयः—अग्निव्याप्यधूमवान् अद्रिरिति । ननु धियमन्तरा वाक्प्रयोगात् वाग्विहतिस्थले धीविहतेरपि स्थिततया केवलवाग्विहत्युदाहरणमसंभवीति चेन्न—यत्र केनचित् बालादिवत् दूषणवाक्यार्थमबुध्वैव परोक्तदूषणानुवादमात्र क्रियते, तत्र वाग्विहतिः दूषणवाक्यकर्तृगतधीविहतिसहिताऽपि नानुवदितृगतधीविहतियुता , अनुवदितुरर्थज्ञानाभावात् ॥ अथ प्रतिज्ञादिरूपवाक्येऽपि धीवाग्विरोध दर्शयति बुद्धिरिति । तार्किकादिनिरसनाय वाक्यप्रयोग आद्य । अभिन्नेति । बौद्धाङ्गीकृत स्वलक्षणम् । लक्ष्यते इति क्षणिकतत्तद्व्यक्ति स्वलक्षणम् । संघातरूपो घटादिरनेकप्रदेशसंबन्धी । संततिरूपश्च स एवानेककालसंबन्धी । तस्मात् स भिन्नदेशकालः । संहतस्य घटादेर्विकल्पविषयत्व तदिष्टम् । निर्विकल्पविषय एव स्वलक्षणम् । तस्मात् अभिन्नदेशकाल यत् तत् स्वलक्षणमित्युच्यते । इदमेव न्यायबिन्दुभिमतम् । कल्पनेत्यादि निर्विकल्पकलक्षणम् । कल्प्यमानाकारविषयकत्वं कल्पनापोढत्वम् । भ्रमभिन्नत्वमभ्रान्तत्वम् । कल्पनापोढपदेन अनुमित्यादिरूपसर्वसविकल्पकव्यावृत्तिः । विशेष्यविशेषणाद्यविषयकत्वेऽपि एकमात्रविषयकत्वेऽपि तस्यैकस्यापि मिथ्यात्वं नेष्यत इति सूच्यते अभ्रान्तपदेन । विशिष्टमात्थेत्यन्तै वाग्विहतिरुक्ता । बुद्धि स्वप्रकाशेत्यादिवत् विशिष्ट नास्तीति वाक्यादपि विशिष्टवस्तुप्रतियोगिकाभावस्य कचिद्धर्मिणि बोधादिति भाव । अविशिष्टमात्थेति पाठ आदृत क्वचिद् व्याख्याने । अत्र धीविरोधोऽपीत्याह तच्चेति । तद्वदिति मूलमवतारयति ननु सन्तीति ।

जल्पा इति । अन्येऽपि नित्यसमादिरूपाः शुष्कप्रलापाः तद्वत् निरस्तवाक्यैः तुल्यं वर्तन्ते । उत्थान-परिहारप्रकारभेदेऽपि स्वव्याघातादिदोषाविशेषादित्यर्थः ।

श्लो. घटकुड्यवदन्यत्वेऽनन्यत्वे तु स्वरूपवत् । न गुणस्य गुणत्वं स्यादित्यसत् स्वोक्तिबाधतः ॥

दूष्यादन्यदनन्यद्वा दूषणं न तु दूषणम् । गर्दभादिवदन्यत्वेऽनन्यत्वे दूषणीयवत् ॥

एवं संबद्धत्वासंबद्धत्व-समानकालत्वासमानकालत्व-युगपद्ग्राह्यत्वायुगपद्ग्राह्यत्वादिविकल्पस्य बाधास्तदुद्धाराश्च विशुद्धबुद्धिभिरवधातव्याः, दूष्येणापि संबन्धादिविकल्पदोषसाम्यादिति ॥ १० ॥

(इति धर्मवृत्तिविकल्पभंगेन धर्मधर्मिभावः)

---

आनन्द— नित्येति । आदिशब्देन कार्यसमो गृह्यते । विवक्षितस्य कस्यचित् विशेषणधर्मस्य तद्रूपत्वं न वेति विकल्प्य उभयत्राप्यनुपपत्त्यभिमानेन धर्मिणस्तद्विशिष्टत्वखण्डनं नित्यसमः । पक्ष-हेतुदृष्टान्तानां अन्यतमासिद्धिमुद्भाव्य तत्साधकत्वेन स्वयमेवोत्प्रेक्ष्य यत्किञ्चिदभिधाय स्वोत्प्रेक्षित-दूषणेन वादिसाधनभङ्गोपपादनं कार्यसमम् । शिष्यशिक्षार्थं काञ्चनजातिं प्रदर्श्य, तद्दूषणप्रकार-मप्याह—घटकुड्यवदिति ॥ १० ॥

श्री— नित्यसमेति । प्रतिवादिनि उद्भाव्यमानाः दोषाः छलं जातिः निग्रहस्थानं हेत्वाभास इति न्यायदर्शनदर्शिताश्चत्वारः । तत्र जातिरूपेषु दोषेषु नित्यसमादिभेदाः । जातिर्नाम स्वव्याघातकत्वम् । लोके सौसादृश्यं हि जातिरित्युच्यते । वादिप्रतिषेधरूपं प्रतिवादिन उत्तरं परप्रतिघाततुल्यं स्वप्रतिषेधमपि कुर्यादिति साम्यसद्भावात् स्वव्याघातकत्वम् । इदमेव सर्वजाति-विशेषनामसु अन्ते समशब्दप्रयोगनिमित्तम् । तत्र जातिरूपविशेष्यविवक्षया समेति स्त्रीलिंगवत् तत्तद्विशेष्यवाचकपदानुसारेण यथायथं समशब्दप्रयोगोऽपि । अत्र, 'क्वचित् साहचर्यदर्शन-मात्रेण व्यापकापादनं नित्यसमः' इति आ. दा. वाक्यं बहुसाधारणम् । अन्यव्याख्याऽप्यस्पष्टा । अत एवमर्थः। "नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः" (५. १. ३५) इति न्यायदर्शनम् । तद्भाष्याद्दतार्थच्छाययाऽर्थः प्रकृतेऽपि संभवति । तदेवम्—धर्मिणि धर्मस्य वृत्तिर्नित्या, अनित्या वा । आद्ये, वृत्तेर्नित्यत्वे धर्मधर्मिणोरपि नित्यत्वापत्तिः । तदनित्यत्वे, वृत्तिरनित्यतया यदा न, तदा धर्मिणो निर्धर्मकत्वमिति । एतदुद्धारस्तु इदं—सधर्मकत्वस्य दूषणं नित्यमनित्यं वा । नित्यत्वे दूष्यनित्यत्वमन्तरा दूषणनित्यत्वायोगात् दूष्यं सधर्मकत्वं स्थिरं स्यात् । दूषणानित्यत्वे च दूषणा-भावदशायां सधर्मकत्वं सिद्धमिति । अतोऽयं जल्पः एवं नित्यसमः ।

आदिना अन्यादृशं साधर्म्यादिना प्रत्यवस्थानं ग्राह्यम् । यथा धर्मिणि या धर्मस्य वृत्तिः—आधेयता, तस्या अपि धर्मेण सह किञ्चित्साजात्यात् धर्मिनिष्ठता स्यात् । न हि वृत्त्याश्रयत्वं धर्मिणो युक्तम् । तथासति धर्मिणो धर्मता स्यादिति । एतदुद्धारस्तु—वृत्तिर्न धर्मिनिष्ठा । तत्र धर्मिणा सह साजात्यस्यापि सुवचत्वादित्येवम् । आदिपदग्राह्यं कारिकयाऽपि दर्शयिष्यति ।

तद्वदित्यस्य, 'तेन तुल्यं क्रियाचेद्वतिः' इति क्रियासापेक्षत्वात् तथोपपादयति तुल्यं वर्तन्त इति । तुल्यतामुपपादयति उत्थानेति । उत्थानभेदेपि—मुखभेदेन पूर्वपक्षकरणेऽपि । घटेत्यादि । गुणस्य-धर्मस्य गुणत्वं नेति प्रतिज्ञा । कुत इति चेत्-धर्मः धर्मिणोऽन्यो वा अनन्यो वा । आद्ये, नायं धर्मः तदन्यत्वात् धर्मधर्मिभावानापन्नघटकुड्यवत् । कुड्यं भित्तिः । अन्त्ये, नायं धर्मः अनन्यत्वात् धर्मिस्वरूपवदिति । अत्र व्याघातं दर्शयति दूष्यादिति । 'दूषणवाक्यं दूष्यादन्यद्वा अनन्यद्वा । उभयथापि न दूषणम् । अन्यत्वात् गर्दभादिवत् । अनन्यत्वात् दूष्यस्वरूपवत् इत्युक्तिसंभवादित्यर्थः । अवधातव्या इति ।

(प्रकृतिमहदाद्यागमिकता सृष्टिप्रकारश्च)

**स्वच्छन्देनागमेन प्रकृतिमहदहंकारमात्राक्षसिद्धिः**
**नाध्यक्षेणाप्रतीतेः, न पुनरनुमया व्याप्तिलिङ्गाद्यसिद्धेः ।**
**सत्त्वाद्युन्मेषभिन्नान्महत इह तथा स्यादहङ्कारभेदः**
**प्राच्यादक्षाणि मात्राः प्रजनयति परो मध्यमस्तूभयार्थः ॥ ११ ॥**

एवं द्रव्याद्रव्ये सामान्यतः प्रसाध्य द्रव्येषु प्रथमोद्दिष्टं त्रिगुणमादौ परीक्ष्यते ।

तत्र कश्चिदाह - धीमन्निदर्शनतया प्रसिद्धः सुरगुरुर्लोकायतं शास्त्रमारभ्य पृथिव्यादीनि चत्वार्येव तत्त्वान्याह । अधिकानि तु तावन्मात्रविभागोद्देशादपोढानि ; अतिरिक्तचेतननिषेधाच्चेति ॥

अत्र किं लोकायतसूत्राणि स्वयंप्रमाणतयोपादीयन्ते, तदुपस्थापकतया वा ? नाद्यः ; असम्मतेः । गुरूक्तेश्च विरोचनोपदेशवत् असुरमोहनार्थत्वात् । न द्वितीय ; उक्तेषु विवादाभावात् । अधिकानां निषेधस्य निष्प्रमाणकत्वात् ॥

---

[illegible]– स्वच्छन्देति । विरोचनोपदेशवदिति । श्रूयते हि विरोचनोपदेशः छन्दोग्येऽष्टमप्रपाठके ।
[illegible]– दूषणं न दूषणं दूष्यासंबद्धत्वात् दूष्यवत्, दूष्यसंबद्धत्वात् दूष्यार्थवक्तृपुरुषवदित्येवं भाव्यम् ॥१०

तर्कैः पदार्थसाधकानां प्रतितर्कैः पराहतिसंभवेऽपि प्रत्यक्षप्रमाणतस्तत्साधकानां चार्वाकाणां पराहत्ययोगात् तन्मतमुपेक्ष्य तदनिष्टद्रव्यसाधनमशक्यमित्याशयमपाकर्तुं चार्वाकमतमाह अत्र कश्चिदिति । धीमन्निदर्शनतयेति । यदाह दशरथः श्रीरामस्तवे, "यमशक्रसमो वीर्ये बृहस्पतिसमो मतौ" (अ. १. ३८) इति । वाग्मित्वेऽपि निदर्शनमयम्, "उत्तरोत्तरयुक्तौ च वक्ता वाचस्पतिर्यथा" इति । अन्यथा स कथं सुराणां गुरुर्भवेत् । लोकायतमिति तत्कृतं नाम ; "अथ लोकायतं शास्त्रम्" इति तत्सूत्रोपक्रमात् । लोकेष्वायतं व्याप्तम् ॥ अपूर्वार्थोपदेशाभावे कथं शास्त्रतेति चेत्—प्रत्यक्षदृष्टमात्रेण सर्वनिर्वाहो न भवतीति मतान्तरक्षुब्धजनप्रतिबोधनात् तदुपपत्तेः । अपोढानि । विशिष्य तन्निषेधाकरणेऽपि निषिद्धान्येवेत्यर्थः । चेतननिषेधाच्चेति । "तेभ्यश्चैतन्यं किण्वादिभ्यो मदशक्तिवत्" इति सुराबीजाङ्कुरभूतकिण्वादौ मदशक्तेरिव देहाकारपरिणतेषु भूतेष्वेव चैतन्यस्य स्थापनादिति भावः । "परलोकस्याभावात् परलोकिनोऽभाव.' इत्यपि सूत्रं तत्त्वसंग्रहपञ्जिकोदाहृतमित्याहु· ।

अत्र प्रत्याह अत्रेत्यादिना । स्वय प्रमाणतया—वेदवत् प्रमाणान्तरनिरपेक्षप्रमाणतया । असंमतेरिति । भवतैव सुरगुरुबुद्धिमूलकत्वोक्तेरिति भावः । सा च बुद्धिर्जीवबुद्धित्वात् मानान्तरमूलिकैव । अथाप्याप्तप्रामाण्यात् तत्प्रामाण्यमस्त्वित्यत्राह गुर्विति । साक्षात्कृततत्त्वो दयाप्रेरितो यथार्थवक्ता लोके आप्तो भवति । अयमत्र विप्रलिप्साप्रेरितत्वान्न यथार्थवक्तेत्याशयः । विरोचनेति । छान्दोग्ये प्रजापतिरिन्द्रविरोचनयोरुपदेष्टा । प्रजापतिरयं ब्रह्मा ; अस्तु वाऽन्यः । सर्वथा असुरविषये मोहनत्वमाचार्येऽपि दृष्टम् । ननु विरोचनं प्रति कृत एवोपदेशः सत्य इत्ययं पूर्वपक्षी ब्रूयात् । पुनःपुनरागतत्वात्तु इन्द्रः पश्चात् किञ्चिदुक्त्वा प्रतारितः । अत एव 'असुराणां ह्येषोपनिषत् इत्यपि तत्प्रशंसनमेवेति चेन्न—"अपहतपाप्मा विजरः" इत्याद्युपक्रमविरोधितया तथा तद्घट्टतात्पर्यवर्णनायोगात् । सुरगुरुत्वादेवानेनासुरमोहनार्थमेवं शास्त्रनिर्माणञ्च संभाव्यते । न द्वितीय इति । भूतचतुष्ट्यातिरिक्तवस्तुनिषेधांशे स्वयंप्रमाणभूतकिञ्चिद्वेदोपस्थापकत्वं तत्र न भवतीति

अनुपलब्ध्या निषेध इति चेन्न ; योग्यानुपलब्धेरभावात् । इतरस्य निषेधकत्वायोगात् । उपलब्ध्या चेच्चतुर्णामुपादानम्, आकाशेन किमपराद्धम् ? अस्ति ह्यासंसारं तदुपलम्भः । न चात्रास्पर्शत्वादिभिर्बाधः ; अरूपत्वादिना वाय्वादेरपि निह्नवप्रसङ्गात् । शेषं च वक्ष्यामः । अथोपलम्भबलादस्त्वाकाशमपीति चेत्, तथैव भिन्नाभिन्नभवानुभूतार्थप्रतिसन्धाताऽप्यभ्युपगन्तव्यः ॥

अस्तु तर्हि षड्धातुवादः, अध्वर्युभिस्तथाऽध्ययनादिति चेत्, तर्हि उद्गातृभिश्चतुर्णामध्ययनात्

---

பூ— स्वच्छन्देनेति । शेषं च वक्ष्याम इति । आकाशसाधकमुपपत्तिजातं वक्ष्याम इत्यर्थः । வெள்ள— तथैवेति । अयमनुभूता[र्थः] भिन्नः, अयं तु तस्मादभिन्नः इति भिन्नत्वेन अभिन्नत्वेन च अनुभूतार्थप्रतिसन्धातेत्यर्थः । पदा[र्थ] (भवशब्दः ?) प्रवृत्तिनिवृत्तिवाची । षड्धातुवाद इत्यादि । धातवो महाभूतानि । "श्लेष्मादि [चर्मा]दि [र]कादि महाभूतानि तद्गुणाः इन्द्रियाण्यव्यक्तविकृतिः शब्दयोनिश्च धातवः ॥" इति निघण्टुः । अध्वर्यवः—यजुश्शाखाध्यायिनः ; तैः "आत्मन आकाशः सम्भूतः, आकाशाद् वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी" इत्यध्ययनादित्यर्थः । अत्र வீ— भावः । योग्येति । सूक्ष्म–व्यवहित–तिमिरमध्यगतपदार्था अपि हि अपलप्या भवेयुः अनुपलब्धिमात्रस्य प्रमाणत्वे । अतः यदि स्यादुपलभ्येत इति प्रसक्तिमदनुपलब्धिरेव वक्तव्येति भावः । इतरस्येति सामान्यतो नपुंसकनिर्देशः । [इतरस्या]योग्यानुपलब्धेरित्यर्थः । उपलब्धमपि चार्वाकेणापलपितमित्याह उपेति । आसंसारम् । देशतः कालतश्च लोकायतं तत् । अत्र पक्षी पतति, नीलं नभः इति प्रत्यक्षादिति भावः । तार्किकाः बाह्यप्रत्यक्षसामान्ये रूपं कारणमित्यालोच्य, तथासति वायुतत्स्पर्शप्रत्यक्षं न स्यादिति विमृश्य, स्पर्शः सर्वत्र कारणमिति कल्पयन्तः गगने स्पर्शाभावादप्रत्यक्षतां मन्यन्ते ; नीलं नभ इति च भ्रम इति । तदनुसारिशंकां क्षिपति न चेति । आदिना आकाशमप्रत्यक्षम्, व्यापित्वात् अमूर्तत्वात् अनवयवत्वादित्यादिग्रहः । निह्नवेति । उपलम्भविरोधे सह्ये रूपमेव प्रत्यक्षसामान्यकारणं स्वीकृत्य तदभावात् वायुरप्रत्यक्ष इति किं नोच्यते । तत्प्रत्यक्षत्वेष्टौ, स्पर्शमप्युपेक्ष्य प्रत्यक्षसामान्ये शब्दः कारणमिति वा, इन्द्रियग्राह्यगुणत्वं कारणमिति वा प्रकल्प्याऽऽकाशप्रत्यक्षत्वं किं नेष्यत इति भावः । आदिपदग्राह्यहेत्वादिविषये वक्तव्यं प्रति आह शेषञ्चेति । भूतपञ्चकसंमन्तृचार्वाकमतेन शंकते अथेति । उपलम्भबलादेवात्माऽप्यन्यः सिध्यतीत्याह तथैवेति । अहमिति केवलप्रत्यक्षस्य देहविषयकत्वेनापि निर्वाहसंभवात् प्रत्यभिज्ञाप्रत्यक्षग्रहणम् । भिन्नभवे–पूर्वजन्मनि अनुभूतस्यार्थस्य स्तन्यपानादेरादौ इष्टसाधनत्वस्मरणं शिशुगतम्, अभिन्ने भवे—अत्रैव जन्मनि बाल्यादावनुभूतस्य यौवनादौ प्रतिसंधानम् । इदञ्चानुभवप्रतिसंधानयोरेकनिष्ठताया आवश्यकतया अनेकजन्मानुवृत्तं बालयुवस्थविरशरीरादिभिन्नमात्मानं गोचरयतीति अयमेवाहंशब्दार्थ इति भावः ।

षड्धातुवाद इति । नाम्नां धातुजत्वात् शब्दयोनिर्धातुः । तत्रैव कारणमात्रेऽपि धातुशब्दः प्रयुज्यते । तदत्र भूतपञ्चकम् आत्मा च षड्धातवः । यद्यपि आत्मन आकाश इत्यत्र आत्मशब्दः प्रकरणात् ब्रह्मपरः, न जीवपरः । अथापि शंकिता संप्रति जीवात्मन एव प्रतिपन्नत्वात् तद्वाक्यमेतत्परमेव मन्यते । सिद्धान्तेऽपि सूक्ष्मचिदचिद्विशिष्टस्यैवात्मपदार्थत्वात् विज्ञानमयान्तर्यामित्वस्य ब्रह्मणीह वक्ष्यमाणतया च जीवात्मनोऽपि ग्राह्यत्वसिद्धेरत्र तच्छोधनोपेक्षा ॥ प्रमाणान्तरेणाधिकार्थसिद्धौ इद वचनं तस्याप्युपलक्षकमेव वाच्यम्, न नु परिसंख्यापकमितीदं पूर्वपक्षिमुखादेवाऽऽनेतुं वाक्यान्तरं दर्शयन् आपादयति तर्हीति । चतुरिति । सत् तेजः । आपः अन्नञ्चेति

चतुर्धातुवादः स्यात्॥ अनुक्तमविरुद्धमन्यतो ग्राह्यमिति चेत्; समानम्; भूयसां च प्राबल्यादुपबृंहणप्राचुर्याच्च। न चात्र मिथो विरोधान्निरर्थकार्थवादमालता, सम्यङ्न्यायानुग्रहमात्रेण बलाबलदृष्ट्या विरोधशान्तेः।

केचित्तु प्रकृत्यादिशब्दैरदृष्टादिकं कथ्यत इत्याहुः। यथाऽऽहोदयनः, "इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितो मूलत्वात्प्रकृतिः" इत्यादि—तदेतदपन्दु; नियतक्रमा[नु]पूर्वप्रकृतिविकृतिपरम्परोपदेशात्, बाधाभावे भाक्तत्वायोगात; अन्यथा सर्वत्र श्रुतहान्यश्रुतकल्पनाप्रसङ्गाच्च।

तदेतत् सर्वमभिप्रेत्याह—स्वच्छन्देनेति। साधकबाधकप्रमाणाभावे विशिष्टार्थबोधनसामर्थ्यमागमस्य

---

புரீ— प्रकृत्यादीति। आदिशब्देन मायादिग्रहणम्। अदृष्टादीति परमाणुग्रहणम्। नियतक्रमापूर्वेति। अपूर्वत्वम्—प्रमाणान्तराप्राप्तत्वम्।

டிப்பணி— षडित्युक्तिः जीवात्मनः परमात्मशरीरत्वात् जीवस्य परमात्मनि अन्तर्भावविवक्षया। *भागवते—"षडित्यत्रापि भूतानि पञ्च, षष्ठः परः पुमान्। तैर्युक्त आत्मसम्भूतैः सृष्ट्वेदं समुपाविशत्॥"* इति श्लोकव्याख्याने "षडिति मतेऽपि भौतिकस्य भूतान्तर्भावं, जीवस्य परमात्मन्यन्तर्भावमाह तैर्युक्त इति" [इति] श्रीधरोक्तेः। "जीवस्यापि परशरीरत्वात् परमात्मन्यन्तर्भावो विवक्षितः" इति श्रुतप्रकाशिकाकारोक्तेश्च। चतुर्धातुवादः इति। श्रीभागवते "चत्वार्येवेति तत्रापि तेज

ஶ்ரீ— त्वारो धातवः। समानमिति। पूर्वोक्तप्रतिसंधानबलादात्मनित्यत्वे सुखदुःखव्यवस्थायाः कर्माधीनत्वे च सिद्धे, कर्मणां वैदिकप्रमाणकत्वेन तद्दिष्टौ, तत्रोक्तं प्रकृत्यादिकमप्यप्रतिषेध्यमित्याशयः। नन्वन्यतो निश्चयो न भवति अव्यवस्थादर्शनादित्यत्राह भूयसामिति। ननु मिथो विरोधदर्शनादर्थवादत्वमेवास्त्वित्यत्राह न चेति॥ सर्वमिदं वक्ष्यते। सांख्यचार्वाकयोरिव तार्किकस्यापि श्लोको निरासक इत्यामेप्रेत्य, वेदे प्रकृत्यादिशब्दानामर्थान्तरकल्पनां तार्किकादिकृतां निरसितुमाह केचित्त्विति। इत्येषेति न्यायकुसुमाञ्जलौ प्रथमस्तबकनिगमनश्लोकः। इति—एवं साधितमदृष्टं यस्य भगवतः असमा—अद्वितीया सहकारिशक्तिः, उदयनस्य दुष्करत्वात् मायेति, मूलकारणत्वात् प्रकृतिरिति, प्रबोधनिवर्त्यत्वात् अविद्येति च वेदोक्तेति तदर्थः। अन्यथा—बाधाभावेऽपि असद्दृष्टत्वमात्रेण वाक्यानामस्मदुल्लिखितार्थपरत्वकल्पने, तत्तत्पुरुषादृष्टतया तत्रतत्रार्थान्तरकल्पनया सर्वक्षोभः स्यादिति भावः। तदेतत् सर्वमिति। 'प्रत्यक्षदृष्टं भूतपञ्चकं नित्यम्। न कदाचिदनीदृशं जगत्' इति मीमांसकाः। चतुर्विधपरमाणुमूलकं भूतभौतिकमिति तार्किकाः। एवं नानाविवाददर्शनात् तर्कमुपेक्ष्य श्रुतिः प्रमाणं यदर्थे स्वरसं तद् गृह्यत इत्याशयः। स्वच्छन्दत्वं स्ववशत्वं स्वाधीनत्वमनन्याधीनत्वम्—स्वगतविशिष्टार्थबोधकताप्रयोजकतया मानान्तरानपेक्षत्वम्। पौरुषेयाणां वाक्यानां, अर्थं बुध्वा शब्दरचना इति न्यायात् विशिष्टार्थबोधकता मानान्तराधीन ज्ञानसापेक्षा, नैवमपौरुषेये। तत्र कारणज्ञानगतप्रमात्वभ्रमत्वाधीना पौरुषेयवाक्यजन्यार्थज्ञाने प्रमात्वभ्रमत्वसत्ता। अपौरुषेयवाक्याधीनं ज्ञानं तु दोषानधीनत्वान्न भ्रमत्वशंकास्पदम्। प्रमाणान्तरप्राप्तपृथिव्यादिभूतप्रतिपादकवेदवाक्यानि तु *ज्ञातार्थबोधनवैयर्थ्यात् न तत्पराणि*। किन्तु तदनुवादेन तेषां *भगवत्कार्यत्वभगवच्छरीरत्वादिपराणि*। यथा दध्नाजुहोतीति वाक्यं प्राप्तहोमबोधनपरत्वं विना होमानुवादेन दधिरूपसाधनविधिपरम्, तद्वत्। अत एव 'शास्त्रमसंनिकृष्टेऽर्थे विज्ञानम्' इत्युक्तम्। असंनिकृष्टत्वमज्ञातत्वम्। यथा ज्ञातमर्थं न बोधयेत् शास्त्रम्, वैयर्थ्यात्—तथा ज्ञातविरुद्धमपि न बोधयेत्, विरोधात्। अतोऽसंनिकृष्टपदेनाबाधितत्वमप्युक्तप्रायम्। अज्ञातविषयकत्वे अबाधितत्वधौव्यात्। इदमुभयमिह *साधकबाधकप्रमाणाभावे इति पदेनोक्तम्*। विशिष्टार्थबोधनसामर्थ्यपदेन

स्वाच्छन्द्यम् । आगम इह श्रुतिस्मृतीतिहासादिः । कारणदोषबाधकप्रत्ययविरहादसदाद्यतीन्द्रियविषयं शास्त्रमपि प्रत्यक्षवच्छ्रद्धेयमेव । अत आगमिकानामपि सद्भावनिश्चय इति सिद्धिशब्दाभिप्रायः ।

ननु प्रत्यक्षसिद्धं पृथिव्यादितत्त्वम्; तच्च कार्यावस्थं प्रकृतिद्रव्यमेवेति ब्रूथ, तथा सति कारणावस्थमपि तदेवेति कथं तस्याप्रत्यक्षत्वम्? अश्रुतागमैरप्रतिसंहितव्याप्तिभिश्च बालादिभिरपि चक्षुरादिकरणानि व्यवह्रियन्ते । अतः कथं तेषामागमिकत्वम्? तत्राह नाध्यक्षेणेति । प्रत्यक्षविरुद्धेयं प्रतिज्ञेत्यत्राह— अप्रतीतेरिति । न हि प्रकृत्याद्यवस्थस्य प्रत्यक्षतः प्रतीतिरस्ति । अवस्थादिभेदैरेकस्यैव प्रत्यक्षत्वाप्रत्यक्षत्वे बहुलं लोकदृष्टे (लमुपलब्धे) । चक्षुरादिव्यवहाराश्च लौकिकानां तत्तदधिष्ठानमात्रविषयाः । मनसा जानामीत्युक्तिरपि धीविशेषविषया । अहमिति प्रत्यक्षं तु न महत्तत्त्वविषयमहंकारविषयं वा; प्रत्यगात्मन एवाहमिति भानात् । अध्यवसायादयोऽपि वस्तुत आत्मधर्माः; करणभेदायत्ततया तु त[त्त]द्वृत्तित्वोपचारः । दृष्टेषु पृथिव्यादिष्वपि शास्त्रैकवेद्याः कतिकति न सन्त्याकाराः? किं पुनरन्येषु? अतो लोकोत्तीर्णा-

---

[illegible]— प्रत्यक्षाप्रत्यक्षत्वे बहुलमुपलब्धे इति । सलिलनिलीनाविलीनलवणादिषु इति भावः ।

कथमात्मन एवाहमिति भानम्, अध्यवसायाभिमानयोर्महदहङ्कारवृत्तित्वप्रसिद्धेः तयोश्च अध्यवस्यामीत्यादिषु अहमर्थाश्रयत्वप्रतीतेरित्याशङ्क्याह अध्यवसायादयोऽपीति । एषां चेति । प्रत्यक्षतयोक्तानां पृथिव्यादीनां प्रकृत्यादीनां चेत्यर्थः ।

[illegible]—आपोऽन्नमात्मनः । जातानि तैरिदं जातं जन्मावयविनः खलु" इत्यत्र तथोक्तेः । दृष्टेष्विति । स्वत्वास्वत्व शुद्धाशुद्धत्वत्याज्यत्वोपादेयत्वपुण्यजनकत्वपापजनकत्वादयः शास्त्रैकवेद्याः आकाराः ।

[illegible]— दोषाशंकानास्पदत्वं विवक्षितम् । अन्यथा लौकिकवाक्यसाधारण्यात् । स्मृत्यादेरप्यागमपदेन ग्रहणोक्तिः तस्य स्वच्छन्दागमोन्नायकत्वात् । केवलतर्काणां वेदस्य च स्थितं वैलक्षण्यं दर्शयति कारणेति ।

एकस्यैव तत्त्वस्य चतुर्विंशतिभेदकल्पनात् कथं पृथिव्यादिरूपेण प्रत्यक्षे तस्मिन् आगमैकगम्यतेति शंकते नन्विति । येनयेन रूपेण विभागः, तत्तद्रूपेण तस्य प्रकृत्यादेः आगमगम्यत्वमेवेत्याह नेति । अध्यक्षेण—प्रत्यक्षेण न सिद्धिः प्रकृत्यादीनाम्, तत्तद्रूपस्याप्रत्यक्षत्वादित्यर्थः । अक्षविषयमादाय शंकयाऽवतारितत्वात् प्रकृतिमहदहंकारमात्रादेरत्र व्युत्क्रमेणाक्षविषयं प्रथममाह चक्षुरिति । अधिष्ठानं गोलकादि । धीविशेषेति । बहिरिन्द्रियनिरपेक्षयत्किञ्चिज्ज्ञानेत्यर्थः । तस्य स्वयंप्रकाशत्वात् युक्तं प्रत्यक्षत्वमिति भावः । न चैवं तेन जानामीति तृतीयया ज्ञानाद् भेद ग्रहविरोध इति वाच्यम्; ज्योतिष्टोमेन यजेतेतिवत् विशेषणे तृतीयासंभवात् । अध्यवसायो बुद्धिः, अभिमानोऽहंकारः इति सांख्योक्त्या, अहमेवमध्यवस्यामि, मयेदं कर्तव्यम् इत्यध्यवसायाभिमानयोरनुभवात् अहमर्थः प्रत्यक्षः; स एव बुद्धिरहंकारो वेति शंकां परिहरति अध्यवसायेति । अध्यवसायाभिमानयोर्ज्ञानविशेषत्वात् ज्ञानस्यात्मधर्मत्वात् अचेतनयोर्बुद्ध्यहंकारयोर्न तत्र विषयत्व संभवः । समर्थितश्चाहमर्थस्याऽऽत्मत्वमन्यत्रेति भावः । बुद्ध्यहंकारयोस्तु यथायथं तत्करणत्वमेव, न त्वाश्रयत्वमित्याह करणेति । शास्त्रवेद्यत्व-लोकवेद्यत्वविभागो विवक्षितविभाजकधर्मपुरस्कारेण; नान्यथा । विभिन्नाकारेण वेद्यत्वावेद्यत्वयोरुभयत्राविशिष्टत्वादित्याशयेनाह दृष्टेष्विति । श्लोके नपुनरिति पुनश्शब्दः वेदानुरोधाभावात् सांख्यानुमास्तु अतिहेयत्वज्ञापनाय । अनुमया—अनुमानैः;

कारेण त्रिगुणस्य शास्त्रवेद्यत्वम् । एषां च तत्त्वानां तदवान्तरभेदानां च यथागमं यथादर्शनं च लक्षणं ग्राह्यम् । केषुचित् क्षीरगुडादिरसभेदवत् दुर्वचा अपि भेदास्त्वनुभवादिसिद्धा दुरपह्नवाः ।

ननु **सांख्योक्तैरनुमानैः** प्रधानादिसिद्धिः स्यादित्यत्राह **न पुनरनुमयेति** । न त्वनुमानै रित्यर्थः । तत्र हेतुः— **व्याप्तिलिङ्गाद्यसिद्धेः** । यथासम्भवं व्याप्तिलिङ्गपक्षदृष्टान्तानामसिद्धेरित्यर्थः ।

तथा हि-यत्तावदुक्तम्, "कारणगुणात्मकत्वात् कार्यस्याव्यक्तमपि सिद्धम्" इति-अयमर्थः— यत् कार्यं तत् कारणगुणात्मकं यथा तन्त्वादिगुणात्मकं पटादि । तथा महदादिकार्यजातमपि सुखदुःखमोहात्मकतया स्वकारणगतसुखदुःखाद्यात्मकं भवति। अतस्तत्कारणं सुखदुःखाद्यात्मकं प्रधानमिति— तत्र पटादेः किमिदं कारणगुणात्मकत्वम् ? किं कारणगुणतादात्म्यम्, उत कारणं प्रति गुणभूतत्वम्, अथाप्रधानत्वम् ; कारणगुणैर्गुणित्वं वा, तत्सजातीयगुणवत्त्वं वा, अन्यद्वा किंचित् ।

नाद्यः, असिद्धेः । न खलु तन्त्वादिगुणैः शौक्ल्यादिभिः पटस्य तादात्म्यं दृष्टम् ; तथा सति गुणवत्तन्तुनिष्पत्तिमात्रेण पटनिष्पत्तिप्रसङ्गात् । न चायमिष्टः प्रसङ्गः ; अभिव्यक्तिवादादेरपाकरिष्यमाणत्वात् । अत एव न द्रव्यस्य गुणतादात्म्यम् । शुक्लः पट इति च न पर्यायः । न द्वितीयः, अदृष्टेरेव ॥ तन्तुसमवेतत्वात् पटस्य तन्तुगुणत्वोक्तिरिति चेन्न, अवयविसमवाययोस्त्वयाऽप्यनभ्युपगमात् । पटस्य तन्तुनिष्ठत्वमुपलब्धमिति चेत्, किमतः ? कार्यावस्थानां कारणद्रव्यवर्तित्वमात्रसाधनापत्तेः । तथा च न कारणावस्थस्य सुखाद्यात्मकत्वसिद्धिः । कारणमात्रं तु सिद्धत्वान्न साध्यम् । तृतीयेऽपि किमिदं

सर्वा०— यथागमं यथादर्शनमिति । पृथिव्यादीनां यथादर्शनं, प्रकृत्यादीनां यथागममिति विभागः। साध्यं कारणगुणात्मकत्वं विकल्प्य दूषयति—तत्र पटादेरित्यादिना । कारणगुणैर्गुणित्वमिति

अभिनवा– यत्कार्यमिति । अत्र महदादि कारणगुणात्मकं कार्यद्रव्यत्वात् घटवत् इत्यनुमानं विवक्षितम् ।

उक्तमर्थमुपसंहरति—अत एवेति । असिद्धेरेवेत्यर्थः । यद्वा अत एवेति वक्ष्यमाणपरामर्शः । अपर्यायत्वादेवेत्यर्थः । चकारः पर्यायत्वाभावप्रसिद्धिपरः । अदृष्टेरेवेति । एवकारो निरपेक्षहेतुत्वं द्योतयति । कारणमात्रं तु इति । महदादीनां कारणसाधकं कार्यत्वं नानुमानसिद्धम्, तस्य निराकरिष्यमाणत्वात् । तथा च आगमसिद्धत्वमिति वक्तव्यम् । तदा महदादीनां कार्यत्वबोधकागमेनैव

सर्वा०— परामर्शैरिति यावत् । तत्र हेतुस्तद्विषयलिङ्गाद्यभावः। कारणेति । धूमवतो वह्निमत्त्वात् इतिवत् कार्यस्य कारणगुणात्मकत्वादिति निर्देशः । अतः कार्यत्वं हेतुः । महदादिकं कारणगुणात्मकं कार्यत्वात् पटादिवदित्यनुमानम् । सुखदुःखमोहेषु सत्त्वरजस्तमोव्यवहारः सांख्यानाम् । पक्षे साध्यं शीलयितुं पूर्वं दृष्टान्ते साध्यस्वरूपं शोधयति तत्र पटादेरिति । गुणभूतत्वम् तद्धार्यत्वम् । कारणगुणैर्गुणित्वं कारणगतगुणाश्रयत्वम् । अन्यदिति कारणगतगुणजन्यगुणवत्त्वादिकम् । निष्पत्तिशब्दस्वारस्यानवधानसुलभशंकां परिहरति नचेति । सांख्यैः, तिले तैलमिव कार्यं कारणे प्रागेवास्ति, अभिव्यक्तिमात्रं कारकव्यापाराधीनमिति स्वीकारादिष्टत्ववादः । अत एव-गुणपटयोः पूर्वोत्तरभावादेव । गुणगुणिनोरैक्ये प्रागेव पटसद्भावप्रसंगादेव । अदृष्टेरिति । न हि तन्तुः पटं धारयतीति भावः । दृष्टान्ते इदमिष्टम् ; द्रव्यैक्यात् पटस्य तन्तुगततन्तुत्वावस्थोत्तरपटत्वावस्थाश्रयत्वात् । एतद्दृष्टान्तेन पक्षे महदादौ कारणगतावस्थोत्तरसुखाद्यात्मकत्वरूपावस्थाश्रयत्वं साध्यं स्यात् । तेन कारणदशायां सुखाद्यात्मकत्वं न सिध्येदित्याह कार्येत्यादिना । अस्य कारणतादात्म्यमात्रे

कार्यस्य कारणं प्रति अप्रधानत्वम्? तत्कार्यत्वमिति चेन्न; सिद्धसाधनात्, साध्याविशेषाच्च। न ह्यकारणेन किंचित् कार्यमिच्छामः। कारणसहकारित्वादिसाधनेऽपि न विवक्षितसिद्धिः। न चतुर्थः, अवयविवादे तन्तुपटोदाहरणायोगात्। तत्र हि तन्तुगुणैः पटगुणा जन्याः। द्रव्यनित्यत्ववादे सिद्धसाधनात्; कार्यावस्थस्य कारणावस्थानियतगुणसाधने विरोधात्। पञ्चमस्तु विलक्षणमहत्त्वाद्यधिकरणत्वान्निरस्तः। सजातीयगुणसद्भावमात्रे साध्ये सिद्धसाधनात्। सर्वगुणसजातीयत्वसाधने कार्यकारणयोरविशेषप्रसङ्गात्। मृत्सुवर्णादिवत् कार्यविशेषव्यवस्थापककारणस्वभावसाजात्यविवक्षायां गोमयमाक्षिकाद्यारब्धवृश्चिकादिषु व्यभिचारात्। तदभिप्रायं च सूत्रम्, "दृश्यते तु" इति। नापि षष्ठः, तस्य त्वद्बुद्धिमात्रारूढस्याद्(स्य दृ?)ष्यत्वात्। लोकदृष्टस्य तु कस्यचिदुक्तोत्तरप्रायत्वात्। अतः कर्मणां स्वविषय-

---

புரீ— यत्किञ्चित्कारणगुणैर्गुणित्वम्? उत सर्वकारणगुणैर्गुणित्वमिति विकल्पमभिप्रेत्य दूषयति—द्रव्यनित्यत्वेत्यादिना।

ஞெலவா— महदादिकारणप्रकृतेरपि सिद्धत्वात् सिद्धसाधनमिति भावः। यद्वा, कार्यत्वं नाम उत्पत्तिमत्त्वम्, तच्च कारण[करण?] व्यापारवत्त्वमिति वक्ष्यते। तथा च कार्यत्वरूपहेतुसिद्ध्यैव कारणमपि सिद्धमिति सिद्धसाधनमिति भावः। सिद्धसाधनादिति। पूर्वोक्तरीत्येति भावः। साध्याविशेषाच्चेति। साध्यवत् हेतोरपि असिद्धेरित्यर्थः। यत् कार्यं तत् सकारणकं इति प्रसिद्ध्या च सिद्ध(?) सिद्धसाधनत्वमुपपादयति—नहीति। लोकदृष्टस्येति। कारणगुणजन्यगुणकत्वस्य वा अस्य कारणस्य स्वीकारे एवम्भूतगुणो भविष्यतीति अभिप्रायविषयगुणकत्वस्य वा अपसिद्धान्तासर्वैत्रिकत्वादिना दूषितत्वादिति भावः। अत इति। विषयशब्दः कर्मवाची। अत्र वैदिकं कर्म स्वानुगुणफलप्रदम्,

வீ— पर्यवसाने दोषमाह कारणमात्रमिति। साध्याविशेषादिति। हेतुरपि हि कार्यत्वमेव। अतस्तस्य साध्यदशापन्नत्वे हेतोः संदिग्धासिद्धिः स्यादिति भावः। ननु हेतु भूतं कार्यत्वमुत्पत्तिमत्तारूपम्, साध्यं तु सकारणकत्वम्; अतो न दोष इत्यत्राह नहीति। यदि उत्पत्तिमत्त्वं सिद्धम्, सकारणकत्वमपि सिद्धम्, तदसिद्धौ एतदसिद्धिरिति भावः। ननु कारणगुणात्मकत्वं न कारणसहकारित्वम्। स्वकार्योत्पादने स्वोपादानं सहकारितयाऽपेक्षत इत्युक्तं भवति। आदिना कारणगुणसहकारित्वरूपसाध्यपरिग्रहः इत्यत्राह कारणेति। तस्य सहकारित्वमावश्यकं न वेत्यन्यदेतत्। यत् प्रकृतं प्रधानस्य सुखादिरूपसत्त्वाद्यात्मकत्वम्, तदनेन साधितं न भवतीत्यर्थः। न चतुर्थ इति। कारणगुणैर्गुणित्वमसत्कार्यवादाश्रयणेनोच्यते उत सत्कार्यवादाश्रयणेन। नाद्यः, जन्यजनकभावेन तन्तुगुणपटगुणयोर्भेदात् कार्ये कारणगुणाभावात्। द्वितीये तु कारणकार्यैक्यात् कारणगुणाश्रयत्वे विवादाभावात् कारणावस्थायामपि कार्यावस्थगतगुणाश्रयत्वमेवाशातं साध्यं स्यात्। तच्च विपरीतम्। भूतेषु कारणावस्थानंगीकृतशब्दस्पर्शादिमत्त्वेष्वेषा कारणे तदभावस्यैव साधनं स्यादिति भावः। पञ्चम इति। कारणधर्मविजातीयधर्मराहित्यं वा, केवलसजातीगुणवत्त्वं वा कार्यवृत्तियावद्गुणसजातीय गुणवत्कारणकत्वं वा तदिति विकल्प्यक्रमेणनिरासः। तदेवेदमिति प्रत्यभिज्ञायदृसारूप्यात्मकसाजात्यविवक्षां निरस्यति मृदिति। गोमयेत्यादिकमुदाहरणम्। भूतेष्वपि पूर्वपूर्वप्रत्यभिज्ञाया उत्तरत्राभावात् विषमपरिणामस्यैव दर्शनात्। बुद्धिमात्रेति। अन्यद्वेति किंचिद्विवक्षितम् कारणाभिन्नत्वं चेत्, न दूष्यम्। कारणेऽभिव्यक्तत्वं वा कारणावस्थोत्तरावस्थाश्रयत्वादिकं वा चेत्, उत्तरमुक्तप्रायम्। अत्र अदूष्यत्वादित्यत्र दूष्यत्वादिति पाठस्तदनुगुणार्थश्च युक्तः। अथ कार्यकारणसारूप्यं विहाय कार्यकारणगुणसारूप्यविवक्षायामाह कर्मणामिति। स्वविषयेति।

स्वरूपफलप्रदत्वानुमानवत् कार्याणां स्वगुणसरूपगुणकारणकत्वानुमानमप्यनैकान्त्यदुःस्थमिति ।

ये च भेदानां परिमाणादित्यादिना हेतव उक्ताः, तत्र तावत् —

यत् परिमितं तत् सकारणकमित्यत्र न व्याप्तिः, जीवाणुत्वनित्यत्वयोः साधयिष्यमाणत्वात् । महदादीनां स्वरूपमनुमानसिद्धं वा पक्षीक्रियते, आगमसिद्धं वा । (1) नाद्य, तल्लिङ्गासिद्धेः ।

ननु चिच्छक्तेरेव स्वतो विषयप्रवणतायामनिर्मोक्षप्रसङ्गात् अस्ति किंचित् द्वारम्, तत्तु न चक्षुरादिमात्रम्, तदुपरमेऽपि सङ्कल्पाद्युत्पत्तेः । नापि मनोमात्रविश्रमः, तत्प्रशान्तावपि स्वप्ने मनुष्यस्य स्वात्मनि व्याघ्राद्यभिमानात् । नाप्यहङ्कारे पर्यवसानम्, तद्विरामे सुषुप्तौ श्वासनिश्वासहेतुभूतप्रयत्नाधारस्य महतस्सिद्धेः । न च तदवधिस्तत्त्वपङ्क्तिः, तस्यापि परिमितत्वेन कार्यत्वात् । तत्कारणं त्वव्यक्तं न परिमितमित्यत्र प्रमाणमस्ति तत्कल्पनायां त्वव्यवस्थापात । अतोऽव्यक्तमपरिमितमादिकारणमिति वृत्तिभेदसिद्धैर्महदादिभिरव्यक्तानुमानं स्यात् ॥

---

Qeven —

कर्मत्वात्, कृष्यादिकर्मवत् इत्यनुमानं विवक्षितम् । अस्य जलताडनादिव्यर्थकर्मणि व्यभिचारः । अनैकान्त्येति । वृश्चिकादिविजातीयकायेषु अनेकान्त्यमित्यर्थः । तत्प्रशान्तावपीति । साङ्ख्यमते स्वप्नस्या वी— दीयमानद्रव्य हन्यमानप्राण्यादि कर्मान्वयितत्तद्वस्त्वनुरूपफलानुमानं यथा व्यभिचरितम्, पुरोडाशादिमात्रादपि स्वर्गादिमहाफलभावात्, तथेत्यर्थः ।

साङ्ख्यैरव्यक्ते अविवेकित्वादिसाधनं त्रैगुण्यहेतुना महदादिदृष्टान्तेन कृतम् । तत्राव्यक्तरूपाश्रय—त्रैगुण्यरूपहेतुभयासिद्धिशङ्कायां महदादिकं कारणगुणात्मकं कार्यत्वादिति पञ्चहेत्या उभयसाधनं दर्शितम् । तदेतावता दूषितम् । अथेदं कारणगुणात्मकत्वं कारणगतगुणजन्यतज्जातीयगुणवत्स्वरूपमेवेति तार्किकपक्षस्यैव साधनं स्यात् । ते परमाणुतः तद्गुणाधीनतादृशगुणतद्वयव्युत्पत्तिस्वीकारादित्याशङ्कायामपरिमिताव्यक्तरूपकारणसाधनं कृतं भेदानामित्यादिकारिकया । तद् दूषयितुमारभते येचेति । एषां हेतूनामुत्तरकारिकायाम्, 'कारणमस्त्यव्यक्तम्' इत्युक्तमाध्येऽन्वयः । रचनानुपपत्त्यधिकरणमत्रानुसन्धेयम् । अत्रापि श्लोकोक्तव्याप्त्यसिद्धि-लिङ्गासिद्ध्याश्रयासिद्धीराह न व्याप्तिरित्यादिना ।

न्यायकुसुमाञ्जलौ(स्त 1) साङ्ख्यप्रस्तावे तदिष्टेन्द्रियमनोहङ्कारमहत्पर्यन्तवस्तुसिद्धिप्रकारो विलक्षणमुपपादितः । तत्प्रकारमवलम्ब्य साङ्ख्यः आश्रयासिद्ध्यादिपरिहारं शङ्कते ननिवति । विच्छित्ति अनादिचैतन्यम् । साङ्ख्यमते आत्मा चैतन्यमात्रस्वरूपः । स्वत इति । इन्द्रियादिकारणविनैवेत्यर्थः । सङ्कल्पादीत्यादिना विकल्पग्रहणम् । सविकल्पकं मनःकार्यं तन्मते । व्याघ्रेति । मनुष्योऽहमित्यभिमानश्चेत्, स्वप्नानुभाविनो मनुष्यजात् मनुष्यदेहकार्यं इति शङ्क्येत । स्वप्ने स्वव्याघ्रादिरूपेण यदा पश्यति, तदा तथाभिमानो देहाद्यतिरिक्ताहङ्काररूपद्रव्यकार्यः । अभिमानश्च तन्निष्ठ इति तत्सिद्धिः । अहमर्थोऽहङ्कार इति साङ्ख्यमतम् । स चाभिमानः सुषुप्तौ नास्ति । तदा प्रश्वासादिकं जायमानं प्रयत्नाधीनं वाच्यम् । घटादावभावात् । तस्याहङ्कारनिष्ठत्वे अहमिदं करोमीत्यभिमन्येत । अनस्तद्भिन्नस्तदाश्रयः । स एव महान् । एवमाश्रयासिद्ध्यादि परिहृत्य ततोऽव्यक्तं साधयति न चेत्यादिना । तदवधि –महन्मात्रे विश्रान्ता । [बहुव्रीहिः ।] भेदानां परिमाणादिति कारिकाया परिमितत्वं कार्यत्वद्वारा कारणसाधकमभिमतमिति दर्शयितुं परिमितत्वेन कार्यत्वादित्युक्तम् । वृत्तिभेदसिद्धैरिति । आलोचनं व्यापारः इन्द्रियाणां, विकल्पस्तु मनसः, अभिमानोऽहङ्कारस्य,

तदेतत् कथामात्रम् । स्वतस्सर्वग्रहणयोग्याऽपि हि पुंसां चिच्छक्ति संसारावस्थायां कर्मणा सङ्कुचन्ती कर्मोत्पन्नैरेव द्वारैः यथाकर्म प्रसरतीति तु त्रय्यन्तवृद्धाः । नापि सङ्कल्पादिभिर्मन क्लृप्तिः, संस्कारप्रणाड्याऽपि तदुपपत्तेः । अन्यथा मनसाऽपि तदुत्पादनायोगात् । करणस्य च द्रव्यत्वं नावश्यापेक्षितम् । न च स्वप्ने व्याघ्राद्यभिमानादहङ्कारक्लृप्तिः, मनसैव तादृशसंस्कारसध्रीचा तदुपपत्तेः । निश्वासादिहेतुभूतप्रयत्नाधारतया महत्क्लृप्तिरप्ययुक्ता । अदृष्टवशादेव बाह्यस्येव आन्तरस्यापि मरुतः स्पन्दनोपपत्तेः । न चादृष्टस्यापि महत्तत्त्वाश्रयत्वमितः पूर्वं सिद्धम् । यदा चेश्वरप्रयत्नाधीनत्वमुच्छ्वासादेः सेत्स्यति, तदा क्षेत्रज्ञस्यापि न जीवनपूर्वकः प्रयत्नः कल्प्यः, किमुत कस्यचिदचिद्द्रव्यस्य ।

परिमितत्वं तु महतः कुतस्त्यम् ? अन्तर्देहमेव तत्प्रवृत्त्युपलम्भादिति चेन्न, त्वत्पक्षे विभोरप्यात्मनः शरीरावच्छिन्नप्रदेश एव व्यापारावेशवत् विभोरपि महतः सहकारिविशेषसामर्थ्यात् काचित्कप्रवृत्तिसम्भवात्। न च वृत्तिभेदमात्रादन्न करणभेदक्लृप्तिर्युक्ता । 'कामस्सङ्कल्पः' इत्यादिना मनस्येव बहुविधवृत्तिश्रुतेः । कामादीनां मनस्सामानाधिकरण्यम् आयुर्घृतमितिवत् भाक्तम् । महतश्च त्वया मिथोविरुद्धभावाष्टक

टिप्पणी– हङ्कारजन्यत्वमेव, न तु मनोजन्यत्वम् । स्वत इत्यादि । इन्द्रियाणामागमगम्यत्वमतङ्गीकृत्यानुमानगम्यत्वाङ्गीकारे कर्मजन्यप्रत्यक्षदृष्टगोलकजिह्वादिद्वारा रूपरसादिग्रहणसम्भवेन अतीन्द्रियेन्द्रियकल्पनं स्यादिति । प्रणाड्या-वियाद्वारेण । संस्कारेण वस्तुवैलक्षण्यादिस्मृतिः, तया इच्छारूपसंकल्पादिरिति । करणस्य चेति । सङ्कल्पादिकरणत्वेन मनस्सिद्धावपि अनुमानं न प्रभवतीति भावः । 'कामः संकल्पः' इत्यादिनेति । "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव" इति । महतश्चेति । मिथोविरुद्धभावाष्टकेति । धर्मो ज्ञानं वैराग्य-

टी— अध्यवसाय प्रयत्नो वा बुद्ध्यपरपर्यायस्य महत इति प्रागुपपादिततया तत्तत्पक्षीकारेणाव्यक्तस्यैवमनुमानमित्यर्थः ।

दूषयति तदेतदिति । स्वत इत्यादि । इन्द्रियमनःप्रभृतीनां पुरुषभेदेन विभिन्नरूपत्वात् कर्माधीनमेव तत् सर्वमिति तत्कर्मवैचित्र्येणैव चैतन्यस्य आलोचनादिरूपत्वोपपत्तौ किमेभिर्महत्पर्यन्तैरिति भावः । अवश्यस्वीकार्येण संस्कारेण च मनसोऽसिद्धिमाह नापीति । करणस्य चेति । कार्यसामान्यस्य करणजन्यत्वात् करणस्य च कुठारादिवत् द्रव्यत्वावश्यम्भावात् न संस्कारमात्रं करणमिति न, परामर्शादेर्गुणस्यापि करणत्वादित्यर्थः । मनसैवेति । त्वया ततः पूर्वं मनस्साधनादिति भावः । बाह्यस्य—वृक्षादिकम्पनहेतोर्वायोः । इतः पूर्वमिति । त्वन्मते तत्सिद्ध्यनन्तरमेव निरूप्यम् । ततः प्राक् तु तत् आत्मनि वा भूते वा, सिद्धान्तरीत्या ईश्वरे वा स्यादिति भावः । क्षेत्रज्ञस्यापीति । प्रबोधानन्तरं जीवेन मया प्रयत्नेनोच्छ्वासादिकं कृतमिति प्रतिसन्धानाकरणात् अप्रकाशमानस्यैव प्रयत्नस्य जीवनयोन्याख्यस्य स्वीकारस्तार्किकैः कृतोऽपि न युक्त इति भावः । अथ परिमितत्वरूपहेत्वसिद्धिमाह परीति । तर्हि आ मनोऽपि परिमितत्वमस्ति इति चोद्याशयेनाह त्वन्मत इति । मनसेव सर्वसिद्धौ महन्न सिध्यतीत्यप्याह न चेति । काम इति । वृत्त्यानन्त्यात्, अन्तःकरणत्रिविधमिति त्वन्मतासिद्धिरिति भावः । सिद्धान्ते कामादिकं मनोगतत्वेन नेष्टम्, धर्मभूतज्ञानपरिणामरूपत्वादिति वस्तुस्थितिमुपदिशति कामादीनामिति । तदिदं तात्पर्यचन्द्रिकायां (१३-६) विस्तरेणोपपादितमवसरे विज्ञेयम् । मिथोविरुद्धानामेकनिष्ठत्वं कथमित्यत्र तत्रापि तदिष्टमित्याह महतश्चेति । भावाष्टकम् धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि । अविरोधादिति ।

सुखदु खाद्याश्रयत्वस्वीकारात् । बाह्येन्द्रियमनोहङ्काराणामालोचनादिवृत्तिभेदाश्रयणमप्ययुक्तम् , महत एव सहकारिभेदात् सर्ववृत्त्यविरोधात् । अत एव शास्त्रतो महदादितत्त्वसिद्धावपि तेषां पृथक् करणत्वं वृत्त्याश्रयत्व वा न कल्प्यम् । एव चक्षुरादिष्वालोचनोक्तिरपि नेया ।

(2) न द्वितीय , महदादीनामागमतस्सिध्यता साक्षात् परम्परया वा प्रधानजन्यत्वसिद्धे , अनुमानस्या-भावात् । श्लो— एकप्रमाणवेद्यत्वे कार्यकारणयोर्मिथ । बोध्यबोधकते न स्त सहदृष्टाग्निधूमवत् ॥

विप्रतिपन्न प्रति अनुमान सार्थमिति चेन्न , महदादीन् अभ्युपेत्य अनभ्युपेत्य वा तेष्वव्यक्त-कारणकत्वविप्रतिपत्त्ययोगात् ॥

यदप्याहु -कार्याणा स्वाधिकपरिमाणादुत्पत्तिर्नियतेति—तदप्यसत् , वस्त्रादिषु वैपरीत्यदृष्टे । अ यक्तस्य च परिच्छिन्नत्व "तमस "परस्तात्", मृत्युं भिनत्ति" इत्यादिशास्त्रशनसिद्धम् । व्याप्तिवचनम् , "तदनन्तमसख्यातप्रमाण च" इत्यादिकमपि विभुत्वमन्तरेणापि स्यात् । घटादीनामपि स्वन्यूनपरिमाणे

---

Ø७००ण – मैश्वर्यम् , अधर्म अज्ञान अवैराग्यम् अनैश्वर्यम् इत्यष्टकेत्यर्थ । " धर्मो ज्ञान विराग ऐश्वर्यम् । सात्त्विकमेतद्रूप तामसमस्मात् विपर्यस्तम् ॥" इत्युक्ते । बाह्येन्द्रियेति । आलोचनम्= प्रत्यक्षज्ञानम् । आदिशब्देन सङ्कल्पाभिमानयोर्ग्रहणम् । वृत्तिभेदेन भेदादिकल्पने हि अय दोष , महदादीन् शास्त्रसिद्धान् अङ्गीकृत्य वृत्तिभेदाश्रयत्वमात्र कल्प्यत इत्याशङ्का परिहरति—अत एवेति । न कल्प्यमिति । किंतु शास्त्रगम्यमिति भाव । यद्वा महदादीना शास्त्रगम्यत्ववादिना त्वयाऽपि तेषा वृत्तिभेदाश्रयत्वमङ्गीकृतमित्यत आह—अत एवेति । अस्मिन् पक्षे अपि त्वर्थ । एवमिति । अत्र चक्षुरादौ आलोचननिमित्तत्वस्य प्रत्यक्षसिद्धत्वप्रसिद्ध्या तस्य भेदाश्रयत्वकल्पन-मयुक्तमित्यधिकाशङ्का । परिहारस्तु—आलोचनादिनिमित्तत्वानुमेयस्येन्द्रियस्य अप्रत्यक्षत्वात् तस्यालोचनादिनिमित्तत्व कल्प्यम् तथा च लाघवात् महदाश्रयत्वमेव युक्तम् । इन्द्रियाणामालो-चनाश्रयत्वस्य शास्त्रसिद्धत्वे तु न विवाद ।

ॐ-आगमविरोधस्याप्यभावात् । आलोचनविकल्पाभिमानाध्यवसायाना सामानाधिकरण्यस्याऽनु-भविकत्वात् तद्विरोधो व इति भाव । अनुमानतो महदादिसिद्धिनिषेधेऽपि आगमात् तदिष्टिवत् करण-त्वादिकमपीष्ट सिद्धान्ते इति न मन्तव्यमित्याह अत एवेति । पृथगिति । करणभूतमनस्सहकारित्व काम मास्तामिति भाव । चक्षुरादिष्विति सप्तम्या, आलोचनकरणत्वेऽपि तदाश्रयत्व नेष्यत इति ज्ञाप्यते ।

न द्वितीय इति । नाऽऽगमिकसिद्धिमुपजीव्य महदादे पक्षीकार इत्यर्थ । सिद्ध-साधन दोष इत्याह महदिति । परिमितत्वहेतोर्नित्येऽपि सभावनया साधकत्वाभावेऽपि कार्यत्व-हेतुनैव महदादिक स्वपरिमाणाधिकपरिमाणककारणकमिति साध्यत इति पक्ष क्षिपति यदपीत्या-दिना । वैपरीत्येति । अतो हेतुरनैकान्तिक इति भाव । अपरिमितकारणजन्यत्व साध्य चेत्— शास्त्रत प्रकृते परिच्छिन्नत्वावसायात् बाधोऽपीत्याशयेनाह अव्यक्तस्य चेति । तमस परस्ता दिति श्रुतेरन्या मृत्यु भिनत्तीति सुबालश्रुति । मृत्यु अव्यक्ताक्षरप्राक्तन तम एव । भिनत्तीत्यस्य मोक्ष गच्छन् पुरुषो मार्गमध्ये प्रकृति स्वस्माद् विभक्ता करोतीत्यर्थ । तरतीति यावत् । आभ्या परिच्छिन्नत्वसिद्धि । व्याप्तिवचनम्—'अचेतना परार्था च व्याप्तिरूपेण सबन्धस्तस्याश्च पुरुषस्य च' इत्यादि । अनन्तम्-अविनाशि । असख्यातप्रमाणम्—इयत्तारहितम् । विभुत्वमन्तरेण-ऊर्ध्वदेशापरिच्छेदेऽपि अन्यत्र परिच्छेदाभावमात्रेण । अधिकपरिमाणकारणकत्वस्य व्याप्तिग्रहणमपि दुर्लभम् , शोधने सर्वत्र न्यूनपरिमाणप्रतीतेरित्याह घटेति ।

पिण्डावयवैरेवोत्पत्तिरिति ।

**समन्वयश्च** कुत्र ? केषाम् ? कीदृशः ? सुखादिरूपेषु कार्येषु सत्त्वादीनां समनुगतिरिति चेत्, किमतः ? न हि यत् येष्वनुगतं तत् तेषां कारणमिति नियमः ; शौक्ल्यगोत्वादेरनेकानुगतस्य तत्कारणत्वाभावात् । अन्यथा व्यक्ताव्यक्तसाधारणधर्माणां तदुभयकारणत्वप्रसङ्गात् । तथा च तत्त्वाधिक्यप्रसङ्गः ॥ एतेन विगीतं स्वानुगतकारणकं कार्यत्वात् घटशरावादिवदित्यपि निरस्तम् । घटादिष्वनुगतस्य मृत्त्वस्य तत्कारणत्वासिद्धेः । मृद्द्रव्यस्य तु घटाद्यात्मना विभक्तस्य अविभक्तस्य वा तेष्वनुगतत्वादृष्टेः । यदप्येकरूपान्वितत्वादेकोपादानत्वमिच्छन्ति—तदपि स्वपरमतनिर्धूतम् ; सर्वथा सारूप्ये हेतौ, तत्त्वभेदभङ्गप्रसङ्गात ; यथाकथञ्चित्सारूप्ये तु व्यभिचारात्, साक्षादेकोपादानत्वसाधने सृष्टिक्रमादिशैथिल्यं स्यात् । मृत्तत्त्वाद्युपादानभेदश्च निह्नूयते । परम्परयेति तु मृद्घटादिनिदर्शनविरुद्धम् । नित्येषु च पुरुषेषु साक्षित्वादयो धर्माः साधारणा युष्माभिरेव पठ्यन्ते ; न तु तेषां हेतव इष्टाः । व्यक्ताव्यक्तयोश्च, "त्रिगुणमविवेकि" इत्यादिसाधर्म्यपाठादेकोपादानत्वप्रसङ्गः । कार्यत्वे सतीति विशेषणेऽपि मृत्पिण्डद्वयारब्धघटादिभि, गोमयादिनानोपादानकवृश्चिकादिभिश्चानैकान्त्यम् । बहु-

---

टिप्पणी – 'त्रिगुणमविवेकि' इत्यादीति । "त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि । व्यक्तं

श्री— एवं परिमाणादिति प्रथमहेतुर्निरस्तः ; समन्वयरूपमनन्तरहेतुं निरस्यति समन्वयश्चेति । सत्त्वादिकं महदादिकारणमनुगतत्वादित्यनुमानमनैकान्तिकम् । महदादि स्वानुगतकारणकं कार्यत्वादिति च दृष्टान्ते साध्यविकलत्वादिना दुष्टम् । कार्यकारणयोरेकद्रव्यत्वात् कार्ये धर्मिणोऽनुगत्यभावात्, अनुगतस्य च धर्मतया कारणत्वाभावात् । विभक्तस्येति । संप्रति घटात् पृथक्तया, पूर्वं घटकारणमृदंशश्लिष्टतया च स्थितस्येत्यर्थः । अविभक्तस्य–घटे द्रव्यतया स्थितस्य । एकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात् इत्यादिश्रुतिरीत्या घटशरावादीनां बहूनामेकमृत्पिण्डोपादानकत्वानुभवात् महदादिकमेकोपादानकम् एकरूपान्वितत्वादित्यनुमिति ,निरस्यति यदपीति । स्वपरमतनिर्धूतत्वमुपपादयति सर्वथेत्यादिना । तत्त्वभेदेति । प्रकृतिकार्याणां सर्वेषां सर्वप्रकारैकरूप्ये चतुर्विंशतिविधागणनायोगात् । व्यभिचारात्—विभिन्नोपादानके घटपटकटादौ हेतुसत्त्वात् । एकस्य सिषाधयिषितस्य किं साक्षादुपादानत्वं परम्परया वेति विकल्प्यापि दूषयति साक्षादिति । समर्थस्य क्षेपायोगादिति न्यायेन युगपदेव सर्वोत्पत्तिः स्यादिति । आदिना महदहंकारमात्रादेः कारणत्वभंगविवक्षा । जीवेष्वपि व्यभिचारमाह नित्येषु चेति । साक्षित्वादयः—साक्षित्वं कैवल्यं माध्यस्थ्य द्रष्टृत्वमकर्तृभावश्चेति अव्यक्तविपरीततया तदुक्ता अवेक्ष्य धर्माः । स्वमते तादृशसर्वधर्मेष्वभावात् युष्माभिरित्युक्तम् । न तु तेषां हेतव इति । तत्र साध्यं नास्ति निर्हेतुकत्वादित्यर्थः । त्रिगुणमिति । "त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि व्यक्तं तथा प्रधानम्" इति व्यक्ताव्यक्तयोः त्रैगुण्यादिना ऐकरूप्यं तदुक्तम् । तथाच अव्यक्तस्यापि कारणान्तरं सिद्ध्येदिति । द्वयारब्धेति । एकैकघटस्यैकैकमृत्पिण्डारब्धत्वं विवक्षितम् । घटद्वयं युगपद् गृहीत्वा व्यभिचारापादनम् । गोमयादीत्यादिना वृश्चिकरूपोपादानग्रहणम् । अथानेकपिण्डारब्धे एकस्मिन्नपि घटे व्यभिचारमाह बह्विति । एकत्वसंख्याविशिष्टोपादानकत्वमेकोपादानकत्वरूपसाध्यार्थं इत्याशये

(तन्त्वा)दघपटादिभिश्च । तेषामपि पक्षीकरणे दृष्टान्तासिद्धिः । अवीत(व्यतिरेकि)हेतुविवक्षायामपि न दृष्टः कारणभेदोऽपह्नोतुं (पलपितुं) शक्यः । नापि कारणान्तरमेकं विधातुम्; दृष्टैरेव हेतुभिरदृष्टघटितैः कार्याणां चरितार्थत्वात् । न च शास्त्रमन्तरेण जगतः सत्त्वादिगुणसमन्वयसिद्धिः; येन तन्मयं कारणमुन्नीयेत ।

ननु सुख्यामि दुःख्यामि मुह्यामीति स्वानुभवसिद्धास्तावत् सुखादयः, ते च कार्यभूताः स्वानुरूपं कारणमाक्षिपन्ति । तथातथा तेषुतेषु विषयेषु कालभेदेन पुरुषभेदेन च प्रीत्यप्रीतिविषादजनकत्वं दृष्टम् । तदपि तत्तद्गतविचित्रगुणविशेषगुणहेतुकं युक्तमिति ॥

तत्र; संप्रतिपन्नदृष्टादृष्टहेतुशक्त्यैव सर्वोपपत्तौ तदतिरिक्तत्रैगुण्यकल्पनायोगात् । गुणानां कार्यैकनिरूपणीयत्वभाषणमपि शास्त्रोपज्ञम् । अन्यथा त्रैगुण्योन्मेषभेदस्याप्यतिरिक्तनिर्वाहकत्रैविध्यक्लृप्तौ अनवस्थाप्रसङ्गात् । सामग्र्यनवस्था तु सिद्धा न कापि दोषाय, प्रत्युत गुणायेति सर्वैरेष्टव्या ।

---

*ಆನಂದ* — तथा प्रधानमिति । तेषामपीति । बाधश्चेति दूषणं द्रष्टव्यम् । अवीतेति । वीतम् अवीतं चेति द्विविधम् । वीतम्—विशेषेण इतं प्राप्तम् अन्वयमुखेन प्रवर्तमानं विधायकं वीतम्; व्यतिरेकमुखेन प्रवर्तमानं निषेधकमवीतमित्यर्थः । न दृष्टः कारणभेदोऽपलपितुं शक्य इति । तथा च प्रसिद्धाप्रसिद्धानेकोपादानकत्वात् नाभिमतसिद्धिरिति भावः । ननु दृष्टहेतुभिरेव चरितार्थत्वं कथम्, दृष्टकारणसंमेलनेऽपि कचित् वन्ध्यादौ पुत्रोत्पत्त्यादर्शनादित्यत्राह—अदृष्टघटितैरिति ।

*श्री*– अयं दोषः । तेषामपीति । यत्रयत्र व्यभिचारापादनं तत्रतत्र साध्यसंदेह एव, न तु तदभावनिश्चय इति व्यभिचारवारणेन साध्यानुमाने इष्टे इति यावत् । न चैकपितृपादानकाः पुत्राः दृष्टान्तः । तत्राप्यंशभेदादेव पितुरुपादानत्वात् । व्यतिरेकदृष्टान्तेन साध्यसिद्धिं निरस्यति अवीतेति । वीतः = विशेषेण इतः; पक्षे सपक्षे च स्थितो हेतुः; अन्वयीति यावत् । अवीतः व्यतिरेकी । दृष्ट इति । घटपटादौ भिन्नोपादानकत्वस्य दृष्टत्वात् बाधः, एकोपादानकत्वरूपसाध्याभाववति तत्र हेत्वभावायोगात् व्यतिरेकव्याप्तिभङ्गश्चेति भावः । ननु भिन्नभिन्नस्याप्युपादानत्वमिष्यते; तदतिरिक्तैकापूर्ववस्तूपादानकत्वमपि साध्यत इत्यत्राह नापीति । दृष्टैरिति । तदभावे कार्याभाव इति व्यतिरेकादर्शने कथं कारणत्वम्; नचाऽऽगमः कश्चिदवर्जनीयोऽस्तीति भावः ।

एवं शास्त्रस्योपस्थितत्वात् हेत्वसिद्धिमपि समन्वयादिति हेतोराह नचेति । अतः स्वच्छन्देनालमेनेत्युक्तमप्रकृत्यमिति भावः । शास्त्रमन्तरेण हेतुसिद्धिं शंकते नन्विति । संप्रतिपन्नेति । बाह्याबाह्यतार्किकादिभिः सत्त्वादिकं विनैव सर्वनिर्वाहादिति भावः । ननु श्रीभाष्ये सत्त्वादिगुणाः कार्यैकनिरूपणीया इति भाषितम्; तेन कार्यैस्तदनुमानमिष्टमिति स्पष्टम् । तत् कथमनुमानासंभवोक्तिरित्यत्र तदाशयमाह गुणानामिति । शास्त्रमपि श्रेयस्साधनतया कर्मजातमिव, जगत्कारणत्वमुखेनेश्वरमिव च सुखादिकार्यकारणत्वेन सत्त्वादि निरूपयतीति तेषां सत्त्वमर्थक्रियाकारित्वमक्षतमित्युपपाद्यते तत्रेति भावः । अन्यथा—शास्त्रनिरपेक्षयुक्तिमात्रे साधकत्वेष्टौ । सत्त्वाद्यंगीकारेऽपि एकतमोन्मेषादिकं दृष्टादृष्टहेतुत एव निर्वाह्यम् । तत् सत्त्वादि विनैव तत एव कार्यमस्तु । अथ यदि दृष्टादृष्टहेत्वतिरिक्तादेवोन्मेषादिकल्पना; तदा तत्कादाचित्कत्वं तदन्याधीनमित्यनवस्थेति भावः । ननु कारणानवस्था बीजांकुरन्यायेन सर्वैरेष्टव्येत्यत्राह सामग्रीति । कारणानवस्था नेष्टा; अत एव तैस्तैः परमाणुषु विश्रमः, प्रकृतौ विश्रमः; ब्रह्मणि विश्रम इत्युच्यते ।

गुणत्रयात्मकं च कारणमिच्छतस्ते विश्वस्यैकोपादानत्वं दुर्वचम् । ननु साम्यावस्थानां सत्त्वरजस्तमसां सङ्घातः प्रकृतिः ; अतः कारणैकत्वं स्यात् ॥ तन्न, चित्रपटारम्भकशुक्लकृष्णरक्ततन्तुसङ्घातन्यायेन सूक्ष्मदृष्टौ कार्याणां यथास्वं कारणभेदस्यैवाङ्गीकारात् । ततश्च भेदानां भिन्नत्वे सति विका[र]रित्वादभिन्नहेतुकत्वक्लृप्तिश्च निरस्ता ; सत्त्वादीनां भिन्नत्वाद्विकारित्वाच्च । अथ अभिन्नकारणान्तरक्लृप्तिः, तथा सति स्वाभीष्टतत्त्वसंख्याविरोधः ; सत्त्वादिद्रव्यभेदाभ्युपगमाच्च ।

शक्तितः प्रवृत्तेश्चेत्येतदपि मन्दम् । यदि कारणशक्तितः कार्यं प्रवर्तते कथमव्यक्तसिद्धिः ? ननु कारणशक्तिर्नाम सत्कार्यपक्षे न कार्यस्याव्यक्तत्वादन्या ; यथा हि तिले तैलस्य । अतः सर्वकार्योपादानाव्यक्तसिद्धिरिति ॥ मैवम् ; यदि तैलाश्रयतिलवत् अव्यक्तावस्थाश्रयस्वीकारः, तदा पूर्ववत् स्वेष्ट

---

टिप्पणी— ततश्चेति । एकपटे व्यभिचारवारणाय भिन्नत्वे सतीति विशेषणम् । कथमिति । न कथञ्चिदित्यर्थः । अव्यक्तत्वादिति । अस्फुटत्वादित्यर्थः । यथा अस्फुटतैलमेव तिले शक्तिरित्युच्यते, तथा अस्फुटकार्यमेव कारणे शक्तिरिति भावः । अव्यक्तावस्थेति । अव्यक्तावस्थकार्याश्रयस्वीकार

श्री— कारणकलापरूपसामग्री तु अनादौ संसारे पूर्वपूर्वं भूतेति संमन्यत इति भावः । अत्रापि सामग्र्यनवस्थैवास्तु इति चेत् सामग्री हि नाम कारणकलापः । तत्र कृप्तदृष्टादृष्टकलापत एव निर्वाहे अपूर्वकिञ्चिद्घटनमेवाशक्यमिति ।

प्रसंगात् हेत्वसिद्धिमुक्त्वा, पूर्वप्रसक्तं साध्यदूषणमेव तत्सिद्धान्तविरोधप्रदर्शनमुखेनाह गुणत्रयेति । अविरोधं शंकते नन्विति । एकत्वं संख्या वा अभिन्नत्वं वा ; समुदायस्य समुदाय्यनतिरिक्तत्वादुभयमपि न भवतीत्याशय्य चित्रेत्यादिना दूषयित्वा अभिन्नत्वघटनेन स्पष्टोक्तानुमानमपि तत एव दूषितमित्याह ततश्चेति । एकक्षीरकार्ये दधनि स्वभिन्नकार्योपादानाभिन्नोपादानकत्वरूपसाध्याभावात् व्यभिचार इति भिन्नत्वविशेषणम् । भिन्नत्वं नानात्वम् । एतदर्थं भेदानामिति भेदशब्दप्रयोग इति भावः । आत्मसु व्यभिचारवारणाय विकारित्वादिति । सत्त्वेति । हेतुघटकदलद्वयसत्त्वात् व्यभिचार इत्यर्थः । संघातातिरिक्तैककारणानुमानेष्टौ दोषमाह अथेति । द्रव्येति । त्वन्मते सत्त्वादेर्द्रव्यत्वात् प्रकृतिद्रव्यत्रयमिति चतुर्विंशतित्वहानिरिति ।

सांख्यकारिकोक्तं तृतीयं हेतुं दूषयति शक्तितः प्रवृत्तेरिति । पदद्वयेनोपन्यस्तो हेतुरेक एव । शक्त्यंशः साध्यनिविष्टः । प्रवृत्तिरुत्पत्तिः । महदादिकं शक्त्यधीनम् उत्पत्तिमत्त्वात् कार्यत्वादित्यनुमानम् । कथमिति । अव्यक्तहेतुकत्वानुमाने दृष्टान्तस्य साध्यवैकल्यम् । शक्त्यधीनत्वसाधने विवक्षितासिद्धिरूपमर्थान्तरमिति भावः । अव्यक्तत्वमेव प्रकृतान्वयिनी शक्तिरिति शंकते नन्विति । अत्र वाचस्पतिनैवं व्याख्यातम्—सिकतावैलक्षण्येन तिलस्य कारणत्वं तस्यानभिव्यक्ततैलाश्रयत्वात् । तत्रानभिव्यक्तं तैलमेव शक्तिः । तथा अव्यक्तत्वं शक्तिरिहेति । तद्दृष्टान्तानौचित्यं दर्शयति यदीति । अव्यक्तत्वस्य अनभिव्यक्ततैलतुल्यत्वे तत्र तैलात् तिलस्येव अव्यक्तत्वरूपद्रव्याद्व्यक्तद्रव्यं तदाश्रयोऽन्यदिति संख्याधिक्यमिति । अथ अनभिव्यक्तमहदेवाव्यक्तत्वम्। अतस्तत्र तिलतैलोभयातिरिक्ताभाववत् इहापि महदव्यक्तोभयातिरिक्तस्याभाव एवेति चेन्न—तैलातिरिक्तिलत्ववत् महदतिरिक्तस्याव्यक्तत्वस्यावश्यकत्वात् शक्त्यव्यक्तत्वयोरैक्यायोगात् । ननु तिले अंशद्वयमस्ति । एकस्तैलोपादानम्, अन्यः पिण्याकस्य । अनभिव्यक्ततैलमित्यनेन च तत्तिलांशविवक्षा । अस्यास्फुटत्वे क्षीरदधिस्थले गृह्यताम् । क्षीरत्वं यथा तत्र शक्तिः, तथाऽत्राव्यक्तत्वमिति

तत्त्वसंख्याविरोधः। अथ न ; विषमस्तिलदृष्टान्तः॥ नोदाहरणमादर्तव्यम् ; क्षीराद्दधिवत् सूक्ष्मावस्थात्स्व-सादेव जगदुत्पत्स्यत इति—तथाऽपि 'संप्रतिपन्नावधिस्तत्त्वपङ्क्तिरस्तु, यद्वा तदपि सूक्ष्मं सूक्ष्मान्तरात्' इति कथं तत्त्वेयत्ता ?

एतेन **सांख्यानां** सूक्ष्मशरीरक्लृप्तिश्च निरस्ता। यदाहुः—"पूर्वोत्पन्नमसक्तमित्यादिना—तन्न ; न ह्यत्र लिङ्गशब्दोक्तसूक्ष्मशरीरसद्भावे प्रमाणमस्ति स्थूलवत् प्रत्यक्षम् ; कैश्चिदप्यनुपलम्भात्। विभोरात्मनः स्वर्गादिगत्युपदेशान्यथानुपपत्त्या तत्क्लृप्तिरिति चेन्न ; तत्क्लृप्तावपि युष्मन्मते तद्गतेरात्मन्युपचारात्। ततो वरमदृष्टवशात्त्या तत्रतत्र देहोत्पत्तिमात्रेण तत्तद्देशगत्युपचारः। ननु 'स्थूलदेहद्वयान्तरालवर्ती क्षेत्रज्ञ-स्तत्कालीनदेहवान्, क्षेत्रज्ञत्वात् ; यस्तथा, स तथा ; यथा कालान्तरवर्ती' इत्यनुमीयेत॥ मैवम् ; विपक्षे बाधकाभावात् ; गत्युपदेशानुपपत्तेः परिहृतत्वात्॥ अशरीरत्वे मुक्तत्वप्रसङ्ग इति चेन्न ; प्रलयवत्

---

[illegible]— इत्यर्थः। संप्रतिपन्नावधिरिति। यद्वेति। सम्प्रतिपन्नातिरिक्तकल्पन इत्यर्थः। प्रथमपक्षेऽपि समानमिदं दूषणम्। 'पूर्वोत्पन्नमसक्तम्' इत्यादि। "पूर्वोत्पन्नमसक्तं नियतं महदादि सूक्ष्मान्तम्। संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्॥" इति। भावैः=धर्मज्ञानादिभिः। विभोरात्मन इति। "शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः। गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्॥"

[illegible]— शंकते नेति। यदीत्यादिः। उत्पत्स्यत इति यदि, तथापीत्यन्वयः। संप्रतिपन्नावधिरिति। आकाशपर्यन्तानामेव लोकप्रसिद्धत्वात् तदुपरितनमात्राहङ्कारमहत्सिद्धिरेव नेति आश्रयासिद्धिरेव। यदि अधिककल्पना, तदाऽनवस्थया तत्त्वविश्रमो न स्यादित्यर्थः। अत्र 'संप्रतिपन्नावधिः—महत्तत्त्वा-वधिः। यद्वेत्यस्य यदीत्यर्थः' इति आ. दा.। अपि चेत्यर्थ इति केचिदिति च। यद्वेति यथाश्रुतार्थमेव। सूक्ष्मान्तरात् इत्येतदनन्तरम्, अस्तु इत्यनुषङ्गः। तथा च संप्रतिपन्नावधिर्वा स्यात्, त्वदिष्टाव्याकृता-दधिकबहुकल्पना वा स्यात्, इति—अतो हेतोः कथं तत्त्वेयत्ता—कथं त्वदिष्टचतुर्विंशतिसंख्येत्यर्थः।

एवमागमिकमेव सत् प्रकृतिमहदहङ्कारादिकं स्थूलस्य सूक्ष्मपूर्वकत्वयुक्त्या न सिद्ध्यति, आकाशस्य स्थूलत्वे युक्त्यभावात्, अन्यथाऽनवस्थानादिति शक्तिरूपसूक्ष्मासिद्धिरुक्ता, एवमागमि-कस्यैव सूक्ष्मस्य तर्केणासिद्धौ सांख्यसंमतसूक्ष्मशरीरस्यानागमिकस्य सुतरामसिद्धिरित्याह एतेने-त्यादिना। पूर्वेति। स्थूलभूतोत्पत्तेः पूर्वमेवोत्पन्नम्, असक्तं—प्रतिघातरहितम्, नियतं आप्रलयावस्थितं महदहङ्कारतन्मात्रपञ्चकात्मकं बुद्धिगतैर्भावैः—धर्माधर्मादिभिरष्टभिरधिवासितं सत् स्थूलशरीरा-भावे निरुपभोगं स्थूलशरीरपरिग्रहेण संसरति। इदञ्च लिङ्गं, प्रलये लयं गच्छतीति इति तत्कारिकार्थः। वर्णनमात्रेण कथं वस्तुसिद्धिः ; मानाभावात्। तत्र न प्रत्यक्षं नानुमानं नाप्यागम इत्याह नहीत्या-दिना। स्थूलवत्—स्थूलशरीर इव। लोकान्तरगतिश्रुत्यर्थापत्तिं शंकते विभोरिति। गतिश्रवणादात्मा गच्छतु, किं देहेनेत्यत्राऽऽत्मनो विभुत्वस्य तदिष्टत्वात् गत्यसंभवात् देहगतगत्यारोप एव तत्र कार्य इति गच्छद्देहसिद्धिरिति भावः। अत्र वक्ष्यमाणरीत्या अस्मदिष्टसूक्ष्मशरीरेणैव निर्वाहात् विलक्षण-तदिष्टशरीरासिद्धिरिति समाधौ सत्यपि, तावद्दूरमगत्वैव प्रतिवक्ति तदिति। जीवः स्वर्गं यातीत्यस्य स्वर्गगामिसूक्ष्मशरीरविशिष्टो भवतीत्यपि लाक्षणिकार्थ एव। तदपेक्षया स्वर्गावच्छिन्नस्थूलदेहलाभ-सामग्रीसंपन्न इत्येवार्थोऽस्तु ; अनेकवस्तुतद्गमनादिकल्पने गौरवादिति भावः। नन्वनन्तरकारिकया 'चित्रं यथाश्रयमृते' इत्यनया चित्रस्य भित्त्यादिवत्, छायायाः स्थाण्वादिवत्, मरणजननान्तराले जैवबुद्ध्यहङ्कारेन्द्रियसंघातः साश्रयः तत्संघातत्वात् स्थूलदेहस्थसंघातवदित्यनुमानमुक्तमित्यत्र प्रत्याह नन्वित्यादिना। विपक्षे बाधकाभावादिति। हेतुरस्तु साध्यं मास्तु इति साध्याभावरूप-

अविरोधात् ॥ तत्रापि सूक्ष्मानिर्दिष्ट एव पुरुष इति नेत्र ; अत्रापि तावन्मात्रसाधने सिद्धसाधनात् । आगमस्तु गत्यवस्थायां पूर्वशरीराकृष्टसूक्ष्मावयवसङ्घातमात्रेणापि गतार्थः । "सूक्ष्मं प्रमाणतश्च तथोपलब्धेः" इति सूत्रमपि तावन्मात्रविषयम् । पुर्यष्टकशरीरोक्तिश्च न शरीरान्तर्वर्तिसूक्ष्मदेहसद्भावपरा ।

कारणकार्यविभागादविभागादिति हेतुश्च महदादिपक्षसिद्ध्यसिद्धिविकल्पेन निरस्तः । किंच

---

[illegible]–इत्यनुसन्धेयम् । पुर्यष्टकशरीरोक्तिश्च इति । अत्र "कर्मेन्द्रियाणि खलु पञ्चतथाऽपराणि, ज्ञानेन्द्रियाणि मनआदिचतुष्टयं च । शब्दादिपञ्चकमथो वियदादि पञ्च कामश्च कर्म च तमः

[illegible]–विरुद्धपक्षप्रसञ्जने तद्बाधकस्य कस्यचिदनुकूलतर्कस्याभावादित्यर्थः। अप्रयोजको हेतुरिति यावत्। गत्यन्यथानुपपत्तिर्नानुकूलतर्कः, नापि मुक्तत्वापत्तिरिति । सिद्धसाधनात्—बुद्धीन्द्रियादिसंबन्धस्य सर्वसंमतत्वादिति। ननु प्राणेन्द्रियाद्याधारतया किञ्चिदावश्यकमिति, श्रुतितः, 'तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्त...:' इति सूत्रकाराभ्युपगमाच्च सिद्धं कथं निषिध्यत इत्यत्राह आगमस्त्विति। पूर्वशरीराकृष्टेत्यनेन शरीरं यदवाप्नोतीति श्लोके वायुर्गन्धानिवाशयादिति दृष्टान्तेन गन्धेन सह पुष्पाद्यवयववत् स्थूलशरीरावयवानामेव सूक्ष्माणामाश्रयतया गत्युपगमात् आसर्गप्रलयस्थायिशरीरासिद्धिर्दर्श्यते । ननु जीवस्य स्थूलदेहाभावकालेऽपि सूक्ष्मेण देहेन संसारित्वमस्ति, अर्चिरादिना गच्छतोऽपि चन्द्रमस्संवादादिना प्रमाणेन शरीरवत्त्वोपलब्धेरित्यर्थकं सूत्रं सूक्ष्मदेहस्यापकमित्यत्राह सूक्ष्ममिति। तावन्मात्रेति। स्थूलशरीराकृष्टसूक्ष्मांशरूप–स्थूलदेहद्वयमध्यकालमात्रवर्तिदेहमात्रविषयम्, न तु सांख्यलिंगशरीरविषयकम् ; लाघवात् । उपरितने च 'अस्यैव चोपपत्तेरूष्मा' इति सूत्रे तत्र सूक्ष्मे ऊष्मसद्भाववचनात् तस्य स्थूलभूतांशत्वप्रत्यायनात् । सांख्यसंमतस्य च भूतोत्पत्तेः पूर्वोत्पन्नत्वेनेष्टनया तद्योगात् । अत एव श्रुतावपि 'प्राणस्तेजसि' इति तेजस्येव सपरिकरजीवसंपत्तिरुच्यते ; न तु मात्रात्मकभूतसूक्ष्मसंघातरूपे । अस्यैव तेजस उपरि श्रद्धारूपता, सोमराजभावश्च श्रूयत इति भाविदेहबीजभूतत्वमपि तस्य बुभुक्षुविषये इति नातिरिक्तवस्तुसिद्धिरिति भावः । सर्वमिदमुक्तमभिप्रेत्याधिकरणसारावली, (4-2-5)

> 'कल्पादौ भूतसूक्ष्मप्रभृतिभिरुदितं वर्ष्म कल्पान्तनाश्यं
> प्रत्येकं प्राणिभेदे नियतमनियतस्थूलदेहानुयायि ।
> लिंगाख्यं भक्तिकान्तः पृथगुपचयदवस्थायि सांख्यैः प्रणीतम्
> सूक्ष्मांशः पूर्वमूर्तेरुपरितनतनोर्बीजमत्रेष्यते तत्" (4-2-10) इति ।

केचित् पुर्यष्टकं शरीरमिति वाक्यं गृहीत्वा अष्टकमिति कथनात् षाट्कौशिकदेहातिरिक्तं तदिति मत्वा लिंगशरीरं तदित्याहुः । स्थूलदेहश्च षाट्कौशिकत्वेन सांख्योक्तः, मातापितृजत्वात् । मातृतो लोमलोहितमांसानि, पितृतः स्नाय्वस्थिमज्जान इति षट् कोशा इति । तत्राह पुरीति । "शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च पञ्चकम् । बुद्धिर्मनश्चाहङ्कारः पुर्यष्टकमुदाहृतम्" इति कालोत्तरसंहितोक्तरीत्या वा, एकैकपुरस्यानेकसंघातात्मकत्वभावनेन, ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं चित्तमनोबुद्ध्यहंकारचतुष्टयं प्राणादिपञ्चकं वियदादिपञ्चकं कामवर्गः कर्मवर्गः तमोवर्गश्चेति रीत्या पुर्यष्टकस्वीकारेऽपि स्थूलदेहस्यैव सर्वस्य वा देहस्येयं संज्ञेति, न ततो देहान्तः अन्यदेहसिद्धिरिति भावः॥

तदेवं 'शक्तितः प्रवृत्तेश्च' इत्यत्र सूक्ष्मपरशक्तिशब्दप्रसंगेन सूक्ष्मदेहनिरसनं प्रासंगिकं वृत्तम् । अथ कारिकापूर्वार्धोक्तहेतुनिरसनसमाप्त्या उत्तरार्धोक्तनिरसनमारभते कारणकार्येति । अयमेतदर्थः—

कार्याणा सता क्वचित्कारणे विभागाविभागौ नियताविति कृत्वा विचित्रस्य कार्यवर्गस्य विभागाविभागस्थान तया प्रधान सिषाधयिषितव्यम्। न त्वेव नियम , यथा मृदादिषु घटादीनामेतौ दृष्टौ, न तथा तन्त्वादिषु पटादीनाम्। न हि तन्त्वेकदेशात्मक पट , येन घटादिन्याय स्यात्॥ एकस्मात् अनेकोत्पत्तिनियमश्चानेन भग्न , त्वयाऽपि सहतै सत्त्वादिभिर्नेगदारम्भोक्तेश्च॥ यत्र कार्याणा विभागाविभागदृष्टि , न तत्र सर्वत्रो पादानत्वम् , निमित्तेऽपि क्वचित् तद्दृष्टे , अरणेरिवाऽऽरणेयस्य। न हि काष्ठे पार्थिवाशो वह्नेरुपादानम्। न च वह्न्यशो धूमस्य। एव सति नाव्यक्तस्यैव सिद्धि , विश्वनिमित्तस्यापि कस्यचिदेवमनुमातु शक्यत्वात् , तस्य च विजातीयस्यापि सभवात्।

किंच यथा मृदवयवसङ्घाते घटादेरविभागादि , तथा पार्थिवाद्यणुसङ्घाते तत्तद्भूतभौतिकाना स किं न स्यात् ? ततश्च का कथा तदतिरिक्ततत्त्वकल्पनायाम्॥ कृत्स्नैकदेशसयोगानुपपत्त्या अणुसङ्घातस्य कारणत्वक्लृप्तिरयुक्तेति चेत्-न, सत्त्वादिविशुद्धयसङ्घातस्यापि तत्रैव सयोगविकल्पावतारात्।

---

वै— वैश्वरूप्यस्येति कारिकान्तिमपदम्। विश्वरूपमेव वैश्वरूप्यम्। विश्वमिति यावत्। कूर्मशरीरान्तर्लीनस्य तत्पादस्य प्रसारणकाले आविर्भाववत् कार्यस्य कारणादाविर्भाव । मातुरुदरात् शिशोराविर्भावात् महामृत्पिण्डात् घटशरावादीनामाविर्भावकाले विभाग तिरोभावकाले मृदि प्रवेशश्च दृश्यते। तथाच विवाद साक्षात् परम्परया वा स्वविभागाविभागप्रतिसबन्धिकिञ्चित्कारणक कार्यत्वादिति अव्यक्तसिद्धिरिति । इद निरस्यति महदादीति । अस्मिन् विवादपक्षकानुमाने विश्वपदेन घटपटादिप्रसिद्धमात्रग्रहणे सिद्धसाधनम्। तत्र परम्परया किञ्चित्कारणकत्वमपि पिण्डकारणमृदादिग्रहणेन सूपपादम्। अथ विश्वपदेन महदहङ्कारादेरपि ग्रहणादव्यक्तसिद्धिरिति चेत्–आगमादेव महदादिसिद्ध्या तदेवाव्यक्तमपि सिद्ध्यतीति नानुमानावकाश। आगमतोऽसिद्धौ चाऽऽश्रयासिद्ध्या तदनवकाश एव॥ अथ सप्रतिपन्नमेवानधिमाकाशादिक पक्षीकृत्य तदधिककारणानुमानम्, तर्हि तत्राप्यन्यदित्यनवस्था, हेतौ पक्षेऽसिद्धिश्चेति। अथ विभागाविभागरूपसाध्यस्य कार्यत्वस्य च व्याप्तिरपि नेत्यसद्धेतुत्वमाह किञ्चेति। कारणाद्विभागो नाम पिण्डरूपकारणैकदेशस्य पिण्डाकारत्यागेन घटाकारग्रहणेन स्वसश्लिष्टभागान्तराद्विभाग एव। अविभागश्च विभक्तस्य पुनर्मृद्देशान्तरे सश्लेष एव। इद चावस्थापन्नस्य तच्छिष्टपूर्वावस्थापन्नकिञ्चिद्दशप्रतियोगिक विभागवत्त्व तन्तुपटस्थले दुर्वचमिति। केचित्तु विभागाविभागवचनम् अनेककार्योत्पादकैकोपादान कत्वाभिप्रायमित्याहु। तदप्यनेन तन्तुपटदृष्टान्तेन भग्नम्, हेतौ पटे व्यभिचारादित्याह एकस्मादिति। कार्यत्वात् विभागाविभागानुमानम्, विभागाविभागवत्त्वेनैकोपादानत्वानुमानमित्युक्तौ यदवधिक विभागादिमत् यत् तत् तदुपादानकमित्याशयात् हेतुर्व्यभिचरित इत्याह यत्रेति। आरणेयस्य—अरणिजन्याग्ने । तत्र दृष्टान्तमाह न चेति। साधितमग्नेरनुपादानत्व भाष्ये, यथाऽग्ने पृथग्धूमा विनिश्चरन्तीति श्रुताविती दमपि व्यभिचारस्थलम्। साध्ये उपादान वाघटने आह एवसतीति। ननु एकत्वमुपादानत्वञ्च न साध्यघटकम् इद स्वाभिन्नकारणक मायत्वादित्यनुमानमित्यत्राह किञ्चेति। तदतिरिक्तेति। अणुसघातरूपतार्किकाद्यभिमततत्त्वातिरिक्ताव्यक्तसिद्धिर्न भवति । तथा च व्यक्ताणुसघातनिरासार्थमिय कारिकेति तत्त्वकौमुद्युक्तमयुक्तमिति भाव । शक्तते कृत्स्नेति। परमाणु परमाणौ कात्स्न्येन सयुज्यते उतैकदेशेनेति भाष्यदर्शितविकल्पोऽनुसधेय । तादृश दूषण तवापीति च भाष्ये नविलक्षणत्वाधिकरणे उक्तमित्याह सत्त्वेति। नन्वणुत पृथुकार्य न स्यादित्यापादनवत्,

अणूना मिथ कार्त्स्न्येन सयोगे पृथुकार्यानुपपत्ति स्यात्, न तु विभूनामिति चेन्न, तेषामपि मिथ कार्त्स्न्येन सयुक्ताना स्वापेक्षयाऽल्पपरिमाणमहत्कार्योत्पत्तौ प्रतिकार्ये कारणस्य कृत्स्नैकदेशविनियोगविकल्पे कार्यान्तराणामनुत्पत्तिर्वा कारणस्य सावयवत्वं वा स्यादिति चर्चा स्यात्। श्रौते तूपादाने, "श्रुतेस्तु शब्दमूलत्वात्" इति समाधान सुलितम्।

अपि च क्षीरदधिरुचकस्वस्तिकादिन्यायेन स्वस्यैव पूर्वावस्थाविशेषवत स्वोपादानत्वे सिद्धे किमन्यत्र कुत्रचिदविभागादिगवेषणया? घटादयोऽपि मृत्पिण्डादिषु तत्तदंशैरेवोपादीयन्ते, न तु पिण्डादिभि। कूर्मावयवदृष्टान्तश्चात्र मन्द। तत्र ह्याकुञ्चनप्रसारणाभ्यामवयवान्तरावृतानावृतत्वसिद्धया भवति अव्यक्तव्यक्तावस्थाभेद, न तूपादानोपादेयभावात्। न च तत्र कस्यचिदवयवनाशोत्पत्ति यवहार। अतो न कथंचिदप्यनुमानादव्यक्तादिसिद्धि।

श्लो— आगमेन विना सिद्धिस्तन्मात्राणा च दुर्वचा। उद्भवानुद्भवाद्यैस्तु लोके सूक्ष्मादिकल्पना॥

अक्षेषु वचनादीनामनुपपत्तै सहकारिमद्भिस्तदवयवविशेषैरेवोपपत्तौ न तावत् कर्मेन्द्रियत्वक्लृप्ति, रूपादिज्ञानादीना च तत्तदधिष्ठानभेदैरेव तदनुगुणदशाविशेषैर्वि सभवात्, तदतिरिक्तकल्पनेऽपि काणादादिकल्पितन्यायेन स्मृतिविशेषानुगृहीतेन भौतिकत्वोपपत्तेराहङ्कारिकेन्द्रियसिद्धिरनागमतो न भवति।

---

Œावला— पुनरप्यमी ॥" कृत्स्नैकदेशसंयोगानुपपत्तिमुत्तरत्र वक्ष्यति। आगमेन विनेति। रूपानुद्भवात् उष्णस्पर्शोद्भवाच्च अन्धकारे सूक्ष्मतेज कल्पन सम्भवति। वृक्षचलनेन तत्स्वनशब्देन च स्थूलवायुकल्पन संभवति। एवमलौकिकाना सूक्ष्माणा स्थूलाना वा तन्मात्राणा कल्पन न संभवतीति भाव। दशाशब्देन उन्मीलनव्यासङ्गादिरुच्यते।

श्री— विभुतस्तदधिक पृथु न स्यादिति न शक्यमापादयितुम्। न हि तथाविध पृथुकार्यमसदिष्टमित्याशङ्काया कृत्स्नप्रसक्त्यधिकरणोक्तरीत्या प्रकारान्तरेणाऽऽपादन भवतीत्याह अणूनामित्यादिना। तर्हि तदधिकरणोक्त समाधानमेवास्तु इत्यत्र अत्र तदयोगमाह श्रौत इति।

समुदायादेकदेशस्य विभाग इत्यपि दुर्वचमित्याह अपि चेति। विभागाविभागत एकोपादानत्वसाधने कूर्मावयवदृष्टान्तप्रदर्शन हेतोर्व्यभिचरितत्वोक्तावेव पर्यवस्यतीति गजेन स्वोपरि स्वयकृतो मृत्क्षेप इत्याह कूमेति।

ननु महदहङ्कारमात्राक्षसिद्धिरिति मात्राणामसिद्धिवर्णनमयुक्तम्, मात्राणा भूतसूक्ष्ममात्रत्वात् सूक्ष्मस्थूलदशयोर्लोकसिद्धत्वादित्यत्राह आगमेनेति। लोकव्यवहारस्य विषयोऽन्य इत्याह उद्भवेति। यत्र रूपस्पर्शादिरप्रत्यक्षत्वादनुत्कटत्वरूपानुद्भव, तत्र सूक्ष्मत्वव्यवहार तथा यत् अप्रतिहन्यमान तदपि सूक्ष्ममित्युच्यत इति। अक्षविषयेऽप्यागमिकत्वं प्रागुक्त विशदयति अक्षेष्विति। काणादादीति। पृथिव्यादिक शरीरेन्द्रियविषयभेदेन विभज्य शरीराशातिरिक्तेष्विन्द्रियेषु तत्तद्भूतगुणमात्रग्राहकत्वात् घ्राण पार्थिव रसनेन्द्रियमाप्य चक्षुस्तैजस त्वगिन्द्रिय वायवीयमिति साधयति कणाद। गौतमश्च, "भूतगुणविशेषोपलब्धेस्तादात्म्यम्", "सगुणानामिन्द्रियभावात्" (३ १ ६३, ७२,) इति भौतिकत्वमेव वदन् तत प्राक् गोलकाद्यतिरिक्तता तत्रैव साधयति। स्मृतिविशेषेति। इद ३५ श्लोके द्रष्टव्यम्॥ साख्या काल पृथङ् नेच्छन्ति, सूर्यपरिस्पन्दादिनैव निर्वाह इति। एव कल्पनालाघवमानिन कथमव्यक्तमहदादि कल्पयन्ति। नून कालविषये स्पष्टश्रुत्यदर्शनमव्यक्तादि-

श्लो— कल्पनागौरवभयात् कलाकाष्ठाद्यकल्पयन् । अविशेषात् प्रधानादिकल्पनामप्यपास्यतु ॥
षट्त्रिंशत्तत्त्ववादश्च यदि युक्त्या समर्थ्यते । सांख्यवत् प्रतिवक्तव्यो न विस्रम्भस्तदागमे ॥
"तं षड्विंशकमित्याहुस्सप्तविंशमथापरे" इत्यत्र न विरोधस्स्यात् श्रुतिमात्रानुसारतः ॥

एवमागमिकेषु महदादिषु कालभेदनियतविकारभेदाधीनं विशेषमाह **सत्त्वादीति** । गुणत्रयाश्रयात् प्रधानात् सत्त्वादिगुणोन्मेषभेदेन सात्त्विको राजसस्तामसश्चेति त्रिधा महान् उत्पद्यते । त्रिभ्यश्च महद्भ्यस्तथैव त्रिविधोऽहङ्कारः । तत्र प्राच्यादेकादशेन्द्रियाणि । **परस्तु** भूतादिसंज्ञस्तन्मात्राः क्रमाज्जनयति । **मध्यम**स्तैजसाख्यः पूर्वापरयोरनुग्राहकतया तदुभयसाध्यसृष्ट्यर्थः । तुशब्दो मतान्तराद्व्यवच्छिनत्ति । कल्पितं हि कैश्चित् तन्त्रान्तरनिष्ठैः कर्मेन्द्रियाणां प्रवृत्तिशीलतया राजसाहङ्कारजन्यत्वम्; तच्चायुक्तम्; शब्दैकगम्येऽर्थे युक्तिभिरन्यथाकरणायोगात् ॥ ११ ॥ **इति प्रकृतिमहदाद्यागमिकतासृष्टिप्रकारौ ॥**

---

भा०— 'तं षड्विंशकम्' इति कालस्य सर्ववस्तुविशेषणतया अन्तर्भावविवक्षया षड्विंशकत्वं, कालस्वरूपमात्रविवक्षया सप्तविंशकत्वमित्यर्थः । कालभेदनियतविकारभेदः—सृष्टिकालनियतः, सत्त्वादीनां विषमविकारः । प्राच्यादेकादशेन्द्रियाणि इति । स्युरिति विपरिणतानुषक्तेन सम्बन्धः । तन्मात्राः क्रमात् प्रजनयतीति । साक्षात् परम्परया च जनकत्वं विवक्षितम् ॥ ११ ॥

टिप्पणी— अकल्पयन् इति । सांख्य इति शेषः । अपास्यतु—[जहातु] त्यजतु इत्यर्थः । श्लोके सत्त्वाद्युन्मेषभेदात् महदादिभेद उक्तः, स किं सर्वदाऽस्तीति शंकायां नेत्याह—एवमिति ॥ ११ ॥

श्री-विषये तद्दर्शनश्चात्र कारणम्; तद्दोषेन तर्कप्रकटनं तत्कृतमिति मनसिकृत्याह कल्पनेति । कलाकाष्ठादि अकल्पयन्—कला मुहूर्ताः काष्ठाश्चेत्यादिश्रुतिसिद्धकालावान्तरभेदान् चतुर्विंशतितः पृथक्त्वेन स्वीकर्तुमनिच्छन् सांख्यः । अपास्यतु—जहातु, यद्वा युक्त्या निरस्यतु ।

षट्त्रिंशत्तत्त्ववाद इति । माया पुरुष इति द्वे तत्त्वे; शिव-शक्ति-सदाशिव-ईश्वर-विद्यातत्त्वानि शुद्धतत्त्वानि पञ्च; काल-नियति-कला-विद्या-रागतत्त्वानि पञ्च; प्रकृति महदादीनि चतुर्विंशतिश्चेति षट्त्रिंशत् । विस्तरो न्यायसिद्धाञ्जनादौ । ननु न युक्त्या, किंतु आगमेनेत्यत्राह न विस्रम्भ इति । भारते ब्रह्मसूत्रे च तदविश्वसनीयत्वोक्तेरिति भावः ।

ननु ब्रह्मणः षड्विंशत्वसप्तविंशत्वरूप विरुद्धप्रकारग्राहिका श्रुतिरेव तत्त्वभेदवादवैचित्र्यानुग्राहिका स्यादित्यत्राह तमिति। तत्रतत्र विवक्षितांशोपयोगविशेषमात्रेण भूतत्रय-भूतपञ्चकादिभेदश्रवणेऽपि सर्वसंमतिरेव, तथा षड्विंशत्वादिगणनाऽपि तत्र युज्यते । ऐश्वर्यकैवल्यमोक्षरूपपुरुषार्थभेदोपयोगितया प्रकृत्यादिगणना । कालोपासनलभ्यः पृथक् पुरुषार्थो नास्तीति कैश्चित् तदुपेक्षा । अथापि तत्तत्त्वसत्त्वाद्युद्योगेन सप्तविंशत्वगणना परेषाम् । नैवं शैवागमोक्तग्रहणम्, विरोधादिति भावः ।

श्लोके प्राच्यात्-सात्त्विकाहङ्कारात् । अक्षाणि इन्द्रियाणि । भवन्तीत्यर्थसिद्धम् । क्रमादिति । न सांख्यमत इव तस्यैव सर्वतन्मात्रजनकत्वमिति वक्ष्यते । उभयार्थः-उभयसहकारी । वृत्तौ कालभेदेति । त्रिविधस्याहंकारस्यैक एव महान् कालभेदेन सत्त्वाद्युन्मेषं प्राप्य कारणमिति भावः । एवं मात्राभूतेष्वपि कालक्रमः । तच्चायुक्तमिति । खण्ड्यं तन्त्रान्तरं शैवागमः । कर्मेन्द्रियमात्रस्य राजसाहंकारजन्यत्वं युक्त्या कल्पितं तैः । उक्तमिदं परमतभङ्गेऽपि । विष्णुपुराणे तु, तैजसानीन्द्रियाण्याहुः इति इन्द्रियसामान्यस्य राजसजन्यत्वपक्षमनूद्य सात्त्विकाहंकारजन्यत्वमेवोपबृंहणपरिशीलितमिति, "देवा वैकारिकाः स्मृताः" इति स्वपक्षं पराशरः प्राह । ननु श्रीपञ्चरात्रपरमसंहितायामेव

(तन्मात्रभूतसृष्टिप्रकारः)

**तत्राहङ्कारजन्यं भजति परिणतेः शब्दमात्रं नभस्त्वं**
**तद्वत् तन्मात्रपूर्वास्तदुपरि मरुदग्न्यम्बुभूम्यः क्रमात् स्युः ।**
**सूक्ष्मस्थूलस्वभावस्वगुणसमुदयप्रक्रियातारतम्यात्**
**तन्मात्राभूतभेदः कललदधिनयात् कल्पितस्तत्त्वविद्भिः ॥ १२ ॥**

एव प्रकृत्यादीनामागमगम्यत्व सृष्टिप्रकारं च सञ्जगृहे । अथ तेषु तन्मात्रसृष्टौ श्रुतिस्मृति विप्रतिपत्तेस्संशय विपर्यय वा निरस्यति तत्रेति ॥ 'श्रूयते हि, "तन्मात्राणि भूतादौ लीयन्ते" इति । न च श्रुतिविरुद्धा स्मृतिरादीयेत । अत पञ्चानामपि तन्मात्राणा तामसाहङ्कारादुत्पत्ति , बहुवचनात् । बहुत्वस्य च प्रसिद्धितो नियम । भूताना तु यथास्वं तन्मात्रेभ्य क्रमादुत्पत्ति ' इति कश्चिन्मन्यते ।

त प्रति ब्रूम —न ह्यनुपबृंहणा श्रुतिरासतमा । अन्योन्यघटितानेकोपबृंहणविरोधे तदनुगुण नेतव्या । अत पाशवत् बहुवचनमनादरणीयम् , अशभूयस्त्वं न्ययनत्यर्थं वा । तस्मात् शब्दतन्मात्र मेकमहङ्कारजन्यम् । तच्च परिणतिविशेषादाकाशत्व भजते । एतेन सर्वत्र सृष्टौ द्रव्यानुवृत्तिस्सूच्यते ।

---

टि— तत्रेति । संशय विपर्यय वा निरस्यतीति । एकया श्रुत्या वह्वीना स्मृतीना तुल्यवलत्वाभिमाने [संशय , अन्यदा ?] विपर्यय । बहुत्वस्य त्रित्वे पर्यवसान व्युदस्यति—बहुत्वस्य चेति ॥ १२ ॥

वी– (२) "वैकारिकादहङ्कारात् पञ्च बुद्धीन्द्रियाणि तु । कर्मेन्द्रियाणि पञ्चैव कर्मारम्भाणि तैजसात् । मनो जात द्विरूपञ्च" इति कर्मेन्द्रियाणा राजसाहङ्कारजन्यत्व कथितमिति चेत्–तत्रापि कर्मारम्भाणीति युक्तेरेव पुरस्कारात् । विवाद प्रदर्श्य विष्णुपुराणे सात्त्विकाहङ्कारजन्यत्वस्य सर्वत्र समर्थितत्वेन तन्निर्णयविरोधस्यायुक्तत्वात् सर्वमन्यत् राजसस्य कर्मेन्द्रियविषये उपकारातिशयतात्पर्येण योज्यमिति भाव । यत्तु इन्द्रियदेवतानामेव सात्त्विकजन्यत्व पराशराभिमतमिति तन्न समष्टिप्रकरणे व्यष्टिभूतदेवगणोत्पत्तिकथनायोगात् । तच्छरीरस्य भौतिकस्य साक्षादहङ्कारजन्यत्वायोगाच्च ॥ ११ ॥

परो मात्रा प्रजनयतीत्युक्तम् । भूतजमकरमप्यत्र गर्भितम् । तत् सर्व यादृशक्रमात्, तस्मिन् क्रमे आगम एव मूलमिति तत्प्रदर्शनमनन्तरश्लोके । एकमेव तन्मात्रमहङ्कारजन्यम् तत एकमेव भूतम् । परिणतेरिति पदेन शब्दतन्मात्रपद द्रव्यपरम् , न तु गुणमात्रपरमिति व्यक्तीकृतम् । विपर्ययमिति । श्रुते प्रबलत्वादिति भाव । भूतादौ—तामसाहङ्कारे । अय भूतादिशब्दश्चाहङ्कारे प्रयुक्त भूतस्य भूतोत्पादकत्व वारयतीति च तद्भाव । स्मृति विष्णुपुराणादिरूपा । ननु बहुवचनसार्थक्याय तन्मात्रत्रयमेव तज्जन्यमिष्यतामित्यत्राह बहुत्वस्य चेति । तन्मात्रत्रयमात्रस्याप्रसिद्धत्वादिति भाव । अनुपबृंहणेति । मन्दमतीना कतिपयश्रुतिग्राहिणामर्थतत्त्वनिर्धारणासामर्थ्यात् उपबृंहणमपेक्षितम् । भारतविष्णुपुराणानेकपाञ्चरात्ररूपोपबृंहणभूयस्त्वेन शब्दतन्मात्र–आकाश–स्पर्शतन्मात्र–वायु–रूपतन्मात्र–तेजो–रसतन्मात्र–तोय–गन्धतन्मात्र–पृथिवीना क्रमेणोत्पत्तिविषये श्रुतिरस्तीति दृढनिश्चितम् । उपबृंहणानि ह्यन्योन्यघटितानि । एककण्ठानि एकार्थपर्यवसायीनीति यावत् । अतो भूयसान्यायेन सुबालश्रुतेरेकस्या एवार्थोऽन्यो वर्णनीय । तत्र हि एकस्य शब्दतन्मात्रस्यैव भूतादौ अहङ्कारे लयात् तन्मात्राणीति बहुवचन न घटते । बहुवचनस्थले, गुणे त्वन्याय्यकल्पनेति पाशाधिकरणन्यायेन एकत्वलक्षणेति पूर्वमीमासायाम्, "तथा प्राणा" इत्यधिकरणे उत्तरमीमासायाञ्च सिद्धम् । यद्वा बहुत्वरूपार्थमेव गृहीत्वा तस्य शब्दतन्मात्रे स्वाश्रयावयवघटितत्वसंबन्धेनान्वयो

तद्वत्-आकाशवत् तन्मात्रपूर्वा(र्वका)णि वाय्वादिभूतानि स्यु । ननु यदि शब्दाद्याश्रयतया तत्तद्भूतत्वम्, तर्हि कथ तत्र पञ्चकद्वयक्लृप्तिरित्यत्राह सूक्ष्मेति । स्वगुणा इह शब्दादय, तेषा समुदयः—उत्पत्ति । तत्प्रक्रियातारतम्य सूक्ष्मस्थूलस्वभावतयैव । तच्च शास्त्रगम्यम् । कललशब्दोऽत्र दुग्धदधिमध्यावस्थाविषय । तत्र हि निवृत्तभूयिष्ठमाधुर्यमीषदाम्लत्वमुपलभ्यते, तथा स्यात् [तन्मात्रम् ?] ॥ १२ ॥

इति तन्मात्रभूतसृष्टिप्रकारः ॥

(अप्तेजसोर्व्यष्टिसृष्टौ विशेष)

अद्भ्योऽग्निस्तेजसस्ता इति न हि वचसोर्बाधितु युक्तमेक
निर्वाहः कल्पभेदाद्यदि, न, दृढमितात् तत्त्वसृष्टयैकरूप्यात् ।
व्यष्टौ ताभ्यः कदाचित् तदुपजनिः, अतो व्यत्ययस्तत्समष्टौ
आदावप्सृष्टिवादः श्रुतिमितमितरन्न प्रतिक्षेप्तुमीष्टे ॥ १३ ॥

एव तन्मात्रभूतसृष्टिप्रकार उक्त । तत्र तोयतेजसो सृष्टौ प्रमाणविप्रतिपत्तिं शमयति अद्भ्योऽग्निरिति ॥ अबाधेन गतिमत्त्वे, श्रुतिविरोधप्रतीतावपि, स्मृति तद्वद्बाध्येति भाव । गत्यन्तर निवारयति निर्वाह इति ।

---

[illegible]— 'अद्भ्योऽग्नि' इति । तद्वदिति । श्रुतिवत् इत्यर्थ । निमित्तभूताभ्य इति । अनेन व्यष्टौ सृज्यस्य जलस्य अग्निकारणत्व नास्तीति द्योत्यत इति प्रतिभाति ।

श्री—विचक्षणीय । पञ्चीकरणार्हसारगगनकारणत्वात् शब्दतन्मात्रमपि ह्यनेकाशात्मकमेव । अवयवसमुदायातिरिक्तावयव्यभावाच्च वस्तुत नानावयवात्मके तन्मात्रे सुघटितमेव । अनन्वयश्च श्रुतिरिय श्रुत्यन्तर स्वयं निर्णयेऽपेक्षते अत्र आकाशस्येन्द्रियाणाञ्च लयस्थानानुक्ते । न ह्याकाशमिन्द्रियेषु वा स्वेषु तन्मात्रेषु वा लीयेत, तेषामुपादानत्वायोगादिति भाव । अन्योन्यघटितोपबृहणेत्यस्य, अन्यघटिततत्तत्तन्मात्रतत्तद्भूतविषयकोपबृहणेत्यर्थो वा । तद्वत् —एकतन्मात्रानन्तरमेकभूतोत्पत्तिरित्युक्तरीत्येत्यर्थ । ननु कथमद्रव्यमुपादानम्, अस्मन्मते गुणगुणिनोर्भेदादित्यत्राह सूक्ष्मेति । शब्दरूपगुणो यत्र द्रव्ये सूक्ष्मतया, तत् शब्दतन्मात्रम्, यत्र स्थूल, तत् आकाशम् । तथा च सूक्ष्मस्थूलरूपगुणोत्पत्तिप्रकारप्रयुक्त यत् तारतम्यम्, तेन तन्मात्रभूतयोर्भेद । समुदयशब्द इहोत्पत्तिवाची, न समुदायवाची । कललशब्द गर्भगतमध्यावस्थायामपि प्रयुज्यते । अत आह कललशब्दोऽत्रेति ॥ १२ ॥

एकैकतन्मात्रव्यवहितैकैकभूतोत्पत्तिपरप्रमाणानुरोधेन, आकाशाद्वायु वायोरग्नि अग्नेराप अद्भ्य पृथिवीति श्रुते तत्तत्तन्मात्रद्वारेण व्यवहितमेव भूतस्योपादानत्वमिति सिद्धम् । तत्र पूर्वापरक्रमानुसारात् अपामग्निरुपादानमित्यैकरूप्येणाथ स्थितेऽपि, कश्चित् शङ्कते—यथोपबृहणविरोधात् तन्मात्राणीति सुबालश्रुतिरन्यथा नीता, तथा तद्विरोधादेव अग्नेराप इत्यप्यन्यथा नेया । अस्ति हि स्मृति, "अद्भ्योऽग्निर्ब्रह्मण क्षत्रमश्मनो लोहमुत्थितम् । स्वासु योनिषु शाम्यति" इति, "अनावृतमिद सर्वमद्भ्योऽग्निरुदपद्यत' इति च । न चोपबृहणस्यान्यार्थत्वम् । अपामेव सर्वस्मादपि प्राक् सद्भावश्रुत्यविरोधायाग्निजन्यत्वरूपार्थस्य त्याज्यत्वादिति । तत्राह अद्भ्यइति । न बाधितु युक्तमेकम्—एकस्यापि बाधनमयुक्तम् । अग्नेराप इत्यस्यार्थान्तरवर्णने प्रायपाठागतस्योपादानोपादेयभावस्य बाध स्यादिति भाव । तर्हि कल्पभेदेनोभयस्वीकार स्यादित्यत्राह निर्वाह इति । शङ्का निषेधति नेति । दृढमितादिति । अनेकश्रुतिस्मृतिसिद्धमग्ने

स्वेष्टां गतिमाह व्यष्टाविति । निमित्तभूताभ्य इति भाव्यम् । अतश्शब्दो हेतुमवधिं वा ब्रूते। ननु "आपो वा इदमग्रे", "अप एव ससर्जादौ" इत्यादिश्रुतिस्मृतिदर्शनादग्न्यादेः सर्वस्याद्भ्यः सृष्टिः स्यादित्यत्राह आदाविति । महदादीनामिवाग्नेरप्यद्भ्यः पूर्वभावित्वं बहुश्रुतिस्मृतिसिद्धम् । अतस्तद्विरुद्धं दुर्निवारमित्यर्थः । श्रुतिषु च न्यूननिर्देशेष्वनुक्तमधिकमन्यतो ग्राह्यम् ; श्रुतहानायोगात् । अव्यवस्थितन्यूनाधिकसृष्टिकल्पने गौरवाच्च ॥ १३ ॥ इति अप्तेजसोर्व्यष्टिसृष्टिविशेषः ॥

(अनियतभूतपरिणामवादभंगः)

**पृथ्व्याः स्पर्शादिभेदो द्रवमृदुकठिनीभावभेदश्च दृष्टः**
**तद्वत् पृथ्वीजलाग्निश्वसनपरिणतिर्लाघवायेति जैनाः ।**
**तत्र द्रव्यैक्यमिष्टं क्रमजनिविलयौ त्वागमादप्रकम्प्यौ**
**तर्कैकालम्बिगोष्ठ्यां भजतु बहुमतिं तादृशी लाघवोक्तिः ॥ १४ ॥**

ननु कथमेवं तोयतेजसोर्व्यष्टिसमष्टिसृष्टिव्यवस्था ? विचित्रपरिणामशालिनस्त्रिगुणस्य कालभेदेन अनियतपरिणामोपपत्तेः । उक्तं च जैनैः—पुद्गलाख्यमेकजातीयद्रव्यं तत्तत्सामग्रीभेदैरव्यवस्थितक्रमान्

---

*टिप्पणी*— अतश्शब्दस्य हेतुपरत्वे अद्भ्योऽग्न्युत्पत्तिवचनस्य व्यष्टिविषयत्वात् व्यत्ययः सम्भवतीत्यर्थः । अवधिपरत्वे 'तत् समष्टौ' इत्यत्र तच्छब्दस्य व्यत्ययस्य एवं व्यवस्थितत्वात् अद्भ्योऽग्न्युत्पत्तिवचनस्य व्यष्टिविषयत्वादित्यर्थः तदतो व्यत्यय इत्यन्वयः ॥ १३ ॥

पृथ्व्या इति । अत्र पूर्वपक्षी जैन इति न युक्तम्, "तत्र द्रव्यैक्यमिष्टम्" इति परिहारानुपपत्तेः ; जैनाभिमतपुद्गलाख्यपरमाणुकारणत्वानङ्गीकारात् । तस्मात् तन्मतावलम्बनेन अन्यस्य शङ्केयमिति द्योतयति-त्रिगुणस्येत्यादिना । पुद्गलानामेकत्वानङ्गीकारात् एतद्विवरणतया एकजातीयत्वीं—रुपादानत्वम् । अद्भ्योऽग्निरिति वाक्ये उपादानोपादेयभावरूपार्थविवक्षणे, ब्रह्मणः क्षत्रमिति अनुपादानसाहचर्यानुगुणस्वीकार्यार्थबाध इति दोषश्च । अतस्तत्र प्रतीतम् अपामुपादानत्वमदृढमिति भावः। तर्हि तदर्थः क इत्यत्राह व्यष्टाविति । निमित्तकारणत्वं तत्र विवक्षितम्, यथा वह्नेः धूमं प्रति। दृष्टं हि व्यष्टिसृष्टौ अबिन्धनं विद्युदादि । अद्भ्य एव हि सर्वत्र देशे संप्रति दीपाद्यर्थदहनोत्पादनम् । तप्ते च तैले तोयबिन्दुपाते अग्न्युत्पत्तिर्दृष्टा । तदुपजनिः—अग्न्युत्पत्तिः । कदाचिदित्यनेन व्यष्टावपि अग्नित आपो दृष्टाः, घर्मवशात् स्वेदोत्पत्तेरिति ज्ञाप्यते । अतश्शब्दो हेतुमिति । व्यष्टिविषये तद्वाक्यस्य निरूढत्वात् समष्टौ तद्वैपरीत्यं नानुपपन्नमिति तात्पर्यम् । व्यष्टौ तथात्वस्य समष्टावन्यथात्वं प्रति साधकत्वाभावात् अर्थान्तरमाह अवधिं वेति । व्यत्ययशब्दार्थो वैपरीत्यम् । तत् किमपेक्षयेत्याकांक्षायां व्यष्टिरित्यपेक्षयेत्यवधिसमर्पणम् अतश्शब्देनेति । पूर्वपक्षिहृद्गतं श्रुत्यन्तरमपि निर्वहति आदाविति । तत्रतत्र प्रसक्तसंततिप्राथम्यमात्रेण आदित्वेन कस्यचिन्निर्देश आनुभविकः । तावता ततः प्राक् कस्याप्यभावो न सिध्यतीति भावः । तद्विरुद्धं दुर्निवारमिति । अग्नेरपः प्रति उपादानत्वं वचनान्तरार्थविरुद्धं न भवतीति तत् निवारयितुमशक्यमित्यर्थ इति । अन्यतो ग्राह्यमिति । यथा छान्दोग्ये तेजआद्युक्तावपि आकाशादेस्तैत्तिरीयात्, तत्र महदादेश्च सौबालात्, तथा त्रिवृत्करणस्थले पञ्चीकरणस्येत्येवम् ॥ १३ ॥

अव्यवस्थायामनुभूयमानायां व्यवस्थाकल्पनमेवानुचितमिति शंकते पृथ्व्या इति । स्पर्शादि-

भिन्नाभिन्नस्वभावान् विचित्रपर्यायान् भजत इति । यथा **काणादप्रभृतीनामेकैकभूतपरमाणवः** ; यथा च सांख्यादीनामेकैकं भूतम् । अतो न शाश्वतभूतभेदक्लृप्तिः । वाय्वादिचातुर्विध्योक्तिरपि पर्यायभेदनिबन्धना । नियतक्रमभूतसृष्टिकल्पना च लाघवयुक्तिविहता । तदेतदनुभाषते **पृथ्व्या इति** । दूष्यांशव्यक्त्यै शेषमनुमनुते **तत्र द्रव्यैकमिति** । त्रिगुणद्रव्यमेव हि वाय्वाद्यवस्थमिति भावः । नियतक्रमत्वे कल्पनागौरवमागमबलादपनयति **क्रमेति** । लाघवतर्कस्य का गतिरित्यत्राह **तर्केति** । गुरुकल्पनाप्रवृत्तं प्रति हि लाघवोक्तिः शोभते इति भावः ॥ १४ ॥

इति जैनवदनियतपृथिव्यादिपरिणामवादभङ्गः ॥

( प्रकृतिविकृतिविभागचिन्ता )

**तत्त्वेष्वाथर्वणेऽष्टौ प्रकृतय उदिताः षोडशान्ये विकाराः**
**निष्कर्षेदम्परेऽस्मिन् वचसि तदितरत् सर्वमावर्जनीयम् ।**
**दृष्ट्वा सांख्यं पुराणादिकमपि बहुधा निर्वहन्त्येतदेके**
**चिन्तामाफल्यमान्यात् श्रमबहुलतयाऽन्यत्र तज्ज्ञैरुदासि ॥ १५ ॥**

ननु तत्त्वसृष्टौ क्रमनियमो न संभवति, "आकाशमिन्द्रियेष्विन्द्रियाणि तन्मात्रेषु" इति सुबालो

---

टिप्पणी— द्रव्यमित्युक्तम् । प्रकृतसंवादार्थमेकमित्युक्तम् । यथाकथञ्चित् ऐक्यमात्रेण संवादः । पर्यायान्-कार्यवर्गान् । भजते-कार्यकारणभावेन संबध्यते, जनयतीत्यर्थः। एकैकं भूतमिति। विचित्रकार्यं जनयतीति शेषः। सांख्यादीनामित्यत्र आदिशब्देन मीमांसकानां ग्रहणम्। शाश्वतेति मीमांसकमतम्। वाय्वादीत्यादि सांख्यमतम्। पर्यायभेदनिबन्धनेति । महदादिकार्यभेदकारणिकेत्यर्थः । यद्वा व्यष्टिसृष्टिकार्यभेदानुमेयेत्यर्थः ॥ १४ ॥

तत्त्वसृष्टिनिरूपणे तत्त्वसंख्यानियमस्य कः प्रसङ्गः इत्यत्रावतारयति नन्विति। आवर्जनीयं योजनीयम्

टी– भेदः पाकवशात् रूपरसगन्धस्पर्शान्यथाभावः। असन्मते स्पर्शस्य प्राथम्यात् तस्य पूर्वमुक्तिः। द्रवेति । घृतमधुजतुप्रभृतीनामग्निसंयोगात् द्रवत्वम्, अन्यदा काठिन्यम् । फलभावे मृदुत्वम्, शलाटौ काठिन्यम् । अतः प्रकृतिः कदाचिदग्निर्भूत्वा पश्चाज्जलं भवेत्, जलं भूत्वा चाग्निर्जातु भवेत् । कुतोऽत्र व्यवस्था ; यथा सुवर्णं हारकेयूरकटकमकुटादितामनियमेन भजते, न तत्र पौर्वापर्यनियमोऽस्तीति । अस्य प्रत्यक्षस्य बाह्यसंवादोऽप्यस्तीत्याह उक्तमिति । जैनैरिति । विद्यानन्दादिभिरिति आ. दा. । पुद्गलेति । पूरण-गलनसंबन्धिद्रव्यं पुद्गलम् । पृषोदरादित्वात् शब्दसाधुता । अवयवाः समुदायश्च पुद्गलशब्दवाच्याः । एतन्मते परमाणूनामेकजातीयत्वम्, ततो यथायथं वायुतेजःप्रभृतयोऽवस्थाः । मृदो घटशरावादिभेदवत् । एकैकेति । पृथिवीपरमाणुत एव मृत्पाषाणादिः, जलपरमाणुत एव हिमकरकादि, तेजस्तः उदर्यविद्युत्सुवर्णादीत्येवम् । भूतमिति । एकस्मात् भूतात् विचित्रानेकभौतिकोत्पत्तिः । श्वसनेति वाय्वर्थकम् । यथादर्शनमेकस्यान्यथाभावो व्यष्टौ न वार्यते । सृष्ट्यादौ लये च द्रव्याणां क्रमः आगमसिद्धः कथमबाधेऽप्यपलप्यः ?

अथ श्रुतितोऽप्यव्यवस्थैव दृश्यत इति शंकायामाह तत्त्वेष्विति । तत्त्वेषु प्रकृतयोऽष्टौ विकाराश्चान्ये षोडश आथर्वणे उक्ताः । अस्य वाक्यस्य प्रकृतिविकृतितत्संख्यानिष्कर्षकत्वदर्शनात्

पनिषदाम्नानात् । अव्यवस्थिताश्च सृष्टिप्रकारा पृथ्व्यादिषु दृश्यन्ते । अतो यथाश्रुत कल्पभेदात् सृष्टिभेद स्यादित्यत्राह तत्त्वेष्विति॥ अधीयते हि केचिदाथर्वणिका , "अष्टौ प्रकृतय षोडश विकारा " इति । अत्र तावत् अव्यक्तमहदहङ्कारतन्मात्राणा प्रकृतित्वमविगीतम् । इन्द्रियेभ्यस्तत्त्वान्तरोत्पत्ति श्रुत्यन्तरेषु पुराणेषु वा न कचिद्दृश्यते । सौबाले च लयानुक्रमे पूर्वापरवाक्यवत् इन्द्रिय तन्मात्रवाक्ययोर्न लीयन इति पदमावृतम् । एवं वाक्यवैरूप्ये सति अनुषङ्गात् वरम् अधिकरणविभक्त्याऽपि ससर्गमात्रग्रहणमिति स्थिते प्रकरणान्तरैककण्ठ्य भवतीति केवलविकृतित्वमिन्द्रियाणा युक्तम् ।

भूताना चाकाशादीना चतुर्णा साक्षात् तन्मात्रद्वारेण वा तत्त्वान्तरोपादानत्वे प्रकृतयो विकृतयश्च पृथग् द्वादश स्यु । ननु उपबृहणविशेषानुसारादिन्द्रियाणि शब्दादिगुणाश्च षोडश विकारा , भूततन्मात्रभेदानादरेण प्रकृतयश्चाष्टावभ्युपगम्यन्ताम् , मैवम् , द्रव्यतत्त्वप्रकरणे गुणपरिगणनानौचित्यात् । गुणशब्देन च कचिद्गुणाश्रयविवक्षा स्यात् । गत्यभावे गुणविवक्षायामप्यत्र द्रव्यविवक्षोपपत्ते ॥ [अत्र?] आकाशाद्वायु-

वी—अन्यत् वाक्यजातम् आवर्जनीयम्—एतदर्थाविरोधितया निर्वहणीयमिति पूर्वार्धार्थः॥ आकाशमिति । "पृथिव्यप्सु प्रलीयते, आपस्तेजसि लीयन्ते, तेजो वायौ लीयते, वायुराकाशे लीयते । आकाश इन्द्रियेषु, इन्द्रियाणि तन्मात्रेषु । तन्मात्राणि भूतादौ लीयन्ते, भूतादिर्महति लीयते, महानव्यक्ते लीयते, अव्यक्तमक्षरे लीयते, अक्षर तमसि लीयते, तम परे देव एकीभवति" इति सौबालानुपूर्वी । अत्राकाश प्रति इन्द्रियाणाम् , इन्द्रियाणि प्रति तन्मात्राणा तन्मात्राणि सर्वाणि प्रति भूतादेस्तामसाहकारस्य कारणत्वमुक्तमिति पूर्वपक्षाशय । अव्यवस्थिता इति । छान्दोग्ये तेज आदिसृष्टि , तैत्तिरीये आकाशादिसृष्टि , 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' इति कचित्। तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दशेति अहकारजन्यत्वमिन्द्रियाणाम् , कचित् पृथिव्यादिजन्यत्वम् । अहङ्कारमहदव्यक्ताक्षराणामुत्पत्ति कचित् । तन्मात्रेभ्यो भूताना सृष्टि , भूतात् भूतान्तरसृष्टिरित्येवमव्यवस्था । आथर्वणविरोध सौबाले विस्तरेण दर्शयितुमाह अत्रेत्यादि । अविगीतम्। भूतस्य भूतान्तरप्रकृतित्व तु विवादपदमिति भाव । न कचिदिति । अत सौबालस्यार्थोऽन्य स्यात्। तत्र लीयते लीयन्त इति उभयमात्रविषये अप्रयोगोऽपि लयरूपार्थस्य तत्राग्राह्यत्व ज्ञापयतीति अन्य एवार्थ इति भाव । न लीयत इति । लीयत इति पद नाऽऽवृत्तमित्यन्वय । अनुषङ्गादिति । अनुषङ्गस्य श्रुत्यभिमतत्वे तिङन्तमिद सकृदेव प्रयुज्येत । कचिदावर्तनात् अन्यत्राप्रयोगाच्च अननुषङ्ग एव निर्धार्यते । अतोऽर्थसिद्धससृष्टपदग्रहणमेव युक्तम् । अन्यथा आकाश प्रतीन्द्रियाणा प्रकृतित्वे विकारेषु तद्गणना विरुध्येतेति । एव मध्यवाक्यनिर्वाहेऽपि, पृथिव्यप्सु प्रलीयते इत्यादेर्विरुद्धत्वमेवेत्याह भूतानाञ्चेति । अत्र सुबालोपनिषद्विवरणे व्यासार्यकृते कृत निर्वाहमुद्भाव्य तत्रापि शङ्कामाविष्करोति नन्वित्यादिना। आनन्ददायिन्या भट्टपराशरपादकृत विवरणमिति लेखकप्रमाद । वाक्यानुपूर्वी च व्यासार्यग्रन्थे। व्यासार्याशयस्तु—तन्मात्रभूतयोभेदाविवक्षया अष्टौ प्रकृतय इत्युक्ति , विकारपदेन न भूतग्रहणम् , किंतु भूतगतरूपादिगुणमात्रस्य , अतस्ते पञ्च, इन्द्रियाणि च षोडशेति । तत्र याज्ञवल्क्यजनकसवाद वसिष्ठकरालसवादो यमस्मृतिश्च प्रमाणीकृता । अत उक्तम् , उपबृहणविशेषानुसारादिति । कचिदिति । यमस्मृतावित्यर्थ । गत्यभाव इति याज्ञवल्क्यादि सवाद इति शेष । वचनानि सुबालोपनिषद्विवरणे द्रष्टव्यानि । अत्रेति । षोडश विकारा इति वाक्ये इत्यर्थ । तर्हि पृथिव्यप्सु प्रलीयते इत्यस्य कथ निर्वाह इत्यत्र अप्त्वाकाशादिपद तत्तत्

रित्यादीन्यपि स्थूलसूक्ष्मभेदानादरेणेति समाधानम् । एवं स्थिते तामसाहङ्कारोत्पन्ने तन्मात्रपञ्चके भूतानि एकद्वित्रिचतुःपञ्चभिस्तन्मात्रैरारभ्यन्त इति **सांख्याः** । पूर्वपूर्वतन्मात्राणि उत्तरोत्तरतन्मात्रमेकैकं भूतं जनयन्ति इति **पौराणिकाः** । तत्राप्युत्तरोत्तरभूतसृष्टौ पूर्वपूर्वेषां तन्मात्राणां भूतानां वा सहकारित्वमिति पक्षभेदः । एवमन्योऽपि यथामति । तदिदमाह—**दृष्टेति** । **एतत् इतरत्सर्वं** वाक्यजातमित्यर्थः । किमिति पूर्वाचार्यैरत्रोपेक्षितम् ? तत्राह **चिन्तेति** ।

श्लो— न प्रधानविरोधः स्यात् ईदृशानवधारणे। इति शिक्षयितुं शिष्यान् प्राचां क्वचिदनिश्चयः ॥१५॥

**इति प्रकृतिविकृतिविभागचिन्ता ॥**

[सर्वस्य ईश्वरशरीरतया कार्यकरत्वम् ]

**निश्शेषं कार्यतत्त्वं जनयति स परो हेतुतत्त्वैश्शरीरी**
**तत्तत्कार्यान्तरात्मा भवति च, तदसौ विश्रुतो विश्वरूपः ।**
**तेजोऽन्नाभिधेये बहुभवनमभिध्यानलिङ्गं च दृष्टं**
**तस्मादीशाननिघ्नाः प्रकृतिविकृतयः स्वस्वकार्यप्रवृत्तौ ॥ १६ ॥**

---

[illegible]—मित्यर्थः। गुणविवक्षायाः इति पञ्चम्यन्तम्। गुणबोधनादपि द्रव्यबोधनमेव उपपन्नमिति भावः । एवं स्थित इति । भूतेषूत्तरोत्तरं गुणाधिक्यव्यवस्थासिद्ध्यर्थं आरम्भकतन्मात्राधिक्यव्यवस्थाऽङ्गीकृतेति भावः। सिंहावलोकनन्यायेन 'तदितरत् सर्वम्' इत्यस्य विशेष्यमाह–वाक्यजातमिति॥

வீ— मात्रपरमिति वदति आकाशादिति । तथावादिनोऽपि विशिष्य निर्दिशति एवमिति । दृष्टं सांख्यमिति श्लोकांशं व्याख्याति तामसेति । पुराणादिकमित्यंशं व्याख्याति पूर्वपूर्वेति । अयं पक्षः विष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये आदृतः । शब्दतन्मात्रं स्पर्शतन्मात्रं जनयति तथा तेन सह वायुमपि जनयतीत्येवं रीतिः। अतो भूतस्य न भूतमुपादानमिति। तन्मात्रद्वयस्याप्युपादानत्वं समर्मिति एकः पक्षः। पूर्वस्य सहकारित्वम्, स्पर्शतन्मात्रमेव वायूपादानमिति परः। सहकारित्वपक्षावलम्बने मध्यजातमाकाशरूपभूतमपि सहकार्यस्तु इति चापरः। एवं बहुधेत्येतद् व्याख्यातम्। पुराणादीति आदिना इतिहासपाञ्चरात्रपरिग्रहः। एके—व्यासार्याः। तदाशयस्तु प्रागुक्तः। तत्पक्षे भूतात् तन्मात्रम्, तन्मात्रादन्यद्भूतमित्येव क्रमः सिद्धान्तीष्ट एष एव। परं प्रकृत्याधिक्येऽपि अष्टेत्युक्तिः सूक्ष्मस्थूलानादरादिति स्थितम्। एवमन्यो यथामतीति। असत्सुवालोपनिषत्परिष्कारे सर्वमिदं विशदम्। आचार्याशयस्तु—तन्मात्रद्वारा भूतस्य भूतप्रकृतित्वमेष्टव्यमेव । अतः पृथिव्यप्सु, आकाशाद्वायुरित्यादिकं तन्मात्रद्वारा भूतोपादानत्वमेव वदतीति न लक्षणा। द्रव्यसृष्टिप्रकरणे शुद्धगुणग्रहणं मा भूत्। गुणिनिष्ठगुणोक्तेरपि गुण्युक्तावेव तात्पर्यम्। "सोऽश्नुते सर्वान् कामान्" इतिवत्। एवञ्च षोडश विकारा इति भूतग्रहणमेव। प्रकृत्यष्टत्वव्यवहारस्तु–विषमपरिणामस्यान्न इव भौतिकेषु यत् कारणं न प्रत्यभिज्ञायते, तादृशप्रकृतीनां प्रकृतिपदेन विवक्षणात्। भूतानि तु भौतिकेषु तदेवेदमिति स्पष्टमनुभूयन्त इति तेषु विकृतित्वानुभवप्राचुर्यात् तदादरेण, स्थितस्यापि तन्मात्रप्रकृतित्वस्यानादरेण अन्तिमविकृतिभूतपृथिवीतौल्यस्य कार्येषु प्रत्यभिज्ञायमानत्वरूपस्य अबादिषु भावनयेत्येवं रीत्या कार्यं इति। मान्द्यादिति। तन्मात्रेन्द्रियाद्युपासकानां कदाचित् तद्विशदस्यावश्यकत्वेऽपि नास्माकं तदपेक्षेति भावः । उदासि—उदासीनतया स्थितं श्रीभाष्यकारादिभिरिति श्लोके एतदिति पदं इतरत्सर्वमिति प्रागुक्तार्थकमित्याह एतदिति ॥ १५ ॥

प्रक्रान्तेषु प्रकृत्यादिकारणेषु "पुरुषार्थ एव हेतुर्न केनचित् कार्यते करणम्" इति वदतः **सांख्य** स्यानन्यथासिद्धैः श्रुत्यादिभिर्बाधमाह **निश्शेषमिति** ॥ "यत्किंचित्सृज्यते येन", "जगत् सर्वं शरीरं ते" इत्यादिभिरेतत् सिद्धम् । "तत् सृष्ट्वा तदेवानुप्राविशत्" इत्यादेश्चार्थमाह **तत्तदिति** । **अन्तर्यामिब्राह्मणसुबालोपनिषदादि**प्रसिद्धिमपि संवादयति **तदमाविति** । **विश्रुतः** प्रधानपुरुषविलक्षणत्वेन विश्वशरीरकतया प्रत्यक्षश्रुतिसिद्धः ; क्वचिद्विश्वरूपशब्देनापि । तत्तेज ऐक्षत, बहु स्याम्, ता आप ऐक्षन्त बह्व्यः स्याम इति वाक्यविशेषाभिप्रेतं तद्व्यनक्ति-**तेज इति** । न ह्यचेतनमात्रस्य अनुत्पन्नकरणकलेबरस्य कर्मिणो वा तदानीं बहुभवनसङ्कल्पाश्रयत्वं युक्तम्, गौणत्वं चात्रापि, "गौणश्चेन्नात्मशब्दात्" इति सूत्रन्यायेन निरस्तम् । प्रकृतं हि मुख्यमीक्षणम् ; अत्रापि तत्संभवे नान्यथा गतिर्युक्तेति भावः । उक्तनिगमनव्याजेन, "विकारजननीमज्ञामष्टरूपामजां ध्रुवाम् । ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः ॥ "सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत् ॥", "मयाऽध्यक्षेण प्रकृतिस्सूयते सचराचरम् ।", "यत्किंचिद्वर्तते लोके सर्वं तन्मच्चेष्टितम् ॥" इत्यादिकमपि (प्र)ख्यापयति—**तस्मादिति** ॥ १६ ॥

**इति सर्वतत्त्वानामीश्वराधिष्ठानेन कार्यकरत्वम् ॥**

---

ஜலனா— 'निश्शेषम्' इति । प्रसङ्गसङ्गतिं दर्शयन् सर्वं कारणमीश्वरप्रेरितमेव कार्यं जनयतीति निर्णयस्य विप्रतिपत्तिपूर्वकत्वात् विप्रतिपत्तिं सूचयति प्रक्रान्तेष्विति । प्रकृतेष्वित्यर्थः । प्रकृत्यादिकारणेष्विति । स्वस्य[स्व?]कार्यार्थं प्रवृत्तेष्विति शेषः । पुरुषार्थ एवेति । जीवस्य भोगनिमित्तं कर्मैवेत्यर्थः । कार्यत इति । प्रेर्यत इत्यर्थः । प्रत्यक्षश्रुतिसिद्ध इति । सर्वैरधीयमानश्रुतिसिद्ध इत्यर्थः ॥

ஸ்ரீ— एवं चतुर्विंशतौ प्रकृतिविकृतिविभागः कृतः । इदं प्रकृतित्वं विकृतित्वञ्च तद्विशिष्टब्रह्मणि, न तु विशेषणमात्रे इत्याह निश्शेषमिति । अत्र पूर्वार्धे प्रथमः पाद एकं वाक्यम्, द्वितीये वाक्यद्वयं वृत्तिस्वारस्यात् । यद्वा पर इत्यत्र वाक्यसमाप्तिः । उपरि वाक्यद्वयम् । अथवा उपर्येकमेव वाक्यम्—तस्मादसौ विश्वरूपो विश्रुतः हेतुतत्त्वैः शरीरी तत्तत्कार्यान्तरात्मा च भवतीति । विश्रुतः—विलक्षणतया श्रुतः ; निमित्तत्वोपादानत्वोभयार्हतया श्रुतः ॥ नात्र श्रुत्यन्तरैककण्ठ्यायैवं वर्णनम्, सृष्टिप्रकरणमेव स्पष्टमेवं दर्शयतीत्याह तेज इति । पुरुषार्थ इति । "वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य । पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य" इति वदद्भिः सांख्यैः, "स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुका वृत्तिम् । पुरुषार्थ एव हेतुः न केनचित् कार्यते करणम्" इति चेतनकारणत्वनिषेधोऽपि कृतः । एतदर्थस्तु—करणानि इन्द्रियान्तःकरणरूपाणि स्वस्वकार्यं स्वयमेव कुर्वन्ति । न तावता सदा वृत्तिप्रसंगः ; परस्पराकूतहेतुकत्वात् । यथा योद्धारः शाक्तीकधानुष्कादयः परस्परसंकेतबलेन शक्तिमेव धनुरेवाचादाय प्रवर्तन्ते, तद्वत् इन्द्रियकार्यमालोचनमनुसृत्य मनसो विकल्पे तमनुसृत्य बुद्धेरध्यवसाये प्रवृत्तिः । आकूतं नामात्र तत्तत्कार्याभिमुख्यमेव । एवं बुद्धिरपि मनः प्रवर्त्य इन्द्रियाणि व्यापरयतीति । बहुभवनमुपादानत्वोपयोगि; अभिध्यानं विलक्षणसंकल्पः निमित्तत्वोपादानत्वोभयोपयोगि । लिङ्गपदं सम्यक्सूत्रस्मारणाय । न केवलं चेतनान्तराशरीरभूतायां समष्टौ, चेतनान्तरशरीरभूतव्यष्टिविषयेऽपि परमात्मनः कारणत्वं कार्यत्वञ्चेति ज्ञापनाय चतुर्थः पादः । विकारजननीमिति द्वितीया प्रथमार्थे । पिबन्त्येनामिति दूरान्वयो वा । तेन परमात्मना अध्यासिता—अधिष्ठिता ध्यायते, अभिध्यानविषयीक्रियते । सूयते इति कर्तरि । उत्पादयतीत्यर्थः ॥ १६ ॥

(इति सर्वविशिष्टेश्वर एव कारणत्वकार्यत्वे)

द्वेधा भूतानि भित्त्वा पुनरपि च भिनत्त्यर्धमेकं चतुर्धा
तैरेकैकस्य भागैः परमनुकलयत्यर्धमर्धं चतुर्भिः ।
इत्थं पञ्चीकृतैस्तैर्जनयति स जगद्धेतुरण्डादिकार्या-
ण्यैदंपर्यं त्रिवृत्त्वश्रुति(रितर)रधिकगिरामक्षमैका निरोद्धुम् ॥ १७ ॥

तत्त्वान्तराणामीश्वराधीनत्वं व्यष्ट्याद्यारम्भवृत्तान्तैरपि व्यनक्ति द्वेधेति । स खल्वादिकर्ता स्वसृष्टानि पञ्च भूतानि द्विधा कृत्वैकैकं भागं स्थापयित्वा, अर्धान्तराणि चतुर्धा विभज्य तद्भागैः चतुर्भिर्भूतान्तराणामविभक्तान्यर्धान्तराण्यनुकलयति । यथोक्तम्—

"एवं जातेषु भूतानि प्रत्येकं स्युर्द्विधा ततः । चतुर्धा भिन्नमेकैकमर्धमर्धं ततः स्थितम् ॥

व्योम्नोऽर्धभागाश्चत्वारो वायुतेजःपयोभुवाम्। अर्धानि यानि वायोस्तु व्योमतेजःपयोभुवाम्॥ इति ।

ततः, "पञ्चधा विभक्तानां भागानां पञ्चस्वर्धान्तरेषु योजनमिति परोक्तं निरस्तम् । एवं पञ्चीकृतानां व्यष्टिकार्येषु विनियोगमाह इत्थमिति । महदादिभिश्चेति भाष्यम् , "महदाद्या विशेषान्ताः" इत्याद्युक्तेः । ननु, "हन्ताहमिमास्तिस्रो देवताः" इत्याद्यारभ्य, "तासां त्रिवृतं त्रिवृतमेकैकां करवाणि", "त्रिवृतंत्रिवृत-मेकैकामकरोत्" इति त्रिवृत्करणे श्रुते पञ्चीकरणादिस्मृतिरन्यपरा स्यादित्यत्राह ऐदंपर्यमिति । तात्पर्यमित्यर्थः । अत्रानन्यपराणां भूयसां च बलीयस्त्वम् , अनुक्तानामविरुद्धानामपेक्षितानामन्यतोऽपि ग्रा ह्यत्वं [च १] स्थापितम्। अभाष्यत च त्रिवृत्करणं पञ्चीकरणप्रदर्शनमिति ॥१७॥ इति पञ्चीकरणप्रक्रिया ॥

---

[illegible]— 'द्वेधा भूतानि' इति । सृष्टेषु तत्त्वेषु पञ्चीकरणनिरूपणस्य व्यष्टिसृष्टेश्च तत्त्वसृष्टौ कारणानामीश्वराधीनत्वप्रतिपादकेन पूर्वश्लोकेन का सङ्गतिरित्यत्र पञ्चीकरणस्य पूर्वोक्तोपपादकत्वेन सङ्गतिमाह—तत्त्वान्तराणामिति । तत इति । वचनविरोधादित्यर्थः । पञ्चस्वर्धेषु इति । पञ्चसु पञ्चमांशेषु इति भावः । यद्वा, पञ्चसु भूतेषु प्रत्येकं द्वेधा विभक्तेषु सत्सु एकैकस्मिन् अर्धे पञ्चधा विभक्ते एकैकस्य तेषामंशानां अविभक्तेषु पञ्चस्वर्धेषु योजनमित्यर्थः ॥ १७ ॥

[illegible]—श्लोके भूतानीत्यस्य एकैकं भूतमित्यर्थः । अर्धमेकमिति । द्वयोरर्धयोर्मध्ये एकमित्यर्थः । अनुकलयति—मेळयति । भेदनयोजनादेः पुरुषमन्तरेणासंभवादपि परमात्मा सिद्धः । श्रुतञ्चेदम् , तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति । विभागेयत्तायां प्रमाणं दर्शयति एवं जातेष्विति । तत इति । चतुर्धेति स्पष्टनिर्देशादित्यर्थः । पञ्चधेति । पञ्चीकरणं हि भागपञ्चकविधानम् । तत् एकैकभूतस्या-प्यर्धांशे इति परेषामाशयः । प्रथमतो द्वेधा विभज्य एकस्यार्धस्य चतुर्धाविभागेऽपि पञ्चीकरण-सिद्ध्या स्मृतिविरोधाच्च तदयुक्तम् । वस्तुतः पञ्चीकरणमित्यस्य एकैकभूतं पञ्चमयं क्रियत इत्यर्थः । विभागरीतिस्तु प्रमाणान्तरगम्या । अत एव महदादिना सप्तीकरणमपीष्यते । न तत्र महदादेरीदृश-विभाग उक्तोऽस्तीति । महदादिभिरिति । अध्यवसायाभिमानहेतुतया व्यष्टौ महदादेरपेक्षित-त्वादिति भावः । अन्यपरेति । त्रयाणामेव देहे उपादानत्वम् वाय्वाकाशयोरविभागेन निमित्तत्व-मात्रम् ; यथा तार्किकैस्तत्र तत्र देहे एकमेवोपादानमुच्यते, तद्वदिति शंकितुराशयः । छान्दोग्यश्रुतौ भूतत्रयमात्रप्रस्तावात् त्रिवृत्करणमुक्तम् । यथा तावन्मात्रश्रुतेः भूतान्तरतदुत्पत्तिनिषेधकत्वं न भवति, तथा स्मृतिप्रमितपञ्चीकरणनिषेधकत्वमपि नेति भावः । अनन्यपराणामिति । ननु "त्र्यात्मकत्वात्तु भूयस्त्वात्" इति सूत्रकारेणापि त्रिवृत्करणमेवोक्तम् , "भिपृत्कुर्वेन उपदेशात्" इति चेन्न चेत्—ताव-

**कार्यं नैवारभेरन् समधिकमणवः सर्वतस्संप्रयुक्ताः**
**दिक्संयोगैकदेश्यात् न घटत इह ते दिक्कृतोऽप्यंशभेदः ।**
**बुद्धेस्त्वंशानपेक्षा स्फुरति विषयिता विश्रमस्त्ववस्तु दृष्टे**
**नो चेत् आरम्भकांशप्रभृतिषु नियता दुर्निवाराः प्रसङ्गाः ॥ १८ ॥**

ननु पञ्चीकरणाभिधानात् पञ्चसु भूतेषु स्वनस्सभागत्वम्, व्यष्टिसमष्टिभावः, भूतांशानां चात्यन्तभिन्नत्वं समानन्यायतया प्रकृतिपर्यन्तेषु तत्त्वान्तरेष्वपि तत् सर्वं सिद्धम् । भूतभागानां चात्यन्तभेदो वेणुरन्ध्रश्लोकेऽभाष्यत । एवं सति अणुसमाहार एव प्रकृतिरिति स्थिते, "महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्" इत्यौलूक्ययोपालम्भो न युक्त इत्यत्राह **कार्यमिति** ॥ अयं भावः—अनन्यपरशास्त्रसिद्धेष्वर्थेषु, "श्रुतेस्तु शब्दमूलत्वात्" इति न्यायेन गत्यन्तराभावे काचित् गमनिका स्वीकार्या । अनुमेयेषु तु यथा दृष्टान्तं सिद्धिः । अन्यथाऽतिप्रसङ्गात् । ततश्चावयविवादिनां अवयवाः स्वभागैर्मिथस्संयुज्यावयविनमारभन्त इति सिद्धान्तः । एतच्च द्व्यणुकावधि निर्विघातम् । द्व्यणुकारम्भे तु निरवयवा अणवोऽवयवा इति कल्पितम् । तत्रैवं प्रसङ्गावतारः—यदि परमाणवः स्वांशतस्संयुज्यावयविनमारभेरन्, तदा तदंशः अवयवरूपः तदन्यो वा । आद्ये तस्यापि तदेत्यनवस्था । अन्यस्तु स्वाभाविकः, औपाधिको वा । पूर्वत्र भिन्ना

---

[illegible] — 'कार्यं नैवेति । नन्विति । भूतांशानामिति । विजातीयभूतान्तरांशसंयोगादत्यन्तभिन्नत्वमित्यर्थः । नन्वत्र निरवयवत्वानुपपत्त्या परमाणुकारणवादनिरासः क्रियते ; तत् प्रकृतिकारणवादेऽपि समानम् ; सावयवकार्यजनकत्वेन सावयवत्वप्रसङ्ग इत्यादिदूषणपातादित्यत्राह—अनन्यपरेति । पूर्वत्रेति । अंशस्य स्वाभाविकत्वे तस्यैकदेशरूपत्वात् परमाणुन्चेनाभेदः, अंशत्वेन भेदश्चेति एकस्यैव

[illegible] — न्मात्रप्रतिपादकतद्विषयवाक्यस्मारणाय तथा प्रयोगः ; अतो न पञ्चीकरणनिषेधः; वाक्यस्यान्यपरत्वात् । अनुक्तमन्यतो ग्राह्यमिति च सर्वसंमतम् । अनपेक्षितमपि गृह्यते अविरोधात् । यथा विकृतौ वैकृताङ्गानि । किं पुनरपेक्षितत्वे । देहान्तरप्राप्तये गच्छतश्च जीवस्य पञ्चभूतमयत्वं बृहदारण्यके (6-4)श्रुतम्, "पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयोऽतेजोमयः काममयः" इति । अत्राप्तेजसोर्मध्ये वाय्वाकाशघटनं क्वचिदेतदनुक्तावपि भूतत्रयतुल्यमेतयोर्ग्रहणं ज्ञापयितुम् । अतेज इति महदहंकारग्रहणम् । सूत्रकारश्च तत्रतत्र 'अपि चैवमेके' इत्येवमनुक्तमपि ग्राह्यमिति स्थापयति ।

ननु स्वच्छन्देनागमेन (११) इत्यत एव अनागमिकपरमाणुवादस्य निरस्ततया संप्रति वैदिकसृष्टिनिरूपणमध्ये तार्किकनिरसनस्य कः प्रसंग इत्यत्रावतारयति नन्विति । निरपेक्षैकप्रकृतिमूलकत्वं जगत आगमगम्यमिति मत्वा तार्किकाः तूष्णीं स्थिताः इदानीं पञ्चीकरणादिना नानावयवमेलनायत्तां सृष्टिं श्रुत्वा, 'महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति' इति अवयव्युत्पत्तिश्चाऽऽलक्ष्य प्रकृतिकार्यत्वश्रुतेः परमाणुकार्यत्वमेवार्थ इति प्रत्यवतिष्ठन्ते इति संगतिः । ननु तार्किकमत इव वेदान्तिपक्षेऽपि ब्रह्म निरवयवं किं कार्त्स्न्येन कार्यरूपेण जायते उतैकांशेनेति विकल्प्य दूषणस्य तुल्यत्वात् कथं श्लोके एवं दोषोद्भावनमित्याशंकायाम्—तर्कमूलकविकल्पदूषणादिकं तर्केण वस्तुसाधन एव भवेत् ; न तु श्रुत्या साधने ; यथा प्रत्यक्षसिद्धेऽर्थे इत्याह अनन्यपरेत्यादि । स्वाभाविक इति । अंशशब्दः अवयवे, धर्मविशिष्टधर्म्यंशरूपे स्वरूपे, घटाकाशादिवत् उपाधिकृतप्रदेशे च प्रयुज्यते । तत्र धर्मिस्वरूपाभिप्रायेण स्वाभाविक इत्युक्तम् । भिन्नाभिन्नतेति ।

भिन्नता स्यात् । उत्तरत्रोपाधिसंबन्धेऽप्यंशभेदो दुर्वच. । परिशेषात् तन्निरपेक्षसंयोगैरन्योन्यानाघ्रातभागभेदरहितैरणुभिरारम्भः स्यात् । त्यक्तस्तर्हि सप्रतिघत्वविरोधः । सर्वेषु च परमाणुष्वेकपरमाणुप्रदेशमात्रावस्थितेषु स्वाधिकदेशव्यापिकार्यारम्भो न स्यात् (सिध्येत्) । न खल्ववयवास्पृष्टे कुत्रचित् प्रदेशेऽवयवी तिष्ठेत्, अदृष्टेरनिष्टेश्च ॥ अवयवनाशादवयविनाशे क्षणमनाधारोऽवयवीति चेत् — तथा कल्पयताऽपि त्वया पूर्वं तन्तुसंधानवच्छिन्नप्रदेशे पटस्य वृत्तिर्न कल्पिता । एवमधिकारम्भानुपपत्तौ मेरुसर्षपादिविचित्रभेदासिद्धिः । सेयमसिद्धं सिषाधयिषतस्सिद्धहानिः । तथाचासिद्धसाधनं निर्मूलम् ।

---

ऌघु— कार्यं नैवेति । सर्वपरमाणूनामेकपरमाणुप्रदेशमात्रेऽवस्थानेऽपि कार्यमधिकदेशव्यापि भविष्यतीत्यत आह—नखल्विति । तथा च सिद्धसाधनं निर्मूलमिति । पक्षासिद्धेरिति भावः ॥

Ꮎ००ग — भिन्नाभिन्न[त्वा ?]ङ्गीकारवादः स्यादित्यर्थः । उपाधिसंवन्धेऽपीति । परमाणुः तदुपाधिना कार्त्स्न्येन संबध्यते वा, अंशतः संबध्यते वा । कार्त्स्न्येन सम्बन्धे उपाधिकल्पनं व्यर्थम् । तस्यांशभेदकत्वाभावात् । अंशतः सम्बन्धे-सोंऽशोऽवयवरूपः, तदन्यो वा । अन्योऽपि स्वाभाविकः, औपाधिको वेति विकल्पस्य तद्दूषणानां च प्रसङ्गे अनवस्था स्यादिति अंशभेदो दुर्वच इति भावः । तन्निरपेक्षेति । तच्छब्देन अंश उच्यते । त्यक्तस्तर्हीति । सप्रतिघत्वविरोधो नाम मार्दवरहितगुरुद्रव्ययोरेकप्रदेशवर्तित्वेऽन्योन्याभिघातरूपविरोधः । स च परमाणूनां कार्त्स्न्येन संयोगे परित्यक्तः स्यादिति भावः । इदं च दूषणान्तरम् । श्लोकोक्तं दूषणमाह—सर्वेषु चेति । अनिष्टेरिति । इष्टिः इच्छा ।

ऌी— कार्त्स्न्यपक्षाद्भिन्नवद्व्यवहारेऽपि अभिन्नत्वमेवेति कार्त्स्न्यपक्षे इव दोष इति भावः । कार्त्स्न्यपक्षगतं दोषमेवाह परिशेषादिति । तन्निरपेक्षेति । अंशनिरपेक्षेत्यर्थः । अनाघ्रातेति । अनाश्रयेत्यर्थः । तर्हीति । एकैकपरमाणुसंयोगाश्रयभागः अन्यान्यपरमाणुसंयोगानाश्रय इत्यस्याभावे इत्यर्थः । सप्रतिघत्वविरोध इति । मूर्तानां समानदेशत्वाभावः सप्रतिघत्वं स्वदेशे अन्यवस्तुसंबन्धप्रतिघातः । तद्रूपविरोध इत्यर्थः । अनिष्टापत्तिरपि स्यादिति मुख्यं दोषान्तरमाह सर्वेषु चेति । ननु कारणपरिमाणात् कार्यपरिमाणे आधिक्यमिष्टमेवेत्यत्राशयं व्यनक्ति नखल्विति । अनिष्टेश्चेति । अन्यथा बदरपरिमाणकार्योत्पादकेभ्योऽवयवेभ्योऽपि पर्वतपरिमाणकार्योत्पत्तिः स्यादिति भावः । अत औपाधिकांशतोऽप्यवयविनि अवयवासमवेतत्वं तदनिष्टम् । कदाचित् पूर्णावयविनोऽप्याधारासमवेतत्वमिष्टमिति शंकते अवयवेति । अत एव अयुतसिद्धलक्षणे अविनश्यदवस्थमिति पदप्रयोगः । न कल्पितेति । अन्यथा द्वित्रतन्तुभ्योऽपि द्विपशरीराच्छादकपटोत्पत्तिः स्यादिति । भेदासिद्धिरिति । सर्वं परमाण्वेव स्यादिति कुतो भेदः ; कुतश्च तत्प्रत्यक्षमिति । ननु किं दृष्टेऽनुपपन्नं नामेत्यत्राह सेयमिति । परमाणोरदृष्टत्वात् मेरुसर्षपादितोपि सूक्ष्मतरोऽवयवः सावयवः, परिमाणतारतम्यं क्वचिद्विश्रान्तमित्येवमन्यथाव्याकरूपं परमाणु साधयितुमिच्छतस्ते सिद्धस्य पक्षस्य हेतोश्चासिद्धिरेव स्यादित्यर्थः । नन्वस्मदनुमानेन परमाणुसिद्ध्यनन्तरमेव त्वया विचित्रभेदासिद्धिरूपदूषणं वाच्यम् । न तु प्राक् ; परमाणवोऽधिकपरिमाणानारम्भकाः कार्त्स्न्येन संयुक्तत्वादिति हेतुपक्षाद्यसिद्धेः । पश्चात्तु धर्मिग्राहकप्रमाणबाधात् न तन्निषेध इत्यत्राह तथाचेति । त्वदनुमानकालेऽस्माभिः प्रतितर्केण तत्पराहतिः क्रियते, न तु पृथगनुमानप्रमाणोपन्यासः क्रियते । यदि परमाणुरेवंभूत इष्येत, तदैतदनिष्टमिति । आरोपात्मकतर्कस्थले वस्तुसद्भावो नापेक्षित इति त्वदनुमानकार्यं सत्तर्कानुगृहीतप्रमाणरूपमूलरहितमिति भावः । श्लोके सर्वेत इत्यस्य कार्त्स्न्येनेत्यर्थः ।

ननु परिमितानां सर्वेषां दिग्भेदेन भागभेदे दृष्टे परमाणुष्वपि तथाऽङ्गीकारो दुर्वार इत्यत्राह **दिक्संयोगेति** । दिक्संयोगायत्तोऽपि हि भागभेदः सावयवेष्वेव दृष्टः ; त्रसरेणोरपि त्वया सावयवत्वक्लृप्तेः । निरवयवेषु तु विश्वव्याप्त्यैकदिक्कृतत्ववादिनस्ते तन्निबन्धना भागक्लृप्तिरशक्या । तदुपाधिसंयोगात्तु स्यादपि, यदि तत्राप्यंशानंशविकल्पक्षोभोऽतिलङ्घ्येत । अतः सर्वदिगुपाधिसंयोगानां परमाणुषु पृथक्प्रदेशरहितानां कथमौपाधिकभागभेदापादकत्वम् ? यदि चानंशभेदेन संयुक्ता उपाधयः कश्चिद्भागभेदकः, तर्हि परमाणव एव तथा किं न स्युः ? वृथा चैवमंशक्लृप्तिरभागेन संयोगावस्थितेरिति । तदिदं सर्वमभिप्रेत्याहुः —

"षट्केन(ट्कोण)युगपत् योगात् परमाणोष्षडंशता । षण्णां समानदेशत्वे पिण्डः स्यादणुमात्रकः ॥" इति ॥

---

ऋ— वृथा चैवमिति । एवं=परमाणूनां तथात्वे । अन्यतोऽपीति । परमतेनापीत्यर्थः ।

टिप्पणी—दिक्कृतभागभेदस्य परिमितेषु आकाशाद्यपेक्षया प्रसिद्धव्याप्तिग्रहणसौकर्यार्थमुक्तम्—परिमितानामिति । परमाणुकारणत्वनिरासार्थं त्रसरेणुपर्यवसानं वदता परिमितस्य तस्य निरवयवत्वं स्वीकृतम् ; तथा च निरवयवत्वेऽपि भागभेदस्य सत्त्वात् व्यभिचार इत्यत आह—त्रसरेणोरित्यपीति [.. रेणोरपीति ?] । निरवयवेषु इति । यद्यपि पूर्वादिदिग्भेदमङ्गीकुर्वतः तत्तद्दिक्कृतभागभेदोऽङ्गीकर्तुं शक्यः, तथापि एकदिक्कृतत्वादिनाऽशक्य इति भावः । तदुपाधीति । दिगुपाधिभूतोदयाद्र्यादिसंयोगादित्यर्थः । षट्केनेति । एकस्य परमाणोः परितः पूर्वादिभागचतुष्टयेन उपरि अधश्च परमाणुषट्केन युगपद्योगे मध्ये स्थितस्य परमाणोः षडंशता स्यात् । तथा च अंशतः संयोगे सावयवत्वादि दूषणं स्यादिति भावः । कार्त्स्न्येन संयोगे दूषणमाह—षण्णामिति ।

श्री— द्वितीयपादमवतारयति नन्विति । अवयवाभावेऽपि तत्तद्दिक्संयोगकारितो भागभेद इष्यत इति भावः । दूषयति दिगिति । परिमितानामिति किं सावयवदृष्टान्तीकरणेनोच्यते, आहो निरवयवात्मादिदृष्टान्तीकरणेन । आद्ये परमाणोः सावयवत्वापत्तिः । अन्त्ये दिक्संयोगो नाम किं साक्षात् त्वदिष्टदिग्द्रव्यसंयोगः तदुपाधिसंयोगो वा । नाद्यः, तस्य विभुत्वात् । नान्त्यः, उपाधिसंयोग एव परमाणौ कार्त्स्न्येन चेत्, उपाध्यन्तरसंयोगो न स्यात् । सर्वसमावेशे चोपाधित्वमेव न स्यात् । तथेति ; भागभेदका इत्यर्थः । विवक्षितं निगमयति वृथाचेति । मूले दिक्संयोगैकदेश्यादित्यस्य *प्राचीप्रतीच्यादिदिग्रूपदिगुपाधिसंयोगानामपि ऐकदेश्यात्—एको देशो येषां ते तद्भावात् अंशभेदं* विना एकत्रैव स्थितत्वात् दिक्कृतांशभेदोऽपि नास्तीत्यर्थः । तत् सिद्धमनेकरूपपरमाणुमेलनेऽप्यधिकपरिमाणाभाव एवेति ।

अत्र संवादं दर्शयति तदिदमिति । षट्केनेति । अस्य सर्वसंमतोऽर्थस्तावत्—एकस्य परमाणोः *परमाणुषट्केन संयोगः प्रदेशभेदेनैव वाच्यः । प्रदेशश्चावयव एवेति तस्य षडंशत्वापत्तिरिति* कुतो निरवयवत्वं परमाणुनश्च । संयोगस्य प्रदेशं विना व्यापित्वांगीकारे सहस्रपरमाणुमेलनेऽपि अणुपरिमाणात् पूर्वसिद्धादतिशयो न स्यादिति । ननु तार्किकैः द्व्यणुकत्र्यणुकस्वीकारात् अणुद्वयमणुषट्कं वा गृहीत्वा दोषे वक्तव्ये, षड्भिः परमाणुभिः सप्तमस्य कस्यचित् संयोग इत्यस्य तदनुक्तत्वात् तद्ग्रहणेन कथमिदं दूषणमिति चेत्—अत्र विस्तरोऽस्मदीये वैशेषिकरसायने । सारांशस्त्वयम्—अणोरण्वन्तराक्रान्तांशवत् अनाक्रान्तांशोऽप्येक इति मत्वा एवमुक्तिः । वस्तुतः त्रसरेणुग्रहणेन दोषोद्भावने युगपत् पञ्चसंयोगादेकत्वेत्येव वक्तव्यम् । तदपि दुर्वचम्, एकैकस्मिन् साक्षात्पञ्चमेलनाभावेऽपि त्रसरेणु-

ननु बुद्धिस्तावत् सर्वतन्त्रसिद्धा । साधृतीत्यपि हि तां माध्यमिको मन्यते । सा चैकाऽप्यनेक-विषया दृष्टा, इष्टा च । निरंशा च सा प्रत्येकं कार्त्स्न्येन अंशतो वा विषयीकुर्यात् ? नाद्य ; अन्यानुल्लेखप्रसङ्गात् । न द्वितीयः, निरंशत्वादेव । तत्र चेत् कश्चित् समाधिः, अणुष्वपि तथा स्यात् । तत्राह बुद्धेस्त्विति । तुः शङ्कानिवृत्त्यर्थः । विषयित्वं ह्यशानपेक्ष[त] यैव दृष्टम् , न ह्यन्यतोऽपि तस्यान्यथादृष्टिः । अतो यथोपलम्भमेकवत् अनेकोऽपि विषय एकस्या बुद्धेः ॥ एवमेकस्य निरंशस्यानेकबुद्धिविषयत्वमपि निरूढम् । अवयव्यारम्भकसंयोगस्तु त्वयाऽपि न कचिदंशनिरपेक्ष उक्तः । क्वचिद्विशेषाङ्गीकारे नियामकाभावः ॥ अथ संघातारम्भकसंयोगेऽपि समः प्रसङ्ग इति ॥ न समः ; संयोगसाध्यसंघाताभावात् ।

---

ठि॰ण॰ग्र— ननु निरवयवः कश्चिदात्मादिरनेकबुद्धिविषयः सम्प्रति[पन्नः । तत्र?] कार्त्स्न्येन अंशतो वा विषयः स्यात्? न प्रथमः-अन्यबुद्धिविषयत्वं न स्यात् । नेतरः, निरंशत्वादेव ; तत्र यत् समाधानं-तद् अणुष्वपि समानमित्यत्राह-एवमिति । ननु परमाणवोंऽशनिरपेक्षाः सम्बध्यन्ते, निरवयवत्वात्, बुध्यादिवत् इति, परमाणुसम्बन्धः अंशनिरपेक्षः निरवयवसंबन्धत्वात् बुद्ध्यादिसंबन्धवत् इति वा अनुमानेन अणुषु अंशनिरपेक्षसंबन्धः साध्यत इत्यत्राह—अवयव्यारम्भकेति । अत्र परमाणुसंयोगः अंशसापेक्षः अवयव्यारम्भकसंयोगत्वात्, तन्त्वादिसंयोगवत् इति प्रत्यनुमानं विवक्षितम् । अवयव्यारम्भकश्चासौ संयोगश्च अवयव्यारम्भकसंयोगः, तन्त्वादिति वा । आत्ममनस्संयोगादौ व्यभिचार-वारणाय अवयव्यारम्भकेति विशेषणम् । अथेति । त्रसरेणुषु कारणत्वपर्यवसानमभ्युपगम्य परमाणु-कारणत्वं दूषयतस्तवापि पक्षे त्रसरेणुसंयोगस्य(गः?) आधारांशसापेक्ष(क्ष॰?) संघातारम्भकसंयोग-त्वात् तन्त्वादिसंयोगवदिति त्रसरेणुसंयोगेऽपि अंशसापेक्षत्वप्रसङ्गः सम इत्यर्थः । संयोगसाध्येति । ळी-संभवात्। अतो द्व्यणुकादिसदसद्भावोपेक्षया सामान्यत इदमुच्यते। लोके पदार्थेषु चतुर्दिगवच्छे-देन अधश्चोर्ध्वञ्च पदार्थानां संबन्धो दृष्टः। तथा परमाणावपि परमाण्वादिसंबन्धः संभाव्यते । अव-यवसंयोगेनावयव्यारम्भवादी तुल्यन्यायादीदृशं संयोगमपि न वारयेत्। तत्र सांशत्वमधिकपरिमाणा-भावो वेति दोष इति। एवञ्च षट्केनेति षण्णामिति चोपलक्षणम्। दिक्संबन्धवत् विदिक्संबन्धस्यापि सुग्रहतया दशदिग्गतपरमाणुसंयोगे दशांशता स्यात्, अणुद्वयसंयोगे च द्व्यंशतेत्येवं भाव्यम् । एवमत्र षड्भिः पार्श्वैः संयुज्य द्व्यणुकमारभत इति श्रीभाष्यार्थोऽप्युपलक्ष्यः । एवमेकपार्श्वे परमाणु-नैकेन, पार्श्वान्तरे परमाणुना परेण च मध्यपरमाणोर्योगे तस्य षडंशता भवतीत्यप्यर्थः स्यात् । एव-मुपलक्षणत्वाशयेनेव अत्र तदिदमित्यादिवाक्यप्रवृत्तिः । उपरि आरम्भकसंयोगप्रस्तावस्यैव विशिष्य करिष्यमाणतया यथायथं छिन्नपटसप्तादिमेलनेऽपि कार्यं भवेदित्याशयेनैव युक्तिरिति वा । न्यायदर्शने (४-२-२४) संयोगोपपत्तेश्चेति सूत्रमेतत्सर्वसंग्राहकम् । एवं तार्किकखण्डकं बौद्धं प्रति तार्किक-प्रश्नमुद्भाव्य परिहरति बुद्धेस्त्विति । सांवृतीति । समन्तात् वृतिः सर्वसाधारणमावरणम् । तिमिर-कामलादीनां कतिपयप्राणिमात्रावारणत्वात् तद्वारणाय समिति । तच्चाऽऽवरणमज्ञानमेव । तत्कल्पि-तत्वात् बुद्धिरपि सांवृतीत्याह शून्यवादी । विषयित्वं हीति । एकविषयनिरूपितविषयिता बुद्धौ यदि कार्त्स्न्येन स्यात्, तर्हि विषयान्तरनिरूपितविषयिता तस्यां बुद्धौ न स्यादिति न वक्तुमुचितम्; अनेकविषयकत्वानुभवादिति । अनेकबुद्धिविषयत्वमिति । युगपदनेकपुरुषीयज्ञानविषयत्वानीत्यर्थः । आरम्भकसंयोग इति । आरम्भकद्रव्यमेकांशेन संयुज्यते अवयव्यारम्भकत्वादिति विशिष्याऽऽपादन-मिति भावः । अवयविनमतिरिक्तमस्वीकुर्वताऽपि बौद्धेन परमाण्वादिना संघातस्येष्टत्वात् तुल्यो दोष इति शंकते संघातेति । संयोग—स्वामित्वादिसंबन्धप्रतिबन्दीः क्रमेण परिहरति संयोग-

तत्स्वीकारे हि अवयविवाद एव वरम् ॥

संयोगस्तर्ह्येकोऽनेकश्चित्सन् अंशानंशविकल्पदौस्थ्यं नातिक्रामेत्। न ह्यसौ नास्त्येव; सिद्धयोस्साध्यतया दृष्टेरिति। तदपि न; विषयित्ववन्निस्तारात्। सोऽपि हि द्वयोर्न स्वांशाभ्यां वर्तत इति दृश्यते। एवं स्वामित्वादयोऽपि न प्रतिबन्दिः ॥

अस्तु तर्हि संयुक्तप्रतिबन्दिः। मूर्तैर्विभूनां संयोगोऽस्ति न वा? न चेत्, अन्यतरकर्मजसंयोगलोपः; अविशेषात्। अस्ति चेत्, यदि कात्स्न्र्येन विभुद्रव्यमेकेन स्पर्शवता संयुज्यते, कथं स्पर्शवदन्तरेण तस्य संयोगः स्यात्? अंशतश्चेत् सावयवत्वप्रसङ्गः। न हि विभुद्रव्यस्यावयवित्वं संघातत्वं वा सुवचम्। पूर्वत्र

---

Ⓒल्लला— हेतोः स्वरूपासिद्धिरिति भावः। ननु पदार्थानां प्रत्येकसंयोगानन्तरं संघात व्यवहारात् संघातस्य संयोगसाध्यत्वमस्तीत्याशङ्काभिप्रायेणाह–तत्स्वीकारे हीति। तत्र युगपत्, पौर्वापर्येण वा उत्पन्नसंयोगानामेव संघातव्यवहारविषयत्वात् तदतिरिक्तकार्यकारणद्वयादर्शनेः तत्स्वीकारादपि इह तन्तुषु पट इत्यादिप्रतीत्यनुसारेण पटशब्दस्य संघातपर्यायित्वाभावेन अवयव संयोगसाध्यावयविकल्पनमेव वरं स्यात् इत्यभिप्रायेण परिहरति—अवयविवाद एव वरमिति सिद्धयोः संबन्धिनोः संयोगस्य साध्यतया दृष्टेरिति भावः। विषयित्वदिति। बुद्धेरिति शेषः कात्स्न्र्यांशविकल्पानुपपत्त्या संयोगो नास्तीत्यभिप्रायेणाह—न चेदिति। सामग्रीसद्भावे कार्यानुप पत्तिर्दुर्वचेति अभिप्रायेणाह–अन्यतरेति। विभूनां निष्क्रियत्वात् मूर्तस्य तैः संयोगाभावे मूर्तस्यापि कस्यचित् निष्क्रियत्वात् अन्यतरकर्मजसंयोगलोप इति भावः। (?) दृष्टापादक संयोगलोपप्रसङ्गश्च विवक्षित इति कस्मिंश्चित् कोशे वर्तते। ननु वृक्षादौ अङ्गीकृतस्य श्येनादिकर्मजसंयोगस्य कथं लोपप्रसङ्ग इत्यत आह—अविशेषादिति। *अन्यतरकर्मादिसामग्र्याः कार्यानुत्पादकत्वस्याविशेष-*

ஸ்ரீ— स्तर्हीत्यादिना। द्विष्ठो हि संयोगः। तत्र एकनिरूपिताधेयता संयोगे किं कात्स्न्र्येन, उतांशेन। आद्ये तत्रान्यनिरूपिताधेयता न स्यात्। अन्त्ये सांशत्वापत्तिरिति शंका। अत्र बौद्धो मध्ये पृच्छति, संयोग इति न कश्चित् पदार्थः, द्वयोर्द्रव्ययोः सान्तरालत्वमसंयुक्तत्वम्; निरन्तरत्वमेव संयोगः। स चाभाव एवेति। तद्दूषयति नहीति। अभावः संयोग इति वदता अधिकरणद्वयातिरिक्तं किमपि नेति हि मन्यते। तदयुक्तम्। सान्तरत्वदशायामपि द्रव्ययोः सिद्धत्वात्, ततो जायमानस्य क्रियासाध्यस्य तदतिरिक्तत्वावश्यम्भावादिति॥ संयोग इष्यते; प्रतिबन्दिस्तु न; यथा बुद्धेरंशाभावेऽपि एकनिरूपितविषयता, अन्यविषयता सह तत्र वर्तते, तथा संयोगे निरंशे वस्तुद्वयनिरूपिताधेयताद्वयं स्यादित्याह विषयित्ववदिति। स्वामित्वेति। नानावस्तुस्वामिनि एकनिरूपितस्वामित्वमन्यनिरूपितस्वामित्वेन सहांशावच्छेदमन्तरा वर्तते, तथा उभयस्वामिके वस्तुनि, उभयनिष्ठे एकस्मिन् स्वामित्वे उभयनिरूपिताधेयताद्वयमंशनिरपेक्षमस्ति; अनुभवात्। न त्वत्र; अंशापेक्षाया एव दर्शनादिति भावः। अथ गुणादिग्रहणे प्रतिबन्दित्वं न भवतीति कृत्वा द्रव्यं गृहीत्वा पृच्छति तर्हीति। अत्रोच्यत इत्यन्तमेतत्पूर्वपक्षप्रपञ्चनम्। ननु संयुक्तमिति सांशंवस्तु उच्यते, निरंशं वा। नाद्यः; तत्रांशभेदेनैव संयोगात्। नान्त्यः; निरंशस्य परमाणोः संप्रतिविवादास्पदत्वादित्याशंकायाम्, अणुविषयं पश्चात् वक्ष्यन् विभुनिरंशविषयकतया स्वाशयमाविष्करोति मूर्तैरिति। अन्यतरकर्मजेति। "अन्यतरकर्मज उभयकर्मजः संयोगजश्च संयोगः" इति कणादसूत्रम्। तत्र श्येनपर्वतसंयोगः श्येनक्रियामात्रजन्यत्वादन्यतरकर्मजः; सोऽपि न स्यात्। मूर्तक्रियामात्रेण विभोस्संयोगास्वीकारे इत्यर्थः। कथमिति। तथा च

स्पर्शवत्त्ववृत्तत्वकार्यत्वानित्यत्वादिप्रसङ्गात् । उत्तरत्र नानात्वभेदाभेदयोरन्यतरापातात् । तत्र च विभुद्रव्यांशाना मिथस्संयोगोऽस्ति, न वा । अस्ति चेत् , तत्रापि स एव प्रसङ्ग । नास्ति चेत् , असहतरूपता स्यात् ॥ औपाधिको विभूनामंशभेद इति चेन्न , उपाधिसंयोगेऽपि अंशादिविकल्पानपायात् ॥ निरंशेऽपि संयुज्यमानस्वरूपेण तद्भेदोपाधिरिति चेन्न , स भेद उपाधिना च्छिन्ने चेत् , अवयवविश्लेषात्मा स्यात् । अच्छिन्ने (अविच्छिन्नेषु) तु भेदाभेदवाद एव शरणम् ॥ अत एव स्वसमानपरिमाणेषु विभुप्रदेशेषु तत्तदुपाधिसम्बन्धस्थेति निरस्तम् , तत्प्रदेशभेदस्यैव मृग्यमाणत्वात् ॥ विभुद्रव्यमेव तत्तन्मूर्ततुल्य परिमाण जायत इति चेन्न, विरोधात् । उक्तदोषानतिक्रमाच्च ॥ काल्पनिकांशभेदेन मूर्तसंयोग इति चेत् , तर्हि वस्तुतस्त्वखण्डेनेत्युक्त स्यात् । अंशभेदकल्पना च किं विभुद्रव्यस्वरूपमात्रे उत तदंशे एवेति दुस्तरो गर्त ॥ निरंशानामपि स्वभावत एव विभूनामनेकमूर्तसंयोगक्षमत्वमिति चेत् , अणूनामप्येतदस्तु , अविशेषात् ॥ एव त्रसरेणुप्रतिबन्दिश्च भाव्येति ।

---

ஸர்— उक्तदोषानतिक्रमात्—विभुद्रव्यस्य तत्तन्मूर्तितुल्यपरिमाणतया जनने कृत्स्नस्य उतैकदेशस्येति विकल्प पूर्वोक्तदोषस्य मूर्तान्तरासम्बन्धस्य सावयवत्वप्रसङ्गदोषस्य वाऽनतिक्रमणीयत्वात् । एव त्रसरेणुप्रतिबन्दिश्चेति । त्वन्मते निरवयवस्य त्रसरेणोर्मूर्तान्तरसम्बन्धाभावप्रसङ्ग इत्यर्थ । विभज्यमानेष्वभावपरिशेषायोगो अणुपरिमाणतारतम्यविश्रान्त्यनुमानस्यानुग्राहकतयोक्त ।
ஆனா— दित्यर्थ । स्पर्शवत्तेति मूर्तोपलक्षणम् । द्रव्यत्वे सति अवयवारब्धत्व अवयवित्वम् परिच्छिन्नपरिमाणत्व मूर्तत्वम् । आदिशब्देन क्रियावत्त्वादिक गृह्यते । उत्तरत्रेति । मापादिसघातवत् पृथक्सिद्ध्यर्हत्वे नानात्वप्रसङ्ग । जातिव्यक्त्यादिवत् तदनर्हत्वे भेदाभेदप्रसङ्ग इति भाव । तत्रेति । सांशत्वपक्ष इत्यर्थ । स एवेति । कृत्स्नांशदोषविकल्पप्रसङ्ग इत्यर्थ । अविच्छिन्नेष्विति । विच्छेदाभावेन एकत्वात् अभेद , उपाधिकृतो भेदश्चेति भेदाभेदप्रसङ्ग इत्यर्थ । प्रदेशभेदस्येति । उपाधिसम्बन्धानन्तर तदवच्छिन्नप्रदेशभेदज्ञानम् प्रदेशभेदज्ञानानन्तर अस्मिन् अंशे उपाधिसम्बन्ध इति उपाधिसम्बन्धज्ञानमिति अन्योन्याश्रयदोषेण प्रदेशभेदस्य मृग्यमाणत्वमिति भाव । उक्तदोषेति । अंशादिविकल्पानतिक्रमादित्यर्थ ।
வீ— सर्वमूर्तद्रव्यसंयोगित्वरूपविभुत्वभङ्ग स्यादिति । वृत्तत्व परिच्छिन्नत्वम् । नानात्वेति । एकमूर्तद्रव्यसंयुक्ताद्भेदो मूर्तान्तरसंयुक्त स्यात् । अभेदप्रतीत्या तस्यापीष्टौ भेदाभेदावतार । भेदाभेदवादे, 'येषाञ्च विरोध शाश्वतिक ' इति भेदाभेदमिति समाहार , अहिनकुलमितिवत् । तस्य नानात्वशब्देन द्वन्द्व । अतो द्विवचनोपपत्ति । तत्र चेति । सांशत्वपक्षे इत्यर्थ । एव दोषान्तरविस्तरो विभोर्निरंशत्वप्रतिष्ठापनाय । मात्र इति । अत्र स्वरूपमात्रे उतांशेऽपि आहो अंश एवेति पक्षत्रयपाठ स्यात् । दुस्तर इति नानात्वभेदाभेदादिक स्यादित्यर्थ । न्यायसिद्धाञ्जनादि दर्शित विप्रलम्भमशङ्कते निरंशानामिति । अव्याप्यवृत्तित्व संयोगस्वभाव । मूर्तसंयोग उपाधिनिरपेक्ष एव स्वोत्पत्तिवशात् प्रदेशभेदकल्पको भवतीति भाव । एव सिद्धान्तिवाचा वक्ष्यमाणीय परमाण्वाक्षेप तुल्यन्यायेन पूर्वपक्षी परिहरति अणूनामपीति । अंशाभावेऽपि अणो अण्वन्तर स्वसंयोगेन प्रदेशान्तरजननम् । तथा च पृथगारम्भो भवितुमर्हतीति । विभौ निरंशे उक्तम् सिद्धान्तसमतेऽणावपि तुल्यमित्याह एवमिति । त्रसरेण्विति । त्रसश्चासौ रेणुश्च त्रसरेणु जालसूर्यमरीचौ दृश्यमान चल रजोऽतिसूक्ष्मम् । तदतिरिक्तसूक्ष्मतमपरमाण्वनङ्गीकारेऽपि तस्य रजसोऽपलापायोगात्

अत्रोच्यते– यदि वय प्रदेशवर्तिगुणनिह्नवाय प्रवर्त्स्याम , तदा विभुप्रतिवन्द्या अणुष्वपि तत्सभव प्रदर्श्येत । किंतु अवयव्यारम्भकाणामवयवैरेव सयोग इति नियमस्य त्वयैवान्येषु सर्वेष्वङ्गीकारात् कल्प्येष्वपि तत्प्रसङ्गो दुर्वार इति ब्रूम । न चान्यत्रैवाय नियम इति स्थाप्यम्, [अ] तादृशानामणूनामदृष्टे, अनन्यथासिद्धलिङ्गाभावाच्च । यदि विभज्यमानेष्वभावपरिशेषायोगात्, परमाणुरपि सत्त्वरजस्तमसा सर्वापकृष्ट सघात इति सांख्यमतस्य निर्मूलत्वात्, महत्परिमाणतारतम्यविश्रान्तिवत् परिमाणतारतम्यत्वात् अणुपरिमाणतारतम्यविश्रान्तिरपि क्वचित् कल्प्येत– तत्राह विश्रमस्त्वस्तु दृष्टे इति। दृष्टे त्रसरेणौ विश्रमसभवे न मृग्य इत्यन्यत् । तथाच सिद्धसाध्यता ॥ यदि त्रसरेणुरेव परमाणु स्यात्, अप्रत्यक्षस्तर्हि स्यादिति चेत्, हन्त कुत्रैषा व्याप्ति ?

---

*टिप्पणी*— यदि वयमिति । यथा बुद्ध्यादौ प्रत्यक्षसिद्धत्वात् अशनिरपेक्षसम्बन्ध स्वाभाविक, तथा दृष्टतरप्रमाणान्तरसिद्धेषु विभुषु त्रसरेणुषु च अशनिरपेक्षस्वाभाविकसयोगो दुरपह्नव । परमाणुषु तु दृष्टानुगुण्येन कल्प्यमानेषु तादृशसम्बन्धे प्रमाण नास्तीति भाव । न चान्यत्रेति । अवयव्यारम्भकाणा सावयवे सयोगोऽवश्यम्भावीति नियमस्तत्वादिष्वेव न स्थाप्य इति भाव । यद्यय नियमोऽन्यत्र स्थाप्य, तर्हि परमाणुषु अवयवनिरपेक्षसयोग कथम्? अन्यत्र दृष्टत्वाद्वा, अनुमानेन वेत्यभिप्रेत्य आद्य दूषयति—अतादृशानामिति । द्वितीय दूषयति—लिङ्गाभावादिति । ननु कथ लिङ्गाभाव, अणुपरिमाणतारतम्य क्वचित् विश्रान्त, परिमाणतारतम्यत्वात्, सम्मतवत्—इत्यनुमानेन, स्पर्शवत् निरवयववृत्तिनिष्ठम्, अरूपवृत्तिनिष्ठजातित्वात् सङ्ख्यात्ववदिति अनुमानेन वा निरवयवाणुसिद्धेरित्यत आह—अनन्यथासिद्धेति । अणुपरिमाणतारतम्यस्य निरवयववृत्तिस्पर्शस्य च त्रसरेणुष्वेव विश्रान्ते लिङ्गमन्यथासिद्धमिति भाव । विभज्यमानेष्विति । विभिद्यमानेष्वित्यर्थ । यद्वा, परामृश्यमानेष्वित्यर्थ । ननु अणुपरिमाणतारतम्यस्य सांख्यमतसिद्धे सत्त्वरजस्तमसा सर्वापकृष्टसघातरूपे परमाणौ विश्रान्त्या अनुमानमन्यथासिद्धमित्यत आह—परमाणुरपीति । निर्मूलत्वादिति । तादृशपरमाणौ प्रमाणाभावादिति भाव ।

*वी*— तस्यैव सिद्धान्ते परमाणुत्वात् निरशत्वाच्च तत्रैकेनान्यस्य रजस कि कार्त्स्न्यनाशेन वा सबन्ध इति विकल्पे सयोगस्य स्वभावतो निरशोऽपि प्रदेशकलाकलापमित्येव वक्तव्यमिति भाव ।

सिद्धान्ती सर्वमिद स्वीकुर्वन् प्रकृते तद्वैषम्यमुपपादयति अत्रेत्यादिना । सयोगविषये अस्म कृतो विकल्पो न बोद्धवत् सयोगस्यापलापार्थ, न वा तत्प्रादेशिकत्वापलापार्थ । किंतु भवदुक्तनियम प्रदर्शनेन भवत्कल्प्यसूक्ष्मतमपरमाणुनिषेधार्थ इति भाव । कल्प्येऽपीति । दृष्टानुसारेणैव हि कल्पना भवतीति । अनन्यथासिद्धलिङ्गेति । अस्माभि दृश्यमानत्रसरेण्वतिरिक्तपरमाण्वस्वीकारात्, 'न हि दृष्टेऽनुपपन्न नाम' इति न्यायेनानन्यथासिद्धप्रत्यक्षेणाशत- सयोगो महासघातश्चेष्यते । भवता तु तत्रावयवावश्यकत्वस्थापनात् भवदगुल्यैव काणादभवनेत्रवेध क्रियत इति भाव । धर्मिग्राहकमानेनानुकूलतर्कसहितेन निरवयवपरमाणुसाधनादशक्यो वेध इति शका प्रदर्श्य, विश्रम इति मूलमवतारयति । भावपरिशेषणे साशत्वादिविकल्प इति अभावोऽवधिर्न कल्प्य, अभावाद्भावोत्पत्त्ययोगात् । सर्वस्याणोरपि सत्त्वादिलयरूपत्वात् साशत्वमेवेति सांख्यपक्षोऽपि न सत्त्वादीना गुणतया द्रव्याशत्वायोगादिति सत्यम् । तत्परमाणु न त्रसरेणुव्यतिरिक्तमिति भाव । अप्रत्यक्ष इति । प्रत्यक्षे महत्त्वस्य कारणत्वादिति भाव । कुत्रैषा व्याप्तिरिति । किमत्र तत्कारणत्वस्वीकार इति प्रश्न ।

श्लो. सिद्धो नान्यत्र दृष्टान्तः साध्ये त्वन्योन्यसंश्रयः। त्रसरेणुः परमाणुस्सन् किं नाध्यक्षोऽपरमाणुवत् ॥ चाक्षुषत्वप्रकर्षनिकर्षयोर्महत्त्वप्रकर्षनिकर्षानुविधानात् द्रव्यस्य चाक्षुषत्वं महत्त्वनियतमिति चेत्, चाक्षुषावयवकस्यैव द्रव्यस्य चाक्षुषत्वनियमदर्शनात् अचाक्षुषावयवकस्य त्रसरेणोरप्यचाक्षुषत्वप्रसङ्गे क्वते निस्तारः? अगत्येति चेत्, भवतु क्वचिन्महत्त्वाभावेऽपि क्वचिदेवम् ॥ अत एव मूर्तत्वे सति महत्त्वात् त्रसरेणुः कार्यद्रव्यारब्ध इति कल्पनाऽपि निरस्ता ॥ अस्तु बाह्येन्द्रियग्राह्यत्वादेव तत् साध्यमिति चेन्न; विपक्षे बाधकाभावात्। अन्यथा त्रसरेण्वारम्भकस्यापि कार्यद्रव्यारब्धत्वकल्पनायां निवारकाभावात् ॥ तत्र विपक्षे बाधकं नास्तीति चेत्, अत्रापि तथेत्युक्तमेव। अतो न द्व्यणुकमित्यपि किंचित्। एवमारम्भकपरम्परायाः सावयवत्वं तद्व्यापकतयाऽभिमतमनित्यत्वं कुतश्चिन्महत्त्वं च प्रसज्यमानमनिवारणीयं स्यात्। एतत् सर्वमभिप्रेत्याह नो चेदिति। अणुषु स्वाभावसमानाधिकरणसंयोगसिद्धेरौपाधिकांशवत्त्वस्वीकारात् इष्टप्रसङ्गतां परिहर्तुमारम्भकशब्दः ॥ १८ ॥

(इति कल्प्यपरमाण्वारम्भवादभंग.)

स्यात् भागानन्त्यसाम्ये परिमितिसमता सर्षपक्ष्माभृतोश्चेत्
मेवं भागेष्वनन्तेष्वपि समधिकता स्थौल्यहेतुर्गिरेः स्यात्।
व्यक्त्यानन्त्येऽपि जात्योः परतदितरता, पक्षमासाद्यनन्तम्,
श्रौतोपादानसौक्ष्म्यं न भवदभिमतं तत्प्रथिम्नः श्रुतत्वात् ॥ १९ ॥

---

(सर्वार्थसिद्धिः)— साध्ये त्विति। पक्षदृष्टान्तेन दृष्टान्ते साध्यवत्तया साध्यमाने सतीत्यर्थः। परमाणुः सन् परमाणुभूतत्रसरेणुः अपरमाणुवत् अध्यक्षः किं न—किमर्थं न। अप्रत्यक्षत्वसाधकहेतुर्नास्तीति भावः। अत एवेति। महत्त्वाभावादेवेत्यर्थः। अन्यथेति। विपक्षे बाधकानुकूलतर्काभावेऽपि हेतोः साधकत्वे इत्यर्थः। कल्पनायामिति। द्रव्यारम्भकत्वादिति हेतुनेति भावः। आरम्भकांशप्रभृतिषु इत्यस्यार्थमाह आरम्भकपरम्पराया इति। अंशशब्दः अवयवपरः। कुतश्चिदिति। अवयवपरम्परारब्धत्वहेतोरिति भावः। अणुषु स्वाभावेति। स्वशब्दः संयोगपरः। एकवस्त्वेकदेशस्यावयवशब्दार्थत्वात् एकस्मिन् अणौ प्रदेशभेदेन वस्त्वन्तरसंयोगतदभावाङ्गीकारात् सावयवत्वमिष्टमिति तच्छब्दाभिप्रायः। आरम्भकश्चासावंशश्चेति आरम्भकांशशब्दः अवयवपर इति भावः ॥ १८ ॥

(आनन्ददायिनी)— सिद्ध इति। भवदिष्टपार्थिवादितुल्यस्याणोरन्यस्याभावात् न तद्दृष्टान्तेनाप्रत्यक्षत्वं साध्यम्। इन्द्रियाणां परमाणुत्वं तार्किकेणापि न स्वीकृतम्। मनसोऽणुत्वमिति चेत्, कुतः। अप्रत्यक्षत्वादणुत्वसाधने संप्रत्यन्योन्याश्रयः। अतोऽप्रतिहन्यमानत्वादिना सूक्ष्मत्वेऽपि नात्यन्ताणुत्वं तेषाम्। यस्तु अपरोऽणुः वायुस्त्रसरेणुः जीवात्मा वा, स नाध्यक्षः रूपाद्यभावात्, न तु अणुत्वात्। अतो न तद्दृष्टान्तेन अप्रत्यक्षत्वसाधनम्। साधनमशक्यञ्च। दृश्यमानतया साध्यबाधात्। अपरमाणुवदिति वैधर्म्यदृष्टान्तः। कुतश्चिदिति। अतिशयितप्रत्यक्षतारतम्ये महत्त्वतारतम्यं प्रयोजकमिति स्यान्नाम। प्रत्यक्षे तु रूपादिकमेव कारणम्, न महत्त्वमिति भावः। एवमिति। अप्रामाणिकधाराकल्पने इत्यर्थः। श्लोके प्रसंगा इत्यस्य सावयवत्वानित्यत्वमहत्त्वाद्यापादनानीत्यर्थः। आरम्भकपदकृत्यं दर्शयति अणुष्विति। अंशाभावात् संयोगायोगात् आरम्भकत्वं न भवतीति प्रागुक्तं तार्किकरीतौ स्थित्वा। निरंशेऽपि संयोगस्योपपादितत्वात् यथादर्शनं त्रसरेणूनामारम्भकत्वमिष्टमिति सूचनार्थमारम्भकपदम्; न तु तावता अवयवैरनतिरिक्तापूर्व्यारम्भ इष्ट इति मन्तव्यमिति भावः ॥ १८ ॥

नन्वेवं सर्वत्रावयवानन्त्यप्रसङ्गे सर्षपमहीधरादिपरिमाणवैचित्र्यं न स्यादिति शङ्कते—**स्यादिति।** प्रसञ्जकस्याप्रयोजकत्वा(त्वमित्य)भिप्रायेण प्रतिवक्ति-**मैवमिति** । आनन्त्यसाम्येऽप्यवयवानां न्यूनाधिभावेन परिमाणवैषम्योपपत्तिमाह **आगोष्विति।** एतच्चोत्तरमनन्तभागाभ्युपगन्तॄणां तत्प्रसञ्जकानां च समानम्।

**श्लो**— अण्वंशानामनन्तत्वे गन्तॄणां तदतिक्रमः। कदाऽपि न स्यात् , किं न स्यात् वेगातिशयवैभवात्॥

द्युमणेरातपं सर्पन् उदयाद्रिशिखामणेः तत्क्षणं किं न निर्भाति पश्चिमाद्रिशिखण्डकं ॥

आनन्त्याविशेषे कथं न्यूनाधिकभाव इत्यत्राह **व्यक्तीनि।** सत्ताप्रभृतिघटत्वादिपर्यन्तानां सर्वासां जातीनां त्रैकालिकानन्तव्यक्तिवृत्तित्वमविशिष्टम् । तथाऽपि न्यूनाधिकवृत्त्यैव परापरभावो युष्माभिः कल्पितः । तद्वदिहापि स्यादिति भावः । निदर्शनान्तराण्यप्याह – **पक्षेति ।** अनन्ताः पक्षा मासाश्च, तथाऽपि मासापेक्षया द्वैगुण्यं पक्षाणामेष्टव्यम् । **आदिशब्देन** क्षणप्रभृतिपरार्धादिसंग्रहः । अन्यच्च, घटसमुदायात् घटपटसमुदायोऽधिकः , हिमवद्दक्षिणदेशान्मेरुदक्षिणदेशः , एकात्मदुःखजातादनन्तात्मदुःखजातमित्यादि स्वयमूह्यम् । 'नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ' इति जगदुपादानं निरतिशयसूक्ष्मं श्रूयते , अतोऽसत्कार्यवादो दुस्त्यजः परमाणुरित्यत्राह—**श्रौतेति।** न हि

---

टिप्पणी– स्यादिति। पूर्वोक्तसावयवत्वापादनविषयशङ्कया सङ्गतिरित्याह नन्विति। एतच्चोत्तरमिति । अवयवन्यूनाधिकभावेनैव परिमाणतारतम्यमित्युत्तरमित्यर्थः । अनन्तभागाभ्युपगन्तारः साङ्ख्याः । अत एव एतच्छ्लोकव्याख्यावसाने वक्ष्यति—“अप्रशक्यनिराससङ्कटत्वात्” इत्यादि । तत्प्रसञ्जकानामिति। अस्माकमिति शेषः । त्रसरेण्वारम्भकाङ्गीकारे तस्याप्यारम्भकपरम्परा स्यादिति प्रसञ्जनात् 'अण्वंशानामनन्तत्व इति साङ्ख्यसिद्धान्तिनं च चोदयति—अण्वंशानामिति । अण्वंशानन्त्याङ्गीकारे तत्प्रदेशावधेरभावात् युवयोर्मते दूरदेशस्थचन्द्रादिविषयग्रहणार्थं गच्छतां चक्षुःश्रोत्रवृत्तीनां कदापि तदतिक्रमो न स्यादिति शङ्काभिप्रायः । चक्षुःश्रोत्रवृत्तीनां गमनं “प्राप्यग्राही” ति श्लोके वक्ष्यति। अण्वंशानन्त्येऽपि प्रदेशावधेः सम्भवात् अत्यन्तवेगातिशयेन शीघ्रं तदतिक्रमः सम्भवतीत्यभिप्रायेण परिहरति किं न स्यादिति। बहुषु स्थलेषु दृष्टत्वादस्यार्थस्यासम्भावितत्वशङ्का नास्तीति द्योतयितुमाह निदर्शनान्तराणीति। “अणोरणीयान्, सर्वगतं सुसूक्ष्मं, स वाग्भ्यो नमति”

टी— परिमाणतारतम्यं क्वचिद्विश्रान्तं तारतम्यत्वादित्यनुमानं विपक्षेबाधकरहितम्, तथा त्रसरेण्ववयवः कार्यद्रव्यारब्धः अवयवत्वादित्यनुमानं परमाणौ विश्रमकारकमिति यदुक्तम्, तत्र तार्किकैः बाधकोपन्यासः कृतः, अवयवानन्त्ये मेरुसर्षपयोः साम्यप्रसङ्ग इति। तं तर्कं दूषयति स्यादित्यादिना। यत्रानन्त्यं तत्र साम्यमित्यत्र व्याप्यव्यापकभावो नेत्याह मैवमिति। अधिकानन्त्यं यस्य तस्याधिकपरिमाणत्वम्, तदभावे तदभाव इत्याशयः । जात्योः द्रव्यत्वपृथिवीत्वयोः । परादितरत्र—द्रव्यत्वे परजातित्वं, पृथिवीत्वे अपरजातित्वं । जातेः परत्वं नाम अधिकव्यक्तिवृत्तित्वम्, व्यापकत्वम् । तन्मते द्रव्यगुणकर्मवर्तिनी सत्ता सर्वपरजातिः । घटत्वपटत्वादि सर्वापरजातिः । द्रव्यत्वपृथिवीत्वादि परापरजातिः । अपरजातेर्विशेष इति परजातेः सामान्यमिति च व्यवहारो वैशेषिके। पञ्चमपदार्थो विशेषस्त्वन्य एवेत्यनुवृत्तिः । श्रौतेति। सूक्ष्मात् स्थूलोत्पत्तिरित्यस्य अणुभ्योऽवयवेभ्यो महाकार्योत्पत्तिरित्यर्थकत्वात् तार्किकमतमेव श्रुतीरितमिति न । तत्रोपादानस्य सूक्ष्मत्वं भवदभिमताणुपरिमाणरूपं न भवति । तत्प्रथिम्न , उपादाने महत्त्वस्य श्रुतत्वादित्यर्थः ।

सर्वन्यूनपरिमाणत्वं तत्सूक्ष्मत्वम्; पूर्वोक्तसर्वगतशब्देन श्रुत्यन्तरैश्च विरोधात्। न च जात्यभिप्रायोऽसौ; एकस्य सर्वोपादानत्वोक्तेः; सर्वव्यापित्वतत्सर्वज्ञजगत्कर्तृविषयत्वाच्च वाक्यस्य। सूक्ष्मशब्दश्च न परिमाणविशेषनियतः। उक्तं च विभ्वीं प्रकृतिं महीयसश्च महदादीन् प्रकल्प्य(कम्य) साङ्ख्यैः, "सौक्ष्म्यात् तदनुपलब्धिः" इति। ननु त्रसरेणोरष्टमः षष्ठो वा भागः परमाणुरिति सर्वानुमतैः शिल्पिनां शास्त्रैर्धर्मशास्त्रैस्तन्मूलश्रुत्या च परमाणुसिद्धिः स्यात्॥ तन्न; शिल्पादिशास्त्राणां परमाणावतत्परत्वात्; मानोन्मानादिविशेषनिर्धारणं हि तत्र विविदिषितम्। ततो हैतुकोक्तानुवादमात्रमिह स्यात्। तत्र च त्रसरेणुतः किंचित् सूक्ष्मं भवतु; मा वा भूत्। दृष्टोपक्रमं (मतो ?) विवक्षितसिद्धिरिति अनाकूतम्। शास्त्रतश्च क्वचिदनन्यथासिद्धात् परमाणुसिद्धावपि तदनुमानभङ्गात् परस्य मानभङ्गः, यथा प्रकृत्याद्यनुयायिनः साङ्ख्यस्य।

---

[illegible]- इत्यादीनां परमाणुपरत्वाभ्युपगमवादेनाह शास्त्रतश्चेति। स्वमतमाह—शास्त्रैकविषयत्व इति। पृथिवीजलादिपांसुशर्करादिरूपाणां परमाणूनां कालादिवशेन अस्मदादीन्द्रियगोचराणामितिहासपुराणादिशास्त्रैकसिद्धत्वेऽपीत्यर्थः। नित्यस्पर्शादीति। आदिशब्देन नित्यरूपपरिमाणादिकमप्रत्य-

[illegible]— एकस्मादव्यक्तात् युगपदनेकब्रह्माण्डोत्पत्तिः विकृताविकृतभागस्थितिः उत्तरोत्तरकार्यापेक्षया पूर्वपूर्वकार्यस्य समष्टौ परिमाणाधिक्यं कार्यावरणेन कारणस्थितिरित्यादिकं प्रमाणसिद्धम्। कथं तदव्यक्तस्याणुत्वमिति भावः। पूर्वोक्तेति। उपक्रमप्राबल्यादपि महत्त्वमेवेति भावः। सर्वव्यापीति। श्रुतिवाक्यमिदमचेतनोपादानविषयकमिति कृत्वैतावत् उक्तम्; वस्तुतोऽस्य परमात्मविषयकतायाः अदृश्यत्वादिगुणकाधिकरणे स्थापितत्वात् न परमाणुपरिमाणप्रसक्तिरिति भावः। ननु तत्र एव सुसूक्ष्मपदं शोभनानि सूक्ष्माणि परमाणूनि यस्य परमात्मनो विशेषणभूतानीत्यर्थकं परमाणुस्थापकं स्यादित्यत आह सूक्ष्मशब्दश्चेति। प्रकृतिसाधकश्रुतिविरोधात् बहुव्रीहौ गौरवाच्च न तथेति भावः। षष्ठो वेति वाकारः तृतीयो वेत्येतद्दर्शकः। वचने तस्यापि दृष्टेः। 'शिल्पिशास्त्रे देवताविग्रहादिप्रमाणनिर्णयार्थम्, "जालसूर्यमरीचिस्थं सूक्ष्मं यत् परिदृश्यते। तस्याष्टमो वा षष्ठो वा भागोऽणुः परिकीर्तितः" इति। धर्मशास्त्रं स्वर्णस्तेयादिनिर्णयार्थम्, "जालसूर्यमरीच्यां यद् भाति सूक्ष्मं त्रुटेः परम्। भागोऽष्टमस्तृतीयो वा परमाणुरितीरितः" इति' इति आ. दा.। स्मृतिः त्रसरेण्वादिपरिमितसुवर्णदानेऽपि फलविशेषनिर्देशार्थेति अ. सा. चिन्तामणिः। त्रसरेणुमात्रस्य स्तेयेऽपि दानादौ च पापाधिक्यपुण्याधिक्यवर्णनाय तद्भागकल्पनेति भावः। परमाणावतत्परत्वादिति। तादृशपरमाणौ तात्पर्याभावादित्यर्थः। अन्यथा तृतीयषष्ठाष्टमेति मिथो विरोधादिति भावः। भवतु मा वेति। यदेतत् दृश्यते इत्यस्य सर्वजनदृश्यार्थकत्वे अतिसूक्ष्मसोपकरणनेत्रदृश्यवास्तवतदंशसद्भावपरं तत् वचनम्। तादृशनेत्रदृश्यमानत्वस्यैव दृश्यत इत्येतदर्थत्वे अविभज्यौपाधिकांशपरम्। तत्र यदा तद्रजः प्राच्यां स्थितम् आग्नेय्यादि-ऐशान्यन्तदिग्वर्त्यणुसप्तकमिलितम्, तदा तत्तदवच्छिन्न-तदनवच्छिन्नभागसंख्या अष्टत्वरूपेति अष्टम इत्युक्तम्। चतसृषु दिक्षु ऊर्ध्वे च मेलने तथैव भागषट्कमिति षष्ठ इति। त्र्यणुकव्यवहारमनुसृत्य एकस्याणुद्वयमेलनकल्पने तथैव भागत्रिकमेकस्मिन्निति च तृतीय इति। सर्वमिदम्, प्रत्यक्षे महत्त्वस्य हेतुत्वात् कथमणोः प्रत्यक्षमिति शङ्कायां, 'महत्त्वमेवास्ति; अणुशब्दवाच्यत्वं तु औपाधिकांश एवेति प्रतिबोधयितुमिति भावः। शास्त्रस्य तत्परत्वेऽप्याह शास्त्रतश्चेति। अनुमानभंगादिति। समानविषयकत्वे सिद्धसाधनात् अन्यविषयकत्वे च तेन स्वदुक्तिबाधादित्यर्थः। सांख्यस्येति। स्वतन्त्रप्रधानबाधः, परतन्त्रप्रधानसिद्धिश्चेति। अस्तु तर्हि अप्रंशसंघरूपप्रकृति-

श्लो— शास्त्रैकविषयत्वे च परमाणोर्न सिध्यति । नित्यस्पर्शादियोगित्वं भूतानां विकृतित्वतः ॥
अस्पर्शाण्वंशसंयत्वात् कतिचित् प्रकृतेरतः । एकैकाण्वंशभागेऽपि भागानन्त्यं प्रचक्षते ॥
निरंशा प्रकृतिः सैव परिणामविभागिनी । अनन्तांशात्मिका चेति व्याहतं साङ्ख्यभाषितम् ॥
अत्यन्तभिन्नसत्त्वादिद्रव्यसंघात् प्रधानतः । यथांशं विश्वसृष्टौ च न स्यात् त्रिगुणता क्वचित् ॥१९

इति अनिष्टापत्तिपरिहारेण परमाणुकारणतावादभङ्गः ॥

(अवयविवादे दोषः साधकाभावश्च)

**कार्योपादानभेदे न कथमधिकृतो गौरवादेः स्वकार्यम् ?**
**नान्यत्वं नामसंख्याव्यवहृतिधिषणाकारकालादिभेदैः ।**
**द्रव्याभेदेऽप्यवस्थान्तरत इह तु ते पत्रताटङ्कवत् स्युः**
**नो चेत्, अंशांशिनोः स्यात् प्रतिहतिरुभयोः स्पर्शवत्त्वाविशेषात् ॥ २० ॥**

एवं पृथिव्याद्युपादानं चिन्तितम् । अथोपादानातिरिक्तं कार्यद्रव्यं नास्तीति साध्यते । तत्रावस्थाभेदमात्रं स्वीकृतम् । अयमेव च सत्कार्यवाद आरम्भणाधिकरणसाध्यः ।

—श्लो विसृष्ट्युल्लासविक्षेपाः कार्याणां कथिताः क्वचित् । कल्पनीया न सर्वत्र परिणामोक्त्यबाधतः ॥

---

[illegible]— कतिचित् प्रकृतेरत इति । अतः = शास्त्रसिद्धपरमाणूनां नित्यस्पर्शादियोगित्वाभावादित्यर्थः ॥
कार्योपादानभेद इति । सांख्यपक्षाक्षेपभ्यमाह तत्रावस्थाभेदमात्रमिति । अवस्थाभेदस्वीकारः आरम्भणाधिकरणविरुद्ध इत्यत आह अयमेवेति । शास्त्रे विसृष्ट्युल्लासादिश्रवणात् कथमारम्भणाधिकरणमीदृशसत्कार्यवादप्रतिपादकमित्यत आह विसृष्टीति ।
[illegible]—क्षत्वं च गृह्यते । विकृतित्वत इति । परमाणूनां भूतकार्यत्वादित्यर्थः । सांख्यमतमाह अस्पर्शेति ॥
कार्योपादानेति । तत्रेति । उपादान इत्यर्थः । विसृष्टिरिति । नियमनमित्यर्थः । "तद्विसृष्टः स पुरुषः" इत्यत्र तथा प्रयोगः । उल्लासो ह्लानता(ग्लानता ?)त्यागः । विक्षेपोऽभिव्यक्तिरिति केचित् ।
[illegible]— रेखात्सदिशा, तर्कोपन्यासः शास्त्रानधिकारिप्रीणनायेति तार्किकोत्थितौ बाधमेव दर्शयति शास्त्रेति । कतिचित्—सांख्यानुसारिण एव केचित् । भागानन्त्यमिति । अनेकपरमाणुमेलनेऽप्येकपरमाण्वधिकः प्रथिमा न भवतीति प्रागुक्तरीत्येति भावः । आत्मनि तु अहमिति एकत्वानवयवत्वग्रहणात् नैवमित्याशयः । निरंशत्वपक्षे चानन्तांशत्वं प्रकृतौ न सुवचमित्याह निरंशेति । सत्त्वादेः द्रव्यत्वमंशत्वञ्च सांख्येष्टमयुक्तमित्याह अत्यन्तेति ॥ १९ ॥
ननु स्वच्छन्देनागमेन प्रकृतिमहदहङ्कारमात्राक्षसिद्धिं तत्कार्यतया भूतानाञ्च स्थितिमिच्छता कथमादौ "प्राच्यमव्यक्तकालौ" इति जडस्य द्वेधैव विभागः कृतः । न चाव्यक्तत्वं परमाणु-सत्कार्यसाधारणी पृथिवीत्वादिवत् कार्यद्रव्यकारणद्रव्योभयगता जातिः । न च कार्यकारणयोरेकद्रव्यत्वान्न दोष इति वाच्यम्, असिद्धेरित्याशंकायाम्, उपादानातिरिक्तं कार्यद्रव्यं नास्तीति साधयितुं तद्भेदे दोषं तार्किकान् प्रत्याह कार्येति । तत्र भेदसाधकहेतूनां तार्किकोक्तानां यथायथमन्यथासिद्धिर्वाच्या, तन् निष्कृष्याह तत्रावस्थाभेदेति । सांख्यसंमताव्यक्तमहदादिसृष्टिस्वीकारमात्रेण तदभिमत-सत्कार्यवाद एवाऽऽरम्भणाधिकरणार्थ इति न मन्तव्यमित्याशयेनाह अयमेवेति । अद्वैतिमतं तु न तदधिकरणार्थः ; तन्मते ब्रह्मण एव सत्यत्वेन कार्ये सत्त्वाभावात् सत्कार्यवादत्वायोगात् । विसृष्ट्यादिदर्शनं सांख्यानुकूलमिति शंक्या न तथा स्वीकार्यमित्याह विसृष्टीति । विसृष्टिः भस्मीकानः पूर्तिस्य

आविर्भावतिरोभावजन्मनाशविकल्पवत् । नित्यं जगत्" इति स्मृत्या व्यवस्थाद्वयमीरितम् ॥ तदिह प्रत्यक्षागमबलादेकस्यैव द्रव्यस्यावस्थाभेदादुपादानोपादेयभाव इति स्थिते द्रव्यान्तरं प्रागसदागन्तुकं वदतः प्रतिवक्ति कार्येति । कार्यद्रव्यस्य सोपादानद्रव्याद्भेदे सति द्विपलकैकपलकन्यायेन तन्तुगुरुत्वम्, समं न्यूनमधिकं वा पटगुरुत्वं च संभूय पतनातिरेकं कथं न कुर्यात् ? तदकरणे कश्चिदपि हेतुर्न सिध्येदित्यर्थ । तथा हि–न तावत् अवयविनि गुरुत्वं न जायते ; परमाणुगुरुत्वपरिशेषप्रसङ्गात् । तथा च त्वयाऽनभ्युपगमात्, अयुक्तेश्च । कार्यगुरुत्वादेव द्व्यणुगुरुत्वं कल्पयसि । जातस्य च न स्वभावतः (स्वत.) पतनहेतुत्वाभावः ॥ प्रतिबन्धात् कार्यानतिरेक इति चेत्—किमयं प्रतिबन्धोऽवयविगुरुत्वस्य,

---

[illegible]— अस्माकं त्वेवं प्रतिभाति—दृष्टविसजातीयसृष्टिः स्वप्ने रथादिविजातीयसृष्टिश्रवणात् । उल्लासोऽस्वप्नपदार्थानामभिवृद्धौ । तेषां विनाशो विक्षेप इति कथिता इति । 'रथान् रथयोगान्' इत्यादिना कथिता इति भावः । सर्वत्रेति । प्रकृतिकार्येष्वपीत्यर्थः । कार्यकारणैक्ये उपबृंहणानुकूल्यमपि दर्शयति आविर्भावेति । 'कार्य—' इत्यादिश्लोकमवतारयति तदिहेति । प्रत्यक्षागमेति । अत्र 'यथा सोम्यैकेन' इत्यादिश्रुतिर्विवक्षिता । जातस्येति शेषः। न स्वत इति । पतनानुमेयत्वादिति [illegible]— जलस्य विसर्गवत् संकुचितस्य कूर्मपादादेः प्रसारवत् अग्न्यादेराविर्भावः; विक्षेपात् विकिरणात् सक्तुपिण्डात् चूर्णानां जलस्तोमात् बिन्दूनाञ्चाविर्भावः इत्यादि यद्यपि दृश्यते—तथापि तत्र क्वचित् क्वचिदेव कार्यताव्यवहार इति अतिव्यापकत्वात् मिथोव्यभिचाराच्च न विसृष्ट्यादेर्नियामकत्वम् । परिणामस्तु सर्वत्रानुगतः । न च तदनुक्तिः, 'तदात्मानं स्वयमकुरुत', 'तन्नामरूपाभ्यां व्याक्रियत', 'नित्या सततविक्रिया' इत्येवं समविषमान्यतरपरिणामशालित्वस्य प्रकृतो संप्रतिपन्नत्वात् इत्यर्थः। अभिव्यक्तिवादिनं सांख्यमाविर्भाववत् जन्मनोऽपि प्रामाणिकत्वप्रदर्शनेन वारयति आविर्भावेति । आविर्भावतिरोभावरूपः जन्मनाशरूपश्च विकल्पः प्रकारभेदः जगत्यस्ति तत्र जन्मस्थल एव सत्कार्यत्वं वक्तव्यमिति स्मृत्याशय इति भावः । अत्र विष्णुपुराणवाक्ये, 'तदेतदक्षयं नित्यं जगन्मुनिवराखिलम्' इति पूर्वार्धं स्मार्यते अत्र नित्यमिति पदेन । जन्मादिसत्त्वेपि द्रव्यनित्यत्वं न बाध्यत इति भावः । व्यवस्थाद्वयमित्यनेन जन्माविर्भावयोरैक्यं नेति ज्ञापितम् । प्रत्यक्षेति । आगमेनैव प्रत्यक्षमपि प्रादर्शि; 'यथा सौम्यैकेन मृत्पिण्डेन" इत्यादिना । तेन तार्किकादिपक्षा निरस्ताः। पटघटादीनां तन्तुमृत्पिण्डादौ प्राक्सतामेवाऽऽविर्भाव इति सांख्यमतं प्रत्यक्षविरुद्धम्, तार्किकस्तु स्वपक्षः प्रत्यक्षानुकूल इति मन्यते, तन्निराकरणमिह । श्लोके अधिकतेति पाठोऽशुद्धः । अधिकृत इति गौरवादिविशेषणम् । आदिना द्रवत्वगन्धादिग्रहणम् । कार्यकारणयोर्भेदे आधिक्यस्यावर्जनीयतया तथाभूतात् गुरुत्वद्रवत्वादितः तत्तदनुगुणं कार्यं कथं नेत्यर्थः । द्वीति । यथा द्विपलिकैकपलिकयोर्मेलने त्रिपलिकत्ता, तथा एकघटस्थनिर्घटकपालद्वयापेक्षया घटान्तरस्थे सति सघटकपालद्वये तुलायां गुरुत्वातिशयकार्येणावनमनेन भाव्यम् । अतः कार्याभावात् गुरुत्वाधिक्याभावः, ततो द्रव्यद्वयाभावश्चेति भावः । सममिति पटगुरुत्वं तन्तुगुरुत्वादन्यत् समं वा, सर्वथा गुरुत्वातिशयः स्यादिति भावः । हेतुर्न सिद्ध्येदिति । अकरणहेतुः साधयितुमशक्य इत्यर्थः । अयुक्तेरिति । युक्त्यभावादित्यर्थः । परमाणौ गुरुत्वसाधकयुक्तिर्नास्तीत्यर्थः । तदेवाह कार्येति । "कारणगुणपूर्वकः कार्यगुणो दृष्टः" इति हि कणादः । तदकरणे इत्यस्य गुरुत्वानुत्पादने इत्येकोऽर्थ उक्तः; गुरुत्वेन स्वकार्याकरणे इत्यर्थान्तरं कृत्वाऽऽह जातस्य चेति । यावन्त्यवयवगुरुत्वानि तावत्समं गुरुत्वमवयविनि जायते । तत्रैकस्य कार्यकरत्वम्, अन्यस्य प्रतिबद्धत्वादिति शंकते प्रतिबन्धादिति ।

उत्तावयवगुरुत्वस्य । नाद्य , परमाणुगुरुत्वस्यैव पतनहेतुत्वप्रसङ्गात् । तथा सति "गुरुत्वात् पतनम्", "द्रवत्वात् स्यन्दनम्" (वै द. 5. 2. 3. 4) इति तत्तत्क्रियावच्छिष्टगुरुत्वादिकल्पनमङ्गापाताच्च । अतो वरमवयविनि गुरुत्वाद्यनुत्पत्तिकल्पनम् । तत्र चोक्तो दोष । न द्वितीय, कदाचिन्निष्कम्पेऽवयविनि शाखाफलहस्तादिलम्बनाभावप्रसङ्गात् । तथा च कथमवयव्यपि तत्र लम्बेत । संयोगान्तराद(न्तरद)र्शनात् लम्बमनोऽवयवी स्वावयवमपि लम्बयतीति चेन्न ; सर्वावयवलम्बनप्रसङ्गात् । सङ्घालवादिनस्तु यथार्हं प्रतिबद्धांशे अलम्बनोपपत्ति ॥ कार्यगुरुत्वोत्पत्तौ कारणगुरुत्वं नश्यतीति चेन्न , अपसिद्धान्तात् ; रूपादिष्वपि तथात्वप्रसङ्गात् ॥ अथ कार्यगुरुत्वस्यातिमन्दत्वात् सूक्ष्मं पतनवैषम्यं दुर्ग्रहमिति—तदपि न ; मान्द्यकारणादृष्टे । कल्पकासंभवाच्च । अतस्तन्तुतत्कार्यपटसमुदायोन्माने पटद्वयोन्मान इव गुरुत्वान्तरकार्यं दुस्त्यजम् । आदिशब्देन द्रवत्वगन्धादिसंग्रह । स्वकार्यं—त[त्त]दुचितं कार्यमित्यर्थ ।

---

पूर्ती— शाखादीनां लम्बन माऽस्तु, अवयव्येव तत्र लम्बत इत्यत आह तथाचेति । शाखादिलम्बनाभावे तदवच्छिन्नप्रदेशेऽवयविनो लम्बनमनुपपन्नमित्यर्थ. । कुत इत्यत आह संयोगान्तरादर्शनादिति । निष्कम्पे अवयविनः(नि?) स्वरूपतो लम्बनाप्रतीते. शाखादीनां पूर्वदेशसंयोगात् संयोगान्तरे च सति, तन्मूलादवयविसंयोगान्तरे च सति अवयविसंयोगान्तरदर्शनात् तत्र लम्बनं कल्प्येत, तत्तु न सम्भवति । शाखादिषु गौरवाभावेन लम्बनाभावे संयोगान्तरानुपपत्तेः तन्मूलावयविसंयोगान्तराभावेन तद्दर्शननिमित्ततल्लम्बनकल्पनानुपपत्तेरिति भावः । संयोगान्तरदर्शनादिति पाठश्चेत्, अस्य हेतोरुत्तरत्रान्वयः । अत्र शाखादीनां संयोगान्तरदर्शनात् तद्धेतुकलम्बनसिद्ध्यर्थं अवयविलम्बनं स्वावयवशाखादिकं लम्बयतीति कल्प्यत इति शङ्कते संयोगान्तरदर्शनादित्यादिना इति व्याख्येयम् । अपसिद्धान्तादिति । गुरुत्वादीनां यावद्द्रव्यभावित्वस्य सिद्धान्तितत्वादिति भावः ।

टिप्पणी— भावः । सर्वावयवलम्बनप्रसङ्गादिति । अवयविलम्बनहेतोरवयविगुरुत्वस्य सर्वावयवप्रदेशेष्वपि अवयविसंबन्धादिति भाव. ।

श्री—क्रियावच्छिष्टेति । सामानाधिकरण्याभावे कथं कार्यकारणभावः । वरमिति । गुरुत्वस्याप्रत्यक्षत्वात् अनुमापककार्याभावे चानुमानायोगादिति भाव. ।

उक्तो दोष इति । परमाणावपि गुरुत्वासिद्धिः कार्यगुरुत्वाभावादिति । न द्वितीय इति । अवयवगुरुत्वमेव प्रतिबद्धमित्यपि नेत्यर्थः । शाखा वृक्षावयव ; हस्तः शरीरावयवः । लम्बनेति । लम्बन हि अननुवृत्तपतनस्य द्रव्यस्य यावत्संभव पतिततया स्थितिः । तच्च पतनमवयवनिष्ठमवयवगुरुत्वकार्यमेव वक्तव्यम् । तन्न स्यात् ; प्रतिबद्धत्वादिति भावः । कथमवयव्यपीति । शरीरादौ पादाद्यवच्छेदेनोपरिबद्धे सति तत्र लम्बमानं दृष्टम् । अवयवगुरुत्वानां प्रतिबद्धतया लम्बनाप्रसक्तौ ऊर्ध्वमेव तेषां स्थितिरिति तद्देश विहाय अवयवि कथमवलम्बेत । संयोगेति । अवयविलम्बन प्रतिबन्धक संयोगाभावादवयवि लम्बते । तद्बलात् प्रतिबद्धगुरुत्वस्वावयवलम्बनमित्यर्थः । अत्र पाठभेदोऽन्वयभेदश्च पूर्वव्याख्यायां द्रष्टव्य. । अत्र "कर्म कर्मसाध्य न विद्यते" इति वैशेषिकसूत्रविरोधोऽपि । अतः प्रतिबन्धकसंयोगरहितावयवलम्बनं कारणमित्यपि न सुवचमिति ध्येयम् । अपसिद्धान्तादिति । योग्यविभुविशेषगुणानामेव स्वोत्तरोत्पन्नगुणनाश्यत्वोक्तेः ; कारणगुणनाशे कार्यगुणनाशस्य त्वदिष्टतया तद्विरोधाच्चेति । स्वकार्यमिति स्वपदवैयर्थ्यं परिहरति त[त्त]दुचितमिति । यथाकथञ्चित् पतन नालम्, अधिकगुरुत्वं यादृशावनमनहेतुत्वेन फलत तदापत्तिरिति भावः ।

तथाऽप्यनन्यथासिद्धभेदकभूम्ना भेदसिद्धौ गुरुत्वान्तरकार्यादर्शनं कथंचिदन्यतरप्रतिबन्धेन नेयमित्यभिप्रायेण शङ्कमानं प्रत्याह नान्यत्वमिति । यद्यपि नामभेदाभेदौ अर्थभेदाभेदयोरप्रयोजकौ, तथाऽपि पर्यायातिरिक्तो विशेषणविशेष्यभावानर्हो वाचकभेद इह नामभेद । स च सिंहव्याघ्रशब्दवत् स्ववाच्यं भिन्द्यात् । सङ्ख्याभेदोऽप्येकस्यैव द्वितीयादियोगात् यद्यपि स्यात्, तथाऽपि नैवमत्र, बहवस्तन्तव, एकः पट इति विभजनात् । व्यवहृतिरिह अर्थक्रियासिद्ध्यर्थो व्यापार । पटाद्यर्थं तन्त्वादय उपादीयन्ते, पटादयस्त्वाच्छादनाद्यर्थम् । न च तन्त्वादिमात्रे पटादिधी, पटादिषु वा तन्त्वादिधीरिति धिषणाभेद । आकारभेदश्च व्यवस्थिताश्रयो वृत्तचतुरश्रत्वादि । पूर्वकालीनास्तन्त्वादय, पटादयस्तु पश्चाद्भाविन इत्येवंविध इह कालभेद । आदिशब्देन कारणभेदादिसंग्रह । अंशुप्रभृतयस्तन्त्वादीनाम्, पटादीनां तु तन्त्वादय इति नियतोऽत्र कारणभेद । कार्यभेदश्चैव नियत एव । कारणस्यैव च कार्यत्वे कारकव्यापारवैयर्थ्यं स्यादिति भेदहेतव । एषामन्यथासिद्धिमाह द्रव्याभेदेऽपीति । तुशब्दोऽवधारणे । उपादानोपादेयतयाऽवस्थाद्वयवति द्रव्ये घटपटवत् भेदं साधयितुं न शक्नुवन्तीत्यर्थ । अत्र दुस्तरप्रतिबन्द्यभिप्रायेण निदर्शयति पत्रताटङ्कवदिति । पत्रस्य हि कुण्डलितस्य नियतं नामान्तरं दृष्टम् । सफलश्चावस्थान्तरेण कारकव्यापार । न ह्यत्रावयव्यन्तरोत्पत्ति आकुञ्चनप्रसारण-पद्मसंकोचविकासादिष्वपि तत्कल्पनाप्रसङ्गात् । न चैकेनावयवेनावयव्यारम्भ, असमवायिकारणासंभवात् ॥ अवयवावयवसंयोगस्तत्र

---

[illegible]— कार्यभेदश्चेति । तन्तुकार्यं पट, पटकार्यमाच्छादनमिति भेद । पत्रस्य हि कुण्डलितस्येत्यादिना निदर्शने आद्यन्तहेत्वन्यथासिद्धिप्रदर्शनं सर्वत्र(?) हेत्वन्यथासिद्धेरपि प्रदर्शनार्थम् ।

[illegible]— एकस्मिन्नेव विषये प्रत्यक्षस्मृत्यादिबुद्धिभेददर्शनात् पुरुषभेदेन बुद्धिभेददर्शनाच्च बुद्धिभेदस्यार्थभेदज्ञापकत्वं नास्तीत्यत आह—न च तन्त्वादिमात्र इति । कारणभेदादीति आदिशब्देन तन्तूनामाधारत्वं, पटस्याधेयत्वम्, तन्तुमृदादेः शुक्लादिस्पर्शदोषरहितत्वम्, पटघटादेः तद्दोषवत्त्वम्, तन्त्वादेः पटादेश्च मूल्यभेद, दानादिना पुण्यभेद इत्यादिकं विवक्षितम् । ननु अवस्थाभेदाङ्गीकारे कथमभेदेऽप्युपपत्तिरित्यत आह एषामिति । पत्रताटङ्कस्थले अवयव्यन्तरोत्पत्त्यङ्गीकारेऽनिष्टमाह आकुञ्चनेति । तत्रावयव्युत्पत्त्यादावनिष्टमाह न चेति । ननु पूर्वं पतनाधिकरणादि-

[illegible]— फलमुखगौरवं न दोषायेति मन्यमानस्य शङ्का तथापीत्यादिना । प्रतिबन्धेनेति । कार्यकारणगुणकल्पनागौरववत् प्रतिबन्धकभावकल्पनागौरवमपि सह्यमिति भाव ।

नामेति । पटस्तन्तुभिन्न तन्त्ववाचकपटनामवाच्यत्वादित्याद्यनुमानानि आरम्भणाधिकरणे द्रष्टव्यानि । द्वितीयादियोगादिति । घटेऽपि पटेन सह द्वित्व सुवचमिति भाव । एक पट स्वीययावत्तन्तुभिन्न द्वित्वादिपर्याप्त्यनधिकरणत्वादित्यनुमा । अर्थक्रिया—फलनिष्पत्ति । व्यापार पटघटादेराच्छादनोदकाहरणादि । 'धारणाकर्षणोपपत्तेश्च" इति च न्यायसूत्रम् । एष्वनुमानेष्वप्रयोजकशङ्कां परिहरति कारणस्यैवचेति । श्लोके ते इति । नामादिभेदा इत्यर्थ । पत्रताटङ्कवदिति तालनालिकेरादिपत्रेण वलयितेन कर्णालंकार क्रियते । न हि वलयीभावमात्रेण द्रव्यभेदस्ते इष्ट इति भाव । न वयमेतद्दृष्टान्तेन नामादिभेदानामभेदसाधकत्वं ब्रूम, किं तु भेदसाधकत्वं व्यासेधाम इति भावेनाह न शक्नुवन्तीति । ताटङ्कस्थलेऽवयव्यारम्भो दुर्वचश्चेत्याह न चेति । अन्यार्थत्वात्—पत्ररूपावयव्यर्थत्वात् ।

असमवायिकारणमिति चेन्न; तस्यान्यार्थत्वात्। अन्यथा अंशूनां तन्तुवत् पटाश्रयत्वमपि स्यात्। न च तत् युक्तम्; आरब्धकार्यैरवयवैस्तदैवावयव्यन्तरारम्भानभ्युपगमात्। तत्र हि सप्रतिघत्वविरोधात् बिभेषि।

एवं संप्रतिपन्नावस्थाभेदमात्रानादरेण द्रव्यान्तरकल्पनेऽपि तमेव विरोधं प्रसञ्जयति **नो चेदिति।** **अंशांशिनोः** अवयवावयविनोरित्यर्थः। उक्तप्रसङ्गे तदभिमतमेव हेतुमाह **उभयोरिति।** द्वयोर्द्रव्ययोरन्यतरस्य वा स्पर्शहीनत्वे मिथः प्रतिरोधो नास्ति। इह तु न तथेत्यभिप्रायेणोभयोरित्युक्तम्॥ अवयवावयविनोरेकत्र वृत्तिर्नास्तीति चेत्— समवायिदेशैक्याभावेऽपि संयोगिदेशैक्यमङ्गीकरोषि; तत्र कथं तन्त्ववष्टब्धनभःप्रदेशे पटसंयोगः॥ मा भूदिति चेत्— मूर्तामूर्तसंयोगविलोपप्रसङ्गः। मेरुमन्दरादीना

---

ப்ரு— तन्तुपटयोः पृथग्भूतयोरपि आकाशविभक्तप्रदेशसम्बन्धाविरोधेऽनिष्टमाह मेरुमन्दरादीना-

டிப்பனி— प्रसङ्गेन द्रव्यभेदो निरस्तः, तथाचावस्थाभेदानादरे का प्रतिहतिरित्यत्राह–एवमिति॥२०॥

ஸ்ரீ— अंशूनां तन्त्ववयवानाम्। अनभ्युपगमादिति। तन्तुसंयोगात् पटे जातेऽपि संयोगरूपकारणबलात् पुनःपटान्तरोत्पत्तिशंकायां स्वसमवेतं द्रव्यं द्रव्यान्तरोत्पत्तौ प्रतिबन्धकमिति किलोच्यत इति भावः। सप्रतिघत्वं नाम मूर्तानां समानदेशत्वायोगः; स एव विरोधः। नो चेदिति ग्रन्थमवतारयति एवमिति। पूर्वं पत्रताटङ्कादिरूपैकसमवायिकारणजन्यकार्यद्रव्यस्थले सप्रतिघत्वविरोधो दर्शितः। तमेव विरोधं सर्वावयविस्थलेऽपि दर्शयतीत्यर्थः। कल्पनेऽपीति। तन्तुपटादिरूप द्रव्यान्तरकल्पनास्थलेऽपीत्यर्थः। नोचेदिति। अन्यथासिद्धावप्यन्यत्वांगीकारे इत्यर्थः। ननु पत्रताटङ्कस्थले पत्रावयवसंयोगस्य कारणत्वस्वीकारे तेषामवयवानां ताटङ्काधारत्वापत्तौ अंशांशिनोः प्रतिहतिरुक्ता युज्यते। सर्वत्र कथमेवम्। अवयविनोऽवयवावयवे वृत्त्यभावादिति पृच्छति अवयवेति। विवक्षितं विशदयति समवायीति। नभःप्रदेश इति। ननु तन्त्ववष्टब्धे देहे इति वस्त्वन्तरस्यापि सुवचत्वेन नभःप्रदेशे इति कुतः। तथा च मूर्तानां समानदेशताविरोधात् तन्तुसंयुक्ते देहे पटः कथं संयुज्येत; एवमंशुसंयुक्ते देहे तन्तुः कथमिति, विपरिवर्तेन च देहावयवसंयुक्ते पटे देहः कथमित्येवं शंकायां द्व्यणुकपर्यन्तसंयोगे प्रतिषेध्ये परमाणुसंयोग एव शिष्येतेति द्व्यणुकत्र्यणुकाद्यवयवद्वयसंयोगरूपकारणाभावादवयविनामेवासिद्धिरिति सुकरमापादनमिति चेत्—सत्यम्—तथापि सावयवस्थले एकावयविन एवावयव्यन्तरेणैव संयोगः। अवयवानामेवावयवैरिति एकत्र मूर्तद्रव्यसंयोगापलापेऽपि निरवयवे नभसि तन्न सुवचमित्याशयेनैतदुक्तिः। वस्तुतो हस्तपुस्तकसंयोगात् कायपुस्तकसंयोग इति संयोगजसंयोगस्वीकारात् तदनुपपत्तिरूपदूषणमपि भवत्येव। अवश्यञ्चावयवसंबन्धोऽप्यवयविसंबद्धे एष्टव्यः; संयोगस्यावच्छेद्याधिकरणसंबन्धिन एवावच्छेदकत्वात्। एवञ्च मूर्तामूर्तेत्यपि उदाहृतस्थलाभिप्रायम्। मूर्तशब्दः मूर्तिः संस्थानमिति तद्विशिष्टसावयवद्रव्यवाचि। परमाणुसंयोगप्रतिषेधायोगात्। एवं मूर्तशब्दार्थश्च "मूर्तिमताञ्च संस्थानोपपत्तेरवयवसद्भावः" (न्या.द.४.२.२३) इति सूत्रारूढः। मेर्विति। अवयवद्रव्याक्रान्तेऽप्यवयविसंयोगेष्टौ मूर्तद्वयविरोधाभावात् मेर्वाक्रान्तस्थलेऽपि मन्दरः स्यादिति भावः। अत्र तार्किकः नीरक्षीरयोगविरोधेन संयोगं योगिनां भूमावुन्मज्जननिमज्जनदर्शनात् कठिनभूम्यवयवसंयुक्तस्थलेऽपि योगिदेहसंयोगञ्च निदर्श्य मूर्तानां सप्रतिघत्वमिति नियमस्य तत्रतत्र भंगदर्शनात् तत्तद्भिन्नस्थले इत्येव नियमः शिक्षणीय इति अवयवावयविभिन्नत्वमपि तत्र निवेश्यतामिति विवक्षति; तं प्रति तत्तत्स्थलेऽपि सप्रतिघत्वं प्राचीनेष्टमिति न तन्निदर्शनं भवेदित्याह नीरक्षीरादि-

मप्यविभक्ताकाशप्रदेशवृत्तावविरोधः स्यात् ॥ नीरक्षीरादिमेलने का वार्ता ॥ हन्त ! स्वसिद्धान्तं प्रस्मृत्य पृच्छसि । एतेन—भूमावुन्मज्जति, निमज्जतीत्यादिसिद्धनिदर्शनमपि विहतम् । तस्मादवयवावयविव्यतिरिक्तविषय एव सप्रतिघत्वविरोधव्यवस्थापनमपि निर्मूलमिति ॥ २० ॥

(स्वपक्षस्य निर्दुष्टत्वम्)

इत्थं वृत्त्यादिखेदो न भवति, न च नः कल्पनागौरवं स्यात्
वस्त्रे दीर्घीकृततन्तुभ्रमणविरचिते वस्त्र(वस्तु)धीर्नापि बाध्या ।
देशाधिक्यं समेतेष्वणुषु, न हि ततः स्थूलधीबाधशङ्का
संसर्गादेर्विशेषादवयविपरिषद्राशिवन्यादिवादः ॥ २१ ॥

परपक्षे प्रसञ्जितानां दोषाणामभावात् स्वपक्षस्य सम्यक्त्वमाह इत्थमिति ॥ इत्थम्—अवस्थाभेदमात्रेण निर्वाहे सतीत्यर्थः । यद्वा त्वत्पक्षवदिति । उक्तः सप्रतिघत्वविरोध इह वृत्तेः खेदः ; अवयवेषु वृत्त्यनुपपत्तिर्वा । यदि प्रत्यवयवमविभागेनावयवी वर्तते, तदा एकावयवदर्शनेऽप्यवयव्युपलभ्येत; जातिरिव

---

*आमो*– मिति । स्वसिद्धान्तं प्रस्मृत्येति ।........विभक्तानां अन्योन्यमवकाशप्रदानान्मेलनम्, अत एव परिणामाधिक्यमिति हि भवतः सिद्धान्त इति भावः । एतेनेति । अवकाशप्रदानेनेत्यर्थः । 'इत्थम्' इत्यस्य पूर्वोक्तप्रकारस्वारस्यादाह अवस्थाभेदमात्रेणेति । परपक्षे दूषणान्तर सूचने प्रयोजनाधिक्याद्न्यथा व्याचष्टे यद्वा त्वत्पक्षवदिति । द्वितीयव्याख्यानानुरोधेन व्याचष्टे–अवयवेष्विति ।

*टिप्पणी*– इत्थमिति । ननु स्वपक्षे वक्ष्यमाणानां दोषाणां परैरप्रसञ्जनात् अप्रसक्तप्रतिषेधो न सम्भवतीत्यत आह–परपक्ष इति । उपलभ्येतेति । व्यवह्रियेत चेति द्रष्टव्यम् । सम्प्रतिपन्नवदिति । संयोग-

*वी*– मेलन इति । अत्र आ. दा. "नीरक्षीरादिषु अवयवविभागेन परस्परानाक्रान्तप्रदेश एव परस्परावयवानां वृत्तिः । निमज्जनादावपि भूविभागेन प्रवेशः । झटिति जलनिमज्जने विभक्तजलसंघातवत् पुनस्संधानम् । तच्च सूक्ष्मकालत्वात् ज्वालानाशन्यायेन न प्रतीयते इति किरणावल्यादौ प्रतिपादितमित्यर्थः" इत्युक्तम् । निमज्जनोन्मज्जनशब्दप्रयोगोऽपि अत्रन्यायं स्मारयति । स्वसिद्धान्तं प्रस्मृत्येत्यस्य किरण्यावल्यादावुक्तं विस्मृत्येत्यर्थः । तस्मादिति । निदर्शनान्तराभावादित्यर्थः । अवयविकल्पनेन तद्भिन्नत्वनिवेशापेक्षया तदकल्पनमेव ज्यायः इति भावः । तथा च श्लोके अंशांशिनोः—इतरद्रव्यवत् अवयवावयविनोरपि द्रव्यान्तरेण संयोगस्थले प्रतिघातः स्यात् । मूर्तयोः (स्पर्शवतोः) न समानदेशत्वमिति न्यायस्याविशिष्टत्वादित्यर्थः । अस्मन्मते सर्वस्यैकप्रकृतिकार्यत्वेऽपि एकतरावस्थाप्रहाणेन वहुत्वावस्थाया उत्पन्नतया घटपटयोर्नानात्वेन घटाक्रान्तप्रदेशे पटस्य न संसर्गः । तन्तुत्वावस्थापन्नद्रव्यसंसृष्टे पटत्वावस्थापन्नसंसर्गस्तु न हन्यते तन्तुपटयोर्नानात्वाभावादिति ॥ (२०)

परमते दोषसत्त्वेऽपि, 'यश्चोभयोः समो दोषः' इति न्यायेन नोद्भाव्येतेति मतिमपाकर्तुं स्वपक्षनिर्दोषत्वमनन्तरश्लोकवेद्यमित्याह परपक्षे इति । श्लोके इत्थमित्यस्य इत्थंसतीत्यर्थः । सतीत्यध्याहाराभावायार्थान्तरमाह यद्वेति । पूर्वानुक्तवृत्तिखेदपरतयाऽपि व्याख्याति अवयवेष्विति अयं खेदो न्यायदर्शने (४. २. ७) 'वृत्त्यनुपपत्तेरपि तर्हि संशयानुपपत्तिः' इत्यादिनोद्भावितः। प्रसक्तदोषादधिकदोषारम्भे अपि तर्हीति प्रयोगः। तत्र द्वितीयप्रथमे अवयविसद्भावस्य स्थापितत्वेऽपि दोषः कथ्यते इति भावः । वृत्त्यनुपपत्तिर्नाम अवयविनः एकैकस्मिन्नवयवेऽपि कार्त्स्न्येन एकदेशेन वा

प्रत्याधारम्। अथ विभज्य ; अवयवातिरिक्तांशभेदेन अ(त्व)नवस्थापातः॥ बलवत्प्रमाणोपनीतेऽर्थे संप्रतिपन्नवत् वृत्त्यनुपपत्तिर्विलीयत इति चेन्न ; प्रमाणबलस्यात्र निरस्तत्वात्। आदिशब्देनोत्पत्तिनाशानुपपत्तिः संगृह्यते। तथाहि—पृथुतरपटनिर्माणप्रक्रमे द्वितन्तुकादिपटपङ्क्तिरुत्पद्यते, न वा ; न चेत्, बुद्धिशब्दान्तरादिरवस्थाभेदादेवेति सिद्धं स्यात्। उत्पद्यते चेत् – त्रितन्तुकाद्यारम्भदशायां पूर्वपूर्वं तिष्ठति, न वा। पूर्वत्र तदनारम्भः ; आरब्धकार्यैस्तदानीमवयव्यन्तरानारम्भात्। न च द्वितन्तुकादिः तन्त्वन्तरसहितः त्रितन्तुकाद्यारम्भक इति युक्तम्। इह तन्तुषु पट इत्यादिस्वाभिमतव्यवहारविरोधात्।

श्लो.— पूर्वसिद्धपटैस्सार्धं तन्तुभिः पटसंभवे। पटपङ्क्तिः समीक्ष्येत क्रमादाधिक्यशालिनी॥

प्राक्सिद्धानां पटादीनामुत्तरोत्तरजन्मनि। अहेतुको विनाशश्च स्थिरपक्षे न युज्यते॥

न चेत्, उपलम्भविरुद्धनाशसन्ततिकल्पनाप्रसङ्गः। एवमेकद्वित्र्यादितन्त्वपकर्षणदशायामपि खण्डपरम्परोत्पत्तिनाशपरम्पराक्लृप्तिः क्लिष्टतरा। लाघवशालिनि सङ्घातमात्रपक्षे राशिन्यायात् नासौ दोषः। ननु गौरवभयादवयविपरिहारे सौगतवत् स्वरूपविशेषमालम्ब्य तन्त्वादीनां संयोगोऽपि त्यज्यतामित्यत्राह **न चेति**। अत्र हि परैरप्यसमवायिकारणतयाऽभिमता दृष्टा च संयुक्तत्वावस्था स्वीकृतेति नास्माकमिह काचित् कल्पना। कुतस्तद्गौरवं संभवेदिति भावः। स्वलक्षणसमुदायवादिनाऽपि

---

[illegible]— द्वित्वादिवदित्यर्थः। चरमविकल्पस्य अव्यवहितत्वेन प्रथमं तं दूषयति–नचेदिति। उत्पन्नकार्यनाशानन्तरं तदारम्भकावयवैरेव पुनः कार्यान्तरारम्भः सम्भवतीत्यत आह—तदानीमिति। आरब्धकार्यस्थितिकाल इत्यर्थः। इहेति। 'इह पटेषु पटः' इति व्यवहारः स्यादित्यपि द्रष्टव्यम्। त्रितन्तुकादि पटोत्पत्तौ द्वितन्तुकादिनाशात् न समीक्ष्यत इत्यत्राह प्राक्सिद्धानामिति। न युज्यत इति। तस्मात् पटपङ्क्तिः समीक्ष्येतैवेति भावः। तिष्ठति न वेति विकल्पे द्वितीयं दूषयति–नचेदिति। कल्पना-

[illegible]— स्थित्यसंभवः। तत्र कार्त्स्न्येन स्थितौ अवयवान्तरे तस्यास्थितिप्रसंग इतिवत् स्वल्पावयवदर्शनेऽप्यवयव्युपलब्धिप्रसंग इति दोषोऽप्यस्ति। सोऽयं तत्र, 'पृथक्चावयवेभ्योऽवृत्तेः' (४. २. ९) इति सूत्रे भाष्ये दर्शितः। तत्र तत्परिहारस्याकृतत्वात् तमेव दोषमाह एकैकावयवदर्शनेऽपीति। शंकते यत्थदिति। संप्रतिपन्नवदिति। संयोगः संयोगविषयित्वादीनामनुभवानुसारात् अनेकसंबन्धित्वमेव प्रागुक्तम्, न तत्र कृत्स्नैकदेशचोद्यमिष्यते, तद्वदित्यर्थः। श्लोके वृत्त्यादीत्यादिपदेन एकत्रैवानेकावयव्युत्पत्तिविनाशकल्पना गृह्यते। नः इति पदं प्रथमवाक्येऽपि संबध्यते ; उत्तरवाक्येष्विव। अत एव इत्थमित्यस्य त्वत्पक्षवदित्यर्थ उक्तः।

नः इति पदानुगुणतया द्वितीयवाक्यमवतारयति नन्विति। अस्मन्मते कल्पनागौरवप्रसक्त्यभावादयमप्रसक्तप्रतिषेध इति शंकाऽनयाऽवतारिकया परिहृता। तन्मते कल्पनागौरवसद्भावस्तु वृत्त्यादीत्यादिपदविवरणेनैव विशद इति न तत्परत्वमस्य वाक्यस्य। संयोगोऽपि त्यज्यतामित्यत्र, अवश्यञ्च त्याज्यः संयोगः, एकतन्तुकपटस्थले वक्ष्यमाणे तन्तुद्वयसंयोगस्य दुरुपपादत्वादिति तत्स्थल इव सर्वत्रैव त्यज्यतामिति हृदि निगूढम्। एतदाविर्भावनमनन्तरवाक्यावतरणे भविष्यति। अत एव तस्य वस्त्रे दीर्घेति वाक्यस्य परमते दोषोद्भावनाभिप्रायकत्वं परित्यज्य स्वमते दोषाभावख्यापनपरत्वं वक्ष्यति। "नः" इति पदानुसारेण श्लोकस्य स्वस्मिन् दोषाभावख्यापनपरत्वेष्टेः। स्वपक्षे क्वचित् दोषसंभावने तदुद्भावनपरिहारयोर्युक्तत्वाच्च।

नैरन्तर्यरूपोऽतिशयः कश्चिदिष्यते ; अन्यथा दूरस्थवत् एकताभ्रान्तिः पुञ्जबुद्धिर्वा न स्यात् । त्वमपि विभूनामणूनां च नित्यानामपि हेतुभेदैरवस्थान्तरापत्तिमङ्गीकरोषि ; सर्वद्रव्यस्वरूपनित्यत्वं तदवस्थाभेदं च वदतामपि तथा किं न स्यात् ? संयुक्तावस्थाऽपि हि परिणामः। कथं तर्हि नित्यानित्यविभागः ? इत्थम् । द्रव्यतदवस्थयोस्तथाभावादेव । द्रव्यविवक्षायां तु अवस्थाविशिष्टवेषेणानित्यत्वव्यवहार इति ।

ननु तन्तव एव व्यतिषङ्गविशेषविशिष्टाः पट इति भवतां राद्धान्तः "पटवच्च" इति सूत्रे दर्शितः । तथा सति दीर्घीकृततन्तुपरिवर्तनविशेषनिष्पादितेऽवयविनि कथं पटबुद्धिः स्यात् ? अनेकतन्तुसङ्घातासिद्धेरित्यत्राह— **वस्त्र इति** । न हि वयं तन्तुगतमेकत्वं द्वित्वबहुत्वादिकं वा पटधीनिबन्धनं नियच्छामः ; यथादृष्टि सर्वसंभवात् । त्वं तु स्वपक्षदोषमस्मत्पक्षस्थं मन्यसे (ब्रवीषि) । प्रदर्शितं हि पत्रे तादृङ्निष्पत्तौ एकस्यावयवस्यानारम्भकत्वम् । अतस्तवैव तत्र पटधीबाधः । एकस्यारम्भकत्वेऽतिप्रसङ्गोऽपि तवैव ।

स्यादेतत् । अवयविनमनभ्युपगच्छतामन्ततः पर्वतादयोऽपि परमाणव एव संहताः स्युः । ते च न प्रत्यक्षाः । अतः "सर्वाग्रहणमवयव्यसिद्धेः" इत्यक्षपादोक्तमनतिक्रमणीयं स्यात् । स्थूलद्रव्याभावे चाणु-

---

*ஆனந்தா*— गौरवनिषेधस्य प्रसक्तिमाह—नन्विति । दूरस्थवदिति । परस्परापेक्षया दूरवर्तिषु वस्तुष्वित्यर्थः । एकताभ्रान्तिरिति । परमाणुपुञ्जेषु घटादिषु एको घट इत्यादिभ्रान्तिरित्यर्थः । पुञ्जबुद्धिः, माषादिराशिष्विति शेषः। त्वमपीति वैशेषिक उच्यते। हेतुभेदैरिति । कर्मभेदैरित्यर्थः। अवस्थान्तरेति । संयुक्ताद्यवस्थान्तरापत्तिमित्यर्थः । वदतामिति । अस्माकमिति शेषः । कार्याणां प्रकृतिपरिणामत्ववादिनां कथं नित्यानामिव संयुक्तावस्थामात्राङ्गीकार इत्यत्राह—संयुक्तेति । अतिप्रसङ्ग इति । असमवायिकारणं विनाऽपि कार्योत्पत्तिः स्यादित्यतिप्रसङ्गः । न सिद्ध्येदिति । भ्रान्तेरभ्रान्तिपूर्वे-

*ஸீ*— नैरन्तर्येति । संयोगमनिच्छता तत्स्थाने नैरन्तर्यमुक्तम् । न च तत् धर्मिमात्रम् । सान्तरेष्वणु नैरन्तर्यापत्तेः । कथं तर्हीति । तर्हि—सर्वद्रव्यस्वरूपनित्यत्ववादे । इत्थमिति । द्रव्ये नित्यत्वमद्रव्ये चानित्यत्वमित्यर्थः। द्रव्ये उत्पत्तिविनाशरूपावस्थास्वीकारात् तद्विवक्षायामाह द्रव्येति ।

बहुत्वादीति आदिपदेन तन्तुःसावस्थाप्रहाणपरिग्रहः । सर्वसंभवात्—एकस्यापि द्वयोरपि कारणतया कार्यसंभवात् । वस्त्रव्यवहारनियामकमाच्छादनाद्युपयोगिसंयोगविशेषमात्रमिति वक्ष्यति । *सूत्रकारेण बहुत्वादिकं नोक्तम् ; भाष्ये तन्तव इति प्रयोगस्तु, युष्माभिः तन्तूनां संयोगः पटहेतुरिति* कथनात् युष्मान् व्युत्पादयितुम् । बहुतन्तुकपटस्थले एकं तन्तुमादाय अयं पट इति व्यवहारो नास्मदिष्ट इति ज्ञापनाय च । अतिप्रसंगोऽपि तवैवेति । एकपत्रारब्धस्य तादृकस्यावयवित्वाभावे एकतन्त्वारब्धस्यापि त्वन्मते पटत्वाभाव एव । अत्रावयवीष्टौ तत्राप्यापत्तिरिति । श्लोके वस्तुधीरिति वस्त्रधीरिति च पाठः । पृथक् वस्त्रे इति पदं यत् प्रयुक्तम्, तत्र वस्तुनीति युक्तम् । तथापि वस्त्रे इति प्रयोगः वस्त्रकार्याच्छादनादिकरे कथं वस्त्रत्वास्वीकार इति ज्ञप्तये । वस्तुधीरिति पाठे तद्वस्तुधीरित्यर्थः । यथाभूतार्थविषयिणी तन्तुः पट इति धीरिति वा । न इत्यनुषङ्गात् युष्माकं सा बाध्या भवतीति लभ्यते ।

ननु वस्त्रविशेषे वस्तुबुद्धेरबाध इति किम् ? सर्वत्रापि बाधात् । वस्त्रादिबुद्धिर्हि स्थूलबुद्धिमन्तरा न भवति । अवयव्यभावे परमाणुमात्रसद्भावे स्थूलस्यैवाभावाच्च स्थूलधीरित्यवतारयति स्यादेतदिति । सर्वाग्रहणमिति । कस्यापि ग्रहणं न स्यात्, सर्वाग्रहणमेव स्यादित्यर्थः । तथा च सूत्रे सर्वाग्रहणमित्यस्य सर्वाग्रहणप्रसंग इत्यर्थः । अवयव्यसिद्धेरित्यस्य चावयव्यसिद्धावित्यर्थः । न सिद्ध्येदिति ।

सहतौ स्थूलत्वाध्यासोऽपि न सिध्येदिति— तत्राह **देशाधिक्यमिति** । अय भाव —स्थूलधीरित्यव यविधीर्वा, परिमाणविशेषधीर्वा, प्रत्यक्षयोग्यत्वधीर्वा, प्रत्येकदेशादधिकदेशत्वधीर्वा। नाद्य , तदभाव प्रसक्तेरिष्टप्रसङ्गात् (क्त्वात् ?)। न द्वितीय , सहतैरेवावयविवत् परिमाणान्तरस्य सुष्ठ्वुपपत्ते ॥ अणुष्वेव कथ विरुद्ध स्थूलत्व स्यादिति चेत् , एकत्वाद्याश्रयेष्वेव कथ द्वित्वादिकमिच्छसि ॥ अपेक्षाबुद्धिसगृहीतान्यानुबन्धसामर्थ्यादिति चेत्—बुद्ध्यनपेक्षसमेदसामर्थ्यादेव परिमाणान्तरमपि पश्यन्तु भवन्त । न तृतीय , एकैकस्या(प्यप्र)त्यक्षत्वेऽपि समुदायवशात् दृश्यत्वोपपत्ते । यथैकैकस्य दवीयस केशहिमादे रदर्शनेऽपि सहताना दृश्यत्वम् ॥ एकैकस्याप्यासत्तौ दर्शनात् योग्यत्वमस्तीति चेत्–अणूनामपि त्रसरेणुमालरूपाणा सामग्रीसभवे तथैव स्यात् । न चतुर्थ , माषादिराशिषु सहतिभेदैर्देशतारतम्यदृष्टे ॥

ननु तत्तत्परिमाणावयविद्रव्याभावे तत्प्रयुक्तदेशन्यूनाधिकत्व दुर्निरूप स्यात् ॥ मैवम् , न ह्यवयवि निरूपणेनैव देशाधिक्यादिनिरूपणम्, सुरभित्वगन्धत्वादेरिव सम्बन्धि यूनाधिकभावेनापि तदुपपत्ते । द्रव्येषु नैवमिति चेत्— न, द्व्यणुकोत्पत्ते पूर्वक्षणे सयुक्ताणुद्वयस्य प्रत्येकदेशादधिकदेशत्वावश्यम्भावात् । अन्यथा

---

टिप्पणी— क्त्वादिति भाव । ननु अणुसघातस्याधिकदेशवर्तित्वेऽपि स्थूलधीनाधशङ्का कथ नास्ति, जालमरीचिस्थाणुसघाते स्थौल्यादर्शनादित्यत आह–अय भाव इति। सहतैरेवेति दृढतर सयोगो विवक्षित । तदभावादेव जालमरीचिस्थाणुषु अवयव्यनुत्पत्तिवत् स्थौल्यानुत्पत्तिरिति भाव। अपेक्षाबुद्धीति। द्वित्वाद्याश्रयेषु 'इदमेकम्, इदमेकम्' इति प्रत्येकमेकत्वबुद्धि अपेक्षाबुद्धि । तत्सहकृतवस्त्वन्तरसाहित्यसामर्थ्यादित्यर्थ । सम्भेद –सम्बन्ध [ ]। केशहिमादेरिति। आदिशब्देन धूमावयवमशककुलादे ग्रहणम्। देशतारतम्यदृष्टेरिति। राशे सम्बन्धरूपत्वेन तत्र स्थौल्यासभवेन राशिगतमाषादिष्वपि स्थौल्यप्रसङ्ग इति भाव । यद्वा, निरुक्तस्थौल्यस्य माषादिराशिष्विव परमाणुसघातेऽपि सम्भवात् तत्र स्थौल्यधीरिष्टेति भाव । ननु माषादिराशिवत् अणुसघातेऽपि देशतारतम्यमस्तु, तत्प्रयोजकतया स्थूलावयविद्रव्यान्तरमङ्गीकार्यमित्यभिप्रायेण शङ्कते—नन्विति । अन्यथी— शशविषाणवत् अप्रसिद्धस्यारोपासभवादिति। अवयविवदिति। सर्वेष्ववयवेषु अवयविद्रव्यस्यानेपरिमाणगुणस्वीकारेतिर्हि न दुष्यतीति। अणुत्वमहत्त्वयोर्मिथोविरोध इति शङ्कते अणुष्वेवेति। अपेक्षेति। अयमेक अयमेक इति ज्ञानमपेक्षाबुद्धि । तया सगृहीतस्य अन्यस्य वस्तुन अनेन एकेनानुबन्ध —सम्बन्ध । अन्तत एकापेक्षाबुद्धिविषयत्ववलादित्येवोक्त भवति। समेदेति। मेलनेत्यर्थ । मिथोऽसम्बन्धेऽपि बुद्धिविषयत्वमात्रेण चेत् कश्चिद् गुणो जात उभयपर्याप्त स्यात्, मिथस्सम्बन्धे सुतरामिति भाव। सिद्धान्ते अधिकदेशकत्वातिरिक्त परिमाण नेष्टमित्यपि सुवचम्। अत एव भवन्त इत्युक्तम्। "केशसमूहे तैमिरिकोपलब्धिवत् तदुपलब्धि " (४-२-१३) इति न्यायसूत्र स्मारयति केशहिमादेरिति। नन्वनन्तरसूत्रेण स्वविषयेत्यादिना, 'नातिशये प्रवृत्ति केशस्य प्रत्येकमपि दृश्यत्वात् परमाणोश्चातथात्वात्' इत्युक्तम्। अतो दृष्टान्तवैषम्यमिति शङ्कायाम्, दृश्यत्रसरेणवतिरिक्तपरमाणवनगीकारात् वैषम्यमिति प्रत्याह अणूनामपीति । सहतिभेदै —अल्पमहन्महत्तररूपराशिभेदै सुरभित्वेति। गन्धो द्विविध सुरभिरसुरभिश्चेति हि विभज्यते। तत्र सुरभित्व व्याप्यजातित्वात् न्यूनदेशवर्ति, गन्धत्व परजातित्वादधिकदेशवर्तीति भवद्दिष्टम्। तत्र गुणगतजातौ अवयविप्रसक्ति विनैव देशाधिक्यमुपपाद्यमिति अत्रापि तथैवेत्यर्थ । अत्र गन्धपुष्पधूपत्वादिव्यवहारमङ्गीय मनसिकृत्य गन्धसुरभिशब्दयोर्व्याप्यार्थत्वमार्थिकत्व (श्रा द्रा) व्याख्यायुक्तम् न तु यथाश्रुतपदादिना। तत्र

सर्वपरमाणूनां समानदेशत्वे प्रागुक्तदोषप्रसङ्गात् ॥ द्व्यणुकान्तरपरिच्छिन्नः स देश इति चेन्न ; सहवृत्त्ययोगात्, अन्यथा परिच्छेदासिद्धेः ॥ समवायिनस्संयोगिनो वा देशस्याभावे कथं तत्र देशाधिक्यमिति चेन्न; आकाशाद्यंशभेदेन तदुपपत्तेः ॥ कथं निरवयवस्यांशभेद इति चेत्--आत्मानं पृच्छ । कर्णशष्कुल्याद्युपाधिपरिच्छित्त्या नभसि नानाश्रोत्राणि कल्पयसि । भेर्यादिशब्देषु श्रूयमाणेषु तरङ्गवृत्त्या तत्तदनन्तरदेशेषु शब्दोत्पत्तिं साधयसि । वेणुरन्ध्रादिविशेषभागाश्च प्रसिद्धाः ॥ आकाशादेरप्रत्यक्षत्वात् तदंशतारतम्यं दुर्ग्रहमिति चेन्न ; प्रत्यक्षाकाशवादिनं प्रति हेत्वसिद्धेः । त्वयाऽपि मापात् अवयविनो महीधरस्याधिकदेशत्वं गृह्यते ॥ आलोकमण्डलांशभेदैस्तत्र देशाधिक्यमिति चेन्न ; आलोकस्यापि नभसि न्यूनाधिकदेशवृत्तित्वदृष्टेः ॥ परिमाणाधिक्यमात्रमेव पर्वतादिषु गृह्यत इति चेत्—अगृह्यमाणमपि देशाधिक्यं तत्रास्ति, न वा । अस्ति चेत्—सङ्घातेऽपि कश्चोद्यावकाशः ? न चेत् - तत्तद्देशेषु चक्षुःप्रसरादिनिरोधकत्वं न स्यात् । अन्यथा अल्पदेशवर्तिनः सर्वत्र निरोधकत्वप्रसङ्गात् । अतः परस्परानाक्रान्तदेशावष्टम्भेन संहन्यमानेषु त्रसरेणुषु सुग्रहमेव देशाधिक्यम्, देशस्त्वालोकाकाशादिषु कश्चित् यथायोग्यमस्तु॥

अत एव प्रधानाभावादणुषु स्थौल्यारोपोऽपि न स्यादिति चोद्यमपि निस्तीर्णम् ।

तथाऽपि यदि संसृष्टास्तन्तव एव पटः, ततस्तन्तुराशिमात्रेऽपि पटधीः स्यादित्यत्राह — **संसर्गादेरिति**। न हि त्वयाऽपि तन्तुसंसर्गमात्रं पटस्यासमवायिकारणमिष्यते ; तथा सति कुविन्दादिव्यापारनैरपेक्ष्यप्रसङ्गात् । अतो यादृशात् संसर्गविशेषादवयवी तवोत्पद्यते, तादृशसंसर्गविशेषविशिष्टास्तन्तवः पट इति क्वातिप्रसङ्गः ? आदिशब्देन संसर्गिद्रव्याणि देशकालौ च गृह्यन्ते । द्वितीयेन तु आदिशब्देन

---

[illegible]— थेति । एकदेशवर्तित्व इत्यर्थः । परिच्छेदासिद्धेरिति । द्व्यणुकान्तरेणेति शेषः । समवायिन इति । अणुद्वयापेक्षयेति भावः । . . चोद्यावकाश इत्यर्थः । अत इति । पर्वतालोकमण्डलादौ आकाशप्रदेशाधिक्यस्य सर्वजनसिद्धत्वेन दुरपह्नवत्वादिति भावः । अत एवेति । स्थौल्य-देशाधिक्ययोरुपपादितत्वादिति भावः । तथापीति । स्थौल्यादिसम्भवेऽपीत्यर्थः । संसर्गिद्रव्याणीति । मृत्तन्त्वादिद्रव्यविशेषे घटपटादिव्यवहार इति

[illegible]— द्रव्येष्विति समनन्तरवाक्योत्थानायोगश्च स्यात् । प्रागुक्तेति । एकपरमाणुपरिमाणाधिकः प्रथिमा न जायेतेत्युक्तेत्यर्थः। अन्यथा—संबन्धानिष्टौ । अवच्छेद्याधिकरणसंबन्धिन एव ह्यवच्छेदकत्वमिति भावः । समवायिन इति । गन्धस्थले तदधिकरणं समवायिद्रव्यमेव देश इति भावः । आत्मानं पृच्छेति । अस्मन्मते आकाशः सावयव एवेति न वयं प्रष्टव्याः । स प्रश्नस्त्वय्येव प्रतिनिवर्तते इति । तदुपपाद्यते कर्णेत्यादिना । वेणुरन्ध्रेति । रन्ध्रं हि आकाशप्रदेश एव । ननु तत्र सर्वत्र देशो न ग्राह्यः। अत्र तु, स्थूलधीरियमिति ग्राह्यस्यैव देशत्वं वक्तव्यमिति शंकते आकाशादेरिति । आकाशमादायैव देशग्रहणं तेनापि वक्तव्यं महीधरविषये इत्याह त्वयापीति। आलोकेति। निरालोकस्थलीयत्वावस्थूलधीस्थले आलोकोऽस्माभिर्दुर्वचः इति तदाशयः । अन्यथा-चक्षुः प्रसरदेशसंबन्धिनोऽपि निरोधकत्वे । स्थूलत्वाध्यासोऽपि न सिध्येदिति प्रागुक्तं परास्यति प्रधानेति । स्थूलपदमुख्यार्थेत्यर्थः। अधिकदेशकत्वमेव स्थूलत्वमिति भावः । तुरीयं पादमवतारयति तथापीति । संसर्गि द्रव्याणीति । परिषदादिस्थले हि न नरादेर्मिथः संयोग आवश्यकः । किन्तु एकाधिकरणप्रदेशसमनन्तरप्रदेश-

यूथ-पङ्क्ति मण्डल-सेना-व्यूह-पूर्ण-चतुरश्रादिसंग्रहः । परिषदाद्युपादानं दृष्टान्तार्थम्, मत्वर्थीयमपि शूरवती सेनेतिवत् प्रत्येकसमुदायभेदविवक्षया स्यादिति ।

श्लो- भिन्नानामेव संश्लेषे संघातैक्यानुसारतः । संयुक्तौ द्वाविति प्रख्या राशिद्वित्ववशात् भवेत् ॥
महत्त्वैकत्वयुक्तत्वप्रभृतेरपि राशिवत् । संयुक्तद्रव्यनिष्ठत्वान्न संयोगे प्रसञ्जनम् ॥
घनत्वश्यामतादीनां वनैकाधिकरण्यतः । न स्यात् वृक्षबहुत्वादेर्घनत्वाद्यैर्विशेषणम् ॥
तन्तवः सितरक्ताद्याः पटचित्रानुयायिनः । अवयव्यनपेक्षत्वं चूर्णसंहतिचित्रवत् ॥

---

மு— अवयव्यनङ्गीकारे घटपटादिसंयोगे संयुज्यमानानां बहुत्वात् कथं 'द्वौ संयुक्तौ' इति प्रत्यय इत्याशङ्क्य, राशिद्वयवत् संघातैक्यानुसारेण तथा प्रतीतिरुपपद्यत इत्याह भिन्नानामेवेति । अवयव्यभावमहत्त्वैकत्वादीनां संसर्गविशिष्टावयवगतत्वस्य वक्तव्यत्वात् विशेषणभूतसंसर्गगतत्वं स्यादित्याशङ्क्य राशिमहत्त्वादिवत् संसर्गाश्रयद्रव्यगतत्वान्नेह संसर्गप्रसङ्ग इत्याह—महत्त्वैकत्वेति । दृष्टान्तान्तरमाह घनत्वेति । शुक्लादितन्तुष्वेकैकरूपाश्रयेषु चित्ररूपाभावात् 'चित्रः पटः' इति धीः अवयविनमुपस्थापयतीत्याशङ्क्य, चूर्णसंहताविव तन्तुसङ्घाते चित्रधीसम्भवात् नैकतयाऽवयव्याक्षेप इत्याह तन्तव इति । तन्तुगतशुक्लकृष्णादिरूपसमुदायातिरेकेण चित्ररूपं नास्तीति भावः । चित्रपटेऽपि

ஞா வ— भावः । अवयवातिरिक्तावयव्यनङ्गीकारे मत्वर्थीयप्रत्ययः कथमित्यत आह—मत्वर्थीयमित्यादि । राशिवदिति । राश्यन्तर्गतपदार्थेषु महत्त्वं द्वित्वादिवत् व्यासज्यवृत्तीति भावः । जात्यैक्यात् व्यक्तिषु एकैकव्यवहारवत् समुदायिषु एकत्वव्यवहारः । समुदायैकत्वं च समुदायोपाधिघटकदेशाद्यैक्यमेव । अयं च व्यवहारो लाक्षणिको मुख्यो वा । विशेषणगतव्यवहाराणां विशेष्यपर्यन्ताभिधानस्य देवदत्तो जातः उत्कृष्टः पण्डित इत्यादौ मुख्यत्वदर्शनात् । अविकारिद्रव्यविशिष्टस्य ईश्वरस्योपादानत्वोक्तेर्मुख्यत्वाच्च । राशावेकांशस्यान्येन संयोगेऽपि संयुक्तांशसम्बन्धित्वात् संयुक्तत्वव्यवहार इति भावः । प्रभृतिशब्देन अनुपदमेवोच्यमानं घनत्वादिकं गृह्यते । श्यामतादीनामिति । आदिशब्देन विपुलत्वान्तत्वा (अनन्तत्वा ?) देर्ग्रहणम् । वनैकाधिकरण्यत इति वृक्षबहुत्वादेरित्यस्य विशेषणम् । वनशब्दार्थप्रविष्टैकाधिकरण्यविशिष्टस्येत्यर्थः । बहुत्वादेरिति । अत्र आदिशब्देनाधिकरणैकत्वादेर्ग्रहणम् । विशेषणमिति । व्यावर्तनमित्यर्थः ।

வீ— स्यत्वमन्यस्येत्येतादृशमेव । तत्रावयविव्यवहारो न मुख्यः । अवयवावयव्यैक्ये तन्तुमान् पट इति कथमित्यत्र प्रत्याह मत्वर्थीयमिति । त्वन्मत एवानुपपत्तिः; तन्तोः पटं प्रत्याधारत्वात् आधेये आधारवत्त्वव्यवहाराभावात् । न हि भूतलवान् घट इति प्रयुज्यते इति ।

अथ कतिभिश्चित् कारिकाभिः राश्यवयव्यवैषम्यप्रदर्शनेनावयविसाधकहेतून् आभासयति भिन्नानामिति । अवयवातिरिक्तावयव्यभावे द्वौ संयुक्ताविति द्वित्वनिर्देशः कथमिति चेन्न; अवयवानेकत्वेऽपि अवयवसंघातः एक इति सर्वसंमतत्वात् तद्द्वयस्य द्वित्वेन निर्देशात् द्वौ राशी इति राशिद्वित्ववदित्यर्थः । ननु संघातः संयोगः, तस्य संयुक्तत्वं महत्त्वमेकत्वमिति गुणाश्रयत्वं कथमित्यत्राह महत्त्वेति । राशिर्नाम व्रीह्यादिसमुदायः । स च संयुक्तत्वमेव, तत्र तत् सर्वं कथम् । संयुक्तद्रव्यनिष्ठस्यैव गुणस्य संयोगे आरोप्य व्यवहार इति चेत्—तुल्यम् । संघातौ संयुक्तावित्यस्य च विलक्षणसंश्लेषद्रव्ये संयुक्ते इत्येवार्थः । पारम्पर्येणापि विशेषणत्वं दृष्टमित्याह घनत्वेति । घनं श्यामञ्च वनमित्यत्र कथं वृक्षबहुत्वरूपे वने घनत्वरूपनिबिडत्वस्य श्यामरूपस्य चान्वयः । न च वृक्षा एव वनम् । एकवचनायोगात् । अतः परम्परयाऽपि विशेषणत्वं भवतीत्यर्थः । चित्ररूपस्यैकस्य तन्तौ कुत्रापि स्थित्ययोगात् तदाधारतया अवयविसिद्धिरितीदं निरस्यति तन्तव इति ।

रूपादीनामनिलेऽपि वदन् वैषम्यदर्शनम् । अपह्नुवीत वैयात्यात् खपुष्पादेरदर्शनम् ॥
या चासौ धारणाकृष्ट्योरुपपत्तिरसूच्यत । तादृग्भूतावयव्यर्थे संघाते सा भविष्यति ॥
गाढावयवसंश्लेषरहितेऽवयविन्यपि । धारणाकर्षणे न स्तस्तथा चाभ्युपगच्छसि ॥
धारणाकर्षणे चात्र धृताकृष्टानुबन्धतः । दृढावयवसंश्लेषसहितेऽवयविन्यपि ॥
अंशान्तरेषु तेऽस्माकं सिद्धे जतुगृहीतवत् । "तृणोपलादिजतुसंगृहीतं" यत् उदाहृतम् ॥

---

*सर्वा*— तन्तुरूपाद्यतिरिक्तरूपादिदर्शनात् अवयव्यभ्युपेय इति कश्चिदाह ; तं दूषयति रूपादीनामिति । घटपटादिष्वेकदेशधारणाकर्षणाभ्यां अंशान्तराकर्षणधारणे व्रीहिराश्यादिष्विवानुपपद्यमाने अवयविनं कल्पयतः इति सूत्रकारोक्तधारणाकर्षणानुपपत्त्याऽवयविसिद्धिरित्याशङ्क्य तयोरन्यथासिद्धमाह या चासाविति । तादृग्भूतावयव्यर्थे इति । अ[ति ?]दृढसंयोगावयवारब्धेष्ववयविष्विव ते वाच्ये । तथा च तादृशावयव्यारम्भकतया त्वदभिमते संघाते तयोरुपपन्नत्वान्न ततोऽप्यवयविसिद्धिरित्यर्थः । तादृग्भूतेति विशेषणव्यावर्त्यं दर्शयति गाढावयवेति । गाढसंश्लिष्टस्थले चांशान्तरधारणादेः को हेतुरिति सोदाहरणमाह धारणाकर्षणे चेत्यादिसार्धश्लोकेन । जतुगृहीतवत् = जतुगृहीततृणोपलादिवदित्यर्थः । जतुगृहीतत्वेऽपि अवयव्याकृष्यत इत्याशङ्क्याह तृणोपलादीति । . ..अवयवी नेष्ट इति ।
*भावप्र*— पटचित्रानुयायिन इति । पटस्य यत् चित्रं रूपं तत्संबन्धा इत्यर्थः । अवयव्यनपेक्षत्वमिति । पूर्वं 'तस्मात् चित्ररूपस्य' इत्यध्याहार्यम् । चित्रवदिति । चित्रस्येवेत्यर्थः । अवयव्यर्थ
*श्री*— चित्रं नाम न रूपान्तरम् । विजातीयवर्णतन्तुसंघात एव पटः तादृशपटरूपमित्यर्थे चित्रमिति प्रयोगः । पटचित्रानुयायिनः—पटगतचित्रविषयकज्ञानविषयभूता इत्यर्थः । तत्र दृष्टान्तः चूर्णसंहतिचित्रवदिति । विभिन्नवर्णनानाचूर्णप्रदेशसमुदायरूपालङ्कारस्थले त्वन्मतेऽप्यवयव्यभावात् रूपसमुदाय एव चित्रशब्दार्थः, तथेत्यर्थः । कश्चित्तु, 'किं चित्रपर्यन्तगमनेन? अचित्रस्थलेऽपि तन्तूनां भिन्नत्वात्; तन्तुरूपाण्यनेकानि, पटरूपं त्वेकमिति वैषम्यसत्त्वात् इति तदाश्रयपटस्थितिं मन्येत ; तन्निषेधति रूपादीनामिति । अचित्रपटस्थलेऽपि अवयवरूपेभ्योऽवयविरूपे वैलक्षण्यमस्तीति तदुक्तमयुक्तम् ; इदं तन्तुरूपम्, इदं पटरूपमिति पृथगनुपलम्भात् । इदमदर्शनमपह्नुते चेत्, खपुष्पादर्शनमप्यपह्नुवीत । न्यायसूत्रे तु "धारणाकर्षणोपपत्तेश्च" इति सूत्रेण तन्तूनामाच्छादनार्थधारणासंभवात् एकतन्त्वाकर्षणे च सर्वतन्तुसमीपागमनाभावात्, पटभावानन्तरं धार्यमाणत्वाऽऽकृष्यमाणत्वयोर्भावाच्च पटोऽवयवी पृथगित्युक्तम् ; तदनुवदति येति । समाधत्ते तादृगिति । तादृगवयव्युत्पत्तेः संघातविशेषमन्तरेणायोगात् तदिष्टौ तस्यैव धारणाकर्षणप्रयोजकत्ववर्णनसंभवात् । किञ्च धारणाकर्षणे प्रति नावयवि कारणम्, अवयविसत्त्वेऽपि अवयवानां गाढतरसंश्लेषरूपसंघाताभावे धारणाद्यभावात् । न च तत्रावयव्यभावः, तोयतैलादिधारासु प्रचितावयवकतूलादौ चावयविन दृष्टत्वात् । तथाचाभ्युपगच्छसि—धारणाद्यनर्हं संश्लेषविशेषरहितश्चावयविं स्वीकरोषि । किञ्चावयव्येवाकृष्यत इति न, एकावयवाकर्षणे अवयवान्तराकर्षणस्यापि दर्शनादित्याह धारणेति । ते इति न द्विवचनम्; तेऽस्माकमिति संध्ययोगात् । अतः ते तवेत्यर्थः । अर्धत्रयमेकं वाक्यम् दृढावयवसंश्लेषावयविसत्त्वेऽपि धृतस्याऽऽकृष्टस्य च अंशस्यानुबन्धात् अंशान्तरेषु धारणाकर्षणे हि तवास्माकञ्च सिद्धे । तत्रावयवित्वं न प्रयोजकम्, किं तु संश्लेषविशेषः । नन्वयवयव्येव अंशान्तराकर्षणादिप्रयोजकोऽस्त्वित्यत्राह जतुगृहीतवदिति । जतुसंगृहीतविचित्रवस्तुसमुदाय इवेत्यर्थः । तत्रावयव्यभावे किल दृष्टान्तता, अतस्तदभावं तत्र न्यायभाष्येष्टमिति दर्शयति तृणेति । 'ययवयवि-

तत्राप्यवयवी नेष्टः कश्चित् जतुतृणादिषु । पाशाद्यैरपि पश्वादेर्धारणाकर्षणे क्षमे ॥
किं तत्र पशुपाशादिष्ववयव्यभ्युपेयते । संग्रहप्रभवं चात्र धारणाद्यनुभाष्य तु ॥
पक्षिलस्तन्मतस्थो वा नोत्तरं सम्यगब्रवीत् । आरब्धकार्यैरारम्भो मिथस्सप्रतिघत्वतः ॥
**न्यायवार्तिकटीकादौ** क्षिप्तः संमतिरत्र नः ।

---

पू॰— विजातीया[ना ?]रम्भकत्वस्य त्वदङ्गीकृतत्वादिति भावः। परसंप्रतिपन्नतरमुदाहरणान्तरमाह—पाशाद्यैरिति। क्षमे=शक्ये इत्यर्थः। धारणादेः संग्रहप्रभवत्वं न्यायभाष्यकारादिभिराशङ्क्य निराकृतं खल्वित्यत आह संग्रहप्रभवं चेति। ननु परविषयाग्रहवशात् परोक्तं सर्वमसम्यक्त्वेन तत्र भातीत्याशङ्क्य, नास्माकमाग्रहः, परोक्तमपि युक्तियुक्तमस्माभिरङ्गीक्रियत इत्युदाहरणद्वयेन दर्शयति—आरब्धकार्यैरित्यादिना सार्धश्लोकेन।

टिप्पणी— इति। अवयविशब्दार्थ इत्यर्थः। संग्रहेति। सम्यक् ग्रहणम्, दृढसंयोग इत्यर्थः।

वी॰— कारिते अभविष्यताम्, तर्हि तृणोपलकाष्ठादिषु जतुसंगृहीतेषु नाभविष्यतां धारणाकर्षणे" इति हि न्यायभाष्यम्। यद्यपि उपलैर्भित्तिं काष्ठैः स्थूणादिकं तृणैः पटलञ्च परिकल्प्य निर्मितं गृहमेकावयवीति स्वीकृतम्, अथापि नामविशेषार्हसंस्थानरहिततृणोपलकाष्ठमेलनं जतुकृतं नावयविने कल्पत इति तदाशयः। निर्विचिकित्सं स्थलमन्यत् स्वयमाह पाशेति। न हि पशुपाशनिष्पाद्यमेकमवयव्यस्तीति। एतत्सूत्रार्थमुक्त्वा, संग्रहकारिते वै इत्याशंकां परमुत्थापितवान् भाष्यकृत्। संग्रहो नाम विलक्षणसंयोगः। संग्रहे सति धारणादिभावात् तदभावे पांसुराश्यादौ धारणाद्यभावाच्चान्वयव्यतिरेकाभ्यामवयविनोऽकारणत्वमुपपादितम्। पक्षिलः—भाष्यकारो वात्स्यायनः, तन्मतस्थः—तद्विवरणप्रवृत्तो वार्तिककार उद्योतकरः अन्योऽपि आशंकापरिहारकमुत्तरं नाब्रवीत्। प्रत्युत धारणाकर्षणयोरन्वाचये सौत्रश्चकार इति तयोरसाधकत्वमेवादर्शयत्। एवं तर्हि अणूनामेव सञ्चितत्वे प्रत्यक्षमिष्यताम्; अतो न सर्वाग्रहणम्। धारणाकर्षणे च संग्रहकार्ये इत्यवयविनं प्रत्याचक्षाणः किमनुयोक्तव्य इति पृच्छन् पक्षिलः—'एको महान् भूतलसंयुक्तो घटः' इति एकत्वमहत्त्वसंयोगघटत्वजात्याश्रयद्रव्यमनेकाण्वतिरिक्तमिति प्रत्याह। सेनावनादिव्यवहारवत् सञ्चयविषय एव सर्वमिदं स्यादिति शंकायां, तदाऽयं व्यवहारो न मुख्यः स्यादिति चाह। अन्ततः अतीन्द्रियत्वादणूनामप्रत्यक्ष एव घटादिः स्यात्, न हि पिशाचाप्रत्यक्षे पिशाचसंघः प्रत्यक्षीभवेदित्येतदेवावशिष्यते। एतन्निराकरणं प्रागेव कृतमिहान्तिमकारिकायाऽपि ज्ञापयिष्यते।

प्रकारान्तरेणावयव्यभावमाह आरब्धेति। पटवत्सु तन्तुषु पटान्तरं कुतो न जायते; तन्तुसंयोगसत्त्वादिति प्रश्ने उक्तम्, जातः पटः पटान्तरोत्पत्तिप्रतिबन्धकः, जाते पटे पटान्तरस्य तत्रैव तन्तुषु स्थित्ययोगात्; मूर्तानां समानदेशताविरोधादिति। तदिदं न्यायवार्तिकव्याख्यापरम्परायां तात्पर्यटीकापरिशुद्धिप्रकाशादौ द्रष्टव्यम्। इदञ्च सप्रतिघत्वमेकद्रव्यच्छन्नमपरद्रव्यप्रतिहननं संयुक्तस्थले दृष्टम्; घटवति देश एव घटान्तरनिक्षेपायोगात्। तद्वत् घटवति समवायिनि घटान्तरसमवायोऽपि न भवतीति सप्रतिघत्वमुच्यते। योऽयं कार्यान्तरारम्भप्रतिक्षेपः, तत्रास्माकं संमतिरेवेत्यर्थः। ननु पटवत्त्वात् पटान्तरं न भवतीति टीकोक्तम्, तत्र कथं सिद्धान्तिसंमतिः, सिद्धान्ते प्रथमपटवत्त्वस्यैव तन्तुष्वभावादिति चेत्—उच्यते। इमे तन्तवो न द्वितीयपटवन्तः सप्रतिघत्वादिति किल तदुक्तम्। तेनैव सप्रतिघत्वहेतुना सामान्येन पटद्रव्योत्पत्त्यभाव एव साध्यतेऽस्माभिः; संयोगेन तन्त्वाक्रान्तदेशे पटद्रव्यसंयोगायोगात् उभयोर्मूर्तत्वादिति भावः।

प्रत्यक्षातीन्द्रियोपात्ते प्रत्यक्षत्वं च दुर्भणम् ॥

चाक्षुषाचाक्षुषद्रव्यसंयोगे चाक्षुषत्ववत् । मुधा चोदाहृतं कैश्चित् हिमवत्परमाणुकम् ॥

टीकाकारस्तु तत्राह सूक्ष्मद्रव्योपलक्षणम् ।

---

68— प्रत्यक्षत्वं च दुर्भणमिति । यत् प्रत्यक्षं दुर्भणमुक्तम्, अत्र च न संमतिरित्यनुषङ्गेणान्वयः । आरब्धकार्यैरनारम्भे सम्प्रतिसत्त्ववत् (सप्रतिघत्ववत्?) प्रत्यक्षत्वदुर्भणत्वे का युक्तिरित्यत आह चाक्षुषेति । सर्वप्रसिद्धदृष्टान्तप्रदर्शनेन, प्रत्यक्षाप्रत्यक्षोपात्तत्वात्—यद् योग्यायोग्योपात्तं तत् अयोग्यं, चाक्षुषाचाक्षुषोपात्तसंयोगवत् इत्यनुमानं सूचितम् । परोक्तोदाहरण प्रसिद्धत्वादयुक्तमित्याह—मुधाचेति । अस्यायुक्तत्वं सूक्ष्मद्रव्योपलक्षणत्वं परमाणुग्रहणस्य यदद्भिस्तदीयैरप्यङ्गीकृतमित्याह—टीकाकार इति । ननु अवयविवादे एकदेशदर्शने तत्रावयविनो गृहीतत्वात् 'अयमेको

69— 'अत्र नः' इति अनेति पदप्रयोगः, सप्रतिघत्वहेतौ संमतिः,—असंदिग्धसाधकतया ग्रहणम् । यदि विधामिमां विहाय, रूपवति रूपान्तरोत्पत्त्यादिवारणार्थं द्रव्याद्रव्यसर्वैकार्यसाधारण्येनान्धः प्रतिबन्ध्यप्रतिबन्धकभाव उच्यते, स इष्यते न त्वेत्यन्यदेतदित्यपि सूच्यते ।

यदि अवयवि किञ्चिदिष्यते, हिमवता गिरिणा परमाणुसंयोगे तदधीनमप्यवयवि स्वीकार्यं स्यात्, तथाच तदप्रत्यक्षापत्तिः । प्रत्यक्षाप्रत्यक्षद्विविधसमवायिकारणजन्यस्य प्रत्यक्षाभावात् । अत एव हि स्तम्भपिशाचसंयोगो न प्रत्यक्षः । अत एव कणादेन पञ्चभूतोपादानकत्वं शरीरस्य प्रतिक्षिप्तम्, पृथिवीवायुसंयोगस्येव तदुपादानकत्वात् अप्रत्यक्षत्वप्रसंगादिति, "प्रत्यक्षाप्रत्यक्षसंयोगस्याप्रत्यक्षत्वात् शरीरं पञ्चात्मकं न विद्यते" इति सूत्रेण । यदि तात्पर्यटीकोक्तरीत्या संयोगस्य संबन्धतया संबन्धिनिरूप्यत्वेऽपि, अवयविनः सापेक्षत्वाभावात् तत्प्रत्यक्षे अवयवप्रत्यक्षमतन्त्रम्, कथं कणादेन शरीरे पाञ्चभौतिकत्वप्रतिषेधः इत्येवमवयविदूषणे प्रसक्ते, हिमवत्परमाणुकद्रव्यस्य दृश्यमानत्वात् तदविरोधेन सर्वनिर्वाह इति वार्तिककारोऽमन्यत । तत्र दूषणस्य दृढत्वात् वार्तिकमुपेक्ष्यमित्याह प्रत्यक्षेति । चाक्षुषस्तम्भाचाक्षुषवायुसंयोगो न हि चाक्षुषः, तद्वत् अप्रत्यक्षत्वस्यावश्यकतया हिमवत्परमाणुकस्य वार्तिककारैरुद्योतकरापरनामैः प्रत्यक्षत्ववचनं मुधेत्यर्थः ।

अथेदं स्यात्—यदि अनेकोपादानमध्ये एकस्याप्रत्यक्षत्वेऽपि कार्यमप्रत्यक्षम्, अप्रत्यक्षमात्रोपादानके प्रत्यक्षत्वं नतराम् । तथाचाप्रत्यक्षद्व्यणुकमात्रकार्यं त्र्यणुकं कथं प्रत्यक्षं स्यात् । अथोच्यते—महत्त्वात् इदं प्रत्यक्षम्, अणु पुनरतथात्वादप्रत्यक्षम् । अथाप्यणु प्रत्यक्षत्वार्हमेव महत्त्वरूपकारणविरहान्न दृश्यते । दर्शनस्वरूपयोग्यता त्वस्ति, न तु वायुपिशाचादिवत् अदृश्यत्वम् । अत एवोक्तम्, "न हि वय दृश्यत्वमदृश्यत्वं वा कस्यचित् स्वभावादाचक्ष्महे" इति । अतः परमाणोरपि दृश्यत्वात् हिमवत्परमाणुके महत्त्वोत्पत्त्या दृश्यत्वमस्तीति । तत्रोच्यते ; यद्येवम्, तर्हि इद प्रत्यक्षातीन्द्रियोपात्त न भवति । इन्द्रियजन्यग्रहणयोग्येऽतीन्द्रियत्वासंभवात् । एवञ्च अतीन्द्रियत्वादणूनामित्यादिसूत्रादिभ्यो दत्त एव जलाञ्जलिः । यदि चाक्षुषप्रत्यक्षयोग्यत्वं नाम तत्कारणतावच्छेदकरूपवत्त्वम् । तच्च रूपं न पृथिवीत्यादि । किंतु महत्त्वविशिष्टत्वम् । परमाणौ च महत्त्वाभावात् योग्यतैव नास्तीति अतीन्द्रियत्वमेवेति—तर्हि हिमवत्परमाणुकमित्यवयव्यपि अप्रत्यक्षमेव । न चाणुजन्यत्र्यणुकस्येव प्रत्यक्षं स्यादिति वाच्यम्—तत्र महत्त्वस्य जातत्वात् । अत्र तदभावात् । अत्रेदं बोध्यम्—यावदवयवगतमहत्त्वपरिमाणरूपकारणबलादेव हि महत्त्वं वक्तव्यम् । तत्तु न । नापि बहुत्वसंख्यारूपमहत्त्वकारणमत्र, द्वयोरेवावयवत्वात् । न चानुभवविरोधः, हिमवत एव प्रत्यक्षत्वात्, तदतिरिक्तमिदमवयवीति प्रत्यक्षाभावादिति । तात्पर्यटीकाकारो वाचस्पतिस्त्वेवमाह—न परमाणुरत्र

अशेषा (विशेषा)नुपलम्भेऽपि राश्येकत्वमतिर्यथा ॥
वृक्षादिष्वपि तद्वत् स्यात् यथादृष्टिव्यवस्थितेः । एकदेशे समस्ते च वृक्षलक्षणसंभवे ॥
वृक्षधीरुपपद्येत संग्रहाच्चापृथक्स्थितिः । "सर्वाग्रहणमवयव्यसिद्धेः" इति सूत्रयन् ॥
प्रत्यक्षव्यतिरिक्तान्तवलसिदौःस्थ्यपराहतः । "सेनावनवत्" इत्यादावप्रत्यक्षाणुसूत्रणम् ॥
त्रसरेण्ववधिस्थाणुस्थापकेषु न शोभते । .... .... .... .... ........... (?) ॥ ॥ २१ ॥

---

आनन्द— वृक्षः' इति धीरूपपद्यते । संघातवादे तु कथमित्यत आह—अशेषानुपलम्भेऽपि इति । सेनादिष्वपि त्रिचतुरपुरुषादिदर्शने सेनाधीः स्यात्, अत आह—यथादृष्टीति । संघातवादे वृक्षस्य शाखादिसंघातत्वस्य विद्यमानत्वात् तत्रापि वृक्षधीः स्यादित्याशङ्क्य इष्टापत्त्या परिहरति—एकदेश इति । तर्हि वृक्षबहुत्वधीः स्यादत आह—संग्रहाच्चेति । चः शङ्कानिवृत्तौ । अवयव्यभावे सर्वेषां परमाणुसंघातात्मकत्वेन सर्वे(म?)प्रत्यक्षं स्यात् इति सूत्रकारोक्तदोषोऽनतिलङ्घनीय इत्यत आह—सर्वाग्रहणमिति । कॢप्तसिदौःस्थ्यपराहतः—प्रत्यक्षाणां त्रसरेणूनामेव परमाणुत्वस्थापनादिति भावः । सूत्रकारेण परमाणूनामप्रत्यक्षत्वमुक्तं खल्वित्यत आह—सेनावनवदितीति । अणुस्थापकेषु—अणुत्वस्थापकेषु इत्यर्थः ॥ २१ ॥

श्रीनि— अवयव्यङ्गीकारे शाखाद्येकदेशदर्शनेऽपि वृक्षधीरुपपद्यते । तत्राप्यवयविनः सत्त्वात् । तदनङ्गीकारे कथं वृक्षधीरित्यत्राह एकदेश इति । लक्षणसम्भव इति । अवान्तरशाखादिसंघातरूपवृक्षलक्षणसद्भावादित्यर्थः । सम्भव इति निमित्तसप्तमी । अणुत्वकाष्ठायाः प्रत्यक्षव्यतिरिक्तेषु पर्यवसानस्य [दुस्स्थतया?] अणूनामप्रत्यक्षत्वसूत्रणमपि पराहतमित्याह—सेनेत्यादि ॥ २१ ॥

श्री— गृह्यते, तस्याणन्तरेण सह द्व्यणुकं प्रत्येव कारणत्वात् महाद्रव्यसाहित्येन द्रव्योत्पादकत्वस्यासंप्रतिपत्तेः । अतोऽप्रत्यक्षत्वसाम्यात् परमाणुतुल्यतया परमाण्वित्युच्यमानं सूक्ष्ममहाद्रव्यमेवात्र परमाणुकमिति हिमवत्परमाणुकमवयवि प्रत्यक्षमिति । अत्रेदं प्रष्टव्यम्—कस्मात् तत् सूक्ष्ममप्रत्यक्षमिति । उद्भूतरूपाभावादिति चेत्—तर्हि उद्भूतानुद्भूतरूपावयवद्रव्यारब्धे हिमवत्परमाणुके किं रूपं भवति । नीरूपत्वे चाप्रत्यक्षत्वमेव । अथ "महत्यनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिः" इति कणादसूत्रात् विलक्षणमनेकद्रव्यवत्त्वं निविडावयवकत्वरूपं प्रत्यक्षकारणमिति तदभावादप्रत्यक्षतेति चेत्—दुर्निर्वचमिदमनेकद्रव्यवत्त्वम् । किञ्च सर्वत्रावयव्युत्पत्तौ विप्रतिपन्नं प्रति हिमवत्परमाणुकोक्तिर्न घटते । द्रव्योत्पत्तावेव विवादे, किं तत्र प्रत्यक्षकारणचिन्तया । यदि हिमवदनवच्छेदेन तदण्ववच्छेदेन तद्द्रव्यमीक्ष्येत, अवयव्यस्तीति स्यात् । हिमवानेव तत्रोपलभ्यते, नान्यत् द्रव्यम् । अतोऽनुपलम्भादवयव्यसिद्धिः । ननु संघात एव चेत् वृक्षः, तस्योर्ध्वमधश्च पूर्णतया ग्रहणाभावात् तदेकत्वधीः, वृक्ष इति धीश्च न स्यात् । अवयवीष्टौ तु इन्द्रियपातस्थले स दृष्ट इति तदुपपत्तिः । अत एव सूत्रम्, "न चैकदेशोपलब्धिः, अवयविसद्भावात्" इति—तत्राह अशेषेति । पक्षिलोकानाम् एकत्वादिधियामेवमेव निर्वाह इति च भावः । अशेषेति पाठः शुद्धः । विशेषेति पाठं गृहीत्वा विशेषः अवयवीति आ. दा. । पूर्णस्येव यावद्दृष्टं तावतोऽपि वृक्षत्वादेव अयं वृक्ष इति धीरपीत्याह एकदेश इति । यौद्धस्तु, एकदेशग्रहणात् वृक्षस्यानुमानमेव, न प्रत्यक्षमित्याह । अत्र तु वृक्षलक्षणसंभवे प्रत्यक्षत्वमस्त्वित्युच्यते । वृक्षत्वरूपजातेराकृतिव्यंग्यत्वात् तदुचिताकृत्यग्रहणे अवयविप्रत्यक्षमपि न भवेत् । ग्रहणे तु तदेव वृक्षग्रहणम्, किमन्येनेति भावः । तर्हि वृक्षलक्षणाश्रयाणामनेकेषामेव तत्र सत्त्वे कथमेकव्यवहार इत्यत्राह संग्रहाच्चेति । अपृथक्त्वमेवैकत्वम् । पृथग्भाव-

**द्रव्यैक्यं प्रत्यभिज्ञा प्रथयति परिमित्यन्तरेऽन्याप्रतीतेः**
**अंशूत्कर्षक्षयादिक्षममपि च ततो राशिवत् स्थूलमेकम् ।**
**नो चेद्, अश्रान्तचण्डानिल-जलधि-धुनी-दन्ति-दावानलाद्यैः**
**क्षोणीयं क्षुद्यमाना क्षणमपि चरमामण्ववस्थां न जह्यात् ॥ २२ ॥**

एवं तन्तुपटादीनां भेदे बाधकं तत्साधकानामन्यथासिद्धत्वं चोक्तम् । तथाऽप्यभेदे किं प्रमाणमिति वदन्तं प्रति स्थिरत्वे प्रमाणमेव अत्र प्रमाणमित्याह **द्रव्यैक्यमिति । परिमित्यन्तरे** । सत्यपीति शेषः । इदं च भेदसाधकानामुपलक्षणम् । यथा प्रसारितस्याऽऽकुञ्चितस्य दीर्घत्वह्रस्वत्वे, यथा च घनीकृतस्य विरलीकृतस्य च तूलपिण्डस्य अल्पत्वविपुलत्वे दृश्येते—एवं वृत्तचतुरश्रत्वादिविशेषे दृष्टेऽपि स्यात् । कुतः ? **अन्याप्रतीतेः**, द्रव्यान्तरस्यादर्शनादित्यर्थः । अन्यथा सर्वत्र

---

*टिप्पणी*— द्रव्यैक्यमिति । पूर्वं पिण्डावस्थमृदेव इदानीं घटः, तन्तव एवेदानीं पट इति प्रत्यभिज्ञा उपादानोपादेयद्रव्यैक्ये प्रमाणमित्यर्थः । परिमित्यन्तरे इत्यस्य प्रत्यभिज्ञा इत्यनेनान्वयः; नेतरेण, विशेषणवैयर्थ्यापत्तेरित्यभिप्रेत्याह सत्यपीति शेष इति । जायमानेत्यध्याहार्यम् । ननु एकस्मिन् परिमाणद्वयस्य विरुद्धत्वात् कथं द्रव्यैक्यमित्यत्राह यथेति। अवस्थाभेदेन धर्मद्वयस्याप्यविरोध इति भावः। दृष्टेऽपीति । तन्तुपटयोरिति शेषः । स्यादिति द्रव्यैक्यमिति शेषः ।

*श्री*— गतद्वित्वबहुत्वविवक्षया च वृक्षौ वृक्षाः इत्येवं प्रयोग इति भावः । परमाणुं सिद्धं कृत्वा प्रवृत्तं सूत्रं तन्निरसनेन निरस्तमित्याह सर्वेति । प्रत्यक्षेति । प्रत्यक्षो यस्त्रसरेणुः तदतिरिक्तस्य परमाणुरूपस्य अन्तस्य कारणरूपावधेः क्लृप्तेर्दुस्स्थत्वात् पराहत इत्यर्थः । सूत्रान्तरेऽप्येष एव दोष इत्याह सेनेति । त्रसरेण्विति । त्रसरेणुरूपो योऽवधिः तद्रूपेण स्थितस्याणोः स्थापकेषु । द्व्यातिरिक्ताण्वनंगीकारिषु : तत् सिद्धमवयवि अतिरिक्तं नेति ॥ २१ ॥

भेदसाधनायोग उक्तः । तत एव लाघवादभेदः सिद्धः; अभेदसाधकमप्युच्यत उपरीत्याह एवमिति । भेदे बाधकं गुरुत्वाद्याधिक्याभावः-वृत्त्यनुपपत्ति-विभिन्नसामग्रीनानोत्पत्तिविनाशकल्पनादि । पटकारणतुरीवेमकुविन्दादीनां खण्डपटोत्पत्तौ कारणत्वाभावाद्धि सामग्रीभेदः कल्प्यः । साधकान्तरमिति । नामसंख्याव्यवहृतिधिषणादीनामित्यर्थः । स्थिरत्वे प्रमाणमेवेति । यदि प्रत्यभिज्ञाया अप्रामाण्यं स्यात्, तर्हि, 'क्षणभेदेऽपि न घटभेदः, सोऽयं घट इति प्रत्यभिज्ञानात्' इति बौद्धं प्रति दूषणं नोद्भाव्येत । तद्वत् तन्तव एव पटः, मृत्तिकेत्येव सत्यमिति प्रत्यभिज्ञानमपीत्यर्थः । उपलक्षणमिति । नामसंख्यापरिमाणादिभेदे दृष्टेऽपि प्रत्यभिज्ञा द्रव्यैक्यं साधयेत् । यदि अभेददर्शनवत् भेददर्शनमपि स्यात् विवादः स्यात्; तन्नेत्याह अन्याप्रतीतेरिति । घनीकृतस्येति । अत्र आ. दा "यद्यपि द्रव्यान्तरोत्पत्तिः तूलपिण्डादौ प्रचयस्य परिमाणहेतुत्वं वदताऽङ्गीकृता, तथापि पद्मसंकोचविकासादिस्थले न्यायवार्तिकादावनारम्भस्योक्तत्वात् तुल्यत्वादत्राप्यवयव्यारम्भ इति सिद्धवत्कृत्योक्तिः" इति । अयमाशयः—प्रचिततूलपिण्डद्वयारब्धे द्रव्ये परिमाणं प्रति महत्त्वं प्रचयश्च कारणमित्युक्तं तैः । एकतूलपिण्डस्य प्रचयेऽपि द्रव्यान्तरं तावता न सिद्ध्यति । सर्वांशविरलीकरणे तदिष्टावपि यस्तूलपिण्डः एकभागे घनीकृतः भागान्तरे परं प्रचितः, तत्र पद्मन्यायेन द्रव्यभेदाभाव एवेति । अत एव विशेषणद्वयसमुच्चयार्थं इह चकारः । एवमित्यस्य दृष्टेऽपीत्यत्रान्वयः । वृत्तचतुरश्रेति । वृत्तत्वं तन्तुसंघे, चतुरश्रत्वं पटे । भिन्नपरिमाणकं सर्वं विभिन्नमिति धूष्टवादे

यत्किंचिदवस्थाभेदमात्रेऽपि द्रव्यभेदो दृश्यत इति धृष्टवादे का प्रत्युक्तिः ? पद्मसंकोचविकासादिषु च द्रव्यान्तराभावो न्यायवार्तिकटीकायामुक्तः ।

किंचान्त्यावयवित्वं पटादीनामिष्यते । तैरनेकैरच्छिन्नावयवैरेकपटादिनिर्माणेऽवयव्यन्तरमुत्पद्यते न वा । पूर्वत्र तेषामन्त्यावयवित्वव्याघातः । उत्तरत्र तन्त्वादिभिरपि तथा स्यात्, अविशेषात् ॥ अन्य स्तर्ह्यन्त्यावयवी भवत्विति चेन्न ; सर्वत्रैव कस्यचित् कार्यस्य सहकारिभेदैः संभवात् । सन्ति चासदाद्यशक्य-स्रष्टारः केचित् ; अन्ततः ईश्वरश्च ॥ किंच योऽसौ गोपुरादिरन्त्यावयवी, तत्र यदि कश्चित् सुधाभि-रवयवान्तरं संघटयेत्—तदा ततः पूर्वं गोपुरं तिष्ठति, नश्यति वा । पूर्वत्र, कथमन्त्यः ? उत्तरत्र, अनन्यथासिद्धोपलम्भविरोधः । नाशकारणाभावे नाशानुपपत्तिः ॥ अपिच तूलपिण्डमध्यस्थमंशुं यदि कश्चित् सूच्याऽपकर्षेत्, तदा तस्य परिमाणह्रासो न दृश्यते ; न च तस्य नाशः । अथापि तत्र ते नाशः कल्प्यः, असमवायिविनाशात् । समवायिविगमाच्च । संघातवादे तु अवयवोत्कर्षापकर्षवादमात्रान्न

ஆ— यत्किञ्चिदवस्थाभेदमात्रेऽपि द्रव्यभेद इष्ट एवेति प्रत्युक्तिरित्यत्राह—पद्मसंकोचेति । परिमाणान्तरे सत्यपि द्रव्यैक्ये उदाहरणान्तरमाह—किञ्चान्त्यावयवित्वमित्यादिना । कल्पनान्तरवत्
[illegible]— अविशेषादिति । दुःस्थत्वादेव प्रत्यभिज्ञा—परिमित्यन्तरयोः साम्यात् ।

अवयविनि अवयवैकदेशागमापायाभ्यां द्रव्यान्तरोत्पत्ति—पूर्वद्रव्यनाशौ कल्प्यौ । एवं प्रतिक्षणं भिन्नयोः अवयवावयविनोः जायमाना प्रत्यभिज्ञा दीपज्वालाप्रत्यभिज्ञावत् प्रमाणं न स्यादि-त्याशङ्क्य अंशूत्कर्षेत्यादि अवतारयति अपिचेति ।

வீ— प्राच्यग्रन्थविरोधादपसिद्धान्त इत्याह पद्मेति । ननु पद्मस्य मुकुलावस्थायां प्रबोधावस्था-याञ्चावयवतारतम्याभावादेकद्रव्यत्वमिष्यते । अग्रभागमात्रेऽन्यथाभावाच्च । अतः पद्ममुभयदशा-यामप्यन्त्यावयवि । अत्र तु एक तन्त्वपेक्षया पटे अवयवाधिक्यं स्फुटम् । तन्तुसंघग्रहणेऽपि तत्र पटवत् अवयविप्रतीत्यभावात् अंश्वपेक्षावयवित्वेऽपि तन्त्वपेक्षयाऽवयवित्वस्याभावात् पटे च तत्सत्त्वात् अन्त्यावयवित्वतद्भावरूपवैषम्यमस्तीति चेन्न ; तन्निरूपितावयवित्वाश्रयस्य तदतिरिक्त-द्रव्यत्वमिति नियमाभावात् । सेनावनपरिषदादौ तत्तदंगव्यक्तिनिरूपितावयवित्वेऽपि द्रव्यान्तरत्वा-भावात् । इदमेव प्रसक्तमन्त्यावयवित्वं खण्डयन् श्लोकद्वितीयपादमवतारयति किञ्चेत्यादिना । श्लोके उत्कर्षपदेन अपनयनरूपार्थग्रहणे पादोऽयं परिमाणन्यूनतायां द्रव्यैक्यपरः स्यात् । तदा वृत्तौ अपिचेत्यादि तदवतरणं भवेत् । यदि 'अवयवोत्कर्षापकर्षवादमात्रात्' इत्यादिवाक्य इव उत्कर्षः आधिक्यम्, तदा किञ्चेत्यारभ्यैव तदवतरणम् । श्लोके क्षयशब्दश्चापकर्षपरः । तन्तौ अंश्वाधिक्यात् क्षीणभावात् दारितसंधानाच्च परिमाणभेदः सहजः । अन्त्यावयवित्वं नाम अवयव्यन्तरानारम्भकत्वे सति अवयवित्वम् ; द्रव्यान्तरासमवायित्वे सति समवेतद्रव्यत्वं वा । उत्तरत्रेति । प्रथमपटे अन्त्यावयवित्वस्थापनाय पटान्तरानुत्पत्तेरिष्टौ तदा परिमाणाधिक्यादिकं पट-संघातमादायैव निर्वाह्यम् । तद्वत् सर्वत्र तन्तुसंघातेनैव निर्वाहात् प्रथमपटस्यापि समवेतद्रव्यत्व-रूपावयवित्वमेव नास्ति; कुतोऽन्त्यावयवित्वमिति भावः । अन्यस्तर्हीति । महापटगोपुरादिरित्यर्थः । ननु गोपुरं स्वस्थितिकाले अन्त्यावयव्येव स्थितम् । सुधाद्यधिकमेलने तन्नष्टमेवेत्यत्राह उत्तरत्रेति । असमवायिनाशात्—असमवायिकारणरूपावयवसंयोगनाशात् । केचित् असमवायिकारणं विना कार्यं क्षणमपि न तिष्ठतीति वदन्ति, तन्मते असमवायिकारणस्य संयोगस्य नाशको गुणो विभाग

किंचिद् द्रव्यमुत्पद्यते, नश्यति वा ; केवलमापादिराशिष्विवोपचयापचयमात्रमेव । अतो यथोपलम्भं संघातपक्ष एव साधीयानित्याह अंशूत्कर्षेति । आदिशब्देन अंशविदारणसन्धाने गृह्येते ।

यदि कचित्कावयवभेदमात्रात् पूर्वद्रव्यनिवृत्तिरवयव्यन्तरोत्पत्तिः स्यात्, तत्रानिष्टमाह **नो चेदिति** । अन्यवस्थितेषु प्रदेशभेदेषु तैस्तैर्भेदकैरणुद्वयविघटने द्व्यणुकविनाशादिक्रमेण महापृथिवीपर्यन्त नाशे सति, अवस्थितसयोगैरपि पुनस्तदारम्भावसरो न सेत्स्यति । तदेतत् समुद्रादिषु कैमुत्यसिद्धम् ।

यदप्येवं कल्प्यते-द्वाभ्यामेवाणुभ्यामाद्य कार्यद्रव्यमारभ्यते ; एकस्यानारम्भकत्वात् ; असमवायि

---

[illegible]— द्रव्यान्तरोत्पत्तिकल्पन प्रामाणिकानामनादरणीयमिति ज्ञापनार्थं कल्पनान्तराणां प्रामाणिकानादरणीयत्वमाह—यदप्येवमित्यादिना ।

[illegible]— ननु क्षोणी चण्डानिलादिना क्षुभ्यमाणा चेत्, कथमणवस्थां न जह्यात्? यत्र भेदकसंयोगः, तत्रैव पूर्वद्रव्यनाशद्रव्यान्तरोत्पत्ती । तथाच क्षोणीनाशः क्षोण्यन्तरोत्पत्तिश्च स्याताम्, नाणवस्थाप्राप्तिरित्यत्राह अव्यवस्थितेष्वित्यादिना । चण्डानिलादिभेदकस्य यत्र कुत्रापि प्रदेशे संयोगेऽपि अणुद्वयविघटनमवश्यभावीति द्योतनार्थम् अव्यवस्थितेषु इत्युक्तम् । अव्यवस्थितेषु प्रदेशभेदेषु—यत्र क्वापि प्रदेशेष्वित्यर्थः । अव्यवस्थितसंयोगैरपीति । पूर्वस्थितावयवानां अवयवान्तरस्य वा संयोगैरित्यर्थः । समुद्रादिष्विति । शिथिलावयवसंयोगत्वादिति भावः । यदपीत्यादि । अत्रेदमस्वरसबीजम् (?) । एकस्यानारम्भकत्वादिति । एकस्याप्यारम्भकत्वे न दोषः; एकैकस्यापि दारुशिलादेः प्रतिमाद्यारम्भकत्वदर्शनात् तत्र दार्वाद्यवयवविभागस्य वास्यादिसंयोगस्य वा असमवायिकारणस्य सत्त्वादेकस्याप्यारम्भकत्वमिति चेन्न—परमाणावपि अदृष्टवशादात्मसंयोगविभागादेः सत्त्वात् एकस्याप्यारम्भकत्वमस्त्विति भावः । असमवायिकारणविरहा-

[illegible]— पत्र द्रव्यनाशकोऽपि वक्तव्यः । सिद्धान्तानुकूलश्चेदम्—अवयवसंयोगरूपावस्थातिरिक्तपटादिद्रव्याभावात् अवयवविभागात् पटनाश इत्येव वक्तव्यत्वादित्याशयेन समवायिविगमाच्चेत्युक्तम् ।

अंश्विति । तन्तुत्वावस्थाप्राक्तनी अवस्था अंशुत्वम् । अंशुरूपांशस्योत्कर्षः—समुदायात् पृथक्करणम् । क्षयः—कस्यचित् स्वस्थान एव तन्तूत्पादनानर्हतया लोपः । यद्वा प्रागुक्तरीत्या उत्कर्षः आधिक्यम् ; क्षयः अपकर्षः । तन्तुस्थौल्यापादकः अंशूत्कर्षः तत्कार्श्यहेतुरपकर्षः तन्तुनिर्माणारम्भे छेदो विदारणम्, तत्प्रतिसंधानं ततः । एकमेव स्थूलं तूलं ततः द्रव्यान्तराप्रतीतेः राशिवत् उत्कोत्कर्षादिसर्वदशार्हं परिमाणतारतम्यभाक् भवतीत्यर्थः । अश्रान्तेति विशेषणम् अण्ववस्थासार्वदिकत्वोपपादकम् । मन्दानिलस्याप्यणुविश्लेषकत्वं जातु भवति, चण्डे तत् सुनिश्चितमित्याशयेन चण्डोक्तिः । अणुद्वयविघटने द्व्यणुकवति द्रव्यान्तरानुत्पत्त्या अवयविपरम्परानाशक्रमेण महापृथिवीनाशानन्तरमेव अवशिष्टावयवाधीनावयव्युत्पत्तेर्वक्तव्यतया तदारम्भप्राक्क्षणे भागान्तरे अणुद्वयविघटने उपर्युपरि तथैव बहुत्र क्षोदप्रसक्तौ अवयव्यारम्भानवकाशात् अणुसंघातस्थितिरेव । न च तथा विच्छेदे नियमो नेति शंक्यम् । महापृथिव्यामनिल-जलधि-गिरिप्रवाह-दावानल-गज-कृषीवलादिकृतखननाद्यनेक प्रसक्तिमत्त्यामणुविच्छेदासंभवस्यैव दुर्वचत्वात् । क्षुद्यमाना—अतीवविदार्यमाणावयवतयेव विद्यमाना । एवमधिककालमण्ववस्थयैव स्थितौ तदवसरे एकत्वमहत्त्वादेः संघातमात्रैव समर्थनीयतया सर्वदैव एवमेवोपपत्तौ किमवयविकल्पनयेति भावः ।

एवं स्थूलावयविकल्पनानुपपत्तिमुपवर्ण्य महद्दीर्घवद्वेति दृष्टान्ततयोपादानेन सूत्रकारपरिहसितमप्यंशमुत्तरार्धविवक्षितत्वेन घटयति यदपीति । तथाच क्षोण्याः क्षोदवशादणवस्थाया अगीकारे पुनः

विरहात् । संयोगो हि न स्वेन स्वस्य । बहुभिरारब्धत्वे महत्त्वप्रसङ्गेन प्रत्यक्षत्वापातात् । बह्वारब्धस्याप्यणुत्वेऽतिप्रसङ्ग, । तत्परिमाणं चावयवसंख्याविशेषेण ; अवयवमहत्त्वप्रचययोरसंभवात् । नित्यपरिमाणस्यानारम्भकत्वात् । स्वातिशय(यित ?)परिमाणारम्भकत्वनियमेनाणुतरपरिमाणारम्भकत्वप्रसङ्गाच्च । सा च द्वित्वसंख्या सर्वज्ञापेक्षाबुद्धिजन्या ; तद्विनाशकाभावेऽपि कार्यत्वादनित्या । एव त्रिभिरेव द्व्यणुकैः

---

[illegible]— दिति । असमवायिकारणकल्पनं च [न ?] अप्रामाणिकसमवायादौ प्रमाणाभावादिति भावः । बहुभिरारब्धत्व इति । त्र्यणुकस्यैव भुवि परमाण्वारब्धत्वं महत्त्वं प्रत्यक्षत्वं चास्तु, किं द्व्यणुककल्पनयेति भावः । बह्वारब्धस्येति । द्व्यारब्धस्यापि अणुत्वेऽतिप्रसङ्गः समानः । .... .

नन्वत्र द्व्यारब्धस्य बह्वारब्धस्य वा महत्त्वमस्तु, महदारब्धत्वाभावात् अणुद्वयारब्धस्याणुत्वमेवेति चेत्—अणुत्रयारब्धस्याप्यणुत्वमस्तु, अण्वारब्धत्वाविशेषात्, महदारब्धत्वाभावाच्च । ननु अवयवमहत्त्ववत् अवयवबहुत्वमपि कार्यमहत्त्वप्रयोजकमिति चेन्न—अननुगमात् । तर्हि अवयवबहुत्वमेवानुगतं प्रयोजकमिति चेत्—प्रतिमाद्युपाद्यारम्भके तदभावात् । कार्यगतपरिमाणादेः कारणगतपरिमाणादिपूर्वकत्वाङ्गीकारेणापसिद्धान्ताच्च । ननु प्रतिमादौ तदवयवानां बहूनामेवारम्भकत्वमिति चेन्न ; एकस्यैव दार्वाद्यवयविनः कतिपयावयवविगमसहकृतस्य प्रतिमातदवयवाद्यारम्भकत्वदर्शनात् । ननु कतिपयावयवविगमेन दार्वादेः परमाणुपर्यन्तनाशे सति पुनर्द्व्यणुकादिक्रमेण अवयवद्वारा प्रतिमाद्यारभ्यत इति चेन्न—तथाविधकल्पने प्रमाणाभावात् । तस्य पूर्वमेव, नोचेदभ्रान्तेत्यादिना दूषितत्वाच्चेति भावः । तत्परिमाणं चेति । द्व्यणुकपरिमाणं चेत्यर्थः । अवयवसंख्याविशेषेणेति । परमाणुद्वित्वेनेत्यर्थः । सर्वत्र कार्यपरिमाणमवयवमहत्त्वेन जन्यते । तूलपरिमाणं तु प्रशिथिलावयवसंयोगरूपप्रचयेन अवयवसंख्याविशेषेणेति कथमुच्यते इत्यत्राह अवयवेति । तथाच गत्यभावादेव कल्प्यत इति भावः । अत्रेदमस्वरसबीजम्—परमाणुपरिमाणमेव द्व्यणुकपरिमाणारम्भकमस्तु, अन्यत्र कारणगतपरिमाणं कार्यगतपरिमाणजनकमिति क्लृप्तत्वात्, न तु परमाणुद्वित्वम्, गौरवात् । किञ्च परमाणुद्वित्वमनारम्भकम्, नित्यगतसंख्यात्वात्, आकाशादिसंख्या-[illegible]— क्षोणीभावो न भवन्मते इत्यनैतदनुपपत्तिरपि कारणमिति भावः । द्वाभ्यामिति एकमात्रस्य त्र्यादीनाञ्च व्यवच्छेदः । तदुपपाद्यते उपरि । तत्परिमाणं चेति । अवयविपरिमाणं प्रति क्वचिदवयवसंख्याकारणम्, क्वचित् परिमाणम्, क्वचित् प्रचयाख्यः संयोगः । अनेकावयवपरिमाणतोऽवयविपरिमाणोत्पत्तिः प्रत्यक्षसिद्धा । अत एव परिमाणस्य स्वसमानजातीय स्वोत्कृष्टपरिमाणजनकत्वमभ्युपेत्यम्, महत्तो महत्तरोत्पत्तिदर्शनात् । परमाणुपरिमाणं चेत् द्व्यणुकपरिमाणे कारणम्, अणुनोऽणुतरोत्पत्तिः स्यात् स्वोत्कृष्टजननावश्यम्भावात् । तदा परमाणोः परमाणुत्वमेवापेयात् । अतस्तत्र परमाणुद्वयगतद्वित्वसंख्यैव कारणम् । एवं त्र्यणुकपरिमाण प्रति द्व्यणुकपरिमाणं न कारणम्, सजातीयपरिमाण जनकत्वस्यैव क्लृप्ततया तदुत्पत्त्ययोगात् । अतस्तत्र द्व्यणुकत्रयगतत्रित्वसंख्या कारणम् । द्वित्वादिसंख्याश्चापेक्षाबुद्धिं विना न भवन्ति । सर्गारम्भे, अयमेकः अयमेक इत्येवं को नु पश्येत् । एवं जगत्सर्गहेतुद्व्यणुकत्र्यणुकगतपरिमाणविशेष कारणापेक्षाबुद्धि बलादीश्वरसिद्धिरिति मृदमेधिरा तार्किकाणाम् । प्रचयाख्यसंयोगात् परिमाणोत्पादश्च शिथिलविरलसंयोगाधीनतूलपिण्डस्थले द्रष्टव्यः । अस्य प्रचयस्य, अवयवमहत्त्वस्य परमाणुद्व्यणुकविषये दुर्वचत्वात् संख्यैव परिमाणकारणमिति । ननु द्वित्वादिसंख्याया अपेक्षाबुद्धिनाशे नाश इष्टः । ईश्वरज्ञानरूपापेक्षाबुद्धेर्नित्यतया तद्द्वित्वादीनां नाशो न स्यात् । जातस्य च नाशावश्यम्भावात् तस्य जन्मापि दुर्वचमित्यत्राह कार्यत्वादनित्येति । अन्तत ईश्वरसंकल्परूपनाशकदारिद्र्यं नास्तीति भावः ।

त्रसरेण्वारम्भः ; तावतैव महत्त्वलाभात् ; द्वाभ्यामारम्भे तु अवयवप्रचय-महत्त्वरूपकारणान्तराभावेन महत्त्वानुत्पत्तौ अदृश्यत्वप्रसङ्गात् । स च त्रसरेणु अप्रत्यक्षावयव-तद्रूपोऽपि स्वयं प्रत्यक्ष प्रत्यक्षरूपश्च । यद्वा अन्यरूपारोपेणाऽऽलोच्यते ; यथाऽऽहोदयनः—, "दृश्यमेव ह्यालोकरूपमारोप्य पिञ्जरस्त्रसरेणुश्चालोच्यते" इति । उत्तरावयविनां तु अनियतसंख्यैरारम्भः । भावरूपस्य सर्वस्य समवाय्यसमवायिनिमित्तसापेक्षत्वेऽपि प्रध्वंसस्तु निमित्तमात्रजन्यः—इत्यादि ।

एतादृशं कल्पनाजातं न विद्यावृद्धा बहुमन्यन्ते । तथा च सूत्रम् – "अपरिमहाच्चात्यन्तमनपेक्षा" इति ॥ २२ ॥ इति स्वपक्षबाधकोपन्यासेनावयविवादभङ्गः ॥

---

*श्री–* ननु प्रत्यक्षाप्रत्यक्षोभयाधीनसंयोगादेरप्यप्रत्यक्षत्वं प्रागुक्तम्, कथमप्रत्यक्षद्वयजन्यस्य त्रसरेणोः प्रत्यक्षत्वमित्यत्राह स चेति । संयोगसंबन्धग्राहिप्रत्यक्षस्य संयोगिद्वयविषयकत्वस्यावश्यकत्वात् तदयोगात् तद्ग्रहणेऽपि, अवयविग्रहणे तादृशानुपपत्तिर्नेति भावः । कथमाकृतिग्रहणमन्तरा व्यक्तिग्रहणमिति चेत्–न । जातिग्रहणे ह्याकृतिग्रहापेक्षा; न व्यक्तिग्रहे इति । जालसूर्यमरीचिस्थतया त्रसरेणोस्तद्रूपं मरीचिरूपाभिभूतमित्याशयेनोक्तं पक्षान्तरमाह यद्वाऽन्यरूपेति । भावरूपस्य सर्वस्येति । कार्यस्येत्यर्थसिद्धम् । अनेन तन्तुरूपं पटरूपस्येति, 'कारणगुणपूर्वकः कार्यगुणो दृष्टः' इति काणादकल्पनाऽपि संगृहीता । निमित्तमात्रेति । भावकार्यस्य सर्वस्य द्रव्यगुणकर्मान्तर्गततया समवायसंबन्धार्हत्वात् तत् यत्रोत्पद्यते तत् समवायिकारणम्, समवायिकारणे प्रत्यासन्नं सत् कारणम् असमवायिकारणम्, तदुभयविलक्षणं सर्वं निमित्तकारणमिति विभागः सुवचः । ध्वंसस्य चाभावत्वात् समवायानर्हत्वात् तदाधारस्य च तत्समवायित्वायोगात् तत्समवायिप्रत्यासन्नत्वस्यापि क्वचित् दुर्वचत्वात् ध्वंसविषयेऽपेक्षितस्य सर्वस्य कारणस्य निमित्तत्वेनैव व्यवहार इति तार्किकसरणिः । अस्मन्मते कारणकार्यैक्यात् कारणगुणातिरिक्तकार्यगुणाभावात्, ध्वंसस्य च अवस्थारूपतया भावपदार्थत्वेन तदिष्टवैलक्षण्याभावाच्च सर्वं कल्पनामात्रम् । अदृष्टवशात् वाय्वादिवशाद्वा चलनस्य बहुत्र संभवात् द्वाभ्यामेवाणुभ्यां प्रथमावयवीति तार्किकशासनमकिञ्चित्करम् । अणुबहुत्वे, कार्ये महत्त्वं स्यादिति चेत्, द्वित्वे लोके महत्त्वोत्पत्तिदर्शनात् तदापि स्यात् । अस्तु महत्त्वम्; किं ततः ? प्रत्यक्षत्वापत्तिरिति चेत्—तदपीष्यताम् । महत्तरत्वं प्रत्यक्षकारणमिति वा स्वीक्रियताम् । एवञ्च द्व्यणुकगतत्रित्वसंख्या त्र्यणुकमहत्त्वे कारणमिति कल्पनापि त्यज्यते; द्व्यणुकमहत्त्वादेव तत्संभवात् । प्रत्यक्षे महत्त्वं कारणमिति च व्यर्थम् । परिमाणानां स्वसमानजातीयस्वोत्कृष्टपरिमाजनकत्वमिति नियमोऽप्यनपेक्षितः । एकद्रव्यापेक्षयाऽनेकद्रव्यघटितस्याधिकदेशव्यापित्वं भवतीत्येक एव नियमः । अणुजन्यं द्व्यणुकमधिकदेशसंबन्ध्येव भवेत् । अतः संख्याया न कारणत्वम् । संख्याद्वित्वादिरपि अपेक्षाबुद्धिजन्या न भवति । अनेकद्वित्वाद्युत्पत्तिकल्पने गौरवात्, स्वतस्सिद्धस्य द्वित्वादेस्तत्तदपेक्षाबुद्धिर्व्यञ्जिकेव । एवञ्चापेक्षाबुद्धिबलेनेश्वरसाधनप्रयासः अनुमानदरिद्रसमादृतः कुशकाशावलम्बमात्रम् । एवं द्वाभ्यां द्व्यणुकाभ्यां चतुरादिभिर्वा नावयवि जन्यत इति नियमोऽपि निर्मूलः । तदेवं परमाणुद्व्यणुकरूपावयवानाम् अवयवातिरिक्तावयविद्रव्याणां अवयवगुणकार्यावयविगुणानां अवयवनिष्ठकर्मातिरिक्तावयविकर्मणां नित्यजातिरूपसामान्यानां विशेषाणां भावातिरिक्तानामभावानाञ्च सर्वेषामभाव एवेति सप्तपदार्थज्ञानमतत्त्वज्ञानमेवेति दूषणं हृदि निधायाऽऽह एतादृशं कल्पनाजातमिति ॥ २२ ॥

[illegible]— यदिति । द्वित्वस्यासमवायिकारणत्वाभावाच्च । ननु परमाणुपरिमाणमनारम्भकं नित्यपरिमाणत्वादिति चेन्न; अप्रयोजकत्वात् । द्रव्यानारम्भकगतपरिमाणत्वस्योपाधेः सत्त्वाच्च । परमाणुपरिमाणमारम्भकं द्रव्यारम्भकगतपरिमाणत्वात् त्र्यणुकादिपरिमाणवदिति सत्प्रतिपक्षसम्भवाच्च ॥

ननु अणुपरिमाणस्यारम्भकत्वे परिमाणस्य सातिशयपरिमाणारम्भकत्वनियमेन द्व्यणुकस्य अणुतरपरिमाणापत्तिरिति चेन्न—अत्रातिशयशब्देन किं विवक्षितम्? स्वसादल्पत्वं स्थूलत्वं वा? नाद्यः—नियमाभावात् । न द्वितीयः—इष्टापत्तेः ॥ ननु कारणीभूतपरिमाणवाचकशब्दस्य तरवादिप्रत्ययार्थजनकत्वनियमो विवक्षित इति चेन्न—त्रसरेण्वादिपरिमाणस्य यत्किञ्चिदपेक्षया अणुन्यूनसूक्ष्मादिशब्दवाच्यत्वेनाणुतराणुतमादिशब्दपरिमाणारम्भकत्वापत्तेः। किञ्च तूलपिण्डकठिनशिथिलावयवसंयोगविशेषात् सूक्ष्मस्थूलादिपरिमाणविशेषोत्पत्तिवत् सर्वत्रावयविसंयोगविशेषादेव कार्यपरिमाणविशेषोत्पत्तिसम्भवात् न परमाणुद्वित्वस्य द्व्यणुकपरिमाणारम्भकत्वमिति कल्पनीयमिति । सा चेति । द्वयोः परमाण्वोः 'इदमेकम्, इदमेकम्' इति प्रत्येकमेकत्वविषयिणी बुद्धिरपेक्षाबुद्धिः। अत्रेदमस्वरसबीजम्—अपेक्षाबुद्धिर्द्वित्वादिप्रकाशिका, न तु तदारम्भिका । तथात्वे तयोः पदार्थयोरेव पुरुषभेदेन प्रतिपुरुषं कालभेदेन च अपेक्षाबुद्धिबाहुल्यात् अदृष्टानेकद्वित्वकल्पने गौरवप्रसङ्गात् । किञ्च, ईश्वरापेक्षाबुद्धेर्नित्यत्वेन परमाणुद्वयद्वित्वपरम्परा जायत इति कल्पनीयम् । तथात्वे घटिकादिष्वपि ईश्वरापेक्षाबुद्ध्या द्वित्वपरम्पराऽस्त्येव । तत्र जीवापेक्षाबुद्धिजन्यस्यापि द्वित्वस्य विरोधिगुणत्वेन उत्तरकालीनद्वित्वेनैव नाशसम्भवात् अपेक्षाबुद्धेः नाशकत्वं [न:?] कल्पनीयम् । न चेष्टापत्तिः अपसिद्धान्तात् । किञ्च कार्यत्वादिति हेतोः, आश्रयादेः प्रतिवादिसम्मतत्वाभावेनान्यतरासिद्धिरिति । एवमिति । अत्रेदमस्वरसबीजम्—त्रिभिरेव द्व्यणुकैरिति नियमो न सम्भवति, विनिगमकाभावात् । ननु यावता महत्कार्यं सम्भवति–तावदेव कल्पनीयम्, न त्वधिकम्, गौरवादिति चेन्न । एवं तर्हि द्वाभ्यामेव त्रसरेणुभ्यां चतुरणुकसम्भवात् तत्रापि द्वाभ्यामेवेति नियमः स्यात्, न चेष्टापत्तिः—अपसिद्धान्तात् । ननु त्रसरेणुत्रयादिभिरपि चतुरणुकसंभवात् अनियमः कल्प्यत इति चेन्न—द्व्यणुकचतुष्टयादिभिरपि त्रसरेणुसंभवात् अत्राप्यनियम एवास्तु ।

ननु चतुरणुकादिषु परिमाणतारतम्यात् अनियम इति चेत्—न । अत्रापि समानत्वात् । द्वाभ्यां त्र्यणुकमहत्त्वारम्भेऽपि नानुपपत्तिः । अवयवप्रचयमहत्त्वरूपकारणाभावेन कारणान्तरं कल्पनीयम् । तत्र द्वित्वस्य द्व्यणुकपरिमाणकारणत्वेन क्लृप्तत्वात् द्व्यणुकमहत्त्वकारणमपि द्व्यणुकद्वित्वमेवेति कल्पनीयम्—लाघवात् । न तु बहुत्वम्, अन्यत्राक्लृप्तत्वेन गौरवात् । बहुत्वस्य कारणत्वक्लृप्तावपि परमाणुबहुत्वमेव त्र्यणुकमहत्त्वकारणमस्तु, किमन्तर्गडुना द्व्यणुकबहुत्वेन?

अप्रत्यक्षावयवतद्रूपोऽपि इत्यस्वरससूचनम् । तथा चावयवस्याप्रत्यक्षत्वे कार्यस्याप्रत्यक्षत्वप्रसङ्गात, अवयवरूपस्याप्रत्यक्षे कार्यरूपस्याप्यप्रत्यक्षत्वप्रसङ्गाच्च त्र्यणुकस्य अप्रत्यक्षरूपावयवकत्वं न कल्पनीयमिति सूचितम् । त्रसरेणुरन्यरूपारोपेणारोप्यत इत्यप्ययुक्तम् । बाधाभावेनारोपत्वासंभवात् । चतुरणुकाद्यवयविनामनियतसंख्यैरारम्भ इत्यप्ययुक्तम्–परिणामतारतम्यानुगुण्येन अवयवसंख्यानियमस्यावश्यकत्वादिति । भावरूपस्येत्याद्यप्ययुक्तम्—समवाये, भावातिरिक्तेऽभावे चानन्यथासिद्धप्रमाणाभावात् । समवायाद्यभ्युपगमेऽपि घटो रूपवानिति प्रतीतिर्विशेषणविशेष्यसंबन्धविषयविशिष्टप्रतीतित्वात् दण्डी पुरुष इति प्रतीतिवत् इत्यादिसमवायसाधकप्रमाणस्याभावविशिष्टप्रतीतावपि समानत्वात् अभावस्यापि समवायसंभवेन तत्रापि त्रिविधकारणस्य संभवात् अभावस्य निमित्तमात्रमिति न युक्तम् । ननु अभावस्य कारणत्रयजन्यत्वे समवायस्य समवायिकारणनाशात् नाशप्रसङ्ग इति चेन्न यथा ध्वंसस्योत्पत्तिमत्त्वेऽपि प्रतियोग्युन्मज्जनप्रसङ्गेन......॥२२॥

**संघातोऽनेकभूतैरपि भवति यथा ह्येकभूतस्य भागैः,**
**देहादिः पञ्चभूतात्मक इति निगमाद्युक्तिभिश्च प्रसिद्धम् ।**
**न त्वेवं संकरः स्यात्; व्यवहृतिनियमः स्वलितस्तारतम्यात्,**
**देहादौ येन भूतान्तरयुजि भवतो भौमतादिव्यवस्था ॥ २३ ॥**

या चान्या कल्पना—शरीरादिषु पृथिव्याद्यनेकभूतसद्भावेऽप्येकमेव भूतमुपादानम्, अन्यत् संसर्गिमात्रमिति—तामपि निरस्यति **संघात इति** ॥ अवयविसद्भावे ह्येकप्रकृतित्वं नियन्तव्यं न वा त्वया ? संघातवादे तु यथादर्शनं सर्वमुपादानम् । न च विजातीयानां संहतिर्नास्ति; दृष्टविरोधात् । युष्मत्सिद्धान्तविरोधाच्च । अन्यथा कथं तैजसत्वाभिमते काञ्चनादौ गुरुत्वादिवल्लृतिः ? किंच त्रिवृत्करणं नामरूपव्याकरणार्थम् । "चतुर्विधाहारमयं शरीरम्" इति च **गर्भोपनिषत्** । "पञ्चभूतात्मकं वपुः" इत्यादि च स्मर्यते । तदिदमाह **देहादिरिति** । यथा विजातीययवृक्षपोतव्यतिषक्तोपचये वृक्षे-

---

ஆனந்த— पूर्वं कार्यकारणयोर्भेदनिरासपूर्वकमभेदः साधितः, अस्मि......हादेः पाञ्चभौतिकत्व-साधनस्य का सङ्गतिरित्यत्राह—याचेति । नत्वेवं संकरः स्यात् इत्यत्र एवंशब्दस्य संघाताङ्गीकारे इत्यर्थं विवक्षन् आह—यथा विजातीयेति । संघातपक्षे स्वस्वांशे तत्तज्जातिवृत्तेः सांकर्यं नास्तीति

ஸ்ரீ— एवं द्रव्योत्पत्तिवादो निरस्तः । एवञ्च द्रव्योत्पत्तिं स्वीकृत्य तार्किकैः भौतिकानामेकभूत-भागमात्रोपादानकत्वं वा विजातीयानेकोपादानकत्वमपि वेति विचार्य, "शरीरं पञ्चात्मकं न विद्यते", "गुणान्तराप्रादुर्भावाच्च न त्र्यात्मकम्", "अणुसंयोगस्त्वप्रतिषिद्धः" इति वैशेषिके (४-२) न्याये चैवमेकमात्रोपादानकत्वं यत् स्थापितम्, तत् सर्वं गगनपुष्पगन्धविचार एव । अथापि तत्राप्यनुभवप्रमाणविरोधं दर्शयति संघात इति । "अणुसंयोगस्त्वप्रतिषिद्धः" इति भवदुक्त्यापि संघातः संयोगः अनेकभूतोत्पाद्य इति सिद्धम् । देहो वा मृत्पाषाणादिर्विषयो वा भौतिकः सर्वोऽपि पञ्चभूतात्मक इति प्रसिद्धं पञ्चीकरणप्रमाण—देहपोषकाहारादिश्रुतिप्रभृतित इति पूर्वार्धस्यार्थः । नियन्तव्यमिति । नानाभूतोपादानकत्वे एकस्मिन् द्रव्ये स्वीक्रियमाणे तत्रैकत्र पृथिवीत्वाप्त्वादि-नानाजातिसमावेशः स्यात्, सांकर्यञ्च जातिबाधकमिति कृत्वा एकोपादानकत्वनियमो भवदिष्ट इति भावः । न वेति । सांकर्यपरिहारप्रकारस्य वक्ष्यमाणत्वात् सांकर्यस्यादोषत्वाच्च स न कार्य इति भावः । संघातेति । तस्य संयोगस्य गुणरूपत्वात् तत्र न द्रव्यजातिप्रसक्तिः । संयुक्तद्रव्याणि तु व्यवस्थितान्येवेति भावः । तैजसत्वाभिमत इति । सुवर्णं तैजसम् अत्यन्ताग्निसंयोगेऽप्यनुच्छिद्य-मानद्रवत्वाधिकरणत्वादिति घृतजतुवैजात्येन त्रपुसीसलोहरजतसुवर्णानां तैजसत्वं तदिष्टम् । तर्हि गुरुत्वपीतरूपाद्याश्रयत्वं कथमिति विचार्य उपष्टम्भकद्रव्यगतं तदिति समाहितम् । अतोऽनेक-द्रव्यसंघातो विलक्षण इह नापलप्य इति भावः । अत्राभिमतेति पदयोजनं गुरुत्वाद्याश्रये एव द्रवत्वप्रत्यक्षात् तदाश्रयतया तेजःकल्पनं नोचितम् । पञ्चीकृततया तेजोंशाधिक्येऽपि पार्थिवांश एवाधिकतरः सुवर्णपदव्यवहारमर्हतीति ज्ञापितम् । चतुर्विधेति । खाद्यलेह्यवत् पेयचूष्ययो-रप्याहारत्वात् अप्कार्यत्वमप्यावश्यकमिति भावः । "अन्नमशितम्, आपोऽशिताः, तेजोऽशितम्" इति भूतत्रयाहारपरं छान्दोग्यमप्यनुसंधेयम् । तर्हि पृथिवीत्वाप्त्वादिजातीनां प्रतिभौतिकं समावेशः स्यात् । तथाच पृथिव्यप्त्वादिषु पृथक्पृथक् स्थितयोर्द्वयोरेकत्र समावेशरूपसांकर्यदोषात् पृथिवीत्वा-देर्जातित्वमेव न स्यादित्यतोत्तरार्धं न त्वित्यादि । एवमित्यस्य एवं सर्वोपादानकत्वस्वीकारे इत्यर्थः

त्त्वधीः, एवमेकस्मिन्ननेकभूतारब्धे विरुद्धजातिसमावेशगन्धोऽपि न स्यादित्याह **न त्विति**। एवंशब्द उक्तहेतुपरो वा ; अपूर्वद्रव्यानुत्पादादित्यर्थः। तदुत्पादेऽपि न जातिसङ्कर इत्याशयः ; नरसिंहादिन्यायेनोभयविलक्षणावयव्युत्पत्तिसंभवात्। कल्प्यते च युष्माभिश्चित्रं रूपान्तरम्। एतेन तज्जातीयोपादं कथमतज्जातीयमित्यपि प्रत्युक्तम्। तन्त्वादिजातीयैरतन्त्वादिजातीयोत्पत्त्यभ्युपगमाच्च ॥ भवतु वा पृथिवीत्वनीयत्वादीनामेकत्र समावेशः, तथाऽपि का हानिः ? परस्परपरिहार्युपाधिद्वयसमावेशन्यायेन दर्शनादर्शनाभ्यामेव सर्वातिप्रसङ्गशान्तेः ॥ ननु पाञ्चभौतिकेषु कथमेकभूतशब्दः, तत्तदर्थक्रियानियमश्च ; वर्णितो हि भवद्भिरेव भूतान्तरोपष्टब्धेष्वपि देहादिषु पार्थिवाप्यादिविभागः ; कथं च मन्त्रार्थवादेषु "पृथिवी शरीरम्" इत्यादिविशेषव्यपदेशः इत्यत्राह **व्यवहृतीति**। सूत्रितो ह्यसौ, "वैशेष्यात्तु तद्वादस्तद्वादः" इति ; "ऱ्यात्मकत्वात्तु भूयस्त्वात्" इति च। अत्र प्रतिबन्दीं प्रथयति **देहादाविति**। **येनेति** तारतम्यपरामर्शः। तथापि अनारब्धावयविकेषु विजातीयराशिषु भूयसा व्यवहारो लोकसिद्धः

---

**ति०**— भावः। स्यात् इति संभावनायां लिङ् इत्यभिप्रायेणाह—गन्धोऽपीति।

उक्तहेतुपरो वेति। अनेकभूतैः संघातो भवति, न त्वपूर्वद्रव्यान्तरमिति तात्पर्यवृत्त्योक्तहेतुपर इत्यर्थः। न त्वेवम् इत्यत्र तुशब्दस्य चकारार्थत्वं विवक्षन् अभिप्रायमाह—तदुत्पादेऽपीति। परस्परपरिहारीति। यथा भूतत्वमूर्तत्वयोः परस्परपरिहारेणाकाशमनसोः वर्तमानयोरेकत्र पृथिव्यादौ समावेशो न दोषाय, तथा जातिसाङ्कर्यं न दोषायेति भावः। नन्वेवं जातिसाङ्कर्यस्यादोषत्वे एकस्मिन्नेव पृथिवीजलादिव्यवहारप्रसङ्ग इत्यत आह दर्शनादर्शनाभ्यामेवेति। परिहरति—वर्णितो हीति। भूयसा भागेनेति शेषः। ननु अनेकारब्धेऽधिकांशेन व्यवहारनियमेऽपि अनेककारणारब्धेऽनेकजातीयत्वपरिहारः कथमित्यत आह—विजातीयेति। यद्वा, 'तन्त्वादिजातीयैः' इत्यादिवाक्यानन्तरं 'विजातीयदारुशिलाद्यारब्धेषु' इत्यादिवाक्यद्वयं द्रष्टव्यम्।

**श्री**— संघातमात्रोत्पत्तेरिति वाऽर्थः। एवमित्यस्य द्रव्योत्पत्तिस्वीकारेऽपीत्यर्थाभिप्रायेणाह तदुत्पादेऽपीति। तुशब्दः अवतारिकादर्शितशंकाव्यवच्छेदार्थः। न चेति चकारः पूर्वार्धोक्तस्य साधकस्यात्रोक्तेन बाधकाभावेन समुच्चये। नरसिंहेति। नरत्वसिंहत्वयोर्जातित्वापत्तिर्यथा तत्र नरत्वाद्यस्वीकारेण वार्यते, तथा भौतिके पृथिवीत्वादिभूतजात्यस्वीकारेण वार्यतामित्याशयः। सिद्धान्ते तु संघातातिरिक्तस्याभावान्न कश्चिद् दोषः। रूपान्तरम्—नीलत्वपीतत्वादिरहितम्। इदमश्वगर्दभजातीयजन्याश्वतराद्युपलक्षणम्। एतेन—विजातीयोत्पत्तिस्वीकारेण। अथ सांकर्यं न जातिबाधकमिति पक्षमादत्याऽऽह भवतु वेति। उपाधीति। जातिरूपधर्म एव सांकर्यस्य बाधकता, न भूतत्वमूर्तत्वादौ उपाधिरूपधर्मे इति तदुक्तम्। पाञ्चभौतिकेष्विति। एकैकस्यापि पाञ्चभौतिकत्वे इत्यर्थः। तत्तदर्थक्रियेति। अर्थक्रिया नाम कार्यनिष्पत्तिः। सिद्धान्तिना व्यवहारव्यवस्थितिर्नोपलभ्येति दर्शयति वर्णित इति। मन्त्रेति। निरूढपशुबन्धप्रकरणस्थेत्यर्थः आ.श.वर्णितः। तत्र निरूढपश्वालम्भे पशुशरीरस्य पृथिवीत्वेन विशिष्य कथनमिति भावः। व्यवहृतिनियम इति घटादौ पृथिव्यादिव्यवहारव्यवस्था, तदितरभूतव्यवहाराभावश्च तारतम्यात् तत्तद्भूतन्यूनाधिकभावात्। तद्व्यवहारे तद्भूयस्त्वं प्रयोजकमित्युक्तं भवति। श्लोके भौमतेति। भूम्युपादानकत्वादीत्यर्थः। नानाभूतसंसर्गे सत्यपि भवदभिमतायामेकभूतोपादानकत्वव्यवस्थायां हि तारतम्यमेव हेतुरित्यर्थः। भूयसेति। भूयोवयवमूलक इत्यर्थः। सांकर्यभीरुणा यद्वावयविनं विनैव व्यवहारनिर्वाहः कार्य

संमन्तव्यः । विजातीयदारुशिलाद्यारब्धेषु च खट्वागोपुरादिषु किंचिज्जातीयत्वनियमः । तत्रावयवनारम्भे सर्वत्रैवमसन्मतसिद्धिः ।

श्लो— विभागादविभागाच्च भूतभौतिकभेदधीः । सत्येव यदि वा द्रव्ये सिद्धसाध्यदशाद्व(न्व)यात् ॥

एकत्वं च बहुत्वं च मृत्पिण्डकरकादिवत् । समष्टिव्यष्टिनीत्यैव त्रिगुणे वदति श्रुतिः ॥

ईदृक् सत्कार्यवादश्च वैदिकैः परिगृह्यते । द्रव्यस्य पूर्वसिद्धस्य साध्यावस्थाविशेषतः ॥

ननु यदि पूर्वं नित्यं सत् द्रव्यम्, तत् कथं सांख्यमतमुज्झतः कार्यं स्यात्? या तु आगन्तुकावस्था, सा न प्रागसती । अतः कथं सत्कार्यवादं ब्रूथ? इत्थम्— प्रागसदेव द्रव्यमवस्थान्तरविशिष्टवेषेण कार्यम्; तथैव लोकवेदव्यवहारस्थितिरिति ॥ २३ ॥ इति देहादेः पाञ्चभौतिकत्वम् ॥

(अथ सांख्यनित्यैकान्तवादभंगः)

## सन्ति प्रागप्यवस्थाः सदितरकरणाप्राप्तनिष्पत्त्यदृष्टेः

---

सर्वा— यदि भूतैरारब्धं द्रव्यान्तरं नास्ति, तर्हि भूतभौतिकभेदबुद्धिः कथमित्यत्राह-विभागादिति । अविभक्ते भूतधीः, विभक्ते भौतिकधीरित्यर्थः । अग्रे आसीदेकमेवेति कारणे एकत्वम्, 'बहु स्याम्' इति कार्ये बहुत्वं च श्रूयमाणं कार्यकारणयोः अभेदे कथमुपपद्यते इत्यत्राह—एकत्वं चेति । सतः कार्यत्वव्याघातादयुक्तः सत्कार्यवाद इत्यत्राह—ईदृगिति । न हि वयं सांख्यवत् अवस्थानामपि प्रागेव सत्त्वं ब्रूमः, येन व्याहतिः स्यात् । प्रागसिद्धानामवस्थानां साध्यत्वाभ्युपगमान्न व्याहतिरित्यर्थः । ननु द्रव्यं सन्न कार्यम्, कार्यत्वावस्था न सतीत्येकस्य सत्त्वकार्यत्वयोरभावात् कथं सत्कार्यवाद इति शङ्कते—ननु यदीति । द्रव्यस्यावस्थाविशिष्टवेषेण कार्यत्वान्न दोष इति परिहरति—इत्थमिति ॥२३॥

*Qऌण*— विभागात् पृथक्करणात् । अपृथक्करणादित्यर्थः । अपृथक्कृतायां महापृथिव्यां पृथिवीति व्यवहारः । पृथक्कृते तु घटपटादौ पार्थिवत्वव्यवहार इति भावः । यदिवा-यद्वेत्यर्थः । समष्टिव्यष्टिनीत्यैवेति । अण्डाद् बहिस्स्थितेषु अण्डान्तर्वर्तिषु च समष्ट्याकारेण व्यष्ट्याकारेण च एकत्वबहुत्ववदित्यर्थः । नन्विति । द्रव्यं यदि पूर्वं सत्—तर्हि नित्यमित्यन्वयः । लोकेति । मृदेव घटो जात इत्यादिलोकव्यवहारः, 'बहु स्याम्' इत्यादिवेदव्यवहारः ॥ २३ ॥

*वी*— इति उदाहरणान्तरैर्दर्शयति विजातीयेति । खट्वा दारुणाऽपि निर्मीयते, शिलया, लोहादिना च । तत्र खट्वात्वदारुत्वयोः सांकर्यं स्यादिति द्रव्यान्तरमेव न जातम्, किंतु नानासंघातमात्रमिति वक्तव्यम् । एवं गोपुरे । मृत्सुवर्णरजतादिविजातीयप्रकृतिके घटादावपीयमेव सरणिरिति ।

ननु भूतातिरिक्तद्रव्यानुत्पत्तौ भौतिकमिति व्यवहारविशेषः कुत इत्यत्राह विभागादिति । समुदायात् पृथक्करणमात्रेणापि पिण्डकाष्ठादिशब्दैः पृथग्व्यवहारो भवति । पूर्वसिद्धावस्थातिरिक्तायाः अवस्थायाः साध्यतया तद्विशिष्टे च पूर्वद्रव्य एव भौतिकत्वबुद्धिरिति । एकत्वमिति । पिण्डावस्थायामेकत्वम्, सर्वं मृन्मयमिति घटशरावकरकादिबहूत्पत्त्या च बहुत्वम् । अपञ्चीकृतं भूतं समष्टिः पञ्चीकृतं व्यष्टिरिति यथा—तथाऽवस्थाभेदात् व्यवहारभेदः । प्राक्सत्त्वकार्यत्वयोरसमावेशात् कथं सत्कार्यवाद इति शंकते नन्विति । कार्यत्वमुत्पत्तिमत्त्वम् । उत्पत्तिश्चावस्थैव । तदाश्रयत्वात् सत एव द्रव्यस्य कार्यत्वव्यवहारः । मृन्मयं हिरण्मयमिति द्रव्य एव विकारशब्दप्रयोगात् । तदात्मानं स्वयमकुरुतेति कारणद्रव्य एव कार्यत्वव्यवहाराच्च । गोत्वघटत्वादीनामवस्थानां प्रकारतयैव भानस्वाभाव्यात् प्रकारिण्येव कार्यत्वादिव्यवहारो लोकसिद्धः; न तु धर्मप्राधान्येनेति भावः॥२३

**उपादानग्रहणा**दित्यनेन विवक्षित हेतु व्यतिरेकेण यनक्ति **अप्राप्त निष्पत्त्यदर्शेरिति** । न हि घटादिकार्यमप्राप्तैरन्यत्र दण्डचक्रादिभिस्तस्योत्पत्ति , तन्त्वादिभिर्वा पटादे । अतोऽवगम्यते स्वकार्यं प्राप्तैरेव निमित्तैरुपादानैश्च स्वसाध्यसाधनमिति। प्राप्तिश्च द्विनिष्ठेति साध्यस्यापि साधनवत् पूर्वभावित्वात्, सदेव साध्यमिति ।

**शक्तस्य शक्यकरणा**दित्युक्तहेत्वभिप्रायेण **शक्ताशक्तप्रभेदवचनम्** । असतोऽपि अप्राप्तस्यापि सृष्टि हेतुशक्तिनियमात् स्यादित्यस्योत्तरमेतत् । *अय भाव –यदि कारणेष्वसत् तदप्राप्त च कार्यमुत्पद्येत,* तदा तिलेभ्य एव तैल किमुत्पद्यते, न सिकतादिभ्य ? ॥ शक्ताशक्तभेदादिति चेत् , सिद्ध नस्समीहितम्। तिलाना तैलोत्पादनशक्तिर्हि तद्धर्मत्वमेव, अन्यादर्शनात्। तदशक्तिश्च सिकतानां तदभाव । तथा सति तद्गतस्तन्निष्पत्ते प्रागपि तत्सिद्धिरनिवार्येति । **आदिशब्देन कारणभावात्, सर्वसम्भवाभावा**दिति हेतुद्वयग्रहणम् । **कारणभावात्**—कार्यस्य कारणात्मकत्वादित्यर्थ । प्रागेव सति कारणे कथ तदा तदभिन्न कार्यमसत् भवेत् ? नन्वस्तु प्रागसदेव कार्यम् , मा च भूवन् हेतुप्राप्तिनिवृत्तिनिर्देक्ष्यानि , तथाऽपि कस्यचिदेव किंचित्कार्यमित्यत्र **सर्वसम्भवाभावा**दिति प्रसङ्गतद्विपर्ययाभ्या प्रत्युक्ति । तथा हि—यदि *प्रागसत् हेतुभिरप्राप्त हेतुवृत्तितादात्म्यरहित च तत उत्पद्यते, सर्वस्मात् सर्वसम्भव स्यात्, नचासावस्तीति।*

---

*किरणा*— सप्ततिव्याख्यानानुरोधेन च नहीत्यादेरेव व्याख्यान कृतम् । ननुअसदकरणात् इत्यादि-हेतूनामनुवादे, मध्यस्थ [सर्वसम्भवाभावात् इति हेतु विहाय शक्तस्य शक्यकरणात् इत्यस्यानुवाद किमर्थ इत्यत्राह असतोऽपीति। सर्वसम्भवाभावादित्यस्य चरमहेतुतयाऽनुवादनियामकमाह-नन्विति।

*वी*— इत्यर्थो वा । आद्ये असत्त्वेन निरुच्यमानत्वादनिर्वचनीयत्व विवक्षित न सिध्यति । अन्त्ये घटाभावस्य घटत्व विरुद्धमिति 'असन् घटो घट एव' इति कथमित्यर्थ । गत खण्डन खण्डनम्।तथा च कदाचित् सत सर्वदा सत्त्वमेवेति असदकरणादन्यथा प्रागपि सदेवेति साध्यप्रथमहेतुसिद्धि ।

कारिकोक्तस्य द्वितीयहेतो स्वोक्तस्य चैक्य नास्तीति शङ्कायामैक्य दर्शयति उपादानेति। तत्रान्वय-मुखेनोक्तमसाभिर्व्यतिरेकमुखेनोक्तमिति भाव । *अयमप्याशय —उपादानेन मृदा घटस्य प्रागेव* गृहीतत्वात् घट प्राक् सन्नेवेति सर्वाभिमतयथाश्रुतकारिकार्थ । निमित्त वा उपादान वा सर्वमपि *स्वाप्राप्त कार्य न निष्पादयतीति तत्त्वकौमुदीरीत्या वक्तव्ये उपादानमात्रग्रहणेनेयमुक्तिर्न घटते ।* किञ्च कारिकायाम् उपादा इत्यत्र पादसमाप्ति पदैकदेशस्य शिष्टस्य नकारस्य पादान्तरारम्भे घटनञ्च न सम्यक । अत परैर्व्याख्यानेऽपि उपादाशब्द इह उपदाशब्दवत् ग्राह्य । तस्य तु स्वीकरणम् असम्बद्धसम्बन्धनमर्थ । नग्रहणादित्यत्र च नशब्देन समास । तथा च उपादाया अप्राप्तस्वीकरणस्य नग्रहणात् अदृष्टेरिति कारिकापदार्थ । एवञ्च उपादानेन निमित्तेन वा अप्राप्तानिष्पादनादिति सामा न्येनोक्त भवतीति कारिकोक्तमस्मदुक्तञ्चैकमिति । तन्त्वादिभिर्वेति । पटादिकमप्राप्तैरिति अनुषङ्ग ।

कारिकोक्त तृतीय हेतु पञ्चमतया व्याख्यास्यति । तद्धर्मत्वमेवेति । शक्तिर्नाम कार्यसूक्ष्मदशैव । यथा सुखदु खमोहसूक्ष्मादशा एव सत्त्वरजस्तमांसीति । असदेव कार्यमिति प्रथमहेतुदूषणम् मा च भूवन्निति उपादानेत्यादिहेतुद्वयदूषणम् तत्र सर्वत्रापेक्षितानुकूलतर्कोपन्यास सर्वसम्भवाभावादिति इत्याशयेन तस्यान्ते व्याख्यानम्। प्रसङ्गतद्विपर्ययाभ्यामिति। यदि अप्राप्तमपि सम्भवेत्, सर्वस्मात् सम्भवेदिति प्रसङ्ग । न च सम्भवतीति तद्विपर्यय इति । प्रसङ्गस्येष्टत्वशङ्कापरिहाराय विपर्ययप्रदर्शनम्।

पञ्चानामप्यामासत्वाभिप्रायेण प्रतिवक्ति **नेति** । तत्र प्रथमस्य प्रतिक्षेपे हेतुः-**कार्यदृष्टेरिति** । शेषाणां तु स एव **स्वोचितादिति** विशेषितः । न तावत् कार्यमिति किमपि न दृष्टम्; सर्वलोकवेदविरोधात्; व्यक्तिसाधनस्यापि निराश्रयत्वप्रसङ्गाच्च । न च दृष्टमपि न सत्यम् । **माध्यमिकादि**मतानां निराकरिष्यमाणत्वात् । न च सत्यमपि न कारणाद्व्यतिरेकेण गृह्यते; उक्तोत्तरत्वात्; प्रकृतिविकृ[ती-]त्यादिविभागभङ्गप्रसङ्गाच्च । अत. कारणाद्भिन्नत्वेन दृष्टं कार्यं तेनाकारेण पूर्वं नासीदिति त्वयैवाकामेनापि स्वीकर्तव्यम् । न हि घटाकारेण निष्पन्नस्य पुनरपि दण्डादिव्यापारनिष्पाद्यत्वमस्ति ।

किंच **कार्यव्यङ्ग्यशब्दौ** च व्यवस्थितविषयौ लोके दृष्टौ । कारकव्यञ्जकभेदश्च । कारकं समग्रमप्येकमुत्पादयति । व्यञ्जकं तु सहकारिसंपन्नं समानेन्द्रियग्राह्याणि समानदेशस्थानि तादृशानि सर्वाण्यपि व्यनक्ति । तदत्र घटादिव्यक्तिसामग्र्यैव तद्वत् मृत्पिण्डगतानां करकादीनामपि व्यक्तिः स्यात् । व्यञ्जकत्वे सिद्धे ग्रन्थान्तरव्यङ्ग्यभेदप्रतिनियतव्यञ्जकभेदव्यवस्थाक्लृप्तिः । न चेह तथा; आगन्तुकाभावे च पुरुषवत् प्रकृतिरपि ते निर्व्यापारैव स्यात् । तथा च गतं सृष्टिप्रलयादिवादैः सिद्धान्तसृष्ट्यादिभिश्च ।

किंच सत्कार्यमिति कार्यस्य सत्त्वमात्रे साध्ये सिद्धसाधनता; कारकव्यापारात् प्रागपि सदिति साध्ये कार्यस्य कारकव्यापारस्य प्रागसत्त्वमङ्गीकृतं स्यात् । असदकरणात्, शक्तस्य शक्यकरणादिति हेत्वोश्च करणशब्देनापूर्वोत्पादने विवक्षिते स्ववचनव्याघातः । व्यक्तिविवक्षायां तु व्यज्यमानत्वात् प्रागपि सदिति स्यात्; तदा अन्यतरासिद्धो हेतु· । ननु सतोऽभिव्यक्तौ घटतैलतण्डुलादिनिदर्शनमस्ति, असत उत्पत्तौ न किंचिदिति चेत्, किमत ? न हि निदर्शनमेव प्रमाणम्; हेतुनैष्फल्यप्रसङ्गात् । न च निदर्शनाभावो बाधकः, सर्वत्र प्रतिनियतस्वभावलोपप्रसङ्गात् ।

अपि च **असदकरणा**दित्यत्र कार्यस्य प्राक्सत्त्वे क्रियमाणत्वादित्येव हेतुः स्यात्; तथा च

---

पूर्व— व्यवस्थितविषयौ लोके दृष्टाविति । अतः कार्यस्य व्यङ्ग्यवत् प्राक् सत्त्वं वक्तुमयुक्तमिति भावः । Ωलल— तादृशानीति । इन्द्रियसन्निकृष्टानीत्यर्थः । अन्यतरासिद्ध इति । [न हि?] कार्यस्य कारकैर्व्यज्यमानत्वं प्रतिवादिनोऽपि सिद्धमित्यर्थः । न च व्यज्यमानत्वमात्रं हेतुरिति वाच्यम्-तदा व्यक्तेः पूर्वं कार्यस्य सत्त्वे साध्ये सिद्धसाधनम् । कारकव्यापारात् पूर्वं [चेत्?], कारकव्यापारैर्व्यभिचारः । कारकव्यापारवैयर्थ्यञ्च स्यात् । 'ननु सतोऽभिव्यक्तौ' इत्यत्र व्यवधानादिना तिलतण्डुलादिवत् अगृहीतस्य सत एव घटस्य व्यञ्जकवशादभिव्यक्तिरस्तीति घटस्यापि निदर्शनत्वेनोदाहरणम् । क्रिय-
वी— श्लोके सांख्यनिरासः नेत्यादिना । तदवतारयति पञ्चानामिति । व्यक्तिसाधनस्यापीति । कार्यास्वीकारे कस्याभिव्यक्तिः पश्चात् साध्यते; न हि मृत्पिण्डादेः, तस्य प्रागेवाभिव्यक्तत्वादिति भावः । उक्तोत्तरत्वात्—व्यतिरेकेणाभिव्यज्यमानत्वात् । कार्यमित्यस्याभिव्यञ्जनीयमित्यर्थं सांख्यो मन्यते; तत् खण्डयति किंचेति । सर्वाण्यपीति । यथा दीपादिरिति ग्राह्यम् । रूपरसादीनां व्यङ्ग्यानामेकेन्द्रियव्यङ्ग्यत्वाभाववत् अस्तु इति शंकमानं प्रत्याह व्यञ्जकत्वे इति । सिद्धान्तसृष्ट्यादिभिश्चेति । कार्यस्य सर्वस्य प्रागेव सत्त्वे, महदहंकारादिक्रमेणैव सृष्टिः, न तु द्व्यणुकादिक्रमेण, अन्यथा वेति स्वसिद्धान्तसृष्टि-परसिद्धान्तदूषणानामप्यानवकाश इत्यर्थः । कार्यस्य कारकव्यापारस्येति । कारकव्यापारस्य कार्यत्वं प्रागसत्त्वञ्चांगीकृतं स्यादिति यावत् । प्राक्सत्त्वे इति ।

प्रतिज्ञाहेतुविरोधः । विपक्षात् खपुष्पादेः सपक्षाच्च सर्वस्मात् व्यावृत्तत्वेन हेतोरसाधारणत्वप्रसङ्गश्च ॥ भावत्वेन तु प्रागसत्त्वं साधयाम इति चेत्, तथाऽपि प्रत्यक्षविरोधः । अन्यथा नित्यासतोऽपि कुतश्चिन्नित्यसत्त्वसाधने निवारकाभावात् ॥ असतः सत्त्वापादनमशक्यमित्युक्तमिति चेन्न ; अत्यन्तासत्त्वे विवक्षिते कार्येषु तदभावात् ; प्रागसत्त्वे तु सृष्ट्यनुगुणस्यैव तद्विरुद्धत्वोपन्यासात् ।

श्लो- प्रागसत् तुच्छमेव स्यात् सच्च नित्यं सदित्यसत् । अयथादृष्टिनिर्णेतुरशेषाभीष्टविप्लवात् ॥

*अन्योऽपि घटवान् कालः कालत्वादिति वादिनः । पक्षदृष्टान्तबाधादिप्रसङ्गः प्रणिधीयताम् ॥*

यच्च कारकाणां कार्यं प्राप्तानामेव तदुत्पादकत्वमिति — व्याहतमेतत् । किंच किं दृष्टत्वादेवमङ्गीक्रियते, अव्यवस्थाभयाद्वा ।

नाद्यः ; अनन्यथासिद्धनियतपूर्वभावित्वादतिरिक्तायाः कार्यप्राप्तेः कारणानां मिथःप्राप्तिवत्

---

[illegible]— पक्षदृष्टान्तभङ्गादिप्रसङ्ग इति । अन्यकालशब्देन भूतभविष्यतोर्विवक्षितत्वात् भूतत्वभविष्यत्त्वयोश्च कालस्योपाध्यवच्छेदायत्तत्वात्, उपाधीनां च त्वत्पक्षे नित्यसत्त्वेन भूताद्युपाधित्वासम्भवात् पक्षभङ्गः । वर्तमानकालस्य दृष्टान्तत्वात् वर्तमानत्वस्यापि औपाधिकत्वात् पूर्ववत् तद्भङ्गः । आदिशब्देन अयोऽपि देशो घटवान् देशत्वात् इत्यनेन घटस्य सार्वत्रिकत्वप्रसङ्गो विवक्षितः ।

[illegible]— माणत्वादित्येव हेतुः स्यादिति । असदकरणादित्येव हेतूक्तौ असतोऽक्रियमाणत्वादित्यर्थः स्यात् । तथा च कार्यरूपपक्षे हेतोरभावात् व्यधिकरणासिद्धिः । तस्मात् सतः क्रियमाणत्वादिति हेतोर्विपरिणामे क्रियमाणत्वादित्येव हेतुः स्यात् । क्रियमाणस्य प्राक्सत्त्वमसम्भवीति प्रतिज्ञाहेतुविरोध इति भावः । सर्वस्मात् सपक्षादित्यन्वयः । सपक्षत्वेन प्रकृतिपुरुषतत्सम्बन्धा अभिमताः । कुतश्चिदिति । भूर्नित्यं खपुष्पवती भूत्वात् इत्याद्यभिप्रेतम् । निवारकाभावादिति । निवारकाभावप्रसङ्गादित्यर्थः । पक्षदृष्टान्तेत्यादि । सर्वनित्यत्ववादिनो भूतभविष्यत्त्वयोः पक्षतावच्छेदकयोः वर्तमानत्वस्य च दृष्टान्तधर्मस्य सर्वदा सत्त्वेन व्यावर्तकत्वाभावात् पक्षदृष्टान्तभङ्गः । आदिशब्दाभिप्रेतं घटादि पटाभिन्नं वस्तुत्वात् घटवत् इत्यादि । सर्ववस्तूनामभेदस्येष्टत्वे विलक्षणव्यवहारविलोपप्रसङ्ग इति भावः । व्याहतमेतदिति । कारकैः प्राप्तस्य उत्पाद्यत्वं विरुद्धम् । प्रागसत

[illegible]— प्राक्सत्त्वे साध्ये इत्यर्थः । प्रतिज्ञाहेतुविरोधः इति । कार्यमिति पक्षस्य प्राक्सदिति साध्यस्य चानन्वयात् प्रतिज्ञाविरोधः । क्रियमाणत्वरूपहेतोः प्राक्सत्त्वरूपसाध्येऽनन्वयात् प्रतिज्ञाहेतुविरोधः । सपक्षाच्चेति । प्राक्सतः प्रकृतिपुरुषादेरित्यर्थः कुतश्चिदिति । कादाचित्कत्वानाश्रयत्वादिरूपहेतुनेत्यर्थः । प्रागित्यादि । यत् प्रागसत्, तत् तुच्छं सर्वदैवासत्, सच्च—यत् कदाचित् सत् तच्च नित्यं सत् इतीदमुभयमसत् । अयथादृष्टि—अनुभवमतिक्रम्य—निर्णेतुः किमपि साधयतः । विप्लवादिति । विपरीतसाधने सुपं निवार्यत्वमिति भावः । अन्योऽपि कालः—घटाभिव्यक्तिरहितकालोऽपि घटवान् कालत्वादिति वादे, घटसत्त्वे घटाभिव्यक्तिराहित्यं कथम्? सर्वनित्यत्वे व्यञ्जकसामग्र्यभाव एव कथम्? कारकव्यापाराभाव एव कथम् । दृष्टान्तबाधेति । सांख्यैः कालपदार्थानङ्गीकारात् बाध इति यद्यपि न सुवचम् । अतिरिक्तकालपदार्थस्वीकारेऽपि कालशब्दवाच्यानामुपाधीनामिष्टत्वात् । अथापि उपाधीनामपि नित्यतया उपाधित्वायोगात् वर्तमानतदन्यरूपकालभेदबाध इति भावः । अव्यवस्थाभयाद्वेति । 'असत्त्वान्नास्ति संबन्धः...इच्छतो न व्यवस्थितिः' इति वक्ष्यमाण सांख्यवृद्धगाथानुसारेणायं विकल्पः । एतन्निरासश्च एतेनेत्यादिना । ततः प्रागेवार्थ-

त्वयाऽप्यदृष्टत्वात् । तदिहानङ्गाङ्गीकारः युक्ताङ्गहानिश्च, प्रागसत्त्वस्य युक्तस्योपेक्षणात् । अविषयवृत्तित्वं वा; कारकाणां संबन्धस्य विरुद्धस्थले संचरणात् । समश्च प्राप्तावप्यतिप्रसङ्गः । न हि प्राप्तयोरपि रज्जुघटयोर्जन्यजनकता ॥ तत्र नित्यप्राप्तिर्नास्तीति विशेष इति चेत् ; निमित्तानामपि घटादिभिर्नित्य प्राप्त्यसंभवात् ॥ उपादाने तु स्यादिति चेन्न ; निमित्तवदेव नित्यप्राप्तिनैरपेक्ष्यात् । त्वत्पक्षेण च — यत् येन नित्यप्राप्तं न तत् तस्योपादेयम् ; यथा पटस्य तन्तुः ; तथा च पटः ; तस्मान्न तन्तूपादेय इति प्रसङ्गात् ॥ प्रकृतिपुरुषयोर्नित्यप्राप्तयोर्नोपादानोपादेयभावः । अतो यत् येन नित्यप्राप्तं न तत् तस्योपादेयं यथा प्रकृतिपुरुषयोरन्योन्यमिति, पटादिकमपि येन नित्यप्राप्तं कथं तस्योपादेयं स्यात् ॥ तयोरन्योन्य प्राप्तिर्नास्तीति चेन्न ; "पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः" इति स्वसमयविरोधात् । अजसंयोगपक्षे विभूनामपि नित्यप्राप्तेः । "व्याप्तिरूपेण संबन्धस्तस्याश्च पुरुषस्य च ।", "दारुण्यग्निर्यथा—"इत्यागमविरोधाच्च ॥ "जहात्येनां भुक्तभोगाम्" इति श्रुत्या मुक्तस्य प्रकृतिप्राप्तिर्निवर्त्स्यतीति चेन्न ; तदाऽपि परस्परधर्माध्यासाधिकारभूतदर्शनमात्रनिवृत्ते त्वदिष्टत्वात् ; यद् ब्रूथ—"या दृष्टाऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्य" इति । अतः कार्यप्राप्तिः कारणानङ्गम् ॥ उक्तं चाक्षपादेन "घटादिनिष्पत्ति-

---

[illegible]— पद्योत्पत्तिदर्शनादिति भावः ॥ कारकाणां कार्यप्राप्त्युक्तेः जात्युत्तरत्वं स्फोरयति—अनङ्गाङ्गीकार इत्यादिना । तदुक्तं जातिप्रकरणे, "दुष्टत्वमूलं द्विविधं साधारणम् असाधारणं चेति । तत्र साधारणं स्वव्याघातकत्वम् । असाधारणं तु त्रिविधम्—युक्ताङ्गविहीनत्वम्, अयुक्ताङ्गाधिकत्वम्, अविषयवृत्तित्वं चेति" । अनङ्गाङ्गीकारः कार्यनिष्ठकारकप्राप्तिरूपस्यायुक्ताङ्गस्याङ्गीकारः । पटादिकमपि येनेति । येन=तन्त्वादिनेत्यर्थः । विभूनामपि नित्यप्राप्तेरिति । तेषामप्यन्योन्यमुपादानोपादेयभावप्रसङ्ग इति शेषः । 'कथं तस्योपादेयं स्यात्' इत्यनन्तरं 'असङ्ग' (१) इत्यादिवाक्यं, तदनन्तरं तयोः इति वाक्यं द्रष्टव्यम् । व्यत्यासस्तु लोक प्रमादकृतः। घटादिनिष्पत्तिदर्शनादिति सूत्रस्यायमर्थः—कार्यमप्राप्तैरेव कारकैः घटादिनिष्पत्तिदर्शनात् अप्राप्तैर्निष्पत्तौ

[illegible]— सिद्धश्च निरासः। अनङ्गाङ्गीकार इति । वादिना साधयितुं दूषयितुं वा प्रवृत्तेन तत्तदुपयुक्तं यत् *तदेव ग्राह्यम् ; अङ्गत्वात् । अनङ्गं दूषेक्ष्यम् । यथा तर्कप्रयोक्तारः व्याप्तिस्तर्काप्रतिहतिः विपर्यये* पर्यवसानम्, प्रसञ्जनीयेऽनिष्टत्वं परस्याननुकूलतेति पञ्चाङ्गमेव तर्कं प्रयुञ्जते, तद्वत् । तत्रानुपयुक्तस्वीकारे, अयुक्तांगस्वीकारिता, उपयुक्तत्यागे युक्ताङ्गत्यागिता । एवं बुद्धिसरे ६५ श्लोके, 'युक्तत्यागस्त्वयुक्तग्रहणमविषये वृत्तिरन्यत्र दोषाः' इति जातिदोषान्तर्गतत्वमेषां वक्ष्यति । एतदुद्भावनेन वादिनिग्रहोऽपीति च ग्राह्यम् । परपक्षेऽपि दोषसाम्यरूपं प्रधानं जातिदोषं दर्शयति समश्चेत्यादिना । निमित्तकारणानां कार्यप्राप्त्या कारणत्वमेव न स्यात् । अप्राप्तावपि कारणत्वेष्टौ उपादानेऽपि तथेष्यतामित्यर्थः। नित्यप्राप्तत्वं तदुपादानकत्वसाध्यं न भवति, किंतु तदुपादानकत्वाभावसाधकमेव स्यादित्याह त्वत्पक्षेण चेति । त्वत्पक्षरीत्येत्यर्थः । ननु सांख्यमते प्रकृतेरिव पुरुषाणामपि विभुत्वेन कुत्रापि कर्मानुत्पत्त्या कथं संयोगरूपप्राप्तिः, तस्याः कर्मजन्यत्वादित्यत्राह अजेति । अजस्य–अनादेः संयोगस्य न क्रियापेक्षेति भावः । अथ तत्प्राप्तेर्नित्यत्वं नेति शंकते जहातीति । अनादेः संयोगस्य नाशायोगात् नाशकाभावाच्च तत्रोक्तं हानमन्याद्दशमिति प्रत्याह तदापीति । कार्यस्य प्रागसत्त्वं कारणाप्राप्ततां न्यायदर्शनेनापि दर्शयति उक्तञ्चेति । पञ्चमप्रथमे प्राप्त्यप्राप्तिसमनिरूपणे एतत् । पूर्वसूत्रसंदर्भानुसारात्

दर्शनात् पीडने चाभि(च व्यभि)चारादप्रतिषेध इति । अत्र 'कार्यमप्राप्तैः' इत्युपस्कार्यम् ।

एतेन—"असत्त्वान्नास्ति संबन्धः कारकै.(णैः) सत्त्वसङ्गिभिः ।

असंबद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः॥" इति साङ्ख्यवृद्धगाथाऽपि प्रत्युक्ता ।

इह तु स्वोचितात्कारकचक्रात् तत्संबन्धतश्च कार्यदृष्टेरित्यव्यवस्थामूलघातः ।

एतेन—विमतं पूर्वापरकालयोरपि सत् प्रमेयत्वात् सत्त्वाद्वा, आत्मवत्; विगीतः काल एतद्घटादिमान् कालत्वात् एतत्कालवदित्यादिर्निरस्तः; सर्वलोकप्रत्यक्षादिबाधात् ।

श्लो—कारकव्यञ्जकानां च व्यवहारव्यवस्थिति. । किं निमित्तेति वक्तव्यं सर्वनित्यत्ववादिना ॥

न हि व्यक्तौ विशेषोऽस्ति न चावरणवारणम् । तयोरपि भवत्पक्षे नित्यत्वात् साध्यता कथम्॥

आवारकं च नित्यं चेत्, नित्यमावरणं भवेत् । अन्यथा त्वपसिद्धान्तः, तत्तिरोधिश्च दुर्वचः ॥

तिरोधिं तन्निवृत्तिं च नानित्यौ तस्य मन्यसे । मिथश्चाभिभवाद्युक्तिर्गुणेष्वेवमनर्थिका ॥

समानदेशकालत्वमभावप्रतियोगिनोः । सहन्ते क्वाप्यगत्यैव न तथाऽत्रान्यथा गतेः ॥

---

प्र—विगीतः काल इति कालपक्षकानुमानस्य पुनरुपन्यासो दूषणान्तरोक्त्यर्थः ॥ कारकव्यञ्जकानां चेति । पूर्वं व्यञ्जकानां समानदेशेन्द्रियग्राह्यानेकव्यञ्जकत्वस्वभावभेदनिबन्धनो दोष उक्तः; इह तु व्यवहारभेदनिबन्धनासिद्धिदूषणमुच्यते । आवारकस्य नित्यत्वेऽपि तस्य तिरोहितत्वान्न नित्यतिरोधानमित्यत आह तत्तिरोधिश्चेति । सर्वनित्यत्वपक्षे कालविशेषे महदादिसृष्ट्यर्थं गुणानामुद्भवाभिभवोक्तिस्तयोरपि नित्यत्वादनर्थिकेत्याह मिथश्चेति । संयोगाद्यभावस्य तत्समानदेशकालत्ववत् कालविशेष उद्भवादिसत्त्वेऽपि तदभावोपपत्तेः नानर्थक्यमित्यत आह समानेति । अन्यथागते-

विव्या—अतिप्रसङ्गभयात् यथादर्शनं स्वोचितादप्राप्तादेव कारणात् कार्योत्पत्त्यविरोध इति । अत्र = अस्मिन् गौतमसूत्र इत्यर्थः । उपस्कार्यम् अध्याहार्यमित्यर्थः ।

वी—अत्र सूत्रे पूर्णीयं दर्शयति अत्रेति। तथा च घटादिकार्यमप्राप्तैरेव दण्डमृत्पिण्डादिभिर्घटादिकार्यस्य लोके निष्पत्तेः, अभिचारयागात् शत्रुपीडने च वेदे शत्रुमारणरूपक्रियामप्राप्तेनैव श्येनयागादिना तन्निष्पत्तेर्न कार्यप्राप्तिरङ्गमिति । पूर्वसूत्रे साध्यहेतुपदे कार्यकारणपरे इति एतत्सूत्रपदबलात् ज्ञायते। अव्यवस्थाभयाद्वेति प्राक्(९८पु)विकल्पितमपि निरस्तमित्याह एतेनेति। एतेन-अप्राप्तावेव अनन्यथासिद्धनियतपूर्ववृत्तित्वबलादेव कार्योपपादनेन। असत्त्वादिति। असत्कार्यवादे कारणानां स्वयं सत्त्वात् मिथः संगित्वेऽपि कार्येण संबन्धो नास्ति। असंबद्धस्याप्युत्पत्तिरिष्यते चेत्-घट इव पटोऽपि मृदादित एव जायेतेति गाथार्थः । स्वोचितात् कार्यदृष्टेरिति श्लोकांश एतस्यापि निरासक इत्याह इहत्विति ।

साङ्ख्यकारिकानुक्तानामप्यनुमानानां निरासमत्राभिप्रेत्याह एतेन विमतमिति । अप्राप्तस्यैवोत्पादकमित्येतच्छेषतया प्रागुक्तानामपि स्वातन्त्र्येण पृथक्साधकत्वमाशङ्क्य पुनरनुवाद इह विगीत इत्यादिना । व्यक्तौ—अभिव्यक्तौ, विशेषः असदुत्पत्तिरूपः नास्ति । अनित्यौ इति तिरोधिशब्दानुरोधात् पुंलिङ्गाशेषः । मिथश्चेति । "अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः" इति साङ्ख्यैः सत्त्वादिगुणत्रयस्यान्योन्याभिभावकत्वाश्रितत्वादिकमुक्तम् । उन्मेषनिमेषयोरपि नित्यत्वात् कथमन्योन्याधीनतेत्यर्थः । ननु विरुद्धयोरपि समावेशः दृश्यते भवद्भिः अपहतपाप्मत्वविजरत्वादयः स्वरूपात्मकगुणा इत्युक्त्वा संसारे सपाप्मत्व-सजरत्वादिस्वीकारात् । न ह्यसम्मत इव नित्यनिर्विकारत्वमात्मनां भवद्भिरिष्टमित्यत्राह समानेति । श्रुतिबलात् तत्र अभिव्यक्तेनाभावेन साकमेव

अपि चाशेषनित्यत्वे पौर्वापर्यं न कुत्रचित् । व्यक्तिभोगापवर्गादिसाध्यतोक्तिरतो मुधा ॥
स्वप्नवृत्त्यादिनैष्फल्यं शास्त्रादेरप्यनुत्थितिः । सांख्यचार्वाकयोः स्यातां साध्यसाधनबाधनात् ॥
अयोग्यत्वं तिरोधानं योग्यत्वं व्यक्तिरित्यपि । तन्नित्यानित्यताभ्यां ते विवक्षितविघातकृत् ॥
इन्द्रियप्रतिघातेन भागैर्भागान्तरावृतिः । यथाऽन्यत्र तथा नात्र कादाचित्कदशात्ययः ॥
असंभवनिरस्तं च ग्रसनोद्ग्रसनादिकम् । मृत्पिण्डादिषु दुस्साधं शास्त्रमप्यनिदम्परम् ॥
अप्राप्तावव्यवस्थोक्ता प्राप्तावपि तवापतेत् । व्यक्तिवादोऽत एवेत्यप्ययुक्तं तन्निरासतः ॥
सत्त्वादिगुणभूयिष्ठभागभेदाव्यवस्थितेः । त्रिगुणद्रव्यसंबन्धः प्रवाहानादिरात्मनाम् ॥
सार्वज्ञ्यप्रागभावात्मा तिरोधिरपि कर्मि(र्म)णाम् । संविद्विकाससङ्कोचप्रवाहात् नातिरिच्यते ॥

---

பூ— रिति । अवस्थानामनित्यतया गतिसम्भवादित्यर्थः । प्राक् स्वरूपायोग्यस्य स्वरूपयोग्यत्वरूपा व्यक्तिः कारकैः क्रियते, व्यञ्जकैस्तु स्वरूपयोग्यस्य व्यञ्जतमिति व्यक्तौ विशेषोऽस्तीत्यत आह अयोग्यत्वमिति । व्यक्तेर्नित्यत्वेऽपि तस्याः कारणभागैरावृतत्वात् तन्निवर्तनं कारकैः क्रियत इत्यत आह इन्द्रियैरिति । शास्त्रे कार्यस्य ग्रसनोद्ग्रसनयोः श्रुतत्वात् मृद्घटादिष्वपि तथेति कार्यस्य नित्यं सत्त्वमित्याशङ्क्याह असम्भवनिरस्तमिति । चेतनकार्यत्वात् ग्रसनोद्ग्रसनयोः अचेतनेष्वसम्भवेन निरस्तमिति भावः । शास्त्रमप्यनिदम्परमिति । भगवता सृष्टस्य जगतोऽवान्तरप्रलये निगरणोद्गिरणपरमिति भावः । अप्राप्तनिष्पत्त्ययोगादिति हेतुदूषणत्वेन पूर्वोक्तां प्राप्तौ अव्यवस्थां स्मारयति अप्राप्ताविति । अत एव हि अस्माभिः व्यक्तिवादः स्वीकृत इत्याशङ्क्याह व्यक्तिवाद इति । भवन्मते जीवानां प्रकृतिसम्बन्धस्यानादेः कर्मजन्यत्वमस्ति, तद्वन्ममापि अनादेः कार्यस्य कारकजन्यत्वमस्तित्यत आह सत्त्वादीति। स्वरूपानादेरपि सार्वज्ञ्यप्रागभावस्य कर्म कारणतया त्वदभिमतमित्यत आह सार्वज्ञ्येति। तर्हि कर्मणोऽनादेरविद्याकारणकत्वं कथमङ्गीकृतमिति शंकापरिहारार्थं कर्मप्रवाहेणेत्युक्तम् ।

[illegible]—तत्संबन्धतः कारकाणामन्योन्यसंबन्धत इत्यर्थः । सत्त्वादिगुणेति । आत्मनां सत्त्वादिगुणभूयिष्ठदेवादिशरीररूपप्रकृत्येकदेशविशेषसंबन्धाव्यवस्थितेः तस्याश्च कर्ममूलत्वेन स्वरूपानादित्वासंभवात् प्रकृतिसंबन्धः प्रवाहानादिरित्यर्थः । कर्मणां तिरोधिरित्यन्वयः । जन्यजनकभावः षष्ठ्यर्थः ।

ஸ்ரீ— भावस्य विरोध इष्यते । तार्किकाश्चात्यन्ताभावस्य नित्यस्य भावेन समानदेशकालत्वमिच्छन्तः संबन्धविशेषो व्यवहारनियामक इत्याहुरिति भावः । सांख्यचार्वाकयोरिति । चार्वाकः अस्येदं कारणमिति कार्यकारणव्यवस्थामनभ्युपगम्य अकस्मादेव सर्वमित्याह । तस्य क्षुधार्तस्य नियमेन भोजनादौ प्रवृत्तिरनुपपन्ना । तद्वत् नित्यैकान्तवादिनः सांख्यस्य सर्वं प्रागेव सिद्धमिति लौकिकवैदिकसर्वप्रवृत्त्यनुपपत्तिरिति । अयोग्यत्वं प्रत्यक्षानर्हत्वम् । तत्रैकस्य नित्यत्वे अन्यन्न स्यात्; अनित्यत्वे असद्वादः इति विवक्षितविघातमेव करोति त्वदीयं अयोग्यत्वमित्यादिवचनम् । कादाचित्कदशात्ययः । कादाचित्कत्वं वस्तुन्यनंगीकुर्वतस्ते । ग्रसनोद्ग्रसनादिकम्—ऊर्णनाभिरूर्णामुत्सृजति, अन्तर्निवेशयति च यथा तथेति न भवति, दृष्टान्तेऽपि नित्यानित्यविचारात् । अचेतनत्वाच्च प्रकृतेः । दुस्साधमिति । घटकटाहादिप्रवेशादेर्मृत्पिण्डे प्रत्यक्षबाधादिति भावः । शास्त्रमिति । भगवतः निगीर्य पुनरुद्गिरणोक्तिरपि न सर्वेषां द्रव्याणां कार्यभूतानां,तथैव प्रळये सद्भावपरा । तथासति पृथिव्यप्सु प्रलीयते इति क्रमस्यैवापलापापत्तेः । विस्तरो घटपत्ररायिवृत्तविचारे । प्राप्तावपीति । "प्राप्तयोरपि रज्जुघटयोः" इति प्रागुक्तमेतत् । सार्वज्ञ्येति । ननु ज्ञानं कर्मणा तिरोहितमिति सिद्धा-

तत्तत्कर्मप्रवाहेण तयोरेवं व्यवस्थितेः । न हि स्वरूपतोऽनादेर्हेतुरस्माभिरिष्यते ॥

यत्तु कारकशक्तिर्नाम तद्गतं सूक्ष्मं कार्यमिति कल्प्यते-तत् प्रतिबन्द्या प्रतिरुणद्धि तस्मिन्निति । तस्मादित्यत्रापि स्वोचितादिति विशेषणीयम् । यथा सर्वेषु द्रव्येषु तिला एव तैलगर्भाः स्वकारणशक्त्या सृज्यन्ते, तथा तत्तत्कार्यनियतपूर्वभावितया तत्तदुत्पादकस्वभावास्ते ते भावास्तथैवेति स्वीकार्यम् ; अन्यथा दृष्टहानमदृष्टकल्पनं च । प्रतिबन्द्यन्तराणि स्वव्याघातं चाभिप्रेत्याह तन्निमित्तेति । निमित्तादीनां कार्योत्पादनशक्तिरस्ति वा न वा । न चेत् , कथं तन्निमित्तत्वम्? अन्येषां वा कथमतन्निमित्तत्वम्? अस्ति चेत्--सा किं कार्यस्य सूक्ष्मावस्था, अन्या वा? न पूर्वः ; अपसिद्धान्तात् । उपादाने हि तत्सत्त्वमङ्गीकरोषि, अन्यथा प्रकृतेरिवात्मनोऽपि प्रपञ्चगर्भत्वेन प्रकृतित्वप्रसङ्गात् । आत्मा खल्वयस्कान्तवत् निर्व्यापारोऽपि सन्निधिमात्रेण निमित्तमिष्यते, तथा सति निमित्तोपादानवैषम्यविलयाच्च ।

नाशकेषु च नाश्यवृत्तिरस्ति वा न वा? अस्ति चेत् , वह्नौ तूलवद्विरोधः । न चेत् , कथं तदेव तस्य नाशकम्? न ह्यतद्वृत्तिस्तेन नाश्यते, शुक्तावविद्यमानस्य रूप्यस्य तया नाशप्रसङ्गात् । सर्वत्र वाऽतिप्रसङ्गात् । दूषणेषु च दूष्यं वर्तते, न वा । पूर्वत्र दूषणत्वादेरिव तद्वृत्तेस्तेन दूषणायोगः । उत्तरत्र तद्वृत्तिरहितस्य घटादेरिव तद्दूष्यत्वं न स्यात् ।

अथैतेषु यथादर्शनं व्यवस्थेष्यते । प्रकृतेऽपि तथा स्यात् । एवं निमित्तादिप्रतिबन्द्यैव कार्यस्य कारणभावः सर्वत्र सर्वसंभवप्रसङ्गश्च निरस्तः । यानि च सांख्यानामवस्थातद्वतोरभेदसाधकानि, तेषु यदेतत् पटस्तन्तुभ्यो न भिद्यते तद्धर्मत्वादिति ; अत्र तावत्प्रतिज्ञाहेतुविरोधः स्पष्टः । दृष्टान्ताभावेन व्याप्तिश्च नास्ति ॥ यत् यतो भिद्यते, न तत् तस्य धर्म इति व्यतिरेकव्याप्तिरस्तीति चेन्न ; सपक्षेभ्यस्तन्तुभ्योऽपि व्यावृत्तत्वेन केवलव्यतिरेकित्वायोगात् ।

---

[illegible]— कर्मजन्यतिरोधिरित्यर्थः। तयोः त्रिगुणद्रव्यसम्बन्धसार्वज्ञ्यप्रागभावयोरित्यर्थः । प्रकृतित्वप्रसङ्गात् उपादानत्वप्रसङ्गादित्यर्थः। केवलव्यतिरेकित्वायोगादिति । असपक्षवत् सपक्षेभ्यो व्यावृत्तं पक्षभूमिषु सर्वासु वर्तमानं यत् केवलव्यतिरेकि तदिति लक्षणादिति भावः। व्यतिरेकव्याप्तिमात्रग्रहात् साध्यानुमापकत्वं केवलव्यतिरेकिलक्षणमिति चेन्न—तन्तुधर्मत्वस्य हेतोः विपक्षव्यावृत्त्या साध्येन व्यतिरेकव्याप्तिरत् सपक्षव्यावृत्त्या यत् तन्तुभ्यो भिन्नं न तत् तद्धर्मः, यथा तन्तुरिति साध्याभावेनापि व्यतिरेकव्याप्तिसंभवेन साध्यानुमापकत्वासम्भवात् केवलव्यतिरेकित्वं न सम्भवतीति ।

[illegible]— न्तीयम् । तिरोधानञ्च ज्ञानप्रागभावः । तथाच प्राक् सतोऽपि कारणाधीनत्वमिष्टमेवेति ॥ नैवम् । भावातिरिक्ताभावानंगीकारात् ज्ञानसंकोचप्रवाह एव प्रागभाव इति न तत्र कस्या अपि व्यवेरतादित्वमिति। कारणे कार्यमस्तीति वदता एकक्रियाकर्मकारकस्य तत्क्रियासाधने स्थितिरिति यदुच्यते, तर्हि नाश्यदूष्यादीनामपि नाशकदूषकादिनिष्ठता स्यात् । तत्र तदभावे तद्वदेवात्राप्यस्तु, इत्याशयेनाऽऽह नाशकेषु चेत्यादि । सपक्षेभ्य इति । तन्तुभेदाभावरूपसाध्यवत्तया निश्चितास्तन्तवः । नत्र तद्धर्मत्वरूपहेत्वभावात् व्यावृत्तता । सपक्षाभावे हि केवलव्यतिरेकिता । तत्सत्तया तु तद्व्यावृत्तो हेतुरसाधारण एव स्यादिति भावः । ननु तदभिमन्ये संदिग्धतया साध्यमाने तद्भिन्य-

यदपि तदुपादेयत्वात्तदभिन्न इति—एतदपि पूर्ववदेव। तदुपादेयत्व च तज्जन्यत्वमात्र वा, तद्विकार्यत्व वा, तत्सबन्धित्व वा, तद्धर्मत्व वा, तदभिन्नत्व वा, अन्यद्वा यत्किंचिदिति। नाद्य, निमित्तैरप्यभेदप्रसङ्गात्। न द्वितीय, तद्धर्मत्वहेतूक्तदोषादेव। उभयत्र पटावस्था तन्त्वात्मा न भवति तन्तुभ्यो भिन्नत्वात् घटवदिति प्रतिप्रयोगस्य शक्यत्वाच्च। इष्टो हि त्वयाऽपि तत्र भेदोऽपि। न तृतीय, कारणेषु परस्परसबन्धिषु व्यभिचारात् त्वत्पक्षेणासिद्धेश्च। न हि धर्मधर्मिणोस्तादात्म्यवादिन तत्सबन्धित्व समव, समवायस्यानभ्युपगमात्, अन्यतरस्याद्रव्यत्वे तु सयोगायोगाच्च। न चतुर्थ, प्रागेव दूषितत्वात्। न पञ्चम, तस्यैव साध्यत्वात्। न षष्ठ, अभेदव्याप्यस्य कस्यचिदन्यस्य त्वयाऽप्यदर्शनात् इति।

यच्च—एतत्पटस्तन्त्वात्मक तत्सयोगतदप्राप्तिरहितत्वात्। तादात्म्याभावे हि कुण्डबदरयोरिव सयोगो वा स्यात्, हिमवद्विन्ध्ययोरिवाप्राप्तिर्वा, तदुभयमिह निवर्तमान तादात्म्यविरहमपि निवर्तयति इति—तदपि मन्दम्, तादात्म्यविरहेऽप्यन्यतरस्याद्रव्यत्वात् सयोगाभाव, तद्धर्मस्वभावत्वादेवाप्राप्ति परिहार इत्यन्यथासिद्धस्यासाधकत्वात्। अन्यथा तादात्म्यभाव इव भेदसद्भावेऽपि घटपटयोरिव धर्मधर्मिभावो न स्यादिति प्रसज्येत। गुरुत्वान्तरकार्यादर्शन तु द्रव्यान्तरोत्पत्तिं प्रतिरुन्ध्यात्, न त्वदवस्था-

---

*Qछ्छ*— तदिद सूचितम्, सपक्षेभ्यस्तन्तुभ्यो व्यावृत्तत्वेनेति। इष्टो हीति। धर्मधर्मिणोर्भिन्नत्वे सति अभिन्नत्वरूपतादात्म्याङ्गीकारादित्यर्थ। अद्रव्यत्वेत्विति। तन्तूना सयोगविशेषस्यैव पटत्वेन अद्रव्यत्व इत्यर्थ। सयोगविशेषविशिष्टतन्तूनामेव पटत्वेन द्रव्यत्वाङ्गीकारे सम्बन्धिद्वयाभावात् सयोगो न सम्भवतीति भाव। तादात्म्यविरहेऽपीति तर्कित बोध्यम्। सांख्यमते तन्तुपटयोस्तादात्म्याङ्गीकारात्। भेदसाधकानुमाने तर्कान्तरशङ्कामभिप्रेत्य प्रतितर्कप्रतिहत्या दूषयति—*अन्यथेति*। 'तादात्म्याभावरूपभेदासद्भावेऽपि' इत्यत्र अपिशब्दस्याय भाव। यथा तादात्म्यरूपभेदासद्भावे घटपटयो परस्परमित्र धर्मधर्मिभावो न स्यादिति प्रसङ्ग—तथा तादात्म्याभावरूपभेदासत्त्वेऽपि घटपटयो प्रत्येकमित्र धर्मधर्मिभावो न स्यादिति प्रसङ्ग समान इति। नन्वेव तन्तुपटयो अभेदनिराकरणे तयोर्भेदवादी नैयायिक कथ पूर्व निरस्त इत्यत्राह गुरुत्वान्तरेति।

*श्री*— निश्चयायोगात् कथ भिन्नत्वादिति हेतुप्रयोग इत्यत्राह इष्टो हीति। धर्मधर्म्यादिभेदाभेदवादिना त्वया भेद इष्ट एव अभेदस्त्वधिक साध्यत इति भाव। स भेदो मुख्यो वा औपाधिको वेत्यन्यदेतत्। असिद्धेश्चेति। सबन्धश्च तादात्म्य समवाय सयोगो वा। आद्ये तदभिन्नत्वमिति पक्षाविशेष तन्न्यस्तु न त्वदिष्ट इति भाव। त्वयाऽपीति। शुक्तिरजतवत् तदध्यस्तत्वादिक त्वया नेष्टम्। तदा सत्यासत्ययोरभिन्नत्वायोगश्चेति भाव।

तत्सयोगतदप्राप्तिरहितत्वादिति। सयोगतदप्राप्त्यन्यतराभावादित्यर्थ। व्यतिरेकव्याप्तौ तदन्यतरस्यव्यापकत्वम्। व्यापकाभावाच्च तादात्म्यविरहाभावस्तादात्म्यमिति। हेतुरप्रयोजक इत्याह तादात्म्यविरहेऽपीति। तदप्राप्तिर्नाम तेन सह स्वरूपसबन्धाभाव। *अन्यथा—अप्रयोजकस्यापि* हेतुत्वे। धर्मत्वस्यानिश्चितत्वे च पटो न तन्तुधर्म तद्भिन्नत्वादित्यपि साध्येत। पटो न तन्तुभिन्न तन्तुगुरुत्वकार्याधिक्यकार्याप्रयोजकत्वात्। पटस्य भेदे हि तन्तुगुरुत्वपटगुरुत्वोभयबलात् पतनाधिक्य स्यादित्यत्राह गुरुत्वेति। किमत्र पटद्रव्य पक्ष उत पटत्वावस्था। नाद्य, सिद्धसाधनात्। नान्त्य हेतोरभेदाप्रयोजकत्वात्। अवस्थाया भिन्नत्वेऽपि गुरुत्वान्तराभावादेव तत्कार्याभावोपपत्तेरिति।

तद्वतोरभेदं विदधीत । ननु जनिरपि व्यक्तिरेव, 'जनी प्रादुर्भावे' इति धात्वर्थपाठात् । न; **जनिव्यक्तिशब्द** योरर्थभेदेनैव निरूढेः । प्रादुर्भावपाठोऽप्युत्पत्तिपरः स्यात् । निर्वर्त्यप्राप्यभेदसिद्धेश्च । जन्यं हि निर्वर्त्यम्, व्यङ्ग्यं तु प्राप्यम् । अभूततद्भावादिषु च प्रागसत्त्वमनुस्मृतमेव । भवतु वा **जनिशब्दो** व्यक्तिपरः ।

श्लो— न व्यक्तिरुपलब्धिस्ते दृष्टादृष्टदशान्वयात् । अथोपलब्धियोग्यत्वं न तदव्यापकत्वतः ॥

सत्स्वलक्षणपूर्तिश्चेदभिव्यक्तिस्तदप्यसत् । साऽपि वः प्राक्तनी, नो चेन्न सिध्येद्धेतुरप्यसन् ॥

किं च व्यक्तिरपि नित्या कार्या वा? पूर्वत्र कारकाणामिव व्यञ्जकानामपि नैष्फल्यम् । उत्तरत्रार्धजरतीयः सत्कार्यवादः ॥ व्यक्तेरपि व्यक्त्यर्थं कारकापेक्षेति चेत्—तत्रानवस्थाप्रसङ्गमाह **व्यक्तिरिति** । व्यक्तेः कार्यत्वपक्षे अपसिद्धान्तम् **असदकरणा**दित्यादिहेतुविरोधं चाभिप्रेत्याह **न चेति** । ननु कार्यस्य कृतिस्तावन्न कार्यस्वरूपमेव ; कार्यं क्रियते, घटः क्रियत इति सामान्यतो विशेषतश्च सहप्रयोगात् ।

---

आ— न व्यक्तिरुपलब्धिरिति । व्यक्तस्यैव घटादेः उपलब्ध्यनुपलब्ध्यन्वयदर्शनान्न व्यक्तिरूपलब्धिरित्यर्थः । अव्यापकत्वत इति । महदादिव्यक्तिषूपलब्धियोग्यत्वाभावादिति भावः । सत्स्वलक्षणपूर्तिः—सत एव स्वासाधारणाकारणपूर्तिः । अप्राक्तन्यपि हेतुवशात् सिद्ध्यतीत्यत आह हेतुरप्यसन् इति । सोऽपि प्राक् सत्त्वासत्त्वविकल्पदोषेण न सिद्ध्यतीत्यर्थः । यद्वा प्रागसत्यपि सिद्ध्यति चेत्, असदकरणादिति हेतोः तत्र व्यभिचारेणासत्त्वं स्यादिति । अपीति अपसिद्धान्तसमुच्चयः ।

भा— उत्पत्तिपरः इति । जायत इति प्रयोगः न द्रव्यस्यापूर्वस्योत्पत्त्याशयेन ; किं तु स्थित एव द्रव्ये अवस्थामात्रभेदेनेति ज्ञापनार्थं प्रादुर्भावशब्दप्रयोग इति भावः । भूतेति । अवस्थाया अनादित्वे अभूततद्भाव एव दुर्वचः । तदुक्त्या प्रादुर्भावो न सांख्यवत् पाणिनेरिष्ट इति भावः । उत्पत्तित्वेनोत्पत्तेर्जन्यर्थत्वे प्रादुर्भावशब्दप्रयोगस्यास्वरसतेति व्यक्त्यर्थकत्वोक्तावपि, सा व्यक्तिर्न त्वदभिमताभिव्यक्तिरित्याह भवतु वेति । त्वया हि अभिव्यक्तिः उपलब्धिरित्युच्यते । तदयुक्तम् । यशोदापत्याजन्मवत्, जातं न तु दृष्टमित्यप्यनुभवात् जनेर्दर्शनरूपत्वायोगात् । सामग्र्यां सत्यां ग्राह्यत्वमिति तद्योग्यतैव जन्यर्थ इत्यपि न; दर्शनायोग्यानामतीन्द्रियाणामपि जन्माभ्युपगमात् अस्यार्थस्य तत्राव्याप्तत्वात् । तत्तदसाधारणाकारप्राप्तिरेव व्यक्तिः अत एव बौद्धैस्तत्तद्व्यक्तौ स्वलक्षणशब्दप्रयोग इति चेत्—तत् लक्षणं स आकारः अस्मदभिमतावस्थैव । सा पूर्तिरपि वः—भवन्मते प्रागेवास्तीति इदानीं जायत इति प्रयोगायोग एव । नो चेत्—पूर्वं तदसत्त्वे, न सिद्ध्येत्=पश्चादपि न भवेत् । असदकरणात्, अत एव तद्धेतुरपि नास्ति; तस्याः प्रागेव सत्त्वात्, तदसत्त्वे तुल्यरीत्या तद्धेतुरपि प्रागसन्नेव कादाचित्कः स्यादिति कारिकार्थः । वः इत्यत्र नः इति पाठस्त्वशुद्धः । तथा च यस्तावत् अन्तः स्थितस्य बहिर्भावः, साऽपि व्यक्तिः, या चोत्पत्तिः साऽपि व्यक्तिरिति प्रादुर्भावशब्दस्याधिकार्थकत्वेऽपि उत्पद्यमानस्थले तत्पदेनोत्पत्तेरेव ग्रहणमिति भावः ।

उत्तरत्र—तस्याः कार्यत्वपक्षे तत्र परं सत्कार्यवादभंगात् अर्धजरतीयता । जरतीशरीरे अर्धांशे यौवनम्, अर्धांशे जरेतिवदयुक्तमिदम् ।

अवतारयति नन्विति । अयमर्थः— कार्यं पूर्वमेव सत् अभिव्यज्यत इत्यस्मत्पक्षे, सा कार्याभिव्यक्तिः क्रियते व्यज्यते वेति यथा त्वया विकल्पः क्रियते, तथा कार्यं क्रियत इति त्वत्पक्षेऽपि सा कृतिः क्रियते व्यज्यते वेति विकल्पस्तुल्यः । न च कार्यस्य कृतेश्च धर्मधर्मिभूतत्वादेकत्वमेवेति,

अतिरिक्ता च सा । तथा सति कार्यव्यक्तौ कः प्रद्वेषः ? कृतिरपि कृता वा व्यक्ता वा । पूर्वत्रानवस्था ; उत्तरत्र कारकनैष्फल्यापसिद्धान्तौ । व्यक्तिरपि कृता व्यक्ता वेत्युभयथाऽप्यनवस्था । तत्राह **नैवमिति ।** कृतिर्हि कारकाणां व्यापारः । स चाऽऽगन्तुस्तत्कारणव्यापारेण जन्यते, सोऽपि तथेति सिद्धानवस्थैषा । सा च सर्वसंमता । न दोष (षकृत्)। त्वयाऽप्यभिव्यञ्जकव्यापारो व्यञ्जकान्तरव्यापारव्यङ्ग्य इति वाच्यम् । ननु व्यक्तिर्न व्यज्यते न क्रियते च, अव्यक्तैव नित्यं स्वयं व्यक्तैव वा कार्याणां व्यक्तिः स्यात् ॥ न स्यात्, तदर्थकारकव्यापारवैयर्थ्यप्रसङ्गात्, कार्याणां नित्यव्यक्तिप्रसङ्गाच्च ॥ ननूत्पत्तिर्नाम सत्तासमवायो वा, स्वकारकसमवायो वा । स च नित्यः ; न तदर्थश्च कारकव्यापारः कृतिरिति समा तच्चर्चा (ना चर्चा) ॥ न, समवायस्यास्माभिरनभ्युपगमात् । तदेतत् अस्मच्छब्दान्वादेशेन सूचितम् । का तर्ह्युत्पत्तिः ? कृतिरेव ॥ अन्यधर्मः कथमन्यस्योत्पत्तिरिति चेत् ; तादर्थ्येन तद्धर्मतोपचारात् । यदा हि तन्त्वादयो व्याप्रियन्ते, तदा पट उत्पद्यत इति व्यवहरन्ति । आद्यक्षणावच्छिन्नपटत्वावस्थैव वा पटोत्पत्तिरुच्यते । "सैव तदवस्थस्योत्पत्तिः" इति भाष्यमपि तदभिप्रायमेव(येणैव) स्यात् । अत एव हि सहप्रयोगोपपत्तिः । न चेदृश्या

---

ਉਜ਼ਕਾ– 'व्यक्तानवस्थाम्' इत्यत्र मूले व्यक्तशब्दो भावप्रधानः, व्यक्तत्वं व्यक्तिरित्यर्थः । कारकव्यापारः कृतिरिति । कारकव्यापाररूपा कृतिरित्यर्थः। अन्वादेशः उक्तस्य पुनरुक्तौ "बहुवचनस्य वस्नसौ" इति सूत्रेणास्मच्छब्दस्यान्वादेशे 'नस्' इत्ययमादेशो विहितः । एवं च 'नैवं कृतौ नः' इत्यनेन 'अस्माकं नैवम्, अस्माकं नैवम्' इति द्विरुक्तिः फलिता । सा च उक्तप्रतिबन्दिद्वयनिरासार्थेत्यभि-

ਕੀ— कार्यविषयकृतिव्यक्तिविकल्पातिरिक्तो न भवति कृतिविषयकृतिव्यक्तिविकल्प इति नानवस्थेति वाच्यम्—कार्यस्य कृतेश्च सहप्रयोगादिना भेदस्य स्पष्टत्वात् । न च त्वया धर्मधर्म्यैक्यमिष्यते । अत आवयोस्तुल्यो दोष इति । अपसिद्धान्तेति । कृतेर्व्यापाररूपतया द्रव्यत्वाभावेन प्रागसत्त्वात् व्यक्त्यनिष्टेरिति भावः ।

कृतिर्हीत्यादि । अयमर्थः—फलं व्यापारश्च धात्वर्थः । तत्र कृतिपदेन व्यापारग्रहणे स व्यापारस्तत्पूर्वभाविव्यापारान्तरजन्य एव । न चानवस्थेयं दोषाय ; सिद्धानवस्थात्वात् । कार्यं सर्वं पूर्वपूर्वसामग्रीजन्यमित्यस्य पितापुत्रबीजाङ्कुरादिवत् सिद्धत्वात् । कार्यस्य व्यक्तिः, व्यक्तेस्तस्याः व्यक्तिः, पुनस्तस्या इत्यत्र तु व्यक्तिपरम्परायाः लोकसिद्धत्वाभावात् साऽनवस्था दोषाय । यदि तु फलमेव धात्वर्थः कृतिरिह, तर्हि तत् फलमुत्पत्तिरेवेति, उत्पत्तिरुत्पद्यते व्यज्यते वेति विकल्पः कृतो भवति । तत्र उत्पत्तिरुत्पद्यत इत्येवोत्तरम् । न च तथाऽप्यनवस्था । उत्पत्तिनिष्ठोत्पत्त्यन्तरासंमतेः । सत्ता सतीतिवत् तत्प्रयोगस्यौपचारिकत्वात् । घटस्योत्पत्तिर्नाम अस्मन्मते घटत्वावस्थैव । तदुत्पत्तिश्च नावस्थान्तरम्, तार्किकसंमतोत्पत्त्युत्पत्तिवत् अनतिरेकात् । व्यक्तमिदमारम्भणाधिकरणभाष्य इति । अस्मच्छब्दान्वादेशेन—न इति पदेन । अन्यधर्म इति । कारकव्यापारो हि कृतिरिति शंका । तदेति । व्यापारजन्यः संयोग एव ह्यवस्था पटत्वरूपेति भावः । कृतौ उत्पत्तिशब्दप्रयोगापेक्षया उत्पत्तौ कृतिशब्दप्रयोगो युक्त इति उत्पत्तिशब्दस्यार्थान्तरमाह आद्येति । पटस्थितिकाले पट उत्पद्यत इति वर्तमानकालिकप्रयोगाभावात् अवस्थायाम् आद्यक्षणावच्छिन्नत्वविशेषणम् । अस्तु तर्हि आद्यक्षणावच्छेदमात्रमुत्पत्तिरिति चेन्न—पट उत्पद्यत इत्येव लोके व्यवहारात्, तन्तुः पटो जायत इति तन्त्वभिन्नद्रव्ये पटे आद्यक्षणावच्छेदस्य तदा दुर्वचत्वात् । अवस्थायामेव तत्स-

उत्पत्तेरीदृशमुत्पत्त्यन्तरमस्ति । तथाऽपि प्रागसिद्धस्वरूपलाभादुत्पत्तिशब्द उपचारात् भवतु वा, मा वा। तदा कार्योत्पत्त्यर्थं कारकव्यापार इति सिध्यति । स एव यदोत्पत्तिर्विवक्षिता, तदा कार्यार्थं कारक व्यापार इत्येव वक्तव्यम् । अन्यथा तूपचार ।

**श्लो—** क्रियैव कारकाणां स्यात् प्रतिसम्बन्धिनीत्यस । प्राक्सत्त्वासत्त्वसक्षोभस्तस्यामपि हि दुस्तर ॥
**क्रियावद्धि** पटादेश्च कारकैस्तादृशोऽन्वय । प्रधाने भागनिष्पत्त्या भागैरैक्याच्च भागिन ॥
प्राक्सत्त्व सर्वभावाना मिथश्चैक्यमिति त्वसत् । भिन्नांशपूर्वसत्त्वे हि नाभिन्नात् भेदसभव ॥
भिन्नाभिन्नात् यदि(न्नाद्यभि) व्यक्तिर्भेदाना प्राक्तनी भवेत् ।

---

*ध्रु—* ममापि कारकाणा क्रियेव कार्यस्य व्यक्तिरित्यत आह क्रियैवेति । प्रतिसम्बन्धिनी=कार्य प्रतिसम्बन्धिनी कार्यार्थेत्यर्थ । पटादे क्रियावद्धि कारकैरन्वयोऽभिव्यक्तिरिति पक्षोऽपि पूर्वतुल्य इत्याह क्रियावद्धिरिति ॥ २४ ॥

*ஒளஎ–* प्राय । कार्यार्थं कार्यस्य वैशिष्ट्यार्थं इत्यर्थ । भागनिष्पत्त्या–भागत्वेन कार्यस्य निष्पत्त्या इत्यर्थ । भिन्नांशेति । भिन्नांशस्य कार्यस्य कारणस्वरूपत्वेन पूर्वं सत्त्वे कार्याभिन्नार्थकारणात् भेद-रूपकार्योत्पत्तिर्नेत्यर्थ । हिशब्दोऽस्यार्थस्य प्रसिद्धि द्योतयति । भिन्नाभिन्नादिति । कार्यण भेदाभेद रूपतादात्म्यसम्बन्धवत कारणात् भेदाना व्यक्तिर्भवतीति यदि—तर्हि सा सर्वकार्यनित्यत्ववादिन प्राक्तनी भवेत् अन्यथाऽपसिद्धान्त इति भाव । एकस्य कारणस्य प्रागसन् कार्यरूपभेदो भवति ।

*वी—* स्यात् असतस्योत्पद्यत इति व्यवहारनिर्वाहेऽपि पट उत्पद्यत इत्येतदनिर्वाहात् । अत पटनिष्ठा आद्यक्षणावच्छिन्नास्यैवोत्पत्ति । उपचाराद् भवतु मा वेति । तन्तु पटो जायत इत्यत्र जन्यर्थ उत्पत्ति तन्तावन्वेति चेत्—पटावस्थाहेतुकारकव्यापारवान् तन्तुरित्यर्थ इति कृताद्युत्पत्तिशब्दोप-चार । उत्पत्ति पटेऽन्वेति चेत्—तन्तुकृतिसाध्योत्पत्तिमान् पट इत्यर्थ इति नात्रोपचार इति।

पुनरपि पटस्य प्राक्सत्त्वमिच्छत कारकाणामन्यथासाफल्यवादिन उक्ति खण्डयति क्रियैवेति। न पटार्थं कारकग्रहणम्, किंतु क्रियार्थम् । तन्तुवाय तन्तुतुरीवेमादिना पट करोतीत्यत्र न पटस्य निष्पाद्यता, देवदत्त पद्भ्या ग्राम गच्छतीत्यत्र ग्रामस्येव प्रागेव सिद्धत्वात् । कारकाणा क्रियाया मन्वयश्च सर्वेष्ट । अत इह कारकसाध्यत्व क्रियाया एवेति–एतदसत् । सा क्रिया प्राक्सती, न वा । आद्ये, तस्या साध्यत्व दुर्वचम् । अन्त्ये असत्कार्यवादस्वीकारापत्तिरिति । अत कारकै पटादौ साध्ये तत्क्रिया (मध्ये व्यापारीभवन्ति) द्वारीभवन्तीति क्रियावत्सर्वकारकान्वय पटादावेव वक्तव्य । स च तादृश क्रियाया त्वदुक्ततुल्य साध्यसाधनभावरूप एवेत्यर्थ । अन्यत् तदुक्तमनूद्य निरस्यति प्रधान इत्यादिना । प्रधाने धर्मिणि तन्तुराश्यादौ कस्यचित् भागस्य पटरूपेण निष्पत्तिरेव । अथापि भागान्तराणा सत्त्वात् भागिन प्रधानस्य तेषा चैकत्वात् पटनिष्पादकभागैक्यस्यापि प्रधाने सत्त्वात् मिथस्तन्तुपटयोरैक्यात् प्रधानादिसत्त्वमात्रेण पटस्य प्राक्सत्त्वोक्तिरिति—इदमसत् । तन्तुव्यूहात् भिन्नांश पूर्वमभिन्नतयैव हि स्थित । अभिन्ने च भेद कथम्; विरोधात् ॥ पूर्वं स भिन्नाभिन्न इति चेत्, तर्हि भेदस्य भिन्नाभिन्नात् नोत्पत्ति, किन्तु अभिव्यक्ति । तत्र चाभिव्यक्ति न प्राक्तनी चेत्—असत्कार्यवाद, प्राक्तनी चेत् कारक क्रियावैयर्थ्यमिति । भिन्नाभिन्नाद्यदि व्यक्तिरिति स्वरसपाठे उक्तोऽर्थ । भिन्नाभिन्नाद्यभिव्यक्तिरिति पाठे आदिपदेन भेदमात्रभिन्नग्रहणम् । पूर्वं स न भिन्नाभिन्न, किं तु भेदमात्रभिन्न भिन्नस्याभिव्यक्तिरेव पश्चादित्यत्रापि उक्तदोष एवेत्यर्थ । अथाभिव्यक्तिपक्षत्यागेन भेदस्य प्रागसत्त्वस्वीकारे दोषं

एकस्य प्रागसन् भेदो यदि, स्यादसदिष्टवत् ॥ प्राक्सतोऽस्याप्यवस्था चेत् तथा(दा?)ऽप्यसदभीष्टवत् ॥

इति सांख्यमतकार्यवादभङ्गः ॥

(अथ वैनाशिकमतभंगः)

वस्तुस्थैर्यं विरुद्धानुपहितविषया साधयेत् प्रत्यभिज्ञा
नैकस्मिन् शक्त्यशक्ती कृतितदितरयोः साह्यभेदेन सिद्धेः ।
एकस्मिन् कालभेदात् भवति च सहकार्यन्वयानन्वयादिः
नो चेत्, नो देशभेदादपि सुपरिहरा, तेन नैकं क्वचित् स्यात् ॥ २५ ॥

अर्धवैनाशिकनिरासाय सत्कार्यवादे साधिते तुल्यन्यायतया सर्वनित्यत्ववादेन समुत्थितः **सांख्यो** निरस्तः । अथ पक्षत्रयप्रतिपक्षं **वैनाशिकमतं** निरस्यति **वस्तुस्थैर्यमिति** ॥ वस्तुशब्देन सत्त्वानुमानसूचनम् । यथाऽऽहुः-"*यत् सत् तत् क्षणिकं यथा जलधरः सन्तश्च भावाः*" इति । यत् अक्षणिकं तत् अवस्तु यथा खसूनम् । अक्षणिकत्वे चामीषां तद्वदसत्त्वप्रसङ्ग इति भावः । **विरुद्धानुपहितविषयेति**—

---

பூ— वस्तुस्थैर्यमिति । विरुद्धधर्मासंसृष्टविषयत्वादिति । दीपैक्यधीस्त्वन्या.........कावयव-

டிப்பணி—प्राक्सतः कारणस्य अवस्थानभेदो भवतीति मतद्वयं च स्वसम्मतमित्याह—एकस्येति ॥२४॥

வீ— व्यक्तमाह एकस्येति । पूर्वमेकतां गतस्य पश्चात् भेदो भवतीति चेत्—कारणावस्थायामेकं कार्यावस्थायां बहु भवतीत्यसदिष्टेन तुल्यं वर्तत इदम् । अथ भेदशब्दं विहाय भेदस्यावस्थामूलकत्वात् अवस्थाशब्द एव प्रयुज्यते चेत्—द्रव्यमस्ति, अवस्था तु प्राङ् नास्तीति असदत्यन्तेष्टादविशेष इत्यर्थः । अतोऽवस्थाया अपि प्राक्सत्त्वरूपसत्कार्यवादः सांख्येष्टो निरस्त इति भावः ॥२४॥

अर्धवैनाशिकस्तार्किकः, कार्यद्रव्यादिमात्रनाशस्वीकारात् । सर्वनित्यत्ववादी सांख्यः । सर्वस्य विनाशवादी माध्यमिकातिरिक्तबौद्धः । वेदान्तिनस्तु सर्वद्रव्याविनाशवादिनः कार्यभूतद्रव्यान्तरानंगीकारिणः । पक्षत्रयं सांख्यवेदान्तितार्किकपक्षाः ।

अयं श्लोकार्थः—वस्तूनां क्षणिकत्वमिति बौद्धपक्षो न घटते, प्रत्यभिज्ञाविरोधात् । प्रत्यभिज्ञा हि सोयं घट इत्येवमादिः वस्तुनोऽनेकक्षणस्थायित्वरूपं स्थैर्यं साधयति । यदि, सः इति अयमिति च *गृह्यमाणस्य मिथो विरुद्धधर्मविशिष्टता स्यात्, तदा प्रत्यभिज्ञा स्यादप्रमाणम्*। विरुद्धधर्मानुपहित एवात्र विषय इति । विरुद्धधर्मवत्ता, सेयं ज्वाला, सोऽयं प्रवाह इत्यादौ । ननु कुसूलस्थं बीजमङ्कुरं न करोतीति तस्याशक्तिः सिद्धा ; क्षेत्रस्थबीजे तु तत्करत्वात् शक्तिः । अतो विरुद्धधर्मोपहितत्वमेवेति चेत्-अत्र शक्त्यशक्ती न स्तः । किं तु शक्तिरेव । तर्हि कुतो न करोतीति चेत्—कृतिः करणं तदितरत् अकरणमितीदं द्वयं साह्य=सहकारिसाहित्ये भेदात् साकल्यवैकल्यरूपात् सिध्येत् । तावता नाशक्तिः ॥ सहकार्यन्वयतदभावरूपौ करणाकरणरूपौ च विरुद्धौ धर्मौ कथमेकत्रेति चेत्—कालभेदात् । एककाल एव हि विरोधः । यथा केषाञ्चिदेकत्र देश एव विरोधः । घटादेर्हि सत्त्वासत्त्वे द्वे अपि स्तो देशभेदात् । नो चेत्—अन्यथा, देशभेदमादायापि अन्वयानन्वयरूपविरोधो न सुपरिहरः स्यात् । तथा च तत्तत्क्षणरूपपदार्थस्य प्रत्येकमेकत्वमपि न भवेत् । तस्यैवैतद्देशवर्तित्वदेशान्तरावर्तित्वयोः एतद्देशाकुर्वत्त्वदेशान्तराकुर्वत्त्वादीनामपि दुर्घटता स्यादिति ।

यत् सदिति । भावाः क्षणिकाः सत्त्वात् मेघादिवदिति प्रयोगः । अत्रान्वयव्यतिरेकिव्यतिरेकव्याप्तिरपि गगनकुसुमादिदृष्टान्तेन । सत्त्वमर्थक्रियाकारित्वम् ; किञ्चित्कार्यकारित्वमिति यावत् । न चाप्रयोजकत्वम् । यदि कार्यकारित्वे अक्षणिकं स्यात् । तदा प्रतिक्षणमेव कार्यमुत्पादयेत् ।

विरुद्धधर्मासंसृष्टविषयेत्यर्थः । दीप-स्रोतःप्रभृतिषु अनन्यथासिद्धभेदकबलात् बाधः । विप्रतिपन्नैकत्वधीः प्रमा विरुद्धधर्मासंसृष्टविषयत्वात् संमतैकत्वधीवत् । न हि स्वलक्षणानां प्रत्येकमेकत्वं नास्ति ; तथा सति एकानेकसर्वविकल्पलोपेन माध्यमिकविजयप्रसङ्गात् । रूपादिधीवदित्येव वोदाहर्तव्यम् । तदियं प्रमितिः सती प्रत्यभिज्ञा पूर्वापरकालवर्तिविषयं साधयति । दीप-नदीप्रवाह-कृत्तपुनःप्ररूढकेशादिषु तु संप्रतिपन्नसामग्रीभेदादिबाधकबलात् तस्या न साधकत्वम् ॥

ननु स इति धीः स्मृतिः, अयमित्यनुभवः, निरन्तरोत्पत्तेः ज्वालाक्षणेष्विव तयोर्भेदाग्रह इति । तन्न ; समानाधिकरणबोधात् । यद्यपि सोऽयमिति व्यवहारे तादृशधीभेदेन वैयधिकरण्यशङ्का ; तथाऽपि तमिमं पश्यामीत्यादिषु उभयाकारविशिष्टस्यैकस्य दृशिकर्मत्वदृष्टेर्बुद्धचैक्यं दुरपह्नवम् । अत एव ग्रहणस्मरणात्मकमिदं ज्ञानमिति वदन्तः प्रत्युक्ताः । ननु कथमिन्द्रियासंबद्धः तदंश इदानीमिन्द्रियेण गृह्येत ॥ मनोसंबद्धोऽनुभूतविषयः कथं मनसा ॥ तदनुभय(तदुभय)जन्यसंस्कारसहकारादिति चेत्, समानमत्रापि ॥ दृष्टत्वात् तथैव तत्रेति चेत्, अत्रापि तथैव ॥ वेद्याकारैकदेशादुत्पन्नस्य प्रत्यक्षत्वे शुक्तिरजतधीरपि मानं स्यादिति चेन्न ; आरोपानारोपाभ्यां विशेषात् ।

---

पुरु—जन्यत्वरूपविरुद्धधर्मसंस्पृष्टविषयेति भावः। संमतैकत्वधीवत् इति। स्वलक्षणैकत्वधीवदित्यर्थः। दृष्टान्तासिद्धिमाशङ्क्य परिहरति नहीति । बौद्धैरेकत्वधर्मानङ्गीकारादाह रूपादीति । सामग्रीभेदादीति । भिन्नसामग्रीजन्यत्वरूपविरुद्धधर्मस्पृष्टविषयत्वं बाधकमिति भावः वेद्याकारैकदेशादिति । तत्ताया अतीततया अजनकत्वादिति भावः । प्रच्युततदाकारस्य—प्रच्युततत्ताकारस्य ॥ २५ ॥
लक्ष्मी— वेद्याकारैकदेशादिति । यस्मिन् ज्ञाने यद् यद् वेद्यं तत्सर्वजन्यत्वं तस्मिन् प्रत्यक्षप्रमाणनियामकं वक्तव्यम् । अन्यथा वेद्यैकदेशमात्रजन्यस्यापि प्रत्यक्षप्रमाणत्वे शुक्तिरजतधीरपि मानं स्यात् । न च सा तथा । तस्मात् प्रत्यभिज्ञायास्तत्तांशाजन्यत्वान्न प्रत्यक्षप्रमाणत्वमिति भावः । अविसंवा-
दी— तथा च बीजात् सर्वदाऽङ्कुरोत्पत्त्यापत्तिः । न च क्षेत्र एव तस्याङ्कुरोत्पादनशक्तिः, नान्यत्रेति वाच्यम् ; शक्त्यशक्त्यादेरेकत्र समावेशायोगात् । तस्मात् सर्वं क्षणिकम् । तत्र क्षेत्रस्थबीजमेवांकुरकरम्, अन्यत्तु तद्बीजादन्यदेवेति न तस्य हेतुत्वम् । न तावता पूर्वबीजानामसत्त्वम् । पूर्वपूर्वक्षणबीजानामुत्तरोत्तरक्षणरूपकार्यकारितया सत्त्वाक्षतेरिति । विप्रतिपन्ना—विवादविषयभूता सोऽयं घट इत्यादिः । संमतैकत्वधीः—तत्तद्व्यक्तौ एकत्वधीः । स्वलक्षणानां = बौद्धैस्तथा व्यवहृतप्रमाणानां तद्व्यक्तीनाम । एकानेकेति । इदं स्वलक्षणमेकमनेकं वा, आद्ये कथं नवैतद्देशसत्त्वदेशान्तरासत्त्वरूपधर्मद्वयम् । अन्त्ये एकत्वानेकत्वयोर्विरोधः । अतः शून्यमेव तत्त्वं स्यादिति । एकत्वधीरेव दृष्टान्त इति निर्बन्धे मानाभावादाह रूपादिधीति । नीलपीतादिप्रत्येकधीत्यर्थः । स्मृतिरिति । वस्तुनोर्भिन्नत्वात् अभेदग्रहायोगात् पृथग्ग्रहणमेव वाच्यम् । तत्र संनिहितत्वासंनिहितत्वरूपवैलक्षण्यात् एकप्रत्यक्षविषयत्वायोगाच्च ज्ञानद्वयम् । तत्रैकं संस्काराधीनत्वात् स्मृतिरिति । समानाधिकरणबोध त्—अभेदग्रहात् तद्बाधे मानाभावात् । वैयधिकरण्यशङ्केति । गौरश्वः पुरुषो हस्तीत्यादाविवेति भावः । अत्र एवेति । तच्छब्दार्थे दृशिकर्मत्वप्रतीत्येत्यर्थः । ग्रहणस्मरणेति । यथा पर्वतो वह्निमानित्यस्य ज्ञानस्य पर्वतांशे प्रत्यक्षत्वमन्यांशेऽनुमितित्वञ्चेति भावः । पृच्छति नन्विति । प्रतिपृच्छति मनो संबद्ध इति । अनुभूतविषयः—बाह्यपदार्थः । प्रतिप्रश्नं परिहरति तदिति । तदुभयेति पाठे पूर्वानुभवमनउभयेत्यर्थः । अत्रापि—ग्रहणस्मरणात्मकस्थलेऽपीत्यर्थः । शुक्तिरजतस्थलेऽपि न ज्ञानभेदः अन्यथाख्यातिस्वीकारा-

किं च संस्कारोपनीतरजताद्यारोपे च इदं रजतमिति चाक्षुषबुद्धिरेका । न हि तत्र रजतात् बुद्ध्युत्पत्तिः, तस्यासन्निहितत्वात् ; अर्थजत्वेन त्वदुक्ताविसंवादित्वप्रसङ्गाच्च ॥ इन्द्रियजन्यतया प्रत्यक्षत्ववत् संस्कारजन्यतया स्मृतित्वमपि दुर्निवारमिति चेन्न, तमेतमनुभवामि, पश्यामीत्यादिप्रत्यक्षविरोधादेव । अत एव संस्कारप्राधान्यमुत्प्रेक्ष्य केवलस्मृतित्वशङ्काऽपि निरस्ता । भवतु वा स्मृतित्वमपि ; तथाऽपि स्मृत्यनुभवात्मकमेकं ज्ञानं स्वविषयस्य स्थिरत्वं साधयत्येव ।

कथमप्रमा स्मृतिरर्थं व्यवस्थापयेदिति चेत् ; किमत्राप्रमात्वं ज्ञानव्यतिरिक्तत्वं वा, अनुभवव्यतिरिक्तत्वं वा, अयथार्थत्वं वा ? नाद्यः, असिद्धेः । न द्वितीयः, त्रितयप्रकाशवादिभिः स्मृतेरप्यात्मस्वात्मविषयेऽनुभवत्वस्वीकारात्, त्वया च स्वसंवेदनांशेऽपि ॥ विषयांशेऽनुभवव्यतिरिक्तत्वे स्मृतेरिति चेत्, तथाभूताऽपि सकारणानुभवात् स्वविषयमबाधितं व्यवस्थापयेत् । अस्वातन्त्र्यादिविचारस्त्वत्र प्रकृतानुपयुक्तः । न तृतीयः, यथार्थस्मृतौ विरोधाभावात् ॥ सर्वाऽपि स्मृतिरयथार्था, अतीतस्य वर्तमानतया अवभासादिति चेन्न ; अतीततयाऽपि प्रायशः स्मृतिभिरर्थोल्लेखात् । प्रच्युततदाकारस्य तद्वत्तया भासनादयाथार्थ्यमिति चेन्न ; स्मृतिप्रमोषे तदभावात् । अतीतादिविषयानुमानानामपि तत्प्रसङ्गाच्च । तर्हि पाकरक्तेऽपि श्यामत्वधीरयथार्था स्यादिति च मन्दम् ; प्राचीनश्यामताबुद्धौ विरोधाभावात् ।

एतेन स्मृतिर्न बाह्यविषया नष्टेऽप्यर्थे स्मृतिदर्शनादिति वदन्तोऽपि निरस्ताः ।

एवं प्रत्यभिज्ञा स्थिरविषयेति सिद्धे, सोऽहमिति धीश्चात्मनः स्थिरत्वमुल्लेढि । तदहं स्मरामीति स्मृतिमात्रेण चैतत् सिद्धम् ।

---

आनन्द— दित्वप्रसङ्गादिति । अर्थक्रियाकारित्वप्रसङ्गादित्यर्थः । प्रच्युततदाकारस्य । प्रच्युतातीतत्वाकारस्येत्यर्थः । स्मृतिप्रमोष इति । वर्तमानत्वानवगाहिवस्तुमात्रस्मृतावित्यर्थः । कुर्वदकुर्वत्क्षणयोरिति ।
वी— दित्याशयेनाह किञ्च संस्कारेति । संस्कारोपनीतत्वं स्थापयति नहितत्रेति । अत एव–प्रत्यक्षानुभवविरोधादेव । ग्रहणस्मरणात्मकमिति पूर्वोक्तपक्षेऽपि न प्रकृतविवक्षितांशहानिः स्मृतिविषयैक्यस्य प्रत्यक्षविषये प्रतीतेः । स्मृतित्वस्य तत्तारूपधर्मांश एव स्थितेरित्याशयेनाह भवतु वेति । त्रितयप्रकाशवादिभिरिति । एकैकमपि ज्ञानं विषयं स्वस्वरूपं स्वाश्रयमात्मानञ्च प्रकाशयति । तत्र ज्ञानवस्तुविषये यथायथं प्रत्यक्षानुमितिशाब्दबोधस्मरणादिरूपत्वेऽपि स्वस्वाश्रयोभयविषये एकरूपानुभवरूपतैवेति प्राभाकराः । आत्मस्वात्मेति । ज्ञानतदाश्रयेत्यर्थः । अस्वातन्त्र्येति । स्मृतेरनुभवोपजीवित्वात् अनुभवयाथार्थ्यं स्वयाथार्थ्यम्, तदभावे तदभाव इतीदमस्वातन्त्र्यमास्ताम्; तावता प्रवृत्तिसाफल्यादिविषये न किञ्चिद्वैषम्यमिति भावः । वर्तमानतयेति । देशान्तरे विचित्रं वस्तुं वीक्ष्य गृहमागतः तस्य नाशे जातेऽप्यजानानः, तत्र तदस्तीति व्यवहरति, तदेति भावः । नेत्यादि । तत्र तत् तदा आसीदिति यथावद् ग्रहणे कथमप्रमेति भावः । स्मृतिप्रमोषे–तद्देशतत्कालाग्रहेण वस्तुमात्रस्मृतौ । यथा, अस्य शब्दस्यायमर्थ इति वाच्यवाचकानुभवे उत्पादिते शब्दश्रवणे तदनुभवहेतुपुरुषकालदेशवाक्यादि विहाय अर्थमात्रस्मरणम् ॥ स्मृतिर्न बाह्यविषयेति । इदं जिज्ञासाधिकरणभाष्ये द्रष्टव्यम् । सोऽहमिति धीश्चेति । अत्र सोऽयं घट इत्यादिप्रागुक्तप्रत्यभिज्ञाऽपि प्रमाणम् । तद्देशतत्कालवर्तित्वस्मरणं हि तदनुभवपूर्वकम्; तदनुभवप्रकृतप्रत्यक्षोभयाधारैकात्माभावे कथमेतदुत्पत्तिरिति ततोऽप्यात्मस्थैर्यमनुमीयते ; सोऽहमिति ज्ञाने तु आत्मस्थैर्यं साक्षात् विषयः; तदाह उल्लेढीति ।

ननु विरुद्धानुपहितविषयेत्यसिद्धम्, कुर्वदकुर्वत्क्षणयोः शक्त्यशक्तिभ्यां वैजात्यादित्यत्राह-- **नैकस्मिन्निति**। कुर्वतोऽकुर्वतश्चैकत्वेऽङ्गीक्रियमाणेऽपि शक्त्यशक्तिरूपविरुद्धधर्माध्यासो न स्यादित्यर्थः॥ शक्तश्चेत्, कुर्यादेव; न करोति चेदं कुसूलनिहितं बीजमिति प्रसङ्गतद्विपर्ययाभ्यां शक्त्यशक्तिसिद्धिरिति चेन्न; शक्तस्यापि करणाकरणयोः सहकारिसन्निध्यसन्निधिप्रयुक्तत्वात्। तदाह **कृतितदितरयोरिति**। **साह्यं**-सहभावः। कदाचित् पुष्कलैः सहकारिभिः साह्यम्, कदाचिद्विकलैरिति प्रयोजकभेदेनेत्यर्थः॥ अकुर्वत्स्वभावस्य कथं सहकारिभिरपि कुर्वत्ता, कुर्वत्स्वभावस्य वा कथं तद्विरहात् तदभाव इति चेन्न--सहकारिसन्निधौ कुर्वत्तया तदभावे चाकुर्वत्तया स्वभावव्यवस्थासिद्धेः॥ परसापेक्षः कथं स्वभाव इति चेन्न; स्वहेतुसापेक्षत्ववत् उपपत्तेः। अधिपतिसहकार्यालम्बनसमनन्तरप्रत्ययाश्चत्वारो विज्ञानोत्पत्तौ कारणमिति युष्मदुक्तिविरोधात्।

अर्थजत्वं च प्रामाण्यं ब्रूषे॥ उपच्छन्दनार्थमुत्तानवाक्यमिति चेन्न; अतिप्रसक्त्या सिद्धान्तस्थितेर्दुर्निरूपत्वप्रसङ्गात्॥ शक्तं चेत्, अन्त्यतन्तुसंयोगादिवत् अवश्यसिद्धसहकारिचक्रं स्वकार्यं कुर्यादिति चेन्न, स्वकारणादापततां सहकारिणामेतदधीनत्वाभावात्॥ पराधीनत्वेऽप्यवर्जनीयं तत्सन्निधानमिति चेन्न; अन्यथाऽपि दृष्टेः।

अस्तु सहकारिसंबन्धासंबन्धादिकमेव विरुद्धत्वात् भेदकमित्यत्राह **एकस्मिन्निति**। **आदि**-शब्देन प्रस्तुतकरणाकरणादिसंग्रहः॥ कालभेदाद्विरुद्धस्वीकारे किं कुत्र नासीत्, न स्याद्वेति सर्वत्राव्यवस्थितिरिति चेन्न; दर्शनादर्शननियमाभ्यामेव संभवासंभवस्थितेः। एवमनभ्युपगममनुवदन् प्रतिबन्दिमाह **नो चेदिति**। अत्रास्ति करोति च, अन्यत्र नास्ति न करोति चेत्यादिनिर्देशभेदेन सत्त्वासत्त्वादिसमुच्चयः सुदुष्परिहरः स्यात्। अपिर्विषयभेदाद्यनुक्तसमुच्चये। विषयादिभेदादपि हि विरोधः परिह्रियते। क्वचिच्छक्तं क्वचिदशक्तम्, केनचिज्जन्यते व्यज्यते बाध्यते वा, नान्येन; कस्यचित् प्रतियोगी व्याप्यः व्यापकः पूर्वः परो वा, नान्यस्येत्यादि। एवं विषयभेदादिभिरपि विरोधस्ते दुष्परिहरः। ततः किमित्यत्राह **तेनेति**। विरुद्धानां देशकालाद्यसमाहितविरोधत्वेन स्वलक्षणस्यापि विरुद्धशतक्षुण्णतया नानात्वे तत्क्षोदानां च तथातथा क्षोदे किंचिदप्येकं न सिध्येत्, तदभावे च कुतोऽनेकमिति भाष्य-

---

[illegible]-- कुर्वदकुर्वद्वस्तुनोरित्यर्थः। यथा त्वन्मते कुर्वदकुर्वतोः नानाशक्त्यशक्तिरूपविरुद्धधर्मयोरेकत्रावस्थानं नास्ति--तथा तयोरेकत्वेऽपि शक्त्यशक्त्योः सहावस्थानं न स्यात्; शक्तेरेव विद्यमानत्वादिति। विरुद्धशतक्षुण्णतयेति। क्वचिच्छक्तत्वं क्वचिदशक्तत्वमित्याद्यनेकविरुद्धधर्मसमावेशक्षुण्णतयेत्यर्थः। तत्क्षोदानां चेति। नानात्वेऽपि स्वाश्रयस्येतरव्यावृत्तिबुद्धिजननशक्तत्वात्......

[illegible]-- स्वहेतुसापेक्षत्ववदिति 'स्वस्य स्वरूपलाभे यथा हेत्वपेक्षा, तथा कुर्वत्त्वस्य स्वरूपलाभे सहकार्यपेक्षेति। अधिपतिः--इन्द्रियम्; सहकारी--आलोकः; आलम्बनं--विषयः; समनन्तरप्रत्ययः पूर्वक्षणस्थितं ज्ञानमिति चतुर्णां चाक्षुषप्रत्यक्षहेतुत्वमिति। उपच्छन्दनार्थम्--स्वोक्तेः अभिमतिसंपादनार्थम्। उत्तानवाक्यम्--अवगाहविमर्दो अर्थलाभाक्षमम् आपाततप्रियं वाक्यम्। अर्थजत्वं हीति। अव्यभिचारिज्ञानं हि प्रमा। अव्यभिचारित्वं प्रमाणस्य, ज्ञानस्य प्रमेयाविनाभावः प्रमेयजन्यत्वमेव। प्रत्यक्षे विषयः कारणं हीति तदाशयः। अतिप्रसक्त्येति। सर्वस्यापि बुद्धवाक्यस्यैवं प्रवृत्तत्वसंभाव-

मिकमतापातः॥ सैव तर्हि सुगतमतकाष्ठेनि तत्र निष्ठाम इति चेत्—तन्निष्ठेन स्वम • सम्मतबाधकानुपन्यासे विवादाभावः । तदुपन्यासे तु तत्रतत्र तद्बाधाबाधविकल्पदौस्थ्यं दुष्परिहरमिति भावः ॥ २५ ॥

तत्त्वेदंत्वे हि कालान्तरघटनमये नैककाले घटेतां
कालद्वैतेऽनवस्थाप्यत इह न मितिः प्रत्यभिज्ञेति चेन्न ।
स्वस्य स्वाभावकाले विहतिनियमनात् स्वेन चात्यैककाल्यात्
काले कालानपेक्षे कथमपि सुवचौ नानवस्थाविरोधौ ॥ २६ ॥

पुनरपि प्रकारान्तरेण प्रत्यभिज्ञाबाधकं विरुद्धधर्माध्यासं प्रतिबन्दिविशेष(?)मप्याशङ्कते तत्त्वेदंत्वे हीति ॥ अतीतकालसंबन्धस्तत्त्वम्, वर्तमानकालसंबन्ध इदंत्वम् । न ह्यतीतं वर्तत इति संभवति; सर्वेषां नित्यत्वप्रसङ्गात् । वर्तमानं च यद्यतीतम्, कथमसदादिप्रत्यक्षेण गृह्येत ? किं च कालद्वयान्वयरूपयोः तत्त्वेदन्त्वयोरेकवस्तुसंबन्ध एकस्मिन् काले, भिन्ने वा । पूर्वत्र विरोधः; तस्मिन्, एतस्मिन्, तदुभयपूर्वापरे वा क्वचिदपि काले कालान्तरसमेदायोगात् । अन्यथा त्रैकाल्ययौगपद्यप्रसङ्गात् । एतेन

---

*ठिप्पणी*— न्यत्राशक्तत्वं एक-त्वबुद्धिबाधकत्वमन्यथा बाधकत्वं स्वस्यानित्यतया अविभुतया च देशकालापेक्षया पूर्वत्वं पश्चात्त्वं स्वप्रागभावध्वंसप्रतियोगित्वं अन्यं प्रत्यप्रतियोगित्वं स्वाश्रयं प्रति धर्मत्वं अन्यं प्रत्यधर्मत्वं केनचित् ज्ञातत्वं अन्येनाज्ञातत्वमित्यादिविरुद्धधर्माध्यासात् नानात्वं वाच्यम् । तत्राप्येवंविधक्षोदसम्भवात् नानात्वम्, एवं तत्रापीति किञ्चिदप्येकं न सिद्ध्येदिति भावः ॥ २५ ॥

*श्री*— नयेत्यर्थः । तन्निष्ठेनेति । प्रमाणमन्तरा मतस्थापनं हि न भवति । अन्यथा सर्वोऽपि विजयेत । तदुपन्यासे च न सर्वशून्यत्वमिति ॥ २५ ॥

ननु शक्त्यशक्ति–करणाकरण–सहकार्यन्वयानन्वयादिसमावेशायोगपरिहारेण प्रत्यभिज्ञया स्थिरत्वसाधनमयुक्तम्; प्रत्यभिज्ञाविषय तत्तेदन्त्वयोरेवैकत्र समावेशासंभवादिति शंकापरं पूर्वार्धं परमवतारयति पुनरपीति । पूर्वार्धार्थमाह अतीतेत्यादिना चेदित्यन्तेन । अवशिष्टस्य व्याख्यानं भविष्यति अत्रेत्यादिना । प्रतिबन्दिविशेषमित्यत्र प्रतिबन्दिविरहमिति स्यात् । प्रतिबन्दिविशेषस्याप्रदर्शनात् । "न च देशद्वयप्रतिबन्दिः" इति प्रतिबन्ध्यभावस्यैव शंकनात् । एवं श्लोके द्वितीयपादे, 'कालद्वैतेऽनवस्था नत इह न मितिः' इति पाठः स्थितः स्यात् । आदिपदाव्याख्यानात् । अनवस्थां प्रदर्श्य, वृत्तौ, तस्मादिति निगमनारम्भात् । विरोधपदं तु 'नैककाले घटेताम्' इत्येतदर्थपरम् । 'अनवस्थाप्यत' इत्येव पाठे तु वक्ष्यमाणरीत्याऽर्थश्चिन्त्यः ।

अयमेतत्पद्यार्थः—सोऽयमिति प्रत्यभिज्ञायां तत्त्वेदन्त्वे हि कालान्तरघटनमये=पूर्वापरात्मकविभिन्नकालसंबन्धित्वरूपे । ते द्वे एकस्मिन् काले वस्तुनि न हि स्याताम् । विभिन्नकालद्वयसंबन्धस्यैककाले विरोधः किल । अथ भिन्नभिन्नकाल एव तद्द्वयं घटतामिति चेत्—उक्तकालद्वयसंबन्धनियामकतत्कालद्वयसंबन्धः कदेत्याकांक्षायां तदन्यकालद्वयान्तरग्रहणे एवं क्रमेणानवस्था । न हि द्वितीयकालद्वयसंबन्धस्य प्रथमकालद्वयसंबन्धो नियामको भवति, अन्योन्याश्रयप्रसंगात् । तथा तत्कालद्वयसंबन्धनिर्वाहकतया एककल्पनेऽपि अनवस्था विरोधश्च । अत एव कालद्वयानन्वयात् प्रत्यभिज्ञा न मितिः=प्रमा न भवतीति पूर्वपक्षः । नैवम् । घटस्य यः कालसंबन्धः कश्चित्, तस्य कालान्तरसंबन्धेन सामान्यतो न विरोधः; किं तु तस्य घटाभावकालसंबन्धेन साकमेव विहतिः=विरोधः इति नियमनात्=व्यवस्थाकरणात् एकत्रैव नैल्यस्थौल्याद्यनेकविशेषणवत् नानाकालसंबन्धा

**विरुद्धानुपहितविषयेति** विशेषणं चासिद्धम् । उत्तरत्र कालद्वयनिर्वाहककालभेदाश्रयणे तयोरपि तथेत्यनवस्थापातः । न चैवं दृष्टमिष्टं वा । न च देशद्वयप्रतिबन्दिः ; अस्माभिस्तदनभ्युपगमात् । तस्मात् कालद्वयविशिष्टे वस्तुनि प्रवृत्ता कृत्स्ना प्रत्यभिज्ञा न प्रमितिः, विरुद्धविषयत्वात् शुक्तिरूप्यधीवत् । प्रत्यभिज्ञात्वादेव वा दीपादिप्रत्यभिज्ञावदिति चेत्,

अत्र न कालद्वयमात्रं वस्तुनि विरुद्धम्, विरुद्धकालान्वयस्तु नास्तीत्यभिप्रायेण प्रतिवक्ति **नेति** ।

श्लो—अतत्तामनिदन्तां च तत्त्वेदन्त्वे निरस्यतः । अन्योन्यप्रतिषेधस्तु न ताभ्यां सेद्धुमर्हति ॥

एकस्य भिन्नकालाभ्यां वैशिष्ट्यं विहतं यदि । तथा स्यात् भिन्नदेशाभ्यां पुञ्जबुद्धिस्ततो न ते ॥

तर्हि कालद्वयविरोधः कुतेत्यत्राह—**स्वस्येति** । **नियमनात्** —यथाप्रमाणं व्यवस्थापनादित्यर्थः । अत एवातीतस्य वर्तमानत्वं वर्तमानस्य वाऽतीतत्वमिह न प्रवर्तनीयम् । ननु तत्त्वेदन्त्वे तावत् विरुद्धे, अन्यथा यौगपद्ये विरोधाभावप्रसङ्गात्, तत एव कालद्वयमप्येकस्य विरुद्धमिति—तत्राह **स्वेनेति** ।

---

ஸ்ரீ— तत्तेदन्ते इति । अस्माभिस्तदनभ्युपगमादिति । क्षणिकतया एकस्य देशान्तरगमनासम्भवादिति भावः । एकस्य भिन्नदेशासम्बन्धप्रसञ्जनं नानिष्टमित्यत आह पुञ्जेति । तस्यानेकदेशव्यापित्वादिति भावः ॥ २६ ॥

டிப்பணீ— उत्तरत्रेति । पूर्वकालैतत्कालघटितयोस्तत्त्वेदन्त्वयोः कालभेदेन एकवस्तुसंबन्ध इति द्वितीयविकल्पे पूर्वापरकालसंबन्धनिर्वाहकतया कालान्तराश्रयणात् अनवस्थेत्यर्थः । अत एव यथाप्रमाणं एकस्मिन् कालद्वयसंबन्धव्यवस्थापनात् । अतीतस्य वर्तमानत्वे वर्तमानस्यातीतत्वे च प्रमाणाभावादिति भावः । न प्रवर्तनीयम्—न प्रसञ्जनीयमित्यर्थः । तत एवेति । तत्त्वेदन्त्वयोर्विरोधादेवेत्यर्थः । नन्वेकस्य पूर्वापरकालसंबन्धरूपयोस्तत्त्वेदन्त्वयोर्विरोधात् कालद्वयमेकस्य विरुद्धमित्यनन्वितमिति चेन्न, तत्त्वेदन्त्वयोर्विरोधात् इत्यनेन वस्तुनः कालद्वयनिरूपिताधेयत्वरूपसंबन्धो विवक्षितः । कालद्वयमेकस्य विरुद्धमित्यनेन कालद्वयस्यैव वस्तुनिरूपिता-

ஷீ— भवितुमर्हन्ति । अत्र तु पूर्वापरक्षणानां घटेन सह एककाल्यमेव । घटाधिकरणकालत्वमेव, नाभावाधिकरणत्वम् । यत्तु कालद्वयसंबन्धोपपादनाय कालान्तरापेक्षायामनवस्था, एककालमात्रकथने विरोधश्चेति, तन्न—कालसंबन्धस्य कालान्तरसापेक्षत्वाभावात् । लोके विशेषणानां संबन्धे कथ्यमाने कदेति कालापेक्षावत् कालसंबन्धे कथ्यमाने कदेत्याकांक्षाया अभावात् । स्वपरनिर्वाहकत्वमप्यत्र सुवचमिति ।

देशद्वयप्रतिबन्दिरिति । परिच्छिन्नमपि वस्तु कदाचित् एकत्र, अन्यदाऽन्यत्र च दृश्यते, अपरिच्छिन्नं तु एकदैव देशद्वये वर्तते, तद्वदिति । अनभ्युपगमात् । क्षणिकत्वात् वस्तूनामेकत्रोपक्षीणस्यान्यत्र संबन्धायोगात् । परमाण्वतिरिक्तवस्त्वभावेनापरिच्छिन्नवस्तुकथनाप्रसक्तेश्च ।

ननु विशेषणानामन्ययोगव्यवच्छेदकत्वात् तत्ता निषेधेदिदन्तामिति शंका परिहरति अतत्तामिति । अत्र अयोगव्यवच्छेद एवेष्ट, नान्ययोगव्यवच्छेद इति भावः । प्रतिबन्दिपरिहारश्च नेत्याह एकस्येति । तथा सति भिन्नभिन्नदेशवैशिष्ट्यमपि विहतं स्यात् । न हि परमाणुदर्शनं लोकेऽस्ति, किंतु पुञ्जदर्शनमेव । पुञ्जश्च संघातो नानेकदेशसंबन्धं विना सुवचः, अतः पुञ्जबुद्धिर्न ते स्यात् । अतीतस्येति । तत्ता नाम अतीतत्वम्, इदन्ता नाम वर्तमानत्वमित्यर्थ एव नेष्ट इति भावः । पूर्वापरेति । घटस्य घटाभावकालसंबन्धो विरुद्धः । घटाभावकालश्च घटोत्पत्तिप्राक्कालः घटनाशकालश्चेति

पूर्वापरकालयोगो हि विरुद्धः । स्वेनोपाधिनाऽवच्छिन्नस्यैकस्य कालस्यावान्तरोपाधिभिर्नानात्वेऽपि तत्तदुपाधीनामेव तत्तदवान्तरकालद्वयान्वयविरोधः । अन्यापेक्षया पूर्वापरकालयोरन्यस्य विरुद्धत्वे, क्षणकालस्याप्यन्यापेक्षया पौर्वापर्यात् तत्कालवर्तित्वमपि वस्तुनो विरुध्येत॥ क्षणकालसंबन्धो वस्तुनः काल्पनिक इति चेत्, ततोऽपि माध्यमिकोत्थानम् ॥ ननु स्वरूपसत्यता क्षणसंबन्धित्वं च साध्यते ; न केवलं क्षणकालमात्रसंबन्धित्वम् । अतस्तुर्यबौद्धात् त्रयाणां विशेष इति ॥ तर्हि सिद्धसाधनम् । अतः क्षणिकपक्षे स्थिरपक्षे वा स्वाभावकाले वृत्तिर्विरोधात् वारणीया ; न तु स्वकालवृत्तिरिति भावः ।

अत्र च विरोधानवस्थयोः शङ्काऽपि नास्तीत्याह—**काल इति** । न ह्ययमपि काल एतस्मिन् काले ; किमुत कालान्तरम् ? तत्कालोऽपि न तस्मिन् काले ; किमुतायम् ? अत एतत्कालतत्कालौ वा *कालान्तरं वाऽनपेक्ष्य एकस्मिन् वस्तुनि कालद्वयं संबध्यत इति स्थिते, कथंचिदप्यनवस्थाविरोधयोर्नाव-*

---

*टिप्पणी*— धारत्वरूपसंबन्धो विवक्षित इत्यर्थभेदसद्भावात् । *ततोऽपीति* । कालसंबन्धस्यैव सत्तात्वात् तदभावे तुच्छतैव स्यादित्यर्थः ।

ननु क्षणमात्रसंबन्धित्वमात्रे साध्ये हि तस्य काल्पनिकत्वात् माध्यमिकमतापत्तिः, किन्तु तन्मतव्यावृत्तं प्रमाणसिद्धत्वरूपवस्तुसत्यत्वं साध्यत इत्यभिप्रायेण शङ्कते *ननु स्वरूपसत्यतेति* । क्षणमात्रसम्बन्धस्य काल्पनिकत्वोक्त्या तस्य मिथ्यात्वाङ्गीकारात् काल्पनिकक्षणसंबन्धस्य स्वरूपसत्यत्वस्य च अस्मन्मतेऽपि सिद्धत्वात् सिद्धसाधनमित्याह *तर्हीति* । न ह्ययमपि कालस्तत्कालोऽपीत्यत्र........ शब्दाभ्यां इदानीं वर्तमानकालः, पूर्वमतीतकाल इति प्रतीतिभ्यां उभयोः कालयोः स्वस्वाधारत्वप्रसक्तिर्द्योत्यते । एवञ्च प्रसक्तं प्रति आधारत्वं नास्ति ; किमुताप्रसक्तं प्रतीति भावः । अत्रेदमाकूतम्— इदानीं वर्तमानकाल इति प्रतीतिः उपाधिभेदाप्रतीतेराधाराधेयरूपकालद्वयं नावगाहत इति सिद्धम् । एकोपाधिविशिष्टस्यैकस्य कालस्य स्वाधारत्वमवगाहत इत्यप्ययुक्तम् । उपाधेरुपाधौ वा विशेष्यस्य विशेष्ये वा तदुभयसंबद्धस्य तदुभयसम्बद्धे वा वृत्त्यनुपपत्तेः । तथा हि—वर्तमानकालोपाधिस्तावत् विद्यमानतपनपरिस्पन्दादिः । तस्य च क्रिया[रूपस्य ?] द्रव्यव्यतिरिक्ताश्रयत्वासम्भवात् स्वाधारत्वं *टी*— द्विविधः । तादृशपूर्वापरकालयोगो विरुद्धः । *स्वेनोपाधिनेति* । शतायुषि पुरुषे तत्पुरुषरूपोपाध्यवच्छिन्न एकः कालोऽखण्डो भवति । तदवान्तरभेदाः शतं संवत्सराः । तत्तत्संवत्सरव्यवहारनियामकोपाधिभेदात् तद्भेदः । *तत्रैकसंवत्सरोपाधिः न संवत्सरान्तरसंबन्धी स्यात्* । एवमवान्तरोपाधीनां विरोधेऽपि पुरुषस्यानेकसंवत्सरसंबन्धे बाधकं न किमपीति । शंकते *अन्येति* । पूर्वत्वोत्तरत्वयोः स्वनिरूपितत्वे सत्येव विरोध इति मा भूत् । यस्य कस्यापि पूर्वो यः कालः तत्संबन्धे यस्य कस्याप्युत्तरेणापि संबन्धो न भवत्येवेति शंका । परिहरति *क्षणेति* । क्षणिकः पदार्थः यस्मिन् क्षणे दृष्टः, स क्षणः तदुत्तरक्षणापेक्षया पूर्वः, तत्पूर्वक्षणापेक्षया चोत्तर इति तत्र पूर्वक्षणसंबन्धः उत्तरक्षणसंबन्धश्च कथमिति । *काल्पनिक इति* । निर्विकल्पज्ञानस्यैव प्रमात्वात् कालस्य च प्रकारतया सविकल्पकैकविषयत्वादिति भावः । *माध्यमिकेति* । क्षणातिरिक्तवस्त्वभावात् क्षणापलापे वस्त्वपलाप एवेति भावः । क्षणकालमात्रसंबन्धित्वम्—क्षणकालसंबन्धित्वमात्रम् । *तर्हीति* । ननु माध्यमिकः सर्वशून्यवादी । वयं स्वलक्षणरूपाणि वस्तूनि अंगीकृत्य तेषां क्षणिकत्वं साधयामः । तत्र शून्यवादे एकक्षणभिन्नक्षणासंबन्धस्य सिद्धत्वात् क्षणसंबन्धित्वमेव पारमार्थिकं माध्यमिकं प्रति साध्यत इति चेत्—तर्हि अस्मान् प्रति सिद्धसाधनं स्यात् । अतः उभयवारणाय वस्तु स्वभिन्नक्षणासंबन्धित्वविशिष्टस्वसंबन्धि इत्येव साधनीयम् । तत्र प्रत्यभिज्ञया बाधः ।

काश.॥ तथाऽपि कालद्वयं परस्पराभाव[1]नान्तरीयकं तदात्मकं वा कथमेकत्र स्यादिति चेन्न ; कालद्वयस्यान्योन्यस्मिन्नभावेऽपि तदुभयसंबन्धिनि वस्तुन्यभावाभावात् । यस्तु तस्मिन् वस्तुन्यसंबद्धः कालः, तस्य तत्र सद्भावं न ब्रूमः । न हि वयं नित्यानित्यविभागं निराकुर्मः ॥ २६ ॥

**प्रत्यक्षं वर्तमानं प्रथयति यदिहावर्तमानाद्विभक्तं**
**तस्मात् तेनैव सिद्धं क्षणिकमिति न सत्, तावदित्यप्रतीतेः ।**
**तत्कालासत्त्वमेव ह्यपनयति सतो वर्तमानत्वबोधः**
**कालेऽन्यत्रापि सत्त्वं प्रमितमिति कथं तद्विरोधप्रसङ्गः ॥ २७ ॥**

अथ प्रत्यक्षेणैव प्रत्यभिज्ञाप्रत्यक्षस्य विरोधम्, भावानां क्षणिकत्वसिद्धिं च शङ्कते **प्रत्यक्षमिति** ॥ अस्मदादिप्रत्यक्षं तावत् वर्तमानमात्रविषयमिति सर्वसंमतम् । अन्यथा दृश्यमानानां पदार्थानां तत्क्षणापेक्षया पूर्वापरविशेषाणामपि प्रत्यक्षत्वप्रसङ्गात् । तस्मादगृहीतपूर्वापरविशेषं वर्तमानग्राहि प्रत्यक्षमवर्तमानाद्व्यावृत्तमेव स्वविषयं गृह्णाति । एतदेव च क्षणिकत्वं वस्तूनाम्, यत् अपूर्वोत्तरत्वम् । अतः संस्कारनिरपेक्षप्रत्यक्षबाधिता प्रत्यभिज्ञा देशान्तरस्थग्राहिशुक्तिरूप्यधीवत् संस्कारोपनीतकालान्तरस्थभेदसंवृत्त्या तस्मिन् इदन्त्वम् अस्मिन् वा तत्त्वमारोप्य कल्पितैवयविषयेति ॥ अत्र प्रत्यक्षवृत्तान्तानभिज्ञोक्तिरियमित्यभिप्रायेण प्रतिवक्ति **न सदिति** प्रत्यक्षस्य कालान्तरसंबन्धप्रतिक्षेपकत्वाभावमाह **तावदिति** । वर्तमानत्व

---

ठिप्पणी— नोपपद्यते ।......विशेष्यमात्रस्य च स्वाधारत्वं न संभवति । तथात्वे कालः काले वर्तत इत्यपि प्रतीत्यापत्तेः । न चेष्टापत्तिः । उपाधिविशेषानवभासेन कालमात्रस्य स्वाधारत्वप्रतीतेरदर्शनात् ।......विशिष्टस्यातिरिक्तस्यासम्भवादिति । तदात्मकं=परस्पराभावात्मकमित्यर्थः । इदं च भावान्तराभावमतमवलम्ब्य । नहि वयमिति । असम्बन्धत्वेनाभिमतेऽपि काले वस्तुसम्बन्धेऽङ्गीक्रियमाणे हि अनित्यत्वेनाभिमतस्यापि सर्वकालसम्बन्धित्वेन नित्यत्वप्रसङ्गात् नित्यानित्यविभागो न स्यादिति भावः ॥ २६ ॥

वी— 1. नान्तरीयकं—व्याप्यम् ॥ २६ ॥

अनुमानेन क्षणिकत्वे साध्यमाने प्रबलेन प्रत्यभिज्ञाप्रत्यक्षेण तद्बाध उक्तः । प्रत्यक्षेणैव क्षणिकत्वस्य गृह्यमाणत्वात् प्रत्यभिज्ञैव बाध्येति शंकायामाह प्रत्यक्षमित्यादि। ननु द्वयोः प्रत्यक्षयोर्मिथो विरोधे फलस्य प्राबल्यमिति चेत् — संस्कारोपनीतार्थादिविषयप्रत्यक्षापेक्षया शुद्धप्रत्यक्षस्यैव प्राबल्यम् । प्रत्यक्षमिति कर्तृ । वर्तमानमिति कर्म । यत्—यस्मात्, इदमिति प्रत्यक्षम् इदन्त्वेन= वर्तमानत्वेन पदार्थं गृह्णत् अवर्तमानभिन्नत्वेन दर्शयत्येव; वर्तमानत्वांशाग्रहणेऽपि वर्तमानवस्तुग्रहणमेव प्रत्यक्षेण, अतीतानागतविषयप्रत्यक्षाभावात् । गोदर्शने अगोव्यावृत्तदर्शनवत् वर्तमानदर्शने अवर्तमानव्यावृत्तदर्शनमेव । अवर्तमानमित्यस्य पूर्वमुत्तरञ्चार्थः । पूर्वोत्तरभिन्नत्वञ्च क्षणिकत्वमेवेति। तावदितीति। प्रत्यक्षेण घटघटत्वादिमात्रग्रहणम्, न कालस्य; अतीन्द्रियत्वात्। परंतु, विषयासत्त्वे इन्द्रियसंनिकर्षाभावात् प्रत्यक्षं न स्यादिति उचितकालसंबन्धस्यानुमानमेवेति तार्किकाः । सर्वत्र प्रत्यक्षे कालस्य प्रकारतया भानं नियतमिति परे। तत्र प्रकृतकालसंबन्धितया ग्रहणेऽपि प्रकृतकालमात्रसंबन्धीति मात्रार्थो न प्रतीयत इत्यर्थः। मतः—वर्तमानस्य वर्तमानत्वं प्रत्यक्षमाह्म्। प्रत्यभि-

विधिरेवावर्तमानत्वनिषेधात्मा तावन्मात्रकालवर्तित्वं नियच्छेदित्यत्राह **तत्कालेति**। तत्कालसत्त्वविधिर्हि तदानीमसत्तां निरुन्ध्यात्, न तु कालान्तरसत्तामित्यर्थः। तथाऽपि इदंकारवता प्रत्यक्षेण कालान्तरसत्त्वस्यानालम्बनात् तत्प्रतिक्षेप इति चेत्-तत्राह **कालेऽन्यत्रापीति**। अयं भावः-यथा इदमिति तत्कालसत्ता गृह्यते, तथा तदिदमिति कालद्वयसत्त्वमपि प्रत्यक्षेणैव गृहीतम्। एवं सति न्यूनाधिकविषयतामात्रमिह प्रत्यक्षयोः, न विरुद्धविषयत्वम्; अन्यथाऽतिप्रसङ्गादिति॥ अल्पविषयस्य प्राबल्यम् आलम्भविधौ दृष्टमिति चेन्न; विरोधे सत्येव बलाबलविमर्शात्। इह तु विरोध एव न समस्ति।

अपि च प्रत्यक्षं किं वर्तमानत्वेन स्वविषयं गृह्णाति, उत वस्तुवृत्त्या वर्तमानम्। नाद्यः; त्वन्मते प्रत्यक्षतयाऽभिमतस्य निर्विकल्पकस्य वि[कल्प]शिष्टबोधनाशक्तेः। सविकल्पकस्य तु प्रत्यक्षत्वानभ्युपगमात्। न द्वितीयः, इन्द्रियसंयुक्तक्षणस्य तज्जन्यज्ञानकालेऽतीतत्वात्। तदुत्तरक्षणस्य स्वपूर्वक्षणेन्द्रियसंप्रयोगायोगेन तज्जन्यधीविषयत्वासंभवात्। तदातनाक्षिसंप्रयोगस्य तु तात्कालिकबुद्धिहेतुत्वासिद्धेः। अतस्ते कथं प्रत्यक्षं वर्तमानग्राहि? अस्मन्मते तु इन्द्रियसंप्रयोगस्य, तद्विशिष्टवस्तुनः, तदुपहित-

---

ஸேவா— आलम्भविधाविति। अधिकविषयात् "न हिंस्यात्" इति सामान्यविधेरपि "पशून् आलभेत" इति अपवादविधेः स्वल्पविषयस्य प्राबल्यं दृष्टमिति भावः। यद्वा, "पशुमालभेत" इत्यत्रानेकविषयपशुशब्दापेक्षया 'छागस्य वपायाः' इत्यत्र स्वल्पविषयस्य छागशब्दस्य प्राबल्यं दृष्टमिति भावः। अस्मिन्नर्थे 'आलम्भविधौ' इत्यस्य आलम्भविधिस्थल इत्यर्थो बोद्धव्यः। नेति। अल्पविषयस्य प्राबल्यं सर्वत्र नास्तीत्यर्थः। संयुक्तक्षणस्य-संयुक्तवस्तुन इत्यर्थः। ननु भवन्मतेऽपि प्रत्यक्षस्येन्द्रियसंयुक्तार्थविषयत्वं इन्द्रियसंयुक्तविषयजन्यत्वं वर्तमानविषयत्वं च न संभवति; तथाहि—प्रतिक्षणं निमेषोन्मेषादिवशात् इन्द्रियसंप्रयोगा[णां?]भिन्नत्वात् तत्तत्संप्रयोगविशिष्टस्यापि विषयस्यान्यान्यत्वं वक्तव्यम्—विशेषणभेदेन विशिष्टभेदात्। एवं ज्ञानक्षणविशिष्टात् पूर्वक्षणविशिष्टमन्यदिति वक्तव्यम्। तथा च पूर्वक्षणविशिष्टः पूर्वसंप्रयोगविशिष्टश्च यो ज्ञानविषयो ज्ञानजनकश्च सोऽतीतः, यश्च ज्ञानकालीनो वर्तमानः, सोऽजनकः अविषयश्चेत्यत्राह—अस्मन्मते तु इति। अत्रायं भावः। प्रतिक्षणं निमेषादिना भाव्यमित्यनियमात् चिरकालस्थायीन्द्रियसंप्रयोगसंभवात् विषयस्य च...... यामाद्युपाध्यवच्छिन्नकालसंबन्धसद्भावात् प्रतिक्षणं निमेषादिवशात् भिन्नभिन्नेन्द्रियसंयोगजननेऽपि इन्द्रियसंप्रयोगाणां क्षणानां च सूक्ष्मत्वेन तत्तद्विशिष्टार्थस्य प्रत्यक्षेणानवगाहनात् विशेषणभेदेन विशेष्यभेदाभावाच्च इन्द्रियसंप्रयोगस्यार्थस्य च प्रत्येकजनकत्वेन इन्द्रियसंप्रयुक्तार्थस्य जनकत्वे मानाभावाच्च प्रत्यक्षस्य इन्द्रियसन्निकृष्टार्थविषयत्वं अर्थजत्वं वर्तमानविषयत्वं च संभवत्येव। ननु यस्यार्थस्य ज्ञानात् पूर्वं सत्त्वम्, ज्ञानकाले च विनाशः, तस्मिन् विषये ज्ञानस्य कथं वर्तमानविषयत्वमिति चेन्न—इन्द्रियसंप्रयोगसमये पुरोदेशानद्गतानां बहूनामिन्द्रियसंनिकर्षसंभवेन अनेक-

ஸ்ரீ— ज्ञया कालान्तरसत्त्वमपि ग्राह्यम्; तत्र को विरोध इति। अल्पविषयस्येति। आलम्भो हिंसा। तद्विषयकवाक्यमध्ये अग्नीषोमीयं पशुमालभेतेति किञ्चित्पशुमात्रविषयकस्य, न हिंस्यात् सर्वभूतानि इति सर्वप्राणिविषयवाक्यात् प्राबल्यं दृष्टमित्यर्थः। निरस्यति नेति। अत्र किं नाम अल्पविषयकत्वमित्यपि विचार्यम्। घटवद् भूतलमित्यतः घटाभाववद् भूतलमित्यस्याल्पविषयकत्वाभावेऽपि प्राबल्यं दृश्यते। प्रत्यभिज्ञा तत्त्वेदन्त्वोभयविशिष्टवस्तुविषयिणी। अभिज्ञा तु तत्ताक्रान्तानाक्रान्तसर्वविषयिणीति अभिज्ञाया एवाधिकधर्मिविषयकत्वमित्यपि स्यादिति। हेतुत्वासिद्धेरिति।

कालांशस्य च स्थायित्वेन धीक्षणानुवृत्तौ तद्विषयतया प्रत्यक्षोदयात् संप्रयोगानन्तरक्षणे धीरपि निर्वर्त्यते। अतो नासंप्रयुक्तं नास्थिरं नावर्तमानं वा [1]प्रत्यक्षमिति।

श्लो— पूर्वापरबहुव्यक्तिव्याप्तिग्रहणसंभवा। न काचिदपि युक्तिः स्यात् सर्वक्षणिकवादिनः ॥ २७ ॥

उत्पन्नानां विनाशे ध्रुवभवितृतया हेत्वपेक्षाविहीने
जन्मन्येवोपरोधात् क्षणिकमिह जगत् सर्वमित्यप्यसारम्।
लिङ्गं ध्रौव्यस्वमात्रं जननविधुरता तत्क्षणानुक्षणत्वे
तत्त्वं तज्जन्यता वा तदिदमनियमासिद्धिबाधादिदुष्टम् ॥ २८ ॥

---

अधि— उत्पन्नानामिति। ध्रुवभवितृतयेति हेतुं षोढा विकल्प्य आद्ये व्यभिचारम्, द्वितीयेऽसिद्धिम्, तृतीयेऽप्यसिद्धिम्, चतुर्थे विकल्प्य भेदेनासिद्धिप्रतिज्ञाविरोधौ, पञ्चमे व्याघातं षष्ठे प्रतिज्ञाहेतुविरोधं षट्स्वपि प्रत्यक्षबाधं चाह—तथाहीत्यादिना। अनुक्षणशब्दस्यानन्तरक्षणवाचिनो न तद्व्यक्तिवाचित्वमित्यत आह उपचरित इति ॥ २८ ॥

आनन्द— गोचरमेव ज्ञानमुत्पद्यते, न तु विनश्यद्वस्त्वेकमात्रगोचरम्। तथा च ज्ञानविषयाणां देशादीनां सर्वेषां ज्ञानकाले विशेषासंभवात् प्रत्यक्षस्य वर्तमानविषयत्वं संभवत्येवेति। धीक्षणानुवृत्तौ—धीकालानुवृत्तौ इत्यर्थः। पूर्वापरेति। युक्तिः हेतुज्ञानम्, तर्को वा। सर्वस्यापि क्षणिकत्वोक्तेः। व्याप्तेर्व्याप्तिरस्य हेतोर्हेतुतावच्छेदकस्य साध्यस्य साध्यतावच्छेदकस्य ज्ञातुश्च पूर्वापरकालानुगतस्य एकस्यानङ्गीकारात् पूर्वापरबहुव्यक्तिग्रहणपूर्वकव्याप्तिज्ञानपूर्विका युक्तिः काचिदपि न संभवतीति भाव। ननु युगपदुत्पन्नविनष्टैकक्षणमात्रवर्तिनि सहचरितै.(ते?)बुद्बुदद्वये तदुत्पत्तिसमकालीनस्य साहचर्यविशिष्टतदुभयसमूहालंबनरूपस्य (?) ज्ञातुः व्यभिचारशङ्काविरहात् पूर्वापरकालानुगतैकवस्तुग्रहणमनपेक्ष्य व्याप्तिज्ञानसंभवमाशङ्क्याह—न काचिदपीति। तत्रापि बुद्बुदोत्पत्तिः, अनन्तरमिन्द्रियसंनिकर्षं, अनन्तरं बुद्बुदद्वयसाहचर्यरूपसंबन्धज्ञानम्, अनन्तरं नियतसाहचर्यरूपव्याप्तिज्ञानमिति बहुक्षणविलम्बसंभवात् पूर्वापरकालानुगतैकवस्तुत्वाभावे तत्र व्याप्तिज्ञानं न संभवतीति भावः ॥ २७ ॥

श्लोके 'जन्मन्येवोपरोधात्' इति जन्मनि सत्येव विनाशावश्यम्भावादित्यर्थः। एवकारेण

टी— 1 प्रत्यक्षमिति प्रत्यक्षविषय इत्यर्थः।

कारणस्य कार्यपूर्वभाविताया आवश्यकत्वादिति। धीक्षणानुवृत्तौ—धीजननक्षणे संप्रयोगादेरनुवृत्तौ। कालोऽय स्थूलकाल', न तु क्षणरूपः। प्रत्यक्षेण यदि क्षणिकत्वं गृहेत, अनुमानरूपप्रमाणमेव नोदियादिति तत्स्वीकार एव न स्यादित्याह पूर्वेति। य. सर्वं क्षणिकं वदति, प्राह्यविषय ग्रहीतारं पुरुषञ्च, तदा पूर्वग्रहीतुरुत्तरग्रहीतुश्च भिन्नत्वात् धूमग्राहिणो वह्निग्राहिणश्च भिन्नत्वात् येन बहुषु स्थलेषु हेतुसाध्ययोर्ग्रहणम्। वह्नेस्तज्जन्यस्य धूमस्य च पूर्वोत्तरक्षणस्थतया कथमेकदोभयोर्ग्रहणम्। वह्निदेशस्य पूर्वक्षणरूपस्य धूमदेशस्योत्तरक्षणरूपस्य च भिन्नतया कथमुभयोः सामानाधिकरण्यम्, सुतरां सामानाधिकरण्यनियमरूपा व्याप्तिरिति। व्याप्तिग्रहणसंभवेत्युक्तत्वात् युक्तिपदं तर्कपरं परामर्शपरं वा। अथवा युक्तिर्हेतुरेव, व्याप्तिग्रहणसंभवेत्यस्य व्याप्तिग्रहणाधीनसाधकत्वधर्मशालिनीत्यर्थः ॥ २७ ॥

पुनर्निर्दुष्टानुमानेन प्रत्यभिज्ञाया अन्यथासिद्धिमाशङ्क्य परिहरति उत्पन्नानामिति। भावो विनाशी उत्पन्नत्वात्। विनाशो हेतुनिरपेक्षः ध्रुवभावित्वात्; जगत् क्षणिकं निरपेक्षनाशप्रति-

ननु, "जातस्य हि ध्रुवो मृत्युः" इति प्रसिद्धम् । अतः सतां सत्तानुबन्धी विनाशः स्वरूपवत् न हेतुसापेक्षः झटित्येवाऽऽपतेत् । तस्मात् सर्वं क्षणिकम्–इत्यनूद्य परिहरति **उत्पन्नानामिति** ॥ असारं–न्याय्यादन्यदित्यर्थः । तत्र हेतुं विकल्पयति **लिङ्गमिति** । एवं विकल्पिते यथासंभवं दोषान् आह **तदिदमिति** । तथा हि तत्राऽऽद्ये तावत् यत् यस्य ध्रुवं भविष्यति, न तत् तस्य हेतुसापेक्षं, नाशश्च जातानां ध्रुवभावीत्युक्तं स्यात् । तदा कस्यचिदङ्कुरस्य सामग्रीप्रवाहवशात् ध्रुवं भविष्यद्भिः पत्रपुष्पादिभिः, घटादीनां कपालादिभिरप्यनैकान्त्यम् । सर्वत्र चैकसन्तानोत्तरक्षणैः । न हि ते तन्निरपेक्षाः (हेतुनिरपेक्षाः) ; तथा सति प्रागेवोपनिपाते कथं तत्र सन्तानत्वमपि? पूर्वक्षणानामर्थक्रियाविरहात् असत्त्वं च स्यात् । **चार्वाकवादश्च** ।

द्वितीये तु यत् यस्यानुत्पन्नमनुबन्धि, न तत् हेत्वपेक्षम् , यथा गोरश्वापोह इति स्यात् । तथा च हेत्वसिद्धिः ; प्रतियोगिवत् स्वोचितहेतुजन्यत्वात् ॥ मुद्गरादयोऽपि सभागसन्तानमात्रारम्भकाः, न तु

---

[illegible]— विलम्बहेत्वभावात् उत्पत्त्यनन्तरमेव विनाशः सूच्यते । स्वरूपवदिति । वैधर्म्यदृष्टान्तः । तत्राद्य इति ।आद्ये विकल्प इत्यर्थः। घटादिभावाः पक्षः, निर्हेतुकविनाशत्वं साध्यम्, ध्रुवभाविविनाशवत्त्वं हेतुः, मेघपटलादिर्दृष्टान्तः । यद्वा, घटादिविनाशः पक्षः, तेषां नाशस्य ध्रुवभावित्वं हेतुः, निर्हेतुकत्वं साध्यम्, मेघपटलादिनाशो दृष्टान्त इति भावः । बाह्यमतानुसारेण उदाहरणोपनयावयवद्वयोपादानं यद् यस्येति । तन्निरपेक्षाः हेतुनिरपेक्षाः । तथैव क्वचित् पाठः । पूर्वक्षणानाम्—उत्तरोत्तरक्षणानाम् । चार्वाकवादे–निर्हेतुकत्ववादे । पूर्वक्षणानां उत्तरोत्तरोत्पादनरूपप्रयोजनकार्याभावात् असत्त्वं मिथ्यात्वं स्यादित्यर्थः । बाह्यमते अर्थक्रियाकारित्वरूपाविसंवादित्वेन वस्तूनां सत्यत्वाङ्गीकारादिति भावः । द्वितीये त्विति । ध्रुवभाविशब्दस्य स्वाभाविकादनुबन्धिवाचित्वात् तस्य फलितार्थमाह—अनुत्पन्नमनुबन्धीति । अश्वापोहः—अश्वतादात्म्याभाव इत्यर्थः । सभागेति ।

[illegible]— योगित्वादित्यनुमीयते । मध्यानुमाने हेतुः ध्रुवभावित्वम् । तत् किमिति विकल्प्य विमृशति लिंगं हीति । पश्यत्त्वं=भविष्यत्वम् । ध्रुवम्=अकादाचित्कं भवतीति ध्रुवभावीत्युक्तौ अनुत्पन्नत्वं हेतुः। तत्क्षणत्वं प्रतियोग्यधिकरणं क्षणरूपं पकं यदधिकरणक्षणः, तत्त्वम् । अनुक्षणत्वं प्रतियोग्यधिकरणक्षणोत्तरक्षणस्थत्वं वा प्रतियोग्युत्तरक्षणस्थत्वं वा । अनियमेति । अनियमः—व्याप्त्यभावः, आदिना पञ्चमपक्षोक्तव्याघातादिग्रहणम् । वक्ष्यति च अपसिद्धान्त-प्रतिज्ञाविरोधयोर्ग्रहणम् ।

ध्रुवो मृत्युरिति । मृत्युशब्दो न देहवियोगपरः किं तु सामान्यतो विनाशपरः, 'न जायते म्रियते वा' इत्युपक्रमात् । स्वरूपवदिति । न हि वस्तुनः स्वरूपं वस्तुप्रयोजकातिरिक्तहेतुसापेक्षं लोके दृष्टमिति भावः । नहेतुसापेक्षः— हेतुनिरपेक्षः । असारम् बाधितार्थकम् । यदिति । यस्य तस्येति प्रयोगः हेतुनिरपेक्षत्वे प्रतियोगिनः पूर्वमेव किं न स्थित इति शंकावारणाय । नाशस्य तदीयत्वात् तदुत्पत्तेः प्राङ् न स्थित्यवकाश इति तदाशयः । पत्रपुष्पादौ व्यभिचारमाह तदेति । उत्तरक्षणैरिति । अनेकान्त्यमित्यनुषंगः । यस्य घटपटादेर्ये उत्तरक्षणाः ध्रुवभाविनः तेषां पूर्वपूर्वक्षणहेतुकत्वत्वाभिमतत्वात् साध्याभावात् व्यभिचार इति । प्रागेवोपनिपाते=सर्वेषां क्षणानां वस्तुभूतानां प्रथमक्षण एव भावे इत्यर्थः । *चार्वाकवादश्चेति । सर्वमाकस्मिकं यादृच्छिकं स्वभावत एव भवति ;* कार्यकारणभाव एव क्वापि नेति तत्पक्षः । द्वितीये, जननविधुरत्वरूपद्वितीयकल्पे । अश्वापोहः—अश्वव्यावृत्तिः अश्वभेदः । स्यात्—व्याप्तिः स्यात् । अनुत्पन्नत्वस्य हेत्वनपेक्षत्वस्य च व्याप्तिसत्त्वेऽपि पक्षे हेत्वसिद्धिरिति भावेनाह तथाचेति । हेतुजन्यत्वात्—मुद्गरादिजन्यत्वानुभवात् । मुद्गरस्य

नाशजनक। इति चेन्न. दीपादिसन्तानान्[ाम]न्तिमध्वंसकेषु तदसिद्धेः। न हि तत्र विभक्तसूक्ष्मावस्थान्तरापत्तिमिच्छसि। अन्वयव्यतिरेकाविशेषे व्यवस्थापकाभावात् (च?)॥ निस्स्वभावतया तुच्छस्य हेत्वपेक्षाविरहो व्यवस्थापक इति चेन्न; प्रतियोगिवदेव नियतकालतया अमितस्यात्यन्ततुच्छत्वायोगात्, खपुष्पवच्चानादित्वप्रसङ्गेन सर्वभावासिद्धिप्रसङ्गात्। ध्वंसस्य च तुच्छत्वे, तत्कालेऽपि खकुसुम इव भावानां सत्त्वप्रसङ्गाच्च। तथा च क्षणभङ्गं प्रतिज्ञाय स्थिरवादं साधयसि। कीदृशं च ध्वंसस्य निस्स्वभावत्वम्? यदि यत्किंचित्स्वभावविरह, तत् स्वलक्षणेऽपि समानम्। सर्वस्वभावविरहस्तु ध्वंसेऽप्यसिद्धः। अन्यथा कथमस्य पक्षीकारः? ध्वंसरूपतया सिद्धस्येति चेत्, तर्हि तत्स्वभावस्य कथं सर्वस्वभावविरहः? अपि चास्य प्रागसत्त्वे हेत्वपेक्षा दुर्वारा; प्रागसत्त्वे तु भावापह्नव.। तत एवाभावस्याप्यभाव इति सर्वाभावः स्यात्।

तृतीये च, स एव क्षणो यस्य स तत्क्षणः तस्य भावस्तत्क्षणत्वम्। तदा भुवभावि=सहभावीत्यर्थः। अयमपि हेतुरसिद्ध एव। न च प्रध्वंसप्रतियोगिनोर्यौगपद्यसंभवः। संभवे वा भावः पश्चादपि किं न स्यात्?

अनुक्षणशब्दोपचरितस्तु हेतुरनन्तरक्षणवर्तित्वम्। तत्रापि भावोत्पत्त्यपेक्षयाऽऽनन्तर्यविवक्षायामसिद्धिः। भावस्वरूपापेक्षया त्वानन्तर्यनियमे, भाव एव हेतुः स्यादिति कथं हेतुनैरपेक्ष्यम्॥ तदतिरिक्तनैरपेक्ष्यं विवक्षितमिति चेन्न; तद्वदेव सहकारिणामप्यवर्जनीयत्वादिति।

---

ऊष्मा— विभागवद्वस्तुसन्तानमात्रजनका इत्यर्थः। नहीति। तथा च अपसिद्धान्त इति भावः। यथा नाशप्रतियोगिषु हेत्वन्वयव्यतिरेकदर्शनात् सहेतुकत्वम्, तथा नाशेऽपि मुद्गराद्यन्वयव्यतिरेकदर्शनात् तद्धेतुकत्वं स्वीकार्यम्; वैषम्यव्यवस्थापकाभावादिति। हेत्वन्तरमाह—अन्वयव्यतिरेकेति। अत्यन्ततुच्छत्वायोगादिति। अनेन विनाशस्य किञ्चित्तुच्छत्वं सूच्यते। एवं च विनाशस्य भावान्तरात्मतया भावव्यतिरिक्तत्वमप्रामाणिकमिति सूचितम्। खपुष्पवत् इत्यतः पूर्वम्, 'अन्यथा' इति शेषः। सर्वभावासिद्धिप्रसङ्गादिति। नाशस्यानादित्वेन पूर्वमपि विद्यमानतया तत्प्रतियोगिभावानां सर्वदा सिद्धिः स्यादित्यर्थः। ननु खपुष्पवत् विनाशस्य तुच्छत्वेनाविद्यमानत्वात् सर्वभावसिद्धिरनुपपन्नेत्यस्वरसादाह—ध्वंसस्य चेति। प्रतियोगिरूपनिरूपकाभावस्यापह्नवात् निरूप्यस्याभावस्याप्यसंभवात् भावाभावरूपसर्वशून्यवादः स्यादिति भावः। स एव क्षण इति। अत्र क्षणशब्दः काल-

श्री— वस्तुहेतुत्वं, न त्वभावहेतुत्वमित्याक्षिपति मुद्गरेति। सभागसंतानेति। अनेकभागपुञ्जात्मके घटादौ पुञ्जसंतानः पूर्वपूर्वक्षणमात्रसिद्धः। भागरूपसंतानारम्भस्तु मुद्गरादिनेति भावः। अन्तिमध्वंसकेषु—अन्तिमदीपज्वालानाशकत्वाभिमतवाय्वादिषु। नहीति। तत्रापि तेजस्सूक्ष्मावस्थास्थितिरित्यस्मन्मतम्; न तु तन्मतम्। अन्वयव्यतिरेकाविशेषे, मुद्गरसंतानक्षणयोरिव मुद्गरपूर्वक्षणनाशयोरपि अन्वये व्यतिरेके च समाने। तुच्छस्य—नाशस्य। अत्यन्ततुच्छत्वं शशविषाणसोदरत्वम्। अनादित्वेति। सर्वस्यापि नाशस्येति शेषः। तुच्छत्वे—अभावे सति। स्वलक्षणे—तत्तद्भावरूपवस्तुन्यपि। अस्य—शशविषाणविलक्षणस्य। आश्रयासिद्धिमप्याह तत एवेति। उपचरित इति। अनुगतः पश्चात्तनः क्षणः यस्य सः अनुक्षण इति बहुव्रीहिसिद्ध इत्यर्थः। सहकारिणामपीति। कालादृष्टेश्वरमुद्गरादीनामित्यर्थः। अन्यथा द्वितीयक्षण एव नाशापत्तेः। सहकारिनिरपेक्षमेव कस्यचिद्धेतुत्वमिति बौद्धमते इदमिष्टमिति न शंक्यमित्याशयेन अवर्जनीयत्वादित्युक्तम्। प्रागेव

पञ्चमे स्वसिद्धिर्व्याघातश्च । ननु कथं ध्रुवभाविशब्देन तत्त्वविवक्षा शङ्क्यते ? इत्थम् — यत् यतो भिद्यते, न तत् तस्य ध्वंसः, यथा रूपस्य रसः । ध्वंसस्तु कस्यचिदेव भवतीति तदात्मकः । अतः स्वोत्पत्तावेव स्वात्मनि ध्वंसे सन्निहिते कथं क्षणान्तरं प्राप्नुयादिति । तत्रेदं ब्रूमः—ततो भिन्नस्यापि तत्प्रध्वंसत्वं यथादर्शनं स्यात । अन्यथा भिन्नस्य भिन्नकालस्य च कारणत्वादिकमपि हीयेत ; अविशेषात् ; स्वात्मन एव स्वनाशात्मकत्वे पश्चादिव स्वकालेऽपि स्वाभावसिद्धेः स एव सर्वोपद्रवः स्यादिति ।

तज्जन्यत्वे हेतौ प्रतिज्ञाविरोधः । तज्जन्यत्वं हि तद्धेतुकत्वम् ; तेन कथं हेतुनैरपेक्ष्यसाधनम् ? हेत्वन्तरनैरपेक्ष्यमपि च दुर्वचमित्युक्तम् । अतः क्रमभाविसहकारिविशेषात् कार्यान्तरमिव स्वनाशमपि स्वयमुत्पादयतु नाम । न ततः क्षणिकत्वं सिध्येदिति ।

बाधश्चामीषां प्रागुक्तप्रत्यभिज्ञया स्पष्टः । आदिशब्दः प्रदर्शितयोरपसिद्धान्तप्रतिज्ञाविरोधयोः संग्रहार्थः ॥ २८ ॥

कालानन्तर्यसाम्ये क्षणिकवपुषि ते देशकालघुशगौ
सर्वे पूर्वे भवेयुस्तदुपरि भवतां कारणानि क्षणानाम् ।
सन्तानैक्यव्यवस्था निजफलनियतिर्वासनानां च न स्यात्
कार्पासे रक्ततादि क्रमविपरिणमत्संस्कृतद्रव्यतः स्यात् ॥ २९ ॥

प्रतिकूलतर्कप्रतिहतिमप्याह कालानन्तर्येति ॥ आदिशब्देन दिक्संग्रहः । अयमर्थः— सर्वे

---

*प्र०*— कालानन्तर्येति । देशादिक्षणद्वयेऽपि कार्यकारणव्यवस्थाया दुःस्थत्वादिति । कस्यचिद् द्वितीयदेशादिक्षणस्य देशान्तरपूर्वक्षणापेक्षयाऽप्यानन्तर्याविशेषात् व्यवस्थापकान्तरासम्भवाच्च देशान्तरक्षणयोः कार्यकारणभावो वक्तुं न शक्यत इत्यर्थः ॥ २९ ॥

*आनन्द*— याची । असिद्धिर्व्याघातश्चेति । नाशस्य प्रतियोगिरूपत्वासंभवात् असिद्धिः, सहेतु- प्रतियोग्यात्मकत्वेन निर्हेतुकत्वसाधने व्याहतिश्चेति भावः । तत्त्वविवक्षेति । तस्य भावः तत्त्वम् । तदात्मकत्वविवक्षेत्यर्थः । कस्य चिदेव भवतीति तदात्मक इति । प्रतियोग्यात्मकत्वाभावेऽन्यं प्रति ध्वंसः स्यादिति भावः । नाशस्य प्रतियोगिजन्यत्वे नाश[क?]सद्भावात् [अ?] विलम्बेन नाशः स्यादिति क्षणिकत्वं स्यादित्यत्राह यत इति ॥ २८ ॥

*श्री*— शक्त्यशक्त्यादिविरोधानां परिहृतत्वादिति भावः । व्याघात इति तत्प्रतियोगिकत्वं तत्तादा- त्म्यञ्च व्याहतमिति भावः । यथा रूपस्य रस इति । रूपात् भिद्यमानो रसः रूपीयो न भवती- त्यर्थः। तद्भिन्नत्वं यत्र, तत्र न तदीयत्वम् । अत्र तदीयत्वमपि। अतस्तद्भिन्नत्वं न भवति, किंतु तत्तादा- त्म्यमिति भावः। गुणगुण्यभेदवादिमतानुसारेणेदम् । ध्रुवभावित्वादित्यस्य ध्रुवतया तदीयत्वादित्यर्थे तदात्मकत्वादिति फलति। यद्वा तेन सह ध्रुवभावित्वं नाम नियतत्वम्। तत् तदधिकरणसर्वदेशकाल- वर्तित्वरूपं चेत्, तादृशार्थद्वयकल्पने मानाभावात् तदात्मकत्व एव पर्यवसानमिति विवक्षितम् ॥२८॥

"उत्तरोत्पादे च पूर्वनिरोधात्" इति सूत्रे श्रीभाष्ये विस्तृतेऽर्थे किञ्चिदंशप्रपञ्चनं क्रियते कालेति । उत्तरक्षणस्य पूर्वक्षणः कारणमिति बौद्धमतं न सिद्ध्यति । कार्योत्पत्तिकाले कारणस्य नष्टत्वात् । अथ पूर्ववर्तित्वमेव हि कारणत्वम्, तत् पश्चान्नाशेऽपि भवेदिति चेत्—एको घटक्षणः स्वोत्तरकालस्थगोमहिषाश्वकुड्यपाषाणादिसर्वक्षणकारणं स्यात् । देशः कालो दिक् जातिर्वा

क्षणिकमिति वदतस्ते कस्यचित् किंचित्प्रति कार्यत्वं किमनन्तरकालभावित्वमात्रात्? उत तद्विशेषात्? आद्ये त्रैलोक्योदरवर्तिनं पूर्वक्षणाः सर्वे तदनन्तरभाविनां सर्वेषां क्षणानां कारणानि स्युः। द्वितीयेऽपि असौ विशेषः किं देशाद्युपाधिनिरपेक्षः, तत्सापेक्षो वा। नाद्यः, अतीन्द्रियस्य तु तस्यादर्शनात्, दृश्यस्य तु वह्निधूमत्वादेरतिप्रसङ्गित्वात्। न द्वितीयः, यस्मिन् देशादौ यत् वर्तते, तस्मिन् जायमानस्य तत् कारणमिति नियमो न संभवति। कार्यक्षणस्य कारणदेशादिवर्तित्वे कारणदेशादेः क्षणद्वयापत्तेः, तथा चानन्तरक्षणयोगेऽपि को बाधः? अतः स्थिरदेशादिकमनभ्युपगच्छतः तत्प्रयुक्तनियमायोगात् अतिप्रसङ्गस्तदवस्थ एव। ननु यद्देशादिक्षणवर्ती [1]कारणक्षणः तत्कार्यदेशादिक्षणे स्वकार्यमारभत इति नियम इति चेन्न, देशादिक्षणद्वयेऽपि कार्यकारणव्यवस्थाया दुःसाध(दुःस्थ)त्वात्। तदेतदभिप्रेत्याह **सन्तानैक्यव्यवस्था न स्यादिति**। यदप्याहुः—"यस्मिन्नेव हि सन्ताने आहिता कर्मवासना। फलं तत्रैव बध्नाति कार्पासे रक्तता यथा॥" इति। *कर्मवासनेत्यनुभववासनाया उपलक्षणम्*—तदपि दूषयति **निजफलनियतिर्वासनानां च न स्यादिति**। सन्तानैक्ये सिद्धे हि **यस्मिन् तस्मिन्निति** निर्देशः स्यादिति

---

टिप्पणी—अदर्शनात् अप्रामाणिकत्वादित्यर्थः। अतिप्रसंगित्वादिति। कालान्तरीयदेशान्तरीयव्याप्तिं प्रत्यपि वह्न्यादेः कारणत्वं स्यात्। अन्यत्रहितानन्तर्यविवक्षायामपि देशान्तरीयकार्यं प्रति कारणत्वप्रसङ्गस्तदवस्थ इति भावः। कारणं चासौ देशादिश्चेति कर्मधारयः। आदिशब्दः कालवाची। क्षणद्वयापत्तेरिति। पूर्वक्षणे च सत्त्वापत्तेरित्यर्थः॥ २९॥

श्री—उपाधिः, तदुपाधिककार्यं तदुपाधिकपूर्वक्षणः कारणमिति चेत्—देशादौ क्षणिकवपुषि—क्षणिकभूते, कार्यकारणयोरेकदेशस्थत्वैकजात्याश्रयत्वादेर्दुर्वचत्वात्, केवलोत्तरत्वमात्रं वक्तव्यमिति सर्वस्यैकं कारणं स्यात्। ननु तद्देशसन्तानस्थकार्यं प्रति तद्देशस्थः क्षणः कारणमिति चेत्—तत्राह सन्तानेति। सन्तानैक्यव्यवस्था न स्यादिति पृथक्, वासनानां निजफलनियतिश्च न स्यादिति विषयान्तरम्। एते एव देशक्षणाः एतत्सन्तान इति नियम एव कथमित्यर्थः। तत्कार्यत्वात् तत्सन्तानतेति न भवति, कार्यत्वस्यैव सर्वत्रापादितत्वात्। एवं सन्तानैक्यनिरासादेव तदुक्तं फलनियमोऽपि न स्यात्। कर्तुरनुभवितुर्देहस्य तदन्यस्याऽऽत्मनो वा क्षणिकत्वात् कथं कर्मफलनियतिः अनुभवजन्यस्मरणनियतिश्चेत्यनेनेति प्रश्ने तैः समाहितम्, यस्मिन् सन्ताने कर्मवासना अनुभववासना चानुवर्तते, तत्र फलं स्मरणञ्च, नान्यत्रेति। तन्न, अयमेवैतत्सन्तान इत्यत्र नियामकाभावात्। देशैक्यादेरभावात्। सन्ताने कार्योत्पत्तिरभ्युपेयेत्यत्र तदुक्तमुदाहरणं तु न साधकम्, कार्पासकुसुमरक्तरूपोत्पत्तिः कार्पासबीजानां रञ्जकद्रव्यरञ्जिततया तादृशावयवानां क्रमेण पुष्पाकारेऽनुवृत्त्या भवितुमर्हति। यद्वा, "एतेन लाक्षारसावसेको व्याख्यातः" इति न्यायकुसुमाञ्जलिवाक्ये कार्पासरसरूपरञ्जकद्रव्यसंस्कृतदाडिमबीजावयवानुवृत्तिवशात् दाडिमे रक्तपुष्पोत्पत्तिरिति व्याख्यानात् "कार्पासे रक्तता यथा" इत्यस्य कार्पासरक्तता यथा दाडिमबीजरञ्जनेन दाडिमकुसुमरागहेतुरित्यर्थो भाव्यः॥ तत्र सर्वत्र कार्यकारणभावस्य व्यवस्थितत्वात् अवयवानां स्थिरतयाऽनुवृत्तिसंभवाच्चोपपत्तिः। अत्र तु कार्यकारणभावव्यवस्थाविरहात् वासनानामप्यस्थिरत्वेन क्षणिकत्वेनानुवृत्तेर्दुर्वचत्वाच्च वैषम्यमिति श्लोकार्थः।

अतीन्द्रियस्य तु तस्येति। तत्तत्तद्दिष्ट कुर्वद्रूपत्वरूपधर्मस्येत्यर्थः। वह्निधूमत्वेति। वह्नित्वावच्छिन्नं धूमत्वावच्छिन्नं प्रति कारणमिति सामान्यकार्यकारणभावो हि न तद्दिष्टः क्वचित् वह्नौ सत्यपि धूमाभावात्। कारणक्षण इत्यस्य आरभत इत्यत्रान्वयः। यद्देशादिक्षणवर्ती तत्कार्यदेशेत्यन्वयः।

भावः । दृष्टान्तस्तर्हि कथमित्यत्राह कार्पास इति । रञ्जकद्रव्यविशेषसंस्कृतबीजावयवानुवृत्त्या कार्यस्रोतोविशेषनियमे यथादर्शनं तत्र तादृशफलसिद्धिर्युक्ता । त्वन्मते तु तदेतत्संततिव्यवस्थापकाभावात्, तत्रैव फलं बध्नातीति दुश्शको नियम इति भावः ॥ २९ ॥

मेयत्वाद्यैर्विगीतं क्षणिकमिह जगत् स्यात् क्षणोपाधिवच्चेत्
बाधो दृष्टान्तहानिः स्थिर इति विदितो यत् क्षणस्याप्युपाधिः ।
सामग्री कार्यशून्या क्षणः, इयमपि तद्धेतुसंघः, न चासौ
हेतुः, नान्यः, स्थिरास्ते, क्रमवदुपधिवत् (धिभिः)स्यात् क्षणत्वं स्थिरेऽपि ॥

क्षणभङ्गसाधनान्तरं दूषयितुमनुवक्ति मेयत्वाद्यैरिति ॥ इह—पक्षदृष्टान्तविकल्पार्हे वस्तुजाते ।

---

பூ— मेयत्वाद्यैरिति । 'इह' इत्यस्य व्याख्या पक्षदृष्टान्तेति ।

[illegible]— इहशब्दस्य जगद्वाचित्वे 'जगति जगत्' इत्यनन्वितार्थं स्यादित्याशङ्क्य इहशब्दं व्याचष्टे—इह पक्ष इति । विकल्पार्हे भेदयोग्ये । आकृष्य इति । उपरितनवाक्ये विद्यमानस्य पदस्य

வீ— तदेतत्सन्ततिव्यवस्थापकाभावादिति । त्वन्मते तद्घटसंततिरियम्, तदधिकरणैतद्देशसंततिरियम्, एतत्कर्माधारसंततिरियम्, एतदनुभवाधारसंततिरियम्, एतत्कार्पासबीजसंततिरियमिति दृष्टान्तदार्ष्टान्तिकादिसर्वसंततिव्यवस्थापकाभावादित्यर्थः ॥ २९ ॥

सर्वं क्षणिकमित्येतत्प्रत्यनीकतया एकमपि क्षणिकं नावश्यकमिति निरूपणप्रसक्तये अन्यविधानुमानदूषणमप्यारभ्यते मेयत्वाद्यैरिति । मेयत्वात् वस्तुत्वात् विषयत्वादित्येवं क्षणिकत्वे हेतवः । मितिविषयत्वाद्यपेक्षया लघुत्वात् विषयत्वं हेतुरन्ते । दृष्टान्तस्य जगदन्तर्गतस्य पक्षत्वव्यावृत्तये विगीतमिति विशेषणम् । विप्रतिपन्नमित्यर्थः । क्षणोपाधिवदिति । अखण्डे काले क्षणत्वाद्युपपादनं वस्तुस्थैर्यवादिना उपाधिमादायैव वक्तव्यम् । न हि क्षणाधिककालस्थायिनः क्षणोपाधित्वं भवेत् । अतस्तस्य क्षणत्वमविगीतमिति शंकितुर्भावः। एवं सर्वं क्षणिकमिति चेत्—प्रत्यभिज्ञादिना बाधः इति क्षणोपाधौ क्षणिकत्वनिषेधेन दृष्टान्तहानिमुपपादयति स्थिर इत्यादिना । तमुपाधिं दर्शयति सामग्रीति। घटप्रागभावविशिष्टो घटकारणकलापः एकः क्षणोपाधिः। प्रतिक्षणमेकस्याः सामग्र्याः सुलभत्वात् न क्षणनिरूपणक्लेशः । कार्यप्रागभावस्यापि सामग्र्यन्तर्भावस्पष्टीकरणाय कार्यशून्येत्युक्तम् । सामग्रीशब्दार्थमाह इयमपि तद्धेतुसंघ इति । एकैकस्यापि हेतोः स्थिरत्वे कथं हेतुसंघस्य क्षणोपाधित्वमित्यत्राह नचेति । हेतुसंघोऽसौ न प्रत्येकहेतुः, नापि हेतुमिथस्संबन्धमात्रम्; किं तु ते एकविशिष्टापररूपाः । यथा मृद्विशिष्टचक्रविशिष्टदण्डविशिष्टकुलालो घटसामग्रीत्येवं यावत्कारणघटनं कार्यम् । ते प्रत्येकं स्थिरा एव । अथापि स्थिरेऽपि संघे क्षणोपाधित्वमस्ति । एकविशिष्टापररूपेण तद्ग्रहणे तस्य घटोत्पत्तिप्राक्क्षणमात्र एव सुवचत्वात् । क्रमवदुपाधिवदिति । यथा क्रमविशिष्टोपाधौ क्षणोपाधित्वं तथेत्यर्थः। यथा—क्रिया, ततो विभागः, ततः पूर्वसंयोगनाशः, तत उत्तरसंयोगः, ततः क्रियानाश इति क्रमे, क्रमवद्शब्दग्रहणेन क्षणोपाधिरुच्यते, विभागप्रागभावविशिष्टक्रिया, पूर्वसंयोगनाशप्रागभावविशिष्टविभागः, उत्तरसंयोगप्रागभावविशिष्टः पूर्वसंयोगनाशः, क्रियानाशप्रागभावविशिष्ट उत्तरसंयोग इत्येवम् । तत्रैकैकस्य स्थिरत्वेऽपि विशिष्टे क्षणोपाधित्वम्—तद्वत् सामग्रीस्थलेऽपीत्यर्थः । क्रमवदुपधिभिरिति पाठोऽप्यस्तीव । तदा क्रमिकैर्विशेषणैर्वैशिष्ट्यात् क्षणोपाधित्वमित्युक्तं भवति । एवं श्लोकार्थः। विकल्पार्हे—भेदवत्तया सुवचे । क्षणसंभवत्वं

विगीतं क्षणिकं मेयत्वात् सत्त्वात् भासमानत्वाद्वा । अत्र स्यादित्यनेनाक्षणिकतायामसत्त्वप्रसङ्ग सूच्यते । अर्थक्रियाकारित्वं हि सत्त्वम्; तच्च कुर्वत्क्षणस्यैवास्ति । अकुर्वत्क्षणस्य तु तदभावादसत्त्वं प्राप्तमिति । घटजलधरादौ दृष्टान्तिते साध्यवैकल्यं क्रमेण कथंचित् परिहर्तव्यम्, इह तु न तथेत्यभिप्रायेण क्षणोपाधिवचनम् । इतिरौचित्यादाकृष्य ।

अत्र बाधोक्ति साध्यविकल्पेन बहुधा भाव्या । तथा हि—क्षणिकत्वं नाम क्षणसंभवत्वं वा, क्षणकालसंबन्धित्व वा, क्षणमात्रवर्तित्वं वा, क्षणद्वयसंबन्धशून्यत्वं वा, क्षणकालत्वं वा, तदुपाधित्वं वा। नाद्य, सिद्धसाधनात्, स्थिरमपि [हि] तत्सामग्र्या क्षणे संभवतीति । न द्वितीय, तत एव । कालमेवा निच्छतस्ते कोऽसौ क्षणकाल? कश्च तत्संबन्ध.? तदभ्युपगमे सिद्धान्तबाध· । अत एव न तृतीयोऽपि, प्रत्यभिज्ञया च बाध· प्रागुक्त । न चतुर्थ, उक्तबाधादेव; क्षणेतरस्य तथात्वे खपुष्पवत् असत्त्वप्रसङ्गस्य दुर्वारत्वात् । त्वन्मते च खपुष्पनिदर्शनेन प्रसञ्जन युक्तम् । एवमपि हि ग्रन्थ—"तस्माद्वैधर्म्यदृष्टान्ते नेष्टोऽवश्यमिहाश्रय । तदभावे च तन्नेति वचनादेव तद्गते ॥" इति । अन्येऽपि केचिदाहु—"यस्मिन्नित्यता नास्ति कार्यतांऽपि न विद्यते । तस्मिन् यथा खपुष्पादाविति शक्यं हि भाषितुम् ॥" इति ।

---

ஓவள— पूर्ववाक्येऽप्यन्वयः आकर्षः। पूर्ववाक्ये विद्यमानस्योपरितनवाक्येऽन्वयोऽनुषङ्गः। पूर्वापरवाक्ययोरविद्यमानस्यान्वयोऽध्याहारः। बाधोक्तिः साध्यविकल्पेन बहुधा भाव्येति सिद्धस्थलेऽपि अनुमितेरसम्भवात् बाधोक्तिरविरुद्धेति भावः । यद्वा, विकल्पेषु बाधकस्य प्राथिकत्वात् बाधोक्ति· तत एवेति । स्थिरस्यापि क्षणसंबन्धस्याङ्गीकारेण सिद्धसाधनादेवेत्यर्थः। उक्तबाधादिति । प्रत्यभिज्ञया बाधादित्यर्थः । क्षणेतरस्येति । वस्तुभिन्नत्वस्येत्यर्थः। तथात्व इति । क्षणद्वयसंबन्धशून्यत्वशब्दार्थत्वे इत्यर्थः । तस्मादिति . । इहेति । विगीतं क्षणिकं मेयत्वात् इत्यनुमाने इत्यर्थ· । आश्रयशब्देन खपुष्पादिकमुच्यते । साध्याभावहेत्वभावाश्रयत्वेनाभिमतत्वात् । वैधर्म्यदृष्टान्तेनेति । व्यतिरेकदृष्टान्तत्वेनेत्यर्थः । यद्वा, वैधर्म्यदृष्टान्ते आश्रयसद्भावो नेष्ट इत्यर्थः। तुच्छस्य बाधकाभावात् कथं तस्य दृष्टान्तत्वेनोपादानमित्यत्राह तदभाव इति । तुच्छस्य खपुष्पादेरसत्त्वेऽपि तुच्छत्वं नास्तीति बाधयादेव तुच्छस्य प्रतीतेरित्यर्थः । अनित्यता नास्तीति । नाशप्रतियोगित्व

ளீ— क्षणे एकस्मिन् संभवः उत्पत्तिर्यस्य तत्त्वम् । क्षणमात्रवर्तित्वं खपुष्पादौ न, क्षणद्वयसंबन्धशून्यत्वं तु तत्रापीति विशेषः । अनिच्छत इति । कालातिरिक्तस्य क्षणपदग्राह्यत्ववारणार्थं हि कालपदम् । तेन विवक्षणीयं वस्तु किमिति भाव. । सिद्धान्तबाध—अपसिद्धान्त· । क्षणेतरस्येति । पक्षस्य जगत· कालातिरिक्तत्वात् क्षणत्वं न भवति । अत· क्षणेतरत्वमेव । एवञ्च जगत् क्षणद्वयसंबन्ध शून्यं सत्त्वादित्यनुमेयस्य धर्मस्य क्षणेतरत्वसाहित्ये, यदि क्षणेतरत् भूत्वा क्षणद्वयसंबन्धशून्यं स्यात् असत् स्यादित्यापादनात् व्याप्तिभंग इत्यर्थ. । तत्र दृष्टान्त खपुष्पम् । व्यतिरेकदृष्टान्ताभावेऽपि न क्षतिरिति च तन्मतानुसारेणाह एवमपीति । वैधर्म्यदृष्टान्ते इति व्यतिरेकव्याप्तिनिरूपणे इति यावत् । वैधर्म्यदृष्टान्त इति प्रथमान्तपाठः श्रेयान् । वैधर्म्यदृष्टान्तरूपाश्रयो नापेक्षित इत्यर्थ. । तद्गतेः—व्यतिरेकव्याप्त्यवगमात् । शून्यवादिना अधिकरणं विनैवाभाववचनात् तद्वासनावशात् तैरेतदुक्ति· । वस्तुत· खपुष्पस्य दृष्टान्तत्वमस्तीति प्रागुक्तम्, तत्र कुमारिलमपि प्रमाणयन् तत्कारिका-(श्लोकवा-निरा-१२३)माह अन्येपीत्यादिना । कारिकाया तस्मिन्निति पदं पूर्वार्धेऽन्वेति ।

न पञ्चमः, तद्देशतद्वर्तिनोरिव कालतद्वर्तिनोरैक्यस्य प्रत्यक्षेण बाधात् । तत एव न षष्ठः ; यदा हि घटादयः स्वरूपेण क्षणोपाधयः स्युः, कालतारतम्यधी. कुत्रापि न भवेत् । तथा च स्थिरशङ्काया एवानुदयात् निर्विषयमनुमानं स्यात् । सर्वस्य च त्रिलोकस्य स्वप्रयोजनेच्छया हि प्रवृत्तिः । सा फलार्थिनः फलिनश्च भेदे बाध्यते ।

श्लो न च त्वमपि कृत्येषु निरन्वयविनाशवत् । मत्सन्तानसमृद्ध्यर्थमिति मत्वा प्रवर्तसे ॥

तदिह स्वाभिप्रायादिबाधश्च । आत्मदृष्टान्तेन च प्रत्यनुमानबाधः । तत्र साध्यवैकल्यं च घटादीन्निदर्शयद्भिः युष्माभिरिव क्रमात् प्रशमनीयम् । अस्ति च सोऽहमिति प्रत्यभिज्ञयाऽस्माकं तत्सिद्धिः ॥ आलयविज्ञानसन्ततिविषयेयमिति चेत्, इदमपि परिभाषामात्रम्, प्रमाणाभावात् । "नान्यदृष्टं स्मरत्यन्यः" इति परिभाषाया निर्बाधत्वाच्च । निरर्थकं चेदमालयविज्ञानसन्ततिकल्पनम् ; तस्य प्रवृत्तिविज्ञानेन सह सर्वप्रकारसंबन्धायोगादिति ।

अथ क्षणोपाधिवदित्युक्तं प्रतिवक्ति **दृष्टान्तहानिरिति** । अक्षणिकत्वे कथं क्षणोपाधिरित्यत्र गूढाभिप्राय आह **सामग्रीति** । **कार्यशून्या**—कार्यप्रागभावसमन्वितेत्यर्थ । **क्षणः** क्षणोपाधिरिति यावत् । तथाऽपि तस्य क्षणिकत्वं न प्रतिक्षिप्तमित्यत्राह **इयमपीति** । ननु हेतूनां संघोऽपि हेत्वनति-

---

[illegible]—नास्तीत्यर्थः। कालतारतम्यधीरिति। सर्वस्यापि क्षणोपाधित्वेन अधिककालोपाधेरभावात् दिनपक्षमासादिकालतारतम्यधीः सर्वसिद्धा न स्यादित्यर्थः। प्रत्यनुमानबाध इति। प्रत्यनुमानेन क्षणिकत्वबाध इत्यर्थः। प्रत्यनुमानं च—विगीतम् अक्षणिकम्, प्रमेयत्वात् आत्मवदिति। प्रत्यनुमानस्य क्षणिकत्वसाधकस्य बाध इति वाऽर्थः। प्रशमनीयमिति। स्वप्रवृत्तिविरोधादिना अस्माभिः प्रशमनीयमिति भावः। आलयविज्ञानेति। बाह्यमते आत्मस्वरूपसन्तानेऽन्तःकरणवृत्तिसन्ताने च आलयविज्ञानसन्ततिश्चित्तविज्ञानसन्ततिरिति च प्रसिद्धिः। परिभाषा ऐतिह्यवचनम्। निरर्थकमिति। ज्ञानामीति ज्ञातृत्वसिद्ध्यर्थं हि आलयविज्ञानकल्पनम् वृत्तिज्ञानस्य चित्तनिष्ठत्वात् वृत्तिरूपज्ञानोत्पत्तिकाले आलयविज्ञानस्य नाशात् समकालीनस्य च तस्योपादानत्वाभावेनाश्रयत्वानुपपत्तेः तस्य चित्तनिष्ठवृत्तिज्ञानेन सह संयोगसमवायतादात्म्यानुपपत्तेश्च

[illegible]— ननु सर्वस्य स्थिरशंकारहितत्वे जितमस्माभिरित्यत्र आत्मदृष्टान्तेन स्थिरत्वं वक्ष्यन् आत्मनां स्थिरत्वमुपपादयति सर्वस्य चेति। ननु न स्वार्थं प्रवृत्तिः किं तु स्वसंतानसमृद्ध्यर्थम्, वृक्षाङ्कुरार्थप्रवृत्तवर्षिष्ठपुरुषवदित्यत्राह न चेति। तथा चात्मदृष्टान्तेन सर्वं अक्षणिकं सत्त्वात् आत्मवदिति प्रतिकोट्यनुमानात् त्वदीयानुमानस्य क्षणोपाधिदूषणेन दृष्टान्तरहितत्वात् बाध इत्यर्थः। साध्यवैकल्यम्—आत्मरूपदृष्टान्ते अक्षणिकत्वरूपस्थिरत्ववैकल्यं प्रशमनीयमस्माभिः; यथा सर्वं क्षणिकं सत्त्वात् घटजलधरादिवदित्यत्र युष्माभिरसत्कृतसाध्यवैकल्यशंका परिह्रियते तद्वदित्यर्थः। स्वकर्तव्यः प्रशमनप्रकार उक्तः। उपरि चाह अस्ति चेति। इदमपि—आलयत्वाभिमताहमर्थभूतविज्ञानस्य सन्ततित्ववचनमपीत्यर्थः। नान्येति। देहस्यात्मत्वे बाल्ययौवनादिदेहभेदात् नान्यदृष्टं स्मरत्यन्य इत्यनुभवात् बाल्येऽनुभूतं न यौवने स्मर्येत। न च तदेकं भूतम्, देहस्योपचयापचयभेदादपक्रमादित्युक्तमुदयनाचार्यैः। एवं देहातिरिक्तात्मवादी क्षणिकज्ञानसंततिरूपात्मस्वीकारं कथं कुर्यात्। अतश्चार्वाकवच एव चारुः स्यादिति भावः। प्रवृत्तिविज्ञानं ज्ञानेच्छाप्रवृत्तिसुखदुःखादि।

रिक्तश्चेत्, तेषां भवत्पक्षे स्थिरत्वान्न क्षणोपाधित्वम्। अतिरिक्तोऽप्यक्षणिकः क्षणोपाधिर्न स्यादित्यत्राह **न चेति**। अयं भाव — संघशब्दो न संबन्धमात्रवाचकः, संबन्धशब्दपर्यायत्वाप्रसिद्धेः न च तत्संबन्धिस्वरूपवाचकः, प्रत्येकमप्रयोगात्। अतः केनचिदुपाधिना संगृहीतास्त एव संघशब्दार्थः। तत्र यदि त एव क्षणोपाधितया दृष्टान्तीक्रियन्ते, तथा सति **स्थिरास्त इति**॥ ननु तत्संहतिहेतुरुपाधिदृष्टान्तः स्यात्॥ मैवम्; न हि नः केवलनित्यात् केवलानित्याद्वा कस्यचिदपि कार्यस्योत्पत्तिः; किंतु तत्समुदायात्। तत्र नित्यांशे तावत् क्षणिकशङ्काऽपि नास्ति। अनित्येऽपि यतश्चिरोत्पन्नाद्धेतोः संघभावः, सोऽपि, स्थिरतरः। यस्तु चरमसहकारी, स च स्थिर एव सन् स्वकार्यप्रागभावोपहितरूपः कालमवच्छिन्दन् क्षणोपाधिरित्युच्यते, तदुपधानं च तस्य प्रत्यक्षादिसिद्धम्।

न चात्र क्षणिक किंचित् सिध्यति; अनवच्छिन्नस्य कालतत्त्वस्य कालपरिच्छेदलक्षणानित्यताऽभावात्

**श्लो** — क्रियादिश्च स्थिरोऽप्येवं क्षणोपाधिर्विशेषकैः। तत्प्रकर्षनिकर्षैस्तु तत्तत्कालप्रकल्पना॥

इयं तावत् सर्वलोकसाक्षिकी, क्षणकालावच्छेदकयोः प्रागूर्ध्वव्यापिनोरक्षणिकत्वात्, तदवच्छिन्नस्य कालस्य तु क्षणत्वादेव न क्षणिकत्वमिति वस्तुस्थिति। त्वत्पक्षे तु क्षणकालावच्छेदः क्षणोपाधिरसिद्धः

---

पु°— 'न चात्र क्षणिकं किञ्चित् सिद्ध्यति' इत्यस्यानन्तरं 'क्रियादिश्च' इत्यादिश्लोकः पठनीयः—लेखकदोषादन्यत्र लिखितः। इयं सर्वलोकसाक्षिकी इत्येतच्च वस्तुस्थितिरिति अस्मात् पूर्वं द्रष्टव्यम्। तत्रायमर्थः—कथं क्षणिकं किञ्चिन्न सिद्ध्यतीत्युच्यते, क्रियादिः क्षणोपाधिर्हि क्षणिकः सिद्ध्यतीत्याशङ्क्याह। क्रियादिरिति। तर्हि काल एव क्षणोपाधिरित्याशङ्क्य, स किमनवच्छिन्नः, उतावच्छिन्न इति विकल्पमभिप्रेत्यानवच्छिन्नपक्षं दूषयति—अनवच्छिन्नस्येति। अनित्याभावादित्यस्य न क्षणिकत्वमित्युत्तरेणान्वयः। अवच्छिन्नपक्षेऽवच्छेदकात् क्षणिकत्वमुक्तं स्मारयन् दूषयति—क्षणकालावच्छेदकयोरिति। अक्षणिकत्वात् स्थिरत्वादित्यर्थः। अतो न साध्याविशेषः। लोकसिद्धप्रकारेण दूषणमुक्त्वा पराभिमतप्रकारेणापि दूषयति त्वत्पक्ष इत्यादिना। कश्चित् क्षणशब्दवाच्य इति।

ठिप्पणी— ज्ञानवत्त्वाभावात् निरर्थकमिति भावः। केवलनित्यात् केवलानित्यादिति। आत्मकालेश्वरादिर्नित्यः, दण्डचक्रादिरनित्यः। चिरोत्पन्नाद्धेतोरिति। एकदेशकालरूपोपाधेरित्यर्थः। चरमः सहकारी अन्त्यतन्तुसंयोगादिः। नचात्रेत्यादि। अत्रायं वाक्यक्रमः—

"नचात्र क्षणिक किंचित् सिध्यति। क्रियादिश्च स्थिरोऽप्येवं क्षणोपाधिर्विशेषकैः।

श्री— उपाधिदृष्टान्तः स्यात्। उपाधेः क्षणिकत्वे तदुपाधिहेतुर्दृष्टान्तो भवतु। हेतोरक्षणिकत्वे कार्यस्याप्यक्षणिकत्वप्रसंगादित्यर्थः। परिहरति मैवमिति। सहकारिनिरपेक्षमेकस्मात् कारणात् कार्यजननमिच्छतो बौद्धस्य मते हि कारणस्थैर्ये कार्यजननावृत्तिशंका। कारणकलापे सति कार्यम्; सा च सामग्रीक्षणात्मा काले; तदन्तर्गतानि कारणानि स्थिराण्येवेति वदतोऽस्मान् प्रति नैवम्। सर्वस्थैर्येऽपि क्षणोपाधेरन्यथा निरूपणादिति भावः।

अनवच्छिन्नस्येत्यादि। अत्राऽऽनन्ददायिन्यतिरिक्तव्याख्याने पाठव्यवस्थापनमन्यथा। स्थितरीतौ विवक्षितोऽर्थ एवं स्यात्। अनवच्छिन्नं काल क्षणपदेन गृहीत्वा कस्यचित् क्षणिकत्वं दुर्वचम्। स्वयमनियतारहितस्य क्षणिकत्वरूपानित्यत्वानुपपादकत्वादित्याह अनवच्छिन्नस्येति। अनित्यताभावादित्यस्य, एवं क्षणोपाधिरित्यत्रान्वयः। कालस्वरूपस्यानित्यत्वाभावात् तत्स्वरूपमात्रे क्षणत्वस्य दुर्वचत्वात् एवं=पूर्वोक्तसामग्रीवदेव स्थिरः क्रियादिरपि क्षणोपाधिर्भवति। विशेषकैः मिथो

कालस्यैवाभावात्। न चासिद्धोऽपि साध्य ,स्वमतविरोधात्। यथाऽऽह "योऽपि तावत् परासिद्ध स्वय सिद्धोऽभिधीयते। भवेत् तत्र प्रतीकार स्ततोऽसिद्धे तु का क्रिया॥" इति॥ अनन्यावच्छेदार्थेन स्वरूपेणैव कश्चित् क्षणशब्दवाच्य इति चेत्, तर्हि क्षणभङ्गसाधनात्पूर्वमसिद्ध कथ दृष्टान्त स्यात्?

---

Comm— तत्प्रकर्षनिकर्षस्तु तत्तत्कालप्रकल्पना॥ इय तावत् सर्वलोकसाक्षिकी वस्तुस्थिति— अनवच्छिन्नस्य कालतत्त्वस्य कालपरिच्छेदलक्षणानित्यताभावात् क्षणकालावच्छेदकयो प्रागूर्ध्वव्यापिनोरक्षणिकत्वात्। तदवच्छिन्नस्य कालस्य तु क्षणत्वादेव न क्षणिकत्वम् इति"—

इति। व्यत्यासस्तु लेखकप्रमादकृत। क्रियादिरचेति। आदिशब्देन सतन्यमानदीपशब्दसंयोगविभागविशेषधारावाहिकज्ञानाना ग्रहणम्। चकारो भिन्नक्रम। अवधारणार्थ। अपिरपि भिन्नक्रम। एवम्—पूर्वोक्तप्रकारेण। क्रियादिरपि स्थिर एव सन्—तत्तत्कार्यप्रागभावसामग्र्यादिरूपविशेषणैरुपलक्षित सन् क्षणोपाधिरित्यर्थ। (?) गजावसायकसूर्यादिगतिषु चक्रभ्रमणादिषु च शैघ्र्यमान्द्यतारतम्यदर्शनात् उत्पादकविनाशकसामग्रीविलम्बतारतम्येन क्रियादे किञ्चित् किञ्चित्स्थूलसूक्ष्मकालसम्बन्धरूपस्थैर्यतारतम्यमस्तीति भाव। क्रियादे प्रकर्षनिकर्षे घटिकायामादिन्यूनाधिककालकल्पनेत्याह तत्प्रकर्षति। ननु किञ्चित् स्थिर वस्तु स्थिरान्तरेण विशिष्ट सत् क्षणोपाधिरित्युक्तम्, वैशिष्ट्य च द्रव्याद्रव्यादिप्रतियोगिकत्वात् सम्बन्धिस्वरूपमेवेत्यभिमतम्। सम्बन्धिनोश्च वैशिष्ट्यस्य स्थिरत्वे तदुपस्थितस्य विशिष्टस्यापि क्षणोपाधित्व न सभवति। अविशिष्टयोरिव तस्यापि स्थिरत्वाविशेषात् स्थिरस्यापि तस्य क्षणोपाधित्वाङ्गीकारे अविशिष्टस्यापि क्षणोपाधित्वप्रसङ्गेन विशेषणवैयर्थ्यात्। ततश्च वैशिष्ट्यरूपत्व (?) क्षणिकत्व(?)मिति वक्तव्यम्। तथाच स एव क्षणोपाधिर्दृष्टान्त इति चेन्न—तथापि, 'स्थिरयोरेव वैशिष्ट्य क्षणोपाधि इति वक्तव्यम्। अन्यस्य क्षणिकत्वस्यासभवात्। तथाच वैशिष्ट्यप्रतियोगिनि सम्बन्धिद्वये क्षणिकत्व साधकस्य प्रमेयत्वादेर्व्यभिचार। उक्तवैशिष्ट्यादन्यस्य दृष्टान्तत्वे सति दृष्टान्तहानिरिति तात्पर्यात्। स्वय सिद्ध , स्वस्य सिद्ध , स्वमतसिद्ध इत्यर्थ। अभिधीयते–दृष्टान्ततयेति शेष। प्रतीकार इति। युक्तिबलात् साध्यवैकल्यपरिहार इत्यर्थ। स्वतोऽसिद्धे तु का क्रियेति। स्वमतासिद्धे कथ साध्यवैकल्यप्रक्रियेत्यर्थ। अनन्यावच्छेदार्थनेति। अन्यावच्छेदकरूपार्थरहितेनेत्यर्थ। भवन्मतेऽपि क्षणोपाधित्व न सभवति, स्थूलकालस्यैव स्थिरावच्छिन्नत्वात्, क्षणमात्रावच्छेदकस्य क्षणिक वस्तुनोऽनङ्गीकारात्। तथाच क्षणकालो वक्तु न शक्य इत्याशङ्कया सर्वक्षणिकत्ववादिना त्वयाऽपि

श्री— व्यावर्तकैस्तत्प्रकर्षनिकर्षश्च क्षणातिरिक्ताखिलकल्पना। इय तावत् ईदृशकालभेदकल्पना सर्वलोकसाक्षिकीत्यर्थ। क्रिया क्रियातो विभाग इत्यादिप्रक्रिया प्रागुक्ता। ईदृशपरिच्छिन्नशब्दार्थसख्याधिक्यन्यूनभेदेन सवत्सरमासादिकल्पनेति। सर्वस्याक्षणिकत्वमुपसहरति क्षणकालेति। इयमित्यादि वस्तुस्थितिरित्यन्तमेकमेव वाक्य वा सर्वस्य क्षणत्व वा क्षणिकत्व वा न भवति। काले क्षणिकत्वाभावात्, वस्तुनि क्षणोपाधित्वेऽपि क्षणत्वाभावात् प्रत्येक क्षणिकत्वविरोधि स्थिरत्वप्रमाणाचेत्याह इय तावदिति। इयमित्यस्य वस्तुस्थितिरिति विशेष्यम्। स्वमतविरोधात्— अपसिद्धान्तात्। योऽपीति। परमतासिद्ध स्वमतमात्रसिद्ध गृहीत्वा स्वगोष्ठ्या व्यवहार क्रियेत। स्वमतेऽप्यसिद्धमादाय केनापि सह व्यवहारो न युक्त इत्यर्थ। सिद्धान्ते काल क्षणरूपेण परिणमतीति किञ्चिद्विशेषणविशेष्यरूपोपाधि विनैव स्वरूपेणैव क्षणो निरूप्यते। तथा त्वया वक्तुमशक्य मित्याह क्षणभगसाधनात् पूर्वस्य क्षणे क्षणे भग वादा इत्येव भूतक्षणभगे सिद्धे किन्तु क्षणो दृष्टन्त

श्लो— उत्तरप्रागभावाप्तपूर्वध्वंसैककालतः । मध्यमक्षणताद्दक्त्वं व्यवस्थाप्यं त्वयाऽप्यतः ॥

ननु क्षणक्षरणस्वभावा प्रकृतिरिति हि भवत्सिद्धान्तः । अत्र प्रतिक्षणमुदयविलयिनो विकाराः क्षणिका एवेति तद्दृष्टान्तेनान्येषा युष्माभिः 'किं नानुमीयत इति चेत्—अशक्यत्वादयं सुहृदुपदेशस्त्यज्यते । सर्वक्षणिकत्वं साधयितुमुपक्रम्य स्थिरद्रव्यवृत्तिक्षणिकविकारवदिति कथं दृष्टान्तयेम? । तेषु च न त्वदभिमतं क्षणिकत्वम्, प्रदीपादिवदाशुतरविनाशित्वमात्रेण क्षणिकोक्तेः । तदेतदभिप्रेत्याह **क्रमवदिति** । क्षणत्वं—क्षणोपाधित्वमित्यर्थ .

श्लो— द्वयोरयुगपद्दृष्टिर्युगपच्च यथायथम् । अशक्यापह्नवा तस्मादसदुक्तैव पद्धतिः ॥ ३० ॥

(इति क्षणभंगसाधकनिरासः; क्षणिकवस्तुभंगः)

—:*—:—

(अथ निरन्वयनाशनिदर्शननिरासः)

---

ப்ரு— स एव क्षणिकः क्षणोपाधिरिति भावः । उत्तरप्रागभावसंसृष्टपूर्वध्वंसतुल्यकालतया मध्यमक्षणस्य क्षणिकत्वं त्वयाऽङ्गीकार्यम्, तथाऽस्माभिः क्षणोपाधिरुच्यत इत्यभिप्रायेणाह उत्तरेति । क्रमवतामुपाधीनां यौगपद्यानुपपत्तेः कथं क्षणोपाधित्वमित्यत आह द्वयोरिति ॥ ३० ॥

ஸெளா— क्षणकालोऽवश्यमभ्युपगन्तव्यः । अन्यथा क्षणमात्रसंबन्धित्वस्य क्षणिकत्वस्य साधनायोगात् । न च क्षणिकस्य घटादिस्वलक्षणस्य क्षणोपाधित्वं संभवति; क्षणकाले सिद्धे घटादेः क्षणिकत्वसिद्धिः, तत्सिद्धौ क्षणकालसिद्धिरिति अन्योन्याश्रयात् । तथाच यत्र पूर्ववस्तुविनाशानन्तरमेव उत्तरवस्तूत्पत्तिरुभयमतसिद्धा, तत्रोत्तरप्रागभावसंसृष्टपूर्वध्वंसावच्छिन्नकालतुल्यकालतया अन्यस्मिन् अपि स्थूलकाले मध्यमक्षणाः क्षणिकत्वेनाङ्गीकार्याः । त्वन्मते भावानामेव क्षणिकत्वात् अभावस्य तुच्छत्वेन स्थिरत्वात् प्रागभावसंसृष्टध्वंसः स्थिर एव सन् क्षणोपाधिरित्यभिमन्तव्यमिति बलादापाद्य, त्वदुक्तरीत्या अस्माभिरपि स्थिरस्यैव विशेषणविशिष्टवेषेण क्षणोपाधित्वमङ्गीक्रियत इत्यभिप्रायेण पूर्वोक्तं दृढीकरोति उत्तरप्रागभावेति ।

आशुतरविनाशित्वमात्रेणेति । अत्र दीपाश्रयस्य वर्त्यादिद्रव्यस्य काठिन्यमार्दवतारतम्यानुगुण्येन नाशकालतारतम्यात् दीपादेर्नाशकालतारतम्यमस्तीति भावः । मूलश्लोके 'क्रमवत्' इत्यादेरयमर्थः—क्रमवद्भिरुपाधिभिरुपलक्षिते स्थिरे प्रकृत्यादिद्रव्येऽपि क्षणोपाधित्वं संभवेदिति । ननु 'उपाधिभिः' इति बहुवचनेन क्रमिकबहुविकारविशिष्टस्य क्षणोपाधित्वमुक्तमिव भाति; तन्न संभवति; युगपत् क्रमिकविकारवैशिष्ट्यानुपपत्तेः; क्रमेण तद्वैशिष्ट्यस्य च स्थूलकालस्यैवोपाधित्वात् इत्यत आह द्वयोरिति । द्वयोरित्यनेकपरम् । दृष्टिरित्यनेन युगपदनेकविकारपरत्वं क्रमिकविकारपरत्वं च प्रमाणसिद्धमिति सूच्यते । सृष्ट्यनुगुणभगवत्संकल्पो वा दृष्टिः । सृष्टिरिति वा पाठः । युगपदनेकोत्पत्तौ तद्विशिष्टक्रमिकोत्पत्तौ तद्विशिष्टक्षणोपाधिः संभवतीति भावः ॥ ३० ॥

ஸ்ரீ— स्यात्, त्वया शाक्यानभ्युपगमादित्यर्थः । उत्तरप्रागभावेति । पूर्वदेशसंयोगः, तद्ध्वंसः, उत्तरदेशसंयोग इति क्रमे उत्तरसंयोगप्रागभावविशिष्टः पूर्वसंयोगध्वंसः क्षणोपाधिर्भवति । पूर्वं ध्वंसाभावात् । पश्चात् प्रागभावाभावात् । स्वपक्षे अस्य दृष्टान्तत्वासंभवात् युष्माभिरिति प्रयुङ्क्ते । तदनुसारेण चोपरि दृष्टान्तयेमेत्युत्तमपुरुषः । तेषु—प्रकृतिविकारेषु । द्वयोरिति । एकैकमपि वस्तु वस्त्वन्येन वस्तुना सहापि दृश्यते, पृथगपि, अतोऽनेककालस्थितत्वं सर्वत्रेत्यर्थः ॥ ३० ॥

दीपादीनां कदाचित् सदृशविसदृशाशेषसन्तत्यपेते
ध्वंसे दृष्टेऽप्यशक्या तदितरविषयेऽनन्वयध्वंसक्लृप्तिः ।
बाधादेर्दर्शितत्वात् अपि च दृढमिते सान्वयेऽस्मिन् घटादौ
दुर्दर्शावस्थया स्युः पयसि लवणवत् लीनदीपादिभागाः ॥ ३१ ॥

इह च **प्रतिसंख्याप्रतिसंख्यानिरोधयोः** निरन्वयविनाशत्वे परोक्तं निदर्शनं दूषयति **दीपादीनामिति** । आदिशब्देन क्षणरुचिबुद्बुदादिसंग्रहः ।

---

*श्रु*— दीपादीनामिति । प्रतिसंख्याप्रतिसंख्यानिरोधयोरिति । प्रतिसंख्याशब्देनोपलब्धिवाचिना तद्योग्यं लक्ष्यते । उपलब्धियोग्यो निरोधः प्रतिसंख्यानिरोधः । तदयोग्यस्त्वप्रतिसंख्यानिरोधः, तयोरित्यर्थः ॥ ३१ ॥

*आ*— "प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात्" इति सूत्रार्थं मनसिकृत्य निरन्वयविनाशं निरस्यन् अक्षणिकत्वं पुनः स्थापयति दीपेति । उत्पत्तिर्विनाशश्चावस्थाविशेषौ ; सर्वदा द्रव्यमनुवर्तते ; अतो न निरन्वयनाश इति सिद्धान्तः । तार्किकाः मुद्गरादिना घटादिसंस्थानस्येव द्रव्यस्यापि नाशमिच्छन्ति । बौद्धास्तु तथा घटादिनाशवत् प्रतिक्षणमपि घटद्रव्यनाशोऽस्ति सर्वस्य क्षणिकत्वात् । परंतु तस्यास्फुटत्वादनुमेयत्वम् । तत्र तार्किकादिसंमतस्य प्रतिसंख्यानिरोध इति नाम । प्रतिक्षणभाविनो नाशस्य चाप्रतिसंख्यानिरोध इति । उभयोऽपि निरन्वय एव । अत एव निरन्वयविनाशः प्रतिसंख्यानिरोधः, सान्वयनाशः अप्रतिसंख्यानिरोधः इति आ. दा. उक्तं न युक्तम् । मूलविरोधात् । प्रतिसंख्यादिशब्दार्थस्तु—संख्या घटादिबुद्धिः तत्प्रतिभटो नाशः ; प्रतिसंख्यानिरोधः । मुद्गरादिनाशे ततः घट इति धियोऽनुदयात् । अनुमानतः प्रतिक्षणनाशस्थापने घट इति धियोऽनुवृत्त्या अन्योऽप्रतिसंख्यानिरोध इति । यद्वा नास्तीति प्रतिकूलबुद्धिविषयो नाशः, तथा प्रत्यक्षाविषयो नाश इत्यादिरीत्याऽप्यर्थो भाष्यव्याख्याने द्रष्टव्यः। अस्मन्मते दीपादेः प्रतिक्षणविनाश इष्टः । परं तु तेजसोऽवस्थान्तरापत्तिरेवेति न नाशस्य निरन्वयत्वम् । बौद्धस्तु दीपे अन्तिमदीपज्वालानन्तरं सर्वथा दीपानुपलम्भात् निरन्वयविनाशोऽस्त्येष्टव्य इति कृत्वा, तद्वत् प्रतिक्षणमपि तैलांशवर्त्यंशादिसामग्रीभेदायत्तायां विभिन्नायां दीपज्वालायामेकदीपद्रव्यानुवृत्तेरसदनिष्टत्वञ्च विमृश्य अन्तिमज्वालानां नाशस्येव सर्वस्य निरन्वयनाशत्वं स्थापयन् ईदृशदीपज्वालादिनाशदृष्टान्तेन घटादिनाशेऽपि द्विविधे निरन्वयनाशत्वं स्थापयति । तत्र दृष्टान्ते निरन्वयनाशमभ्युपगम्यापि दूषणं प्रथममाह । दीपस्य सदृशसंतत्युपेत एव ध्वंसः उत्तरोत्तरज्वालाकाले ; न त्वपेतः । घटादेर्नाशे कपालचूर्णादिभावे विसदृशसंतत्युपेतो ध्वंसः, न त्वपेतः । कदाचित्—दीपनिर्वाणकाले दीपनाशः सदृशसंतत्युपेतो वा विसदृशसंतत्युपेतो वा न भवति । अतो निरन्वयत्वमनपलप्यमिति । निरस्यति बाधादेरिति । पिण्डत्वघटत्वकपालत्वचूर्णत्वावस्थाभेदेऽपि तदेवेदमिति द्रव्यैक्यप्रत्यभिज्ञया निरन्वयत्वबाधः । अप्रतिसंख्यानिरोधे निरन्वयत्वस्थापने चाश्रयासिद्धिः । सा चासिद्धिः क्षणभेदेऽपि सोऽयमिति प्रत्यभिज्ञाबलात् सिद्धा । अथ दीपदृष्टान्तमपि निरस्यति तत्रापि निरन्वयनाशानभ्युपगमेन अपि चेति । घटादौ नाशे सान्वयत्वेन दृढं मिते सति दीपादिनाशेऽपि तदनुमानात् दीपलयकालेऽपि दीपद्रव्यमस्त्येव, परंतु द्रष्टुमशक्यामवस्थां प्राप्य । जलस्य बाष्पभावे, तेजस एव निदाघे ऊष्मभावे तादृशावस्थाया इष्टत्वात् । तथा जले क्षिप्तो लवणखण्डोऽपि न दृश्यते । श्रुतिदर्शितश्चायं दृष्टान्तः। न च तादृशावस्थाऽपह्नोतुं शक्या; आचमने लवणरसग्रहणादिति श्लोकार्थः।

स निरन्वयनाशः स्यात् धर्मो धर्म्यपि वा पुन । पूर्वसंघातभागो वा यद्भावे नानुवर्तते ॥
उत्पत्तिश्च तथाभूता निरन्वयसमुद्भवा(वः?) । तावुभौ सर्वभावानां नियताविति सौगताः ॥

यो विनाशः स निरन्वयः, यथा अन्त्यदीपस्य । अस्ति च विनाशो जातानाम्; अतः सोऽपि निरन्वय इति निरन्वयध्वंसव्याप्तिर्न शक्या । तदुपपादयति **बाधादेरिति ।** प्रत्यभिज्ञाबाधस्य पक्षत्वाद्यनुपपत्तीनां च दर्शितत्वात् । विपरिवर्तश्च युक्त इत्याह **अपि चेति ।** अन्त्यदीपविनाशः सान्वयः विनाशत्वात् घटादिविनाशवत् ॥ साध्यविकलो दृष्टान्त इति चेन्न; सङ्घातांशानां वा गन्धादिधर्माणां वा श्याम-रक्तादिधर्मिणां वा यथासंभवमनुवृत्तेर्दृष्टोपलब्धत्वात् । प्रत्यक्षबाधपरिहाराय **दुर्दर्शावस्थत्वोक्तिः । स्थु-**रित्यनेन दृश्यत्वावस्थानिवृत्तावपि स्वरूपसत्त्वं सूच्यते ॥ ननु **पयसि लवणवदित्ययुक्तम्;** तत्रापि निरन्वय विनाशात् ॥ तन्न; रसेन सूक्ष्मावयवानुमानात् ॥ दीपावयवेषु लिङ्गमपि नास्तीति चेन्न; दीपोर्ध्व-देशिनां किञ्चिदौष्ण्योपलब्ध्या दीपावयवसंक्रान्तेः सुगमत्वात् । प्रभूतदीपपार्श्ववर्तिनां च तापस्वेदादिस्तत एव । एवमन्त्यदीपनाशेऽप्यदृश्यावयवविसर्पः सिद्धः । अतो दिनष्टदीपभागानुपलब्धेरदृश्यावस्था-नियन्धनत्वात् अनन्यथासिद्धप्रत्यक्षसिद्धः सान्वयविनाशदृष्टान्त एव साधीयान् । अन्त्यदीपादेश्च यदि न किञ्चिदुपादेयम्, ततोऽर्थक्रियाविरहादसत्त्वं स्यात् ॥ बुद्ध्यादिरर्थक्रियाऽस्त्विति चेन्न; तस्यानियतत्वात् ॥ विनाशस्तर्ह्यर्थक्रियाऽस्त्विति चेन्न; तस्य ते तुच्छत्वात् । ध्रुवभावित्वेन अहेतुकत्वाभ्युपगमाच्च । एव-मन्त्यदीपासत्त्वे च तत्कारणपरम्पराया अपि तथात्वं स्यादिति ॥ ३१ ॥ इति क्षणभङ्गनिरासः ॥

---

Q.ஸ்ரீ — यद्भावे-यस्मिन् वस्तुनीत्यर्थः । स भावो निरन्वयनाशः स्यादित्यन्वयः । निरन्वयो नाशो यस्येति बहुव्रीहिः । स्यात्—सर्ववादिसिद्धो भवेदित्यर्थः । तथाभूतेति । धर्मधर्मिपूर्वसंघातानु-वृत्तिरहितेत्यर्थः । निरन्वयसमुद्भवेति । सर्ववादिसिद्धेति शेषः । यो विनाश इति । विमत इति शेषः । यदि न किञ्चिदुपादेयमिति । अन्त्यदीपोपादानकत्वं किञ्चिदपि यदि नेत्यर्थः ॥ ३१ ॥

ஸ்ரீ— क्षणरुचिः—विद्युत् । निरन्वयविनाशादिपदस्य सौगतोक्तमर्थमाह स इति । यद्भावे—यस्य विनाशस्य सत्वे वस्तुनि पूर्ववस्तुनो धर्मो वा धर्मि वा तदेकदेशो वा नानुवर्तते, सः धर्मा-द्यन्वयरहितो विनाश इत्याशयेन निरन्वयविनाश इत्युच्यते । घटस्य कपालचूर्णादिभावे किञ्चिदं-शानुवृत्तिरपि नेष्यते; क्षणिकत्वात् । तदिदं घटसंतत्यन्तर्गतनाशेष्वपि तुल्यम् । आ-दा. तु यद्भावे-नेति एकपदं कृत्वा धर्मादिर्येत्स्वरूपेणानुवर्तते, तन्न, कुतः, स निरन्वयविनाशः स्यादिति यद्भ्या-हारेण व्याख्याति । तथा भूता—धर्मधर्मितदेकदेशानुवृत्तिरहिता । अस्मन्मते द्रव्यरूपधर्म्यनुवृत्तिः सर्वत्र नियता । धर्मानुवृत्तिरपि पाकादिना रूपादिपरावृत्त्यभावे । भागानुवृत्तिश्च बाल्ययुवादि-शरीरसंततौ दृष्टा । लीनदीपादिभागसत्त्वमभ्युपगमयति दीपोर्ध्वेत्यादिना । तदनंगीकारे बौद्धस्या-निष्टमप्याह अन्त्यदीपादेश्चेति । अस्त्वन्त्यदीपासत्त्वमित्यत्राह एवमिति । अन्त्यदीपमादायैवोपान्त्य-स्यार्थक्रियाकारित्वरूपं सत्त्वं वाच्यम्, तदसत्त्वे तद्भावः-असत्त्वमेवोपान्त्यस्य; एवं पूर्वपूर्वस्या-पीति सर्वासत्त्वापत्ति ॥

अवसितं क्षणभङ्गवादिबौद्धमतनिरसनम् ॥ ३१ ॥

आलक्ष्य काठिन्यमनेक एवं श्लोकस्य वृत्तेर्विवृतास्तु भागाः ।
चार्वाकपक्षात् इत इत्यनेऽथ मारभ्यतः संप्रद एव भूम्ना ॥

(कार्यकारणभावापलापिचार्वाकभंगः)

सत्त्वेऽसत्त्वेऽपि पूर्वं किमपि गगनवत्पुष्पवन्नैव साध्यं
हेतुप्राप्तिर्न पश्चाद्भवितुः, अघटितोत्पादनेऽतिप्रसङ्गः ।
जन्यं जन्मान्यथा वा, द्वयमसत् अनवस्थानकार्यक्षतिभ्याम्
इत्याद्यैर्हेतुसाध्यं न किमपि यदि—न, स्वक्रियादेर्विरोधात् ॥ ३२ ॥

ननु साध्यसाधन(हेतुसाध्य)भावे सिद्धे हि प्रस्तुतं पक्षचतुष्टयं सिध्येत् ; स एव नास्तीति चार्वाक उत्तिष्ठते(?) सत्त्वेऽसत्त्व इति॥ (1) यदि कार्यं कारकव्यापारात्पूर्वमस्ति, तदा पूर्वसिद्धगगनादिवत् किमपि न कार्यं स्यात् । अथ तदा नास्ति, तदापि खपुष्पवन्न कार्यम् ; न चासतः सत्त्वापादानसंभवः। न हि नीलं शिल्पिसहस्रेणापि सितीकर्तुं शक्यमिति । (2) कार्यं च कारणेन सह, पूर्वम्, पश्चाद्वा जायते । आद्ये, किं कस्य कारणं कार्यं वा स्यात । द्वितीयेऽपि, ततः पूर्वस्य कथं तज्जन्यत्वम् ? वैपरीत्यापातश्च, लोकव्यवहारानुरोधात् । तृतीये, हेतुः स्वेन प्राप्तं साधयेत्, अप्राप्तं वा । आद्ये प्राप्तत्वादेव पूर्वसिद्धेर्न साध्यत्वम् । न चोत्तरकालीनस्य पूर्वकालीनेन प्राप्तिः, उभयस्वरूपसिद्ध्यपेक्षत्वात् तस्याः। तदिदमाह हेतुप्राप्तिरिति द्वितीयमपि दूषयति अघटितेति । अप्राप्तोत्पादने सर्वस्मात् सर्वमुत्पद्येत ; प्रकारद्वयमप्राप्य

---

Gloss— पक्षचतुष्टयमिति । अर्धवैनाशिकपक्षः, सिद्धान्तिपक्षः, सांख्यपक्षः, बौद्धपक्षश्चेति ।
ननु कार्यकारणभावमनभ्युपगच्छता कार्येण कारणोत्पत्त्यापादनमनुपपन्नमित्यत्राह लोकेति ।

श्री— अथ सर्वमाकस्मिकम्, स्वभावत एव भवति, न किञ्चित् कारणं कार्यं वेति चार्वाकवादो निरस्यते । पक्षचतुष्टयमिति । द्रव्यमनुवृत्तमेकम् ; भिन्नभिन्नावस्थामपूर्वामादाय कार्यकारणभाव इति स्वपक्षः, अवयवद्रव्यादितोऽवयविद्रव्याद्युत्पत्तिरिति कार्यकारणभावस्तार्किकस्य, स्थितस्य सर्वस्याभिव्यक्तिरेव कार्यत्वमिति सांख्यस्य, प्रतिक्षणं द्रव्यभेदात् पूर्वमुत्तरस्य कारणमिति बौद्धस्येति पक्षचतुष्टयम् । सत्त्व इत्यादिश्लोके चतुर्थपादे किमपीत्यन्तं चार्वाकपक्षोक्तिः, यदीत्यादिना तन्निरासः। पादत्रयेणांशत्रयं तेन विकल्प्य निरस्यते । कार्यत्वाभिमतं किमपि पूर्वमेव सद्वा असद्वा । पूर्वमेव सत्त्वे तन्न साध्यं—कार्यं गगनवत् । [चार्वाकेण नित्यगगनद्रव्यानंगीकारेऽपि भूतान्तराभाव एव गगनमिति स्वीकारादभावस्याजन्यता । असन्मते गगनमनित्यम्, तदज्ञात्वैवमुक्तिः ।] पूर्वमसदिति द्वितीयपक्षे च तत्पुष्पवत्—गगनकुसुमवत् तुच्छत्वान्न साध्यं भवेत् । हेत्वित्यादि । हेतुः स्वप्राप्तं कार्यमुत्पादयति, अप्राप्तं वा । नाद्यः । पश्चाज्जायमानस्य पूर्वं कारणप्राप्तेर्दुर्वचत्वात् । अघटितस्य—अप्राप्तस्यैव कारणेनोत्पादनमिति चेत्—अप्राप्तत्वाविशेषात् मृत् घटमिव पटादिकमप्युत्पादयेदित्यतिप्रसंगः । जन्मेत्यादि । कार्यस्य यत् जन्म—उत्पत्तिः, सा जन्या वा अजन्या वा । द्वयमप्यसत् । पटस्य जन्म जन्यं चेत्, तज्जन्मजन्मापि जन्यम्, तज्जन्मजन्मजन्माप्येवमित्यनवस्था । अतो नाद्यः । प्रथमं जन्म अजन्यञ्चेत्, पटजन्म प्रागपि स्यात् ; तथा च पटोऽपि प्रागिति कार्यक्षतिः—कार्यत्वहानिः । इत्याद्यैरिति आद्यपदेन वक्ष्यमाणानां भिन्नाभिन्नत्व—किञ्चित्कराकिञ्चित्कर—कुर्वदकुर्वद्रूप—सव्यापारत्वनिर्व्यापारत्वादिविकल्पानां ग्रहणम् । न किमपीत्येतदनन्तरम्, इतिराकृष्टव्यः । तथा प्राक् ग्रन्थकृतैव श्लोकान्तरे उक्तत्वात् । इति यदि—इति चेत्—न तत् ; स्वक्रियादेर्विरोधात्—बुभुक्षाशान्त्यर्थभोजनादिप्रवृत्त्याद्यभावप्रसंगात् । स्वक्रियाव्याघाते दर्श्यमाने हि कुतर्क उपरमतीति ।

वा दीपः प्रकाशयेत् ; दाह्यमप्राप्य वा दहनो दहेत् । (3) पुनर्विकल्पान्तरेण विहतिमाह **जन्यमिति ।** घटः, जायत इत्येतौ तावन्न पर्यायौ ; सहप्रयोगात् ; यावद्विनाशम्, जायत इति प्रयोगप्रसङ्गाच्च । पटो जायत इति प्रयोगश्च न स्यात् ; घटपटशब्दयोरपर्यायत्वात् । अतः कार्यस्वरूपातिरिक्तं जन्म । तच्च जन्यमजन्यं वेति विकल्प्य द्वयमप्ययुक्तमित्याह **द्वयमसदिति ।** क्रमात् बाधकमाह **अनवस्थानकार्यक्षतिभ्यामिति** । जन्मनो जन्यत्वं हि जननकर्मतया । अतस्तस्यापि जन्म स्वीकर्तव्यम्, एवं तस्यापीत्यनवस्था । अजन्यत्वे (तु) तज्जन्मनोऽनादित्वात् तद्वतो घटादेरपि तथात्वं स्यात् । तथा च कार्यत्वक्षतिः स्यादिति । **आदि**शब्देन [2]भिन्नाभिन्नत्वादिविकल्पक्षोभसंग्रहः । हेतुश्च साध्यं च **हेतुसाध्यं ;** हेतुना साध्यं वा ।

ईदृशानां तर्काणां युक्ताङ्गहान्यादिकमभिप्रेत्याह **नेति ।** साधारणदुष्टत्वमाह **स्वक्रियादेरिति ।** इह तावत् अनिष्टकोटिभङ्गो न प्रत्याख्येयः । अन्यत्रैवमुत्तरगतिः — यदत्र पूर्वमसत्त्वे कार्यत्वं न स्यादिति तद्विरुद्धभाषितम् । प्रागसत्त्वविशेषितं सत्त्वमेव हि कार्यत्वम् । तत्र च प्रागसत्त्वे प्रागसत्त्वमेव न स्यादिति वा, तद्विशिष्टं न स्यादिति वा, सत्त्वमात्रं न स्यादिति वा प्रसङ्गार्थः स्यात् । तत्र न प्रथमः, कस्यापि स्वाभावेन व्याप्त्यभावात् । अन्यथा शून्यवाद एव स्यात् ; अनेकान्तवादो वा । न द्वितीयः, तदसत्त्व एव तद्विशिष्टसिद्धेः ; न हि विशेषणसत्त्वं विशिष्टविरोधि । न तृतीयः, असत्त्वस्य स्वकालसत्त्वेन विरोधग्रहणात्, अन्यथा देशान्तरसत्त्वेऽपि विरोधप्रसङ्गेन स एवान्त्यबौद्धपक्षः स्यात् ।

यत्तु पश्चाद्भाविनः कारणप्राप्तिर्नास्तीति, तत्र पौर्वापर्यनियमलक्षणा प्राप्तिर्दृष्टत्वादनिवार्या । संयोगादिलक्षणा तु मा भूत् ; अनङ्गत्वात् । ततश्च नातिप्रसङ्गः ; नियामकस्य सिद्धत्वात् । प्रकाश्य दाह्यादिषु च यथादर्शनं कारकाणां(णानां) मिथः प्राप्तिरेवाङ्गम् ; न तु कार्येण ज्ञानेन सह, भस्मादिना वा ।

यस्तु जन्मनो जन्यत्वाजन्यत्वविकल्पेनातिप्रसङ्ग उक्तः, नासावस्मत्पक्षे युक्तदोषः । न हि वयमभिव्यक्तिं वा कारणसमवायादिकं वा जन्मेति ब्रूमः, किन्तूपादानावस्थाविशेषम् । तस्य कार्यावस्थासामानाधिकरण्यव्यपदेशः तादात्म्येन (र्थ्येन) तदाश्रयवृत्तेः । एवं ध्वंसादिसामानाधिकरण्यमपि

---

[illegible]– सत्त्वेऽसत्त्वे चेति । हेतुसाध्यमित्यत्र द्वन्द्वसमासस्योभयपदार्थप्रधानतयाऽभ्यर्हितत्वादाह—हेतुश्चेति । एकवचनस्वारस्यादाह—हेतुनेति । किन्तूपादानावस्थाविशेषमिति । कारकव्यापारः कार्यस्योत्पत्तिरिति पक्षावलम्बनेनोक्तम् । तर्हि कथं घटो जात इति सामानाधिकरण्यमित्यत आह—तस्य कार्यावस्थेति । तादर्थ्येन तदाश्रयवृत्तेरिति । कार्यावस्थार्थत्वेन कार्यावस्थाश्रयद्रव्यवृत्तेरित्यर्थः । एवं ध्वंसादीति । ध्वस्तो घट इति सामानाधिकरण्यं तद्विरोध्यवस्थायास्तादृशवृत्तेरूह्यमित्यर्थः ।

[illegible]– जायत इत्यस्य घटपदतुल्यार्थत्वे यथा घटपदस्य कालविशेषमनपेक्ष्य प्रयोगः, तथा तस्यापि स्यादिति दूषणान्तरमाह—यावदिति । तुल्यार्थान्यपि पदानि प्रत्ययार्थभेदेन प्रतिनियतप्रयोगविषयाणि भवन्ति । यथा भवत्यभवद्भविष्यतीत्यादीनि । तथा च जायत इत्यस्य घटपदतुल्यार्थत्वेऽपि यथाऽतीते विषये घटपदं प्रयुज्यते—तथाऽस्य तत्र प्रयोगो बाधितः, वर्तमानार्थप्रत्ययान्तत्वात् इत्यभिप्रायेण यावद्विनाशमित्युक्तम् । अन्यत्र—इष्टकोटिभङ्गे । पौर्वापर्यनियमलक्षणा प्राप्तिरिति ।

वी— तादर्थ्येन तदाश्रयवृत्तेरिति पाठे उपादानावस्थाविशेषस्य कार्यावस्थाविशेषाश्रये तादर्थ्येन—कार्यावस्थोद्देशेन वर्तमानत्वादित्यर्थः । तादात्म्येनेति पाठे सामानाधिकरण्यव्यपदेशः पदद्वयार्थयोः

यथायथ(यथार्ह)मूह्यम् । ईदृशस्य जन्मन उपादानावस्थान्तरसाध्यत्वे कारणानवस्थामात्रमापतति ; सा च न दोष इति सर्वाविगीतम् ।

(4) यच्च भिन्नत्वे गवाश्वयोरिव कार्यकारणता न स्यात्, अभिन्नत्वे च कथं सिद्धस्य साध्यत्वमिति— तन्न ; कारणात् कार्यस्य भिन्नस्यैवोत्पत्तिदर्शनात् ।

श्लो— अन्यथा बुद्धिबोध्यादौ भिन्नत्वादिविकल्पतः । बोध्यत्वादिक्षतेर्न स्यात् स्वमतस्थापनाऽपि वः ॥

(5) अथ किंचित्कारेणाकिंचित्कारेण वा कारणत्वम्, पूर्वत्र हेतूनां किंचित्कारजननेऽपि किंचित्कारान्तरापेक्षयाऽनवस्था, किंचित्कारस्यापि किंचित्कारजननापेक्षया । उत्तरत्रातिप्रसङ्ग इति ॥ अत्रापि ब्रूमः— यत्र किंचित्कारेण हेतुत्वं दृष्टम्, यथा काष्ठादेर्ज्वालादिना, तत्र तथा । न चानवस्था, हेतुसंपत्तिपरम्पराया दोषत्वाभावात् (अदोषत्वात्); अतिरिक्तस्यातानिरूपणात् । यत्र तु द्वारनिरपेक्षं हेतुत्वम्, तत्रापि दर्शनबलात् किंचित्कारान्तरं न जनयितव्यम्, यतोऽनवस्था स्यात् । न चातिप्रसङ्गः, नियतपूर्वत्वग्राहिणा प्रत्यक्षेणैव तन्निवारणात् । अन्यथा तदपि ते प्रमाणं न स्यादिति विश्वापह्नवः ।

(6) यच्च-कार्यं कुर्वतोऽकुर्वतो वा कारणत्वम्; आद्ये, कार्यस्यापि पूर्वसिद्धिप्रसक्त्या कार्यत्वाभावः । द्वितीये, विरोधातिप्रसङ्गाविति — तदप्यपव्, भाविकार्यानुगुणव्यापारवत्त्वमेव कारणस्य कुर्वत्त्वम् । तत्र कथं कार्यस्य स्वस्मात् पूर्वसिद्धिः ? कुर्वत्त्वनिरूपणं तु भाविनाऽपि कार्येण बुद्ध्यारोहिणा सिध्येत् ।

---

Q७७ा— नियतपूर्वापरभावरूपसंबन्ध इत्यर्थः । बुद्धिबोध्यादाविति । आदिशब्देन व्यवहार्व्यवहर्तव्य-इच्छेष्यमाण-कृतिकर्तव्यादिपरिग्रहः । बोधाद् बोध्यस्य भिन्नत्वे भिन्नत्वाविशेषात् सर्वस्यापि बोध्यत्वप्रसङ्गः । अभिन्नत्वे बोध्यार्थस्य सिद्धत्वेन बोधस्यापि पूर्वमेव सिद्धत्वप्रसङ्गः । तस्मादुभयथाऽपि इतरमतव्यावृत्ततया स्वमतस्थापनं न स्यादिति भावः । उत्तरत्रेति । किञ्चित्काररहितस्यापि कारणत्वे दण्डचक्रादेः घटादिकं प्रति कारणत्वप्रसङ्ग इत्यर्थः । न चानवस्थेति । अत्र किञ्चित्कारस्य कार्यत्वेन, कारणान्तरेण भाव्यमित्येवं हेतुपरम्परानवस्था आपाद्यते वा? एकस्यैव विश्वकार्यार्थं किञ्चित्कारजननस्य निरूपणासम्भवात् दोषत्वाभाव(?) इति भावः । द्वितीयविकल्पनिरासः यत्र तु इत्यादिवाक्ये स्पष्टः । अन्यथा-प्रत्यक्षसिद्धस्याप्यङ्गीकारे । कुर्वत्त्वनिरूपणमिति । कुर्वत्त्वबुद्धिव्यवहार

ஏ— तादात्म्याद् भवितुमर्हति कार्यावस्थाश्रय एव कारणावस्थायाः वृत्तेर्द्वैव्येन्यादित्यर्थः । ध्वंसादीति । ध्वस्तो घट इत्यादौ ध्वंसप्रतियोगी घट इति प्रत्ययस्य प्रतियोग्यर्थकत्वमतिरिक्ताभाववादिनो ब्रूयुः । अस्मन्मते ध्वंसादेरुत्तरावस्थारूपत्वात् ध्वंसस्य घटत्वस्य च कालभेदेनैकनिष्ठत्वात् न कश्चित् क्लेश इति भावः ।

अन्यथा—दर्शनानुरोधोपेक्षायाम्, बुद्धितो बोध्यं भिन्नमभिन्नं वा । भिन्नत्वेऽपि विषयभावे सर्वमविशेषात् विषयः स्यात्, अभिन्नत्वे विषयविषयिभाव एव न स्यादिति विकल्पे मानमेयाद्यसिद्ध्या सर्वासिद्धिरिति । किञ्चित्कारेणेति । किञ्चित् द्वारीकृत्येत्यर्थः ; उपपादकग्रन्थे ज्वालादिग्रहणात् तस्य स्पष्टत्वात् । उत्तरत्र सव्यापाराव्यापारविकल्पे व्यापारपदं न द्वारपरम् ; किंतु क्रियादिपरमिति भाव्यम् । कुर्वत्त्वमिति । कुर्वत्त्वम् उपधायकत्वसंबन्धेन कार्यविशिष्टत्वम् । कार्यस्य तदानीमभावे च कथं वैशिष्ट्यमिति शंकितुराशयः । उपधायकत्वस्य पूर्वोत्तरक्षणघटितत्वात् कारणकाल एव कार्यसत्त्वमनुभवबाधितमिति तदनुगुणं वैशिष्ट्यमेवात्र विवक्षितमिति समाधिः ।

(7) एनेन निर्व्यापार. सव्यापारो वा हेतुरित्याद्यपि दत्तोत्तरम् ।

(8) कार्य'(त्व)कारणत्वयोः स्वभावत्वे पटत्वनीलत्वादिवत् सर्वं प्रत्यपि स्याताम् ; अस्वभावत्वे कस्य चिदपि न स्यातामित्यपि नियतप्रतिसंबन्धिकस्वभावत्व एव तदुभयसिद्धेर्निरस्तम् । दण्डादिकार्यत्वं घटादिकारणत्वं वा नीलादिवदेव पुरुषभेदेऽप्यविपर्यस्तमेव ।

(9) अथ स्यात , कार्यकारणभावस्य द्विष्ठत्वे द्वयोरपि द्वैरूप्यात् अविशेषविरोधभेदापत्तयस्स्युः, एकस्थत्वेऽपि यत्रैकस्मिन्, तत्रैवमिति ॥ तत्र ब्रूमः—कार्ये कार्यत्वं कारणे कारणत्व च वर्तते ; तथाऽप्यन्योन्यनिरूप्यतया संबन्धव्यवहारादिसिद्धिरिति ।

(10) स्यादेतत् — न तावत् दण्डादयो मृदाद्यवयवाश्च प्रत्येकं घटाद्युत्पादनशक्ताः ; अदर्शनात् ।

---

व्याख्या— इत्यर्थः । एनेनेति पूर्वोक्तसर्वविकल्पदूषणं परामृश्यते । निर्व्यापारसव्यापारपदाभ्यां निष्क्रियत्वसक्रियत्वे विवक्षिते । तेन किञ्चित्कारविकल्पेन न पौनरुक्त्यम् । स्वभावत्वे-असाधारणकारणत्वे । सत्यन्ते इति वाऽर्थः। सर्वं प्रत्यपि स्यातामिति । यथा घटत्वनीलत्वादिकं स्वभावतया प्रतिसम्बन्धिविशेषनिरूप्यं न भवति, तथा कार्यत्वकारणत्वयोरपि स्वभावात् प्रतिसम्बन्धिविशेषनिरूप्यत्वं विना सर्वप्रतिसम्बन्धिकत्वं स्यादिति भावः। नियतेत्यादि । ज्ञानादिवत् इति शेषः। तदुभयसिद्धेरिति । कार्यत्वकारणत्वोभयसिद्धेरित्यर्थः । ननु पटत्वनैल्यादिकं स्वभावत्वेन सर्वानपि पुरुषान् प्रति पटत्वनैल्याद्यात्मकमेव, न तु पुरुषविशेषं प्रति घटत्वशौक्ल्याद्यात्मना विपर्यस्तम् । तथा कार्यत्वकारणत्वयोरपि स्वभावत्वे घटदण्डादिषु सर्वपुरुषान् प्रति ते नियते स्याताम्, न तु पुरुषविशेषं प्रति विपर्यस्ते स्याताम् । दृश्यते च विपर्यासः–दण्डसम्पादनेच्छुं प्रति दण्डस्य कार्यत्वम्, जलाहरणाभिलाषिणं प्रति घटस्य कारणत्वम् इति—तत्राह—दण्डादीति । प्रतियोगिभेदेन कार्यत्वकारणत्वयोः सहावस्थानेऽपि तत्तत्प्रतियोगिविशेषापेक्षया ते न विपर्यस्ते इति भावः । द्वयोरपि द्वैरूप्यादिति । प्रत्येकं कार्यत्वकारणत्वलक्षणद्वैरूप्यादित्यर्थः । अविशेषेति । इदं कार्यम्, इदं कारणमिति वैलक्षण्याभावेन द्वयोरप्यविशेषापत्तिः । पूर्वभावित्वपश्चाद्भावित्वघटितकार्यत्वकारणत्वयोः एकैकस्मिन् अवस्थाने विरोधापत्तिः। द्वयोरपि विरुद्धधर्माध्यस्तत्वेन स्वस्मात् स्वस्य भेदापत्तिरिति भावः। [यदि?] कार्यत्वं कार्यमात्रे, कारणत्वं च कारणमात्रे, तथाच (तदा?) द्विष्ठत्वाभावात् कथं सम्बन्धत्वमित्यत्राह

टी— पटत्वेति । सर्वपुरुषं प्रत्यपि पटः पट एव, नीलो नील एव । अत एवोक्तमुदयनाचार्यैः, "न हि नीलं कश्चित् प्रत्यनीलम्" इति । तथा च स्वाभाविकधर्मस्य सर्वं प्रति एकरूपत्वात् कारणत्वस्य स्वाभाविकत्वे तन्तुः पटं प्रति कारणम्, घटं प्रत्यकारणमिति द्विरूपता कथमित्याक्षेपः । समाधिस्तु—घटत्वादिर्न सापेक्षधर्मः, कारणत्वादिस्तु सापेक्ष इति वैषम्यम् । अतः शुद्धकारणत्वं स्वभाव इति न ब्रूमः । किंतु पटकारणत्वं तन्तुस्वभावः घटकारणत्वं मृत्स्वभाव इति । सर्वैरपि तथैव गृह्यमाणत्वात् सर्वं प्रत्यपि तत् तथैवेति सुवचम् । न च सर्वदा कार्यापत्तिः सहकारिमतस्तस्य तत्कारणत्वं स्वभाव इत्येव व्यवस्थापनात् । तदुक्तम् कुसुमाञ्जलौ, "तद्युक्तं तत्र तच्छक्तमिति साधारणं न किम्" इति । तदिदं स्यादेतदित्युपरितनग्रन्थे व्यक्तम् । सर्वः संबन्धो द्विष्ठ इति मनसिकृत्य शङ्कते अथ स्यादिति । संयोगस्य द्विष्ठत्वदर्शनादेवं शंका । सर्वस्यापि संबन्धस्य एकप्रतियोगिकत्वैकनिष्ठत्वदर्शनात् संयोगोऽपि तादृश एव, न तु द्विष्ठ इति माध्वाः। क्रियायाः संयोगहेतुत्वात् क्रियासमानाधिकरणः संयोगः अक्रियद्रव्यनिरूपितः ; उभयकर्मजन्यस्थले तु तत्तत्क्रियाभेदात्

अत एव न समुदिता अपि । न हि नद्यः समेत्यापि दहेयुः । न च सिकताः संभूय तैलं जनयेयुः । शक्तानामेव संभूय करणे सर्वे कृतकराः स्युः । शक्तस्य कुर्वतोऽप्यन्याकाङ्क्षायां सर्वैरपि स्यात् । तथा च देशादिव्यवहितानामसन्निधेः कथं कार्यारम्भः ? न हि कार्ये कारणानां साध्यांशभेदः; विभक्तदशायाम्, समुदाये वा तस्यादृष्टेः; निरंशे गुणादौ च दुर्वचमेतदिति ॥ अत्रोच्यते—समुदितानां कार्यकरत्वमेव हि प्रत्येकमपि[हि]शक्तिः । कथमन्न वियुक्तैः कार्यकरणम् ? कथं च समेतेषु कृतकरता ? अतः शक्तस्यापि सहकार्याकाङ्क्षायामतिप्रसङ्गश्च निरस्तः, यावत्कार्यसिद्धिनियतविषयत्वात् तस्या इति ।

(11) ननु पूर्वं कारणमित्युक्ते नष्टं कारणमित्युक्तं स्यात् । दृष्टा च मृदिते मृत्पिण्डे घटोत्पत्तिः। तथा च स्वात्मानमलभमानस्य कथं परसाधकत्वम् ? अन्यथा चिरातिक्रान्तस्य च स्यादेव कारणत्वम्; तुच्छस्य च कारणत्वे कार्यत्वमपि तुच्छं स्यात्, नित्यं वेति ॥ तदपि न, पूर्वक्षणसत्त्वमेव हि कारणस्य कार्योपयोगि; न च तत् तदा नास्ति । कार्यक्षणे तु कस्यचिदसत्त्वं न कारणत्वविरोधि । पूर्वं नष्टमित्यप्यसाधु; स्थिरवादे तदयोगात् । पिण्डस्य तु न साक्षात्कारणत्वम् । न च पिण्डः तस्य ध्वंसो वाऽत्यन्ततुच्छः, स्वकाले सद्भावात् । कालान्तरासत्त्वेन तुच्छत्वे प्रत्यक्षविषयोऽपि तथा स्यात्। तथा चेयं (तथा च ते) माध्यमिकगतिः । (12) अथ ब्रूषे-पूर्वत्वमेव कारणस्य दुर्निरूपम् । पूर्वकालवृत्तित्वं हि तत्; काले च पूर्वत्वमुपाधिकृतम्; स चोपाधिर्यदि अयमेव, तदा तदधीनं कालस्य पूर्वत्वं कालाधीनं चोपाधेरित्यन्योन्याश्रयः; अन्यापेक्षायां चक्रकम्, अनवस्थाऽपि। कालस्य क्रमवदुपाधिसंबन्धभेदाद्भेदश्च कृत्स्नैकदेशविकल्पदुःस्थ इति॥ एवं ब्रुवता किं पौर्वापर्यमेव न दृष्टम् ? दृष्टमपि वा बाधितम् ? नाद्यः, स्वाभ्युपेतलोकव्यवहारविरोधात् । न द्वितीयः, सर्वेषां नित्यत्वतुच्छत्वयोरन्यतरप्रसङ्गात् । अतः काले सति असति वा क्रमस्तावद् दुरपह्नवः।

श्लो — क्रमेणोपाधिभिर्योगः साकल्येनांशतोऽपि वा । कालस्य न घटेतेति स्थिरवादी कथं वदेत् ॥

---

पू— स चोपाधिर्यद्ययमेवेति । कारणमेवेत्यर्थः । उपाध्यपेक्षया पुंलिङ्गनिर्देशः ।

स्थिरवादी कथं वदेदिति । क्रमिकोपाध्यवच्छिन्नानेककालसम्बन्धिस्थिरमिति भावः । क्षणभङ्ग

आनन्द— तथाऽपीति। यावत्कार्यसिद्धीति। यावद्भिः सहकारिभिः कार्यसिद्धिः तावद्भिर्नियतविषयाकाङ्क्षेत्यर्थः । नष्टं कारणमित्युक्तं स्यादिति । पूर्वावस्थाप्रहाणादिति भावः । मृदिते मृत्पिण्डे इति । प्रहापितमृत्पिण्डत्वावस्थे वस्तुनीत्यर्थः । तुच्छस्येति । स्वरूपालाभात् तुच्छत्वम् । नित्यं वेति । तुच्छस्य कारणस्य सर्वदा विद्यमानत्वेन नित्यं सर्वदा कार्यमुत्पाद्यं स्यादित्यर्थः । अन्यापेक्षायामिति । कालस्य पूर्वत्वसिद्ध्यर्थं उपाध्यन्तरापेक्षायां, तस्यापि पूर्वत्वसिद्ध्यै प्राथमिककारणसापेक्षत्वे च.........उपाध्यन्तरसापेक्षत्वे, तत्रापि तथेत्यनवस्थेति भावः । कृत्स्नैकदेशविकल्पदुःस्थ इति । कालस्य कार्त्स्न्येन एकैकोपाधिसंबन्धे कालभेदासिद्धिः । एकदेशेन संबन्धे एकदेशावच्छेदकोपाध्यन्तरापेक्षायामनवस्थेति............प्रकृतापेक्षायां अन्योन्याश्रयमेद इति.........। नित्यत्वतुच्छत्वयोरिति । सतामेव पौर्वापर्यबाधे नित्यत्वम्; पौर्वापर्यवत् दृष्टबाधाविशेषात् सत्त्वाभावे तुच्छत्वमिति भावः । काले सत्यसति वेति । कालस्य सद्भावे, असद्भावे वेत्यर्थः ।

वी— संयोगभेद एवेति तेरुच्येत । काले सत्यसति वेति । अतिरिक्तकालपदार्थस्वीकारे तदभावेऽपी-

प्रत्यक्षेण वि(प्रत्यक्षप्रति)रुद्धश्च क्षणभङ्गपरिग्रहः । अपसिद्धान्तमादध्यात् मानमन्यदनिच्छतः ॥
अथ लोकायतान्तस्थमनुमानं च मन्यसे । आगमोऽप्यविसंवादी तदन्तः स्थातुमर्हति ॥
यत्र(तः) प्रवृत्तिसामर्थ्यं न लोकादुपलभ्यते । अनुमीयेत तत्रापि प्रामाण्यमविशेषतः ॥

अस्त्वेवम् ; तस्य नियमो न शक्यः अस्मादेवेदमनन्तरमिति । तदेतत् नियतपूर्वत्वं हि न जातेर्जातिमपेक्ष्य, द्वयोरपि त्रैकालिकत्वात् । न च जातेर्व्यक्तिमपेक्ष्य, सर्वासां जातीनां पूर्वत्वेन कारणनियमासिद्धेः । जात्यन्तरापेक्षया कार्यत्वं न दृष्टमिति चेत्—किमतः पूर्वमेतज्जातिकार्यत्वमपि दृष्टम् ? एकव्यक्तेश्च नियमो दुर्ग्रहः, अननुवृत्तेः । कृत्तिकारोहिण्योरपि ह्युदयभेदेष्वेव व्याप्तिर्गृह्यते । एतेन व्यक्तेर्जात्यपेक्षया वा व्यक्त्यपेक्षया वा पूर्वत्वनियमोऽपि प्रत्युक्त इति ॥

अयमप्यनुक्तोपालम्भः ; एतद्धर्मकादेतद्धर्मकमुपजातमिति जात्युपाधिक्रोडीकृतरूपेण व्यक्तिषु

---

[illegible]— एव तर्हि स्वीक्रियत इत्यत आह—प्रत्यक्षेति । अपसिद्धान्तमादध्यादिति । प्रत्यक्षविरुद्धस्य क्षणभङ्गस्य ज्वालाभेदवदनुमानत एव परिग्राह्यत्वात् तत्परिग्रहे प्रत्यक्षमेव प्रमाणमिति सिद्धान्तविरोधः स्यादित्यर्थः । सिद्धान्तविरोधमाशङ्कते—अथेति । अतिप्रसक्त्या परिहरति—आगमोऽपीति । अविसंवादी=कारीर्यादिष्वित्यर्थः । तत्र सर्वत्र नाविसंवादनिश्चय इत्यत्राह—यत्रेति ।

[illegible]—अविसंवादीति । अबाधित इत्यर्थः । अतःपूर्वमिति । विवादात् पूर्वमित्यर्थः । एकव्यक्तेश्चेति । अत्रायं भावः—भूयोदर्शनं व्याप्तिग्राहकमभिमतम् । तच्च हेतुसाध्यसम्बन्धदर्शनम् । तच्च न भूयस्सु स्थलेषु दर्शनम्—एकस्मिन् नानारूपरसादीनां परस्परं व्याप्तिग्रहप्रसङ्गात् । नापि भूयांसि दर्शनानि—धारावाहिकज्ञानेनापि व्याप्तिग्रहप्रसङ्गात् । अतो भूयसां दर्शनमिति वाच्यम् । न च भूयसा दर्शनेनापि व्यभिचारदर्शनात् न व्याप्तिधीरिति वाच्यम्—व्यभिचारज्ञानविरहस्यापि सहकारित्वात् ।

[illegible]— त्यर्थः । क्षणभंगपरिग्रहः—सर्वस्य प्रतिक्षणविनाशस्वीकारः । अन्यदनिच्छन इति । प्रत्यक्षातिरिक्तं मानं न चार्वाकस्वीकृतम् । प्रत्यक्षञ्च स्थिरत्वैकसाधकमिति भावः । लोकायतान्तस्थम् चार्वाकसिद्धान्ते स्थितम् । अन्तः=सिद्धान्तः । नन्वनुमानप्रामाण्यं प्रवृत्तिसामर्थ्यात् समर्थप्रवृत्तिहेतुत्वात् सफलप्रवृत्तिजनकत्वादित्यर्थः । न तथाऽऽगमे इत्यत्राह यत्रेति । सामर्थ्यमिति । अर्थः प्रयोजनं फलम् । संगतार्थकत्वं साफल्यमेव । आगमेऽपि ऐहिकफलसाधनचित्रादितो यथाश्रुतिफलप्राप्तौ तादृशवेदवाक्यानां प्रामाण्यम् । तत्सामान्याच्च तदितरेषां पारलौकिकफलार्थानामपि प्रामाण्यमिति ।

अथ कारणत्वेन व्यवह्रियमाणेषु पूर्ववर्तित्वसत्त्वेऽपि नियतपूर्ववर्तित्वस्य दुर्वचत्वात् कारणत्वं न सिध्यतीति शंकते अस्त्विति । त्रैकालिकत्वादिति । प्रागभावप्रतियोगिन एव हि कार्यत्वमिति भावः । जातेरिति । तन्तुत्वजातेः पटकारणत्वमिति भावः । सर्वासामिति । पूर्वत्वाविशेषात् मृत्त्वादिजातेरपि पटकारणत्वं स्यादित्यर्थः । न दृष्टमिति । पटोत्पत्तिदेशे मृत्त्वादिकं हि न दृष्टमित्यर्थः । किमत्रेति । तत्र तन्तूनामेव दर्शनम्, न तु तन्तुत्वस्येति साजातिरपि न कारणमिति भावः । जातिं विहाय पटव्यक्तिं प्रति तन्तुव्यक्तिः कारणमित्युक्तौ नियमस्त्यक्तः स्यात् ; तस्यानेकव्यक्तिनिष्ठत्वादित्याह एकव्यक्तेश्चेति । ननु गगने कृत्तिकास्थितिदेशं संलक्ष्य रोहिण्युदयसमयोऽनुमीयते । तत्र नियमः कृत्तिकाद्येकैकव्यक्तिविषय एव दृष्ट इत्यत्राह कृत्तिकेति । नक्षत्रैक्येऽपि दिनभेदेनोदयव्यक्तिभेदात् अनेकोदयमादाय नियमग्रहणमिति भावः । एतेनेति । जातित्रैकालिकत्व—एकव्यक्तिनियमायोगयोः कथनेनेत्यर्थः । अस्त्वेवमित्यारब्धमाक्षेपं परिहरति अयमपीति । न जातिद्वयस्य

नियमसिद्धे । यथादर्शन चेयत्तानियमरहित-निरुपाधि-निर्व्यभिचार-भूयोदर्शनबलेन व्याप्तिसिद्धिश्चानुमाने वक्ष्यते। न च सर्वस्मात् तादृशात् तादृश सर्वम्, अनियत वा स्यादिति शङ्कनीयम्, तथा व्याप्तेरग्रहणात्, तद्विरुद्धा च ते प्रार्थना मोघैव। तृणारणिमण्यादिषु च वह्न्याद्युत्पत्तौ सामान्यतो विशेषतश्च हेतुकार्यभावो मन्तव्य ॥ तत्र कार्यवैजात्य न दृश्यत इति चेन्न, अनुपलब्धवैषम्याणामप्यायुर्वेदादिषु शक्तिभेदसिद्धेरवान्तरवैजात्यस्य स्वीकार्यत्वादिति ॥

*श्लो— साङ्ख्यसौगतचार्वाकैरन्येऽप्येवमुपप्लवा । प्रयुक्ता प्रतिवक्तव्या प्रतिष्ठितनयस्थितै ॥*

---

*ਪ੍ਰ*ਕਾ— तथा च जातेरेकत्वेन भूयस्त्वाभावात् नियमो दुर्ग्रह इति भाव । तन्तुत्वाद्यवच्छिन्नात् पटत्वाद्यवच्छिन्न जन्यमिति नियमाङ्गीकारे बाधकमाशङ्क्य निराकरोति—नचेति। तादृशात् तन्तुत्वादिधर्मकात् सर्वस्मात्। तादृशम् पटत्वादिधर्मक सर्वम्। नियतमनियत वा स्यात् देशान्तरीयकालान्तरीयतन्त्वादे देशान्तरीयकालन्तरीयपटादिक नियत स्यात्—तन्तुत्वपटत्वादिधर्मकत्वाविशेषात्। अविशेषेऽपि यत्किञ्चिद्‌घटादे यत्किञ्चित्तन्त्वादिकमेव नियतमिति चेत्—तर्हि तदपि देशान्तरीयकालान्तरीयघटादिवदनियत स्यादिति भाव। ननु वह्नित्वावच्छिन्न प्रति तृणादिषु अनुगतकारणतावच्छेदकाभावात् कथ कार्यकारणभावग्रह इत्यत आह—तृणेत्यादि। फूत्कारादिसहकारिविशेषसम्पत्तिस्थले तृणे सति वह्नि, तृणाभावे वह्न्यभाव इति सामान्यतो हेतुकार्यभावग्रह। एव मथनातपसन्ध्यादिसहकारिसपत्तौ अरणिमण्यादे सामान्यत कारणत्वग्रह। यदा तु तृणादिजन्यवह्निविशेषेषु आप्तवाक्यादिना जातिविशेषाणा ग्रह—तदा विशेषत कार्यकारण-

*ਪ੍ਰ*ਕਾ— कार्यकारणभाव। न व्यक्तिमात्रस्य, न वा तदन्यतरस्य किन्तु एतज्जातिविशिष्ट प्रति एतज्जातिविशिष्ट कारणमिति सामान्यतो नियम। तत्रापि न जातित्वेन जातिनिवेश। जात्यतिरिक्तोपाधिभूतधर्मस्थलेऽपि तदिष्टे। अनुगततद्धर्मावच्छिन्नव्यक्तीना तादृशव्यक्तिभि सह नियम इति। इयत्तानियमरहितेति। भूयोदर्शनविषये सङ्ख्येयत्ता नापेक्षितेति भाव। निरुपाधिकत्व निर्व्यभिचारत्व च तत्तत्सदेहे तन्निवृत्तये ज्ञातव्यम्। ननु घटत्वपटत्वाद्यन्यतमधर्मावच्छिन्न प्रति मृत्त्वतन्तुत्वाद्यन्यतमधर्मावच्छिन्न कारणमित्युक्तौ मृत्त पटस्याप्याापत्तिरिति शङ्का क्षिपति न चेति। एकैकधर्ममादायैव व्याप्तिग्रह कार्यकारणभावश्च न त्वन्यतमत्वेन सर्वग्रह इति भाव। नन्वन्यतमधर्मावच्छिन्न कारणमित्यवश्य वक्तव्यम्। अन्यथा घटत्वपटत्वादिवत् वह्नित्वस्यापि कार्यतावच्छेदकतया तदवच्छिन्न प्रति तत्तत् कारणमिति पृथगुक्तौ अरण्यादितोऽपि वह्निजननात् नियमभग स्यादित्यत्राह तृणेति। उदयनाचार्योक्तरीत्या तृणस्य फूत्कारो द्वार मणेस्तरणिकिरणसपर्क अरणेर्निर्मथनमिति व्यापारभेदवत् कार्यवैजात्यमपि सुवचम्। तथा ह्यग्नित्वाविशेषेऽपि प्रदीप प्रासादोदरव्यापिनमालोकमारभते, न तथा ज्वालाजालजटिलोऽपि दारुदहन नतराञ्च कारीष। अतो वह्नित्वव्याप्यतत्तद्विजात्यावच्छिन्न प्रति प्रत्येक तृणत्वाद्यवच्छिन्नस्य कारणत्वान्न नियमभग। वह्नि वरूपसामान्यस्यापि कार्यतावच्छेदकसपत्तये अनुगतशक्तिमत्त्वेन वा अन्यतमत्वेन वा तृणादीना कारणत्वस्वीकारेऽपि न दोष। कार्यतावच्छेदक कारणतावच्छेदकञ्चोभयमन्यतमत्वेन गृहीत्वा कार्यकारणभावस्तु नेष्ट इति। शक्तिभेदसिद्धेरिति। हारीतमास हरिद्राग्निप्लुष्टमुपयोगे सद्यो व्यापादयतीतिवत् तत्रतत्र कार्यभेदात् शक्तिभेद। साङ्ख्येति। अभिव्यक्तिवादिभि साङ्ख्यैरुत्पाद्योत्पादकभावरूपकार्यकारणभावो दूष्यते। कुर्वद्रूपतत्तत्क्षणमात्रकारणत्ववादिभि सौगतै अङ्कुरत्वावच्छिन्न प्रति बीजत्वावच्छिन्न कारणमित्यनुगतकार्यकारणभाव कारणस्य सहकारिसपत्त्यपेक्षा च दूष्यते। चार्वाककृत उपप्लवश्च

यदत्र माध्यमिकमतस्थैरुच्यते—

"पूर्वसंबन्धनियमे हेतुत्वे तुल्य एव नौ। हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा ॥" इति— तत्रोच्यते

श्लो— प्राक्कालनियतत्वेन कारणं प्रमितं न वा। आद्ये तदेव तत् सत्त्वमन्यथा नियमोऽपि न ॥

अन्यदपि यदुक्तम्, "अन्तर्भावितसत्तं(त्त्वं) चेत् कारणं तदसत् ततः। नान्तर्भावितसत्तं(त्त्व) चेत् कारणं तदसत् ततः ॥" इति—अत्र **तदसत्ततः** इत्यत्र स्थाने **सदिदं ततः** इति पाठ्यम्। विशेषणतया

---

ஸ்ரீ— अन्तर्भावितसत्त्वं चेदिति। अन्तर्भावितसत्त्वकत्वे बहुव्रीहेरन्यपदार्थप्रयोजनत्वात्। प्रधानान्तरस्यैव कार्यान्विततया गुणभूतायाः सत्ताया न कार्यान्वय इत्यसदेव कारणं स्यात्। अनन्तर्भावितसत्ताकत्वे तु सुतरामित्यर्थः। अन्तर्भावितसत्ताकत्वे बहुव्रीहेस्तद्गुणसंविज्ञानत्वे विशेषणतया, अनन्तर्भावितसत्ताकत्वेऽपि उपलक्षणतया सत्तान्वयिन एव कारणत्वात् पक्षद्वयेऽपि सत एव कारणत्वमित्याह—अत्रेति। सत्त्वं चेति। सत्त्वम् सत् असद्वेति विकल्पे सत्त्वपक्षे सत्त्वस्य सत्त्वाङ्गीकारात् तस्यापि सत्त्वस्य सत्त्वम्, एवं तस्य तस्यापीत्यनवस्था। असत्त्वपक्षे

ஆனகா— भावग्रहः स्पष्टः। पूर्वसंबन्धनियम इति। सत्त्वासत्त्ववादिनोरावयोः पूर्वसंबन्धनियमरूपहेतुत्वे तुल्ये सति हेतुत्वानन्तर्भूतसत्त्ववादो निष्फलः—असत्त्ववादवत्। ततश्च हेतुत्वानुरोधेन सत्त्वक्लृप्तिः व्यर्थेति भावः ॥ ३२ ॥

வீ— ग्रन्थान्तरेषु खलद्वयोऽपि अत्र श्लोके बहुविधो दर्शितः। तेषां नयास्तु लोकानुभवविरोधादप्रतिष्ठिता एव। नयप्रतिष्ठा चानुभवानुरोधित्वादस्मत्पक्ष एवेति। तत् सिद्धमनन्यथासिद्धनियतपूर्वकालसत्त्वमेव कारणत्वमिति। तत्र सत्त्वांशमसहमानः शंकते यदत्रेति। एवं सांख्यसौगतेति सौगतनिरासः कृतः। सर्वशून्यवादिमतप्रियनिरास इह माध्यमिकमतस्थैरिति। खण्डनकारो जगदसत्यत्वसाम्यात् माध्यमिकमतानुयायिषु स्वयं प्रविश्य तान् सहायीकृत्यैवमाहेति ज्ञापनार्थं बहुवचनम्। पूर्वेति श्लोकार्थस्तावत्—हेतुत्वं नाम पूर्वकालसंबन्धनियमः। अनियतस्य पूर्वसंबन्धरहितस्य च कारणत्ववारणार्थमेतावत् वक्तव्यम्। एवमावयोरिष्टे तत्र लक्षणे सत्त्वस्यासत्त्वस्य वा प्रवेशाभावात् अत्र सत्त्वासत्त्वकथा न कार्या। 'सत एव कारणत्वात् कार्यस्यासत्त्वं न भवति, असत्त्वे च कारणत्वं दुर्घटम्' इति न वक्तव्यमिति। प्राक्कालेति। पूर्वसंबन्धनियमः खलु कारणे त्वयाऽत्र स्वीकृतः। स किं प्रमाणसिद्ध उतासिद्धः। आद्ये पूर्वकालनियतत्वेन प्रमाणसिद्धत्वं कारणस्येष्टं भवति। तथाप्रमाणसिद्धत्वमेव सत्त्वमिति असत्त्वं कथम्। यदि तदप्रामाणिकम्, तदा कथमुभयोस्तुल्यमिदमिति ब्रवीषि। नियमो हेतुत्वमित्यपि, प्राक्कालसत्त्वं हेतुत्वमिति सत्त्ववत् त्वया न स्वीकार्यमिति। किञ्च नियमो नाम प्राक्कालिकासत्त्वाभावः। तच्च सत्त्वमेवेति कथं सत्त्वाघटितत्वोक्तिः। एवं सत्त्वस्य कारणत्वानन्तर्भावं तदुक्तं निरस्य, असतोऽपि कारणत्वमिति तदुपक्रान्तमंशमपि दूषयति अन्यदपीति। अन्तरिति। अयमर्थः—सत् कारणमिति वदता सत्त्वविशिष्टस्य कारणत्वमुच्यते, उत सत्त्वांशं त्यक्त्वा धर्मिमात्रस्य। सत्त्वमन्तर्भाव्य विशिष्टं कारणमुच्यते चेत्, ततः—तर्हि तत् सत्त्ववैशिष्ट्यात् पूर्वमसदेव। तथा विशेषणीभूतत्वात् सत्त्वमपि कारणम्। न च सत्त्वे सत्त्वमस्ति। अतोऽसत् कारणमिति। नान्तर्भावितसत्त्वम्—न समासात् अनन्तर्भावितसत्त्वमित्यर्थे त्यक्तसत्त्वांशं धर्मिमात्रं कारणं चेत्, तदा सुतरामसतः कारणत्वमिति। इदमिन्द्रजालमपनयति अत्रेति। पक्षद्वयेनापि सत्त्वसाधनात् विरुद्धमेतत्। यदि सत्त्वमन्तर्भाव्य कारणत्वमुच्यते, धर्मिणि सत्त्वस्वीकारात् सदेव कारणम्। सत्त्वं विशेषणत्वेनास्वीकृत्य धर्मिण्येव कारणत्वमुच्यते, तदा

उपलक्षणतया वा सत्तासंबन्धिनि नासत्त्वारोपः शक्यत इति ।

श्लो— सत्त्वं च सदसद्वेति विकल्प्यानिष्टकल्पने । असत्त्वं सदसद्वेति विकल्प्योत्तरमूह्यताम् ॥
स्वक्रियादिविरोधश्च सूत्रप्रभृतिदुस्तरः । गुरुशिष्यादिवाक्यानां परबोधार्थता यतः ॥
तेभ्यश्चैतन्यमित्यादि वदता गुरुणा स्वयम् । किण्वादिभ्यः प्रसिध्यन्ती मदशक्तिर्निदर्शिता ॥
प्रत्यक्षाल्लोकशब्दोक्तादधिकं च तदायतम् । अभाष्यत भवत्पूर्वैः प्रत्यक्षं चार्थसाधकम् ॥
अर्थकामौ पुमर्थौ च दृष्टोपायैरुदीरितौ । प्रीयसे दूयसे च त्वं बिभेषि च ततस्ततः ॥
इष्टं प्राप्तुमनिष्टं च निवर्तयितुमुद्यतः । तत्सिद्धौ चरितार्थत्वं लोकवत् किं न मन्यसे ॥
बुभुक्षुरन्नमादत्से श्वभक्ष्यादि जहासि च । परोक्त्या प्रतिपद्यार्थं प्रतिब्रूपे जिगीषया ॥
तत्त्वावधारणार्थं वा वादे किं न प्रवर्तसे । स्वयं वा मानतर्काभ्यां किं न किञ्चित् परीक्षसे॥ ३२॥

**कादाचित्कस्य कालावधिनियतिकरं पूर्ववत् कारणं स्यात्**
**भावोपष्टम्भशून्यो न खलु तदवधि प्रागभावोऽपि कुर्यात् ।**
**कार्यं निर्हेतुकं चेत्, कथमिव न भवेत् नित्यता तुच्छता वा ?**
**कादाचित्कस्वभावात् यदि, न, नियमनात्, अन्यथाऽतिप्रसङ्गात् ॥ ३३ ॥**

ननु परिवेषा(दिषु)दौ नियत(पूर्व)पूर्वसत किञ्चित् न दृश्यते । न च घटादिदृष्टान्तेन तत् अनुमेयम्, विपर्ययवर्तस्य दुर्वारत्वात् । अतो दृश्यमाना अप्यन्वयः केषुचित्, रसोत्पत्तौ रूपादिवत् यदृच्छासिद्धा

---

सर्व— तु कारणसत्त्वस्यासत्त्वेन कारणमसदेव स्यात्; अनवस्था पूर्ववत् । सत्त्वे तु सद्धर्मकस्य कारणस्य सत्त्वं स्यादित्युक्तमूह्यमित्यर्थः । सत्त्वस्य स्वपरनिर्वाहकत्वान्नानवस्था । असत्त्वस्य स्वपर-निर्वाहकत्वे असत्त्वस्य स्वेनैव प्रतिक्षिप्तत्वात् कारणं सदेव स्यात् ॥ ३२ ॥

श्री—तत्र स्थितस्य सत्त्वस्य कारणकोट्यननुप्रवेशनेऽपि बाधानंगीकारात् सत्त्वस्योपलक्षणमात्रत्वात् तद्वस्तु कथमसद् भवेत् । यत्तु सत्त्वे सत्त्वाभावादसतः कारणत्वमिति मतम्, तत्रापि प्रत्याह सत्त्वञ्चेति । तथा विकल्प्य दूषणचिन्तने असत्त्वेऽपि तथा विकल्पादिकमिति। स्वक्रियादिविरोधः—स्व-प्रवृत्त्यादिना स्वोक्तेर्व्याहतत्वम्। सूत्रप्रभृति। चार्वाकमतबार्हस्पत्यसूत्रमारभ्य। समासेन सूत्रप्रभृतिभिः दुस्तर इति विग्रहो वा । तत्र हेतुमाह गुर्विति । तेभ्य इति । हेतुत्वासंमतौ, तेभ्य इति किण्वादिभ्य इति च पञ्चमी किमर्थेति । प्रत्यक्षेति । चार्वाकभाष्ये अथ, लोकायतमिति प्रथमसूत्रव्याख्याने, लोकः—प्रत्यक्षम्; तदायतं-ततो विस्तृतम् ततः प्रवृत्तं तत्फलमित्यर्थतात्पर्येण ततोऽधिकं तदायत-मिति भाषितम्; अत्र अधिकशब्दः उपरि स्थितमित्यर्थकः फलभूतमित्यर्थे इत्याहुः। एवं लोकायतपदेन प्रत्यक्षञ्चार्थसाधकमिति ज्ञापितं भवतीत्याह चतुर्थपादेन । धर्ममोक्षयोरनंगीकारेऽपि मध्यम-पुरुषार्थयोरिष्टत्वादपि कार्यकारणभाव इष्ट इत्याह अर्थेति । लोकवदिति । लोकायतमिति शास्त्रनाम कुर्वन् यत् लोकमतं तत् कथं न मन्यस इति भावः । अर्थं प्रतिपद्य-परोक्तितो बुध्वा ॥ ३२ ॥

ननु नियतपूर्वस्याप्यन्यथासिद्धत्वांगीकारे को दोषः । न च कार्यस्य तावता कादाचित्कत्व-हानिः; नियतपूर्वस्यानुपलम्भबाधितत्वेऽपि कादाचित्कत्वस्यानेकत्र दर्शनादिति शंकायां कादाचित्कं सर्वं नियतपूर्वावधिकत्वात् सकारणकमेवेत्याह कादाचित्कस्येति श्लोकेन । रसोत्पत्तौ

इत्यत्राह कादाचित्कस्येति ॥ अयं भावः—यदि परिवेषादीनामपि कादाचित्कत्वं दृष्टम्, तत्र निपुणं निरूपयतां देशकालादृष्टविशेषात् आतपादिकारणविशेषः सिद्धः । तदनुपलम्भेऽपि सन्दिग्धपरिवेषादिदृष्टान्तेन नान्यत्र हेत्वभावः शक्योऽनुमातुम्; अनिश्चितसाध्यस्य दृष्टान्तत्वायोगात् । निश्चितसाध्यविपर्ययस्य पक्षत्वाचति(क्षत्वादी)पातात् । निश्चितनिदर्शनादनिश्चितानुमानं युक्तमेव । न च त्वद्विवादमात्रेण घटादिषु सर्वलोकसंमतः (सिद्धः) कारणसद्भावः सन्दिह्यते । एतेन, "अहेतुतो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात्" इत्यादि च प्रत्युक्तम् ॥

अस्तु हेतुनिरपेक्षो नियतकालः प्रागभाव एव कार्यस्य पूर्वावधिः । स हि स्वभावविरुद्धतया कार्यकालमनश्नुवानः तत्पूर्व एवेति सिद्धम् । अतः किमन्यैरित्यत्राह भावोपष्टम्भेति । भावान्तमभाव इति स्थापयिष्यते । इह तु अपिना पक्षान्तरान्वारोहः सूच्यते । अयं भावः—यदि कार्येण प्रागभाव एव केवलोऽपेक्षणीयः, तद्वदेतेना(देव तेना)प्यनादिना भाव्यम् । अतः प्रागवधिः सन्नप्यभावः तत्तद्भावशेखरित एव स्वात्मानमवधित्वेन नियच्छेदिति ।

नित्यस्वभाववत् कादाचित्कस्वभावस्यापि हेतुनैरपेक्ष्यं स्यादित्यत्राह कार्यं निर्हेतुकं चेदिति । विषमं निदर्शनमित्याकूतम् । तदेवानिष्टप्रसङ्गेन व्यनक्ति कथमिति । निरवधित्वे गत्यन्तरं न संभवतीति भावः। कार्यस्य निर्हेतुकत्वं (निरवधित्वं) सतोऽसतो वेति विकल्पे पूर्वत्र नित्यता, अन्यत्र तुच्छता स्यादिति विभाज्य(व्य)म् । पूर्वावधिवत् उत्तरावधेरप्यसत्कल्पत्वात् नित्यत्वम् । न हि इतःपरं न भवितव्यमनेनेत्यपि नियमोऽस्ति ॥ ननु कादाचित्कत्वं स्वभावो न वा । आद्ये नित्यस्वभाववत् निरपेक्ष एव स्यात् । द्वितीये कथमतत्स्वभावः कारणसहस्रेणापि तत्स्वभावतां नेतुं शक्यः? स्वभावस्य च हेतुमत्त्वे निर्हेतुकमिति किंचित् न स्यात् । अतो नित्यस्वभाववत् नियतकालस्वभावता स्यादिति शङ्कते कादाचित्केति । कादाचित्कस्वभावत्वेऽपि हेत्वधीनतां तत एव नित्यस्वभाववैषम्यं चाभिप्रेत्याह न नियमनादिति । न हि यतः कुतश्चिदनन्तरमनेन भवितव्यमिति कादाचित्कत्वम्, अनियमादृष्टेः; अस्मादनन्तरमेवेदमिति काल-

---

[illegible]— नहीति । सामग्रीसद्भावेऽवश्यं ध्वंसेन भाव्यमिति नियमानङ्गीकारादिति भावः ॥३३॥
[illegible]– रूपादिवदिति । शलाटोः फलभावदशायां विलक्षणरूपरसाद्युत्पत्तिर्दृष्टा । न हि तत्र नियतमपि रूपं रसस्य कारणमिष्यत इति भावः। अहेतुत इत्येतत्स्थाने अनिमित्तत इति न्यायसूत्रे पाठः। कण्टकानां तीक्ष्णता, पुष्पाणां सौकुमार्यम्, ग्राव्णः काठिन्यमित्यादौ निमित्तं हि दुर्वचमिति भावः । प्रागभावमात्रमवधिः स्यात् । कादाचित्कत्वं स्वभाव एव भवत्वित्याद्याशंकापरिहारप्रणाली न्यायकुसुमाञ्जलौ संक्षिप्ताऽत्र विव्रियते । पूर्वावधिरिति । कार्यस्य सर्वस्य पूर्वोत्तरोभयावधिकत्वमनुभवसिद्धम् । कारणकलाप एव पूर्वावधिरित्युच्यते ; कार्यध्वंसादिश्चोत्तरावधिरिति । सहीत्ययं हिशब्द उत्तरत्र नेयः, 'तत्पूर्व एवेति हि सिद्धमिति । तद्वत्—प्रागभाववत् । एतेनापि—कार्येणापि। अवधित्वेन नियच्छेदिति । सामग्र्या एव पूर्वावधित्वात् एकं कारणं सर्वकारणान्तरविशिष्टं सदेव स्वस्मिन्नवधितावच्छेदकमिति भावः । अथ शंकामुखेन कादाचित्कत्वस्य स्वाभाविकत्वं हेतुनिरपेक्षत्वं निरस्यति । नित्यस्वभाववत् । नित्यानामात्मप्रकृत्यादीनामात्मत्वप्रकृतित्वादिः स्वभावो न हेत्वपेक्षः

विशेषव्यवस्थादृष्टेरित्यर्थः । उक्तनियमानभ्युपगमे सर्वत्र सर्वदा सर्वत. कार्यं स्यादिति तर्कबाधं व्यनक्ति अन्यथेति । न हि धूमादिना यदाकदाचिद्भवितव्यमिति अस्य कादाचित्कत्वं नियम्यते ; तथा सति गर्दभादेरनन्तरं तदुपलब्धिर्वा, सामग्र्यनन्तरमनुपलब्धिर्वा स्यादिति ॥ ३३ ॥

इति कार्यकारणभावादिमर्थनम् ॥

नेत्रादेर्दीपिकादेरिव नियमयुतं तैजसत्वादिसाध्ये
रूपादिग्राहकत्वं यदि करणतया, स्यादसाधारणत्वम् ।
तस्माद्धाय्यं त्वसिद्धं भवति गमकतामात्रमप्यञ्जनादौ
अक्षाहङ्कारिकत्वं श्रुतिपथनिपुणैर्घोषितं नैव बाध्यम् ॥ ३४ ॥

---

वी— हेत्वपेक्षत्वे नित्यत्वव्याघातात् । अथात्यात्म-त्रादिकं हेतुनिरपेक्षत्वेपि प्रतिनियतमेव हीति शंका । चार्वाकेण नित्यवस्त्वनंगीकारेऽपि प्रतिवाद्यभिमतनिदर्शनेन तन्निरासप्रयासः । उत्तरार्धं कुसुमाञ्जलौ, "निरवधित्वे अनियतावधित्वे वा कादाचित्कत्वव्याघातात्" इत्युक्तस्य विवरणरूपम् । तत् सिद्धं नियतपूर्वावधिकत्वमावश्यकम्, तदेव सकारणत्वमर्पीति ।

अथ श्लोकार्थः—कार्यस्य पूर्वकाल-उत्तरकालश्चेति कालद्वये उत्तरकालोऽनन्तः—अनवधिकः। पूर्वकालस्तु अनादिरपि सान्तः—सावधिकः । योऽयमस्य कालस्यावधिः–समाप्तिः, तस्य नियतिम्—अवश्यम्भावितां यत् कार्यात् पूर्वं सत्–वर्तमानं करोति, तत् तत्कार्यकारणम् । यथा घटं प्रति दण्ड-चक्रकुलालादि । ननु दण्डादीनां सर्वकार्याननुगतत्वात् सर्वत्रानुगतः कार्यात् पूर्वं स्थितः कार्य-प्रागभाव एवेति, स एक एव कारणं भवतु । अतः स एव पूर्वकालावधिनियतिकरः; स्वयं कार्ये जाते नश्वरत्वात् कार्यं प्रति पूर्वावधित्वेनापि कथनार्हश्चेत्यत्राह भावेति । भावरूपकारणमेव चार्वाकनिषेध्यम्, अभावरूपकारणसत्त्वेऽपि न दोष इत्याशयेनैवमुच्यते चेत्—तन्न युक्तम्; असन्मते अभावस्य भावान्तरत्वेन भावकारणकत्वत्यागासंभवात् । अभावस्यातिरिक्तत्वेऽपि प्राग-भावस्यानादितया कार्येणापि प्रागेव भवितव्यमिति तदनादितायां प्रागभावस्यैवासिद्धिः स्यात् । अतो दण्डचक्रादिभावपदार्थसहकारशून्यस्य प्रागभावमात्रस्य कार्यावधित्वं वा कार्यपूर्वकालावधि-करत्वं वा कारणत्वं वा दुर्वचम् । कार्यं निर्हेतुकं चेत्—हेतुं विना स्वभावत एव कार्यं कादा-चित्कञ्चेत्, नैवम्–निरवधित्वरूपनिर्हेतुकत्वस्य कादाचित्कत्वस्य च मिथो विरोधात् । अतस्तदा कार्यं शशविषाणादिवत् अत्यन्तासद्वा, आत्मवत् त्रैकालिकसद्वा स्यात् । कादाचित्कत्वं स्वभावस्या-देष्टव्यमिति, निरवधित्वं त्याज्यम् । तथा अनियतयत्किञ्चिदवधिकत्वमपि त्याज्यम् । अयमेवावधि-रिति नियमनस्यावश्यकत्वात् । अन्यथा यस्य कस्यापि प्राक् सत्त्वात् प्रागेव कार्याप्तेः । अतोऽति-प्रसंगात्, 'नियतावधिकत्वे हेतुवादाभ्युपगमात्' इत्युदयनाचार्योक्तरीत्या सकारणकत्वसिद्धिरिति ।

इति चार्वाकमताकस्मिकत्वभंगः ॥ ३३ ॥

पूर्वं प्रकृतिविकृतिविभागचिन्तायां विशिष्टवेषेणेश्वरस्य कारणत्वस्थापनशेषतया पञ्चीकरण-प्रस्तावे, कार्यस्यानेकांशसंयोगाधीनत्वे परमाणुकारणवादे कोऽपराध इति शंकायां १८ श्लोके काणादखण्डनमारभ्य क्रमेण कापिलसौगतचार्वाकमतान्यपि कार्यकारणभावविषये निरस्तानि । अथ स्वाभिहितेन्द्रिय-भूतादिसृष्टिविरुद्धानि मतान्तराणि निरस्यति नेत्रादेरित्यादिना । तार्किकैरेकैक-ज्ञानेन्द्रियस्य एकैकभूतविकारत्वं साधितमनुमानैः । तानि चानुमानानि इन्द्रियपक्षकाणि, ग्राह्यगुणपक्षकाणि, तज्जन्यज्ञानपक्षकाणि च भवन्ति । तत्रेन्द्रियपक्षकमनुमानं श्लोके साक्षादुक्तम् ।

प्रकृतस्य प्रकृत्यादिकारणवादस्य प्रतिपक्षा निरस्ताः । तत्र देहादिवत् इन्द्रियाणामपि भौतिकत्वं वदतः प्रतिवक्ति **नेत्रादेरिति** । **नियमयुतं** सावधारणम् । रूपादिषु मध्ये रसाद्यग्राहकत्वेन विशेषितमित्यर्थः । चक्षुः तैजसं रसाद्यग्राहकत्वे सति रूपग्राहकद्रव्यत्वात् दीपवदिति । एवं त्वगिन्द्रियं वायवीयं स्पर्शादिषु मध्ये स्पर्शस्यैव ग्राहक(द्रव्य)त्वात् अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकवायुवत् । रसनस्याऽऽप्यत्वे रसस्यैवेति दन्तान्तस्तोयं दृष्टान्तः । घ्राणस्य पार्थिवत्वे गन्धस्यैवेति चन्दनकुङ्कुमादिगन्धाभिव्यञ्जकनिम्बत्वगादि निदर्शनम् । श्रोत्रस्य तु नभस्त्वे श्रोत्रं गुणावान्तरजात्या स्वगुणसजातीयगुणग्राहकम् बाह्येन्द्रिय-

---

ஞ௵ஞ-तत्रेति। कारणवादप्रतिपक्षनिरासानन्तरं 'प्राच्यादक्षाणि' इत्युक्त्या अक्षनिरूपणप्रसङ्गे सतीत्यर्थः। देहादिवदिति । इन्द्रियाणां देहान्तर्गतत्वात् तद्वत् भौतिकत्वं युक्तमिति भावः। तैजसमिति । तेजस्स्वरूपम्, तेजस्त्ववत् इति वाऽर्थः । आत्ममनःप्रभृतिषु व्यभिचारवारणार्थं रसाद्यग्राहकत्वे इति । अत्र आदिशब्दस्य रसाग्राहकत्वाद्यन्यतरविशेषणे तात्पर्यम् । अन्यथा वैयर्थ्यात् । घटादौ व्यभिचारादाह द्रव्यत्वादिति । एवमग्रिमानुमानेष्वपि द्रष्टव्यम् । गुणग्राहकमित्युक्ते सिद्धसाधनमित्यत आह *स्वगुणसजातीयेति । तथा गुणत्वजात्या श्रोत्रवृत्तिसंख्यादिजातीयशब्दग्राहकत्वमस्तीति* सिद्धसाधनमित्यत आह-गुणत्वावान्तरजात्येति। स्वग्राह्यगुणत्वावान्तरजात्येत्यर्थः। ननु इन्द्रियाणां प्राप्यकारित्वात् वीचीतरङ्गन्यायेन स्वस्मिन् उत्पन्नशब्दगुणग्राहकं श्रोत्रं कथं स्वगुणसजातीयग्राहकमिति चेन्न—*श्रोत्रसंबद्धानामेव अनेकशब्दानां सजातीयत्वसंभवात् ।* अनेनानुमानेन श्रोत्रस्य शब्दगुणकत्वे साधितेऽपि शब्दगुणकत्वस्यैव नभोलक्षणत्वात् नभस्त्वे साधितं स्यादिति भावः। एवमग्रिमानुमानेऽपि द्रष्टव्यम् । गुरुत्वादौ व्यभिचारादाह इन्द्रियव्यवस्थापकेति । इन्द्रियस्य

ஸ்ரீ—*अन्यत् व्याख्यायामुपलक्ष्यते। गुणेषु रूपस्य प्रथमत्वात्, अधिकग्राहकत्वादिना इन्द्रियेषु चक्षुषः* प्राधान्याच्च रूपग्राहकं चक्षुः पूर्वमुच्यते, अन्यानि आदिपदेन। नेत्रादेरित्यस्य रूपादिग्राहकत्वेऽन्वयः। नियमयुतमित्यस्य व्याप्तियुक्तमित्यर्थः। नियमे सप्तम्यन्तसाध्यपदान्वयः। तथा च नेत्रादिगतं ग्राहकत्वं तैजसत्वादिसाध्यनिरूपितव्याप्तियुक्तमित्यर्थः। हेतुरित्यप्रयुज्य नियमयुतमिति विशेषप्रयोगः रूपादिग्राहकत्वरूपहेतौ विशेषणान्तरस्य निवेश्यस्य ज्ञापनाय। नियमयुतपदस्य पुनरावृत्त्या तस्यार्थान्तरस्य लाभः। तच्च नियमयुतम्—व्यवस्थायुक्तम्, इतराग्राहकत्वरूपविशेषणविशिष्टमिति यावत्। दीपादिर्दृष्टान्तः। इन्द्रियसंनिकर्षे व्यभिचारवारणाय हेतौ द्रव्यत्वमपि निवेश्यम्। यद्वीत्यादिना तत्खण्डनम्। अथापि नेत्रादेरित्यारभ्य पूर्वार्धमेकं वाक्यम्। अन्वयक्रमः प्रागुक्तः। रूपादिग्राहकत्वं नाम रूपादिग्रहकरणत्वं वा रूपादिग्रहकरणसहकारित्वं वा, रूपादिग्रहकारणत्वमात्रं वा। आद्ये (प्रथमपादोक्तविशेषणविशिष्टं रूपादिग्राहकत्वं करणतया चेत्,) हेतुरसाधारणः स्यात्; सपक्षविपक्षव्यावृत्तत्वात्; विपक्षात् पृथिव्यादेरिव सपक्षात् दीपादेरपि व्यावृत्तत्वात्। द्वितीये नेत्रादिरूपे पक्षे रूपग्रहकरणत्वमेव, न तु करणसहकारित्वमित्यसिद्धिः । तृतीये अञ्जनादौ व्यभिचार इति। चतुर्थपादेन प्रमाणविरोधादनुमानानां बाधितत्वमप्यस्तीत्याह ।

रसस्यैवेतीति। इतिशब्दः रसस्यैव ग्राहकत्वं आप्यत्वरूपसाध्यनिरूपितनियमयुक्तमित्यनुषङ्गज्ञापकः। एवमुपरि। दन्तान्तस्तोयमिति। अत एवोक्तं न्यायभाष्ये, (जम्बीरादिफले खण्ड्यमाने द्रष्टुः) रसगर्धिप्रवर्तितो दन्तोदकसंप्लव इति। स च संप्लवो ग्रस्यमानवस्तुगतं रसं सम्यक् व्यनक्तीति। निम्बत्वगिति। मीमांसापादुकायां (१४५) एकाक्षेति श्लोके निम्बत्वग्ग्रहणमेतत्समर्थार्थं चेति विमृश्यम्। तार्किकाः कुङ्कुमगन्धाभिव्यञ्जकतया गोघृतमपि निर्दिशन्ति। विपयपक्षस्यानुमानान्याह-

त्वात् चक्षुरादिवदिति॥ शब्दो गुणावान्तरजात्या स्वसजातीयगुणवतेन्द्रियेण गृह्यते बहिरिन्द्रियव्यवस्थापकगुणत्वात् रूपादिवत् । शब्दो भूतेन्द्रियग्राह्य इति वा । बहिरिन्द्रियव्यवस्थापकत्वादित्येव हेतुः । तथा श्रोत्रं भौतिकम्, बाह्येन्द्रियत्वात् चक्षुरादिवत् । आकाश इन्द्रियारम्भकः भूतत्वात् भूतान्तरवदिति। शब्दोपलब्धिर्वा भूतेन्द्रियकरणिका बाह्येन्द्रियव्यवस्थापकोपलब्धित्वात्, रूपोपलब्धिवत् । तत्र आद्येषु चतुर्ष्वनुमानेषु हेतुविकल्पमनूद्य (भिप्रेत्य) दूषयति **यदि करणतयेत्यादिभिः** । यस्मिन् सति कार्यं भवत्येव, तत् करणम्; तच्च सन्निकर्षविशेषविशिष्टतयेन्द्रियाणाम् । ननु, "उद्विग्नो ह्यन्धकारेण कश्चिदेवं ब्रवीत्यपि । किं चक्षुषा ममैतेन, दृष्टं दीपेन यन्मया ॥" इति दीपादिषु साधकतमत्वं कश्चिद् ब्रूयात् । अत. सपक्षवृत्तेर्हेतोः कथमसाधारणत्वम्? इत्थम्—आलोकेन विनाऽपि जन्तुभेदेषु चक्षुषो रूपादिग्राहकत्व सिद्धम् । अन्धकारे च मनुष्यादीना तत्त्वतोऽन्यथा वा । अत ईदृशं प्राधान्यमपेक्ष्य इन्द्रियेषु करणत्वं दीपादिषु सहकारित्व च प्रख्यातमनुरुध्य विकल्पप्रवृत्तेरविरोध । कोट्यन्तरं दूषयति—**तत्साह्यय्यं त्वपिद्रमिति** । करणभूतेन्द्रियापेक्षया तेषामेव दीपादिवत् सहकारित्वमनुपपन्नमित्यर्थः ॥ दीपादीन् प्रति सहकारित्वात् नासिद्धिरिति चेत्, तर्हि प्रमातृप्रमेययोरपि तथात्वात् तत्सिद्धि· स्यात् ॥ तयो सतोरपि कदाचित् कार्यं नास्तीति चेत्, तावता करणत्वं मा भूत्; तत्सहकारित्वं तु सिद्धमेव । दीपे च सति भाव एवेति नियमो नास्ति ॥ संप्रयोगविशेषसाहित्यात् स्यादिति चेत्, तर्हि तयोरपि ततः स्यादेवेत्यनैकान्त्यम् । एतेन करणत्वादिविकल्पानादरेण रूपादिबोधकद्रव्यत्वमात्रं हेतुरित्यपि निरस्तम्; तत् व्यनक्ति **भवतीत्यादिना** । आदिशब्देन प्रमात्रादिसंग्रह ॥ अञ्जनस्य शक्तये प्रतिबन्धकनिवर्तकत्वमात्रमिति चेन्न; अशक्तये गूढनिधिदर्शनादौ शक्त्याधानेन सहकारित्वदृष्टेः ॥ शक्त्याधानं(यर्क) हि सहकारीति चेन्न : दीपादावपि तथा क्लृप्तिप्रसङ्गात् ॥ सत्त्वैव हेतुत्वं तत्र दृष्टमिति चेत्—अत्रापि तथाऽस्तु; अविशेषात् । ये च तत्तदिन्द्रियदोषैरपि रूपादिधीरस्तीति मत्वा, "शरीरयोगे सत्येव साक्षात्प्रमितिसाधनम्" इति लक्षयन्ति; तन्मते तत्तद्दोषैरप्यनैकान्त्यम् । तेषां तैजसत्वानभ्युपगमात् ।

---

ਓਲਾ— व्यवस्थापकत्वं इन्द्रियानुमानप्रयोजकअन्योपलब्धिविषयत्वम् । सुखादौ व्यभिचारादाह—गुणत्वादिति । सन्निकर्षविशेषविशिष्टतयेति । समनस्कस्य विषयसंस्कारकालोकसहितस्य भूयोवयवेन्द्रियसन्निकर्षविशिष्टेन्द्रियस्य करणत्वमिति भावः। सकलेतरसहकारिसमवधानविलम्बेन प्रमोत्पादकत्वं करणत्वमित्युक्ते आत्मादौ व्यभिचार इति भावः । तत्सिद्धिः स्यादिति । तैजसत्वादिसिद्धिः स्यादित्यर्थः । विकल्पानादरेण—विशेषानादरेणेत्यर्थः । लक्षयन्तीति । इन्द्रियदोषेऽतिव्याप्ति—शब्द इति । गुणावान्तरजातिः गुणत्वव्याप्यजातिः शब्दत्वरूपत्वादिः। सजातीयगुणवतेत्यनेन शब्दरूपगन्धादेः शब्दरूपगन्धादिमदिन्द्रियग्राह्यत्वसाधने यथायथं तत्तद्गुणवदाकाशतेजःपृथिव्यादिरूपत्वमिन्द्रियेषु सिध्यति । इत्येवेति । पूर्वोक्त एवेत्यर्थः । अन्यथा वेति । ग्राहकत्वमित्यनुषङ्ग. । संप्रयोगविशेषः—इन्द्रियसंनिकर्षः । शरीरयोगे इति कारिका तार्किकरक्षागता । साक्षात्कारसाधनत्वमिन्द्रियलक्षणञ्चेत्, इन्द्रियगतदोषेष्वतिव्याप्तिः । तद्वारण शरीरयोगे सतीति दलेन । इन्द्रियसंनिकर्षेऽतिव्याप्तिवारणार्थमपि तद्दलं निवेश्यम् । इन्द्रियदोषस्तु न शरीरगतः । न च प्रमितीति प्रमोक्त्यैव दोषवारणमिति वाच्यम्, प्रमाणवान्तरभेदत्वमात्रविवक्षायां प्रमितिपदप्रयोगेऽपि

दन्तान्तस्तोयदृष्टान्तश्चायुक्तः । विषयसंस्कारकस्य व्यञ्जकत्वायोगात् । न हि ग्रस्यमानं किंचिदत् असंस्कृत्य दन्तान्तस्तोयस्योपकारकत्वम् । तावता च रसव्यञ्जकत्वे रसगन्धाद्युद्भवहेतोरग्न्यादेरपि किं तन्न स्यात् ? वायुश्च वेगेनाभिघ्नन् सूक्ष्मान् सलिलकणान् अन्तश्शरीरं प्रवेशयति । शैत्यं तु तेषां त्वगिन्द्रियप्रवेशवैषम्यात् विशदमनुभूयते । तावता स्पर्शव्यञ्जकत्वे, गन्धोपकारकस्य तस्य तद्व्यञ्जकत्वमपि किं नेष्यते ? तथा च घ्राणपार्थिवत्वानुमानं दुःस्थमिति ।

एवं चतुर्णां भौतिकत्वासिद्धौ तद्दृष्टान्तेन श्रोत्रभौतिकत्वानुमानान्यपि छिन्नमूलानि । आकाश इन्द्रियारम्भक इति चायुक्तम् ; श्रोत्रस्य स्वमते तदारब्धत्वाभावात् । भूतत्वादिति च घटादिभिरनैकान्तिकम् ।

किंचात्र लोकसिद्धनयनबुद्बुदादिपक्षीकारे रूपादिविशेषैस्तेषां पार्थिवत्वसिद्धेः कालात्ययापदेशः। अनुमानतस्त्विन्द्रियसिद्धिरशक्येति वक्ष्यते । सामान्यतो दृष्टादधिष्ठानातिरिक्तेन्द्रियसिद्धावपि तदाहङ्कारिकत्वं श्रौतमबाध्यम् । "इन्द्रियाण्यहङ्कारविशेषः" इति हैरण्यगर्भोक्तिरपि तदाहङ्कारिकत्वानुगुणा । अतः श्रुतिसिद्धपक्षीकारेऽपि बाध एव ।

प्रतिप्रयोगाश्च – बाह्येन्द्रियाण्यभौतिकानि इन्द्रियत्वात् मनोवत् । प्रत्येकपक्षीकारेण वा चक्षुः अतैजसमित्यादि । तावेव हेतुदृष्टान्तौ ; परस्परं वा घ्राणादयो दृष्टान्ताः। विपक्षे बाधकसदसद्भावश्च

---

Gloss— धारणार्थं शरीरयोगे सतीति विशेषणान्तर्भावेन इन्द्रियलक्षणं वदन्तीत्यर्थः । साक्षात् प्रमितिः—प्रत्यक्षप्रमेत्यर्थः। दुःस्थमिति । गन्धव्यञ्जके गन्धोपहारकवायौ पार्थिवत्वाभावेन व्यभिचारादिति भावः। एवं चतुर्णामिति। निम्ब [म्रत्वङ्ग ?]निदर्शनं चायुक्तम्, तस्यापि विषयसंस्कारकत्वेन गन्धाभिव्यञ्जकत्वाभावात् । अन्यथा तत्तद्घटप्रक्षिप्तजले तत्तद्भूमिसंसृष्टे वर्षजले च तत्तद्गन्धाभिव्यञ्जकत्वापत्त्या व्यभिचारप्रसङ्ग इति भावः। तद्दृष्टान्तेन छिन्नमूलानि इत्यन्वयः। श्रोत्रम् अभौतिकम् इन्द्रियत्वात्, चक्षुरादिवत् इत्यनुमानेन निरस्तविप्रतिपत्तिनिरस्ताप्रतिपत्तिकानीति भावः । सामान्यतोदृष्टादिति । रूपाद्युपलब्धि... ..करणसाध्या क्रियात्वात् छेदनवत् इतीन्द्रियार्थसाधकत्वात् इदं सामान्यतोदृष्टम् । तदुक्तम्—"दृष्टं सामान्यतोदृष्टमिति चास्य विधाद्वयम् । पूर्वं प्रत्यक्षयोग्यार्थं तदयोग्यार्थमुत्तरम् ॥" इति । विपक्षे बाधकेति । यदि अभौतिकत्वादिसाधनेऽनुकूलतर्को नास्ति, तर्हि भौतिकत्वादिसाधनेऽपि । परिहरणीयानिष्टाभावात् । ननु भौतिकत्वादिसाधनेऽनुकूलतर्कोऽस्ति ; यदि चक्षुरादीनि भौतिकानि न स्युः, बाह्येन्द्रियाणि न स्युः ; मनोवत्, यदि चक्षुस्तैजसं न स्यात्— रूपादिषु मध्ये रूपस्यैव ग्राहकं न स्यात्—रसनादिवत् इत्यादितर्कसद्भावात्—इति चेन्न-अभौतिकत्वादिसाधनेऽपि अनुकूलतर्कोऽस्ति, यदि इन्द्रियाणि भौतिकानि न स्युः इन्द्रियाण्येव न स्युः इति– सामान्यत इन्द्रियलक्षणे तदयोगात् । अस्तु येनकेनापि पदेन दोषपरिहारः । किमिह नस्तेन । विषयसंस्कारकस्येति । रसनेन्द्रियं मुखे यत्रयत्र, तत्रतत्र रस्यमानद्रव्यव्यापने द्रवीभूतं दन्तोदकमुपयुज्यत इति भावः। न्यायभाष्योक्तं त्वन्यत् । बुद्बुदशब्दः तत्तुल्याकारगोलकपरः । नेत्रादीत्यनेन गोलकादिविवक्षा वा तदतिरिक्तानुमानसिद्धवस्तुविवक्षा वा श्रौतेन्द्रियविवक्षा वेति विकल्प्य दूषयति किंचेत्यादिना। सामान्यत इति । रूपादिग्रहः सकरणकः क्रियात्वात् इत्याद्यनुमानं सामान्यतः करणसाधकत्वात् सामान्यतो दृष्टम्। तत्रैवैतस्याधरूपरिदोषप्रवृत्तौ अतिरिक्तमित्येतावत् सिध्येत्; न त्वनाहंकारिकत्वमपि । हैरण्यगर्भोक्तिः—योगानुशासनोक्तिः । अहङ्कारविशेषपदं न साक्षादहङ्कारत्वबोधकम् । किन्तूपादानोपादेयैक्याभिप्रायम् । अत एव विशेषपदमिति ॥ ३४ ॥

समः ; यत्किंचिद्दृष्टान्तमालानुसारेण प्रसङ्गस्य सुलभत्वादिति ।

परोक्तानुमानानामागमबाधमभिप्रेत्याह अक्षाहङ्कारिकत्वमिति । **श्रुतिपथनिपुणैः** मनुपराशरपाराशर्यादिभिः। **घोषितं** बहुषु प्रदेशेषु स्पष्टोक्तम् । **नैव बाध्यम्** अशक्तैरनुमानैरन्यपरैश्च वाक्यैरिति शेषः॥३४

**तन्मात्रेष्विन्द्रियाणां श्रुतिरिह न लयं वक्ति किंतु प्रवेशम्**
**नो चेत्, पृथ्व्यादिवाक्येष्विव हि लयपदं व्योम्नि चाक्षेषु च स्यात् ।**
**भूतैराप्यायितत्वात् क्वचिदुपचरिता भौतिकत्वोक्तिरेषाम्**
**अन्नापस्तेजोमयत्वं श्रुतिरपि हि मनःप्राणवाचामुवाच ॥ ३५ ॥**

ननु "इन्द्रियाणि तन्मात्रेषु" इति श्रुत्या भौतिकत्वममीषां भातीत्यत्राह **तन्मात्रेष्विति** ॥ पूर्वापरपर्यायेष्विव आकाशेन्द्रियादिपर्याययोर्लयो न पठ्यते। न चात्रानुषङ्गः कार्यः ; सति गत्यन्तरे अध्याहारवत् तस्याप्ययोगात्। अन्यथा द्वितीयादिषु सर्वेषु पर्यायेष्वप्यनुषङ्गेण भाव्यम् ; वैरूप्यायोगात्। इन्द्रियाणामाकाशप्रकृतित्वं च सर्वोपबृंहणविरुद्धम्। अस्यां चोपनिषदि, "भूतादेराकाश आकाशाद्वायुः" इत्यादिः सृष्टिक्रम उक्तः। "षोडश विकाराः" इति श्रुतेश्चासामञ्जस्यं स्यात् (अनाञ्जस्यात्)। अतो वरमधिकरणस्वोक्तिमात्रानुसारादाकाशस्येन्द्रियेषु, तेषां चाकाशारम्भकतन्मात्रेषु प्रवेशविशेषाभिधानमित्यभिप्रायेणाह **किंतु प्रवेशमिति** । अयं भावः—यद्यप्याकाशस्येन्द्रियैः प्रागपि संबन्धः, तथाऽपि तत्तदिन्द्रियाप्यायकभूतांशानां स्वकारणलयक्रमात् आकाशदशापन्नत्वात् तदानीमिन्द्रियेष्वाकाशस्यैव संसर्गः। अनन्तरमाकाशे च शब्दतन्मात्रावस्थे तानीन्द्रियाणि शब्दतन्मात्रसंसर्गीणि भवन्ति । अतस्तन्मात्रान्तराणामपि

---

*ਪੰਕਤਾ*— मनोवत्; चक्षुर्यदि तैजसं, न तर्हि इन्द्रियं स्यात्, दीपादिवत् इत्यादितर्कसद्भावात् इति भावः। इममेव भावं सामान्यतो दर्शयति—यत्किञ्चिदिति ॥ ३४ ॥

तन्मात्रेष्विति ॥ अनाञ्ज स्यादिति । इन्द्रियाणामपि प्रकृतित्वे विंशतिप्रकृत्यापत्त्या भूतानामेव विकृतित्वात् पञ्चविकृत्यापत्त्या च "अष्टौ प्रकृतयः षोडश विकाराः" इत्यस्य मुख्यार्थसंभवेन अमुख्यार्थत्वापातादित्यर्थः। साक्षात्त्ववाचकस्य अञ्जश्शब्दस्य मुख्यार्थवाचित्वात् तेन नञ्समासे सति अनाञ्जस्यात् इत्यनेन *अमुख्यार्थकत्वात् इत्यर्थो लभ्यते* ॥ ३५ ॥

*श्री*— अनुमानादिना मा बाधि। श्रुत्या बाधादसन्मानसिद्धिरिति सौबालश्रुतिमादाय शंकते तन्मात्रेष्विति। भाव्यमिति। तथा च तत्र पर्यायेषु लीयन्त इति पठितं व्यर्थं स्यात्। तत्पाठ एवात्रानुषङ्गज्ञापक इति भावः। आकाशप्रकृतित्वम्। आकाशमिन्द्रियेष्विति वाक्यात् आकाशं प्रति इन्द्रियाणां प्रकृतित्वम्। उक्त इति। "पृथिव्यप्सु प्रलीयते, आपस्तेजसि लीयन्ते, तेजो वायौ लीयते, वायुराकाशे लीयते, *आकाशः.........तन्मात्राणि भूतादौ लीयन्ते*" इति *लयक्रमोक्त्या* तद्वैपरीत्येन सृष्टिक्रम उक्तप्रायः। भूतादिपदञ्च भूतानामादिः कारणमित्यर्थकं तामसाहङ्कारमाकाशकारणमाह। न केवलमेतत्। "भूतादेराकाशमाकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी" इति च प्रथमखण्डे । तथाचेन्द्रियस्य नाकाशं प्रति प्रकृतित्वमित्याशयः। तत्तदिन्द्रियाप्यायकेति। 'अन्नमयं हि सोम्य मनः, आपोमयः प्राणः, तेजोमयी वाक्' इत्यादिश्रुतेरिति भावः। तथाच साक्षात्परम्परया च स्वलीनसर्वकार्यकाकाशसंसर्गरूपो विशेष इह आकाशमिन्द्रियेषु इत्येत्र

तदवस्थापत्त्या तत्तदंशभेदविवक्षया बहुवचनोपपत्तिः। अतः, "तन्मात्राणि भूतादौ लीयन्ते" इत्यपि बहुवचनं गतार्थम्। [अत्रैवं व्याख्यातम् — इन्द्रियाप्यायकभूतांशानां सर्वेषामाकाशतापन्नत्वादाकाशस्यैव इन्द्रियसंसर्ग आसीत्; पञ्चानामपि भूतानां शब्दतन्मात्रापन्नत्वादिन्द्रियाणि शब्दतन्मात्रांशभेदेषु संसृष्टान्यासन्निति।] एवमनभ्युपगमे वाक्यवैरूप्यदोषं व्यनक्ति **नो चे**दिति। ननु "श्रोत्रं नभो घ्राणमुक्तं पृथिव्याः" इत्यारभ्य "वाय्वात्मकं स्पर्शनमामनन्ति" इत्युच्यते; "नभः श्रोत्रं च तन्मयम्" इत्यादि च। अत आहङ्कारिकत्ववाक्यं परम्परया नेयमित्यत्राह **भूतै**रिति। तदिदं व्यवस्थापितं **वेदार्थसंग्रहे,** "भूतैस्त्वाप्यायनं महाभारत उच्यते" इति। इममेव न्यायम्, "अन्नमयं हि सोम्य मनः आपोमयः प्राणस्तेजोमयी वाक्" इत्यादिष्वपि योजयितुमाह **अन्नापेजोमयत्व**मिति। न खलु हैतुकैरपि मनसः पार्थिवत्वं कल्प्यते; वायुरूपस्य प्राणस्याऽऽप्यत्वम्। तस्मादाप्यायनपरत्वमेव तत्र वाच्यम्। एवमन्यत्रापि। "अग्निर्वाग् भूत्वा मुखं प्राविशत्, आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्" इत्यादिषु तत्तद्देवताधिष्ठाने तात्पर्यम्; "अग्निं वागप्येति" इत्यप्ययश्रुतिश्चाधिष्ठातृदेवतांशापक्रमणपरे त्यभाष्यत; "ओषधीर्लोमानि" इत्यादिना अनपियद्भिर्लोमादिभिस्सह पाठात्॥ ३५॥

इतीन्द्रियाणामभौतिकत्वाहङ्कारिकत्वे॥

---

ऴी— विवक्षित इति भावः। तदवस्थापत्त्या–परम्परया शब्दतन्मात्रावस्थापत्त्या। बहुवचनोपपत्तिः– इन्द्रियाणि तन्मात्रेष्विति सप्तम्यन्त बहुवचनोपपत्तिः। प्रथमान्तबहुवचननिर्वाहमप्येवमेवोपपद्यते। अत्रैवमित्यादिवाक्यं क्वचित् कुण्डलितम्। व्याख्यातमिति। व्यासार्यैः सुबालोपनिषदीति शेषः; नत्वेतदानुपूर्व्युपलम्भात्। एवमेतद्व्याख्याप्रदर्शनात् तत्सामरस्याय तथैव व्याख्यायत इति सूच्यते। तेनेदमपि ध्वन्यते—वायुराकाशे लीयत इत्यन्तेन पृथिव्यादिकं भूतान्तरे लीयत इत्युक्तम्। स च स्वस्वतन्मात्रद्वारेति ग्राह्यम्। आकाशस्य तन्मात्रद्वारा तामसाहंकारे लयो वक्तव्यः। ततः प्राक् स्थूलानां भूतानां स्वाप्यायितसर्वेन्द्रियगतभूतांशैः संसर्गो भवतीति वक्तव्यम्। स प्रथमवाक्यस्यार्थः। स च संसर्गः तादृशाप्यायकभूतविलयस्थानभूततन्मात्रांशानां स्थूलभूतविलयस्थानभूततन्मात्रैः साकं मेलनमेवेति इन्द्रियाणि तन्मात्रेष्विति वाक्यस्यार्थः। तत्र आकाशस्यैकत्वात् अन्येषाञ्च बहुत्वात् वचनभेदः। पृथिवी स्वाप्यायितघ्राणगतस्वांशैः संसृज्यते। घ्राणाप्यायकपृथिव्यंशहेतुगन्धतन्मात्रांशो महापृथिवीलयस्थानतन्मात्रांशे तत्काले संसृज्यते इत्येवं यथायथं सर्वं विवक्षितम्। अथ सर्वांशविशिष्टं शब्दतन्मात्रं भूतादौ लीयते इति उपरितनवाक्येनोच्यते इति। एतेन सात्त्विकाहंकारकार्याणामिन्द्रियाणां सात्त्विके, तामसाहंकारकार्याणां तन्मात्रादीनाञ्च तामसे पृथगेव लयसंभवात् इन्द्रियतन्मात्रमेलनवचनं किमर्थमिति शंका निरस्ता। पृथिव्यादितत्तद्भूतं स्वस्वलयकाले इन्द्रियगत-तदाप्यायायकस्वांशस्यापि संग्रहाय इन्द्रियेषु संसृज्यते। अथ महापृथिव्यादिः इन्द्रियगतपृथिव्याद्यंशश्च गन्धतन्मात्रादितामापद्यते। एवञ्चेन्द्रियगतभूतांशतन्मात्राणां महापृथिव्यादितन्मात्राणाञ्चैकीभावः। [तदनन्तरमेवाहंकारे तन्मात्रलयः] इत्यर्थ एव सर्वव्याख्यातात्पर्यम्। आप्यायकांशलयस्यापि ज्ञापनाय पृथगुक्तिरिति। आप्यायनमिति। न तूत्पादनमित्यर्थः। अनपियद्भिरिति। न हि लोमनामोषधीषु अप्ययस्य=लयस्य संभवोऽस्तीति भावः। श्लोके क्वचिदित्यस्य महाभारतादावित्यर्थः। आप्यत्वमिति। नेत्यनुषंगः।॥ ३५॥

रूपादिज्ञानसिद्धौ यदि करणतया कल्पन धीन्द्रियाणां
तद्वत् गत्यादिकर्मस्वपि करणतया सन्तु कर्मेन्द्रियाणि ।
कर्मज्ञानाक्षहेत्वोः समपरिहरणा ह्यन्यथासिद्धिशङ्का
तस्मादेकादशाक्षाण्यपि निगमविदो मन्वते न्यायपूर्वम् ॥ ३६ ॥

अथ 'मनष्षष्ठान्येवेन्द्रियाणि', 'वागादिष्विन्द्रियशब्दो भाक्त' इति वदत नतिचन्द्रिपूर्वकेण प्रमाणेन प्रतिक्षिपति — रूपादीति ॥ अय भाव —यद्यागम [1]प्रधानीक्रियेत, तदा 'इन्द्रियाणि दशैक च' इति व्यवतिष्ठेत । यदा तु क्रिया करणपूर्विकेति व्याप्त्या रूपादे सुखादेश्चोपलब्धि स्मृतिश्च क्रियात्वात् करणपूर्विकेति कल्प्येत, तदा वचनादानादिक्रियाऽपि तत्पूर्विका कल्प्या स्यात् । अथ तावता अधिष्ठानातिरिक्त न सिध्यतीति मन्यसे, ज्ञानेन्द्रियेष्वपि तथैवाऽऽलोकादिभिरधिष्ठानैश्च सिद्धसाध्यता ॥ गोलकादिसद्भावेपि कदाचित् कार्यं न जायते इत्यतिरिक्तसिद्धिरिति चेत्, सम वागादावपि ॥ सामग्री वैकल्यात् प्रतिबन्धकाच्च तत्र तथेति चेत्, चक्षुरादावपि तथैव । सत्यप्यालोका [illegible] दर्शनेऽपि गोलकादित कदाचित् कार्यं न जायत इति चेत, तदपि समम् ॥ दोष सूक्ष्मस्तत्रेति [illegible], [illegible]गेव मस्तु । ज्वालाप्रालरीजन्यायेन विशेषादर्शनेऽपि दोषस्य कल्प्यत्वात् । कल्पितेऽपि घ्राणीन्द्रिये तदानीं तद्भ्रंशहेतु सूक्ष्मो दोषस्तयाऽप्यङ्गीकार्य । अन्यथा कथ कर्मेन्द्रियक्लृप्तेरन्यथासिद्धि ?

ननु न यदि चक्षुर्गोलक एवेन्द्रियम्, कथ तर्हि दूरस्थ व्यवहित वा न प्रकाशयति ? इत्थम्— यथाऽयस्कान्त देर यवहितानतिविप्रकृष्टाकर्षकत्वम्, तथेह प्रकाशकत्वम् । आभिमुख्यविशेष एव च बाह्ये

---

[1] अनुमानापेक्षया स्वयमप्रधानतया मत आगम प्रधानीक्रियेतेत्यर्थ ।

श्री— ज्ञानेन्द्रियवत् कर्मेन्द्रियसत्त्वमपि प्रमाणगम्यमित्याह रूपेति । क्रियात्वात् सकरणकमित्यनुमानस्य ज्ञानेन्द्रियसाधकत्वे कर्मेन्द्रियसाधकत्वमपि । प्रत्यक्षशरीरावयवभूतहस्तपादादिभिरेव निर्वाहे ज्ञानेन्द्रियकल्पना कुत इति च तुल्यमित्यर्थ । मनष्षष्ठान्येवेति । अनेन कर्मेन्द्रियस्वीकारे गीताविरोध इति शका सूच्यते । षट्कावच्छिन्नेति । षण्मात्रभूतेत्यर्थ । सिद्धानुगममात्रम् । लोकव्यवहार-सिद्धाशानुसरणमात्रम् । अनुगतलक्षणकथनासामर्थ्यं स्वदोष इति भाव्यम् । शास्त्रमेवानुसृतमिति । तार्किकयुक्तेरसाधकत्वचिन्तयेति शेष । सात्विक —सत्त्वगुणभूयिष्ठ । एकादशक —एकादशेन्द्रियवर्गे वैकृतात्—वैकारिकत्वेन प्रसिद्धात् सात्विकाहकारात् । ननु सात्त्विकादेकादश जायन्ताम् । तथापि तत्र कतिपयमात्रे इन्द्रियत्व बहुप्रमाणसमतमिति शका परिहरति साधितश्चेति । निगमविद —निगमाचार्यनामकव्यासपराशराादय एकादशापि न्यायपूर्वमक्षत्वेन मन्वते—अधिकरणविशेषे निगमानुकुलयुक्त्या साधयन्ति, "हस्तादयस्तु स्थितेऽतो नैवम्" इति सूत्रेणेत्यर्थ । शरीरे जीवे स्थिते चक्षुरादीनामिव हस्तादीनामप्युपकारकत्व यत, अतो न कतिपयमात्रे इन्द्रियत्वम् । शरीर-सयुक्तत्वे सति जीवोपकारकत्वमिन्द्रियत्वम् । न च मुख्यप्राणेऽतिप्रसग । तत्र विवक्षितस्य शरीराश्रितत्वस्याभावात । इन्द्रियाणा शरीराश्रितत्व नाम शरीरोपचयापघातान्यतराधीनोपचयापघातवत्त्वमिति न्यायभाष्ये निष्कृष्टम् । यद्वा द्रव्यान्यत्वे सतीति विशेषण प्राणवारणाय दीयतामिति भाव । श्लोके न्यायपूर्वमित्यस्य सप्तगत्यधिकरणे विचारपूर्वकमित्यर्थ इव, यायात् पूर्वं न्यायपूर्वम्, सकरणक क्रियात्वादित्यनुमानात् प्रागेव निगमबलात् एकादशसु अक्षत्व मन्वत इति च अर्थ ।

रूक्तः संनन्धोऽस्तु । नन्वयस्कान्तादिवत् आभिमुख्याभावेऽपि दर्पणादिभिः स्वमुखादेः पश्चाद्भागवर्तिनां च दर्शने कथं स्यात्? भवतो वा कथम्? चाक्षुषस्य तेजसः प्रतिलोमवृत्त्येति चेत्; सा कुड्यपाषाणादौ कथं न जायते, मणिसलिलदर्पणादिषु च कथं भवति? ॥ अपर्यनुयोज्यवस्तुस्वभावविशेषादिति चेत्— अस्तु तर्हि स एव सन्निधिविशेषसामर्थ्यात् अनभिमुखस्यापि दर्शनस्य हेतुः। द्रव्यान्तरकल्पनाद्वरं सिद्धद्रव्यसामर्थ्यविशेषस्य प्रतिफलनादौ संमन्तव्यस्य कार्यान्तरयोजनाभावम । अतो धीन्द्रियाणां कल्प्यत्वे कर्मेन्द्रियाणामपि क्लृप्तिरनिवार्या; अन्यथासिद्धिशङ्कापरिहारो न समाविति। तदेतत् सर्वमभिप्रेत्याह— कर्मेति। त्यज्यतां तर्हि वर्गद्वयमिति चार्वाकोत्थानं प्रतिरुणद्धि — तस्मादिति। अतीन्द्रियेन्द्रियकल्प्यत्वासंभवात्; अप्राप्ते न शास्त्रस्यार्थवत्त्वादिति भावः। निगमविद् इत्यनेन श्रुतिस्मृत्यनुविधानसूचनम्। 'एका कन्या दशेन्द्रियाणि' इत्यादेर्न हि कश्चिद्बाधो दृश्यते। न च कणभक्षाक्षपादाद्यनुसारेण षट्कावच्छिन्नेन्द्रियलक्षणक्लृप्तिर्युक्ता। यथाऽऽहुः—

"सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः। न सर्वलोकसिद्धस्य लक्षणेन निवर्तनम् ॥" इति ॥

वक्ष्यते चानुरूपं तल्लक्षणं सात्त्विकादहङ्कारोपादानत्वम्। न च कर्मेन्द्रियाणां तन्त्रान्तरसिद्धं राजसत्वमनुमन्तव्यम्; शब्दप्रमाणके यथाशब्दं व्यवस्थापनात्। माठरैरप्यत्र शास्त्रमेवानुसृतम्—'सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात्' इति। साधितं च सप्तगत्यधिकरणसिद्धान्ते हस्तादीनामपि तादृशमिन्द्रियत्वं न्यायपूर्वम्। क्रिया करणपूर्विकेति व्याप्त्यनुसारेण तत्करणमात्रानुमानेऽपि अलौकिकविशेषप्रतिपत्तिः शास्त्रत एवेति भावः। एवं च शास्त्रयोन्यधिकरणे भाष्यम्— 'अतीन्द्रियेऽर्थे शास्त्रमेव प्रमाणम्' इति। चन्द्रबिम्बपरभागादिषु व्यवधानविप्रकर्षादिभिरसदादीन्द्रियग्रहणानर्हेषु नानुमानम्; तस्य पक्षाश्रयहेतुधर्मव्यापकान्वयमात्रातिरिक्तेषु प्रवृत्त्ययोगात्, साध्यसामान्यस्य तु विवक्षितविशेषविरुद्ध-

Bhava— रूपादिज्ञानेति॥ अलौकिकविशेषप्रतिपत्तिरिति। आहङ्कारिकत्वमणुत्वं सर्गादिप्रलययोरेवोत्पत्तिविनाशौ इत्यादिविशेषज्ञानमित्यर्थः। चन्द्रबिम्बपरभागादिषु—चन्द्रबिम्बस्योपरितनभागादिषु। विद्यमानेष्विति शेषः (?)। तस्येति। पक्षाश्रयशब्दः पक्ष आश्रयो यस्येति पक्षतावच्छेदकपरः। पक्षाश्रयेण सह हेतुधर्मेण व्याप्तिपक्षधर्मतारूपेण व्यापकस्य साध्यस्य अन्वयः सामानाधिकरण्यमित्यर्थः। प्रवृत्त्ययोगादिति। रूपाद्युपलब्धौ अधिष्ठानातिरिक्तकरणविशेषस्य, क्षित्यादौ जीवातिरिक्तकर्तृविशेषस्य च साध्यादिबहिर्भूतत्वात् नानुमेयत्वमिति भावः। ननु कार्यत्वस्य क्रियात्वस्य च पक्षधर्मताबलात् कर्तृकरणविशेषसिद्धिरित्यत्र चोद्ये—कर्तृत्वकरणत्वादिसाध्यसामान्यस्य जीवातिरिक्तेन्द्रियेश्वरत्वरूपविवक्षितविशेषस्य विरुद्धेन जीवत्वेन, अधिष्ठानाद्यतिरिक्तातीन्द्रिय-

श्री— ननु लक्षणानुगम—जीवोपकारविशेषहेतुत्वादियुक्त्या साधनीयविषये किं निगमनिरीक्षणेनेत्यत्राह क्रियेति। अलौकिकविशेषः—गोलकाद्यतिरिक्तत्वाहंकारिकत्वादिः। अनुमानं प्रवर्तमानं विशेषतो दृष्टं वा सामान्यतो दृष्टं वा। नाद्य इत्याह चन्द्रेति। व्यवधानं-तिरोहितत्वम्। विप्रकर्षः—दूरस्थत्वम्। चन्द्रबिम्बस्य परभागः दृश्यमानादन्यः पश्चाद्भागः कश्चिदस्तीति मत्यां सत्यामपि तद्गतविशेषा नानुमातुं शक्या इति भावः। पक्षेति। पक्षरूपो य आश्रयः, हेतुरूपो यस्तद्धर्मः, व्यापकेन साध्येन सह तस्यान्वयो यः, तदतिरिक्तेषु न प्रवृत्तिः; व्याप्तिपक्षधर्मत्वोभयविशिष्टहेतुसाध्य-

व्याप्तत्वेन तदाकर्षकत्वायोगात् । अतोऽतीन्द्रियधर्मि(र्म)कल्पनाद्वरं दृष्टेषु केषुचित् वैषम्यमात्रस्वीकार इति तात्पर्यम् ॥ ३६ ॥ इत्येकादशेन्द्रियसिद्धिः ॥

सांख्यैस्त्रेधोक्तमन्तःकरणमिह मनोबुद्ध्यहङ्कारभेदात्
चित्तं चान्ये चतुर्थं विदुः, उभयमसत् तादृशश्रुत्यभावात् ।
तत्तत्तत्त्वोक्तिमात्रं[1] न हि करणभिदामाह क्लृप्तिस्तु गुर्वी
बुद्ध्याद्याख्या निरूढा क्वचिदिह मनसो वृत्तिवैचित्र्यमात्रा(योगात्) ॥३७॥

उक्तेष्विन्द्रियेषु एकमेवान्तःकरणमिति तत्त्वम् । सांख्यास्त्वाहुः "करणं त्रयोदशविधम्"...., "अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम्" इति । अन्ये तु चित्ताख्यमप्यन्तःकरणमन्यदाहुः । तदनुभाषते *सांख्यैरिति* ॥ तदिदं मतद्वयं निष्प्रमाणकमित्याह *उभयमसदिति* । कथमित्यत्र *श्रुत्या*

---

*Q(छ्वा)*— करणत्वरूपविशेषस्य विरुद्धेन आलोकत्वादिना च व्याप्तत्वेन दर्शनात् पक्षधर्मतावलस्य विशेषोपस्थापकत्वं न सम्भवतीत्याह—साध्यसामान्यस्येति ॥ ३६ ॥

अन्तःकरणमिति । त्रिविधम्—महदहङ्कारमनांसि शरीराभ्यन्तरवर्तित्वादन्तःकरणम् । दशधा बाह्येन्द्रियम्—तस्य—अन्तःकरणस्य । विषयाख्यम्—विषयान् आख्यातीति विषयाख्यम् । संकल्पाभिमानाध्यवसायेषु कर्तव्येषु द्वारीभवति । तत्र बुद्धीन्द्रियाण्यालोचनेन, कर्मेन्द्रियाणि

*वी*— साधकत्वमेव तस्येति भावः । न द्वितीय इत्याह साध्यसामान्यस्येति । विवक्षितविशेषविरुद्धेति । *सामान्यमुखव्याप्त्या सामान्यमेव सिध्येत् । करणसामान्ये शरपरशुकलशादौ उपलभ्यमानाः* विशेषाः भवदभिमतविशेषविरुद्धाः । तद्व्याप्त्या तदन्यतमरूपपरम्परूहेत; न तद्वैलक्षण्यम् । *सामान्यतो वैलक्षण्यानुमानेऽपि ईदृशं तदिति विशेषो दुरवधरः । विवक्षितविशेषस्यैव साध्यत्व*स्वीकारे तदप्रसिद्धिः । तन्निरूपितव्याप्तेर्हेतावभावश्च ; हेतोः करणत्वरूपस्य सामान्यत्वादिति भावः। *अतोऽनुमानं गोलकादिविश्रान्तं स्यादिति* ॥ ३६ ॥

मनःप्रभृतीनां करणानामेकादशानामेव सात्त्विकाहंकारजन्यत्वेऽपि अन्तःकरणत्वं मनस इव *महदहङ्कारयोरपीति सांख्याः । चतुर्थं चित्ताख्यमन्तःकरणमप्यस्तीति अद्वैतिनः । तदुभयनिरसनेन* मनोमात्रस्यान्तःकरणत्वं स्थाप्यते सांख्यैरिति श्लोकेन । ननु सिद्धान्ते मनस एवावस्थाचतुष्टयात् बुद्ध्यहंकारचित्तशब्दवाच्यत्वमर्पयिष्यते । एवं *मनसस्त्रैविध्यमेव सांख्यैरिष्टं स्यादित्यत्र, तथा नेति* ज्ञापयितुं करणं त्रयोदशविधमिति वचनमुपात्तम् । तदा त्वेकादशविधमेव भवेत् । अन्यदपि वचनम् अन्तःकरणमित्यादि । महदहङ्कारमनोरूपं त्रयमन्तःकरणं भवतीति तत्प्रथमपादार्थः । दशधेत्यादि वाक्यान्तरम् । बाह्यं ज्ञानकर्मेन्द्रियदशकं महदादित्रयस्य ये विषयाः तान् आख्यातीति तदाख्यम् महदादिविषयविषयकमित्यर्थः । ज्ञानेन्द्रियैर्विषयेष्वालोचितेषु, मनसा च तद्विषयविकल्पाख्यविशदज्ञाने जनिते महदहंकारौ मयेदं कर्तव्यमिति अभिमानाध्यवसायहेतू भूत्वा कर्मेन्द्रियकार्यव्यापारेषु करणं भवत इति । तादृशश्रुत्यभावादिति । महदहंकारादेः करणत्वग्राहकप्रमाणाभावादित्यर्थः । ननु सुबालोपनिषदि सप्तमखण्डे अन्तर्यामिनिरूपणात्मके, यस्य पृथिवी शरीरमित्यादिना विभिन्नपृथिव्यादितत्त्ववत् मनोबुद्ध्यहंकारचित्तानामपि पृथक् शरीरत्वकथनात् अन्तःकरणचतुष्टयसिद्धिरित्यत्राह तत्तदिति । मनोबुद्ध्यादिवचनमात्ररूपं सर्वमपि वाक्यं तद्वचनमात्ररूपत्वात् करणतया तत्पृथग्विधत्वपरमपि नेत्यर्थः । मनोरूपकरणस्यैवावस्थाचतुष्कं तत्र विवक्षितम् । तत्र

कल्पनया वा तत्सिद्धिरिति विकल्पे प्रथमस्यासिद्धिमाह तादृशेति । ननु तान्यपि त्रीणि सुबालोपनिषदि पृथिव्यादितत्त्वपङ्क्तौ मनसोऽनन्तर पठ्यन्त इत्यत्राह—तत्तदिति। अय भाव -न हि तत्त्वपङ्क्ति पाठमात्रान मनस्सहपाठमात्राद्वा करणत्व सिध्येत्, तथा सति अव्यक्तादीनामपि तत्प्रसङ्गादिति । द्वितीय दूषयति क्लृप्तिरिति । एकस्यैव हि मनस स्मृत्यनुभवभेदेन वा सकल्पविकल्पभेदेन वा वृत्तिभेदमन्येऽ प्याहु । श्रूयते च, "कामस्सकल्प " इत्यादौ, "एतत् सर्वं मन एव" इति । अत्र आयुर्घृतमित्यादिवत् सामानाधिकरण्यम् । पुरुषधर्मा एव हि वस्तुत कामादयोऽध्यवसायादयश्च । तदिह पुरुषबुद्धिभेदनियत सामग्रीभेदव्यवस्थित वृत्तिभेदमात्र न करणभेदकल्पकमिति भाव । ननु 'चक्षुश्च द्रष्टव्य च नारायण ' इत्यादिना पञ्चज्ञानेन्द्रियाण्युक्त्वा, 'मनश्च मन्तव्य च नारायण , बुद्धिश्च बोद्धव्य च नारायण , अहङ्कारोऽ हङ्कर्तव्य च नारायण , चित्त च चेतव्य च नारायण ' इत्याम्नातम् । अनन्तर चैव कर्मेन्द्रियाण्यधीतानि । अत करणगणमध्यपाठात् अमयप्रायनयेन बुद्ध्यादीन्यपि करणानि स्यु ? इत्यत्राह बुद्ध्याद्याख्येति । तथा च भाष्यम्-"अध्यवसायाभिमानचिन्तावृत्तिभेदात् मन एव बुद्ध्यहङ्कारचित्तशब्दैर्व्यपदिश्यते" इति । अत तत्त्ववर्गमध्ये मनोनन्तर बुद्ध्यादिचित्तान्तपाठोऽपि मनस एव हि वृत्तिभेदविशिष्टस्येति नेतु शक्यम् न च चित्त नाम तत्त्वान्तर सृष्टिप्रलयप्रकरणेषु पठ्यते । "अयमेव त्वहङ्कार उत्कृष्टजनावमानहेतु "

---

[illegible]— सार्थैरिति अयमेव त्वहङ्कार इत्यादिभाष्ये अयशब्देन पूर्ववाक्योक्ताव्यक्तपरिणामविशेष महङ्कार परामृश्य तस्य गर्वहेतुत्वप्रतिपादनात् तस्यान्त करणत्वमुक्तम्, तत् कथ भवता तस्य करणत्व निषिध्यत इत्याशङ्क्याह अयमेवत्वहङ्कार इति । यद्यपि तत्रायशब्देन पूर्ववाक्ये अहम्भावशब्दनिर्दिष्टा प्रशस्तदेहेऽहबुद्धिरेव परामृश्यत इति श्रुतप्रकाशिकाकारैर्व्याख्यातम्—तथापि पूर्ववाक्ये प्रधानतया निर्दिष्टस्य तद्धेतोरेवायशब्देन परामर्श स्वरस इति तदनुरोधेन परिहार कृत , अविरोधादिति । गर्वपरत्वमेति निर्देश उपक्रमानुरोधात् "आयुर्वै घृतम्" इतिवदौपचारिक इति भाव ॥ ३७ ॥

[illegible]— स्वयापारेणेति । श्रूयते चेति । बृहदारण्यक इति शेष । काम —नानाविधाभिलाष । सकल्प —अध्यवसाय । विचिकित्सा—सदेह । श्रद्धा—पारलौकिकसाधनसाध्यविशेषाभ्युपगम रूपिणी । अश्रद्धा अन्यादृशी । धृति —धैर्यमापदि । अधृतिरन्या । धी —तत्त्वज्ञानम् । भी — परिकल्नाशशङ्कामयी । इत्येतत् सर्वमपि मन एव । इतरनिरपेक्षतया तत्साध्यत्वादित्यर्थ ॥ ३७ ॥

[illegible]— पञ्चमखण्डे व्यासार्यव्याख्यातरीत्या बुद्ध्यहकारशब्दाभ्या महदहकारतत्त्वग्रहणेऽपि तयो करणत्व न सिध्येदिति भाव । क्लृप्तिस्तु गुर्वी । वचनाभावेऽपि स्वय कल्पने गौरवमित्यर्थ । ननु महतोऽध्यवसायहेतुत्वम् अहकारस्य देहात्माभिमानहेतुत्वञ्च सिद्धान्तीष्टमेवेति कथ तयोर्न करणत्व-मित्यत्रोपपादयति एकस्यैवहीति । मनस आत्मधर्मभूतज्ञानगतसर्वावस्थासाधारतमत्व श्रुतिरला दिष्टम् । मनस एव बुद्ध्यहकारशब्दवाच्यत्वमपि चित्तशब्दवाच्यत्वमपीष्टम् । तथा च तस्यैव सर्वतत्साधकतमत्वे स्थिते किमिति इतरत् करणत्वेन कल्प्यम् । तत्र यथायथ महदहकारयो मनस्तत्त्वोत्पादकत्ववत् सहकारिकारणत्व काममस्त्विति भाव । करणमध्यपाठात् करणत्वमिति शङ्का तत्र मनोवस्थाविशेषैकविषयत्वस्वीकारेण परिहरति चतुर्थपादेन । ननु मनस एव गर्वाख्याहकारहेतुत्वे, अहकारतत्त्वे गर्वरूपत्वपरभाष्यविरोध । अतो गर्वहेतुतयाऽहकारस्य करणत्व मित्यत्राह अयमेवेति । अन्यार्थम् , तस्य तत्त्वस्य मुख्याहमर्थत्वनिषेधपरम् । अन्यारूढ-एतद्रतिरिक्त

इत्यादि**प्रथमसूत्रभाष्यं** अहमर्थहेयत्वनिरासपरतयाऽन्यार्थम् ; अन्वारुह्याप्युपपत्तेः । अनुग्राहकत्वमात्रेण परम्परया वा गर्वहेतुत्वोक्तेरविरोधादिति ॥ ३७ ॥ **इत्यन्तःकरणवैविध्यभङ्गः** ॥

**एकं तत्तत्प्रदेशप्रतिनियततया शक्तिभेदं प्रपन्नं**
**देहव्यापीन्द्रियं चेत्, प्रथममिह भवेदागमेनैव बाधः ।**
**नो चेत्, स्यात् देहभेदप्रतिनियततया सर्वजन्तोः तदेकम्,**
**भेदाम्नानादक्लृप्तेरपि न च भजते देह एवेन्द्रियत्वम् ॥ ३८ ॥**

नन्वेवं बाह्यकरणभेदोऽप्यपोहितुं शक्यः, मनोवदेकस्य वृत्तिभेदात्पृथक्कार्यव्यपदेशोपपत्तेः । आहुश्च बाह्यैकदेशिनः-"एकैकदेहेष्वे(हेष्वेकै)कमेवेन्द्रियम् । प्रदेशभेदैस्तु रूपादिप्रकाशनशक्तिनियमः। षडायतनागमोऽपि तथैव व्यवस्थाप्यः, स्वरूपभेदप्रयोजनाभावात् । "कल्प्यते शक्तिभेदश्चेत् शक्तिरेवेन्द्रियं भवेत्" इति चायुक्तम् ; धर्मिकल्पनातो वरं हि धर्मकल्पनम् ॥ प्रदेशानामेव तत्तत्करणत्वोपपत्तौ प्रदेशिक्लृप्तिरनर्थिकेति चेन्न; देहव्यापिनः स्पर्शस्योभयसंमतेः, तस्य च करतलप्रकोष्ठाऽऽस्यनेत्रादिपु स्पर्शग्रहणशक्तिवैषम्यदृष्टेः । अतश्चैकस्यैव सर्वत्र देहे स्पर्शनत्वम् , तत्रतत्र चक्षुरादित्वञ्च" इति । तदेतदाह **एकमिति**॥ किमेकेन्द्रियस्य श्रुतस्य कल्पितस्य वा शक्तिभेदव्यवस्थापनमिति विकल्पमभिप्रेत्य आद्यं दूषयति **प्रथममिति** । बाधस्य दूषणान्तरादौद्धत्यसूचनाय प्राथम्योक्तिः। **आगमेनैव** । धर्मिग्राहकेणैवेत्यर्थः। गौरवदोषश्च क्लृप्तिपक्षे वक्तव्यः, नास्मत्पक्ष इति चाभिप्रेतम् । इन्द्रियक्लृप्तिः प्रागेव निरस्ता। अत्र तदेकत्व

---

[illegible]—एकमिति। प्रदेशानामेव तत्तत्कारणत्वोपपत्ताविति। तथा च सतीन्द्रियभेदः सिद्ध्यतीति भावः। [illegible]— स्पर्शग्रहणशक्तिवैषम्यदृष्टेरिति । तद्वत् रूपादिग्रहणशक्तिवैषम्यमपि संभवतीति भावः। ननु नानाविधेषु देहेषु तत्तदन्तरालेषु च विद्यमानस्य नानाप्रदेशानां सत्त्वात्, तेषां च ग्राहकत्वेन [illegible]— स्याहंकारशब्दवाच्यत्वाभावं कृत्वा । अहंकारं बलं दर्पमिति त्याज्यत्वेनेष्टस्य, त्यक्तुमशक्यस्याहंकार तत्त्वस्य चैक्यमसंभवि। त्याज्यं तं प्रति करणत्वमपि तत्र न विवक्षितमिति भावः। शेषं भाष्यव्याख्यानेषु द्रष्टव्यम्। अक्लिष्टं निर्वहति अनुग्राहकत्वेति । मनसा गर्वे जननीये तत्त्वमिदमप्यनुग्राहकं वचनबलादिति भावः। अन्यथा, "कामः संकल्पः...सर्वं मन एव" इति वाक्यस्वारस्यं भज्येतेति ॥३७॥

अन्तःकरणैक्यवत् बाह्येन्द्रियैक्यं किं न स्यादित्यत्राह एकमिति। एकं देहव्यापि इन्द्रियमेव चक्षुश्श्रोत्रपाणिपादादिप्रदेशभेदसंसर्गवशात् विचित्रज्ञानक्रियाजननशक्तिभेदं प्रपद्यताम्, किमिन्द्रियव्यक्तिभेदकल्पनयेति चेत्—आगमस्य नानेन्द्रियवादिनः सद्भावात् तेन बाधितत्वरूपो दोपस्तावत् प्रथमं भवेत्। प्रथममिति क्रियाविशेषणम्। आगमबाधितत्वं प्रथमं दूषणम्। त्वाचस्पर्शवेदनस्य सर्वदेहव्यापित्वात् चक्षुरादिहस्तादिप्रदेशेऽपि तत्सत्त्वात् प्रदेशप्रतिनियतत्वासिद्ध्यादिदूषणमप्यन्यत् संभाव्यते । नो चेत्—आगमस्याऽऽदरणं न भवति चेत्, सर्वजन्तुसंबन्ध्यप्येकमिति किं न स्यात्; एकस्यैव देहभेदसंसर्गवशात् प्रतिनियतशक्तिकल्पनसंभवात्। वस्तुतो युक्तिवादे देहातिरिक्ते एकस्मिन्नपीन्द्रिये मानाभावः। इन्द्रियस्य तत्तद्देहांशाश्रयणेनैव कार्यकरतया देहस्यैव तच्छक्तिसंभवात्। एवं देहस्येन्द्रियत्वरूपधर्मभाक्त्वाभावः तद्भिन्नतया तद्बोधकाम्नायवशादित्येव वक्तव्यम् ; न गौरवाख्यो दोषः। अक्लृप्तेः—अस्माभिरकल्पनात्। प्रमाणसिद्धत्वेनैव स्वीकारात्। तथाच तत्तदिन्द्रियभेदविषयागमसत्त्वात्, कल्पनाविरहाच्चेन्द्रियनानात्वमपि संमन्तव्यम् । नैव-

कृत्स्नावतिप्रसङ्गमाह नो चेदिति । यथैकमेवाकाशं तत्तत्पुरुषादृष्टोपार्जितकर्णशष्कुल्यवच्छेदभेदे प्रतिपुरुषं व्यवस्थितोपकारकमिति वैशेषिकादिभिः कल्प्यते, तथा त्वयाऽप्येकमेवेन्द्रियं तत्तद्भोगायतन भेदनियतशक्तिकं सर्वोपकारकं कल्प्यमिति भावः । न चैवमस्त्विति वाच्यम् ; अपसिद्धान्तात् । ननु च नानादेहमध्येषु वसत (मध्येष्वसत ?) कथमेकत्वमिति चेत्, चक्षुर्गोलकाद्यवच्छिन्नाना इन्द्रियप्रदेश भेदाना कथम् ? न कथञ्चिदिति चेत्, तर्ह्यनेकेन्द्रियवाद ॥ पुञ्जैकत्वमस्त्विति चेत्, किमतः ? ग्राहकांशाना मिथो भिन्न(विभक्त)त्वात् ।

श्लो — न च तत्ता तदन्यस्य न च तस्य ततोऽन्यता । सत्त्वाद्यैर्जैनवद्वाच्या सर्वमानविरोधतः ॥

स्पर्शनस्य पुञ्जस्य भागाः चक्षुरादय इत्यप्यसत्, नियामकाभावात् । अवयव्यविसामान्यसादृश्या पोहादिभिरैक्यकल्पने अपसिद्धान्तातिप्रसङ्गौ । देहातिरिक्तेन्द्रियकल्पनं चास्मिन् पक्षे अपार्थम् । न ह्यत्र दृष्टहानिरदृष्टकल्पना वा, कुतस्तद्गौरवम् ? अतिरिक्तेन्द्रियकल्पनेऽपि देहावयवाना नियतोपकारकत्व-मिष्यते ॥ अस्तु तर्ह्ययमेव पक्ष इत्यत्राह भेदाम्नानादिति । अयं भावः — भौतिकात् देहात् इन्द्रियाणां सात्त्विकाहङ्कारोपादानकत्वेन भेदाम्नानात्-कल्पप्रसङ्गाभावात् बाधाच्च मुधाऽत्र लघुपक्षोक्तिरिति ॥३८॥

इत्यैकेन्द्रियवादभङ्गः ॥

---

पूर्णि — अंशाना विभक्तत्वेऽपि तादात्म्यादैक्यं सिद्ध्यतीत्याह न च तत्तेति ॥ ३८ ॥

Ɑ०ळ०ा — प्रत्येकमिन्द्रियत्वात् कथमेकत्वमिति चोदयति—ननु चेति । 'सत्त्वाद्यैः' इत्यस्य पूर्वार्धे नान्वयः । सत्त्वाद्याकारैः ततोऽन्यस्य तत्ता तस्य च तदन्यता च वदन् जिनवत् वाच्य (?) प्रतिपक्षस्य इत्यर्थः । पुञ्जैकत्वमभ्युपगम्य ततः किम् इत्यादिना पूर्वं दूषणमुक्तम्, इदानीमनभ्युपगम्य दूषयति— स्पर्शनपुञ्जस्येति । अपोहः —इतरव्यावृत्तिः । कारणा त्वादिरादिशब्दार्थः । भिन्नेष्वपि वस्तुषु केनचिदाकारेण ऐक्याङ्गीकारे तत्र एकस्योत्पत्तिविनाशादौ सति सर्वस्याप्युत्पत्तिविना शाद्यापत्तिरिति प्रसङ्ग इति भावः ॥ ३८ ॥

श्री — मन्तःकरणानेकत्वे आगमोऽस्तीत्यर्थः । नानादेहमध्येषु वसत इत्यत्र मध्येष्वसत इति पाठो युक्तः । एकपुरुषपूर्वापरदेहपुरुषान्तरदेहवर्तिन एकत्वं मध्येऽपि वर्तमानत्व एव स्यादिति । चक्षुरिति । देहव्याप्येकेन्द्रियपक्षे चक्षुर्गोलकावच्छिन्नप्रदेशस्य श्रोत्रावच्छिन्नप्रदेशस्य च मध्ये तदिन्द्रियाभावे कथं तदेकत्वमिति । न कथञ्चिदिति । मध्ये नास्त्येवेति इन्द्रियैकत्वायोग एवेति चेदित्यर्थः । पुञ्जेति । एकत्वमिदमेकव्यक्तिगतं न, किन्तु पुञ्जात्मकवस्तुनिष्ठं गौणमिति चेत्—तदा नानात्वमेवोक्तं भवतीति व्यर्थं पुञ्जत्वकल्पनं मध्ये निष्कारणस्थितिकल्पनञ्चेति भावः । ननु भेदवत् अभेदमपीच्छाम इत्येतत् दूषयति नचेति । सत्त्वाद्यैरिति । "सत्त्वासत्त्वे द्वयञ्च द्वितयपरिहृतिः" इत्येवं स्यादस्ति स्यान्नास्तीति जैनधर्मान् आदायेत्यर्थः । नचतत्तेत्यादावन्वयः । सत्त्वाद्यैरित्यस्य सत्त्वद्रव्यत्वमूर्तत्वादिभिरित्यर्थः विवक्षया प्रत्येकरूपेण भिन्नस्यापि सामान्यधर्मग्रहणेन तत्ता—तदेकता जैनवत् न वाच्येत्यप्यर्थः । स्पर्शनस्येति । त्वगिन्द्रियमेकमेव चक्षुरादिस्थलभेदेन कार्यान्तरनामान्तरभागित्यर्थः । अवयवीति । अवयव्यैकत्वं जात्यैकत्वं सादृश्यं चक्षुरादिसवतरघटपटादिसर्वव्यावृत्तिरूपबौद्धसम्मतापोहश्च एकत्वपदेन विवक्ष्यते चेदित्यर्थः । चतुर्थपादार्थं वेशद्यायारभते देहेति । श्लोके—अपिनचेति । अपिशब्दो हेतुद्वयसमुच्चये । चशब्दः पूर्ववाक्यार्थसमुच्चये । अत एव अपिचनेत्यप्रयोगः ॥ ३८ ॥

इति इन्द्रियैकत्वदेहानतिरेकवादभङ्गः ॥

> सूक्ष्माण्येकादशाक्षाण्यपि ; न यदि, कथं देहतो निष्क्रमादिः
> चित्ताणुत्वे तु सर्वेन्द्रियसमुदयने धीक्रमोऽप्यस्तु मानम् ।
> वृत्त्याऽक्ष्यादेर्दवीयःप्रमितिजनकता ; वृत्तिराप्यायनार्थैः
> भूतैर्जातः प्रसर्पः ; श्रुतिमितमपि चानन्त्यमेषां स्वकार्यैः ॥ ३९ ॥

यदेतेष्विन्द्रियेषु मनस कैश्चिन्नित्यत्वमुक्तम्, तत् इन्द्रियोत्पत्तिश्रुत्यैव निरस्तम् । प्रकृत्येकदेशपरिणतिर्मन इति सिद्धे विभुत्वानुमानानि च बाधितानि ।

यत्तु — मनो विभु सर्वदा स्पर्शरहितद्रव्यत्वात्, ज्ञानासमवायिसंयोगाधारत्वात्, नित्यत्वे सति द्रव्यानारम्भकद्रव्यत्वात् आत्मादिवदित्यादि — तदेतत् सर्वमात्माणुत्ववादिनं प्रति न शोभते । ज्ञानासमवायिसंयोगाधारत्वं चाऽऽत्ममनसोरसिद्धम्, ज्ञाननित्यत्वस्य साधयिष्यमाणत्वात् । नित्यत्वे

---

टिप्पणी— यत्तु इति । परमाणुषु रूपादौ च व्यभिचारवारणायाह—स्पर्शरहितद्रव्यत्वादिति । प्रथमक्षणे स्पर्शरहितघटादौ व्यभिचारादाह सर्वदेति । घटादौ व्यभिचारादाह ज्ञानासमवायीति । शरीरतदवयवयोर्व्यभिचारादाह—संयोगेति । शरीरतदवयवनिरूपितसंयोग इत्यर्थः । न च प्राणात्मसंयोगस्यापि ज्ञानासमवायिकारणत्वेन तद्वति प्राणे व्यभिचार इति वाच्यम् । अतिप्रसङ्गभिया शरीरसहितात्मना प्राणस्य संयोगो वाच्य इति आवश्यकत्वात् शरीरप्राणसंयोगेनेवान्यथासिद्धेः आत्मप्राणसंयोगस्याकारणत्वात् । अन्त्यावयविषु परमाणुषु नित्यगुणेषु क्रमात् व्यभिचारवारणाय नित्यत्वे सतीत्यादिहेतुविशेषणानि । न शोभत इति । आत्मन्येव व्यभिचारादिति भाव । असिद्धमिति । ननु ज्ञानस्य नित्यत्वेऽपि तद्विकासस्य जन्यत्वेन असमवायिकारणमपेक्ष्यमिति चेन्न—तद्धि

टी— 'त एते सर्व एव समाः सर्वेऽनन्ता' इति वाक्यसत्त्वेऽपि इन्द्रियाणां न विभुत्वं किंतु परिच्छिन्नत्वमेवेत्याह सूक्ष्माणीति । सूक्ष्मत्वमिदं नाणुपरिमाणत्वम् । अधिकदेशप्रवर्तित्वस्यावश्यकत्वात् । नाप्यनुपलभ्यमानत्वम्, तस्य विभुत्ववारकत्वाभावात् । अत परिच्छिन्नत्वम् । इन्द्रियाण्येकादशापि परिच्छिन्नानीत्यर्थः । अन्यथा दोषमाह न यदीति । न चेत् सूक्ष्माणि, यदि विभूनि, तेषां चक्षुरादीनां मरणकाले उत्क्रमणगत्यादिकं कथं घटेतेत्यर्थः । इदमेव सूक्ष्मत्वं सूत्रोक्तमणुत्वम् । मनोविषये तत्रोक्तहेत्वपेक्षयाऽधिकं तार्किकोक्तमपि हेतुमनुमन्यते चित्तेति । न तावता तद्वत् परमाणुत्वनिर्बन्धः, अनित्यत्वभिया हि तैर्मध्यमपरिमाणत्वत्यागः । अस्माकं तु आहङ्कारिकस्यास्यानित्यत्वमेवेष्टमिति । सर्वेन्द्रियसमुदयने—चक्षुःश्रोत्रादीनां स्वस्वविषयसंबन्धयौगपद्येऽपि युगपत् सर्वज्ञानानुत्पत्तिः धीक्रमः क्रमेणैवोत्पत्तिर्मानं भवतु । विषयेन्द्रियसंप्रयोगे सत्यपि मनसो युगपदनेकेन्द्रियसंयोगाभावादेव युगपद् ज्ञानानुत्पत्तिर्वक्तव्या । तथा संयोगाभावश्च परिमितत्वे सत्येव घटत इति । ननु देहे स्थितस्य परिमितस्य दूरतरविषयप्रत्यक्षजनकत्वं कथम्, असंनिकर्षादित्यत्राह वृत्त्येति । आधेयत्वरूपवृत्त्ययोगात् वृत्तिशब्दार्थमाह वृत्तिरिति । आप्यायकभूतस्येन्द्रियस्य च द्वयोः प्रसर्पकर्तृत्वे सहयोगे तृतीया । भूतमात्रस्य कर्तृत्वे तत्रेन्द्रियसंबन्धस्यैव कारणत्वात् भूतद्वारा तत्कर्तृत्वम् । अनन्तरणोक्तशङ्कां परिहरति श्रुतीति । कार्याणामनन्तत्वमसंख्यत्वम्, न तु विभुत्वम् ।

ज्ञानासमवायीति । असमवायिकारणेत्यर्थः । आत्माणुत्वेति । दृष्टान्ते साध्यवैकल्यमिति भाव । सर्वदेति । कदाचित् विशेषगुणशून्यत्वं तन्मते घटादिष्ववयविप्रागभावक्षणावच्छेदेन । एवं महाप्रलये पृथिवीपरमाणुषु चास्ति, तद्गुणानां पाकजतया नाशात् । अतो व्यभिचार इति सर्वदेति पदम् ।

सति द्रव्यानारम्भकद्रव्यत्वादित्येतच्चोत्पत्तिश्रुत्या अपहृतविशेषणम् । द्रव्यानारम्भकत्वं च भवतामवयव्यनारम्भकत्वम् ; तच्चास्माकमणुष्वपि विद्यते । यदपि–सर्वदा विशेषगुणशून्यद्रव्यत्वात्, कालवदिति–असिद्धमिदमौपनिदानाम् ; त्रिगुणद्रव्ये मनसि सत्त्वादिविशेषगुणसंमतेः ॥ दूरस्थस्मृत्या मनोविभुत्वं कल्प्यमिति चेन्न; अनुभवसंस्कारप्रत्यासत्त्यैव तदुपपत्तेः । एवमन्यदपि । तदिहैकादशानाम्, "अणवश्च" इति सूत्राभिप्रेतमविभुत्वमातिष्ठते सूक्ष्माणीति ॥ विपक्षे बाधकं वदन्नेवात्र प्रमाणमाह न यदीति । परोक्तानुमानानां च (?) विपक्षे दण्डश्च नास्ति ; सर्वत्र कार्योपलब्धेः इन्द्रियान्तराणामिव मनसोऽपि संचारादप्युपपत्तेः । "तमुत्क्रामन्तम्", "शरीरं यदवाप्नोति" इति श्रुतिस्मृतिसंवादाच्च । आदिशब्देन देहान्तरावासिगत्यागतिसंग्रहः ।

न चैतेषां जीववत् अणुत्वं विशेषतो दृश्यते ; तथा सति श्रोत्रादीनामनेकाधिष्ठानवर्तित्वम्, स्पर्शनरसनयोश्च पृथुप्रदेशव्यापित्वं न स्यात् ; सिद्धेऽपि ह्यणुत्वे विकासशक्त्या वृत्तिविशेषद्वाराऽऽप्यायकप्रचयाद्वा पृथुत्वमङ्गीकार्यम् ; अन्यथा पिपीलिकादिशरीरस्थस्य स्पर्शनस्य गजादिशरीरप्रवेशे तादृशपृथुत्वासिद्धिप्रसङ्गात् ; गजादिभ्य. कीटादिशरीरप्रवेशे तु तादृशस्सङ्कोचः । मनसस्तु परमाणुत्वेऽपि

---

*आनन्द*— कार्यं प्रति धर्मभूतज्ञानस्यैव समवायिकारणत्वेन तत्प्रत्यासत्त्यभावेन आत्ममनस्संयोगस्यासमवायिकारणत्वासम्भवात् । न च कारणैकार्थप्रत्यासत्त्या तस्यासमवायिकारणत्वं सम्भवतीति वाच्यम् । तथापि हेतोरात्मनि व्यभिचारस्य दुष्परिहरत्वादिति भावः । ननु भवन्मते तत्र नित्यत्वानङ्गीकारात् कथं व्यभिचार इति चेन्न—अस्मन्मतेऽन्त्यावयव्यनङ्गीकारात् तत्र व्यभिचारवारणाय नित्यत्वविशेषणस्यानुपादेयत्वात् । ननु भवन्मतेऽणुषु, अस्मन्मतेऽन्त्यावयविषु च व्यभिचारवारणार्थं नित्यत्वविशेषणमिति चेत्—तथाप्यस्मन्मतेन मूलप्रकृतौ व्यभिचारात् । अणुष्वात्मस्वेव पूर्वोक्तव्यभिचारस्य दुष्परिहरत्वाच्च । विशेषगुणसम्मतेरिति । विशेषगुणत्वं नाम द्रव्यविभाजकोपाध्यन्यतमावच्छिन्नस्य यस्य कस्यापि तदितरेभ्यो गुणत्वावान्तरजातिविशेषावच्छेदेन व्यावर्तकत्वम् । अत्र केचित्—रूपरसादयो गुणाः भास्वरत्वमधुरत्वाद्यवान्तरजात्युपधानेन स्वाश्रयमितरेभ्यो व्यवच्छिन्दन्ति । सत्त्वादयश्च गुणत्वावान्तरजात्युपहिताः स्वाश्रयं त्रिगुणद्रव्यमितरेभ्यो व्यवच्छिन्दन्तीति विशेषगुणा इति । ननु इदानीं देशान्तरस्थपदार्थे मे मनः सक्तमित्यनुभवव्यवहाराभ्यां विभुत्वं कल्प्यमित्याशङ्क्य, तत्रापि प्रीत्यादिप्रत्यासत्त्या तयोरन्यथासिद्धिः, अन्यथा इदानीं एतद्व्यतिरिक्तेषु न मे मनः सक्तमित्यनुभवव्यवहाराभ्यां विभुत्वकल्पनानापत्तिरित्यभिप्रेत्याह—एवमन्यदपीति । निरूप्यमिति शेषः । शङ्कते—न चेति । श्रोत्रादीनामिति । आदिशब्देन चक्षुर्घ्राणयोर्ग्रहणम् । तेषां दूरसमीपवर्त्यनेकविषयग्रहणात् तत्सम्बन्धावश्यम्भावेन तद्विषयाधिष्ठानवर्तित्वमित्यर्थः । परिहरति—सिद्धेऽपीति । विकासशक्त्या यो वृत्तिविशेषः=परिणामविशेषः तद्द्वारेत्यर्थः । सङ्कोच इति । अङ्गीकार्य इति शेषः ।

*श्री*— विशेषगुणसामान्याभावस्य सार्वकालिकत्वं सर्वदेत्युक्तम् । दूरस्थेति । विभुत्वे मनसोऽतिदूरस्थेनापि सह संयोग एव प्रत्यासत्तिरिति । अनुभवेति । स्वजनितानुभवसंस्कारविषयत्वमेव विषये प्रत्यासत्तिरिति भावः । दण्डश्च – बाधकञ्च । तथाच हेत्वाभासान्तरवत् अप्रयोजकत्वरूपव्याप्यत्वासिद्धिरपीत्यर्थः । जीववदिति । तत्र वालाग्रशतभागस्येत्यादिवशात् त्रसरेणुप्रमाणत्वम् । संकोच

सद्वारकविषयसंबन्धसिद्धेरविरोधः। तत्र "युगपत् ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" इति परोक्तं मनोविभुत्ववाद-प्रतिषेधोपयोगादनुमन्यते—चित्ताणुत्वे स्थितिति। अयं भावः—व्यासङ्गदशायां समग्रैरपि बाह्येन्द्रियैः युगपत् ज्ञानानि नोत्पद्यन्ते। दीर्घशष्कुलीभक्षणादिषु च व्यासङ्गदृष्टान्तेन धीक्रमोऽनुमेयः। क्रमभावि-

---

Qळला— धीक्रमोऽनुमेय इति। अव्यासक्तस्य युगपत् प्रत्येकं श्रोत्रादिलौकिकसन्निकर्षवन्तः शब्दादयः तदीयक्रमिकसाक्षात्कारजननसमर्थसन्निकर्षविषयत्वात् (र्षवन्तः?) व्यासक्तेन क्रमेण गृह्यमाण-शब्दादिवत्। न च सन्निकर्षस्य शब्दादिषु एकैकमात्रचक्षुरादिगोचरसाक्षात्कारजनकत्वमसिद्धम्, तावद्गोचरसमूहालम्बनसम्भवादिति वाच्यम्; श्रोत्रादिसन्निकर्षस्य रूपादिसाक्षात्कारजनकत्व-कल्पनेऽतिप्रसङ्गात्। ननु यथा चक्षुषा घटसन्निकर्षे घटमात्रज्ञानम्, पटसन्निकर्षे पटमात्रज्ञानम्, उभयसन्निकर्षे उभयगोचरमेकं ज्ञानं जन्यते, तथा शब्दादीनामिन्द्रियैरेकैकमात्रसन्निकर्षेण एकैक-मात्रगोचरज्ञानजननेऽपि तावत्सन्निकर्षसमाजे तावद्गोचरं समूहालम्बनमस्त्विति चेन्न—एकैकेन्द्रिय-सन्निकृष्टेषु तद्योग्येषु अनेकगोचरसमूहालम्बनसम्भवेऽपि अनेकेन्द्रियसन्निकृष्टेषु अनेकेषु तत्तदि-न्द्रियायोग्यविषयत्वेन समूहालम्बनस्यासम्भवात्। अन्यथा—अयोग्यकारणवशेन अयोग्यकार्यजनने घटपटाद्युत्पादकानेकसामग्रीसमाजे घटपटाद्यात्मकमेकं कार्यं स्यात्। प्रत्यक्षानुमानागमसमाजे साक्षात्काराद्यात्मकमेकं ज्ञानं स्यात्। ननु यथादर्शनं फलबलेन कार्यकारणभावो वाच्यः, तथा च घटपटाद्यात्मकस्य साक्षात्काराद्यात्मकस्य च कार्यानुपलम्भात् तत्तत्सामग्रीसमाजस्य तादृशकार्यजन-कत्वं नास्तीति चेत्—तर्हि श्रोत्रचाक्षुषाद्यात्मकैकज्ञानस्यानुपलम्भात् तादृशसमूहालम्बनजनकत्वं इन्द्रियसन्निकर्षसमाजस्य नास्तीति मन्तव्यम्। न च समूहालम्बनासम्भवेऽपि सामग्रीसमाजात् एकदा शब्दादिगोचरानेकज्ञानानि स्युरिति वाच्यम्। एकदा अनेकज्ञानसमावेशस्य विरुद्धत्वात्। अत एव विरोधिगुणत्वेन उत्तरोत्तरस्य पूर्वपूर्वनाशकत्वं सिद्ध्यति। अन्यथा एकदा एकस्मिन् अनेकविशेषोप-लम्भप्रसङ्गः। न च 'सुरभि चन्दनम्' इत्यादाविव एकेनैव इन्द्रियेण शब्दादिगोचरमेकमुपनीतभानम-स्त्विति वाच्यम्; अत्र पूर्वमुपनयाभावे तदसम्भवात्। उपनयसद्भावे पूर्वानुभवाभावेन(?) स्मृतिरूपो-पनयसम्भवेन तत्कालीनशब्दादिज्ञानरूपोपनयाङ्गीकारे ज्ञानक्रमसिद्धेः। किञ्च, अत्र अनेनैवेन्द्रियेण शब्दादिगोचरमेकं ज्ञानमित्यत्र नियामकाभावात् सर्वेषामपीन्द्रियाणां जनकत्वात् ज्ञानक्रमसिद्धिः। यद्वा, अव्यासक्तस्य युगपत् स्वस्वविषये लौकिकसन्निकर्षदशावन्ति श्रोत्रादीनि क्रमिकज्ञानकरणानि अलौकिकप्रत्यासत्त्यद्वारकत्वे सति ज्ञानकरणत्वात्—व्यासक्तेन्द्रियवद् इति। अथवा अव्यासक्तस्य शब्दादीनां श्रोत्रादिभिर्युगपत् लौकिकसन्निकर्षदशायां शब्दसाक्षात्कारः रूपाद्यविषयकः, अलौकिक-प्रत्यासत्त्यद्वारकश्रोत्रजन्यत्वात् शब्दमात्रव्यासक्तस्य शब्दसाक्षात्कारवत्। एवं तद्दशायां रूपसाक्षा-त्कारः शब्दाद्यविषयकः, अलौकिकप्रत्यासत्त्यजन्यत्वे सति चक्षुर्जन्यत्वात्, रूपमात्रव्यासक्तस्य रूपसाक्षात्कारवत्—इत्यादि द्रष्टव्यम्। अत्र व्यासङ्ग—शब्दादिपञ्चक[illegible]धानं विना तेष्वेकस्मिन् मनस औन्मुख्यम्। पञ्चाप्राधान औन्मुख्यमव्यासङ्गो विवक्षित इति। ननु दीर्घशष्कुलीभक्षणादिषु युगपत् सर्वेन्द्रियसम्बन्धे सति धीक्रमाङ्गीकारे प्रथमं कस्य धीः, कस्यवाऽनन्तरम्, इत्युक्ते नियामका-

ळी— इति। अत इन्द्रियाणां परमाणुत्वं नासादितम्। तार्किकमतेऽपि तेषां कार्यत्वान्न परमाणुत्वम्। तन्मते मनसो यत् परमाणुत्वं तदिष्टमपि न दोष इत्याह मनसस्त्विति। सद्वारकेति। स्वजन्यानुभव-संस्कारेति प्रागुक्तद्वारकेत्यर्थः। विभुत्ववादप्रतिषेधेत्यनेन युगपद् ज्ञानानुत्पत्तिर्न परमाणुत्वं साधयेत्। साधकान्तरं तु तत्र नेति ज्ञाप्यते। समग्रैरपीति। सर्वसहकारिसंपन्नैरपीत्यर्थः। मनसो

कारणान्तरसापेक्षो ह्यसौ। न चादृष्टभेदोऽपेक्ष्य तस्य दृष्टोपहारेण चरितार्थत्वात्, अन्यथाऽतिप्रसङ्गात्। प्रतिबन्धकाभावे ह्यदृष्टोपनीतदृष्टसामग्र्यैव कार्यसिद्धिर्नियता। तदिह कारणान्तरं यदि विभु स्यात्, युगपदनेकेन्द्रियसम्बन्धितया युगपत् पञ्चविषयज्ञानोत्पत्तिप्रसङ्गः। एवं देहपरिमाणत्वेऽपि। न च मनसस्ततोऽपि सूक्ष्ममध्यमपरिमाणत्वे प्रमाणमस्ति॥ विभुनोऽपि मनसः केनचित् शरीरावयवेनावच्छिन्नतयैव कार्यकरत्वमिति चेन्न, तस्य निष्कम्पत्वेऽन्यत्र कार्याभावप्रसङ्गात्। सञ्चारित्वे तु तादृशवेगवतः तस्य देहातिरिक्तत्वमणुत्वं च साधीयः, किमन्तर्गडुना व्यापकेन मनसा? यस्तु सर्वेषां देहावयवानां यथासंभवमवच्छेदकत्वं ब्रूयात्, तत्र प्रागुक्तप्रसङ्गानतिवृत्तिः, अतिगौरवं च।

यद्येवमिन्द्रियाणि देहान्तःस्थानि, तदा(था) कथं चक्षुश्श्रोत्रयोर्दूरस्थग्राहकत्वमित्यत्राह वृत्त्येति। वृत्तिद्वारा सम्बन्धादित्यर्थः। ननु वृत्तिर्यदि स्वरूपं देहपरिच्छिन्नत्वात् न दूरस्थे वृत्तिः, धर्मोऽपि न धर्मिणमतिवर्तेत इत्यत्राह वृत्तिरिति। भूते सहेति वा, चारे पश्यन्तीति च वा योज्यम्। यद्यप्यप्राप्यकारित्वं हैतुकगत्या हठात्कारेण वक्तुं शक्यम्, तथाऽपि, "दिवीव चक्षुराततम्" इत्याद्यागमिकव्यवहारस्वारस्यबाधाभावात् वृत्तिद्वारा प्राप्त्युक्तिः। नयनरश्मिगतितत्प्रतिघातादिकं च भाष्योक्तम्। ननु प्राणशब्द

---

आनं— सूक्ष्माणीति। 'भूतेऽजति प्रसर्पे' इत्यत्र भूतकर्तृके प्रसर्पे स्वरसतः प्रतीयमानेऽपि भूतप्रसर्पस्येन्द्रियवृत्तित्वशङ्कानौचित्यादाह—भूते सहेति। कारकविभक्तेरुपपदविभक्तिदौर्बल्यात्, अध्याहारानौचित्याच्चान्यथा व्याचष्टे—चारे पश्यन्तीति च वेति। इन्द्रियाणामविभुत्वे भाष्यसम्मतिमाह—

टिप्पणी— भावनाख्याया सामग्रीवशेन यस्मिन्निन्द्रिये प्रथमं मनः संयुज्यते, तेन तद्विषयज्ञानं प्रथमम्, यस्मिन् अनन्तरं संयुज्यते, तेन तद्विषयज्ञानं अनन्तरं जन्यते इति नियामकमस्तीत्यभिप्रायेणाह—क्रमभावि कारणान्तरेति। उपहारेण = सम्पादनेनेत्यर्थः। ननु दृष्टसामग्रीपौष्कल्येऽपि सह पाठकेषु केषाञ्चिद् कार्यासिद्धिरदृष्टाभावादित्यङ्गीकार्यम्, तथा च अदृष्टस्य दृष्टोपहारेण कथं चरितार्थत्वं इत्यत्राह—प्रतिबन्धकाभावेऽपीति। तत्र तत्र शाच्चुर्यादिकं प्रतिबन्धकमस्तीति भावः। ततोऽपि देहादपीत्यर्थः। धीनमस्य नियामकान्तरं शङ्कते—विभुनोऽपीति। अवधातव्यमिति। इतीति शेषः। सात्त्विकाहङ्कारात्

श्री— विभुत्वेऽपि अदृष्टविशेषरूपकारणाभावात् धीयौगपद्याभाव इति मीमांसकमतं क्षिपति नचेति। चरितार्थत्वादिति। अदृष्टं दृष्टकारणोपहारेण कार्यकरम्, दृष्टसामग्रीसत्त्वे चादृष्टवैकल्यं दुर्वचमिति भावः। अतिप्रसङ्गादिति। तदुक्तं न्यायकुसुमाञ्जलौ, "अन्यथा अन्त्यतन्तुसंयोगे सत्यप्यदृष्टवैकल्यात् जातु पटो न जायेत बलवता कुलालेन दृढदण्डनुन्नमपि चक्रं न भ्राम्येत्" इति। तस्मात् दृष्टसामग्रीदशायां कारणभूतादृष्टवैकल्यं दुर्वचम्, प्रतिबन्धकादृष्टं तु संभाव्यते इत्याशयेन प्रतिबन्धकाभावे इत्युक्तम्। ततोऽपीति। युगपद्ज्ञानोत्पत्तिवारणाय युगपदनेकेन्द्रियसम्बन्धापादकपरिमाणन्यूनपरिमाणवत्त्वावश्यकत्वेऽपि ततोऽपि न्यूनपरिमाणवत्त्वे साधकं नेति भावः। अतिगौरवं चेति। विभुत्वकल्पनं तदधीनदोषपरिहाराय कारणान्तरकल्पनादिकं चेति। हैतुकगत्येति। विषया एव सूर्यरश्म्यादिसाहाय्यात् चक्षुर्बिलं प्राप्नुवन्ति प्रत्यक्षीभवन्ति, न तु चक्षुषो विषयदेशगमनम्। यथा प्रतिरूपग्राहकयन्त्रे इति तत्सरणिः। दृष्टान्ते यथाकथञ्चिदस्तु। प्रमाणानुसारात् चक्षुषो रश्मिगतिश्चास्तीति सिद्धान्तः। कणादश्चाह, "नक्तञ्चरनयनरश्मिदर्शनाच्च" इति। आततमिति। अनेनेन्द्रियस्य प्रसर्पणं हि कण्ठोक्तम्। भाष्योक्तमिति। जिज्ञासाधिकरणे ख्यातिवादे इति शेषः।

निर्दिष्टानीन्द्रियाणि प्रक्रम्य, "सर्व एवानन्ताः" इति श्रुत्या सर्वेषामिन्द्रियाणां विभुत्वं प्राप्तमित्यत्राह **श्रुतिमितमिति**। यथोक्तं भाष्ये। हृदयस्थानां चेन्द्रियाणां तत्तन्नाडीभेदैः तत्तत्प्रदेशविशेषप्रसर्पात् तत्र तत्र, कार्यकरत्वं चावधातव्यम्। "सर्वे प्राणा अनूत्क्रामन्ति" इति श्रुतेः सङ्कोचकाभावात्, "मनःषष्ठानि" इत्यादेश्च न्यूनसंख्याव्यवच्छेदमात्रेणाप्युपपत्तेः, कर्मेन्द्रियाणां प्रतिशरीरमुत्पत्तिविनाशं व्यष्टिसमष्टिभावराहित्यं च वदन्तः प्रत्युक्ताः ॥ ३९ ॥ इतीन्द्रियाणां सूक्ष्मत्वम् ॥

**प्राप्यग्राहीन्द्रियत्वात् विमतमितरवत् प्राप्तिरुक्तप्रकारा,**
**वृत्तिं दृष्टेर्नि(र्न ?)रुन्धे विरलपटनयादम्बुकाचादिरच्छः ।**
**नो चेत् गृह्येत योग्यं सममिह निखिलं निष्फले छादकादौ**
**स्थैर्ये तद्योग्यभावो न हि गलति, समा सन्ततिस्त्वञ्जनेऽपि ॥ ४० ॥**

---

*Ānū*— यथोक्तमिति। 'मनःषष्ठानीन्द्रियाणि' इत्यागमानुसारेण ज्ञानेन्द्रियाणामेव जीवेन सह देहात् उत्क्रमणम्, देहान्तरप्राप्तिश्च; समष्टिव्यष्टिश्च तेषामेव। सर्वे(कर्म ?)न्द्रियाणां तु तत्तच्छरीरेषु तत्तदुत्पत्त्यानुत्पत्तिः, तद्विनाशे विनाशश्चेति केचिद् वदन्ति, तान् प्रत्याह–अत्र सर्वे इति ॥ ३९ ॥

*Vivṛta*–सर्वेषामिन्द्रियाणां युगपत् सृष्टिः समष्टिः। अनन्तरं तत्तज्जन्तुषु तत्तदिन्द्रियविभागो व्यष्टिः॥

*Vī*— यथोक्तं भाष्ये इति पृथग्वाक्यम्। भाष्यवाक्यं त्विह नोद्धृतम्। तच्च "आनन्त्यश्रुतिस्तु.. उपास्य-प्राणविशेषणकार्यबाहुल्याभिप्राया" इत्येवम्। हृदयस्थानामित्यादिकं स्ववाक्यम्; न त्विदमानन्त्योप-पादकम्। एतद्वाक्यार्थस्तु–परिमितानीन्द्रियाणि चक्षुश्श्रोत्रजिह्वाघ्राणादिस्थानवर्तीनीति तार्किकरीत्या वक्तव्यम्। सुबालोपनिषदि, "हृदयस्य दशच्छिद्राणि भवन्ति, येषु प्राणाः प्रतिष्ठिताः" इति सर्वेन्द्रिय-कन्दत्वं हृद इत्यवगमात् हृद्गतानि तानि प्राणापानादिवायुसहकारेण नाडीद्वारा चक्षुर्गोलकादिकं प्रति प्रसर्पन्तीत्यपि स्वीकार्यमिति। अथ स्वकार्यैरित्यनेन नानादेहप्रवेशमूलकासंख्यकार्यस्वीकरणमिदं धीन्द्रियविषये युज्यते। न तु कर्मेन्द्रियविषये; तेषां प्रतिदेहं भिन्नत्वात्। 'मनःषष्ठानीन्द्रियाणि प्रकृति-स्थानि कर्षति' इति तावन्मात्रकर्षणस्मृतेः। अतः कर्मेन्द्रियाणामहंकारात् समष्टिरूपेणोत्पत्तिः, व्यष्टौ प्रवेश इत्यपि मा भूदिति शंकां परिहरति अत्रेति। प्रतिशरीरं कर्मेन्द्रियभेद इति यादवप्रकाशमतम्; नास्मन्मतम्। दीपग्रन्थानिर्वाहादिकं न्यायसिद्धाञ्जनादौ द्रष्टव्यम्। निरूपितश्चेदमस्माभिर्दीपविवरणे॥

पूर्वश्लोके वृत्तिद्वारा करणत्वमुक्तम्; तद्विषयाक्षेपपरिहारायाह प्राप्येत्यादि। विमतं—प्राप्य ग्राहित्वविवादास्पदं चक्षुरादीन्द्रियं प्राप्यग्राहि—विषयं प्राप्य, विषयसंबन्धार्हवृत्तिमत् सदेव-रूपशब्दादिग्राहकम् इन्द्रियत्वात्, त्वगिन्द्रियवत्। कथं देहस्थमिन्द्रियं विषयं बहिष्ठं प्राप्नुयादिति चेत्—प्राप्तिः उक्तरीत्या वृत्तिद्वारा स्यात्। ननु वृत्तेरपेक्षायाम्, अम्बुकाचाद्यन्तरितं न गृह्येत, तस्य वृत्तिरोधकत्वात्, अत एवोक्तमप्राप्यग्रहणम्, "काचाभ्रपटलस्फटिकान्तरितोपलब्धेः" (न्या. द. ३. १. ४४) इति, तत्राह वृत्तिमिति। 'न रुन्धे' इति पाठो युक्तः, न तु 'निरुन्धे' इति। दृष्टेः—इन्द्रियस्य (चक्षुषः) वृत्ति-प्रसरम् अम्बुप्रभृतिद्रव्यं न प्रतिहन्ति। स्वच्छद्रव्यत्वात् तत्र प्रवेशो भवतीति भावः। नो चेत्—प्रतिरोधकत्वमेवेति अप्राप्यग्राहित्वस्वीकारे, योग्यं—प्रत्यक्षयोग्यं निखिलं कुड्यादिव्यवहितं विप्रकृष्टञ्चापि, समम् व्यवधानादिरहितद्रव्याविशेषं तदैव गृह्येत। तदुक्तम्, (न्या-द-३-१-४५) "कुड्यान्तरितानुपलब्धेरप्रतिषेधः" इति। एवं यत् पूर्वं गृहीतं पश्चात् छन्नम्, तदपि समं—पूर्ववदेव गृह्येत। अतः काचादिकं न रोधकम्, कुड्यादिकं रोधकमिति

यदुक्तं, वृत्त्याऽऽस्यादेर्दवीयःप्रमितिजनकतेति, तत्र बाह्यैरेवमुच्यते—'वृत्तिप्रसरणे क्रमयौगपद्यविकल्पायोगात् दूरस्थविषया प्राप्तिर्न भवति' इति। अतो यत् रूपग्राहकं यत् शब्दग्राहकमिन्द्रियं तत् अप्राप्यग्राहि, यथा मन इति। तत्र तावत् प्रत्यनुमानमाह प्राप्येति। ननु गृह्यमाणस्य वर्तमानक्षणस्य पूर्वक्षणवर्तीन्द्रियसंबन्धायोगात् इन्द्रियान्तराणामप्यसंबन्ध(द्ध?)ग्राहकतया साध्यविकलो दृष्टान्तः॥ मैवम्; क्षणभङ्गकुसृते: प्रागेव निरासात्॥

श्लो–अतिप्रसङ्गोऽसंबन्ध(द्ध)ग्रहणे स्यात्; समं त्विदम्। संबन्ध(द्ध)ग्रहणेऽपीति न सत्, योग्यान्वितग्रहात्॥

गृहीतस्येन्द्रियेण कश्चित् संबन्धोऽव्यभिचारतः। न संबन्ध(द्ध)स्य सर्वस्य ग्रहणं व्यभिचारतः॥

नात्र कर्मेन्द्रियैरनैकान्त्यम्; यथास्वं व्यापारेण स्पृष्टेर्ग्राहिशब्देन विवक्षितत्वात्; तस्य च सर्वत्र प्राप्तविषयत्वात्। न च मनसा; तस्यापि बाह्येन्द्रियद्वारा बहिर्विषयप्राप्तेः। यद्वा बाह्यज्ञानेन्द्रियत्वादिति मनःकर्मेन्द्रियव्यवच्छेदः। ननु उन्मिषितमात्रं चक्षुश्चन्द्रं गमयति। न चैकस्मिन् क्षणे तावान् देशो वृत्त्या लङ्घयितुं क्षमः। क्रमे तु प्रतिपरमाण्ववच्छेदं विलम्ब्य गमनात् प्रतीतिरपि विलम्बेत। दूरासन्न

---

आ०— प्राप्यग्राहीति। प्राप्यग्राहित्वानुमानानुग्राहकतर्कमाह अतिप्रसङ्ग इति। प्रतितर्कपराहतिमाशङ्क्य परिहरति समं त्विदमित्यादिना। योग्यान्वितग्रहादिति। न संबद्धं सर्वमिन्द्रियैः गृह्यते; किं तु योग्यमेवेत्यर्थः। अत्र नियामकमाह गृहीतस्येति। कर्मेन्द्रियेषु प्राप्यग्राहित्वं नास्ति, तेषां ग्राहकत्वाभावात् हेतोर्व्यभिचार इत्याशङ्क्याह नेति। यथास्वंव्यापारेणेति। प्राप्यग्राहीत्यत्र ग्राहिशब्देन ज्ञानं न विवक्षितम्, किं तु व्यापारेण स्पर्शः। ज्ञानमपीन्द्रियाणां व्यापारः,. .अत्रग्राहिशब्दस्वारस्यं मनसः सद्वारकप्राप्तिस्वीकारानौचित्यं च मत्वा हेतोर्विशेषणप्रक्षेपेण व्यभिचारं परिहरति यद्वेति।

टिप्पणी— क्रमयौगपद्यविकल्पायोगादिति। विकल्पदूषणग्रस्तत्वादित्यर्थः। एतच्च 'ननु उन्मिषित'—

श्री— व्यवस्था स्वीकार्या। ननु व्यवधानकाले योग्यत्वमपैति; अतो न गृह्यत इति चेन्न—वस्तुनः स्थिरत्वात्, तद्योग्यताऽपि हि न गलति; स्थिरैवेति। अन्येन तस्य तदैव दृश्य गतत्वाच्च न तदपगमः सुवचः। क्षणभङ्गपक्षेऽप्ययोग्यत्वं दुर्वचम्, योग्यपूर्वक्षणादयोग्यक्षणोत्पत्तौ मानाभावात्। तदाह नमेति। समानसंततिरेव हि भवितुमर्हतीति श्लोकार्थः। क्रमयौगपद्येति। एतद्विवरणमिह 'ननु उन्मिषितमात्रं चक्षुः' इत्यादिवाक्ये भविष्यति। असंबन्धेति। अत्र सर्वत्र संबन्धपदस्थाने संबद्धपदं युक्तम्। अतिप्रसंग इति। असंबद्धस्यापि ग्रहणेष्टौ व्यवहितमपि गृह्येतेति अतिप्रसंगः स्यात्। नन्वितिप्रसंगापादनं संबद्धस्य सर्वस्य ग्रहणमिति पक्षेऽपि समम्, संबद्धस्याप्ययोग्यस्याग्रहणादिति चेत्—न तत्; योग्यं सत् यत् यत् अन्वितं—संबद्धं तद्ग्रहस्यैवेष्टत्वात्। ननु घटे गृह्यमाणे तद्गतरूपादिकमपि गृह्यते; न हि रूपादिनेन्द्रियस्य संबन्धोऽस्ति इत्यत्राह गृहीतस्येति। यद्यत् गृहीतम्, तत्तत्र संबन्धोऽस्ति। स च संयोगो वा संयुक्ताश्रितत्वं वेति साक्षात्परम्परासाधारणः। अत एवाव्यभिचारात्; अन्यथा व्यभिचारात्। योग्यमयोग्यं सर्वमपि, संबद्धश्चेत्, ग्राह्यमिति तु न; व्यभिचारादित्यर्थः। ननु प्राप्यग्राहीत्यस्य प्राप्य—संबध्य वस्तुज्ञानजनकमित्यर्थः, कर्मेन्द्रिये च न ज्ञानजनकत्वमिति व्यभिचार इत्यत्राह नात्रेति। व्यापारेण स्पृष्टेः—स्पर्शपूर्वकव्यापारस्येति यावत्। स्वसंबद्धविषयकक्रियाहेतुत्वं साध्यम्। क्रिया च क्वचित् ज्ञानं क्वचिदन्यो व्यापार इति भावः। यद्वा बाह्येति। बाह्यत्वे सति ज्ञानेन्द्रियत्वं हेतुः। मनसि कर्मेन्द्रिये च व्यभिचारवारणाय क्रमेण

ग्रहणकालतारतम्यं च स्यात् ॥ मैवम्; उदयत्येव सवितरि सकलदिग्व्यापिन्यां प्रभायामिव इन्द्रियवृत्तेः तादृशवेगातिशयस्याविस्मयनीयतया पद्मपत्रशतवेधनीत्या यौगपद्याभिमानोपपत्तेः । ननु सिद्धे गमने यौगपद्याभिमानक्लृप्तिः, नात्र तत् सिध्यतीति चेन्न; स्वाभ्युपगतसाम्यात् । बुद्धिसन्ततेः शरीरान्तरगमनं दीपालोकादिगमनं च दृष्टं कल्प्यं वा ? नाद्यः, त्वयाऽप्यनभ्युपगमात् । द्वितीये तु, तथेहापि किं न स्यात् ? ॥ न देहान्तरादौ गतिः प्राप्तिर्वा । किंतु तत्तत्तत्र देशकालनैरन्तर्येणोत्पत्तिमात्रमिति चेत्, तथेहापि त्वया कल्प्यताम्; अविशेषात् । ननु प्राप्तिः कल्प्या, तदभावस्तु अनुपलम्भमात्रेण सिध्यतीति चेन्न; योग्यानुपलब्धेरभावात् । अतीन्द्रियस्य हि प्राप्तिरपि तथैव । अतो नात्र बाधशङ्का । ननु दूरस्थत्वात् विषयेन्द्रिययोः प्राप्तिर्बाधितेत्यत्राह **प्राप्तिरिति** । वृत्तिद्वारेति शेषः । **उक्तप्रकारेति** पुनरनुवचनं वाद्यन्तरोक्तप्राप्तिप्रकारनिरासार्थम् । अथापि क्वचिद्व्यवहितग्रहणदर्शनात् प्रमाणतः तर्कतश्च बाधः स्यादित्यत्राह **वृत्तिमिति** । अच्छः—आलोकाद्यनुप्रवेशानुगुणसन्निवेशवानित्यर्थः । दृश्यते ह्यनाविलसलिलमूलप्रविष्टः सूर्यालोकः, तत्रत्यं च तत्प्रतिफलनदीप्तं शिलाविशेषादि । यथावत्प्रसरमत्यन्तनिरोधं च परिहर्तुं विरलपटनिदर्शनम् । अत एव हि तत्राविशदप्रतिभासः ॥ सरन्ध्रत्वे स्फटिकादिषु सलिलगलनादिप्रसक्तिः स्यादिति चेन्न; आलोकप्रवेशवत्तु सर्वेषु सलिलप्रवेशस्य त्वया दुर्वचत्वात् । अच्छिद्रपरुवकसंपुटस्थगितकर्पूरकस्तूरिकादिगन्धनिस्सरणन्यायाच्च द्रव्यविशेषप्रवेशानुगुणसन्निवेशवत्त्वं काचादेरङ्गीकार्यम् । अप्राप्यग्रहणेऽपि हि, 'कुड्यादिव्यवहितं न ग्राह्यम्; काचादिव्यवहितं तु ग्राह्यम्' इति वस्तुस्वभाववैचित्र्यं त्वयाऽपि स्वीकृतम् ।

---

ஸ்ரீ— प्रमाणतस्तर्कतश्चेति । घटादिचाक्षुषज्ञानं प्राप्तिपूर्वकं न भवति, चाक्षुषज्ञानत्वात्, अम्बुकाचादिव्यवहितज्ञानवदिति प्रमाणम् । प्राप्यग्रहणे काचादिव्यवहितं न गृह्येतेति तर्कः ॥ ४० ॥

ஆனா— इत्यादिना उपरिष्टात् स्फुटीभविष्यति । तथेहापि त्वया कल्प्यतामिति । इन्द्रियवृत्तावपि बुद्धिसन्ततिवत् देशकालनैरन्तर्येणोत्पत्तिस्त्वया कल्प्यतामित्यर्थः । ननु मया देशकालनैरन्तर्येण इन्द्रियवृत्तिकल्पनमस्तु, मा वा? उभयथाऽपि इन्द्रियस्य विषयेण प्राप्तिर्नास्ति, इन्द्रियवृत्तिपरम्परायाः सम्बद्धत्वायोगात्; इन्द्रियाणां प्राप्यकारित्ववादिभिः भवद्भिः प्राप्तिः कल्प्या, अप्राप्तिस्तु अस्माकमनुपलम्भमात्रसिद्धा । तथा च प्राप्तिकल्पनं बाधितमित्यभिप्रायेण चोदयति—ननु इति । तथैवेति । कल्प्येत्यर्थः । वाद्यन्तरेति । नयनरश्मिद्वारा प्राप्तिप्रकारनिरासार्थमित्यर्थः । परुवकम्

வீ— बाह्यज्ञानपदे । पद्मेति । पद्मदलानां शतम् एकोपर्यन्यदिति निक्षिप्य सूच्या वेधे क्रियमाणे युगपद्वेध इति प्रतीतिरस्ति । वस्तुतस्तत्र क्रमेणैव वेधः, तद्वत् । वाद्यन्तरेति । देशकालनैरन्तर्येणोत्पत्तिरिति प्राक् वृद्धोक्तम् । विषयस्य चक्षुषि प्रवेश इति च कैश्चित् । प्रमाणत इति । व्यवहितदर्शनमेव प्रमाणम् । तेन चक्षुरादिकं प्राप्यग्राहीत्यनुमानबाध इत्यर्थः । यदि प्राप्यग्राहि स्यात् व्यवहितग्राहि न स्यादिति च तर्कः । यथावत् प्रसरः पूर्णप्रसरः तदभावः पटतन्तुदेशे; रन्ध्रसत्त्वादत्यन्तनिरोधाभावः । परुवकशब्दप्रयोगः अधिकरणसारावलावपि (४-२-१२) भस्त्रिकान्तःपरुवकवदिति । परुवकं स्वच्छद्रव्यनिर्मितकरण्डविशेष इत्यानन्ददायिनी । उपरितनावरणरूपपरिच्छदसद्भावद्योतनाय संपुटशब्दः । काचादौ छिद्रमस्ति । तत् किञ्चिद्द्रव्यमात्रप्रवेशानुकूलम्, द्रव्यान्तरप्रवेशाननुकूलमिति

श्लो— नीरन्ध्रेऽप्यम्बुकाचादौ दृक्प्रभादेः प्रवेशनम् । वस्तुस्वभाववैचित्र्यादिति केचित् प्रचक्षते ॥

'सर्वत्र स्वरूपयोग्यत्वायोग्यत्वाभ्यामेव ग्रहणाग्रहणे । तत्र छादकतदभावौ निरर्थकौ' इति वदतां बाधकं, स्वोक्तानुमानस्य विपक्षे बाधकम् अयस्कान्तनिदर्शनेऽपि छादकनैष्फल्येऽतिप्रसङ्गमभिप्रेत्याह **नो चेदिति** । इह **योग्यं निखिलं**-सर्वस्मिन् जगति स्वरूपयोग्यं सर्वं **समं गृह्येत** — अविशेषाद्युगपदेवेत्यर्थः। आदिशब्देन अतिदूरत्वकालविप्रकर्षादिकं दृष्टान्ततया गृह्णाति ॥ छादकाभावः स्वरूपतस्सहकारी, न तु प्राप्तिविरोधिप्रत्यनीकतयेति चेन्न ; आलोकादिप्राप्तिविरोधिच्छत्रादिन्यायस्यात्रानपायात् । न च यत्रकचिच्छादकाभावः सहकुर्यात् ; अतिप्रसङ्गात् । किंतु नयनार्जवदेशे । अयं च नियमः प्राप्तिविरोधिनिवृत्तिरूपतयेति युक्तमुत्पश्य । रूपग्रहणसामग्र्यामेव प्रदीपादिच्छादकं प्रभाप्रतिघातार्थं दृष्टम् । उन्मीलितनिमीलितचक्षुषः पिठरकावृतदीपप्रभान्यायेन पूर्वप्रसृतनयनप्रभाया विनाशादतिक्रमाद्वा ग्राह्यग्रहणाभावः । अत्र गृहीतच्छन्नमपि गृह्येतेति प्रसङ्गारूढम् । तदा **समिति** पूर्वमिवेत्यर्थः । तच्च क्षणभङ्गेन योग्यायोग्यभेदकल्पनया परिजिहीर्षतः सर्वलोकप्रसिद्ध्यनुसारिणा स्वमतेनोत्तरमाह— **स्थैर्य** इति । अयं भावः— छादनदशायां पूर्वगृहीतस्य स्वरूपयोग्यत्वं स्थितं नष्टं वा? आद्ये कथं न गृह्येत? प्राप्तेरप्रयोजकत्वात् (नपेक्षनात्) । द्वितीये नाशकं न दृष्टम् ॥ छादकमेव स्वरूपयोग्यतानाशकमिति चेन्न; अव्यवहितदेशस्थैरप्यग्रह[ण]प्रसङ्गात् । यं प्रति न व्यवधिस्तं प्रति योग्यता नष्टेति चेत्, छादकापगमेऽप्यग्रह

---

ஜொளா – समुद्गकम् (ஜெப்பு)। सम्पुटम् मध्यमित्यर्थः। विप्रकर्षादीति । आदिशब्देन तमोव्यासङ्गादिकमुच्यते । छादकतदभावौ निष्फलाविति वदन्तं प्रति तत्रैवातिप्रसङ्ग आपादनीयः । ननु अतिदूरत्वकालविप्रकर्षनैष्फल्यमित्याह— दृष्टान्ततयेति । नतु इति । इन्द्रियाणां प्राप्यकारित्वादिति शेषः । छादकाभावस्य इन्द्रियप्राप्तिविरोधिप्रत्यनीकतया उपयोगे नियामकान्तरमाह्—नचेत्यादि । छादकाभावो नयनार्जवदेश एवोपकरोतीत्ययं नियमः तस्य प्राप्तिविरोधिनिवृत्तिरूपतया उपयोगे संभवति । अन्यथा स्वरूपेणैवोपयोगे यत्रकुत्रचित् सतोऽपि छादकाभावस्योपयोगः स्यात् । अतो विरोधिनिवृत्तिरूपतयोपयोग इति युक्तमिति विचारयेत्यर्थः । ननु छादकस्य नयनवृत्तिनिरोधकत्वेन साफल्ये उन्मीलनानन्तरमेव निमीलितचक्षुषः उन्मीलनदशायां प्रवृत्तायां नयनवृत्तेर्निरोधकत्वाभावेन छादकस्य निष्फलत्वात् विषयग्रहणं स्यादिति शङ्कायां दृष्टान्तशिक्षणपूर्वकं परिहारमाह—रूपेत्यादि । पिठरकम् स्थाली, 'पिठरः स्थाल्युखा कुण्डम्' इति अमरः । (மிடா)...... ... विनाशादतिक्रमाद्वा इति मतभेदेन । अत्र=छादकनैष्फल्यनिरासप्रसङ्गे । अपिशब्दो भिन्नक्रमः, इत्यपीत्यन्वयः । प्रसङ्गारूढम् अतिप्रसङ्गाक्रान्तं छादकनैष्फल्यमिति शेषः । तच्चेति । छादकसमये अयोग्यमेव वस्तूत्पद्यते, तदभावसमये योग्यमेवोत्पद्यते, छादकतदभावकालीनयोः क्षणिकत्वेन भिन्नत्वात् इति अति-

வீ— स्वपक्षः । व्यवहितकिञ्चिद्ग्राहकत्वतदभावौ स्वभाव इति स्वभाववादिपक्षः । काचादौ रन्ध्राभावेऽपि किञ्चित् प्रवेष्टुं शक्नोतीति केषाञ्चित् पक्ष इति पक्षत्रयम् । योग्यं सर्वं ग्राह्यमेवेति पक्षेऽतिप्रसंग उच्यत इति तृतीयपादमवतारयति सर्वत्रेत्यादिना । बाधकमिति पदद्वयम् अतिप्रसंगमित्यस्य विशेषणम् । समं गृह्येतेत्यस्यार्थद्वयमाह अविशेषात् युगपदिति, पूर्वमिवेति च । प्रसङ्गारूढमिति । यत् पूर्वगृहीतं पश्चात् छन्नं तदपि गृह्येतेति प्रसंगोऽप्यत्रेत्यर्थः । बाह्यप्रवेशेति । बाह्यस्याऽऽलोकस्य चक्षुषि प्रवेशेत्यर्थः ॥ ४० ॥

प्रसङ्गात् ॥ तदपगमात् पुनरुत्पद्यत इति चेत्, हन्त! अदृश्यमानानन्तोत्पत्तिविनाशकल्पनात् प्रतिपुरुष नियतानन्तयोग्यताभेदकल्पनाच्च वरं प्रदीपप्रभान्यायेन प्राप्तिविघातकतया छादकसाफल्यस्वीकारः। परपक्षेणाऽपि प्रसङ्गस्थैर्यमाह प्रभेति। अपिरन्वारोहद्योतकः। क्षणभङ्गपक्षेऽपि योग्यक्षणादयोग्यक्षणोत्पत्तौ कारणक्षणस्य सर्वैरदृष्टस्तत्स्वरूपातिरिक्तः शक्तिभेदो वा सहकारिभेदो वा कल्प्यः। उभयमपि स्वमतबाधकं दृष्टम्। छादकमेवायोग्यक्षणोत्पादनसहकारीति चेन्न, अपसिद्धान्तात्। छादकस्य किञ्चित्करत्वानपायात्। तोयादिव्यवहितेऽप्यग्रह[ण]प्रसङ्गात्। छन्नस्य च सर्वादृश्यत्वप्रसङ्गात्। नेत्रसन्निकृष्टेन(हितेन) पक्ष्मकरतलादिना दवीयस्तरदिवाकरक्षणोत्पत्तेरत्यद्भुतत्वाच्च। तस्मादस्मदुक्तमेव छादकसाफल्यम्।

उक्तातिप्रसङ्गः साङ्ख्यादिपक्षेऽपि समः। यदि ह्यहङ्कारविकारयोश्चक्षुःश्रोत्रयोर्गोदेशस्वविषयप्राप्तित्वं दृष्टं तावत्पृथुत्वं तत्तच्छरीरोत्पत्तिसमयसिद्धम्, स्वाधिष्ठान इहैवस्थिताशो वृत्तिरित्युच्यत इति—तदा निमीलनाद्यवस्थायामपि ग्राहकत्वप्रसङ्गः, प्राप्तेरनपायात्। अथ पृथुत्वं सततं ऽपि बहिर्वृत्ति दीपप्रभान्यायेन विनश्यति, अत एव छन्नग्रहणाभाव इति— तथात्वेऽप्येकस्यादृश्यमानपृथुत्वाणुत्वाद्यनन्तावस्था, स्वतो भिन्नाभिन्नवृत्त्यशनाश, तन्नाशेऽपि स्वरूपावस्थानमित्यादिबहुविधकल्पनापात इति।

यत्तु कैश्चिदुच्यते— निष्क्रान्तमात्रमेव चाक्षुषं तेजो बाह्येन बहुदेशव्यापिना चन्द्रसूर्यादिज्योतिषा संवलितं तावत्प्रथिमानमवयविनमारभते, तेन च सम्बन्धादुन्मिषितस्य दूरस्थग्रहणं दूरासन्नयोर्युगपद्ग्रहणं च सिध्येदिति—तदयुक्तम्, निष्क्रमणकल्पनस्य गुरुत्वात्। अनिष्क्रान्तमेव किं नावयविनमारभते(मेत), आन्तरनिष्क्रमणवत् बाह्यप्रवेशोपपत्तेः। अपि चास्मिन् पक्षे त्रिभुवनविवरव्यापिना तेजसा सह चाक्षुषतेजस्संवलनात् तेन सम्बद्धं सर्वं युगपत् भासेत, पश्चाद्भागादिस्थितं च। अथार्जवावस्थानमपेक्षणीयमित्युच्येत, तदा अस्मदुक्त्या सेत्स्यसिद्धत्वात् (द्धतात्)। अन्यथा दर्पणतरङ्गादिसन्निधाने स्वमुखादिग्रहणं न स्यात्। किं च निमीलिताक्षस्यापि प्राङ्निष्ठ्युन्ननयनसहस्रसम्भवव्याप्त्यालोकानुवृत्त्या दृश्यदर्शनानुवृत्तिः स्यात्। अतः प्रागुक्तप्रकारैव प्राप्तिरिति ॥ ४० ॥ इति चक्षुरादेः प्राप्यकारित्वम् ॥

शब्दं गृह्णाति दूराभ्युदितमपि बहिस्सन्तता श्रोत्रवृत्तिः
दिग्भेदामन्त्रतादिग्रहणमपि तदा तत्र तत्सन्निधानात्।
इत्येकेऽन्ये तु दूरान्तिकगतजनताशब्दधीकालभेदात्
श्रोत्रायातस्य तस्य ग्रहमनुमिमतिमप्याहुरस्मिन् दिगादेः ॥ ४१ ॥

---

*प्रभेति*— प्रसङ्गदूषणं परिहर्तुमिच्छत इत्यर्थः। स्वमतबाधकमिति। क्षणिकत्वेन शक्तिभेदसहकारिसम्पत्त्यनुपपत्तेरिति भावः। सर्वैति। समीपस्थस्यापि अदृश्यत्वप्रसङ्गादिति भावः। अत्यद्भुतत्वादिति। नेत्रसन्निकृष्टकरतलादिछादकेन अतिदूरस्थसूर्याद्युत्पत्तेः असम्भावितत्वादित्यर्थः ॥ ४० ॥

*शब्दमिति*— शब्दमिति। श्रोत्रेन्द्रियं शब्ददेशं गच्छति, अत एव दिगादिग्रहणमिति प्रथमपक्षः साङ्ख्यानुसारिणाम्। श्रोत्रदेशमागतः शब्द एव गृह्यते, अत एव दूरान्तिकादिभेदेन ग्रहणे विलम्बाविलम्बाविति द्वितीयः पक्षः। तदा दिगादिविषयेऽनुमानमेव, वीणादिमयूरदिविशेषवत्। दूरेति। दूरगतया जनतया शब्दग्रहः पश्चात्काले, अन्तिकगतया तु ग्रहणं पूर्वमिति भेदः श्रोत्र

भवतु चक्षुषस्तेजसाऽऽप्यायितत्वात् मणिप्रभान्यायेन काचित् वृत्तिः, श्रोत्रस्य तु आकाशाप्यायितस्य सा कथमित्यत्राह शब्दमिति ॥ विकारिद्रव्यस्य तावत् स्वरूपत आप्यायकद्वारा वा तत्रतत्र वृत्तिरविरुद्धा। न चानुपलम्भविरोधः ; योग्यत्वाभावात् । अन्यथा स्वेष्टमपि भज्येत । तत्रापि हि बुद्धिसन्ततेः शरीरान्तरगमनमालोकादिगमनं च दृष्टं कल्प्यं वा ? नाद्यः, अशक्यत्वादनभ्युपगमाच्च । न द्वितीयः, तद्वदत्रापि कल्पनोपपत्तेः । न हि तत्र गतिः प्राप्तिर्वा कल्प्यते । किंतु तत्रतत्रोत्पत्तिमात्रमिति चेत्, तथाऽत्रापि त्वया कल्प्यम् ; अविशेषात् । न च शब्दात्मकाः पुद्गलाः श्रवणदेशमायाताः दृश्यन्ते (गृह्यन्ते ?) इति युक्तम् ; शब्दस्य रूपादिवद्गुणत्वोपपत्तेः पुद्गलत्वायोगात् । नापि शब्दस्यैवाऽऽगमनम्, बाह्यैकेन्द्रियग्राह्यतया श्रुत्यादिभिश्च रूपादेरिवाद्रव्यस्य क्रियानुपपत्तेः । न च शब्दस्य तद्व्यञ्जकस्य वा वीचीतरङ्गकल्पना ; अत्यन्तगौरवात् । न च व्याप्तं श्रोत्रम्, युगपत्सार्वत्रिकशब्दोपलम्भप्रसङ्गात् । न च प्रतिनियतैः प्रदेशैः शक्तम् ; नियामकाभावात् । श्रोत्रसमवायेन शब्दो गृह्यते इति पक्षस्तु इन्द्रियाणामभौतिकत्वस्थापनयाऽपास्तः । अतो यथोपलम्भं तत्तज्जन्तुषु स्ववृत्त्या तावद्देशव्याप्तं श्रोत्रं तत्तद्देशे शब्दं गृह्णातीति । एवमनभ्युपगमे दोषमभिप्रेत्याह दिग्भेदेति । यदि श्रोत्रवृत्तिः तत्रतत्र न स्यात्, कथं तद्विशिष्टः शब्दो गृह्येत ? न ह्यत्र प्राच्यादिप्रतिनियतं लिङ्गं दृश्यते ; नापि दूरासन्नत्वनियतम् । अतः शब्दस्वरूप इव तदुत्पत्तिदेशविशेषेष्वपि श्रोत्रवृत्तेः शक्तिः कार्यकल्प्या । आसत्तितारतम्यानुरोधेन विशदाविशदावभासश्च चक्षुर्वृत्ति-

---

[illegible]— शब्दोत्पत्तिदेशगतेन श्रोत्रेण शब्दो गृह्यते चेत्—दूरासन्नदेशोत्पन्नशब्देषु विशदाविशदबुद्ध्यनुपपत्तिः, श्रोत्रप्राप्तेरविशेषादित्याशङ्क्याह आसत्तितारतम्येति ।

[illegible]— भवत्विति । चाक्षुषवृत्तेस्तेजोरूपत्वेन तेजसश्चलनसंभवात् तद्द्वारा प्राप्तिसंभवः, श्रोत्रवृत्तेस्तु आकाशरूपत्वेन आकाशस्य च चलनासंभवात् तद्द्वारा श्रोत्रप्राप्तिर्न संभवतीति भावः। अन्यथेति । अयोग्यस्य अनुपलम्भबाधेऽतीन्द्रियवस्तूच्छेदापत्तिरित्यपि भावः । बाह्यैकेन्द्रियग्राह्यतयेति । अत्र गुणत्वे साध्ये बाह्यैकेन्द्रियग्राह्यजातिमत्त्वादित्यर्थः । तेन शब्दत्वादौ न व्यभिचारः । अद्रव्यत्वे साध्ये यथाश्रुतमेव ग्राह्यम् । प्रभायां व्यभिचारवारणाय तद्व्यतिरिक्ते सतीति विशेषणं देयम् । अनुमानस्य अनुकूलतर्काभावमाशङ्क्याह—श्रुत्यादिभिश्चेति ।

[illegible]— प्रति शब्दागमनविलम्बादेर्वोपपादः। न च शब्दोत्पत्तिस्थले शब्दस्य चिरमवस्थानात् दूरस्थजनश्रोत्रवृत्तिर्विलम्बेन तत्र गत्वा तं गृह्णातीति शंक्यम् ; तथा सति तावति विलम्बेऽप्यासन्नजनानां शब्दग्रहणानुवृत्त्यापातात् । तथाऽननुभवादिति । एवं श्रोत्रमायातस्य शब्दस्य ग्रहं = प्रत्यक्षम्, अस्मिन् दिगादेः तत्तच्छब्दसंबन्धिदिग्भेदवीणादिकारणभेदादिविषयानुमितिश्चाऽऽहुरिति । अनुमितिमपीत्यत्र अपिशब्दः प्रत्यक्षस्यापि ग्राहक इति वृत्त्यव्यमानवाक्यतोऽवगम्यते ।

आकाशाप्यायितस्य सा कथमिति । श्रोत्रस्याहंकारिकतया आकाशाभिन्नतया तेनाऽऽप्यायनस्य सुवचत्वेऽपि आकाशस्य महत्त्वात् तदाप्यायितत्वे सर्वदेशसर्वशब्दग्रहणमेव स्यात्, देशभेदेन वृत्तितदभावौ दुर्वचाविति शंका । विकारीति। आकाशस्य सांशतया आप्यायकांशन्यूनाधिकभावानुरोधेन ग्रहणवैषम्यमिति परिहारः । तत्रापि हीति । इदं पूर्वश्लोके "स्वाभ्युपगमसाम्यात्" इत्यादिनोक्तमेव । जैनमतमनूद्य निरस्यति नचेति । दृश्यन्त इत्यत्र गृह्यन्त इति पाठ्यम् । गुणत्वोपपत्तेः—गुणत्वसाधकयुक्तिमत्त्वात् । प्रदेशैः शक्तमिति । प्रदेशविशिष्टत्वाकारेण शब्दग्रहणसमर्थं श्रोत्रमित्यर्थः । पुद्गलत्वेति । पूरणगलनरूपव्यापारवत्तया परिच्छिन्नद्रव्यं हि पुद्गलशब्दवाच्यमिति ।

नयेन नेतव्य । अत पक्षान्तर स्थापयितु साङ्ख्यानुसारिणा पक्षोऽयमिति निगमयति इत्येके इति। बुद्ध्यन्तरानुगुणमतान्तरमाह अन्ये त्विति। दूरस्थ ताड्यमानभेर्या दश(दूरस्थताड्यमानभेर्यादिदर्शी) कोणाभिघातात्पश्चात् विलम्बेन शब्द शृणोति, वादकास्तदासन्नाश्चाविलम्बितम्। तदेतत् गन्धाश्रयद्र य विसर्पन्यायमन्तरेण कथ स्यात्? अत एवानुवातप्रतिवातयोरतिदूरा(रम?)नतिदूर च शब्दो गृह्यते, बहि रन्ध्रगृहगताना च दूरस्थशब्दग्रहणे स्फुटास्फुटधीश्च। अत श्रोत्रप्रदेशाऽऽयातभूतधर्मस्य शब्दस्य ग्रहणम्। तस्य चाऽऽयातत्वमाश्रयद्वारकम्। "शब्दगन्धसूर्यालोकरत्नप्रभादयो धर्म्यतिवर्तिनो गतिमन्तश्च" इत्यात्मसिद्धिवाक्ये शब्दशब्दो गन्धशब्दवत् आश्रयलक्षक ॥

श्लो— गुहासौधादिसक्षोभ प्रतिशब्दश्च जृम्भते। निस्साणादिभणादेन तत् एतत्पक्षसङ्गतम् ॥

नन्वेव दिगादिविशिष्टोपलम्भ कथमित्यत्राह अनुमितिमिति। आदिशब्देन दूरासन्नत्वग्रह दृष्टान्तप्रदर्शन च। श्लो—

यथा मयूरवीणादे (वीणामयूरादे?) शब्दोऽयमिति गृह्यते। तथा प्राच्यादिजातोऽयमिति लिङ्गात् तथाविधात् ॥ तत्र यद्यपि शब्दस्य विशेष कोऽपि दुर्वच। तथाऽपि विदितस्तैस्तैर्लिङ्ग स्यात् सम्मतेष्विव ॥

नन्विमौ द्वावपि पक्षौ हाठिकौ, पूर्वत्र दिगादिषु श्रोत्रस्य शक्तिकल्पनागौरवात्, उत्तरत्र दुर्वच लिङ्गदर्शनकल्पनेरिति ॥ हन्त! एव वदन् किं शब्दग्रहे दिगादिग्रहणमेव नास्तीति मन्यते? सदपि वा निष्कारणकम्? सकारणमपि वा कारणान्तरसिद्धमिति? नाद्य, सर्वलोक[धी]विरोधात्। सामग्री वैकल्यात्तु कदाचित् दिगादिरहितधी। न द्वितीय, आगन्तोरहेतुकत्वविरोधात्। न तृतीय, आग मादेरत्रासंभवात् ॥ भ्रान्त्याऽत्र दिगादिधीरिति चेन्न, प्रतिपुरुषनियतदिगभ्यासहेतुभूतधर्मविशेषमहा

---

(स)— बुद्ध्यन्तरानुगुणमिति। निस्साणादिशब्दजनितसौधगोपुरप्रतिशब्दबुद्ध्यनुगुणमित्यर्थ। तथापि विदित इति। दुर्वचत्वेऽपि तैस्तै पुरुषैर्विदित। संमतेष्विव = इक्षुक्षीरादिरसेष्विव। लिङ्ग स्यात्। यथा अन्येन पीयमानेक्षुक्षीरगतो विशेष अयमिक्षुरस, अय क्षीररस इति बुद्धौ लिङ्ग तथेत्यर्थ ॥

(आनन्द)— गुहासौधेति। सक्षोभ – निबिडध्वनि। निस्साण, वाद्यविशेष। 'निस्साण जयघोषण,' इति वैजयन्ती। तत् = विजृम्भणम्, एतत्पक्षसङ्गतम् = एतन्मतसगतमित्यर्थ ॥ ४१ ॥

(श्री)— इति निगमयतीति। इत्याशयेन निगमयतीत्यर्थ। द्वितीयपक्ष श्रेयानित्याशय। पक्षे-वरद नारायणभट्टारका (न्या सि)। तार्किका वीचीतरङ्ग न्यायेन कदम्बमुकुलन्यायेन वा शब्दस्य श्रोत्रप्राप्ति मन्यन्ते। तदसहमाना शब्दस्याऽऽगतिमन्यथोपपादयति तस्य चाऽऽयातत्वमिति। शब्दो जात नि स्वतमेव वयव वाय्वश वाऽऽश्रित सन्नेव श्रोत्रदेशमायातीति भाव। निस्साण =जयघोषण- वाद्यम्। एतत्पक्षेति। शब्दसञ्चारपक्षेत्यर्थ। तत्र यद्यपीति। वीणादिशब्दे वैजात्यग्रहणवत् दिग्भेदे शब्दे वैजात्यग्रहण नास्ति। अतस्तादृशविशेषस्य दुर्वचत्वेऽपि तैस्तै अवधानवद्भि पुरुषैर्विदित, शब्दोऽयमस्मदीयसौधीये प्राच्यभागे गृहीत, अय प्रतीच्यभागे इत्येव विशेष दूरे शब्दोत्पत्ति- स्थानदिग्भेदानुमाने लिङ्ग स्यात् समतेष्विवेति। यथा वाय्वग्निजलादिरूतचलनदहनक्लेदनादि- कर्मैकैकस्मिन् पार्श्व उपलभ्य तत्तद्दिग्गतत्व तत्रतत्रानुमीयते, तथेत्यर्थ। व्याख्यातार इक्षुक्षीरादि माधुर्यवदिति वदन्ति। हाठिकौ—हठवृत्तौ। दिगादिषु—दिगादिग्रहणे। कदाचिदिति। केचित् ग्रहणकाले अवधानरहिता विपरीततयाऽपि दिश गृह्णन्ति, शब्दस्य प्रतिश्रुतश्च भेदाग्रहणादिव।

भावात्। भावे वा तत एव तत्तदनुमानोपपत्तेः। तद्वदेव च दिगादेरप्युपलम्भोपपत्तेः। न चाबाधितांशे भ्रान्तिवत्क्लृप्तिर्युक्ता। अतः प्रत्यक्षतोऽनुमानतो वाऽत्र दिगादिग्रह इत्यन्यतरपक्षोऽनतिक्रमणीयः। शब्दस्य नित्यविभुत्वात् तदाश्रितत्वाद्वा श्रोत्रेण नित्यसंबन्ध इति वादस्तु अद्रव्यसरे निरसिष्यते [इति] ॥४१

इति श्रोत्रवृत्तिशब्दाश्रयागमनपक्षौ ॥

अथ व्योमनिरूपणम्

**प्रत्यक्षं व्योम, नीलं नभ इति हि मतिश्चाक्षुषैवास्मदादेः,**
**कूपोऽसौ, रन्ध्रमेतत्, पतति खग इहेत्यादिधीश्चात्र मानम्।**
**आधारोऽत्रातपादिः यदि, भवति कथं तस्य चेहेति बोधः?**
**तस्यांशैश्चेत्, त्र्यणौ तत् शिथिलगति, न च व्योमवाक् आतपादौ ॥ ४२ ॥**

इन्द्रियचिन्तानन्तरं भूतचिन्ताप्राप्तौ प्रथममाकाशे चार्वाकैरपि संमन्तव्यं प्रमाणविशेषं पुरस्करोति **प्रत्यक्षमिति** ॥ कथमित्यत्राह **नीलमिति**। धूम्रादेरुपलक्षणमेतत्। आरोपितं नभसि तलत्वादिवत् मलिनत्वादिकमिति चेत्; असावारोपश्चाक्षुषोऽन्यो वा? आद्ये, अधिष्ठानमपि चाक्षुषमेष्टव्यम्, अन्यथाऽतिप्रसङ्गात्। द्वितीयस्त्वसंभवी, निमीलिताक्षस्य तादृशारोपादृष्टेः। अत एव अनुमिते नभसि नैल्यारोप इत्यपि निरस्तम्। न च नीलं नभ इति धीरेव नास्ति; निश्वविसंवादात्। नाप्यसावचाक्षुषः (षी?) अस्मदादिचक्षुर्व्यापारानुविधानात् ॥ नभसि विततानां पार्थिवावयवानां कृष्णगुणमात्रं चक्षुषा गृह्यत

---

(भावप्र)— प्रत्यक्षं व्योमेति। तलत्वादिवदिति। उपाधिकृतैकदेशत्वं तलत्वम्। तत्कृतपरिणामविशेषः आदिशब्दार्थः। 'अधःप्रदेशयोरस्त्री तलं स्यात्' इत्यमरः। अतिप्रसङ्गादिति। चक्षुरादिष्वपि रूपारोपप्रसङ्गादित्यर्थः। मलिनत्वादिकमित्यादिशब्दात् अरुणत्वादि गृह्यते। ननु न हि निमित्तमस्तीत्यारोपः; आरोपे सति निमित्तानुसरणमिति चेन्न—निमित्तस्यातिप्रसङ्गिनोऽनुसरणायोगात्। मलिनत्वादिबुद्धेरपि आरोपत्वासिद्धेरिति भावः। अत एव अतिप्रसङ्गादेवेत्यर्थः।

(श्री)— भावेवेति। दिगध्यासहेतुत्वेनेष्टस्य धर्मस्य दिगनुमापकत्वं दिग्ग्राहकचमेव वा किं नेष्यत इत्यर्थः॥

प्रत्यक्षमिति। व्योम—गगनं प्रत्यक्षविषयः, नैल्यादिधीविशेषविषयत्वात्। नीलं नभ इत्यस्मदादिमतेश्चाक्षुषत्वात्। एवं कूपादिधियामपि मानत्वम्; तासामपि चाक्षुषत्वात्। खग इह पततीति— अत्र पक्षी डयत इत्यर्थः। आधार इति। इहेति गम्य आधारः आतपो वा तत्तद्दिग्विशेषो वेति चेदित्यर्थः। तस्य चेति। आतपस्य चेत्यर्थः। खगादेरिव तस्य आधेयतया इहेति बोधविषयत्वं कथम्। इह खग इतिवत् इहाऽऽतप इत्यपि प्रतीतेः। ननु अवयवावयविभावापन्ने आतपे अवयवांशस्येहेति ग्रहणम्, अवयव्यंशस्य चाऽऽतप इति पदेन इति अतिरिक्तान्वयविवादिताकिंकप्रश्नं प्रतिवक्ति तस्यांशैरिति। अंशैश्चेत्—आतपस्यांशमादाय तथा बोधश्चेत्, इह आतपत्रसरेणुरिति प्रतीतौ त्र्यणुकस्यैव त्वन्मते तत्पदग्राह्यतया, तदाधारस्याणोरप्रत्यक्षस्य कथमिहेति ग्रहणम्। अतः तत् अंशवचनं तत्र शिथिलगति—दुर्वचम्। तर्हि इहेति आतपसमुदायग्रहणम्; प्रथमान्तेन तु एकदेशग्रहणमिति चेत्—तत्राह नचेति। व्योमादिशब्दस्याऽऽतपादिवाचित्वमातपत्वादिविशेषरूपेण वा सामान्यरूपेण वा नानुभूयत इत्यर्थः। इह व्योम्नि खगः आतपः नमः मेघः वायुरित्येवं व्यवहारा हि खगादिसर्वातिरिक्तमाधारं ग्राहयन्तीति। आतपादिरूपत्वे, आकाशस्संभूतः आकाशाद्वायुरित्यादिश्रुत्यनिर्वाह इतीदमास्ताम्, प्रत्यक्षतोऽपि भेदः सिद्ध इति भावः। मलिनत्वेति। नांकरेऽप्युक्तं तलत्वमलिनत्वादि अध्यस्यतीति।

इति चेन्न, नीलं नभ इति धर्मिपर्यन्तबुद्धेः । गुणिलिङ्गत्वाच्च नीलादिशब्दानाम् । एतेन नीलरूपस्मृतिप्रमोषोऽयमिति पक्षोऽपि निरस्तः ॥ (ननु) नभसि सतो नैल्याभावात् पञ्चीकृतेऽप्यसिन्नैल्यस्य पार्थिवांशमात्रनिष्ठत्वात् तस्मिन्नेवांशे स्यादसौ चाक्षुषधी. ॥ मैवम् ; तस्य नभश्शब्दार्थत्वायोगात् । नीलपटन्यायस्य चात्र ग्राह्यत्वात् । बालातपसंनिधौ अरुणं नभ इत्यादिबुद्धेः ॥ तत्राप्यरुणातपग्रहणमात्रमिति चेन्न । कस्तर्हि तत्र नभश्शब्दार्थः ? न ह्यनेकार्थोऽयं शब्दः । अनुवृत्तमनतिप्रसक्तं च निमित्तं दुर्लभम् ; पृथिव्यूर्ध्वत्वादेः तथात्वाभावात् ॥ चन्द्रिकादिविशेषानादरेण विरलावस्थिनद्ध्यमात्रं नभ इति चेन्न ; वियति विरला चन्द्रिकेत्यादिपृथग्व्यपदेशात् । वैरल्यदर्शनमपि नभःप्रत्यक्षतामन्तरेण न घटते । तदवमध्यप्रदेशानां तैस्तैरस्पृष्टता हि विरलता ; तथा च मध्यदेशभूतं नभः प्रत्यक्षम् ॥ परस्परासंयोगमात्रं

---

ल०— गुणिलिङ्गत्वाच्चेति । नपुंसकलिङ्गकत्वाच्चेत्यर्थः । गुणमात्रग्रहणे पुंलिङ्गत्वं स्यादिति भावः । कथमन्यगुणविशिष्टतया नभसो ग्रहणमित्यत आह नीलपटेति । चः शङ्काद्योतक इति । यद्यप्यस्य शङ्कानिवृत्तिसूचकत्वमेव, तथापि तत्सूचने प्रयोजनाभावात् सप्रयोजनत्वार्थं शङ्कानिवृत्तेः निवर्तनीयशङ्कापूर्वकतया तत्सूचकत्वमुक्तम् । सूचिताक्षिप्तद्योतकत्वस्य क्लिष्टत्वादाह अवधारणार्थो वेति ॥ ४२ ॥

आनन्दा– गुणिलिङ्गत्वाच्चेति । "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति" इत्यमरोक्तेरिति भावः । कथमन्यगुणस्यान्यनिष्ठतया भानमित्यत्राह नीलपटेति । नीलद्रव्यमिश्रस्यैव पटस्य नैल्यविशिष्टतया ग्रहणवत् पृथिव्यंशविशिष्टस्यैव नभसः पृथिव्यंशनैल्यविशिष्टतया ग्रहणादिति भावः । बालातपेति । चन्द्रिकादेरप्युपलक्षणम् । 'अरुणं नभः' इत्यादिशब्देन शुक्लं नभ इत्यादेर्ग्रहणम् । बुद्धेः इति पञ्चम्यन्तस्य (?) उत्तरत्रान्वयः । अरुणातपग्रहणमात्रमिति । अरुणं नभ इति नभश्शब्दस्य आतपादिरेवार्थ इति भावः । कस्तर्हीति । क इति क्षेपे । आतपादिर्नभश्शब्दार्थो न संभवतीति भावः । कुत इत्यत्राह— नहीति । नानार्थत्वे मानाभावादित्यभिप्रायः । निमित्तमाशङ्क्य परिहरति—पृथिवीति । वायुव्यतिरिक्तत्वे सतीत्यपि विशेषणीयम् । प्रभात्वादिरादिशब्दार्थः । तथात्वाभावादिति । वायुव्यतिरिक्तत्वे सति पृथिव्यूर्ध्वत्वस्य प्रभात्वादेश्च प्रतीतिं विनाऽपि नभश्शब्दप्रयोगात् तस्य प्रवृत्तिनिमित्तत्वाभावादित्यर्थः । तैस्तैरिति । चन्द्रिकाद्यवयवैरित्यर्थः ।

श्री— गुणिलिङ्गत्वाच्चेति । धर्ममात्रग्राहित्वे नीलं नभ इति पदद्वयं न स्यात् । गुणमात्रग्रहणे 'गुणे शुक्लादयः पुंसि' इति कोशात् नील इति पुल्लिंगं स्यात् । नीलरूपविशिष्टमित्यर्थ एव द्रव्यसमानलिंगतेति । स्मृतिप्रमोष इति । गुणविशिष्टद्रव्यानुभवजनिता स्मृतिः ईषत्संस्कारप्रमोषात् द्रव्यांशं विहाय जातेत्यर्थः । भाष्यसूक्तितात्पर्यव्यञ्जनाय शंकापरिहारौ प्रवर्तयति नन्विति । नभश्शब्दार्थत्वायोगादिति । "त्र्यात्मकत्वात्तु भूयस्त्वात्", "वैशेष्यात्तु तद्वादः" इति पञ्चीकृतगततत्तद्भूयोंश एव हि तत्तच्छब्दार्थ इति भावः । तर्हि कथं निर्वाहः, तस्मिन् भूयोंशे नैल्याभावादित्यत्रोपपादयति नीलपटेति । यथा पटस्य शुक्लरूपे स्वाभाविकेऽपि रञ्जकद्रव्यगतनैल्यमादाय परम्परासंबन्धेन नैल्यस्य पटद्रव्यस्य च विशेष्यविशेषणभावेन व्यवहारः, तथा नभोनिविष्टपार्थिवांशनैल्यं नभोभूयोंशश्च विशेष्यविशेषणभावेन गृहीत्वा नीलं नभ इति व्यवहारः । 'नैल्यमिदं नभोनिविष्टपार्थिवांशमादायैव सुवचम्, किं द्रव्यान्तरान्वेषणेनेत्याशयेनैव भाष्यम्, "आकाशे चाविशेषात्" (२-२-२३) इत्यत्र "पञ्चीकरणेन रूपवत्त्वात् चाक्षुषत्वेऽप्यविरोधः" इति । अस्यायमप्यर्थः— रूपवत्त्वादित्यस्य चाक्षुषत्वेऽन्वयः । रूपवत्त्वप्रयुक्तचाक्षुषत्वे वक्तव्येऽपि पञ्चीकरणसद्भावादविरोध

वैरल्यमिति चेन्न ; भिन्नकालेषु गुणादिषु च विरलधीप्रसङ्गात् ॥ वर्तमानानामासन्नदेशस्थानां द्रव्याणाम् असंयोगो विरलतेति चेन्न । चन्द्रिकादिष्वसंयुक्ततेजःकणानामासन्नदेशतया नभस एव ग्राह्यत्वात् । विरलविरलतरादिबुद्धौ असंयोगाविशेषे मध्यदेशाल्पत्वभूयस्त्वग्रहणमन्तरेण का गतिः ? ॥ दूरदूरतरादिस्थितिरिति चेत् , तथाऽपि दूरासन्नदेशतया नभः प्रत्यक्षमेव ॥ दिशस्तत्र देशत्वं स्यादिति चेन्न; उपाध्यतिरेकिण्यामपि तस्या प्रत्यक्षत्वस्य नभस्समानचर्चत्वात् ॥ दीर्घेण ह्रस्वेन च स्पष्टुं योग्यत्वमेव दूरत्वमासन्नत्वं च । अतो नात्र प्रदेशबुद्ध्यपेक्षेति चेन्न ; तयोस्तत्तत्स्वरूपत्वेऽतिप्रसङ्गात् । अतिरेके तु देशविशेषस्थित्युपलम्भमन्तरेण तदसिद्धेः। अत्र चाक्षुषमेवोपलम्भान्तरमप्युदाहरति कूपोऽसाविति । कूपरन्ध्रादयो हि तत्तद्देशविशेषतया सर्वलोकप्रत्यक्षसिद्धाः । आवरणाभावमात्रं तु (४६) निरसिष्यते । पतत्रिणश्च पतनदेशतया नभः प्रत्यक्षयामः । तत्र इहप्रत्ययस्यान्यथासिद्धिमाशङ्कते—आधार इति । इहेति प्रतीयमानत्वमात्रमिह आधारत्वम् । परिहरति [भवति?] कथमिति । इह नभसि आतपादिरिति व्यतिरेकनिर्देशात् नातपादिः इहशब्दार्थः स्यादिति भावः । अत्रोदयनाद्युक्तमाशङ्कते तस्यांशैरिति । आतपाद्यंशास्तदाधारीक्रियेत्यर्थः । दूषयति—व्यणाविति । परै. व्यणुकानामप्रत्यक्षद्व्यणुकाश्रितत्वस्वीकारात् अंशैरिह प्रतीतिनिर्वाहस्तत्र कुण्ठित इत्यर्थः । मा भूत् स्वांशैः व्यणुकानामिहेति धीः ; व्यणुकसमुदायमिहेति निर्दिश्य प्रत्येकं तदाधेयतयोपचर्यतामित्यत्र क्लिष्टगतौ लोकव्यवहारं प्रतिपक्ष्यति न चेति । इह नभसि व्यणुकम् , इह व्योम्नि आतपः इत्यादिव्यवहारे व्यणुकतत्समुदायादिव्यतिरिक्ते कुत्रचिन्नभःपर्यायाणां प्रयोगः प्रसिद्धः । सर्वलोकप्रतीतिव्यवहारोल्लङ्घनं तु सर्वसंक्षोभकं साहसमिति भावः । चः शङ्काद्योतकः ; अवधारणार्थो वा ॥

रूपस्पर्शोज्झितत्वात् न भवति गगनं दर्शनस्पर्शनार्हं
घ्राणश्रोत्रे रसज्ञाऽप्यवगमयति न द्रव्यम्, अन्यत्त्ववाह्यम् ।

---

Ωल्वला— नभस्समानचर्चत्वादिति । नभसीव दिश्यपि प्रत्यक्षत्वस्य त्वयाऽनङ्गीकारादिति भावः । तयोः–दीर्घत्वह्रस्वत्वयोः। अतिप्रसङ्गादिति । तुल्यन्यायात् सर्वत्र धर्म्यतिरिक्तधर्मासिद्धिप्रसङ्गादित्यर्थः। ननु घटस्य नैल्यं, पटस्य शुक्लत्वमित्यादिपृथक्प्रतीतिव्यवहाराभ्यां धर्माङ्गीकार इति चेत्—अत्रापि दण्डस्य दैर्घ्यम्, ह्रस्वत्वम् इति धर्मिस्वरूपातिरिक्तधर्मत्वेन तयोः सिद्धिरिति भावः ॥ ४२ ॥

वी— इति । अतः चाक्षुषत्वेऽपीति अपिशब्दप्रयोगात् अचाक्षुषत्वमेव भाष्येष्टमिति न शक्यम् । नीरूपस्यापि कालस्य प्रत्यक्षत्वसंमतेः । शिष्टमस्मिन्श्लोके । रूपस्य चाक्षुषस्य ग्रहणविशेष्यकत्वेव ग्रहणमिति च न नियमः, पीतश्शंखः, नीलःपट इत्यादिग्रहणात् ।

पतनदेशतया—पतनं उत्पतनम् । पतनक्रियावच्छेदकदेशतया । पतनस्याधिकरणतयेति नोक्तम् । पक्ष्यादिकं प्रति आकाशस्य मुख्याधारत्वे मानाभावात् । नन्वाधारोऽत्रातपादिरित्युक्तम् । अधोगतिप्रतिबन्धकसंयोगानुयोगित्वरूपाधारत्वस्याऽऽतपे दुर्वचत्वादित्यत आह इहेतीति । आधारशब्दस्य इहेति प्रतीयमान इत्यर्थः । आतपादिरेव इहेति प्रतीयमानश्चेदिति पूर्वपक्षिवाक्यार्थः । आधारत्वायोग एव, भवति कथमित्यादिनोच्यते । तस्यांशैरवेदिति । तद्द्रव्यावयवान् आश्रित्य इहेति प्रत्ययश्चेदित्यर्थः । प्रत्येकमिति । तत्तदेकदेशः इत्यर्थः ॥ ४२ ॥

रूपेति । गगनमप्रत्यक्षम्, इन्द्रियाग्राह्यत्वात् । तत्साधनञ्च विशेषणमाधकूदेन । गगनमचाक्षुषं

तस्मान्नाध्यक्षवेद्यं वियदिति यदि, न, प्रत्ययस्यापरोक्ष्यात्
पञ्चीकारेण नैल्यं पटमलिनिमवत् भाषितं चोपकुर्यात् ॥ ४३ ॥

आकाशस्य प्रत्यक्षत्वे [परोक्तं] बाध(धकं) शङ्कते रूपेति ॥ नभो न चाक्षुषम्, रूपशून्यद्रव्यत्वात्, नापि स्पार्शनं स्पर्शशून्यद्रव्यत्वादिति हेतुद्वयविभाग । अन्येषां तु बाह्येन्द्रियाणामत्रासंभवमाह घ्राणेति । घ्राणादीनि हि स्ववेद्यगुणाश्रयमपि नावगमयन्ति, किंपुनर्द्रव्यान्तरमिति भाव । मानसप्रत्यक्षमिह दूरनिरस्तमित्याह अन्यदिति । तुशब्दोऽत्रात्यन्तासंभवपर. । अबाह्यम्— आत्मतद्धर्मव्यतिरिक्तेषु न स्वातन्त्र्येण प्रवर्तत इत्यर्थ । संकलितमाह तस्मादिति । अस्मदादी(देरि?)ति विशेषणीयम् । चोद्यस्य दत्तोत्तरत्वाभिप्रायेण प्रतिवक्ति नेति । अभिप्रेतं व्यनक्ति प्रत्ययस्येति । अयं भाव·—न रूपादिविरहाच्चाक्षुषत्वादिहानि, रूपादिप्रत्यक्ष[त्व]वत् यथादर्शन व्यवस्थोपपत्ते । प्रतिप्रयोगश्च— विगीतम् अस्मदादिबाह्येन्द्रियग्राह्य बाह्यत्वे सति अस्मदाद्यपरोक्षधीविषयत्वात्, अविगीतवत् । नात्र हेतुरसिद्ध·, परिशेषप्राप्ते । न तावदत्राऽऽगमिकी नभ प्रतीति, तदनभिज्ञानामपि संभवात् । नाप्यानुमानिकी, सिद्धेऽपि तदनुमाने अनधिगतताहशानुमानाना नभ प्रतीते । तदेवमाकाशस्यात्रानुमानादिविषयत्वायोगात् आबालपण्डितमनुभूयमानत्वाच्च तद्बुद्धिरपरोक्षेति सिद्धम् ॥ नन्वसिद्धस्य सिद्धस्य वा नभस प्रत्यक्षत्वसाधनम्? नाद्य, अनुमानकथाबाह्यत्वात् । न द्वितीय, अनुमानतस्तत्सिद्धे त्वदनभ्युपगमात्, प्रत्यक्षतस्तत्सिद्धेरस्मदनभ्युपगमादिति ॥ मैवम्, उभयसमतादागमतोऽपि तत्सिद्धे । आस्तामागम, पृथिव्याद्यतिरिक्तस्य नभ प्रतीतिविषयस्य कस्यचिदुभयसंमत्या पक्षीकारोपपत्ते । अन्यथा

---

पु०— तर्हि त्वदनुमान सत्प्रतिपक्षं स्यात्, द्वयोस्तुल्यत्वादित्यत आह—सर्वलोकप्रत्यक्षेति ॥ ४३ ॥
टिप्प— दर्शनस्पर्शनार्हमिति उभयानर्हत्वे साध्ये स्पर्शरहितत्वादित्येवालम्, व्यभिचाराभावात् इत्याशङ्क्य साध्य हेतु च विभजति–नभ इति । असम्भवम्–अप्रसक्तिमित्यर्थ. । संकलितम्— पिण्डितार्थमित्यर्थः । यथादर्शनं व्यवस्थोपपत्तेरिति । नीलं नभ इत्यादिप्रतीतिबलात् अनुमान श्री— नीरूपद्रव्यत्वात्, न त्वाचं निस्स्पर्शत्वात् । घ्राणश्रोत्ररसनाः न व्योमग्राहिकाः द्रव्यानवगमकत्वात् । अन्यत्–मनस्तु न तत्प्रत्यक्षहेतुः साक्षात् बाह्याविषयकत्वादिति तस्मात्=तत्तदिन्द्रियग्राह्यत्वाभावकूटाद्धेतोरप्रत्यक्षं वियदिति चेन्न–बाधितो हि हेतुरित्याह प्रत्ययस्येति । रूपावश्यकत्वमन्वाख्याह पञ्चीति । पटमलिनिमवत्–पटनैल्यवत् । भाषितं–भाष्ये (२-२-२३) उक्तं पञ्चीकरणकृत नैल्य पटनैल्यवत् परम्परयोपकुर्यात्–चाक्षुषत्वनियामक स्यादिति । गुणादिषु व्यभिचारवारणाय द्रव्यत्वादिति । तार्किकमते योगिप्रत्यक्षविषयत्वस्य अस्मन्मते इन्द्रियनिरपेक्षेश्वरनित्यमुक्तप्रत्यक्षविषयत्वस्य चेष्टत्वादाह अस्मदादीति । अध्यक्षवेद्य–प्रत्यक्षविषय । गगन नास्मत्प्रत्यक्षवेद्यमिति साध्यम् । इन्द्रियजन्यप्रत्यक्षाविषयत्वमेव साध्यञ्चेत्, तदाऽपि योगबलसहकृतेन्द्रियजप्रत्यक्षविषयमादाय व्यभिचार· स्यात् । परिशेषप्राप्तेरिति । नभः अस्मदादिप्रत्यक्षविषयः अनुभवान्तराविषयत्वे सति अनुभूयमानत्वादिति प्रत्यक्षपरिशेषण परिशेषः । संभवात्=नभ प्रतीतेर्जायमानत्वात् । सिद्धेपीति । अनुमानस्य वर्तमानत्वेऽपि तत्प्रकाराज्ञानेऽपि प्रतीयमानत्वादित्यर्थः । बाह्यत्वादिति । आश्रयासिद्धिरूपदोषादिति भाव. । नन्वागमानंगीकारिणा सह प्रत्यक्षाप्रत्यक्षविवादे कथमुभयसंमतत्व गगनस्येत्यत्राह आस्तामिति । पृथिव्याद्यतिरिक्तस्येति । "न च व्योमवागतपादौ" इति प्राक् व्युत्पादितमेतत् । तत्स्वीकारे

कथम[न्य]त्र त्वदुक्तमप्रत्यक्षत्वानुमानं जीवेत्? सर्वलोकप्रत्यक्षविरुद्धं च तत्। तथाऽपि तत्स्वीकारे बुद्धिव्यतिरिक्ततया बाह्यार्थं सर्वोऽप्यप्रत्यक्ष इति वदन् **सौत्रान्तिक** एव समर्थः स्यात्। तदेवं नीरूपस्यापि नभसश्चाक्षुषत्वं निर्व्याघातम्। भाष्ये त्वस्य पञ्चीकरणेन रूपवत्तया चाक्षुषत्वाविरोध वचनं वैभवात् स्यात्। यथा रूपरूपिरूपसमवेतरूपैकार्थसमवेतानां चाक्षुषत्वमविशिष्टमङ्गीक्रियते, तथा रूपिद्रव्यसंवलितस्यापि कचित् स्यात्। न चातिप्रसङ्गः, समनर्थत्वात्। न हि रूपिद्रव्यं रूपैकार्थ समवेतं वा सर्वं चक्षुर्ग्राह्यम्, योग्यतानियमस्य दुर्लङ्घत्वादिति। तदेतदभिप्रेत्याह **पञ्चीकारेणेति**। ४३

**इत्याकाशस्यासदादिप्रत्यक्षत्वम्॥**

**शब्दस्याधारभूतं कथमपि गगनं शक्यते नानुमातुं**
**स्वेच्छातः पारिशेष्यक्रम इह कथितोऽतिप्रसङ्गादिदुःस्थः।**
***निष्क्रान्त्यादेर्न तद्धीः, सति नभसि यतो नास्ति कुड्यादिकेऽसौ***
**रोधस्त्वावारकश्चेत्, तदभवनवशात् निष्क्रमादिश्च सिध्येत्॥ ४४॥**

अथाकाशस्यानुमानतस्सिद्धिं निराकरोति **शब्दस्येति**। शब्दः कचिदाश्रितः गुणत्वादित्येतावता तावत् न पृथिव्याद्यतिरिक्तशब्दाश्रयसिद्धिः, सर्वस्य किंचिद्भावात्। परिशेषहेतूनां तु विपक्षे बाधकाभावात्। न हि शब्दस्य पृथिव्याद्याश्रितत्वे किंचिदनिष्टं स्यात; पुष्पादिगन्ध इतिवत् भेर्यादिशब्द इति सर्वलोकबुद्ध्यनुविधाने कल्पना च लघ्वी। शब्दो विभुगुणो न भवति बाह्येन्द्रियग्राह्य-

[illegible]— बाधितमिति भावः। नचातिप्रसङ्ग इति। नीलद्रव्यसंयोगात् वाय्वादेरपि चाक्षुषत्वं स्यादित्यर्थः। नहीति। रूपिणश्चाक्षुषत्वे चक्षुरादेरपि चाक्षुषत्वं स्यात्, रूपैकार्थसमवेतस्य प्रत्यक्षत्वे, गुरुत्वादेरपि प्रत्यक्षत्वं स्यादित्यर्थः॥ ४३॥

किञ्चिद्भावात् किञ्चित्त्वात्। कचिदाश्रित इत्यत्र कचिच्छब्दार्थत्वात्। तथा च अर्थान्तरमित्यर्थः। परिशेषहेतूनामिति। शब्दः दिक्कालमनसां गुणो न भवति विशेषगुणत्वात् रूपादिवत्; पृथिव्यादिचतुष्टयं शब्दाश्रयो न भवति स्पर्शाश्रयत्वात् व्यतिरेकेण कालादिवत्; मूर्तत्वाद् मनोवत् इति वा; शब्दः आत्मगुणो न भवति, बाह्येन्द्रियग्राह्यत्वात् रूपादिवत् इत्यादिहेतूनामित्यर्थः। प्रतिकूलतर्कपराहतिमप्याह—पुष्पादीति।

[illegible]— अप्रत्यक्षत्वस्वीकारे। समर्थः स्यादित्यत्रान्वयः। ननु चाक्षुषत्वाय रूपवत्त्वोपपादकभाष्यविरोध इत्यत्र तत् अन्याशयमित्याह भाष्ये त्विति। वैभवादिति। यत् चक्षुर्मात्रग्राह्यद्रव्यं तत् रूपवदिति कालव्यावृत्त नियमं स्वीकृत्येति भावः। वस्तुतश्चाक्षुषत्वं यत्रयत्र तत्रतत्र रूपविषयकत्वमित्येव नियमः; न तु तत्र द्रव्ये तद्गतरूपविषयकत्वमितीत्याशयेनाह यथेति। नहीति। देवपिशाचाद्यदर्शनादिति भावः॥

निष्क्रमणादिना आकाशानुमानं सांख्येष्टं निराकृत्य शब्दगुणकतया तत्साधनं कणादस्तम्। तत्राऽऽह शब्दस्येति। शब्दविशेष्यकत्वकिञ्चिदाधारकत्वसाध्यकानुमितौ न विलक्षणगगनस्य विषयत्वम्। स्वेच्छातः कथितो य इह गगनविषये परिशेषक्रमः, सोऽतिप्रसंगेन विपरीतप्रसंगेन च दुस्स्थः। अतिप्रसंगो वक्ष्यते—स्पर्शो न पृथिव्यादिधर्मः नीरूपेन्द्रियग्राह्यत्वादिति स्पर्शाधारस्य पृथिव्याद्यतिरिक्तत्वापत्तिरिति। एवं विपरीतप्रसंगोऽपि, शब्दो न विभुगुणः बाह्येन्द्रियग्राह्यगुणत्वादिति। "निष्क्रमणं प्रवेशनमित्याकाशस्य लिङ्गम्" (वै. द. २-१-२०) इति सांख्यपक्षमुपक्षिप्य

गुणत्वादिति विपरीतपरिशेषस्यापि सुशकत्वात्। स्पर्शो न पृथिव्यादिधर्मः, नीरूपेन्द्रियग्राह्यत्वादित्यादिभिः पृथिव्याद्यतिरिक्तस्पर्शाधारकल्पनप्रसङ्गाच्च। तदेतदभिप्रेत्याह **स्वेच्छात** इति। आदिशब्देन विपरीत प्रसङ्गसंग्रहः। "निष्क्रमणं प्रवेशनमित्याकाशलिङ्गम्" इति परोक्तं प्रतिवक्ति **निष्क्रान्त्यादेरिति**। उपपादयति **सतीति**। यत्राऽऽकाशः, तत्र सर्वत्र निष्क्रमणादिकं न सिध्यति, आकाशव्याप्ते कुड्यादौ निष्क्रमणादेरशक्यत्वात्। न च कुड्यादिष्वाकाशो नास्तीति वाच्यम्; तस्य सच्छिद्रत्व[भाव]प्रसङ्गादिति भावः। सहकारिवैकल्यात् कुड्यादिषु निष्क्रमणादिकार्यप्रतिरोध इति शङ्कते **रोध** इति। **तु**शब्दः केवलाकाशात् विशेषद्योतकः। एवं सति निष्क्रमणादेरन्यथासिद्ध्या निर्मूलं नभःकल्पनमित्यभिप्रायेणाह **तदभवनेति**। न हि निष्क्रमणादेराकाशं समवायि; देहादिक्रियाया नभोनिष्ठत्वाभावात्। नाप्यसमवायि; द्रव्यस्य तथात्वानभ्युपगमात् समवायिकारणप्रत्यासन्नत्वायोगाच्च। निमित्तं तु ईश्वराद्यतिरिक्तमपूर्वमिह नापेक्ष्यमिति भावः॥ ४४॥ **इत्याकाशानुमेयत्वभङ्गः॥**

> **यत्त्वाकाशोऽवकाशप्रद इति कथितं शास्त्रतः, तत्र –याऽसौ**
> **अन्योन्य(न्यं) स्पर्शभाजां विहतिरिह, न सा प्राच्यतत्त्वेष्विव स्यात्।**
> **इत्यैदम्पर्यमूह्यं, न यदि, कथमिवान्येषु लभ्योऽवकाशः**
> **सिद्धादेः स्वप्रभावाज्जल इव कथितो (कठिने) युज्यते मज्जनादिः॥ ४५॥**

ननु शरीरादिष्वाकाशोऽवकाशदानेनोपकरोतीति तत्तच्छास्त्रसिद्धम्; अतोऽस्य निष्क्रमणादिलिङ्गत्वं ग्राह्यम्। तदिदमनुभाषते **यत्त्विति**॥ शास्त्राभिप्रेतमस्योपकारकत्वं शिक्षयति **तत्रेति**।

---

*ஸேவா*— गौतमोक्तं (?) हेत्वन्तरं दूषयति—निष्क्रमणेति। समवायिकारणप्रत्यासन्नत्वायोगाच्चेति। देहादिनिष्ठत्वाभावादित्यर्थः॥ ४४॥

*ஆ*—निराचकार कणादः, निष्क्रमणादिक्रियां प्रति गगनस्य समवायिकारणत्वं वा अन्यविधकारणत्वं वा न भवति। कुड्यादिमूर्तद्रव्यसंयोगे सति प्रतिबन्धाच्चलनाभावात् चलनं प्रति मूर्तद्रव्यसंयोगाभावः कारणमित्येतावदेव, न तु गगनस्य कारणत्वमिति, "संयोगादभावः कर्मणः" इत्येतदन्तैः सूत्रैः। तदेतत् स्मारयति निष्क्रान्त्यादेरिति। न तद्धी—न गगनानुमितिः। हेतुमाह नभसीति। कुड्यं भित्तिः। भित्तेरन्तर्गगने सत्यपि असौ निष्क्रमणादिर्न भवति यतः, अतो गगनमकारणम्। आवारकैः कुड्यादिभिर्निष्क्रमणादिक्रियानिरोध इति चेत्—तर्हि तदभाववशादेव स इति किं गगनेति भावः। तस्य सच्छिद्रत्वेति। आकाशः सच्छिद्रः स्यादित्यर्थः। सच्छिद्रत्वाभावेति पाठो न कल्यः। नहीत्यादि वाक्यतः, 'तदलिङ्गमेकद्रव्यत्वात् कर्मणः', 'कारणान्तरानुक्लृप्तिवैधर्म्याच्च' इति सूत्रद्वयार्थवर्णनम्। अस्मदीयं वैशेषिकरसायनं द्रष्टव्यम्॥ ४४॥

ननु यद्याकाशस्य क्रियाहेतुत्वं न स्यात्, आकाशोऽवकाशप्रद इति कथमुच्यते। न्यायदर्शनेऽपि (३-१) "गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकं शरीरम्" इति अवकाशप्रदत्वमुपक्षिप्तमित्यत्राह यत्त्विति। चतुर्णां भूतानां प्रतिघातकत्वादवकाशप्रदत्वं नास्ति। तदभावेऽवकाश इत्येतावानेव तदर्थः। आकाशोत्पत्तेः प्राक्, तथा आकाशं विना प्रकृतिमहदहंकारादिमात्रे यत्र, तत्र चावकाशस्य चलनादेरिष्टत्वात्। अयं श्लोकार्थः—शास्त्रतः—शास्त्रे आकाशोऽवकाशप्रद इति यत्

पृथिव्यादिचतुष्कस्येव स्पर्शवत्प्रतिघातित्वमाकाशस्य नास्ति ; तत्पूर्वेषामिवाहङ्कारादितत्त्वानाम् । अतः प्राणिसञ्चारादिप्रतिघातकत्वाभावादस्योपकारकत्वकथनमिति तात्पर्यं निपुणनिरूपणीयम् । न ह्याकाशेन देयमवकाशाख्यं द्रव्यान्तरमस्तीति भावः । आकाश एव तर्ह्यवकाशः स्यादित्यत्राह न यदीति । अस्पर्शत्वाविशेषात् महदादिप्रदेशानामप्यवकाशत्वं ग्राह्यम् । ननु स्पर्शवतां मिथःप्रतिघातकत्वनियमो नास्ति, भूमावुन्मज्जति निमज्जतीत्यादिसिद्धप्रतिपादनादित्यत्राह **सिद्धादेरिति** । अनेन जन्मौषधिमन्त्रतपस्समाधिभूतसिद्धिमतां त[त्]दुपष्टब्धानां च संग्रहः । जलदृष्टान्तेन विभज्य प्रवेशनं पुनश्शीघ्रसंभेदश्च सूच्यते । केचित्तु—सिद्धादीनां प्रभावविशेषेण भूम्यादिषु प्रवेशप्रतिघात एव नास्तीति मन्यन्ते, काचादिषु [च] नीरन्ध्रेषु नयनप्रभादेरिवेति ॥४५ ॥

> **सद्रूपेणैव भानात् न भवति वरणाभावमात्रं विहायः,**
> **संसर्गाभाव मात्रं (तस्मिन्) न च भवति, यतो नास्ति संसर्गिबोधः ।**
> **अत्यन्ताभावनाशावजनिरपि वा सत्सु तेष्वेव न स्युः**
> **तादात्म्याभावसिद्धिः कथमपि न भवेत् तंतमर्थं विहाय ॥ ४६ ॥**

---

आ०— सिद्धादेरिति [आदि?] शब्दार्थः तदुपष्टब्धानामित्यनेन दर्शितः ॥ ४५ ॥

ऌरूना— प्रतिघातित्वाभावे दृष्टान्तमाह—तत्पूर्वेषामिति । तदुपष्टब्धानामिति । वस्त्राभरणादीनामित्यर्थः। काचादिषु चेति । अत्र चकारो भिन्नक्रमः। नीरन्ध्रेष्वपीति । अपिरत्र विरोधसूचकः ॥४५

श्री—कथितेक-थनं वाक्प्रयोगः, तत्र इत्यैदम्पर्यमूह्यमित्यन्वयः। एददर्थपरत्वं तत्पर्यमित्यर्थः। तमेवार्थमाह *यऽसावित्यादिना*। स्पर्शभाजां चतुर्णां वायुतेजोजलमहीरूपाणां भूतानामन्योन्यप्रतिघातित्वमस्ति । तत् आकाशोत्पत्तेः प्राक्स्थितेषु तत्त्वेष्विवाऽऽकाशेऽपि नास्तीति । तथा च तत्राऽऽकाशपदमाकाशपर्यन्तसर्वतत्त्वपरम्। इदमेवोपपादयति नयदीति । न यदि=अन्यथा, अन्येषु प्रकृतिमहदादिमात्रेषु अवकाशः स्थितः कथं निर्वाह्य इति । ननु चतुर्णां भूतानामप्यवकाशप्रदत्वमस्ति, सिद्धो वा योगी वा भूमौ निमज्जति उन्मज्जति हीत्यत्राह सिद्धेति । यथा जले मज्जन्तो वयं जलमपसार्य तत्र प्रविशामः, तथा सिद्धादयो भूमावपि तदवयवान् अपनीयैव मज्जनादि कुर्वन्ति; स्वप्रभावात् । अतिवेगात्तुतदपनयनांशादर्शनमस्माकम्। आकाशान्तपदार्थस्थले तु एवं तत्तदंशापनयनं नास्ति, किं तु अप्रतिघातस्वभावादनपनीयैव गतिरिति विशेषः । इत्यादिसिद्धप्रतिपादनादिति । इत्युन्मज्जनादिकर्तृतया सिद्धपुरुषादेः प्रतिपादनादित्यर्थः । जन्मेति । "जन्मौषधिमन्त्रतपस्समाधिः सिद्धयः" इति योगसूत्रम् (४-१)। भूमेति जानेत्यर्थकम् । *पक्षान्तरमाह केचित्तिरिति । अणिमादिशक्तिसंपत्त्या आकाशादि*गतात्यल्परन्ध्रांशे सिद्धादिशरीरप्रवेशः काचादौ दृष्टेरिवेति प्रथमपक्षः । निरवयवे तु प्रधानादौ रन्ध्रवर्णनानुपपत्त्या अप्रतिघातपक्ष एवाऽऽदरणीयः ॥ ४५ ॥

ननु आवारकाभावमात्रादेव निष्क्रमणादिः, न चाकाशादिति प्रागुक्तमयुक्तम् । तादृशाभावातिरिक्तस्याकाशस्यैवाभावात् । यत्तु कुड्यान्तरप्याकाशोऽस्तीति, तत् स्वकल्पनामात्रम्, अन्यथा तस्य तत्रावरणप्रसङ्गापत्तेरिति वादिमतं क्षिपति सदिति । विहायः—आकाशः न आवरणाभावमात्रम्, सद्रूपेणैव, किञ्चित्प्रतियोगित्वं विनैव भानात्। भाव एवात आकाशः। *अथ आवरणाभाव*

अत्र केचित् चार्वाका सौगताश्च प्राहु —"चत्वार्येव भूतानि। आकाशस्त्वावरणाभाव एव। स च निस्स्वभाव , तुच्छतयैवोपलम्भात्। यत्र[च]आवरणम्, न तत्राकाश , अभित्त्वा दुर्दर्शत्वात्। भेदे ऽऽवरणाभावस्यैव सिद्धे । यदि (च) तत्राकाश स्यात्, निरवकाश न किंचित् स्यात्। अतो घटतद् *भावन्यायादावरणेष्वसत्त्वादयमावरणाभाव । तदिह शून्यधातुसंजिते च निस्तत्त्वेऽप्यावरणाभावे खपुष्पा* दिषु तत्तच्छब्द[ादि]वत, मिथ्याजले(लादौ?) मृगतृष्णिकादिशब्दवच्च व्यामोहैकनिबन्धना व्योमादि शब्दा । अत्र नञुपश्लेषाभावादसद्रूपतातिरस्कार । अत्र च तलत्वविपुलत्वमलिनत्वादिकमभासमन्तरेण न कथंचिदप्युपपद्यते। प्रतियोगिगताना च स्मर्यमाणाना गृह्यमाणेऽपि । ास । अपि ॥ अर्म[ च)

---

*सर्व*— सद्रूपेणेति। निरवकाश न किञ्चित् स्यादिति। आवरणेषु आकाशस्य सत्त्वे तस्यावकाशप्रदत्वात् अवकाशत्वाद्वा निरवकाश न किञ्चित् आवरण स्यादित्यर्थ ।

*भाव्रा*— प्रतियोगिगतानामिति। आवरणगतानामित्यर्थ ।

*श्री*— इति किं आवरणससर्गाभाव , तदत्यन्ताभावो वा, तद्ध्वसो वा, तत्प्रागभावो वा, तदन्योन्याभावो वेति विकल्प्य निरस्यति ससर्गति। "नास्ति घटो गेह इति घटे गेहससर्गप्रतिषेध " इत्युक्त कणादेन (९ १ १०)। उक्तञ्च न्यायकुसुमाञ्जलौ, "भूतले घटो नास्तीति, सयोगो ह्यत्र निषिध्यते" इति। ध्वसस्य प्रागभावस्य च प्रतियोगिसमवायिदेशमात्रवर्तित्वात् गेहाधिकरणकाभावोऽय न घटस्य ध्वस प्रागभावो वा। नाप्यत्यन्ताभाव , घटस्य कदाचित् गेहे भावात्। अन्योन्याभावोऽपि न, घटकालेऽपि तत्प्रतीत्यापत्ते। नापि किञ्चित्समयमात्रवर्ती सामयिकाभाव तस्य पञ्चमस्यागणनात्। अतो गेहे घटसयोगप्रतिषेध एवायम्। संयोगश्च ससर्गत्वात् ससर्गस्य ससर्गिद्वयग्रहणमन्तरेणाग्राह्यत्वात् तदुभयसहित एव गृहेत। नभ इत्यत्र आवरणाभाव इत्यत्र च तथा ससर्गिद्वयाभानाच्च ससर्गाभावो विषय। अधिकरणग्रहणे तु तस्यैवाकाशशब्दार्थता स्यादित्यर्थ। अत्यन्तेति। अत्यन्ताभावो हि त्रैकालिकोऽभाव। स कदाचित् आवरणे स्थिते तदधिकरणे कथ भवितुमर्हति। आवरणनाशरूप प्रध्वसाभाव आवरणसमवायिकारणे आवरणात् पश्चात् स्यात्। आवरणप्रागभावश्च तत्रैवाऽऽवरणोत्पत्ते प्राक् स्यात्। आवरणेषु च स्थलान्तरे उत्पद्य वर्तमानेषु तद्ध्वसप्रागभावौ न कुत्रापि सुवचौ। अजननि अनुत्पत्ति प्रागभाव। जनिशब्द उत्पत्तिवाचक माशनाचकोऽपि। नाश प्रागभावोऽत्यन्ताभावश्चावरणेषु सत्सु न स्युरिति तृतीयपादार्थ।'आवरणे उत्पद्य स्थिते, नाशप्राग भावौ न स्त। आवरणे तदधिकरणे कदाचित् स्थिते तदत्यन्ताभावश्च कदापि न स्यात्' इति तात्पर्यम्। न च तत्रैव भविष्यत आवरणस्य प्रागभाव , अतीतस्यावरणस्य ध्वसश्चावरणाभाव स्यादिति वाच्यम् तर्हि आवरणसमवायिकारण तत्रास्तीति स्वीकर्तव्यम्। आवरणसमवायिकारणानामपि आवरण व सभवात् कथ तत्र सामान्यत आवरणध्वसप्रागभावाविति। तादात्म्येति। आवरणान्योन्याभाव प्रतीतिर्नाम एकस्मिन् आवरणे आवरणान्तरतादात्म्याभावधीर्वा अनावरणे आवरणान्योन्याभाव धीर्वा। तदर्थ—प्रथमा आवरणमेकम्, द्वितीया अनावरणभूतश्चार्थ विहाय न स्यात्। तत्सत्त्वे तदेव भावात्मक नभ स्यात्। आवरणकाल एव चाऽऽवरणाभावरूप नभ इष्ट स्यादिति श्लोकार्थ ।

आवरणेषु—आवरणदेशेषु, असत्त्वात्—आकाशस्यासत्त्वात् अयमाकाश आवरणाभाव एव। तर्हि व्योमादिर्भविशब्द कथमित्यत्राह तदिहेति। तर्हि समदेशत्वरूपतलत्वादिप्रतीति कथ मित्यत्राह अत्रचेति। कथञ्चिदपीति। त्वन्मतेऽपीति यावत्। प्रतियोगिगतानामिति। यथा दीपाद्यालोके गच्छति तदभावरूपच्छाया गच्छतीति व्यवहार, तथेति भाव,।

असौ सिद्धः ; दुःखाभावे सुखाभिमानात् । आलोकाभावे च नीलत्ववह(श्व)लत्वाद्यध्यासस्य वैशेषिकादिभिरङ्गीकारात् । शशशृङ्गं **तीक्ष्ण**मित्यादिशब्दजन्याध्यासदृष्टेश्च । वदन्ति च-'शब्दज्ञानानुपाती वस्तुशून्यो विकल्प' इति 'एष वन्ध्यासुतो याति' इत्यादिषु । अतो नास्त्येव नभ इति ॥ तत्राह— **सद्रूपेणेति** । अयं भावः-सर्वं हि वस्तुजातं संविद्यवस्थाप्यम् । संविद्यते च भावरूपतयैव नभः। भावान्तरमेवाभाव इति स्थापयिष्यते । अन्यथाऽपि ब्रूमः— नाभावस्य निस्स्वभावता, अभावस्वभावतयैव तत्सिद्धेः । स्वान्यस्वभावतया सिद्धिस्तु न कस्यापि । न च स्वेन स्वभावेन सिद्धस्य परस्वभावविरहादसत्त्वम्, अतिप्रसङ्गात् । उक्तं च **न्यायभाष्ये** (१-१-१), "असच्चासदिति गृह्यमाणं य(त)थाभूतं [विद्यमानं] अविपरीतं[च]तत्त्वम्" इति। तुच्छतयैवोपलब्ध्याऽपि निरस्तं निस्स्वभावत्वम्। तुच्छता ह्यभावप्रतियोगित्वम्, अभावत्वम्, वस्त्वन्तरशून्यत्वम्, अन्यद्वा किंचित् । न प्रथमः, स्वकालादिषु सताम् अभावप्रतियोगिनां यथाप्रमाणं तत्तत्स्वभावविशिष्टत्वात् । न द्वितीयः, दत्तोत्तरत्वात् । न तृतीयः, ईदृशतुच्छत्वस्य सद्रूपाविरोधिनः सर्वत्र सुलभत्वात् । न चतुर्थः, असम्मतविरोधिनस्त्वदिष्टस्य कस्यचित् कुतश्चिदप्यसिद्धेरिति ।

यत्तु —आवरणेष्वाकाशो नास्तीति—तदसत् ; त्वदुक्तयुक्त्यैव तत्सिद्धेः । अभित्त्वा दुर्दर्शत्वं हि व्यवहितत्वात् । अत एव तत्र नास्तीति न निश्चेयम् । भित्त्वा तु प्रेक्षणे नभस्तत्र दृश्यत एव । न चात्राऽऽवरणाभावमात्रोपलम्भः ; इहावरणं नास्तीति साधिकरणस्य तस्योपलम्भात् ॥ इहाकाश इतिवत् स्वात्मन्येवभेदोपचारात् स्यादिति चेन्न ; बाधकाभावात् ॥ अधिकरणानवस्थाप्रसङ्गो बाधक इति चेन्न ; आकाशादेः साधिकरणतयैवोपलम्भ इत्यनभ्युपगमात् । इहाकाश इतिवदित्यत्र च आकाशशब्देन

---

[illegible]— सुखाभिमानादिति । बौद्धमतेनेदम् । भावत्वस्वभावाभावान्निस्स्वभावतेत्यत्राह— स्वान्येति । तुच्छतां चतुर्धा विकल्प्य दूषयति-तुच्छता हीति । वस्त्वन्तरशून्यत्वं नाम स्वस्मिन् अविद्यमानवस्तुशून्यत्वमित्यभिप्रेत्य दूषयति—ईदृशेति । कथं विशेषणराहित्यमित्यत्राह आवरण-

[illegible]— असौ—अभावे भावधर्माध्यासः । अस्तीत्यत्र असतीति पाठे अभावे इति तदर्थः । आलोकाभाव इति । तमसीत्यर्थः । शशशृंगं तीक्ष्णमिति । शशशृंगं स्थूलाग्रं न भवतीति वक्तव्ये श्लिष्टप्रयोगोऽयम् । यातीत्यादिष्विति । 'एष वन्ध्यासुतो याति शशशृंगधनुर्धरः मृगतृष्णाम्भसि स्नातः खपुष्पकृतशेखरः' इत्यादिषु शब्दज्ञानानुपाती विकल्प इति वदन्तीत्यन्वयः। 'शब्दज्ञानानुपाती वस्तुशून्य' इत्यस्य शशशृंगमिति शब्दज्ञानानन्तरं शशशब्दे शशजन्तुत्वस्य शृंगशब्दे शृंगत्वस्य तच्छब्दद्वयसंबन्धे पौर्वापर्यं अर्थभूतसंबन्धत्वस्य चाऽऽरोपः । अतः शशीयशृंगरूपवस्त्वविषयकत्वमित्यर्थो युक्तः । अन्यथापि-तार्किकादीष्टे भावातिरिक्त एवाभाव इति पक्षेऽपि । अभावप्रतियोगित्वमिति । असदित्यस्य अविद्यमानमित्यर्थे एतदर्थसिद्धिः। सतोऽभावः असदित्युक्तौ द्वितीयार्थः । न विद्यते सत् यत्रेति विग्रहे भावरूपधर्मशून्यत्वमिति तृतीयार्थः । स्वभिन्नवस्तुमात्रवृत्तिधर्मशून्यत्वमिति यावत् । नञो भेदार्थकत्वे अन्यद्वा किञ्चिदिति । तदा सत्त्वं नाम किमिति विचार्य दूषणं वक्तव्यम् ।

त्वदुक्तयुक्त्यैव अत्राऽऽवरणमस्तीति प्रतीतिरूपयुक्त्यैव । अत्र—भेदनदशायाम् । स्वात्मनि— स्वस्मिन् । बाधकाभावादिति । क्लिष्टनिर्वाहः क्वचिदिष्ट इति सर्वत्र स न युक्तः। किञ्चाऽऽकाशस्याप्यधिकरणं प्रकृत्यादिकमपि कदाचित् तत्र विवक्ष्येत । निराधारं वस्तु गृहीत्वा तद्दिष्टेति प्रयोगे तु इह जगति

आवरणाभावविवक्षायां पक्षदृष्टान्तभेदाभावः ; त्वदनभ्युपगतस्य परमतसिद्धस्य त्वया दृष्टान्तीकर्तुमयुक्तत्वात् ॥ प्रतिबन्दिग्रहणमात्रमिदमिति चेन्न ; इह = मूर्ते वस्तुनि आकाशसंबन्ध इति प्रतीतौ विरोधाभावात् ॥ आवरणाभावधीरपि तथैव स्यादिति चेत्, अस्त्वेवम् ; तथाऽपि कदाचित् इह तारकेत्यादिवत् निरधिकरणतया गगनो(णत्ववद्गगनो)पलम्भे तदतिरिक्तनभस्सिद्धिनिषेधः ।

आवरणेषु निरवकाशत्वं च विशेषणराहित्यात् । आवरणरहितमेव ह्याकाशमन्यद्वा किंचित् अवकाशः ; न त्वाकाशमात्रम् ॥ आवरणेष्वविद्यमानतया तदभाव आकाश इति चायुक्तम् ; सर्वेषां स्वस्मिन्नविद्यमानतया स्वाभावत्वप्रसङ्गात् । यत्तु व्योमादिशब्दा व्यामोहैकनिबन्धना इति—तदसत् ; प्रमाणसिद्धे कचिद्वस्तुन्येव सर्वशब्दानां व्युत्पत्तेः, तद्विषयतयैव च व्यवहारात् ; खपुष्पादिषु तु अयोग्यसमभिव्याहारादन्यथाधीः। मृगतृष्णादिशब्दा अपि जलाध्यासाधिकरणा(णत्वा?)र्हमरीचिव्यूहादिविषयाः। यद्यपि तलत्वादिकमाकाशेऽध्यस्तम् ; अल्पत्वविपुलत्वादिकं स्वावच्छेदकभेदायत्तम्—तथाऽपि सत्येवारोपः ।

---

ग्रु०— आवरणाभावधीरपि तथैव स्यादिति । इह मूर्ते वस्तुनि आवरणाभाव इत्येवंरूपैवेत्यर्थः । अतो नैतद्धीवलादतिरिक्तनभस्सिद्धिनिषेद्धुं शक्यत इत्याह—अस्त्वेवमिति । अत्र कचित् इह तारकेत्यादिवन्निरधिकरणत्ववद्गगनोपलम्भ इति पाठो दृश्यते ; स न युक्तः ; इह तारकेति धियो निरधिकरणप्रतीतिदृष्टान्तत्वायोगात् । अतः 'इयं तारका' इति पाठो लेखकप्रमादादन्यथाभूत इति प्रतिभाति । यथास्थिते त्वयमर्थः—इह तारकेत्यादिवत् इति आदिशब्देन इयं तारकेति धीः संगृह्यते । ततश्च तारका यथा कदाचित् साधिकरणतया, कदाचित् निरधिकरणतया गृह्यते—एवमावरणाभावो यदि कदाचित् अयमावरणाभाव इति निरधिकरणतया गृह्येत—तदा तदतिरिक्तनभस्सिद्धिनिषेधः कर्तुं शक्यते ; तत्तु नास्ति । अभावस्याधिकरणेन विना प्रतीत्ययोगादिति ।

Cलला— रहितमिति । अन्यद्वेति । आवरणरहितस्पर्शरहितवस्त्वादिकं वेत्यर्थः। आवरणेषु आवरणावच्छिन्नप्रदेशेषु इत्यर्थः । स्वस्मिन्—स्वावच्छिन्नप्रदेश इत्यर्थः । अयोग्यसमभिव्याहारात्—

श्री— ग्रहेत्यत्रैवाऽऽधाराधेयभावं विना संबन्धमात्रं सप्तम्यर्थः। भेदाभाव इति । इहाकाश इति यथा आवारणाभावातिरिक्तमेव इहेति गृह्णाति, आधाराधेययोर्भेदावश्यम्भावात्, तथा इह श्येन इत्यपि आवरणाभावातिरिक्तमेव गृह्णात्वित्यर्थः । त्वदनभ्युपगतस्येति । आकाशपदार्थं तुच्छं ब्रुवता इहाकाश इति कथं प्रदर्शनमिति भावः। प्रतिबन्दीति । प्रतितर्कप्रयोगे स्वमते वस्तुसंमतिर्नापेक्षिता । अतः इहावरणाभाव इत्यत्र यदि इहेति आवरणाभावातिरिक्तपरम्, इहाकाश इति त्वद्वाक्यमपि आकाशातिरिक्तपरं स्यादित्यापादनमिति भावः। इष्टापत्तिरिति समाधत्ते इह मूर्ते इति । इह तारकेतिवदिति । तारकां प्रति आकाशादेरधिकरणत्वायोगात् इहशब्दो नाधिकरणसमर्पकः ; तथा इह गगनमित्यपि । तथापि गगनमिति पदेनैव गगनस्य प्रतीतत्वात् तदतिरिक्तनभो मा भूत्। तद्रूपं नभस्त्वस्तीति भावः ।

अथ 'यदि तत्राऽऽकाशः स्यात्, निरवकाशं न किञ्चित् स्यात्' इत्युक्तं निरस्यति आवरणेष्विति । आवरणदेशेष्वित्यर्थः । अवकाशो नाम निरावरणवस्तु । तत्र वस्तुसत्त्वेऽपि निरावरणत्वाभावात् अवकाशाभाव एवेत्यर्थः । अयोग्येति । खस्य पुष्पस्य च मिथोऽनन्वय एवायोग्यता । खपुष्पवैलक्षण्यं मृगतृष्णायां दर्शयति मृगेति । अत्राधिष्ठानं वस्तु किञ्चिदस्तीति भावः।

यत्तु—असति दुःखाभावे सुखाध्यासो दृष्ट इति ; तत् अर्भकवाक्यम् ; सत्येव दुःखाभावे सुखारोपात्। अभावस्य भावान्यत्वमात्रमेव ह्यसत्त्वं सिद्धम् ; तेन च स्वरूपसन्नेवासौ। आलोकाभावे नीलत्वाध्यासस्तु अस्मान् प्रति नोदाहर्तव्यः। अत एवाध्यस्तनैल्यमालोकाभावमात्रमेव नीलं नभ इति भातीति निरस्तम् ; आलोकदेशे च नभ प्रतीत्यनुवृत्तेः।

नन्वसदिष्टक्षणिकत्वादिकं क्वचित् ते सिद्धमसिद्धं वा ? उभयथाऽपि कथं तत्प्रतिक्षेपः ? कथं वा तस्मिन् केषांचित् सत्यताभ्रम निर्वक्ष्यसि ॥ इत्थम्—एतदुत्तरक्षणवृत्तित्वाभावो हि यत्र क्वचिदन्यत्र सिद्धः। स सर्वस्मिन् कुतश्चिदारोप्यते प्रतिक्षिप्यते चेति सुस्थमेतत्। एवमन्यत् सर्वमपि चिन्त्यम्. शशशृङ्गं तीक्ष्णमित्यादिषु च प्रमिते शशादौ शृङ्गवत्त्वारोपः, शृङ्गादौ च प्रमिते सत्या असत्या वा तीक्ष्णधीः इत्येतावत् सहृदयहृदयारूढम् ; नात्रासति किंचिदारोप्यते। एवमनभ्युपगमे वर्णक्रमनिर्देशवत् स्यात्। एतेन शशस्तीक्ष्णशृङ्गवानित्यपि निरूढम् ॥ भूतेषु भाविषु च कथं भ्रम इति चेत्, कथं वर्तमानेषु ? ॥ तेषां सत्त्वादिति चेन्न ; स्वकालसत्त्वस्य कालान्तरासत्त्वस्य च साधारणत्वात् इति।

आवरणाभावश्च सत्योऽसत्यो वा संसर्गाभावादिविभागं नातिक्रामेदिति मत्वा तत्रतत्र दूषणमाह—**संसर्गेत्यादिना** पद्यशेषेण। संसर्गाभावस्तावन्निरूप्यमाणः संसर्गिनिरूप्यसंसर्गप्रतियोगितया अधिकरणप्रतियोगिभूतसंसर्गिबोधाभावे कथं बुध्येत ? अत्यन्ताभावोऽपि संसर्गाभावभेद एव। यथा

---

श्रु— अस्मान् प्रति नोदाहर्तव्य इति।.तमस आलोकाभावत्वानङ्गीकारादिति भावः। क्षणिकत्वस्य क्वचित् सिद्ध्यसिद्ध्योर्निषेधायोगात्......असति धर्मारोपः सिद्ध इति शङ्कते—नन्वसदिति। [illegible]— अनन्वितयोः समभिव्याहारादित्यर्थः। तलत्वादिकमिति। समप्रदेशत्वादिकमित्यर्थः। असत्त्वं सिद्धम्—न शशशृङ्गादिवत् तुच्छमित्यर्थः। असत्यधिष्ठाने आरोपमाकारान्तरेण शङ्कते—नन्विति। पूर्वमन्यथाख्यातिपक्षमवलम्ब्योक्तम् सुखारोपादिति। अयमभ्युपगम्यवादः। यद्वा, यत्र दुःखाभावमात्रस्थले सुख्यामीति व्यवहारः, तत्रेदं बोध्यम्। इदानीम्, 'सर्वं ज्ञानं यथार्थम्' इति पक्षमवलम्ब्याह-एवमिति। एवमनभ्युपगमे-अन्यथाख्यात्यनभ्युपगमे। वर्णक्रमनिर्देशवत् स्यादिति। वर्णज्ञानसन्ताननिष्ठस्य, वर्णोत्पत्तिक्षणसन्ताननिष्ठस्य वा क्रमस्य वर्णसंसर्गा ... .. ... ... ... .....प्रतियोगिनौ तत्स्वरूपौ अधिकरणप्रतियोगिभूतौ। तौ च तौ संसर्गिणौ चेत्यर्थः।

[illegible]— सत्येव—भावपदार्थ एव। सत्येव दुःखाभाव इति। प्रामाणिकत्वरूपसत्त्वमभावेऽप्यक्षतमिति भावः। असत्प्रतियोगिकनिषेधोऽपि त्वया स्वीकार्य इति शंकते नन्विति। यत्र क्वचित्-विनश्यदवस्थे वस्तुनि। सर्वस्मिन्-उत्तरक्षणस्थायिन्यपि। अन्यत् सर्वमपीति। अनिर्वचनीयं नास्ति, निर्विशेषं नास्तीत्यादिकमपीत्यर्थः। यत्रयत्र वस्तुत्वं तत्रतत्र सद्भेदासद्भेदोभयाभावः, तत्रतत्र तत्तद्विशेषाभावकूटाभाव इत्येवंरीत्याऽर्थवर्णनमिति भावः। नात्रासतीति। शशवर्तिनि शृंगाभावे शृंगत्वारोपः, तद्गते स्थूलाग्रत्वाभावे तीक्ष्णत्वारोप इत्युक्तावपि सत्येवाऽऽरोपः ; अभावस्यापि प्रामाणिकत्वरूपसत्त्ववत्त्वात्। वर्णक्रमनिर्देशवत्—जवगडदशादिप्रयोगवत्।

द्वितीयादिपादव्याख्यानमारभते आवरणेति। संसर्गाभावभेद एवेति। 'नास्ति घटो गेहे' इत्यत्र घटात्यन्ताभावायोगात् घटसंसर्गाभाव इत्युक्तम्। संसर्गश्च तत्र संयोगः, तस्याभावश्च तत्प्रागभावो वा ध्वंसो वेति काणादसरणिः। तदा अत्यन्ताभावस्य संसर्गाभावता न स्यात्। अथापि संबन्धिद्वयसापेक्षसंबन्धप्रसक्तिस्थल एव ध्वंसप्रागभावात्यन्ताभावप्रतीत्या, साम्यात्,

अश्वे गोत्वस्य, शशे वा शृङ्गस्य । तथाच अत्राऽऽवरणं नास्तीति साधिकरणभूताभावधीरपरिहार्या । खपुष्पवत् आवरणानामत्यन्तासत्त्वे तु शून्यवादः शरणम् । वर्तमानेषु चाऽऽवरणेषु तत्प्रध्वंसप्रागभावौ दुर्वचौ । तौ हि किमन्यत्र विद्यमानानाम्, उताविद्यमानानाम्? नाद्यः, तेषां तदुभयायोगात् । न द्वितीयः, तत एव । न हि शशे शृङ्गस्य नाशप्रागभावौ । तदिह सर्वावरणनाशादिकं दुर्वचम्; असंभवात् । कतिपयावरणनाशादिकं चऽऽऽवरणदेशेऽप्यस्तीति तत्रापि निष्क्रमणादिप्रसङ्गः ॥ ननु संसर्गे तु विधिरेकेनापि; तन्निषेधस्तु सर्वप्रतियोगिकः । तद्वदत्रापि सर्वावरणाभावे व्योमधीः स्यात् ॥ न; असंभवस्योक्तत्वात् । एवं सति च संसर्गाभाव एव नामान्तरेणोच्यते; तत्र च दत्तमेवोत्तरम् ॥ अस्तु तर्ह्यावरणतादात्म्याभावः । असौ स्यात् । स ह्यसिद्धप्रतियोगिकतया स्वयमप्यसिद्धः । तदात्मनश्चाकाशस्य तुच्छत्वं युक्तमिति—तत्राह—तादात्म्येति । चो दूष्यसमुच्चये; श्रुत्यादिविरोधरूपदूषणसमुच्चये वा । असिद्धप्रतियोगिकत्वमस्य क्वचिदपि तादात्म्यपदार्थाभावाद्वा? आवरणद्वयस्य तदभावाद्वा? नाद्यः, अभावप्रतियोगित्वेन तत्कल्पनस्यासिद्धिप्रसङ्गात् । न हि क्वचित्सिद्धिमनपेक्ष्य कस्य चिदपि कल्पना; माध्यमिकमतोत्थानप्रसङ्गात । नोत्तरः, संसर्गाभावस्याप्यसिद्धप्रतियोगिकत्वापातात् । न ह्येतत्कालीनैतद्भूतलघटसंसर्गो निषिध्यमानः इहान्यत्र च सिद्धः ॥ घटसंसर्गमात्रं यत्र क्वचित् सिद्धमिति चेत्—घटतादात्म्यमपि तथैव ॥ अस्तु तर्ह्युभयत्राप्यसिद्धप्रतियोगिकत्वम्; किं नश्छिन्नमिति चेन्न; अतिप्रसङ्गस्योक्तत्वात् । अत्यन्ताभावोऽप्यसिद्धप्रतियोगिक इति पक्षश्च निरस्तः ।

श्लो— तत्रतत्र स्वतादात्म्यं सिद्धमन्यत्र कल्प्यते । बाधकैः क्षिप्यते चेति नास्माकमिह विप्लवः ॥

---

ஆனந— श्लोके—अजननिः प्रागभावः । तेषु अत्यन्ताभावेष्वित्यर्थः । अपरिहार्येति । अधिकरणनिष्ठतया प्रतीयमानत्वात् अभावस्य तुच्छत्वं वक्तुं न शक्यत इति भावः । तथापि तुच्छप्रतियोगिकत्वात् यदि अभावस्तुच्छः, तदात्मकमाकाशमपि तुच्छमित्यत्राह—खपुष्पवदित्यादीति । आवरणस्य सत्यत्वाङ्गीकारे तदभावस्य तुच्छत्वं सम्भवतीत्यत्राह वर्तमानेष्विति । दुर्वचत्वे हेतुः वर्तमानेष्विति । तर्हि अवर्तमानस्य अभाव आकाशोऽस्त्वित्यत्राह तौ हीति । विधिः—अस्तीति प्रत्ययः । उक्तत्वादिति । संसर्गाभावता इत्यादिनेति भावः । एवं सतीति । सर्वप्रतियोगिकनिषेधाङ्गीकार इत्यर्थः । असिद्धप्रतियोगिकतयेति । घटःपटो नेत्याद्यन्योन्याभावप्रतीतिस्थले घटादौ पटतादात्म्यस्य असिद्धत्वादिति भावः । आवरणान्योन्याभाव आकाश इति पक्षे दूषणान्तरमाह

श्री— तादात्म्यसंबन्धानवच्छिन्नप्रतियोगिताकाभावसामान्यं संसर्गाभाव इति नवीननिष्कृष्टम् । तद्रीत्या अत्यन्ताभावस्य संसर्गाभावभेदत्वं ग्राह्यम् । अथवा अत्रेदं नास्तीत्यधिकरणसापेक्षोऽभावः संसर्गाभावः । इदमिदं नेत्यन्योन्याभावस्तु व्यधिकरणविभक्त्ययभावात् तद्विलक्षणः । विधिः—अस्तीति भावप्रतीतिः तादात्म्यस्थले एकेनैव । एकत्रानेकतादात्म्याभावात् । संसर्गे तु विधिरेकेनापि; यथायथमेकानेकसंसर्गसत्त्वादित्यर्थः । असंभवस्येति । नहि सर्वावरणध्वंसः, सर्वावरणप्रागभावः अत्यन्ताभावो वा क्वचिदपि सुवच इति भावः । सिद्धिदचेत्यन्वये व्यवहितान्वयरूपदोषात् अन्यथाऽऽह दूषणसमुच्चये वेति । अतिप्रसंगस्येति । शशशृंगाभावो नास्तीत्यादपि स्यादित्यूह्यम् । निरस्त इति । प्रतियोग्यप्रसिद्धौ अभावाप्रसिद्धिरेव । तस्मात् घटःपटो नेत्यत्र घटपटतादात्म्यं न

सर्वत्र तादात्म्याभावः तत्तद्वस्तुनिष्ठतयैव सिध्येत्; न तु तन्मध्यादिदेशतया। यथा मिथस्संयुक्ते वियुक्ते वा सिंहे गजान्यत्वं गजे च सिंहान्यत्वमिति। इदमावरणं न भवतीति तादात्म्यनिषेधश्च कस्यचिदावरणस्य वा अनावरणस्य वा। आद्ये, विरोधः॥ आवरणान्तरं न भवतीति विवक्षायामविरोध इति चेत्; सत्यम्, तथाऽपि न तत्राकाशप्रतीतिविषयावरणाभावसिद्धिः। द्वितीये त्वावरणान्यद्रव्यम् इदङ्कारास्पदं सिध्यत्येव॥ नन्वावरणाभाव एवेदंकारगृहीतः आवरणतादात्म्याभावाधिकरणतया बुध्यताम्, न हि तत्तदभावयोस्तादात्म्यमिति॥ मैवम्; न ह्यावरणतादात्म्याभावस्यावरणान्यत्वं बुद्ध्वा कश्चित् तत्र नभःपर्यायान् प्रयुङ्क्ते, निष्क्रमणादौ वा प्रयतत इत्यलमतिविस्तरेण। "आकाशे चाविशेषात्" इति सूत्रभाष्ये चैतत् सर्वमनुसन्धेयमिति॥ ४६॥ इत्याकाशस्यावरणाभावमात्रत्वभङ्गः॥

नित्यत्वाद्यम्बरादेर्यदि निरवयवद्रव्यताद्यैः प्रसाध्यम्,
कः स्यात् बाधो विपक्षे, कथमिव निगमे बाधकेऽत्रानुमा स्यात्।
बाधः सामान्यदृष्ट्या श्रुतिसमधिगते नैव कुत्रापि शक्य-
स्तेनामूर्तत्वलिङ्गान्न सृजति विमतो मूर्तमित्याद्यपास्तम्॥ ४७॥

---

ଲ୍ଲବ୍ଧା— सर्वत्रेति। नन्विति। तथाच इह प्रदेशे आवरणं नास्तीति प्रतीतेः अन्योन्याभावविषयत्वं वक्तुं न शक्यत इति भावः। "सिंहे गजे च" इत्यनेन तदेकदेशनिष्ठतया अन्यत्वप्रतीतिर्नास्तीति द्योत्यते। तत्तदभावयोरिति। तस्य, तदभावस्य चेत्यर्थः॥ ४६॥

ଶୀ— प्रतियोगि अप्रसिद्धत्वात्—किं तु पटतादात्म्यमात्रम्। तत् पटे प्रसिद्धं घटे निषिध्यते। एवमन्याभावेऽपि। अस्तु तादृशतादात्म्याभाव एवाऽऽकाश इत्यत्राह सर्वत्रेति। भेदः तत्तद्वस्त्वनुयोगिकः, न तु किञ्चिद्देशानुयोगिक इति भावः। मिथस्संयुक्ते इति कथनं तादात्म्याभावे संसर्गाभाववैलक्षण्यज्ञापनार्थम्। एवमाधारावश्यकत्वमुक्त्वा, स आधारः आवरणभूतो वाऽन्यो वेति विकल्प्याह इदमिति। विरोधः। आवरणे कथं तत्तादात्म्याभाव इति। आकाशप्रतीतिविषयेति। आवरणसामान्याभाव एवाऽऽकाशप्रतीतेरिति भावः। द्वितीये—अनावरणे आवरणतादात्म्याभावस्य विषयत्वे। नहीत्यादि। श्येनादिगत्यप्रतिबन्धकदेशस्यैव प्रतीतिरिति भावः॥ ४६॥

नित्यत्वादीति। आदिशब्देन विभुत्वग्रहणम्। द्रव्यं नवधा विभज्य पृथिव्यप्तेजोवाय्वतिरिक्तानामाकाशादीनां पञ्चानां नित्यत्वं तत्र मनोव्यतिरिक्तानां चतुर्णां विभुत्वञ्च तार्किकैर्वर्णितम्। मनसस्तु अणुत्वम्। भाट्टैस्तु मनोऽपि विभु मतम्। सांख्या अम्बरमनित्यमविभु च वदन्तोऽपि तत्कारणं प्रकृतिं विभ्वीमाहुः। शास्त्रेण प्रकृतेर्नित्यविभूतिपरिच्छिन्नत्वावगमात् अविभुत्वमेव स्वीकर्तव्यम्। नित्यत्वं तु तस्या अस्माकमपीष्टमेव। तदत्र तत्रतत्र तत्तदङ्गीकृतशास्त्रविरुद्धाकारासिद्धिरुच्यते। श्लोके साध्यासंभवमात्रकथनेऽपि व्याख्यादर्शितरीत्या हेत्वसिद्धिरपि यथायथं भाव्या। अम्बरादेरित्यादिपदेन मनसो ग्रहणम्। पूर्वमिन्द्रियप्रस्तावे मनोविषये यत्कथ्यमुक्तमेव चित्ताणुत्वे इत्यादिना। अत्र तदनुवादमात्रम्। एवं मूलप्रकृतिविषयेऽपि। आकाश एव प्रश्नः। साधकहेतून् आह निरवयवेति। निरवयवद्रव्यत्वादिति, सर्वदा स्पर्शरहितद्रव्यत्वादिति च आकाशमनःप्रभृतिसाधारणम्। सर्वदा निस्स्पन्दत्वे सति क्रियात्वादिति हेतुर्न मनसि। तत्र स्पन्दस्य क्रियाया इष्टत्वात्। निरवयवत्वे सति इन्द्रियग्राह्यगुणवत्त्वादिति हेतुश्च न मनसि, तत्रेन्द्रियग्राह्यगुणाभावात्। नानासमवायिकारणसंयोगाश्रयत्वादिति हेतुर्मनसि,

सोऽयमाकाशः सर्वव्यापी नित्यश्चेति **वैशेषिकादयः** । **जैनास्तु** तत्र लोकाकाशः अलोकाकाशश्चेति विभागमप्याहुः । मूलप्रकृतिर्विभ्वीति **सांख्याः** । मनो विभ्विति **भाट्टाः** । तेषां पक्षं सहेतुकमनुभाषते **नित्यत्वादीति** ॥ नित्यत्वं व्यापित्वं च पृथक्साध्यम् । प्रत्येकं तयोरेते हेतवः—विगीतं नित्यं विभु च निरवयवत्वे सति महत्त्वात्, सर्वदा निष्पन्दत्वे सति महत्त्वात्, सर्वदा स्पर्शरहितद्रव्यत्वात् इत्यादयः । निरवयवेन्द्रियग्राह्यगुणत्वादित्याकाशस्यैव । ज्ञानासमवायिसंयोगाधारत्वात् इति मनस एव । एतेषां साधारणमप्रयोजकत्वमभिप्रेत्याह **कास्यादिति** । न ह्येतेषामनित्यत्वादौ किञ्चिदनिष्टं स्यात्; स्वाच्छन्द्येनानिष्टकल्पने विपरीतकल्पनस्यापि शक्यत्वात् । अक्षोभ्यं दूषणान्तरमाह —**कथमि-**

---

ஸேவா— निरवयवत्वे सतीति । रूपादौ घटादौ च व्यभिचारवारणाय पदद्वयम् । सर्वदेति । प्रथमक्षणे निष्पन्ने घटादौ व्यभिचारादाह—सर्वदेति । रूपादौ व्यभिचारादाह—महत्त्वादिति । ज्ञानासमवायीति । शरीरतदवयवान्यत्वे सतीति विशेषणीयम् । अन्यथा तत्र व्यभिचारः स्यात् । स्वाच्छन्द्येनेति । हेत्वभावप्रसङ्गाद्यनिष्टापादने आकाशस्य विभुत्वे नित्यत्वे च भूतत्वं न स्यात् । बाह्येन्द्रियग्राह्यगुणवत्त्वं न स्यात्, मनसो नित्यत्वे विभुत्वे च ज्ञानादिग्राहकत्वं न स्यात् । दीर्घशष्कुलीभक्षणे रूपादिज्ञानक्रमो न स्यात् इति विपरीतकल्पनं स्यादिति भावः । ज्ञानमनित्यं जीवविशेषगुणत्वात्, इच्छादिवदिति अनित्यत्वं साध्यत इत्याशङ्क्याह-द्रव्यत्वादेरिति । व्यभिचारिजीव-

ஸ்ரீ– न त्वाकाशे । ज्ञानासमवायिकारणसंयोगः आत्ममनस्संयोगः तदाधारस्याऽऽत्मनो यथा नित्यत्वं तथा मनसोऽपीति नित्यत्वसाधनं तेन । भाट्टमते तु विभुत्वसाधनमपि तेन । एषु हेतुषु निरवयवत्वांशोऽसिद्धः पञ्चीकरणादिना आकाशादेः सावयवत्वश्रुतेः । अस्मन्मते आत्ममनस्संयोगस्य ज्ञानकारणत्वानंगीकारात् तद्धेत्वसिद्धिश्च । सर्वसाधारणं दोषं परं श्लोके आह क इति । हेतुरस्तु साध्यं मास्तु इत्यप्रयोजकत्वशंकायां विपक्षे बाधकं किञ्चिदुपन्यसनीयम् । किं तदित्यर्थः । अतो विपक्षे बाधकाभावात् हेतुर्दुष्टः । नित्यत्वं विभुत्वञ्च मास्तु इत्याक्षेपमात्रं कृतमिति न मन्तव्यम्, तदभाव एव श्रुतिसिद्ध इत्यप्याह कथमिवेति । निगमे बाधके सति अत्र विषये कथमनुमानमिति । तेन हेतोरप्रयोजकतया व्याप्यत्वासिद्धिवत् बाधितत्वमप्युक्तं भवति । ननु श्रुत्याऽनुमानबाधो भवतोच्यते, अनुमानेन श्रुतिबाध एव किं न स्यात् । अंगीकृतो हि प्रत्यक्षेण श्रुतिबाधः । अत एव आदित्यो यूप इत्यादौ वाच्यार्थं विहाय लक्षणेष्यते । अत एवाऽऽकाशो वायूपादानमिति श्रौतार्थस्तार्किकैर्नेष्यते । अस्पर्शद्रव्यात् सस्पर्शोत्पत्त्ययोगात् । कारणगतो हि गुणः कार्येऽपि भवति—इत्यत्राह बाध इति । श्रुतिसमधिगतार्थविषये बाधः विशेषदृष्ट्या प्रत्यक्षेण भवेत् । समान्यतोदृष्ट्या तु न भवति । नित्यत्वसाहचर्यं हि निरवयवद्रव्यत्वस्यात्मनि दृष्टम्, न त्वाकाशे । किंतु तत्सामान्येनात्राप्यस्त्वित्यूहमात्रम्, तत् साक्षात् आकाशस्यानित्यत्वे प्रमाणेन स्पष्टावगमिते न कर्तुं शक्यते; यथा अग्निरनुष्णः कृतकत्वादिति अनुष्णत्वानुमानं प्रत्यक्षेण विशिष्योष्णत्वग्रहणान्न शक्यम् । एवञ्च वायूपादानत्वनिषेधोऽपि न युक्त इत्याह तेनेति । तेन—सामान्यतो दृष्टस्याकार्यकरत्वेन अपास्तमित्यन्वयः किमित्यत्राह अमूर्तत्वेति । विमतः उपादानमनुपादानं वेति विवादग्रस्त आकाशः मूर्तं स्पर्शवन्तं वायुं न सृजति, न तदुपादानम् अमूर्तत्वादित्यनुमानमपास्तमित्यर्थः । सृजतीत्यस्य उपादत्ते उपादानमिति पर्यवसितार्थः, परं ब्रह्म आकाशशरीरकतया वायुं सृजतीत्यपि न; शरीरभूतस्याकाशस्यास्पर्शत्वादित्यपि पूर्वपक्षं दर्शयितुं सृजतीति प्रयोगः । शिष्टं स्पष्टम् ॥ ४७ ॥

वेति । येष्वनित्यत्वम् अविभुत्वं च सृष्ट्यादिवाक्यै(वादै)स्तत्त्वान्तरावृतत्वादिवाक्यैश्च सिद्धम्, तेषु तद्विरुद्धसाधनमागमबाधितमित्यर्थः। उक्तेषु च हेतुषु निरवयवत्वादिकं पञ्चीकरणवादिशास्त्रविरुद्धम्। सर्वदा स्पर्शरहितद्रव्यत्वादिति विभुत्वसाधने अणुत्वेन श्रुतिसिद्धैर्जीवैरनैकान्त्यम्। ज्ञानासमवायिसंयोगाधारत्वम् आत्ममनसोरसिद्धं च। ज्ञानद्रव्य(नित्य)त्वादेर्वक्ष्यमाणत्वात्। ज्ञानावस्थानां चात्ममनस्संयोगासमवायिकारणकत्वाभावात्। किंचात्र नित्यत्वसाधनमाकाशादिद्रव्यपक्षीकारेण वा आकाशत्वाद्यवस्थापक्षीकारेण वा। आद्ये सिद्धसाध्यता; द्वितीये तु स्वानभ्युपगतपक्षीकारो न युक्तः। श्रुत्यैव तदङ्गीकारे, तयैव बाधः। अनुमानेन श्रुतिबाधे तु, हेतुकप्रलापैः श्रुतिप्रमाणस्य निश्शेषोच्छेदप्रसङ्गमभिप्रेत्याह बाध इति। प्रत्यक्षविरोधरहितानन्यपरश्रुत्या यथावदधिगतेऽर्थे येन केनचित् सामान्यतोदृष्टेन बाधशङ्कायाम्, श्रौतहिंसा न धर्मः हिंसात्वात् संमतवत्, विगीतमस्थि पवित्रम् अस्थित्वात् शङ्खवत् इत्यादेरपि प्रसङ्गः स्यादिति भावः। उक्तं दूषणं प्रस्तुते पक्षे साध्यान्तरविषयहेत्वन्तरेष्वपि दर्शयति तेनेति। आकाशो न स्पर्शवदुपादानम् स्पर्शशून्यत्वात्। एवं वाय्वादिकमपि न तेजःप्रभृत्युपादानं रूपशून्यत्वात् रसशून्यत्वात् इत्यनुमानजातं श्रुत्यादिविरोधादपास्तमित्यर्थः॥ ४७॥ इत्याकाशादेरनित्यत्वाव्यापित्वादि॥

अथ दिशस्तत्त्वान्तरत्वाभावः

प्राक्प्रत्यक्त्वादिभेदं भजतु वियदिदं भानुयोगादिभेदात्
अस्यैवोपाधिभेदादधिकदिश इव स्तां परत्वापरत्वे।
व्योमोत्तीर्णेऽपि देशे प्रभवतु तदुपाध्यन्वितैस्तत्तदर्थैः
दूरत्वादिव्यवस्था स्वयमुत विभुना ब्रह्मणा किं परैर्नः॥ ४८॥

---

[illegible]— धर्मत्वेन ज्ञानस्यानित्यत्वादिः साध्यत इत्याशङ्क्य विषयप्रकाशनवेलायामेव प्रकाशाव्यभिचारित्वमित्याद्यभिप्रायेण आदिशब्दः प्रयुक्तः। पद्यस्थादिशब्दार्थमाह—आकाश इत्यादि॥४७॥

[illegible]— आकाशकालदिगात्मनां नित्यत्वविभुत्वे मनसो नित्यत्वमात्रञ्च तार्किकोक्तम्। यथायथं तद्धर्मनिरासः कृतः। दिग्रूपधर्म्येव न स्वीकर्तव्यमिति वक्ति प्रागिति। "इत इदमिति यतस्तत् दिश्यं लिंगम्" (2.2.20) इति सूत्रेण दिक्साधनं कृतं कणादेन। इत इदं प्राक्, इत इदं दक्षिणमित्यादिः व्यवहारः दिग्घटनेनैवोपपादनीयः। स व्यवहारो यस्मात् प्रत्ययात् प्राक्त्वादिविषयकात्, स प्रत्यय एव दिक्साधक इति सूत्रार्थः। प्राक्त्वं च सूर्योदयगिरिसंयुक्तसंयोगपरम्पराविशेषवत्त्वम्। संयुक्तसंयोगपरम्परा नाम संप्रति प्राक्त्वेन व्यवह्रियमाणस्येदम्पदार्थस्य उदयगिरेश्च मध्ये यावन्ति द्रव्याणि पङ्क्तिरूपेण निविष्टानि, तावद्वस्तुमिथस्संयोगकूटम्। तस्य कूटस्य इदम्पदार्थेऽस्मिन् साक्षादसंभवात् तावत्संयोगावच्छिन्नदिक्प्रदेशसंयुक्तत्वमेव वक्तव्यम्। एवञ्च दिक् तस्य संयोगकूटस्य प्रकृतेदम्पदार्थे उपनायिका भवतीति तदुपनायकतया दिक्सिद्धिरिति तद्भावः। एवं प्राग्दिगभिमुखपुरुषदक्षिणपार्श्वसंयुक्तसंयोगपरम्परावत्त्वं दक्षिणत्वम्, वामपार्श्वसंयुक्तसंयोगपरम्परावत्त्वमुत्तरत्वम्, अस्ताद्रिसंयुक्तसंयोगपरम्पराविशेषवत्त्वं प्रत्यक्त्वमित्यादि भाव्यम्। सर्वत्र संयोगकूटस्य प्रकृतवस्तुनि दिग्घटितपरम्परासंबन्धेनोपनयनात् दिश आवश्यकता। अत्र प्रत्याह प्रागिति। भानुयोगादिभेदात्–सूर्योदयाद्युपाधिना तद्विभागात् प्राक्प्रत्यक्त्वादिभेदवत्त्वं वियदेव

अथ पराभिमता विश्वव्यापिनीं दिशमनभ्युपगच्छंस्तत्कल्पकानामन्यथासिद्धिमाह **प्रागिति** ॥ यदि प्रागादिधीव्यवहारसिद्ध्यै दिक्तत्त्वं कल्प्यते, तत् संप्रतिपन्नं व्योमैव भवतु ; सूर्योदयाद्युपाधिभेदेन तद्विभागात् पूर्वदक्षिणपश्चिमाद्युपाधिक्लृप्तिश्चाधिकेऽनधिकेऽपि समाना । अप्रत्यक्षायां च दिशि प्रत्यक्षै-रुपाधिभिरवच्छेदधीर्दुर्लभा । सूर्योदयादिविशेषितातपादिभिरेव प्रागादिधीव्यवहारसिद्धौ किं तदन्यकल्प-नया? शाखाचन्द्रनयाच्चातपादेस्सूर्योदया(सूर्या)देश्च संबन्धधीर्युज्येत। उपहितस्य शब्दार्थत्वान्न **दिक्छब्दस्य** व्योमातपादिपर्यायिता स्यात् । ननु साक्षात्संबन्धरहितसंयुक्तसंयोगभूयस्त्वाल्पत्वनिबन्धने दूरासन्नपरत्वापरत्वे तत्तत्संबन्धोपनायकव्यापक(सं)द्रव्ययोगमन्तरेण कथं स्यातामित्यत्राह **अस्यैवेति**। न हि त्वया कल्प्यमानमपि

वी— भजतु, किं दिशा धर्म्यन्तरेण, दिश इव वियतोऽपि सर्वत्र सत्त्वात् तस्यैव संयोगोपनाय-कत्वसंभवात् । ननु प्राक्प्रत्यक्त्वादिकमेवं निरूढ्यतां नाम । परत्वापरत्वयोरुत्पत्तये दिगपेक्षिता । "एकदिक्काभ्यामेककालाभ्यां संनिकृष्टविप्रकृष्टाभ्यां परमपरञ्च" (७-२-२१) इति हि कणादः । यथा कालिकपरत्वापरत्वयोः ज्येष्ठकनिष्ठगतयोः कालः कारणम्, तथा दूरसंनिहितगतयोः परत्वा-परत्वयोर्दिक् कारणम् । एकस्यामेव दिशि वर्तमानयोर्द्वयोर्ग्रहणेन हि ते उपपाद्ये इत्यत्राह अस्यैवेति । उपाधिभेदात्—संयुक्तसंयोगपरम्पराधिक्यन्यूनत्वाभ्याम् । एकं वस्तु अवधिं कृत्वा एतत् प्रति इदं परम्, इदं त्वपरमिति व्यवहारे तद्वस्तुसंबन्धिसंयुक्तसंयोगपरम्पराया आधिक्यं न्यूनत्वञ्च प्रयोजकम्। पूर्ववत् संयोगकूटरूपसंयुक्तपरम्परायास्तत्रतत्रोपनयो यथा दिशा क्रियत इत्युच्यते, तथा वियतैव क्रियत इतीष्यताम् अधिकाया इव दिश इवास्य वियत एवायमुपाधिभेद इति सुवचत्वात् । ननु तार्किकमते व्योम्नो विभुत्वेऽपि सिद्धान्ते तस्यानित्यत्वात् परिच्छिन्नत्वाच्च तदभावस्थले कथं प्राक्त्व-प्रत्यक्त्वपरत्वापरत्वनिर्वाह इत्यत्राह व्योमेति । तत्रापि महदहंकारप्रकृत्यादिसत्त्वात् क्लृप्ततदु-पाधित्वेनैव निर्वाहे किं दिशेति । ननु स्थलभेदेन कारणभेदकल्पने गौरवमित्यत्राह दूरत्वेति । प्रकृति-नित्यविभूति सर्वव्यापिना ब्रह्मणैव सर्वनिर्वाहे किमन्यैरिति । अवश्यस्वीकर्तव्यैरुपाधिभिरेव निर्वाहे दिश एवानपेक्षणात् वियदाद्यपेक्षेव मा भूदित्यप्यर्थः । ननु दिशमधिकां कल्पयता प्राक्प्रत्यक्त्वादि-विषये उपाधिभेदापेक्षा नेष्यत इति लाघवमिति शंकां परिहरति पूर्वदक्षिणेति । दिग्दशकस्वीकारे उपाधिमन्तराप्राक्त्वादिनिर्वाहेऽपि दिगेकैव नित्या विभ्वीति तार्किकमते उपाधिभेदं विना पूर्वत्वा-देर्दुर्निरूपत्वात् स आवश्यकः । तथा च वियदेव दिगप्यस्तु । अधिकं गुणमप्याह अप्रत्यक्षायाञ्चेति ।

श्लोके वियदित्युपलक्षणम्, आतपादेरपि ग्राह्यतेत्याह सूर्येति । सूर्योदयस्थानात् प्रस्थित आतपः प्रभारूपः न्यूनसंयुक्तसंयोगपरम्परावत्तया यत्र वस्तुनि संबध्नाति, तद्वस्तु प्राक्, यत्राधिकसंयोग-परम्परावत्तया, तत् प्रत्यगित्येवं भाव्यम् । ननु वक्रीभूतप्रभाग्रहणे संनिकृष्टवस्तुन्यपि अधिकसंयुक्त-संयोगपरम्परा स्यादित्यत्राह शाखेति । शाखाचन्द्रस्थल इवाऽऽर्जवमपेक्षितमिति भावः। नन्वार्जव-मपि दिशमादायैव निरूप्यमिति चेन्न—शाखाचन्द्रयोरार्जवं हि नाम शाखाचन्द्रयोरन्तराले क्रम-संयुक्ता यावन्तोऽणवः, तावन्मात्रग्रहणोपपाद्यं स्वसंयुक्ताणुसंयुक्ताणुसंयोगपरम्परानिविष्टान्तिम-संयोगवत्त्वम् । न्यूनसंख्याकाणुसंयोगसंघमादायैव कार्यनिर्वाहे परितः स्थितानणूनप्यादायाधिक-संख्याकाणुसंयोगकूटेन कार्यनिर्वाहो न युक्त इति लाघवन्यायसिद्धम् । अतो न्यूनसंख्याकसंयोग-वदणुपङ्क्तिकत्वमेवार्जवं नाम । तथा च न्यूनाधिकसंख्याकक्षणकूटमादाय ज्येष्ठकनिष्ठत्वादिवत् न्यूनाधिकाणुकूटमादाय प्राक्प्रत्यक्त्वपरापरत्वादिनिर्वाह इति उपनायकद्रव्यापेक्षैव नास्ति । तदिदं "किं परैः" इत्यत्र व्यञ्जितमेव । काणादरीतिमनुसृत्यैव तं प्रतिवक्तुं पुनरुपनायकोक्तिरिति ।

दिक्तत्त्वं तदुपाधियोगमन्तरेण परत्वापरत्वे जनयेत् । तथा सति तैरेवोपाधिभिरुपहितं व्योमादेव परत्वादि-सिद्धौ पर्याप्तम् । अधिकशब्देन कल्पनागौरवं सूच्यते । नन्वाकाशः परिच्छिन्न इति भवत्सिद्धान्तः; तथाच कथमाकाशरहितप्रदेशे दूरत्वादिक्लृप्तिरित्यत्राह—**व्योमेति** । दूरत्वादिसिद्ध्यनुगुणोपाधि-मद्भिर्महदादिभिस्तत्सिद्धिः स्यात् । **व्योमोत्तीर्ण** इत्युपलक्षणम्, व्योमसंपृक्तद्रव्यादिभिरपि तदुपपत्तेः ॥ अनियमेन बहूनां दिक्त्वकल्पने गौरवं स्यादिति चेन्न ; असिद्धकल्पनादनेकैरपि सिद्धैरेव निर्वाहस्य लघुत्वात् । यद्येकमेव सर्वत्र दिग्व्यवहारकारणमिष्यते, तदा सर्वव्यापिना सर्वहेतुभूतेन परमात्मनैव सर्वं सिध्येत ; तस्यैव सन्तु उपाधिभेदाः सहकारिणः। अथवा तत्तदुपाधयस्तावत् प्रत्यक्षाः । तत्संबन्धोऽपि (हि)साक्षात्परंपरया वा दूरासन्नादेर्दृष्ट एव । तद्द्वारा च परत्वादिसिद्धौ किं तदुपहितगवेषणया? कार्यविशेषाणामन्यतस्संभवे च न कश्चित्तदतिरिक्तं कल्प्यमित्यभिप्रायेणाह **किं परैर्न** इति । **परैः**—व्यापकेश्वरव्यतिरिक्तैः, उपाधिमात्रव्यतिरिक्तैर्वेत्यर्थः। **नः**-ईश्वरमिच्छतां गौरवभीतानां चेति यावत्॥४८॥

अथ दिशो वियदादित्वायोगभंगः ॥

**अन्यस्मिन्नन्यधर्मान् घटयतु वियदाद्यत्र नातिप्रसक्तिः**
**सिध्यत्कार्योपयुक्तोपनयननियमोपेततच्छक्तिक्लृप्तेः ।**
**एवं ह्येवाधिकायामपि दिशि भवतोऽतिप्रसङ्गो निषेध्यः,**
**धर्मी धर्मश्च कल्प्यौ तव, तदितरता स्यात्तु काले स्वमानात्(समाना) ॥४९॥**

ननु यद्याकाशादयः परधर्मं परत्र घटयेयुः, ततः पाण्ड्यदेशस्थितेन जपाकुसुमेन पाटलीपुत्रस्थितं स्फटिक-

---

*टिप्पणी*— व्योमसम्बद्धमहदादिभिरेव दूरत्वादिक्लृप्तौ व्योमसम्बद्धाहङ्कारादिभिः दूरत्वादिव्यव-हारो न स्यादित्यत्राह—व्योमोत्तीर्ण इत्युपलक्षणमिति । श्लोके उत इत्यनेन सूचितमवधिभूततत्त-दुपाधिभिरेव दूरत्वादिक्लृप्तिरिति पक्षमाह—अथवेति ॥ ४८ ॥ अन्यस्मिन्निति । परधर्ममिति । अवधिसम्बद्धमित्यर्थः। परत्र—दूरा[illegible]वस्तुषु इत्यर्थः। विश्वमपि—सर्वमपि वस्तुजातमित्यर्थः॥४९॥

*श्री*— असिद्धकल्पनादिति । [illegible] मनेकमेकं वा न कल्प्यम्, यदि क्लृप्तेनैकेन वाऽनेकेन वा अपेक्षितनिर्वाह इत्यर्थः ॥ ४८ ॥

दिगेवोपनायकतया कल्प्या । क्लृप्तस्य वियदादेरुपनायकत्वकल्पने त्वतिप्रसंग इति काणादाशयं उपनायकद्रव्यमपेक्षितमिति मते स्थित्वैव खण्डयितुमुपरितनः श्लोकः। यदि मिथ-स्संयुक्तवस्तुगतसंयोगकूटमाकाशः तत्तद्वस्तुसंयुक्तस्वसंयुक्तत्वसंबन्धेन प्राक्प्रत्यगादिवस्तुनि उपन-येत्, तर्हि देशान्तरस्थं जपाकुसुममपि तत्संयुक्तस्वसंयुक्तत्वसंबन्धेनान्यदेशीयस्फटिकमणावुपन-येत् । तथाच स मणिरपि लोहितो भवेत् । तथाचार्क्कीनेन काश्मीरकुङ्कुमेनैव देशान्तरदेहा अपि रञ्जिताः स्युरित्यादिरतिप्रसक्तिरत्र न; कारणशक्तिर्हि कार्यानुसारेण कल्पनीया सर्वत्र । उपनायक-द्रव्यमुखेनान्यदीयधर्मस्यान्यत्र कार्यकरत्वं यत्रयत्र दृष्टम्, तत्रतत्र तदुपनायकत्वशक्तिरेव तस्य वियदा-देरिति । सिध्यतः=प्रसिद्धस्य कार्यस्य यत् उपयुक्तमुपनयनं तन्नियमार्थमेव शक्तिकल्पनेति । अधिकदिक्स्वीकारे तस्या एतत्स्वभावोऽनुभवबलात् कल्प्यः।धर्मिकल्पनं तत्स्वभावकल्पनमित्युभया-पेक्षया, क्लृप्ते वियदादौ तत्स्वभावमात्रकल्पनमेव युक्तम् । ननु नियतसंख्याकसूर्यपरिस्पन्दरूपो-पाधिविशेषोपनयनशक्तिं वियदादौ स्वीकृत्य तत एव कालिकपरत्वापरत्वाद्युपपादनस्यापि संभवे

मणिमुपरञ्जयेयु (स्फटिकमनुरञ्जयेय ), विश्वमपि व्यामिश्रसर्वं[illegible] स्यादि[त्य]तिप्रसक्तिमुद्भाव्य परिहरति अन्यसिन्निति । हेतुमाह—**भिध्यदिति** । यथा कलमबीजस्य [illegible]जननशक्तिकल्पनेऽपि न कोद्रवाङ्कुरजनकत्वम्, दृश्यमानकार्यानुगुणकारणशक्तिकल्पनात्, तथा [illegible]दिष्वपि परत्वादिसिद्ध्युपयुक्तोपनाय कतयैव तच्छक्तिक्लृप्तेरित्यर्थ । अत्र प्रतिबन्दिमभिप्रेत्याह—**एव हीति** । नन्वधिकाया दिशस्ताव दर्थ(या)तयैव धर्मिग्राहकेण सिद्धि , न तथा वियदादे , तत्स्वरूपस्यान्यतस्सिद्धत्वादिति चोद्य विपरीतफल मित्यभिप्रायेणाह **धर्मीति** । नावश्य धर्मिग्राहकेणैव सर्वत्र शक्तिसिद्धि । गृहीतेष्वपि धर्मिषु तत्त त्कार्यदर्शनेन तन्नियतशक्तिक्लृप्ते । अत एव नातिप्रसङ्ग , अयस्कान्तादिवत् तन्नियमात् । (१) यन्नि बन्धनस्त्वतिप्रसङ्ग, स सिद्धे कल्प्येऽपि सम[ ]समाधि (१) । एव स्थिते वरमुभयकल्पनादेक कल्पनम् ॥ ननु शक्तिरपि कल्प्यमाना न निराधारा कल्प्यते । तस्मात् साधारशक्तिकल्पने शक्ति विशिष्टाधारकल्पने वा सम गौरवम् ॥ तत्र , यद्यपि शक्तितद्वन्तौ मिथोऽवच्छिन्नौ, तथाऽपि सिद्धाशस्य कल्प्यत्वायोगादसिद्धाशनियतैव क्लृप्तिरिति विशेषसिद्धि स्यादिति भाव । नन्वेव वियदादेरेव सूर्यपरि स्पन्दाद्यु(न्दपकर्षाद्यु)पनायकत्वसम्भवात् तदन्य [illegible] न सिध्येदित्यत्राह—**तदितरतेति** । न हि वय परत्वादिलिङ्गकाकाशाद्यतिरिक्त कल्पयाम , किंत्वागमिकमभ्युपेम । अतो न तस्यासिद्धिरिति भाव ॥४९॥

दिशोऽनन्यत्वे श्रुत्यविरोध

**सख्यान तत्त्वपङ्क्तौ क्वचिदपि न दिशा, कालवद्वा न भेद:**
**कण्ठोक्त:, व्याक्रियादिव्यवहरणमपि ह्यन्यथैवोपपन्नम् ।**
**श्रोत्रादुक्तस्तु लोकप्रमृतिवदुदयस्तस्य तत्राप्ययो वा**
**नैतावत् (दुक्त)तत्त्वभेद गमयति, न च तच्छ्रोत्रसामान्यपर्याय ॥ ५० ॥**

श्री— किमिति कालद्रव्यमन्यत् स्वीकार्यमित्यत्राह, तदितरता स्यात्तु काले समानादिति । "अनादिर्भगवान् काल ", "कलामुहूर्तादिमयश्च कालो न यद्विभूते परिणामहेतु ", "काल स पच्यते तत्र न कालस्तत्र वै प्रभु " इत्यादिप्रमाणबलात् तस्य ब्रह्माद्यतिरिक्ततेति । समानेति पाठे मानसहितेत्यर्थ ।

'यन्निबन्धन इत्यादि पाठोऽशुद्ध , पूर्वयाऽन्वयेनैव सर्वसिद्धे असामञ्जस्याच्च । यच्छब्देन हि परधर्मस्य परत्र प्रदानस्वभावो ग्राह्य , तन्मूलकत्वादतिप्रसङ्गस्य । तस्य पूर्व सामान्यतो निर्दिष्टस्य स इति पुल्लिंगेन निर्देशो न घटते । स इत्यस्य अतिप्रसङ्ग इत्यर्थकत्व एव समसमाधिरिति पदस्यान्वयौचित्यम् । सम समाधिरिति पाठान्तर तु अनन्वितमेव । यन्निबन्धन इत्यत्र, 'य एव एतन्नि बन्धन' इति वा स्यात् । तदा यच्छब्दोऽतिप्रसङ्गपर । अतिरिक्त कल्पयाम —अतिरिक्ततया कल्पयाम । आगमिकमिति —अतिरिक्ततयैवागमवेद्यमित्यर्थ ॥ ४९ ॥

कालवत्—कालस्येव दिश क्लृप्तप्रत्यपेक्षया भेदो न कण्ठोक्त आगमे । व्याक्रिया—व्याकरणम् । श्रोत्रात्—पुरुषसूक्तादौ भगवच्छ्रोत्रात् उक्त उदय , श्रोत्रे अप्ययो चोक्त प्रकरणात् अन्तरिक्षादिलोकानुरूपयपरिरूपदिक्पदार्थगत । तस्येति साम [illegible] नपुसकम् । एतावत्—ईदृशावचन न तत्त्वभेदगमकम् । ननु दिशा श्रोत्रोपादानकत्वमश्लोकम् । तत्र देश इति सामान्यप्रयोगेपि पृथिव्यन्त समष्टीनामुपाधीना न तदुपादानकत्वम्, नापि तद्व्यष्टीनाम्, अतोऽतिरिक्तदिक्सिद्धिरित्यत्राह न

यदि पृथक्त्वेन लोकवेदप्रसिद्धा दिगपह्नूयेत:, तथा वायुरपि। अयं ह्युपलभ्यमानः स्पर्शः उष्णः शीतोऽनुष्णाशीतो वा। तेषाऽपि न छान्दोग्याधीततेजोबन्नातिरेकः सिध्येत् । तिर्यक्पवनमप्यदृष्टवशात् तेषामेव स्यात् । शब्दधृतिकम्पैरपि नातिरिक्तमनुमातव्यम् ; तैरेव तत्संभवात् । वातोपनीततत्तद्भूतान्तरावयवन्यायादनुद्भूतरूपतया दुर्दर्शत्वं स्यादित्यत्राह—**संख्यानमिति** ॥ अयं भावः—न हि वयमप्रत्यक्षस्य वायोः स्पर्शशब्दधृतिकम्पलिङ्गैः सिद्धिरिति वदामः, येन तेषामन्यथासिद्धिरुच्येत । किंतु [स्पर्शादिमतः प्रत्यक्षस्यैव तत्त्वान्तरत्वम् ?] तेषुतेषु शास्त्रेषु तत्त्वपङ्क्तौ परिगणनात्; नैवं दिक्तत्त्वं गण्यत इति। अत्र(तत्र) कालप्रतिबन्दिं निस्तरति–**कालवद्वेति** । अस्ति हि "रूपान्तरं तत् द्विज कालसंज्ञम्" इत्यादि । ननु "दिग्देशकालेष्वस्तातिः" इत्यादिषु देशाद्भिन्ना दिक् कालवच्छास्त्रेषु व्यवह्रियत इत्यत्राह **व्याक्रियेति** । प्रमाणसिद्धदिक्तत्त्वानुसारेण त(उ)त्कार्यविशेषविधायिनां शास्त्राणां तत्स्वरूपनिष्कर्षे तात्पर्याभावान्न ततस्त्वदिष्ट(त्वद्विशिष्ट)सिद्धिरित्याशयः। अथ स्यात् "प्राणाद्वायुरजायत" इत्यादौ वाय्वादितत्त्वैस्सह दिशः पृथक्सृष्टिरुच्यते; अतस्तद्वत् दिशोऽपि तत्त्वान्तरत्वं स्यात्; एवं "दिशः श्रोत्रम्" इति तद्वद(तद?)प्ययोऽपि

---

[illegible]— नन्विति। 'दिक्छब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः' (५ ३-२७) इति व्याकरणसूत्रम् । अस्यार्थः—दिशाशब्दाः (दिशि रूढाः शब्दाः?) दिक्शब्दाः, तेभ्यः, सप्तमीपञ्चमीप्रथमान्तेभ्यः दिग्देशकालेषु वर्तमानेभ्योऽस्तातिप्रत्ययो भवतीति । 'पुरस्तात्' इत्यादिरुदाहरणम्॥५०

[illegible]— चेति। तस्याः दिशः श्रौत्रतां—श्रोत्रोपादानकतामेतादृक्वाक्यं न गमयति । अत्र हि प्रकरणे धूमं प्रति वह्नेरिव तस्य तस्य कारणत्वमात्रमुच्यते, नोपादानत्वम्। दिक्त्वेन क्लृप्तानां वस्तूनां जीवश्रोत्राधीनशब्दग्रहणं प्रति उपकारकत्वशक्तिः भगवच्छ्रोत्रसंबन्धकृतेत्येतावदेवात्र विवक्षितम्। अत उदयोऽप्ययोवाऽत्रोक्तो नोपादानत्वाभिप्रायक इति ।

तथा वायुरपीति । तथेत्यस्य अपह्नूयेतेत्यर्थः। स्पर्शशब्दधृतिकम्पलिंगैरिति । एभिश्चतुर्भिरतिरिक्तवायुसिद्धिं वैशेषिका आहुः। "स्पर्शश्च वायोः" (२-१-९) इति सूत्रे चकारेण शब्दधृतिकम्पसमुच्चयः । व्यजनादिचालनेऽनुभूयमानोऽनुष्णाशीतस्पर्शः किञ्चिदाश्रितः स्पर्शत्वात्, स्पर्शान्तरवत्, रूपवद्द्रव्याभिघाताजन्यः शब्दः स्पर्शवद्वेगवद्द्रव्याभिघातजन्यः तदितरकारणानधीनशब्दत्वात् भेर्यादिशब्दवत् । तृणतूलविमानादीनां नभसि धृतिः स्पर्शवद्वेगवद्द्रव्यसंयोगजन्या तदितरकारणानधीनद्रव्यधृतित्वात् प्रवाहसंयोगजन्यपलालभारादिधृतिवत्, तथा कम्पः रूपवद्द्रव्यसंयोगानधीनः तृणादिगतः स्पर्शवद्वेगवद्द्रव्यसंयोगजन्यः संयोगेतरकारणानधीनकम्पत्वात् पूराऽऽहतकाशादिकम्पवत् इत्यस्मदीये वैशेषिकरसायने उक्तमनुसंधेयम् । तथाप्येतैरतिरिक्तवायुसिद्धिरिति न वयं ब्रूम इति । किंचित्येतदनन्तरं कतिपयपदभ्रंशः पर्यालोच्यते। कालप्रतिबन्दिम्—तर्हि कालोऽप्येवमतिरिक्तो मा भूत् ; स यदि स्यात्, दिगपि स्यादिति शंकामित्यर्थः। निस्तरति—लंघयति । निरस्यतीति पाठो वा । अस्तातिः प्रत्ययविशेषः परस्तादित्यादौ दिगाद्यर्थकः। शास्त्रेष्विति बहुवचनेन आदिपदग्राह्यसूचना । "दिग्देशकालाकाशेष्वप्येवं प्रसंगः" (२-१-२२) इति न्यायदर्शनम्। त्वदिष्टेति । दिशोऽतिरिक्तत्वरूपेष्टेत्यर्थः। दिग्देशयोरेकत्वेऽपि दिक्त्वेन भानमन्यत्, देशत्वेन भानमन्यत् । श्रूयते । दिशः श्रोत्रादिति वाक्ये । एवं—सृष्टिवत् दिशश्श्रोत्रमिति लयपरं वाक्यम् । तद्वत्—प्राणाद्यप्ययवत्। तदप्ययोऽपीति वा पाठः। प्रतिबन्दीति । यदि दिक् तत्त्वान्तरम्,

श्रूयत इत्यत्राह-**श्रोत्रादिति** । **लोकप्रसृतिवदिति** प्रतिबन्दिवचनम्। अत्र हि "नाभ्या आसीदन्तरिक्षम्" इत्यादिभिर्न तत्त्वसृष्टि श्रूयते । किंतु ब्राह्मणक्षत्रिय[वैश्यशूद्र]चन्द्रसूर्यादिव्यष्टिसृष्टिप्रकरणे अन्तरिक्ष स्वर्गादि[लोक]कल्पनम् । अतो दिक्सृष्टिरपि व्यष्टिविषया न तत्त्वान्तर कल्पयितु शक्नुयादित्याह **नैतावदि**(दृगि?)ति । अथापि (अत्रापि) दिश श्रोत्रोपात्तस्य व्यष्टिविशेषत्व स्यादित्यत्राह – **न चेति** । **श्रौतत्वं**—श्रोत्रोपादानकतामित्यर्थ । न हीन्द्रियाणि कस्यचिदुपादानानीति प्रागेवोक्तम् । गत्यभावादत्र विशेष कल्प्यतामित्यत्राह **आम्नायपर्यादिति** । अत्र हि दिगुपाधीना त[द]द्देवताना वा भगवन श्रोत्रात्, चन्द्रादेरिव, सृष्टि स्यात् । अनस्तत्त्वान्तरकल्पन निर्मूलमित्यर्थ ॥ ५० ॥

**इति दिश आकाशादावन्तर्भाव:** ॥ अथ वायुनिरूपणम् ॥

**वातो वातीति साक्षान्मतिरितरसमा स्पर्शतो नानुमाऽसौ**
**अन्धेऽन्येषु प्रसङ्गात् न पुनरगमक स्पर्शन रूपशून्ये ।**
**अन्याक्षग्राह्य-तादृग्विध-गुणविरहो ह्यन्यदक्ष न रुन्धे**
**निर्गन्धो नीरसोऽपि स्फुरति यदनलो दर्शनस्पर्शनाभ्याम् ॥ ५१ ॥**

आकाशे चिन्तिते प्रसङ्गात् दिगन्तर्भाव उक्त । अथाकाशानन्तरभाविनि वायौ स्वरूपतःसप्रतिपन्ने प्रमाणविप्रतिपत्तिं निरस्यति--**वातो वातीति** ॥ त्वगिन्द्रियपवनसयोगे सति सावधानस्य वातो वातीति

---

भा— अन्तरिक्षादिलोकोऽपि तत्त्वान्तर स्यादित्यर्थ । स्वर्गादिकल्पन--स्वर्गादिसृष्टि । न हीन्द्रियाणीति अधिकयुक्तिकथनम्। चन्द्रादेरिवेत्यनेन मनस्त चन्द्रोत्पत्तिर्मण्डलोत्पत्तिर्वा देवतोत्पत्तिर्वा, इन्द्रादेरन्तरिक्षादेश्चानोक्ते । तद्वदत्रापीति ज्ञाप्यते ।

ननु वियदधिकरण(२-३-१)श्रुतप्रकाशिकायामपरमतखण्डनावसरे, "दिशश्श्रोत्रादिति वाक्यस्य दिगुपाधिपरत्व दिग्देवतापरत्व वा न युक्तम् भौतिकादिपदार्थानामेवोपाधित्वेन तदुत्पत्ते पृथगवक्तव्यत्वात्, अधिष्ठेयभेदाभावे अधिष्ठातृदेवताभेदाभावाच" इति उपाधिपरत्वदेवतापरत्वयो निरस्तत्वात् कथ तत्स्वीकार इति चेत्—उच्यते । दिग्रूपतत्त्वान्तरस्यागमेणत्वे तदेकत्वनिल्यत्व कथनेन दिशश्श्रोत्रे इत्यादीनाम यथानयन न युक्तमित्येतत्र तद्ग्रन्थतात्पर्यम् । दिग्रूपतत्त्वाभावात्तु सिद्धान्ते एव निर्वाह । न च पौनरुक्त यम्, उपाधिसाकारतदधिष्ठातृत्वयोर्ज्ञाप्यत्वात्॥ ५० ॥

इति दिश आकाशाद्यनन्यत्वम् ॥

वात इति । साक्षादिति पृथक्पदम्। वातो वातीति मति इतरसमा पृथिव्यादिमतितुल्या साक्षात्—साक्षात्काररूपा । असौ=वातो वातीति मति न स्पर्शहेतुकानुमा, तथासति अन्येषु— पृथिव्यादिषु विषये अन्धस्य स्पर्शतोऽनुमानमेवेत्यापत्तात्। अन्धस्य पृथिव्यादिकमप्रत्यक्ष स्यादित्यर्थ । न पुनरिति । स्पर्शनेन्द्रियजन्यप्रत्यक्ष रूपशून्यवस्तुविषयकत्वे अगमक साधकरहितमिति न। गमकसद्भावात् तत्तद्विषयकप्रत्यक्षरूपव्यवसायविषयकोऽनुव्यवसाय एव त साधक । अन्येति । चक्षुरिन्द्रियादिग्राह्यस्य, तादृग्विधस्य=तत्तदिन्द्रियव्यवस्थाहेतो गुणस्य रूपगन्धादेर्विरह तत्तदिन्द्रियजन्यज्ञानवारक स्यात् न तु त्वगादीन्द्रियजन्यप्रत्यक्षवारक । अ यथा गन्धरसाद्यभावादग्नि चक्षुषा त्वचा च न गृह्येतेति श्लोकार्थ ।

धीस्तावद् दुरपह्नवा । सा साक्षात्काररूपा क्षित्यादिधीसमत्वादित्यर्थः । यदत्र गुणेन गुण्यनुमानमाहुः तत् प्रतिषेधति **स्पर्शेत** इति । न हि गन्धादिवदिह गुणमात्रोपलम्भ इति भावः । अन्यथाऽति प्रसङ्गमाह **अन्ध** इति । अन्धे पुरुषे, **अन्येषु**— पृथिव्यादिषु भूतेषु त्वगिन्द्रियेण *या स्पर्शधीः*, सा स्पर्शमात्रविषया तत्तद्द्रव्यानुमितिहेतुस्स्यात् । **अन्धो**क्तिश्चक्षुषा द्रव्यग्रहणनिवृत्त्यर्था । उपलक्षणमेतदन्धतमसमध्यस्थस्य ; सालोकेऽपि निमीलितचक्षुषश्च । न चैतद्युक्तम्, दर्शनस्पर्शनाभ्यामेकार्थग्रहणाभ्युपगमात् । अन्यथा द्रव्यापह्नवप्रसङ्गाच्च । ननु नीरूपं कथं प्रत्यक्षम् ? आत्मादीन् पश्य । कथं बाह्याक्षग्राह्यम् ? रूपादीन्निरूपय । कथं स्पर्शनवेद्यम् ? स्पर्शमेव परामृश इत्यभिप्रायेणाह—**न पुनरिति ।** तथाऽपि नीरूपद्रव्यं कथं बाह्येन्द्रियग्राह्यं त्वगिन्द्रियग्राह्यं वेत्यत्राह—**अन्याक्षेति ।** इन्द्रियाणां स्वग्राह्यविशेषगुणोपधानेन हि द्रव्यग्राहकत्वमिति वः कल्पना । ततश्चेन्द्रियान्तरग्राह्यविशेषगुणविरहेऽपि वायोस्त्वगिन्द्रियग्राह्यत्वमविरुद्धमित्यर्थः । यदि रूपशून्यद्रव्यत्वात् वायुरप्रत्यक्ष इत्युच्येत, तदा रसशून्यद्रव्यत्वात् तेजोऽपि किं [न ?] तथा ; गन्धशून्यद्रव्यत्वाद्वा । अतोऽस्मादि 'इन्द्रियान्तरग्राह्यविशेषगुणविरहो नेन्द्रियान्तरवेद्यत्वविरोधी' इति । अत्राविगीतमुदाहरणमाह— **निर्गन्ध** इति ॥ ५१ ॥

अथ वायुप्रत्यक्षत्वबाधकभंगः

**संख्याद्याः स्प(स्पा ?)र्शनाः स्युस्तदधिकरणकाः स्प(स्पा?)र्शने गन्धवाहे**
**तेषां द्रव्योपलम्भप्रतिनियतनिजाध्यक्षयोग्यत्वतश्चेत् ।**
**इष्टं त्वंशे, न चात्मप्रभृतिषु सह ते तैः प्रसिद्ध्यन्ति सर्वे,**
**तद्ग्राह्ये व्याप्तिरिष्टा यदि, सततगतेरप्यसावस्तु बाह्ये ॥ ५२ ॥**

वायुप्रत्यक्षतायां परोक्तमनिष्टं शङ्कते **संख्येति**। वायौ त्वगिन्द्रियग्राह्ये तन्निष्ठसंख्यापरिमाणादिद्वीन्द्रियग्राह्यवर्गोऽपि तेन सह त्वचा गृह्येत । तेषां संख्यादीनां स्वाधारद्रव्योपलब्धियोग्यतासमानयोग्यताकत्वादित्यर्थः । अत्रांशत इष्टप्रसञ्जनतामाह—**इष्टमिति** । उपलभ्यते ह्येका वह्निशिखा, एका वारिधारेत्यादिवत् एकोऽयं वायुरिति । रन्ध्रभेदनिष्क्रान्तेषु च वायुषु सावधानं स्पृशतो(तां) द्वित्वद्विपृथक्-

---

विव— इष्टापत्तिमाशङ्क्य, तर्हि अपसिद्धान्त इति परिहाराभिप्रायेणाह—नैतद्युक्तमिति। परिहरति–आत्मादीन् पश्येति ॥ ५१ ॥

वी— ननु नीरूपमित्यादि, नीरूपत्वेऽपि प्रत्यक्षं भवतीति कुतोंगीकर्तव्यमिति प्रश्नः । रूपवत्त्वं किं प्रत्यक्षसामान्ये कारणम्, बाह्येन्द्रियजप्रत्यक्षे वा, स्पार्शनप्रत्यक्षे वा । सर्वमसंभवि । तथा कल्पनस्य गुरुत्वादिति गमयन् तत्कल्पने औचित्याभावमपि दर्शयति तथापीति । तादृग्विधेत्यनेन, रूपं न त्वाचप्रत्यक्षकारणम् इन्द्रियव्यवस्थाहेतुगुणत्वात् गन्धादिवदिति युक्तिः सूच्यते । अन्धतमसमध्यस्थस्य=गाढध्वान्तमध्यवर्तिनः । किं तथेत्यत्र, किं न तथेति पाठे अर्थबोधस्सौलभ्यं स्यात् ॥ ५१ ॥

संख्याद्या इति । संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वानि कर्म चेति व्याख्यातमेव व्यक्तम् । स्पर्शनपदस्थाने स्पार्शनपदं युक्तम् ; चाक्षुषपदवदिदम् ; त्वगिन्द्रियग्राह्येत्यर्थकम् । गन्धवाहस्य स्पार्शनत्वे तदीयानां संख्यादीनामपि स्पार्शनत्वापत्तिः, तेषामध्यक्षयोग्यता हि द्रव्योपलम्भप्रतिनियता । संख्यादिप्रत्यक्षं प्रति योग्यतदाश्रयसंनिकर्षस्यैव कारणत्वादित्यर्थः । स्युश्चेत् ।

त्वादयो भान्ति। यावता च त्वगिन्द्रियभागेन वायुः संबध्यते, तावदवच्छिन्नं तत्परिमाणं च गृह्यत एव। न हि घटादावपि त्वगिन्द्रियसंबद्धप्रदेशाभ्यधिकवर्ति परिमाणं तेन गृह्यते। स्पृष्टापसृते वायौ संयोगविभागौ स्फुटौ। एकस्मिन् शरीरे अनेकैर्वेशरन्ध्रादिभिरनेकेषु वायुस्रोतस्सु प्रवर्तितेषु तत्तदपेक्षया परत्वापरत्वे अपि सुलभे। कर्म च; वातीति प्रत्ययात्। अन्यथा सरित्प्रवाहे स्पन्दनं(त्वं) च त्वचा न गृह्येत। यस्तु वायोः संमूर्च्छनाद्यवस्थासु संख्यादेरग्रहः स तोयादावपि समः। प्रसङ्गस्य व्याप्तिभङ्गं(स्याव्याप्ति)-मप्याह—न चेति। आत्मनि तावत् यद्यप्यहमेक इति धीः स्यात्, तथाऽपि तत्परिमाणं न गृह्येत(गृह्यते)। अत एव ह्यणुत्वविभुत्वदेहपरिमाणत्वसन्देहः। एवमन्यदपि। तथा बाह्येष्वपि द्रव्योपलम्भेऽपि द्वित्वत्रित्वाद्यग्रहो दृष्टः। उक्तव्यतिरिक्तेष्वयं नियम इति शङ्कते—तद्बाह्य इति। सान्तर्हासमाह—सततगतेरिति। यथादर्शनं व्यवस्था त्वयाऽपि दुस्त्यजेति भावः॥ ५२॥ इति वायुप्रत्यक्षत्वम्॥

**न प्राणो वायुमात्रं सह परिपठनात्, न क्रिया द्रव्यतोक्तेः**
**तेजोवद्वा न तत्त्वान्तरमगणनतो वायुतानुज्झनाच्च।**
**तस्माद्वातो विशेषं घनजलकरका(क)न्यायतः प्राप्य कंचित्**
**देहान्तर्दाशविध्यं भजति बहुविधोपक्रियो वृत्तिभेदैः॥ ५३॥**

---

*(टिप्पणी)*— एकस्मिन् इति। कालकृतपरत्वापरत्वविषयमिदम्। तेष्वेव वायुस्रोतस्सु प्रसृतकराग्रस्थवायौ उरःप्रभृतिसम्बद्धवायौ च दिक्कृतपरत्वापरत्वे च स्पार्शने इति बोध्यम्। एवमन्यदपीति। आत्मस्थसंयोगविभागादिकमपि न प्रत्यक्षमिति भावः। श्लोके—बाह्यपदद्वयं व्यतिरिक्तपरम्॥ ५२॥

*श्री*— इतिराकृष्टव्य इति प्रागेवोक्तम्; स्युरिति चेदित्यर्थः। अंशत इष्टापत्तिरित्याह इष्टं त्वंश इति। वायुगतसंख्यादिस्पार्शनं तत्रतत्रेष्यत एवेत्यर्थः। वस्तुतो द्रव्यप्रत्यक्षे तद्गतसंख्यादिप्रत्यक्षमिति नियमो नेत्याह न चेति। आत्मादिद्रव्येषु स्थिताः ते=संख्यादयः सर्वे तैः सह=द्रव्यैः सह न प्रसिद्ध्यन्ति च—न गृह्यन्ते चेत्यर्थः। सर्वे इत्यनेन संख्यादिषु कतिपयग्रहणं इष्टमिति ज्ञाप्यते। आत्मरूपद्रव्यभिन्नद्रव्यप्रत्यक्षे एव तदीयसंख्यादिप्रत्यक्षमिति नियम इति शंकते तद्बाह्ये व्यतिरिक्ते इति। तद्बाह्ये=तद्भिन्ने इत्यर्थः। यदीत्यनन्तरं तर्हीति पूरणीयम्। असौ—नियमः सततगतेरपि बाह्ये=आत्मवायूभयभिन्न एव भवत्विति॥ परोक्तं-वैशेषिकोक्तम्; अन्येषां वायुप्रत्यक्षत्वस्येष्टत्वात्। संमूर्छनेति। "संमूर्छनं समानजवयोर्वाय्वोर्विरुद्धदिक्क्रिययोः संनिपातः" इति प्रशस्तपादभाष्यम्॥

अथ वायौ विशेषविचारः क्रियते। तत्र वायुक्रियाधिकरणार्थमाह न प्राण इति। वायुमात्रं=सर्वो वायुरपि प्राणशब्दवाच्यो न भवति। एतस्माज्जायते प्राण इति प्राणेन सह, खं वायुरिति वायोः पृथक् पाठात्। नापि वायुक्रिया उच्छ्वासादिरूपा प्राणः; प्राणनापाननाद्यवस्थाश्रयत्व-शरीरसंयोग-प्रवेशनिष्क्रमणाश्रयत्वादिरूपद्रव्यत्वश्रवणात्। वायोरुत्पन्नः प्राणः वायूत्पन्नतेजोवत् तत्पृथक्कृतत्त्वमपि न भवति; तत्र हेतू आह अगणनात् वायुत्वानपायाच्चेति। वायुरेव कञ्चन विशेषमापन्न इति भाष्यानुसारेणाह तस्मादिति। घनं—निबिडं यत् जलं तदभिन्ना घनीभूतजलात्मिका या वृष्टिगता करका तन्न्यायतः जलत्वप्रत्यभिज्ञाविषयकरकावत् वायुत्वप्रत्यभिज्ञाविषयतयैव कश्चित् विशेषं=पाञ्चभौतिकदेहोपादानभूतवायुगतविशेषातिरिक्तमवस्थाविशेषं कार्यान्तरहेतुं देहान्तः प्राप्य प्राणनापानना‌दि-व्यापारविशेषैर्दशधा विभज्यते। विलक्षणावस्थाभाक् वायुरेव प्राण इति यावत्। अपानादीनां

अथ राजसमहान् प्राण इति वदतः प्रतिवक्तुं प्राणस्य वायुविशेषतां विवक्षुः तत्र विशेषापह्नवं प्रतिषेधति—**न प्राण** इति ॥ वायुत्वप्रसिद्ध्याऽसौ वायुमात्रमिति चेन्न ; सर्वत्र सामान्यप्रसिद्ध्या विशेषत्यागप्रसङ्गात् । अयोग्ये च नानुपलम्भबाधः । श्रुतिशास्त्रं हेतुमाह – **सहेति** । 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः' इति सृष्टिवाक्ये वायुप्राणयोः सहपाठात् । न चात्र **प्राण**शब्दोऽन्यार्थः; अबाधे प्रसिद्धत्यागायोगात् । न च वायुसामान्ये **प्राण**शब्दप्रसिद्धिः। जगत्प्राण इति समाख्या तु न तदंशस्य शक्तिं गमयेत्॥ देहावच्छेदमात्रेण विशेषात् पृथगुक्तिरिति चेन्न ; तत्सृष्ट्युक्तेः (तत्सृष्टे.) प्रयोजनमान्द्यात्॥ अस्तु तर्हि वायोः क्रियाविशेषः प्राणः ; स्तिमितवायौ **प्राण**शब्दप्रयोगाभावात्, उच्छ्वासादौ प्रयोगाच्चेत्यत्राह–**न क्रियेति**। हेतुमाह--**द्रव्यतोक्तेरिति** । वायुर्द्रव्यमिति(त्ये)तावत् सिद्धम् । प्राणे च तदुक्तिः सार्वत्रिकी; प्राणः स्पन्दत इति च पृथक्व्यपदिशन्ति। उक्तश्च सहपाठः न तत्क्रियायाः; अग्रयप्रायनयविरोधात् । न च मनःप्रभृतीनां क्रिया तैस्सहात्र पठ्यत इति भावः । यद्यसौ वायुविकार-विशेषः, बहिरिव तत्त्वान्तरं स्यादित्यत्राह **तेजोवदिति** । यदि तत्त्वपङ्क्तौ निविष्टः प्राणः, भूतान्तरवत् पृथक्संख्यायेत ; न ह्येवमसावित्याह—**अगणनत** इति । तत्त्वपरिगणनं च पूर्वपूर्वनियतस्वभावपरित्यागेन विकारान्तरासृष्टौ ; न तु विकारमात्रे ; "पृथिव्या ओषधयः" इत्यादिषु तत्प्रसङ्गात् । प्राणे च वायुत्वं न निवृत्तम् । अतश्च न तत्त्वान्तरमित्याह—**वायुतानुज्झनाच्चेति** । तथाऽपि देहोपादान-त्वावस्थापन्नो वायुः प्राणस्स्यात् किमधिककल्पनयेत्यत्राह – **तस्मादिति**। अयं भावः—"यावद(द्ध्य)-

---

[illegible] – विशेषापह्नवमिति । वायुविशेषत्वापह्नवमित्यर्थः । वायुविशेषत्वेनानुपलम्भात् वायुविशेषत्वबाध इत्यत्राह—अयोग्ये चेति । सप्रस्ताव्येति । समासपरत्वेन वायोरार्येत्यर्थः। देहावच्छेदेति । न तु वायुपरिणामविशेषत्वेनेति भावः ॥ ५३ ॥

वी – प्राणातिरिक्तत्वभ्रमनिवर्तनाय चतुर्थः पादः । वृत्तिभेदैरिति । "प्राणोऽपानो-व्यान-उदानस्समानोऽन इत्येतत् सर्वं प्राण एव" (बृ.३.५.३) इति वचनात् अपानादीनामपि प्राणशब्दान्तर्भावः स्पष्टः। तत्र इतिशब्दस्य 'कामस्संकल्प इत्येतत् सर्वं मन एव' इति वाक्य इव प्रकारवाचित्वात् सर्वपदेन नागादीनामपि पञ्चानां ग्रहणम् । अत्र आ. दा. "नाग उद्गिरणकरः, कूर्म उन्मीलनहेतुः, कृकलः क्षुधासाधनः, देवदत्तो जृम्भणहेतुः, धनञ्जयः पोषणकर इति योगरहस्ये शास्त्रे उपयोग उक्तः" इति। कन्दल्याम्, "मूत्रपुरीषयोरधोनयनादपानः रसस्य गर्भनीडीवितननात् व्यानः, अन्नपानादेरूर्ध्वं नयनादुदानः, मुखनासिकाभ्यां निष्क्रमणात् प्राणः, आहारेषु पाकार्थमुदर्यस्य वह्नेः समं सर्वत्र नयनात् समानः" इति । योगेति मुख्यलक्ष्यप्रदर्शनम् ; सर्वशरीरसाधारणाः शरीरेन्द्रियप्रेरणरूपचेष्टादिव्यापारा आदिपदार्थः ।

राजसमहानिति । प्रकृतिकार्यभूतं महदाख्यं द्रव्यं सात्त्विकं बुद्धिशब्दवाच्यमध्यवसायादिहेतुः । राजसं स्वापादिकालसाधारण्येनोच्छ्वासनिश्वासहेतुः । अतः स एव प्राणशब्दार्थ इति सांख्यानुसारिपक्षः । तत्र विशेषापह्नवमिति । वायौ विशेषाकारस्यापलापमित्यर्थः । सामान्यत एव वायोर्वा क्रियाया वा तत्त्वान्तरस्य वा प्राणशब्दार्थत्वमिति यावत् । प्राणे च तदुक्तिरिति । द्रव्यमित्युक्तिरित्यर्थः । वायोरग्निरिति तत्त्वान्तरोत्पत्तिश्रुतिज्ञापनाय वह्निरिवेत्युक्तम् ॥ ५३ ॥

सिन् शरीरे प्राणो वसति, तावदायु.", "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्रा.ापान-समायुक्तः....पचामि ॥" इत्यादिषु देहात् पृथक्त्वेन प्राणवायुः प्रसिद्धः। अतो न देहोपादानवायुरसौ। किंतु योगाद्युपयुक्तशास्त्रवेद्यविशेषवान् कश्चिद्वायुरयमिति। वायुत्वानुवृत्तिव्यक्त्यै जलपयकरकानिदर्शनम्। **दाशविध्यं** — प्राणापानादिभेदैः नागकूर्मादिभेदैश्च दशविधत्वम् । तत्तद्वृत्तिभिरुपकारप्रपञ्चस्तत्तदागमेषु ग्राह्य । अयं चार्थ, "न वायुक्रिये पृथगुपदेशात्" इत्यधिकरणसिद्धः । "आपोमयः प्राणः" इति तु, "अन्नमयं हि सौम्य मनः", "तेजोमयी वाक्" इतिवत् आप्यायनपरम् ; अन्यथाऽनेकशास्त्रविरोधात् ॥ ५३ ॥

**इति प्राणस्य वायुविशेषत्वम् ॥**

**प्राणोऽक्षं प्राणशब्दात् उपकरणतया क्षेत्रिणश्चेत्ययुक्तं**
**शब्दैक्यं हैकजात्यं व्यभिचरति न च प्राणताऽक्षेषु मुख्या ।**
**देहस्यानक्षभावेऽप्युपकृतिरधिका तत्समाऽक्षोक्त्यदृष्टिः**
**न प्राणे सात्त्विकाहंकरणविकृतिता, लक्षणं तद्धि तेषाम् ॥ ५४ ॥**

अत्र कश्चिदाह-'प्राणसंवादादिष्विन्द्रियैस्सह प्राणः पठित ; **प्राणशब्दश्च** साधारणः प्रयुक्तः ; क्षेत्रज्ञो(चेतनो)पकरणत्वं च समानम् ; अतः प्राण इन्द्रियम्' इति। एतदनूद्य परिहरति – **प्राण** इति। सहपाठमात्रं न तज्जातीयत्वसाधकमित्यभिप्राय। प्राणशब्दवाच्यत्वं नेन्द्रियत्वसाधकमित्याह—**शब्दैक्य-मिति** । अन्यथा अनेकार्थशब्दलोपप्रसङ्ग इति भाव। अत्र च प्राणशब्द. कचिन्मुख्य. कचित् भाक्त.। एवमप्येकशब्दप्रयोगमात्रात् साजात्ये वैजात्यमेव जगति लुप्येतेत्यभिप्रायेणाह — **न चेति**। क्षेत्रज्ञोप-करणत्वस्य व्यभिचारमाह— **देहस्येति** । क्षेत्रज्ञोपकारकत्वं देहे [भूयसा] संदृश्यते ; न तत्रेन्द्रियत्व-

---

பூ॰— प्राणोऽक्षमिति। ननु 'अन्यायश्चानेकार्थत्वम्' इ कार्यमित्याशङ्क्येन्द्रियाणां प्राणशब्दवाच्यत्वं नास्तीत्याह—अत्र च प्राणशब्द इति। धर्मोभ ॥ ५४ ॥

ஸேவா— प्राणशब्दवाच्यत्वमिति। 'सप्त इमे लोका येषु चरन्ति प्राणाः' 'सप्त वै शीर्षण्याः प्राणाः' इत्यादिप्रयोगात् इन्द्रियाणां प्राणशब्दवाच्यत्वं द्रष्टव्यम्। अत्र चेति। प्राणशब्दप्रयोग[illegible]

ஸ்ரீ— प्राण इति। चक्षुरादिवत् प्राणस्यापि स्यादिन्द्रियत्वम्, प्राणश[illegible]त्वात् जीवोप[illegible] च, प्राणसंवादादौ इन्द्रियैः स्पर्धमानतया समानकार्य[illegible]मिति। हेतुमाह शब्दैक्य-मिति। ऐकजात्यं व्यभिचरति=अर्थानामेकजातिकत्वं विनाऽपि भवति। यथा गोशब्दः भूकिरणे-न्द्रियप्राणिविशेषादिषु नन्वनेकार्थकल्पने गौरवमिति चेन्न, किञ्चिद्विशेषापन्नवायुरूपप्राण एव शक्तिः, अक्षेषु प्राणश[illegible]र्थता न मुख्या। तदुक्तं श्रुत्या, "तस्यैते सर्वे रूपमभवन् तेन प्राणा इत्या-ख्यायन्ते" इति। जी[illegible]कत्वरूपं लक्षणं देहेऽतिव्याप्तमित्याह देहस्येति। अनक्षभावेऽपि— इन्द्रियत्वाभावेऽपि। ननु देहे इन्द्रियशब्दप्रयोगादृष्टिरनिन्द्रियत्वसाधिकेत्यत्राह तत्समेति। अक्षत्वोक्त्यदृष्टिः देहेन समा प्राणस्यापीत्यर्थः। अन्यूनानतिप्रसक्तमिन्द्रियलक्षणं दर्शयित्वाऽपि इन्द्रियत्वाभावं प्राणे दर्शयति नेति। यद्यपि तार्किकादिसर्वसाधारण्येन प्राणेन्द्रियभेदकाकारो वक्तव्यश्चेत्, अन्य एव निरूप्यः। अथापि प्रामाणिकत्वाल्लाघवादेतदादरणम्।

अत्र चेति—प्राणवायिन्द्रियमध्ये इत्यर्थः। भूयसा—भूम्ना। तार्किकरक्षावाक्यमनूद्य निर-

मिष्यते। **इन्द्रिय**शब्दप्रयोगाभावात् तत्रानिन्द्रियत्वमित्यत्राह—**तत्समे**ति। इन्द्रियत्वोक्तेरदर्शनं देहे प्राणेऽपि समम्। अतः प्राणोऽपि नेन्द्रियमित्यर्थः। इन्द्रियलक्षणनिवृत्त्या च प्राणे तच्छब्दवाच्यत्वनिवृत्तिरित्यभिप्रायेणाह **न प्राणे** इति। सात्त्विकाहङ्कारोपादानकत्वमेवेन्द्रियलक्षणम्, परोक्तलक्षणानुपपत्तेरित्यभिप्रायेणाह **लक्षण**मिति। यत्तु, "शरीरयोगे सत्येव साक्षात्प्रमितिसाधनमिन्द्रियम्" इति, अत्र कर्मेन्द्रियेष्वव्याप्तिस्तावदास्ताम्; स्वेदादिशैत्याभिव्यञ्जकव्यजनवातादेरुक्तलक्षणयोगादतिव्याप्तिर्दुर्वारा। शरीरसंयुक्तमतीन्द्रियमिति विशेषणेऽपि चाक्षुषतेजःकणानां चूर्णविक्षेपवत् विसर्पे मूलस्कन्धस्य प्रमितिसाधन(क)त्वाभावात्, अग्रस्कन्धस्य शरीरसंयुक्तत्वायोगात् नोभयत्राप्येतद्विशिष्टमिन्द्रियलक्षणमस्ति। परम्परया संबन्धस्त्वतिप्रसञ्जकः। आ द्रष्टुः आ चन्द्रमसश्च कश्चिच्चक्षुरिन्द्रियावयवी तदानीमेव निष्पन्न इत्यत्र न किंचित् प्रमाणमन्यत्र संप्रदायात्। इन्द्रियदोषवत् इन्द्रियगुणाश्च शरीरसंयुक्ताः साक्षात्प्रमितिसाधकास्सन्ति; तैश्चानैकान्त्यं सुवचम्। शुद्धेष्वपि परोक्तलक्षणेषु न प्रस्तुते तत्सिद्धिरिति ॥५४

**इति प्राणस्यानिन्द्रियत्वम् ॥** अथ तेजोनिरूपणम्।

**प्राणापानाख्यभस्त्रारभसविसृमरः प्राप्य वैश्वानराख्यां**
**मध्येदेहं हुताशो वसति जलनिधावौर्ववत् सर्वभक्षः।**
**तत्तद्विद्यासु वेद्यस्त्वन इव हि परज्योतिषः सोऽपि रूपं**
**नात्मानौ तौ जडत्वात् जनिविलयमुखैर्भेदकण्ठोक्तिभिश्च ॥ ५५ ॥**

---

(आनन्द)— चेत्यर्थः। चः त्वर्थः। अव्याप्तिस्तावत्—…………………… इन्द्रियाणामेवेदं लक्षणमिति चेन्न—सामान्यलक्षणानुक्तौ विशेषकथनस्यानुचितत्वात् सामान्यलक्षणं च असदुक्तव्यतिरिक्तं न किञ्चिद्वक्तुं शक्यत इति भावः। अतिप्रसञ्जक इति। परम्परासम्बद्धस्य साक्षात् प्रमितिकारणत्वे कुड्यादिव्यवहितस्यापि प्रत्यक्षत्वापत्तिरिति भावः। शरीरसंयुक्ता इन्द्रियदोषाः पैत्त्योद्रेकादयः। शरीरसंयुक्तेन्द्रियगुणाः धातुसाम्य[न्यून?]त्वोद्रेकादयः ॥ ५४ ॥

(श्री)— स्यति यत्त्वित्यादिना। शरीरेऽतिव्याप्तिवारणाय शरीरयोगे सतीति। साक्षात्प्रमितिर्नाम साक्षात्कारः। अवयवातिरिक्तावयव्यंगीकारित्वात् तार्किकस्य आद्रष्टुरित्यादि। द्रष्टारमारभ्य चन्द्रपर्यन्तमित्यर्थः। इन्द्रियदोषवदिति। दोषस्य भ्रमात्मकसाक्षात्कारजनकत्वं गुणस्य प्रमात्मकतज्जनकत्वं च तदिष्टमिति भावः। 'न प्रस्तुते तत्सिद्धिः' इति। इन्द्रियलक्षणानि निर्दुष्टानि सन्ति तार्किकोक्तानि। तदादरणेऽपि प्रस्तुते प्राणे तदेकस्यापीन्द्रियलक्षणस्येन्द्रियत्वस्य वा न सिद्धिरित्यर्थः। तार्किकरक्षोक्तं शरीरयोग इत्यादिलक्षणं प्राणेऽपि भवतीति प्राणस्येन्द्रियत्वशंका कृता तल्लक्षणदुष्टत्वोपपादनेन निरस्ता; निर्दुष्टलक्षणवादिनस्तार्किका अपि न प्राणस्येन्द्रियत्वमिच्छन्तीति भावः ॥ ५४ ॥

अथ तेजसि विशेषविचारं वर्तयिष्यन् मुख्यप्राणस्येव उदर्यवह्नेरपि पाञ्चभौतिकदेहोपादानभूतभूतांशातिरिक्ततया देहे स्थित्या जीवोपकारकत्वमाह प्राणापानेति। प्राणापानौ द्वौ वायू भस्त्रारभसौ कर्मारकुण्डाङ्गारज्वालकभस्त्रावायुतुल्यौ देहभस्त्राजातौ। रभसशब्दो वेगमुखेन वेगाधिकद्रव्यपरः। ताभ्यां विसृमरः—परितः प्रसरणशीलः हुताशः अग्निः देहमध्ये आमरणमस्ति, समुद्रे वडवाग्निवत्। सर्वभक्षः—भक्ष्यमाणसर्वपचनपटुः। तस्योदर्यस्य वैश्वानर इत्याख्या। प्राणेन्द्रियवत् देहे स्थित्वा जीवोपकारकत्वरूपोऽतिशयः प्रकरणसिद्धः। अन्यमपि प्राणस्येव स्थितं विशेषमाह तत्तदिति। अत्र प्राणविद्यायां प्राणः वैश्वानरविद्यायामग्निश्चोपास्य इति लिखन्ति। ज्येष्ठश्रेष्ठप्राण-

वायोरनन्तरं वह्निनिरूपणे प्राप्ते प्राणसङ्गत्या वैश्वानरं तावच्छिक्षयति प्राणेति ॥ 'तस्य मध्ये महानग्निः' इत्यादिकमिहानुसन्धेयम् । वारिनिर्वाप्यत्वनिवृत्त्यै वाडवनिदर्शनम् । प्राणवैश्वानरविचारस्य प्रधानशास्त्रार्थोपयोगमभिप्रेत्याह तत्त्वदिति । अनः — प्राणः । 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इत्यारभ्य, 'इदं वाव तत् यदिदमस्मिन्नन्तः पुरुषे ज्योतिः' इत्याद्यामनन्ति छन्दोगाः । प्रसङ्गात् नास्तिकयोगिजननिरासाय द्वितीयसरवक्तव्यमुपक्षिपति —नात्मानाविति । अजडो नित्यो भूतभौतिकविलक्षणश्चात्मा ज्ञापयिष्यते ॥ ५५ ॥ इति वैश्वानरस्याग्निविकारत्वापरमात्मत्वे

धर्मो भाति प्रभैका, बहलविरलताद्यत्र दृष्टानुसारात्,
सा दीपांशा विशीर्णा इति यदि, बहुधा कल्पनागौरवादिः ।
रत्नादीनां स्थिराणां विशरणविहतेः निष्प्रभत्वादि च स्यात्
तेजस्तत् सप्रभाकं तिमिरहरतया साऽपि तेजोविशेषः ॥ ५६ ॥

---

टिप्पणी — 'तस्य मध्ये वह्निशिखा' इत्यादिश्रुतिर्जीवविषयत्वेन यद्यपि (तैत्तिरीयकूटनारायणभाष्यमात्रे ?) व्याख्याता; तथापि जाठराग्निविषयत्वेन स्फुटप्रतीतिकत्वात् तद्विषयैवेयमिति भावः । जाठराग्निविषयैव तु श्रुतिः—"अयमग्निर्वैश्वानरो येनेदमन्नं पच्यते" इत्यादिर्द्रष्टव्या ॥ ५५ ॥

श्री — विद्यायां प्राणस्योपास्यत्वेऽपि परमात्मशरीरत्वं न तत्रोपास्याकारः । एवं वैश्वानरविद्यायां वैश्वानरपदं विश्वान् नरान् नयतीति व्युत्पत्त्या साक्षात् परमात्मवाचित्वात् नोदर्याग्निपरम् । तत्राग्निपदे परं विवादोऽस्ति, साक्षाद्वा जाठराग्निशरीरकतया वा परमात्मपरत्वमिति । अस्त्वग्निशरीरकत्वं तत्रापि । अथाप्याचार्योक्तरीत्या न सा वैश्वानरविद्या; किं तु कौक्षेयज्योतिर्विद्या । ज्योतिरधिकरणं द्रष्टव्यम् । तत्र जाठराग्निशरीरकत्वेनोपासनं चक्षुष्यत्वादिक्षुद्रफलकमुक्तम् । सः—हुताशः (तत् कौक्षेयज्योतिः) अन इव—प्राण इव, परज्योतिषः, परो दिवो ज्योतिरित्युक्तस्य परमात्मनः रूपम्—शरीरतयोपास्यः । अनस्य—प्राणस्य शरीरतयोपास्यत्वं कुत्रेति चेत्—प्रतर्दनविद्यायाम् । इन्द्रप्राणोभयशरीरकत्वेन परमात्मोपासनात् । ज्योतिरधिकरणानन्तराधिकरणे तत् स्पष्टम् । ननु प्राणो जीवोपकारक इति किम्, तस्यैव जीवत्वे को दोषः इति कश्चित् । जाठराग्निशमने मरणदर्शनात् तथैव श्रुतेश्च सोऽग्निरेव जीवः स्यादिति चान्यः । अस्तु वा जीव एव प्राणरूपेण विहृत इति, जाठररूपेण परमात्मैव विहृत इति च । अहं वैश्वानरो भूत्वेति विशिष्य कथनाच्च । तथा च प्राणोऽस्मीत्यत्र शरीरात्मभावोपकरणोपकरणिभावादिकं विना प्राणाभिन्नत्वेनैवेन्द्रोपासनम्, कौक्षेयज्योतिर्विद्यायां वैश्वानराभिन्नत्वेनैव परमात्मन उपासनञ्च सुकरमिति शंकायां चतुर्थपादः प्रसक्त इति प्रसंगादित्यस्य भावः । मुखेरिति पदेन आत्मप्रेर्यत्वतदनुगन्तृत्वादि गरिमदः ॥ ५५ ॥

वैश्वानराख्यविशेषं प्राणसाहित्यात् प्रथमं विचार्य प्रभारूपतेजोविशेषं विचारयति धर्म इति । प्रभाया धर्मत्वमेकत्वं च प्रत्यक्षसिद्धम् । "एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा", "भास्करेण प्रभा यथा" इत्यादिमानसिद्धश्च । एकत्वञ्चाऽऽमूलाग्रस्थितायाः नानाविशीर्णावयवरूपत्वाभावः । अतो न सहस्रभानुत्वादिविरोधः । मूलाग्रयोर्भेदसाधकधर्मान् अन्यथयति बहलेति । एकस्मिन्नेव दीपे मूलाग्रभेदेन स्थूलत्वकृशत्वादि दृष्टम्, तद्वत् प्रभायामपि मूलाग्रभेदेन बहलत्वादिकं भवितुमर्हति । दीपस्यांशा एव विशीर्णाः क्रमेणोपरितनदेशं यान्ति, तदा मूलेऽन्ये विशीर्णांशा निष्क्रामन्तीति पक्षे, अदृष्टविशरणादिकल्पनैव दोषः । कल्पनाधिक्यात् गौरवम् । आदिना शास्त्रविरोधोक्तिः । दीपस्य

अथात्र धर्मधर्मिणो सजातीयत्वे निदर्शनार्थं लोकबुद्ध्यनुगुण भाष्यस्थं प्रभानिरूपण प्रदर्शयति–धर्मे इति ॥ प्रदीपादिधर्मभूता तद्वत् स्वयमप्येका विष्वक्प्रसृता सूक्ष्माशुक(कादि)न्यायेन सुघटितसङ्घातलक्षणा प्रभा सर्वेषा भाति। तत्र मूलाग्रयोर्बहुलत्वविरलत्वोष्णत्वानुष्णत्वाद्युपलम्भ तत्तद्व्यवस्थान्तरेष्विव नैकत्वबाधक इत्यभिप्रायेणाह बहलेति। अन्यथा स्थूलमूलत्वादिना दीपादिष्वपि नैकत्व सिध्येदिति भाव । अवयव विशरणवादमनूद्य प्रतिवक्ति— सेति। विशरणक्रिया, तत्स्वभावाना वेगवता तेजोवयवानामनुपशान्तवेगानामेव सभूय किञ्चिदुद्गमनेन दीपाद्यवयव्यारम्भणम्, घनीभूतानामनन्तरक्षणे विशरणम्, ऊर्ध्वगमनशीलाना च तेषा तत्तद्देशतश्च तिर्यगूर्ध्वमधश्च प्रसरणम्, तादृशप्रसरणहेतुवैचित्र्यम्, बहलविरलत्वादिसिद्ध्यै केषाचिद्वेगातिशय इत्याद्यनुपलब्धविविधार्थकल्पनागौरवं प्रसज्यते। आदिशब्देन सर्व लोकोपलम्भशास्त्रविरोधसग्रह । बाधकान्तरमाह — रत्नादीनामिति। प्रत्यभिज्ञाविषयप्रधानोदाहरणतया प्रसिद्धेषु स्थिरतरेषु रत्नादिषु प्रतिक्षणविनाशोऽवयवविशरण च न कल्पयितु शक्यम्। अतस्तेषु त्वदुक्तप्रकारेण प्रभोत्पत्तिकल्पनायोगान्निष्प्रभत्वप्रसङ्ग इत्यर्थ । परिशेषत स्वाभिमतमाह — तेज इति। उक्तानुपपत्त्या दीपादितेज प्रभाविशिष्टमेवोत्पद्यते इत्यर्थ । ननु प्रभाद्रव्य न तत्त्वपङ्क्तौ गण्यते, तद्बहिर्भावश्चापसिद्धान्त । अन्तर्भावश्च न वायुपर्यन्तेषु, रूपवत्त्वात्। न तोयपृथिव्यो, रसगन्धादि-

---

पुरु— "एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा। परस्य ब्रह्मण शक्ति तथेदमखिल जगत्॥" इत्यादिविरोध [illegible] शेषणत्वे दृष्टान्ततया उपादानात्। वह्निप्रभया वह्न्यपृथक्सिद्धिविशेषणत्वमेव विवक्षितमि [illegible] स्फुटोपलम्भश्च। भाष्यतो(?)गतिप्रतिहति तन्मूलबहुलीभावादिक हि पासूनामिव विशीर्णदीपावयवानामेव युज्यत इति भाव ॥ ५६ ॥

टिप्पणी— प्रधानोदाहरणतयेति। रत्नादिप्रत्यभिज्ञाया दीपादिप्रत्यभिज्ञावत् प्रत्यक्षसिद्धसामग्र्युत्पत्ति[illegible]नाशादिना भ्रान्तित्वानौचित्यात् प्राधान्यम् ॥ ५६ ॥

श्री— विशरणेऽपि दीपान्तराणा स्नेहादिना प्रतिक्षणोत्पत्तिवत् प्रतिक्षणरत्नोत्पादकसामग्र्यभावेन तत्र विशरण दुर्वचम्। विशीर्णांशानामेव प्रभाशब्दार्थत्वे तत्र तदभावात् रत्ना[illegible] निष्प्रभत्वापत्ति । विशीर्यमाणावयवरूपप्रभास्वीकारे च भाष्योक्तरीत्या क्रमेण रत्नादिलोप स्य [illegible]। मलप्रक्षालनाद्य मणौ प्रभा कथम्, किं तदैव विशरणारम्भ इत्यपि चिन्त्यम्। अथ निष्प्र[illegible]यत्र आदिशब्दार्थ । अतो दीपरत्नादिरूप तेज स्वातिरिक्तप्रभाद्रव्यविशिष्टम्। तद्द्रव्य तु [illegible] तत्त्वेऽन्तर्भवतीति चेत्, तेजस्येव। चेतनयो शेषशेषिभावाधाराधेयभाववत् तेजसोर्गुणप्रधान[illegible]। तत्र मान तु प्रभा तेज तिमिरहरत्वात्-भास्वररूपवत्त्वात्, रसशून्यत्वे सति रूपवत्त्वादित्या[illegible] न च तेजस्त्यतिमिरहरत्वयोरैक्यात् कथ हेतुसाध्यभाव इति शक्यम् रत्ने भर्जनकपालव [illegible]पि तेजस्त्वसत्त्वेन तिमिरहरत्वाभावेन [illegible]मेव्यत। तिमिर[illegible]योजकधर्मश्च भास्वररूपवत्त्वम्। श्लोके तेज इत्येता[illegible]ति [illegible]ऽपि विना[illegible] प्रयोग किं नाम प्रभा[illegible]मिति प्रश्ने सर्वोचविकासरूपधर्मिन्यायपृता [illegible]पारप्रदर्शनेनैवोत्तरस्य कार्यं [illegible]दिति श्लोकार्थ ।

निदर्शनार्थमिति। अस्य प्रभानिरूपणमित्यत्रान्वय । न तु प्रदर्शयतीत्यत्र। धर्मधर्मिभूतज्ञान[illegible]द्वयनिदर्शनार्थतया भाष्ये स्थित यत प्रभानिरूपणम्, तदत्र प्रदर्शयत इत्यर्थ । प्रभाविशिष्टमेवो[illegible]ति धर्मि स्वोत्पत्तिकालप्रभृति प्रभाविशिष्टमेव, तदर्थं सामग्र्यन्तरापेक्षा नेति ॥ ५६ ॥

रहितत्वात् । न तेजसि, तद्धर्मतयाऽभ्युपगमात् । अतो विशीर्णतेजोतिरिक्ता प्रभा नास्तीत्यत्राह— **तिमिरहरतयेति** । तिमिरहरत्वं तेजस्त्वमात्रे हेतुः । विशेषशब्दस्तु प्रतीतिसिद्धावान्तरवैषम्यव्यवत्यर्थः । तिमिरहरत्वं चात्र भास्वररूपविशिष्टतया; न तेजस्त्वमात्रेण । अतो न साध्याविशेषशङ्का । एवं नीरसत्वे सति रूपवत्त्वादित्यपि हेतुः ॥ ५६ ॥ **इति प्रभायाः प्रभावदवयवातिरेकतेजस्त्वे ॥**

**भाष्ये भास्वत्प्रभादौ प्रतिहतिबहलीभावपूर्वं यदुक्तं**
**तेन स्रोतस्समाधिं परमतनयतः प्राहुरेके प्रभायाम् ।**
**वस्तुन्यस्ते विकल्पे स्फुटविघटनयोर्वक्तुराप्तस्य वाचो-**
**स्तात्पर्यं तर्कमानानुगुणमधिगुणैश्चिन्त्यमन्तेवसद्भिः ॥ ५७ ॥**

*अत्र ग्रन्थान्तरसिद्धमतान्तरमाह*—**भाष्य** *इति* ॥ करतलेनाहिमकररश्मीनां गतिप्रतिहतिः । तथै(यै)व तत्र बहलतया स्फुटोपलम्भश्चाभाष्यत । प्रतिबिम्बनिरूपणे च नयनरश्मीनां दर्पणे प्रतिहतिरुक्ता । तदेतत् प्रभाप्रभावतां सहोत्पत्तिनाशपक्षे नोपपद्यते । दृश्यते च रत्नप्रभादेरपि प्रतिघातकसन्निधौ सङ्कोचः तदपगमे विकासश्च । अतः पाञ्चभौतिकस्य रत्नादेः पार्थिवाद्यंशेन दृढावस्थितस्यापि तेजोंऽशेन गन्धादि-न्यायवता (न्यायतो?) विशरणप्रसरणादिकं युज्यते । आतपवारणादिवृत्तान्तश्च वर्षवारणादिन्यायात् किरणगतितत्प्रतिघातावनुमापयति । निवृत्ते चाऽऽतपे क्षितिजलयोरौष्ण्योपलम्भात् तेजोंशविशरणसंक्रमणे गम्येते । प्रभातद्वतोराश्रयाश्रयित्वादिभाषणं तु परसम्मत्यैव तन्मतनिदर्शनम् । प्रभा हि प्रदीपादिना सह जनिध्वंसिनीति केचित् । तथा हि साङ्ख्या इन्द्रियवृत्तिनिदर्शनतया आहुः—

"दीपप्रभा यथा तस्मिन् विनश्यति विनश्यति । तथा बहिर्गताऽप्येषा मूलच्छेदात् विनश्यति ॥" इति ॥

---

*आनन्द*— भाष्यवाक्ययोस्तात्पर्यवर्णनेन विरोधं शमयति—प्रभातद्वतोरिति । परसंमतिमेवाह प्रभा हीति । मूलच्छेदात्=आश्रयनाशात् । श्लोके स्रोतस्समाधिः प्रवाहरीतिः, विशरणरूपतेत्यर्थः ॥५७॥

*श्री*— एवं प्रभाप्रभावतोर्भेदः सहोत्पत्त्यादि च भाष्यं प्रदर्श्य निरूपितम् । तदुपरितनभाष्यवाक्य-मादाय वर्ण्यमानं मतान्तरमथ दर्शयति भाष्य इति । भास्वत्प्रभादौ—रविकरादौ । आदिना नायन-रश्मिग्रहणम् । प्रतिहतिबहुलीभावपूर्वमिति । प्रतिघातबाहुल्यादिकमित्यर्थः । आदिपर्यायिपूर्व-पदग्राहितं तदनन्तरमुपलभ्यमानत्वम्, "करतलप्रतिहतगतयो हि रश्मयो बहुलाः स्वयमेव स्फुटतर-मुपलभ्यन्ते" इति, "दर्पणादिप्रतिहतगतयो हि नायनरश्मयः निजमुखादि गृह्णन्ति" इति च सूक्ती । प्रतिहत्यादिकं यत् उक्तम्—रसानुदुनाम । तेन—वचनहेतुना प्रभायां स्रोतस्समाधिं—स्रोतसः प्रतिघातः प्रतिनिवृत्तिर्विशरणश्च यथा तथा सर्वं परमतनयतः—पाञ्चभौतिकरत्नदहनगततेजोंश-प्रसरणन्यायेनाहुः । प्रभामात्रप्रसरणपक्षं परित्यज्य तेजोविशरणप्रसरणादिकमेवाऽऽहुरित्यर्थः ।

अभाष्यत—भाष्ये कथितः । दृश्यते चेत्यादिना परमतनयत इत्यस्योपपादनम् । गन्धादीति । सगन्धपुष्पांशविशरणं हीष्टम्, तद्वत् तेजोविशरणमस्त्येवेति । पूर्वश्लोकोदाहृतभाष्यगतिं निर्वे-हति प्रभातद्वतोरिति । परसंमत्यैवेति । "गुणाद्वाऽऽलोकवत्" इति सूत्रे शांकरभाष्योपपादित-मनुसृत्येत्यर्थः । तच्छङ्काशंकापरिहारे तन्मतनिदर्शनमेव हि युक्तमिति भावः । शांकरे तथोक्तेश्च सांख्यवचनं गमकमित्याह तथा हि सांख्या इति । एषा—इन्द्रियरश्मिः । तथा चैका प्रभा बहुदूरं

ननु विरुद्धभाषणादुभयं त्यक्त्वा सौगतगतिरिह संग्राह्येत्यत्राह—**वस्तुनी**ति । न तावदिह सिद्धे वस्तुनि विकल्पः । न च वाक्ययोरैकार्थ्यं क्लिष्टगत्या कल्प्यम्; विरोधस्फौठ्यात् । आप्तवाक्ये च नोभयत्यागः । सहजक्षणिकपुञ्जद्वयपक्षस्य क्षणभङ्गनिरासेनैव निरस्तत्वाच्च । अतोऽन्यतरवाक्यस्य अन्यपरत्वे प्राप्ते प्रमाणतर्कानुगुणं परमार्थतात्पर्यं प्रज्ञाशालिभिश्छात्रैः प्रतिबोद्धव्यम् (मिति) ॥ ५७ ॥

इति प्रभाविषयभाष्यग्रन्थद्वयप्रस्तावः ।

**प्राच्ये स्नेहादिनाशे चरम इव दृष्टोऽनन्तरं दीपनाशः**
**सामग्र्यन्याऽन्यकार्यं जनयति च न चानेकदीपप्रतीतिः ।**
**साम्यादेः स्यात्तु बुद्धिः प्रवहणभिदुराः सप्रभास्तत् प्रदीपाः**
**निर्बाधा भास्करादौ प्रथयति नियतं प्रत्यभिज्ञा स्थिरत्वम् ॥ ५८ ॥**

ननु दीपादीनां स्थिरतया गृहीतानामपि क्षिप्रविनाशित्वमभ्युपगतम् । तच्चावयवविशरणपक्ष एवोपपद्यते । तथाऽऽहुः—"अवयवविशरणलिङ्गजबोधसहायेन चक्षुषा भेदम् । ज्वालेषु (ज्वालासु) निर्णयामः....॥" इति । पक्षान्तरेषु तु प्रत्यभिज्ञा दुर्बाधेत्यत्राह—**प्राच्ये** इति ॥ दाह्यविनाशानन्तरं वह्निनाश इति चरमदीपादिषु दृष्टम्; इष्टं च सर्वेषाम् । प्रतिक्षणं च [दीप]दशादिप्रक्षयो दीपादिषु

---

*गु*— प्राच्य इति । स्वानन्तरभाविस्वजनकदीपनाशवानिति । स्वानन्तरभाविदीपनाशवानित्युक्ते यदृच्छासिद्धस्वानन्तरभाव्यन्यदीपनाशवत्त्वेनार्थान्तरता स्यादिति स्वजनकेति दीपविशेषणम् । प्रभया सहोत्पत्तिपक्षेऽपीति । *विशरणेन विनाऽप्याशुतरविनाशकल्पनमस्तीति भावः* ॥ ५८ ॥

*श्री*— प्रसृता, न तु तत्र दीपतेजोगतिरिति न, तेजसो विशरणप्रतिघातप्रतिनिवर्तनादिसंभवादिति ॥ उत्तरार्धमवतारयति नन्विति । वस्तुनि विकल्पे = विरुद्धविविधपक्षे अस्ते ; क्रियाविकल्पस्यैव स्वीकारात् वस्तुनि विकल्पायोगात् एकतरपक्षस्यैव ग्राह्यत्वे सतीत्यर्थः । स्फुटविघटनयोः = स्पष्टविरोधयोः । सत्तर्कप्रमाणानुगुणं तात्पर्यम् = सत्तर्कप्रमाणानुकूलार्थविशेषपरत्वं साध्यम् । कोऽसावर्थ इति चेत्, तन्निर्णयोऽन्तेवासिकार्यः । न तु द्वयमपि परित्यज्य सौगतोक्तं ग्राह्यमिति । एवं तात्पर्यमित्यस्य पूर्वश्लोकोक्तार्थपरत्वमित्यप्यर्थः । प्रभायाः किञ्चिदाश्रितत्वदूरप्रसारित्वादिकमपि स्वसंमतमेवेति भावः । आतपवारणादितः प्रभाप्रतिघातः उपर्यप्रसरणमप्यस्तु तेन प्रभाया एकत्वं कथं बाध्येत । क्षितिजलयोरौष्ण्योपलम्भेन तेजोंशविशरणमस्तु । न हि निष्प्रभतेजोंशानां विशरणमेव न भवतीति वयं ब्रूमः । सप्रभाकास्तेजोंशा अपि दाह्यद्रव्यविशरणाद्वौ विशीर्यन्त एव । मणिद्युमणिप्रभृतीनामिव तैलवर्त्यादिसामग्र्यनुगुणोच्छ्रायस्य दीपस्याप्यविशीर्णत्वं सप्रभाकत्वञ्च स्वीकर्तुमुचितमिति । शिष्टमनन्तरश्लोके । अधिगुणेरिति । 'याच्ञा मोघा वरमधिगुणे' इति महाकविप्रयोगः॥५७॥

अथ क्षिप्रविनाशित्वादेव दीपे विशरणमंगीकार्यमिति शंकां परिहरति प्राच्ये इति । नाशसामग्रीसद्भावान्नाशो भवति; तदर्थं विशरणमनपेक्षितमिति भावः । अवयवविशरणेति । अवयवविशरणं दृश्यमानम् । तेन लिङ्गेन ज्वालाभेदोऽनुमीयते । न केवलमनुमितिः; तत्सहकृतं चक्षुः भेदप्रत्यक्षमपि जनयतीत्यर्थः । यद्वा अवयवविशरणविषयको यो लिङ्गजबोधः तत्सहायकेनेत्यर्थः। दीपसमीपे परितो दीपांशादर्शनमेव विशरणे लिङ्गम् । स्वयमपि "सावधानं प्रपश्यद्भिश्च" इत्यादिना दृष्ट इत्यन्तेन वाक्येन भेददर्शनमनुमंस्यते । ज्वालेष्विति । ज्वालशब्दोऽपि साधुः पुल्लिङ्गः । दुर्बाधेति । वस्तुस्थिरत्वमेव स्यादित्यर्थः । दीपदशेत्यत्र दीपशब्दो न स्यात् । दीपप्रश्नयस्य

प्रत्यक्षः । प्रयोगश्च—प्राच्यस्नेहदशादिनाशः स्वानन्तरभाविस्वजनकदीपनाशवान् दीपारम्भकस्नेहादिनाशः

---

आनन्द— तथाचेति । प्रथमसामग्र्या अपि कार्यानुत्पादकत्वे कारणं विना स्वभावादेव सर्वकार्योत्पत्तिवादी चार्वाको विजयेतेति भावः । तर्हि अनुक्षणं दीपोत्पत्तिविनाशाभ्यां दीपसन्तानाङ्गीकारे सेयं दीपज्वालेति प्रत्यभिज्ञा कथमुपपद्यत इत्यत्राह श्लोके—साम्यादेरिति ॥ ५८ ॥

भा— साध्यत्वात् अप्रत्यक्षत्वात् । व्याख्यायां तु पठ्यते । दीपसंबन्धिदशेत्यर्थोऽप्यनपेक्षितः; दीपादिष्विति पृथक्पदसत्त्वाच्च । दशा—वर्तिः । उक्तमेवार्थमनुमानाभिनयेन दर्शयति प्रयोगश्चेति । स्वानन्तरभावीति नाशविशेषणम् । स्वजनकेति दीपविशेषणम् । वर्तिस्नेहादितो दीपो जायते; दीपात् वर्त्यादिनाशः, नाशात् तस्मात् दीपनाश इति क्रमः । अतो वर्तिनाशजनकत्वं दीपस्य । भूतभवद्भविष्यत्किञ्चिद्दीपनाशमादाय सिद्धसाधनं स्यादिति स्वानन्तरभावीत्युक्तम् । अनन्तरभाविं यादृच्छिकदीपनाशमादायार्थान्तरवारणाय स्वजनकत्वनिवेशः । दीपनाशजनकत्वमेव वा साध्यम् । दीपानारम्भकस्नेहनाशे व्यभिचारवारणाय दीपारम्भकत्वं स्नेहविशेषणम् । इदमेव तत्त्वटीकायां विशिष्टेति हेतुघटकपदविवक्षितम् । श्लोकपूर्वपादार्थस्तु—चरमे—अन्त्ये स्नेहादिनाश इव प्राच्ये—प्रथमादौ स्नेहादिनाशेऽपि दीपनाशोऽस्त्येवेति । नाशानुमानेनैव दीपभेदः प्रतिफलदीपोत्पत्त्यनुमानेनापि साध्य इत्याह सामग्रीति । द्वितीयपादवाक्यार्थद्वयं मिलितं प्रतिक्षणदीपनाशे हेतुः । समाग्रीति अन्या सामग्री च कार्यमन्यज्जनयतीत्यर्थः । जन्मोपपाद्य जातानेकदीपविषयप्रत्यक्षस्य इमे दीपा इत्यस्याभावात् दीपनाशानुमानमाह न चानेकेति । प्रत्यभिज्ञा कथमित्यत्राह साम्यादेरिति । आदिना भ्रान्तिमूलाविवेकपरिग्रहः । एतावदनुमानं प्रभायामपि तुल्यमिति दर्शयति प्रवाहणेति । प्रवाहरूपेण भावात् भिन्नभिन्नव्यक्तिरूपा इत्यर्थः । प्रत्यभिज्ञाबाधो दीपमात्रे इत्याह निर्बाधेति । अयं भावः—चक्षुर्मणिद्युमणिप्रभृतीनां तेजसां स्थिरत्वात् तत्प्रभा अपि स्थिराः । तेषां विशरणस्वीकारे शीघ्रविनाशापत्तेः । तत्र प्रभास्तावत् तद्धर्मभूतास्तदन्या एव । अत एव सहस्रभानुरित्यादिव्यवहारः । तासाञ्च प्रभाणां करतलप्रतिघातः प्रतिनिवर्तनं बहुलीभावश्च युज्यते । तावता तासां विशरणं नाङ्गीकार्यम्, छेदभेदादौ मानाभावात् । अत एव न्यायसिद्धाञ्जने छेदभेदाद्यवयवाभावात् निरवयवत्वं प्रान्त्योक्तमित्युक्तम् । चाक्षुषरश्मेर्दर्पणेन प्रतिघाते छेदाङ्गीकारे चक्षुषो विषयसंनिकर्षभङ्गात् मुखाद्यग्रहणापत्तिश्च । अतो भाष्यग्रन्थान्तराणां प्रभाविशरणे तात्पर्यं न भवति । दीपस्थले तदवयवविशरणं विना प्रभायामेव बाहुल्यवैरल्योपपादनात् पिण्डीभूतात् दीपादवयवविशरणं नेष्यत एव । सति वाय्वादिहेतौ तेजसां विशरणं भवन्न वार्यते । प्रतिक्षणप्रभोत्पत्तिपक्षे प्रतिघातप्रतिनिवर्तनादिकं प्रदीपप्रभायां कथमिति त्ववशिष्यते । तत्र दीपनिकटे प्रभाबाहुल्यादिवत् प्रतिघातस्थले अधिकप्रभोत्पत्तिः अन्यदा दीर्घविरलप्रभोत्पत्तिरिति व्यवस्था स्यात् । यद्वा बौद्धवत् क्षणिकत्वानिष्टेः क्रियावत् आतरविनाशमात्रेष्टेः प्रभा प्रतिहता निवृत्ता बहुलीभूता पश्चादेव स्वाश्रयदीपेन सह नश्यतीतीष्यताम् । अत एवाऽऽशुतरविनाशित्वरूपं क्षणिकत्वमित्युक्तं न्यायसिद्धाञ्जने । न च प्रभाया विशीर्णतेजःपुञ्जरूपत्वाभावे प्रभासंपर्कात् सूर्यकान्तादौ कथमग्न्युत्पत्तिरिति शंक्यम्; यथाप्रत्यक्षं तत्र सामग्रीकल्पनात्, यथा अयो-ग्राव-दाव-वंशादिषु संघर्षात् अग्न्युद्भवे । न च दिव्यम् अविन्धनं विद्युदादीत्युक्त्या सूर्यादेर्दिव्यस्यापि अविन्धनत्वक्षणिकत्वादिकमस्तीति दीपतुल्यत्वं शंक्यम्, जलस्य तेजोजन्यतया सर्वत्र तेजसि एवं कल्पनानुपपत्तेः । अतो मण्यादिवत् द्युमण्यादिकमपि स्थिरमेव तेज इति ॥

स्यात्, अन्त्यवत् इति। सावधानं प्रपश्यद्भिश्च प्रवाहवत् दीपो दृश्यते। दशाग्रमारभ्य तन्मूलपर्यन्तं प्रतिकल मन्योऽन्यो दीप प्रवर्तमानो निवर्तमानश्च दृष्ट। प्रयोगान्तरमभिप्रेत्याह—**सामग्रीति**। द्वितीयादिस्नेहादि सामग्री दीपजनिका, अविकलदीपजनकजातीयसमुदायत्वात् आद्यवत्। अन्यथा प्रथमाऽपि नोत्पादयेत्। तथा च जित चार्वाकैः। नन्वस्तु प्रतिक्षणदीपारम्भ, प्रतिक्षणविनाशस्तु कुतस्त्य ? इत्यत्र पूर्वानुमानसिद्धेऽपि युक्त्यन्तरबाध(?) माह **न चेति**। यदि द्वितीयादिक्षणे पूर्वपूर्वदीपनाशो न स्यात्, अनेकघटाद्युत्पत्तिनयात् युगपदनेकदीपोपलब्धि स्यात्। न चैवमस्ति। निगमयति—**साम्यादेरिति**। प्रभया सहोत्पत्तिपक्षेऽप्येव दीपादेराशुतरविनाशित्वं सिद्धम्। यत्र तु सामग्र्यनुवृत्त्यादिहेतुविरह, तत्र स्थिरत्वप्रसङ्गो न दोष इत्यभिप्रायेणाह **निर्बाधेति** ॥ ५८ ॥

**इति स्थिरास्थिरतेजोविभागः ॥** अथ सुवर्णादे पार्थिवत्वम्

**वर्णानां तादृशत्वादतिकठिनतया गौरवस्यापि भूम्ना**
**धात्रीभागैः प्रभूतैः स्फुटमिह घटिता धातवो हाटकाद्याः।**
**तादृक्त्वेऽपि स्फुरत्ताद्यनितरसुलभं किंचिदन्वीक्ष्य तज्ज्ञैः**
**व्याख्यातं तैजसत्व विधितदितरयोस्तन्त्रसौकर्यसिद्ध्यै ॥ ५९ ॥**

---

श्री—दीपमामूलाग्रं पश्यता जलवेणिकावत् प्रवहत्त्वं दृश्यमित्युक्त्वा, वर्त्यग्रमारभ्य वर्तिमूलपर्यन्तं दर्शनेऽपि दीपनाशादीपेत्यादौ सुग्रहावित्याह दशाग्रमिति। अविकल समुदायशब्दः सामग्रीपर.। पूर्वानुमानेति। प्राच्य इत्यादि प्रथमपादोक्तानुमानेत्यर्थः। युक्त्यन्तरबाधमाहेत्यत्र बाधपदं मा भूदिति विमृशन्ति। युक्त्यन्तरबाधमिति प्रतीकग्रहणेन अनुमानान्तरव्याप्तिमिति आनन्ददायिनी-व्याख्यानात् पाठो विचार्य इव। स्थितस्यार्थस्तु-प्रतिक्षणविनाशस्तु कुतस्त्य इति वाक्याभिमतस्य अविनाशस्य युक्त्यन्तरेण बाधमाहेति। अनेकघटाद्युत्पत्तिनयादिति। चक्रे आरोपितात् एकस्मात् मृत्पिण्डादनेकघटोत्पत्तिवत् दीपोत्पत्तिस्वीकारसिद्धेत्यर्थ·। तस्मात् प्रभातद्वतोर्धर्मधर्मिभावादिकं सर्वमुपपन्नमिति। सामग्र्यनुवृत्त्यादीति। सामग्रीनिवृत्तौ कार्यनिवृत्तिरित्यस्य सर्वथा बाधेऽपि सामग्र्यनुवृत्तौ कार्योत्पादस्यावश्यकतया युगपत्कार्यद्वयानुपलम्भात् पूर्वकार्यनाश· कल्प्य इत्यर्थ. ॥५८॥

तेजसि विशेषविचार वर्तयन् प्रथममुदर्यं प्राणसाहचर्यान्निरूप्य ततोऽग्नित्वसाम्यात् दीपादिके उपस्थिते तत्र प्रभाप्रभावद्रूपेण भेद तार्किकाद्यनुक्तं प्रतिपाद्य भौमदिव्योदर्याकरजभेदात् तेजोविषयचातुर्विध्ये तार्किकोक्ते आकरजस्य तैजसत्वमपाकरोति वर्णानामिति। हाटकाद्याः—सुवर्णाद्याः धातवः—लोहविशेषा· प्रभूतैर्धात्रीभागैः—अधिकैर्भूम्यंशैर्घटिता ; भौमद्रव्यहरिद्रादिवर्णसदृशवर्णवत्त्वात् अतिकठिनत्वात् अतिशयितगुरुत्वाश्रयत्वाच्च। केवलकठिनत्वं साधारणगुरुत्वञ्च जलेऽप्यस्तीति पार्थिवभागत्वसाधनायोगात् तद्व्यावृत्तये अतीति भूम्नेति च विशेषणम्। करकादिकाठिन्यं त्वस्थिरम्। एवञ्च पाञ्चभौतिकत्व पदार्थानामिति वदद्भिरपि पार्थिवत्व सुवर्णादीनामेष्टव्यम् ; तदंशभूयस्त्वात्। एवं स्थिते सुवर्णस्य तत्तदेकभूतोपादानकत्ववादी तार्किक एवा तैजसत्वं न वक्तुमर्हति। तर्हि कथं तैस्तथोक्तमित्यत्राह तादृक्त्वेऽपीति। स्फुरत्तादीति तैजससामान्यधर्मग्रहणम्। पार्थिवसाम्यवत् तैजससाम्यस्याप्युपलम्भात् तैजसं पार्थिवं वेति विमृश्य अनितरसुलभं—पृथिव्यादौ अविद्यमानं किञ्चित्—अनुच्छिद्यमानद्रवत्वञ्चान्वीक्ष्य—हेतूकृत्य तज्ज्ञै.—भूतविचार-

यत्तु हेमादेस्तैजसत्वमाहुः, 'त्रपुसीसलोहरजतसुवर्णानां तैजसानामग्निसंयोगात् द्रवत्वमद्भिस्सामान्यम्' (2-1 56) इति; तत् प्रागेव पाञ्चभौतिकत्वसाधनात् प्रत्युक्तम्। विशेषतश्च परोक्तेर्भङ्गाय ब्रूमः। **वर्णानामिति**। हेमरूप्यादिवर्णाः पार्थिवत्वाभिमताभ्रकशुक्त्यादिसमा दृश्यन्ते। अन्यथा कथं रत्नद्भ्रमः? काठिन्यं च तेष्वधिकम्। तच्च स्वतः पृथिव्या एव; "काठिन्यवान् यो बिभर्ति" इत्यादिदर्शनात्। गुरुत्वं च तेषु[तेषु] भूयिष्ठम्। तेजोमात्रे तु न तत्प्रसङ्गः। जले तु सदप्येतन्नैवं क्वचिदतिशयितम्। न चाऽऽप्यत्वं तेषामिच्छसि। तदिह पञ्चीकृतारब्धत्वप्रपञ्चे हेमादिषु पार्थिवांशः प्रभूत इति निश्चीयते। कथमन्यथा, "निष्के तु सत्यवचनम्" इत्यादि निरुध्येत॥ तथात्वे तैजसत्वस्मरणं कथमित्यत्राह-**तादृक्त्वेऽपीति**। **स्फुरत्तादि**—तेजस्समानं वर्णविशेषं स्वच्छशुद्धत्वं चेत्यर्थः। **तज्ज्ञैः**-यथाभूतवेदिभिः। **व्याख्यातं**—विशेषतः प्रकथितम्। किमर्थमित्यत्र तैजससमाख्यातेषु विधिनिषेधसाधारण्यसौकर्यार्थमित्याह—**त्विभ्नीति**॥ ननु सर्पिर्जतुमधूच्छिष्टानां पार्थिवानामत्यन्ततापलुप्तद्रवत्वं दृष्टम्; न तथा हेमादौ। ततस्तेषामपार्थिवत्वम्॥ मैवम्; एवमपि तोयान्यत्वस्य दुस्साधत्वात्। द्रवत्वविशेषात् तैजसत्वसाधने च न कश्चिद् दृष्टान्त।

---

[illegible]—वर्णानामिति। प्रागेव पाञ्चभौतिकत्वसाधनादिति। व्यष्टितत्त्वानां पञ्चीकृतभूतारब्धत्वस्थापनात् हेम्नोऽपि तत् सिद्धमित्यर्थः। तोयान्यत्वस्य दुस्साधत्वादिति। तत्साधकहेत्वभावादित्यर्थः।
[illegible]— तेजोमात्र इति। अत्र मात्रशब्दः कार्त्स्न्यवाची। द्रवत्वविशेषादिति। अत्यन्तानलसंयोगेऽपि अनुच्छिद्यमानद्रवत्वादित्यर्थः॥ ५९॥
वீ— प्रवृत्तैस्तार्किकैः तैजसत्वं व्याख्यातम्। तेषां तेजोंशसद्भावं विमृश्य तैजसेषु परिगणनं कृतम्। तच्च न पार्थिवत्वनिषेधनैर्भर्येण; किंतु विधितदितरसौकर्याय। तैजसानां नानाविधरत्नानां विषय इवात्रापि विधिनिषेधयोरेकरूपयोः प्रवर्तनार्थम्। तैजसानामेषां दाने फलाधिक्यं चौर्ये दोषाधिक्यञ्च प्रायेण तैजसैः रत्नादिभिः सममित्याशयेन तथाकरणमिति भावः स्यात्।

सामान्यम्=समानम्। सादृश्यं वा। निष्केत्विति। निष्को नाम षोडशमाषमितसुवर्णम्। तद्विषयदानविक्रयादिकारिणा सत्यमेव वक्तव्यम्। न्यूनाधिकमानविषयमसत्यं यदि ब्रूयात्, तदा पापाधिक्यमिति। अनेन तावद्गुरुत्वस्य तत्र सत्त्वनावगमात् आरोपितगुरुत्वमिति न युक्तमिति भावः। ननु विधिनिषेधयोस्तन्त्रसौकर्यम्-तैजसमिति रत्नसुवर्णोभयविषयकैकपदप्रयोगः। इदमेवैतत्फलम्। ततस्तैजसत्वमारोपितमिति कुतः। अनुच्छिद्यमानद्रवत्वाश्रयत्वबलेन तैजसत्वसाधनस्य तैः क्रियमाणत्वादित्याशंक्याह नन्विति। तोयान्यत्वस्येति। अयं भावः-पीतिमगुरुत्वाश्रयः सुवर्णभागः; श्वेतिमगुरुत्वाश्रयो रजतभागः; एवं त्रपुसीसादिगतगुरुभागश्च पार्थिवा इत्यत्र न विवादः। परं तु "सर्पिर्जतुमधूच्छिष्टानामग्निसंयोगात् द्रवत्वमद्भिः सामान्यम्" (वै.द. २-१-५५) इति पार्थिवभूतानां सर्पिरादीनामत्यन्तानलसंयोगे उच्छिद्यमानद्रवत्वकत्वात् त्रपुप्रभृतीनाञ्च द्रवत्वस्यानुच्छिद्यमानत्वात् तादृशद्रवत्वाश्रयभागं पक्षीकृत्य तैजसत्वं साध्यते तैः। परं तत्र पार्थिवभागस्यापि द्रवीभावात् तद्द्रवत्वमपि नोच्छिद्यत इति शंकायां द्वेधा समाधानं तार्किकेष्टम्—अनुच्छिद्यमानद्रवत्वाश्रयद्रव्यान्तरमध्यनिविष्टत्वात् जलमध्यस्थघृतन्यायेन पार्थिवद्रवत्वमपि नोच्छिद्यत इत्येकम्; पार्थिवभागस्य चूर्णरूपेण विशरणेऽपि तत्र द्रवत्वं नास्ति, द्रवीभूतस्तु तैजस एव। जलमध्यस्थमषीहरिद्रादिक्षोद(चूर्ण)वत् तत्र विकीर्णः पार्थिवभाग इत्येतावदेवेति द्वितीयम्। तत्र दृष्टान्ते तोयस्य घृतचूर्णाधारतया कथनात् तद्वदत्रापि स सुवर्णांशस्तोयमेव किं न स्यादिति। ननु नैमित्तिकद्रवत्वात्

पाकजद्रवत्वेन पार्थिवत्वसाधने तु सर्पिरादावस्ति। अनुद्भवत्वं च हेमादेस्तदुपष्टम्भकपार्थिवांशेऽप्यस्ति। अन्यथा तत्र तदानीं काठिन्यानुवृत्तिप्रसङ्गात्। अतः पक्षविपक्षमात्रवृत्तित्वात् विरुद्धता ॥

श्लो— अवान्तरविशेषाच्च नातज्जातीयता भवेत्। अतिप्रसङ्गसाम्राज्यादशेषापह्नवेन वा ॥

न च हेमादिशब्दानां युक्तं दृष्ट(लोक)प्रमाणतः। अलोकव्यवहारार्हे कुत्रचिद्वृत्तिकल्पनम् ॥५९॥

इति हेमादेस्तैजसत्वोक्तितात्पर्यम् ॥

अथ पृथिवीपरीक्षा ; तमसः पार्थिवत्वम् ॥

नैल्यात् भौमं तमिस्रं, चटुलबहलताद्यन्वयात् तत्र नैल्यं
छायावत् पारतन्त्र्यं स्वयम इव मणौ दृष्टिसिद्धात् स्वभावात्।
स्पर्शाख्यातिर्न रूपं हरति हरिशिलाऽऽलोकवत्, तत्र चाक्ष्णो-
र्नालोकोऽर्थ्यः ससिद्धाञ्जननयन-दिवाभीतदृष्ट्यादिनीतेः ॥ ६० ॥

---

आ०— एवंचापार्थिवत्वसाधनेऽपि न विवक्षिततैजसत्वसिद्धिरिति भावः। जलमिलितहरिद्राचूर्णवत् द्रवीभूततेजोमेलनमात्रमेव पार्थिवावयवानाम्, न द्रवत्वम्; अतो न विरुद्धतेत्याशङ्क्य दूषणान्तरमाह—अवान्तरविशेषादिति। अतिप्रसङ्गसाम्राज्यादिति। जलानिर्वाप्यत्वेन वाडवस्याग्निवैजात्यम्, अनुष्णस्पर्शतया चन्द्रालोकादेरतैजसत्वमित्यादि प्रसज्येतेति भावः। वैजात्ये परिहृतेऽवान्तरविशेषाणां अपलापः कार्य इत्याह अशेषापह्नवेन वेति। यूपादिशब्दानां [अर्थः?] अलोकव्यवहारार्हं बुद्धिकल्पितं द्रव्यमित्यत उक्तम् लोकप्रमाणत इति। तत्रानेकप्रमाणाद्युपपत्तिकथनमिति भावः॥५९॥

भा०— तोयभिन्नमिति चेत्-अस्तु, तावता तेजस्त्वं कथम्? अनुच्छिन्नद्रवत्वं तेजोवस्तु नहि किञ्चित् फलतमस्तीत्याह द्रवत्वविशेषादिति। पार्थिवस्योच्छिद्यमानद्रवत्वाश्रयत्वात् तद्भेदेऽपि सिद्धे परिशेषात् तेजस्त्वमित्यत्राह पाकजेति। सुवर्णं पार्थिवं नैमित्तिकद्रवत्वादित्येव युक्तम्। तेजोरूपधर्म्यन्तराघटनरूपाल्लाघवात्। एवञ्च पार्थिवांशगतद्रवत्वानुच्छेदे हेत्वन्वेषणश्रमोऽपि नास्ति। न च तस्य भागस्याद्रवीभावः। उपलम्भविरोधात्। मषीक्षोदादेः पूर्वमेव चूर्णत्वात् विशरणं स्यात्। अत्र क्षोदभावे किं प्रमाणम्। अत इति। सुवर्णं तैजसं तादृशद्रवत्ववत्त्वादित्यत्र पार्थिवांशदृष्टान्तेन जलमध्यस्थघृतदृष्टान्तेन च अतैजसत्वमेव साध्येतेत्यर्थः। वस्तुतः सुवर्णमिति तैजसांशपक्षीकारो न भवति, तस्य प्रागसिद्धत्वात्। इदं पुरोवर्तिद्रव्यं स्वगतद्रवत्वनाशप्रतिबन्धकद्रवद्रव्यसंयुक्तम्—पार्थिवांशातिरिक्तघटितम् अनुच्छिद्यद्रवत्वोपलब्धिविषयत्वादित्यनुमीयेत यदि, तदपि नेत्याह अवान्तरेति। पार्थिवमेव भवतु, अनुच्छिद्यमानं द्रवत्वमप्यस्त्विति विपक्षे शंकिते बाधकं नास्तीति भावः। अतिप्रसंगसाम्राज्यादिति। करकादेः काठिन्यादजलत्वम्, चन्द्ररत्नादिप्रभाणामनौष्ण्यात् अतेजस्त्वमित्याद्यापातादित्यर्थः। किं बहुना; अशेषापह्नव एवेत्याह। अशेषापह्नवेन वेति। अशेषापह्नवप्रसंगाद्वेत्यर्थः। कृष्णवर्णैव पृथ्वी, वर्णान्तरवत् अन्यत् सर्वं तत्त्वान्तरमेवेत्यादिरीत्या सर्वेषामान्तरवैषम्यापलापप्रसंगादिति भावः। पाञ्चभौतिकत्वात् तेजांशोऽप्यस्तीति वा प्रकारान्तरेण वा तैजसवस्त्वन्तरमेलनकल्पनेऽपि सुवर्णादिशब्दवाच्यत्वं तस्य न युक्तम्, लोकविरोधादित्याह न चेति। दृष्टप्रमाणतः-प्रत्यक्षप्रमाणं परित्यज्य। ल्यब्लोपे पञ्चमी। यद्वा लोकव्यवहाराविषये अल्पांशे कुत्रचित् हेमादिशब्दानां वृत्तिकल्पनं दृष्टप्रमाणतः—दृष्टमिति दर्शनं प्रत्यक्षमुच्यते—प्रत्यक्षप्रमाणमूलकं न भवतीत्यर्थः। स्फुरत्त्वादिकं तु शुक्तिसुधादिगतत्वात् तेजोऽतेजउभयसाधारणमसाधकमिति भवदिष्टमेवेति अवान्तरवैलक्षण्यस्य, सहजत्वात् सुवर्णादेः पार्थिवत्वमेवेति ॥ ५९ ॥

तेजोनन्तरे तोये विप्रतिपन्नार्थाभावात् तदुल्लङ्घनेन तमस पृथिव्यामन्तर्भावमाह–**नैल्यादि**ति ॥

"तम खलु चल नील परापरविभागवत् । प्रसिद्धद्रव्यवैधर्म्यात् नवभ्यो भेत्तुमर्हति" इति य एव वदन्ति, तान् प्रति उभयसम्मतेन नीलत्वेन पार्थिवत्व साध्यते । द्रव्यान्तरकल्पने गौरवात् । अवान्तरविशेषश्च न वैजात्यहेतुरित्युक्तम् । प्रभातुल्यत्वपक्षे, पित्तवत् दृक्प्रभासर्पपक्षेऽपि नीलत्वात् भौमत्व सिद्धमेव । ये त्वाहु —"वियति विततानां सूक्ष्माणां पृथिव्यवयवानां कृष्णो गुणस्तम " इति, तेषां निराधारनैल्योपलम्भोऽशक्यसाधन इत्यभिप्रायेणाह **तत्र नैल्य**मिति । हेत्वन्तरमाह **चटुले**ति । चटुलत्व-

---

*द्यु*— नैल्यादिति । परापरविभागवत् बहुलत्वविरलत्वविभागवदित्यर्थ । प्रसिद्धद्रव्यवैधर्म्यात्— रूपवत्त्वे सति स्पर्शरहितत्वादेरित्यर्थ ॥ ६० ॥

*वी*— सुवर्णादेरिव तमसोऽपि पार्थिवत्वमिति मत्वा तत् साधयति नैल्यादिति । तमिस्र—तम भौम—पार्थिवम् । चटुलत्वादिहेतो 'न नैल्यम्' इत्यत्रान्वय , तस्य भौमसाधारणतया भौमत्वसाधकत्वायोगात् । अत एव वृत्तौ न नैल्यमितीदमवतार्य चटुलेत्यादेरवतारणम् । ननु नैल्यादिति हेतुरसिद्ध तमसो नैल्यरूपत्वात् नैल्ये नैल्याभावादिति शङ्काया न नैल्यमिति वचन प्रसक्तमिति हृदयम् । निषेधमात्रेऽपि ह्वतो हेतु कश्चित् । स च पृथगुपलम्भादिरिति । न हि नैल्यमात्र पृथगुपलभ्येतेति । [वृत्तौ हेत्वन्तरमाहेत्यस्य चोक्तपृथगुपलभ्यमानत्वहेतोरतिरिक्त चटुलत्वादिहेतुमप्याहेति स्वरसोऽर्थ ।] चटुलत्व चलत्वम्, बहलत्व निबिडत्वम् । आदिना विरलत्वस्य परत्वादेश्च ग्रहणम् । ननु नैल्यादिना पार्थिवत्वसाधन क वादिन प्रति तार्किकान्प्रिपक्षे हेत्वसिद्धेरिति चेत्–तमसो द्रव्यत्व येषामिष्ट तान् भाट्टादीन् प्रतीति तम खल्वित्यादिवाक्येन ज्ञापयिष्यति । दशम द्रव्य तम इति हि तन्मतम् । तत्र श्लोके भेत्तुमित्यस्य पृथक्कर्तुमित्यर्थ । परीक्षक कर्ता । तम इत्यादि द्वितीयान्तम् । नन्वालोकाभावस्तम इति युक्तम् । तदा छायाया पुरुषादिगत्यागत्योरिव प्रदीपालोकगत्यागत्योस्तत्रारोपादनुगत्युपपत्ते । पृथग्द्रव्यत्वे तु न तदुपपत्तिरित्यत्राह छायावदिति । छायाया पुरुषादेरिव, अयस अयस्कान्तादेरपि गत्यागत्यनुविधानरूप पारतन्त्र्य यथा, तथेत्यर्थ । ननु तमो न रूपवत् अस्पर्शत्वादिति चेन्न–इन्द्रनीलप्रभाया व्यभिचारात् । अस्पर्शत्वमप्यसिद्धम्, प्रभायामिवानुद्भूतस्पर्शसम्भवात् । अत स्पर्शस्याख्याति =अग्रहण न रूपात्मकविषयापहारकम् । अत एव तमो न पार्थिवमस्पर्शत्वादित्यपि निरस्तम् । ननु रूपप्रत्यक्षे आलोकस्य कारणत्वात् तमसि च तदभावात् कथ नीलप्रत्यक्षमिति चेत्—तत्र=नीलादिप्रत्यक्षसामान्ये चक्षुषो नालोकोऽपेक्ष्य । तत्सामान्य प्रति आलोको न कारणम्, आलोकाभावेऽपि सिद्धाञ्जनसहितया दृष्ट्या, असहायोलूकदृष्ट्या च प्रत्यक्षोत्पादनात् व्यभिचारादिति श्लोकार्थ । ननु पृथिव्या तमसोऽन्तर्भावस्तोयनिरूपणानन्तर वक्तव्य इत्यत्र विप्रतिपन्नाशपरीक्षामात्रस्येदानीं क्रियमाणत्वात् जलत्याग इत्याह तेज इति । अन्तर्भाव तदुल्लङ्घनेनाहेत्यन्वय । तम खल्विति । पूर्वार्धेन द्रव्यत्वसाधनम्, उत्तरार्धेन पृथिव्यादिमनोन्तद्रव्यनवकभेदसाधनम् । चलत्वात् विभुचतुष्टयव्यावृत्ति , नीलत्वात् पृथिव्यतिरिक्तसर्वव्यावृत्ति । अस्पर्शत्वात् पृथिवीव्यावृत्तिरभिमता । भौमत्वे बाधन्तरयो समतिमप्याह प्रभेति । तुल्यत्वमस्पर्शत्वविशिष्टरूपवत्त्वेन । पित्तवत्=पीतदर्शन इति भ्रमहेतुपित्तद्रव्यप्रभाया इव । दृक्प्रभेति । कृष्णताराप्रभेत्यर्थ । अशक्यसाधन इति । द्रव्यघटितचक्षुस्सन्निकर्षस्यैव नैल्यप्रत्यक्षकारणत्वात् द्रव्याप्रत्यक्ष दुर्वचम् । धर्मान्तराग्रहणात् द्रव्याप्रत्यक्षमिष्यत इति शङ्का तद्ग्रहणप्रदर्शनेन निरस्यति चटुलेति । तदेवाह न चेति ।

बहलत्वविरलत्वादिकं हि द्रव्यधर्म एव । न च तदुपलम्भो नास्ति, नीलोपलम्भो वा; विश्वविरोधात् । न चात्राऽऽलोकापसर्पणादिहेतुभेदैश्चटुलत्वमारोपितम् ; प्रत्यक्षप्रमेषु गुणमात्राधिष्ठानत्वादृष्टेः । गन्धो वातीत्यादिष्वपि द्रव्याभिप्रायेण प्रयोगः । यदि स्वतन्त्रद्रव्यं तमः, तदा तत्तद्गत्यागत्यनुविधानं कथमित्यत्राह **छायावदिति**। यथाऽयस्कान्तस्थितिगत्यनुविधानं पृथग्द्रव्यस्याप्ययसो दृश्यते, तथाऽत्रापि स्यात्; यथादृष्टि स्वभावव्यवस्थापनात् । ननु पार्थिवत्वरूपवत्त्वे स्पर्शवत्त्वव्याप्ते ; न च ध्वान्ते स्पर्श उपलभ्यते ; अतस्ते उभे तस्य न स्त इत्यत्राह — **स्पर्शाख्यातिरिति** । तमसस्स्पर्शस्यायोग्यत्वादित्यभिप्रायेण नीलत्वसाम्याच्च हरिशिलालोकदृष्टान्तः । यन्नीलं तदालोकसहकृतचक्षुर्ग्राह्यम् ; तमश्च न तथा ; ततश्चाक्षुषप्रत्ययाभावे नीलत्वाभिमान इत्यत्राह—**तत्र चेति** । आलोकोपलब्धौ आलोकान्तरं न सहकारि; तथाऽत्र स्यात् ॥ विषयस्य सतस्तत्र सहकारित्वमिति चेत् ; अथापि वस्तुभेदे वैरूप्यं सिद्धम् ! एवं ध्वान्तेऽप्यालोकनैरपेक्ष्यं स्यात् । अलङ्घनीयनिदर्शनान्तरमाह **ससिद्धाञ्जनेति** । अञ्जनविशेषसहकृतं हि चक्षुः अन्धतमसेऽपि पदार्थान् दर्शयति, तथेहापि स्यात् ॥ तत्र सहकार्यन्तरप्रभावादिति चेत ; अत्राप्यालोकाभावस्य सहकारिणः प्रभावादित्यङ्गीकुरुष्व । यथा च किंचिद्बहलालोकग्राह्यम्, किंचिन्मन्दालोकेनापि-तथा किंचिदालोकग्राह्यम्, किंचिन्न तथेति यथादर्शनं नियमः । दृक्स्वभावाच्च यथा दिवाभीतादिदृष्टेरालोकनैरपेक्ष्यम्, तथा दृश्यस्वभावादिहापीति किं नेष्यते ॥ अस्त्वेवम् । तथाऽप्यालोकमध्ये किं नोपलभ्यत इति चेत्; आलोकनाश्यत्वादिति केचित्; उत्सारितत्वादित्यन्ये; मध्यन्दिनोल्काप्रकाशादिवदभिभवादित्यपरे।

**श्लो—** अद्रव्यत्वादिपक्षाणामत्रासंभवसिद्धये । आद्यमेव तमो ध्वान्तमिति केचिदुपाचरन् ॥

---

*ॐ0—* चटुलत्वम्—चलत्वम् । गुणमात्रेति । धर्ममात्रेत्यर्थः । आद्यमेव तम इति । मूलप्रकृतिरित्यर्थः । दृश्यसंबन्धमात्रत इति । तमसो दृश्येन सम्बन्धादेवेत्यर्थः ॥ ६० ॥

*श्री—* नीलोपलम्भः नीलद्रव्योपलम्भोऽपि । गन्ध इति । गन्धपुष्पधूपदीपेति द्रव्यसाहचर्येणापि गन्धशब्दप्रयोगादिति भावः । अथापीति । द्रव्यचाक्षुषसामान्ये आलोकस्य संयोगसंबन्धेन कारणत्वे आलोकप्रत्यक्षे तद्भङ्गः । तदतिरिक्तद्रव्यप्रत्यक्षेति संकोचेऽपि आलोकतद्विरुद्धोभयातिरिक्तद्रव्यप्रत्यक्षे इत्येव नियमः क्रियताम् । तथा च संयोगसंबन्धेनाऽऽलोकस्याभावेऽपि प्रत्यक्षमिति । युक्त्यन्तरमाह दृक्स्वभावाच्च यथेति । यथा च दृक्स्वभावादालोकनैरपेक्ष्यमित्यन्वयः । नन्वालोकात् पूर्वं स्थितं तमः आलोके आनीते कुत्र यातम् । न यातं चेत्, कुतो न दृश्यत इति पृष्ट्वा प्रतिवक्ति तथापीति । आलोकमध्ये पूर्वं दृष्टस्य तमसोऽन्यत्रोत्सारणं दुर्वचम् । अतैव नाशस्तु स्यात् । परं तु पुनःपुनः तमउत्पत्तितत्प्रसरणाद्यनेककल्पनापेक्षया सर्वत्र तमः स्वभावत एव व्याप्तम्; यदा यत्राऽऽलोकप्रादुर्भावः, तदा तत्र स्थितमेवाभिभूयत इति कथने महल्लाघवम् ॥ एवं कृष्णतारकाप्रभा तमः, वियति वितनसूक्ष्मावयवनैल्यं तमः, पूर्वानुभूतनीलद्रव्यविषयकस्मृतिप्रमोपविषयनैल्यं तत्राविद्यमानमेव तमः, आलोकाभावस्तमः, पृथिव्याद्यतिरिक्तं दशमं द्रव्यं तमः इति पक्षान् उपेक्ष्य पृथिव्यामन्तर्भावस्तत्रस उक्तः। आद्यं तम एव—प्रपञ्चप्रकृतिभूतद्रव्यमेवेति तत्त्वरत्नाकरपंक्तिदर्शिनामाशयमाह अद्रव्यत्वेति । एतत्पक्षे नीलत्वादि दुरुपपादम्; तमस्सृष्टिश्रुतिविरोधश्चानन्तरश्लोकसिद्धः ।

किंच तेजस इव तमसोऽपि शरीरत्वाम्नानात्, आलोकमध्ये तमस्सृष्टिवचनात्, एकस्मिन् काले तमस्तेजःप्रलयपाठाचास्य द्रव्यत्वप्राकृतत्वसिद्धौ रूपवत्त्वेन वायुपर्यन्तव्यपोहः; कृष्णरूपवत्त्वाच वह्निजलव्यावृत्तिः [ पृथिवीत्वञ्च?] सिध्येत्; 'यत्कृष्णं तदन्नस्य' इति श्रुत्यनुसाराच।

तदिदं तमः परब्रह्माच्छादकाविद्यानिदर्शनतया विषयावारकं कैश्चिदुक्तम्। तदसत्;

श्लो— तमोऽव्यवहितालोकस्थितनानार्थदर्शनात्। दृग्गतेरविरुद्धस्य दृश्यच्छादकता कथम्॥

अतो मर्त्यादिदृष्टीनां दृश्यसंबन्धमात्रतः। दर्शनप्रतिघातित्वं स्वभावात् तमसि स्थितम्॥ ६०॥

**इति तमसः पार्थिवत्वम्॥**

**नालोकाभावमात्रं तिमिरम्, अविरतं नीलमित्येव दृष्टेः**
**नैल्यं त्वारोपितं चेत्, कथमिव न भवेत् क्वापि कस्यापि बाधः।**
**आरोपे चात्र नैल्यं न भवति नियतं भास्वरान्यत्वसाम्यात्**
**नात्रादृष्टं नियन्तृ प्रतिनियतगुणारोपक्लृप्तेर्गुरुत्वात्॥ ६१॥**

ये त्वाहुः-आलोकाभाव एवाऽऽलोकविरोधित्वलक्षणसमानधर्मसारितनैल्योपरक्तो नीलं तम इति गृह्यते; नञुपश्लेषरहितशब्दवाच्यत्वं तु प्रलयादिशब्दन्यायेन स्यादिति; तान् प्रतिवक्ति **नालोके**ति॥ अबाधितं नीलोपलम्भहेतुमाह-**अविरतमि**ति। आरोपितं नीलरूपत्वं (पं?) नाभावत्वविरोधीत्यभिप्रायेण-आशङ्कते **नैल्यं** त्विति। आरोपस्य कालभेदेन पुरुषभेदेन वा बाधव्याप्तिमभिप्रेत्याह—**कथमि**वेति। **अविरत**मिति सूचितमेतेन व्यञ्जितम्। ननु तमो न नीलम् असति आलोके चक्षुषा प्रतीयमानत्वादिति बाध इति चेन्न; दृष्टान्तासिद्धेः॥ आलोकाभाव एव दृष्टान्त इति चेन्न; स्वपक्षे पक्षदृष्टान्तभेदा-

---

*टिप्पणी*— अत्र आलोकविरोधित्वं आलोकसम्बन्धराहित्यम्। अन्वय्यनुमानपक्षे दूषणमाह-दृष्टान्ता-

*श्री—एवं पार्थिवत्वेन सिध्यतस्तमसः स्वपक्षे विशेषान्तरं वक्तुमाह तदिदमिति। कैश्चित्-अद्वैतिभिः।* तमोऽव्यवहितेतेति। घटादिकं तमोद्रव्येणाऽऽवृतत्वात् चक्षुस्संनिकर्षं न लभते इति चक्षुर्गतिप्रतिबन्ध-स्वीकारे तमसः परस्तादालोके स्थितं न चक्षुषा गृह्येत, मध्यस्थितेन तमसा चक्षुर्गतिरोधप्रसंगा-दिति भावः। व्यक्तमिदं तात्पर्यचन्द्रिकायाम् ( .)। तर्हि तमसि कथं न चाक्षुषमित्यत्राह अत इति। प्रत्यक्षे चक्षुस्संनिकर्षस्य दर्शनविषयतमस्संबन्धरहितस्यैव कारणत्वमिति भावः। तमोभिभवस्थले प्रत्यक्षत्वाय दर्शनविषयेति विशेषणम्। यद्वा आलोकसंबन्धः कारणमित्युक्तिपर्याय एव तमःप्रतिबन्धवाद इति॥ ६०॥

ननु ज्ञानाभावमात्रेणैव सति निर्वाहे अज्ञानं भावरूपं यथा न कल्प्यते, तथा आलोकाभावेनैव निर्वाहे तमोऽन्यन्न कल्प्यमिति तार्किकप्रत्यवस्थाने आह नालोकेति। मात्रपदात् भावव्यावृत्तिः। अविरतम्—तमःप्रतीतिकालसामान्ये। प्रतीतेरारोपेण निर्वाहं निषेधति आरोपे चेति। न भवति नियतमिति। वर्णान्तरमप्यारोप्येतेति भावः। न नियन्तृ—न नियामकम्।

शुक्तौ रजतत्वारोपः रजतस्मृत्यधीनः, तद्वदत्र नैल्यस्मृतिनियामकं किमित्यत्राह आलोकविरोधित्व... सारितेति। प्रलयादीति आदिपदेन गतिनिवृत्तिवाचिस्थाधात्वादिग्रहः। एतेन व्यञ्जितमिति। द्वितीय-

भावात्, अस्मन्मते तु भावातिरिक्ताभावासिद्धेः, आलोकाभावे दिवाभीतादिचक्षुर्ग्राह्यैर्नीलैर्व्यभिचाराच्च। दृग्वैषम्यवत् दृश्यवैषम्यं च व्यवस्थापकं स्यादित्युक्तम्। अतोऽसदादिविशेषणेऽप्यनिस्तारः; तमोधर्मभूतनैल्यादिदृष्टान्तस्तु तदभावसाधने विरुद्धः। आरोपितनैल्यादिदृष्टान्तस्तु शुक्तिरूप्यशशशृङ्गादिवत् अनादेयः। अनारोपितं तु सत्येवाऽऽलोके चक्षुषा गृह्यते॥ तथाऽपि भ्रान्तिदशायां गृह्यमाणारोपाभावेऽपि चाक्षुषभ्रान्तिविषयत्वादेवायं हेतुः सिद्ध इति चेन्न; तमसि नैल्यारोपसिद्धिमन्तरेणास्य हेतोरनुत्थानात्। भवति हि बाधात् दृष्टान्तलाभः; तेन च स इति मिथस्संश्रयः। अस्पर्शत्वादिबाधकान्तरं तु निरस्तम्।

अत्र **नीलमित्येवेत्यवधारणतात्पर्यभेदसिद्धं** दूषणान्तरमाह **आरोपे** चेति। अयं भावः— आरोप एवात्र न संभवति। अभावस्य हि स्वरूपमेव हि(?) भेद इति मन्यसे; अ(त)तस्तद्ग्रहे तदग्रहे वा

[illegible] — सिद्धेरिति। व्यतिरेकिपक्षे-असदादीति। हेतोर्विशेषणे घटादौ सपक्षे असति अलोके चक्षुषा गृह्यमाणत्वादिति हेतोरविद्यमानत्वे सति पक्षमात्रवृत्तित्वादसाधारण्यं द्रष्टव्यम्। विशेषणाभावे दूषणमाह-आलोकाभाव इति। अनुमानस्य बाधं च अभिप्रेत्याह दृग्वैषम्यमिति। चक्षुषा गृह्यते तथा च असिद्धिरिति भावः। भ्रान्तिदशायामिति। आपणस्थरजताद्यारोपवत् स्मर्यमाणारोपरूपभ्रान्तिदशायामित्यर्थः। गृह्यमाणारोपाभावेऽपीति। गृह्यमाणजपाकुसुमरक्तिम्नः आरोपः गृह्यमाणारोपः,

[illegible]- पादेन व्यक्तीकृतमित्यर्थः। भावातिरिक्तेति। भावरूपतद्ग्रहणे च तमोद्रव्यस्वीकारापत्तिः पक्षदृष्टान्तभेदाभावश्च। ननु तमस्त्वं न नीलवृत्ति आलोकाभावत्ववदिति प्रयोगे पक्षदृष्टान्तभेदसिद्धिरित्यत्र दूषणान्तरमाह आलोकाभाव इति। अनिस्तार इति। व्यभिचारपरिहारेऽपि हेतुरप्रयोजक इति भावः। विरुद्धइति। तमोधर्मभूतनैल्यमिति दृष्टान्तं वदन्नेव कथं तमो न नीलमिति साधयसि; प्रतिज्ञादृष्टान्तविरोधादित्यर्थः। अनादेय इति। अनिर्वचनीयादेरभावादिति भावः। नैल्यवदिति दृष्टान्त इत्यत्र तमोगतनैल्यं वा आरोपितनैल्यं वा अनारोपितनैल्यविशेषो वा दृष्टान्त इति त्रेधा विकल्प्य निरस्यति तम इति। सत्येवालोके इति। दृष्टान्ते साधनवैकल्यमिति भावः। ननु किमारोपितत्वानारोपितत्वविशेषणेन? तमोग्रहणविषयभूतं यत् तदेव नैल्यं दृष्टान्तः। तत्र हेतुरस्त्येव। न हि भ्रान्तित्वेन गृहीतप्रतीतिविषयत्वं हेतुः; किंतु प्रतीतिविषयत्वमिति शंकते तथापीति। असत्यालोके इति विशिष्टहेतुग्रहणकाल एव नैल्यस्यारोपितत्वं सिद्धम्। अनारोपितस्याऽऽलोकमन्तरेणाग्रहणस्याऽऽनुभविकत्वात्। एवञ्चाऽऽरोपितत्वेन गृहीतं नैल्यं दृष्टान्त इत्येवोक्तं भवति। तथा च प्रागेव तमसो नैल्याभावरूपबाधसिद्ध्या तदनन्तरमेवास्य दृष्टान्तलाभ इत्याह तमसीत्यादिना। ततः किमित्यत्रान्योन्याश्रय इत्याह तेन चेति। दृष्टान्तसिद्धौ पक्षे साध्यसिद्धिः, तत्सिद्धावेतत्सिद्धिरित्येवमन्योन्याश्रय इति। अपि च नैल्यमिति दृष्टान्तोक्तौ, तदेव नैल्यं पक्षीकृत्य इदं न नैल्यम् असत्यालोके ग्राह्यत्वात् तमोरूपधर्मिवदिति किं न स्यात्॥ नैल्यमिति गृहीते न नैल्यमिति साधनं कथम्, बाधादिति चेत्, पक्षीकृतस्य तमसोऽपि इदमित्यनुभूतनैल्यविशिष्टतयैव भानात् तत्र न नीलमिति साधने बाध एवेति मन्यताम्। किञ्चैवं घटाग्रहेऽपि घटो न नीलः, नीलो घट इति प्रतीतिविषयत्वात् नैल्यघटत्वादिवदित्याद्यनुमानं कुतो नेत्यादि भाव्यम्।

आरोपे इति सप्तम्या तदसंभवोऽप्याशयित इति दर्शयति अयं भाव इति। तात्पर्यभेदेति। अभावव्यवच्छेदतात्पर्यवत् रूपान्तरव्यवच्छेदतात्पर्यमपीति भावः। स्वरूपमेवेति। घटः पटो नेत्यादौ घटत्वरूपधर्मः पटभेदः; घटाभावः पटो नेत्यादौ धर्मिस्वरूपमेव भेद इति त्वन्मतमिति भावः। तथा-

कथमारोपः ? एवं च ब्रूपे— आलोको हि भास्वरः; तद्विरोधी च तदभावः; कृष्णद्रव्यमपि भास्वरान्यत्वात् तथैव। अत आलोकविरोधित्वसाधर्म्यात् अकृष्णे कृष्णधर्माध्यास इति॥ एवं सति रक्तपीतादीनामपि तथात्वाविशेषात् तत्र तदारोपः किं न स्यादिति। अत्र (त्वत्र) यदुक्तं काणादैः, "आरोपे सति निमित्तानुसरणम्; न तु निमित्तमस्तीत्यारोपः" इति, तदयुक्तम्। आरोपे सतीत्यसिद्धेः। निमित्तस्य चातिप्रसङ्गिनोऽनुसरणायोगात्। यथा च रज्जौ सर्पाध्यासः, तथा कदाचिदम्बुधाराद्यध्यासोऽपि किं न भवति? सत्यां च सामग्र्यां कार्यानुत्पत्तिरिति न लौकिकमेतत्, न च यौक्तिकम्। यच्चोक्तम्, "अदृष्टादिकं चात्र नियामकमवसेयम्" इति, तद्दूषयति नात्रेति। विचित्रादृष्टभेदविषमिते जगति सर्वजन्तुसाधारणस्य दुरुपशमतावन्मात्रभ्रमहेतोरदृष्टविशेषस्य कल्पनेऽतिगौरवं स्यादित्यभिप्रायेणाह—प्रतिनियतेति॥ ६१॥

ध्वान्तं तेजश्च नासीदिति मुनिभिरुपाख्यायि संवर्तवार्ता
भावाभावौ निषेद्धुं तदुभयविधिवत् व्याहतत्वादशक्यम्।
अन्तर्यन्तुश्च तेजस्महदठिनतमो देह इत्यामनन्ति
स्याच्चाभावोऽपि भावान्तरमतिमथने वक्ष्यमाणक्रमेण॥ ६२॥

आलोकाभावपक्षस्यागमवैघट्य(वैगुण्य)माह-ध्वान्तमिति॥ अर्थोपादानमेतत्। शब्दस्तु 'नासीत् तमो ज्योतिरभूत्र चान्यत्' इति। कथमस्य प्रकृतविरोधित्वमित्यत्राह भावाभावाविति। न हि कस्यचित्

Cseता—तथात्वाभावेऽपीत्यर्थः। तथैवेति। विरोध्येवेत्यर्थः॥ ६१॥

श्री—चाऽऽलोकाभावस्य नीलभेदरूपत्वात् धर्मिज्ञानमेव भेदज्ञानमिति प्रतियोग्यारोपस्यायोग इति। एवं सप्तमीज्ञापितमुक्त्वा तृतीयपादार्थमुपपादयितुं प्रवृत्तः पूर्वम्, आलोकविरोधित्वलक्षणसमानधर्मसाहित्येनैवेति पूर्वपक्ष्युक्तमर्थं दूषणोपयोगितया विशदीकरोति एवञ्च ब्रूप इत्यादिना। एवं चेत्यस्य एवं किलेत्यर्थः। अथ निरस्यति एवं सतीति। न त्विति। न हि एकत्र शुक्तौ रजतारोपे सति, सर्वत्र रजतारोपापादनं भवतीति भावः। निमित्तस्य चेति। आरोपे सतीति वाक्यस्य हि कार्ये सति कारणानुमानम्; न तु कारणसद्भावमात्रेण कार्यापादनम्; कार्यस्य सामग्र्यधीनत्वादित्यर्थपर्यवसानम्। तत्र कारणं यदि नानाकार्यसाधारणम्, तदा एकरूपकार्यस्यैवोत्पत्तिवचनं दुष्करम्। प्रकृते च भास्वरान्यत्वं सर्वसाधारणमिति। लौकिकं=प्रत्यक्षसिद्धम्॥ ६१॥

संवर्तवार्ता—प्रलयवृत्तम्। भावाभावाविति। आलोकाभावस्तम इति पक्षेऽयं दोष इति भावः। भावाभावौ निषेद्धुमशक्यम्। तुमुन् अत्र केवलभावार्थे। निषेधोऽशक्य इत्यर्थः। एकदा एकत्र भावाभावयोरस्तित्ववत् नास्तित्वमपि दुर्वचमिति। ननु तस्य तदभावेनेव तदभावव्याप्येनापि सह विरोध एव। एवञ्च यत्र तमः तत्रालोकाभाव इति तमसोऽभावव्याप्यत्वात् आलोकस्य तमसश्च विरोधे अलोकाभावतमोभावयोरपि विरोध एवेति चेत्—व्याप्ये सति व्यापकेनावश्यं भाव्यम्। भावे सति अभावेन न भाव्यमित्येव नियमः। आलोकाभावे तमोऽभावे च साहित्यं तेन कथं वार्यत इति। वस्तुतः सिद्धान्ते तमसः आलोकाभावव्याप्यत्वमपि नास्ति। आलोकेनाभिभवस्य प्रागुक्तेः। तथा च तमो द्रव्यं पार्थिवं सर्वव्यापि। मध्ये मध्ये आलोकप्रवेशे तदभिभूयत इति न तदातदा पृथगनेकतमोद्रव्योत्पत्तिविनाशादिकमिति ध्येयम्। एतावत्पर्यन्तं भावातिरिक्ताभावाभ्युपगमेन वादः प्रवृत्तः; वस्तुतो न तदुत्थानमित्याह स्याच्चेति चतुर्थपादेन॥ ६२॥

एकदा एकत्र भावाभावविधिः शक्यते ; तद्वत् उभयनिषेधोऽप्यशक्यः। अन्तत उभयनिषेधस्य उभयविधि-विश्रमणेन व्याघातादिति भावः ॥ ६२ ॥

## इति तमस आलोकाभावमात्रत्वभङ्गः ॥

अथ भूभ्रमणपतनपक्षभंगः

तिष्ठत्युर्वी भचक्रं पवनरयवशाद् भ्राम्यतीत्युक्तमाप्तैः
भ्रान्तैः कल्प्तं त्रिलोकीभ्रमणमिह तथा मेदिनीभ्रान्तिपातौ ।
तद्भ्रान्तौ प्राक्प्रतीचोः प्रसजति पतने पत्रिणोस्तारतम्यम्,
पाते गुर्व्यास्तु तस्याः प्रलघु दिवि समुत्क्षिप्तमेनां न यायात् ॥ ६३ ॥

भूप्रसङ्गात् तद्भ्रमणादिपक्षं निराकर्तुं स्वपक्षं तावदाह तिष्ठतीति । आप्तैः—पुराणादिकर्तृभिः तदनुसारिभिश्च । आप्तिश्च तेषां 'हिरण्ययेन सविता रथेन' इत्यादिश्रुत्यनुसारात् । अस्मिन् पक्षे सर्वलोको

---

[?]— तिष्ठत्युर्वीति । त्रिलोकीभ्रमणमिति । [भुवः?] प्राङ्मुखतया भ्रमणं, अन्तरिक्षस्वर्गयोस्तु प्रत्यङ्मुखतयेति द्रष्टव्यम् । एवं हि सति प्राग्भागे दृष्टानां प्रत्यग्देशदर्शनमुपपद्यते । अपेक्षितस्यान्यथैव सिद्धेरिति । पूर्वभागदृष्टग्रहादिपरभागदर्शनस्य ग्रहादिभ्रमणेनैवोपपत्तेरित्यर्थः । अनुलोमगतिर्नौस्थ इत्यादीति । यथा नौकास्थः पुरुषो जलप्रवाहानुलोमगतिस्तीरस्थान् निश्चलानपि वृक्षादीन् प्रतिलोमगतिमतः पश्यति-तथा भूमौ यम्भ्रम्यमाणायां तत्स्थान् (वियत्स्थान्?) निश्चलानपि ग्रहादीन् यम्भ्रम्यमाणान् पश्यन्ति । अतो भूमेरेव भ्रमणम्, नान्तरिक्षादेरित्यर्थः ।

[?]— ध्वान्तमिति । अस्य प्रकृतविरोधित्वमिति । अस्य मुनिवचनस्य तमस्तेजोभावत्वरूप-प्रकृतार्थविरोधित्वमित्यर्थः ॥ ६२ ॥

तिष्ठतीति । हिरण्ययेनेति । हिरण्मयेनेत्यर्थः । न च गणितादिविरोध इति । "उत्ताना हवा" इति । "देवगवा" इति ग्रहनक्षत्रादिकमुच्यते । यदि स्थिरत्वयैवेत्यादिवाक्यानुसारात् । अनुलोमगति

[?]— चलस्य तमसः पृथिव्यन्तर्भावो न्यरूपि । महापृथिवी त्वचलैवेति निरूपयन् तस्याः भ्रमणपक्षं कतिपयकार्तान्तिकाद्यादृतम्, जैनीयं पतनपक्षञ्च निरस्यति तिष्ठतीति । वैदिकसिद्धान्तोऽयं, यत् भूः स्थिरा, ग्रहनक्षत्राणि भ्रमन्तीति । भचक्रपदं ग्रहाणामप्युपलक्षणम् । त्रिलोकीभ्रमणमिति । वेदवाक्यतात्पर्याग्रहणात् भ्रान्ताः केचित् वैदिकाः । तैः उत्ताना वै इत्यादिवाक्यतस्त्रिलोकीभ्रमणं तर्कितम् । तथा त्रिलोकीविषय इव मेदिनीविषये भ्रान्तैः कैश्चित् भ्रमणम् अन्यैः पतनञ्च कल्पितम् । न केवलमनेकाप्तग्रन्थविरोधात् भ्रान्तिपातपक्षयोः भ्रान्तकल्पितत्वनिश्चयः, किं तु सत्तर्कविरोधादपीति क्रमेण तृतीयतुरीयपादाभ्यामाह तदिति । प्राक्प्रतीचोरिति पक्षिविशेषणम्, स्त्रीलिंगाभावात् विशेषणपदत्वाच्च । प्राग्दिग्गतस्य पक्षिणः प्रत्यग्गामिनः पतनं-डयनं वेगेन कर्तव्यं न स्यात् । प्रतीचीगतस्य प्राग्गामिनः पक्षिणश्च डयनं वेगाधिक्येऽपि कार्यकरं न स्यादित्यर्थः । विवरणं वृत्तौ । जैनोक्तपातपक्षे दोषमाह पाते इति । गुर्व्यास्तस्याः—उर्व्याः गुरुत्वादेवातिशयितादतिवेगेनाधःपाते तावद्वेगशून्यं वियति क्षिप्तं शिलादिकं पुनर्भूमिं प्रति पतदपि न तां प्राप्नुयादित्यर्थः ।

हिरण्ययेन—हिरण्मयेन रथेन देवः सविता आयातीत्याद्यर्थकश्रुत्यादिभिः ग्रहादिगमनं भूमिस्थैर्यगमनं विना लभ्यत्वञ्च गम्यते । अतः श्रुत्यनुसारिप्रमेयबोधनात् आप्तिः—आप्तता पुराणादिकर्तृणाम् । स्वर्थजनक्रियमाणसाक्षात्कारानुरोधित्वाच्च स्वपक्षस्य विश्वसनीयतेत्याह अस्मिन् पक्ष

पलम्भस्तारम्यमस्ति । न च गणितादिविरोध । कक्षीकृतश्चाय पक्ष कार्तान्तिकैरपि । यथाऽऽह आर्यभटः
"उदयास्तमयनिमित्त नित्यप्रवहेण वायुनाऽऽक्षिप्त । लङ्कासमपश्चिमगो भपञ्जर सग्रहो भ्रमति ॥" इति ।

कैश्चित्, "उत्ताना ह वै देवगवा वहन्ति" इत्यादिनिर्वहणाय त्रैलोक्यभ्रमण स्वीकृतम्, तदुपा-
लभ्यते भ्रान्तैरिति । यथा स्वय भ्राम्यन्तो बालिशा भुव भ्राम्यन्तीमभिमन्यन्ते तथेममिति भाव ॥
यदि स्थिरतयैव दृष्टाना ग्रहनक्षत्राणा भ्रमण कल्प्यते तत् अविशेषात् भुवोऽपि कल्प्यतामिति चेन्,
अपेक्षितस्यान्यथैव सिद्धे । अत्र, "अनुलोमगतिर्नौस्थ" इत्यादिषु स्थापितस्य भूभ्रमणवादस्य, जैनोक्तस्य
च भूपतनस्य भ्रान्तिकल्पितत्वमतिदिशति तथेति । इषीकाप्रोतपत्रिकादिवत् स्वदेश मुञ्च ती द्रुततरम्
अधरोत्तरवृत्त्या भू भ्रमतीति हि तद्भ्रान्तिपक्ष । अत्रोत्क्षिप्ता [शर]शिलादय स्वदेशे तदासन्ने वा कथ
निपतेयु ? नित्य च स्वदेशपश्चिमभाग एव तेषा निपात स्यात् । उड्डीनाश्च पक्षिणो न कुलायम सीदेयु ।
पल्दङ्मुख पतता च तेषा गन्तव्यानि स्वयमपि तूर्णं प्रतिगच्छेयु । प्राङ्मुखा गन्तु तु दु खेनापि न
सन्निकृष्येरन् । एकदेशस्थिते च वर्षति बलाहके मुहूर्तमात्रात् मही शतयोजना सिच्येत । अति?

---

श्री— इति । गणितादीति । ज्योतिर्विदा व्याप्यव्यापकभावापन्न पञ्चकालगणनतत्फलग्रहस्थित्यादिक
मुख्यम् । न तद्विरोधोभूस्थैर्यपक्षे । अथापि सूर्यादिज्योतिर्विषये ज्योतिर्विद्वचनस्यैव श्रद्धेयतमत्वात्
बहिरङ्ग पुराणादिकमित्यत्राह कक्षीकृतश्चेति । ज्योतिर्विदस्तु भूस्थैर्य भचक्रभ्रमणवादिनामपि
सद्भावात् ज्योति पुराणोभयानुसरणमेव श्रेय इति भाव । विष्णुपुराणे ध्रुवस्याधिपत्ये स्थान
सूर्यादिभ्रमण तस्य नानाविधवाय्वन्तर्गतप्रवहाख्यवायुकृतत्वादिक विस्तरेणाऽऽख्यायि । उदयेति ।
प्रवहाख्यवायुना उदयास्तमयनिमित्त यथातथा प्रतिनस्सन् भ्रमति लङ्कास्थानस्य समपश्चिमग —
साक्षात्पश्चिमदिग्गामी ग्रहनक्षत्रगण इत्यर्थ ।

उत्ताना इति । देवलोकस्य भ्रमणस्वीकारे सत्येव तत्रत्याना गवा तल्लोकोपरितनभागस्य
भ्रमणवशादधोदेशप्राप्तिदशाया देशान्तरस्थैरुत्तानतया गमन लक्ष्यतेति भाव । स्वय भ्रामयन्त —
देहभ्रमण कुर्वन्त । स्थिरतयैव दृष्टानामिति । न ह्यादित्यादयो गच्छन्तोऽस्माभिरालक्ष्यन्ते । किं तु
स्थिरतया । अत एवाऽऽदित्यो व्रजवान्, पूर्वमत्र स्थित वै भाति सम्प्रति उपरि दृश्यमानत्वा
दिति गत्यनुमान दार्शनिकैरुक्तम् । अपेक्षितस्य—सूर्यचन्द्रभूसन्निकर्षविप्रकर्षदक्षिणोत्तरायणादि
तत्तत्कालव्यवस्थादे । अनुलोमेति । "अनुलोमगतिर्नौस्थ पश्यत्यचल विलोमग यद्वत् । अचलानि
भानि तद्वत् समपश्चिमगानि लङ्कायाम्" इति श्लोक । यथा प्राग्दिश गच्छन्त्या नौकाया स्थित
अचलान् अन्यत्र स्थितान् प्रत्यग गच्छत इव पश्यति, तथा भूमिस्थितो नक्षत्राणि अचलानि पश्चिम
गानि पश्यतीत्यर्थ । अनेन नक्षत्रादेरचलत्व भूम्या प्राग्दिश प्रति गतत्वञ्च सिद्धम् ।

सर्वमिद भ्रान्तैरुक्तमिति येनस् तद्विरोधप्रदर्शनेनाप्युपपादयितुमारभते इषीकेति । इषीका
प्रोतपत्रिका—கரம்பு । उत्क्षिप्ता —धनुरादितो मुक्त । नभोगता शरशिलाशकलादय ।
कथमिति । अतिवेगेन तद्भूप्रदेशस्य दूर प्राग्दिश प्रति गतत्वात् । ज्योतिषा प्रत्यग्गमनदर्शनात्
तद्भ्रमवचोपपादनाय भुव प्राचीगमनस्यैव वक्तव्यत्वादिति भाव । कुलाय— स्वनीडम् । पतता—
इयमानाना तेषा—पक्षिणाम् । गन्तव्यानीति । गन्तव्या प्रतीच्यदेशा इत्यर्थ । प्रतिगच्छेयु —
आगच्छेयु । न सन्निकृष्येरन्निति । गन्तव्यानीति तदादस्यानुषङ्ग । दक्षिणेति । प्राक्प्रत्यग्लक्ष्ययो

लानामपि धन्विना दक्षिणोत्तरदिग्देशावस्थितस्थिरलक्ष्यवेधो न स्यात् ॥

शरविहङ्गादीनामपि धरणीसममेव वायुना नोदनान्नोक्तप्रसङ्ग इति चेन्न ; तथाविधस्य प्रबलमारुतस्यानुपलम्भनिरस्तत्वात् । सर्वथा प्रत्यङ्मुखगतिप्रतिरोधप्रसङ्गाच्च । यो हि महापृथिवीं प्रभञ्जन प्रसभमावर्तयति, त कथ लघीयासो विहङ्गादय प्रतिसरेयु ? किंतु पृथिव्या पूर्वमेव प्राङ्मुखं दूरमपनीयेरन् ।

किंच ज्योतिर्गणभ्रमणहेतुर्मारुत शास्त्राभ्यनुज्ञानात् प्रत्यक्षविरोधाभावाच्च सगृह्यते । भूभ्रमणहेतुस्त्वसौ शास्त्रोपलम्भविरोधान्न कल्प्य , भुव एव वायुवत् अदृष्टवशात् तादृशभ्रमणोपपत्ते ॥ स्यादेवम्, किं नश्छिन्नमिति चेन्न , उपलम्भानुसारस्य छिन्नत्वात् । अत एव 'अनन्ततारग्रहभ्रमणकल्पनात् एकभ्रमणकल्पन वरम्' इत्ययुक्तम् । ताराभ्रमणादेरागमिकस्याकल्प्यत्वाच्च ॥ तदेतत् सर्वमभिप्रेत्याह **तद्भ्रान्ताविति** ।

भूपतने दोषमाह **पात** इति । अय भाव — पातो हि भुवो न तावत् उपलम्भागमाभ्याम्, तयोरिह तद्विपरीतत्वात् । नाप्यनुमानत , गुरुत्वात्पतनस्य प्रतिबन्धके निरोधोपपत्ते ॥ निरालम्बने निरवधौ नभसि नित्य निपतन्तीमलब्धप्रतिष्ठा भुवं क प्रतिरुन्ध्यादिति चेन्न , "वासुदेवस्य वीर्येण विधृतानि" इत्यादिना तत्सिद्धे । भूपतने चोत्क्षिप्ता [शर] शिलादयो न कदाचिद्भुवं प्राप्नुयु । गौरवप्रकर्षकाष्ठाभूतात् भूमण्डलादतिलघीयसा रज प्रभृतीनामधिकपतनकल्पनं चोपहास्यम् । पोतवालुकादिन्याय-

[illegible]— किं नश्छिन्नमिति । न किञ्चिदित्यर्थः । तारकासु क्रियानुपलम्भेऽपि कथं भ्रमणकल्पनमित्यत आह—ताराभ्रमणेति ॥ ६३ ॥

[illegible]— दित्यादि । पोतवालुकादिन्यायस्त्विह दुर्वच इति । यथा पोतस्यातिगुरुत्वेऽपि जले पतनं नास्ति, वालुकायास्तु अल्पगौरवेऽपि पतनम्—तथा भूरजसोर्वक्तु न शक्यमिति भावः ॥ ६३ ॥

[illegible]— दूरत्वासन्नत्वविषये तारतम्येऽपि आर्जवानपायात् तत्त्यागाय दक्षिणोत्तरेत्युक्तम् ।

उक्तास्तर्कान् सर्वान् परिहरन् प्रत्यवतिष्ठते शरेति । उक्तप्रसंग—उक्तापत्तिः सर्वापि । अनुपलम्भेति । व्योमयानसिन्धुयानादिस्थितानां तद्यानगत्यनुपलम्भवत् पतदनुपलम्भ इति न युक्तम्—आकाशे गच्छतां पक्षिणां स्वयं वायुना नुद्यमानत्वेन गारवाश्ये तदनुपलम्भकल्पनायोगात् । प्रतिरोधप्रसंगमेवोपपादयति यो हीति । आवर्तयति—भ्रमयति । प्रतिसरेयु —प्रतिकूल सरेयु., भचक्रभ्रमणवायुवत् ।

पृथिव्या· पूर्वमेव—पृथिवीतः पूर्वकाल एव । यदनुपलम्भात् शरविहगादिविषये मारुतो नेष्यते, ज्योतिर्भ्रमणविषयेऽपि स नेष्यताम् ; लाघवाच्चेत्यत्राह किञ्चेति । शास्त्रोपलम्भविरोधादिति । शास्त्रविरोधात्, त्वगिन्द्रियागृहीतत्वाच्चेत्यर्थः । भूभ्रमणमते तदभावेऽपि निर्वाह शिक्षयन् वायुनुद्यमानत्वांशमपि खण्डयति भुव एवेति । शिक्षितमगीकृत्य संतुष्यन् पृच्छति स्यादेवेति । छिन्न वादिति । भ्रमणे दृष्टे हि कार्यात् कारणानुमानम् ; तदेव नेत्यर्थ । भूभ्रमणादिव्यज्योतिर्भ्रमणयोर्लाघवं कुत्रेति विचार्योक्तमपि व्युदस्यति अत एवेति ।

एव तर्कबलेनापि भूभ्रमणपक्षं प्रतिक्षिप्य तृतीयपादस्यैतत्सर्वाभिप्रायकत्वमाह तदेतदिति । जैनपक्षक्षेपिचतुर्थपादमवतारयति भूपतन इति । निरोधेति । "गुरु त्वात् पतनम्" इत्येतत् विधारकव्यापाररहितविषय एव हीदम्, विधारकोपपादने च न तत्कल्पनेति । गौरवप्रकर्षकाष्ठेति । गरिष्ठेत्यर्थः । पोतवालुकेति । पोतो नौ· गुरुत्वेऽपि, वैशाल्यातिशयादिना पृथुना जलेन धार्यते । वालुकाश्च विशरणस्वभावा अपि गोण्यादिना यदा न विशीर्यन्ते । यदा गरीयान् पोतो न तथा

स्त्विह दुर्वचः ; उपष्टम्भकादिविशेषस्यानभ्युपगमात् । तत्कल्पने च, तस्याप्यन्यत् कल्प्य मित्यनवस्थानात् । वायुविशेषस्योपष्टम्भकत्वकल्पने तेनैव नित्यमपतनमिति किं न रोचते ? तदिह युक्तिमात्रशरणानां निराधाराऽपि स्वभावादेव तिष्ठति भूमिः । आगमानुविधायिनां तु सर्वाधारेण ब्रह्मणा सोपधानं निरुपधानं च विधृतेति ।

अत एव पृथिव्याधारस्थिरतरकर्परवल्लिसिर्निरस्ता । कर्परस्यापि निराधारस्य स्थित्यनुपपत्तेः, चतुरुदधिसंक्षोभसहत्वस्य पृथिव्यामेव कल्पयितव्यत्वात् ।

ये च पतनोत्पतनस्वभावभूतचतुष्टयमयत्वान्न पतति नोत्पतति च भूपिण्ड इत्याहुः, तेषामन्यूनानतिरिक्ततादृशावस्थानोचितपरिमाणैर्भूतैरारब्धः परिदृश्यमानमृच्छिलादिविलक्षणश्चागत्याऽन्य एव मृत्पिण्ड इत्यादिकल्पना केवलमूहमात्रसिद्धा ।

अन्ये—दक्षिणोत्तरध्रुवयोरयस्कान्तसमाधिं भूगोले चायस्समाधिमारोपयन्ति । तेऽपि कल्पनागौरवोपहताः । भूगोलस्यैव हि तादृशशक्तिकल्पनं युक्तम् ; न तु दवीयसोरात्मस्थितिनिर्वाहसापेक्षयोः ध्रुवयोः ।

केचित् भूगोलघनमध्यदेश एव सर्वेषामधोऽधोदेश , तदभिमुखदत्तचरण एव स्थलजलचरः सर्वो जन्तुवर्गः । भूमिस्तु तदाश्रिता नानाकेसरपरिवृतकदम्बकुसुमग्रन्थिवत् मक्षिकावृतमधुगोलवच्च तिष्ठति । अमरा नरा(मरा)श्च परस्परमधः स्थितान् मन्यन्ते । पतनं च सर्वेषां भूगोलमध्यदेशाभिमुखमेव । पृथिव्यंशास्त्ववकाशलाभान्न तत्र प्रविशन्ति । अतो महापृथिव्या न कदाचित्पतनम् , तामपेक्ष्य कस्यचिदधोदेशस्याभावात् इति । तदेतत् भुवोऽधस्तादुपरि च लोकान् उपदिशद्भिः शास्त्रैरुपरुध्येत ।

यत्तु — "पातालदेशाः क्षितिगोलमध्ये सतोपदिष्टास्तलपूर्वकास्ते" इति ; यदपि "मेरुर्योजनमात्रः प्रभाकरो हिमवता परिक्षिप्तः । नन्दनवनस्य मध्ये रत्नमयस्सर्वतोवृत्तः ॥ इत्यादि", तदिदं गणितविसंवादाभावेऽपि शास्त्रान्तरविरुद्धं न कल्प्यं न चोपदिष्टमिति श्रद्धातव्यम् ॥ ६३ ॥ **इति भूभ्रमणादिवादभङ्गः**

---

व्री— पतति, यथा लघीयसी वालुका ; तन्न्याय इत्यर्थः । तद्वदिह गुरुत्वाधिक्येऽपि पतनातिशयाभावे हेतुर्नेति भावः । तर्हि किं सिद्धान्ते गुर्व्या अप्युर्व्याः पतनाभावो वायुकृत इत्यत्राह तदिहेति । सोपधानम्—सहस्रफणसर्पाधीशादिद्वारकम् । निरुपधानम्–वराहावतारे, आदिसृष्टौ च ।

अग्रस्योपपाद्यस्य अपतनस्य नियामकमन्यान्यत् तत्तदुत्प्रेक्षितं क्रमेण निरस्यति अत एवेति। कर्परेति। कपालतुल्यवस्त्वित्यर्थः । अन्ये इति पक्षः, "मध्येऽयस्कान्तानां यथा स्थितोऽयोगुडः खमध्यस्थः । तद्वदनाधारोऽपि हि सर्वाधारो महीगोलः" इति धीवृद्धितन्त्रे (भूगोल. २.) लल्लवराहमिहिरादय इति, केचिदिति पक्षश्च, "तरु-नग-नगर-नरासुर-सुरैरयं केसरैरिव समन्तात् । भूगोलः कादम्बो मधुकरीभिरिव सर्वतः प्रथितः", "यद्वत् कदम्बपुष्पग्रन्थिः प्रथितः समन्ततः कुसुमैः । तद्वद्धि सर्वसत्त्वैः जलजैः स्थलजैश्च भूगोलः", "स्वर्मेरुः स्थलमध्ये नरको वडवानलश्च जलमध्ये । अमरनरा मन्यन्ते परस्परमधस्स्थितान् नियतम्" इति आर्यभटलल्लाद्युक्तिगः इत्यादिकं विस्तरेण श्रीमदभिनवरङ्गनाथब्रह्मतन्त्रपरकालमहादेशिकनिर्मिते भावप्रकाशाख्ये व्याख्याने द्रष्टव्यम् । अधोदेशस्याभावादितीत्यनन्तरम् , आहुरिति शेषः ॥ ६३ ॥

ज्योतिश्शास्त्रं पुराणाद्यपि न हि निगमग्राह्यमन्योन्यबाध्यम्
विद्यास्थानं तु सर्वं प्रतिनियतनिजोपक्रियांशे प्रमाणम् ।
तात्पर्यं तर्कणीयं तदिह बहुविदा भूपरिध्यादिभेदे(दैः)
दुर्ज्ञानं सर्वथा यन्मुनिभिरपि, परैस्तत्र तूदासितव्यम् ॥ ६४ ॥

भूपरिधकल्पादिषु वैदिकशास्त्रद्वयविरोधं परिहर्तुमाह **ज्योतिरिति** ॥ **निगमग्राह्यमिति** हेतुगर्भम्। यदि उभयबाधोऽन्यतरबाधो वा, न तत्र बाधितस्य वेदोपकारकत्वं स्यादिति भावः। कथं वा विरुद्धयोः साकल्येन प्रामाण्यमित्यत्राह **विद्यास्थानमिति** । येनयेनोपकारेण दश विद्यास्थानानि वेदैरुपजीव्यन्ते, [त]-त्तांशे विरोधाभावात् प्रामाण्यं प्रतिष्ठितमित्यर्थः । अंशान्तरे कथमित्यत्राह **तात्पर्यमिति** । न ह्यन्यपरवाक्यैरापातप्रतीतार्थस्थापनम्। यत्र च तात्पर्यम्, तत्र च (?) न विरोध इति भावः । ननु ज्योतिरागमे पञ्च सिद्धान्ताः प्रवृत्ताः ; पुराणेष्वप्येवं मतभेदा दृष्टाः । तत्रान्यतमप्रतिक्षेपे मुनयोऽपि यदि मुह्यन्ति, किं कर्तव्यमित्यत्राह **दुर्ज्ञानमिति** । **परैः**–ऋषिव्यतिरिक्तैरस्मदादिभिरित्यर्थः॥ ६४

**इति भूपरिमाणादिवाक्येषु परस्परविरोधपरिहारः ॥**

---

[illegible]— निगमग्राह्यमिति। निगमेन स्वस्याङ्गत्वेन स्वीकार्यमित्यर्थः। तर्कणीयम्—ऊहनीयमित्यर्थः। दुर्ज्ञानमिति। दुर्ज्ञेयमित्यर्थः॥ ६४॥

[illegible]— भूपरिधिः—भूगोलपरिमाणम्। तच्च सूर्यसिद्धान्त—आर्यभट—लल्लाचार्य—वराहमिहिर—ब्रह्मगुप्त-भास्करमतभेदेन भिन्नम्। अङ्गुलमानभेदमूलोऽयं मानभेद इत्यविरोधः। अन्यथा पुनरेकतममेव प्रामाणिकम्। ज्योतिश्शास्त्रपुराणादिकयोरुभयोरपि वेदांगतया निगमग्राह्य(स्वीकार्य)त्वात् न बाध्यता। निजोपक्रियांश इति। तस्य विद्यास्थानस्य कस्मिन्नुपकारे नैर्भर्यमिति न्यायपरिशुद्धौ प्रादर्शि। श्रीविष्णुपुराणव्याख्याने च श्रीविष्णुचित्तार्यैः, "पुराणकारस्य हि वैराग्योत्पादने भगवन्माहात्म्यज्ञापने च तात्पर्यात् न लोकसंख्यागणितेऽत्यादरः" इत्युक्तम्। तत्—तस्मात्, इह—ग्रन्थोक्तभूपरिध्यादिभेदे—भूपरिमाणभेदस्वरूपादिनानात्वे सति, भूपरिध्यादेर्भेदे-एकस्मिन् विशेषे तात्पर्यं तर्क्यम्। भेदैरिति पाठे भूपरिध्यादिभेदकाङ्गुलमानभेदान् आदाय एकत्र तात्पर्यमित्यर्थः। तृतीयायाः दुर्ज्ञानमित्यत्र चाऽन्वयः। दुःखेन ज्ञायत इति खल्। ज्योतिरागमे पञ्च सिद्धान्ता इति। ज्योतिरागमः-ज्यौतिषम्। "पैतामहश्च सौरश्च वासिष्ठं पौलिशं तथा। रोमकश्चेति गणितं पञ्चकं परमाद्भुतम्" इति काश्यपसंहितायां सूर्यारुणसंवादे। वराहमिहिरेणाप्युक्तम्, "पौलिश-रोमक-वासिष्ठ-सौर-पैतामहास्तु सिद्धान्ताः। पञ्चभ्यो द्वावाद्यौ व्याख्यातौ लाटदेवेन॥ पौलिशकृतः स्फुटोऽसौ तस्याऽऽसन्नस्तु रोमकः प्रोक्तः। स्पष्टतरः सावित्रः परिशेषौ दूरविभ्रष्टौ॥" इत्युक्तम्। अथ ब्राह्मसिद्धान्तपरिष्करणञ्च ब्रह्मगुप्तेनाऽऽरब्धम्। 'कार्यो यत्नो यस्मिन् दृग्गणितैक्यं सदा भवति' इति च ब्रह्मगुप्तोक्तिः। दृष्टाः—अविवाद्यत्वेन प्रतीताः। उदासितव्यमिति। यस्य कस्यचिद् भ्रमणमस्तु; यः कश्चन सिद्धान्तोऽस्तु। प्रत्यक्षं फलानुभवकल्पितहेतुकार्यभावाधीनफलत्वञ्च निरीक्ष्य समुचितं रोचयमानैरन्यदुपेक्ष्यम्। अन्यतमपरिशोधनप्रयासस्तत्र अस्माकं न फलेग्रहि स्यादिति विमृश्यते चेत्, न प्रयासो न कार्य इति भावः। अत्रोक्तं भाष्यकारेण, "सिद्धान्तभेदेऽपि अयननिवृत्तौ प्रत्यक्षं समममण्डललेखासंप्रयोगाभ्युदितांशकानां छायाजलयन्त्रदृग्गणितसाम्येन प्रतिपादकनलो [illegible] इत्युक्तं वराहमिहिराचार्यैः" इति ॥ ६४ ॥

सूर्यावृत्त्याद्युपाधिव्यतिकरवशतः कालताऽस्त्वम्बरादेः
अन्यस्मिन्नन्यधर्मोपनयननियमः प्राग्वदत्रेति चेन्न ।
वेदान्तेऽप्येककालः प्रकृतिपुरुषवद् ब्रह्मणो रूपमन्य-
न्निर्दिष्टोऽनाद्यनन्तो मुनिभिरिति, ततः शार्गता चास्य भग्ना ॥ ६५ ॥

उद्दिष्टलक्षितेषु त्रिगुणानन्तरं काल परीक्ष्यते । तत्र, "अपरस्मिन् परं युगपदयुगपच्चिरं क्षिप्रमिति काललिङ्गानि" इति परोक्तेरानुमानिक काल इति मन्वान. साङ्ख्यसौगतचार्वाकवच्चित्: कश्चित् कालं निह्नुते सूर्येति ॥ .. [कालता-परत्वादिनिर्वाहकतेत्यर्थः । अम्बरादेरिति ?] आदिशब्देन विभु-

---

प्रभा— सूर्यावृत्तीति । आदिशब्देनेति । आदित्यादीति, अम्बरादेरित्यादिशब्दद्वयेनेत्यर्थः । कालतायाः स्वाभाविक्या उपाधिनिबन्धनत्वमयुक्तमित्याशङ्क्य व्याचष्टे—परत्वापरत्वनिर्वाहकतेति ।

आनन्द— अपरस्मिन् इति । दिङ्निमित्तपरत्वप्रति अपरत्वबुद्धेरपि काललिङ्गत्वं बोध्यम् । आदिशब्देनेति । "सूर्यावृत्त्यादि" इत्यादिशब्देन(?) विभुद्रव्यान्तरं च गृह्यत इति द्रष्टव्यम् ।

श्री— जडद्रव्यसरे निरूपणीयमव्यक्तं कालश्च । तत्रैकमेवैतावता न्यरूपि । अथ कालो निरूप्यते । कालपदार्थस्य वस्त्वन्तरत्वाभावादुद्देशो लक्षणञ्च न युज्यत इति मन्वानं प्रति तत्पार्थक्यं परीक्ष्य स्थाप्यते सूर्येति । सूर्यावृत्तिः तदुदयास्तमयादिः । आदिना तत्स्पन्दादिग्रहणम् । तद्रूपोपाधीनां व्यतिकरः—आवापोद्वापमूलकं मेलनम, संख्यानम् । तद्विशिष्टं सत् अम्बरम्—आकाशम् अन्यद्वा वस्तु वस्त्वेव कालशब्दवाच्यमस्तु । तथा चाधिकदिनवान् अधिकसूर्यपरिस्पन्दवान् वा स्थविरः, न्यूनतत्को युवेत्येव वक्तव्यम् । तत्र सूर्यगता ह्यावृत्तिः स्पन्दो वा ; तद्वत्त्वं पुरुषे कथमित्यत्र तद्धर्मोपनायकत्वमम्बरादेरिष्यताम् । स्पन्दादेः स्वाश्रयसूर्यसंयुक्ताकाशसंयुक्तत्वरूपसंबन्धेन पुरुषे सत्त्वादिति प्रथमपादार्थः । उद्दिष्टलक्षितेष्विति । आद्ये द्रव्याद्रव्ये(६)ति श्लोके कृतोद्देशेषु, (७) तत्रद्रव्यमित्यनन्तरश्लोकेन दर्शितलक्षणेषु च तत्त्वेष्वित्यर्थः । पूर्वार्धे शंकाग्रन्थमवतारयति तत्रेति । तर्केणातिरिक्तकालसाधनं दुष्करम्, दिगादेरन्यथैव निर्वाहादितीह शंकामिषेण शाप्यते । तत्र तर्कं कणादोक्तं निरस्यति अपरस्मिन्निति । अयमेव शुद्धः सूत्रपाठः (वै. द. २-२-६) । अस्मदीयं रसायनं द्रष्टव्यम् । परस्मिन्नपरमित्यस्येदमुपलक्षणम् । अपरस्मिन्निति सप्तम्यन्तप्रयोगात् परत्वमपरत्वञ्चाऽऽपेक्षिकमेकत्रैव भवितुमर्हतीति शाप्यते । अपरं न्यूनसूर्यपरिस्पन्दवत् । परम्—अधिकतत्स्पन्दवत् । युगपत्—एकस्मिन्नेव सूर्यस्पन्दे । अयुगपत्—विभिन्ने स्पन्दे । चिरम्—बहुस्पन्दव्यवहिते स्पन्दे । क्षिप्रम्—बहुस्पन्दानन्तरितस्पन्दे । ईदृशप्रत्ययत्वं वस्तूनां स्वाभाविकं न भवतीति, कालस्यैवान्यगतधर्मोपनायकत्वं वक्तव्यमिति कालसिद्धिरिति सूत्रार्थः । तदत्र खण्ड्यते, 'मा भूत् कालः, आकाश एव विभुत्वादुपनायकोऽस्तु । वेदान्तिपक्षे आकाशो न व्यापीति चेत्, प्रकृतिर्भवतु । तस्या अप्ययोगे ब्रह्मैव विभु धर्मोपनायकमस्तु । तदाह विभुद्रव्यान्तरमिति । एवञ्च अम्बरादेरिति आदिशब्देनैव द्रव्यान्तरादेर्ग्राह्यत्वात् सूर्यावृत्त्यादीति आदिशब्देनोपाधिमात्रस्य ग्राह्यत्वात् सूर्येतीति प्रतीकानन्तरम्, अम्बरादीति प्रतीकधारणं रोचयन्ते । व्याख्याने तु आदिशब्दद्वयेनेति पितृनमस्ति । तत्रैतत्र व्याख्याने वाक्यभ्रंशोऽप्यूह्यते । आदिशब्देनेति प्रथमादिशब्दार्थं विलिख्य क्रमेण द्वितीयमादिशब्दं प्रस्तुत्य विभुद्रव्यान्तरमित्यादि लिखितं स्यात् । एवं तत्पूर्वस्य कालतेति पदस्यापि ततः प्रागेव व्याख्यानमुचितम् ; न तु अतिप्रसंगशंकापरिहारविस्तरानन्तरमिति कालतेत्यादिकमप्यत्रैव पाठ्यम् । परत्वादिनिर्वाह-

द्र य न्तरम् उपाधिबुद्धिविशेषाश्च सगृह्यन्ते । स्थविरयुवादिषु परत्वापरत्वनिर्वाहाय तत्कारणभूत बुद्धिविशेषविषयसूर्यपरिस्पन्दप्रकपनिकर्षाघटकतया काल कल्प्यते । तत्र सपदिपन्नैराकाशादिभिरेव तत्तदुपाधिव्यतिकरितै , उपाधिभिरेव वा बुद्धिसनिकर्षघटितै , तादृशोपाधिबुद्धिभिरेव वा अपेक्षित सिद्धौ किमिह तदतिरिक्तकल्पनया ? यद्यतिप्रसङ्गभयाद् बुद्धिविशेषप्रबन्धानादरेण कालोऽन्य कल्प्यते, तथा(दा ? ऽप्यतिप्रसङ्गस्तदवस्थ यथादर्शन व्यवस्था च समानेति भाव (?) कालता—परत्वादिनिर्वाहकतेत्यर्थ (?) । अत्र दिङ्निरूपणे दर्शितमतिप्रसङ्ग वक्ष्यदेव परिहरति अन्यसन्निति शास्त्रोक्त न लाघवतर्कबाध्यमित्यभिप्रायेणाह नेति । कथ शास्त्रे तदुक्तिरित्यत्राह—कलान्तऽपीति । उक्त हि

ऊष्मा— चन्द्रग्रहाद्यावृत्तय उपाधिविशेषा तत्प्रकर्षनिकर्षबुद्ध्यो बुद्धिविशेषा । अतिप्रसङ्गभयादिति । आकाशादीनामन्यधर्मस्यान्यत्रोपनायकत्वे विन्ध्यगतधर्मणा हिमवदादिषु उपनायकत्वप्रसङ्ग इत्यर्थ ॥ ६५ ॥

श्री— कलेति । अपरस्मिन्निति सूत्रोक्त परत्वापरत्वयौगपद्यादिनिर्वाहकतेत्यर्थ । उपाधिबुद्धिविशेषा इचेति परापरयुगपदादिशब्दार्थघटका यादृशय दृशा परिस्पन्दा , तादृशतादृशतद्विषयकबुद्धय इत्यर्थ । कर्मधारयो वा । तत्रतत्र बुद्धौ स्थविरयुवादितत्तद्वस्तुनोऽपि सहग्रहणे एकबुद्धिविषयत्व सम्बन्धेन तादृशस्पन्दप्रत्त्व स्थविरादौ समन्वित भवति, विना कालमिति भाव । उपाधिभिरेव वेति । स्पन्दवान् युवेत्यादे स्पन्दाश्रयसूर्यसम्बन्ध्यम्बरसम्बन्धित्वेन स्पन्दवानिति वाऽर्थोऽस्तु अम्बरादिक विहाय स्वविषयकबुद्धिमत्त्वसम्बन्धेन स्पन्दरूपोपाधिमानिति वा, विषयतासम्बन्धेन स्पन्दविषयकबुद्धिमानिति वा इति पिण्डितार्थ । नन्वधिकपरिस्पन्दविषयकबुद्धौ यून समूहालम्बनविधया भाने सोऽपि स्थविर स्यादिति शङ्कामनूद्याह यदीति । तदवस्थ इति । कालस्य नित्यविभो· रेकत्वात् अधिकपरिस्पन्दीयकालिकसम्बन्धतत्कालानुयोगिककालिकसम्बन्धस्य यून्यपि सत्त्वात् स दोषस्तदवस्थ ॥ तावन्त स्पन्दा कालिकसम्बन्धेन यूनि न भवन्तीति चेत्—कुत । कालो ह्येक ॥ समानकालिकत्व नास्तीति चेत्—तदाश्रयकालसम्बन्ध एव हि समानकालिकत्वम् । नानाकालसत्त्वे हि समानेति विशेषण सार्थकम् ॥ अथ कालोपाधीनामपि कालत्वात् नानाकाल सद्भाव इति चेत्—तर्हि किमजागलस्तनेन नित्यविभुना कालेन । यथादर्शनमिति । काल एकोऽपि अधिकपरिस्पन्दान् स्थविर एवोपनयति । न्यूनानेव यूनि कतिपयस्पन्दानेव चोपनयति, न सर्वानिति चेत्—कश्चित् बुद्धिविशेष एव किञ्चिदुपाध्युपनायक , कश्चित्तु नेत्येव कल्प्यतामिति किमन्येन कालेनेति भाव ।

द्वितीयपादमवतारयति अत्रेति । आकाशनिरूपण प्रस्तावे (४८) प्राक्प्रत्यक्त्वादीति श्लोके दिक्पदार्थनिषेधिना सिद्धान्तिना दिशि सर्वागतो नय श क श र र सुवच इत्युपपादितम् । तदत्रापि ग्राह्यम् । तथाचाम्बरमेव सूर्यपरिस्पन्दोपनायकमित्यर्थ । तत्र "यद्याकाशादय परधर्म परत्र घटयेयु , तत पाण्डयदेशस्थितेन जपाकुसुमेन वा लीपुत्रस्थित स्फटिकमनुरञ्जयेयु " इत्येव (४९)-मापादन परिहृतमनुसधेयम् । ननु पूर्वोत्तरत्वाद्यवहित यादिक कालवन्तमन्तरा कथ सुवचमिति चेत्—कालघटनऽपि कथ सुवचम् । कालस्यैव यत् एकस्पन्दध्वंसाधिकरणकालवृत्तित्वस्य भूतभविष्यत्सर्वस्पन्दसाधारण्यात् । उपाधीनामेव कालत्वकल्पनया निर्वाहे च तथैव महाकाल उपक्षितो भवेदित्यलम् । अतो वचनबलादेवातिरिक्तकालस्वीकार इत्याह कल्पति । एककाल इति । न त्वम्बरादीनामनपेक्षमुपनायकत्वा, न चोपाधीना बुद्धीना वा कालता । तर्हि व्यतिरिक्तकालस्वीकारे क्षणलवाद्यनेककालपदार्था एव स्वीक्रियन्तामिति चेन्न, प्रमाणे एकपदार्थनेतिरित्याशयेन एकपदम् । रूप-शरीरम्, प्रतितिपुरुषाविव कालोऽपि परब्रह्म प्रति तत्तद्दिग्शरीरत्वेन व्यादिवेनान तयेत्य

वैष्णवे पुराणे, "विष्णोः स्वरूपात्परतोदिते द्वे" इत्यारभ्य, "रूपान्तरं तद् द्विज कालसंज्ञम्" इति। कार्यभूताकाशाद्यन्तर्भावशङ्कानेन भग्न इत्यनेन व्यनक्ति—तत इति। एतेन 'त्रिविधा प्रकृतिः, कालः परमाकाशोऽव्यक्तम्' इति केषांचित् कल्पनाऽपि निरस्ता। ननु जैननिराकरणे, कालस्य चेत्यादिना भाष्येण कालो निराकृत इव भाति॥ मैवम्, 'सर्वप्रतिपत्तिषु तत्तत्पदार्थविशेषणतया सर्वलोकानुभूतस्य न बौद्धादिभिर्नास्तित्वं वक्तुं शक्यम्; न त्वया पृथक् तदस्तित्वं साध्यम्। कालोऽस्तीत्यादिपृथग्व्यवहारस्तु अपृथक्सिद्धविशेषणानां निष्कृष्य(ष्ट)व्यवहारवदिति तन्निर्धारणे तात्पर्यात्; अन्यथा शास्त्रैः सम्प्रदायान्तरैः संप्रदायैश्च विरोधः स्यादिति॥ ६५॥ इत्याकाशाद्यतिरिक्तकालसिद्धिः॥

कालोऽस्मीति प्रगीता, कथयति भगवान् काल इत्यादिवर्गो
हेतुः सर्वस्य नित्यो विभुरपि च परः, किं परेणेति चेन्न।
कालान्तर्यामितादेः स खलु समु(स उ?)दितः संप्रतीते तु भेदे
साधर्म्यं नैक्यहेतुः, स हि तदितरवत् घोषितस्तद्विभूतिः॥ ६६॥

---

(६५)—एतेन त्रिविधेति। एतेन = प्रकृतिव्यतिरिक्तत्वप्रतिपादनेन 'कालोऽस्मि' इति रूपशब्देन॥६५॥

(६६)—"अनादिर्भगवान् कालः" इत्यादिषु निर्दिष्ट इत्यर्थः। मुनिभिरिति इतिशब्दो हेत्वर्थे। चेत्येत्यत्रान्वयः। "परतोदिते द्वे" इत्येव साम्प्रदायिकः पाठः। स्पष्टमिदं व्याख्यातं तात्पर्यचन्द्रिकायाम्, (७.६.) "परतोदिते। परत उदिते इत्यर्थः। आर्षः संधिभेदः। यद्वा स्मृतिरपीयं प्रलयपरैव। तत्प्रकरणस्थत्वात्। दो अवखण्डन इति अत्र दिते इति निष्ठान्तं पदम्। पृथग्भूते इत्यर्थः। अदिते इति वा पदच्छेदः। अपृथग्भूते इत्यर्थः" इति। केषाञ्चिदिति यादवप्रकाशादिपरम्। तन्मते वैकुण्ठस्य प्रकृत्येकदेशत्वात्। जैनेति। नैकस्मिन्नसंभवादिति सूत्र इत्यर्थः। भातीति। सांख्यसौगतचार्वाकैः कालो नेष्टः। जैनैस्तु न पृथग्गणितः। तन्निषेधो भाष्ये क्रियते। तेन नास्तित्वसिद्धिरिवेति। मैवमिति। जातिगुणादीन् स्वीकुर्वाणोऽपि जैनः न तान् पृथग्गणयति, किन्त्विद्विशेषणतयैव भानात् धर्मिशेषतयैव तत्सिद्धिरित्युपेक्षया। एवञ्च कालस्यापि अभूत् अस्ति भविष्यतीति विशेषणतयैव भानात् अयमपि न पृथक् परिगणनीयः। तथापि गणने जात्यादयोऽपि गणनीयाः स्युरिति तदुक्त्यसामञ्जस्यवर्णनमात्रमेव तत्र भाष्ये क्रियते, न कालनिराकरणमिति भावः। "अस्तित्वनास्तित्वादयो न वक्तव्याः न च परिहर्तव्याः" इति भाष्यस्य जीवादिष्विव सत्त्वासत्त्वादिसप्तभंग्युपपादनमत्र पृथक् न कर्तव्यम्; अर्थसिद्धत्वात्। अत एव तन्निषेधोऽपि नास्माभिः कार्यः; विशिष्टे सप्तभंगीनिषेधे कृते विशेषणेऽपि तन्निषेधसिद्धेरित्यर्थः। "न बौद्धादिभिर्नास्तित्वं वक्तुं शक्यम्" इति वाक्यं न प्रकृतभाष्यार्थवर्णनपरम्। नास्माभिर्बौद्धादिमतमिष्टमिति ज्ञापनाय प्रवृत्तम्। त्वयेति। जैनेनेत्यर्थः। तन्निर्धारणे-विशेषणीभूतवस्त्वन्तरसाधने एव शास्त्रैरिति। विष्णुपुराणादिग्रहणम्। ग्रन्थान्तरैरिति स्वाधीनत्रिविधचेतनाचेतनेत्यादिसूक्तिग्रहणम्। सम्प्रदायपदेन यामुनार्यभट्टपादाद्यैरस्यसूचनम्। नयद्युमणिमयोऽत्रान्यः। तदर्थमेवेदं वाक्यम्। तत्र ग्रन्थे असद्भूमिकाऽपि द्रष्टव्या॥ ६५॥

उभयविभूतिसंबन्धिन एकस्यैव कालत्वं युक्तम्। तत् किमिति शोधने परमात्मस्वरूपमेवेति तर्केण इव प्रमाणतोऽपि शङ्क्यत इति कालाभावशङ्कां शमयितुमाह कालोऽस्मीति। कालोऽस्मीति तावत् कालत्वेनास्मदभिमतभगवत्परत्वकं गीतावाक्यम्। कालभूतेनैवोक्तमिति ज्ञापनाय स्वपदम्। मुनिवर्गाय

एवमपि कालस्य परमात्मव्यतिरिक्तत्वं न सिध्यति, रूपान्तरमिति स्वरूपविवक्षोपपत्तेः, तत्स्वरूपैक्ये प्रमाणसद्भावाच्चेत्यभिप्रायेणाह— **काल** इति ॥ **स्वशब्दोऽत्र** परमात्मविषयः । गीयते हि, "कालोऽस्मि लोकक्षयकृत् प्रवृद्धः" इत्यादि । तद्वत् "अनादिर्भगवान् कालः" इति **पराशरेणोक्तमपि** ख्यापयति **कथयतीति** । आप्तवर्यत्वमस्य, "देवतापारमार्थ्यं च" इत्यादिभिः सिद्धम् । नित्यविभुना परमात्मनैव त्रैकालिकसार्वत्रिकसर्वव्यवहारसिद्धिमभिप्रेत्याह **हेतुरिति** । तदतिरिक्तकालकल्पनस्य निरर्थकत्वमाह— **किं परेणेति** । रूपान्तरमित्यत्र क्लिष्टा गतिरयुक्तेत्यभिप्रायेण प्रतिवक्ति— **नेति** । कालेऽपि सामानाधिकरण्यं तत्तत्पदार्थान्तरेष्विव निर्वहतीत्याह **कालान्तर्यामितादेरिति** । **आदिशब्देन** कालाभिमानिरूपसंग्रहः । सन्ति हि जीवमनोहङ्काराभिमानिनियतानुबन्धानि सङ्कर्षणादिरूपाणि । तद्वदिहापि स्यात् । 'को भवानुग्ररूपः' इति प्रश्नसंघटनाच्च । सर्वकर्महेतुत्वनित्यत्वविभुत्वैः तदैक्यसाधनं निरस्यति— **संप्रतीते त्विति** । वस्त्वन्तर इव भेदकण्ठोक्तिं व्यनक्ति— **स हीति** । 'ब्रह्मा दक्षादयः कालः' इत्यादिभिरिति शेषः । "विष्णुर्मन्वादयः कालः" इत्यत्र तु **विष्णुशब्दोऽवतारपरः** ; तद्विभूतित्वं च तादृशरूपेण ॥

**इति कालस्येश्वरैक्यशङ्कापरिहारः ॥**

---

பூ— स्वरूपविवक्षा किंनिबन्धनेत्यत आह—तत्स्वरूपैक्ये इति । 'स्वगीता' इत्यत्र स्वशब्दस्य सन्निहितकालपरत्वशङ्कां निवर्तयति—स्वशब्दोऽत्रेति । नियतानुबन्धानीति । अनुबन्धाः उद्भूतगुणद्वयसंस्थानादिविशेषाः ॥ ६६ ॥

வேலா— अभिमानिरूपसंग्रह इति । आभिमानिकाकारसंग्रह इत्यर्थः । श्लोके 'कालान्तर्यामितादेः' इति । सः परमात्मा कालान्तर्यामित्वादिहेतुभ्यः सम्यगुदितः—अतिशयित (?)...इत्यर्थः । स हीति । तच्छब्दः कालवाची ॥ ६६ ॥

வீ— पराशरायेति प्रशंसित आप्तवर्यश्च 'अनादिर्भगवान् कालः' इति कथयति । प्रमाणवत् तर्कोऽप्यस्तीत्याह हेतुरिति । कालस्यापेक्षितं नित्यत्वं विभुत्वं सर्वहेतुत्वञ्च भगवति समस्तिनाम् । अतस्तदन्यः कालो मा भूदिति चेन्नेत्यर्थः । तत्र हेतुमाह कालेति । खलुशब्दो हीत्यर्थको हेतुपरः । समुदितपदमेव व्याख्यायामपि लक्ष्यते, सम्यगिति व्याख्यानात् । समित्येकीकारे । एकीकृत्योदितः, सामानाधिकरण्येनोक्त इत्यर्थो युक्तः ।, स गदितः स उदितः इत्येवं पाठोल्लेखोऽपि युक्तः । स भगवान् हि स उदितः कालतयोक्त इत्यर्थसंभवात् । अन्तर्यामितादेरित्यत्र तात्पर्यचन्द्रिकेयमनुसंधेया (११. ३२·७) कालशब्दस्यात्र कलामुहूर्तादिमयकालद्रव्यमात्रपरत्वे सामानाधिकरण्यायोगात् इन्द्रप्राणाधिकरणन्यायेन तदन्तर्यामिपरत्वं वा, आकाशप्राणाधिकरणन्यायेन यौगिकार्थत्वं वा.. संहर्तृकालाभिमानित्वविशिष्ट-भगवत्स्वरूपानुसंधानासाधारण-ध्येयविग्रहविशेषविशिष्टपरत्वं वा स्वीकार्यम् । तत्र त्रिष्वपि कालशब्दस्य यौगिकोऽर्थः प्रतीयमानः प्रकृतापेक्षितत्वादपरित्याज्य इत्यभिप्रायेण भाष्यम् "कलयति—गणयतीति कालः" इत्यादि । निर्वहतीति । संपद्यत इत्यर्थः । उग्ररूप इति । रुद्ररूप इत्यर्थे सातत्यात् को भवानिति प्रश्नो न घटते । स्वादृष्टं कालशब्दरूढिगोचरतया प्रसिद्धञ्च किञ्चिद्रूपं भगवतस्तादृशं रूपमित्युच्यत इति युक्तमिति । तृतीयपादेन प्रमाणनिर्वाहः कृतः । तुरीयेण द्वितीयपादोक्तसाधर्म्यमूलस्वतादात्म्यदूषणम् । तदितरवदिति । रूपान्तरमित्यत्राभिमतप्रतिपुरुषान्यरूपतुल्यमित्यर्थः । तादृशरूपेणेति । विष्णुविग्रहमादायेत्यर्थः ॥ ६६ ॥

**कालस्योत्पत्तितः प्राक् परमपि च लयात् कालनास्तित्ववादी**
**स्वोक्तिव्याघातभग्नो न वदति यदि तत्, को वदेत् कालसृष्टिम् ।**
**आप्तस्तत्सृष्टिवादः तदुपधिपरिणत्यादिभिः सार्थकस्स्यात् ;**
**नो चेत्, तत्रापि पूर्वापरवचनहतिः दुर्निवारप्रसङ्गा ॥ ६७ ॥**

ये तु महदादिवत् कालतत्त्वमुत्पत्तिनाशवदिति तन्त्रा[न्तरा]नुसारिणो वदन्ति, तान् प्रतिक्षिपति— **कालस्येति** ॥ उत्पत्तेः पूर्वं, नाशतः पश्चाच्च कालो नास्तीति वदन् किं तत्र पूर्वशब्दस्य पश्चाच्छब्दस्य च निरर्थकत्वं मन्यते, सार्थकत्वं वा ? पूर्वत्र निरर्थकनिग्रहस्थानापत्तिः । उत्तरत्र कालस्यैव तदर्थत्वात् तत्र कालनिषेधे स्ववचनविरोधः । अथ काले कालो नास्ति इत्यविरोधं मन्येत, तर्हि सृष्टिप्रलयमध्यकालेऽपि कालाभावात् तत्रापि कालनास्तितां ब्रूयादिति कथं कालसिद्धिः ? गत्यभावात् मौनमाश्रित्य यः पूर्वं पश्चाच्च नास्तीति न ब्रूयात् ; तदाऽस्मन्मतं न निषेधतीति नास्माभिरुत्तरं देयम् । अथ पार्श्वस्थो यदि कश्चिद् ब्रवीति ; तस्याप्युक्तदोषस्सम इत्यभिप्रायेणाह— **तत् को वदेदिति** । "सदेव सोम्येदमग्र आसीत्", "नासदासीन्नो सदासीत् तदानीम्" इत्यादिश्रुतिविरोधश्चात्राभिप्रेतः। "विद्याकालौ भवस्कृतौ" इत्यादिषु कालोत्पत्तिवचनं कथमित्यत्राह— **आप्त** इति । आप्तवाक्यस्य इत्यर्थः । यथा निमेषादिसंवत्सरान्तजनिश्रुतिः पक्षमासादिष्वागमापायिताप्रत्याख्यातिश्च* उपाधीनां तत्संयोगादिपरिणतीनां तदभिमानिदेवतानां वा सृष्ट्या अर्थवती, तथाऽसावित्यर्थः । अन्यथा तत्रापि विरोधमाह— **नो चेदिति** । **पूर्वापरवचनहतिः** – पूर्वं परं (अपरं?) च कालो नास्तीति वचनस्य बाध इत्यर्थः । अथवा पूर्वापरग्रन्थविरोधः । प्रलयादिकालमनूद्य हि प्रकृतिविकाराः सर्वे सृष्टिवाक्येषु प्रतिपाद्यन्ते (*परख्यातिश्चेति स्यात् । आ दा. व्यवहार इति विवरणम्) ।

श्लो— कालोपश्लिष्टवेषेण ह्यभूदस्तिभविष्यतीन् । प्रयुञ्जतेऽर्थभेदेषु सदा चास्तिमनेहसः ॥ ६७ ॥

इति कालोत्पत्तिवादपरिहारः ॥

---

*பூ*— कालस्यैव 'पूर्वापरवचनहतिः' इत्येतत् पूर्वोक्तव्याघातपरतया व्याचष्टे—पूर्वं परं(?) चेति। उक्तदोषकथनादनुक्तदोषकथने प्रयोजनाधिक्यमभिप्रेत्यान्यथा व्याचष्टे—अथवेति ॥ ६७ ॥

*டிப்பணி*— अभूदस्ति भविष्यतीति। अभूत्-अस्ति-भविष्यतिशब्दान् इत्यर्थः। अस्ति= अस्तिशब्दमित्यर्थः॥

*வீ*— नित्यत्वविभुत्वादिकं काले यो न स्वीकरोति तं प्रत्याह कालस्येति । न्यायसिद्धाञ्जने जडद्रव्यपरिच्छेदे शैवसंमततत्त्वपरिसंख्यानं विमृष्टम्, यदत्र ग्रन्थे परित्यक्तम्, तत्रोक्तम्—"कालो नियतिश्च तथा कला च विद्या च रागश्च । अव्यक्तं मायातः" इति । अत्र मायाजन्येषु कालोऽपि गणितः। कालस्येति (६९.) श्लोके च चतुर्थपादे वक्ष्यति, "ये तु शैवाः कालमनित्यमव्यापिनम्" इति। एवं योगमतेऽपि कालः प्रकृतिकार्य इति वदन्ति । एवमन्यतन्त्रस्थोऽत्र दूष्यते स्वोक्तिव्याघातेति। प्रागिति परमिति च प्रयुञ्जान एव कथं तदातदा कालाभावं वदेदित्यर्थः। तत्र प्रागादिशब्दस्य निरर्थकत्वे निरर्थकाख्यं यत् निग्रहस्थानं तद्रूपदोषापत्तिः । ननु भग्न इत्येतावदलम्; 'न वदति यदि तत् को वदेत् कालसृष्टिम्' इति वाक्यं व्यर्थमिति शंकायामाह अथ पार्श्वस्थ इति। तन्त्रान्तरकारस्य यद्दूषणम्, तस्य वैदिकविषयेऽपि जागरूकत्वात् वैदिकः कोऽपि कालस्य सर्वथैव प्रागस्थितस्य सृष्टिरिति न भणितुमर्हति । नयद्युमणिकारादेरेकदेशिनः अतिरिक्तकालपदार्थानङ्गीकारिणोऽपि प्रलयादौ सर्वथा कालाभावो नेष्टः ; तदानन्तप्राकृतसमपरिणामादेरपि कालत्वेष्टि-

कालोऽध्यक्षावसेयः क्षणलवदिवसाद्यंशतोऽर्थान् विशिंषन् ;
साक्षाद्धीस्तत्तदर्थेष्विव भवति हि नः क्वापि कालान्वयेऽपि ।
तत्संयोगाः परत्वादय इति च; ततोऽप्येष नैवानुमेयः ;
नो चेत्, न क्वापि लोकव्यवहृतिविषयोऽव्यक्तवत् स्यादनेहा ॥ ६८ ॥

नीरूप[द्रव्य]स्यापि प्रत्यक्षत्वसंभवः प्रागेव साधित इति कृत्वा कालप्रत्यक्षत्वं लोकोपलब्ध्या नियमयति (निगमयति ?) **काल** इति ॥ अवसीयमानप्रकारमाह **क्षणे**ति । क्षणमयं तिष्ठतीत्यादिप्रकारेण तत्तदर्थविशेषणतयाऽवसीयत इति यावत् । अभिज्ञायां क्षणरूपेण, प्रत्यभिज्ञायां दिवसादिरूपेण चेति विभागः । अनुमीयमानो विशिंष्यादित्यत्राह **साक्षादि**ति । प्रत्यक्षप्रतीतौ विशेषणतया दृश्यमानस्य कालस्यानुमेयत्वे तत्तत्पदार्थानामपि सौत्रान्तिकोक्तनयात् आनुमानिकत्वं प्रसज्यत इति भावः । न चासावनुमातुं शक्य इत्याह **तत्संयोगा** इति । कालमनभ्युपगच्छतां बुद्धिविशेषसंघटितसूर्यावृत्त्याद्युपाधि-

ടിപ്പണി– प्रत्यभिज्ञायामिति। पूर्वदिवसे जातमेवास्मिन् दिने ज्ञायते इत्यादिरूपेणेति भावः। उपाधि-

ഴീ– संभवात्; अन्यथा श्रुतिविरोधाच्चेति ज्ञापनार्थमियमधिकोक्तिरिति भावः। कालेति। अभूदित्यादि शब्दान् अर्थभेदेषु–तत्तदर्थविशेषेषु प्रयुञ्जते । सदा चेति। सदेति च नित्येष्वर्थविशेषेषु। अस्तिपदश्च सदा इदमुभयम् अनेहसः–कालसंबन्धि; कालमात्रवाचि । पूर्वपदानि तद्विशिष्टवाचीनीति भेदः॥६७

प्रत्यक्षग्राह्यत्वादपि कालस्यातिरिक्तद्रव्यत्वमभिप्रयन् प्रत्यक्षविषयत्वं व्यवस्थापयति काल इति । क्षणादीनां तत्तदुपाध्यवच्छिन्नकालरूपत्वे उपाधीनां सूर्यपरिस्पन्दादीनामप्रत्यक्षतया तत्प्रत्यक्षनिर्वाहो न स्यात् । अतिरिक्तकालपरिणाम एव क्षणादिरितीष्टौ सर्वस्य प्रत्यक्षविषयत्वं सुवचम् । कालः क्षणादिरूपेण अर्थान् विशिंषन्—व्यावर्तयन्—अर्थविशेषणीभवन्निति यावत्—अर्थवदेव अध्यक्षेण—प्रत्यक्षेण, अवसेयः—ग्राह्यः । नियमयतीति । अप्राप्ते हि शास्त्रमर्थवदिति भावः । ननु दिवसस्यानेकक्षणसमुदायात्मकत्वात् तद्घटकक्षणानां सर्वेषां वर्तमानत्वाभावात् कथं प्रत्यक्षमित्यत्र तदंशे प्रत्यभिज्ञाप्रत्यक्षमित्याह आभिज्ञायामिति । कतिपयांशस्मरणं कतिपयांशे संनिकर्षश्च यत्र, तत्र प्रत्यभिज्ञा । सा दिवसादिग्रहेऽपेक्षतेति भावः। लवादीति वक्तव्ये दिवसादीत्युक्तिः लोके लवाप्रसिद्धेः प्रत्यभिज्ञाया दुर्घटत्वात् । श्लोके लवोक्तिः शास्त्रमनुसृत्य । क्षणशब्दश्च काष्ठापर्यन्ताल्प-कालपरः । विशिंष्यात्—व्यावर्तयेत्—विशेषणीभवेत् । सौत्रान्तिकेति । ज्ञानगताकारेण ग्राह्यं सर्वमनुमेयमिति तन्मतम् । द्वितीयपादे साक्षाद्धीः—साक्षात्कारः । क्वापीति । घटोऽयमित्यादौ अर्थविशेषणतया, घटमहं जानामीत्यादौ ज्ञानविशेषणतया चेत्याशयः। कालान्वयेऽपि—कालांशेऽपि। कालसंबन्धेऽपीति वा । प्रकारान्तरेणापि प्रत्यक्षमुपपादयति तत्संयोगा इति । परत्वमधिककाल-संयोगः; अपरत्वं न्यूनकालसंयोगः । आदिना युगपच्चिरमित्यादीनामपि ग्रहणम् । परत्वापरत्वयोः प्रत्यक्षत्वं कणादेष्टम् । तयोः कालसंयोगरूपत्वात् कालप्रत्यक्षत्वं सिद्धमित्यर्थः । परत्वापरत्वे विलक्षणगुणाविति तन्मतं तु निराकरिष्यत इति भावः। इति चेति। इति हेतोश्च कालोऽध्यक्षावसेयः, कालान्वयेऽपि साक्षाद्धीरिति पूर्वेणान्वयः। इममेवार्थं वृत्तौ मुखान्तरेणाह न चासावनुमातुं शक्य इति । कालसंयोगाधीनं परत्वमन्यच्चेत् परत्वेन कालसंयोगानुमानमिति स्यादपि । कालसंयोगानन्यत्वात् परत्वस्य नानुमानप्रसक्तिः । किञ्च कालसंयोगप्रकर्षज्ञानानन्तरमेव परत्वज्ञानात् परत्वेन कालसंयोगानुमानमशक्यञ्चेति भावः । उपाधिविशिष्टकालस्य क्षणादिरूपत्वे उपाधीनाम-

भिरेव वैशिष्ट्यं वस्तूनां परत्वादि। अभ्युपगच्छतां तु तत्तदुपहितकालसंयोगाः। न च तदतिरिक्तं दृष्टं कल्प्यं वा इत्यद्रव्यसरे स्थापयिष्यते। कालस्यानुमेयत्वेऽनिष्टं प्रसञ्जयति नो चेदिति। न हि परत्वापरत्वादिभिः कश्चित् कालोऽस्तीत्यनुमाय तद्विशिष्टतया पदार्थान् व्यवहरन्ति लौकिकाः। अतः कालोऽप्यव्यक्तवत् शास्त्रैकवेद्य इति तद्वदेव लोकव्यवहारविषयो न स्यादित्यर्थः॥

नन्वसदादिप्रत्यक्षम् अप्रत्यभिज्ञारूपं वर्तमानमात्रविषयमिति सर्वसंमतम्। अतोऽस्य पूर्वापरकाल विशिष्टविषयत्वमसंभवि। पूर्वापरव्यतिरिक्तं तु वर्तमानं न पश्यामः। अतः कथं कालप्रत्यक्षत्वम्॥ इत्थम्। किं भवान् वर्तमानधियमेव नानुभवति, सतीमपि वा निर्विषयाम्, सविषयामपि वा कल्पित-विषयाम्? न प्रथमः, इदं पश्यामीत्यादिव्यवहारोच्छेदप्रसङ्गात्। अत एव न द्वितीयः, अस्वविषयधियां त्वनभ्युपगमाच्च (सविषयकत्वात् धियां त्वदनभ्युपगमाच्च)। न तृतीयः; क्वचित्सिद्धस्यैवान्यत्र कल्प्यत्वात्। तथा च तत् सिध्येत्। रूपादिषु दृष्टं वर्तमानत्वं काले कल्प्यतामिति चेन्न; क्षणिकरूपादि-सन्ततावपि पूर्वापरातिरिक्तवर्तमानत्वस्य त्वया दुर्वचत्वात्, अन्यथा कालेऽपि तदुपपत्तेः। कालम-निच्छतश्च ते काले कथं कल्पना? निरधिष्ठानाऽसौ कल्पनेति चेन्न; ईदृशकल्पनाभ्युपगमे माध्यमिका-(मध्यमा)गमप्रवेशप्रसङ्गात्। स्थिरवादे तु रूपादिष्विव केनचित् रूपेण कालेऽपि वर्तमानत्वं सिद्धम्॥ ननु रूपादीनां वर्तमानकालसंबन्धो वर्तमानत्वम्; नाऽसौ कालस्य स्यात्॥ मैवम्; त्वयैव कालस्य

---

**ठव्वा–** भिरेव वैशिष्ट्यमिति। अनेकसूर्यपरिस्पन्दवैशिष्ट्यं परत्वम्, अल्पसूर्यपरिस्पन्दवैशिष्ट्यं अपरत्वमिति भावः। वैशिष्ट्यं च वस्तूभ्युभयविषयैकबुद्धिविषयत्वादिकं द्रष्टव्यम्। तत्तदुप-हितेति। सूर्यपरिस्पन्दाद्युपहितेत्यर्थः। अस्वविषयधियामिति। स्वविषयत्वरहितानामपि धियां नैयायिकादिभिः स्वव्यतिरिक्तविषयाभ्युपगमेन निर्विषयत्वाङ्गीकारादित्यर्थः।

क्वचित् सिद्धस्यैवेति। भ्रान्तेरभ्रान्तिपूर्वकत्वात् वर्तमानकालविषयत्वमवश्यमङ्गीकार्यमिति भावः।

*श्री—* *प्रत्यक्षतया, अनुभवसिद्धस्य कालप्रत्यक्षत्वस्य क्षणरूपकालपरिमाणपक्ष एव वर्तमानत्वमित्य-*प्ययत्नाऽऽकूतम्। ततोऽप्येष नैवानुमेय इति। एवं प्रत्यक्षत्वात् स्वसंयोगात्मकपरत्वादिकत्वात् *सौत्रान्तिकनयप्रसंगाच्च न भवति, कालः अनुमेय एवेति पक्षः। अप्रत्यक्षस्थले त्वनुमानं न वार्यते।* पूर्वकालसंबन्धस्मरणवर्तमानकालप्रत्यक्षोभयमूलं मध्यकालसंबन्धानुमानात्। उपाधिभिरेवेत्येवकारेण कालघटनव्यवच्छेदः। कालस्यानुमेयत्वे—सर्वथाऽनुमानगम्यत्वे।

ननु प्रत्यक्षे कः कालो विषयः, न पूर्वोऽपरो वा; तथानभ्युपगमात्। अन्यथा अतीतादि-प्रत्यक्षापत्तेः। न च वर्तमानः, वर्तमानाख्यकालस्याभावादिति शंकते नन्विति। न्यायदर्शनस्थम्, "वर्तमानाभावः पततः पतितपतितव्यकालोपपत्तेः" (२-१-३७) इति सूत्रमत्रानुसंधेयम्। तदर्थस्तु वृन्तात् प्रच्युतस्य भूमौ प्रत्यसीदतः फलस्य पतनमध्ये य ऊर्ध्वो भागः, स पतितव्योऽध्वा; तत्संयुक्तः कालः पतितकालः। योऽधस्तात् स पतितव्योऽध्वा। तत्संयुक्तः कालश्च पतितव्यकालः। न ह्येतदुभयातिरिक्तस्तृतीयोऽध्वांशो लक्ष्यते, येन वर्तमानः कालः संयुक्तः स्यादिति पूर्वपक्षः। अस्वविषयधियामिति। विषयापलापिनापि धियां स्वविषयकत्वमेष्टव्यम्; पश्यामीति तद्विशेषणतया कालभानञ्च नापलप्यमिति भावः। काले कल्प्यतामित्युक्तं दूषयति कालमनिच्छतश्चेति। ईदृश-कल्पनेति। निरधिष्ठानभ्रमेत्यर्थः। मध्यमागमः—माध्यमिकग्रन्थः। मध्यमशब्दार्थे मे (?) ऽसहीये भाष्यार्थे-

वर्तमानत्वेन रूपादिवर्तमानत्वनिर्वाहात ॥

श्लो—वर्तमाननिषेधे च भवित्री विश्वनिह्नुतिः । न ह्यतीतं भविष्यद्वा प्रत्यक्षविषयोऽस्ति नः ॥
वर्तमानभ्रमश्चात्र तत एव न सिध्यति । पौर्वापर्यातिरिक्ता तु दुस्त्यजा वर्तमानता ॥
अतीतागामिधीरेव वर्तमानमतिर्यदि । भूतभाविसमस्तापत्त्या न शोकादिसमुद्भवः ॥
पूर्वापरत्वसंभेदे वर्तमानमतिर्यदि । त्रिकालस्थेऽपि तत्सिद्धेः क्वातीतागामिता भवेत् ॥
प्रारब्धश्चासमाप्तश्च वर्तमानो य उच्यते । व्यापारसमुदायोऽसौ विवक्षितफलावधिः ॥
तत्रापि क्षणभेदेन नष्टत्वादिविकल्पतः । वैवक्षिकमिहान्यच्च वर्तमानत्वमक्षतम् (मक्षमम्) ॥

---

आ॰— वर्तमानकालोऽध्यक्षावसेय इति । वर्तमाननिषेधे कथं विश्वनिह्नुतिः? भूतभविष्यतोर्विद्यमानत्वादित्यत आह—न ह्यतीतमिति । तद्विषये प्रत्यक्षप्रवृत्तेः, प्रत्यक्षमूलकत्वात् अनुमानादेरपि तत्राप्रवृत्तेः विश्वापह्नवः स्यादेवेत्यर्थः । तयोरप्रत्यक्षत्वात् तत्र वर्तमानत्वारोपोऽपि दुर्वच इत्याह—वर्तमानभ्रमश्चेति । तत्र भूतभविष्यतोः अभूत्, भविष्यतीति धीर्विलक्षणा । अस्तीति बुद्ध्यन्यथाऽनुपपत्त्या च भूतभविष्यद्व्यतिरिक्तवर्तमानत्वसिद्धिरित्याह—पौर्वापर्येति । वर्तमानत्वबुद्धेरन्यथासिद्धिशङ्कां च निराकरोति—अतीतागामीत्यादिना । नष्टत्वादिविकल्पत इति । भूतत्वागामित्वभेदतो वर्तमानो दुर्वच इति शेषः । अन्यद् वर्तमानत्वं वक्ष्याम इत्यत आह—वैवक्षिकमिति । अक्षमम्=

भा॰— पूर्वापरत्वेति । पूर्वत्वापरत्वयोः सम्बन्धवती वर्तमानमतिरिति यदा, तदा अतीते भविष्यति च यत्किञ्चिदपेक्षया पूर्वत्वापरत्वसम्बन्धसम्भवात् वर्तमानता स्यात्, अतीतादिर्न स्यादिति भावः । असौ विवक्षितफलावधिः व्यापारसमुदाय इत्यन्वयः । विकल्पतः= भेदादित्यर्थः ।

टी॰— दर्पणे समुदायाधिकरणे (२-२-३) द्रष्टव्यः । वर्तमाननिषेधे इति । प्रत्यक्षविषयो वर्तमानः । प्रत्यक्षविषयस्यैव निषेधे इत्यर्थः । अत्र, "तयोरप्यभावो वर्तमानाभावे तदपेक्षत्वात्", "नातीतानागतयोरितरेतरापेक्षासिद्धिः" इति (न्या.द. २-१-३८, ३९) सूत्रद्वयोक्तमप्यनुसंधेयम् । नन्विन्द्रियसंनिकृष्टघटक्षणस्य हि प्रत्यक्षम्; न च प्रत्यक्षकाले स क्षणोऽस्ति, । अतो वर्तमानत्वभ्रम इतीदं दूषयति वर्तमानेति । तत एव वर्तमानस्य कचिदपि त्वयाऽनंगीकारादेव । दुस्त्यजेति । पूर्वापरयोर्वर्तमानस्य च भिन्नत्वादिति भावः । तदभेदे दोषमाह अतीतेति । अतीतानागतयोरपि वर्तमानत्वे, इष्टं भूतम्, न तु वर्तमानमिति शोको वा, अनिष्टं भूतमेव, न तु वर्तमानमिति हर्षो वा न स्यात् । अनिष्टं भाव्येव, नेदानीमिति मनस्समाधानं वा, इष्टं भाव्येव, नेदानीमिति क्लेशो वा न स्यादित्यर्थः । तर्हि को नाम वर्तमान इति शंकायां न्यायभाष्योक्तं वैयाकरणसंमतञ्च मनसि निधायाऽऽह प्रारब्धेति । उक्तं हि तत्र, "नाध्वव्यंग्यः कालः, किं तर्हि? क्रियाव्यंग्यः" इति । वृन्तात् पर्णं पततीत्यत्र भूम्यासत्तिपर्यन्ते नानापतनक्रिया अविच्छिन्ना भवन्ति । तत्समुदायः पतनम् । तद्घटकाद्यक्रियोत्पादनात् प्राक् पतिष्यतीति व्यवहारः । अन्त्यपतनक्रियाध्वंसे च पतितमिति । मध्यमश्च पतनक्रियाकालो वर्तमानकालः । स चानेकक्षणात्मा । एवं पचति अवहन्तीत्यादौ सर्वत्र द्रष्टव्यम् । विवक्षितफलेति । पचने विक्लित्तिः फलम्, अवहनने वैतुष्यमित्येवं भाव्यम् । एवं परसंमतं प्रदर्श्य, इदं वैवक्षिकम्, वास्तवमन्यदिति द्वैविध्यमुपपादयति तत्रापीति । तत्रापि एकस्मिन् क्रियासमुदायेऽपि एकैकांशग्रहणेनापि नष्टत्वादिकं सुवचम् । अतस्तत्रातीतत्वागामित्वादिभेदसत्त्वात् पूर्वोक्तव्यापारसमुदाये वैवक्षिकं वर्तमानत्वम्; तस्यांशे च अन्यत् वर्तमानत्वमक्षतम् । क्रियासमुदायेऽपि नानाजातीयक्रियासमुदायः पचनम्, एकजातीयक्रियासमुदायोऽप्यवहननम् । यावति समुदाये एकदेशे वा यत्र वर्तमानत्वव्यवहारः

ननु सतो विनाशप्रागभाव एव वर्तमानत्वम् । तद्विशिष्टेषु पदार्थेषु दृश्यमानेषु किं सतो वाऽसतो वा कालस्य दृश्यमानतया ? मैवम्; कालासत्त्वपक्षस्य निरस्तत्वात् । तत्सत्त्वे तु तत्साध्यानां पूर्वापरयुगपदादिव्यवहारविशेषाणां तत्प्रतीतिपूर्वकत्वस्य स्वरसप्राप्तत्वात् । किंचात्र सत इति वर्तमानत्वविवक्षायां किं विनाशप्रागभावोपश्लेषेण ? वर्तमानत्वमेव च वर्तमानत्वमित्युक्तं स्यात् । अथ प्रमाणसिद्धत्वादिरूपं सत्त्वम्; तदाऽपि विनाशस्य प्रागभावः प्रतियोगिस्वरूपमेवेति तेन रूपेण योगिभिर्गृह्यमाणं त्रैकालिकमपि वर्तमानं स्यात् । अतोऽन्यदेव वर्तमानत्वम्; तच्च कालोपश्लेषेणैव गृह्यते ॥ वर्तमानकालोपाधिसंबन्ध एव वस्तूनां वर्तमानत्वमित्यपि न वाच्यम्; उपाधौ तदभावादवर्तमानत्वप्रसङ्गात्; उपाधिभिरेव सर्वव्यवहारनिर्णये किमप्रत्यक्षकालकल्पनया ? ॥ ६८ ॥ इति कालप्रत्यक्षत्वम् ॥

**कालस्योपाधिभेदात् कतिचिदभिदधत्यब्दमासादिभेदम्**
**तत्तद्रूपेण कालः परिणमत इति प्राहुरेके, तदा तु ।**
**ये तत्रोपाधयः स्युः त इह परिणतिं प्राप्नुयुः प्रानुबन्धाः**
**नित्यो व्यापी च तादृक्परिणतिभिरसौ सर्वकार्ये निमित्तम् ॥ ६९ ॥**

यदि नित्य एकः कालः, तस्य कथं परिच्छिन्नानेकस्वरूपत्वमित्यत्र प्रसिद्धं पक्षमाह—कालस्येति ॥ आदिशब्देन भूतभविष्यत्त्वादेरपि संग्रहः । नित्यस्यापि कालस्य द्रव्यान्तराणामिवावस्थाभेदैः सर्वमिदं स्यात् । अवस्थाश्चात्रोपाधिसंबन्धमात्ररूपा इति लघीयान् पक्षः । पक्षान्तरमाह—तत्तद्रूपेणेति । यादवप्रकाशैरभ्युपगतोऽयं पक्षः—, "कालोऽनाद्यनन्तोऽजस्रक्षणपरिणामी मुहूर्तहोरात्रादि-

---

*एतौ*— युक्तिसहं न भवतीत्यर्थः । प्रतियोगिस्वरूपमेवेति । अभावाभावस्य भावात्मकत्वादिति भावः । कालमङ्गीकृत्य केनचिदुक्तं वर्तमानत्वं दूषयति—वर्तमानकालोपाधीति ॥ ६८ ॥

*ठिपणी*— कालाघटितवर्तमानत्वनिर्वचनपूर्वकं कालस्य प्रत्यक्षत्वं नास्तीति शङ्कते—नन्विति । प्रागभाव एवेति । प्रागभावत्वमेवेत्यर्थः । तद्विशिष्टेष्विति । वर्तमानत्वविशिष्टेष्वित्यर्थः । सत्स्वपीति शेषः । दृश्यमानतया किम्—दृश्यमानत्वं मास्त्विति भावः । किमिति विनाशप्रागभावघटिततया वर्तमानत्वं निरुच्यते, किमित्यध्याहारेण योजना । किं क्षेपे । आत्माश्रयतया दूषयति—वर्तमानत्वमिति । वर्तमानत्वघटितमित्यर्थः । तदभावादिति । वर्तमाने कालोपाधिसम्बन्धाभावादित्यर्थः । कालकल्पनया किम्? कालकल्पना न स्यादिति भावः ॥ ६८ ॥

*श्री*— तत्र तावत्प्रात्ससंबन्धिकालपरिणाम एकः वर्तमानपदविवक्षितः; तस्यैव तदवच्छिन्नसमुदायस्यापि वर्तमानतेति । अथ वर्तमानत्वं कालाघटितोऽभावविशेष इति शंकते नन्विति । सतः = विद्यमानस्य यो विनाशः तत्प्रतियोगित्वमित्यर्थः । उपाधिभिरेवेति । सूर्यावृत्त्यादीति श्लोके उक्तमेतत् ॥ ६८

"कलान्तेऽप्येककालः" इति एकत्वमुक्तं कथं घटत इति पृच्छति यदीति । उपाधिभेदम् = सूर्यपरिस्पन्दादिसंख्येयत्तमाश्रयेति भावः । तत्त द्रूपेणेति । कालो हि द्रव्यम् । अवस्थाश्रयत्वं द्रव्यलक्षणम् । अचेतनत्वाच्च परिणामरूपावस्था घटते इति भावः । यादवप्रकाशेरिति । सूर्येति श्लोकव्याख्यानुक्तं त्रिविधा प्रकृतिरिति वचनमप्येतदीयं स्यात् । प्रधानकार्यत्वेऽपि अनादित्वमव्यक्त इव कथञ्चिन्निर्वाह्यम् । उपात्ते वचने, "अजस्रपरिणामी मुहूर्ताहोरात्रादिविभागयुक्" इत्येव तूक्तम्, न तु क्षणमुहूर्तादिपरिणामीति वा क्षणमुहूर्तादिविभागयुक् इति वा । तद्विमृश्य

विभागयुक् सर्वेषां परिणामस्पन्दहेतुः" इति वचनात्। अयं भावः—क्षणरूप एव कालस्य सर्वदा परिणामः; तत्संख्याप्रकर्षतारतम्यात् मुहूर्तादिविभागः; तत (अत) एव च, अब्दादीनामाद्यन्तमध्यमायुत्पत्तिक्षण-विकल्पचोद्यं निस्तीर्णम्। प्रतिपुरुषमिष्टक्षणारम्भेणाब्दादिगणनाऽपि युक्तैव। अत्र च स्वतः क्षणादि-भेदानभ्युपगमे कथमुपाधिभिरपि भेदः स्यात्; तेषां कालमात्रेण संबन्धे तद्विशेषकत्वायोगात्; तदंशेन संबन्धे तु स्वत एव कालांशभेदसिद्धेः॥ ननु कालविकारेष्वपि कृत्स्नैकदेशसंबन्धविकल्पदोषः समानः; विकारान्तरेण भेदेऽनवस्थाप्रसङ्गश्चेति चेन्न—आश्रयैकदेशवृत्तिगुणादिन्यायेन निर्वाहादिति। अयं परिहार उपाधिसंबन्धमात्रपक्षेऽप्यविशिष्ट इत्यन्ये मन्यन्ते।

श्लो—स्पन्दसन्ततिसिद्ध्यर्थं कालस्याणुत्वकल्पनम्। आशावसान(वसन?)तोकानां दुराशामात्रजृम्भितम्॥
क्रियासन्ततिवत्काले परिणामपरम्परा। किं न स्यात् स्वप्रकर्षाद्यैः परत्वादिप्रसाधिका॥

---

[illegible]— तदयोगादिति। उपाधिसम्बन्धायोगादित्यर्थः। क्रियासंख्या=कालोपाधिरित्यर्थः॥ ६९॥

[illegible]— अब्दादीनामिति। अब्दादय आद्यक्षणे वा मध्यक्षणे वा उत्पद्यन्ते? न प्रथमः, अब्दादीनां नाशक उपाधिभेदो वा, स्वयमेव वा? नाद्यः—उपाध्यवच्छिन्नपक्षस्यैव लाघवेन स्वीकार्यत्वात्। नान्त्यः—अनन्तरक्षणेषु अब्दादिव्यवहाराभावप्रसङ्गात्। न द्वितीयतृतीयौ—आद्यक्षणे अब्दादि-व्यवहाराभावप्रसङ्गात् इति चोद्यं द्रष्टव्यम्। प्रतिपुरुषं गणनाऽपि इत्यन्वयः। आशावसानतोकाः आर्हतबालाः। ननु उपाध्यवच्छिन्नकालपक्षे उपाधिप्रकर्षापकर्षाभ्यां परत्वापरत्वे संभवतः; काल-परिणामपक्षे कथमित्यत आह—क्रियेति। क्रियासन्ततिवदिति। तपनपरिस्पन्दादिरूपोपाधिसन्तति-वदित्यर्थः। परत्वादीति। प्रसाधिका किं न स्यादित्यन्वयः।

[illegible]—अजस्रक्षणमात्रपरिणामीत्युक्त्वा भावमाह अयं भाव इति। यदि अब्दादिरूपेणापि परिणामः, स कदा। क्षणपरिणामः प्रतिक्षणम्। अब्दपरिणामस्तु एकैकाब्दानन्तरमिति चेत्—एकैकं दिनमारभ्यापि षट्पञ्चाशदधिकदिनत्रीशतीसंख्यया अब्दनिष्पादनात् पुत्रादिजननदिनमारभ्याब्दगणनात् सौर-चान्द्रसावनबार्हस्पत्यादिभेदेनाब्दव्यवहारभेदाच्चाव्यवस्था। एवं मुहूर्तादिष्वपि। प्रतिक्षणं मुहूर्त-संवत्सरादिसर्वपरिणामस्वीकारेण तत्तन्नाशपर्यन्ततत्तत्संबन्धशालिभिः अब्दस्थायित्वादिकमित्युक्ता-वपि मुहूर्ताब्दशब्दादीनां कोऽर्थ इति विमर्शे क्षणसमुदायवैचित्रीमादायैव भेदव्युत्पादनं कार्यम्। तथा च किं वृथा क्षणातिरिक्तकालपरिणामस्वीकारेण। तत्रतत्र यथेष्टं तत्समुदायविशेषग्रहणेन सर्वनिर्वाहादित्याशयः। आद्यन्तमध्यमेत्यादि। यावत्क्षणसमुदायं गृहीत्वा अब्दसंबन्ध उच्यते। तत्र प्रथमक्षणे वा मध्ये वा अन्ते वा कदा तदब्दोत्पत्तिः? नियामकाभावे नानाब्दोत्पत्तिः स्यात्। यत्र क्षणे उत्पत्तिः, तदैव तस्याब्दत्वेन व्यवहारः स्यादिति भावः। तर्हि क्षणपरिणाममपि विहाय प्रथमा तार्किकादिसरणिरेवाद्रियतामित्यत्र प्रागेव तदसंभव उक्त इत्याह अत्र चेति। कृत्स्नैकदेशेति। सर्वमिदं ग्रन्थारम्भ एव समाहितम्। एकदेशवृत्तिगुणः—संयोगादिः। अवच्छेदकान्तरनिरपेक्षमेवा-व्याप्यवृत्तित्वस्वाभाव्येनोपपत्तिः। अत एव ब्रह्मणि निरवयवे घटादेरेकदेशासंबन्ध इत्यादि भाष्यम्।

कालव्यवस्था स्पन्दगणनयैवोच्यते। स्पन्दश्च क्रिया। सा विभो कथं स्यात्। मध्यमपरिमाणत्वे चानित्यता स्यात्। अतोऽणुरिति जैनाः, तद् दूषयति स्पन्देति। आशा दिक्। वसनम् अम्बरम्, आशावसनो दिगम्बरः; तदनुयायिनस्तत्रोक्ताः। तोकः—बालः। आशावसनेति पाठार्जवेऽपि आशाव-सानेत्येव सर्वत्र पाठः। तदा वस आच्छादने इति शानचि वसानेति रूपे आशाः वसानाः दिगम्बरा इति व्याख्येयम्। दुराशेति॥ स्पन्दापेक्षत्वामपि सूर्यादिस्पन्दस्यैवोक्त्या कालस्य स्पन्दानपेक्षणादिति

"एकाश्रयक्रियासख्या काल" इत्यासमापितम् । कालोपाधिविशेषाणा सर्वेषामुपलक्षणम् ॥

अत्र परिणतिपक्षमनूद्य तत्राप्युपाधिव्याप्तिमाह—**तदा त्विति** । **अनुबन्धाः**— ऋतुलिङ्गादय । आनन्तर्यनियमादुत्तरोत्तरकार्याणामुपाधिमूलत्व च सिद्धम् । ऋतुलिङ्गादीना तु न कालकार्यहेतुनियम ।

ये तु शैवादय कालमनित्यमव्यापिनं परिमितकार्यहेतु च प्राहु , तान् प्रत्याह—**नित्य** इति। क्षणाद्यशस्याऽऽगन्तुकत्वेऽपि स्वरूपतो नित्य । नित्यत्व चात्र प्रध्वसविरहमात्रम् , न तु सर्वदा सत्ता , कालान्तराभावात् । व्यापित्व तु क्षणेनोऽपि स्यात् , सार्वत्रिकाणामपि केनचित् यौगपद्यसिद्धे । नित्यत्वे प्रागेव प्रमाण दर्शितम् । व्याप्तिश्च, "काल स पचते तत्र न कालस्तत्र वै प्रभु " इत्यादिभि सिद्धा । त्रिगुणविभूतिवत् कालप्रतिनियतविकारास्तत्र न सन्तीत्यर्थं । स्वविकाराणामुपादानतया अन्येषा निमित्ततया वाऽस्य सर्वहेतुत्व 'काल पचति भूतानि' इत्यादिभिर्गम्यते । तदपि सर्वत्र सन्निहितस्य ।

ननु 'अन्तर्बहिश्च तत् सर्वं व्याप्य नारायण स्थित ", "सर्वव्यापी सर्वभूतान्तरात्मा" इत्यादिषु एकस्य सर्वव्यापकत्व श्रूयते , अतस्तद्व्याप्यस्य कालस्य कथ विभुत्वम् ? इत्थम्–न हि न्यूनदेशवर्तित्वमेव व्याप्यत्वम् , तथासति समव्याप्तिभङ्गप्रसङ्गात् ॥ तर्हि तद्वदन्योन्यव्याप्यत्वमिह स्यादिति चेत्, किमत्रानिष्ट परस्परप्रवेशस्यचाप्यनभ्युपगमात् । द्वयोरपि सर्वसयोगित्वे वि[वादा]रोधाभावात् । अतो यत्र कालस्तत्र सर्वत्र परमात्माऽस्तीति तस्य कालव्यापकत्वम् । इद च तस्य धर्मभूतज्ञानेऽपि द्रष्टव्यम । "परमात्म[न ]स्वरूपैकदेशे विश्व व्यवस्थितम्" इत्येतदपि तादृशव्यतिरिक्तविषयम् । अन्यथा तस्य ज्ञानानन्दत्वादेरपि एकदेशित्वप्रसङ्गात् । न चैव सति सर्वजीवाना व्यापित्वेऽप्यविरोध स्यादिति वाच्यम् , अणुत्वश्रुत्या तत्प्रतिषेधात् इति ।

---

*Ơeuơn*— तादृशव्यतिरिक्तविषयमिति । विभुव्यतिरिक्तविषयमित्यर्थ ।

*ơl*— भाव स्वप्रकर्षाधि क्षणसख्याधिक्यन्यूनत्वादिभिरित्यर्थ । उपलक्षणमिति । क्रियामात्र कालोपाधिरिति तार्किकपक्षमाश्रित्य तथोक्ति । जन्यमात्र कालोपाधिरिति तार्किकपक्षे तु तदन्यदपि गृह्यत इति भाव । मूले तदा त्वित्यस्य द्वितीयपक्षे इत्यर्थ । ननु क्षणरूपपरिणामसख्याविशेषत एव सर्वनिर्वाहे उपाधिघटन कथमेवेति चेत् उच्यते—तत्र प्रथमपक्षे ये उपाधय स्थिता , तेऽत्र पक्षे परिणतिं प्राप्नुयु , व्यवच्छेदकतया परिणामे सवध्येरन्नित्यर्थ । अय भाव —प्रथमपक्षे मासो नाम मासघटकत्वाभिमता यावन्त क्रियारूपक्षणा तावन्तो वा, तावत्कालमात्रस्थितजन्यपदार्थरूपो दण्डात्मककालो वा । तादृशभौतिकवस्तुविशेषावच्छिन्नपरिणामसतान कालपरिणामपक्षे मास । वसन्त , चैत्र इत्यादौ तावत्कालस्थायिऋतुमासादिलिङ्गमुपाधीकृत्य तदवच्छिन्नपरिणाम इत्युक्तावेव विशेषावगम । अन्यथा सर्वस्य क्षणरूपपरिणामत्वेनाविशेषादिति । एव विशेषरूपेणैव कालस्य तत्तत्कार्यनिमित्तता । अत काल सर्वकार्यनिमित्तमित्युच्यते । न तु केवल सामान्यत इति । न कालेति । वसन्तर्तुलिङ्गरूपकार्यस्य ग्रीष्मर्तुकार्यहेतुत्व न नियतमित्यर्थ । प्रध्वसेति। प्रध्वसोऽय निरन्वयविनाश । सर्वकालसत्त्व नित्यत्वमिति यदन्यत्रोच्यते, तत् अत्र न भवति कालस्य काले सत्त्वायोगात् । व्याप्ति —विभुतया नित्यविभूतावपि सम्बन्ध । तदपि—तत् हेतुत्वमपि संनिहितत्व एव भवेत् । अतो व्यापित्वमित्यर्थं ।

'ननु कालतो देशतो व्यतिरेकग्रहणस्याशक्यत्वात् नित्यविभूना कारणत्वमेव न सिध्यति। कुत सर्वकारणत्वम्' इत्यनुयोगश्च धर्मिग्राहकेणैव निरस्त। अस्ति हि लोकेऽप्युपदेशतोऽपि तत्तद्वस्तुषु कारणत्व ग्रहणम् ॥ अथ स्यात्—नियतपूर्वसत्त्वं कारणत्वम्, नियमश्च' अस्मिन् सत्येवेद भवतीत्येवंरूप, तत्त्वावधारणसिद्धोऽन्यदा नास्तीत्ययमर्थो नित्येषु च विभुत्वग्रहण इति ॥ मैवम, प्रसङ्गतोऽपि नियम सिद्धे। तथा हि। इद सर्वकारणमिति बोधयतामयमाशय.-यद्येतन्न स्यात् सर्वं नोत्पद्यते। अतस्सर्वोत्पत्तिप्रयोजकमेतदिति, न पुनर्यदा यत्तेदं नास्ति, तदा तत्र सर्वं नास्तीति। अतस्सुष्ठूक्त नित्यव्यापिन कालस्य सर्वकार्यहेतुत्वम् ॥ ६९ ॥ इति कालस्यावच्छेदकप्रकारविभुत्वसर्वकार्यहेतुत्वानि ॥

वायुर्दोधूयते यत् यदयमुडुगणो बम्भ्रमीति द्रुत खे
तेजो जाज्वल्यते यत् यदपि न जलधि (जलनिधि) र्माधवीं दो(दा)घवीति।
भूर्यद्वा बोभवीति स्थिरचरधृतये तच्च तादृक्च सर्वं
स्वायत्ताशेषसत्तास्थितियतनपरब्रह्मलीलोर्मिचक्रम् ॥ ७० ॥

---

प्रभा— अनुयोग -प्रश्न·। 'प्रश्नोऽनुयोगः पृच्छा च' इति निघण्टुः। धर्मिग्राहकेणैव निरस्त इति। कार्यानुकृतान्वयव्यतिरेकत्वं कारणत्वं न भवति। अनन्यथासिद्धनियतपूर्वभावित्वं कारणत्वमिति भावः ॥ ६९ ॥

श्री– "पूर्वभावो हि हेतुत्व मीयते येनकेनचित्। व्यापकस्यापि नित्यस्य धर्मिधीरन्यथा न हि" (१-स्त) इति कुसुमाञ्जलिकारिकार्थं घटयति नन्विति। यदि तस्मिन् सति तत्, तदभावे तदभाव इति अन्वयव्यतिरेकावेव कारणत्व स्यात्, तदा विभु नित्य वस्तु न कारण भवेत्, विभुत्वात् क्वचिदपि देशे, नित्यत्वात् क्वचिदपि काले व्यतिरेकस्य दुर्वचत्वात्। किं तु पूर्ववर्तित्वमेव हेतुत्वम्, तत् व्यतिरेक विनाऽपि सुग्रहम्। कारणमिति शब्दप्रमाणात् कारणत्वग्रहे तदनपेक्षणात्। ननु न पूर्ववर्तित्वमात्र कारणत्वम्, अनियतस्य रासभादेरपि कारणत्वापत्ते। अतो नियतपूर्ववर्तित्वमेव। नियतत्वञ्च व्यतिरेकघटितमिति शंकते अथ स्यादिति। अस्मिन् सत्येवेति। अस्मिन् असति कार्यं न भवतीत्यव एवकारोक्ते व्यतिरेको घटक इति शङ्का। प्रसंगत इति। आपादनतोऽपीत्यर्थ। आपादन हि वस्तुन सत्त्व एव भवति। तथा च यदीदं न स्यात्, तर्हि तन्न भवेदिति नियतत्वग्रह इति भाव। ननु सर्वकारणमिति सर्वपद किमर्थमिति चेत्—कालस्य प्रकृतस्य सर्वकारणत्वात्। एव प्रसंगपक्षे नित्यस्यापि कार्यत्वसिद्धि। अत एव ब्रह्मत. तदिच्छातश्च सर्वपदार्थसत्ता। ननु एवमापादनस्यापि व्याप्यव्यापकभावघटितत्वात् तस्यापि नियतत्वरूपतया तत्राप्यापादनान्तरोपन्यासेऽनवस्थापातात्, व्याप्यारोपेण व्यापकारोपस्तर्क इत्येव प्रसिद्धया कार्यकारणयोर्व्याप्यव्यापकभावस्य वक्तव्यत्वाच्च नियतत्व व्यापकत्वमित्येवोच्यताम्। तच्च समानाधिकरणाभावाप्रतियोगित्वमिति चेत्—अस्यापि व्यापकत्वस्य तर्कमन्तरेणासिद्ध्या, 'तर्क शङ्कानिवर्तक' इति तर्कोपन्यासापेक्षा स्यादिति एव कथितम्। तदेदा व्यापकत्वरूपनियतत्वावलम्बन नानिष्टम्। एवमनियत वैकल्पिकमपि कारण लोके शास्त्रे च दृष्टम्। नियतमप्यन्यथासिद्धमकारणत्वेनेष्टम्। अत· कारणत्वमन्यादृशमिति विचारोऽप्यस्तीत्यलमधिकेन॥

ननु जडद्रव्यस्येवाजडद्रव्यस्यापि भगवदधीनस्वरूपस्थितिप्रवृत्तिकत्वाविशेषात् अत्र जडद्रव्यसरान्ते भगवदधीनत्ववर्णन कुत, तस्य आदौ सर्वनिरूपणान्ते वा कथन ह्युचितमिति।

प्रकृतचिन्तावर्गस्य परब्रह्मवैभवव्यञ्जकतया सार्थकत्वं प्रथयति—**वायुरिति** ॥ माधवीं—पृथिवीम्। 'मेघोदयस्सागरसन्निवृत्तिः' इत्यादिसूक्तं स्मारयति—**तच्च तादृक्चेति**। **यतनं**—व्यापारः। सुमहमन्यत् ॥ ७० ॥ **इति सर्वतत्त्वस्थितिप्रवृत्तीनामीश्वरेच्छायत्तत्वम्** ॥

**इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु सर्वार्थसिद्धिसमेते तत्त्वमुक्ताकलापे जडद्रव्यसरः प्रथमः ॥**

—:*—*:—

*ஸ்ரீ*— वायुर्दोधूयत इति। माधवीम्=पृथिवीमिति। 'महीं देवीं माधवीम्' इति प्रयोगादिति भावः॥

इति वाधूलकुलतिलकेन महार्यापरनामधेयेन श्रीनिवासेन विरचितायां सर्वार्थसिद्धितात्पर्यप्रकाशिकायां जडद्रव्यसरः प्रथमः ॥

*ஸௌமௌ*— दोधूयते। 'धूञ कम्पने'। दोधवीति पवित्रीकरोति, प्राप्नोतीति वा। 'धावु गतिशुद्ध्योः' इति धातुः ॥ ७० ॥ उपरितनसराणामेतद्व्याख्यानं नोपलभ्यते ॥

इति श्रीसौम्यजामातृवरदरामानुजविरचिते सर्वार्थसिद्धिप्रकाशे जडद्रव्यसरः प्रथमः ॥

*வீ*— *शङ्कामपाकुर्वन् अवतारयति प्रकृतेति। एतस्य विचारस्य ब्रह्मविचाररूपत्वोपपादनार्थं स्वतन्त्रवत् प्रत्यक्षस्यापि जडस्याप्रत्यक्षब्रह्मात्मकत्वस्थापनार्थं चेदमिति भावः।*

दोधूयते। धूञ् कम्पने। सदागतिरधिकं कम्पते। इति यदिति इतिशब्दाध्याहारेऽर्थवर्णनसौन्दर्यम्। यच्छब्दस्य क्रियाविशेषणतयाऽन्वयेऽपि न दोषः। एवमुत्तरत्रापि। दोधवीति धू विधूनने। दाधवीत्यपि पाठः। धावु गतिशुद्ध्योरिति च धातुः। 'यदपि न जलधिः' इत्यत्र संकल्पसूर्योदये (९-५.) पाठः। भूमि व्याप्य न नाशयतीत्यर्थः। नञ्रहितपाठे मेघनदीमुखेन भूमि शोधयतीत्यर्थः। भूयंश्चा *इत्यत्र चाक्षुसप्रयोगः पूर्वेषामन्वयितां व्यापाररूपत्वात् अस्य च मत्त्वापात्रत्वाद्वेपम्यमालोच्य।* मेघोदय इति। "मेघोदयः सागरसंनिवृत्तिरिन्दोर्विभागः स्फुरितानि वायोः। विद्युद्विभंगो गतिरुष्णरश्मेर्विष्णोर्विचित्राः प्रभवन्ति मायाः" इति पूर्णश्लोकः। सर्वमित्यस्य समुदायवाचित्वाभावेऽपि ऊर्मिचक्रमिति प्रयोगः एकैकधात्वर्थसंतानविवक्षया। अचेतने यत्नायोगात् यतनं व्यापार इति व्याख्यानम्।

*श्रीरंगलक्ष्मणमुनीन्द्रकृपासमृद्धश्रीवीरराघवसुधीरचितेऽत्र पूर्णः।*
*सर्वार्थसिद्ध्यधिगमार्थमलभ्यलाभे द्रव्यं जडं प्रगुणयन् प्रथमः सरोऽयम्॥*
*परमतगहनार्थव्रातचिन्तामयत्वात् प्रथम इह सरेऽभूत् विस्तृतेयं कृतिर्नः।*
*अधिगतनिगमान्तैः प्रायशस्सुग्रहत्वात् इत उपरि तु मन्ये संग्रहः स्यात् विधेयः॥*

इति अभिनवदेशिक वात्सवीरराघवाचार्यकृतौ अलभ्यलाभाख्ये व्याख्याने जडद्रव्यसरः प्रथमः ॥

—✧×✧—

## ॥ जीवसरः द्वितीयः ॥ २ ॥

यो मे हस्तादिवर्ष्मेत्यवयवनिवहात् भाति भिन्नः स एकः
प्रत्येकं चेतनत्वे बहुरिह कलहो वीतरागो न जातः ।
तत्सङ्घातातिरिक्तेऽप्यवयविनि कथं तेष्वसिद्धा मतिः स्यात्
सङ्घातत्वादिभिर्वा घट इव तदचित् स्यान्ममात्मेत्यगत्या ॥ १ ॥

अथ प्रत्यगर्थे जीवस्तावन्निरूप्यते। तत्र चार्वाकेणापि दुरपह्नवं प्रमाणमाह—य इति॥ हस्तादिवर्ष्म हस्तादिरूपं शरीरमित्यर्थः। मम हस्तादि, मम वर्ष्मेति वा पृथगुदाहर्तव्यम्। अस्ति तावदयं

---

### सर्वार्थसिद्धितात्पर्यप्रकाशिकायां जीवसरो द्वितीयः ॥

आ—यो म इति। हस्तादिवर्ष्मेत्येतत् पदभेदादैकपद्यस्य न्याय्यत्वात्, (?) मध्यमपदलोपिसमासाश्रयणेन कर्मधारयतया व्याचष्टे—हस्तादिरूपमिति। मे वर्ष्मेत्येतावता सिद्धेः विशेषणं मन्दफल-

### अलभ्यलाभे जीवसरो द्वितीयः ॥

श्री— नमो भगवते तस्मै नित्यश्रीवासवक्षसे। निखिलैश्वर्यकैवल्यनिश्श्रेयसविधायिने ॥

श्रीभगवद्यामुनमुनिभिरात्मसिद्धौ "देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः" इति जीवो यथा न्यरूपि, तथा निरूपणे प्रवृत्तः प्रथमं देहातिरेकं श्लोकद्वयेनाह य इत्यादिना। इदमिति पदमादौ घटनीयमिति सूचनाय मे इत्यन्वादेशः। इदं मे हस्तादिकम्, इदं मे वर्ष्म इत्यादिप्रतीतौ यः मे इति पदेन अवयवनिवहात् भिन्नो भाति—प्रतीयते, स कथमवयवनिवहः स्यात्। अवयवनिवहो नाम—तत्तदवयवः, समुदायात्मकं शरीरञ्च। एवं भिन्नत्वेनोपलम्भवत् भिन्नत्वानुमानमप्यस्ति। स हि एकः, मे इति एकत्वेनैव भाति। समुदायस्य च समुदाय्यनतिरेकात् एकत्वं दुर्घटम्। तत्र एकोऽवयव एवाऽऽत्मेत्यत्र न किञ्चिन्नियामकम्। प्रत्येकं चेतनत्वे—सर्वेषां चेतनत्वस्वीकारेण नानाचेतनभूतोऽयं देह इति पक्षे मिथ ईर्ष्यारागादिमूलः कलहः स्यात्। रागद्वेषादिरहिता इमे विलक्षणाश्चेतना इति तु दुर्भणम्। न हि वीतरागः कश्चिज्जातो दृश्यते। "वीतरागजन्मादर्शनात्" इति न्यायसूत्रे विवक्षितोऽर्थोऽप्यर्थात् स्मर्यताम्। नन्वयवातिरिक्तावयविवादे अवयवी देह एकः स्वच इति चेत्—अवयवसंघ नातिरिक्ते अवयविनि मतिः=चैतन्यं कथं जायते। अवयविगतविशेषगुणं प्रति अवयवगतविशेषगुणानामेव कारणत्वस्य भवदिष्टत्वात्; अवयवेषु च चैतन्याभावात्। एवं संघातत्वादयोऽपि सांख्योक्ता हेतवः घटादिदृष्टान्तमुखेन देहः अचित्=अचेतन इति स्थापयन्ति। ननु मम शरीरमिति भेदबुद्ध्या ममेत्युक्तस्य शरीरातिरिक्तत्वमिति न युक्तम्। ममात्मा इत्यपि प्रतीत्या मत्पदार्थस्यात्मभिन्नत्वापत्तेः, तत्राभेदेऽपि षष्ठ्युपपत्तौ मम शरीरमित्यत्रापि तथाऽस्तु इत्यत्राह स्यान्ममात्मेत्यगत्येति। ममात्मेति प्रतीतिः देहात्मवादिनाऽपि गौणतयैव नेया; गत्यभावात्। अतः तद्दृष्टान्तेन सर्वत्र षष्ठ्यर्थभञ्जनं न युक्तमिति श्लोकार्थः।

अथेति। द्रव्यं द्वेधाविभक्तं जडमजडमिति। तत्र जडमव्यक्तकालभेदेन द्विविधमिति कथितमेतावता परीक्षितमासीत्। अथाजडं निरूपणीयम्। तत् प्रत्यक् पराक् चेति द्विविधम्। तत्राऽऽद्यमवसरसंगत्या निरूप्यम्। स च प्रत्यगर्थः। स द्विविधो जीवेशभेदादिति प्रागुक्तत्वात् आदौ प्रत्यगर्थान्तर्गतो जीवः परीक्षणीय इति भावः। चार्वाकेणापि दुरपह्नवं—तेनाप्यपह्नोतुमशक्यम्। षष्ठीप्रयोगमूलभूतभेदज्ञानस्य प्रत्यक्षरूपत्वात्। प्रत्यक्षप्रामाण्यस्य च तदिष्टत्वादिति भावः। हस्तादिरूपं वर्ष्मेति। हस्तादेरपि शरीरत्वं नियमेनाऽऽधेयत्वविधेयत्वादिमत्त्वादक्षतम्। मम हस्त इति प्रयोगे

व्यतिरेकप्रत्ययः ; तत्र(अत्र) न तावत् एकोऽवयवोऽवयवान्तराणि ममेत्यभिमन्यते ; तथाऽनुपलम्भात्, व्यवस्थापकाभावाच्च । सर्वावयवविषयश्चासौ ममकारः । न चावयविनोऽ[यं स्वा]वयवाभिमानः, तन्निरासात् । नापि सङ्घातः सङ्घातिनोऽभिमन्यते, संसर्गस्य तदयोगात्, संसर्गिणां तु दत्तोत्तरत्वात् । एवमवयवेषु बहुष्वभिमन्तव्येषु अबाधितैकप्रत्ययविषयोऽभिमन्ता हस्तादिभ्यस्तत्सङ्घाताच्चान्य इत्यभिप्रायेणाह स एक इति । स्मर्यते च, "पिण्डः पृथक् यतः पुंसः शिरःपाण्यादिलक्षणः" इत्यादि ।

अवयवोपचयापचयविनाशादिकालेष्वपि, 'स एवाहम्' इति प्रत्यभिज्ञाविषयः कालभेदेऽप्यभिन्न इति चात्र भाव्यम् । अन्यथा पाण्याद्यवयवच्छेदे हि तदनुभूतस्मरणं न स्यात् ; अन्यदृष्टस्यान्येन स्मरणायोगात् । न च तदनुभववासनासंक्रमादन्योऽपि स्मरति, मात्राद्यनुभूतस्य गर्भादिभिः स्मरणप्रसङ्गात् । न च संसर्गे वैषम्यं कल्प्यम्, नियामकाभावात् । वासनासंक्रमश्च पटादिषु मृगमदादेर्द्रव्यस्य संक्रमः । न चेह तथा, त्वयैवानभ्युपगमात् । गुणसंक्रमो (मस्तु) न क्वचिदपि । न चात्र रुमाक्षिप्तकाष्ठ(ादि)न्यायः, दुःखादेरपि तथोत्पत्तिप्रसङ्गात् । कल्प्येषु च नियामकादृष्टेः ।

श्लो— सर्वबोधैश्च हृत्कोशे संस्काराधानमित्यपि । न दृष्टं न च तत्कल्प्तौ लिङ्गं किमपि दृश्यते ॥

---

पुष्टि— मित्युदाहरणद्वयपरतया व्याचष्टे—मम हस्तादीति । व्यवस्थापकाभावाच्चेति । अयमभिमन्ता, अन्ये त्वभिमन्तव्या इत्यत्र नियामकाभावादित्यर्थः। इति चात्र भाव्यमिति । एकशब्देन विवक्षितमिति भाव्यमित्यर्थः । दुःखादेरपि तथोत्पत्तिप्रसङ्गादिति । एकस्मिन् अवयवे कण्टकवेधादौ सति अवय-

व्री— ममेति हस्तातिरिक्तावयवग्रहणमिति मतिवारणाय आदिपदम् । सर्वान् अवयवान् पृथक् पृथक् युगपदेव गृहीत्वा मम हस्तः पादः शिरः कण्ठ इत्येवं सर्वैर्निर्देशो सर्वभिन्न एव हि ममेति ग्राह्य इति भावः। तदुपपादनक्लेशाद्वा अतिरिक्तावयविरक्षेण वा वर्ष्मेति श्लोके प्रयुक्तम् । अतः, इदं मे वर्ष्मेति प्रयोगात् वर्ष्मशब्दवाच्यसर्वभिन्नत्वसिद्धिरित्याह इति वा पृथगिति । ममेत्यभिमन्यते= मदीयानि इमानीति स्वकीयत्वेन मन्यत इत्यर्थः । तथाऽनुपलम्भादिति । सर्वावयवस्वामित्वेन कस्यचिदवयवस्यानुपलम्भात्, अन्यस्यैवोपलम्भादित्यर्थः । व्यवस्थापकाभावात्=शिरःपाण्यादिषु अयमेव मच्छब्दार्थ इत्यत्र नियामकाभावात् । तन्निरासात्—अवयवातिरिक्तावयविसद्भावस्य प्रागेव निरस्तत्वात् । संसर्गस्य तदयोगादिति । संघातो हि मिथस्संसर्गः संयोगः । न च गुणे चैतन्यमस्ति । न च संयोगरूपगुणं प्रति संयोगिनामाधेयत्वविधेयत्वशेषित्वरूपशरीरत्वसंभव इत्यर्थः । दत्तोत्तरत्वात्=एकैको वा सर्वे वेति प्रागेव विकल्प्य निरासात् ।

मूलस्य अवयवनिग्रहात् उपचितात् अपचितात् नष्टावशिष्टरूपाच्च संघातात् भिन्नतया स एवाहमित्यैक्यप्रत्यभिज्ञादर्शनकृतमप्यभिप्रेत्याह अवयवोपचयेति । प्रत्यभिज्ञाविषय इति । प्रत्यभिज्ञाविषयत्वादित्यर्थः । अभिन्न इत्यत्रायं हेतुः । चकारः पूर्वोक्तप्रथमपादार्थसमुच्चये । "नान्यदृष्टं स्मरत्यन्यो नैकं भूतमपक्रमात् । वासनासंक्रमो नास्ति न च गत्यन्तरं स्थिरे ॥" (१. स्त) इति कुसुमाञ्जलिकारिकार्थमिह घटयति अन्यथेत्यादिना । संसर्गे इति पाणिपादादिसंसर्गे चेत्यर्थः । वासनाया अद्रव्यत्वाच्च न संक्रम इत्याह वासनेति । दुःखादेरपीति । रुमायां लवणप्रायोपरभूमौ क्षिप्तं काष्ठं यथा लवणमेव भवति तद्वत् इतरावयवसंश्लेषादवयवान्तरं तद्वदेव भवति चेत्, तर्हि वासनायामिव सुखदुःखादावपि तौल्यं स्यात् । तथा च कण्टकनुन्ने पादे वेदनायां सर्वेऽवयवाः सवेदनाः स्युरिति भावः। हृत्कोशमात्रमात्मा चेतनः, न त्वन्येऽवयवा इति पक्षं प्रतिक्षिपति सर्वेति । हृत्कोशस्याप्यवयव-

स च सस्कारकोशस्ते सङ्घातात्मा प्रतिक्षणम् । प्रचयाप(व)चयाभ्या स्यात् भिन्न सर्नोऽन्न(तु) को भवेत् ॥

प्रत्येकचैतन्यपक्षे दूषणान्तरमाह प्रत्येकमिति । अय भाव —बहूना(अपि) हि चेतनाना कार्यवशान् सहतानामपि परस्परमी र्ष्यानुवादयो दृश्यन्ते । नात्र कदाचिदपि तथा । मिथश्चैते किमर्थमुपकुर्यु न तावददृष्टार्थम् , त्वया तदनभ्युपगमात् । न चैकग्रामवर्तिनामिव कार्यिनोऽन्योन्यमुपकार , क्वचिदपि देहे तादृगभिसन्धेरदर्शनात् । एक एवाह सर्वैरवयवैर्यथार्हमधिष्ठितै स्वात्मने उपकरोमीति सर्वेषा स्वसवेदनसिद्धमिति । ननु स्वोपकारनिरपेक्ष परोपकर्तार पराभ्यसूया[दि]रहिता [स्व]पाण्यादय स्वहेतुशक्त्या यदृच्छातो वा सिद्धा इत्यत्राह-वीतराग इति । यदि (इत्यादि ।) जातः कश्चिचेतन , स च रागद्वेषादिरहित -तदा सर्वप्रवृत्तिनिवृत्तिभङ्ग इति भाव । आवृत्त्याऽन्योऽप्यर्थ --जातमात्रो हि जन्तु स्तन्यादिवाञ्छायुक्तस्तदर्थप्रवृत्त्या निश्चीयते । तदवस्थस्य न रागादयो भवान्तरीयसस्कारोद्बोधमन्तरेण न युज्यन्ते । त(अ)तश्च देहतदशव्यतिरिक्त आत्मेति। एव मनुष्यादिशरीरप्राप्तिदशायामदृष्टविशेषात् (पोद्बोधित) पूर्वजन्मानुभवसस्कारभेदैरेव मतिरुचिभेदाश्च युज्यन्ते । अवयविवादमभ्युपगम्याप्याह—तत्सङ्घातेति । अय भाव --अवयवगतविशेषगुणपूर्वका एव हि अवयविनि विशेषगुणास्तद्वादिभिरिष्यन्ते । प्रत्यवयव(व)चैतन्य च निरस्तमेव ॥ ननु अवयवनिष्ठं चैतन्य सूक्ष्मवर्तित्वात् सूक्ष्मम् , अवयविनिष्ठ तु स्थूलवर्तित्वात् स्थूलम्, तदेव व्यव(व्या)हारयति ॥ नैवम् , त्रसरेणुकल्पानामपि जन्तूना प्रवृत्तिदर्शनात् । अतोऽपि स्थूलतमाना मनुष्यमातङ्गाद्यवयवाना पृथक् स्वधीपूर्वप्रवृत्तिप्रसङ्गात्। न च मनुष्याद्यवयवेषु चैतन्यमनुद्भूतमिति वाच्यम्, अनुद्भूतैरद्भूतारम्भायोगात् । यत्तु सूत्रितं सुरगुरुणा, "पृथिव्यापस्तेजो वायुरिति तत्त्वानि । तेभ्यश्चैतन्यम् , किण्वादिभ्यो मदशक्तिवत्" इति , इदमपि प्रत्येकसमुदायादिविकल्पदोषोपहत्या दत्तोत्तरम् । अस्ति हि प्रत्यवयवम्, किण्वादीना ससर्गविशेषे मदशक्ति आम्लकर्पूरादिषु विषशक्तिश्च । एतेन चूर्णहरिद्रासंसर्गजरागादयोऽपि निरू(र्यू)ढा । ननु चैतन्यमिति न कश्चिद्गुण [यस्याधारोऽपेक्ष्य ,]

---

वी– सधातरूपस्य तदुपचयादिभेदात् पूर्वोक्त एव दोष इत्याह स चेति । वीतरागो न जात इत्यस्य जातसर्वे सराग एवेत्यर्थ । सोऽनुपपन्न जातस्य घटादे सरागत्वाभावात् । अतश्चेतन इति पूरयति कश्चिच्चेतन इति । 'इत्यादि' इत्यत्र 'इति । यदि' इति पाठो दृश्यते । स ऋजु । सर्वेति । न चैकदेहान्तर्गतावयवान्तररूपचेतनविषयरागद्वेषादेर्नियमेनाभावेऽपि अन्यविषये तत्सद्भाव इष्ट इति वाच्यम्, एव व्यवस्थाया मानाभावात् । वीतरागो न जीव इत्यनुक्त्वा पद्ये जातपदप्रयोग कुत इत्यत्र, 'न्यायसूत्रप्रत्यभिज्ञापनार्थम्, तेन तदभिमतोऽर्थोऽपि ग्राह्य' इत्याशयेनाह आवृत्त्येति । मतिरुच्येति । ज्ञानेच्छेत्यर्थ । एकैकोऽपि प्राणी स्वजात्यनुगुण किमपि जानाति किमपीच्छतीति व्यवस्था अतीतपूर्वनिकृष्टविधजन्मान्तर्गतप्रकृष्टसजातीयजन्मकालिकसस्कारसमासोन्मेषवशादेवेति भाव । प्रत्येकसमुदायेति । चैतन्यमेकावयवमात्रनिष्ठ वा एकैकावयवेऽपि पृथक्पृथक् स्थित वा सर्वावयवसमुदायनिष्ठ वेति विकल्पेत्यर्थः । राग = रक्तवर्ण । ज्ञानमपरोक्ष ज्ञाततालिङ्गानुमेयमिति यत्तो दूषण क्रियते, 'तथा सति ज्ञानमेव न सिध्येत्, तन्मात्रमर्थेन निर्वाहात्' इति कुसुमाञ्जलौ न्यायसिद्धाञ्जने च । अत्रापि परि । तद्दृष्ट्या शकि न प्रत्यक्ष तापल्भ्यमिति परिहरति नन्वित्यादिना । मनसास्य ज्ञानस्य वित्त-

किं तु याऽसौ युष्माकं चैतन्यसामग्री सैव चैतन्यपदार्थः स्यात्, व्याहारव्यवहारयोः तयैवोपपत्तौ मध्ये गुणविशेषकल्पने गौरवादिति ॥ तन्न (नैवम्), तस्याः प्रत्यक्षत्वायोगात्। प्रत्यक्षाप्रत्यक्षसमुदायो हि सर्वत्र सामग्री। प्रत्यक्षश्च(क्ष च) जानामीति बोधः। न च तद्धीरानुमानिकी, त्वया कथमप्यतीन्द्रियानुमानानभ्युपगमात्, प्रवृत्तिविरहितदशायामपि जानामीति धीसद्भावाच्च।

श्लो— देहधातुविशेषो वा विकारो वाऽस्य कश्चन। ज्ञानमित्यपि वक्तुं ते न युक्तं तददर्शनात् ॥

"हृदयस्थ पित्तविशेष प्रकाशक (पित्तादेर्विकारविशेष प्रकाश)" इति वैद्यागमस्त्वन्यपरः। ये तु लोकायतमित्यत्राऽऽयतशब्दविवक्षितमनुमानमपि प्रत्यक्षान्तर्भावेण तत्फलतया वा गृह्णन्ति, तान् प्रत्यनुमानान्यप्याह सङ्घातत्वादिभिरिति। तदिति वर्ष्मपरामर्शः। अचित् – न चैतन्याश्रय इत्यर्थः। विमतमचेतनं सङ्घातत्वात् घटवत्। आदिशब्देन बहिरिन्द्रियग्राह्यत्वात् चाक्षुषत्वात् भूतत्वात् रूपवत्त्वादित्यादीनां ग्रहणम्, तथा विगीता धीः चैत्रपिण्डव्यतिरिक्ताश्रया(विषया), धी(बुद्धि)त्वात्, मैत्रधीवत् इति। न चैषां प्रत्यक्षबाधः शङ्क्यः, देहात्मबोधस्यान्यथासिद्धिसंभवात्। व्यतिरेकधीप्राबल्याच्च। ननु भेदधीरत्रादेषा प्रत्यक्षविरोधं परिजिहीर्षितं, सा तु न भेदसाधिका, ममात्मेत्यभेदेऽपि तद्दृष्टेरित्यत्राह स्यादिति। अयं भावः — मम हस्तः, मम शरीरमित्यादिप्रत्यया मम गृहमित्यादिवत् व्यक्तव्यतिरेकाः। ममात्मेति धीस्तु घटस्य स्वरूपमितिवत् अभेदेऽपि निर्दिष्टविशिष्टांशनिष्कर्षगोचरतया तन्मात्रभेदस्थापिका अगत्या स्वीकृता, नान्यत्रापि, अतिप्रसङ्गात् इति ॥ १ ॥

स्याद्वाऽस्मौ चर्मदृष्टेरयमहमिति धीर्देह एवात्मजुष्टे
निष्टप्ते लोहपिण्डे हुतवहमतिवद् भेदकाख्यातिमूला।

---

प्र०— वान्तरेषु तु सोत्पत्तिप्रसङ्ग इत्यर्थः। 'अचित्' इत्यत्र चिच्छब्दस्य ज्ञानवाचित्वात् तदन्यवाचिना अचिच्छब्देन जडत्वमुच्यत इति शङ्कां वारयति—अचित् = चैतन्यानाश्रय इत्यर्थ इति ॥ १ ॥

श्री— अन्यत्रापित्तविकारत्वोक्त्या पित्तमेवात्मेति पैत्रमपाकरोति हृदयस्थ इति। चार्वाकं प्रति अनुमानप्रयोगः कथमित्यत्राह येत्विति। लोकः लोकनं प्रत्यक्षम् तस्य आयतम् आयामो विस्तारः एवानुमानम्। तथा च प्रत्यक्षेऽनुमानमपीष्टम्, नान्यदेवेति एतच्चार्वाकाशयः। संघातत्वादिभिरिति। "सङ्घातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्। पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थप्रवृत्तेश्च" इति सांख्यकारिका। विस्तर आत्मसिद्धौ द्रष्टव्यः। अचिदित्यस्य चैतन्यभिन्नमित्यर्थे सिद्धसाधनम्। चेतनरहितमिति बहुव्रीहौ च विवक्षितविपरीतम्। अतोऽन्यमर्थमाह अचिदिति। विमतमिति देहाद्यभिप्रायम्।

ननु मैत्रज्ञानं चैत्रपिण्डगतं न भवति, तथा ज्ञानत्वात् चैत्रज्ञानमपीत्यनुमाने, चैत्रीयरूपादिकमपि न चैत्रीयं रूपादित्वात् मैत्ररूपादिवदित्यनुमानं स्यादिति शङ्कया तत्र प्रत्यक्षबाधोऽस्ति, नात्रेति विशेषमाह न चैषामिति। एषाम्—उक्तानुमानानाम्। व्यक्तेति। ज्ञापितेत्यर्थः। विशिष्टांशेति। विशिष्टान्तर्गतो यो विशेष्यांशः स्वरूपात्मकः तस्येत्यर्थः ॥ १ ॥

अथ "श्रीर्नामेनाऽऽत्मसिद्धिं श्रोत्रिया समिरन्ते" इति श्रीयामुनार्यसूक्तिमनुरुध्य, प्रत्यक्षानुमानयोरप्रतिष्ठितत्वेऽपि श्रुतिसमधिगम्यत्वं जीवात्मस्वरूपतमित्याह स्यादिति। यथा निष्टप्ते— सम्यक्तप्ते अयःपिण्डे अग्निरेवेति, अन्यथ पिण्डयोर्भेदे सत्यपि अयमग्निरिति अभेदारोपः, तथा

श्रुत्यर्थापत्तिभिश्च श्रुतिभिरपि च नरस्सर्वदोषोज्झिताभिः
देही देहान्तरात्मिश्रम इह विदितः संविदानन्दरूपः ॥ २ ॥

अथ स्यात्-अस्ति तावत् 'स्थूलोऽहं जानामि' इत्यादिधीः(प्रत्ययः)। तत्र स्थौल्यं शरीरस्थं ज्ञानादिकं तदन्यनिष्ठमिति दुर्विवेचम् । ममेति भेदधीश्च नाभेदधियं बाधितुमर्हति; अविशेषात् । अनुमानानि च वह्न्यनुष्णत्वानुमानवत् स्युः ॥ तत्र निषेध्यं ह्युष्णत्वं वह्नावेव सिद्धमिति चेत्-अ(त)त्रापि निषेध्यं चेतनत्वं (चैतन्यं)देह एव प्रसिद्धम् । न च प्रत्यक्षप्रतिपन्ने वादिविमतिमात्रात् बाधकानुमानावकाशः, अतिप्रसङ्गात् ॥ विप्रतिपत्त्या सन्देहः, सन्देहे(संदिग्धे) न्यायप्रवृत्तिः स्यादिति चेन्न; धृष्टे(दृष्टे)कस्मिंश्चित् विगायति वह्न्यनुष्णत्वानुमानप्रसङ्गात् । एतेन-शास्त्रतोऽतिरिक्तबोधात् सन्देहः, ततश्चानुमानमिति निरस्तम् । तत्प्रामाण्यव्यवसायाव्यवसाययोरत्र सन्देहानुदयात् । सन्दिग्धशास्त्रात् दृढप्रत्यक्षं हि बलीयः। अन्यथा 'अग्निरनुष्णः' इति कस्यचिद्वाक्येनापि सन्देहेऽनुष्णत्वानुमानस्य निर्बाधत्वप्रसङ्गात् ॥ ऐक्यभेदधीभ्यामेव सन्देह इति चेन्न ; अग्नेर्ज्वलिति भेदधिया, अग्नेरुष्णत्वेऽपि केनचिद्धेतुना ज्वालानुष्णत्वानुमानप्रसङ्गात् । साङ्ख्याद्युक्तानि अनुमानानि स्वसाधका(कतमा)नि । पठन्ति हि, "सङ्घातपरार्थत्वात" इति । अत्र भाष्ये पत्यादि-

दी — देहात्मनोर्भेदात् आत्मजुष्टेऽपि देहे, स्थूलोऽहमित्यारोपः । स्थूलशब्दस्य स्थौल्यपरिमाणविशिष्टदेहपरत्वात् अहमित्यस्य च केवलात्मपरत्वात् । तत्रारोपे मूलं भेदकस्य—मिथो व्यावर्तकस्याऽऽकारस्य अख्यातिः अग्रहणम् । देहव्यावृत्तस्याऽऽत्मनिष्ठस्याणुत्वनित्यत्वादेर्ग्रहणे तु नैवं भ्रमः। तद्ग्रहणञ्च नास्तीति । भवतु भ्रम इत्येव ; अथाप्यात्मा देहान्यः सिद्ध एवेति चेन्न । सिद्धान्तिना भ्रमत्वमेव वक्तव्यम्: न तु स्थूलशरीरावच्छिन्नोहमित्यर्थः । तत्र भ्रमत्वसाधकाभावात् देह एवाऽऽत्मेति धीर्निर्बाधेति पूर्वपक्ष्याशयः । अतः श्रुतार्थानुपपत्तयः श्रुतयश्चैव देहातिरिक्तात्मप्रमितौ करणमिति भावः । श्लोकमवतारयति प्रश्नविस्तरेण अथ स्यादिति । ननु मम शरीरमित्यादिभेदप्रत्यये सति कथं स्थूलोऽहमिति भ्रमः स्यात् । अतः स्थूलशरीरस्वाम्यहमित्येवार्थ इत्यत्राह ममेति भेदधीश्चेति । अविशेषादिति । स्थूलोऽहमिति मतिरेव ममेदमिति बुद्धेर्बाधिका स्यादिति भावः । निषेध्यं चेतनत्वमिति । देहादिरचित् संघातत्वात् घटादिवदिति चेतनत्वनिषेधः उष्णत्वनिषेधतुल्यः, अग्नेरुष्णत्वस्येव स्थूलोऽहं जानामीति प्रत्यक्षेण देहे चैतन्यस्य गृहीतत्वादिति भावः। वादिविमतिवशात्-वादिरूपपुरुषान्तरगतविपरीतज्ञानमात्रेणासन्दृशानबाधो नेत्यर्थः। विप्रतिपत्तिः मिथोविरुद्धधर्मबोधकवाक्यद्वयम् । तस्याः संशयजनकत्वं न्यायसूत्रोक्तम् । संदेहे च न्यायप्रवृत्तिः सहजा, "विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः" इति च वचनमिति भावः । ऐक्यभेदधीभ्यामिति । न वादिज्ञानात्, न वादिविप्रतिपत्तिवाक्यात्, न प्रत्यक्षविरुद्धार्थकशास्त्रात् संशयः, किं तु स्वस्यैव ऐक्यज्ञानं भेदज्ञानञ्च जायत इति ततः संशय इत्यर्थः । तथाच तत्संशयापनोदनायानुमानप्रवृत्त्या देहादेरचेतनत्वसाधनमिति भावः । अग्नेर्ज्वलिति । उष्णशब्देन ज्वालाविवक्षया अग्नेरुष्ण इति भेदज्ञानम्, अग्निरुष्ण इत्यैक्यज्ञानञ्च कस्यचिद् भवति । तदाग्निरनुष्ण इत्यनुमानं जायेतेति भावः । तत्र प्रत्यक्षविरोध इति चेत्—अत्रापि स इति भावः । पूर्वश्लोकतुरीयपादर्शितान्यनुमानानि निषेधति सांख्येति । भाष्ये-देहः परार्थः संघातत्वादित्यनुमाने । पत्यादीति।

शरीरार्थैर्भार्यादिशरीरैः सिद्धसाधनता । न च तावदतिरिक्तं खट्वादिदृष्टान्तेऽपि दृष्टम् । स्वाभिमतात्म पारार्थ्यसाधने तु अप्रसिद्धविशेषणः पक्ष । दृष्टान्तश्च साध्यविकल । खट्वादौ च संहतपरार्थत्वनियम-दृष्ट्या तत्रापि संहत पर प्रसज्येत । अनवस्थाभयात् तस्यासंहतत्वकल्पनात् वरं शरीरस्यानन्यार्थत्व-कल्पनम् । एवमधिष्ठेयत्वभोग्यत्वाभ्यामधिष्ठातृभोक्तृकल्पन चायुक्तम् ; स्वाभिमतात्माधिष्ठेयत्वभोग्य-त्वयो ; सर्वत्रासिद्धे साध्याविशेषाच्च। अधिष्ठेयत्वादिमात्रे हेतौ आकारभेदेन स्वेनैव स्वस्य तदुभयसंभवात् । अधिष्ठेयत्व हि कस्यचित् व्यापारेण व्यापार्यत्वम् । तच्च स्वस्य परस्य चेति न विशेषः । भोग्यत्व-मप्यनुकूलबुद्धिविषयत्वम् । तच्च स्वेनैव स्वस्य देहातिरिक्तत्वेऽप्यनुमतम । यथाहुः—, "नेदमनात्मकं जीवच्छरीरम्, अप्राणादिमत्त्वप्रसङ्गात्" इति , तत्र जीवच्छरीर सात्मक प्राणादिमत्त्वादिति प्रसङ्गा-नुग्राह्यः प्रयोग । त(अ)स्मिन् अप्रसिद्धविशेषण पक्ष , त्वदिष्टस्याऽऽत्मन क्वचिदप्यसिद्धे । आत्मशब्द-वाच्ययत्किंचिद्योगविवक्षाया स्वभावयत्नादियोगात सिद्धसाधनता । किंचानेनैव हेतुना जीवच्छरीरं खपुष्पवदित्यपि साधयन्नपि दुर्वारः स्यात्। अप्रसिद्धसाधनस्याभ्युपगमात्॥ अस्ति(स्तु) किंचित् खपुष्प[ादि] शब्देनोपस्थाप्यम् , तदेवात्मेति चेन्न , असत आत्मत्वसाधनायोगात् । यत्किंचिन्मात्रस्य साधने च सिद्धसाधनता, विवक्षितविशेषस्य दुस्साधत्वात् । अपि च सर्वेषु वस्तुषु तत्तदसाधारणधर्मेण सात्मकत्व साध्यं [स्यात् ], विपक्षे तत्तदसाधारणधर्मविरहप्रसङ्ग इत्यनुग्राहकसिद्धेश्च। अनुपलम्भबाधादिक तु समानम्। अतोऽनन्याधिष्ठित स्वयग्राहकयन्त्रन्यायात् विचित्रभूतपरिणतिविशेषसंभरोऽयं देहयन्त्र [विशेषः?] इति। अत्र प्रत्येकसमुदायादिविकल्पदौस्स्थ्यादिप्रागुक्तप्रबलबाधकप्रतिक्षिप्त(ऽपि)पक्षे गाढाभिनिवेशस्य सोपपत्तिकं

---

[illegible]— सर्वत्रासिद्धेरिति । कुत्राप्यसिद्धेरित्यर्थः । खपुष्पशब्दोपस्थाप्यं किमसद्रूपम्, उत सद्रूपं यत्किञ्चित्, उत स्वाभिमतः सद्विशेष इति विकल्पमभिप्रेत्य क्रमेण दूषयति, न असत इत्यादिना । [illegible]— देहः परार्थ इत्यत्र परशब्देन स्वाभिमतात्मग्रहणमेवेति किम् । पतिशरीरादिरूपसंघातान्तर-ग्रहणेनैव चारितार्थ्यादित्यर्थः । खट्वादिदृष्टान्तो हि न संघातातिरिक्तात्मार्थत्वेन लोके दृष्ट इति । स्वाभिमतेति । निरवयवात्मार्थत्वमेव विशिष्य साध्यतया निर्दिश्यत इति चेत्, तत् साध्यमप्रसिद्धम्। दृष्टान्ते तस्य साध्यस्यादृष्टत्वात् साध्यवैकल्यमपि तत्रेत्यर्थ. । असंघातरूपात्मविपरीतसंघातार्थत्वमेव प्रत्युत साध्येतेत्याह खट्वादौ चेति । अनेन त्रिगुणादिविपर्ययादित्यपि निरस्तम्। असंहते आत्मनि सिद्धे किल 'सोऽत्रिगुणः असंहतत्वात्' इत्यनुमानमिति। अधिष्ठानात् भोक्तृभावादिति हेतुद्वयं दूषयति एवमिति। स्वस्य परस्य चेति। कदाचित् स्वस्य, कदाचित् परस्य, सदण्डहस्तोद्यमने स्वस्य परस्य च। प्रयोगः= अनुमानप्रयोगः । अप्रसिद्धविशेषणः इति । साध्यरूपं पक्षविशेषण पूर्वमसिद्धमित्यर्थः । स्वभावयत्नेति । आत्मशब्दवाच्यविशिष्टत्वसाधने आत्मशब्दार्थः स्वभावः यत्न इत्यादिरिति तमादाय सिद्धसाधनमिति भावः । सर्वेष्विति । घटपटादयोऽपि सात्मकाः असाधारणधर्मवत्त्वात् इत्यनु-मानम् । अत्रानुपलम्भो बाधश्चेति चेत्, देहः सात्मक इत्यनुमानेऽपि स दोषः । अथस्यादित्यारब्ध-शंका देहयन्त्र इतीत्यन्तेनावसिता । अतिरिक्तात्मसाधनदूषणेऽपि देहस्यात्मत्वासंभवस्य प्रागुक्तस्य परिहारस्तु न प्रादर्शि । अत एवाऽऽत्मनोऽतिरिक्तत्व सिध्येत् । किञ्चात्र शंकाग्रन्थोक्तानां प्रतिषेधानां पुनरुद्धारो भवति न वेत्यपि विचार्यमस्ति । अथाप्यप्रतिष्ठिततर्कपरम्परया कालहरणं मा भूदिति स्वनिष्कर्षकथनपूर्वक श्रुतिप्रमाणोपन्यासारम्भ इत्याह अत्र प्रत्येकेति ।

भेदबुद्धेरनुमानाना च बलीयस्त्वं पुनरनुद्घाटयन् निष्कम्पामैक्यधियमन्वारुह्य मानान्तरेण विघटयिषु परेष्ट तद्बलमन्माह **स्याद्वेति** ॥ अन्यथासिद्धि(साधनाय)सूचनाय **चर्मदृष्टेरि**ति मौढ्यपरम् । **अयमि**ति गुणक्रियादिविशेषविशिष्टपिण्डावमर्शी । संसर्गविशेषादयं भ्रम इति बोधयितुमारमजुष्टत्वोक्ति । तन्निदर्शनेन शोधयति — **निष्टप्ते** इति । संसर्गजत्वात् संभाविनान्यथासिद्धिकमैक्यप्रत्यक्ष शास्त्रेण बाधितु शक्यमित्याशय । ससृष्टेष्वपि सर्वत्र कथ न भ्रम इत्यत्राह - **भेदके**ति । यत्र हि सामग्री, तत्र कार्यं स्यादिति भाव । नन्वैक्यधीरिह दृष्टा, तदन्यथासिद्धिस्तु शङ्किता, नैतावता विवक्षितसिद्धिरित्यत्राह—**श्रुती**ति । श्रुत्या भाविता अर्थापत्तय **श्रुत्यर्थापत्तयः** ताभि , श्रुतार्थापत्तिभिरिति यावत् । सन्ति हि देहान्तरानुभाव्यस्वर्गस्वाराज्यादिसाधनविधायिन्यो (१) [यम]नरकादिप्रापकश्रुतयश्च(१) । न च तत्रानाश्वास , श्रुतिप्रामाण्यस्थापनात् । अतोऽर्थापत्यवने देहान्तरानुयायी भोक्ताऽस्तीति । पश्वादिदृष्टफलसाधनविधयश्च तत्तत्फलोपायदशानुवृत्तभोक्तृसापेक्षा । न चात्र सङ्घातस्य भोक्तृत्वम् , उपायसाधकसङ्घातस्योपचयादिना भिदुरस्यानुवृत्त्यसंभवात् । अहमुपायानुष्ठाता तत्फल भुञ्जे इति च स्वरूपत कालतश्चाभिन्न एक प्रतिसन्धीयते । मुक्त्युपायविधयश्च सर्वबन्धनिवृत्तिमदात्मस्थित्याक्षेपका । देहात्मभेदं कण्ठोक्त्याऽप्याह-**श्रुतिभिरपी**ति । चः श्रुतिवत् अनन्ता स्मृती समुच्चिनोति । स्वत प्रामाण्ये

---

आ— बलीयस्त्वं पुनरनुद्घाटयन्निति । ऐक्यबुद्धेः सम्भावितान्यथासिद्धिकत्वप्रतिपादनेनेति भावः ।

भा— अन्वारुह्येति । ऐक्यधियो निष्कम्पत्वं नास्तीत्येव स्वेष्टम् । स्य द्वेति तदन्वारोहमात्रमिति । अन्यथासिद्धेति । ऐक्यधीरन्यथासिद्धत्वात् नातिरिक्तनिषेधिका । चर्मदृष्टेरिति । चार्वाक देहे चर्ममात्रदर्शी तदन्तर्गतान् सूक्ष्मांशान् अपश्यन् कथ स्थूल इति तमंशं गृह्णीयात् । तथा चाहंत्वं चर्ममात्रे पर्यवस्येत् । तदन्यस्वीकारार्थप्रयासे देहातिरिक्तात्मस्वीकारोऽपि स्यादिति भाव । शास्त्रेण बाधितु शक्यमित्याशय इति । पूर्वार्धे स्थूलोऽहमित्यस्य भ्रमत्वमुपपादितम् । तेन पूर्वपक्षिशङ्का परिहृता भवति । कथम् । इत्थम् । स्थूलोऽहमिति ज्ञान वा, मम देह इति भेदज्ञान वा किं मिथ्येति विमर्श, ऐक्यज्ञान सत्यम्, भेदज्ञानमारोप इति वदन् पूर्वपक्षी ऐक्यारोपस्य हेतुर्नास्तीति मन्यते, तं प्रति अन्यय पिण्डयोरिव संसर्गविशेषो हेतुरित्युक्तौ ऐक्यारोप उपपादितो भवति। इदञ्चाविवेकिसंबन्धिज्ञानविषये । विवेकिना भेदधीदार्ढ्येऽपि स्थूलोऽहमिति व्यवहारस्तु स्थूलशरीरविशिष्टोऽहमिति भेदबुद्धिसमानार्थकतयैव । ब्राह्मणो यजेतेत्यादिवाक्य इव । चर्मदृष्टेस्तु तादृशी धीर्न भवति । तथा च चर्मदृष्टेरसौ धीर्देहे एव स्यात् । न तु विवेकिन इव देहविशिष्टे आत्मनि । वाकारेण, नैव देह, किंतु देहिनीति पक्ष सूचयति । पर त्वसौ भेदकाप्रत्यासत्तिमूलतया भ्रमात्मिका, न तु वास्तवीति पूर्वार्धार्थः । कुतोऽयं निश्चय इति चेत्—पूर्वश्लोकोक्तोपरि त्वदुक्तदूषणाना सुपरिहरत्वादिति प्रति वक्तव्यम् । तावन्त प्रयासमनूद्य सुख मार्गं दर्शयन् तन्मुखेन भेदकाकारमपि दर्शयति श्रुतीति । प्रापकश्रुतयश्चेत्यशुद्धम् । नरकादिप्रापकक्रियानिषेधिन्यश्च श्रुतय इति वाऽन्यथा वा स्यात् । श्रुत्यर्थापत्तीना चित्रया यजेत पशुकाम इत्यादिकर्मकाण्डत शाबरभाष्यादौ दर्शितत्वात् प्रथमकाण्डस्थत्वेन प्रथम वचनम् । वेदान्तस्य तदनन्तरत्वात् श्रुतिभिरिति पश्चात् प्रयोग । परस्मिन्नेव जन्मनि वास्यर्यौवनादिदशाभेदेनोपाध्योपेयसंगत्तावपि अतिरिक्तात्मास्वीकारेण न निर्वाह इति प्रथमचकारेण इमार्थापत्ति प्रदर्शनुपाह पश्वादीति । मूले देहान्तरेति । अर्थापत्तिप्रभावः देहान्तरासि-

प्राप्ते, बाधकासंभवार्थं (भावनार्थं?) (भवज्ञापनार्थं?) सर्वदोषोज्झितत्वोक्तिः। 'देही नित्यमवध्योऽयं[देहे]', "वासांसि जीर्णानि" इत्यादिस्मारणाय देही इत्यादिकथनम् । व्यावर्तकधर्मवर्गप्रदर्शनार्थं संविदानन्दरूपतोक्तिः। रूपशब्दः स्वरूपपरः, निरूपकधर्मपरो वा ॥ २ ॥ इत्यात्मनो देहातिरेकसमर्थनम् ॥

**बाह्याक्षेभ्योऽन्य आत्मा तदखिलविषयप्रत्यभिज्ञातुरैक्यात्**
**कर्तुः स्मृत्यादिकार्ये करणमिति मनो मानसिद्धं ततोऽन्यत् ।**
**प्राणाः सङ्घातरूपा वपुरुदितनयान्न ध्रुवं चेतयन्ते**
**ज्ञानं च ज्ञातृधर्मः क्षणिकमपि च वस्तेन नात्माऽऽत्मभावः ॥ ३ ॥**

ये पुनरा(रेवमा)हुः— चक्षुराद्यन्वयव्यतिरेकानुविधायिरूपादिज्ञानं तन्निष्ठमे(मित्ये?)वोचितम् । व्यपदिशन्ति च चक्षुः पश्यतीत्यादि ; तथा स्पर्शनसुखो वायुः, श्रवणकटुः शब्द इति । इन्द्रियेषु च विकलेषु विकलोऽहमिति धीर्जायते, सकलेष्वन्यथा । परस्परानुभूतार्थप्रतिसन्धानमपि संस्कारवैचित्र्यात् ;

---

*(?)*— रूपशब्दस्वारस्यानुरोधेन संविदानन्दशब्दयोः भावप्रधानत्वमभिप्रेत्य रूपशब्दमन्यथा व्याचष्टे- निरूपकधर्मपरो वेति। निरूपकेत्यनेन रूप्यतेऽनेनेति रूपकमिति व्युत्पत्तिः सूचिता ॥ २ ॥

बाह्याक्षेभ्य इति। इन्द्रियाणां प्रत्येकचैतन्ये परस्परानुभूतप्रतिसन्धानम्, अन्धस्य दृष्टार्थप्रतिसन्धानमहं पश्यामीत्यादिप्रतीतेः एकोऽयं व्यवहरति इति प्रतीतिश्च कथमिति शङ्कां परिहरति— परस्परानुभूतेत्यादिना । द्वयोरप्येवमेकत्वव्यामोहायोगादिति । अन्यतरस्याप्ययोगादित्यर्थः । न हि कश्चिदपि स्वात्मानमन्यतादात्म्येन भ्राम्यतीति भावः ।

*श्री*— क्षमत्वम् । श्रुतिसमधिगम्यांशः संविदानन्दरूपत्वम् । प्रथमं पर्यासं कर्मानुष्ठानविषये, द्वितीयमपेक्षितमैश्वर्यविरक्तविषये इत्याशयेन यथाक्रमं पृथक्कृत्योक्तिः ॥ २ ॥

श्लोकद्वयेन देहातिरेको दर्शितः। इन्द्रियमनःप्राणधीव्यतिरेकमेकेन संग्रहेण क्रमेण चतुर्भिः पादैराह बाह्येति । तदखिलविषयेति तेषामिन्द्रियाणां ये विषयाः तेषां सर्वेषामित्यर्थः । करणमिति=तत्करणत्वेन । ततोऽन्यत्=कर्तृभिन्नम् । न चेतयन्ते—न ज्ञानाधिकरणं भवन्ति । बहुवचनेनाप्येकात्मत्वासंभवो ज्ञाप्यते । अस्य—ज्ञानस्य ।

*ये पुनरिति अनेकेन्द्रियात्मत्ववादिनस्त्वित्यर्थः। ज्ञानं तन्निष्ठमेवोचितमिति। ज्ञानस्य तन्निष्ठत्वमेव* युक्तमित्यर्थः । स्पर्शनसुखः—त्वगिन्द्रियसुखकरः । श्रवणकटुः—श्रोत्रेन्द्रियदुःखकरः। सुखदुःखाश्रयत्वाच्चेन्द्रियाणामात्मत्वम्। सिद्धान्ते सुखदुःखयोर्ज्ञानविशेषत्वाच्च । विकलोऽहमिति । इन्द्रियं विकलमिति वक्तव्ये अहं विकल इति वदन् इन्द्रियाहमर्थयोरैक्यमभिसंधत्ते । अन्यथा=सकलोऽहमितीत्यर्थः । परस्परेति । इन्द्रियातिरिक्तात्माभावात् स्मृत्याद्याश्रयत्वमपि इन्द्रियाणामेव । तत्तदनुभवजन्यस्मरणं तस्य तस्येति सिद्धम्। एवं स्थिते, अनुभवितरि चक्षुरादौ नष्टे कथमिन्द्रियान्तरेण तत्स्मरणम्=सोऽयं घट इति । स्मरणं तत्रोच्यते—चक्षुरादिनिष्ठानुभवजन्य संस्कारः श्रोत्रादावपि भवतीति संस्कारे वैलक्षण्यस्वीकारात् तथेति । तर्हि पुरुषान्तरश्रोत्रादावपि स उत्पद्येतेति । न । अनुभवः स्वहेत्विन्द्रियाधारशरीराश्रितेन्द्रिये संस्कारं प्रति हेतुरिति व्यवस्थापनात् । अत्र संस्कारवैचित्र्यादिति वैचित्र्यपदार्थमुपरिशोधयिष्यति। ननु सोऽयं घट इति कदाचित् तद्देशकालावच्छेदेनानुभूतोऽयं घट इत्यर्थेऽपि प्रयुज्यते । संस्कारेण विषयस्मरणेऽपि हेतुभूतानुभवस्मरणं कथम् । अनुभवितर्येव संस्काराधानमिति पक्षे तु अनुभवकाले तस्य इममर्थमहमनुभवामीति अनुभवितृ-

तच्चैकशरीरानुप्रवेशायत्तम्। अतो हेत्वादिप्रतिसन्धानमपि सिद्धम्। 'अहं पश्यामि, अहं शृणोमि' इत्याद्यपि सर्वेषामिन्द्रियाणामहमर्थत्वात् सिद्धम्। पञ्चानामपि व्यवहारहेतुभूतं मुखं प्रवृत्तिकरणं शरीरं च साधारणम्। तेन एक एवायं व्यवहरतीति लौकिकावगमः। अनुमानमपि-चक्षुः रूप(ादि)ग्रहणाधिकरणम्, चक्षुष्ट्वात्, यन्नैवं तन्नैवं यथाऽन्यदिति। एवं श्रोत्रादिष्वपीति— तान् प्रत्याचष्टे बाह्याक्षेभ्य इति॥ पाण्यादिपूक्ता प्रतिसन्धानानुपपत्तिमिन्द्रियेष्वपि दर्शयितुमाह तदखिलेति। तेषां चक्षुरादीनां प्रतिनियता विषया रूपादयः। अखिलानां तेषां प्रतिसन्धाता त्वेकः, योऽहं द्रष्टा स एव(ाहं) शृणोमीति॥ भ्रान्त्या यत्तच्छब्दाभ्यां द्वयोरेकीकार इति चेन्न, द्वयोरप्येकवत् एक(प्येवमेक)त्वमोहायोगात्, अन्यस्य मुख्यस्यानभ्युपगमात्। एकश्चाह बहुभिरिन्द्रियैरनुभवामीति भेदेन चेति (वेत्ति)। न च कस्यचित् अहं चक्षुरित्यादिधीः। स्थूलोऽहमित्यादिदेहात्मबुद्धेश्च इन्द्रियात्मवादेऽपि दुस्त्यजत्वात् वरमिह देहात्मवादः। रूपादिज्ञानस्य चक्षुराद्यन्वयव्यतिरेकानुविधानं [तु] तत्करणतयाऽपि स्यात्। तथा चाभिमानः, चक्षुषा पश्यामि, श्रोत्रेण शृणोमीति। अत एव चक्षुः पश्यतीत्यादिकं भाक्तम्। वैकल्यादिधीश्च चक्षुषा विकलोऽहमित्यादिरूपा, न तु चक्षुरहं नासीति। विरोधात्। न हि नष्टमिन्द्रियं स्ववैकल्यमनुसन्धत्ते, असत्त्वात्। नाप्यन्यत्, तस्य वैकल्यात्। अन्यथा तत्रापि विरोधात्। यदिपरमिन्द्रियान्तरविरहमिन्द्रियान्तराण्यनुसन्दधीरन्, तथाऽपि गतस्येन्द्रियस्य नाहमर्थत्वसिद्धिः। अन्यथा पाण्यादिविकलोऽहमिति बोधेऽपि पाण्यादीनामात्मत्वप्रसङ्गात्। न चेन्द्रिय[ान्तर]मिन्द्रियान्तरसदसद्बोधक्षमम्, तस्य तदप्रत्यक्षत्वात्। अनुमानतोऽपि, बोद्धुः त(स)स्य रूपाद्यनुपलम्भात् तद्बोधककरणा(तद्बोधकारणा)भाव एवानुमेयः। ततश्चैक एव तत्तत्करणाधीनरूपादिग्रहणोऽहमर्थः सिद्धः॥ मिथोऽनुभूतप्रतिसन्धानार्थं च संस्कारवैचित्र्यं किमिति चिन्त्यम्। अयात्मान्तरेषु स्मृत्युत्पादनशक्तिः, तत्र सर्वेषु तत्प्रसङ्गात्॥ तच्छरीरवर्तिष्विति चेन्न, औदरकि(क्रि)म्यादिष्वपि तत्प्रसङ्गात्॥ शरीरान्तर्वर्तित्वात् तत्र न प्रसङ्ग इति चेन्न, भिन्नावयवस्थित्याऽपि प्रति

---

पृ— चक्षुरादीनां परोक्तमहमर्थत्वं दूषयति न च कस्यचिदिति।

वी— श्रवयोरपि सह प्रकाशात् तत्प्रकाशयति तत्संस्कार इति स्यादित्यत्राह अतो हेत्विति। अनुभवस्य स्वर्यमाण यावत् तावद्विषयसंस्काराधायकत्वमिष्यत इति भावः। द्वयोरप्येकवदिति। योऽहं स एवेत्यैक्यभ्रान्तिः दर्शनकर्तरि श्रवणकर्तरि च द्वयोः स्थितेति वक्तव्यम्। लोके एकस्याऽऽत्मन अन्येनैक्यभ्रमस्य कुत्र प्यजायमानतया तद्वदेव द्वयोर्मिथ ऐक्यज्ञानमपि दुर्वचमित्यर्थः। द्वयोरप्येवमेकत्वेत्यपि पाठः। तदा कस्यापि न भवतीत्यर्थः एकवदित्यत्र एकत्ववदिति पाठमप्युल्लिखन्ति। भेदेन चेत्येव पठ्यते। अहमर्थे सर्वेन्द्रियभेदग्रहणाच्चेत्यर्थः। तथा चाभिमान इति। करणतयैव सादरं ग्रहणमित्यर्थः। वैकल्यं कार्योपयोगियावदंशाभावः। चक्षुषा विकल इत्यत्र चक्षुषा रहित इत्यत्रेव चक्षुः प्रतियोगिकत्वं तृतीयार्थः। इन्द्रियस्याहमर्थत्वे अहं विकल इत्यस्यार्थो दुर्वच इत्युक्तम्, प्रकारान्तरेण तस्य सुवचत्वमङ्गीकरोति यदिपरमिति। यदिपरमिति क्वाचित्कः प्रयोगपरिपाटी प्राचीनाः। तदर्थस्तु—उक्तविधानुपपत्तौ स्थितायामपि यदि किञ्चिद् वक्तव्यम्, तर्हि इदं परं स्यादिति। अत्र तु तावदविवक्षया यदि परमित्यस्य 'यदितु' इत्येतावान् अर्थोऽपि घटते। अन्यथा=गतस्याप्यहमर्थत्वे। यदिपरमिति वाक्यार्थोऽपि दुर्वच इत्याह न चेति।

सन्धानाभावप्रसङ्गात्; सन्निधानस्य चाविशेषात् ॥ संस्काराणां सर्वेन्द्रियसाधारणहृत्कोश[ादि]वर्तिनया शरीरैक्याच्च विशेष इति चेन्न; त्वदिष्टसंस्कारकोशे माना(प्रमाणा)भावात्; अनेकेषामहमर्थानामेक-शरीरयोगे च। ततश्च वरं यथोपलम्भमेकस्मिन्नहमर्थे सर्वैः संस्काराधानम्। न चोपदेशचेष्टा[दि]भिर्मिथो बोधनेनान्योन्यसंस्कारार्पणम्, अदर्शनात् ॥ अविचारितरमणीयोऽयं पञ्चानां परस्परसंस्कारादिलाभ इति तु, तत्त्वा(तत्ता?) दृशोप्येव वक्तव्यम्। यदपि[च] शरीराद्यैक्यादेकत्वावगम इति; स किं तत्रत्यानां(तेषां) एव, अन्येषां वा? नाद्य., परस्परानभिज्ञत्वात्; अनुमानतस्तु भिन्नतयैव सिद्धेः; चक्षु श्रोत्रादिरूपोऽहमिति भ्रमादर्शनाच्च। न द्वितीय, स्वशरीरसिद्धप्रकारेण परशरीरेऽपि बहुत्वानुमानात्। केवलव्यतिरेकिभि रिन्द्रियाणां ज्ञातृत्वा[द्य]नुमानमतिप्रसङ्गाद्यनेकदोषोपहतम्। ततश्चैकस्यैव सर्वग्रहणाधिकरणत्वे तु अस्मन्मते कः प्रद्वेषः? अन्धबधिराद्यभाव[प्रसङ्ग]श्च स्यात्। ज्ञातुर्ज्ञानकरणतयैव चक्षुरादीनां सिद्धेः तद्विपरीतानु-मानानां धर्मिग्राहकबाधश्चेति।

अस्तु देहात् चक्षुरादिभ्यश्चात्माऽन्यः। स तु मन एव स्यात्। देहादेरन्यत्वात् एकत्वेन प्रति सन्धानोपपत्ते., असङ्घातरूपत्वेन प्रत्येकादिविकल्पानवकाशाच्च। तदतिरिक्तात्मक्लृप्तौ तु गौरवम्। अतो 'मम मन' इति भेदोक्तिः क्लिष्टगत्येति। तत्राह— **कर्तुरिति**। अयं भावः-किमत्र स्मृत्यादिकरणस्य मनसस्तत्कर्ता तादात्म्यं साध्यते, तेन वा कर्तु? न ताव[त् आ]द्यः, तन्तोऽन्यतयैवानुमानतः शास्त्रतो वा तत्सिद्धेर्धर्मिग्राहकबाधात्। अत एव न द्वितीयः, स्वस्य स्वयमेव स्मृत्यादिकरणमित्यत्र मानाभावाच्च ॥ करणमङ्गीकृत्य कर्तृनिरासः क्रियत इति चेन्न; ज्ञातृमात्रापह्नवे मनसोऽपि ज्ञातृत्वाभावप्रसङ्गात्; तदन्यज्ञातृनिरासे कल्प्येन क्लृप्तत्यागापातात् (गायोगात्)। अथ कर्तारमङ्गीकृत्य करणत्यागः, तदा मनस आत्मत्वं न साधितं स्यात्; किंतु तस्यासत्त्वम्। तच्च तद्ग्राहकमाने सति न शक्यमिति।

अन्यस्त्वाह— प्राणाधीना देहेन्द्रियमनसां प्रवृत्ति। आत्मशब्दश्च प्राणे दृष्टः, प्राणशब्द-

---

भा°— ततश्चैकस्यैवेति। ततः= चक्षुरादीनां प्रत्येकचैतन्यस्य बहुदोषदुष्टत्वात्, एकस्यैव इन्द्रियस्य सर्वग्रहणाधिकरणत्वं स्वीकार्यमित्यर्थः।

श्री— पञ्चानां= बाह्येन्द्रियाणाम्। तेषामेव-पञ्चानामेव। अन्येषां वा-शरीरान्तरस्थानामेव। केवल-व्यतिरेकिभिरिति। चक्षुः रूपग्रहणाधिकरणं चक्षुष्ट्वात्; यन्नैवं तन्नैवमिति प्रागुक्तेरित्यर्थः। अति-प्रसंगेति। रूपत्व-रूपग्रहणत्व-ग्रहणविषयत्वादिकमपि चक्षुष्यनुमातव्यं स्यादित्यर्थः। केवलव्यतिरे-किणोऽनुमानत्वमन्यत्र निरस्तञ्च। एवं रसगन्धादिग्रहणाधिकरणत्वमपि चक्षुष्यनुमेयं स्यात्। तथा चाऽऽह ततश्चेति।

अथ द्वितीयपादार्थमारभते अस्त्विति। असंघातरूपत्वेनेति। तार्किकमते अत्यन्ताणुत्वात् मीमांसकमते विभुत्वाच्च निरवयवत्वादसंघातता; अभौतिकत्वाच्च। किमत्रेति। स्मृत्यादिकं करण-जन्यं क्रियात्वादित्यनुमानेन कर्त्रतिरिक्तं करणं न सिद्ध्यतीति किं मन्यते, किं वा स्मृत्यादिकं साश्रयं गुणत्वादित्यनुमाने करणभूतमनोतिरिक्तकर्तृसिद्धिरित्युच्यत इत्यर्थः। स्वस्येत्यस्य स्मृत्यादा-वन्वयः। स्वकर्तृकस्मृत्यादिकरणं स्वयमेवेत्यर्थः। ज्ञातृमात्रापह्नवे—ज्ञानाश्रय एव कश्चिन्नेति भूरि-त्युक्तौ। कल्प्येनेति। कर्तुः करणसापेक्षतया हि मनोनुमानम्। अतः कर्ता क्लृप्तः। कल्प्यं मनः।

तृतीयपादं व्याख्यातुमारभते अन्यस्त्विति। आत्मशब्दश्च प्राणे दृष्टः। प्राणशब्दश्चात्मनीति। 'अथ

श्वाऽऽत्मनि । प्राणस्थितिगमनाभ्यां च जीवति म्रियत इति व्यवहारः । सुषुप्तावुच्छ्वासनिश्वासप्रवृत्तौ सत्यामपि सामग्र्यभावात् बोधाभावः । 'मम प्राणाः' इत्येतदपि कथंचिन्नेतव्यमिति । अत्र देहात्मवादे निदर्शितान् दोषान् अतिदिशति **प्राणा** इति । अधिकाशङ्का तु, "प्राणोऽस्मि प्रज्ञात्मा" इति श्रुतिस्वारस्यात् । परिहारदार्ढ्याभिप्रायेण ध्रुवशब्दः । देहादिव्यापारहेतुत्वमनैकान्तिकम् । आत्मप्राण-शब्दयोर्व्यतिहारोऽनेकार्थतया स्यात् । प्राणस्थित्यादौ जीवतीत्यादिव्यवहार आत्मान्यत्वेऽप्यविरुद्धः । प्राणोऽस्मीति तद्विशिष्टपरम् । एवमन्यपरवाक्यान्तरैरपि वायुस्वरूपत्वमात्मनो न शङ्क्यम् । **सांख्य योगि**मतं तु बहिष्कार्यमेव ।

अन्ये तु मन्यन्ते—न देहेन्द्रियादिकं भोक्तृ, न च नित्यः कश्चिदन्यः ; सुषुप्त्यादौ तेषां भोक्तृत्वादृष्टेः । सति ज्ञाने भोक्तृत्वमिति चेत् ; तर्हि तस्यैव तदस्तु, किमन्तर्गडुभिरन्यैः । तस्य च भोक्तृ-त्वमनुकूलप्रतिकूलविषयावगाहित्वम् । तच्च यदृच्छावैचित्र्यादिति नादृष्टाद्यपेक्षा । न च सुषुप्त्यादौ निर्विषयधीसन्ततिसद्भावे किंचिन्मानम् ; प्रबोधारम्भसामग्रीवैचित्र्यात् , यदृच्छयैव वा जागराद्यज्ञानोप पत्तेरिति । **बौद्धा**स्तु ग्राहकाभिमानारूढोऽनादिधीसन्तान एवात्मा अहं जानामीत्यादिबोध(स्तु)आलय विज्ञानवशात् आश्रयकल्पनया वा स्यात् ; अतिरिक्तस्तु बाधितत्वादनादेय इत्याहुः। तदेतन्मतद्वयं तन्त्रेण निरस्यति **ज्ञान**मिति । संविदधीना हि सर्ववस्तुव्यवस्था । ज्ञानं च ज्ञातृधर्मतयैव वेद्यते । न च ज्ञानस्य भोक्तृत्वम् । अनुकूलप्रतिकूलविषयावगाहेऽपि तस्य भोगात्मकत्वं निष्येत् । 'मम भोगः' इति मन्यमानस्तु ज्ञातैव भोक्ता । आनुकूल्यादिकं हि तदपेक्षमेव, उपलम्भविरुद्धकल्पनायोगात् । आलयविज्ञानवत्क्षणिकश्च

---

पृ°— तर्हि तस्यैव तदस्त्विति । तद्भोक्तृत्वं ज्ञानस्यैवास्त्वित्यर्थः। ज्ञातृत्वशून्यस्य तस्य कथं भोक्तृत्वमित्यत आह तस्य चेति । अनुकूलादिविषयावगाहनस्य भोक्त्रदृष्टापेक्षात्वादन्योन्य(?) भोक्ताऽङ्गीकार्य इत्यत आह—तच्च यदृच्छेति । सुषुप्तौ ज्ञानाभावाद् भोगाभाव इति स्वमतमुक्त्वा सुषुप्तावपि धीसन्ततिरस्ति, निर्विषयतया तदानीं भोगाभाव इति बौद्धोक्तं दूषयति—न च सुषु-प्त्यादाविति । उपलम्भविरुद्धकल्पनायोगादिति । भोक्ताऽहम् , ममेदमनुकूलम् इत्यादिभोक्त्रपेक्षानु-

पृ°— खलु प्राण एव प्रज्ञात्मा इदं शरीरं परिगृह्योत्थापयति' (कौ. ३. २६) इति, 'प्राणो ह पिता प्राणो ह माता (छा.७.१५) इति च यथाक्रमम्। दार्ढ्येति। वपुर्विषयोक्तदोषो ध्रुवः। प्रज्ञात्मेति पदं तु उपरितनवाक्यस्वारस्यात् स्वभिन्न प्रज्ञासहकारिकत्वार्थकं प्राण एव प्रज्ञात्मेत्यत्र। प्राणोऽस्मि प्रज्ञात्मेत्यत्र तु प्राणपदं प्राणविशिष्टार्थकम्। व्यतिहारः—प्राणे आत्मशब्दस्य आत्मनि प्राणशब्दस्य च तत्रतत्र प्रयोगः। वायुरूपत्वमिति। वायुरनिलममृतमिति ईशोपनिषत्। तत्र योगार्थविवक्षा। ननु बुद्ध्य-परपर्यायस्य महतः प्राणशब्दवाच्यत्वं सुषुप्तावुच्छ्वासनिश्वासहेतुत्वञ्च वर्णयद्भिः सांख्यादिभिः तत्र ज्ञानरागद्वेषधर्माधर्मादिकमिष्टम्। यद्यपि तदतिरिक्त आत्मा तदिष्टः, अथापि प्राणा न चेतयन्त इति भवद्वाक्यं सांख्यादिविरुद्धमित्यत्राह सांख्येति। बुद्धेः प्राणत्वं, कामः संकल्पो विचिकित्से-त्यादित· चैतन्यादिमत्त्वञ्चौपचारिकमित्यन्यत्र स्थितमिति भावः।

चतुर्थपादव्याख्यानमारभते अन्येत्विति। न ज्ञातृत्वं ज्ञानाश्रयत्वम् , किं तु विषयावगाहित्वम्। अतो धर्मधर्मिभेदः सर्वथैव नास्ति। तत् ज्ञानसंततिरेवात्मेति चार्वाकैकदेशिनः। त इमे। जागराद्य-ज्ञानेति। जागराद्यं ज्ञानमिति कर्मधारयः। बौद्धास्तु आलयविज्ञानं प्रवृत्तिविज्ञानमिति काल्पनिकं भेद-माश्रित्य आलयविज्ञाने ज्ञातृत्वमुक्तम्। सर्वं क्षणिकमिति च स्वीकृतम्। तदुच्यते उपरि बौद्धास्त्विति।

निष्प्रमाणिका । उपलब्धस्य च बोद्धु (भोक्तुः) कुतो बाधः ॥ धर्मधर्मिभावायोगादिति चेन्न ; आदावेव तत्साधनात् ॥ प्रत्यभिज्ञातुरेकस्यासंभवादित्यप्ययुक्तम् ; क्षणभङ्गादेरपि निरस्तत्वात् । ज्ञानेतरमिथ्यात्वं च निरसिष्यते । अनुपलम्भस्तु बाधकः सन्स्य चेत्, असिद्धः ; परस्य त्वबाधकः । अन्यथा धीसन्ततिभेदादेरप्यसिद्धिप्रसङ्गात् । बुद्धेस्त्वात्मत्वानुमानमिन्द्रियादेरिवायुक्तम् । ननु वर्तमानक्षणमात्रविशिष्टतयाऽऽत्मोपलभ्यते, पूर्वापरकालतदुपाध्यादीनामप्रत्यक्षतया तद्विशिष्टवस्तुप्रत्यक्षत्वायोगात् । अन्यथा परभागस्थितवह्निनाऽपि पर्वतस्य विशिष्टोपलम्भप्रसङ्गे अनुमानादिप्रमाणभङ्गः स्यादिति—तदप्यसत् । प्रत्यभिज्ञायाः प्राक्कालविशिष्टग्रहणस्य दर्शितत्वात्, नित्यत्वादीनामपि तत्तत्प्रमाणैरुपस्थापनात् । न च नित्योऽहमित्युपलम्भे सर्वकालोपाधिप्रत्यक्षत्वप्रसङ्गः ; प्रमाणसिद्धिमात्रेण तथा व्यवहारात् । इदं चैतदन्यत्रापीति ॥ ३ ॥

इत्यात्मन इन्द्रियाद्यतिरेकः ॥

धीर्नित्या यस्य पक्षे प्रसरति बहुधाऽर्थेषु सैवेन्द्रियाद्यैः
तेनाऽऽत्माऽजागलस्थस्तन इव किमिह स्वीक्रियेतेति चेन्न ।
कल्प्यं चेदात्मतत्त्वं कथयितुमुचितं लाघवं तत्र युक्त्या,
नित्या सा यस्य तद्वानपि निगममितो(तौ ?) गौरव नास्य भारः ॥ ४ ॥

---

पू०—कृत्याद्युपलम्भविरुद्धस्य ज्ञानापेक्षानुकूल्यादिकल्पनस्यायोगादित्यर्थः। अतिरिक्तस्तु बुद्धित्वादनादेय इत्युक्तं दूषयति—उपलब्धस्य च भोक्तुरिति(?) । कुतः=न कुतश्चिदित्यर्थः । कथमित्याशङ्क्य किं धर्मधर्मिभावायोगो बाधकः, उत प्रत्यभिज्ञातुरेकस्यासम्भवः, उत ज्ञातेतरमिथ्यात्वम्, उतानुपलम्भः इति विकल्पमभिप्रेत्य क्रमेण दूषयति—धर्मधर्मिभावेत्यादिना । आत्मनः स्थिरत्वमसहमानो बौद्धः शङ्कते ननु वर्तमानक्षणेति । आत्मनो नित्यत्वे नित्योऽहमित्युपलम्भः स्यात् । तत्र च सर्वकालोपाधिप्रत्यक्षत्वप्रसङ्ग इत्याशङ्क्याह—न च नित्य इति । इदं चैतदन्यत्रापीति। क्षणिकत्वे क्षणिकोऽहमिति बुद्धौ क्षणोपाधिप्रत्यक्षत्वप्रसङ्गे मदुक्तपरिहार एव त्वयाऽप्यङ्गीकृत इत्यर्थः ॥ ३ ॥

श्री— संतानस्यानादित्वं नाम ज्ञानपूर्वकालव्यापकज्ञानान्तराधिकरणतात्वम् । निष्प्रमाणिकेति । प्रतीयमानस्य भेदस्य काल्पनिकत्वे प्रमाणाभावात् यथाप्रतीति विषयावगाहिज्ञानातिरिक्तात्मसिद्धौ आलयविज्ञानकल्पनं किमितीति भावः । सर्वत्र गुणगुणिद्वयापलापी पृच्छति धर्मधर्मीति । ननु देहेन्द्रियमनःप्राणधीव्यतिरेकेऽपि बुद्धितत्त्वमेवाऽऽत्माऽस्तु ; सांख्यमते तत्रैव रागद्वेषादिसर्वात्मधर्मदृष्टेरित्यत्राह बुद्धेरिति । ननु 'क्षणिकमपि च यः' इति ज्ञानक्षणिकत्वेनासन्दिग्धेन ज्ञानस्यानात्मत्वोक्तिरयुक्ता ; आत्मनः क्षणिकत्वस्य प्रत्यक्षत्वादिति शंकते ननु वर्तमानेति । परेति । पर्वतस्य यः परभागः प्रत्यक्षागोचरप्रदेशः तन्नत्याग्निविशिष्टस्यापि पर्वतस्य प्रत्यक्षप्रसंगादित्यर्थः । असदिति । ग्रहणस्य प्रत्यभिज्ञाया दर्शितत्वादित्यन्वयः । आत्मनः स्थिरत्वं प्रत्यक्षसिद्धम् । अतो न क्षणिकत्वम् । नित्यत्वं तु श्रुतितर्करूपमानान्तरायत्तमित्यर्थः ॥ ३ ॥

आत्मनो ज्ञानातिरेकमसहमानं वैदिकं प्रत्याह धीरिति । यस्य—वेदान्तिसामान्यस्य, पक्षे—मते धीः ज्ञानं नित्या ; तथा यस्य विशिष्टाद्वैतिनो मते सैव–नित्या धीरेव इन्द्रियाद्यैः–इन्द्रियानुमानशब्दरूपकरणसाहाय्येन विषयेषु प्रसरति; तेन किमिति तदतिरिक्त आत्मा स्वीक्रियेतेत्यर्थः। प्रथमपादे एकवाक्यतयाऽर्थवर्णनसंभवेऽपि असौ इति प्रयुज्य वाक्यद्वयकरणात् प्रथमवाक्ये यस्येति गृहीतस्य द्वितीयवाक्ये यस्येति गृहीतस्य च भेदोऽस्तीति ज्ञायते। इतरे हि वेदान्तिनः ज्ञानस्यात्मनो

'मा भूदखिलज्ञानाना प्रतिसन्धानाद्यनर्हत्वादात्मत्वम् । यस्य आत्मवत् तद्धर्मभूता धीर्नित्या, सा प्रसरणभेदैस्तत्तदर्थान् प्रकाशयतीति पक्ष , तस्य किं तदाश्रयभूतेन नित्यात्मना' इति चोद्यमनूद्य प्रत्याह— धीरिति ॥ धीतद्वन्तौ तावन् पृथग्दृष्टौ । तत्र, "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते", "तथा हेय-गुणध्वसात्" इत्यादिभिर्द्वयोरपि नित्यत्व यस्य सिद्धम्, तस्य कल्पनागौरवरूपो भारो नास्तीत्यर्थ ॥४॥

इति नित्यबुद्ध्यतिरिक्तात्मसिद्धिः ॥

ज्ञानत्व वक्ति पुम श्रुतिरिह न पुनर्बुद्धिमात्रस्य पुस्त्व
प्रत्यक्षादेः प्रकोपात् अनुगतकथने ज्ञानमर्थप्रकाशः ।
स्वस्यैवाऽऽत्मा तु सिद्धि(द्धिः?) मतिरनुभवति स्वान्ययोस्तिद्धिमात्र
ज्ञातुर्जाड्यप्रसङ्गच्युदमननिपयाः ज्ञानमात्रोक्तयोऽपि ॥ ५ ॥

---

धी— विभुत्वस्वीकारिण । अन्येऽपि नैव संकोचविकासौ ज्ञानस्य वदन्ति । अतो यस्येत्यर्थे वैलक्षण्य-मस्ति । कल्प्यमिति । युक्त्येत्यस्यात्राप्यन्वय । युक्त्या आत्मतत्त्वं कल्प्यञ्चेत्, तत्र पक्षे युक्त्या लाघवकथनमुचितम् । यस्य तु वादिन सा धीर्नित्या निगममिता, यस्य तद्वानपि-धीमानपि ज्ञाना-श्रयपदार्थोऽपि निगममित, अस्य वादिनो न गौरवरूपो भार, वचनस्यैव तद्भारवाहित्वात् । न चाय दोष , नास्ति वचनस्यातिभार इति प्रसिद्धे । वचन हि प्रत्यक्षमिव यथा वस्तुस्थितिस्तथा तद्दर्शकम् । तत्रान्यथाकरणेऽसत्त्वमेव दुष्टता । अन्यथा रावणदशस्कन्धत्वादिविषय प्रत्यक्ष वचनञ्चान्यथा कर्त व स्यादिति । नित्या सेति वाक्यान्तार्थम् । तद्वानिति तच्छब्दो न यच्छब्दप्रतिसम्बन्धी । किन्तु धीत्यर्थस्तच्छब्दस्य । यच्छब्दप्रतिसम्बन्धी अस्येति शब्द इति वृत्तित सुगमम् । वृत्तिवशात् 'नित्यौ सा यस्य तद्वानपि निगममितौ' इति पाठोऽप्युल्लिख्यते । अन्यथा चतुर्थपादस्य, यस्य मते सा नित्या तेन तद्वानपि निगममित । अस्य=निगमस्य गौरव न भार, वचनत्वादित्यर्थो वर्णयितु शक्यते । न विज्ञातुरिति । "अविनाशी वा अरेऽयमात्मा अनुच्छित्तिधर्मा" इत्यादिश्रुतिरपि ग्राह्या ॥ ४ ॥

अभेदसाधकनिगमस्यापि सत्त्वात् युक्तिनिगमोभयानुसारेण भेदप्रत्यायकनिगमोऽयथार्थ इत्यत्राह ज्ञानत्वमिति । इह—आत्मसाधकप्रमाणेषु 'विज्ञानात्मा पुरुष,' 'विज्ञान यज्ञ तनुते,' 'यो विज्ञाने तिष्ठन्' इत्यादिश्रुति आत्मनो ज्ञानत्व वदतीति सत्यम्, तावता ज्ञानसामान्यमात्मेति न सिध्येत् । न हि सूर्यस्तेज इति वचनेन प्रभाया अपि सूर्यत्वमापतत् । अत सूर्यप्रभासाधारण्येन तेजस्त्ववत् आत्मतद्गतबुद्धिसाधारण ज्ञानत्वमित्येव ग्राह्यम् । अन्यथा यथा सूर्यस्य तत्प्रभायाश्च भेद प्रत्यक्षानुमानागमसिद्ध इति तद्विरोध तद्वदत्रापि अह जानामीत्यादिप्रत्यक्षानुमानागमावगतभेद-विरोध स्यात् । ननु पूर्वापरप्रयुक्तज्ञानपद विहाय बुद्धिपदप्रयोग कुत इति चेत्—ज्ञानत्व यदुभय-साधारण तयो पृथक् शब्दान्तरेण ज्ञापनाय । मात्रपद व्यर्थमिति चेत्—ज्ञानमात्रस्येति प्रयोगे ज्ञानसामान्यस्येत्यर्थ स्यात् । बुद्धिमात्रस्येत्यस्य बुद्ध्यनाधारस्य ज्ञानस्येत्यर्थ ।

ननु तत्र सूर्यप्रभयोस्तेजस्त्ववत् अत्रात्मतद्बुद्ध्योरनुगत ज्ञानत्व नाम किमिति चेत्—आह अनुगतेति । ज्ञानमर्थप्रकाश इति । प्रकाशपद प्रकाशकपरम् । ज्ञानमर्थप्रकाशकम् । ज्ञानत्वमर्थ-प्रकाशकत्वमिति यावत् । यद्वा ज्ञानमिति भावप्रधाननिर्देश । ज्ञानत्वम् अर्थप्रकाश —किञ्चिद्वस्तु प्रकाशनम् । तत्रतत्र अर्थपदेन ग्राह्य विशिष्याऽऽह स्वस्यैवेति । अन्तरूप ज्ञान स्वमात्रप्रकाशकम् । अतस्तत्र समन्वयावसरे अर्थपदेन आत्ममात्र ग्राह्यम् । मतिस्तु बुद्धि सर्वानपि विषयान् स्व मतिञ्च

ननु "द्रष्टा श्रोता" इत्यारभ्य "विज्ञानात्मा पुरुष." इत्यादिषु जीवस्य ज्ञानस्वरूपत्वं श्रूयते ; अतस्तस्य ज्ञानादतिरेको दुस्साधः इत्यत्राह **ज्ञानत्वमिति** ॥ न ह्यत्र स्वधर्मतादात्म्यं विधीयते, अशक्यत्वात् । किं तु धर्मवत् धर्मिणोऽपि विज्ञानात्मत्वं नाम धर्मान्तरमुपदिश्यते ॥ ज्ञानानुवादेनाऽऽत्मत्वस्य विधिः स्यादित्यत्राह **न पुनरिति** । अन्यथा बाधकमाह-**प्रत्यक्षादेरिति** । आदिशब्देनानुमानशास्त्रयोः संग्रहः । ज्ञानत्वविधानेऽपि तद्विरोधःस्यादित्यत्राह **अनुगतेति** । कस्यचिदर्थस्य प्रकाशरूपत्वमुभयत्रानुवृत्तं ज्ञानशब्द[प्रवृत्ति?]निमित्तम् । तद्विधौ न विरोध इत्यर्थः । **अर्थप्रकाश** इत्युक्तं विषयतोऽपि विभजते—**स्वस्येति** । स्वासाधारणेन केनचित स्वभावेन विशिष्ट इह स्वशब्दार्थः । धर्मभूतज्ञाने तु तावदतिरिक्तग्राहित्वं विशेषमाह **मतिरिति** । "विज्ञानघन एव" इत्यादिभिर्ज्ञानमात्रत्वोक्त्या ज्ञातृत्वनिषेधात् कथमुभयत्रानुवृत्तधर्मवत्त्वमितिरित्यत्राह —**ज्ञातुरिति** । नात्रावधारणमन्ययोगव्यवच्छेदार्थम् । किंतु 'विज्ञानघनः' इत्यादिपूर्ववाक्यपरामर्शादंशतोऽपि ज्ञानत्वायोगव्यवच्छेदपरमिति भावः ॥ ५ ॥

इत्यात्मनो ज्ञानमात्रत्वोक्तिनिर्वाहः ॥

---

श्री— प्रकाशयतीति अर्थपदेन सर्वं ग्राह्यम् । प्रथमस्वपदम् आत्मपरम् । द्वितीयस्वपदं मतिपरम् । वृत्तिस्वारस्यात् आत्मपरमेव वा । सिद्धिमित्यत्र सिद्धिरिति पाठः स्यात् । प्रकाशपदपर्यायत्वात् । आत्मा स्वमात्रसिद्धिरूपो भवतीत्यर्थः । सिद्धिमिति द्वितीयान्तपाठे आत्मा स्वमात्रसिद्धिं स्वप्रकाशनमात्रम् अनुभवति-लभते इत्यन्वयार्थः । सिद्धिपदं सिद्धिभावमित्युपरितनपदसमानार्थकमिदानीम् । सिद्धिभावं—प्रकाश[क]त्वम् । ननु विज्ञानघन एवेति एवकारेण ज्ञानमात्रत्वोक्त्या आत्मनो ज्ञानाश्रयत्वाभावोऽवगम्यत इति चेत्—ज्ञानमात्रत्वोक्तयः न ज्ञातृत्वनिषेधपराः ; किंतु ज्ञाताऽऽत्मा ज्ञानमेव प्रकाशरूप एव, अप्रकाशत्वं सर्वथा नास्तीत्येतत्पराः। लवणखण्डस्य कार्त्स्न्येन रसमयत्ववत् आत्मनः कार्त्स्न्येन प्रकाशकत्वम् ; अप्रकाशांशः कोऽपि नास्तीति तदर्थः अनन्तरोऽबाह्य इति पदघटितदृष्टान्तवचनस्वारस्यात् ज्ञायते । तस्य दृष्टान्तस्योपलक्षणत्वस्वीकारे तु ज्ञानमात्रत्वोक्तिः अंशभेदेनाप्रकाशत्वव्यवच्छेदिकेव कालतोऽप्रकाशत्वव्यवच्छेदिकाऽपि भवेत् । 'अनन्तरोऽबाह्य' इत्यस्य सैन्धवघनः जलाद्यन्तर्वर्तमानः बहिश्च यथा रसघन एव, एवं बहिरन्तश्च भूतानां वर्तमानः तत्तत्समयेऽपि ज्ञानरूप एवेत्यप्यर्थवर्णनं संभवति । अतश्चायोगव्यवच्छेदेन सर्वदैव प्रकाशरूपत्वावगमात् सुषुप्त्यादावप्यात्मा प्रकाशमान इत्यर्थो लभ्यते । तेन धर्मभूतज्ञानवैलक्षण्यमपि सिध्यति । तस्य विषयप्रकाशनवेलायामेव प्रकाशमानत्वादिति श्लोकार्थः ।

ज्ञानानुवादेनेति । विज्ञानात्मा इत्यनेन विज्ञानानुवादेन आत्मत्वविधानस्वीकारे, उद्देश्योपादेययोरेकपदबोध्यत्वादेकप्रसरताभंग इति दोषोऽपि भवतीति ध्येयम् । ननु स्वस्यैवेति स्वमात्रप्रकाशकथनमयुक्तम्, आत्मनः एकत्वानुकूलत्वादेरपि प्रकाशमानत्वादित्यत्राह स्वासाधारणेनेति । प्रत्यक्त्वानुकूलत्वेतररूपनियतप्रकाशधर्मविशिष्ट आत्मा स्वपदार्थः । तदतिरिक्तनिषेध एवकारेणेति भावः। तावदतिरिक्तेति । प्रथमस्वपदविवक्षितविशिष्टव्यतिरिक्तेत्यर्थः ; स्वयंप्रकाशव्यतिरिक्तेत्यर्थो वा । तावदिति पृथगव्ययश्चेत्, व्यर्थम् ॥ ५ ॥

यदि आत्मनः स्वयंप्रकाशत्वे प्रमाणं स्यात्, तर्हि विज्ञानात्मेत्यादौ सोऽर्थो वर्णनीयः स्यात् । वस्त्वन्तराणामिवाऽऽत्मनोऽपि धर्मभूतज्ञानेनैव प्रकाशनिर्वाहे तार्किकादिवैलक्षण्येन स्वयंप्रकाशत्व-

आत्मा स्वेनैव सिध्यत्यहमिति, निगमैर्यत् स्वयंज्योतिरुक्तः
स्वापेऽप्यस्य स्वसिद्धावशयिषि सुखमित्यक्षता प्रत्यभिज्ञा ।
चेतश्चान्यानपेक्षं मतिषु न हि भवेत् किंच वेदान्तदृष्ट्या
ज्ञानत्वादेष(व) धीवत् स्वविषयधिषणानिर्व्यपेक्षस्वसिद्धिः ॥ ६ ॥

सिध्यतु देहादिभ्योऽन्य आत्मा ; स कथमनन्यसाधनः ? स्वानुभवबलादिति चेन्न ; धर्मतोऽपि तदुपपत्तेः । आत्मत्वादित्यनुमानादिति चेन्न; युष्माभिः केवलव्यतिरेक्यनभ्युपगमात् ज्ञानस्य च सपक्षस्याभ्युपगमात् ॥ स्वयंज्योतिष्ट्वश्रुतेरिति चेन्न ; ज्योतिश्शब्दस्यात्र भाक्तत्वात् । चक्षुस्सहकारिणि तेजोविशेषे हि तन्मुख्यता । "स्वेन रूपेणाभिनिष्पद्यते" इति तु औपाधिकरूपनिवृत्तिपरम् । इष्टं च भवतामपि स्वधर्मेणात्मनो भानम् । तावतैवान्यत्रादृष्टेन स्वयंप्रकाशत्ववादोऽस्त्विति ॥ एतत् प्रत्याह—आत्मेति । एवकारोऽत्र परप्रकाश्यत्वनियमनिवृत्तिपरः । यदि अहंत्वादिरहितः स्वयं प्रकाशते, तदा परमतं स्यादित्यत्राह अहमिति । अहमर्थ आत्मेति सेत्स्यति, अतः तत्प्रकाशे कथं परेष्टावकाश इति भावः । प्रतिज्ञाते

---

आ॰— आत्मा स्वेनैवेति । 'देहेन्द्रियमनःप्राणधीभ्योऽन्यः' इति श्लोकोक्तं देहादिव्यतिरेकमात्मनः प्रसाध्य तत्रोक्तमनन्यसाधनत्वं साधयितुं जडात्मवादिनां चोद्यमनुभाषते—सिद्ध्यत्वित्यादिना । परप्रकाश्यत्वनिवृत्तिपर इति । परात्मनां ज्ञानान्तरवेद्यत्वस्यापि दर्शनान्नियमनिवृत्तिपर इत्युक्तम् ।
वी— स्वीकारो व्यर्थ इति शंकायां नात्र लाघवप्रमाणप्रसक्तिः, अस्य श्रुतिसिद्धत्वादित्याह आत्मेति । स्वेनैव सिद्ध्यतीति । स्वेन सिध्यत्येवेत्यर्थः । अतो धर्मभूतज्ञानेनापि वेद्यत्वेऽपि न क्षतिः । यद्वा अहमिति स्वेनैव सिध्यति ; अहमित्येतावन्मात्रग्रहणे धर्मभूतज्ञानापेक्षा नैवेत्यर्थः । अनन्यथासिद्धं निगममाह स्वयंज्योतिरिति । यस्मात् स्वयंज्योतिष्ट्वेनोक्तः, तस्मात् ज्ञानरूपत्वप्रतिपादकशब्दानामपि तत्समानार्थकता । अतः सर्वैरेभिर्निगमैरयं स्वयम्प्रकाश इत्यवधार्य इत्यर्थः । बृहदारण्यके (६) किं ज्योतिरयं पुरुष इति जनकप्रश्नोत्तरावसरे जाग्रद्दशायामादित्यादि ज्योतिः प्रदर्श्य तदभावदशायां स्वप्नादावपि अयं स्वज्योतिरित्युक्तम्, तत् तत्रैव विवृतञ्च 'आत्मनैवायं ज्योतिषाऽऽस्ते पल्ययते इत्यादिना । आत्मनेति पदप्रयोगात् स्वकीयेन धर्मभूतज्ञानरूपेण ज्योतिषेत्यर्थो न भवति । आस्त इत्यादिना च बहिर्व्यापृत्यभावकाल इव व्यापृतिकालेऽपि आत्मनः प्रकाशकत्वकथनात् सर्वदा स्वप्रकाश इति स्पष्टमिति भाव.। एवञ्चेतराविशेषं स्वापेऽपि = सुषुप्त्यामपि अस्याऽऽत्मनः स्वसिद्धौ = स्वेन प्रकाशे सति, सुखमहमशयिषि आस्वाप्समिति प्रबोधकाले या प्रत्यभिज्ञा, सुषुप्तौ सुखरूपतया प्रकाशितस्वरूपानुसंधानरूपत्वेन प्रतीयमाना, तद्रूपत्वक्षतिर्नास्ति । यदि धर्मभूतज्ञानाधीन आत्मप्रकाशः, तदा सुषुप्ताविन्द्रियाणामुपरतत्वेन ज्ञानप्रसराभावादात्मप्रकाशो न स्यात् । प्रत्यभिज्ञेयं क्षता स्यादिति । ननु योगमत इव सुषुप्तौ मनोवृत्त्यंगीकारात् चेतोधीनधर्मभूतज्ञानप्रसरः स्यादित्यत्राह चेतश्चेति । मनः मतिषु अन्यानपेक्षतया कारणं न भवेत् । अतस्तदा न मनोवृत्तिरित्यर्थः । निगमैरिति पूर्वमुक्तम् ; अनुमानमप्यस्तीत्याह किञ्चेति । एषः = आत्मा । ननु ज्ञानत्वरूपहेतुरेवासिद्ध इति शंकानुत्थानाय वेदान्तदृष्ट्येत्युक्तम् । वेदान्तेषु ज्ञानपदेनाऽऽत्मनिर्देशदर्शनात् हेतुर्नासिद्ध इति भावः । आत्मा स्वविषयकज्ञानान्तरनिरपेक्षप्रकाशवान् ज्ञानत्वात् धर्मभूतज्ञानवदित्यनुमानम् । न च तार्किकादिभिरनुव्यवसायादिना स्वविषयकज्ञानेनैव ज्ञानप्रकाशस्वीकारात् दृष्टान्ते साध्यवैकल्यमिति वाच्यम्—तत्पक्षनिराकरणेन तस्य स्थापयिष्यमाणत्वात् ।

मानमाह **निगमैरिति**। बहुवचनेन ज्ञानत्ववादिनोऽपि निगमास्तत्परा इति व्यज्यन्ते। यद्यपि "हृद्यन्त ज्योतिः पुरुषः" इत्यत्रापि **ज्योतिश्शब्दो** भाक्तः, तथाऽपि स्वप्रकाशे प्रदीपादिवत् लोकदृष्ट्याऽन्यनिरपेक्षत्वं स्वरसादगतं न बाध्यम्॥ स्वधर्मेणान्यप्रकाशकत्वमुपचारनिमित्तं स्यादिति चेन्न ; बाह्यज्योतिषि स्वधर्मनिरपेक्षप्रकाश[त्व]स्यापि स्वतः (स्वरसतः?)प्रतीतेः॥ स्वधर्मेण भासमानत्वमेव **ज्योतिश्शब्दो**पचारनिमित्तमिति चेन्न; बाह्ये तदभावात्। स्वधर्मतः प्रकाश[क]त्वं च, "योऽयं विज्ञानमयः प्राणेषु" इति पदान्तरसिद्धतया पुनरुक्तं स्यात्। उपचारनिमित्तव्यञ्जनमात्रं पदान्तरकृत्यमिति तु *मन्दम्*।

*स्वयंप्रकाशत्वे सुषुप्त्यादावपि प्रकाशेत इत्यत्राह* **स्वापेऽपीति**। *अयं भावः*-प्रत्यभिज्ञाबलात् सुषुप्तावप्यहमर्थोऽस्तीति सिद्धम्। श्रुतिस्वारस्याच्च प्रकाशमानत्वमपि ग्राह्यम्। तथाच सुखमहमस्वाप्समिति प्रबुद्धपरामर्शस्वारस्यं च न बाध्यमिति। ननु यदि सुषुप्तावात्मा प्रकाशते, तन्मनसैवास्तु ; कृतं स्वप्रकाशत्वेनेत्यत्राह **चेन्न** इति। अयं भावः - बाह्यविषयेषु तावत् चक्षुरादीनि अनुमानागमसंस्कारान् वा संगृह्य [मनः?] प्रवर्तते। आत्मनि च तत्तदुपहितं जनितं वा किंचिदुपधार्यैव। स्वापे तु दृष्टविरुद्धमनोवृत्तिकल्पनात् वरं श्रुतिस्वारस्यानुरोध इति॥ अनुमानरुचीनां तदप्यस्तीत्याह **किं चेति**। **वेदान्तदृष्ट्येति** ज्ञानत्वहेतोरसिद्धिपरिहारः। ज्ञानस्य [स्व]प्रकाशत्वं साधयिष्यत इति तद्दृष्टान्तोक्तिः॥ ६॥

**इत्यात्मनः स्वयंप्रकाशत्वम्॥**

**प्रत्यक्त्वं पुंसि केचित् स्वविषयधिषणाधारतामात्रमाहुः**
**स्वस्मै स्वेनैव भानं तदिति समुचितं तत्स्वतस्सिद्धिसिद्धेः।**
**प्रत्यङ्(क्) स्वापेक्षयाऽसौ त्वमयमिति मितः स्वेतरैः स्वस्वबुद्ध्या**
**भातं नित्यं परस्मै जडमजडमपि स्यात् परागर्थ एव॥ ७॥**

"कश्चिद्धीरः प्रत्यगात्मानमैक्षत्" इत्यादावात्मन प्रत्यक्त्वं गम्यते। तत् किमिति विमर्शे,

---

*पु०*- अन्यनिरपेक्षत्वं स्वरसावगतं न बाध्यमिति। स्वधर्मनिरपेक्षप्रकाशत्वं ज्योतिश्शब्दोपचारनिमित्तमिति भावः। तत्तदुपहितं अनुमानागमोपहितं नित्यत्वादिकम्, जनितं सुखादिकमित्यर्थः॥ ६॥

*श्री*— संगृह्य प्रवर्तते—प्रत्यक्षानुमितिशाब्दबोधस्मरणानि जनयति। तत्तदुपहितम्-आत्मसाधकानुमानागममुखेनाऽऽत्मग्रहणे तादृशानुमानादिविशिष्टं सत् आत्मनि प्रवर्तते। इन्द्रियादितत्तत्प्रमाणजन्यप्रत्यक्षादिप्रमिति तदधीनेच्छाप्रयत्नादौ सति तु तद्विशिष्टोऽहमिति मनसा गृह्यते। उपधार्यैवेति एवकारेण मनः प्रवर्तते चेत्, एवमेव, मनो विना तादृशविशिष्टधीर्वैक्ष्यत इति सूच्यते॥ ६॥

नन्वात्मा अहमिति भासत इत्युक्तम्। किमिदमहन्त्वम्? इदन्त्वप्रत्यनीकमहन्त्वम्। अन्येषां वस्तूनामिदन्त्वं संनिहितत्वं स्वभिन्नस्वग्रहीतृपुरुषं प्रति प्रकाशमानत्वम्। तत्प्रत्यनीकमहन्त्वं स्वं प्रत्येव प्रकाशमानत्वम्। तत्र तार्किकवेदान्तिनोरभिप्रायभेदं दर्शयति प्रत्यक्त्वमिति। पुंसि-आत्मनि यत् प्रत्यक्त्वम् तत् स्वविषयकज्ञानाश्रयत्वरूपमित्याहुः केचित्। तदुक्तमुदयनाचार्यैरात्मतत्त्वविवेके, "प्रत्येतुः प्रत्येतव्यादनतिरेकः प्रत्यक्त्वम्" इति। विषयत्वाश्रयत्वोभयसंबन्धेन ज्ञानविशिष्टत्वं तत्। तत्पक्षे आत्मनः अस्वयंप्रकाशत्वात्, ज्ञानोत्पत्तौ अनुव्यवसायेनैव तद्ग्रहणादेवं लक्षणनिर्वचनम्।

स्वरूपेण वा भासमानतया प्रत्यङ्ङि(गि)त्युच्यते । तेन [स्व]रूपेणाहमर्थ इति । ईदृशाहन्त्वं च (णाहमर्थ इति दृशा अहन्त्वञ्च) सर्वात्मानुवृत्तम् । स्वभावादिना तु न तस्य बाध. । तर्हि तत्र पराक्शब्दोऽपि किं न प्रवर्तत इत्यत्राह भातमिति । जडमजडं वा यन्नित्यं परस्मै भासते, तत् परागर्थ एव । न तस्य स्वस्मै भासमानत्वप्रसङ्गः । व्यपदेशनियमश्च तत एवेति ॥ ७ ॥

इति प्रत्यक्त्वादिप्रकारः ॥

---

टी— पक्षे धर्मिणः स्वगतैकत्वादिसर्वविषयकत्वम् । धर्मभास्यमिति पक्षे च तस्य तस्य तत्तद्विषयकत्वमिति चेत्—श्रीमति रहस्यत्रयसारे धर्मिभूतज्ञानस्य सविषयकत्वं न वक्तव्यमित्याशयेनैव धर्मभूतज्ञानस्य विषयित्वमसाधारणमित्युक्तत्वात् आत्मनः सविषयकत्वं न युक्तम् । अस्मन्मते विषयत्वञ्च ज्ञानसंयुक्तत्वादिरूपम् । विषयित्वस्यात्र स्वं प्रति स्वनिष्ठाद्रव्यं प्रति च दुर्वचत्वादेव सर्वसाधारण्येन प्रकाशो नाम व्यवहारानुगुण्यमिति आत्मसिद्धौ श्रीभाष्ये च निष्कृष्टम् । अन्यथा स्वधर्मविषय इव धर्मिभूतस्वांशेऽप्यभेदेपि विषयविषयिभावेऽपिसंभवात् अन्यादृशप्रकाशशब्दार्थवर्णनस्यानावश्यकत्वात् । “अप्रकाशेषु तद्वत् स्यात् भेदः सत्ताप्रकाशयोः । प्रकाशस्य तु सत्तैव प्रकाशपदगोचरः” इति च न्यायकुलिशे । अतः आत्मनः व्यवहारानुगुण्यापादकत्वरूपार्थे प्रकारविशेष्यसंबन्धप्रसक्त्यभावात् तत् सर्वं धर्मभूतज्ञानपर्यायत्ववासनाविजृम्भितम् । आत्तग्रन्थे सप्रकारकं स्फुरणमित्यस्य श्रोतृसमवेतसप्रकारकात्मज्ञानहेतुव्यवहारानुगुण्यमित्यर्थः । अतो यस्य सत्तैव व्यवहारानुगुण्यरूपा तस्य स्वयंप्रकाशत्वव्यवहारः । तत्र विशिष्टरूपेण सत्त्वमेव विशिष्टव्यवहारहेतुः । न त्वन्यः प्रकाशः । यस्य तु सत्तायामपि धर्मभूतज्ञानमन्तरा व्यवहारानुगुण्यं नास्ति, तस्य तत् कादाचित्कम् ॥ एवं तर्हि सर्वदैवात्मादिव्यवहारः स्यादिति चेन्न; धर्मभूतज्ञानविषयीकृतानामपि सर्वेषां सर्वदा व्यवहाराभावात् । अतो व्यवहारो व्यवजिहीर्षादिसामग्रीप्रयुक्तत्वात् कादाचित्कः । तथाच व्यवहाराभावेऽपि आत्मगतैकत्वादीनां स्वरूपत एव संशयादिनिवर्तकत्वात् तत्तत्सत्ता व्यवहारानुगुण्यरूपैवेति तदापादकत्वं धर्मधर्म्यविशिष्टमिति । ज्ञानानपेक्षस्थले व्यवहारे व्यवहर्तव्यस्य कारणत्वात् धर्मभास्यत्वमिष्टमेव । तथा धर्मिभास्यत्वमप्यविरोधादस्तीति दर्शितम् ॥ नन्वेवं प्रत्यक्त्वादेः स्वयंप्रकाशत्वे ज्ञानत्वापत्तिः । न चेष्टापत्तिः; तथा व्यवहाराभावादिति चेत्—उच्यते । औपचारिको हि तत्र ज्ञानपदप्रयोग इति तत्त्वटीकायां निष्कृष्टम् । सविषयकत्वस्वीकारे तथा न वक्तव्यम् । न चोपचारस्य सर्वत्राऽऽपादनम् । *आरोपे सति निमित्तानुसरणम्, न तु निमित्तमस्तीत्यारोप इति न्यायात् । किञ्चाऽऽधेयत्वविधेयत्वादौ* सत्यपि गुणेषु यथा न शरीरत्वव्यवहारः, तथा ज्ञानपदाव्यवहार इति द्रव्यत्वघटनया स्वयंप्रकाशद्रव्यत्वमेव नियामकं तत्र भवतु । अतो ज्ञानत्वाभावेऽपि न व्यवहारानुगुणत्वभंगः ।
. ननु बुद्धिसरे बुद्धिर्द्रव्यं स्वयंप्रकाशत्वात् यद्वद्भूमदित्यनुमानं प्रयुक्तम् । धर्मिणां स्वयंप्रकाशत्वे तद् दुष्टं स्यात्; धर्मेषु व्यभिचारादिति चेत्—तत्र स्वयंप्रकाशत्वं स्वाधीनस्वविशेष्यकव्यवहारानुगुण्यम् । आत्मनामिव धर्मभूतज्ञानस्यापि ज्ञानत्वप्रत्यक्षत्वानुमितित्वादिप्रकारकस्वविशेष्यकव्यवहारहेतुत्वात् ज्ञानत्वादौ तदभावाच्च दोषः इत्यलमेतावत् सर्वमाडम्बरं प्रशमयितुम् ।

*ननु प्रत्यक्त्वस्याऽऽत्मत्ववत् सर्वाहमर्थसाधारण्ये आत्मशब्दवत् प्रत्यक्पर्यायः अहंशब्दोऽपि* सर्वत्र प्रयुज्यताम् । प्रयुज्यत एवेति चेत्—चैत्रो मैत्रविवक्षया अहं गच्छामीति प्रयुङ्क्ताम्—इत्यत्राऽऽह प्रत्यङ् इति । अहंशब्दः तत्पदप्रयोक्तृत्वोपलक्षितात्मव्यक्तिवाची । अतोऽन्यत्र न प्रयुज्यते । तथा प्रत्यक्-पदमपि स्वात्मक

बोद्धा कर्ता च भोक्ता दृढमवगमितः प्रत्यगर्थः प्रमाणैः
कर्तृत्वाभाववादे स्वयमिह भगवान् आन्यपर्यं स्वगायत् ।
कर्ता शास्त्रार्थवत्त्वात् कृतिषु च स पराधीन आभापि सूत्रैः
चित्रैः कर्मप्रवाहैर्यतनविषमता सर्वतन्त्राविगीता ॥ ८ ॥

अत्र केचिदाहुः—ज्ञातृत्वादिकमन्तःकरणस्यैव ; आत्मनस्तु साक्षितामात्रम् । यद्वा प्रकृतेः कर्तृत्वम् , आत्मनो भोक्तृत्वमात्रम् ; गीतं चैतत् (च तत् ) 'कार्यकारण' इत्यादिनेति । तान् प्रत्याह — बोद्धेति ॥ त्रिभिरपि प्रमाणैर्ज्ञातृत्वादिप्रकारत्रयवान् आत्मा निस्संशयं बोधितः । अतो न तत्रैकमपि निह्नोतुं शक्यम् ; किं पुनस्त्रितयम् । कुतर्कैस्तु किं नाम दुरपलपमिति भावः । शास्त्रैरात्मनः कर्तृत्वनिषेधे का गतिरित्यत्राह कर्तृत्वेति । स्वयमिति कर्तृत्वनिषेधक एव स्ववाक्यतात्पर्यमाहेति भावः । भगवानित्याप्ततमत्वव्यञ्जनम् । अगायत् । 'पञ्चैतानि' इत्यारभ्य, 'न स पश्यति दुर्मतिः' इत्यन्तेनेति शेषः । शारीरके च

---

श्री— बोद्धेति । दृढशब्दाभिप्रायमाह—त्रिभिरपि प्रमाणैरिति ॥ ८ ॥

वी— अत्र आत्मत्वं सामान्यधर्मः ; प्रत्यक्त्वं विशेषधर्मरूपेण सामान्यभूतमिति वैषम्यम् । एवं प्रत्यगिति स्वबुद्ध्या गृह्यमाणः स्वेतरैः=पुरि स्थितैः त्वमिति तद्बुद्ध्या गृह्यते, परत्र स्थितैश्च स्वेतरैः तद्बुद्ध्या अयमिति गृह्यते । तथा च आत्मा अहमिति स्वस्मै यथा भासते, तथा त्वमिति पुरःस्थिताय भासते । अन्यत्र स्थिताय च अयमिति । एवञ्चाऽऽत्मनामपि परस्मै भासमानत्वमस्ति॥ तर्हि आत्मा प्रत्यग्वा पराग्वा इति चेत्—एवं परस्मै अञ्चति भासते इति परागित्यन्वयार्थसद्भावात् तद्वारणाय पराक्लक्षणे परस्मा एव भासमानमिति एवकारघटना । यत् नित्यं परस्मै भासते, तदेव परागिति नाऽऽत्मा पराक् । तावता पराक्त्वजडत्वयोर्नैक्यम् । जडत्वं हि स्वयमप्रकाशमानत्वम् । अजडत्वं स्वयंप्रकाशमानत्वम् । घटादयो ज्ञानसापेक्षप्रकाशाः । धर्मभूतज्ञानं तद्गतप्रत्यक्षत्वानुमितित्वस्मृतित्वेच्छात्वप्रयत्नत्वसुखत्वदुःखत्वादिकम् आत्मगतैकत्वानुकूलत्वादि च ज्ञानान्तरनिरपेक्षं प्रकाशमानमजडम् । आद्यौ शुद्धिनित्यविभूत्युभयमात्रे अजडत्वपराक्त्वोक्तिः कालप्रकृत्युभयमात्रे जडत्वोक्तिवत् द्रव्यमात्रे तत्त्वविवक्षा । एवमजडमपि चेतनायैव प्रकाशमानत्वात् चेतनस्यैव तत्प्रकाशशेषित्वात् परागेव । पराञ्चि खानि व्यतृणदिति मन्त्रे खानामिन्द्रियाणामुच्यमानं पराक्त्वमन्यत् । 'तस्मात् पराङ् पश्यति नान्तरात्मन्' इति आत्मव्यतिरिक्तसर्ववस्तुनिष्ठं पराक्त्वं यदुक्तम् , तदिदम् । पराञ्चि इत्यस्यापि पराञ्चि प्रतीति अर्थे एकार्थकत्वमेवेति चेत्—स्यान्नाम ॥ ७ ॥

चार्वाकादिपक्षनिरासेनाहमर्थ आत्मा साधितः । सांख्याद्वैतिमतमकर्तृत्वादिकं निरस्यति बोद्धेति । प्रत्यगात्मा प्रागुक्तः ज्ञातृत्वेन कर्तृत्वेन भोक्तृत्वेन च प्रमाणैरप्रकम्प्यमधिगमितः । ननु निर्विकारत्वरक्षणाय ज्ञातृत्वाद्यनुपगमे भोक्तृत्वं परं कथमित्यत्र संसारित्वस्य भोक्तृत्वमात्रार्थैवोपपादनीत्वमनुचिन्त्य गीतायामेव, "पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते" इति विशिष्य कथनात् तद्विप्रिरिति दर्शयति गीतञ्चैतदिति । भोक्तृत्वमिष्टवापि ज्ञातृत्वकर्तृत्वे कैश्चिन्नेष्टे इति तद्विधानादरेण श्लोके भोक्तृपदात् प्रागेव चकारप्रयोगः । कर्तृत्वाभाववादे = अहंकारविमूढात्मा कर्ताऽहमिति मन्यते इत्यादिशास्त्रैः कर्तृत्वनिषेधे । आन्यपर्यं = तस्यान्यतात्पर्यकत्वं—सांसारिककर्तृत्वस्य स्थितस्यैवौपाधिकत्वं स्वाभाविकत्वाभावम् 'अधिष्ठानं तथा कर्ता' इति कर्तृपदेनैवाऽऽत्मानं निर्दिश्य

"प्रत्येतुः प्रत्येतव्याद्व्यतिरेकः" इति कैश्चिदुक्तं तावदाह **प्रत्यक्त्वमिति**। स्वप्रकाशपक्षे तु प्रत्यक्त्व-द्वै(वै)विध्यमाह **स्वस्मा इति**। यदि प्रत्यक्त्वमात्मनः स्वभावः, तदा परेणापि गृह्यमाणोऽहमिति गृह्येते-त्यत्राह—**प्रत्यङ्ङिति (प्रत्यगिति)**। स्वेतरबुद्ध्या गृह्यमाणत्वं न स्वस्मै भासमानत्वम्। अतस्तद्बुद्ध्या गृह्यमाणः आभिमुख्ये, त्वमिति, अन्यदा अयमिति च गृह्यते (गृह्येत)। स्वापेक्षया तु स्वबुद्ध्या

---

श्रु°— प्रत्यक्त्वमिति। प्रत्यक्त्वद्वैविध्यमाहेति। स्वधर्मेण ज्ञानेन स्वस्मै भासमानत्वं स्वरूपेण स्वस्मै भासमानत्वं चेति द्विविधं प्रत्यक्त्वं स्वयंप्रकाशवादिनामिष्टमित्यर्थः ॥ ७ ॥

वी°— अस्मत्पक्षे तु स्वयम्प्रकाशत्वात् आत्मनः स्वस्मै भानं स्वयमेव भवति, न तु ज्ञानापेक्षा। तदाह-स्वस्मै इति। एतदवतरणे वृत्तौ स्वप्रकाशत्वपक्षे प्रत्यक्त्वं द्वेधोच्यत इत्युक्तत्वात् विधाद्वयं द्वितीय-पादग्राह्यम्। तत् किम्?

अथ स्वस्मै भासमानं प्रत्यगिति ग्रन्थारम्भे व्याख्यातम्। इह स्वेनैवेत्यधिकमुक्तम्। स्वेनैव भानं नाम स्वयंप्रकाशत्वम्। स्वस्मै भासमानत्वं तु प्रागुक्तमेवेत्युभयमिति चेत्—तत्र स्वयंप्रकाशत्वं न लक्षणम्, प्रत्यग्भिन्ने धर्मभूतज्ञानेऽतिव्याप्तेः। अत आनन्ददायिन्यां स्वस्मै प्रकाशमानत्वं स्वस्मै स्वयं-प्रकाशमानत्वमिति द्वैविध्यमुक्तम्। अत्र पक्षे द्वितीयलक्षणे स्वयंपदं व्यर्थम्। भावप्रकाशे तु, तत्त्वटीकायां स्वतोऽन्यतो वा स्वस्मै भासमानत्वमित्युक्तत्वात् स्वतस्त्वघटितं परतस्त्वघटितञ्चेति द्वैविध्यमदर्शि। तथाच प्रथमपादोक्तमेकम्, द्वितीयं द्वितीयपादोक्तमिति सिध्यति। तत्र स्वत इति स्वात्मनेत्यर्थः। अन्यत इति धर्मभूतज्ञानेनेत्यर्थः। अत्र विचार्यम्—स्वत इति परत इति वा लक्षणे किमर्थं निवेशः। स्वस्मै भासमानमिति प्रागुक्तस्यैव पर्याप्तत्वात्। भासनञ्चेदं स्वमादाय धर्मभूत-ज्ञानमादाय चोपपाद्यत इति उपपादनप्रणालीभेदेऽपि लक्षणद्वैविध्यं न भवति। तत्रान्त्र स्वस्मै स्वयं-प्रकाशमानमिति स्वयम्पदघटनं स्वपक्षे उपपादनप्रकारवैलक्षण्यज्ञापनायेति च भावप्रकाशे उक्तमस्ति। अतो न लक्षणभेदः। अत्रापि वृत्तौ, "स्वापेक्षया स्वबुद्ध्या स्वरूपेण वा प्रकाशमानतया प्रत्यङ् इत्युच्यते" इति वचनात् धर्मभूतज्ञानाधीनप्रकाशतन्निरपेक्षप्रकाशप्रयुक्तद्वैविध्यं ज्ञापयिष्यते। एवं च स्वविषयकबुद्ध्याश्रयत्वं प्रत्यक्त्वं तार्किकोक्तं पृथगेव; आश्रयत्वघटितत्वात्। स्वस्मै भासमानत्वं द्वितीयम्। स्वमानफलित्वमिति फलित्वघटितत्वादिदमन्यत्। अत्र भानं स्वतो वा बुद्ध्या वाऽस्तु; न तत् लक्षणघटकम्। अतः कथं द्वितीयपादस्यैव प्रत्यक्त्वद्वैविध्यपरत्वस्वरसवृत्तिग्रन्थनिर्वाहः।

अथोच्येत—अन्यत्रानुक्तावप्यत्र द्वितीयपादे प्रत्यक्त्वद्वैविध्यमेवाभिमतम्। स्वस्मै भासमान-त्वमेकं प्रत्यक्त्वम्, स्वेनैव भासमानत्वं द्वितीयं प्रत्यक्त्वम्। प्रथमं स्पष्टमेव। द्वितीयञ्च न स्वयं-प्रकाशत्वमात्रम्; धर्मभूतज्ञानावारणात्। किन्तु स्वमात्रप्रयुक्तप्रकाशाश्रयत्वम्। आत्मनः प्रकाशः इतरनिरपेक्ष इष्टः। धर्मभूतज्ञानस्य प्रकाशस्तु यथा धर्मभूतज्ञानाधीनः, तथा धर्मिभूतात्माधीनो-ऽपि। तथैवात्मसिद्धिग्रन्थे उपपादनात्। श्रीभाष्येऽपि, "स्वसंबन्धितया ह्यस्याः सत्ता विज्ञप्तिनादि च" इति। अतः स्वमात्रेति मात्रपदेन तद्वारणम्। एतेन आत्मनिष्ठानामेकत्वानुकूलत्वादीनां आत्मवत् स्वयंप्रकाशत्वे प्रत्यक्त्वापत्तिरिति शंकाया अपि नावकाशः; धर्मभूतज्ञानस्येव तेषां [स्वयं] प्रकाशस्यापि धर्मिभूतात्माधीनत्वात्। तथा च स्वेनैव भानमात्ममात्रगतं द्वितीयमिति।

अत्रोच्यते—स्वमात्रप्रयुक्तप्रकाशाश्रयत्वरूपप्रत्यक्त्वलक्षणं नित्यविभूतिजडत्वपक्षे एव घटेत। अजडत्वपक्षे तत्रातिव्याप्तेः। अत एव स्वस्मै भासमानमित्येव सर्वत्र लक्षणमुच्यते; न तु स्वेनैव भासमानमिति। स्वविषयकज्ञानाश्रयत्वरूपतार्किकलक्षणं तु निर्दुष्टमिति तदादायैव द्वैविध्यम्। तथा च

वी— स्वस्मै भानमेकं प्रत्यक्त्वम्। स्वपदप्रयोगादेव स्वस्येत्यर्थसिद्धम्। स्वेनैव भानमित्यस्य स्वाश्रित-(स्वकर्तृक)ज्ञानविषयत्वमित्यर्थः। एवञ्च द्विविधस्य प्रत्यक्त्वस्य द्वितीयपादात् लाभः। यद्वा स्वकर्तृकव्य-वहारविषयत्वमित्यर्थवर्णनेन स्वेनैवभानमिदं तार्किकोक्तादन्यदिति द्विविधमिदं द्वितीयपादोक्तमस्तु।

नन्वात्मनि स्वाननुकूलत्वानेकत्वविषयकस्य विपर्ययज्ञानस्य संशयस्य चाभावात् आत्मा अनुकूलत्वेन एकत्वेन च भासताम्। प्रत्यक्त्वेन कथं तद्भानम्। प्रत्यक्त्वं हि द्वेधा निरुक्तम्। न हि अहं स्वस्मै भासमानो वा न वा, स्वेनैव भासमानो वा न वेति संशयादिर्न जायत इति वक्तुं शक्यते। एकत्वादिवत् भासमानत्वस्य भानाभावाच्च। अन्यथा व्यवहारानुगुण्यरूपप्रकाशस्यापि भाने व्यवहारादेरपि भानात् आत्मनो वाह्यनानाविषयकत्वापत्तेरिति चेत्—उच्यते। प्रत्यक्त्वस्यैवं निर्वचनेऽपि स्वार्थत्वविशिष्टप्रकाशादीनां सर्वदा भानमस्तीति न विवक्षितम्। अस्ति कश्चि-देकत्वानुकूलत्वयदन्योऽपि धर्म आत्मनि गृह्यमाणः। स च स्वनिष्ठ यथार्हं वाह्यावाह्यवस्तुनिरूपितः शेषित्वादि। स्वार्थमेव सर्वः प्रवृत्तेः। इदमेव व्यवहारफलितमित्युच्यते। एषामेकत्वशेषित्वानु-कूलत्वानां निर्वचनस्य नानाप्रकारत्वात् तत्तद्रूपेण विशदभानेऽपि संशयादिनिवर्तनौपयिकतया स्थूलरूपेण भानमस्त्येव। न हि व्याप्तिरूपस्याग्निधूमादिसंबन्धस्य निर्वचने परस्सहस्रविवादसद्भावात् अनिर्णयेऽपि व्याप्तिग्रहणमेव नास्तीति सुवचम्, अनुमित्युच्छेदापत्तेः। अत एव भाननियमात् प्रत्यक्त्वस्य स्वस्मै इति फलितघटितस्येवाहमर्थत्वमिष्यते इति।

अत्र एकत्वादीनां धर्मिभास्यत्वमिति दशोपनिषद्भाष्यकारपक्षः; धर्मभास्यत्वमिति साक्षा-त्स्वामीति विख्यातानां पक्ष इति पक्षभेदो वर्णितो लक्ष्यते। शोधने पूर्वश्लोके स्वस्यैवाऽऽत्मा तु इत्यत्र स्वस्येति पदेन धर्मविशिष्टधर्मिग्रहणात् विशेषणं विशेष्यञ्च धर्मिभास्यमिति स्पष्टम्। इदमेक-त्वादिकं धर्मभूतज्ञाननिरपेक्षं स्वेन भास्यते, न त्वणुत्वनित्यत्वादिवदन्यथेति धर्मभास्यत्वरूपस्वयं-प्रकाशत्ववादिनः। स्वयं भवत्येव प्रकाशे धर्म्यपि्त्तत्वमप्येतैः स्पष्टमुदितम्।

अत्रेदं प्रासंगिकम्–पूर्वश्लोके 'स्वस्यैवाऽऽत्मा तु' इत्यत्र सिद्धिरिति पाठः स्यात्, न तु सिद्धि-मिति पाठ इत्यालोचित सम्यगिति संप्रति श्रीरङ्गसूर्यश्रीनिवासाचार्यविरचितयतीन्द्रमतसंग्रहग्रन्थ-कोशतो निश्चितम्। तैस्तत्र, "स्वस्यैव सिद्धिरात्मेति स्वसूक्तेर्विवृतौ स्वयम्" इति प्रथमान्ततयैवानु-वादात्। अन्यथा सिद्धिं सिद्धिभावमित्यनयोः अन्यतरवैयर्थ्यमित्यप्यवधेयम्। तत्र वृत्तौ तावदतिरिक्तेति पदस्य असाधारणधर्मविशिष्टाहमर्थातिरिक्तेत्यर्थः सुवचः। अतिरिक्तपदेनैव स्वान्ययोरिति श्लोकोक्त-ज्ञानतद्विषयोभयग्रहणम्। तथा च 'घटमहं जानामि' इत्यत्र अहमित्येतदतिरिक्तं सर्वं बुद्धिप्रकाश्य-मित्युक्तं भवतीत्यलं प्रसक्तानुबन्धेन।

ज्ञानात्मनोः पृथक्पृथक् प्रकाशमानयोः अहं जानामीति वैशिष्ट्यग्रहणवत् एकत्वानुकूलत्वादेः पृथक् स्वेन स्वेन भानेऽपि एकत्वानुकूलत्वादिविशिष्ट आत्मेति विशेषणविशेष्यभावेन ग्रहणं सूपपादम्। तत्र तद्भानस्य धर्म्यधीनत्वमेव नियामकम्।

नन्वेवं धर्मभास्यत्वे धर्मधर्मिप्रकाशानां निष्प्रकारकत्वं स्यादिति चेत्–अत्रेदं विमृश्यम्, कोऽयं प्रकाशो नामेति। एकत्वादिधर्मप्रकारकधर्मिविशेष्यकप्रकाशवान् आत्मेति लिखन्ति। आत्मन एव प्रकाशत्वे मतुप् न युक्तः। विषयितायाः प्रकाशत्वे तत्प्रकारकत्वतद्विशेष्यकत्वान्वये क्लेशः। व्यवहारानुगुण्यपक्षे तदन्वयो न भवत्येव। वितयान्यत्वे, विशेष्यप्रकारवत्त्वात् तस्यापि ज्ञानत्वापत्तिः। न हि ज्ञाननिष्ठं ज्ञानं किञ्चित्। ज्ञानान्यत्वे निष्प्रकारकत्वमेव निर्विशेष्यकत्ववत्। तावता वस्तुनि न निर्धर्मकत्वमिति ॥ अस्तु तथा लेखनानौचित्यम्। विषयविषयिभाव एव प्रकाशः। धर्मिभास्यमिति

कर्तृत्वं प्रसाध्य तस्य पराधीनतामात्रं स्थापितमित्याह कर्तेति । यदि कर्तृत्वमात्मधर्मः, स चेत् पराधीनः (स चेश्वराधीनः), तस्य तद्वात्मत्ववदेकरूपः किं न स्यादित्यत्राह चित्रैरिति । नात्र केनापि चोदनीय मिति भावः ॥ ८ ॥

इत्यात्मनः कर्तृत्वादि ॥

यद्भव्यं तन्न न स्यात् यदभवितृ न तत् यत्नकोट्याऽपि सिद्ध्येत्
द्वेधाऽपि व्यर्थयत्ना नर इति यदि, न, स्वोक्तियत्नादिबाधात् ।
यत् यत्नेनैव भा(भ)व्यं, भवति यतनतस्तत्र स्वहेतूपनीतात्
दुस्साधायत्नलभ्ये प्रति यदि यतते, तत्र नैष्फल्यमिष्टम् ॥ ९ ॥

अथ–"यदभावि न तत् भावि यत् भावि न तत् अन्यथा" इति मन्यमानैरुक्तं यत्ननैष्फल्यम् ; तदिदमनूद्य परिहरति यद्भव्यमिति ॥ नर इति बहुवचनम् । हेतुमाह स्वोक्तीति । सर्वयत्ननैष्फल्यं वदन् किमिति साफल्यवादिनं क्षेप्तुमीहते ? नैष्फल्यवाक्यं च किमर्थं प्रयुङ्क्ते ? किमर्थं च स्वयं भीतो बुभुक्षुर्वा धावति ? अ(त)तोऽन्वयव्यतिरेकाध्यवसित यत्नफलमप्रणोद्यम् (व्यतिरेकावसितं फलमप्रणोद्यम्) । आदिशब्देन प्रमाणत्रयसंग्रहः । बाधं सिद्धसाध्यतां च वक्तुं सफलनिष्फलयत्नौ विभजते यद्यत्नेनेति । यतनम् अयत्नतः सिद्धमिति शङ्कां परिहर्तुं स्वहेतूपनीतादित्युक्तम् । प्राचीनयत्नजनितादृष्टतो हि तत्सिद्धिरिति भावः । दुस्साधेत्यादिना दुष्कर्ममूलनिष्फलयत्नानुवादः । तत्र नैष्फल्यमिष्टं—तस्मिन्नंशे नैष्फल्यं त्वया न साध्यम्, साध्यमपि तद्विषयमिति भावः ॥ ९ ॥

इति यत्नसाफल्यम् ॥

---

पू— त्वया न साध्यमिति । सिद्धसाधनानर्हत्वादिति भावः । दुस्साधादिविषययत्ननैष्फल्यविप्रतिपन्नान् प्रति तत्साधनार्हमित्याशङ्क्य तदनुजानाति–साध्यमपि तद्विषयमिति । दुस्साधादिविषयप्रयत्नविषयमेव नैष्फल्यं साधनार्हं, न प्रयत्नमात्रविषयमित्यर्थः । इति भाव इति । 'इष्टम्' इति पदस्येत्यर्थः ॥ ९ ॥

श्री— गीतायामाविश्चकार । अद्वैतिभिः सांख्यानुसारो न युक्तः ; सूत्रविरोधादित्याह कर्तेति । आभापि—कृतिषु कर्ता पराधीनश्चाऽऽभापि=विस्तरेणापापादि । तर्हि कर्तृत्वस्य परमात्माधीनत्वे तस्य अविषमत्वात् कथं जीवकार्येषु वैषम्यमित्यत्राह चित्रैरिति ॥ ८ ॥

अस्त्वात्मनः सविकारत्वं सभोक्तृत्वम् । अथापि यत्नो व्यर्थ इत्याक्षेपमुद्भाव्य परिहरति यदिति । यत् फलं भव्यम्—भवत् भावि वा, तत् न न स्यात् ; भवेदेव यत्नं विनाऽपि । यत्तु अभवितृ—न भव्यम्, तत् नैव भवेदिति प्रथमपादार्थः । नृशब्दबहुवचनं नर इति ; न तु अकारान्तनरशब्दैकवचनम् । इति यदि न=इति चेन्न । स्वोक्तियत्नादिबाधादिति । क्रियानैष्फल्ये ज्ञाते यद्भव्य मित्यादिस्वोक्तिः किमर्थम् । भोजनादिस्वयत्नश्च किमर्थम् । वैदिकलौकिकविधिवाक्यादीनि च किमर्थम् । तत्रतत्र फलदर्शने सति नैरर्थक्यवाक्यस्यास्य बाध इत्यर्थः । ईहते, प्रयुंक्ते इति यत्नक्रिये विवक्षिते । बाधमित्यादि । यत्नो निष्फलः तथा यदभावीति वाक्यप्रमितत्वादिति प्रयोगे यत्नसाध्यत्वं यत्रानुभूतं तत्र तन्निषेधे बाध इति तृतीयपादार्थः । अन्यत्र तन्निषेधस्येष्टत्वात् सिद्धसाधनमित्यर्थः इति चतुर्थपादार्थः । अनेन यदभावीति वाक्यतात्पर्यमपि दर्शितम्—यत् यत्नमन्तरा न भवेत्, तद् यतनतो भवति– यत्नजन्यम् । यतनं कथं भवतीत्यत्राह तत् स्वहेतूपनीतादिति । हेतुरदृष्टादि-

**भिन्ना जीवाः स्वतः स्युः प्रतिनियततया धीस्मृतीच्छासुखादेः**
**चेतोभेदात् व्यवस्था न तु भवति यथा देहवाह्याक्षभेदात् ।**
**नित्यान् भिन्नांश्च जीवान् कथयति निगमस्तद्धि नोपाधितः स्यात्**
**आत्माद्वैतश्रुतीनामितरहृदयता तत्रतत्रैव सिद्धा ॥ १० ॥**

जीवः परस्य ब्रह्मण औपाधिकांश , घटाकाशमहाकाशवत् तयोर्भेद , जीवाना **मिथो** भेदस्तु घटकरकाद्याकाशवदिति पक्ष दूषयति **भिन्ना** इति । **स्वतः** – न तूपाधित । हेतुमाह **प्रतिनियततयेति**। ननु कोऽय **प्रतिनियमः** ? न तावत् बुद्ध्यादीना स्वरूपभेद , एकस्मिन्नप्यात्मनि तदुपगमात् । नापि भिन्नाधारत्वम् , तस्यैव साध्यत्वात् । अत एव नासाधारण्यम् , तत् खल्वाश्रयभेदमापक्षम् । नापि परस्परप्रतिसन्धानाभाव , परस्परभावस्यैवासिद्धेरिति ॥ अत्र ब्रूम —यथैकशरीरावच्छिन्नबुद्ध्यादीनामेकाश्रयतयैव प्रतिसन्धानम् , न तथा शरीरान्तरजानाम । अन्यथा गुरुशिष्यभावादयोऽपि न स्यु । तदेव गम्यते—चैत्रात्मा मैत्रतादात्म्यरहित , तदनुभव[जन्म]स्मृत्यनाधारत्वात् , कदाचिदपि तद्गतसुखादिप्रतिसन्धानरहितत्वादित्यादि । अत्र परोक्तामन्यथासिद्धिं परिहरति **चेतोभेदादिति** । तुः अवधारणे । अस्ति हि कल्पभेदेन चेतोभेद । सन्ति च कल्पादौ जातिस्मरा , ' स्वयमागतविज्ञाना " इत्यादे । तत्र प्रतिबन्द्यभिप्रायेणाह **यथेति** । न हि देहभेदे प्रतिसन्धानाभाव , पूर्वजन्माभ्यस्तप्रतिसन्धानदृष्टे । न च बाह्येन्द्रियभेदे, सर्वधीविरोधात् । तद्वत् चेतोभेदोऽपि न व्यवस्थाहेतुरिति । ईश्वरात् मिथश्च जीवाना निरुपाधिकभेद , 'पृथगात्मान प्रेरितार च मत्वा', 'जुष्ट यदा पश्यत्यन्यमीशम्', 'नित्यो

---

पृ— तुशब्दोऽवधारण इति। न भवत्येवेत्यर्थ इति भाव । अवधारणाभिप्रेत हेतुमाह–अस्ति हीति । ९ — कर्मपि त पूर्वयत्नाधीनमेवेति भाव । 'यदभावि न तद्भावि' इत्यनेन, यत् दुस्साध–साधयितुमशक्यम्, तत्र यत्नो मा भूदित्युच्यते। 'यद् भावि न तदन्यथा' इत्यनेन, यत् अयत्नलभ्य यत्न विनेव लभ्यम्, तस्य स्वत एव भावित्वात् यतो व्यर्थ इत्युच्यते । तथा च यत् यत्नेन साधनीयमेव, तत्र तदावश्यकत्व एवैतद्वाक्यतात्पर्यमपीति। वृत्यारम्भे अथेत्यस्य अनूद्य परिहरतीत्यत्रान्वय ॥९॥

नानाऽऽत्मानो व्यवस्थात इति कणादप्रक्रियया जीवनानात्व साधयति भिन्ना इति । जीवा स्वतो भिन्ना —उपाधिमन्तरा स्वत एव भिन्ना, न तु कतिपयाद्वैतिवत् जीवैक्यम्, न च भास्करादिवत् औपाधिकभेद इति। धी = अनुभव। अनुभवादे प्रतिनियततया = व्यवस्थितत्वात्, अनुभवादिषु एकस्य यदा यत्र स्थिति । तदाऽन्यत्र तदभावादित्यर्थ । इदमेवोपरि विवेचयिष्यति। करकपद कुम्भविशेषार्थकम्।

चतुर्धा विकल्प्य प्रतिनियतत्वे दूषिते निष्कृष्टमाह अत्र ब्रूम इति। चैत्रशरीरावच्छिन्नानुभवादे मैत्रादिशरीरावच्छेदेन नियमेन स्वकीय वेनाग्राह्यमाणत्व प्रतिनियतत्वम्। तेन इदमनुभवादिक मैत्राद्यात्मभिन्नात्मनिष्ठमित्यनुमीयते । एकाश्रयतया—समानाधिकरणतया । भिन्ना जीवा इति मूलानुसारेण आत्मपक्षकानुमानमेवाऽऽह चैत्रात्मेति । अनुभवेति । चैत्रेण मैत्रादिगतानुभवादे अहमनुभवामि स्मरामि सुख्यामि दुःख्यामीति ग्रहणाभाव एव विवक्षित । परोक्ताम्—एक एवात्मेति आत्माद्वैतिकथिताम्। एकशरीरावच्छिन्नानुभवादि नान्यशरीरावच्छेदेन प्रतिसधेय

नित्यानाम्' इत्यादिश्रुतिस्वारस्यसिद्ध इत्याह **नित्यानिति**। मुक्तावपि भेदश्रुतिमभिप्रेत्याह **तद्वीति**। ननु 'अयमात्मा ब्रह्म', 'तत्त्वमसि' इत्यादिभिर्जीवब्रह्मतादात्म्ये सिद्धे भेदस्यौपाधिकत्व ग्राह्यमित्यत्राह— **आत्माद्वैतेति**। अयं भाव.— शरीरशरीरिभावेन सामानाधिकरण्य स्थापयिष्यते। आस्तामेतत्। यथा यूपादित्यसामानाधिकरण्यं प्रत्यक्षविरोधादन्यपरम्, तथेहापि। स्वरूपैक्यविधानं तावत् अशक्यमिति। **तत्रतत्रेति** वीप्सया क्वचित् विशिष्टप्रवृत्तिः, क्वचिदुपचार इत्यादितात्पर्यभेदः सूच्यते॥ १०॥

**इत्यौपाधिकभेदवादभङ्गः॥**

**जीवाः पृथ्व्यादिभूतेष्वणव इव मिथो भेदवन्तः स्वतोऽमी**
**सन्मात्रब्रह्मभागास्तदिह नियतयः सुस्थिता इत्ययुक्तम्।**
**ऐक्यस्याप्यक्षतत्वात्; अनवधि च सति ब्रह्मणि स्यादवद्यम्;**
**सत्यं तच्चेत्यभिज्ञैर्बहिरगणि मृषावादतोऽप्येष पक्षः॥ ११॥**

अथ स्वाभाविकजीवांशभेदाभेदं दूषयति **जीवा इति**। उक्तं विरोधमेव बाधहेतुमाह **ऐक्यस्यादीति**। पक्षद्वयसाधारणं दूषणान्तरमाह **अनवधीति**। **सति ब्रह्मणि**— सर्वात्मकसद्रूपे ब्रह्मणीत्यर्थ.। अस्मिन् पक्षे निरवद्यत्वादिश्रुतिर्निर्विषया स्यात्; ईश्वरस्यापि सर्वतादात्म्यप्रतिसन्धायिनः क्लेशादिनिषेधायोगादिति भाव। एतत्पक्षद्वयात् अविद्याकृतदुःखादिभेदवादो वरमित्यभिप्रायेण **सत्यं तच्चेत्याद्युक्तम्**॥

**इति ब्रह्मस्वरूपस्वाभाविकांशजीवभेदभङ्गः॥**

---

पृ°— क्वचिद्विशिष्टप्रवृत्तिः=क्वचित् 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिषु उपचार इत्यर्थः॥ १०॥

वी°— भिन्नकरणजन्यत्वादित्युक्तौ व्यभिचार इति भावः। नित्यानिति। औपाधिकश्चेत् जीवभेदः, तर्हि भिन्नतया नित्यत्वं नित्यतया भिन्नत्वञ्च दुर्वचम्। इतरद्वदयता—भावान्तरम् अन्यतात्पर्यकत्वम्। जीवब्रह्मैक्यश्रुतिः शरीरात्मभावविवक्षया। ब्रह्म वेद ब्रह्मैवेति परमसाम्यविवक्षया। यत्र हि द्वैतमिवेत्यादिश्रुतिः भगवदनात्मकवस्तुनिषेधाभिप्राया। सर्वजीवैक्यश्रुतिः ज्ञानानन्दत्वादिप्रकारैक्यपरा। अद्वितीयमिति श्रुतिः उपादानभिन्ननिमित्तनिषेधार्थेत्यादिकमूह्यम्॥ १०॥

औपाधिकभेदवादी भास्करो दूषितः; स्वाभाविकभेदवादी यः आत्माद्वैतवादी, स यादवप्रकाशो दूष्यते जीवा इति। नियतयः—व्यवस्थाः। अयुक्तत्वे हेतुः ऐक्यस्याप्यक्षतत्वादिति। भेदस्येवाभेदस्यापि स्वाभाविकत्वात् पूर्वोक्तप्रतिसंधानापत्तिर्न वार्यत इत्यर्थः। ननु सत्यप्यैक्ये भेदभ्रमात् तदप्रतिसंधानमिति चेन्न—वास्तवादभेदात् चैत्रस्य मैत्राद्यात्मसाक्षात्कारः तद्गतज्ञानादिसाक्षात्कारश्च न हि वारयितुं शक्यते। भेदभ्रमे तु इमे मद्भिन्ना इति एवमेवं ज्ञानादिमन्तः इति चानुभवत्विति। अस्त्वेतत्। ब्रह्मजीवाभेदात् ब्रह्मणश्च भेदभ्रमाभावात् स्वकीयत्वेन सर्वप्रतिसंधानं स्यादिति। प्रतिसंधानाभावेऽपि वस्तुतः सर्वस्य विकारस्य तदीयत्वान्न निरवद्यतेत्याह अनवधि चेति। अनन्तमित्यर्थः। पक्षद्वयेति—भास्करयादवप्रकाशपक्षयोरित्यर्थः। मृषाद्वैत्यपेक्षयाऽऽधिक्यमाह सत्यं तच्चेति। तत् अवद्य युष्मन्मते सत्यम्। स तु परमार्थतो न किञ्चिदवद्यमिति किमपि वदेदिति भावः। वहिरगणीति। "पापीयानय भेदाभेदपक्ष." इति वेदार्थसंग्रहे। अयमिति सत्यत्वविशिष्टत्यर्थकम्॥

**इति भास्करयादवप्रकाशाभिमतब्रह्मजीवभेदाभेदभंगः॥**

देहत्वाद्यैर्विगीतं निखिलमपि मया ह्या(म)त्मवत्, किं च पुस्त्वात्
सर्वे जीवा अहं स्युः न यदि, भवति ते गौरवादीत्यमाम् ।
श्रुत्यध्यक्षादिबाधात्; प्रसजति च तदा तत्तदैक्यं घटादेः
पक्षादेर्वादिनोश्चेत्यलमिह कलहैस्तज्जिगीषादिमूलैः ॥ १२ ॥

अन्ये त्वाहु—अविद्याशबलं ब्रह्मैव जीवः; स च सर्वशरीरेष्वेकः; अप्रतिसन्धानमविद्या वैचित्र्यात्; प्रतिबुद्धास्तु 'सोऽहं स च त्वम्' इति प्रतिसन्दधते; प्रमाणं चात्र श्रुतिस्मृत्य इति। एतदपि पूर्वोक्तरीत्या दत्तोत्तरम्। अविद्यास्वरूपादिकं दूषयिष्यते। अत्र च, 'एको व्रीहिः' इत्यादिवत् जीवैक्य वादाः साजात्यात् स्युः, "पण्डिताः समदर्शिनः" इत्यादिभि(इत्यादित)स्तथात्वावगमात्। "मित्रामित्रकथा कुतः" इत्यादिक रागादिपरिहारपरम्। "यद्यन्योऽस्ति" इत्यादिक स्वरूपेऽन्यादृक् त्वनिषेधार्थम्। "एको देवः सर्वभूतेषु गूढः" इतीश्वरविषयम्। "आकाशमेकं हि यथा", "एक एव हि भूतात्मा" इत्यादि निदर्शनमपि तत्तत्संसर्गशङ्कितवृद्धिह्रासादिनिषेधार्थम्। "घटध्वंसे घटाकाशो न भिन्नो नभसा यथा" इत्यादिकमौपाधिकवैषम्यनिवृत्तावत्यन्तसाम्यं व्यनक्ति। न हि घटध्वंसे घटावच्छिन्नः आकाशांश अंशान्तरेणैकीभवति। आकाशतामात्रं तु घटस्थितावपि सिद्धमित्येषा दिक्। तदिह प्रतिसन्धानादि प्रसङ्गे शास्त्रतात्पर्ये च वक्तव्यशेषाभावात् तदुक्तमनुमानादिकमनूद्य दूषयति **देहत्वाद्यैरिति**। **निखिलं** सर्वज्ञदेहप्रभृति पिपीलिकादिदेहपर्यन्तम्। **सर्वे जीवाः**—ब्रह्मादिस्थावरान्ताः। **न यदि** इत्यादिना विपक्षे बाधकोक्तिः। असारत्वे हेतुमाह **श्रुतीति**। सर्वे (सर्वैर्हि) प्रमाणैर्जीवानां मिथस्तादात्म्यप्रसङ्गः प्रतिक्षिप्तः। उक्तानुमानवर्गस्याऽऽभाससमानत्वमाह **प्रसजतीति**। देशान्तराणि एतद्घटेन घटवन्ति देश त्वात् एतद्देशवत्; अन्ये(ऽपि) घटा एतद्घटात्मानः घटत्वात् **एतद्घटवत्** इत्यादौ किं वाच्यम्॥ प्रत्य(अध्य)क्षादिविरोध इति चेत्, समम्॥ अविद्ययाऽऽवृते भेदधीः, एकत्वं तु स्वभावस्स्यादिति चेत्, घटादावपि तथाऽस्तु। न चायमिष्टप्रसङ्गः, विवर्त(र्तो चिद्)द्वयस्य तादात्म्यानभ्युपगमात्। अन्यथा

---

श्री— शाङ्करपक्षमनूद्य दूषयति देहत्वाद्यैरिति। अपिमयेत्यत्र अपिशब्दः साध्यान्तरसमुच्चये। मयाऽऽत्मवदित्यत्र देहत्वं हेतुः। मया ह्यात्मवदित्यत्र मयैवात्मवदिति पाठः स्यात्; श्रीभाष्यानुरोधात्। अपिशब्दविवक्षिते मदविद्याकल्पितत्वरूपसाध्यान्तरे हेतवः। आद्यशब्दग्राह्याः कार्यत्वजडत्वकल्पितत्वादयः। देहपक्षकमनुमानमुक्तम्, जीवपक्षकमाह किञ्चेति। न यदीति। जीवैक्यानङ्गीकारे इत्यर्थः। गौरवादीत्यादिपदेन लोकयात्रानिर्वाहासंभव उच्यते। तत्तज्जीवकल्पितप्रपञ्चस्य भिन्नभिन्नतया कथमेकप्रपञ्चेऽनेकजीवनिवेश इति। गौरवेति स्वधर्मतदूषणम्। आदिना मिथ्यात्ववादरूपस्वमतनिविष्टनानाजीववादिदूषणम्। असारत्वे हेतुः श्रुत्यध्यक्षादिबाधादिति। अध्यक्षं प्रत्यक्षम्। आदिशब्दार्थोऽनुमानम्। दोषान्तरमाह प्रसजति चेति। तत्तदिति भिन्नभिन्नदेशस्थघटादिग्रहणम्। पक्षादेः—पक्षसाध्यहेतूनां मिथ ऐक्यम्। वादिनोरप्यैक्यम्। जिगीषादीत्यादिना तत्त्वबुभुत्सुविषयपरिग्रहः।

घटध्वंस इति। घटध्वंसात् प्रागप्याकाश एक एव। अत्र तन्नोच्यते। किंतु घटावच्छिन्नाकाशः नभसा—घटानवच्छिन्नाकाशप्रदेशान्तरेण भिन्नः—घटावच्छिन्नत्वरूपभेदकाकाररहित इत्यर्थः।

व्यावहारिकव्यवस्थाविलोप(प्रसंग)ात् । प्रयुक्तानुमानावयवेष्वपि वाक्यत्वादिना तादात्म्यसंभवे अन्यतम-परिशेषः स्यादित्यभिप्रायेण पक्षादेरित्युक्तम् । वादिनोरिति । अत्रेष्टप्रसञ्जनत्वसंभवेऽपि विवादोच्छेदादौ तात्पर्यान्न वैयर्थ्यम् । तत् विवृणोति इत्यलमिति ॥ १२ ॥ इति सर्वशरीरैकजीववादभङ्गः ॥

सावित्रं ब्रह्म जीवः स च न बहुतनुर्नेतरे सन्ति जीवाः
स्वप्नादेकस्य लोके बहुविधपुरुषाध्यासवत् विश्वक्लृप्तिः ।
नेतः प्राक् केऽपि मुक्ताः, न परमपि, स तु प्राप्स्यति श्रेय एको
मायोत्थौ बन्धमोक्षाविति च मतमसत् सर्वमानोपरोधात् ॥ १३ ॥

अथैकशरीरैकजीववादमनुभाषते--सावित्रमिति ॥ सावित्रं ब्रह्म जीव इति पूर्वस्यास्य च साधारणम् ; स च इत्यादि[ना]विशेषोक्तिः । वक्ष्यमाणमाद्वैषम्यं व्यनक्ति(वक्ति) नेतर इति । विचित्रजीवोपलम्भं निर्वहति स्वप्नादिति । एकमेव शरीरं जीववत्; स्वप्नदृष्टशरीरन्यायात् अन्यानि(इतराणि) निर्जीवानीत्यर्थः । शुको मुक्त इत्यादिवैघट्यं परिहरति नेतः प्रागिति । पूर्वं मुक्ता न सन्ति चेत्, पश्चादप्यद्वैतविदो न मुच्येरन्नित्यनिष्टप्रसञ्जनामाह न परमपीति । तर्हि मोक्षशास्त्रं व्यर्थं स्यादित्यत्राह स इति । नित्यमुक्तस्यैकशरीरे बन्धमोक्षभ्रमं साधयति मायोत्थाविति । उक्तं प्रागुक्तहेतुना दूषयति इति चेति ।

---

पृ—देहत्वाद्यैरिति । 'श्रुत्यध्यक्षादिबाधात्' इत्यत्र आदिशब्दात् अनुमानस्य सङ्ग्रहमभिप्रेत्याह प्रयुक्तानुमानावयवेष्विति ॥ १२ ॥

श्री—अनुमानावयवेषु=प्रतिज्ञाहेत्वादिषु । श्लोके पक्षादेरित्येतत् प्रतदुपलक्षणमित्याशयः। वादिनोरिति न युक्तम्; सर्वजीवैक्यस्यैव तेन साधनात् तदिष्टस्य कथं तं प्रति आपादनमिति, तत्राह अत्रेति । पूर्वं रक्षिण, वादिप्रतिवाद्यैक्यं निश्चितं न वा । आद्ये कं प्रति अनुमानप्रयोगः, अनिश्चितत्वे कथं साधनारम्भ इति दूषणे तात्पर्यम् इत्यलम् इत्यत्राभिमतम् ॥ १२ ॥

सर्वाणि शरीराणि एकस्यैव जीवस्येति पक्षः प्रतिक्षिप्तः । शरीरमप्येकमेवेति पक्षः क्षिप्यते सावित्रमिति । सावित्रमित्यारभ्य इतीत्यन्तं पूर्वपक्षिमतम् । साधारणमिति । अनेकजीववादसाधारण्ये सति किमर्थमत्र तदुपक्षेप इति चेत्—जीवो न बहुतनुरित्युक्तौ उपलभ्यमानेषु सकतम इति जिज्ञासा स्यात् । अनिर्धारणसूचनार्थमिदम् । एवं यथा एकस्य ब्रह्मणः अनेकजीवत्वं न कल्प्यते, लाघवात्, तथा एकस्या अविद्यायाः अनेकशरीरपरिणामित्वमपि मा भूदिति ज्ञापनार्थम् । स्वप्नादितीति । एकस्यैव तस्य स्वप्नात्—स्वप्नतुल्यदशातः विश्वस्य जीवजगदादेः क्लृप्तिः—संपत्तिः । क्लृप्तिरकर्मकः । यथा लोके एकस्य शयानस्य स्वप्नात् बहुविधपुरुषभ्रमस्य क्लृप्तिः=संभवः, तद्वत् । न केऽपि मुक्ता इति । सर्वस्य स्वाप्निकजीवतुल्यत्वादिति भावः । न परमपि=पश्चादपि केऽपि स्वाप्निकजीवा न मोक्षं प्राप्तुमर्हन्ति, स्वाप्निकतया असत्यत्वात् । स तु=एतावज्जीवकल्पकब्रह्मरूपजीव एकस्तु श्रेयः मोक्षं प्राप्स्यति । तर्हि असद्भिः किमर्थं वेदान्ताभ्यास इति चेत्-स जीवोऽस्मासु कश्चित् स्यादिति मत्वा । ननु यथा स्वप्नकल्पितनानाजीवविलक्षणः कल्पकजीवो व्यावहारिकसत्यः सह शरीरेण, तथा व्यावहारिकैनावज्जीवप्रातिभासिकः स एको जीवः सह तन्वा एतावद्विलक्षणः पारमार्थिक एव स्यादिति कथमद्वैतमित्यत्राह मायोत्थौ बन्धमोक्षाविति। असती माया तदधीनो जीवः तद्बन्धमोक्षौ च तथैवासन्तौ । तदेषां जीवानामस्माकं स्वाप्निकत्वम् । एतदीयस्वप्नस्तु "स्वप्नान्तिकम्"

आत्मभेदो हि सर्वप्रमाणैरसिद्धः। तत्र यदि देहान्तरं निर्जीवम्, एकमपि तथैव; भ्रान्तिसिद्धजीवत्वस्याविशेषात्। एकत्रात्माऽस्ति जीवत्वं [तु] नास्ति, अत्र (अन्यत्र) तूभयं ने(नास्ती)ति चेन्न, तेष्वध्यासाधिष्ठानतया आत्मसत्त्वस्य त्वया दुस्त्यजत्वात्। अन्यथा निरधिष्ठानभ्रमप्रसङ्गात्। स्वप्ननीत्या लाघवमिच्छतस्तदेव लभ्यम्, स्वाप्नस्य तद्द्रष्टुश्च सत्यत्वात्। इह तु तन्मिथ्यात्वस्य त्वयैवोक्तेरिति ॥१३॥

स्वस्य स्वेनोपदेशो न भवति, न परब्रह्मणा निष्कलत्वात्,
नाविद्या चेतयित्री, स्वतनुमपरकं वर्ष्म निर्जीवमात्थ।
कश्चित् तत्त्वं ब्रवीतीत्ययमुपनिपतद्भ्रान्तिरुन्मुच्यते चेत्,
तादृक् भ्रान्तिः पुराऽपि ह्यभवदिति न ते किं तदैवैष मुक्तः ॥ १४ ॥

एकस्य जीवस्योपदेष्टृत्वासंभवादनिर्मोक्षप्रसङ्गमाह स्वस्येति। अत्र स्वात्मैव वा स्वस्योपदेष्टा, अशरीरं वा परं ब्रह्म, विश्वाध्यासहेतुरविद्यैव वा, देहान्तरप्रतीतो जीवो वा इति विकल्पं मनसिकृत्य पूर्वार्धेन क्रमात् दूषणम्। ननु 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते' इति वचनादुपदेशनिरपेक्ष(क्षं) एव कदाचिद्बोधोऽस्तु ॥ नैवम्, नैरपेक्ष्यानुक्तेः। जीव इत्येकत्वोक्त्या(क्ते) जीवान्तरासंभवान्नैरपेक्ष्यं सिद्धमिति (सिध्यतीति) चेन्न; एकवचनस्य जात्यैक्यपरत्वात्। नैरपेक्ष्येऽपि निस्तारं शङ्कते—कश्चिदिति। शुकादिषु मुक्तिहेतुतया पूर्वमपि तादृशभ्रमजननात् तदानीमेवास्य मोक्षः स्यात् (मोक्षप्रसङ्गः) इत्याह तादृगिति ॥ परस्मै ब्रवीतीति तदा भ्रान्तिरिति चेत्; तथाऽप्यद्वैतं ब्रवीतीत्यवगतेरर्थतः स्वार्थोपदेशभ्रमफलसिद्धेः। तदेवं हेत्वनुपपत्त्या नित्यमनिर्मोक्षः; अहेतुकमोक्षे नित्यमुक्तौ च शास्त्रनैष्फल्यमिति। तदभ्युपगमे सिद्धान्तत्यागात् कृतं वादेनेति ॥ १४ ॥ इत्येकशरीरैकजीववादभङ्गः ॥

तोयाधारेषु दोषाकर इव बहुष्वोपाधिषु ब्रह्म शुद्धं
छायापन्नं विशेषान् भजति, तनुभृतस्तत्प्रतिच्छन्दभूताः।

---

ची- इति (९-२-८) कणादोक्तेऽन्तर्भवतु। असदिति। तादृशसाविद्यब्रह्मरूपजीवकल्पकस्य भवत एव स्वाप्निकत्वे तस्य कथमसत्तरस्य बन्धभागित्वमित्यादि भाव्यम्। तदेवलभ्यमिति। लाघवमेव लघुत्वमसत्त्वमेव लभ्यम्—तव स्यादित्यर्थः ॥ १३ ॥

एकजीववादे, सुतरामेकशरीरैकजीववादे उपदेष्टुरभावात् तत्त्वज्ञानासंभवादमुक्तिरित्याह स्वस्येति। न भवति। सुतरामेकशरीरकत्वे। उपदेशः न स्वकर्तृकः, न परब्रह्मकर्तृकः, नाविद्याकर्तृकः, न च शरीरान्तरस्थजीवकर्तृकः। न चानुपदेशेऽपि ज्ञानोदयः, 'अनन्यप्रोक्ते गतिरत्र नास्ति' इति कठोक्तेः। कश्चिदित्यादि। भ्रान्त्या कस्यचिदुपदेशकत्वग्रहणात् ततो ज्ञानलाभान्मुच्यते चेत्-एतावदसौ कस्मान्न मुक्तः। अत एवैषां तदेकजीवकल्पितजीवत्वमेव, न तु तज्जीवत्वमिति चेत्—स्वप्नकल्पितजीवा हि न ज्ञानचिकीर्षाप्रयत्नवन्तः किं तु शयानस्य तथाभूततद्भ्रममात्रम्। तथाऽत्रापि ज्ञानचिकीर्षादि न स्यात्। तदुपलम्भान्न तथा। यदि तदभावेऽपि ज्ञानचिकीर्षादिमत्ताभ्रम एवात्रापीत्युच्यते, तर्हि शयानपुरुष इव तथा भ्रमवानयमेकैकोऽपि स साविद्यब्रह्मरूपजीव एवेति तस्य पूर्वं ज्ञाने जातेऽपि कथममुक्तिः। तस्मादमुक्तिरस्यातत्त्वज्ञानत्वादित्येव वक्तव्यम् ॥ १४ ॥

अथ नानाजीववादे प्रतिबिम्बजीववादं निरस्यति तोयेत्यादिना। दोषा=रात्रिः। दोषाकरः तत्कारी चन्द्रः शुद्धः जलाशयेष्विव शुद्धं निर्विशेषं ब्रह्म उपाधिषु=अविद्यासु अन्तःकरणेषु वा

**इत्यप्यत्यन्तदुःस्थं, प्रसजति च तदा जीवनाशोऽपवर्गः**
**छाया छायावदैक्यं न भजति, न च तद्दर्शनं ब्रह्मणस्ते ॥ १५ ॥**

अथ बहुजीवब्रह्मप्रतिबिम्बपक्षं शङ्कते — तोयेति ॥ नित्यशुद्धस्य ब्रह्मणो न भ्रान्तिः । यथा नित्यशुद्धेऽपि चन्द्रमसि तत्प्रतिबिम्बेष्वाधारभेदानुगुणा विशेषाः काल्पनिकाः, एवमविद्याविवर्तेषु [अ]पृथगभिव्यक्तं ब्रह्म तत्तदनुगुणविचित्रविशेषवदिव भाति । ईदृशभेदकल्पनया मुक्तादिसमस्तव्यवस्थोपपत्तिः । इमं पक्षं दूषयति-इत्यपीति । अयं भावः — यदि ते [बद्धमुक्त]बन्धमोचकादिव्यवस्था भ्रान्तिसिद्धा, सा तर्ह्येकजीववादेऽप्य विशिष्टेति किं बहुजीवबह्वविद्याकल्पनेन ? ब्रह्मणो जीवभावानुपपत्त्या पृथग्जीवाः कल्प्या इति चेन्न, मिथ्याभूतजीवत्वस्य विरोधाभावात्, अन्यथा अध्यासाधिष्ठानत्वस्य विरोधप्रसङ्गात् (प्रसङ्गः) । न च निरधिष्ठानं भ्रममिच्छसि । 'दुर्घटत्वमविद्याया भूषणं[न तु दूषणम्]' इति च पठन् ब्रह्माज्ञानं किं नानुमन्यसे इति । अस्मिन् पक्षे दूषणान्तरमाह प्रसजतीति । यथा प्रतिबिम्बाधारनिवृत्तौ तत्रोत्पन्नस्यानिर्वचनीयस्य प्रतिबिम्बस्य नाशः, तथा तत्तदविद्यानिवृत्तौ ते ते जीवा नश्येयुः । मुक्तौ जीवानां ब्रह्मणैकीभावमात्रम्, न तु नाश इत्यत्राह छायेति । 'छायावत्कल्पिता जीवाः' इति मन्यसे । तत्र हि बाधदशायामाधारनिवृत्तिदशायां वा छायायाः छायावता सहैक्यापत्तिर्न दृश्यते, तद्वदिहापि । तैमिरिकचन्द्रभेदन्यायो(न्यायेना)ऽप्यत्र न भवति, तत्रापि बाधदशायां द्वितीयादिचन्द्राणां प्रथमचन्द्रैक्यापत्तेरनभ्युपगमात् । दूषणान्तरमाह न चेति । बिम्बप्रतिबिम्बयोर्द्वितीयादिचन्द्राणां चन्द्रद्रष्टा (च द्रष्टा?) कश्चिदन्यः सिद्धः, इह तु न कश्चित्, ब्रह्मणो दृश्यात्मरूपत्वाङ्गीकारात् । अविद्यायास्तु द्रष्टृत्वप्रसङ्गाभावात् । प्रतिबिम्बस्थानीयानां जीवानां स्वाध्यास-हेतुत्वायोगात् ॥ अनादिरध्यासो हेतुनिरपेक्ष इति चेन्न, स्वरूपानादेरविद्ययाऽपि नैरपेक्ष्यप्रसङ्गात्, प्रवाहानादित्वे जीवानां भङ्गुरत्वं महत् । तथा च धीसन्ततिवादसमत्वम्, अकृताभ्यागमादिप्रसङ्गः, श्रुत्यादिविरोधश्च स्यात् । ईदृशभ्रमनिरासाय सूत्रितं च सुप्तोत्थितं प्रति, "स एव तु कर्मानुस्मृतिशब्दविधिभ्यः" इति ॥ १५ ॥

इति ब्रह्मप्रतिच्छन्दजीववादभङ्गः ॥

---

श्री— पृथक् छायापन्न-प्रतिबिम्बविशेषान् भजति । तत तनुभृत जीवा ब्रह्मप्रतिबिम्बभूता इति तन्मतम् । अत्यन्तदुःस्थमिति । एकजीववादीयस्थितितोऽपि स्थितिरस्य निहीनेत्यर्थः । छाया = प्रतिबिम्बं छायावता = बिम्बेन सह ऐक्यं कदापि न भजेत् । अतो जीवब्रह्मैक्यवादोऽत्र न भवति । तत्त्वमस्यादिवैयर्थ्यञ्च । न चेति । द्रष्टुरभावे प्रतिबिम्बो न भवति । न जीवो द्रष्टा, तस्यैव प्रतिबिम्बत्वात् । न च ब्रह्म द्रष्टृ तस्य निर्विशेषत्वादिति श्लोकार्थः ।

शुद्धपदं ब्रह्मणो भ्रान्तिमत्त्वस्य प्रागुक्तस्य खण्डनार्थमित्याशयेनाह न भ्रान्तिरिति । मिथ्याभूतमपि न तत्र वक्तव्यमित्यत्राह अन्यथेति । अध्यासाधिष्ठानत्वं हि सर्वेष्टमिति भावः । दुर्घटत्वमिति । अविद्याकल्प्यस्य जीवस्य कल्पकः कः । शुद्धं ब्रह्म तु न कल्पकम् । जीवस्तु कल्प्यः न कल्पकः । एवमविद्याया आश्रयाद्यनुपपत्तयोऽपि सन्ति । दुर्घटत्वेऽपि अविद्यायाः तत्समर्तौ शुद्धब्रह्मणोऽप्यज्ञानं दुर्घटमप्यनुमन्यताम् । किमनेकजीवकल्पनयेत्यर्थः । अध्यासस्य स्वरूपत एवानादित्वम्, उत प्रवाहत इति विकल्पमाशय्य निरस्यति स्वरूपेति । धीसन्ततिवादो बौद्धस्य । ईदृशेति 'स एव तु' इति सूत्ररूपाधिकरणं सुप्तस्य पश्चादुत्थितस्य चेतनत्वस्थापनार्थं प्रवृत्तं व्यर्थम् । नानाजन्मानुवृत्तानाद्य

एकं ब्रह्मैव नित्यं तदितरदखिलं तत्र जन्मादिभागि-
त्याम्नातं तेन जीवोऽप्यचिदिव जनिमानित्यनध्येतृचोद्यम् ।
तन्नित्यत्वं तु (हि) साङ्गश्रुतिशतपठितं सृष्टिवादः पुनः स्यात्
देहादिद्वारतोऽस्येत्यवहितमनसामाविरस्त्यैकरस्यम् ॥ १६ ॥

ब्रह्मदत्तादिभिरुक्तं जीवानां स्वरूपतस्सृष्टिसंहृतिविषयत्वमनूद्य दूषयति एकमिति ॥ जनिमान् इति लयोपलक्षणम् । **अनध्येतृचोद्यम्**—कतिपयाध्येतुः तात्पर्यानभिज्ञस्य वा चोद्यम् । **साङ्गशब्दः** सोपबृंहणपरः। 'अजो नित्यः शाश्वतोऽयं पुराणः', 'प्रकृतिं पुरुषं चैव' इत्यादिश्रुतिस्मृतिशतमिह भाव्यम् । **सृष्टिवादः**—'तोयेन जीवान् व्यससर्ज' इत्यादिः। 'पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि' इत्यादिलयवाद उपलक्ष्यते । ब्राह्मणो जायते, क्षत्रियो जायते इत्यद्यतनजन्मादौ दृष्टम् ; तद्वत् प्राकृतिकनैमित्तिकसृष्ट्यादावप्यचिदुपष्टम्भेन निर्वाह इह आदिशब्दग्राह्य । **अवहितमनसाम्**—श्रुतितात्पर्यैकाग्रमनसामित्यर्थः ॥ १६॥

स्थैर्यं चेन्नाभ्युपेतं भवभृति, न भवेदैहिकार्थप्रवृत्तिः
देहान्तत्वे तु धर्म्ये पथि निरुपधिका विश्ववृत्तिर्न सिध्येत् ।

---

*श्रु*— एकं ब्रह्मेवेति । 'तोयेन जीवान्' इत्यादिश्रुत्यवलम्बनेन चोदयितुः कथमनध्येतृत्वमित्याशङ्क्यानध्येतृपदं व्याचष्टे—कतिपयाध्येतुरिति । कतिपयेत्यध्याहार्यमिति भावः। अनध्याहारार्थम्, अवहितमनसामिति परिहर्तॄणां तात्पर्यैकाग्रमनस्कत्वप्रतिपादनानुगुण्यार्थं चान्यथा व्याचष्टे—तात्पर्येति । शीक्षाद्यङ्गेषु जीवनित्यत्वप्रतिपादनाभावात् तस्य कथं साङ्गश्रुतिपठितत्वमिति शङ्कायामाह—साङ्गशब्द इति । अद्यतनजन्मादौ दृष्टमिति । देहद्वारकत्वमिति शेषः । समष्टिसृष्टौ देहद्वारकत्वायोगात् कथं निर्वाह इति शङ्कायामाह—तद्वदिति ॥ १६ ॥

*वी*— चिन्नाशिजीववादरूपे वैदिकमते सुप्तप्रबुद्धमेरपूर्वपक्षप्रसक्त्यभावादिति शंकाया न प्रसक्तिः। ईदृशाद्वैतवादे वैदिकत्वभ्रान्त्या पूर्वपक्षोत्थितेरिति महान् उपकार एतदायत्त इति भावः ॥ १५ ॥

प्रतिबिम्बजीववादे जीवनाशोऽपवर्गः स्यात् । तथाच अपसर्पदेवासौ मोक्षकथाप्रस्तावादिति यो दोष उक्तः, स जीवसृष्टिप्रलयवादेऽपि समान इत्याह एकमिति । अखिलम् अचेतनवत् चेतनमपि जन्मप्रलयोभयभाक् इत्याम्नातम्, 'एकमेवाद्वितीयम्', 'आत्मैवेदमग्र आसीत्', 'इमाः प्रजाः प्रजायन्ते', 'तदिदं सर्वमसृजत . विज्ञानञ्चाविज्ञानञ्च' इत्यादाविति शेषः। दूषयति इतीति। अनध्येतृचोद्यम्-आम्नायार्थानभिज्ञेनैवोपदेश्यमित्यर्थः। चोदना हि[विदः]उपदेशः। तन्नित्यत्वम्-चितामुत्पत्तिविलयाभावः पठितं—'न जायते म्रियते वा' इत्यादौ स्पष्टमुक्तम्। 'तोयेन जीवान् व्यससर्ज भूम्याम्' इति जीवसृष्टिवादस्तु देहसंश्लेषरूपामुत्पत्तिं वदति; तोयेनेति सूक्ष्मभूतसाहित्यकथनात्। क्वचित् 'मुक्तो जायते' इत्यादौ जनिश्रुतिः स्वस्वरूपाविर्भावेऽपि स्यात्। क्वचित् 'व्रीहयस्तिलमाषा जायन्ते' इत्यादौ तिलाद्योपधिगाढसंबन्धमात्रेऽपि स्यात्। तदिदमवधानेन यथास्थानं विवेक्तव्यमित्यर्थः।

ब्रह्मदत्तादीत्यादिपदेन यादवप्रकाशोऽपि सुग्रहः। परं पूर्वं तन्मतनिरूपणावसरे, 'तद्-यथाऽग्नेर्विस्फुलिङ्गा व्युच्चरन्ति, तथा जीवाः ब्रह्मणो व्युच्चरन्ति' इति जीवानां ब्रह्मभागत्वमणुत्वञ्चोक्तम्। अत्र तु ब्रह्मणः परिणामा एव जीवाः, महदादय इव प्रकृतेरिति भेद ईषत् प्रतीयते ॥ १६ ॥

आत्मनाशवादिनां नानाविधाः पक्षाः । धर्मार्थकाममोक्षरूपचतुर्विधपुरुषार्थप्राप्तिर्जीवस्यैतत् अस्मत्पक्ष एव घटते ; अन्येषु पक्षेषु यथायथं पुरुषार्थहानिरित्याह स्थैर्यमिति । क्षणिकं भिदुरं

आकल्पस्थायिपक्षे कृतमफलतया मुक्तिमार्गोपदेशैः
आमोक्षस्थायितायां श्रुतिरनभिमुखी पूरुषार्थे चतुर्थे ॥ १७ ॥

*आत्म(जीव)नित्यत्ववादिनश्चतुर्विधाः। तेषु ज्ञानात्मवादिनः शरीरस्थितावप्यात्मनो भिदुरत्वमाहुः।* प्राणेन्द्रियात्मवादिनः आत्मानमाशरीरस्थायिनम्। पौराणिकैकदेशिनस्तु प्रलयान्तम्। औपनिषदाभासास्तु मोक्षावधिकम्। [ए]तेषु दूषणवर्गः किंचिद्ग्रहणेनोपलक्ष्यते **स्थैर्यमिति** ॥ तत्र **स्थैर्यं चेन्नाभ्युपेत** मित्याद्युत्तरविनाशित्वानुवादः। बाधकमाह **न भवेदिति**। आत्मानमुत्तरकालानवस्थायिनं मन्यमानो न किंचिदुद्दिश्य प्रवर्तेत। तत् खल्वायत्यां सुखं दुःखनिवृत्तिं वाऽभिसन्धाय। तत् कथं घटेत ? फलकाले स्वाभावात्, स्वकाले फलाभावात्। सन्तानैक्यादिकुसृतयस्तु प्रागेव निरस्ताः। द्वितीयपक्षे दूषणं **देहान्तत्व इति**। यदि देहावधिरात्मा, तदा देहात्मवाद इव प्रेक्षावतो महाजनस्य धर्मादनपेते मार्गे अनादिः सार्वत्रिकी दृष्टफलाद्युपाधिरहिता प्रवृत्तिर्न घटेत ; तदाहुः—

श्लो- "विफला विश्ववृत्तिर्नो न दु खैकफलाऽपि च। दृष्टलाभफला नाऽपि विप्रलम्भोऽपि नेदृशः॥" इति।

---

गु॰— 'स्थैर्यं चेन्नाभ्युपेतं' इति स्थैर्यानभ्युपगमस्य पक्षचतुष्टयासाधारण्यात् सर्वानुवादत्वशङ्कां व्युदस्यति तत्र स्थैर्यमिति। गोबलीवर्दन्यायादिति भावः।

श्री॰— ज्ञानमात्मा, उपचयापचयभेदेन भिदुरो देह एवाऽऽत्मेत्येवं स्थैर्याभावपक्षः। देहेन सहोत्पद्य देहवत् उपचयादिकमप्राप्य मरणकाले देहरूपाणि भूतान्यनुविनश्यतीति देहान्तत्वपक्षः। देहेन सह अन्तो यस्य स देहान्तः ; तत्त्वे इत्यर्थः। पक्षोऽयं 'न जायते म्रियते वा' इति निषिद्धः। अस्मिन् पक्षे आमुष्मिकस्वर्गादिफलसाधनधर्मात् अनपेते वैदिकमार्गे विश्ववृत्तिः=जगत्प्रवृत्तिः उपलभ्यमाना न घटेत। तथा च कारिका न्यायकुसुमाञ्जलौ, "विफला विश्ववृत्तिर्नो" इति। निरुपाधिकेति पदमेत-त्कारिकोत्तरार्धार्थसंग्राहकमिति वृत्तौ स्पष्टम्। आकल्पं तिष्ठति, प्रलये नश्यतीति पक्षश्च, 'नायं भूत्वा भविता वा न भूयः' इति खण्डितः। मुक्तिमार्गोपदेशैः कृतम्। मोक्षोपायोपदेशश्रुतयो मा भूवन्। तत्र हेतुः अफलतयेति। उपदेशवैयर्थ्यादित्यर्थः। एतत्पक्षे प्रलये जीवनाश एव मोक्षो वक्तव्यः। स चोपायानुष्ठानं विना स्वयमेव भवतीति किमर्थमुपदेशः। इदमुपलक्षणम्। आकल्पस्थायित्वपक्षे पूर्वकल्पानुष्ठितानां मुक्तशिष्टानां नैष्फल्यं स्यादिति कृतहानप्रसंगश्च दोषः। तदनुक्तिस्तु देहात्मवादे आत्मनश्चिरजीवित्वभ्रान्तिकृत-अर्थकामार्थानन्तव्यापारवैयर्थ्यवत् न दोषायेति समादध्युरिति तदना-स्थया। त्वत्पक्षे चैतदनभिमुखी स्यादित्यर्थः। चतुर्थे पुरुषार्थे भोग्ये विराजमाने, आमोक्षस्थायिता-पक्षाभिमुखी न भवति श्रुतिरित्यप्यर्थः। भिदुरत्वम्=प्रतिक्षणविनाशेन संततिरूपत्वात् व्यक्तिना-नात्वम्। प्रलयान्तम्–प्रलये अन्तो यस्य तम्। आयत्याम्=उत्तरकाले। ज्ञानसंततिरात्मा ; उत्तरोत्तरस्मिन् पूर्वपूर्वसंस्कारानुवृत्तिरिति बौद्धमतम्। कुसृतिः=कुत्सितमार्गः। देहसंतानैक्यमिति प्राणवायु-संतत्यैक्यमिति च चार्वाककुसृतिः। अविद्यया जीवः जीवेनाविद्या इति जीवसंतत्यैक्यमिति अद्वैत्येकदेशिकुसृतिः। प्रेक्षावतः–भाव्यंशपरिशीलनरूपप्रकृष्टेक्षणशालिनः। आहुरिति। उदयना-चार्या इति शेषः। (न्या. स्त. १. ८.) विफलेत्यादि। अयमर्थः—बौद्धजैनाद्यर्वाचीनजनकृतप्रचार-वैलक्षण्येन अनादेः कालात् संतता यज्ञदानतपःप्रभृतिश्रौतस्मार्तकर्मविषयकविश्वमहाजन-प्रवृत्तिर्न निष्फला भवितुमर्हति, न च दुःखैकफला ; अर्थव्ययकायक्लेशादिकं भवत् यथावन्निरीक्ष्यैव नैरन्तर्येण प्रवृत्तेः। नापि ख्यातिलाभपूजाफला ; ख्यात्यादेरनुद्देश्यमानस्यैवैहिकधनिश्चयमूलकत्वेन

तृतीयं दूषयति आकल्पेति । अय भाव —यदि सर्वदु खनिवृत्तियुक्त आत्मनाश एव मोक्ष , स तर्हि [व ] कल्पान्ते स्वयमेवैष्यति । न चासौ पूर्वं साध्य ॥ त्वरया मध्ये स्वनाशार्थमुपायमह इति चेन्न , स्वनाशस्य सर्वप्रमाणैरपि पुमर्थत्वासिद्धे । एव च भाषितम्—"अहमर्थविनाशश्चे मोक्ष इत्यध्यवस्यति । अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धत ॥" इति । चतुर्थे बाधकमाह आमोक्षेति । अनभिमुखीति । स्वनाशरूप चतुर्थपुरुषार्थं न वक्ति । स्वेन रूपेणाभिनिष्पन्नस्य भोगादीनप्याह । ननु 'विज्ञानघन एवैतेभ्यो भूतेभ्य समुत्थाय तान्येवानुविनश्यति' इति जीवविनाश श्रूयते ॥ मैवम् , लोकधीरूढानुवादमात्रत्वात् , अदर्शनमात्रपरत्वाद्वा । स्मर्यते च-'अदर्शनादिहायात पुनश्चादर्शन गत ' इति । अन्यथा कथम् 'अविनाशी वा अरे अयमात्माऽनुच्छित्तिधर्मा' इति नित्यत्वसाधनम् ? ननु 'न प्रेत्य सज्ञाऽस्ति' इति मुक्तस्य निस्सम्बोधत्वश्रुत्या नाश सिध्येत् । न । देहादिभिरेकीकृत्य बुद्धे तन्निबन्धनाख्याभेदस्य वा निवृत्तौ तात्पर्यात् । ननु ब्रह्मण्यात्यन्तिकलय कथम् ? अनात्यन्तिकत्वात् , स्वविशिष्टे ब्रह्मणि औपाधिकरूपेण विशेषत्यागेन श्लेषस्य (औपाधिकविशेषत्यागेन स्वरूपेण श्लेषस्य ?) विवक्षितत्वात् । अन्यथा मुक्तिदशाया

---

पुरा—नाशशब्दप्रसिद्ध्यनुरोधेन 'अनुविनश्यति' इत्यस्य निर्वाहमाह—लोकधीरूढेति । लोकभ्रान्तिसिद्धानुवादो(दानौ?)चित्यात् अन्यथा व्याचष्टे—अदर्शनमात्रेति । संज्ञाशब्दस्य चोदयित्रभिमतज्ञानपरत्वमङ्गीकृत्याह—देहादिभिरिति । सज्ञाशब्दस्य नाम्नि प्रसिद्धिप्राचुर्यात् तदनुरोधेनाह—तन्निबन्धनाख्याभेदस्यैवेति ॥ १७ ॥

श्री—तदनाश्वासे तदप्रसक्ते । नापि परवञ्चनमेव फलम् , अत्यन्तप्रीतिभाजनस्वजनप्रेरणपूर्वक स्वयमप्यनुष्ठानादिति । न चासाविति । आकल्पस्थायित्वस्य त्वदुक्तनया मध्ये नाशायोगादिति भाव । पुमर्थत्वासिद्धेरिति । सर्वदु खनिवृत्ते सद्भावेऽपीति शेष । अनभिमुखीत्यादिवाक्यस्य स्वात्पदाध्याहारे अर्थ स्पष्ट । अध्याहार विनाऽर्थमाह स्वनाशेति । तर्हि किम्परेत्यत्राह स्वेनेति । प्रत्युत स्वस्वरूपेणाविर्भावरूपा स्वस्थिति भोगादींश्चाहेत्यर्थ । भोगादीनपीति अपिना स्वरूपाभिनिष्पत्तिरूपस्वस्थितिसमुच्चय । आमोक्षमस्ति, मोक्षे नश्यतीति त्वदभिमतो यो जीवनाशरूपश्चतुर्थ पुरुषार्थ तत्र श्रुतिरभिमुखी न भवति । किं तु मोक्षस्य [चतुर्थ]पुरुषार्थत्वेन प्रतिपादने एवाभिमुखी लक्ष्यते । श्रूयते हि, 'रस ह्येवाय लब्ध्वाऽऽनन्दी भवति, तस्य सर्वेषु लोकेषु कामचारो भवति, एतत्साम गायन् आस्ते' इत्यादि इत्युक्त भवति । अदर्शनेति । नश्यतिधातोरदर्शनार्थकत्वादिति भाव । अविनाशी=स्वय नाशरहित । अनुच्छित्तिधर्मा—न विद्यते उच्छित्ति =नाशो यस्य तादृश धर्म =धर्मभूतज्ञान यस्य स इत्यर्थ । सज्ञा—समित्येकीकारे—आत्मान देहादिना एकीकरोति यत् ज्ञान तादृशभ्रमादिक प्रेत्य—मोक्षार्थं चरमशरीरवियोगानन्तर न भवति । निस्सम्बोधत्व ज्ञानाभाव श्रुत्यर्थ इति पूर्वपक्षी मन्यते । तत् 'विज्ञानघन एव', 'विज्ञातारमरे' इति पूर्वोत्तरविरुद्धम् । एकीकृत्य बुद्धेरिति । एकीकृत्य ग्रहणस्येत्यर्थ । सज्ञाशब्दरूढ्यर्थलाभायाऽऽह आख्येति । देवमनुष्यादिसज्ञा पश्चान्न भवतीत्यर्थ । प्रेत्येत्येतदनन्तर स्थितस्येति पूरणीयम् । कथमिति प्रश्न । समाधानम् अनात्यन्तिकत्वादिति । प्रतिसुषुप्ति जीवस्य लय श्रूयते, स्वमपीतो भवतीति । प्रतिस्मरण च, 'तेज परस्या देवतायाम्' इति । प्रतिप्रलयश्च 'प्रकृतिर्या पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि' इति । न हि तत्र तत्र जीवनाश , तथैवेत्यर्थ । स्वविशिष्ट इत्यत्रत्य स्वपद रूपेणेत्यत्र

भेदोक्तिभि विरोधात्। 'यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय' इति निदर्शनात् मुक्तोऽप्यस्तमेष्यतीति चेन्न, प्रविष्टजलस्य स्वरूपनाशाभावात्। अन्यथा पयःप्रस्थद्वयसंभेदे प्रस्थशेषत्व प्रसङ्गात्। 'यथोदकम्' इत्यारभ्य 'तादृगेव भवति' इति श्रुत्यन्तरविरोधाच्च। घटध्वंसे घटाकाशोऽपि न नश्यत्येव; घटसंयोगनाशात् 'नश्यति' इत्युपचरन्ति। मुक्तिदशायां भेदनिवृत्तिवादाश्च कर्मकृतवैषम्य-निवृत्तिपराः। साधर्म्यवादिभि(वादै?)रप्येतदेव व्यवस्थाप्यते॥ 'ब्रह्मैव भवति' इत्यवधारणात् जीव-निवृत्तिर्गम्यत इति चेन्न ; अत्यन्तसाम्ये तात्पर्यात्। यथा, 'वैष्णवं वामनमालभेत स्पर्धमानो विष्णुरेव भूत्वेमाँल्लोकानभिजयति' इति। तदेतत् 'नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः' इति सूत्राभिप्रेतम् (इति)॥१७॥

इत्यात्मानित्यत्ववादिवादानामध्यक्षादिविरोधः ॥

व्याप्ताः सर्वत्र जीवाः सुखतदितरयोः तत्रतत्रोपलम्भात्

निर्बाधे[धा] देहगत्या गतिरिह वितथा तद्गतोऽपीति चेन्न ।

---

व्यॊ— प्राक स्यात्। उचितानुपूर्वी उपर्युल्लिखिता। अत्यन्तसाम्य इति। ब्रह्म भवतीत्यनुक्त्वा ब्रह्मैवेति एवकारप्रयोगः भेदरक्षणार्थं एवेति मीमांसामार्गनीतिः। किञ्च एवकारघटिते वाक्ये एव-कारार्थ एव नैर्भर्यस्य मीमांसितत्वात् ब्राह्मरूपातिरिक्तदेवमनुष्यादिरूपरहितो भवतीत्यत्रैव तात्पर्यम्। ब्रह्मभावस्तु पूर्वं यादृशः, तादृश एव। पूर्वं तु 'द्वा सुपर्णा' इत्यादिभेदश्रवणात् ब्रह्मभावः तदन्तर्या-मिकत्वमेवेति ॥ १७ ॥

जीवाणुत्वनिर्णयाय विभुत्वपक्षप्रतिक्षेपः प्रथमं क्रियते। सर्वत्रव्याप्तत्वरूपविभुत्वं साध्यम्। हेतुं विना तदसिद्धेर्हेतुमाह सुखेति। सुखस्य तद्भिन्नस्य सर्वस्याऽऽत्मगुणस्य च भुवि दिवि नरके सर्वत्र कालभेदेन एकेनैवात्मनाऽनुभूयमानत्वात् तत्रतत्र एतत्स्थितेरावश्यकत्वात् विभव इत्येकोऽर्थः। ननु अविभुत्वेऽपि तदातदा तत्रतत्र गमनादस्तु सुखाद्युपलम्भः। अत एव "अनेकजन्मसाहस्रीं संसारपदवीं व्रजन्" इत्यादिप्रमाणमपि संगच्छत इत्यत्राह निर्बाधे इति। अथार्थान्तरम्—एकेन देहिना काञ्चीकाश्यादिकं विभिन्नं देशं गतेन सुखादिकमनुभूयते। तत् तत्रतत्रैतदभावे कथमिति भावः। ननु सुखादेर्देहं विनोत्पत्त्ययोगात् देहगतेरावश्यकत्वात् तेन सह जीवोऽपि गच्छती-तीष्यताम् ; किं विभुत्वेनेत्यत्राह निर्बाध इति। देहजीवोभयगतिं विना देहगत्यैव सुखाद्युप-लम्भे निर्बाधे सति जीवगतिकल्पनस्य व्यर्थत्वादिति। इहेत्यस्य सुखाद्युपलम्भे इत्यर्थः। उक्तरीत्या व्याख्याने इदं पूर्वार्धमेकजन्मविषयकम्। इदं विहाय भुवि दिवि नरके च कालभेदेन सुखदुःखादिसद्भावस्य प्रमाणेनोपलम्भात् आत्मानो विभव इत्यर्थवर्णने उपरि सुखादेर्देहगत्या निर्वाहोक्तिर्न स्वरसा। तत्रतत्र लोके गृहीतमाणेन देहान्तरेणैव तदुपलब्धेर्देहगत्या तस्यानुपपा-दनीयत्वात्। निर्बाधा इत्यपि पाठोऽस्ति। तदा जीवगतिः श्रूयमाणा विभुत्वपक्षे न घटत इत्याशङ्कापरि-हाराय द्वितीयपाद इति वक्तव्यम्। जीवगतिः देहगत्यैव निर्वाह्या। अतो गतिर्देहवतो जीवस्य वितथेति। प्रथमपादस्यान्योऽप्यर्थः—एकस्मिन्नेव देहे जीवेन, 'पादे मे वेदना शिरसि सुखम्' इति गुणोपलम्भात् सर्वावयवेषु न संबन्धस्याऽऽवश्यकत्वे मध्यमपरिमाणत्वे नाशप्रसंगात् विभुत्वमेष्टव्यमिति। तथा च काञ्चीकाश्यादिदेशभेदेनानुभवस्य देहगत्यैव निर्वाह्यमिति। अनश्वाणोरेव देहे सर्वावयवेषु वेगेन संचार इति गतिकल्पनं व्यर्थमिति। चेन्नेति खण्डने हेतोः उत्तरार्धार्थस्य खण्डनो हेतुत्वानुक्ता-वपि अर्थात् सिद्धिर्बोध्या। तदनुक्तिश्च विभुत्वस्याणुत्वश्रुत्यादिभिरेव बाधितत्वात् गतिनिषेधनिषेध-

**वक्त्री पञ्चाग्निविद्याप्रभृतिषु भविनां स्वस्वरूपेण सिद्धं**
**यातायातप्रकारं श्रुतिरगतिरिमां लाघवोक्तिं शृणोतु(शृणातु?) ॥१८॥**

'नित्यस्सर्वगतः' इति श्रुत्या आत्मनां नित्यत्वे तत्सहचरितं (श्रुत्या आत्मनां नित्यत्वे, 'नित्यः सर्व-गतः' इति तत्सहचरितं ?) सर्वगतत्वमपि स्यादिति शङ्कते—**व्याप्ता** इति ॥ आगमस्यानुग्राहकमाह **सुखेति** । **तदितरशब्दो**ऽत्र दुःखवत् धीच्छादीनामपि संग्राहकः । अविभुत्वे सर्वत्र [सुख ?] दुःखा-द्युपलम्भो न स्यादित्यर्थः । आत्मगत्या सर्वत्र सुखादीति शङ्कां गौरवप्रसक्त्या वारयति **निर्वाह्य** इति । अत्र श्रुतेरन्य(रनन्य ?)परत्वाभिप्रायेण प्रतिवक्ति **नेति** । **सर्वगतत्वोक्तिस्तावत्** 'अग्निर्यथैको भुवनं प्रविष्टः', 'वायुस्सर्वत्रगो(गतो) महान्' इत्यादिवत् एकजातीयानां सर्वत्रानुप्रवेशात् नेतुं शक्या । गतेश्च श्रुतत्वान्न कल्पनागौरवमित्याह **वक्त्रीति** । **प्रभृतिशब्देन**, "तेन प्रद्योतेनैष आत्मा निष्क्रामति, तमु-

---

ॐ— मात्रमुत्तरार्धकार्यमिति ज्ञापनाय। प्रकारमित्यस्य वक्त्रीत्यत्रान्वयः। तृन्नन्तत्वात् द्वितीया। भविनां संसारिणां जीवानां स्वस्वरूपेण यातायातप्रकारं = स्वर्गादिकं प्रति गमनस्य भूम्यादिकं प्रति आगमनस्य च प्रकारं-विशेषं वदति श्रुतिः। तद्विरोध इत्यर्थः। स्वस्वरूपेणेत्यनेन तत् यातायातं देहादिगतमिति न सुवचमिति ज्ञाप्यते। श्रुतिर्लाघवोक्तिं शृणोतु = देहजीवोभयगत्यपेक्षया देहमात्रगतौ लाघव-मित्युक्तिमाकर्णयतु। स्वविरोधात् श्रुतिर्न सहेतेति भावः। शृणातु इति पाठः श्रेयान्। हिनस्तु इत्यर्थः। पूर्वपक्षिणा न केवलं युक्तिमात्रं साधकत्वेन मन्यते, किं तु श्रुतिरपीत्याशयेन श्लोकमवतारयति वृत्तौ। "नित्यः सर्वगतः" इति गीतावाक्यम्। व्याप्ताः सर्वत्रेति श्लोकपदम्, श्रीभाष्यस्थं सर्वगतपदञ्चानुरुध्य इदं वचनमुपात्तम्। यद्येवमेव श्रुतिरपि स्यात्, तदा यथाश्रुत एव पाठोऽस्तु। अन्यदा तु उपर्युल्लि-खितः पाठो ग्राह्यः। 'मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्' इति श्रुतौ जीवस्याघटनात् जीव-विभुत्वं श्रुतीष्टम्; अत एव महानज आत्मा योऽयं विज्ञानमय इत्यादावप्यक्लेश इत्यादि तदभिप्रेतम्। श्रुतेरन्यपरत्वेति। सर्वगतत्वादिश्रुतेरन्यपरत्वेत्यर्थः। गतिश्रुतिविवक्षायां तु अनन्यपरत्वेति पाठः स्यात्। इत्यादिवदिति। न हि अग्निर्वायुर्वा एकः सर्वत्र निविष्टः; किं तु भिन्नभिन्नः। तत्र चैकत्वम् एको व्रीहिरितिवत्। अतस्तत्रतत्र जीवस्य पृथक्पृथक्सत्त्वेऽपि जीवत्वेनैकीकृत्य सर्वगतत्वोक्तिरिति।

ननु सिद्धान्ते सूक्ष्मशरीरेण सहैव गत्यागतिवर्णनात् देहगत्यैव निर्वाहे किमित्यात्मगतिः? अतः तत्प्रश्नो न समाहित इति चेत्—अस्माभिरणुत्वस्वीकारात् गमनस्यावश्यकत्वे सिद्धे शरीरमन्तरेणे-च्छाप्रवृत्त्याद्ययोगात् देहेन्द्रियसंपरिष्वक्तगतिस्वीकारेऽपि, तार्किकस्तत्र तत्रैव भोगसाधनानामप्यु-पलम्भात् इतस्ततो गतिं नेच्छति। "गृहीत्वैतानि संयाति" इत्यादिगतिवाक्यानि तु, 'एतत्प्राणेन्द्रियमूलं कृतस्य कर्मण एतदनुरूपं फलमनुभविष्यति; सरिष्यति च स्वर्गे इमान्युपकरणानि' इत्येतावन्मात्र-पराणीति तदाशयः। अतोऽणुजीवगत्यनुबन्धित्वादेषां गतेः, अवश्याभ्युपेया सेति भावः। प्राणा-द्युत्क्रमपूर्वतया जीवोत्क्रमणपरवाक्यमप्यादत्ते प्रभृतिशब्देनेति। सिद्धान्ते, "रंहति संपरिष्वक्तः" इति सूत्रानुसारेण सर्वविशिष्टस्य सहैव गमनात् गमने पौर्वापर्यं दुर्वचम्। अथाप्येकैकस्यापि गमनक्रि-याऽस्तीत्येतदेतद्वाक्यस्वरससिद्धम्। न च तमुत्क्रामन्तमिति भूतसूक्ष्मविशिष्टस्यैव ग्रहणे आत्मांशे गमनाभावेऽपि निर्वाह इति शंक्यम्; 'एष आत्मा निष्क्रामति' इति साक्षादात्मनि क्रियोक्त्या तद्बाधायोगात्। एवं स्वभात् सुषुप्तिं प्रति हृदयान्तः शुद्धस्यात्मनो गमनमागमनञ्चवदत् ताभ्यः

क्रामन्तं प्राणोऽनूत्क्रामति, प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इत्यादयः संगृह्यन्ते । न च तासां श्रुतीनां प्राणानूत्क्रमणादिभिरन्यथासिद्धिरास्थेया इति अगतिशब्दाभिप्रायः ॥ १८ ॥

(अणुत्वेऽपि युगपदनेकाधिष्ठानोपपत्तिः)

**अव्यापित्वेऽपि पुंसोऽभिमत(नियत)बहुवपुःप्रेरणे यौगपद्यं**
**ज्ञानव्याप्त्योपपन्नं बहुषु च वपुषोऽन्शेषु निर्वाह एषः ।**
**यच्चादृष्टं क्रियां स्वाश्रययुजि तनुतेऽन्यत्र तत्क(तत्त)द्गुणत्वात्**
**इत्येतत् सिद्धसाध्यं, विभुन इह हि तत् ब्रह्मणः प्रीतिकोपौ ॥ १९ ॥**

अविभुत्वे सिद्धैश्वर्याणां युगपदनेकशरीराधिष्ठातृत्वं न स्यादित्यत्राह अव्यापित्वेऽपीति ॥ बहुवपुःप्रेरणं किं द्रव्यान्तरद्वारकम्, उत कर्मनिमित्तम् ? आद्ये, यथा पाणिपादादिद्वारनियतं युगपत् खड्गपादुकाद्यधिष्ठानम्, न तथाऽत्रेति भावः । द्वितीये स्वकर्मनियतमनेकशरीराधिष्ठाने कर्मिणः

---

पूर्व— अव्यापि त्वेऽपीति । अपिशब्दाभिप्रेतं चोदकाभिप्रायं दर्शयति—बहुवपुःप्रेरणं किमित्यादिना ।

पूर्व— प्रत्यवसृप्य पुरीतति शेते, सति संपद्य, सत आगम्य इत्यादिकमपि ग्राह्यम् । प्राणानूत्क्रमणादिभिरिति । सर्वविशिष्टोत्क्रमणे एकेन वाक्येन कथिते विशेषणभूतप्राणोत्क्रमणे तात्पर्यकल्पनेन एतदन्यथासिद्धिः शंक्येत । जीवोत्क्रमणस्य पश्चात् पृथक्प्राणानूत्क्रमणादेश्च कथनावसरे एतन्मुखेनान्यथासिद्धिर्न शक्येति भावः । सर्वेषां युगपदुत्क्रमणेऽपि अप्रधानगतोत्क्रमणस्य प्रधानगतोत्क्रमणाधीनत्वस्य अनुशब्दविवक्षितत्वात् आत्मगतिरवर्जनीयेति भावः ॥ १८ ॥

पुंसः—जीवस्वरूपस्य अव्यापित्वेऽपि—अणुत्वेऽपि, अभिमतानां—स्वकीयत्वेन भावितानां बहूनां वपुषां प्रेरणं योगिभिः मुक्तैश्च क्रियमाणं धर्मभूतज्ञानस्य विभुत्वात् उपपद्यते । यद्वा अभिमतपदं प्रेरणान्वयि । संप्रत्युपपाद्यत्वेनाभिमते इत्यर्थः । प्रेरणविशेषे इत्यर्थः । तेन पुरुषान्तरीयस्य वपुष एकस्य दक्षिणेन पाणिना, अन्यस्य च सव्येन प्रेरणस्य न प्रकृते विवक्षा । अदृष्टमात्रद्वारकस्यैवात्र विवक्षा । एषः—धर्मभूतज्ञानव्याप्तिमूलको निर्वाहः इद्देशमात्रस्थत्वादणोर्जीवस्य एकस्मिन्नपि वपुषि इतरांशविषये—तत्प्रेरणादिविषयेऽपि आद्रियते । नन्वेकत्र देशे जीवे तिष्ठति देशान्तरेषु बहुषु क्षेत्रवित्तसमृद्ध्यादिरूपं कार्यमेतददृष्टबलाद्भवतीतीष्टम् । आत्मनिष्ठस्यादृष्टस्य कथं देशान्तरे संबन्ध इति चेत्—वस्त्वन्तरस्य साक्षाददृष्टाश्रयत्वाभावेऽपि स्वाश्रयसंयुक्तत्वरूपपरम्परासंबन्धेन वस्त्वन्तरसंबन्धित्वात् कार्यमुपपद्यते । दृष्टश्च गुरुत्वादेः उक्तपरम्परासंबन्धेनान्यत्र कार्यकरत्वमिति समाधातव्यम् । इदञ्चाऽऽत्मनां विभुत्व एव घटते । अणुत्वे देशान्तरादौ स्वाश्रयात्मसंबन्धानिर्वाहादित्यत्राह यच्चेति । इति यत्, एतच्चेत्यन्वयः । अदृष्टं स्वाश्रयसंयुक्ते अन्यत्र—स्वाभाववति वस्त्वन्तरे क्रियां जनयति, तत्तद्गुणत्वात् क्रियाहेतुभूतगुणत्वादिति यत्, एतच्चाऽऽत्माणुत्वेऽपि—अस्मन्मतेऽपि सिद्धम् । अत एवं प्रयोगे हेतौ सिद्धसाधनत्वं सिद्धसाध्यकत्वं दोषः । कथं सिद्धमिति चेत्—नास्मत्पक्षे अदृष्टं जीवगुणः । किं तु जीवविषयकः परमात्मगतः प्रीतिकोपात्मकगुणः । स च स्वाश्रयपरमात्मसंयुक्तत्वसंबन्धेन देशान्तरादौ स्थित्वा कार्यं जनयतीति । इह—अस्मन्मते तत् अदृष्टं विभुनः—व्यापिनः ब्रह्मणः प्रीतिकोपान्यतरभूतमिति । श्लोके अभिमतशब्दस्य कृत्यं दर्शयितुमाह यद्वेति । हस्तद्वयेन परकीयदेहद्वयप्रेरणादिकमाद्यम् । तत्र दृष्टान्तः खड्गपादुकाद्यधिष्ठानम् । न तु उदाहरणम्, खड्गादौ वपुष्ट्वाभावात् । न तथाऽत्रेति । योगिक्रियमाणस्वबहुवपुःप्रेरणे इत्यर्थः । अतः कर्मनिमित्तकमेवेति

स्वसन्निधिविरहे कथं स्यादिति । ज्ञानव्याप्त्या—स्वरूपसन्निधानाभावेऽपि, ज्ञानस्य युगपदनेक-देहाधिष्ठानानुगुणवृत्त्येति भावः । स्वरूप[तो]व्याप्तिर्ज्ञानतोऽधिष्ठानाभावेऽनर्थिका ॥ तर्हि तत एव कुड्यादीनामप्यधिष्ठानं स्यात् ॥ न स्यात्; तदधिष्ठानानुगुणकर्मातिशयविशेषाभावात् । ये तु तादृशातिशयवन्तः, ते कुड्यादीन्यप्यधितिष्ठेयुः ; यथा परकायादीन् । देहैकदेशवर्तिन आत्मनो युगपदनेकावयवाधिष्ठानं कथमित्यत्रापि प्रत्येतव्यमेतदेवेत्याह **बहुष्विति** । धर्माधर्मौ स्वाश्रयसंयुक्त एवाऽऽश्रयान्तरे क्रियां जनयतः, क्रियाहेतुगुणत्वात् गुरुत्ववदिति परोक्तमनुवदति **यच्चेति** । तत्र सिद्धसाधनतामाह **एतदिति** । तत् व्यनक्ति-**विभुन** इति । इह हि **धर्माधर्म**शब्दः कर्मनिमित्तेश्वरप्रीतिकोपरूपबुद्धिद्योतकः । अस्ति हि, "शुभे ह्यसौ तुष्यति दुष्कृते तु न तुष्यतेऽसौ परमः शरीरी" इति ॥

**श्लो**— न च प्रीतेरपूर्णत्वं न च कोपात् सदुःखता । फलप्रदित्सारूपत्वात् उभयोरपि, कर्मणोः ॥ अतो न दोषः ॥ १९ ॥

**इदं प्रादेशिकत्वं विभुषु जनिमतां बुद्धिशब्दादिकानाम्**
**तेनादृष्टं च तादृक्; न यदि, तव सुखाद्याश्रयव्यापकं स्यात् ।**

---

*आ*— स्वरूपव्याप्तिः ज्ञानतोऽधिष्ठानाभावे निरर्थिकेति । स्वरूपव्याप्तिवादिनामपि देहेषु बहुषु स्वरूपसन्निधानेऽपि ज्ञानाभावे प्रेरणाद्यसम्भवात् ज्ञानतोऽधिष्ठानं वाच्यम्; तथा च ज्ञानसन्निधानोपपत्तौ स्वरूपसन्निधानक्लृप्तिरनर्थिकेति भावः ॥ १९ ॥

*भा*— भावः । ननु स्वरूपसंनिधानमिष्ट्वा ज्ञानसंनिधानमेव त्यज्यतामित्यत्राह स्वरूपव्याप्तिरिति । ज्ञानसंनिधानमपि क्वचिदकिञ्चित्करमेवेति पृच्छति तर्हीति । निरस्यति न स्यादिति । कर्मातिशयः= शक्तिः । बहुषु चेत्यादिकं व्याख्याति देहैकदेशेति । नन्वात्मनामणुत्वेऽपि तन्निष्ठस्यादृष्टस्य स्वाश्रयसंयुक्तत्वसंबन्धेन देशान्तरीयवस्त्वन्तरक्रियोत्पादकत्वायोगेऽपि स्वाश्रयसंयुक्तसंयोगसंबन्धेन हेतुत्वमस्तु । तत्र संयुक्तपदेन ज्ञानगगनप्रकृतिपरमात्मादिकं गृह्यतामित्याशंकायां तादृशः कार्यकारणभावोऽन्यत्र न क्लृप्तः । स्वोक्तस्तु गुरुत्वादौ क्लृप्त इत्याक्षिपतः पक्षमादायावतारयति धर्मेति । गुरुत्ववदिति । गुरुत्वं हि स्वाश्रय इव स्वाश्रयसंयुक्ते तूलादावपि पतनं जनयति । "गुरुत्वप्रयत्नसंयोगानामुत्क्षेपणम्" इति च कणादसूत्रम् । अन्यपरम्परासंबन्धिव्यवच्छेदाय साध्ये एवकारः । ननु नोदनाख्यसंयोगादाद्यमिषोः कर्म । तत्र नोदने क्रियाहेतुगुणत्वसत्त्वेऽपि आश्रयान्तरे क्रियाजनकत्वं नास्तीति चेत्—आश्रयान्तरे क्रियाहेतुगुणत्वादित्येव हेतुः । अत एव श्लोके अन्यत्र तत्तद्गुणत्वादिति पठनक्रमः । वृत्तावपि पाठान्यथाभावेऽपि तथैव विवक्षा । स्वाश्रयसंयुक्तत्वरूपसंबन्धस्य साधनार्थमेवेदमनुमानम् । अदृष्टस्य भगवद्गुणत्वात् स्वाश्रयभगवत्संयुक्तत्वसंबन्धेन तस्य देशान्तरीयवस्तुषु सत्त्वात् सिद्धसाधनम् । ननु अस्मदीयानुमाने धर्माधर्मशब्देन जैवगुणविवक्षाया एव कृतत्वात् कथं सिद्धसाधनमित्यत्राह इह हीति । इह=अनुमाने । अस्माभिस्तदनंगीकारात् आश्रयासिद्धिः स्यादिति त्वया धर्माधर्मपदेन कर्मजन्यव्यापारविशेषावित्येव सामान्येन वक्तव्यम् । तौ च नः प्रीतिकोपाविति । न चेश्वरस्य प्रीतिविशेषोत्पत्त्यंगीकारे अवाप्तसमस्तकामत्वभंगः । कोपांगीकारे दुःखित्वापत्तिः । कोपो हि सुखरूपप्रीतिप्रत्यनीकत्वात् दुःखम्, स्वदुःखहेतुत्वाभिमतपरपीडाकरश्चित्तविकारो वेत्यत्राह न चेति । कर्मणोः पुण्यपापयोर्ये फले तद्दानेच्छारूपत्वात् उभयोः प्रीतिकोपयोरित्यन्वयार्थः ॥

**तस्मात् तत् स्वप्रदेशान्वयवति जनयेत् स्वं फलं यत्ननीत्या**
**भ्रातृव्यादौ च पीडां न घटयितुमलं, किं विभुत्वेन भोक्तुः ॥ २० ॥**

उक्तानुमानस्य दूषणान्तरमाह **इष्टमिति** ॥ विभुषु—आत्माकाशादिषु जायमानानां बुद्धिशब्दादिकानां स्वाश्रयैकदेशवर्तित्वं युष्माभिरिष्यते; सार्वत्रिकत्वे प्रत्यक्षादिबहुप्रमाणविरोधात् । अदृष्टं च तादृशमिष्टम् । तच्च स्वाश्रयसंयोगिनि क्रियां जनयत् स्वावच्छिन्नप्रदेशसंयुक्त एव जनयेत् ; अन्यथा प्रयत्नेनापि दूरस्थप्रेरणप्रसङ्गात् । न चादृष्टं तत्र तत्र गच्छति ; अमूर्तत्वात् । अतोऽदृष्टकारित(ानां)दूरस्थकार्या(कर्म)णामनुत्पत्तिप्रसङ्गः । ननु प्रत्यात्मनियतानि अनन्तानि अदृष्टानि विप्रकीर्णवृत्तीनि विद्यन्ते ; अतः सर्वक्रियोपपत्तिरित्यत्राह **भ्रातृव्यादाविति** । अयं भावः—अद्यतनाभिचारक्रियानिर्वर्त्यमानमदृष्टं कर्तुरात्ममनस्संयोगावच्छिन्ने प्रदेशे स्यात् । तच्च भ्रातृव्यदेहभेदादीन् [कथं?]करोति । एवं देशान्तरानुभाव्यस्वर्गादिफलसाधनेऽपि भाव्यम् । न च दूरे एवेदमदृष्टमुत्पद्यते, असमवायिदेशावच्छेदेन तदुत्पत्तेः स्थापनात् । अतः कथं देशान्तरस्थे भ्रातृव्यशरीरादौ पीडां जनयेत् ?

तस्मादात्मनः सर्वत्रावस्थानं निरर्थकमिति निगमयति **किं विभुत्वेनेति** ॥२०॥ **इति जीवविभुत्वभङ्गः ॥**

**स्वादृष्टोपार्जितत्वात् विभुषु यदवदन् विग्रहादेर्व्यवस्थां**
**तच्चैवं निर्निमित्तं, तत इह न कथं सर्वतस्सर्वभोगः ।**
**आराध्ये विश्वसाक्षिण्यनुगुणफलदे त्वस्ति राजादिनीतिः**
**तत्साम्ये भोगसाम्यं न हि भवति यथाकर्म भोगप्रदानात् ॥ २१ ॥**

'यदि सर्वे जीवाः सर्वशरीरव्यापिनः, सर्वे देहाः सर्वेषां भोगायतनानि स्युः' इति प्रसङ्गे परोक्तं

---

श्री— प्रादेशिकत्वम्—असमवायिकारणसंयोगादिरूपकारणावच्छिन्नप्रदेशमात्रे जायमानत्वं ते तार्किकस्येष्टम् । तेन—तस्मात् जन्यविभुवर्तिगुणत्वात् अदृष्टमपि क्रियाकर्तरि तत्कृत्यवच्छेदे तत्कृतिकारणभूतात्ममनस्संयोगावच्छिन्न एवाऽऽत्मप्रदेशे जायेत । न यदि=अदृष्टस्य सर्वप्रदेश एवोत्पत्तौ व्याप्यवृत्तित्वस्वीकारे सुखादिकमपि तथा स्यात् । न च सुखस्य सुखकरवस्तुसंबन्धमूलकत्वात् तदवच्छिन्नदेश एव तदुत्पत्तिरिति वाच्यम्—सुखकरवस्तुसंबन्धादेरेव सर्वत्र प्रसंगात् । पादे मे वेदनेत्येवं परिच्छिन्नत्वधीश्च न स्यात् । तस्मात्=अदृष्टस्य स्वकारणावच्छिन्नप्रदेशमात्र एवोत्पादनीयत्वात् । यत्ननीत्या=यत्नमिव । एवञ्च स्वस्य स्वर्गादिफलानुभवासंभव उक्तः ; परस्यापि फलानुत्पत्तिमाह भ्रातृव्येति ॥ दूषणान्तरमिति । सत्प्रतिपक्षितत्वमित्यर्थः । तादृशमिष्टमिति सिद्धवत्कृत्योक्तिः ; अन्यादृशत्वस्य तार्किकेणानुक्तत्वात् । ननु प्रत्यात्मेति । यद्यद्देशे फलानुभवः, तत्तद्देशे प्राक्कृतस्य कर्मणः फलमेव तदिति स्वीकुर्मः ; अनादिकर्मप्रवाहे तत्रतत्रानन्तादृष्टसंभवादिति भावः । अयं भाव इति । तज्जन्मसंपाद्यफलार्थव्यापारविचारे तथा वक्तुं न शक्यमिति भावः । न च श्रुत्यन्यथानुपपत्त्या कल्पनीये अदृष्टे तदनुगुण एव कार्यकारणभावः कल्प्य इति शंक्यम् ; एवं सति स्वाश्रयसंयुक्त एव जनयेदिति नियमस्यापि त्यागसंभवात् किमनेन विभुत्वसाधनप्रयासेनेति ॥ २० ॥

स्वादृष्टेति । आत्मनां व्यापित्वे सर्वैर्विग्रहैः सर्वेषामात्मनां संबद्धत्वात् अयं विग्रह एतत्स्वामिक इति व्यवस्था कथमिति चेत्—स्वादृष्टोपार्जितत्वात् । यो विग्रहो यदीयादृष्टाधीनः स तत्स्वामिक इति । 'यदवदन्' इत्यत्र यच्छब्दः क्रियाविशेषणम् । विग्रहव्यवस्थाकर्मकं यदनं यत् तत् निर्निमित्तं—

परिहारमनुवदति स्वादृष्टेति । दूषयति तच्चेति । अयं भावः — यदि अदृष्टं स्वावच्छिन्नप्रदेशे देहादिसृष्ट्या फलं जनयेत्, तदा यष्टुः स्वर्गादिकमिहैव स्यात् ; प्रदेशान्तरे तु प्रयत्नरीत्या जनयितुं नालमिति । अतः स्वत्पक्षे प्रतिनियतादृष्टजन्यत्वस्यैवासंभवात् व्यवस्थाभङ्गो दुर्वार इत्याह तत इति । नन्वणुपक्षेऽपि फलानां जीवगतादृष्टाजन्यत्वात् परगतस्य व्यवस्थापकत्वानभ्युपगमादनियमस्तदवस्थ इत्यत्राह— आराध्ये इति । परगतत्वेऽपि राजादिषु दृष्टेन न्यायेन तत्तदाराधकादिप्रतिनियतानुग्रहादिवैचित्र्यात् तत्तदुचितफलसमर्पणे यथाप्रमाणं व्यवस्था सिध्येदिति भाव.। सर्वफलप्रदानानुगुण्यार्थं विश्वसाक्षितोक्तिः। सहाधीते च कर्माध्यक्षत्वसाक्षित्वे। ननु 'समोऽहं सर्वभूतेषु' इति वदतः कथं विषमफलप्रदत्वमित्यत्राह तत्साम्य इति । भोगसाम्यं क्षेत्रज्ञानामन्योन्यमिति शेषः। सूत्रादिसिद्धं हेतुमाह-यथाकर्मेति ॥२१॥

## इति परपक्षे फलस्यादृष्टोपार्जितत्वभंगः ॥

---

प्र्री— साक्षित्वोक्त्या भगवतः कर्मफलप्रदत्वे प्रमाणमपि सूचितमित्याह—सहाधीते चेति ॥ २१ ॥

श्री— व्यवस्थाहेतुरहितम्। तच्चैवमिति एवंशब्दस्यार्थं मनसि निधायाऽऽह अयं भाव इति । अयमाशयः—सूत्रकारेण अदृष्टानियमादिति सूत्रेण जीवब्रह्मैक्यवादे सर्वजीवादृष्टानामप्येकब्रह्मगतत्वात् फलव्यवस्था न स्यादित्युक्तं सम्यक् । अत्यन्तभिन्नजीववादे कथमव्यवस्था इत्याशंका मा भूदिति एवम्पदप्रयोगः। एवमित्यस्य पूर्वश्लोकोक्तरीत्या प्रयत्नादिवत् अदृष्टस्यापि स्वावच्छिन्नप्रदेश एव कार्यकरत्वे सतीत्यर्थः। तथा च यागकृत्यवच्छिन्नात्मप्रदेशोत्पन्नेनादृष्टेन स्वर्गलोकावच्छिन्नात्मप्रदेशे फलोत्पादनासंभवात् फले अदृष्टाधीनत्वस्यैवाभावे किमिदं व्यवस्थावर्णनमिति । इदञ्च एवम्पदस्य प्रकृतार्थपरत्वाभिप्रायेण । प्रकारान्तरं तु प्रसिद्धत्वान्नोक्तम् । तच्चेदम् । तदीयादृष्टजन्यविग्रहस्य तदर्थत्वमिति व्यवस्था हि अदृष्टस्य तदीयत्वे सिद्धे स्यात् । तस्यादृष्टस्य तत्पूर्वदेहाधीनकर्मजन्यत्वात् तद्देहस्यापि साधारण्ये आपाद्यमाने कथमदृष्टव्यवस्थेति । एवं दूषणपक्षे च एवमित्यस्य किञ्चिदर्थः। ततः व्यवस्थापकाभावात् इह विभुत्वपक्षे न कथं सर्वतः सर्वभोगः । एकैकस्यापि जीवस्यान्यदीयत्वेनाभिमतविग्रहादितोऽपि भोगो भवेदित्यर्थः। ननु सिद्धान्ते अदृष्टस्य ब्रह्मनिष्ठत्वात् तस्य च साधारणत्वात् तुल्यो दोष इत्यत्रोत्तरार्धम् । अदृष्टं हि अस्मत्पक्षे इच्छारूपम् । तच्च सविषयकम् । ननु राज्ञो वैषम्यादिमत्त्वात् फलव्यवस्था स्यात् । अस्य तु 'समोऽहं सर्वभूतेषु' इति साम्यावगमात् सर्वं फलं सर्वस्मै अयं दद्यादित्यत्राह तत्साम्ये इति । तस्य परमात्मनः सर्वभूतसाम्यरूपे गुणे सत्यपि जीवानां भोगसाम्यं मिथः संसारे तुल्यभोगत्वं न भवतीत्यर्थः। तत्साम्ये भोगसाम्यमिति प्रयोगभंग्या—यदा जीवानां परमं साम्यमुपैतीत्युक्तं ब्रह्मसाम्यम्, तदैव मिथो भोगसाम्यमपि स्यात्; न त्विह, अत्र यथाकर्मभोगप्रदानादित्यर्थोऽपि व्यज्यते। ननु वयमपि सेश्वरा एव । तदिच्छानुरोधेन फलमित्यस्मदिष्टम् । अचेतनस्यादृष्टस्य चेतनेश्वरप्रेरणां विना कार्यकरत्वाभावस्य कुसुमाञ्जलौ स्थापितत्वादिति चेत्—यद्येवम्, किमिति राजनीतिं विहायादृष्टस्वीकारः । स्वीकारेऽपि वा किमिति आत्माणुत्वपक्षे सर्वत्र फलासंभव इति विभुत्वस्थापनप्रयासः? अविभुत्वे दूरस्थफलाप्राप्तिस्त्वदुक्ता विभुत्वपक्षेऽप्यस्तीत्युपपादनमेव प्रकृतम् । एवं प्रकृतसंगत्याधिक्यसंपादनार्थं तच्चैवमिति श्लोके एवम्पदस्य तथाभिप्रायवर्णनमिति ध्येयम्। सहाधीते इति कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेतेति श्रुतौ॥ २१ ॥

देहान्तर्मात्रदृष्टेः पृथगिह विषयिप्राणजीवोत्क्रमोक्तेः
भूयोवाक्यानुसारात् अणुरिति वचने तादृशोपाध्यनुक्तेः ।
ईशादाराग्रमात्रो ह्यवर इति भिदावर्णनात् स्पन्दवाक्यात्
व्याप्त्युक्तिर्ज्ञाति-धर्म-प्रतिहतिविनिवृत्त्यादिमात्रेण जीवे ॥ २२ ॥

अथाप्यणुत्वे किं प्रमाणमित्यत्राह **देहान्त**रिति । अयं भावः—यद्यात्मा विभुः स्वयंप्रकाशश्च, किमिति सर्वत्र सर्वदा न प्रकाशते? अहमिति सार्वत्रिकः प्रकाशत एवेति चेन्न; 'अस्मिन् देहेऽहं वर्ते' इतिवत् सर्वत्र प्रतीतिप्रसङ्गात्। सार्वत्रिकस्याविशदप्रकाशोऽस्तीति च न प्रमाणम् ॥ व्यञ्जकान्तरसापेक्षत्वात् व्यञ्जकदेशे व्यक्तिरिति नियमहेतुरिति चेन्न ; स्वप्रकाशत्वविरोधात् ॥ अथ मानसप्रत्यक्षः, तथाऽपि कथं काचित्कोपलब्धिः ? यद्यपि सामग्रीदेशानुविधानेन ज्ञानोत्पत्तिः ; तथाऽपि विषयत्वं न तन्निबन्धम् , तथा अदृष्टेः ॥ अगृहीतपरिमाणस्य स्वरूपतो ग्रहणे देहात्मभ्रमात् काचित्कत्वोपलम्भ इति चेन्न ; भ्रमव्यतिरिक्तमानसप्रत्यक्षेष्वपि तद्दृष्टेः । विवेकतः समाहितानामपि परिच्छिन्नतया तदुपलब्धेः ; 'हृदि ह्ययमात्मा' इत्यादिदृष्टेश्च । हेत्वन्तरमाह **पृथगि**ति । इन्द्रियादीनां पृथगुत्क्रमणोक्तेरात्मोत्क्रमणं न भाक्तमिति

---

व्याँ— अथाणुत्वं नित्योपलब्धीति सूत्रोक्तरीत्या नानाविधश्रुतिगत्या च स्थापयन् सर्वगतत्वोक्तितात्पर्यमप्याह देहेति । देहस्य अन्तः–हृदयेव जीवात्मानुभवात्। सर्वो ह्यहमिति वक्षसि हस्तं निक्षिपन् व्यवहरति । तत्र स्वयम्प्रकाशत्वस्य प्रमाणसिद्धत्वात् विभुत्वं सुतरामनुपपन्नमिति प्रथममाह स्वयम्प्रकाशश्चेति । ननु आत्ममात्रस्य स्वयंप्रकाशत्वात् आत्मोपलम्भन एव । सोऽत्रत्य एव प्रकाशते: नान्यत्र स्थित इति नियन्तुं न शक्यते, देशग्राहकप्रमाणाभावादिति मत्वा शंकते अहमितीति। सार्वत्रिक इति । न ह्यात्मनः किञ्चित्परिच्छिन्नतयोपलम्भः। परिच्छेदग्राहकमानाभावात् । अतः कृत्स्नोऽपि प्रकाशत एवेति शंका । खण्डयति नेति । 'अस्मिन् देहे अहं वर्ते' इत्युपलम्भस्यापलापो न शक्यः । अहमिति स्वयंप्रकाशे, प्रत्यक्षेण देहोपलम्भे च सति, देहात्मनोः संबन्धस्य यथार्थत्वात् विशिष्टव्यवहारः स्वयमेव जायते, यथा अहं जानामीति। एवं बाह्यदेशेष्वप्यात्मसत्त्वे बाह्योपलम्भकाले तत्र प्रकाशमानात्मस्वरूपात् तत्राप्यहमस्मीति व्यवहारः स्यादेव । तदभावान्न विभुत्वमिति भावः। अस्तीति चेति । अस्त्यत्र चेत्यर्थः ननु गगनपर्वतादेर्बहुदेशव्यापित्वेऽपि यथा चक्षुस्संयोगालोकसंयोगादिस्थलमात्रे उपलम्भः तथेति शंकते व्यञ्जकेति । चक्षुर्देशस्यापि रविकरनिकरस्य करतलप्रतिघाते बहुलोपलम्भात् विशदोपलम्भे व्यञ्जकान्तरमप्यपेक्षितमित्याशयेन अन्तरपदम् । एवं स्वयम्प्रकाशत्वपक्षे परिच्छिन्नत्वं स्थापितम् । तार्किकाभिमते अनुव्यवसायवेद्यत्वपक्षेऽपि उक्तदोषप्रसंगमाह अथेति । ननु यद्देशावच्छेदेन कारणभूतमनस्संयोगादि, तद्देशावच्छेदेनैव विभुविशेषगुणोत्पत्तिरसदिष्टा ; भवताऽप्यनूदिता विशदश्लोके । अत एवाव्याप्यवृत्तित्वं भवतोपपादितम् । तत् कथमत्र सर्वत्रोपलब्ध्यापादनमित्यत्राह यद्यपीति । तत्र हि गुणोत्पत्तिदेशो दर्शितः। तत्रोत्पन्न एव ज्ञाने कृत्स्नदेशावच्छिन्नात्मविषयकत्वं कुतो नेतीदानीं प्रश्न इत्याशयः । विवेकत इति । यस्तु अन्यथा गृहीत्वा समाहितानां परिच्छिन्नत्वेनैव भावनाप्रकर्षरूपोपलब्धिः स्यात्। देहभिन्नत्वविवेकं प्राप्य समाहितानां कथं न सार्वत्रिकोपलम्भ इत्यर्थः । श्लोके विषयीति । विषयिणः विषयग्राहिणः इन्द्रियाणि समुत्र-

भावः। सर्वगतत्वोक्तिसद्भावेऽप्यणुत्वोक्तीनां बलीयस्त्वं व्यनक्ति **भूय** इति। सन्ति हि, 'एषोऽणुरात्मा चेतसा वेदितव्यः,' 'वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवस्स विज्ञेयः' इत्यादिका बह्व्यः। ननु विभोरपि परमात्मनोऽणुत्वं श्रूयते, तथेह स्यात्; तन्न; तत्र हि(?), 'एष आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा' इत्यादिष्वौपाधिकाणुत्वव्यक्तेः। जीवाणुत्वश्रुतौ तादृशोपाध्यनुक्तेः; प्रत्युत स्वरूपनिर्देशेनैव वालाग्रसूक्ष्मभागसमत्वं ख्याप्यते। यद्यौपाधिकं जीवस्याणुत्वम्, तस्य जीवेश्वरसाधारणत्वात्, 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' इति परव्यावर्तकपरिमाणोक्तिर्विहन्येतेत्यभिप्रायेणाह **ईशादिति**। स्वप्नसुषुप्त्यादिवाक्येषु, 'आसु तदा नाडीषु सृप्तो भवति', 'ताभिः प्रत्यवसृप्य पुरीतति शेते' इत्यादिभिर्जीवस्य तत्र तत्र स्वरूपेण संचरणं श्रूयते इत्याह **स्पन्दवाक्यादिति**॥ एतैर्बलीयोभिर्जीवव्याप्तिवचनानामन्यपरत्वमाह **व्याप्त्युक्तिरिति**। 'तस्यात्मपरदेहेषु सत.' इत्यादौ जातितः। 'स चानन्त्याय कल्पते' इत्यत्र धर्मतः, तथा च सूत्रम्, 'प्रदीपवदावेशस्तथा हि दर्शयति' इति। **सर्वगत** इति अत्र क्रमेण सर्वविधाचेतने प्रवेशाद्वा, शिलादिष्वपि प्रतिहत्यनर्हतया वा। तथा च **भाषितम्**, "अतिसूक्ष्मतया सर्वाचेतनान्तःप्रवेशस्वभाव." इति॥ आत्मनोऽणुत्वे पृथिव्याद्यणुवत् प्रत्यक्षत्व न स्यादिति चेन्न; विभुत्वेऽपि ते विभ्वन्तरवत् अप्रत्यक्षत्वप्रसङ्गात्।

---

व्ॉ– प्राणाः। प्राणो मुख्यप्राणः। ततः पृथक्जीवोत्क्रम उक्तः, 'निष्क्रामति। तमुत्क्रामन्तम्' इति। नन्विदं निष्क्रमणं सूक्ष्मभूतविशिष्टस्य ह्यत्रोच्यते। अतो विशेषणे तत्पर्यवसानमस्त्वित्यत्राह भूय इति। बहूनां वाक्यानामौपचारिकार्थपरत्वं न युक्तम्। "गुणान्वयो यः फलकर्मकर्ता कृतस्य तस्यैव स चोपभोक्ता। स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः संचरति स्वकर्मभिः॥" (श्वे.५.७.) इति कर्तृत्वभोक्तृत्वानेकशरीरकत्वकामक्रोधलोभरूपगुणत्रयवत्त्वाद्यविशेषेण संचारित्वे जीवनिष्ठे प्रतीयमाने तत्स्वारस्यभंगायोगात्। एतन्मन्त्रोक्तसंचारित्वस्थापनार्थमेवोपरि आराग्रमात्र इत्यणुत्वस्थापनात् सञ्चारित्वं मुख्यमिति ज्ञायते। साक्षादणुत्वबोधकवाक्यानुसाराच्चेत्यर्थः। भूय इति। परिच्छिन्नत्वबोधकवाक्यानां भूयस्त्वादित्यर्थः। उपाध्यनुक्तेरिति न पृथग्धेतुः; किं तु पूर्वशेषः। अतस्तदनुगुणमवतारयति नन्विति। ननु जीवात्मनः, सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः' इति मुक्तौ विभुत्वावगमात् प्रागपि तदेव परिमाणमिति तदन्यपरिमाणवचनं सर्वं भाक्तमस्तु। 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' इति श्रुतिरपि अपिशब्दात् परमात्मवत् अवरोऽपि उपाधिबलादेव अङ्गुष्ठमात्रत्वाऽऽराग्रमात्रत्वान् दृष्ट इति विभुत्वस्यापि कैवेत्यत्राह यदीति। आराग्रवाक्यं न तस्यौपाधिकत्वज्ञापकम्। किं तु हिशब्दश्रवणात् वस्तुत आराग्रमात्रत्वादतिनिकृष्टपरिमाणोऽपि बुद्धिगुणधर्मभूतज्ञानोभयवशात् अङ्गुष्ठमात्रो भवतीति अणुत्वस्थापकम्। अत्र सिद्धवदुक्तमणुत्वमेव वालाग्रेति स्थापयित्वा विभुत्वं तस्य पश्चाद्भावीत्याह, 'स चानन्त्याय कल्पते' इति। यदि आनन्त्यं स्वाभाविकम्, औपाधिकञ्चाणुत्वम्—तर्हि अनन्तोऽयं कर्मवशादणुत्वाय कल्पत इति प्रयोक्तव्यम्; न तु अणुरानन्त्याय कल्पत इति। अनन्यथासिद्धं वचनान्तरमाह स्पन्दवाक्यादिति। ताभिः प्रत्यवसृप्येतिवत्, विरजानदीगमनानन्तरम्, 'तां मनसाऽत्येति' इति अत्ययसंकल्पवतो जीवस्य सूक्ष्मभूतादिसर्वोपाधित्यागानन्तरं शुद्धस्वरूपेण नदीतितरणोक्तिरपि भाव्या। एवमणुत्वसाधकबलेन सर्वगतत्ववारणेऽपि तद्बोधकप्रमाणवाक्यगतिः केत्यत्राह व्याप्तीति। व्याप्तिः=सर्वगतत्वम्। तदुक्तिः। सर्वगतत्वं वायुर्यथैक इतिवत् जातिमादाय व्यक्तिभेदेन क्वचित्, एकस्यापि धर्मभूतज्ञानमादाय क्वचित्, प्रतिहतिनिवृत्तिः—अप्रतिहन्यमानता

यथादृष्टि व्यावृत्तिरस्तीति चेत्, अणुत्वेऽपि समम्। न चास्माकं पृथिव्याद्यणूनामप्रत्यक्षत्वनियम। एवमणुत्वे मानसप्रत्यक्षत्व न स्यादिति प्रसङ्गोऽपि श्रुतिविरोधादिभि प्रत्याख्येय ॥ २२ ॥ इति जीवाणुत्वम् ॥

**नात्मा देहानुरूप (पो?) विविधपरिणतिनिर्विकारोक्तिबाधात्**
**स्थूलोऽहं मूर्ध्नि जात सुखमिति च मतिस्तस्य देहात्ममोहात् ।**
**नानादेहश्च योगी प्रसजति भिदुरः पुंसि देहप्रमाणे**
**मुक्तौ देहात्ययात् स्यात् परिमितिविरहस्तत्प्रयुक्तेऽस्य माने ॥ २३ ॥**

जैनास्त्वाहु — सर्वाणि द्रव्याणि पर्यायवन्ति, आत्माऽपि द्रव्यम्, अत सोऽपि तत्तद्भोगायतनानुगुणाणुत्वमहत्त्वादिपर्यायवानिति , तान् प्रतिक्षिपति **नात्मेति**। यो यद्भोगायतनवर्ती स तत्[सम]परिमाण इति नियमस्तावन्न दृष्ट । न च कल्प्य , कल्पकासिद्धेरिति भाव । नैगमिकाभीष्ट हेतुमाह **निर्विकारेति**। वृद्धिह्रासौ देहस्यैवोच्येते , आत्मनि तु न क्वचित्, प्रत्युतान्यथा। ननु स्थूलोऽहं कृशोऽहम् इति सामानाधिकरण्यात्, 'मूर्ध्नि मे सुखम्' इत्यादिना सर्वावयवेष्वहमर्थवृत्तिदर्शनाच्च परिमितिभेद कल्प्य इत्यत्राह स्थूल इति। सामानाधिकरण्य तावत् गौरोऽहमित्यादिष्वप्यस्तीत्यनेकान्तम्। देहद्वारैवाऽऽत्मनि गौरत्वादिवाद , भ्रमाद्वा। तथेहापि। देहावयवेषु सुखाद्युत्पत्तिधियश्च देहात्मभ्रमेण सर्वत्र सन्निधानारोपात्। सत्सन्निधानेऽपि भ्रमाङ्गीकार । ननु "एका शाखा जीवेन जहाति" इत्यादिना छान्दोग्ये जीवस्य वृद्धिसङ्कोचौ श्रूयेते ॥ नन्न , क्षेत्रादिष्विवाभिमानत्यागेनापि तदुपपत्ते । तत्रतत्राभि

---

[ग्र]- नात्मा देहानुरूपमिति। आत्मनो देहपरिमाणत्वे छिन्नशाखाप्ररोह छिन्नजन्त्ववयवकम्पश्चोपपद्यते, अन्यथा त्वेतत्र (?) आत्मसान्निध्याभावात् कथ तदुपपत्तिरिति शङ्का परिहरति—खण्डि-

[ग्र]— सूक्ष्मत्व तत्र अन्त प्रवेशसामर्थ्यमादाय क्वचित्, ससारितया कालभेदेन तत्रतत्र गमनात् मुख्यगमनक्रियामादायैर च क्वचिदुपपादनीयम्। अन्तिम श्लोके आदिपदग्राह्यम् ॥ २२ ॥

पर्यायेति। परिणामादिरूपवस्त्वाविशेषे पर्यायपदपरिभाषा जैनानाम्। अत एव जैनाधिकरणे सूत्रेऽपि तत्प्रयोग , बौद्धखण्डनावसरे सूत्रे प्रत्ययशब्दवत्। यो यदिति। य आत्मा। यदिति भोगायतनविशेषणम्। ननु निर्विकारोक्तीति गृहीता का? न तावत् जैनोक्तिरेवमस्ति। सविकारत्वस्यैव तदिष्टत्वात्। न च श्रुति तस्यास्तदनादृतत्वादित्यत्राह नैगमिकेति। चैत्रो वर्धते ह्रसतीत्यादिमात्रव्यवहार निषेधति वृद्धीति। प्रत्युतान्यथेति। 'अपक्षयविनाशाभ्या परिणामर्द्धिजन्मभि। वर्जित शक्यते वक्तु य सदाऽस्तीति केवलम्' इति विष्णुपुराणे। 'मूर्ध्नि मे' इति मूर्धावच्छेदेन मे सुखमित्यर्थ । अवच्छेद्यसुखाधिकरणात्मसम्बन्धस्य मूर्धनि अभावे तस्यावच्छेदकता न स्यादिति भाव । देहद्वारेति। भ्रान्तव्यवहारे गौरत्वगुणकदेहाधिष्ठातेत्यर्थ । तथा स्थूलत्वविशिष्टदेहाधिष्ठातेत्यर्थ इहेति। देहावयवेष्विति। देहावयवावच्छेदेनेत्यर्थ । देहात्मभ्रान्तिसत्त्वात् अवयवावच्छिन्नसुखाधारदेहसम्बन्धस्य चावयवावयविभावरूपस्य अवयवेषु सत्त्वात् उपपद्यते, देहसम्बन्धस्य सन्निधानत्वेन भ्रान्त्या ग्रहणादिति। ननु किमित्यारोपकल्पना? आत्मनो देहपरिमाणस्वीकारात् सदैव सन्निधानमस्तीत्यत्राह सदिति। परीक्षकदृष्ट्या तत्र सन्निधाने सत्यपि पादे मे वेदनेत्यादिव्यवहारो देहात्मवादिनामस्त्येवेति भ्रम एवाभ्युपगन्तव्य इति भाव । विवेकिव्यवहारे तु अवयवाना

मानसदसद्भावौ च कर्मनियतौ । खण्डितारोपितशाखाप्ररोहस्तु तादात्विकजीवान्तराभिमानात् । भिन्नजन्त्ववयवविकम्पः प्राणांशक्षोभमात्रात् । न हि तत्र वेदनायां प्रमाणमस्ति । बाधा(बाधका?)न्तरमाह **नानादेह** इति । एकस्मिन्नेव काले योगिनां विरुद्धधर्माध्यासेन स्वरूपभेदः प्रसज्येत । प्रसङ्गान्तरमाह **मुक्ताविति** । देहप्रयुक्ते पुंसः परिमाणे मुक्तिदशायां देहाभावादात्मनः परिमाणविरहः स्यात् । तथाच गुणवत् द्रव्यत्वमेव हीयेत ॥ अपरिमितस्यापि द्रव्यत्वं केचिदिच्छन्तीति चेन्न; विभुत्वप्रसङ्गादिति ॥२३॥

**निर्मुक्तः त्वन्मते स्यात् कथमपरिमितो नित्यमूर्ध्वं प्रधावन्**
**देहः कश्चित् तदानीमपि यदि नियतः, स्यात्तु तन्निघ्नताऽस्य ।**
**इच्छातो देहमेकं विशति स परिमित्यर्थमेवेति हास्यं**
**तस्मादास्माकनीत्या परिमितिरिह मा स्यागिनी या विमुक्तौ ॥ २४ ॥**

---

पूर्ती— तारोपितेत्यादिना । छिन्नजन्त्ववयवे आत्मसन्निध्यभावे तत्र वेदनानुभवः कथमित्यत्राह—न हि तत्रेति । परिणामविरहस्यानिष्टपर्यवसानं दर्शयति – तथाचेति । गुणवदिति । अनेन यत् परिणामशून्यं तन्न द्रव्यम्, यथा गुणः इति व्याप्तिः सूचिता । परिच्छिन्नपरिमाणाभावेऽपि द्रव्यत्वं दृश्यत इति शङ्कते—अपरिमितस्यापीति । तर्हि तद्वदेव विभुत्वं प्रसज्यत इत्याह—न विभुत्वेति ॥ २३ ॥

व्री— मे इत्युक्तात्मनश्च देहात्मभाव एव संबन्धः । जीवान्तरेति । त्वयाऽपि न हि पूर्वजीवस्वरूपे खण्डनमिष्टम् ; परिमाणमात्रभेदस्यैवोक्तेः, जीवनाशानिष्टेरिति भावः । अवयवविकम्प इति । गृहगोधादिपुच्छभंगे, युद्धे कबन्धादौ चायं द्रष्टव्यः । कतिपयक्षणमात्रेण तत्र निर्जीवत्वनिश्चयात्र जीवान्तरस्वीकारः । नानेति । पुंसि = जीवे देहपरिमिते स्वीकृते, योगी भिदुरः प्रसजति—योगिन एकस्य नानादेहस्थले अनेकयोगित्वापत्तिः ; तत्तद्देहसमनानापरिमाणस्वीकारात् । न ह्यात्मनश्छेदभेदादिकमपीष्यते । आपत्त्यन्तरमाह मुक्ताविति । अस्य-जीवस्य माने-परिमाणे देहप्रयुक्ते सति, मोक्षे जीवस्य देहाभावात् परिमाणविरहः स्यात् । देहे सति हि देहतुल्यपरिमाणं त्वदुक्तम् । न च गुणादिवत् निष्परिमाणं द्रव्यं भवतीत्यर्थः । विभुत्वप्रसंगादिति । इष्टापत्तौ दोषोऽनन्तरश्लोके । अत्र श्लोके देहानुरूपमित्यस्य परिणतिक्रियाविशेषणत्वे क्लेशात् देहानुरूप इति पाठः स्यात् । विविधपरिणतित्वं तत्र हेतुः ॥ २३ ॥

नन्वस्तु विभुत्वम् । तथाच परममहत्परिमाणसिद्ध्या परिमितिविरहरूपदोषान्मुक्तिरित्यत्राह निर्मुक्त इति । विभुत्वे त्वन्मते–त्वदभिमते सति निर्मुक्तः मुक्तिभाक् अपरिमितः विभुर्जीवः कथं नित्यमूर्ध्वं प्रधावन् स्यात् । यद्वा त्वन्मते मुक्तः कथमूर्ध्वं प्रधावन् स्यादित्यर्थः । त्वन्मते नित्यमूर्ध्वं प्रधावन् कथमपरिमितः स्यादित्यर्थस्तु न वृत्त्यनुरोधी । अस्तु वा । प्रधावन्निति । यद्यपि गमनमेव तदुक्तम्, तस्यानतिशयितत्वे मानाभावात् प्रकर्षेण धावनमिति परिहासः । नन्वस्तु मुक्तौ देहोऽपीत्यत्राह देह इति । तदानीमपि देहो नियतो यदि = नियमेनास्ति चेत्, अस्य-जीवस्य, तन्निघ्नता–देहपरवशता स्यात्, संसारित्वमेव स्यात् । देहस्य च भंगुरत्वात् विभिन्नदेहग्रहणे तन्निघ्नतया परिमाणञ्चानियतं स्यादित्यर्थः । ननु स्वेच्छया देहग्रहणात् न बन्धकत्वम्, नापि तस्यानित्यत्वम् अनेकत्वञ्च । किमर्थं स इति चेत्–परिमाणार्थमेवेति चेत्–इदं हास्यम् । तस्याघातिकर्मसापेक्षत्वे बन्धकत्वम् । इच्छामात्रेणोत्पादनशक्तश्चेत्, परिमाणमेव किञ्चित् संकल्पयतु ; किं देहेन? इच्छापदस्वारस्यादेवं व्याख्यातम् । मुक्ताः सर्वे एकं दिगम्बरशरीरं प्रविशन्ति, पृथक्पृथग्वा तथा देहं गृह्णन्तीति तन्मतम् । तत्र पृच्छ्यते किमर्थं तदिति । अस्मन्मते नानादेहपरिग्रहस्य महत् फलमस्ति, न तन्मत इति । तदुक्तं परमतभंगे ।

भवतु विमुर्मुक्त, को दोष इत्यत्राह निर्मुक्त इति। मुक्तस्य हि, पृथिव्या नित्यपतनवत्, नित्योर्ध्वगमनं युष्माभिरुच्यते; अलोकाकाशावधि वा। उभयथाऽप्यपरिमितस्य गमनं न सिद्धयेत्। देहविशेषपरिमित एवोत्पततीति शङ्कते देह इति। नियतः—अवश्यम्भावी, स्वकर्मनियत इति वा। तत्र बाधकमाह स्यादिति। कर्मनियतदेहत्वे परतन्त्रस्य कथं मुक्तत्वमिति भावः। अस्तु घातिकर्मचतुष्टयरहितस्याघातिकर्मचतुष्टयप्रभावात् गत्यर्थो देह, तत्परित्यागक्षणे झडिति परिमाणसिद्धयर्थं सकल(सर्व)लोकमस्तकस्थायिनं [कचित्] दिगम्बरं देह सर्वे मुक्ता प्रविशन्ति, पृथग्वा शरीरा[न्तरा]णि परिगृह्णत इति वदन्तमुपालभते इच्छात इति। न हि मुक्तस्येच्छाभोगौ युष्माभिरिष्येते। न च स्वच्छन्दव्यापाराः। अतः परिमाणमात्रसिद्धयर्थं देहं परिगृह्णातीति निर्मूलकल्पनं निपुणैर्हास्यम्। तर्हि का गतिरित्यत्राह तस्मादिति। मुक्तौ काचित् स्वाभाविकी [परिमिति] स्वीकार्या; सैव बद्धदशायामपि स्थिरेति नित्याणुर्जीवः। तथा च सूत्रम्—"अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः" इति। उभयमिह जीवस्वरूपं परिमाणं च॥

इत्यात्मनो देहपरिमाणत्वभङ्गः ॥ २४ ॥

---

श्री— भवतु विमुर्मुक्तः, इत्यत्राह निर्मुक्त इति। पृथग्वा शरीराणि परिगृह्णत इति। 'इच्छातो देहमेकम्' इत्यत्रैकशब्दः साधारणैकशरीरपरतया, प्रातिस्विकैकशरीरपरतया वा व्याख्येय इति भावः॥ २४॥

वी— यदि परिमाणधर्मेण, यदि वा स्वरूपमात्रपरिशेषादपि दिगम्बरत्वसंपत्त्याऽवास्थिया, तत्र हास्यतैव। अतोऽनौपाधिकमेव तत् परिमाणं यत् मुक्ताविति, तस्यैव प्रागपि सत्त्वमावश्यकम्। अविनश्यतो भावस्यानादित्वमेव हि अनुभवसिद्धम्; अतो न देहपरिमाणत्वम्, न वा परममहत्त्वम्, ऊर्ध्वगमनोक्तेरिति सिद्धमणुत्वमेव युक्तिवादेऽपि।

अलोकेति। आलोकेति अशुद्धम्। आकाशो द्विविधः लोकाकाशः अलोकाकाशश्च। लोकानामन्तर्वर्ती लोकाकाशः। सर्वातिक्रमे स्थितः अलोकाकाशः, यत् मोक्षस्थानम्, 'अद्यापि न निवर्तन्ते ह्यलोकाकाशमार्गगाः' इति। अतो लोकाकाशातिक्रमपर्यन्तमूर्ध्वगमनम्, ततः स्थितिरिति तेषां द्वितीयः पक्षः परमतभङ्गे विशदः। घातीति। "हिंसास्तेयासत्यानि घातीनि, अहिंसानुकूल्यसत्यानि अघातीनि" इत्यानन्ददायिनी। तत्परित्यागक्षणे इत्यस्य घातिकर्मजदेहत्यागक्षणे इति व्याख्यानमानन्ददायिन्याम् एवञ्चेदम्, परिमाणसिद्धयर्थमित्यन्तं वा पूर्वान्वयीव प्रतीयते। मध्यमणिन्यायेनोभयान्वयि वा। प्रथममघातिकर्मजं देहं प्रविष्टोऽपि तन्निष्प्रतापरिहाराय गच्छन् स्वेच्छया (न त्वघातिकर्मणा) दिगम्बरदेहमन्यान्य वा देहं प्रविशतीत्यर्थः। एवञ्च परममुक्ते नाघातिकर्मसंबन्धः शक्यमिति। जैनैः, 'बन्धोऽष्टविधः घातिकर्मचतुष्टयम् अघातिकर्मचतुष्टयञ्च। जीवस्य स्वाभाविकगुणानां चतुर्णां ज्ञानदर्शनवीर्यसुखानां प्रतिघातकरं कर्म आद्यम्। अन्त्य शरीरसंस्थान-तदभिमानतत्स्थिति-तत्कारणभूतसुखदुःखोपेक्षाहेतुभूतम्' इत्येवोक्तत्वात् बन्धस्य कर्मबलात् मुनौ परिमाणमिति हास्यम्। द्विविधकर्मजदेहत्यागक्षणे इच्छाकृतदेहान्तरस्वीकारेऽपि हास्यतैवेत्युच्यते तृतीयपादेन।

इदं तु वैपुल्येन सुवचम्—चरमशरीरस्थितिसमये यत् परिमाणमासीत्, तस्य तच्छरीरवियोगानन्तरं न नाशः। पूर्वपूर्वमात्मपरिमाणनानात्वं संसारे उत्तरोत्तरदेहपरिमाणेनोपचयमानेन नाशित्वमासीत्। न त्वत्र पर्यमिति तदेव मोक्षे। अतस्तत्र कारणान्वेषणं व्यर्थमिति। तत्रोच्यते। एवंमति लोकन्यायविरोधात् आदिमतश्चरमपरिमाणस्य अणुपरममहदन्यलक्षणस्य अविनाशो न युक्तः।

कर्माविद्यादिचक्रे प्रतिपुरुषमिहानादिचित्रप्रवाहे
तत्तत्काले विपक्तिर्भवति हि विविधा सर्वसिद्धान्तसिद्धा ।
तल्लब्धस्वावकाशप्रथमगुरुकृपागृह्यमाणः कदाचित्
मुक्तैश्वर्यान्तसम्पन्निधिरपि भविता कश्चिदित्थं विपश्चित् ॥ २५ ॥

यदि यथाकर्मफलप्रद ईश्वरः, कर्माणि चानन्तानि अपरिमितकालभोग्यानि-तदा प्रागिव पश्चादपि कथं मोक्षोपायादिसिद्धिरित्यत्राह कर्मेति । चित्रप्रवाहेत्यनूक्ति परिहारकाकुगर्भा । तत्तदित्यादिना कस्यचित् कर्मिण प्रागलब्धप्रजापतिप्रभृतिपदनिदर्शनम् । विपक्तिः—कर्मणा सहकारिलाभ, फलविशेषोद्गतिर्वा । तथा च पातञ्जलम्—'जात्यायुर्भोगा. विपाकाः' इति । चार्वाकव्यतिरिक्ताः सर्वे सामग्री-

---

भा॰— कर्माविद्यादीति । तत्तदित्यादिनेति । प्रजापतिप्रभृतिपदनिदर्शनं विविधेत्यनेन पदेनेति द्रष्टव्यम् । तल्लब्धेति मुक्तैश्वर्यादिफलहेतुभूतभगवत्कृपामूलत्वोक्तिस्वारस्यानुरोधेन विपक्तिशब्दं व्याचष्टे-कर्मणां सहकारिलाभ इति । विपाकशब्दस्य फले प्रसिद्धिप्राचुर्यादाह-फलविशेषोद्गतिर्वेति । फलवाचिविपाकशब्देन तद्गतिर्लक्ष्यत इति भावः । फलवाचित्वे सम्मतिमाह—तथाचेति । सर्व-सिद्धान्तसिद्धेति विशेषणप्रयोजनमाह—चार्वाकव्यतिरिक्तेति । अविगानसूचितं फलमिति भावः ।

वी॰— अतस्तस्यैव संसारेऽपि स्थितिरिति, इष्यतामणुत्वमेवेति । इदं मनसिकृत्य तस्मादिति उपसंहारश्चतुर्थपादे । आस्माकनीत्या—अस्मत्सूत्रकारेण जैनाधिकरणान्तिमसूत्रोक्तनीत्या ॥ २४ ॥

एवं जीवस्य देहादिविलक्षणत्वज्ञानत्वप्रत्यक्त्वप्रतिदेहभिन्नत्वनित्यत्वाणुत्वादिकं निरूपितम् । अथ बन्धमोक्षदशातद्धेतुनिरूपणमारभते कर्मेति । श्लोकोऽयं श्रीमद्रहस्यत्रयसारोपोद्घाताधिकारेऽपि । इह=प्रकृतिमण्डले प्रतिपुरुषं पुरुषभेदेन चित्रः अनादिः प्रवाहो यस्य तस्मिन् कर्म-अविद्या-वासना-रुचि-प्रकृतिसंबन्धरूपे चक्रे । अविद्या=अज्ञानम्, तद्वशात् कर्म ; ततो वासना ; तदधीना कालान्तरे रुचिः ; तथाविधरागवशात् पुनर्जन्मरूपप्रकृतिसंबन्ध इति क्रमे कथ्यमानेऽपि कर्मणः प्रथमग्रहणम्, विहितनिषिद्धकर्मणामेव फलमेवहेतुत्वात् ; अन्येषां तच्छेषत्वात् । अत एव विपक्ति-र्नाम कर्मपरिपाकः। चक्रत्वञ्च प्रकृतिसंबन्धः पुनरविद्याहेतुरिति पुनःपुनः परिवर्तनात् । चार्वाकेतर-नानाजन्मवादिसिद्धान्तसामान्यसिद्धा कर्मविपक्तिः तत्त काले प्रजापति पशुत्वादिपदलाभोचितकाले विविधा भवति हि । एतद्वैविध्ये स्वीकृते वक्ष्यमाणार्थे कः संदेह इति भाव.। अतः तया कर्मविपक्त्या लब्धः स्वावकाशः यया तया । स्वपदं कृपापरम् । प्रथमगुरोर्भगवतः कृपया गृह्यमाण. । प्रवाहे पतितस्य हस्तेनोद्धरणाय ग्रहणवदिदं कृपया ग्रहणम् । प्रागेव ग्रहणं कुतो नेत्यत्रोक्तं स्वावकाशेति । कृपा हि व्याजसापेक्षा । दुर्मोचोद्धरकर्मकोटिनिविडत्वेऽपि कृपा कार्यं करोतीति भावः। उद्धारकभुजोऽपि ग्रहणार्हपतितपुरुषावाप्तिप्रतीक्षः । कदाचित्=एताव पर्यन्तं तदभावेऽपीति यावत् । मुक्तैश्वर्यं अनुभवपूर्वककैङ्कर्यम्। तत् अन्ते यस्याः सा संपत् तत्त्वज्ञानवैराग्योपायलाभादि । तन्निधिरपि भविता । विपश्चित् देहातिरिक्तात्मवित् । न जायते म्रियते वा विपश्चित् इति ह्युच्यते । इत्थमिति उपोद्-घाताधिकारोक्तरीत्या गुरूपसत्तिमुखेनेत्यर्थः । यद्वा इत्थम् तत्तत्फलान्तरप्राप्तितुल्यम् । जन्मभेदेन कर्मपरिपाक इत्येतावत् सर्वसिद्धान्तसिद्धम्। तत्र प्रजापतिपशुत्वादिपदवैचित्र्यं वैदिकोक्तसंमतम्।

अनूक्तिः=अनुवादः । परिहारकाकुगर्भा=प्रवाहस्यैव परिहारः किं नेति ज्ञापनगर्भा । निदर्शनम्—उत्तरार्धेन मुक्तैश्वर्यस्य प्रजापत्यैश्वर्यादेरिव पूर्वार्धोक्तं दृष्टान्तरूपम् । उत्तरार्धे

प्रवाहवैचित्र्यात् संसरतां मुक्तिहेतूपनिपातमिच्छन्ति । अतो नानानादिसंसारवादिना केनापि विमन्तव्य-(वदितव्य)मित्यभिप्रायेण सर्वसिद्धान्तसिद्धत्वोक्तिः । तच्छब्देनानुकूलविपक्तिविशेषः परामृश्यते । स्वशब्दः कृपाविषय. । सम्पदिह विवेकवैराग्यादिरूपा । अपिः संभावनार्थः, समुच्चयार्थो वा । इत्थमिति । प्रकृतिपुरुषादितत्त्वचिन्ताप्रकारेण, यद्वा हिरण्यगर्भादिविपाकवदित्यर्थः ।

ननु हिरण्यगर्भादिपदविपक्तिः स्वस्य प्रागसिद्धाऽपि पुरुषान्तरसिद्धजातीयेति चेत्— तत्त्वज्ञानवैराग्यादिसम्पदपि तथैव । दृष्टं चैतद् गुरुशिष्यक्रमे ॥ आद्यमुक्तस्य ततः पूर्वमदृष्टजातीयेति चेन्न ; आद्यमुक्तानिरुक्तेः । यद्यसौ पूर्वमुक्त एव, उक्तोत्तरमेतत् । अथ मुक्तेष्वादिः, स कथं त्वया विदितः ? ततः पूर्वं मुक्ताभावादिति चेत्, तमपि कथं वेत्थ ? अनादिमुक्तौ व्याघातादिति चेन्न ; मुक्तप्रवाहे व्याघाताभावात् । न ह्यनादिमुक्तः कश्चित् बध्यते, साध्यमोक्षो वा भवेत् ; येन व्याघातः स्यात् ; किंतु, अनादिबद्धाः सर्वेऽपि लब्धोपायाः क्रमेण मुच्यन्ते । तत एव मोक्षशास्त्रप्रामाण्यं निर्बाधमिति ॥

इति संसरतां प्रत्यापत्तिहेतुविशेषः-कर्मानन्त्येऽपि मोक्षसंभवोपपादनम् ॥ २५ ॥

---

आ— स्वशब्दस्य सन्निहितप्रथमगुरुपरामर्शित्वशङ्काव्यावृत्त्यर्थमाह—स्वशब्दः कृपाविषय इति । अपिशब्दस्यौचित्यातिशयाद् भवितेत्यनेनान्वयमभिप्रेत्याह—अपिः सम्भावनार्थ इति । समुच्चये प्रसिद्धिप्राचुर्यात् पूर्वेणान्वयमभिप्रेत्याह—समुच्चयार्थो वेति । हिरण्यगर्भादिपदसमुच्चयार्थ इत्यर्थः । सम्पत्प्राप्तिप्रकारस्य वक्तुमुचितत्वात् इत्थंशब्दं तत्परतया व्याचष्टे—प्रकृतिपुरुषादितत्त्वचिन्ताप्रकारेणेति । तत्त्वचिन्ताप्रकारस्य पूर्वं शब्दत उपादानाभावात् 'इत्थं'शब्दस्य च शब्दोपात्तपरामर्शित्वस्वारस्यात् विविधपदोपात्तहिरण्यगर्भादिविपाकतौल्यपरतया व्याचष्टे—यद्वा हिरण्यगर्भादीति । मोक्षशास्त्रप्रामाण्यान्यथानुपपत्त्याऽपि विवेकादिसम्पत्प्राप्तिरङ्गीकार्येत्यभिप्रेत्याह—तत एवेति ॥ २५

भा— तच्छब्देन सकलविपक्तिग्रहणे तस्या मोक्षार्थानन्वयादाह अनुकूलविपक्तिविशेषः इति । स्वपदेन गुरोर्वा विपश्चितो वा न ग्रहणम् किं तु कृपाया इत्याह स्वशब्द इति । ननु भवितेति लुट्प्रयोगः कथम्, पूर्वमपि बहूनां भूतत्वादित्यत्राह अपिः संभावनार्थ इति । भवितेति तृजन्तम् । नात्र कालविवक्षा । कालत्रयेऽपि भवनसंभावना अपिनोच्यते । अपि भवितेत्यस्य भवेदित्यर्थः । प्रजापत्यादिपदैः सह निर्दिष्टसमुच्चय इति स्वरसार्थमाह समुच्चयेति । अस्य श्लोकस्योपोद्घाताधिकारस्थत्वात् गुरूपदेशमुखेनेत्यर्थं मनसिकृत्याह प्रकृतीति । प्रकृतसंदर्भानुगुणमाह यद्वेति । कथं भवेदिति प्रश्ने इत्थमिति प्रत्युक्तिः । उपलभ्यमानरीत्येत्यर्थः ।

निदर्शनवैषम्यं शङ्कते नन्विति । अदृष्टजातीयेति । विरक्तिरिति विशेष्यम् । यद्यपि दृष्टजातीयत्वाभावेऽपि प्रकृते किम्; इदानीं दृष्टत्वादेवाऽऽक्षेपशमनादिति, तथापि आद्यत्वमनङ्गीकृत्य यथावत् खण्डयति अनिरुक्तेरिति । उक्तोत्तरम् । पूर्वं मुक्तानां बहूनामङ्गीकारात् । तमपीति= पूर्वं मुक्ताभावमपीत्यर्थः । नन्वादिमुक्तास्वीकारे अनादिमुक्तस्वीकारः स्यात् । मुक्तेरनादित्वे मुक्तित्वमेव कथम्? मुक्तिर्हि बन्धध्वंसः सादिरिति शङ्कते अनादिमुक्ताविति । न मुक्तिव्यक्तावनादित्वम्, किंतु मुक्तप्रवाहे इत्याह मुक्तप्रवाह इति । न हीति । नित्यसूरिषु तत्पदप्रयोगो भाक्त इति भावः । तत एवेति । केषांचित् कदाचित् मुक्तिदर्शननिर्विघ्नसंभवादेवेत्यर्थः । निर्बाधमिति । असंभवबुद्ध्या शास्त्रस्यातात्पर्यमयुक्तमिति भावः । प्रत्यापत्तिः—प्रतिनियतस्वस्वरूपप्राप्तिः ॥ २५ ॥

कृच्छ्रात् संवर्तकष्टाद्यपगमजनितस्थूलदेहस्य जन्तोः
जाग्रत् स्वप्नः सुषुप्तिर्मरणमथ(पि?) मृतेरर्धसंपत् दशाः स्युः ।
सर्वं दुःखान्धकारस्थगितमिह, सुखं त्वत्र खद्योतकल्पं
त्यक्त्वा शुद्धाशयास्तन्निरवधिकसुखां निर्विविक्षन्ति मुक्तिम् ॥ २६ ॥

निर्वेदं सन्धुक्षयन् मुमुक्षोत्पत्तिप्रकारमाह-**कृच्छ्रादिति**॥ **मृतेरर्धसंपत्**-मूर्छा। तथा च सूत्रम्, "मुग्धेऽर्धसंपत्तिः परिशेषात्" इति। **सर्वम्**-अनुकूलतया भाव्यमानमपि। ननु स्वर्गसाराज्यादिष्वनून सुखमप्यस्तीत्यत्राह-**सुखं त्विति**। अल्पास्थिरत्वव्यक्त्यै खद्योतदृष्टान्तः। **तत्**-विषमधुकल्पं वैषयिकसुखम्। निरवधिकत्वोक्त्या निर्दुःखत्वमपि लक्ष्यते। **निर्विविक्षन्ति**-भोक्तुमिच्छन्ति इति।

इति मुमुक्षोत्पत्तिप्रकारः ॥ २६ ॥

---

श्री— ननु तत्तत्काले विपक्किरिति विवक्षितप्रजापतिपशुपतिप्रभृतिपदपरमानन्दत्यागेन किमिति मुक्तैश्वर्यशब्दाभिमते भगवद्दास्ये कश्चित् प्रवर्ततेत्यत्र मुमुक्षां संधुक्षयति कृच्छ्रादिति। ततो वै दुर्निष्प्रयतरम्' इति कृच्छ्रनिष्क्रमणत्वं भाषितम्। तदेवात्रापि कृच्छ्रशब्दो महता श्रमेण अतिविलम्बेनेत्यर्थपर्यवसायी। कृच्छ्रादित्यस्य जनितेत्यत्रान्वयः। विलम्बोपपादनं संवर्तकष्टाद्यपगमेति। सृष्ट्यन्ते मृतस्य पुनः स्थूलदेहप्राप्तिः संवर्तस्य=प्रलयस्यापगमेनैवेति महिष्ठो विलम्बः। नरकमार्गयानयातनादिरूपकष्टमनुभविष्यतश्च तदपगमेनैव सुखार्थस्थूलदेहप्राप्तिः। आदिना स्वर्गादितोऽवरोहफलानुभवप्रतिबन्धककर्मादिग्रहणम्। एवं संवर्तकष्टादिना वृथैव सुदीर्घं कालमतिवाहनात् कृच्छ्रादेवात्र स्थूलदेहो जनितो भवति। प्राप्तेऽपि देहे न सर्वदा सुखम्—जाग्रदाद्यनेकदशाक्रमणात्। जाग्रत्पदं प्रयोगबाहुल्यात् भावप्रधानं जागरदशार्थकम्। मृतेरर्धसंपत् मरणार्धांशप्राप्तिः। मूर्छेति यावत्। मूर्छायाः मरणपूर्वभावित्वेऽपि पश्चान्निर्देशः तस्या अनियतत्वात्। अथेत्यत्र अपीति स्यात्। मृतेरर्धसंपदपीत्यन्वयः। अत्र संवर्तकष्टादिकालेष्विव सुषुप्तिमूर्छामरणेषु न सुखस्यावसरः। स्वप्ने ईषत्। जागरे च ततः किञ्चिदधिकसुखसद्भावभ्रमो जगतः। वस्तुतः सर्वं=संवर्तकष्टादिकं सुषुप्त्यादिकं स्वप्नजागरद्वयमपि दुःखान्धकारस्थगितम्। अन्धकारः=अज्ञानम्। तेन व्याप्तम्। विवेकिबुद्ध्या सर्वस्य प्रतिकूलत्वात् दुःखत्वम्। इहेति, प्रकृतिमण्डले सत्यलोकादावपीत्यर्थः। अत्र कतिपयदशायाम् यत् सुखं तदपि खद्योतकिमिप्रकाशसमम्। सुखं त्वत्र खद्योतकल्पमित्यनेन कैवल्यमपि क्रोडीक्रियते। तस्य तस्य ऐश्वर्यानुभवपरमात्मानुभवोभयराहित्यात् कैवल्यपदवाच्यस्य खद्योतवदणुजीवस्वरूपमात्रविषयकत्वेन खद्योतकल्पत्वात्। एवं विवेचनार्हमनश्शुद्धिमन्तः शुद्धाशयाः प्राजापत्यप्रभृतिविभवं प्रेक्ष्य पर्यायदुःखं तत् त्यक्त्वा मुक्तिं निर्वेष्टुम्=अनुभवितुमिच्छन्ति। मुक्तिस्तु निरवधिकसुखरूपा। तत्रानुभूयमानसुखाधिकस्य कस्यचित् सुखस्याभावात् निरवधिकत्वम् उत्कृष्टावधिराहित्यम्। एवम् उत्तरावधिरप्यवधिः; तत्सुखरहित उत्तरकालः। तद्रहितत्वमपि निरवधिकत्वम्। तस्य सुखकालोत्तरत्वञ्च सुखदुःखोभयाभावकालत्वाद्वा दुःखकालत्वाद्वा वक्तव्यम्। तत्रास्तीत्युक्त्या निर्दुःखत्वसिद्धिः। मध्ये मध्ये दुःखाभावोऽप्यतोक्त एव; सुखदुःखयोरेकक्षणेऽनुत्पत्त्या, दुःखोत्पत्तौ तस्य सुखोत्तरावधित्वस्याऽऽवश्यकत्वात्। तथाच दुःखामिश्रदुःखानुदर्कनिरतिशयसुखरूपैव मुक्तिरिति एतत्सद्भावं निश्चितवतामत्रप्रवृत्तिर्न भवितुमर्हति। एवं निरवधिकशब्दतो लाभादेव वृत्तौ, निर्दुःखत्वमपि लक्ष्यते इत्युक्तम्, न तु उपलक्ष्यत इति ॥ २६ ॥

कश्चिच्चेत् नित्यबद्धः, किमयमहमिति स्यान्मुमुक्षोरुपेक्षा
मैवं, युक्तस्य मुक्तिर्भवति दृढमिति प्रत्ययात् तत्प्रवृत्तेः ।
नो चेत्, स्यामन्त्यमुक्तः किमहमिति न केऽप्यद्य मुक्तौ यतेरन्
सर्गस्थित्यादिसन्तत्यविरतिरत इत्येवमेकेऽन्यथाऽन्ये ॥ २७ ॥

इह सयूथ्याः परे च केचिदाहुः—इतः पूर्वमिव कारणाभावात् केचित् पश्चादपि न मोक्ष्यन्ते । (?)"एकं पादं नोद्धरति स्वलीलार्थं समुद्धरन् । तं चेत्, सततं च मृत्युजन्म नामृतं भवेत्", "क्षिपाम्य-

---

व्री— एवं मुमुक्षा उपपादिता । सेयं किं सर्वेषां बद्धानां क्रमेण संभाव्यते, उत कतिपयवर्जमेवेति विमर्शे मोक्षानर्हनित्यसंसारिवर्जमिति माध्वाः । अस्मदीयाश्च केचित् वाक्यस्वारस्यादिदमिच्छन्ति । अत्र पक्षेऽनुपपत्तिं प्रथमपादेनोद्भाव्याथ पादद्वयेन तां परिहरति कश्चिदिति । एवमाक्षेपः—नित्यसंसारितया केषाञ्चिदनभ्युपगमे कालक्रमेण सर्वमुक्तौ सृष्टिस्थितिसंहृतिसंतानोच्छेदः स्यादिति युष्माभिरुच्यते । एवं नित्यबद्धस्वीकारे मोक्षार्थं न कोऽपि प्रवर्तेत, सर्वस्यापि किमहं अयम्=नित्यबद्धवर्गनिविष्ट इति शंकया, किं प्राक्तनसुखमप्युपेक्ष्य संदिग्धमोक्षार्थप्रयासेनेति मोक्षोपेक्षा स्यात् । अतो मुमुक्षुत्वमेव निवर्तेतेति ॥ मैवं शंक्यम्—नित्यबद्धत्वेनोच्यमानानां भगवता अध एव क्षिप्तानां मोक्ष-मोक्षप्रद-तदुपायादिविषयश्रद्धालेशस्याप्यसंभवात् । युक्तस्य-श्रद्धया प्रवृत्तस्यापि कस्यचिन्मुक्तिर्न भवतीति अस्माभिरनुक्तेः । नाहं नित्यबद्धः आस्तिक्याद्वेषादिमत्त्वादित्याद्यनुमानात् प्राप्तमुमुक्षापरित्यागाप्रसक्तेः । एवं दोषाभावेऽपि नित्यबद्धस्वीकारिपक्षे दोषारोपे तदस्वीकारिपक्षेऽपि दोषः सुवच इति प्रतिबन्दीमाह नो चेदिति । नो चेत्—एवं परिहारस्य परिहारत्वाभावे, नित्यबद्धास्वीकारपक्षेऽपि अन्यादृशी शंका स्यात् । तामाह स्यामिति । सर्वेषां मुक्तिरस्तीति निश्चयेऽपि न सर्वेऽपि अद्यैव मुच्यन्ते । नैकजन्मनि मुच्यन्ते । तथात्र सृष्ट्यवसानेऽपि तदनन्तरमपि कतिपये मुच्येरन् । यद्यहं तादृशः अन्त्यभूनमुक्तः स्याम्—तावत्कालानन्तरमेव मुक्त्यर्हः स्याम्, किमद्य वृथा प्रयासेनेति मत्वा एकैकोऽप्यद्य न मुक्तौ यतेतेति । यथात्र समाधिः—अनुद्युक्तानामेवान्ते मुक्तिः, उद्युक्तानां शीघ्रमेवेति, तथा नित्यबद्धपक्षेऽपि अनुद्युक्तानामेव नित्यबद्धता, न तु उद्युक्तानामिति समाधिर्भाव्य इति । एवमाशंकापरिहारात् नित्यबद्धस्वीकारो नायुक्तः । अन्यथा सृष्ट्यादिलीलोच्छेदस्य स्वीकार्यता चेति एवमुक्तं पक्षमुपसंहरति सर्गेत्यादिना एके इत्यन्तेन । पक्षान्तरमाह अन्यथाऽन्ये इति लीलोच्छेदोऽस्तु ; किं तेन ? मा वा भूत् आत्मानन्त्यात् । प्रमाणवचनानि तु अन्यार्थकानि । भगवतो निर्हेतुकदयायाः कतिपयजीवाविषयकत्वकल्पनानौचित्यादिति श्लोकार्थः ।

इहेति । एतावन्तं कालमिवेतः परमपि न मोक्ष्यन्त इत्याशंकाशमनाय श्लोकद्वयं हि प्रवृत्तम्, तत्रेत्यर्थः । एकं पादमिति वचनं अमृतं भवेदित्यन्तमेकश्लोकरूपमिति भारते उद्योगपर्वणि सनत्सुजातीये दर्शनादेष्टव्यम् । तत्रोपलभ्यमानः पाठः, "एकं पादं नोत्क्षिपति सलिलाद्धंस उच्चरन् । तं चेत् सततमूर्ध्वाय न मृत्युर्नामृतं भवेत् ॥" इति । तत्र न तदर्थः स्पष्टः । अत्र भावप्रकाशकारैः तत्र शांकरभाष्ये नोत्क्षिपतीत्यस्य नोद्धरतीति व्याख्यानमिति दर्शयित्वा श्लोके तत्तदादर्शपाठभेदाः प्रदर्शिताः । स्वलीलार्थमिति पाठस्तु न कुत्रापि । उत्तरार्धे, 'स चेदुत्क्षिपेत् पादं न मृत्युर्नामृतं भवेत्' इति पाठोऽपि क्वचिदादर्शेन तत्र दर्शितः । शांकरमतरीत्याप्यर्थः एवमस्फुटः—हंसो भगवान् एकं पादं पादोऽस्य विश्वा भूतानीत्युक्तं जीवरूपं सलिलात्=संसारात् नोद्धरति । जीवस्वैकपक्षतां झटिति न प्रयच्छतीत्यर्थः । तं चेत् उद्धरेत्—तत्पक्षतां चेत् प्रयच्छेत्, पश्चात् मृत्युरमृतमिति द्वयं न भवति तदेक-

जन्तमशुभान्....मामप्राप्यैव...." इत्यादिभिरेतत् सिद्धम् । तस्मिन् पक्षे बाधकं शङ्कते कश्चिदिति । संदेहेऽपि प्रवृत्तिः संभवतीत्यभिप्रायेण प्रतिवक्ति मैवमिति । अयं भावः—

श्लो – स्वरूपे योग्यभावेऽपि सहकार्यव्यवस्थितेः । विमुक्तिर्मम सिध्येद्वा न वेति विचिकित्सते॥
अनिर्धार्यापि यः कश्चित् तथ्यमात्म(त्म?)मनोरथम(थः) । पाक्षिके फलभूयस्त्वे सांयात्रिकवत् ईहते॥
यथाकथंचिदारब्धेऽप्यापवर्गिकवर्त्मनि । प्रसीदन्नीश्वरो बुद्धिं प्रयच्छेन्निश्चलामिति ॥

उपायविधानशास्त्रार्थनिश्चयात् स्वस्य [च] तदानुगुण्यदर्शनात् निस्संशयोऽपि कश्चित् प्रवर्तेतेत्याह युक्तस्येति। अन्यथा कथञ्चित् निष्फलप्रयत्नोऽप्यस्तीति निश्चयात् स किमहमिति कृष्यादावपि न प्रवर्तेतेति भावः । नो चेदित्यादिनाऽपि प्रतिबन्धन्तरोक्तिः । स्वात्मन्यन्त्यमुक्तत्वशङ्कायामपि कृतांशः फलिष्यत्येवेति शास्त्रतोऽवगमात् प्रवर्तेतेति चेत्—एवं नित्यबद्धसद्भावनिश्चयेऽपि स्वयं निवृत्तिधर्मयोग्यतया दृष्टः कृतमपि

---

भूपा— कश्चिच्चेदिति । अनिर्धार्येति । आत्ममनोरथं तथ्यमनिर्धार्यापीत्यन्वयः। 'मैवम्' इति संदेहेऽपि प्रवृत्त्युपपत्तिं प्रदर्श्य, निश्चयेन प्रवृत्त्युपपत्तिपरं युक्तं स्यादितीत्यवतारयति उपायविधानेति॥२७॥

श्री– परिशेषादिति । प्रकृते चेदं वाक्यमस्मन्मते जीवेषु केषाञ्चिन्मोक्षणं न भवतीति स्थापनायोपात्तम्। तदयमर्थः–हंसो भगवान् प्रायेण जीवान् संसारात् मोक्षं प्रापयन् एकं पादम्--आसुरादिरूपमेकं भागं नोद्धरति । तमपि पादमयमूर्ध्वलोकायोत्क्षिपेत् चेत्, पश्चात् मृत्योरमृतस्य चाभावः सततं स्यात्; मरणमोक्षणादिविषयः कोपि न स्यात्; सर्गादिरुच्छेदः स्यादिति यावत् । अत्र ग्रन्थे दृष्टे पाठे चायमर्थः– जीवान् समुद्धरन् हंसः एकमंशं नोद्धरति । किमर्थम्—स्वलीलाद्यर्थम्–आसुरादेः कर्मानुगुणशिक्षणमूलस्वलीलारसानुभवार्थम्; सर्गाद्यनुच्छेदार्थञ्च । तं चेदित्यत्र नोद्धरतीत्यस्यानुषंगः, तदनुद्धरणादिति यावत् । सततञ्च मृत्युजन्म । मृत्युश्च जन्म चेति समाहारैकवद्भावः । जन्ममरणानुवृत्तिः सदा । अतस्तस्य पादस्य नामृतं–न मोक्ष इति । सर्वमोक्षस्वीकारपक्षे तु पूर्वार्धेन कतिपयामोक्षणपक्ष उक्तः, उत्तरार्धेन सर्वमोक्षणपक्ष उक्त इति पक्षद्वयदर्शी श्लोकोऽयमिति । तथा च तं चेत् उद्धरेत् इति स्वरसो नञं विनाऽनुषंगः । सततं सार्वकालिकं मृत्युजन्म न भवति । अमृतं—मोक्ष एव भवेत् सर्वेषामिति । अथवा नित्यबद्धसद्भावपक्षपरदेवार्थः । एवं नोद्धरति चेत्, तर्हि इदं स्यादिति दोषापादने तात्पर्यम् । भगवन्निर्हेतुकृपाभंगः कतिपयविषये स्यादित्युक्तं भवतीत्यलम् ।

मैवमित्यत्र युक्तस्येत्यादिर्हेतुरिति स्पष्टम् । एवमपि मैवमित्यस्य स्वातन्त्र्येणापि खण्डकत्वमाह अयं भाव इति । एवं मा–संशयसंभवाच्च प्रवर्तेतेति न वक्तव्यम्; संशयेऽपि प्रवृत्तेः । अहं मोक्षयोग्य इति निश्चयेऽपि सहकारिभूतभक्त्याद्युपायनिष्पत्तिनियमाभावात् कश्चित् मोक्षे विचिकित्सते= संशयवान् भवति । अतः नित्यबद्धत्वसंदेहादेव संशय इति न । संशयानोऽपि पाक्षिकेऽपि विषये प्रवर्तते । पाक्षिकत्वं नियतफलकत्वाभावः। प्रवृत्तौ हेतुरुच्यते फलभूयस्त्वे इति । भवति चेत्, भूरि किल स्यादिति लोके अल्पपणादौ दृश्यते हि प्रवृत्तिः । सांयात्रिकवत् नौयात्रया पण्यव्यवहारप्रवृत्तपुरुषवत् । स्वस्यापायमपि सोढ्वा हि स प्रवर्तते । मनोरथ इति पाठे इत्यत्र आत्मेत्यत्र आत्तेति युक्तम् । अन्यथा क्लिष्टत्वात् । दृष्टान्तेऽनन्वयाच्च । तथैव पाठे तु आत्मनो यत् मनः तदेव रथो यस्येति विग्रहः कार्यः। संभावनयापि प्रवृत्तिमाह यथाकथञ्चिदिति । एतदारम्भावतारिका वा । तदा प्रयच्छेन्निश्चलामित्युपायविधानशास्त्रेत्यन्वयः । प्रतिबन्धन्तरेति अन्यथेत्याद्युक्तप्रतिबन्धन्येत्यर्थः ।

फलिष्यतीति किं न प्रवर्तेत ? एवं नित्यबद्धे संभवति, "अव्युच्छिन्ना ततस्त्वेते सर्गस्थित्यन्तसंयमा" इत्यादिशास्त्रस्यार्थवत्त्वसिद्धिरित्याह **सर्गेति**। अयमेव सिद्धान्त इति निश्चयव्युदासायाह **इत्येवमेक** इति। पक्षान्तरमाह **अन्यथाऽन्ये** इति। स्वरूपयोग्याना(?)शुकादिवत् कदाचित् सहकार्यागमात् मुक्ति स्यादेव, "तदा ससारपान्थस्य याति मोहश्रम शमम्" इत्यादे सङ्कोचकाभावादिति भाव ॥

**इति नित्यससारिमदसद्भावपक्षौ ॥ २७ ॥**

**निश्शेषात्मापवर्गे विह(र)तविहरणो विश्वकर्ता तदा स्यात्**
**नित्य चेत् कोऽपि दुःखयेत्, निरुपधिकदयाहानिरस्येति चेन्न ।**
**पक्षः पूर्वो यदि स्यात्, विहरणविरतिः स्वेच्छया नैव दोषः**
**शिष्टे पक्षे निरुद्धा निरुप(रव)धिकदया कुत्रचिन्नित्यमस्तु ॥ २८ ॥**

द्वयोरपि पक्षयोर्दोषमाशङ्क्य प्रत्याह **निश्शेषेति**। उत्तरार्धं पक्षद्वयदोषपरिहारार्थम्। पुरुषान्तर प्रतिरोधादिना लीलाविरतौ हि दोष, न तु स्वेच्छया, प्रवृत्तिवत् निवृत्तेरप्यैच्छिकत्वात्। क्वचिन्नित्य दयारोधोऽपि तत्तज्जीवकर्मवशात्। अत प्रतिबन्धरहितेषु सावकाशा कृपा, अल्प याजेनानन्तापराध सहनाच्च ॥ **इति पक्षद्वयप्रसक्तदोषपरिहारः ॥ २८ ॥**

**भक्तिर्मुक्तेरुपायः श्रुतिशतविहितः, सा च धीः प्रीतिरूपा**
**तन्निष्पत्त्यै फलेच्छाद्युपधिविरहित कर्म वर्णाश्रमादेः ।**
**ज्ञानध्यानादिवाचां समफलविषया सैव युक्ता प्रतिष्ठा**
**सामान्योक्तिः समानप्रकरणपठिता पर्यवस्येत् विशेषे ॥ २९ ॥**

---

पु॰— भक्तिर्मुक्तेरिति। भक्तिशब्दस्य स्त्रीलिङ्गतया 'विहित' इति पुंलिङ्गनिर्देशो न युक्त इत्याशङ्क्यान्वय दर्शयति—श्रुतिशतेति ॥ २९ ॥

वी— सृष्टिपद विहाय सर्गपदप्रयोग प्रमाणप्रदर्शनायेत्याशयेन अव्युच्छिन्ना इति प्रमाणमुपात्तम् ॥

विहृतेति प्राच्य पाठ साधीयान्। विहरणप्रवृत्तस्येश्वरस्येष्टा लीला विहन्येतेति शङ्कासार-स्यात्। तृतीयपादे विहरणविरतिरिति युक्तम्। न तदिष्टस्य विहरणस्य विघात, किं तु स्वयमेव सर्वमपि मोक्ष प्रापय्य कृतकृत्यो विहरणाद्विरमतीति,समाधानौचित्यात्। विहरणविरतिर्दोषो नैव भवति, किं तु गुण एव। शिष्टे पक्षे=द्वितीयपक्षे। कुत्रचित्=असुरादिविषये। नित्य निरुद्धेति। दण्ड्यव्यतिरिक्तविषय एव दयाप्रसर इति सौम्यम्। नित्यदण्ड्यश्च तन्न्यायेन तद्दयागोचर एव न भवतीति ॥ २८ ॥

एव तावत् मुमुक्षा सर्वसाधारणी न वेति व्यचारि। अथ मुमुक्षूणा मोक्षोपाय क इति विचार्यते। भक्तिरिति। इत्यन्वय इति। उपायस्य श्रुतिविहितत्व ज्ञातम्। भक्तिरूपत्वमत्र ज्ञाप्यम्। अत एव श्रुतिशतविहिता भक्तिरिति नोक्तम्। भक्तित्वेन रूपेण तस्य श्रुत्यविहितत्वात्। अत एव श्रीभाष्ये, वेदान्तवाक्यैर्विधित्सित ज्ञान किंरूपमिति विवेचनीयमित्यारभ्य तस्य ज्ञानस्य ध्यानोपासनादिरूपत्वमपि सामान्यविशेषन्यायेनोपपाद्य भक्तिरूपत्वे स्पष्टश्रुत्यदर्शनात् नायमात्मेति श्रुतिव्यञ्जितत्वमेव प्रदर्श्य, ईदृशान्यज्ञनोक्ते भक्तिस्पष्टोक्तिमता गीतावाक्येनोपबृंहितत्वमभापि। एताधदभिप्रेत्य श्रुतिशतविहित ज्ञानध्यानोपासनदर्शनादिरूप उपाय सर्वोऽपि भक्तिरेवेति अत्रोक्तम्।

"धर्मस्य तत्त्वं निहितं गुहायाम्" ; किंपुनर्निवृत्तिधर्मस्य ? अतः कथं कश्चिदपि मोक्ष्यत इत्यत्र मोक्षोपायस्वरूपं निष्कर्षति **भक्तिरिति** ॥ श्रुतिशतविहितो मुक्तेरुपायो भक्तिरित्यन्वयः । ननु ब्रह्मविद्यैव मुक्तिरिति सिद्धान्तः । **भक्ति**शब्दस्त्वष्टविधत्वादिवचनैरन्यार्थः । 'भज सेवायाम्' इति च सामान्यतः पठ्यते ; क्वचित्तु रूढिकल्पने गौरवमित्यत्राह **सा चेति** । धीरित्यनेन ब्रह्मविद्यात्वाविरोधस्थापनम् । **प्रीतिरूपेति** रूढिनिमित्तसूचनम् । महनीयविषये प्रीतिर्भक्तिः । प्रीत्यादयश्च ज्ञानविशेषा इति वक्ष्यते । "स्नेहपूर्वमनुध्यानं भक्तिः" इति चोपायो विशेष्यते । 'अपाम सोमममृता अभूम" इत्यादिदर्शनात् कर्मभिरेव मुक्तिः किं न स्यादित्यत्राह **तदिति** । केवलधर्माणां क्षयिफलत्वनिश्चयात् तत्रामृतत्वादिवचनमन्यपरम् । विद्याङ्गेषु तु मुक्तिसाधनत्वश्रुतिः स्तुत्यर्था । अतः, "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" इत्यादिभिरभिप्रेतं संनिपत्योपकारकत्वमिह युक्तमिति भावः । **फलशब्दो**ऽत्र स्वर्गादिविषय । फलसङ्गकर्तृत्वाभिमानत्यागे हि स्वरूपानुरूपफलसाधनाङ्गत्वमित्यभिप्रायेणोपाधिरहितत्वोक्तिः । उत्तरेण आदिशब्देन गुणनिमित्तादिसंग्रहः । ननु **वेदनध्यानोपासना**दिशब्दैर्मुक्त्युपायोक्तौ यथार्हं विकल्पः स्यादित्यत्राह **ज्ञानेति** । **समफलविषयेति** एकत्र विश्रमौचित्यप्रदर्शनम् । संभवति गत्यन्तरे अष्टदोष विकल्पो न न्याय्य. । न चैकस्मिन् अधिकारिणि गुरुलघुविधि स्यात् । नापि ज्योतिष्टोमाग्निहोत्रादिवत् इह फलतारतम्यसंभव इति भावः । **प्रतिष्ठा** तत्तत्सामान्याकारैः प्रतिपाद्येत्यर्थः ।

---

ठी— अष्टविधत्वादीति । 'भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छेऽपि वर्तते' इत्युक्तं मद्भक्तजनवात्सल्यमित्यादिविधाष्टकम् । आदिना नवविधत्वग्रहः । "श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥ इति पुंसाऽर्पिता भक्तिः" इत्युक्तेः । क्वचित्=स्वाभिमतपरभक्तिरूपविद्यामात्रे । विशेष्यत इति । नानार्थकल्पने गौरवात् प्रीतिरेव भक्तिः । अर्थान्तराणां प्रीतिप्रदर्शकत्वात् प्रीतिघटितत्वाच्च तत्र प्रयोगः । 'स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते' इति वचनञ्च औपनिषदोपायसंदर्भे भक्तिपदग्राह्यपरिभाषणमिति भावः ।

ननु मुक्त्युपायसामान्ये भक्तित्वकथनमयुक्तम् । कर्मणोऽपि तथाश्रुतत्वादित्यत्र द्वितीयः पादः । कर्मणो भक्तिनिष्पादकत्वस्य, अविद्यया मृत्युं तीर्त्वा, विविदिषन्तीत्यादिश्रुतिसिद्धत्वात् न मोक्षसाधनत्वम् , किंतु तदङ्गत्वम् । तदपि न काम्यस्य, किंतु त्रिविधत्यागयुक्तस्येत्याह फलेच्छेति । तथाच 'अपाम सोमममृता अभूम' इति यदि काम्यान्तर्गतोक्तिः, तदा अमृतत्वं देवानाममरत्ववदौपचारिकम् । यदि निवृत्तिधर्मान्तर्गतवचनम् , तर्हि अंगे अङ्गिफलनिर्देशः, यथा प्रजापतिवाक्ये जीवात्मोपासनं प्रस्तुत्य, 'अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य' इति इति भावः । एवमष्टविधनवविधभक्त्यन्तर्गतकर्मविषयेऽपि द्रष्टव्यम् । भक्तिपरीवाहात्मकमपि किञ्चित् कर्म भवति स्तुतिनमस्कारादिरूपम् । संनिपत्योपकारकत्वमिति । अङ्गत्वं द्वेधा—अङ्गिशरीरनिष्पादनोपयोगितया, निष्पन्नाङ्गिसहकारित्वेन च । आद्यमवहननादि । द्वितीयं प्रयाजादि । अत्र कर्मणां विविदिषन्तीति वेदनार्थे विनियोगात् वेदनस्य तृतीयया कर्मसाध्यत्वावगतेः कर्मणां पापशमनरजस्तमोनिबर्हण-सत्त्वाभिवर्धनमुखेन ज्ञानोत्पादकतया दृष्टरीत्योपयोगात् संनिपत्योपकारकत्वम् । 'संनिपत्योपकारकमारादुपकारकाद् बलीयः' इति च मीमांसानिष्कर्ष इति । फलशब्दोऽत्रेति । अत्र पूर्वार्धे फलादीत्यादिना कर्मणि स्वतन्त्रस्वकर्तृकत्वस्वशेषत्वानुसंधानग्रहणम् । समफलविषया—फलं मुक्तिरूपम्, विषयः

ननु—"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते [ऽ] कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥" इति कठवल्लीवाक्यात् भक्तेर्ज्ञानहेतुताऽवगम्यते । गीयते च, "भक्त्या मामभिजानाति" इत्यादि । संजयश्चाह, "शुद्धभावं गतो भक्त्या शास्त्रात् वेद्मि जनार्दनम्" इति । अतो भक्तिसाध्यज्ञानविशेषात् मुक्तिः स्यादित्यत्राह सामान्येति । अयं भावः—भक्तेर्ज्ञानसाधनत्वश्रुतिः पर्वभेदेनानेकफलतया स्यात् । अत एव हि, "भक्त्या त्वनन्यया शक्यः" इत्यादिना ज्ञानदर्शनप्राप्तिसाधनत्वोक्तिः । "भक्त्या लभ्यस्त्वनन्यया" इति च नियम्यते । भक्तिसाध्यं प्रापकज्ञानमपि भक्तिलक्षणोपेतम् । अतो वेदनादिसामान्यशब्दानामिह पश्वादिन्यायात् संनिहितविशेषपर्यवसानं सिद्धम् ॥ २९ ॥

ध्यानाद्युक्त्या ध्रुवानुस्मृतिरिह विहिता ग्रन्थिमोक्षाय, सैव
स्पष्टा दृष्टिः तथैव श्रुतफलविषया, सेवनत्वादुपास्तिः ।
क्वाप्यैक्यं विद्युपास्यो(स्त्यो)र्व्यतिकरितगिरा, भक्तिमेवाह गीता
सर्वं तत् वित्तिमात्रे फलवति विफलं, तेन सैवं विशिष्टा ॥ ३० ॥

---

टी— उपास्य।कारः; उभयोः वेदनध्यानोपासनेष्वविशेष एव साम्यम् । वेदनादिना समौ फलविषयौ यस्याः सा युक्ता = उपपन्ना ; प्रतिष्ठा = पर्यवसानभूमिः । भक्तिसाध्यमिति । 'शुद्धभावं गतो भक्त्या' इति भक्तिपर्वसाध्यशास्त्रार्थज्ञानादिमूलकं परभक्तिरूपं भक्तिसाध्यत्वेन त्वदुक्तं प्रापकज्ञानमपि प्रीतिरूपापन्नत्वात् भक्तिलक्षणान्वितं भक्त्येति पदग्राह्यमित्यर्थः । पश्वादिन्यायात् = पशुच्छागनयात् पूर्वमीमांसोक्तात् सामान्यविशेषन्यायात् ॥ २९ ॥

एवं भक्तिमात्रस्योपायता, सामान्यविशेषभावश्चोक्तौ । क्वचिदंशे तमेव सामान्यविशेषभावं विशदयन् सामान्यविशेषन्यायवत् गमकान्तरतोपि सैक्यमाह ध्यानेति । ध्यानाद्युक्त्या, 'तस्याभिध्यानात् योजनात् तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः', 'ज्ञात्वा देवं मुच्यते सर्वपाशैः', 'तरति शोकमात्मवित्', 'सत्त्वशुद्धौ ध्रुवा स्मृतिः, स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' इत्युक्तिभिः ध्रुवानुस्मृतिः ग्रन्थिमोक्षाय विहिता । 'भिद्यते हृदयग्रन्थिः...तस्मिन् दृष्टे परावरे' इति वाक्यविरोधं वारयति सेति । स्पष्टा = अत्यन्तविशदा, सा = ध्रुवस्मृतिरेव दृष्टिरित्युच्यते । कस्मादित्यत्राह तथैव श्रुतफलविषयेति । तथैव = ध्रुवस्मृतिवदेव फलस्योपास्याकारस्य चेह श्रवणात् गुरुलघुविकल्पायोगात् ध्यानमेव दर्शनमिति । उपासनं पुनरितोऽपि विशेष इत्याह सेवनत्वादिति । उपास्तिर्नाम समीपप्राप्तिः वस्तुसंश्लेषः । सेवनं च प्राप्तिः संश्लेषः । दर्शनं दूरादपि भवति । दृष्टस्य वस्तुनः समीपगमनं सेवनमुपासनम् । यद्यपि अत्र वस्तुसंश्लेषो दुर्वचः; फलकाल एव तद्भावात् । अथापि प्रथमं जातस्य दर्शनस्य प्रत्यहमावृत्त्याऽत्यन्तवैशद्ये तदेवोपासनं सेवनम् । 'भज सेवायाम्' इति धातुबलात् तदेव भजनम् । ननु श्रीभाष्ये ध्रुवस्मृतेरुपासनत्वमुक्त्वा ततोऽप्यतिशयो दर्शनसमानाकारतेत्युक्तम्; अत्र कथं दर्शनादप्यतिशय उपासन इति चेत्—उपास्तिप्रयोगस्य बहुप्रकारेण दर्शनात् ध्यानस्य दर्शनरूपत्वमविद्वांसं प्रति तावदेव वक्तुं शक्यमिति तथोक्तं भाष्ये । अस्ति हि श्रवणमननादावप्युपास्तिप्रयोगः । अत एव, "उपासनैव क्रियते श्रवणानन्तरागता" इति मनने, 'श्रोतव्यो मन्तव्य' इत्युक्ते ध्यानात् पूर्वभाविन्यपि प्रयोगः न्यायकुसुमाञ्जलौ । तद्वत् मुख्यभक्तावपि तत्प्रयोग इष्ट इतीह दर्शितम् । विद्युपास्त्योः धात्वोः व्यतिकरितगिरा = एकस्थानेऽन्यप्रयोग इति मिथस्संबन्धितया प्रयोगात् क्वचित् क्वचित् स्थितादपि ऐक्यं वेदनोपासनयोः । अतो वेदनमात्रं न मोक्षहेतुः । अन्यथा

ये तु मन्यन्ते, 'तमेवं विद्वान्', 'ब्रह्मविदाप्नोति परम्' इत्यादिषु यथाश्रुति वित्तिमात्रस्य मुक्तिसाधनत्वविधिः कल्प्यः ; सकृत्कृतश्च शास्त्रार्थः ; अतो न विशेषपर्यवसानं युक्तमिति—तान् प्रति समफलत्वाद्युक्त्या सूचितं व्यनक्ति **ध्यानादी**ति । अत्र हि मुक्तिसाधनविधेः प्रत्ययावृत्तिरूपचिन्तावाचि-**ध्यान**शब्दवत्त्या अनावृत्तिरूपत्वं निरस्तम् । न्यायस्तु न वचनविरोधे । आदिशब्देन **ज्ञानवेदना**दिशब्दसंग्रहः । **ध्रुवानुस्मृति**शब्दस्तु चिन्ताया निरन्तरस्मृतिरूपत्वमाह । **ग्रन्थिमोक्षाय**ेति फलैक्यव्यञ्जनम् । तत्फलार्थे वाक्ये **दृष्टि**शब्दस्तु स्मृतिमेव वैशद्येन विशिनष्टि । ननु [स?] चाक्षुषज्ञाने प्रत्यक्षमात्रे वा ब्रूयादि त्यत्राह **तथैवे**ति । विशदध्रुवानुस्मृतौ **उपास्ति**शब्दनिमित्तमाह **सेवनत्वा**दिति । "यस्तद्वेद" इत्यादिषु केषुचिद्वाक्येषु एकस्मिन्नेव विषये **वेदनोपासन**शब्दयोर्व्यतिकरेणोपक्रमोपसंहारदर्शनाच्च वेदनमेवोपासनतया विशेष्यत इत्याह **क्वापी**ति । एतेषु क्वचिदपि वाक्ये न **भक्ति**शब्दो मोक्षोपायविषयः श्रूयत इत्यत्र "यमेवैष वृणुते तेन लभ्यः" इति श्रुत्यभिप्रेतं गीयत इत्याह **भक्तिमेवे**ति । फलितमनिष्टप्रसङ्गमाह **सर्वं तदि**ति । निगमयति **तेने**ति । सा मुक्तिसाधनतयोक्ता हि(?) वित्तिः भक्तिरूपत्वपर्यन्तविशेषणविशिष्टेत्यर्थः॥

**इति भक्तिस्वरूपतन्मोक्षोपायत्वे ॥ ३० ॥**

**विद्याः पञ्चाग्निवैश्वानरदहरमधुन्यासमत्पूर्वसंज्ञाः**
**नाना, शब्दादिभेदात् ; तुलितफलतया तद्विकल्पश्च शिष्टः ।**
**कर्मज्ञानाख्ययोगौ त्विह परमजनाधिक्रियार्थौ स्वदृष्ट्या,**
**धर्मैर्वर्णाश्रमाणां त्रयमिदमवदन् सेतिकर्तव्यताकम् ॥ ३१ ॥**

---

*पू*— तथैवेतीति । 'ध्रुवा स्मृतिः, स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः', 'भिद्यते हृदयग्रन्थिः... तस्मिन् दृष्टे' इत्युभयोः फलविपर्ययैक्यात् ध्रुवा स्मृतिरेव विशदा दृष्टिशब्देनोच्यते; न तु चाक्षुषज्ञानम्, प्रत्यक्षमात्रं वेत्यभिप्रायः ॥ ३० ॥

*श्री*— गीताविरोधोऽपीत्याह भक्तिमेवेति । सामान्यविशेषन्यायादिसत्तर्कपुरस्सरं श्रुतिवाक्यानामैकरस्यं यादृशमसन्दिग्धम्, तादृशं सर्वं मनसिकृत्यैव भगवान् निष्कृष्य निरदिक्षत्, 'भक्त्या त्वनन्यया' इति इति भावः । तेन=तस्मात् सा वित्तिः एवं विशिष्टरूपैव भवतीति । "यदुपास्तिमसावत्र" इत्यत्र उपास्तिशब्दो धातुपरोऽर्थे लाक्षणिक इति वर्धमानोपाध्यायः ॥ ३० ॥

ननु भक्तिरेका अनेका वा । आद्ये, सर्वविद्यास्थलोक्तसर्वगुणोपसंहाराशक्त्या, भक्त्यनिष्पत्तिरेव । अन्त्ये, तत्तत्प्रोपास्याकारतारतम्यात् फलतारतम्यमपि स्वीकार्यमिति मुक्तिरपि न्यूनाधिका । एवञ्च नित्यकर्मानुष्ठानस्य, कर्मयोगस्य, ज्ञानयोगस्य च भक्तियोगस्येव निवृत्तिधर्मत्वेन कीर्तनमपि घटते ; तत्तदुपायानुरूपमुक्तिफलवर्णनेन सर्वेषां तत्तदधिकारिकार्यत्वादिति स्वरूपोल्लिखं संभावितं मीमांसाविरोधं प्रदर्श्य शमयति विद्या इति । पूर्वशब्दः प्रभृतिपर्यायः । विद्यानां नामानि पञ्चाग्नि-वैश्वानर इत्यादीनि । तथाच सत्पूर्वाः=सदादयः संज्ञाः यासामिति विग्रहः । यद्वा पञ्चाग्न्यादयः शब्दाः संज्ञास्तु मधुविद्या सद्विद्या पञ्चाग्निविद्या वैश्वानरविद्येत्यादिषु यासां ताः विद्याः इति विग्रहः । पूर्वपदद्दर्शितास्तु दहरशाण्डिल्योपकोसलादिविद्याः । विद्याः द्वात्रिंशदिति प्रवादमात्रम् । यद्यपीयं न्यासविद्या न पूर्वोक्तभक्तिरूपा, किंतु प्रपत्तिरूपा–अथापि नानाशब्देत्यधिकरणे तद्ग्रहणसद्भावज्ञापनाय तदुक्तिः ।

यदि भक्तिरेका मुक्त्युपायः, कथं परविद्याभेदवक्लृप्तिरित्यत्राह **विद्या** इति ॥ **नाना**—मिथो भिन्ना इत्यर्थः । **शब्दादिभेदात्** = द्वैतीयाद्भेदकवर्गात् । किमेतासां ज्योतिष्टोमाग्निहोत्रादिवत् फलभूयस्त्वार्थमेकस्मिन्नधिकारिणि संभव इत्यत्राह **तुलितेति** । परिच्छिन्नेषु स्वर्गादिफलेषु तारतम्यवत्सु तद्भूयस्त्वापेक्षयोपायसमुच्चयसंभवः । इह तु न तथा ; अविशिष्टफलत्वात् । स्वात्मप्राप्तौ सालोक्यादिमात्रे च मुक्तिशब्दो भाक्तः । मुक्तितारतम्यं वदद्भिस्तु मुक्तिरेव शिक्षणीया । सर्वकर्मनिवृत्तौ स्वतःप्राप्तब्रह्मानुभवतारतम्यायोगात् ; कतिपयकर्मनिवृत्तेः स्वर्गादावपि समत्वात् । **शिष्टः**—"विकल्पोऽविशिष्टफलत्वात्" इति सूत्रे । ननु कर्मज्ञानयोगयोरपि मुक्तिसाधनत्वं शिष्यते ; गरिष्ठस्य च भक्तियोगस्य । अतो मुक्तितारतम्यं युज्यत इत्यत्राह **कर्मेति** । **स्वदृष्ट्या** = स्वात्मावलोकनद्वारेणेत्यर्थः । तदुक्तम**आत्मसिद्धौ**, "उभयपरिकर्मितस्वान्तस्यैकान्तिकात्यन्तिकभक्तियोगलभ्यः" इति । यदि कर्मयोगोऽधिकारार्थः, तर्हि लब्धाधिकारस्य कर्मनैरपेक्ष्यं स्यादित्यत्राह **धर्मैरिति** । अयं भावः—कर्मयोगो नाम नियमयुक्तः कर्मविशेषः । तन्निवृत्तिदशायामपि न वर्णाश्रमधर्मनिवृत्तिः । कर्मनिषेधोऽप्यन्यविषयः । अतस्त्रयोऽपि योगा वर्णाश्रमधर्माङ्गका इति । तथा च संगृहीतम्—"त्रयाणामपि योगानां त्रिभिर(मालया)न्योन्यसङ्गमः । नित्यनैमित्तिकानां च पराराधनरूपिणाम् ॥" इति ॥ **इति विद्याभेदतद्विकल्पादिः ॥२१॥**

---

व्री—ईदृश्यो विद्याः नानेत्यन्वयः । नानात्वं विधेयम् । तत्र हेतुः शब्दादिभेदादिति । शब्दान्तर-अभ्यास-संख्या-संज्ञा-गुण-प्रकरणान्तररूपकर्मभेदकप्रमाणषट्कान्तर्गतात् कस्मादपीत्यर्थः । शिष्टं श्रीभाष्यव्याख्याने । द्वैतीयात् = पूर्वमीमांसाद्वितीयाध्यायोक्तात् । अर्थादयं सूत्रानुवादोऽपि । एवञ्च सर्वगुणोपसंहारायोगरूपदोषो वारितः । फलभेदभ्रमं परिहरति तुलितेति । अत्र सूत्रवत्, 'य एनमेतद्विदुः ये चेमे अरण्ये श्रद्धयोपासते तेऽर्चिषमेवाभिसंभवन्ति' इत्यर्थक वाक्यमपि ग्राह्यम् । एतद्विद्यान्वयः कर्मयोगादौ न भवतीत्याह कर्मेति । 'परभजनाधिक्रियार्थौ' इति परभक्तिरूपपूर्वोक्तविद्यानुष्ठानपूर्वकालापेक्षितजीवात्मस्वरूपसाक्षात्काररूपमोक्षविलक्षणफलार्थतया विहितौ तौ । अतः स्वदृष्ट्या = स्वात्मस्वरूपदर्शनेन जीवलब्ध्याधिकारसंपादकौ ताविति । नित्यकर्मानुष्ठानरूपनिवृत्तिधर्मवर्गस्य फलमाह धर्मैरिति । वर्णाश्रमाणां उक्तत्रयं प्रति इतिकर्तव्यतात्वम् = अङ्गत्वमभवदित्यर्थः । शिक्षणीयेति । मुक्तितारतम्यवादिभिः का नाम मुक्तिरिति मुक्तिस्वरूपं महतां सकाशात् ज्ञातव्यमित्यर्थः । कर्मयोगो नामेति । नित्यकर्मानुष्ठानमेव कर्मयोग इति न मन्तव्यमिति भावः । कर्मनिषेधोऽपीति । 'न कर्मणा न प्रजया' इत्यादौ । मालयेति पदस्थाने त्रिभिरिति पदमेव प्रसिद्धम्; गीतार्थसंग्रहरक्षायां गृहीतञ्च । ननु त्रिभिरिति व्यर्थम्—अन्योन्यपदेन गतार्थत्वात् । अन्योन्यञ्च । एकैकस्यापि योगस्यावशिष्टद्वयेनैव योगात् कस्य त्रिभिर्योगो भवेदिति चेत्—उच्यते । तत्तद्योगस्य भिन्नत्वात् एकस्मिन् योगे अन्ययोगसंगमाभावात् एकैकयोगे योगत्वानाश्रयेतरद्वयसंगम इत्येव वक्तव्यम् । तथा च कर्मयोगे जीवात्मज्ञानपरमात्मप्रीतिरूपद्वयस्य, ज्ञानयोगे नित्यकर्मानुष्ठानपरमात्मप्रीतिरूपद्वयस्य, भक्तौ कर्मानुष्ठानजीवात्मज्ञानरूपद्वयस्य च संगमः। यद्वा, तथा कर्मयोगे तदन्येन नित्यकर्मानुष्ठानेन, ज्ञानयोगे योगातिरिक्तगतागतज्ञानचिन्तनेन, भक्तियोगे तदनन्तर्गतसापेक्षालिकपरमात्मप्रीत्या च संगमोऽस्तीति एकैकस्य त्रिभिः संगम इत्युक्तम् । अन्योन्यपदं तु ज्ञानकर्मभक्त्यतिरिक्तं किमपि नयं ग्राह्यमिति भ्रमनिवारणमात्रफलकम् । मादि नित्यनैमित्तिकानाञ्च पराराधन-

विश्वान्तर्यामि तत्त्वं स्वयमिह चिदचिद्विग्रहैर्वा विशिष्टं
यस्यामालम्बनं, सा भवभयशमनी वीतरागस्य विद्या ।
यस्तूपास्ते यथोक्तं तदितरदखिलं ब्रह्मदृष्ट्या स्वतो वा,
नैतस्य ब्रह्मनाड्योद्गतिरपि न पदं्यर्चिरादिर्न मोक्षः ॥ ३२ ॥

ननु मुमुक्षुमधिकृत्योपनिषदामुत्थानम्; अतस्तत्रत्यानां सर्वासां विद्यानां विकल्पः स्यादित्यत्र मुक्तिसाधिकास्तदन्याश्च विषयतोऽधिकारतश्च विभजते विश्वेति । स्वयं=स्वरूपनिरूपकैर्निरूपितस्वरूपविशेषकैश्च धर्मैर्विशिष्टम्; स्वासाधारणदिव्यविग्रहैर्वा । चिदचिद्विग्रहैः इन्द्रमानादिचिदचिद्रूपैः शरीरैः । वीतरागस्येति विशेषणात् परमजनमपि रागिणः परिमितफलसाधनमिति सूच्यते । संग्रहे च, "भक्तियोगस्तदर्थी चेत् समग्रैश्वर्यसाधनम्" इति । यथोक्तम्-चिदचिद्रूपेण विभक्तम्; यद्वा तत्तद्विद्याविहितप्रकारेणेत्यर्थः । स्वतः—ब्रह्मपर्यन्ततां ब्रह्मदृष्टिं च विहाय । नैतस्येत्यादि । नाडीभेदो हि,

ध्रु०— विश्वान्तर्यामीति । 'यस्तूपास्ते यथोक्तं तदितरत्' इत्यत्र यथोक्तपदस्य तदितरविशेषणत्वस्य स्वरसतः प्रतीयमानत्वादाह—यथोक्तम्=चिदचिद्रूपेण विभक्तमिति । चिदचिद्विभागकथने प्रयोजनमान्द्यादन्यथा व्याचष्टे—यद्वा तत्तद्विद्येति ॥ ३२ ॥

"तयोर्ध्वमायन् अमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति विभज्यते । स्मर्यते च, "ऊर्ध्वमेकः स्थितस्तेषाम्" इत्यादिना । अर्चिरादिगतिश्च ब्रह्मविद एवाधिकृत्य तत्रतत्र श्रूयते । तथा च सूत्रम्, "अप्रतीकालम्बनान्नयति" इत्यादि । मोक्षश्च, "तमेव विदित्वाऽति मृत्युमेति" इत्यवधारितः ॥

**इति त्रिवर्गापवर्गार्थविद्याविभागः ॥ ३२ ॥**

**स्वान्तध्वान्तप्रसूतं दुरितमपनुदन् योगिनः सत्त्वशुद्ध्यै**
**सर्वो वर्णादिधर्मः शमदममुखवत् सन्निपत्योपकारी ।**
**विद्यां चेत्यादिवाक्येऽप्यनुकथितमिदं नैकवाक्यानुरोधात्**
**कर्मापेक्षाभिसन्धिं क्वचन विवृणुते तत्समुच्चित्यवादः ॥ ३३ ॥**

अथ कर्मणां, "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति सूत्रसिद्धं विद्यार्थत्वं द्वारप्रदर्शनेन प्रापयन् समुच्चयवादं च निरस्यति स्वान्तेति । ध्वान्तशब्द इह तमोगुणे भाक्तः । सत्त्वस्य शुद्धिः गुणान्तरसंभेदाभावः । शमदमादीनां चित्तैकाग्र्यहेतुत्वस्य दुरपह्नवत्वात् तन्निदर्शनम् । सन्निपत्योपकारी= करणशरीरनिष्पादक इत्यर्थः । वाद्यन्तरयोजनाव्यावृत्त्यै श्रुत्यन्तरस्याप्युक्तार्थपरत्वमाह विद्यां चेति । "अविद्यया मृत्युं तीर्त्वा" इति सत्कर्मणा विद्योत्पत्तिविरोधिकर्मतरणं विवक्षितम्; "धर्मेण पापमपनु-

---

आ— स्वान्तध्वान्तेति । वाद्यन्तरयोजनेति । यादवप्रकाशयोजनेत्यर्थः ।

भा— चेतनमचेतनं वोपास्ते—शरीरात्मभावं विनोपास्ते । तच्च द्वेधा—शुद्धचेतनादिमात्रोपासनम्, परमात्मविषयकत्वेऽपि ब्रह्मदृष्ट्या परमात्माभेदारोपेणोपासनञ्चेति । स्वत इति चेतनाचेतनस्वरूपमात्रेणेत्यर्थः। यथोक्तमित्यस्य उक्तरीत्या वस्तुतस्तच्छरीरभूतमपीत्यप्यर्थः । शास्त्रोक्तदृष्टिविध्यनुसारेणेति वाऽर्थः । आरोपे दृष्टिशब्दपरिभाषा । नैतस्य मोक्ष इत्येतावदलम् । ब्रह्मताद्यर्चिरादिगतिनिषेधवचनं पूर्वपर्वानारूढस्य कथमुत्तरपर्वेति कैमुतिकन्यायप्रदर्शनार्थम् । तेन, हार्दानुगृहीतः शताधिकया, श्रुतोपनिषत्कगत्यभिधानाच्चेति सूत्रस्मारणम् । "विशेषञ्च दर्शयति" इति सूत्रभाष्यव्याख्यानरूपोऽयं श्लोकः ॥ ३२ ॥

स्वान्तेति । स्वान्तस्य यत् ध्वान्तं तमः, तत् अपनुदन् । हेतौ शतृप्रत्ययः। तमोपनोदकत्वात् संनिपत्योपकारीत्यर्थात् । दुरितनिवृत्तेः फलं रजस्तमोनिवृत्तिः ; तदाह सत्त्वशुद्ध्यै इति । भावान्तराभावपक्षे गुणान्तरनिवृत्तिः सत्त्वविवृद्धिरेवेति सत्त्वशुद्ध्यै इति उक्तप्रायम् । शमदममुखवदिति । निषिद्धव्यापाराभावरूपशमादौ सति प्रतियोगिप्रसक्तिर्नास्तीति स्पष्टम् । कर्मानुष्ठानस्य तथा साक्षादनुपयोगेऽपि तादृशदुष्कर्मारम्भकपापनिवृत्तिहेतुत्वात् दुष्कर्मानारम्भरूपशमादिसिद्ध्या तद्द्वारेणोपयोगः । पापस्य पापहेतुत्वं रजस्तमोद्वारेति पापापनोदकत्वस्य रजस्तमोनिवर्तनेऽपि तात्पर्यम्। प्रतिक्षणपरिणामरूपोन्मेषनिमेषशालिनि मनसि रजःप्रभृत्युन्मेषहेत्वभावे सत्त्वोन्मेषसिद्धिः॥

समुच्चयवादश्चेति चकारेण आरादुपकारकत्ववादसमुच्चयः । स भास्करेषुः । समसमुच्चयपक्षो यादवप्रकाशस्य । ननु समुच्चयपरश्रुतिविरोध इति शंकां परिहरति विद्यां चेति । नैकेति अनेकेत्यर्थकम्, न तु नेति पृथक्पदम् । नन्वत्र विद्याविद्यासमुच्चये तात्पर्यं सति किल अङ्गत्वप्रधानत्वविचारः । तदेव न, पूर्वार्धे तयोः समुच्चित्यवेद्यत्वमेव उक्तम्, न तु अनुष्ठाने समुच्चयः । अतः अविद्यापदमज्ञानपरम् । उत्तरार्धे चाज्ञानेन मृत्युतरणं नाम अज्ञानहेतुकसंसारातिरेकेति शंकमानं प्रत्याह मृत्युमिति ।

दति", "कषायपक्तिः कर्माणि" इत्याद्यनेकवाक्यानुरोधात्। 'मृत्युं प्राप्य स्थितः' इति तु क्लिष्टगतिः। मृत्युतरणममृतप्राप्तिरिति साध्यद्वित्वाभावात् अत्र साधनद्वित्वादिश्वा(द्वित्ववादश्चा?)युक्तः। "ब्रह्म-विद्यामधिष्ठाय तर्तुं मृत्युमविद्यया" इत्युपबृंहणेन चैतत् सर्वं व्यक्तम्। "हतं ज्ञानं क्रियाहीनं हता चाज्ञानिनां क्रिया" इत्यादिषु द्वयोः समुच्चितवद्वादः कुदृष्टिमतनिवृत्त्यै कर्मसापेक्षत्वाभिसन्धिं व्यनक्ति।

श्लो— निषिद्धकाम्यत्यागेन नित्यनैमित्तिकग्रहः। अधिकाराङ्गताज्ञासु यथार्हमवतिष्ठते॥

इति कर्मणां विद्योपकारकत्वप्रकारः॥ ३३॥

संस्कारः कर्मकर्तुर्न भवति विहितं मुक्तये ज्ञानमन्यत्
नाप्येतत् कर्मणोऽङ्गं, न च सकृत्, असकृत्त्वाप्रयाणानुवृत्तम्।
अङ्गं तस्याऽऽसनादि(द्यं) प्रणिधिसमुचितौ देशकालप्रभेदौ
इत्याद्यं साङ्ग्ययोगप्रकरणविततं सूत्रभाष्यादिषूक्तम्॥ ३४॥

---

स॰— एकस्यैव वर्णाश्रमधर्मस्य कर्मान्तरयोग्यतापादकत्वं विद्याङ्गत्वं भगवदाज्ञाकैङ्कर्यरूपत्वं च कथमुपपद्यते? एतत्त्रयं च किमेकाधिकारिविषयम्? उत भिन्नविषयम्? काम्ययागादीनां च किं वैरूप्यमस्ति इति शङ्कायामाह—निषिद्धकाम्यत्यागेनेति। काम्यत्यागनिदर्शनतया निषिद्धग्रहणम्। 'यथार्हमुपतिष्ठते' इति। मुमुक्षूणां कर्मान्तरयोग्यतापादकत्वमेव, उपासकान् प्रति तु अधिकारार्थत्वं विद्याङ्गत्वं चेति द्वयम्, प्रपदननिष्ठान् प्रति तु भगवदाज्ञाकैङ्कर्यत्वमिति व्यवतिष्ठत इत्यर्थः॥ ३३॥

भी— श्रीभाष्येऽप्ययमर्थोऽनूद्य दूषितः। क्लिष्टेति। तीर्त्वेत्यस्य प्राप्येत्यर्थवर्णनं क्लिष्टम्; अविद्यानाशाभावेऽपि अविद्यया मृत्युप्राप्तेः स्थितत्वात् तदंशे पूर्वार्धानुपयोगादपि तत् क्लिष्टम्। स्थित इत्यध्याहारस्य कार्यत्वात् अत्यन्तक्लिष्टता चेति। साध्यद्वित्वाभावादित्यस्य अयुक्त इत्यत्रान्वयः। भावान्तराभाववादे द्वयमेकमेव। पूर्वोत्तरकालता च न घटते। उपबृंहणविरोधं दूषितपक्षद्वयेऽप्याह ब्रह्मविद्यामिति। चतुर्थपादार्थमाह हतमिति। 'तत्प्राप्तिहेतुर्ज्ञानञ्च कर्म चोक्तं महामुने' इति विष्णुपुराणवचनमपि ग्राह्यम्। कर्मणः समसमुच्चयसंमतौ, 'आगमोत्थं विवेकाच्च द्विधा ज्ञानं प्रकीर्तितम्' इत्युत्तरार्धोक्तश्रवणात्मकज्ञानस्यापि साक्षान्मोक्षसाधनत्वप्रसंगः। परम्परासाधनत्वस्य स्पष्टस्य त्यागेनापूर्वकल्पनमयुक्तमिति चेत्—समम्। चतुर्थपादार्थस्तु—समुचित्यवाद इति ल्यबन्तेन समासः। समुचित्य तयोर्वादः। तत्समुच्चयवाद इति यावत्। क्वचन=प्रमाणग्रन्थे स्थितः। ज्ञानस्य या कर्मापेक्षा कर्मसापेक्षता, कर्मणो वा ज्ञानापेक्षा कर्मकर्तृकज्ञानकर्मकापेक्षा, तत्र वाक्यस्य तात्पर्यं विशदयति। अङ्गाङ्गिभावे तत्पर इति भावः। ननु कषायपक्तिरित्यादिमृदुभूतवाक्यत एवार्थे स्पष्टे, 'हतं ज्ञानं हता क्रिया' इति तीव्रवचनं किमर्थमित्यत्राह कुदृष्टीति। स्वर्गाद्यतिरिक्तमोक्षत्यागिनः काम्यकर्मैव श्लाघमानाः आत्मज्ञानमुपेक्षन्ते। मृषावादिनस्तु अप्रामाणिकमद्वैतं तत्त्वमिति परिकल्प्य कर्म तद्विरोधीति त्यजन्ति। तत् कर्म तदज्ञानञ्चानर्थैकहेतुरिति निन्द्यत इति भावः। निषिद्धेत्यादिकारिकया त्याज्योपादेयकर्मविभागः क्रियते। निषिद्धस्य कर्मणः काम्यस्य च नोपासनाङ्गत्वम्—कर्मणां पापनाशनद्वारा ह्युपकारकत्वम्। तदुभयं तु पापपुण्यरूपोभयविधपापहेतुरेव, न तु नाशकमिति। विशेषतस्त्याज्यत्वविधानाच्च। अतस्तत्त्यागपूर्वकं नित्यनैमित्तकर्मणोरनुष्ठानं भक्तियोगे अधिकारापादकम्; ज्ञाननिष्पादकत्वादङ्गमपि; विधिनिषेधरूपाज्ञोल्लंघने च प्रत्यवायः। अतः तस्य अधिकारे अङ्गतायामाज्ञाकोटौ च स्थितिरिति। काम्यमपि काम्यतां विहाय सात्त्विकत्यागपूर्वकं कर्तुमर्हम्, तदा तस्याङ्गतायामेव स्थितिः। तदननुष्ठाने अधिकारलोपो वा आज्ञाभङ्गो वा न भवतीति॥ ३३॥

एवं केचिदूचुः—'कर्मानुष्ठाता जीवः स्वाध्यायसाध्येन स्वविषयज्ञानेन संस्क्रियते; एते एव ज्ञानज्ञेये वेदान्तेषु प्रशस्येते' इति। तन्निरस्यति **संस्कार** इति। **विहितं मुक्तये अन्यदिति** हेतुत्रयपरम्; न हि वाक्यजन्यं ज्ञानं विधीयते; तस्य विधानमन्तरेण रागप्राप्तविचारसिद्धत्वात्। न च वाक्यजन्य-ज्ञानान्मोक्षः, निरसिष्यमाणत्वात्। अन्यदेव हि वाक्यार्थज्ञानात् विहितमुपासनाद्यात्मकं ज्ञानम्; जीवातिरिक्तविषयतया चान्यत्वं भाव्यमिति। तथाऽपि "तत्प्राप्तिहेतुर्ज्ञानं च कर्म च" इति सहपाठा-विशेषे, कर्म चेत् ज्ञानाङ्गम्, विपरीतं किं न स्यादित्यत्राह **नापीति**। न हि सहोक्तिमात्रात् तादर्थ्य-निश्चयः; किं तु अनन्यथासिद्धैर्विनियोजकैरिति भावः। कर्तृसंस्कारत्वविरोधव्युदासार्थमन्यविध्यर्थं **च** पूर्वोक्तमेवाह **न च सकृदिति**। असकृदावृत्तमपि ज्ञानमेकदिने[ऽ]शक्यमित्यत्राह **असकृदिति**। "प्रायणान्तमोङ्कारमभिध्यायीत", "स खल्वेवं वर्तयन् यावदायुषम्" इत्यादिश्रुतिसिद्धमाप्रयाणत्वम्। सदा चिन्तनविधानात् गमनादावपि स्यादित्यत्राह **अङ्गमिति**। निरन्तरस्मृतिरासीनस्यैव स्यात्, गमनादौ तु तद्विधिः सान्तरविषयः। **आदि**शब्देन समकायशिरोग्रीवत्वादिसंग्रहः। **प्रणिधिः**—चित्तैकाग्र्यम्। **आद्य**शब्देन प्रशान्तात्मत्वविगतभीत्वादि गृह्यते। सूत्राण्यत्र, "आवृत्तिरसकृदुपदेशात्" इत्यादीनि॥

**इति विद्यायाः कर्मकर्तृसंस्कारत्वभङ्गः ॥ ३४ ॥**

---

पू०— संस्कार इति। एते एव ज्ञानज्ञेये वेदान्तेषु प्रशस्येते इति। 'ब्रह्मविदाप्नोति परम्', 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिषु वाक्यजन्यज्ञानं तद्विषयभूतो जीवश्च प्रशस्यत इत्यर्थः। हेतुत्रयपरमिति। वेदान्तोदितज्ञानात्मकतया पुरुषसंस्कारत्वाभावे हेतुत्रयमित्यर्थः। 'ध्रुवाऽनुस्मृतिरिह' (श्लो. जीवसरे ३०) इति पूर्वोक्तस्यासकृदावृत्तिरूपत्वस्य पुनः कथनं किमर्थमित्यत्राह—कर्मसंस्कारत्व-विरोधेति ॥ ३४ ॥

श्री— 'पुरुषार्थोऽतः शब्दात्' इति पुरुषार्थाधिकरणपूर्वोत्तरपक्षौ संग्रहेण प्रवर्तयति संस्कार इति। यथा यागाङ्गभूतव्रीह्यादिसंस्कारकर्मरूपतया 'व्रीहीन् प्रोक्षति, अवहन्ति' इत्युक्तप्रोक्षणावहननादीनां संस्कार्यव्रीह्यादिद्वारा यागाङ्गत्वं, तथा उपनिषदुत्थं ज्ञानमपि यागादिकर्मकर्तृजीवविषयकत्वात् तत्संस्कारकत्वात् संस्कार्यकर्तृद्वारा कर्माङ्गमेव। अतो न ज्ञानं प्रधानमिति पूर्वपक्षः। तत्रोच्यते—उपनिषदुत्थं ज्ञानं त्वदभिमतज्ञानादन्यत् मुक्तये विहितं न कर्मकर्तृसंस्कारकम्, विहितत्वात् मुक्त्यर्थ-त्वात् जीवविषयकज्ञानान्यत्वाच्चेति प्रयोगः। संस्कारकज्ञानं हि श्रवणादिरूपम्। न तस्य विधेय-त्वम्, स्वत एव जायमानत्वात्। अधिकोपदेशात्तु इति सूत्रखण्डे व्यक्तमिदम्। अस्तु परमात्म-विषयकज्ञानमुपनिषदुत्थमन्यत्, तदेव कर्माङ्गं भवतु। सात्त्विकत्यागपूर्वककर्मानुष्ठाने परमात्मज्ञान-स्यापेक्षिततयाऽङ्गत्वसंभवादित्यत्राह नापीति। श्रवणमननरूपज्ञानस्याङ्गत्वसंभवेऽपि नोपासनस्य तदङ्गत्वप्रसक्तिः। तत्प्रीत्यर्थकर्मकरणस्य तज्ज्ञानमात्रापेक्षत्वेऽपि तदुपासनानपेक्षत्वात्। वचनबलात् अदृष्टद्वारा अङ्गत्वमिति चेत्—उपासनं प्रति कर्मणोऽङ्गत्वं पापनाश-रजोनिबर्हणमुखेन तन्निरासकतया भवति, न तथोपासनस्य कर्मोत्पादकत्वेऽदृष्टद्वारकत्वमस्थिरत्वात् न तदङ्गमिति। विनियोजक-वाक्याभावाच्च। उपासनात्मकज्ञानापरत्वमस्य युक्त इत्याह न च सकृदिति। अदृष्टार्थस्यासकृदा-वृत्तस्य कर्मान्तत्वमित्यपि दुर्वचम्—शास्त्रविहितासकृदावृत्तेः कर्मप्रयोगमध्ये समाप्त्यभावात्। कर्म-[illegible]देयानङ्गत्वे स्थिते आप्रयाणादनुवृत्तत्वे नतरामिति भावः। ननु प्राप्रायणमनुवर्तनमशक्यम्,

'ब्रह्मण्यैकान्त्यभाजां मुहुरनुकथितो मोक्षधर्मेऽपवर्गः
तस्मान्नानामरेज्या न भवति परमकत्यङ्गम्' इत्यप्ययुक्तम् ।
ऐन्द्रीप्रातर्दनादिप्रथितनयविदामन्तरात्मैकलक्ष्ये-
ष्वग्नीन्द्रादिप्रयोगेष्वखिलमपि विभुः कर्म भुङ्क्ते स एकः ॥ ३५ ॥

वर्णाश्रमधर्माणामङ्गित्वाभिमतविद्याविरुद्धत्वमाशङ्क्य परिहरति ब्रह्मणीति ॥ 'ऐकान्त्यभाजाम्'— अनन्यदेवताकानामित्यर्थः । "तेषामेकान्तिनः श्रेष्ठास्ते चैवानन्यदेवताः" इति स्थापनात् । तत्रैव च, "प्रतिबुद्धस्तु मोक्षभाक्" इति नियम्यते । "ब्रह्माणम्" इत्यारभ्य, "प्रतिबुद्धा न सेवन्ते" इत्यन्तेन चैतत् सिद्धम् । यागादयस्त्वग्नीन्द्रादिनानादेवताकाः । अङ्गाङ्गिविरोधे च न्याय्योऽङ्गत्यागः'—इत्येतदपि न युक्तम् । कुत इत्यत्राग्न्यादिशब्दानां ब्रह्मणि वृत्तिद्वयेन विरोधं परिहरति ऐन्द्रीति । यथा 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति विनियोगादिन्द्रशब्दः कयाचिद् वृत्त्या गार्हपत्यार्थः, एवं 'स्वकर्मणा तमभ्यर्च्य'

---

र्थी— अशक्तिकार्यन्तरायादिबाहुल्यात् । अत आप्रयाणं कर्मैवानुष्ठेयम्, तत्रेदमङ्गमपि सहेत्यत्राह अङ्गमिति । यथा नित्यानुष्ठेयतया विहिताग्निहोत्रादीनां न प्रतिक्षणमनुष्ठानम्, किंतु वस्तुदेशकाल-विशेषानुरोधेन यावज्जीवम्, तथोपासनार्थविहितमासनाद्यंगं देशं कालञ्चानुरुध्य व्यवस्थयैवाऽऽ-प्रयाणमिति भावः। एवं वर्तयन्निति । ननु 'धार्मिकान् विदधत्' इति धर्मानुष्ठानं प्रागुक्तम् । अतः, एवं वर्तयन्नित्यस्य यावदायुषं धर्मानुष्ठानं कुर्वन्नित्येवार्थास्तु कर्मैव मोक्षसाधनमिति चेन्न-विद्या बह्वीरुप-दिश्य अन्ते तदुपसंहाररूपेण प्रवृत्तमिदं छान्दोग्यं सर्वोपासनशेषभूतं धर्मानुष्ठानमुपदिश्य एवं वर्तयन्नित्याह । तत्र पौनरुक्त्यपरिहारायापि वर्तयन्नित्यस्य विद्यामावर्तयन्नित्यर्थ उचितः । एवमित्य-नेनैव कर्मानुष्ठानवैशिष्ट्यसिद्धेः । तद्विधिः=चिन्तनविधिः, सान्तरविषयः । न तु निरन्तरध्यान-विषयः । तद्विधानमितरफलवैमुख्यार्थम् । न तत् अङ्गिभूतमुपासनम् ॥ ३४ ॥

अद्वैतमत एव कर्मणो ज्ञानविरोधित्वमिति न ; सिद्धान्तिसंमतोपासनात्मकज्ञानविरोधित्वमपि कर्मणो मुखान्तरेणास्तीति शंकां परिहरति ब्रह्मणीति । एक एव अन्तः=आराध्यत्वेन निश्चितं वस्तु येषां तद्भावः ऐकान्त्यम् । तस्य ब्रह्मविषयकत्वं नाम ब्रह्मातिरिक्ताराध्यकत्वाभावः। मोक्षधर्मे-महा-भारतैकदेशे । नानामरेज्या=विधिशिवाद्यनेकदेवताराधनरूपं कर्म । देवतान्तराराधनरूपस्य कर्मणः परभक्त्यंगत्वं कथम् । अतो विरोधात् कर्म त्याज्यमिति शंका । ऐन्द्री—इन्द्रप्रतिपादिका ऋक् । तद्विषयकनयः पूर्वमीमांसायाम् (3-2-1) । प्रातर्दनं=प्रतर्दनायोपदिष्टमुपासनम् । तद्विषयनय उत्तर-मीमांसानयः । आदिना आकाशप्राणवैश्वानरग्रहणम् । एषु नयेषु सिद्धांशः क इति चेत्, शब्दस्य लोकप्रसिद्धार्थग्रहणे, प्रकृते तदनन्वये रूढ्यर्थं विहाय योगव्युत्पत्तिर्वा लक्षणा वा गौणी वा वेदान्त-व्युत्पत्तिर्वा ग्राह्येति । तत्र इन्द्रप्रतिपादिकाया ऋचः कथं गार्हपत्यरूपाग्न्युपस्थानांगत्वमिति पूर्वपक्षः श्रुतिविरोधादयुक्तः । मन्त्राणां प्रयोगसमवेतार्थस्मारकत्वस्य मुख्यत्वात् कथं तदत्रेति चेत्, लोके रूढियोगलक्षणगौणीभेदेन प्रयोगाणां दर्शनात् यथार्हं यथासंभवं तद्ग्रहणम् । 'श्रियमिच्छेत् हुता-शनात्' इति श्रीप्रदोऽग्निः श्रीमान् ; इन्द्रशब्दयोगार्थश्चैश्वर्यवानिति परिहार इष्टः। अत्रापि, 'यज्ञदान-तपःकर्म न त्याज्यम्', 'मनीषी वैदिकाचारं मनसाऽपि न लंघयेत्' इत्यादिना परमैकान्तिनं प्रत्येव सर्वविधानात् नाग्नीन्द्रादिशब्दत्यागः । तत्र शक्त्यसंभवे लक्षणादिग्रहणम् । आकाशप्राणशब्द-योरवयवशक्तिराश्रिता; 'न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति' इति भगवति

इत्यादिभिस्तत्तद्देवताशब्दानां क्वचिदवयवशक्त्या ब्रह्मणि वृत्तिः, क्वचित्तु प्रतर्दनविद्योक्तन्यायेन प्रसिद्ध-चिदचिल्लिङ्गानन्यथासिद्धौ तत्तद्विशिष्टविश्रान्तिरिति अग्न्यादिशब्दानामन्तरात्मविषयतया प्रतिबुद्धैः प्रयोगादेक एव सर्वकर्मसमाराध्यः । ऐकान्त्यं च तेषामक्षतम् ॥ अव्यवहितार्चने लभ्ये किं व्यवहितेनेति चेन्न — अधिकारव्यवस्थितेरक्षोभ्यत्वादिति ॥ इति वर्णाश्रमधर्माणामैकान्त्यविरोधपरिहारः ॥३५॥

त्यागत्रैविध्यमुक्त्वा स्वमतमिह जगौ सात्त्विकं(क)त्यागमीशः
तस्मात् वर्णाश्रमादित्यजनमपदृशां तामसं मोहमूलम् ।
योगारूढस्य कर्मच्यवनमपि तदा सह्यमङ्ग्यर्थनाक्यैः
योग त्वत्याश्रमिभ्यः परममिति वचो वक्ति मोक्षाश्रमेण ॥ ३६ ॥

---

आ॰– ब्रह्मणीति । अधिकारिव्यवस्थितेरक्षोभ्यत्वादिति । त्रयीनिष्ठानां मिश्राधिकारिणां व्यवहितार्चनम् उपनिषन्निष्ठानां शुद्धाधिकारिणामव्यवहितार्चनमिति शास्त्रसिद्धायाः व्यवस्थाया अक्षोभ्यत्वादित्यर्थः ॥ ३५ ॥

भा॰— प्राणशब्दयोगशक्तिप्रदर्शनात् संभवे योगव्युत्पत्त्यादरणस्य युक्तत्वात् । 'साक्षादप्यविरोधं जैमिनिः' इति अर्थपौष्कल्येन योगस्थापनाच्च । प्रातर्दननये तु वेदान्तव्युत्पत्त्या रूढ्यर्थान्तर्यामिविषयत्वमुक्तम् । सर्वथा अग्नीन्द्रादिप्रयोगाः अन्तरात्मभगवन्मात्रलक्ष्यकाः । लक्ष्यत्वं ज्ञाप्यत्वमुद्देश्यत्वम् । अतः अखिलमपि = देवतान्तरनामोच्चारणपूर्वकमनुष्ठितं कर्मापि स एको भुंक्ते । अन्येषामाराधनोद्देश्यत्वाभावात् न भोक्तृत्वम् । प्रसिद्धचिदचिल्लिङ्गानन्यथासिद्धाविति । उक्तं हि, 'परविद्यासु जीवोक्तिर्निरुक्त्यादेः पराश्रय । तल्लिगानन्यथासिद्धौ तद्विशिष्टावलम्बिनी' इति । इन्द्रप्राणाधिकरणे प्रतर्दनविद्याविषयके प्राणशब्दस्य मामिति इन्द्रशब्दस्य च परमात्मपरत्वं प्राणान्तर्यामितया इन्द्रान्तर्यामितया च; न तु योगव्युत्पत्त्येत्युक्तम्, 'यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः' इति प्राणशब्दान्वयिधर्मान्वयरूपार्थसामर्थ्यात् लिङ्गात्, 'त्रिशीर्षाणं त्वाष्ट्रमहनम्' इति त्वाष्ट्रहननादीन्द्रान्वयिधर्मसामर्थ्याच्च । अत एव मामित्यस्य योगार्थाभावेऽपि गौण्या ऐन्द्रीन्यायेन परमात्मपरत्वमस्त्विति शंकाया अपि न प्रसक्तिः । अपर्यवसानवृत्तेरेव मुख्यशक्तितया तन्मूलार्थत्यागेन गौणीकल्पनस्यायुक्तत्वाच्च । ननु इतरस्य ग्राह्यत्वे गमकाभावे योगशक्तिर्वा अपर्यवसानवृत्तिर्वेति चेत्—योगव्युत्पत्तौ क्लेशे, रूढ्यर्थग्रहणसंभवे च विशिष्टग्रहणमेव । अन्यदा पुनः प्राणादिशब्द इव योग एव, अव्यवहितार्चने लभ्ये किं व्यवहितेनेति अत्रेत्र कथनादित्यस्तां तावत् ।

वृत्तौ न्याय्योऽङ्गत्याग इत्यन्तं पूर्वपक्षानुवादः। इत्येतदपि न युक्तमिति सिद्धान्तभागव्याख्या । इत्यादिभिरिति ; इत्यादिप्रमाणवशादित्यर्थः । अन्ते इतीत्यस्य हेत्वर्थस्य न युक्तमित्यत्रान्वयः ॥३५॥

एवं कर्मकर्तव्यत्वमुक्तम् । परमैकान्तिनः प्रति कर्मत्याज्यत्ववचसां कोऽर्थ इत्यत्राह त्यागेति । काम्यकर्मत्यागः, सर्वकर्मफलत्यागः, सर्वकर्मत्याग एव इति त्रैविध्यमर्धत्रयेण पूर्वमुक्त्वा, 'त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः' इति फलत्यागकर्तृत्वत्यागममतात्यागरूपत्रिविधत्यागात्मकसात्त्विकत्यागं कर्मकर्तव्यताञ्च भगवान् अगासीत् । एवं कर्तव्यत्वेन निश्चितस्य मोहात् त्यागः तामसः त्यागः; अकर्तव्यत्वभ्रमेण त्यागात् । कर्तव्यत्वबुद्धावप्यालस्यादिना त्यागो राजसत्यागः । तावुभावपि वर्ज्यावित्युपर्युक्तम् । ननु 'योगारूढस्य तस्यैव शमः कारणमुच्यते' इति कर्मत्याग उक्त इत्यत्राह योगेति । अत्राऽऽरूढपदं योगानुभवमग्नतां व्युत्थानपूर्वभाविनीं दर्शयति । तदा कर्मत्यागो न विधेयः, तस्य कर्मप्रवृत्तिप्रसक्त्यभावात् ; सर्वविस्मरणात् । तस्य तत्स्मरणाभावेऽपि संध्यादिकालेऽपि

परेष्टभङ्गाय त्यागविशेषं निष्कर्षति **त्यागत्रैविध्यमिति**। स्पष्टम्, 'एतान्यपि च (तु?) कर्माणि' इति श्लोकोक्तम्। "कार्यमेव" (कार्यमित्येव?) इति श्लोकोऽपि तदर्थः। तत्फलितमाह **तस्मादिति**। "मोहात् तस्य परित्यागस्तामसः" इत्यस्यार्थोऽपदृशामित्यादिना दर्शितः। ननु योगदशायां कालादिक्रमजानतः कर्तव्यलोपः स्यादेव; अतः कर्मत्यागोऽत्र न तामस इति। तत्राह—**योगारूढस्येति**। योगदशायां बहिरप्रवृत्तमनसो न धीपूर्वकर्मत्यागः। अबुद्धिपूर्वकं तु उत्थानकालेऽपि न लिम्पतीति नियमितम्; किमुत समाधौ। **अङ्गयर्थवाक्यैः**—कर्मणां समाधिरूपाङ्गिशेषत्व[पर?]वाक्यैरित्यर्थः। ततश्चाङ्गप्रधानविरोधो(धे?)ऽङ्गिना अङ्गोपमर्दो न दोषाय॥ 'अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच" इत्यत्रातिशयिताश्रम(मि)योगो विवक्षित इत्याह **योगंत्विति**। अन्यथा मत्वर्थीयवैयर्थ्यादिति भावः॥

**इति वर्णाश्रमादिधर्मस्वरूपत्यागभङ्गः ॥ ३६ ॥**

**'तुर्यो निष्कृष्य मोक्षाश्रम इति कथितस्तेन नान्येषु विद्या**
**शान्त्यादिव्याहतेश्च' इत्यसदिह गुणिनां सर्वतो मुक्त्यधीतेः।**
**यावज्जीवं द्वितीयाश्रमवति पुनराज्ञैकमात्रेऽप्यधीनः**
**स्मृत्याद्यैर्थैवमुक्तं, भवेत्तु चरमे योग्यताधिक्यमात्रम् ॥ ३७ ॥**

*ल०*— अत्याश्रमिभ्यः परमं पवित्रमिति। आश्रमातिवर्तिनां योगप्रतिपादनात् कर्मणां स्वरूपत्यागः कार्य इति शङ्कापरिहारपरत्वं 'योगं तु—'इत्यादिश्लोकशेषस्य अभिप्रेत्याह—अत्याश्रमिभ्य इति ॥३६

*श्री*— योगानुवृत्त्या तदास्वादेन त्यक्तसान्ध्यस्य कर्मत्यागोऽस्त्येवेति चेत्—सोऽबुद्धिपूर्वकः। तस्याप्यदोषत्वं वक्तव्यमेवेति चेत्—मुमुक्षुविषये अबुद्धिपूर्वकस्य दोषत्वं व्युत्थितत्वदशायामपि समानम्। तर्हि वर्जनार्थः क इति चेत्—अङ्गप्रधानयोरेकदाऽनुष्ठानप्रसक्तौ उभयस्यानुष्ठानासंभवे प्रधानमादृत्य अंगं त्याज्यमिति न्यायः प्रसिद्ध एव। अतः संध्याकालं प्रतीक्ष्य संध्यामनुष्ठाय पश्चादेव योग आरब्धव्य इति मतिमपहाय योगमवगाहस्वेति अनेन बोध्यते। न च प्रधानभूतोऽपि योग इदानीमेव कर्तव्य इति कालनियमाभावात् अङ्गस्य च सन्ध्योपासनादेः तदेककालत्वात् अङ्गमनुष्ठाय प्रधानमन्यदैव कार्यमिति वाच्यम्—प्रतिदिनं कर्तव्ये योगे पूर्वकाले कारणान्तरात् प्रतिरुद्धे उत्तरकाले बाह्यनानाक्षोभवशात् प्रतिरोधावश्यम्भावे निश्चितेऽवश्यानुष्ठेयं तं प्रति तस्यैव कालत्वात्। तृतीयपादे अङ्गयर्थवाक्यैरित्यस्य कर्मभिरङ्गिनो योऽर्थः प्रयोजनं तत्परैर्वाक्यैरित्यर्थः। इदमेव वृत्तौ शेषत्वपरवाक्यैरित्युक्तम्। एवम् अङ्गयर्थवाक्यैः अङ्गिनो योगस्यावश्यानुष्ठानप्रतिपादकवाक्यैरित्यप्यर्थः संभवति। कर्मत्यागियोगिपुरुषसत्तापरं वाक्यमिति भ्रमं व्युदस्यति योगमिति। 'अत्याश्रमिभ्यः परमं पवित्रम्' इति उपदेश्यानामत्याश्रमित्वमुच्यते। तत्र सर्वाश्रमातिक्रान्तत्वरूपार्थस्वीकारे मतुप् व्यर्थः शास्त्रविरोधश्च। अतः अतिशयित आश्रमः अत्याश्रमः तद्वद्भ्य इति मोक्षाश्रमेण योगं मतुपा वदति तद्वाक्यमिति तुर्यपादार्थः॥ ३६॥

तुर्यः=चतुर्थ आश्रमः। गुणिनाम्—दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेत्यष्टावात्मगुणाः। चत्वारिंशतं संस्कारान् उक्त्वा तेषु कतिपयलोपेऽपि एतदात्मगुणाष्टकसत्त्वे मोक्षार्हत्वमुक्तं गौतमधर्मसूत्रे। एवमध्ययनजनितार्थज्ञानं वैराग्यञ्च गुणपदग्राह्यम्। योग्यताधिक्यमात्रमिति। रक्षणीयकुटुम्बाद्यभावात् न काम्यकर्मप्रसक्तिः, अधिकवाह्यकर्मव्यापृत्यभावेन चिरं

'प्रव्राजिनामेव मुक्तिः तत्साधनी विद्या च' इति पक्षमनूद्य प्रतिक्षिपति **तुर्य** इति ॥ विशेषविधौ परिसङ्ख्यया शेषनिषेधः सिध्येदिति भावः। अतस्तदन्येषु त्रिषु तत्साधनी विद्या नेत्याह **तेनेति**। अधिकारिविरोधादप्याह **शान्त्यादी**ति। प्रवृत्तिरूपाः वेदानुवचनयज्ञादयः; शमादयस्तु निवृत्तिरूपाः; ते कथमेकत्र स्युरिति भावः। अत्र बाधकमाह **गुणिनामि**ति। "दया सर्वभूतेषु क्षान्तिः" इत्याद्युक्तगुणवतामित्यर्थः। 'त्रयो धर्मस्कन्धाः' इत्यत्र ब्रह्माश्रमप्रस्तावे, 'ब्रह्मसंस्थोऽमृतत्वमेति' इत्युच्यते। संभवति चाधीतवेदेषु सर्वेषु ब्रह्मनिष्ठा। सा च गृहस्थानामेवोपस्तियाज्ञवल्क्यप्रभृतीनामुपनिषत्सु प्राचुर्येण दृश्यते। न च प्रवृत्तिनिवृत्त्योर्विरोधः; भिन्नविषयत्वात्; नित्यनैमित्तिकेषु प्रवृत्तिः, निषिद्धकाम्यनिरर्थकेषु निवृत्तिरिति। अन्यथा प्रव्राजिनां स्वाश्रमधर्मेणापि विरोधः स्यात्। अपिच **छान्दोग्यान्ते**, "कुटुम्बे शुचौ देशे" इत्यादिना गृहस्थं प्रकम्य, "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते" इत्युक्त्वा, "न च पुनरावर्तते" इति चोक्तम्। तदाह **यावज्जीवमि**ति। अत्रोपबृंहणभूयस्त्वमाह **स्मृत्याद्यै**रिति। "गृहस्थोऽपि हि (वि)मुच्यते" इति स्मर्यते। "जनकदिलीपादयश्च गृहस्था एव मुक्ता" इति इतिहासादिषूक्ताः। अत एव न सोपानवत् क्रमनिर्ब(ब)न्धः। कस्यचिन्मोक्षाश्रमत्वोक्तिः किंनिमित्तेत्यत्राह **भवतीति** ॥

**इति सर्वाश्रमिणां ब्रह्मविद्याधिकारः ॥ ३७ ॥**

**यन्नित्यं तच्च काम्यं, तदपि न तत् इति स्थापिते कर्मभेदेऽ-**
**प्येकं विद्याश्रमाङ्गं भवति हि विनियुक्त्यन्तरेणोपपत्तेः ।**
**तत्रानुष्ठानतन्त्रं विदुषि तु घटते कर्तृकालाद्यभेदात् ;**
**प्राजापत्यादिलोकार्थिनि च; तदितरोऽनर्थरोधाय तद्वान् ॥ ३८ ॥**

---

वी— योगनिष्ठत्वसंभवात् शीघ्रं भक्तिनिष्पत्तिरित्यादि भाव्यम्। वृत्तौ गृहस्थोऽपीति। श्राद्धकृत् सत्यवादी चेति पूर्वपादः। गृहस्था एवेत्यस्य उक्ता इत्यत्रान्वयः। मुक्ता इतीत्यस्य मुक्तत्वेनेत्यर्थः॥३७

नित्यम् अवश्यानुष्ठेयम् अकरणे प्रत्यवायकरम्। काम्यं फलकामनायां सत्यामेवानुष्ठातुमुचितम्। तदपि न तदिति। काम्यमपि नित्यं न भवतीत्यर्थः। स्थापिते इति। नित्यं काम्यञ्चेति कर्मद्वैविध्यं हि धर्मशास्त्रेषु घुष्टमिति भावः। विद्याश्रमाङ्गं=काम्यविद्यां प्रति अकाम्याश्रमं प्रति चाङ्गमित्यर्थः। नित्यस्थले कर्मणां किञ्चिदनुद्देशेन विधानम्, प्रत्यवायपरिहारोद्देशेन विधानं वा; काम्यस्थले च विद्यानिष्पत्त्यादिफलोद्देशेन विधानम्। न चैकं वाक्यं किञ्चिदुद्देशानुद्देशाभ्यां वा उभयोद्देशेन वा किञ्चित् विदध्यादिति चेत्—नैवम्; विनियुक्त्यन्तरेण—विनियोगान्तरेण विभिन्नविनियोजकवाक्यतः उपपत्तेः। एकेन वाक्येनानेकार्थत्वबोधनासंभवेऽपि विभिन्नवाक्येन विधाद्वयोक्तौ को दोषः। ननु तर्हि विद्वान् भक्तियोगनिष्ठः इतरवत् अकरणे प्रत्यवाय इति भिया पूर्वं कृत्वा विद्यार्थमपि पुनः कुर्यादित्युक्तं भवतीत्यत्र तथा नेत्याह तत्रेति। अनुष्ठानतन्त्रं—प्रयोगस्यानेकोद्देशेऽपि सकृत्त्वं घटते—युक्तम्। यथा प्रतिदिनं क्रियमाणे अग्निहोत्रे, कस्मिंश्चित् दिने फलोद्देशेनानुष्ठेये प्रसक्ते नित्यकाम्यतन्त्रं मीमांसकोक्तम्। यथा च प्रयाजादीनामङ्गानां नियमेन प्रधानयागत्रयोद्देश्यकानां सकृदेवानुष्ठानम् तथेति। तत्र कारणमत्रापि सममित्याह कर्तृकालाद्यभेदादिति। यावदाश्रमसत्त्वं क्रियमाणकर्मनिकुरुम्बस्य मोक्षार्थत्वं विनाऽपि काम्यत्वसत्त्वात् तत्र तन्त्रमिदं हीति च दर्शयति

कथं नित्यकर्मणां विद्याङ्गत्वम् ? नित्यत्वे ह्यकरणे दोषः। काम्याङ्गत्वे त्वसौ न स्यात्। अतो नित्यकाम्ययोरभेदायोगात् प्रकृतं विरुद्धम्-इत्येतदनूद्य परिहरति यन्नित्यमिति। हिशब्दः संभवप्रसिद्धिपरः।

श्लो— ज्योतिष्टोमाग्निहोत्रादौ विनियोगपृथक्त्वतः। नित्यकाम्यस्वरूपत्वे दृष्टं तद्वद्विहास्तु नः॥
विध्यैक्येऽपि क्वचित् दृष्टा काम्यनैमित्तिकात्मता। विधिभेदे तु किं न स्यादत्र कैमुतिकी गति॥

एवं त्रिरूपत्वमपि क्वचित् ग्राह्यम्। तर्हि विद्यार्थमाश्रमार्थं च द्विरनुष्ठानं प्रसज्यत इत्यत्राह तन्त्रेति। तन्त्रम्- उभयार्थं सकृत्करणम्। तच्चैकादशे (पू.मी.) स्थापितम्। नित्यस्य विद्यानङ्गतयाऽपि काम्यत्वे तन्त्रमुदाहरति प्राजापत्यादीति। उक्तव्यतिरिक्तेषु निष्फलतया नित्यकर्मनिवृत्तिप्रसङ्ग इत्यत्राह— तदितर इति। **इति नित्यकर्मणो विद्याङ्गत्वाश्रमाङ्गत्वादि ॥ ३८ ॥**

---

पु०— यन्नित्यं तन्न काम्यमिति। काम्याङ्गत्वे त्वसौ न स्यादिति। काम्यभूतविद्याङ्गत्वे तस्य काम्यकोटिघटितत्या अकरणे दोषो न स्यादित्यर्थः। विध्यैक्येऽपीति। 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति विहितवैश्वानरेष्टौ पुत्रजन्मनिमित्तकत्वं पुत्रगततेजस्वित्वादिफलकतया काम्यत्वं च दृष्टमित्यर्थः। एवं त्रिरूपत्वमिति। नित्यत्वं नैमित्तिकत्वं काम्यत्वं चेति त्रिरूपत्वमेकस्मिन् कर्मणि ग्राह्यमित्यर्थः [एकादशे इत्यनेन?] याजादीनां (प्रयाजादीनां?) सकृदनुष्ठानस्य यागत्रयार्थत्वं निदर्शनतया सूचितम्। एवमेकस्मिन् उदाहरणे सूचितेऽपि प्राजापत्येत्यादिनोदाहरणप्रदर्शनस्य तात्पर्यमाह—नित्यस्येति ॥ ३८ ॥

श्री– प्राजापत्येति। "प्राजापत्यं गृहस्थानां ब्राह्मं संन्यासिनां स्मृतम्" इति तत्तदाश्रमस्य काम्यत्वमपि संमतमधिकारिविशेषे। तत्र प्रत्यवायपरिहारापेक्षी केवलाश्रमी तु अनर्थरोधाय—प्रत्यवायपरिहारमात्राय तद्वान्-नित्यकर्मवान् भवति। वृत्तौ प्रसिद्धिमेव दर्शयति कारिकया ज्योतिष्टोमेति। विध्यैक्येपीति। विनियोजकवाक्यैक्येऽपि। नैमित्तिकत्वफलविशेषार्थत्वोभयबोधकवाक्यस्यैकत्वेऽपि। क्वचित्–"वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते" इति पुत्रोत्पत्तिनिमित्तकवैश्वानरेष्टौ। तत्र 'पूत एव तेजस्वी' इत्यादिना पुत्रगतपूतत्वादेः पितृकर्तृकवैश्वानरेष्टिफलतया श्रुतत्वात् तदादाय काम्यत्वमपि। नैमित्तिकवाक्य एव तत्कथनं तस्य फलस्य नियतत्वाभिप्रायेण; नित्यज्योतिष्टोमप्रयोगस्य सर्वस्य स्वर्गादिहेतुत्वस्यानिष्टत्वात् तत्र विधिभेदः। विध्यैक्येऽपीति अपिना इदमुक्तं भवति— निमित्तस्थले तदुद्दिश्य कर्मविधानं मीमांसकेष्टम्, काम्यस्थले च काममुद्दिश्य। एकस्यानेकोद्देशेन विधानायोगात् विध्यैक्ये वाक्यार्थानिर्वाह इति दोषसत्त्वात् अगतिकतयोभयाकारत्वमिष्टम्, वाक्यस्यैव भिन्नत्वे किं-कुतः काम्यत्वं न स्यात्। अतः कैमुतिकी गतिरिह। अयं भावः— कामस्येव निमित्तस्य न फलाकांक्षाशामकत्वमिति तत् उद्देश्यत्वं विलक्षणम्। फलाकांक्षानिरपेक्षप्रवर्तकत्वं निमित्तत्वम्। अप्रवृत्तप्रवृत्तिहेतुकामनाविषयफलार्थत्वं काम्यत्वम्। नित्यकाम्यस्थले तु काम्यत्वं प्रकारान्तरेण प्रवृत्तस्यापि कामनाविषयफलहेतु वेन। विध्यैक्यस्थले तु पुत्रगतपूतत्वादिप्रसक्त्यभावे पुत्रजननमात्रेण न वैश्वानरेष्टिरिति निमित्तफलकामनयोः संवलितयोः प्रवृत्तिहेतुत्वम्। त्रिरूपत्वम्—नित्यत्वं नैमित्तिकत्वं काम्यत्वञ्च। श्रीरामनवम्याराधनस्य मध्याह्ने क्रियमाणस्य इत्याकालिकत्वात् नित्यत्वम्, श्रीरामावतारकालनिमित्तकत्वात् नैमित्तिकत्वम्, फलापेक्षिणां तस्यैवापेक्षितफलहेतुत्वात् काम्यत्वमपि। तथापि प्रयुज्यमानैककर्मव्यक्तौ कथं द्विरूपत्वं त्रिरूपत्वं चेति पृच्छति तर्हीति। तन्त्रशब्दमुख्यार्थमाह सकृत्करणमिति। तन्त्रेणानुष्ठानमित्यस्य सकृत्करणरूपमनुष्ठानमित्यर्थः। सकृच्चेनेति वाऽर्थोऽस्तु। तदनुसृत्यानुष्ठानन्तमिति प्रयोगः॥ ३८ ॥

मन्दस्यापि प्रवृत्तिः किमपि फलमनुद्दिश्य कस्यापि न स्यात्,
नित्येऽनर्थोपरोधप्रभृति फलम्, अतः काम्यतैवेति चेन्न ।
नित्येष्टोऽनर्थरोधः, तदितरदतथा, किंच शिष्टो विधीना-
माज्ञानुज्ञाविभागः, सुगम इह निरुक्त्यैव नैमित्तिकांशः ॥ ३९ ॥

सर्वेषैवमप्रवृत्तीनां यत्किंचित्प्रयोजनान्तराभिलाषादिविभागो न स्यादित्याशङ्क्य परिहरति **मन्दस्येति**। प्रभृतिशब्देन "पापेभ्यो रक्षन्ताम्" इत्यादिभासदुरितक्षयसंग्रहः । अतः—फलमीष्टफलत्वादित्यर्थः । काम्यतैव । नित्यनैमित्तिकयोरिति शेषः । सफलत्वाविशेषेऽपि नित्ये तावत् फलविशेषापेक्षया विभागाभिप्रायमाह **नित्येष्ट** इति । अनर्थपरिहारस्य सर्वेषां सर्वदाऽभीष्टत्वात् तदर्थे कर्मणि अकरणानर्हतया नित्यत्वेन विभागः । **तदितरत्**—सुखम् । **अतथा**—सर्वदाऽभीष्टं न भवति, सुखरहिताया मुमुक्षोराकाङ्क्षणात् । अत्र सुखार्थे काम्यत्वोक्तिः । उक्तमेव विभागं मुखभेदेन द्रढयति **किंचेति** । रागादिनयात् ईश्वराज्ञानुज्ञारूपविधिभेदात् विधेयविभागः सिद्ध इत्यर्थः ।

---

व्री— नित्यसामान्यस्य काम्यत्वात् कर्मसामान्यं काम्यम्, तत् नित्यानित्यभेदेन द्विधैत्येव विभक्तव्यमिति शङ्कते मन्दस्येति। कस्यापीत्यस्य कस्यचिदित्यर्थः । कस्यचिन्मन्दस्यापि सर्वथा फलमनुद्दिश्य न प्रवृत्तिरित्यर्थः । इदं कृतिसाध्यमित्युक्तौ किमर्थमिति जिज्ञासा नियता। तत्पूरणमपि नियतमिति भावः । अनर्थोपरोध —प्रत्यवायपरिहारः । प्रभृतीत्यनेन पापक्षयस्य सर्वनित्यसाधारणस्य, कचित् कामान्तरस्य च ग्रहणम् । पूर्वोत्तरमीमांसकसाधारण्येन द्वैविध्यं निर्वक्ति प्रथमम् नित्येष्ट इति । अकरणे प्रत्यवाय इति भिया क्रियमाणे नित्ये प्रत्यवायपरिहाररूपं फलं नियतम् । इदं प्राभाकरेष्टम्। भाट्टास्तु 'नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्', 'धर्मेण पापमपनुदति' इत्यादिवचनात् तत्रतत्र मन्त्रलिङ्गाच्च स्थितपापक्षयस्यैव फलत्वं समभ्यतीत्याहुः । तदपि नियतं नित्येष्टञ्च, तदितरत् उक्तफलव्यतिरिक्तफलं तु अतथा=न नित्येष्टम् । सेश्वरमीमांसकरीत्या प्रकारान्तरमाह किंचेति । आज्ञानुज्ञे शास्त्रिसापेक्षे । तत्र कैयमाज्ञेति शोधने अकरणेऽनिष्टहेतुर्नियमनमाज्ञा तदहेतुर्नियमनमनुज्ञा । सा चानुज्ञा कचित् स्वयप्रवृत्तस्यानुमतिरूपाऽपि न सर्वत्र तथा, काम्यकर्मसु शास्त्रविहितेषु शास्त्रविना दुर्ज्ञानेषु विशिष्य स्वयं प्रवृत्तस्यानुमतिरित्यस्य दुर्वचत्वात् । तथाच नियतेष्टविषयककामनाप्रयोज्यत्वं काम्यत्वम् । नैमित्तिकस्य योगव्युत्पत्त्यैव सुग्रहमित्याह सुगम इति । निरुक्ति—शब्दनिर्वचनम् । निमित्ते भवं नैमित्तिकम् । निमित्तत्वं=फलविशेषनिश्चयनिरपेक्षप्रवृत्तिहेतुत्वम् । तदधीनप्रवृत्तिकत्वं नैमित्तिकत्वम् ।

ननु नित्येष्टफलसाधनतया नित्यत्वे स्नानाग्निहोत्रादीनां नित्येष्टफलकामनया तदैव पुनः पुनः करणापत्तिरित्यत्राह अकरणानर्हतयेति । आवृत्त्या करणार्हत्वरूपं न नित्यत्वम्, किंतु सकृदप्यकरणानर्हत्वरूपम् । श्लोके नित्येष्ट इत्यस्यान्योऽप्यर्थः । य इष्टः नित्यभूतः = स्वयमिष्टोऽपि इच्छायाः सत्त्वामसत्त्वामपि कर्मानुष्ठाने सम्पद्यमानः, तादृशः । नित्यकर्मानुष्ठानकाले एतत्फलसंकल्पानपेक्षणात् । इतरत्तु फलं काम्यत्वम् तथा— नित्येष्टभिन्नम् कामनायामसत्यामपि जायमानत्वरूपनित्यत्वरहितं सत्, इष्टम् । कामनायामेव जायमानमिति यावत् । तथाच फलकामनाप्रयुक्तानुष्ठानविषयत्वं काम्यत्वम् । अकरणानर्हत्वबुद्धिप्रयुक्तानुष्ठानकत्वं नैमित्तिकमिति । सुखमिति तत्पर्यवसायि पुत्रपश्वादिसर्वफलोपलक्षणम् । ससाध्यताया सुखेऽपि नित्येष्टत्वाभावनिरूपणाय तत् विशिष्योक्तम् ।

ननु द्विविधं नैमित्तिकम्, तत्र प्रायश्चित्तमुपात्तानर्थहेतुनिरासार्थम्, अन्यदप्यकरणनिमित्तानर्थपरिहाराय; अतस्तयोरपि नित्यराशिप्रवेशप्रसङ्ग इत्यत्राह **सुगम** इति ॥ **इति नित्यकाम्यादिविभागः** ॥ ३९

**कर्तव्यं यन्निमित्ते सति तदुभयथा, पापशान्त्यर्थमेकं,**
**तत् प्राग्वत् काम्येन तुल्यं, परमकरणतो दोषकृन्नित्यतुल्यम् ।**
**सत्यां कामश्रुतौ संवलितमपि भवेत् तद्बलादेतदेव**
**त्यागे च प्रत्यवायस्त्वनधिकृतिमुखस्तत्र तत्रावसेयः ॥ ४० ॥**

काऽत्र निरुक्तिः, कीदृशश्च नैमित्तिकाश इत्यत्राह **कर्तव्यमिति** ॥ एकं—प्रायश्चित्तरूपम्, तस्याकरणनिमित्तप्रत्यवायाभावात् काम्यतुल्यत्वम् । परं—केवलनैमित्तिकम्, तस्याकरणे दोषान्नित्यतुल्यत्वम् । जातेष्टेर्नैमित्तिकत्वेऽपि पुत्रगतपूतत्वादिसाधनतया सकामाधिकारत्वमुक्तम्, तदाह **सत्यामिति** । नित्ये केवलनैमित्तिके च अकरणे दोषोऽधिकारभ्रंशादिरूपस्तत्तदकरणेषु ग्राह्य इत्याह **त्यागे चेति** ॥ **इति नैमित्तिकावान्तरविभागः** ॥ ४० ॥

**निष्कामं चेन्निवृत्तं तदिह न घटते मुक्तिकामाधिकारात्**
**स्वप्रीतिस्पर्शहीना न च भवति परप्रीतिरिष्टेति चेन्न ।**

---

श्री—उत्तरश्लोकावतरणसौकर्यानुकूलतया सुगम इत्यादिकमवतारयति नन्विति । अयं भावः— नित्यं काम्यञ्चेति द्वेधा विभागवत् नित्यं नैमित्तिकं काम्यमिति त्रेधा विभागोऽपि प्रसिद्धः । तत्र 'यावज्जीवं यजेत' इत्येवं जीवनादौ निमित्ते एव विधीयमानत्वात् नित्यमपि नैमित्तिकमेव । नियतनिमित्तकं नित्यम्, अनियतनिमित्तकं नैमित्तिकमित्याशयेन तथा विभागः । तत्र नैमित्तिके द्वैविध्यमस्ति प्रायश्चित्तं तदन्यच्चेति । तत्र द्वितीयम् उपरागनिमित्तस्नानादिकं नित्यनिविष्टमेव, अकरणे प्रत्यवायात् । तथा प्रायश्चित्तमपि तदन्तर्गतं स्यात्, प्रायश्चित्तस्य विहितस्याननुष्ठाने प्रत्यवायस्य सुवचत्वात् । अत उभयमपि नित्यमेव भवतीति शङ्का । सुगम इति । निर्वचनञ्च प्रागेव कृतम् । उत्तरश्लोके च द्रष्टव्यम् ॥ ३९ ॥

पापशान्त्यर्थमिति । प्रायश्चित्तरूपमिति यावत् । काम्येन तुल्यमिति । वक्ष्यति वृत्तौ सन्ध्योपासनाद्यकरणे प्रत्यवायवत् प्रायश्चित्ताकरणे प्रत्यवायोऽपि भवतीति नास्तीति । तथाच पापे प्राप्ते क्रियमाणतामात्रेण नैमित्तिकत्वेऽपि तस्य पापस्य जीवनादेरिव फलविशेषनिश्चयनिरपेक्षप्रवृत्तिहेतुत्वरूपं निमित्तत्वं नास्तीति भावः । सत्यामिति । वैश्वानरेष्टौ पूत एव तेजस्वी इत्येवं कामश्रवणसत्त्वात् तद्बलात्—श्रुतिबलात् एतदेव—नैमित्तिकमेव संवलितमपि भवेत्—कामसंवलितं काम्याकारकामनाप्रयुक्तानुष्ठानकं भवेत् । अथवा कामश्रुतौ सत्यां संवलितमपि—निमित्तसंवलितमपि तद्बलात्—कामप्राधान्यात् एतदेव—काम्यमेव भवेदित्यर्थः । अत एव वृत्तौ नित्ये केवलनैमित्तिके च अकरणे दोष इति वक्ष्यति । प्रत्यवायदशाऽविवक्षितमाह त्यागे चेति । अनधिकृतीति । 'संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु' इत्यादिबलादिति भावः ॥ ४० ॥

काम्यनैमित्तिकशब्दनिर्वचनेऽनुपपत्तिपरिहारः कृतः । निवृत्तिकर्म प्रवृत्तिकर्म, निष्कामं सकाममिति व्यवहारमपि निरुच्य निर्वोढुमाह निष्काममिति । निवृत्त-निवृत्तिकर्म भक्तियोगादिकं निष्कामं न भवति मोक्षरूपकामकामनापूर्वकत्वात् । ननु तत्र भगवत्प्रीतिरेव फलम्, न तु स्वस्य । स्वगतफलप्रयुक्तत्व एव सकामत्वमित्यत्राह स्वप्रीतीति । श्राद्धे पितृप्रीतेः, जातेष्टौ पुत्रगतपूतत्वादेश्च काम्य-

युक्ता यस्मान्निवृत्तिर्बहुभयशबलात् तन्निवृत्तं निवृत्त
वृते यत्र प्रवृत्तिस्त्वभिमतमहितं तत् प्रवृत्तं प्रवृत्तम् ॥ ४१ ॥

यस्तु मन्वादिभिरुक्तो विभाग —इह वाऽमुत्र वा [कामार्थं ?] काम्यं प्रवृत्तम्, निष्कामस्य ज्ञानपूर्वं तु निवृत्तमिति—स कथं घटते ; सर्वेषामपि धर्माणां यत्किंचित्फलकाममधिकृत्यैव विधेः । यद्यपि निराशीःकर्मकारिणा परमात्मप्रीतिरेवोद्देश्या, तथाऽपि तत्कामत्वं सिद्धम । परप्रीतेरुद्देश्यत्वं च तस्याः स्वप्रीतिपर्यन्तत्वमभिसन्धायैवमेव । अतस्तेषामपि स्वप्रीतिकामत्वं दुस्त्यजमित्याक्षेपमनूद्य प्रत्याचष्टे निष्काममिति । नात्र निष्कामशब्दः इच्छामात्रनिवृत्त्यर्थ इति निषेधाभिप्राय । कुतस्तर्हि विभाग इत्यत्राह युक्तेति । अनर्थाविनाभूतसुखकामनातो निवृत्तं कर्म निष्कामं निवृत्तमिति चाहुः, अनेवंविधं तु काम्यं प्रवृत्तमिति च इति भाव ॥ इति प्रवृत्तिनिवृत्तिविभागः ॥ ४१ ॥

पुंभिः सिद्धाधिकारैः क्रतव इव निराकाङ्क्षभावं भजन्त्यः
प्रोक्तास्त्रैवर्णिकार्हाः श्रुतिनयवशतो यद्यपि ब्रह्मविद्याः ।

---

(श्री– मात्रत्वे तत्र निष्कामत्वं न हि भवति । तद्गतफलस्यैव स्वेष्टत्वेन स्वकामनाविषयफलकत्वस्याक्षतत्वात् । किञ्च परप्रीतौ सत्यां स्वयं प्रीतो भवतीति परप्रीतिमूलकस्वप्रीत्युद्देश्यकत्वमेव तत् । उक्तमंगीकृत्य निष्कामादिपदनिर्वचनमन्यथा दर्शयति युक्तेति । वस्तुतो दुःखमिश्रं यत् फलम्, तत्कामना प्रयुक्तं सकामम्; तादृशफलकप्रवृत्तिविषय एव च कर्म प्रवृत्तम् । तादृशकामनानिरपेक्षं कर्म निष्कामम्, तादृशफलात् निवृत्य क्रियमाणं कर्म निवृत्तमिति विभागः । यत्तु—निवृत्तिर्निर्व्यापारता; ज्ञानमात्रे स्थितिरिति अद्वैतिमतम्–तत् "निवृत्तिलक्षणं धर्ममृषिर्नारायणोऽब्रवीत्" इति निवृत्तेरप्यनुष्ठेयधर्मत्वादयुक्तम् ॥ ४१ ॥

एवं विद्यानां मोक्षसाधनत्वं वेद्यावेद्यवस्तुस्वरूपं विद्याङ्गानि च निरूपितानि । ईदृशाङ्गविशिष्टविद्यानुष्ठानाधिकारिशोधनमथ क्रियते । त्रैवर्णिकानामेव विद्याधिकार इत्युत्सर्गेऽपि विद्याविशेषे कतिपयकर्मसु चान्यस्याप्यधिकार इत्याह पुंभिरिति । अत्रैवर्णिकानां विद्याधिकारवारकं किमित्यत्रोपपादयति पूर्वार्धेन । यागादिषु वैदिकेषु शूद्रादेरनधिकारः पूर्वमीमांसायामेवोक्तः । ननु 'ज्योतिष्टोमेन यजेत' इत्यादौ विशिष्य वर्णविशेषनिर्देशाभावात् कर्मणां कर्त्राकांक्षायां सर्वेषामविशेषेणान्वयसंभवे कथमनधिकार उच्यत इति चेत्–अवधेहि । कर्मविधयः कर्तारमाकांक्षन्ति । अविदुषः अनुष्ठातृत्वायोगात् अनग्निकस्य अग्नौ कर्तव्यहोमाद्यनुष्ठानायोगाच्च विद्यावतः साग्निकानेव कर्मविधय आकाक्षन्ति । वेदेन त्रैवर्णिकान् प्रत्येवोपनयनाध्ययनविधानात् तेऽधीत्य सिद्धज्ञानाः सन्ति । तथा त्रैवर्णिकगृहस्थान् प्रत्येवाग्निविधानात् तादृशगृहस्थाः साग्निकाः सन्ति । एवंच त्रैवर्णिकगृहस्थाः अग्निविद्यारूपाधिकारिविशेषणसंपन्नतया सिद्धाधिकाराः । तथाच कर्तृसाकांक्षाः कर्मविधयः स्वतःसिद्धाधिकारपुरुषलाभेन निराकांक्षा आसन्निति नान्यान् शूद्रांश्च ग्रहीष्यन्ति । यदि वेदोऽग्निविद्याश्च वर्णविशेषे न विदध्यात्, तर्हि सर्वेऽपि वर्णाः अग्निविद्यासंपादने कर्मानुष्ठाने च प्रेर्याः स्युः । कतिपयपुरुषलाभेन निराकांक्षेषु कर्मविधिषु कर्मविधिभिरपेक्षिताः अन्ये तत्र न प्रवर्तितुमर्हन्ति । वर्णविशेषं प्रति अध्ययने विहिते स्थिते, अन्यस्याध्ययनकल्पनञ्च न युक्तम् । अतः श्रुतिनयवशात:— त्रैवर्णिकमात्राध्ययनविधायकश्रुतिवशात्, सिद्धाधिकारेणैव निराकांक्षत्वेऽन्यस्याधिकारकल्पनमयुक्तमिति न्यायवशाच्च क्रतवः सिद्धाधिकारत्रैवर्णिकपुरुषान्वयात् निराकांक्षतां भजन्तः त्रैवर्णिक-

अस्तेयाद्यैः प्रपत्त्या परिचरणमुखैरप्यधीतैः स्वजातैः
सर्वेऽपि प्राप्नुयुस्तां परगतिमिति तु ब्राह्मगीतादिसिद्धम् ॥ ४२ ॥

यदि यज्ञादिभिरेव विद्योपकारः, तर्हि आश्रमान्तराणां सा न स्यात् । अथ यथार्हं स्ववर्णादिधर्मैः, तदा शूद्रस्यापि स्यात् । ततश्च काण्डद्वयोक्तापशूद्रनयविरोधः । तत एवानधिकारे, "मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥" इति शरणोक्तिविरोध इत्यत्राह पुंभिरिति । सिद्धाधिकारैः—अधीतवेदतयाऽनुष्ठानोपयुक्तज्ञानशक्तिरपेक्षितमन्त्र विद्भिश्चेत्यर्थः । श्रुतिनयवशतः-अध्ययनविधिसिद्धन्यायसामर्थ्यात् । तथा हि—अग्निविद्यासापेक्षाः क्रतुविषयो यथा अधीतवेदैरग्न्याधानार्हैर्निराकाङ्क्षाः स्वसिद्ध्यै नान्येष्वन्यनोऽधिकारं प्रयुञ्जते, एवं विद्याविषयोऽपि "शुगस्य" इत्यधिकरणे यद्यपि प्रोक्ताः, तथाऽपि "शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः । तेऽपि मृत्युमतिक्रम्य यान्ति तत् वैष्णवं पदम्" इति ब्राह्मवचनात्, "स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इति चातुर्वर्ण्यविषयभगवदुक्त्या च शूद्रस्यापि शास्त्रसिद्धेः फलसङ्गत्याग

---

वी— मात्रार्हाः प्रोक्ताः । एवं कर्मकाण्डोक्तकर्मविधिष्विव औपनिषदविद्याविधिष्वपि वर्णविशेषानिर्देशेऽपि त्रैवर्णिकैरेव वेदस्याध्येयतया अध्ययनविधिबलप्रवृत्तेः शास्त्रार्थवैदुष्यशालिभिरेरेव ब्रह्मविद्या अपि निराकांक्षतां भजन्त्यः शूद्रे ज्ञानादि परिकल्प्य तद्ग्रहणपर्यन्तं न प्रवर्तन्ते इति त्रैवर्णिकमात्रार्हा एव । कर्मकाण्डापशूद्राधिकरणे इव ब्रह्मकाण्डापशूद्राधिकरणे इदं विशिष्य निरधारि । अत्र विशेषं वक्तुं यद्यपीति प्रयुज्य विवृणोत्युत्तरार्धेन अस्तेयेति । अयं भावः—किं विद्यायामनधिकारात् शूद्रादिर्व्यावर्त्यते, किं वा विद्याङ्गकर्मस्वनधिकारात् । नाद्यः; भक्तिरूपविद्यासु शूद्रस्याधिकारोऽपशूद्राधिकरणन्यायेन वार्यताम् । विशेषवचनसद्भावात् पूर्वोक्तन्यासरूपप्रपत्तिविद्यायामधिकारसंभवात् । नान्त्यः, कर्मानधिकारात् विद्यावारणे संन्यासिब्रह्मचर्यादीनामपि विद्याविरहप्रसंगात्, तेषु यज्ञादिकर्मायोगात् । तदभावेऽपि स्वस्वाश्रमधर्ममात्रेणांगपूर्तिरिति चेत्–तर्हि शूद्रेऽपि स्ववर्णधर्ममात्रेण पूर्तिः स्यात् । ते च धर्माः अस्तेयाहिंसाब्रह्मचर्यसत्यदानादयः, उत्तमवर्णपरिचर्या स्वार्थविहितक्रियाविशेषाश्चेति । प्रपत्तिरूपविद्या सर्वाधिकारेति ब्रह्मपुराणादिसिद्धम् । तत्तद्वर्णाश्रमधर्ममात्रं पर्याप्तमिति च गीतादिसिद्धमिति श्लोकार्थः ।

ननु प्रपत्तिरूपविद्यैव शूद्रे विवक्षिता, न पुनरुपास्ता, पाञ्चरात्रोक्तानामप्युपासनानां त्रैवर्णिकाधिकारिकत्वात् । शूद्रस्य कुत्रापि विद्यास्थानेऽधिकाराभावात् । न चास्तेयादीनां स्वत एव मोक्षसाधनत्वमिष्यते, विषयवासपुरुषोत्तमत्वज्ञाननामसंकीर्तनादिवत् भक्तिप्रपत्तिव्यतिरिक्तस्य सर्वस्य साक्षात्साधनत्वाभावस्य सिद्धान्तसिद्धत्वात् । एवञ्च प्रपत्तिमात्रे विवक्षिते तस्याः वर्णाश्रमधर्माद्यङ्गनिरपेक्षत्वात् अस्तेयाद्यैरित्यादिना तदुपपादनं कथम्; न हि गृहस्थव्यतिरिक्तेऽप्यधिकारस्थापनार्थमयं श्लोकः; वृत्तिविरोधात् पूर्वार्धगतिविरोधाच्चेति चेत्—सत्यम्, किं साक्षादुपायाभावात् अनधिकारः, वर्णाश्रमधर्माणामङ्गत्ववासनया तदभावादिति विकल्प्य निरासे तात्पर्यात् । तदिदमुपपादितमेव श्लोकार्थवर्णने । किञ्च यदि कश्चित् शूद्रो मुमुक्षुः प्रधानविद्यानधिकार्यपि अनभिज्ञत्रैवर्णिकवत् सात्त्विकत्यागपूर्वकस्वकर्मानुष्ठानेन जन्मसाफल्यं संपाद्य विद्यार्थमुत्तमजन्मप्रतीक्षमाणः स्यात् । स स्वतन्त्रप्रपत्तावप्रवृत्तोऽपि यथार्हमधिकार्यवेति ज्ञापनार्थमेतत्सर्वकथनम् । इदमेव मुख्यम् । तथा प्रपत्त्यनुष्ठानात् पूर्वं क्रियमाणं निवृत्तिकर्म भगवत्प्रसादात् प्रपत्तौ प्रेरयेत् अङ्गत्वेनानुष्ठानाभावेऽपि ।

वद्भिः निवृत्तिधर्मयोगो न विरुद्धः । स च मुक्तिपर्यन्त एव स्यादिति भावः ॥

इति त्रैवर्णिकाधिकारसर्वाधिकारविभागः ॥ ४२ ॥

(अथाद्वैतीयमोक्षोपायनिरासः)

ध्यानादृष्टेन साक्षात्कृतिरुपजनिता बाधते चेत् प्रपञ्चं,
तत्तुल्यार्थैव शाब्दी प्रमितिरपि न किं बाधते पूर्वमेव ।
ज्वालैक्यादौ परोक्षादपि हि निजमदुर्वारमध्यक्षबुद्धेः
नाप्यद्वादृष्टरूपाप्रहितविमथनीं शक्तिमङ्गीकरोषि ॥ ४३ ॥

अद्वैतिनः केचिदाहुः—'तत्त्वमस्यादिवाक्यजन्यब्रह्मात्मभावबोधस्य तदेकध्यानसाध्यादृष्टजन्य साक्षात्कारेण विश्वभ्रमबाध' इति । तदनूद्य दूषयति ध्यानेति । अयं भावः — ध्यानजनकं वाक्यजन्यं ज्ञानं ध्यानादृष्टजन्यं च समानविषयम्, न वा ? आद्ये किं ध्यानेन, वाक्यजन्यज्ञानादेव मुक्तिः स्यात् । उत्तरत्र ब्रह्मणः सविशेषत्वं स्यात्; वेद्याकारवैषम्यात् ॥ आकारभेदः कल्पित इति चेन्न; तयोः भ्रान्तित्वप्रसङ्गात् । तत्त्वज्ञानान्मोक्ष इति चाङ्गीकारात् । अन्यथा तद्यत्नवैयर्थ्यात् ॥ अस्तु प्रागेव बाध,

---

श्री— उत्तरत्र स्वधर्मस्थितिश्च परेषामेतच्छूद्रविषये प्रपत्तिनिष्पत्तिसंदेहवारिका स्यादित्यादि ध्येयम् । न पुनः प्रपत्त्यंगभूतस्यानुकूल्याचरणस्य प्रातिकूल्यवर्जनस्य चालोपाय आमरणं तत्परिपालनमिति मन्तव्यम् । संकल्पमात्रमेवाङ्गम् । 'आनुकूल्यस्य संकल्प' इत्येवोक्तेरित्यादिसिद्धान्तविरोधात् ॥ तथा च सर्वोऽपि अत्रैवर्णिकोऽपि, प्रपत्त्या स्वजात्यधीतास्तेयोत्तमवर्णपरिचर्यादिनः साक्षाद्वा क्रमेण वा तां परगति मुक्तिं प्राप्नुयादिति प्रमाणसिद्धमित्युत्तरार्धयोजना । एवं परकार्योपयोगश्च "स च मुक्तिपर्यन्तः" इति वृत्तिसूक्तिसिद्धम् । श्लोके प्रपत्येत्यस्याङ्गमध्ये उक्तिः जन्मान्तरे भक्तियोगप्रवृत्तिकामः निर्विघ्नत्रैवर्णधर्मानुष्ठानकामश्च शूद्रः इह जन्मनि अङ्गप्रपत्तिमनुष्ठातुमर्हतीति ज्ञापनाय । तथाहीत्यादिना नविरुद्ध इत्यन्तेन पूर्णश्लोकार्थोपपादनम् । तत्र तथाहीत्यारब्धं समाप्तम् । नन्वेवं स्वकर्माधिकारोक्त्या मोक्षोपायसिद्धिः कथमित्यत्र श्लोकस्य भावमध्याहृत्य रचेति ॥ ४२ ॥

एवं स्वपक्षे मोक्षहेतुविद्यानिरूपणं कृतम् । अथैकादशभिः पद्यैः अद्वैतसंमतमोक्षहेतुविद्याशोधनं क्रियते । तत्र 'ध्यानजादृष्टजन्यसाक्षात्कारान्मुक्तिः, स्वर्गादिवत् नियोगान्मुक्तिः, केवलवाक्यार्थज्ञानान्मुक्तिः, शाब्दापरोक्षज्ञानान्मुक्तिः' इति पक्षचतुष्टयं पद्यचतुष्टयेन निरस्यति । प्रथमं भामतीकारपक्षमाह ध्यानेति । वाक्यार्थज्ञानादेव मुक्तौ ध्याननिधिवैयर्थ्यम् । ध्यानस्य साक्षात् तत्त्वसाक्षात्कारजनकत्वञ्चासिद्धम् । अतो वाक्यार्थज्ञानात् अद्वैतध्यानम्, तस्मादृष्टम्, तज्जन्यः तत्त्वसाक्षात्कारः, ततो मुक्तिः मिथ्याभूतप्रपञ्चनिवृत्तिरूपेति तत्पक्षः । तत्रोच्यते—साक्षात्कारस्य प्रपञ्चबाधकत्वे बाधनिवर्शाब्दज्ञानस्यापि बाधकत्वं स्यात् समानविषयकत्वात् । परोक्षज्ञानस्यापरोक्षबाधकत्वं नेति न । ज्वालैक्यादिविषयकाध्यक्षबुद्धिबाधं परोक्षात् ज्वालाभेदप्रत्ययादृष्ट्यो वन् हि । अनुमानेन ज्वालाभेदमवधृतवता हि सेयं दीपज्वालेति ऐक्यप्रत्यक्षं न जायते । सादृश्यप्रत्यक्षं तु भवेत् । किं तेन । ननु विषयवैलक्षण्याभावेऽपि अद्वैतसाक्षात्कार एव मोक्षहेतुः तदनुकूलशक्तिमत्त्वात्, न तु परोक्षं तथेत्यत्राह नापीति । लोके यथा शुक्त्यादिज्ञानस्य रजतादिनिवर्तकत्वं, तथा किलाद्वैतज्ञानस्य प्रपञ्चनिवर्तकत्वं तदिष्टम् । शापानुग्रहादेरिव शक्तिमत्त्वेन कारणत्वे मिथ्यात्वं प्रपञ्चस्य न स्यादिति

बाधितानुवृत्तिपरिहाराय तु साक्षात्कार इति चेन्न ; साक्षात्क्रियमाणेऽपि तत्त्वे दोषानुवृत्तौ बाधितानुवृत्तेर्लोके बहुलमुपलम्भात् ; दोषनिवृत्तौ तु बाधितानुवृत्तेरेवाभावात । सदेहानां च यावज्जीवं सा दुर्वारा । देहनिवृत्तौ चक्रभ्रमन्यायात् स्वयमेव निवर्त्स्यतीति किं तद्बाधकेन ? नतु प्रत्यक्षभ्रमस्य परोक्षं कथं बाधकमित्यत्राह ज्वालैक्यादाविति । अनुमानेनोऽप्यत्र ज्वालैक्यप्रत्यक्षं बाध्यते, देहात्मभ्रमश्चानुमानतः शास्त्रतो वा । तथेहापि स्यात् । अन्यथा कथमद्वैतवाक्यार्थनिश्चयपूर्वकध्यानादिसिद्धिः ॥ ध्याननियोगजन्यज्ञानस्य गरुडादिदृष्टिन्यायादनिष्टनिवर्तकत्वमिति चेन्, तत्राह नापीति । विरुद्धविषयावगाहनशक्त्या बाधितस्य हि मिथ्यात्वसिद्धिः, विषहरणधीन्याये तु विषादिवदेव निवर्त्यसत्यत्वप्रसङ्गादिति भावः ॥

इति ध्याननियोगवादभङ्गः ॥ ४३ ॥

> **निर्दिष्टो निष्प्रपञ्चीकरणविधिरसौ गौडमीमांसकास्यैः**
> **दृष्टो न क्वापि ; दुर्निर्वहमपि करणाद्यत्र साध्याविशेषात् ।**
> **मुक्तिर्नैयोगिकी चेत्, जगदपि न मृषा ; नश्वरी सापि ते स्यात् ;**
> **ध्वंसात्मत्वेऽपि तस्या न च वदसि भिदां क्षणस्तत्र नित्यम् ॥ ४४ ॥**

---

प्र°— ध्यानादृष्टेनेति । साक्षात्क्रियमाणेऽपि तत्त्वे दोषानुवृत्ताविति । अङ्गुल्युपष्टम्भदष्टेः छादनेऽनुपष्टम्भेन चक्षुषा चन्द्रैकत्वादौ साक्षात्क्रियमाणेऽपि उपष्टम्भदृष्टिच्छादनागमेन बाधितस्य चन्द्रद्वित्वानुवृत्तेः दर्शनादित्यर्थः ॥ ४३ ॥

वी°— न तद्दिष्टमिति भावः । साक्षात्क्रियमाणेऽपीति । पित्तोपप्लुतस्य पित्तशान्तौ यथावद्दर्शने जातेऽपि पुनः पित्ते दोषे प्राप्ते भ्रान्त्युदयः । अङ्गुल्यवष्टम्भनिवृत्तौ एकचन्द्रदर्शने सति पुनरवष्टम्भे द्विचन्द्रदर्शनमित्यनुभवात् दोषानुवृत्त्यैव भ्रमः, न त्वन्यथेति सिद्धया प्रकृते अविद्यारूपदोषस्यापि मिथ्यात्वेन निवृत्तत्वात् कथं बाधितानुवृत्तिरित्यर्थः । विरुद्धविषयावगाहनशक्त्येति । अवगाहनमेव शक्तिः । नात्र गरुडध्यानादाविव विध्यायत्तादृष्टशक्तिरपेक्षितेति भावः ॥ ४३ ॥

नियोगान्मोक्ष इति गौडमीमांसकपक्षं निरस्यति निर्दिष्ट इति । समन्वयाधिकरणभाष्ये प्राभाकरच्छायापन्नमिदं सम्यगनूदितं निरस्तञ्चेति तत एव ग्राह्यम् । गौडमीमांसकेति । वेदाध्ययनाभावात् गौडः लौकिकवाक्यमपि सस्वरमुक्तं वेदं मन्यत इति परिहसितो न्यायकुसुमाञ्जलौ । नियोगवाक्यार्थवादेन तत्तुल्यशीलत्वादेषामद्वैतिनां तदास्यत्वम् । आस्यत्वं विश्वासपात्रत्वं वा तैरास्यत्वं वा तान् आस्यत्वं वा । मीमांसकरीत्या नियोगादिव्यवहारात् । सप्रपञ्चं ब्रह्म निष्प्रपञ्चं कुर्यादिति विधिरन्तैर्निर्दिष्टो न दृष्ट उपनिषदादौ । करणादीति । नियोगवादिना करणं विषयः इतिकर्तव्यता नियोज्यविशेषणमित्यादिकं दुर्वचमिति व्यक्तं भाष्ये । साध्याविशेषादिति । निष्प्रपञ्चध्वंसविषयकनियोगेन मुक्तिं निष्प्रपञ्चध्वंसं कुर्यादित्युक्तौ साध्यकरणयोरैक्यं स्यात् । ध्वंसानुकूलव्यापार एव करणमिति चेत्—कोऽसौ व्यापारः । न तावत् ज्ञानम्, तस्याविधेयत्वात् । नान्यः, प्रपञ्चनिवृत्तेः ज्ञानातिरिक्तजन्यत्वे प्रपञ्चस्य सत्यत्वापत्तेः। दोषमिमं नियोगजन्यत्वेऽपि दर्शयति मुक्तिरिति । सा = मुक्तिरपि, नैयोगिकी चेत् जगदपि न मृषा । स्यादित्यस्यात्राप्यपकर्षः । अपिशब्दद्वयं वाक्यार्थद्वयसमुच्चये । जन्यत्वात् सा = मुक्तिः जन्यत्वात् नश्वरी स्यात् । मुक्तिनाशे पुनः संसृतिः स्यात् । ध्वंसेति । ध्वंसस्य जन्यत्वेऽपि अन्ताभावान्नायं दोष इति चेत्—तर्हि नित्यस्य मुक्तिपदार्थस्यापि स्वीकारे द्वैतापत्तिरिति

अन्ये तु वर्णयन्ति–'नित्यशुद्धमप्यद्वितीयं ब्रह्म गगनमिव गन्धर्वनगरवत्तया, सप्रपञ्चतया प्रतीयमानं निष्प्रपञ्चीकुर्यादिति विधिविषयानुष्ठानजनितनियोगविशेषेण मिथ्याविद्यानिवृत्तिः' इति । तान् प्रत्याचष्टे **निर्दिष्ट** इति । अनधीतमधीतविरुद्धं च कल्पयन्तीति व्यवहै गौडमीमांसकासत्कोक्तिः । क्वापि—श्रुतिषु स्मृतिषु चेत्यर्थः । 'न क्वापि दृष्ट' इत्युक्तं 'न दृष्टेर्द्रष्टारं पश्येः' इत्यादिदर्शनादिति चेत्—न ह्यत्र वाक्ये द्रष्टादिप्रध्वंसं कुर्वीतेति विधीयते । किंतु(?) जीवस्यौपाधिकं रूपं नानुसन्धत्स्वेति वा, करणायत्तज्ञानं जीवं परत्वेनापश्यन् स्वरूपमेव पश्येरिति वा, प्रकारान्तरेण वा नेतुं शक्यत्वात् । निषेधश्रुतयश्चान्यपराः; न च विधिप्रसङ्गस्य । दूषणान्तरमाह **दुर्निर्वह**मिति । नियोगस्य हि करणेति कर्तव्यतादि वक्तव्यम् । यदि प्रपञ्चध्वंसेन नियोगं भावयेदिति करणकल्पितिः, तदा नियोगसाध्यसाधनयोः अविशेष इत्यन्योन्याश्रयः । अथ नियोगमजागलस्तनीकृत्य निष्प्रपञ्चभावनयैव निष्प्रपञ्चीकरणं, तदाऽऽत्माश्रयः । इतिकर्तव्यता च करणानुपपत्त्यैव निरस्ता । प्रयोक्ता चासौ द्रष्टा न स्वावसानाय नियोगकृत्यामुत्पादयेत् । तदा च "शास्त्रफलं प्रयोक्तरि" इति न स्यात् ॥ अथ शुद्धस्य ब्रह्मणः फलम्—तत्र,

---

भा॰— निर्दिष्टो निष्प्रपञ्चीकरणविधिरिति । जीवस्यौपाधिकरूपमिति । दृष्ट्यधीनद्रष्टृत्वं कर्मौपाधिकं रूपं तस्यानुसन्धत्स्वेत्यर्थः (?) । प्रकारान्तरेण चेति । द्रष्टारं जीवं दृष्टिव्यतिरिक्तं न पश्येः, अपि तु दृष्टिरूपमेव पश्येरिति प्रकारान्तरेणेत्यर्थः । तदाऽऽत्माश्रय इति । मिथ्यार्थानां नास्तीति ज्ञानव्यतिरेकेण निवर्तनाभावादिति भावः ॥ ४४ ॥

श्री— ब्रह्मैव मुक्तिरिति वक्ष्यसि । एवञ्च नियोगजन्यत्वं साध्यत्वं कथम्; ब्रह्मणः अजन्यत्वादिति । 'अद्वितीयं ब्रह्म' इति द्वितीयान्तम् । जनितनियोगेति । नियोगोऽपूर्वम् । किं तु जीवस्येति । किं तु इति पाठसत्त्वे कुतस्तु इति प्रश्नः । पृथग्वाक्यम् । अन्यथाऽनन्वयात् । जीवस्यौपाधिकमिति । 'न दृष्टेर्द्रष्टारं पश्येः' इत्यस्य दृष्टि चैतन्य तदतिरिक्तं द्रष्टारं दृश्यञ्च प्रपञ्चं न पश्येरित्यर्थवर्णनमुदक्षरम् । किं तु जीवं करणायत्तदृष्टिमत्त्वादिवर्तमानप्रकारवन्तमेव सदा न पश्येः । इदमौपाधिकम् । स्वाभाविकं तु करणनिरपेक्षं स्वाभाविकं सर्वद्रष्टृत्वमित्यर्थः । वस्तुतः सर्वान्तरब्रह्मोपदेशप्रकरणात् प्रागुक्तं सर्वान्तरं करणायत्तद्रष्टृत्वादिमज्जीवरूपेण न मन्वीथा इत्यर्थः । प्रकारान्तरेण वेति । यः प्राणेन प्राणिति इत्यादि[मया]ति प्रागुक्तं प्राणनकर्तारं दर्शनश्रवणमननध्यानकर्तृजीवं न पश्येः । किं तु दर्शनादिविषयपरमात्मत्वेन पश्येरित्यर्थः । अथवा दृष्टेरिति पञ्चमी । ज्ञानस्वरूपातिरिक्ततया ज्ञातारं न पश्येः इत्यर्थः । तत्र ज्ञानस्वरूपत्वविधाने ज्ञातृत्वनिषेधे च तात्पर्यमिति कुतः? ज्ञातृत्वेन निराबाधमनुभूतस्य ज्ञानस्वरूपत्वमप्यस्तीति समुच्चय एव तात्पर्यमिति भावः । अन्यपरा इति । 'नेह नानास्ति', 'यत्र त्वस्य सर्वमात्मैवाभूत्' इत्यादिश्रुतयः भगवदनुभवपरस्य तदितरविषयकज्ञानाभावपरा अपि भवेयुः । सुषुप्तिकाले, 'न पिता न माता, न तु तद्द्वितीयमस्ति' इत्यादिवाक्यानां न हि प्रपञ्चाभावपरत्वम् । तदा मुक्त्यभावात् । तत्रानुभव एव वक्तव्य, तद्वत् । वस्तुतः स्वतन्त्रवस्त्वन्तरनिषेधपरत्वं भाष्यादौ प्रपञ्चितमेव । न च विधीति । निष्प्रपञ्चीकरणविधिस्वारस्य नतत्रेति भावः । आत्माश्रय इति । निष्प्रपञ्चीकरणं हि प्रपञ्चाभावानुकूलव्यापार एव । स च भावनैवेति । प्रपञ्चाभावस्तु नार्थः । बाधितानुवृत्तिसद्भावेन प्रपञ्चाभावायोगात् । शास्त्रफल प्रयोक्तरीति । शास्त्रे नियोज्यविशेषणतयोपात्तमनुष्ठातरि भवति, तद्भोग्य भवतीति पूर्वमीमांसा । निष्प्रपञ्चीकरणशास्त्रमनुष्ठातृनाशकं कथं शास्त्रं स्यात् । भृगुपतनसर्वस्वारयज्ञादिशास्त्रं तु देहवियोजकमपि नात्मनाशकम् । स्वसुखार्थमेव तत्रापि प्रवृत्तेः । फलमिति ।

तस्य अभाष्यासशून्यत्वाङ्गीकारात ; तदर्थित्वाभावात् ; शास्त्रार्थप्रयोक्तृत्वायोगाच्च । अस्मिन् पक्षेऽप-सिद्धान्तापत्तिमाह **मुक्तिरिति** । यस्माद्दष्टसाध्यो नाशः तस्य ज्ञानबाध्यत्वाभावात् प्रपञ्चमृषात्वं न स्यात् । नियोगसाध्यं च सर्वं काल्पनिकत्वादनित्यमिति मन्यसे, अतो मुक्तिरपि नश्यतीति अन्योन्यमज्जनप्रसङ्गः ; अभावाभावस्य भावत्वात् । ध्वंसस्य च ध्वंसप्रवाहापत्तिः । न च ते तत्कल्पनो हेतुरस्ति । ननु ध्वंसो ह्युत्तरावधिरहितः, प्रायश्चित्तनियोगात् पापध्वंसवत मुक्तेरनश्वरत्वं स्यादित्यत्राह **ध्वंसात्मत्वेऽपीति** । ध्वंस रूपा मुक्तिर्ब्रह्मणोऽन्याऽनन्या वा ? नाद्यः, कार्यस्य सर्वस्य घटतद्ध्वंसादेः स्वमपपञ्चतद्ध्वंसादेरिव बाध्यत्वा भ्युपगमात्। अबाधे च मुक्तावपि भेदसिद्धिप्रसङ्गात्। भावाद्वैतपक्षश्च न युक्तः, क्वचित् निर्वाधिन(निर्बाधनया?) भेदसद्भावेऽन्यत्रापि तदविरोधात् । तत्र चोक्तानां बाधकाना त्वदिष्टेऽपि संचारयितुं शक्यत्वात् ; न द्वितीयः, ध्वंसस्य साध्यत्वात् ब्रह्मणस्तु नित्यत्वात् तयोः तादात्म्यायोगात् ; तदिदमभिप्रेत्याह **तच्च नित्यमिति** ॥ इति निष्प्रपञ्चीकरणनियोगवादभङ्गः ॥ ४४ ॥

**वाक्यार्थज्ञानमात्रात् अमृतमिति वदन् मुच्यते किं श्रुतेऽस्मिन् ?**
**बाढं चेत् मानबाधः, स यदनुभवति प्रागिवाद्यापि दुःखम् ।**
**ध्यानादीनां विधानं भवति च वितथं, तत्र युक्तं न चेष्टं,**
**ध्यानाद्यङ्गाढ्यशब्दोदितचरमतेर्नाधिकं वः प्रकाश्यम् ॥ ४५ ॥**

यस्त्वाह किं ध्याननियोगेन नियोगान्तरेण वा, तत्त्वावेदकवाक्यजन्यज्ञानादेव कल्पितबाधोपपत्तेः ; दृष्टश्च दृढप्रतीतस्यापि वाक्यतो बाध । ज्ञानमात्रादेव च मुक्तिश्श्रूयते भवति च वाक्यादद्वैतधी ; अतः सैव द्वैतनिवर्तिकेति--सोऽयमनुयोक्तव्यः--किं श्रवणजन्यज्ञानमात्रात् प्रतिष्ठापितात् मुक्तिः ? उताद्वैत ज्ञानजनितविकल्पवैधुर्यस्य तेनैव वाक्येन जनितात् विशदज्ञानादिति । तत्राद्यं निरस्यति **वाक्यार्थेति** ।

---

श्री— इति चेदिति शेषः । यस्येति । यस्य वादिनो मत इत्यर्थः । तस्येति । तस्य मते इत्यर्थः । दोषान्तरमाह नियोगसाध्यञ्चेति । ध्वंसत्वेऽपि काल्पनिकत्वात् निवृत्तिः अवर्जनीयेति भावः । हेतुरिति दोषनद्याश्रयपुरुषाभावादिति भावः । भावाद्वैतेति । मुक्त्यवभावस्य ब्रह्मातिरिक्तस्य सद्भावेऽपि नाद्वैतहानिः । भावपदार्थो न द्वितीय इत्येवाद्वैततात्पर्यमिति भावः । क्वचिदिति । अभावे इत्यर्थः । भेदस्वीकारे=ब्रह्मापेक्षया भिन्नत्वस्वीकारे । निर्वाधितेत्यत्र अबाधितेति स्यात् । निर्वाधं कृतं निर्वाधत्वाभिमतं निर्वाधितमित्यर्थो वा । तत्रेति भावरूपवस्तुभेदे त्वदुक्तानामित्यन्वयः । मुखान्तरेणात्र संग्रहेण दूषितम् । प्रपञ्चो भाष्ये ॥ ४४ ॥

साक्षात्कारपक्षं दूषयति वाक्येति । श्रुतेऽस्मिन्=वाक्यार्थे जीवब्रह्मैक्ये प्रथमश्रुतमात्रे मुच्यते=मुक्तः किमित्यर्थः । बाढं चेदिति । गाढबाढदृढानि चेति पर्यायपाठः वाक्यादर्थश्रवण-मात्रतः मुच्यमानत्वं बाढं दृढम् अविचाल्यं चेदित्यर्थः । मानबाधः मुक्तत्वे वचनं कथमिति । अन्यथापि बाधमुपपादयति स इति । यत्=यस्मात्, सः मुक्तत्वेन त्वदभिमतः ध्यानादिविधे र्ने श्रुतितात्पर्यं नास्ति ; अप्रधानार्थे लिङ्प्रयोगः इति शांकरं खण्डयति तत्र युक्तमिति । सूत्रकारेण तृतीयतृतीये विधेयत्वस्योक्तत्वात् वितथत्वं न युक्तम् । भामतीकारादिभिध्यानविध्यभावपक्षस्थाना-दृतत्वाच्च नैवमित्याह न चेष्टमिति । ध्यानेति । ध्यानादिभिरङ्गैराढ्यो यः पुरुषः शब्द एव वा । तज्ज्ञान्या पूर्वमप्येवमैक्यमतीनामुत्पन्नत्वात् मोक्षाव्यवहितप्राग्भाविन्याश्चरमत्वमुक्तम् । तस्याः

बाधकज्ञाने सति बाधः कथं न स्यादिति शङ्कते यदि चेदिति । अत्र प्रमाणद्वयविरोधमाह मानबाध इति । स्वात्मनि प्रत्यक्षेण, स्वस्मिन् परत्र[च]अनुमानागमाभ्याम् । तत्त्वविदोऽप्यमुक्ताश्चिरजीविन श्रुतिस्मृतिसिद्धा ॥ "बुद्धे क्षेमप्रापणं तच्छास्त्रैर्विप्रतिपिद्धम् बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत" इत्यापस्तम्बोक्त प्रसङ्गमभिप्रेत्याह स इति । प्रसङ्गान्तरमाह ध्यानादीनामिति । तदुपचनम् उपासनात्मकत्वदर्शनसमत्वादिविशेषणभेदात् । अत्र वेदोदितत्वान्न वैयर्थ्यं मोक्षार्थविधाना, नान्यार्थत्वमित्यभिप्रायेणाह तत्र युक्तमिति । अपसिद्धान्तत्वमप्याह न चेष्टमिति । ध्यानस्य भेदवासनानिरासार्थत्वं हि ब्रूथ । द्वितीयं दूषयति ध्यानेति । अयं भावः — पश्चाद्भवं वाक्यार्थज्ञानं पूर्वाविशिष्टविषयम्, अधिकविषयं वा ? उभयत्र प्रागेव दूषणमुक्तमिति ॥ इति वाक्यार्थज्ञानस्य मोक्षोपायत्वभङ्गः । ४५॥

> उद्देश्यांशं स्वमाद्यं स्फुटमनुभवतां सम्यगध्यक्षवित्त्या
>
> प्रत्यक्षत्वभ्रमोऽयं त्वमसि दशम इत्यादिवाक्यार्थबोधे ।
>
> शब्दात् प्रत्यक्षबोधे प्रसजति शिथिला तद्व्यवस्था ; ततोऽर्थे
>
> साक्षात्कारं न शब्दो जनयति नियतः सिद्धवत् शब्दमात्रात् ॥ ४६ ॥

आ- ध्यानादिप्राग्भाविन्याश्च धियाविशेषात् कुतो न प्रथममतेर्मोक्षहेतुत्वमिति । इति शङ्का इति । इत्यभिप्रायेण शङ्कते इत्यर्थः । शङ्कावाक्यसमाप्तिसूचनाय चेत्पदस्यापि प्रतीके घटनम् । अनुभवतीत्युक्तो दुःखानुभवः अद्वैतज्ञानवति स्वात्मनि प्रत्यक्षरूपः । तेन स्वात्मनि मुक्तत्वबाधः । स्वस्यावश्यभाविदुःखादिरनुमीयते चेत्, तेनापि स्वस्मिन् मुक्तत्वबाधः, *'तस्य तावदेव चिरम्'* इत्यागमाच्च स्वस्मिन् मुक्तत्वबाधः । परस्मिंस्तु प्रत्यक्षायोगात् दुःखित्वानुमानागमाभ्यामेव बाधः आगमः श्रुतिः आप्तभूतपरवाक्यमपि । तदत्र, परत्र चेति चकारो वृत्तानपेक्षितः । बुद्धे क्षेमेत्यादीनां समन्वयाधिकरणभाष्यव्याख्याने विशदोऽर्थः । भेदादिति । बाल्येन तिष्ठासेत्—अथ मुनिरित्युक्तबाल्यमनने अपि गृह्येयाताम् । उक्तमिति । ध्यानादीनामङ्गत्वमेव कथम्, वाक्यार्थज्ञाने जननीये कुत्रापि निरन्तरबहुदिना वृत्तध्यानापेक्षाया अदर्शनात् । प्रतिष्ठितं हि ज्ञानं मननादेव भवितुमर्हति । न च जातज्ञानप्रामाण्यनिश्चये ध्यानोपयोगोऽपि दृष्टः । न च भेदवासनानिरसनार्थत्वं प्रागेवोक्तमिति वाच्यम् । भेदवासनानाशस्य ज्ञानोत्पत्तिं प्रति अनपेक्षितत्वात् । वासनाविरहः वाक्यार्थज्ञानात् मोक्षे जननीये सहकारीति वक्तव्यम् । एवञ्च ज्ञानातिरिक्तहेतुमत्त्वात् मोक्षस्य प्रपञ्चः सत्यः स्यात् । ध्यानमूलाभेदवासनाया असत्त्वादपि न भेदवासनानिरसनक्षमता । प्रथमवाक्यार्थज्ञानस्य अस्य चाविशेषे सर्वजगन्निवर्तनक्षमं यत् तद् वासनाभासनिरासकं कथं न भवेदिति व्यर्थमेव ध्यानादीति भावः ॥४५॥

तत्त्वमसिवाक्यजन्यं ज्ञानं न श्रवणात्मकं, किं तु प्रत्यक्षमेव, अपरोक्षविषयकत्वात् । अत प्रत्यक्षमेव प्रत्यक्षभ्रमबाधकमित्युक्तावपि न क्षतिरिति अद्वैतिनः । तत्र प्रत्यक्षस्य शब्दजन्यत्वाशां खण्डयति उद्देश्येति श्लोकेन । 'दशमस्त्वमसि' इति वाक्यात् य दशमोऽहमस्मीति बोधः, तथा 'अयं दशम' इति सन्निकृष्टपुरुषप्रदर्शने च बोधः तत्रोद्देश्यः अहमर्थः इदमर्थश्च प्रत्यक्ष एव । एवं समीचीनप्रत्यक्षात्मकज्ञानेन तद्दशानुभवे सति, दशमत्वांशोऽपि प्रत्यक्ष इति अनुभवतामनवधानात् भ्रम एव । अतो दशमस्त्वमसीति वाक्यं दृष्टान्तीकृत्य तत्त्वमसीत्यस्य शाब्दस्य न प्रत्यक्षत्वं साधयितुं शक्यम् । अस्तु को दोष इति चेत्—सर्वत्र शब्दस्य स्वार्थप्रत्यक्षजनकत्वमेवास्तु । अतः शब्दस्य न प्रमाणान्तरत्वम् । अप्रत्यक्षार्थविषये तदयोग इति चेत्—तर्हि अतीन्द्रियभिन्नविषये देशान्तरस्थ-

प्रत्यक्षभ्रमस्य प्रत्यक्ष एव बाधक इति निर्बन्धो नेत्युक्तम्; तत्सद्भावेऽपि शब्दः प्रत्यक्षरूपबाधक-धीजनक इति न शक्यं कल्पयितुम्, अन्यथा क्वचिदनुमानेऽपि तत्क्लृप्तिः। न च कोद्रवबीजस्य सामीप्यकल्माङ्कुरजनकत्वक्लृप्त्या तत्सिद्धिः॥ ननु दग्धवेत्रबीजस्य रम्भाङ्कुरारम्भकत्वं दृश्यते॥ यदि दृश्यते कस्तन्निषेधेत्॥ अथ नेदं निदर्शनं (निर्दर्शनम् ?), वाक्येष्वपि, 'दशमस्त्वमसि', 'संवित् स्वप्रकाशा' इत्यादिषु प्रत्यक्षबीजनकत्वं दृष्टमिति चेत्–कथमेतत्॥ 'दशमोऽहमस्मि', 'मम संवित् स्वप्रकाशा' इति श्रोतुर-परोक्षा धीरिति चेन्न; सेयं वाक्यश्रवणानन्तरजन्या तन्मूलस्वयंपरीक्षणजन्या वा ? आद्ये, धर्मिप्रत्यक्षत्वेऽपि दशमत्वविशिष्टवेषो न प्रत्यक्षः। अन्यथा धर्मवांस्त्वमसीति केनचित् दैवज्ञेनोक्ते तादृशोऽहमिति बुद्धेरप्यापरोक्ष्यं स्यात्॥ धर्मस्यातीन्द्रियत्वान्न तथेति चेन्न; 'अयं पर्वतः परभागे वह्निमान्' इत्याद्युपदेशे प्रसङ्गात्॥ स्वतोऽ-परोक्षार्थविषयतयाऽत्र तादृशो विशेष इति चेन्न; नियामकाभावात्। दशमत्वादिविशिष्टाकारेण स्वतोऽपरोक्ष-त्वासिद्धेश्च। *तदिह वाक्यतो दशमत्वादिबोधे त्वमर्थस्य स्फुटप्रत्यक्षगृह्यमाणतया केषांचित् दशमत्वादि-विशिष्टाकारग्रहेऽपि* प्रत्यक्षत्वभ्रान्तिमात्रमित्याह **उद्देश्यांशमिति**। एतेन विगीतं वाक्यं स्वार्थापरोक्षधी-जनकं स्वतोऽपरोक्षार्थविषयत्वात् दशमस्त्वमसीत्यादिवाक्यवदित्यनुमानमपि निरस्तम्, दृष्टान्ताद्य-योगात्। ननु घटं पश्यतोऽयं घट इति वाक्यप्रयोगेऽपि प्रत्यक्षधीर्जायत इति चेन्न; युगपत्प्रमाणद्वयेन

---

आन—उद्देश्यांशमिति। दृष्टान्ताद्ययोगादिति। 'धर्मवान् त्वमसि' इत्यादिषु व्यभिचारेण व्याप्यत्वायोग

भा—वस्तुव्यवहारेऽपि तत्प्रत्यक्षतापत्तिः। शब्दजन्यधीविशेष्यतया भासमानस्य प्रत्यक्षेण ग्रहणस्थले सर्वांशे प्रत्यक्षत्वमिष्टमिति चेत्–अहं पुण्यवान्, *'अयं पर्वतः परभागे वह्निमान्'* इत्यादौ पुण्यवह्न्यादौ प्रत्यक्षत्वप्रसंगः। अतः प्रत्यक्षभूतधर्मिविषयकं शाब्दं धर्मांशेऽपि प्रत्यक्षमिति नियमस्य भंगादिदं युक्तम्। ननु संनिकृष्टार्थविषयकज्ञानत्वात् शब्दजं ज्ञानमपि प्रत्यक्षमित्यस्तु इति चेत्—तर्हि *संनिकर्षस्यैव तत्र कारणत्वात् शब्दजन्यत्वस्वीकारो व्यर्थः, स्वकारणेनैव कार्योत्पत्त्या शब्दस्यान्यथा-*सिद्धत्वात्। सार्थक्यनिर्बन्धे तु क्षणिकत्वात् ज्ञानस्य परोक्षमपि शब्दात् संनिकर्षविच्छेदात् जात-मितीष्यताम्। शब्दादिति। यदि शब्दजं ज्ञानमपि प्रत्यक्षं स्यात्, ज्ञातकरणकं ज्ञानं सर्वं परोक्षमिति व्यवस्थाभंगः स्यादित्यर्थः। चक्षुरादिकमिन्द्रियं सत्तामात्रेण स्वयमगृहीतं सदेव ज्ञानं जनयति, तत् प्रत्यक्षम्। लिंगं वा, शब्दो वा मानान्तरस्वीकारे तदपि वा ज्ञायमानं सदेव ज्ञानमुत्पादयति। अत इह फलभूतं ज्ञानं सर्वं ज्ञातकरणजन्यम्। तत् सर्वं परोक्षम्, *लिंगशब्दादेः करणत्वपक्षे एवम्।* लिंगज्ञानशब्दज्ञानादेः करणत्वमिति पक्षे ज्ञानकरणकं ज्ञानमिति वक्तव्यम्। अत एव ज्ञानाकरणकं ज्ञानं प्रत्यक्षमिति प्रत्यक्षलक्षणमप्याहुः। प्रत्यनुमानमाह ततोऽर्थे इत्यादिना। शब्दः प्रत्यक्षजनकः शब्दत्वात् ऐन्द्रियकार्थविषयकशब्दत्वात् अपरोक्षधर्मिकशब्दत्वादिति उक्तं सर्वं दुःस्थम्। विगीतः शब्दः साक्षात्काराजनकः शब्दत्वात्, सिद्धवत्–तदजनकत्वेन प्रसिद्धसर्ववाक्यवदिति प्रयोगः सुस्थः।

श्लोकमवतारयति प्रत्यक्षभ्रमस्येत्यादिना। अथ नेदं निदर्शनमिति। वेत्रबीजादिनिदर्शनं मा भूत्, वाक्यमेव निदर्श्यत इत्यर्थः। अत्र निर्दर्शनमिति पाठः स्यात्। पूर्वं, यदि दृश्यते कस्तन्निषेधेदि-त्युक्तत्वात् तदुपरि, इदं दर्शनरहितं न भवति, तादृशवाक्यदर्शनादिति प्रत्यवस्थानौचित्यात्। संवित् स्वप्रकाशेति। *आत्मवत् संविदपि सर्वदा प्रकाशते (संविदात्मनोरैक्यात्)।* अतः अपरोक्षधर्मिकतादृश-शब्दप्रयोगे तद्वाक्यार्थप्रत्यक्षतोत्र भवतीति पूर्वपक्षिणोऽभिमानः। विशिष्टवेषो नाम विशिष्टत्वमेव।

प्रमितिद्वयोरप्यययोगात् । संभूयैकप्रमाणीभावस्यातिप्रसञ्जित्वात् । अनभ्युपगमाच्च । क्रमे तु प्रत्यक्षज्ञान-समनन्तरभाविनि शाब्दज्ञाने प्रत्यक्षशिरस्के मापराशिप्रविष्टमषीन्यायेन तज्जातीयताभ्रम. । 'दशमस्त्वम्' इत्यादावपि कदाचिदेवमेव । प्रतिकूलतर्कमप्याह शब्दादिति । ज्ञातकरणाना हि परोक्षधीजनकत्व-व्यवस्था शब्दप्रमाणस्याप्यन्यत्र व्याप्त्या(प्त्या?)अङ्गीकृता ; तस्याः शैथिल्य स्यात् ॥ इष्टप्रसङ्गोऽयमिति चेन्न, तुल्यन्यायतयाऽन्यत्रापि तत्तन्नियतिविरुद्धकार्यानुमानप्रसङ्गस्यानिष्टत्वात् ॥ विपक्षे बाधकाद्विशेष इति चेन्न ; शब्दजन्यप्रत्यक्षाभावेऽपि विरोधप्रसङ्गाभावात् । "तस्मै मृदितकषायाय तमस. पारं दर्शयति भगवान् सनत्कुमारः" इति उपदेशादपरोक्षधी. श्रूयत इति चेन्न ; दृशे· प्रत्यक्षविशेषरूढत्वात् ॥ अनुप-पत्त्या साक्षात्कारसामान्यपरत्वं कल्प्यमिति चेत, तर्हि विरुद्धलक्षितत्यागेन वैशद्यार्थत्वलक्षणैर्युक्ता । प्रतिप्रयोगमप्याह तत इति । व्याप्तिबलादित्यर्थः । अर्थे—स्वप्रतिपाद्ये । एनेन स्वविषयसाक्षात्कारजनक-तया बाधप्रसङ्गोऽपास्तः । अत्र तु विपक्षे बाधकः प्रदर्शित एवातिप्रसङ्ग. ।

श्लो—प्रत्यक्षज्ञान(बुद्धि)हेतुत्वं यत् त्वयाऽत्र प्रसाध्यते । निषेध्यमिदमस्माकं न नस्तच्छोधने भर. ॥

इति शाब्दप्रत्यक्षभङ्गः ॥ ४६ ॥

शिष्यो जीवस्त्वसिद्धः किमु, तव यदि वा भ्रान्तिसिद्धो, मितो वा
नासिद्धायोपदेशो, भ्रमविषयमितौ नोपदेशार्हताऽस्य ।
भेदेनैक्येन वाऽन्यः, कथमुपदिशतु ज्ञातभेदोऽप्यभेदं
तादात्म्ये जागरूके मति किमुपदिशेत् स्वात्मने तद्विदे सः ॥ ४७ ॥

---

पु॰—आदिशब्दग्राह्यः । कदाचिदिति । स्वयं परीक्षण इत्यर्थः । शब्दजन्यप्रत्यक्षं कुत्रापि नास्ति चेत् अप्रति-पन्नस्य तस्य कथं निषेधः इत्यत्राह प्रत्यक्षबुद्धिहेतुत्वमिति । त्वद्वादप्रतिपन्नं निषिध्यत इत्यर्थः ॥ ४६ ॥

वी— मषीन्यायेनेति । मषीशब्दो मापप्रमाणकमषीगुलिकापरः । कदाचिदेवमेवेति । प्रथमतः शब्दात् दशमत्वनिर्धारणे पश्चात् दशमत्वनिरूपकपदार्थनवक-दशमत्वाश्रयस्वधर्मिप्रत्यक्षेण दशमत्वे गृह्यमाणे इत्यर्थः । प्रत्यक्षविशेषेति । रूपविशिष्टसाक्षात्कारेत्यर्थ. । प्रत्यक्षज्ञानहेतुत्वं द्विरूपम्, शब्दस्य स्वविषयकश्रावणप्रत्यक्षहेतुत्वस्य श्रवणमनननिदिध्यासनद्वारा परम्परया प्रत्यक्षहेतुत्वस्य च वर्तमानत्वादित्यत्र कारिकामाह प्रत्यक्षेति । यत् उभयवादिसिद्धम्, तस्य त्वयोक्तौ सिद्धसाधनं स्यादिति त्वया यादृशं प्रत्यक्षज्ञानहेतुत्वमपूर्वं साध्यते, तदस्माभिर्निषिध्यते । अतः शोधनभरस्तत्रैवेति भाव: ॥ ४६ ॥

अद्वैतमते उपदेशानुपपत्तिमाह शिष्य इति । शिष्यः=उपदेश्यः । किमु इत्यस्य किं वेत्यर्थः । यदिवेत्यस्य यद्वेत्यर्थ· । जीवः अप्रतीतः प्रतीतो वा । प्रतीतपक्षे भ्रान्तिगृहीतो वा प्रमितो वा । भ्रान्तिगृहीतपक्षेऽपि भ्रान्तिगृहीतत्वेनाज्ञातो वा ज्ञातो वा । प्रमित इति पक्षेऽपि किमद्वैतिबुद्ध्या प्रमितः, उतास्मद्बुद्ध्येति । अत्र शिष्यो जीवोऽप्रतीत इति प्रयोगेऽर्थः स्फुटं प्रतीयेत—अथापि नासिद्धायेति उत्तरत्रासिद्धपदप्रयोगसौकर्यात् अत्राप्यसिद्धपदप्रयोगः । अप्रतीत इत्येवार्थः । प्रथम-पक्षखण्डनं नासिद्धायोपदेश इति । भ्रान्तिगृहीत इति पक्षखण्डनमुपरि । तत्र भ्रान्तिगृहीतत्वेना-ज्ञातश्चेत् जीवे विद्यमानस्य भ्रान्तिविषयत्वस्याज्ञानात् उपदेष्टा तत्त्वविन्न भवतीति नोपदेशार्हताऽस्य । नोपदेशकर्तृत्वं गुरोरित्यर्थः । उपदेष्टव्यार्थज्ञानाभावात् । अस्मिन्नर्थे श्लोके उपदेश इत्यत्र अकार-

उपदेशो न प्रत्यक्षधीजनक इत्युक्तम्; स एव परस्य न घटत इति वक्तुं विकल्पयति **शिष्य** इति। त्वन्मते वक्तुः श्रोता किमप्रतीतः; प्रतीतो वा भ्रान्तिसिद्धः, प्रमितिसिद्धो वेति विकल्पः। अत्राद्यं निरस्यति **नासिद्धायेति**। अप्रतीत्य शिष्यं कस्मै उपदिशेत्? द्वितीयं दूषयति **भ्रमेति**। यदि शिष्यं भ्रान्तिसिद्धत्वेन न जानाति, स्वयमतत्त्ववित् कथं तत्त्वोपदेष्टा? अथ तथा प्रमिणोति, तथाऽपि तस्मै कथमुपदिशेत्? न ह्यसावुपदेशग्रहणार्हः; स्वयमपि नोपदेष्टृत्वार्हः। **अस्येति** उभयार्थम्। एतेन प्रति-बिम्बवत् बाधितानुवृत्त्या प्रतीयमानेभ्य उपदेश इत्यपि निरस्तम्; तद्वदेवोपदेशानर्हत्वात्। न चानुन्मत्तः प्रतिबिम्बाय प्रब्रूते। तृतीयं विकल्पयति **भेदेनेति**। आद्ये विरोधमाह **कथमिति**। भेदप्रमितौ अभेद-मुपदिशन् कुहकः स्यात्। द्वितीयेऽपि प्राग्वत् असंभवमाह **तादात्म्य इति**। अद्वैतप्रमितिदशायां स्वभ्रान्तिसिद्धशिष्यो हि बाधितः; स्वतादात्म्येन वा भातः; तस्मै चेदुपदिशेत्, स्वात्मानं प्रति नित्यमु-पदिशेत्। शिष्यस्य हि स्वतादात्म्यं पश्यन् तस्यापि तत्त्वविस्त्वं पश्यति। तथा(दा?) च तस्य किमुपदिशेत् इति भावः॥ इत्यारमाद्वैतिन उपदेशानुपपत्तिः॥ ४७॥

> नैवालं भ्रान्तिबाधे परमपि तदिदं तत्त्वमस्यादिवाक्यं
> भ्रान्तोक्तिर्यद्वत् आदौ श्रुतिकृतनिखिलभ्रान्तिमूलत्वबोधात्।
> रज्जौ सर्पभ्रमे किं जनयति विदितभ्रान्तवाक् सर्पबाधं,
> स्वप्नेऽहिः स्वप्नबुद्ध्या किमु गलति, यदा तत्र च स्वाप्नताधीः॥ ४८॥

---

भृङ्गे— शिष्यो जीव इति। अस्येत्युभयार्थमिति। शिष्याचार्योभयपरमित्यर्थः। बाधितत्वपक्षे प्राग्वदुपदेशानर्हत्वस्य स्फुटत्वात् तादात्म्ये बाध्यत्वे(त्म्येन भातत्वे?) दूषणमाह—तस्मै चेदिति॥४७॥

श्री— प्रश्लेषेण, अभ्रमविषयमितौ—भ्रमविषयत्वेन मित्यभावे नोपदेशार्हताऽस्य—उपदेष्टुरिति व्या-ख्येयम्। भ्रान्तिविषयतया प्रमित इति पक्षे तु अस्य=शिष्यस्य नोपदेशकर्मत्वार्हता भ्रमत्वेन गृहीत-त्वादिति व्याख्येयम्। मितो वेति पक्षखण्डनं तृतीयपादे। जीवस्य प्रमितत्वं भिन्नत्वेनेत्यस्मदिष्टम्, ऐक्येन प्रमितत्वमद्वैतीष्टम्। तथा च अन्त्यः—मितत्वपक्षः भेदेन वा ऐक्येन वा। आद्ये भिन्नत्वेन मितवान् गुरुः कथमभेदमुपदिशेत्। विप्रलम्भकत्वप्रसंगात्। अन्त्ये, ऐक्ये जागरूके=मिते सति स गुरुः ऐक्यवित् स्वाभिन्नाय जीवाय ज्ञातमेवैक्यं किमित्युपदिशेत्। न हि स्वस्मै स्वयमुपदेशो भवति। न वा ज्ञातस्योपदेशो भवति। न ह्यसाविति। असौ=शिष्यः। अस्येति उभयार्थमिति। शिष्यस्येति गुरोरिति च तदर्थ इत्यर्थः। व्याख्यानरीतिश्च दर्शिता। प्रतिबिम्बवत्=प्रतिबिम्बतुल्येभ्यः। तद्वत्=प्रतिबिम्बवत्। किमित्यस्य कुत इत्यर्थः॥ ४७॥

उपदेशानुपपत्तिरुक्ता; उपदेशफलाभाव उच्यते नैवेति। तत्=नित्यनिर्दोषत्वेन त्वदिष्टम्, इदं—वस्तुतो अविद्यामूलकम् उपदेशानर्हतयाऽधस्तादुक्तञ्च, 'तत्त्वमसि', 'अयमात्मा ब्रह्म', 'नेह नानास्ति' इति वाक्यं परमपि-पश्चात् गृहीतमपि भ्रान्तिबाधे—पूर्वोत्पन्नभ्रमात्मकज्ञानस्य बाधने, नैवालम्=नैव समर्थम्। भ्रान्तिमूलकं वाक्यं यद्वत्=यथा भ्रान्तिबाधने नालम्, तद्वदिति। कस्मात्? भ्रान्तोक्तिर्हि वाक्यमिदं भ्रान्तिमूलकं दोषमूलकमिति ज्ञातत्वात् बाधिका न भवति। तथा ब्रह्मातिरिक्तं निखिलं भ्रान्तिमूलकं कल्पितमिति आदावेव श्रुतवेदवशात् आचार्यमूलश्रवण-वशाद्वा बुद्धत्वात् तत्त्वमस्यादिवाक्यमपि दोषमूलकत्वज्ञानात् न बाधकं भवतीति। भ्रान्तोक्ति

यदपि वर्ण्यते—'अद्वैतवाक्यजन्यधीरेवाविद्यातत्कार्यरूपाध्यासनाधिका, प्रत्यक्षादेः भेदवासनामूलतया भेदस्वरूपमात्रबोधकत्वात्; तत्त्वमस्यादीनां तु तत्त्वावेदकत्वात्। पूर्वा च भेदबुद्धिः; परा तु अद्वैतबुद्धिः। अतः, अपच्छेदनयात् पूर्वबाधः; आहुश्च, "पूर्वबाधेन नोत्पत्तिरुत्तरस्य हि सेत्स्यति" इति। एवं, 'तत्त्वज्ञानात् अज्ञानबाध एव मुक्तिः' इति-तन्निरस्यति नैवेति। तदिदमित्यविद्यामूलत्वाभिप्रायम्। न हि भवति पौर्वापर्यमात्रात् बाध्यबाधकभावः; अतिप्रसङ्गात्। उपक्रमनये च वैपरीत्यात्। अद्वैतवाक्यानामपि माध्यमिकवाक्येन बाधप्रसङ्गात्॥ करणदोषतदभावाभ्यां विशेष इति चेन्न; प्रत्यक्षादिष्वपि तदभावात्॥ प्राचुर्येण दोषमूलत्वदर्शनात् अन्येष्वप्यनाश्वास इति चेन्न; वाक्येऽपि समत्वात्। अविद्याभेदवासनामूलत्वस्य चाविशेषात्॥ समानदोषेष्वपि प्रमेषु परं बाधकं दृष्टमिति चेन्न; तथात्ववेदने तदयोगात्। तत्र सन्देह एव स्यात्॥ नित्ये वेदवाक्ये कारणदोष एव नेति चेन्न; वक्तृदोषाभावेऽप्यविद्यादोषमूलत्वस्य त्वयैवोक्तेः। अत्र प्रसङ्गे दृष्टान्तमाह॥ भ्रान्तेति। भ्रान्तोक्तेरबाधकत्वं भ्रान्तिमूलत्वेन ज्ञातत्वादिति चेन्न; अविशेषात्। तदाह आदाविति। प्रथममेव प्रयोजकशिक्षया *ब्रह्मव्यतिरिक्तं कृत्स्नं मिथ्येति श्रवणात्।* ततश्च प्रत्यक्षधीजननार्थः प्रयासः तज्जनने कुहकशक्तिजनितप्रत्यक्षबुद्धाविव विश्वासश्च न स्यात्। भ्रान्तिसिद्धवाक्यादपि पूर्वभ्रान्तिनिवृत्तिः तत्फलनिवृत्तिश्च दृष्टेत्यत्र

---

प्रभा— नैवालमिति। तत्त्वमस्यादीनां तु तत्त्वावेदकत्वादिति। 'परमपि' इत्यत्र तत्त्वावेदकतयोत्कृष्टत्वमपि

श्री— विवृणोति रज्जाविति। रज्जौ 'अयं सर्पः' इति भ्रमे सति तस्य भ्रमस्य 'नायं सर्पः' इति वाक् कदाचित् बाधं कुर्यात्। सैव विदितभ्रान्तवाक् चेत्—अयं भ्रान्त इति यो विदितः=सर्पभ्रमवता गृहीतः, तस्य भ्रान्तस्य वाक् चेत्, बाधे नालमिति प्रसिद्धं हि। उक्तिवत् ज्ञानस्यापि कस्यचिद् बाधकत्वं परकीयोक्तिवत् स्वकीयज्ञानस्याप्यबाधकत्वञ्चाह स्वप्ने इति। स्वप्नकल्पितः सर्पः 'अयं स्वाप्नः' इति बुद्ध्या कदाचित् निवर्तते। परं सैव बुद्धिः, इयं स्वाप्नत्वबुद्धिः स्वप्नसंबन्धिनीति यदा ज्ञाता, तदा तत्र=बुद्धौ स्वाप्नत्वधीर्जातेति तया स्वाप्नत्वेन गृहीतया बुद्ध्या नाहिर्बाध्यते, नापि सा सर्प इति बुद्धिर्निवर्तते। तद्वत् प्रपञ्चधीः प्रपञ्चश्च न निवर्ततेति।

पूर्वबाधेनेति। मिथो विरुद्धावगाहिनोर्द्वयोर्मध्ये पूर्वज्ञानमविरोधादुत्पत्तुमर्हम्। द्वितीयं स्वविरोधके सत्यपि यस्मादुदेति, तस्मात् पूर्वज्ञानं बाधित्वैवोत्पन्नमिति ज्ञायते। अतः पूर्वस्य परेण बाधः। अपच्छेदनयः पूर्वमीमांसायाम्। तद्विस्तरः श्रीभाष्यादौ। अतिप्रसंगात्—घटज्ञानस्यापि पटज्ञानबाधकत्वापत्तेः। उपक्रमनये इति। उपक्रमाधिकरणे पूर्वज्ञानस्य विरोधिनः संजातत्वात् तद्विरुद्धज्ञानं परं नोत्पत्तुमर्हतीति उपक्रमानुसारेणोपसंहारोऽन्यथा नेय इत्युक्तम्। अतस्तत्त्वमसीति नैक्यप्रतिपादकमिति। हठात् तादृशौ तत्पक्षहानिमाह अद्वैतेति। माध्यमिकं वाक्यं 'शून्यमेव तत्त्वम्' इति। प्रत्यक्षादिष्विति। भेदग्राहि यत् प्रत्यक्षम्, अनुमानम्, लौकिकः शब्दः वैदिकः कर्मकाण्डः सगुणतत्त्वतदुपासनादिपरभागश्च, तेष्वपि करणदोषाभावादित्यर्थः। तथात्ववेदने—समानदोषकत्वज्ञाने सति। तर्हि पूर्वं ऽपि न बाधकमिति किमत्र फलमिति चेत् आह-तत्र संदेह एवेति। अत्र प्रसंगे इति। तत्त्वमस्यादिकं यदि अविद्यारूपदोषमूलकं स्यात्, भ्रान्तिबाधकं न स्यादिति प्रतितर्के इत्यर्थः। प्रयोजकशिक्षयेति। इदमिदं मिथ्येति प्रत्येकं तत्तन्मिथ्यात्वस्य दुर्ग्रहतया अनुगताकारेण मिथ्यात्वस्य ग्राह्यतया मिथ्यात्वप्रयोजकं किमिति विमर्शे ब्रह्मव्यतिरिक्तत्वमेवेति

तदुभयमिह न संभवतीत्याह रज्वावित्यादिना पादद्वयेन । भ्रान्तोऽयमिति विदितेन, नायं सर्प इत्युक्तेऽपि न विस्रम्भः; स्वप्नसर्पभ्रमजनितं साध्वसं नायं सर्प इति स्वप्नभ्रमेण न शाम्यति, यदा स्वप्नसर्पनिषेधेऽपि स्वाम[ख ?] बुद्धिः जायेत । अतो न वाक्याद् भ्रमनिवृत्तिः, तत्फलनिवृत्तिश्चात्र वक्तुं न (?) शक्यत इति ।

श्लो—भ्रान्तिसिद्धं च धूमादि स्वरूपासिद्धिदोषतः । यदृच्छयाऽर्थसद्भावेऽप्यमानमनुमन्यसे ॥

इति तत्त्वमस्यादेः प्रपञ्चबाधभङ्गः ॥ ४८ ॥

छायादिर्न त्वसत्यः सदवगतिकरः, तत्र हेतुर्हि तद्धीः
साध्यज्ञप्त्यादिवत्; सा स्वयमिह न मृषा, नास्ति धीरित्यबाधात् ।
सत्येनैव प्रसूता घट इव विमता शेमुषी कार्यभावात्
हेतुत्वालीकभावौ कथमिव विहतावेकमेवाश्रयेताम् ॥ ४९ ॥

ननु व्यावहारिकमर्यादातिक्रमात् लिङ्गविभ्रमे प्रामाण्यानादरः, इह तु न तथा; प्राक् अद्वैतबोधात्

---

लघु— विवक्षितमिति भावः । भ्रान्तिसिद्धधूमादेः यादृच्छिकसंवादिस्थले प्रमितिजनकत्वं दृष्टम्, तद्वदिदमपि इत्यत्राह—भ्रान्तिसिद्धञ्चेति । अत्रापि प्रमितिजनकत्वं भ्रान्तिसिद्धस्य नास्तीति भावः॥

श्री— शिक्षाया लब्धत्वात् वेदवाक्यमपि तेन क्रोडीकृतमिति भावः । नशक्यत इत्यत्र नञ् न स्यात् । अत इत्यादेरेकवाक्यत्वे स्वारस्यात् । शब्दस्य प्रत्यक्षस्य चेवानुमानस्यापि दोषमूलकस्यामानत्वमाह कारिकया । धूलीपटलादौ धूमत्वभ्रमेण पर्वतोऽग्निमान् धूमादित्येव प्रयोगे अग्न्यनुमित्या गत्वा तत्र यदृच्छयाऽग्निदर्शनेऽपि पूर्वदृष्टं धूलीपटलमेव, न धूम इति निश्चये पूर्वानुमानस्यामानत्वमेव हीष्टमित्यर्थः ॥ ४८ ॥

अथासत्यादपि सत्यसिद्धिरिति समर्थनं निराकर्तुमाह छायादिरिति । छायादिर्योऽसत्यः, सः सत्यविषयकधीहेतुर्न भवति । यस्तु सदवगतिकरश्छायादिः, न सोऽसत्य इत्यप्यर्थः । तर्हि सत्यधीः कस्मादिति चेत्—तत्र-सत्यज्ञानादिरूपकार्ये तद्धीः-असत्यविषयकधीरेव हेतुः, न तु असत्यम् । ननु ज्ञानस्य विषयविशेषोऽपि सहकारी, अन्यविषयकज्ञानात् कार्याभावात् । अतोऽसत्यस्य विषयस्यापि हेतुत्वमिति शंकापनुत्तये दृष्टान्तमाह साध्येति । साध्यज्ञप्त्यादिवदिति पूर्वान्वयि । न तु विषयो हेतुरित्यर्थसिद्धम् । आदिपदेन अतीतविषयकज्ञप्तिग्रहः । साध्यपदं भाव्यर्थकम् । अतीतानागतविषयकज्ञानात् यत्रानुमित्याद्युत्पत्तिः, तत्र विषयस्य न कारणत्वं भवति; भाविनि पूर्ववर्तित्वाभावात्, अतीते चाव्यवहितपूर्ववर्तित्वाभावात् । तत्र यथा तद्विषयकत्वस्य ज्ञाने आवश्यकत्वेऽपि ज्ञानमेव कारणम्, न विषयः । तथा असत्यविषयेऽपि मन्तव्यम् । नन्वसत्यविषयकत्वे ज्ञानमप्यसत्यमेवेति चेत्—सा स्वयमिह न मृषा । ज्ञानतद्विषययोः विषयासत्यत्वेऽपि धियो नासत्यत्वमित्यर्थः। कुत इति चेत्—धीर्नास्तीति बाधज्ञानाभावात् । स्वप्ने हि जाते तद्विषयो हस्त्यादिर्नासीत् इत्येव वदन्ति, न तु हस्त्यादिज्ञानमपि नासीदिति । स्वप्न एव नासीदिति को नु ब्रूयात् । एवमसत्यात् सत्यसिद्धिर्न भवतीत्युक्तम् । अथ सत्योत्पादकस्यासत्यत्वं न भवतीत्युच्यते । विमता शेमुषी-विवादास्पदं ज्ञानं सत्येनैवोत्पादितं कार्यत्वात् घटवत् । न चात्र विपक्षशंका; हेतुत्वं हि पूर्वकालसत्त्वम्; अलीकत्वमसत्त्वम् । तत् कथमसत्यत्वहेतुत्वयोरेकनिष्ठत्वमिति ।

पूर्वश्लोकवृत्तौ भ्रान्तिसिद्धं न धूमादीति यदुक्तम्, तद्वैषम्यप्रदर्शनेन शंकायां प्रकृतश्लोकप्रवृत्तिमाह नन्विति । लिङ्गविभ्रमे धूलिपटले धूमत्वभ्रमे । सत्यत्वेति । यदा तत्त्वमस्यादिवाक्यं सत्यज्ञानजनकम्, तदानीं तत् वाक्यम् अबाधितत्वात् सत्यमेवेत्याशयः । ननु सर्वत्र भ्रान्तिविषयस्यासत्यत्वं

शास्त्रे सत्यत्वाध्यवसायात्। असत्याच्च सत्यधीर्दृष्टा, यथा दर्पणादिस्थया छायया मुखादेः सिद्धिः, भूतल-स्थया च गृध्रादेः। सन्ति चैवं बहून्युदाहरणानि। असत्यादपि भयविस्मयादि सत्यं कार्यं दृश्यते। अतो मिथ्याभूतादपि तत्त्वमस्यादिवाक्यात् तत्त्वधीनिः मुक्तिश्च युज्यत इति। तत्राह—छायादिरिति। न हि मिथ्याभूतं प्रतिबिम्बादि मुखादिधीजनकम्, दर्पणे मुखप्रतीतेः दोषमूलत्वात्। परमार्थमुखप्रतीतेस्तु मुकुरविहितमिहिरकिरणन्यायेन प्रतिफलितनायनकिरणजन्यत्वात्। स्वरूप(सरूप?)च्छायया गृध्राद्यनुमाने-ऽपि नासत्यात् सत्यधीः। छायास्वरूपस्य सादृश्यस्य च निर्बाधत्वात्। मिथ्याभूतस्य च छायागृध्रस्य कार्य-करत्वे शुक्तिरूप्यादेरपि रजतादिकार्यं किं न स्यात्? युष्मद्दृष्ट्या च विमृशामः- किं प्रतिबिम्बादि-स्वरूपमेव सत्यधीहेतुः, उत तद्धीः? नाद्यः, प्रातिभासिकसतोऽर्थक्रियाहेतुत्वानभ्युपगमात्। न द्वितीयः, तद्बुद्धेः सत्यत्वेन सत्यादेव सत्यसिद्धेः। तदिदमभिप्रेत्याह तत्रेति। एतेनासत्यात् सत्योत्पत्तिरपि निरस्ता। कस्तर्हि भयादिहेतुरिति? तत्राप्येतदेवोत्तरम्—तत्रेति। यत्रासत्यात् सत्योत्पत्तिं वदसि तत्रेत्यर्थः। ननु यदि धीः स्वरूपमात्रेण कार्यविशेषहेतुः स्यात्, बुद्ध्यन्तरेऽपि तत्प्रसङ्गः; अविशेषात्। अथ विषयविशिष्टा(ष्टो) हेतुः, तदा विषयस्यापि हेतुत्वं दुस्त्यजम्; तत्राह माध्येनि। यथा साध्यघटादि-बुद्ध्या तन्निर्माणे बुद्धेरेव कारणत्वम्, न तद्विषयस्य; सिद्धत्वे साध्यत्वस्य असिद्धत्वे हेतुत्वस्यायोगात्। अन्यथाऽऽत्माश्रयोच्छेदप्रसङ्गात्—तद्वदिहापि विषयस्यासिद्धत्वात् न हेतुत्वम्। आदिशब्देनातीतज्ञप्तिः कामना च गृह्यते। नष्टधीरपि यथार्हं तत्तत्कारणम्; न तु नष्टम्; पूर्वत्वेऽप्यनन्तरपूर्वत्वाभावात्। स्वर्गादिकामनाऽपि तदुपायनिष्पत्तिहेतुः। न तु काम्यम्; चक्रकापत्तेः। तद्वदिह भ्रान्तिसिद्धस्याहेतुत्वेऽपि

---

श्री— छायादिरिति। असत्यात् सत्योत्पत्तौ दृष्टान्तमाह—असत्यादपि............मुक्तिश्च युज्यत इति। असत्यात् वाक्यजन्यात् ज्ञानात् सत्या मुक्तिर्जायत इत्यर्थः। तत्राप्येतदेवोत्तरमिति।
वी— प्रायः पश्चादेवावसेयं भवति, तावता पूर्वं तस्य सत्यत्वं कथं स्यात्; मिथो विरोधादित्याशंकायां प्रकारान्तरेण शंकितुमारभते असत्याच्चेति। सत्यधीः—सत्यविषयकज्ञानम्। उदाहरति यथेति। मुखादेः सिद्धिरिति। दर्पणगतच्छायया मुखानुमाने अनुमेयस्य मुखस्य सिद्धिः सत्यता सर्वेषां। अतः सत्यविषयकमेव भवति मुखज्ञानम्। तद्वत् असत्यात् वाक्याज्जाते पैक्यज्ञाने विषयभूतमैक्यं सत्यमिति भावः। गृध्रादेरित्यत्रापि सिद्धिरित्यनुषंगः। तत्तत्सत्यत्वज्ञापनाय सिद्धिपदम्। बहूनीति। श्रीभाष्यादौ द्रष्टव्यानि। असत्यात् सत्यसिद्धिरित्यस्य असत्यजन्यज्ञानविषयस्य सत्यत्वमित्यर्थवत् असत्यजन्यस्य सत्यत्वमित्यप्यर्थ इति तमाह असत्यादपीति। प्रथमम् असत्यवाक्यजन्यज्ञानविषय-स्यैक्यस्य सत्यत्वोपपादकम्। द्वितीयं ब्रह्मातिरिक्ततया वस्तुतोऽसत्यादैक्यज्ञानाज्जाताया अपि मुक्तेः सत्यत्वोपपादकम्। न हीत्यादि। छाया द्विविधा प्रतिबिम्बरूपा, आवरणेन तेजःप्रसरप्रतिबन्धे प्रतिबन्धकावरणसमानाकारपतिततमोरूपा च। तत्र प्रथमा मिथ्या। तत्रापि तज्ज्ञानमेव कारणमिति वक्ष्यते। द्वितीया सत्या। तामाह सरूपच्छाययेति। स्वरूपच्छाययेत्यत्र सरूपच्छाययेति पठनीयम्। स्वरूपपदवैयर्थ्यात्। क्लिष्टत्वात्। सादृश्यस्य चेति उपरि कथनात्। सारूप्याभावेऽनुमानायोगाच्च। भूतलस्थयेत्येतत्तु प्रागेवोक्तत्वात् सिद्धम्। विषयविशिष्टेति स्त्रीलिंगपाठः स्यात्; अन्योऽशुद्धः; धीरित्यस्यानुषङ्गात्। ननु कामनाया आदिपदेन ग्रहणं किमर्थमित्यत्राह स्वर्गादिकामनापीति। प्रत्ययवचनात् अपिशब्दो नान्वितः। अन्यथा पुनकारः स्यात्। ननु यागानुष्ठानप्रयोजकं कश्चित्

तद्धियस्तदुत्पत्तिः । अथ स्यात्— सविषया हि बुद्धिरभ्युपगम्यते ; अतः कथं विषयस्य मिथ्यात्वे विषयिणः सत्यत्वमिति ? तदेतत् स्वाभीष्टं विश्वसाक्षिणं पृच्छ । अथ सोऽपि मिथ्याभूतः—तन्न, स्वतस्सिद्धौ तदयोगात् ; अन्यथा तत्साक्ष्यन्तरापेक्षणेऽनवस्थादिप्रसङ्गात् । विषयमिथ्यात्वे च व्यवहारसत्यत्ववत् धीसत्यत्वं चाविरुद्धम् । एतदभिप्रेत्याह सेति । इह–अन्यस्मिन्नन्यथा बुध्यमाने । सा—धीः ; स्वयं न मृषा–विषयतस्तु कदाचित् तथात्वोपचारः । तदेतत् बाधकवृत्तान्तेन व्यनक्ति नास्तीति । धीर्नास्तीत्येवंरूपस्य बाधस्याभावादित्यर्थः । आरोपितं हि नञाऽन्वेति, न त्वारोपः ॥ नास्तिधीविषयत्वाभावे हि असद्व्यवच्छित्तिः स्यात् ; न त्वनिर्वचनीयत्वहानिरिति चेन्न ; ब्रह्मण्येवं प्रसङ्गात् । अथास्तिधिया तत्सत्त्वम्, प्रकृतेऽपि समम् ॥ मा भूत् असत्यात् सत्यसिद्धेः साधनम् ; त्वदिष्टस्य किं साधकमित्यत्राह सत्येनेति । अन्तःकरणादिभिः सिद्धसाधनत्वमवधारणेन व्युदस्यते ॥ अत्र व्यवच्छेद्यसिद्ध्यसिद्ध्योर्विरोध इति चेन्न, स्वोत्पादकतयाऽवधृतसामर्थ्य संप्रतिपन्न-सत्यवर्गातिरिक्तजन्यत्वनिषेधे प्रतियोगिसिद्धेः ॥ तथाऽप्यसदिष्टं शृङ्गग्राहिकया न निषिद्धमिति चेत्, त्वयाऽपि वा किं तथा विहितम् ? तथा हि–असत्यात् सत्यसिद्धिं वदद्भिरप्यसत्यमिथ्यालीकादिशब्दाः किं कचिद्व्युत्पन्नाः प्रयुज्यन्ते ? अव्युत्पन्ना वा ? पूर्वत्र स्वदेशादिषु सतामेवान्यत्रारोप्यमाणतया बाध्यमानतया च असत्यादिशब्दवाच्यत्वमिति नासत्यात् सत्यसिद्धिः । उत्तरत्र परानभीष्टं न किंचित् कारणमुक्तं स्यात् । यद्वा प्रतीतप्रतियोगिकनिषेधस्य त्वदिष्टत्वात् त्वद्वाक्यप्रतीतं व्यवच्छेद्यं त्वया चैवमनुमातुं शक्यमिति प्रसङ्गे तात्पर्यम् ; 'यक्षानुरूपो बलिः', 'पिशाचानां पिशाचभाषयैवोत्तरं देयम्' इति न्यायाच्च । प्रातिभासिकसतश्च हेतुत्वाभ्युपगमे कथमसतोऽपि न हेतुत्वम् ; तदपि हि कुतश्चित् प्रतिभासते । न ह्यस्ति खपुष्पं दर्पणमुखमित्यनयोः विशेषः । अत्र व्याघातं च विपक्षे बाधकमाह हेतुत्वेति । अनर्थक्रियाकारित्वात् प्रातिभासिकानामसत्यत्वम् ।

---

पुर्— (?) हेतुशब्दः कारकज्ञापकसाधारण इति भावः विश्वसाक्षिणं पृच्छेति । विषयस्य विश्वस्य
श्री— निमित्तं, क्वचित् काम्यमिति मीमांसकैः स्वर्गादेरेव हेतुत्वमुच्यते इत्यत्राह न तु काम्यमिति । चक्रकेति । यागात् काम्यम्, काम्यात् याग इत्युक्तावन्योन्याश्रयः । काम्यात् प्रवृत्तिः, प्रवृत्तेर्यागः, यागात् काम्यमित्येवं रीतौ चक्रकम् । तद्धियः–असत्यविषयकज्ञानात् । विश्वसाक्षिणमिति । अद्वैतिभिरीश्वरस्य मिथ्यात्वस्वीकारेऽपि तस्य विश्वं प्रति साक्षितया ग्रहणे मिथ्यात्वं नेष्टम् । स्वतस्सिद्धौ= अजे स्वयम्प्रकाशे । नास्तिधीति । नास्तीत्याकारकधीत्यर्थः । एवम् अस्तिधियेत्यत्रापि । सत्येनेवेति एव कारकृत्यं दर्शयति अन्तःकरणादीति । व्यवच्छेद्येति । असत्यात्सत्यसिद्धिरूपप्रतियोग्यप्रसिद्ध्या कथं तदभावसाधनमित्याशयः । स्वेति । तत् तत् कार्यं तत्कारणत्वेन क्लृप्तसत्यवर्गातिरिक्तजन्यं न भवतीति निषेधः । तत्रातिरिक्तजन्यत्वं कार्यान्तरे प्रसिद्धमिति न दोषः । शृङ्गग्राहिकया–साक्षात् । नासत्यादिति । क्वचित् सतां कथमसत्यत्वमिति भावः । प्रतीतप्रतियोगिकेति । नेदं रजतमित्यादौ आपातप्रतीतस्यापि प्रतीयोगित्वस्येष्टत्वादित्यर्थः । प्रसंगे इति । यदि असिद्धस्यापि असत्याधीनसिद्धिकत्वस्य साध्यत्वं स्यात्, तर्हि कार्यत्वहेतुना तदभावस्याप्यनुमेयत्वं स्यादिति प्रतितर्कप्रयोगे इत्यर्थः । अत्रेति । असत्यं सत्यसाधकमित्यत्रेत्यर्थः । अनर्थक्रियाकारित्वात् । अर्थक्रियाकारित्वा-

तानि चेत् धीरूपामर्थक्रियां कुर्युः, कथं तेषामलीकत्वम्? ननु सर्वस्यापि सत्यानृतमिथुनात् उत्पत्तौ साध्यविकलो दृष्टान्तः। मैवम्, घटाद्युत्पादकमृदादेः व्यावहारिकसत्यत्वाभ्युपगमात्। तदपेक्षया च, 'मृत्तिकेत्येव सत्यम्' इत्यादिश्रुतिनिर्वाहाच्च। अनुमानमप्यत्र तावता निष्प्रतिघमिति।

श्लो— सत्यधीर्मम सत्येन तवासत्यात् असत्यधीः। सत्यात् असत्यधीर्वेति क्वासत्यात् सत्यधीर्भवेत्॥

इत्यसत्यात् सत्यसिद्धिभङ्गः॥ ४९॥

ज्ञानस्याशेषभेदोदयविहतिकृतो न स्वनाश्यत्वयुक्तिः
वाताद्यैरेव सद्यश्शममधिकुरुते दग्धदाह्योऽपि वह्निः।
तस्मात् तस्यान्यदेव प्रशमकम् अपरं तस्य चेत्यव्यवस्था
तच्चेच्छान्तिं न गच्छेत्, कथमिव भविता सर्वभेदोपमर्दः॥ ५०॥

विश्वबाधकमद्वैतज्ञानं कारणानुपपत्त्या दूषितम्; अथ स्वप्रध्वंसकारणाभावाच्च दूष्यते। यदद्-विद्याध्वंसकमन्तिमं ज्ञानम्, तत् केयं विनाश्यम्? न तावत् तद्विषयेण ब्रह्मणा; शुद्धस्य तस्य किंचित्प्रति

आ— मिथ्यात्वेऽपि विषयिणः साक्षिणो मिथ्यात्वं नास्तीति भावः। कुत्राप्यसत्यधीर्नास्तीति(?)। अस्मन्मते सत्येन प्रतिफलितनयनकिरणादिना सत्यस्य मुखादेर्ग्रहः, त्वन्मते तु असत्यात् प्रतिबिम्बादेरसत्यस्यैव मुखादेर्धीः। यद्वा ज्ञानस्याबाधात् सत्यात् प्रतिबिम्बादिज्ञानात् ब्रह्मव्यतिरिक्ततया सत्यस्य मुखादेर्धीरिति नासत्यात् सत्यज्ञानमित्यर्थः॥ ४९॥

श्री— भावादित्यर्थः। अर्थक्रिया—फलनिष्पत्तिः; कार्यम्। दृष्टान्तः घटादिस्तृतीयपादोक्तः। अविद्याब्रह्मोभयाधीनत्वात् मिथुनोत्पन्नत्वम्। घटस्य सत्यत्वे तत्कारणस्य मृदस्सत्यत्वं सुतरामिति नानृतसंश्लेष इत्याह मैवमिति। सत्यधीरिति। असत्यात्सत्यधीविषये दृष्टान्तं दिदर्शयिषुणा प्रापञ्चिकवस्तुन एव ग्राह्यत्वात् तत्रास्मन्मते उभयं सत्यम्। त्वन्मते उभयमसत्यमिति स्थिते कथमसत्यात् सत्यधीः। दोषदोषाश्रयविषयादिरूपसत्यमात्राधीना भवति असत्यरजतधीरिति च सुवचम्, न तु असत्यात् सत्यधीः क्वापीत्यर्थः॥ ४९॥

असत्यात् तत्त्वविषयकज्ञानानुत्पत्तिरुक्ता। तत्त्वविषयकत्वेऽपि स्वबाधकत्वायोगात् विश्वबाधकत्वं नेत्याह ज्ञानस्येति। अशेषभेदोदयेति। ननु किमर्थमुदयपदम्॥ उदयपदाभावे स्थितानां भेदानां हतिमात्रं प्रतीयते। तत्सत्त्वे तु नकेवलं स्थितानाम्, किं तु नवीनोदयस्यापि विहतिकृदिति मूलोच्छेदपर्यन्तलाभः इति तदर्थम्; बहुव्रीहिणा अशेषभेदानामुदयो यतः, तस्याज्ञानस्य विहतिकृत इति वाऽर्थलाभार्थम्। वक्ष्यति हि वृत्तौ अविद्याप्रध्वंसकमिति। यद्वा ब्रह्मणोऽप्यविद्याभेदरूपतया अशेषपदेन तद्ग्रहणे विहतावन्वयो भज्येत। अत उदयपदं कल्पितभेदमात्रग्रहणार्थम्। स्वनाश्यत्वे युक्तिः= औचित्यम्। प्रतियोगिमात्रेण स्वनाशे सर्वस्यापि वस्तुनः द्वितीयक्षण एव नाशप्रसंगात् बौद्धमतं क्षणिकत्वमेव सर्वस्य स्यादिति भावः। न्यायसूत्रदर्शिते वह्निदृष्टान्तेऽपि स्वनाश्यत्वमसिद्धमित्याह वातेति। आदिना जलस्थलभस्मातपविशरणादिग्रहणम्। अधिकुरुते=लभते। दग्धं दाह्यं येन स दग्धदाह्यः। तस्मात्—विश्वबाधकतत्त्वज्ञानस्य स्वमात्रेण नाशायोगात् अन्यदेव बाधकम्, तस्य बाधकस्य च ततोऽन्यद् बाधकमित्यनवस्था स्यात्। ननु एतद्बाधकज्ञानातिरिक्तस्य सर्वस्य नष्टत्वात् एतद्बाधकस्यान्यस्योत्पत्तिर्न भवतीत्यत्राह तच्चेदिति। तर्हि अस्यानाशे तज्ज्ञानाश्रयाहमर्थ—तज्ज्ञानोत्पत्त्यवच्छेदकदेहाद्यनुवृत्तेरप्यावश्यकत्वात् नाद्वैतसिद्धिरिति।

हेतुत्वानभ्युपगमात्, अशुद्धेश्च निश्शेषध्वसात्। अत एव नानिर्वचनीयान्तरेण। एव तत्प्रध्वसेनेत्यपि तु सम्, तस्य सदन्यत्वानन्यत्व सत्यमिथ्यात्वादिविकल्पक्षोभात्। ज्ञानध्वसस्याहेतुकत्वे च कादाचित्कत्व व्याघात। अनादित्वापाताच्च कथ प्रतियोगिसभव ? परिशेषात् स्वेनैव स्वस्य नाश इत्यायातम्। तच्चायुक्तम्, न हि प्रतियोगिमात्रात् प्रध्वस क्वचिदपि दृष्ट। एतत् सर्वमभिप्रेत्याह ज्ञानस्येति। "वह्नेर्दाह्य विनाश्यानुविनाशवत् तद्विनाश" (न्या द.) इति चेन्न, तत्रापि हेत्वन्तरादेव विनाशदृष्टे। निर्वाप्यते हि कदाचिद्वातेन दीप, कदाचित् शलभादिभि। यदाऽस्य स्वय विनाश इति मन्यसे, तदाऽप्यदृष्टप्रेरित वेगवदवयवकर्मणा मिथोविभागात् सङ्घातशैथिल्यमात्रम्। न तु क्वचिदपि द्रव्यनाश। अवस्थान्तरापत्त्या चादर्शनम्। कतकरजोनिदर्शनं च बालप्रलोभनम्। न हि पयसि पङ्क कतकरजसा नाश्यते, विश्लेषमात्रदृष्टे। न च स्वय तन्नश्यति, असश्लेषमात्रसिद्धे। अस्तु तर्हि ज्ञानान्तरेण तन्निवृत्तिरित्यत्राह तस्यादिति। ज्ञाननिवर्तकस्यापि ज्ञानस्य तुल्यतया ज्ञानान्तरेण निवृत्तौ उपर्युपरि तथेत्यनवस्था। उक्तदोषपरिहाराय निवर्तकज्ञानस्य स्वतोऽन्यतश्च नाश्यत्व नेति शङ्कते तच्चेदिति। परिहरति कथमिवेति। ज्ञान तावत तिष्ठति, तदनुबन्धावहङ्कारदेहानुबन्धश्च दुर्वार इति भाव ॥

इति निवर्तकज्ञाननिवर्तकानुपपत्तिः ॥ ५० ॥

**बोधस्यान्त्यस्य वेद्य किमु तव विशद ब्रह्म मायान्वित वा**
**किं वा भेदप्रपञ्चः किमु तदनृतता किमु वेद्य न किञ्चित्।**
**आद्ये स्यात् ब्रह्म दृश्य, तदुपरि युगले मोहसत्ताऽथ तुर्ये**
**सूते द्वैत सती सा स्वविहतिमनृता पञ्चमे स्यात् न धीत्वम् ॥ ५१ ॥**

---

*प्र*— ज्ञानस्येति। तस्य सदन्यत्वानन्यत्वसत्यत्वासत्यत्वादिविकल्पक्षोभादिति। निवर्तकज्ञानध्वसकत्वेनाभिमतोऽविद्याध्वस किं सतो ब्रह्मणोऽन्योऽनन्यो वा? अन्यत्वे—सत्योऽसत्यो वा?। आद्ये—सदद्वैतभङ्गप्रसङ्ग। द्वितीयेऽसतो ध्वसकत्वायोग। अनन्यत्वे तु तस्यानादितया निवर्तकज्ञान साध्यत्वव्याघात। आदिशब्देनाविद्याध्वसस्यासत्यत्वपक्षे स किं प्रतीयते न वेति विकल्पोऽभिप्रेत। क्षोभशब्देन च आद्ये असत्यविषयज्ञानावस्थाने निश्शेषभ्रमोच्छेदो न स्यात्। द्वितीये तु प्रातिभासिकसत्त्वस्यापि अभावेन खपुष्पतुल्यतया न किञ्चित् प्रति साध्यत्व हेतुत्व चेति दूषणमभिप्रेतम्॥

*स्री*— अशुद्धेश्चेति। अनभ्युपगमादित्यशस्य विभज्यानुषंगे अर्थ सुगम। तत्प्रध्वसेन = अहकार देहादिरूपानिर्वचनीयध्वसेन। मिथ्यात्वादीति आदिना ज्ञानत्वतदभावग्रह। ज्ञानातिरिक्तनाश्यत्वे हि न मिथ्यात्व स्यात्। ज्ञान तावदिति। तावदिति अवधारणे प्राथम्ये च। ज्ञानस्थितिस्तयैवेष्यते। अत एव नसवन्ध्यपि पण्यमिति भाव। अनुबन्ध = अनुवृत्ति ॥ ५० ॥

स्वनाशकत्व न भवतीत्युक्तम्, इतरबाधकत्वमपि दुर्वचमिति बोधयितु निवर्तकज्ञानस्य विषय शोधयति बोधस्येति। किमु = किं वा। तव = त्वन्मते। विशदमिति। शुद्धमित्यर्थ। दृश्यमिति। दृश्यत्वेन मिथ्यात्वम्। ततोऽस्य ज्ञानवादबाधकत्वम्। युगले—पक्षद्वये। तुर्ये—भेदप्रपञ्चानृततापक्षे, सा—अनृतता, सती—सत्या चेत्, द्वैत सूते-द्वित्व साधयति। अद्वैत नेत्यर्थ। सा अनृता—असत्या चेत्, तर्हि मिथ्यात्वस्य मिथ्यात्वात् तस्य विहति-हानि सूते। प्रपञ्च सत्य

अथ निवर्तकज्ञानं सविषयं निर्विषयं वा ? सविषयत्वे ब्रह्मविषयं तदन्यविषयं वा ? ब्रह्मविषयत्वेऽपि शुद्धब्रह्मविषयं वा मायान्वितब्रह्मविषयं वा ? अन्यविषयत्वे प्रपञ्चविषयं तन्मिथ्यात्वविषयं वेति विकल्पयति **बोधस्येति** ॥ आद्यं दूषयति **आद्य** इति । ब्रह्म दृश्यं स्यात् । शुद्धस्य दृग्विषयत्वेऽपसिद्धान्तः ; त्वदुक्ता च दृग्दृश्यसंबन्धानुपपत्तिः ; दृश्यत्वानुमानस्यानैकान्त्यम्, ब्रह्मणोऽपि वा मिथ्यात्वाभ्युपगमप्रसङ्गश्चेति भावः । द्वितीयतृतीयौ दूषयति **तदुपरीति** । मायान्वितब्रह्मप्रतिभासः प्रपञ्चप्रतिभासश्च मोह एवेति भावः । चतुर्थे प्रपञ्चस्यानृतता सत्याऽसत्या वेति विकल्पे पूर्ववद्वैतभङ्गप्रसङ्गमाह **सूत** इति । उत्तरत्र स्वव्याघातमाह—**स्वविहतिमिति** ।

श्लो— मिथ्यात्वस्य हि मिथ्यात्वे मिथ्यात्वं बाधितं भवेत् । सत्यत्वस्य तु सत्यत्वे सत्यत्वं साधितं भवेत् ॥

निर्विषयत्वे दोषमाह **पञ्चम** इति । वृत्तिज्ञानं सर्वं सविषयमित्यभ्युपगच्छतां कथमस्य निर्विषयत्वम् ? तथात्वे वा कथं वृत्तिधीत्वमिति भावः ॥ **इति निवर्तकज्ञानवेद्यानुपपत्तिः ॥ ५१ ॥**

**साध्या चरमवमायाविरतिरपि परं ब्रह्म, तस्मात् परा वा**
**पूर्वत्र प्रागपि स्यात्, परमपि न भवेत् उत्तरत्राभ्युपेते ।**
**साऽपि स्याच्चेत् निवर्त्या, पुनरपि विलगेत् पूर्व एव प्रपञ्चो**
**नो चेत्, सत्यैव सा स्यात्; प्रसजति च ततो ब्रह्म तत् सद्वितीयम् ॥५२॥**

बाधकज्ञानसाध्यं विकल्पयति **साध्येति** । ब्रह्मस्वरूपत्वेऽनादित्वात् न साध्यत्वमित्याह **पूर्वत्रेति** । स्वरूपादन्यत्वे सर्वभेदनिवृत्त्यसंभवमाह **परमपीति** । निवृत्तिरपि निवर्त्येत्यविरोधं शङ्कते **साऽपीति** । परिहरति **पुनरिति** ॥ लब्धस्वरूपस्य भावस्य ध्वंसो यदि न स्यात्, स्वरूप तदवस्थमेव स्यात् ।

---

श्री— स्यात् । सतीत्येतत्प्रतिकोटितया असतीति प्रयोक्तव्ये अनृतेति प्रयोगः, पूर्वमनृततेति प्रयोगात् तदानुरूप्याय, अत्यन्तासत्त्वमतिनिरासाय च । मिथ्यात्वमिथ्यात्वे हि प्रकृते वक्तव्यम् । साधितं भवेदिति । न चानवस्था ; स्वपरनिर्वाहकत्वस्वीकारात् । पञ्चमे-निर्विषयकत्वपक्षे धीत्वं=वृत्तिज्ञानत्वं न स्यात् । मा भूदिति चेत्-तर्हि ब्रह्मभूतज्ञानत्वे प्रागेव तत्सत्त्वात् न महावाक्यापेक्षा, न वा प्रपञ्चस्यावकाश इति ॥ ५१ ॥

एवं निवर्तकज्ञाने विषयः क इति शोधनेन तस्यानिवर्तकत्वमुक्तम् । अतस्तदधीनं निवृत्तिरूपं फलं किंरूपमिति विचार्य तदभाव उच्यते साध्येति । पूर्वोक्तज्ञानसाध्यत्वेन युष्मदभिमता या अविद्यानिवृत्तिः, सा किंरूपा । ब्रह्म वा तदन्या वा । आद्ये साध्यत्वं न भवेत्; प्रागेव सत्त्वात् । अत उपायान्वेषणं व्यर्थम् । उत्तरत्र-द्वितीय पक्षे अभ्युपेते-स्वीकृते सति, परमपि-पश्चादपि सर्वमायानिवृत्तिर्न स्यात्; मायान्तर्गतस्य ब्रह्मान्यस्य निवृत्तिरूपस्य कस्यचित् सत्त्वात् । सा-मायानिवृत्तिरपि निवर्त्या चेत्, तर्हि पुनरपि पूर्वस्थितः प्रपञ्चः विलगेत्-विशेषेणाऽऽत्मना संबध्येत । ध्वंसनाशे प्रतियोग्युन्मज्जनप्रसंग इत्यर्थः । एवकारेण न तज्जातीयः प्रपञ्चः, किं तु स एवेत्युच्यते । उन्मज्जन्नपि प्रपञ्चः ब्रह्मान्यत्वात् निवर्त्येत इति चेत्, उन्मज्जनानन्तरं हि निवर्तनम् । तत् केन? पूर्वेण ज्ञानेनैवेति चेन्न; तस्य नष्टत्वात् । एवं तर्हि मायानिवृत्तिरपि न निवर्तेत, निवर्तकाभावादिति, नास्ति प्रपञ्चोन्मज्जनमिति चेत्-एवं रीत्या, 'नोचेत्'-प्रपञ्चनिवृत्तिर्नेत्युच्यते चेत्-सा सत्यैव स्यात् । ततो द्वैतमेव स्यादिति ।

प्रागभावस्य तु प्रध्वंस-भावश्च तत्प्रध्वंसश्च; उत्तरत्वे सति विरोधित्वाविशेषात्। प्रध्वंसस्य च प्रागभाव--भावश्च तत्प्रागभावश्च, पूर्वत्वे सति विरोधित्वाविशेषात्। इहापि प्रध्वंसः तन्निवृत्तिश्च भावस्य प्रध्वंसः स्यातामिति चेत्—तर्हि अनवस्थितप्रध्वंसपरम्पराकॢप्तिप्रसङ्गः; तत्प्रध्वंसकज्ञानकॢप्तिश्च। अस्मन्मते तु अवस्थापरम्परा प्रमाणसिद्धाऽङ्गीक्रियत इति न विरोधः। निवृत्तेः अनिवृत्तौ सत्यत्वप्रसङ्गः; ततश्चाद्वैतभङ्गमाह **नो चेदिति**। सत्याभावसाहित्यमदोष इत्येतच्च दूषितमेव॥ **इति प्रपञ्चनिवृत्त्यनुपपत्तिः ॥५२॥**

**अन्त्यज्ञानस्य जीवः स्थितिपदमथवा केवलं ब्रह्म ते स्यात्;**
**आद्ये तेनैव बाध्यो न तदुपजनयेत्, धीस्थितौ किं ततोऽस्य।**
**अन्त्ये सत्याऽनृता वा तदधिकरणता; नाद्य इष्टः; परस्मिन्**
**तत्कॢप्त्यादेरयोगः तदिह विमृशतां किं न दुष्टं त्वदिष्टम् ॥ ५३ ॥**

विश्वबाधकबुद्धेराधारं विकल्पयति **अन्त्यज्ञानस्येति**॥ न हि बाह्यवत् देहेन्द्रियमनसां ज्ञातृत्वं युष्माभिरिष्यते। तुल्यन्यायतयाऽहङ्कारस्य महतो वा ज्ञातृत्वं निरस्तमेव। परिशेषादहङ्कारोपहितो जीव

---

*श्री*— पुनः प्रपञ्च उन्मज्जेदित्येतन्न युक्तमिति अद्वैती शङ्कते लब्धेत्यादिना। लब्धस्वरूपस्य-जातस्य भावपदार्थस्य ध्वंसोत्पादात् प्रागेव स्थितिः, न तु पश्चात्। यथा घटप्रागभावः, ततो घटः, ततो घटध्वंस इति क्रमे घटध्वंसकाले घटप्रागभावस्य नोन्मज्जनम्, घटस्य घटध्वंसस्य च प्रागभाव-विरोधित्वांगीकारात् अत एव विरोधित्वात् घटस्य घटध्वंसस्य च घटप्रागभावध्वंसरूपत्वं घटस्य घटप्रागभावस्य च घटध्वंसप्रागभावत्वञ्चेष्यते। एवं प्रकृते प्रपञ्चं प्रति तन्निवृत्तिपरम्परायाः प्रपञ्च-विरोधित्वमिष्यते। सिद्धान्ते पूर्वपूर्वध्वंसरूपाणां कपालत्वचूर्णत्वादीनां घटविरोधित्वघटध्वंस-त्वयोरिष्टत्वादिति शंकावाक्यार्थः। परिहरति तर्हीति। कॢप्तिश्चेति। पूर्वज्ञानस्य नष्टत्वात् ज्ञानान्तरा-कल्पनेन ध्वंसध्वंसे, ध्वंसः। धारातद्धेतुसर्वभावसद्भावे कथं सर्वमायानिवृत्तिरित्यर्थः। तुरीयपादार्थ-माह निवृत्तेरिति। सत्याभावेति। सत्यभूतभावपदार्थसाहित्य एवाद्वैतभंग इति पक्षश्चेत्यर्थः॥ ५ ॥

निवर्तकज्ञानजन्यनिवृत्तिस्वरूपशोधनं कृतम्। अथ निवर्तकज्ञानाधारः क इति विचारयन् अद्वैतिसंमतोपायविचारं निगमयति अन्त्येति। स्थितिपदमिति स्थानशब्दपर्यायः। पदं नाम अधि-करणम्। स्थाधातोरधिकरणे ल्युटि स्थानशब्दो निष्पन्नः स्थितिपदवाची। विद्यास्थानशब्दे स्थानपद-स्थाने स्थितिपदप्रयोगः उदयनाचार्यकृते न्यायपरिशिष्टे, 'तं विप्नगमेदविद्यास्थितिपदविषय' इति आचार्यश्रीसूक्तौ च द्रष्टव्यः। अन्ततः स्थितिपदमित्यस्य मुख्याधिकरणमित्येवार्थः। केवलं ब्रह्मेति। जीवस्यैव मुमुक्षया प्रवृत्त्या तत्रैव ज्ञानं भवतीति वक्तव्यम्। तत् किं जीवत्वव्यवहारौपयिकाकार-विशिष्टे उत तदन्तर्गतशुद्धब्रह्मांशे इति विकल्पः। आद्ये जीवनिष्ठत्वपक्षे, जीवेन स्वबाधकस्य ज्ञानस्य स्वयं प्रयत्नेन साधनासंभव इति दोषः। धीस्थिताविति। विशिष्टचैतन्यरूपजीवबाधेऽपि तदन्तर्गत-विशेष्यभूतचैतन्यात्मकधीः स्थास्यतीति चेदित्यर्थः। ततः-धीस्थित्या अस्य—विशिष्टजीवस्य किं फल-मायातम्, नाशस्यैवोक्तत्वात्। अन्त्ये-शुद्धांशे ज्ञानस्वीकारे ज्ञानाधिकरणता सा सत्या वा मिथ्या वा। आद्यः पक्षो नेष्टः, तस्य शुद्धत्वात्। परस्मिन्—अन्त्ये मिथ्याभूतेति पक्षे तु मिथ्याभूतस्य कल्पन-कल्पकदोष दोषाश्रयादिसापेक्षत्वात् तदसंभव एव। तत्—तस्मात् इह—उपायविषये विमृ-शतां त्वदिष्टं किमदुष्टमस्ति। सर्वं दुष्टमेवेति।

बाह्यवत्—चार्वाकादिभिरिव। अहङ्कारः—अन्तःकरणम्। महत् बुद्धिः।

एव ज्ञातेति कोटिः प्रथममिहोद्घाटिता । केवलं—सर्वोपाधिरहितमित्यर्थः । बाधकज्ञानस्य बाध्यजीवाधिकरणकत्वे बाधकमाह आद्य इति । अयं भावः—बाधकेन जीवो नश्यति, न वा ? आद्ये, स्वनाशकधीसिद्ध्यै भेदवासनानिरासादौ न प्रयस्येदिति । न हि, आत्मनाशः परमः पुमर्थ इत्यौपनिषदपक्षः । उत्तरत्र अहमर्थविनाशे कथं जीवस्थितिः ? स्थापितं चाहमर्थस्यैवात्मत्वम् । जीवत्वे नष्टेऽपि ज्ञप्त्यात्मा तिष्ठेदित्यत्राह धीति । न हि, अहं विनङ्क्ष्यामि, मदन्या धीर्मद्विधुरा तिष्ठत्विति मत्वा मुमुक्षुः प्रवर्तते । तथा च भाषितम्, "मयि नष्टेऽपि मत्तोऽन्या काचित् ज्ञप्तिरवस्थिता । इति तत्प्राप्तये यत्नः कस्यापि न भविष्यति ॥" इति । शुद्धस्य निवर्तकज्ञानाधारता सत्या असत्या वेति विकल्पयति अन्त्य इति । सत्यत्वेऽपसिद्धान्तमाह नाद्य इति । मिथ्यात्वेऽनुपपत्तिमाह परस्मिन्निति । असत्यस्य ज्ञानाधिकरणत्वस्य क्लृप्तिर्हि कल्पकाविद्याहङ्कारादिसापेक्षा । अतो निवर्तकज्ञानतदाधारत्वतत्प्रतिभासाः यावत् स्युः, तावत् अविद्याऽनुवृत्तेति न ततस्तन्निवृत्तिः॥ अविद्यायाः तत्कल्पितस्य ज्ञानस्य च सुन्दोपसुन्द विषनाशकविषन्यायेन युगपत् ध्वंसादविरोध इति चेत्—तदिदमन्योन्यध्वंसकत्वं दृष्टं कल्प्यं वा ? नाद्यः, असिद्धेः । न द्वितीयः, कल्पकाभावात् ॥ गतिशून्यत्वं कल्पकमिति चेत्, अस्ति सतां गतिः; तामेवानुवर्तस्व । एवं परपक्षे दूष्यान्तराणि दूषणान्तराणि च सूचयन् निगमयति तदिति । बहुश्लोकोक्त बहुविधदोषप्रस्थानादित्यर्थः ॥ **इति निवर्तकज्ञानाधारानुपपत्तिः ॥ ५३ ॥**

**नाभुक्तं कल्पकोटयाऽप्युपशमनमियात् कर्म निष्कृत्यभावे**
**विद्यातस्तद्विनाशश्रुतिरिह तदसौ तत्प्रशंसेति चेन्न ।**
**तादृग्विद्यैव तन्निष्कृतिरिति हि विदांचक्रुराम्नायवृद्धाः**
**नान्यत् ब्रह्मानुभूतिप्रतिभटदुरितध्वंसतः साध्यमत्र ॥ ५४ ॥**

---

वी—न हीति औपनिषदपक्ष इत्यत्रान्वेति । उत्तरत्र=जीवो न नश्यतीति पक्षे, अहमर्थविनाशे—ब्रह्मातिरिक्ताहङ्कारात्मकाहमर्थनाशस्यापि त्वदिष्टत्वात् कथं जीवस्तिष्ठतीत्युच्येत । सुन्दोपसुन्दौ मिथो बाधितौ । विषनाशकविषस्थलेऽप्यन्योन्यबाधकत्वं भाव्यम् । एवं ज्ञानस्याविद्यादिना नाशाङ्गीकारे मिथ्यात्वे न स्यात् । मिथ्याभूतस्य ज्ञानैकबाध्यत्वात् । तदित्यस्यार्थमाह बह्विति । ध्यानेत्यारभ्य एकादशश्लोकोक्तेत्यर्थः । प्रस्थानादिति पदं—श्लोके प्रस्थानमात्रं कृतम्, गन्तव्यपूर्णगमनं व्याख्यानादितो भवेदिति सूचनाय । अत्र दोषावस्थानादिति पाठं रोचयन्ते ॥ ५३ ॥

अद्वैतिसंमतमुक्त्युपायखण्डनारम्भात् प्राक् स्वमते मुक्त्युपायस्य शोधनं कृतमासीत् । सर्वेऽपि प्राप्नुयुस्तां परगतिमिति चोपसंहृतम् । तत्र—विद्यायाः परगतिप्रापकत्वं सर्वविधकर्मनिवर्तकत्वञ्चोभयं फलं न युक्तम् । कर्मणां भोगैकनाश्यत्वाच्च । अतः अविद्यानिवर्तकत्वं परोक्तमिव विद्यायाः कर्मनिवर्तकत्वं भवदुक्तमप्ययुक्तमिति तार्किकः शंकते नाभुक्तमिति । कर्म अभुक्तफलकं कल्पकोटयनन्तरमपि नोपशाम्येत् । निष्कृतेः—प्रायश्चित्तस्य करणे तु न फलभोगप्रसक्तिः । ननु प्रायश्चित्तशास्त्रमिव पापनाशे, कर्मनाशविषयेऽपि श्रुतिरस्तीत्यत्राह विद्यात इति। कर्मनाशकानि प्रायश्चित्तानि धर्मकाण्ड एवोच्यन्ते । तत्—भोगेनैव क्षपयितव्यत्वात्, इह—उपनिषदि, असौ—'तत् यथेषीकातूलम्' इत्यादिः विद्यातः कर्मविनाशश्रुतिः तत्प्रशंसा—विद्यायाः स्तुतिमात्रम्; न यथाश्रुतार्थिका;

श्लो— यथा मृषावादिमते न बोधान्मुक्तिसंभव । त्वन्मतेऽपि तथेत्येवमपर्यायेन शङ्कते— **नाभुक्तमिति** । स्मर्यते हि, "अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभम् । नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ॥" इति । तर्हि प्रायश्चित्तशास्त्रवैयर्थ्यं स्यादित्यत्रोक्तम् **निष्कृत्यभाव** इति । ननु, "तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत, एवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति श्रूयते । "तदा विद्वान् पुण्यपापे विधूय", "तत् सुकृतदुष्कृते धूनुते" इत्यादि च । "न कर्मणा क्षयो भूप जन्मनामयुतैरपि । ऋते योगात् कर्मकक्षं योगाग्निः क्षपयेत् परम् ॥", "यथाऽग्निरुद्धतशिख" इत्यादि च स्मर्यते । अत फलभोगाभावेऽपि ज्ञानात् कर्मनिवृत्तिः स्यादित्यत्राह **विद्यात** इति । न च, "तत्त्वज्ञानात् निःश्रेयसाधिगम" इत्याद्यसूत्रविरोध ; "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायात्" इति द्वितीयसूत्रे ज्ञानस्य मिथ्याज्ञाननिवृत्तिद्वारा कर्मानारम्भार्थत्वस्य स्थापितत्वात् । कृतं तु कर्म सफलत एव नश्यतीत्यविरोध ।

अत्र कर्मणामवश्यभोक्तव्यत्ववचनमकृतप्रायश्चित्तविषयमित्यभिप्रायेण प्रत्याह **नेति** । अत्रापि तर्हि अकृतप्रायश्चित्तत्वात् भोक्तव्यत्वमित्यत्राह **तादृगिति** । लक्ष्यन्तविहितपरब्रह्मध्यानरूपेत्यर्थ । आम्नाय **धृद्धा** स्मर्तार.। ते चेश्वरदर्शनं सर्वप्रायश्चित्तमित्याहु । "इज्याचारदमाहिंसा", "प्रायश्चित्तान्यशेषाणि", "प्रायश्चित्तं तु तस्यैकम्" इत्यादि च । ब्रह्मप्राप्तिहेतुतया विहितस्य योगस्य कथं नैमित्तिकत्वमित्यत्राह **नान्यदिति** । स्वत प्राप्ता हि संसरतामपि ब्रह्मानुभूति सूरिवत् । तत्प्रतिबन्धकनिवृत्त्यै योग इति निष्कृतिरूपत्वं तस्य युज्यत इति भाव । अत्र **दुरित**शब्देन बन्धकं पुण्यमपि सगृहीतम्, प्रतिबुद्धं प्रति अनिष्टफलप्रदत्वाविशेषात् । "एते वै निरयास्तात स्थानस्य परमात्मन" इति स्वर्गादीना निरयत्वस्मृत्या

---

वी— कर्मकाण्डस्पष्टश्रुतप्रतिनियतप्रायश्चित्तोल्लंघनायोगात् । यथाश्रुतस्वीकारविषये आग्रहश्चेत्— सर्वोत्तराघाश्लेषोऽपि सिद्धान्त्यसंमतो ग्राह्यः स्यादिति भावः । परिहरति नेति । प्रायश्चित्तानाशितमेव हि कर्म भोक्तव्यम् । विद्याऽपि प्रायश्चित्तमेव, तथा श्रुतेः । ननु परगतिकामनया कृतायाः विद्यायाः कर्मनाशरूपफलान्तरार्थत्वं कथम् । एतदर्थत्वे परगतिप्रापक उपायोऽन्य कार्यः स्यादित्यत्राह नान्यदिति । विद्यायाः फलं दुरितध्वंस एव । ब्रह्मानुभूतिरूपपरगतिस्तु प्रतिबन्धके निवृत्ते स्वयमेव भवति । कुल्या प्राप्तस्य जलस्य प्रतिबन्धकापनये स्वतः क्षेत्रे सरणवदिति भाव ।

न बोधान्मुक्तिसंभव इति । विद्यायाः कर्मनिवृत्तिरूपमोक्षहेतुत्वं न भवतीत्यर्थ.। तार्किकेण तत्त्वज्ञानस्य परम्परयैव मोक्षोपयोगस्योक्तस्याग्र वक्ष्यमाणत्वात् । तन्मते ब्रह्मानुभूतिरूपफलान्तरस्याभावात् सामान्यतो मुक्तिपदप्रयोगः । इषीकतूलमित्यस्यैव साधुत्वेऽपि इषीकातूलमित्येव श्रौतः पाठ । इत्यादि चेति । श्रूयत इत्यनुषङ्ग । ननु तार्किकस्यायमपसिद्धान्त न्यायसूत्रविरोधादिति प्रश्नं परिहरति न चेति । तदनन्तरेति शब्दस्य तदव्यवहितपूर्वेत्यर्थ । दुःखादीनां पञ्चाना मध्ये उत्तरोत्तरस्यापाये तत्तदव्यवहितपूर्वस्यापायो भवति । तत्रान्तिमो दुःखापाय एव मोक्ष. । दोषा.=रागद्वेषमोहा । ननु तत्त्वज्ञानबलात् कर्मानारम्भेऽपि अनादिकृतकर्माधीनजन्मवारणं कथमिति चेत्— योगबलेन स्वात्मगतसर्वधर्माधर्मसाक्षात्कारेण भोक्तव्यकर्मनिश्चयात् युगपदेव शक्त्या सुरनरतुरगविहगादिनानाशरीरग्रहणेन सर्वमनुभवेन विनाशयेत् । तत एव मोक्ष इति तन्मतरहस्यम् । स्वत.प्राप्तेति । प्राप्यं ब्रह्मेति श्लोकस्य(र त स) द्वितीयपाद., "प्राप्तिर्दीर्घधनक्रमादिह मम प्राप्ता स्वत सूरिवत्" इति प्रत्यभिज्ञाप्यते ।

तत्साधनस्य पापत्वोपपत्तेः । "न सुकृतम्" इत्यारभ्य, "सर्वे पाप्मानोऽतो निवर्तन्ते" इति सुकृतस्यापि पापत्वेन सङ्कल्पव्याख्यानाच्च । तदेव धीसङ्कोचकत्वसंघसे धीविकास एव ब्रह्मानुभूतिरिति तत्कामना-व्यपदेशोऽपि न विरुद्धः । अन्यत्र च प्रतिबन्धकनिरासरूपान्ते एवं प्रतिसन्धेयम् ॥

इति विद्यायाः पापनाशकत्वोपपत्तिः ॥ ५४ ॥

'प्रायश्चित्तं न पुण्ये, न च सुकृतमनुश्रूयते धर्मशब्दं,
नाधर्मत्वं विधानात्, न यदि सुचरित स्वङ्गमस्याश्च न स्यात् ।
मैवं धर्मोऽप्यधर्मो भवति हि बहुशोऽधिक्रियादेर्विशेषात्
धर्मं त्रैवर्गिकं तु स्वयमिह निगमः पाप्मकोटौ पपाठ ॥ ५५ ॥

ननु पुण्यस्य दुरितशब्देन समयो न युक्तः, विरुद्धत्वात्, कस्मिन् प्रयोग इत्यभिप्रायेण शङ्कते प्रायश्चित्तमिति । न हि पुण्योद्देशेन प्रायश्चित्तविधिः । "धर्मेण पापमपनुदति" इति च श्रूयते, न तु धर्ममिति ॥ काम्यमपि अधर्मत्वात् धर्मेणापनुद्यत इति चेत्, फलोद्देशेन विहितत्वात् । न चात्र श्येनादिवत्, स्वरूपतः फलतो वा निषेधानाम्नात्वात् । धर्मेऽपि च यद्यधर्मत्वम्, तदा तदङ्गत्वं विद्याया न घटते ॥ एषां चतुर्णां हेतूनामन्यथासिद्धिमभिप्रेत्य प्रत्याचष्टे मैवमिति । अधिकारिभेदेन पापत्वापत्तौ तं प्रति निवृत्तिविधिर्युक्तः । "धर्मेण पापम्" इत्यत्र च यथार्हं पापशब्द उभयग्राही । विहितत्वं च कञ्चित्प्रति धर्मत्वं साधयेत्, नान्यं प्रति अधर्मत्वं निरुन्ध्यात् । तेषामेव च कर्मणां फल-सङ्गादित्यागवतां निवृत्तिधर्मतापत्त्या विद्याङ्गत्वोपपत्तिः । एतत् सर्वं व्यनक्ति धर्मोऽपीति । स्मर्यते हि, "स एव धर्मः सोऽधर्मस्तं तं प्रति नरं भवेत् । पात्रकर्मविशेषेण देशकालावपेक्ष्य च ॥" इति । एवं सति, "न सुकृतम्" इत्यादौ सुकृते पाप्मशब्दो न भाक्त इत्यभिप्रायेणाह धर्ममिति । अत एव हि, "त्रैवर्गि

ठी— एवं प्रतिसन्धेयम्–प्रतिबन्धनिरासकस्य न कारणत्वम्, किन्तु अन्यस्यैवेति ज्ञेयमित्यर्थः ॥५४॥
अघविनाशो विचारितः, अश्लेषो विचारयिष्यते । विनाशसाम्यात् पुण्यविनाशं मध्ये विचार-यति प्रायश्चित्तमिति । न च सुकृतमिति । पापवदिति शेषः । तस्य, धर्मेण पापमपनुदतीति श्रूयमाणत्वात् । ननु पापशब्देन पुण्यस्यापि ग्रहणात् बाध्यत्वश्रवणं तुल्यमित्याशङ्कायामाह नाधर्म-त्वमिति । शास्त्रसाधनतया प्रवृत्तत्वादिव न चरणं । विधानात्=विहितत्वात् । न यदि—अधर्मत्वं नेति न चेत्—अधर्मं एव चेदित्यर्थः । तदा सुचरितं विद्याया अङ्गं न भवेत् । न हि बाधकस्याङ्गत्वमिति भावः । तुशब्दः सुचरितपदस्योपर्यन्वयज्ञापनार्थः । अधिक्रियादेर्विशेषात्—अधिकारदेशकालादिभेदात् । नन्वनुभवकाले यत् प्रतिकूलतया भातम्, तदेव दुःखम् । तत्समु-दायविशेष एव नरकः । स्वर्ग निरयशब्दप्रयोगस्तु विमर्शदशायां तत्प्रतिकूलत्वचिन्तनादौपचारिक एव । एवञ्चानुभवकाले यदनिष्टं भवति, तत्साधनत्वेन निषेधवाक्यावगम्यमेव पापं भवेत् । अतो यज्ञादौ पापशब्द औपचारिक एवेत्यत्र चतुर्थः पादः । यथावदिरक्तस्य स्वर्गादौ स्थितिः असह्यैव । त्रैवर्गिकं यत् तदपि तत्साधनमेवेति तत् निषेधवाक्यग्राह्यमिति भावः ॥ इति चेति चकारः पुण्योद्देश्यकविध्यभाव-रूपपूर्वोक्तानां सह पापमात्रोद्देश्यकविधेः समुच्चये । स्वरूपत इति । विहितस्यैव दशाविशेषे विशिष्य निषेधो वा, विहितजन्यफलस्य निषेधो वा नेत्यर्थः । श्येनयागे फलस्याभिचारस्य निषिद्धता ॥५५॥

कान् त्यजेत् धर्मान्" इति मुमुक्षुं प्रत्यनुशिष्यते॥ इति त्रैवर्गिकसुकृतस्यापि विद्यानाश्यत्वम् ॥५५॥

अश्लेषः पाप्मभिश्चेत्, प्रसजति वितथा दुश्चरितान्निवृत्तिः ;
तेषु प्रामादिकेष्वप्यमतिकनिपतद्बीजवत् स्यात् प्ररोहः ।
मैवं शास्त्रैकवेद्ये फलफलिविषये युक्तयो ह्यस्वतन्त्राः ;
शास्त्रात् बाधस्तु तिष्ठेत् मतिकृतविषये शब्दशक्त्यादिभिर्नः ॥ ५६ ॥

अस्तु विद्याऽपि प्रायश्चित्तान्तरवत् उपात्तदुरितनाशिका ; उत्पत्स्यमाननिष्कृतिर्न स्यात्, निमित्तानुदयेऽपि नैमित्तिकप्रवृत्तावतिप्रसङ्गात् । उदितत्वशङ्कयाऽपि कचिन्निष्कृतिः, पाक्षिकोऽपि दोषः परिहार्य इति न्यायात् । न तूत्पत्स्यमानत्वशङ्कया ; तदवस्थस्य निमित्तत्वेन प्रायश्चित्तशास्त्रैरनुद्देशात् । "एवंविदि पापं कर्म न श्लिष्यते", "तस्यैवाऽऽत्मा पदवित् तं विदित्वा न कर्मणा लिप्यते पापकेन" इत्यादयस्तु विद्यां प्रशंसन्ति ; अर्थायोगात् । ब्रह्मविदाम्, "बाल्येन तिष्ठासेत्" इति विधौ कृत्स्नबालकृत्योपादाने कामचारप्रसङ्गाच्च । अस्त्विति धार्ष्ट्ये, "नाविरतो दुश्चरितात्" इति श्रुतिरुपरुन्धे ;

---

व्या— अस्तु विनाशः, अश्लेषस्तु न युक्त इति शंकते अश्लेष इति । पापकर्तृकः श्लेषो विदुषि नास्ति चेत्–'नाविरतो दुश्चरितात्' इति दुष्कर्मतो निवर्तनं व्यर्थम् । ननु प्रामादिकपापैरेवाश्लेष इत्यत्राह तेष्विति । अमतिकेति । अमतिकात्–बीजवापं कुर्यामिति बुद्धिरहितात् पुरुषात् यदृच्छया निपतितेषु बीजेष्विव अंकुरोत्पत्तिः स्यादेवेति शंका । परिहरति मैवमिति । बीजस्यांकुरोत्पादकत्वमिव कर्मविशेषस्य पापजनकत्वं न लोकसिद्धम् । इदं फलम्, इदमेतज्जनकमिति फलतद्धेतुरूपो विषयः शास्त्रैकवेद्यः। अदेशकालकृतानाम् अनधिकारिकृतानाञ्च फलाहेतुत्ववत् प्रामादिकानामपि विद्वद्विषये फलाहेतुत्वमश्लेषश्रुत्यादिभिरवगम्यते । 'नाविरतो दुश्चरितात्' इति शास्त्रात् पापाचरणबाधस्तु बुद्धिपूर्वककृतविषये विश्राम्यति । अविरतः इति पदस्य दुष्कर्मविषयकरत्यभाववद्भिन्न इति शक्योऽर्थः। रतिश्च रागो बुद्धिपूर्वकः । अतो बुद्धिपूर्वं दुश्चरितकृत् विद्यां नाप्नुयादिति शब्दशक्त्यैवावगमात् प्रामादिकेतरविषयकत्वं स्पष्टम् । आदिना उपस्तिवृत्तान्तादिग्रहणम् ।

उपात्तदुरितेति । ननु दुरितं कर्तव्यमिति बुद्ध्या तत्करणात् कथं दुरितस्योपात्तत्वमिति चेत्—उपरि उत्पत्स्यमानेति प्रयोगात् अत्र तत्प्रतिकोटितया उत्पन्नेति पाठः स्यादिति मन्यते । उदितत्वशंकयेति उपर्युक्तेश्च । अथवा लोके उपात्तदुरितेति व्यवहारोऽपि दृश्यते । नाशिकेत्यनेनैवोत्पन्नत्वमर्थसिद्धम् । दुरितानां तात्कालिकेष्टसाधनतयोपादानमास्थया कृतमिति ज्ञापनाय उपात्तपदप्रयोगो नायुक्तः । तेन बुद्धिपूर्वकत्वेऽपि नाश इति स्पष्टं भवति । यद्वा शास्त्रेण नाश्यतयोपात्तानां दुरितानां नाशिकेत्यप्यर्थः स्यात् । एतद्विवरणमेवोपरि, 'उत्पत्स्यमानावस्थस्य निमित्तत्वेन प्रायश्चित्तशास्त्रैः अनुद्देशात्' इति वाक्यमिति । ननु विद्याया आप्रयाणमनुष्ठेयत्वात् उत्पत्स्यमानत्वेनाभिमतानामपि उत्पन्नत्वसिद्धिर्यदा तदनन्तरमावृत्तविद्यांशेनोत्पन्नतत्पापविनाशसंभवात् उत्तराघमपि पूर्वाघं भवेदिति चेन्न—'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इति दर्शनसमानाकारप्रीतिरूपापन्नध्यानव्यक्तेः प्रथमाया एव अघाश्लेषविनाशहेतुत्वस्य तदधिगमाधिकरणनिष्कृष्टतया तस्या व्यक्तेः उत्पत्स्यमाननिष्कृतित्वं भवति न वेति विचारस्यानुपपन्नत्वाभावात् । मध्यभाव्युपासनव्यक्तीनां पापनाशकत्वसंकल्पप्रतिपादकवाक्याभावात् । शंकयाऽपीति । निमित्तं न प्रवर्तकम्, किन्तु निमित्तसद्भावज्ञानम्, तदपि निश्चयसंदेहसाधारणमेवेति भावः । धार्ष्ट्यमिति

'सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्" इति च सूत्रम् । जडवद्व्यवहरतामपि योगिना, "सतां वर्त्म न दूषयन्" इति प्रवृत्तिनियम उक्त — इत्येतत् सर्वमभिसन्धायाह अश्लेष इति प्रामादिकैरश्लेषे श्रुत्यादिविरोधो नेत्यत्राह तेष्विति । प्ररोहः यथार्हकार्यारम्भः, अन्यथा कथमकामकृतेषु प्रायश्चित्तविधिरिति ? अत्र श्रुतस्याश्लेषस्य किं न्यायतो बाध. उत वचनत इति विकल्पमभिप्रयन् प्रत्याह मैवमिति । आद्य दूषयति शास्त्रैकवेद्य इति । फलफलिविषये । साध्यसाधनभावेन मिथस्संबध्यमानेऽर्थे इति यावत् । अस्वतन्त्राः । न हि वचनविरोधे न्याय प्रभवति ; तथा सति अतिप्रसङ्गादिति भाव । द्वितीये विषयभेदात् विरोधं परिहरति शास्त्रादिति । शब्दशक्त्यादिभि, 'नाविरतो दुश्चरितात्' इत्यत्र हि अविरति बुद्धिपूर्वचर्यानुवर्तनम्, तत्प्रसक्तस्य प्रतिषेध । उपस्तिश्च प्राणधारणार्थमिभ्योच्छिष्ट चखाद । अनुपानप्रतिग्रहमिभ्येनाभ्यर्थितस्सन् आह, "न वा अजीविष्यमिमान् अखादन् । कामो मे उदपानम्" इति । ब्रह्मविदोऽपि मे कामतो निषिद्धकरणं परिहार्यमित्यर्थ । "अपि चेत् पातक किंचित् योगी कुर्यात् प्रमादतः। योगमेव निषेवेत नान्यं यज्ञं (?) समाचरेत् ॥" इति च स्मर्यते ॥ अश्लिष्टस्य पातकस्य किं योगरूपेणापि प्रायश्चित्तेनेति चेन्न ; तत्र तद्विधौ तात्पर्याभावात् । अन्यप्रायश्चित्तप्रसक्त्या योग न विच्छिन्द्यात् इत्येव हि तात्पर्यम् । यद्यपि, "जीवितात्ययमापन्न", "प्राणसंशयमापन्न" इत्यादिवचनानि विद्वदविद्वत्साधारणानि, तथाऽप्यत्रानापद्दशाया प्रामादिकेष्वपि विद्यामाहात्म्यात् अश्लेष उच्यत इति सार्थत्वम् । अत पापाना विनाशवत् अश्लेषोऽपि विद्यासाध्य फलमिति ॥

इति प्रामादिकोत्तराघाश्लेषोपपत्तिः ॥ ५६ ॥

श्लिष्ट विद्याङ्गपुण्य स्वफलवितरणात्, नेतरार्थं विरागे  
रागादारभ्यमाणं फलवदमतिक सभवेन्नैव पुण्यम् ।  
पुण्याश्लेषस्ततोऽस्मिन् न घटत इति चेत्, नोपयुक्तातिरिक्तै  
विद्याङ्गैस्तस्य योगात् ; अमतिकृतमपि ह्यामनन्त्येव पुण्यम् ॥ ५७ ॥

---

टी— उपरन्ध इत्येतत्कर्मे । इति च सूत्रमित्यपि उपरुन्धे इत्येतत्कर्तृ । बुद्धिपूर्वेचर्येति । तादृशादुश्चर्येत्यर्थसिद्धम् । तथैव वा पाठः । इत्यत्र हीति । इत्यत्र एव हीत्यर्थः । बुद्धिपूर्वकपापाश्लेषकरत्वं विद्याया नास्तीत्यत्रोषस्त्युपाख्यानमपि प्रमाणमित्याह उपस्तिश्चेति । विद्वदविद्वत्साधारणवाक्यसिद्धार्थानुवादित्वमस्याश्लेषवाक्यस्य न भवति, विद्याप्रभावपरत्वभंगादित्याह यद्यपीति ॥ ५६ ॥

अघपुण्ययो क्रमेण विनाशविचारानन्तरम् अघविषये विश्लेष विचार्य पुण्यविषये तं विचारयति श्लिष्टमिति । अघवत् पुण्य प्रामादिक न भवति । बुद्धिपूर्वकस्याश्लेषस्तु असंभावित इति शङ्कायाम्, प्रामादिकसद्भाव बुद्धिपूर्वकस्याप्यश्लेषश्च समर्थ्यते । पुण्यस्याश्लेषो नाम तत्साध्यत्वेनाभिमतफलालाभ । विरागे—रागरहिते विरक्ते पुरुषे धीपूर्वक पुण्यं विद्याङ्गभूतमेव भवितुमर्हति । विद्यातिरिक्तफलानपेक्षत्वात् तस्य शास्त्रीयकर्मणा किञ्चित्फलसाधने प्रवृत्त्यभावात् । विद्याङ्ग तु पुण्य विद्योपकाररूप फल वितरत्येवेति तत्फलप्राप्तिमत्त्वात् नाश्लिष्टम् । इतरार्थं= विद्येतरफलार्थं तु पुण्य तस्मिन् न भवति । ननु प्रामादिक पुण्य स्यादित्यत्राह रागादिति । विहितं

यद्यपि पापस्याश्लेषः, तथाऽपि कथम्, 'इतरस्याप्येवमसंश्लेषः पाते तु' इति सूत्रोक्तः पुण्याश्लेष इति विकल्पानुपपत्त्या शङ्कते **श्लिष्टमिति** ॥ अत्र हि पुण्यस्याश्लेषः किं बुद्धिपूर्वस्य, तदन्यस्य वा? आद्ये विद्याङ्गस्य तदनङ्गस्य वा? अनङ्गत्वे विरक्तकृतस्य अन्यकृतस्य वेति विकल्पः। तत्र विद्याङ्गस्याश्लेषो न संभवति, स्वफलभूतविद्याप्रदानात्। वीतरागस्य न फलान्तरार्थप्रवृत्तिः, यतः तदश्लेषोक्तिः स्यात्। सरागकृतं तु स्वफलं दद्यादेव; धीपूर्वस्याश्लेषायोगात्। अधीपूर्वं तु सुकृतं न संभवत्येव, चोदितानुष्ठान रूपत्वात्; निषिद्धे तु अधीपूर्वत्वसंभवः; चोदनापेक्षानुष्ठानत्वात्। अतो ब्रह्मविदि पुण्याश्लेष उक्तो न संभवतीत्याक्षेपः। एवमाक्षिप्तेषु कंचिदंशं विशेषयिष्यन् आह नेति। हेतुमाह **उपयुक्तेति**। उपायविरोधिशमनेषु कर्मसु कानिचित् अधिकानि संभवन्ति, अन्यैर्विद्यापूर्तेः; न च निष्फलत्वं युक्तम्; अतः स्वानुगुणं फलान्तरं दातुमर्हन्तीति शङ्कायामश्लेषः सूच्यते। निष्कामानुष्ठितानां ह्येतेषां न फलान्तरसंभव इति। यच्चाधीपूर्वकाम्यं न संभवतीति तदपि न, विष्ण्वायतनदीपाद्युपाख्याने तद्दृष्टेः। स्वप्ने च विद्वानपि वासनाविशेषात् निषिद्धमिव काम्यमप्यनुतिष्ठेत्। पित्रादयश्च निरपेक्षं प्रति हितबुद्ध्या काम्यमाचरेयुः। तच्च प्रामादिकप्रायं सर्वं विदुषि न संश्लिष्यत इत्यभिप्रायेणाह **अमतिकृतमिति** ॥ इति पुण्याश्लेषः ॥ ५७ ॥

**कर्माश्लेषप्रणाशौ तदुपधिभगवन्निग्रहादेर्निवृत्तिः;**
**नष्टाश्लिष्टातिरिक्तं न च किमपि; ततः संक्रमः कस्य? मैवम्।**
**तत्तत्कर्मप्रसूतौ स्वभजनशमितौ निग्रहानुग्रहौ यौ,**
**तत्तुल्यावेव देवः प्रयति विदुषि तच्छत्रुमित्रेषु धत्ते ॥ ५८ ॥**

---

श्री—हि कर्म पुण्यम्। विहितञ्च विधिपरिशीलनया फलकामनयाऽनुष्ठान एव फलहेतुः स्यात्। फलरागस्य च ज्ञानार्धीनत्वात् अधीपूर्वकं नैव संभवेत्। पूर्वपक्षं परिहरति नोपयुक्तेति। विद्यानिष्पत्त्यर्थं तदर्थदेहधारणापेक्षितवृष्ट्यन्नादिफलार्थञ्चानुष्ठितानां पुण्यानां मध्ये कैश्चिदेवापेक्षितोपकारसिद्धौ, स्वापरिज्ञातपूर्वजन्मसुकृतवशाद्वा विद्योपकारसिद्धौ शिष्टानि पुण्यानि अदत्तफलानि सन्ति। तैरस्य विदुषो युक्तत्वात्। तत्फलानुभवप्रयुक्तविलम्बप्रसक्तौ तदश्लेष उच्यते। एवं प्रामादिकं पुण्यं न भवतीति न। अज्ञातसुकृतप्रासङ्गिकसुकृतादेस्तत्र तत्र परिगणनादिति। अत्र विरक्तपुरुषेण स्वयमकृतम् एतद्योगक्षेमोद्देशेन परकृतमपि पुण्यं विद्यानुपयुक्तं विद्याङ्गैरित्यत्र अमतिकृतमित्यत्र च जिघृक्षितम्। विद्यानुपयुक्तकाम्यस्यापि प्रसक्तिमाह स्वप्ने चेति ॥ ५७ ॥

भक्त्यारम्भे पुण्यपापाश्लेषवत् देहवियोगकाले सुकृतदुष्कृतधूननं शत्रुमित्रेषु तत्संक्रमश्च शास्त्रोक्तम्। नष्टाश्लिष्टभुक्तातिरिक्तकर्माभावात् धूननसंक्रमणे किंविषये। किञ्च द्रव्यस्य न संक्रमः। अतो वाक्यमतत्परमिति शंकते कर्मेति। ननु विदुषामविदुषां सर्वेषामपि कर्माणि कतिपयक्षणतो नष्टान्येव। तथा मनोवाक्कायकर्मणामात्मनि श्लेषः कदाऽपि न भवतीत्यश्लेष एवेति चेत्—अत्रावेदान्तिनो वैदिकाः पुण्यपापरूपापूर्वस्वीकारेण उत्पन्नापूर्वनाशो विनाशः, अपूर्वानुत्पत्तिरश्लेष इति वदन्ति। वेदान्तिनस्तु ईश्वरनिग्रहानुग्रहात्मकसंकल्पविशेषौ पापपुण्ये इति प्राहुः। तथा चोत्पन्नतादृशसंकल्पविषयत्वभंगो विनाशः। संकल्पविषयत्वात्यन्ताभावोऽश्लेष इत्युक्तं भवति। एवञ्च कर्मसंक्रमापूर्वसंक्रमायोगविदा निग्रहानुग्रहसंक्रमोऽपि दुर्वच इति वक्तुं प्रथमपादः। संक्रमः कस्येति।

अत्र कश्चिच्चोदयति कर्मेति। त्रिविधं हि कर्म वन्धकं, विद्योत्पत्तेः पूर्वमुत्तरं च। पूर्वं च द्विविधम् आरब्धकार्यमन्यच्च। तत्राद्यं चरमदेहावधिभोगनाश्यम्, 'भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते' इति सूत्रोक्तेः। द्वितीयं विद्यया नाशितम्। उत्तरं च द्वेधा—प्रामादिकमश्लिष्टम्, अन्यच्च। प्रथममश्लिष्टम्। अन्यच्च निष्कृत्या भोगेन वा निश्शेषितम्। अत्र मुक्तिविलम्बमनिच्छता निश्शेषकर्मनिरासार्थं युगपद्बहुदेहसंग्रहोपयोगः। एवं स्थिते विदुषः चरमदेहात् उत्क्रान्तिकाले, 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्', 'अस्य प्रिया ज्ञातयः सुकृतमुपयन्ति अप्रिया दुष्कृतं तत् सुकृतदुष्कृते धूनुते', 'प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम्। विसृज्य ध्यानयोगेन ब्रह्माप्येति सनातनम्॥' इत्यादेः को विषय इति। तदेतत् सङ्क्रमश्रुतितात्पर्यानभिज्ञतामूलमित्यभिप्रायेण प्रतिवक्ति मैवमिति। श्रुतितात्पर्यं विवृणोति तत्तदिति। अयं भावः—न ह्यत्र मुख्यकर्मणां सङ्क्रान्तिः, असम्भवात्। अत, 'आदाय सुकृतं सर्वं तस्य गच्छेत् अरक्षितः', 'शपतां यत् कृतं पुण्यं शप्यमानमुपैति तत्', 'शप्यमानस्य यत् पापं शपन्तमधिगच्छति॥' इत्यादिन्यायात् अक्षिरोगादिसङ्क्रमणवादवत् शत्रावपि तादृशफलोत्पादने तात्पर्यमिति॥

**इति प्रियाप्रियसङ्क्रमः॥ ५८॥**

---

श्री— धूननं चस्येत्यपि विवक्षितम्। सङ्क्रमस्य धूननानन्तरत्वात् एतन्निश्चये एतत्समानविषयकत्वनिश्चयोऽपि भवतीति तदनुक्तिः। मैवमित्यत्र युक्तिमाह तत्तदिति। तत्सङ्क्रम इत्यस्य तदाधारभिन्नस्थले तत्सजातीयकार्योत्पत्तिरित्यर्थः। शप्यमानगतपापस्य शपति सङ्क्रमः, अरक्षकशरण्यगतपुण्यस्य शरणागते सङ्क्रमः, अक्षिरोगादेर्लोके सङ्क्रम इत्यादौ तथैव वाच्यत्वात्। अतः सर्वस्य नष्टाश्लिष्टत्वेऽपि तद्विषयकनिग्रहानुग्रहसजातीयनिग्रहानुग्रहोत्पत्तिरूपसंक्रमे नास्त्यनुपपत्तिः। चतुर्थपादार्थस्तु—देयं विदुषि प्रयति—म्रियमाणे सति तच्छत्रुमित्रेषु—तस्य प्रतिकूलेषु अनुकूलेषु च तत्तुल्यौ प्रयत्पुरुषकर्मप्रसूतनिग्रहानुग्रहतुल्यौ निग्रहानुग्रहौ जनयतीति।

इदमत्र बोध्यम्—यथा अमुमुक्ष्वावस्थायां भुक्तफलानां कर्मणां प्रायश्चित्तनाशितानाञ्च पापानां मुमुक्षोर्मोक्षप्रस्थानकाले मित्रामित्रेषु न सङ्क्रमः, तथाऽमुमुक्षुदशायां भुक्तफलानां कृतप्रायश्चित्तानाञ्चासङ्क्रम एव ह्यभिमतः। तथा नष्टाश्लिष्टानामपि विद्यायाः प्रायश्चित्तत्वोक्त्या कृतप्रायश्चित्तरूपत्वात् कथमन्यत्र सङ्क्रमप्रसक्तिरिति शङ्का स्यात्। अत्रोच्यते—नाशाश्लेषवत् धूननमपि शास्त्रोक्तम्। पूर्वमेव लुप्तानां पुनर्धूननं किमिति विचारे नाशाश्लेषधृतत्वानां भगवत्सङ्कल्पविशेषरूपतया यदि अयमुपक्रान्तमुपायं यथावत् निर्वर्तयेत् आमरणमनुवर्तयेत्, तदा कर्मफलं न दास्यामीति यथालिङ्गितसङ्कल्पौ अश्लेषविनाशौ उपायपूर्णेनन्तरम्, पूरितत्वात् इतः फलं नैव दास्यामीति सङ्कल्पो धूननपदर्शितः। अतो धूननमपि तद्विषयकमेव। तथा श्रुतौ, 'तत् सुकृतदुष्कृते धूनुते, तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति, अप्रिया दुष्कृतम्' इति हानोपायनयोः समानविषयकत्वस्य स्पष्टत्वात् पूर्वोक्तभुक्तकृतप्रायश्चित्तकर्मवैलक्षण्येन एषां परं सङ्क्रमः शास्त्रबलादेषितव्यः। 'शप्यमानस्य यत् पापं शपन्तमधिगच्छति' इत्यादौ तथा स्वीकृतत्वात्। परन्तु अदृष्टस्य सङ्क्रमणं कथमित्येव प्रष्टव्यम्। तत्र नायं सूर्यसङ्क्रमादितुल्यः किं तु विविधव्याधिसङ्क्रमतुल्य इति समाधिः। अत्रायं विशेषः—शप्यमानगतपापस्याक्षिरोगादेश्चान्यत्र सङ्क्रमेऽपि अत्राभावो न नियतः। अरक्षकपुण्यं तु अत्र न तिष्ठति। तथा विद्यानिष्ठं विसृज्यैव सर्वं गच्छति। हानात्परमेवोपायनादिति॥ ५८॥

अन्यश्चेदन्यकर्मप्रजनितफलभुक्, शास्त्रवैयाकुली स्यात्
ब्रह्मज्ञैरुज्झितानां क्वचिदपि न ततः कर्मणां संक्रमः स्यात् ।
उद्वेलस्स्याच्च धातेत्यवद् अविषमतायन्वितेनैव धात्रा
विद्यानिष्ठोपकाराद्युचितफलमिदं दीयते वर्गयुग्मे ॥ ५९ ॥

पुनः अनिर्धारितश्रुतितात्पर्यश्चोदयति अन्य इति ॥ अन्यस्यान्यकृतकर्मफलभोगे, "शास्त्रफलं प्रयोक्तरि" इति व्यवस्थाभङ्गात् शास्त्रस्य व्याकुलता स्यात् । ऋत्विक्कृतं हितैषिकृतं चान्यार्थमेव करणात् परत्र फलतीति युक्तम् । अभिचारकर्म च भ्रातृव्यस्य पूर्वदुष्कृतोत्थापितत्वात् तत्पीडाहेतुः । अभिचरिता च स्वकृतफलं भ्रातृव्यमरणं स्वयं भुङ्क्ते । इह तु नैवं संभवः । अतः परचितकर्मणामश्लेषविनाशसंभवेऽपि नान्यत्र स्वरूपत इव फलतोऽपि संक्रमः संभवतीति ॥ ईश्वरस्य च स्वमर्यादातिक्रमः स्यादित्याह उद्वेल इति । उक्तं चोद्यद्वयं स्वकर्मफलभोगव्यवस्थयैव परिहृतमित्यभिप्रायेण प्रत्याह इत्यवदिति । हार्दं विवृणोति अविषमतेति । एतेन ब्रह्मविदुपकारापकारयोः अपरिमितफलत्वं च सिद्धं भवति ॥

इति प्रियाप्रिययोः विद्वत्कर्मफलसमानसृष्टेः स्वकर्मफलत्वम् ॥ ५९ ॥

---

टी— ननु संक्रमस्वरूपं तद्विषयश्च ज्ञातम् । व्याधिसंक्रमः संसर्गवशात् भवतीति लोकसिद्धम्; रुमानिक्षिप्तकाष्ठस्य लवणभाववत् । भगवन्निग्रहानुग्रहौ तु कर्तुरेव फलभाक्त्वात् कर्मकर्तृविषय एव जननार्हौ; अन्यथा शास्त्रविरोधात् वैषम्यादिदोषाच्च । अतः ततत्कर्मानर्हेषु तत्तन्निग्रहानुग्रहतुल्यौ निग्रहानुग्रहौ स कथं कुर्यादिति शंकते अन्य इति । वैयाकुली—व्याकुलत्वं—प्रतिपादितार्थपरत्वभंगः स्यात् । ततः=तस्मात् कारणात् ब्रह्मज्ञैः—पूर्णोपायैः मरणकाले उज्झितानां—त्यक्तानां कर्मणां पुण्यपापानां क्वचिदपि शत्रौ मित्रे वा तत्तदकर्तरि संक्रमः—तत्तन्निग्रहादितुल्यनिग्रहादिविषयत्वं न स्यात् । शास्त्रवैयाकुलीवत् शासितुरपि दोषोऽस्तीत्याह उद्वेल इति । वेला=मर्यादा; तामतिक्रान्तवान् भवेत् धाता स्रष्टा—भगवान् । इति शंकितं निरस्यति इत्यवदिति । अविषमतया—अवैषम्येण आदिपदग्राह्येण अनैर्घृण्येन चान्वित एव धाता वर्गयुग्मे—शत्रुमित्रसंघयुगे तत्तत्कर्मफलमेव संकल्पयति । एवं संकल्पनं तस्य वैषम्यनैर्घृण्यापादकं न भवतीति यावत् । तयोः क्रियमाणौ निग्रहानुग्रहौ न विद्वत्कृतकर्मफलोपभोगाय, किंतु शत्रुमित्रकृतानां तद्विद्विद्विषयकद्वेषस्नेहतन्मूलककर्मविशेषफलोपभोगाय । अत कर्तुरेव फलम् । तत्फलं किंरूपं कियदिति जिज्ञासमानानां विद्वद्विसृष्टपुण्यापुण्यपुञ्जतुल्यमिति ज्ञापनाय शास्त्रे तत्फलस्यैतत्फलत्वेनोक्तिरिति ।

ननु कर्तुरेव फलमिति न नियमः । ऋत्विगादौ तदभावादिति अवान्तरशंकां परिहरति ऋत्विगिति । भ्रातृव्यस्य—शत्रोः । तस्याकृतपापस्य दुःखं कथमित्यत्राह पूर्वदुष्कृतेति । अभिचरितृविषये कदापि कृतं द्वेषादेर नत्र हेतुः । अभिचरिता—अभिचारकर्ता । हार्दं—विद्यानिष्ठोपकारादिफलमेव तदिति स्वहृद्गतम् । विद्यानिष्ठविषये तत्तत्कृतो य उपकार, अपकारश्च, तत्तद्गौरवलाघवोचितमपि स्यात् तत् फलमिति न शास्त्रस्य शासितुर्वा हानिरिति ॥ ५९ ॥

"यदा पश्यः तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इत्यत्र विद्वानित्येतदर्थः पुण्यपापे विधूयेत्येतदर्थश्चोपपादितः । अथ निरञ्जन इत्येतदर्थोपपादनम् । निरञ्जनत्वं=प्रकृतिसंबन्धराहित्यम् । तच्च अर्चिरादिमार्गेण प्रकृत्यतिक्रान्तत्वम् । तत्रार्चिरादिमार्गे आतिवाहि-

अर्चिर्घस्रोऽथ पक्षस्सित उदगयनं वत्सरो मातरिश्वा
मार्तण्डस्तारकेशस्तडिदपि वरुणामर्त्यनाथप्रजेशैः ।
आदिष्टा(ष्टो) विश्वनेता स्वयमतिवहने देवयानाध्वगानां
यः प्रोक्तोऽमानवाख्यः स तटिदधिपतिर्विश्रुतो मानसोऽपि ॥ ६० ॥

अथ विधूतपुण्यपापस्य विदुषः स्थूलशरीरान्मूर्धन्यनाड्या निष्क्रान्तस्यार्चिरादिपादोक्तमातिवाहिकक्रममाह — अर्चिरिति । "तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति" इत्यव्यवहितब्रह्मगमयितृत्वेन निर्दिष्टस्य प्राधान्यसूचनार्थं वरुणादिषु तृतीया । अमानवः किमिह नोक्त इत्यत्राह य इति । वैद्युतपुरुष इह तटित्पतित्वात् तटिच्छब्दोक्त इति भावः । तथाऽपि, "वैद्युतात्पुरुषो मानस एत्य ब्रह्मलोकान् गमयति" इत्युक्तस्येह नोपादानमित्यत्राह विश्रुत इति । शेषं भाष्यादौ । अत्रैवं तत्त्वसारे संगृहीतम्–"अर्चिरहस्सितपक्षान् उदगयनाब्दमरुदर्केन्दून् । अपि वैद्युतवरुणेन्द्रप्रजापतीन् आतिवाहिकान् आहुः ॥" इति ।

---

श्री— केयत्तां वैद्युतमानसामानवैक्यनिष्कर्षेण दर्शयति अर्चिरिति । देवयानमार्गप्रस्तावे सर्वत्र प्रथमस्याऽऽतिवाहिकस्याग्नेः अर्चिःपदेनैव निर्देशात् तत्प्रत्यभिज्ञापनायात्रापि सामान्यपदेन तेनैवाग्नेः निर्देशः । घस्रः= अहः । सितः= शुक्लः पक्षः । उदगयनम्= उत्तरायणम् । मातरिश्वा= वायुः । तटित्= विद्युत् वैद्युतः । चन्द्रनेयस्थानोपरि विद्युन्नेयस्थानं किञ्चित् । तत्रैव तदुपर्यपि नेता स वैद्युत इति ज्ञापनार्थम् अपिशब्दः। तथाच तटित् पृथगपि, अथ वरुणादिभिः सहापीत्यर्थः । अमर्त्यनाथः– इन्द्रः । प्रजापतिः ब्रह्मा । वरुणादीनां स्वस्वस्थलनेतृत्वं प्रधानभूतवैद्युतापरित्यागेन । तदुपरि आभगवत्पदारविन्दं स एक एव नेता । आदिष्टः इति पाठो न ग्राह्यः। बहूनां गणनात् । अन्तिमस्य तटित्पदस्य स्त्रीलिंगत्वाच्च । आदिष्टा इति पाठेऽपि बहुवचनान्ततयैव युक्तम् । विश्वनेत्रा भगवता सोपचारसबहुमाननयनार्थं देवयानाख्यमार्गे वैकुण्ठगमनाय प्रासरतां विदुषां स्वयं-स्वस्य नेतृत्वे सत्येव अतिवहने नयनविषये अर्चिरादयो द्वादशदेवताः आदिष्टाः—आज्ञापितास्सन्ति । तत्र तटिति विशेषमाह य इति । छान्दोग्ये (४. १४. ३), 'चन्द्रमसो विद्युतम् । तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' इति अमानवो य उक्तः स न तटिदतिरिक्तः । किन्तु अहरादिपदवत् विद्युत्पदस्यापि विद्युद्देवतापरत्वात् तटिद्रूपाचेतनद्रव्याधिपतेरेव विद्युत्पदोक्तत्वात् पुरुषोऽमानवः सः—विद्युदभिन्नः एनान् ब्रह्म गमयतीत्यर्थस्यैव प्रकृतवाक्यगम्यत्वात् विद्युदभिन्न एव । बृहदारण्यके (८. २.), 'तान् वैद्युतात् पुरुषो मानस एत्य ब्रह्मलोकान् गमयति' इति वाक्ये मानस इत्यपि स एवामानवो विश्रुतः । विद्युत्स्थानमारभ्य परब्रह्मस्थानपर्यन्तप्रापकत्वमुभयोरेकरूपमाम्नातम् । एत्येति पदेन तस्य ब्रह्मलोकादागन्तृत्वं ज्ञायते । अत एव पुरुषपदमपि भगवदन्तरङ्गदासनित्यसूरिपुरुषत्वं ज्ञापयति । अत एव मानववैलक्षण्यादमानवत्वम्; अग्न्यादिवैलक्षण्येनाप्राकृतशरीरवत्तया मनसा सृष्टत्वात् मानसत्वमपि । विद्युदेवायं वैद्युतः । एवं ब्रह्मपर्यन्तनेतृत्वेनैक्ये प्रमिते यत् तत्र वैद्युतात् पुरुष इति वैद्युतपदस्य पञ्चम्यन्तत्वम्, तत्रानेकग्रन्थोदाहरणमूलकः सूत्रभाष्यश्रीदेशिकादिहृदयविमर्शोऽस्मदीयबृहदारण्यकभाष्यपरिष्कारादौ विशदं द्रष्टव्यः ।

तत्पुरुष इत्यत्र तदिति पृथक्पदमव्ययम् । इदं पदेपदे श्रुतौ प्रयुज्यते । श्रीविष्णुचित्तीयादिग्रन्थस्य तत्स्मारानुरोधेन निर्वाह्यत्वमभिप्रेत्य निष्कर्षकं श्लोकमाह अत्रैवमित्यादिना । श्रीविष्णुचित्तीये तु श्लोके कथयन्तीति पदेन तत्र स्वस्यानैर्भर्यमाविष्कृतम् । श्लोकान्तरमादृत्य तस्य विद्युदमा-

अन्ये त्वाहु —"अर्चिर्वासरशुक्लपक्षषडुदङ्मासांश्च सवत्सर वायु भास्करचन्द्रविद्युदुदपान् सेन्द्र प्रजाना पतिम् । गत्वाऽथो विरजा विमुच्य च तनु सूक्ष्मा ततोऽमानवस्पर्शात् क्षालितवासना सुकृतिनो गच्छन्ति विष्णो पदम् ॥" इति ॥ अत्र वासनाशब्देन फलप्रदानरहित-नष्टाविनष्टकर्मराशेरनुवृत्तौ धीसङ्कोचक शक्त्यश, तन्नियतसूक्ष्मप्रकृत्यशो वा विवक्षित । अपरे तु ब्रुवते—"भूलोकेशाग्नयोऽष्टौ प्रथममहरत पूर्वपक्षस्सितात्मा मासाष्षड्वत्सरोऽथो दशतनुपवनस्सैक आदित्यवर्ग । चन्द्रो विद्युज्जलेश समरुदधिपति सप्रजानामधीश ते मार्गस्यार्चिरादेरतिवहनविधौ विश्वनेत्रा नियुक्ता ॥" इति ॥ अत्र सैक इति पवन विशेषणम्, "अथ वायोरेकादश पुरुषस्य" इत्यादिश्रुते ॥ इत्यातिवाहिकक्रमवल्लरि ॥ ६० ॥

बुद्धेर्योऽसौ विकास: कवलितनिखिलोपस्करब्रह्मतत्त्व:
स प्राक् चेत्, नित्यमुक्ति: ; न यदि, कथमसौ नश्वरत्व न गच्छेत् ।
मैव प्रध्वसवत् ते स खलु मम तथा शौनकाद्युक्तनीत्या,
शान्ताशेषापराधे न च भवति पुनस्तत्र सङ्कोचहेतु: ॥ ६१ ॥

---

श्री— नवभ्यक्तिभेदे तात्पर्य नास्तीत्याशयेनोदाहरति अन्ये त्विति। उदप =उदकरक्षक वरुण । क्षालितवासन इत्यन्त विरजानदीलघनप्राग्वृत्तम् । अत एव प्रकृत्यश इत्युक्तम् । अत एव विष्णुपद-प्राप्ति पश्चादुच्यते। इदमेवाधिकरणसारावलौ (३ ३ ३४), 'स्यात् धीसकोचमात्रस्थितिरिह अनुगत सूक्ष्मसस्कारयोग ' इत्युक्तमस्तु। अथवा परमपदप्राप्त्यनन्तरमपि बद्धस्य धीविकास पूर्णो भवत्विति भगवतोऽनादि सकल्प यद्देशप्राप्त्यपेक्ष तद्देशप्राप्तिपर्यन्तानुवृत्त सस्कारविशेषस्तत्र विवक्षित इति। अपराविति। गौरवातिशयात् तत्तत्प्रभेदा सवऽप्यतिवहनायाऽऽयान्तीति भाव । प्रथममहरत इति।प्रथममन्वय, अत अह, रत पूर्वपक्षनामा शुक्लपक्ष इति अतद्शब्दस्योभयत्रान्वय ॥ ६० ॥

अथ मुक्तिरूपफलस्वरूपशोधनमारभते । तत्रानुभव, अनियतदेह, शक्तिविशेष, कर्कर्य, अनुभवस्याऽऽनन्दरूपत्वनियम इत्यशा क्रमेण स्थाप्यन्ते । प्रथममनुभवविषये आक्षेप क्षिपति कवलित-निखिलोपस्करब्रह्मतत्त्व =उभयविभूतिविशिष्टब्रह्मतत्त्वकवलनदृत्-तावद्विषयक इति यावत्। स प्राक् चेत्= अर्चिरादिगत्या ब्रह्मप्राप्ते प्रागपि चेत्, नित्यमुक्ति स्यात्—ससारानुभव स्थित कस्यापि न स्यात् । न यदि—प्राङ् नेति चेत्, सादित्वात् उत्पन्नत्वात् नाशस्याऽऽवश्यकत्वया असौ–विकास नश्वरत्व प्राप्नुयात् । समाधत्ते उत्तरार्धेन। सादिरपि प्रध्वसो न नश्यतीति ते तार्किकस्येष्टम् । अतस्त्वदभिमतघटादिध्वसवत् मदभिमतो धीविकासोऽपि तथा =अनश्वर । अभावस्याभावातिरिक्तध्वसास्वीकारिमतव्यावृत्तये ते इति पदम्। तव युक्तिप्रमाणवत् मम श्रुतिप्रमाणमस्तीत्याह शौनकेति। नीत्येत्यनेन तत्र, 'यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणे ' इति दृष्टान्तकथनेन तद्दिशानुमानदूषणमभिप्रेतमिति सूच्यते। धीविकास ध्वसवान् जातत्वात् घटादिवदिति त्वदनुमान सोपाधिकम्। उपाधिश्च धर्मिस्वरूपातिरिक्तकारणसापेक्षत्वम्। ननु मणिप्रभा पुनरपि मलवशात् प्रतिरुध्यते इति चेत्-अस्तु कि तेन। न हि सर्वत्र प्रतिरोधकेनाप्यवश्य भाव्यम्। तदाह शान्तेत्या-दिना। तत्र-मुक्ते। सकोचहेतु =धीसकोचे कारणम्। यद्यपि धीविकासस्य नाशमप्यगीकृत्य प्रवृत्ते सततपरिणामवत् धारावाहिज्ञाननिरन्तरानुवृत्तिवत् प्रतिक्षण विकासो नश्यति, तत्सम उत्पद्यते चेति ज्ञाननित्यत्वस्य प्रवाहनित्यत्वकथनेन तार्किकस्त्यक्त—अथापि कुतर्कण श्रुतिस्वर्धन मा भूदिति यथार्थमुक्तम्। परमपदे उत्पन्नस्याप्यनेकस्य गोपुरादेरनाशस्येष्टत्वात्।

एव देवयानेन गतस्य य सर्वविशिष्टब्रह्मानुभवलक्षणो धीविकास, तत्र विकल्पत पराभीष्टमाक्षेप मनुवक्ति नुद्वेरिति। स प्राक् चेत्—स धीविकास प्रागप्यस्ति चेत, अनादिश्चेदित्यर्थ। तत्र बाधकमाह नित्यमुक्तिरिति। बद्ध एव न स्यादित्यर्थ। आगन्तुकत्वकोटिमनुभाषते न यदीति। तत्रापि जातानां विनाशध्रौव्यात् [तर्को ?] बाधक इत्याह कथमिति। स्वपरसिद्धान्तविवेकविज्ञोऽपीत्यभिप्रायेण प्रत्याह मैवमिति। तत् विवृणोति प्रध्वमवदिति। पूर्वावधिमानपि प्रध्वस उत्तरावधिरहित इति मन्यसे। एव भावोऽपि कश्चित् तथा स्यात्॥ अनुपपत्त्या तत्र तथात्वमिति चेत्, अत्राप्यस्ति श्रुतिभङ्गानुपपत्ति। भावान्तरमेव च वयमभाव ब्रूम। निश्शेषविरोधिनिवृत्तौ हि ज्ञानस्य परसङ्कल्पसिद्धसर्वगोचरविकासवत्तया सदाऽभिव्यक्ति सर्वत इत्याह शौनकादीति। मुक्तविषयश्रुतिषु च, "परात्पर पुरुषमीक्षते", "सर्वं हि पश्य पश्यति" इत्यादिनिर्देशस्य सङ्कोचकादर्शनात् ईक्षणस्य सदानुवृत्तिर्हि स्वत प्राप्तेति भाव। ननु यदि मुक्तोऽपि चेतयते, पुनरपि सङ्कोचकमारभेतेत्यत्राह शान्तेति। सङ्कोचहेतुकरणमपि हि कर्ममूलम्, निश्शेषितकर्मण कथ तत् स्यादिति॥ इति मुक्तधीविकासस्य नित्यत्वम्॥ ६१॥

मुक्तौ देहाद्यभावे मुकुलितविषयो जक्षदादिप्रवादः
तत्सत्त्वे चाशरीरश्रुतिविहतिः; अतः का चिकित्सेति चेन्न।
इच्छातः स्यादवस्थाद्वयमुभयविधश्रुत्यबाधात् विमुक्तौ
कर्माद्यैर्नैर्वियोगः परमिह कथितस्तस्य देहोपमस्य॥ ६२॥

---

वी— बाधक इति पुल्लिङ्गप्रथमान्तपाठस्यैव दर्शनात् तर्क इति विशेष्य अध्याहार्यम्। भावान्तरमेव चेति। अतो न वैलक्षण्यम्। अत्र च भाव —धीविकास ध्वसप्रतियोगी सादिभावत्वा दिति प्रयोगे ध्वसपदेन उत्तरावस्थाग्रहणे प्रकृतिसमपरिमाणसन्तानस्थले इव सदृशावस्थाधारयाऽपि निर्वाहात् त्वदिष्टसङ्कोचासिद्धि, अभावरूपध्वसग्रहणे चास्मन्मते तदभावात् साध्याप्रसिद्धि। हेतौ चात्र विशेषणवैयर्थ्यात् भावत्वनिवेशो न सम्भवति। अनिवेशे च त्वन्मते ध्वसे व्यभिचार इति। सोपाधिकत्व प्रागेवोक्तम्। अनुमानमप्रयुज्य प्रसङ्गरूपतर्कग्रहणेऽपि उपाधिना व्याप्तिभङ्गं भवत्येवेति॥ ६१॥

देहादीति आदिना चिकीर्षाप्रयत्नादिग्रहणम्। जक्षदादिप्रवाद —'जक्षत् क्रीडन् रममाण' इत्येवरूप अदृष्टाद्यर्थविषयकस्वप्नश्रुतिसङ्घ। जक्षण—भक्षण हसनमपि। मुकुलितविषय — प्रतिपादितार्थहीन स्यात् मुक्तिदशाया जीवस्य देहादेरभावे। तत्सत्त्वे—देहादिस्वीकारे, 'अशरीर वाव सन्त न प्रियाप्रिये स्पृशत', 'अस्माच्छरीरात् समुत्थाय स्वेन रूपेणाभिनिष्पद्यते' इत्यादि-वाक्यविरोध स्यात्। कोटिद्वयेऽपि दोषसत्त्वात् कोट्यन्तरासम्भवाच्च विचिकित्साव्याधे चिकित्सा— परिहारो नास्तीत्यर्थ। इच्छात इति। देहो भवत्विति कदाचित्, मा भवत्विति कदाचिच्चेच्छात इत्यर्थ। इच्छातदभावाभ्यामिति नोक्तम्। अत्र भाव —अभाव यदीच्छेत्, देह विनाऽपि स्यात्। पुनर्य दीच्छेत्, लभेत। प्रथमतस्तु नियमेन देहमप्राकृत गृहीत्वा पर पुरुषमुपसर्पति। अत एव सूत्रकार 'तन्वभावे सन्ध्यवत्' इत्यादिकमसूत्रयत्। तदर्थं एवम्-ननु स्वेच्छयैव देह इति कथम्, ब्रह्मालया-द्यर्हदिव्यदेहप्राप्तेर्नियत वर्ततेरित्यत्राह तन्विति। पूर्वोक्तरीत्या यदाऽस्य स्वेच्छाकृततदेहाभावेऽपि मुक्तौ देहवत्ता, सा सन्ध्यवत्—स्वाप्नशरीरवत्। तस्य स्वबुद्धिनिरपेक्षत्वात्। स्वेच्छाकृतदेहभावे तु

मुक्तस्य ज्ञानं चिन्तितम् । अथ तस्य चिकीर्षाप्रयत्नशक्तिविषया चिन्ता । तत्र मुक्तो देहप्राण-तद्व्यापारैर्मुक्तो न वेति विकल्पं भावयन् क्रमादाक्षिपति मुक्ताविति । आद्ये, मुक्तमधिकृत्य प्रवृत्तः "जक्षत् क्रीडन्" इत्यादिप्रवादो निर्विषयः स्यात् । द्वितीये, "भूत्वा शरीरम्", "अशरीरं वाव सन्तम्" इत्यादिश्रुतिविरोधः स्यादिति । अत्र "द्वादशाहवदुभयविधं बादरायणोऽतः" इति सूत्रोक्तप्रकारेण स्वेच्छाकर्म(?)कृतदेहादियोगायोगाभ्यामवस्थाद्वयवानिति मन्वानः प्रत्याह नेति । प्रथमचोद्यपरिहार[कः?]-तयाऽभिप्रेतं प्रथयति इच्छात इति । श्रुतिविरोधं तु विषयव्यवस्थातः शमयति कर्मापत्तेरिति । यत्र विषयभेदसंभवः, तत्र क्वचित् बाधेऽतिप्रसङ्ग इति भावः। देवोपमस्य—ईश्वरेण साम्यं प्राप्तस्येत्यर्थः। एतेन परविषयशरीरविधिनिषेधश्रुत्योरिवात्रापि व्यवस्थोपपत्तिर्व्यज्यते ॥ इति मुक्तस्यैच्छिकशरीरयोगः॥६२॥

**स्यान्मुक्तो विश्वदेही, यदि भवति जगद्व्यापृतौ तस्य शक्तिः**
**स्वातन्त्र्यं क्वाप्यशक्तौ विगलति, स च नः स स्वराडित्यधीतः ।**

---

ली— जाग्रद्वत् । मुक्तस्येवाऽऽनन्दहेतवो ये बद्धस्य देहाः जाग्रदवस्थादृश्यमानाः, ते हि सर्वे, मयेदृशं शरीरं लब्धव्यमिति पुरुषेच्छामूलसत्कर्माधीना एव। 'स्वप्ने एवं शरीरं भवतु' इति कामनया न कश्चित् सत्कर्म करोति। तस्मात् स्वप्नवत् जाग्रद्वदिति तद्विभागः प्रदर्शितः। एवमेव भाष्याद्याशय इति भाति। ननु, 'अशरीरं वाव सन्तम्' इति श्रुतौ सशरीरत्वे दुःखमुक्तमित्यत्राह कर्मेति। इह = विमुक्तौ प्रियाप्रियहेतुभूतपुण्यपापरूपकर्माधीनशरीरराहित्यं कथितम् । अप्राकृतदेहकालेऽपि तादृशाशरीरत्वसत्त्वात् प्रियाप्रियराहित्यमुपपन्नम्। देवोपमस्येत्यनेन भगवतः परमपदे सदेहत्वात् तत्र 'अशरीरं वाव' इत्युक्तनियमभंगस्त्वया एवमेव हि परिहार्य इत्युच्यते ॥ स्वेच्छाकर्मकृतेति। नन्वकर्मकृतदेहोपपादनस्थले कर्मकृतेत्यनन्वितम् । स्वेच्छाकृतदेहादियोगकर्मकृतदेहायोगेत्यर्थवर्णने इदमवस्थाद्वयं न भवति। अप्राकृतदेहसत्त्व एव प्राकृतदेहायोगसत्त्वात्। अतः कर्मेति न स्यात् । किञ्च संकल्पमात्रेण कार्यकरणसमर्थः कर्म किमिति करिष्यति। तदपि इच्छाकृतमेवेति तदुक्तिर्व्यर्था चेति चेत्— अयं समाधिः स्यात्—परमपदे सर्वं संकल्पमात्रायत्तम्। यदा तु, "कामरूप्यनुसञ्चरन्" इति प्राकृतलोके विभवभूतभगवत्परिचरणाय स्वयमप्यवतरन्ति, तदा एतन्मण्डलप्रवेशमातापितृदेहादिप्रवेशादिकर्माण्यपेक्षितमिति ईदृशदेहस्यापि 'स यदि पितृलोककामः' इत्यादिश्रुतिवशादभ्युपगन्तव्यत्वं ज्ञापयितुं कर्मपदम्। पुण्यपापविलक्षणमिदं कर्म। अनेन च 'चिकीर्षाप्रयत्नशक्तिविषया चिन्ता' इति प्रागुक्तमुपपादितं भवति ॥ ६२ ॥

मुक्तस्य ज्ञानवैभवे कथिते इच्छाप्रयत्नशक्त्यादिचिन्तायां सदेहत्वनिर्देहत्वश्रुतिविरोधः प्रसक्तो वारितः, अथ स्वातन्त्र्यश्रुतिविरोधं परिहरति स्यादिति। जगद्विषयकव्यापारे सृष्टिस्थितिसंहारान्तःप्रवेशनियमनरूपे तस्य = मुक्तस्य शक्तिर्यदि भवति, तदा निमित्तोपादानभूतोऽयं विश्वेन देही स्यात्–सर्वशरीरकः स्यात् । तत् अन्तर्यामिब्राह्मणादिविरुद्धमिति प्रथमपादार्थः। एवञ्च यद्येत्ये तत् भवतीत्यनेनान्वेति । स्यादिति प्रथमक्रियायां तदन्वयेन, यदि मुक्तो विश्वदेही स्यात्, जगद्व्यापारेऽपि तस्य शक्तिर्भवेदित्यर्थस्तु न युक्तः; भवेदिति पदाभावात्। जगद्व्यापारे शक्तिरेव कैश्चिदङ्गीकृता, न विश्वदेहित्वम्। अतो यदि विश्वदेही स्यादिति विश्वदेहित्वस्य तदिष्टत्वं सर्वशक्तित्वस्य तदनिष्टत्वञ्च दुर्वचम्। द्वितीयपादे अशक्तौ इति सर्वशक्त्यभावे दोषोद्घाटनाच्च पूर्वपादे शक्तिमत्त्वपक्षे दोषोद्घाटनमित्येव वक्तव्यम्। अतोऽपि यदीत्येतत् भवतीत्यनेनैवान्वेति। तदिदं वृत्तौ

धत्तेऽनुच्छेद्यसारा तदियमुभयतस्पाशतां तर्करज्जुः
मैवं देवस्तदिच्छां क्वचिदपि न विहन्त्येवमस्तु स्वराट् सः ॥ ६३ ॥

इच्छागृहीतदेहत्वं देवोपमत्वं च मुक्तस्य प्रसक्तम्, तस्य च शारीरकान्ते जगद्व्यापारवर्जमैश्वर्यं साधितम्। स किं शक्तोऽप्यनिच्छया जगत्सृष्ट्यादौ न व्याप्रियते, उताशक्त एवेति विकल्पे पूर्वं यदीत्यादिनाऽनूद्य तत्र बाधकमाह स्यान्मुक्त इति। विश्वदेही स्यात्। अन्यथा कथं 'बहु स्याम्' इति सङ्कल्पार्हत्वम्? विश्वदेहित्वं चानेकेषां निष्प्रमाणकं प्रमाणतर्कपराहतं च। अत एव शक्तोऽपि प्राप्त्यभावान्न व्याप्रियत इति पक्षोऽपि प्रत्यादिष्टः। उत्तरस्योत्तरमाह स्वातन्त्र्यमिति। क्वचिदशक्तौ, "पारतन्त्र्यं परे पुंसि प्राप्य निर्गतबन्धनः। स्वातन्त्र्यमतुलं प्राप्य तेनैव सह मोदते॥" इत्यादिप्रसिद्धं निस्सीमस्वातन्त्र्यं विगलेत्। श्रुतिविरोधमप्याह स चेति। "स स्वराड्भवति" इति ह्याम्नायते। द्वयोरपि दुरतिक्रमतया संशयडोलाकेलिसान्तत्यमित्यभिप्रायेणाह धत्त इति। उत्तरकोटिपरिग्रहाभिप्रायेण प्रत्याह मैवमिति। श्रुतिविरोधमुपशमयति देव इति। अकर्मवश्यस्याप्रतिहतेच्छत्वमिह स्वातन्त्र्यम्। ईश्वरो हि बद्धानां यथाकर्म क्वचित्कांचिदिच्छां विहन्ति, मुक्तस्य तु न क्वचिदपि परिमिते पराधीनस्वदेह

---

ष्टी– स्वयमेव दर्शयिष्यति। क्वापि—किञ्चिद्विषये शक्त्यभावस्वीकारे स्वातन्त्र्यं विगलेत्—न स्यात्। मा भूदिति चेन्न; स च—मुक्तश्च नः—जीवेश्वरभेदवादिनामपि संमन्तव्यतया 'स स्वराड् भवति' इत्यधीतः। चकारो देवसमुच्चये। अधीतश्चेत्यन्वये विश्वदेहित्वाभावे श्रुतिवत् स्वतन्त्रत्वेऽपि श्रुतिरस्तीत्युभयविरोधः प्रदर्शितो भवति। विरोधस्यैव दुष्परिहरत्वमाह। तत्–तस्मात् पक्षद्वयेऽपि दोषात् इयं तर्करज्जुः सर्वशक्तितदभावविमर्शरूपरज्जुः अनुच्छेद्यसारा विश्वदेहित्वापादन-स्वातन्त्र्याभावापादनरूपसारद्वयस्याप्यपरिहार्यत्वात् उभयतःस्पाशा-स्पश बन्धने। स्पाशो बन्धः। पार्श्वद्वयेऽपि कृतग्रन्थिर्भवति। एकत्र एव ग्रन्थिश्चेत्, रज्जोः शैथिल्यं स्यात्। तदिह नेति। पादत्रयशंकितं परिहरति मैवमिति। विश्वदेहित्वं सर्वथैवानिष्टम्। अतः सर्वशक्तित्वं न भवत्येव। एवं तर्हि स्वराट्-श्रुतिविरोध एव शंक्यः। तत्रार्थान्तरसंभवान्न विरोधः। स्वातन्त्र्यं हि अप्रतिहतस्वेच्छाकत्वम्। मुक्तस्येच्छा जाता सर्वाऽपि पूर्येत एव। न सा कदापि भगवताऽपि विहन्यत इति। सर्वशक्त्यभावस्य अस्य स्वातन्त्र्यस्य च मिथो विरोधाभावात् अशक्तौ स्वातन्त्र्यहानिरिति आपादनं शिथिलमिति नोभयतस्स्पाशत्वम्। किञ्च स्वराट् इत्यत्र को विग्रहः? स्वं राट् यस्य, सः स्वराट् इति चेत्–बहुव्रीह्यपेक्षया तत्पुरुषे लाघवात् स्वस्य राट् स्वराट् इत्येव कस्मान्न भवति। एवञ्च स्वं प्रति स्वस्य पूर्वमराट्त्वं संप्रति राट्त्वम् अन्यनियन्तृत्वाभावश्च सिध्यतीति न सर्वशक्तित्वम्। पूर्वं तु स्वस्य कर्मैव राट्; न स्वयम्। अनन्याधिपतिरित्यपि अन्यं प्रति अयमधिपतिर्न भवतीत्यर्थकं तत्पुरुषसाधकमेवेत्यलम्।

पूर्वश्लोकेन संगतिमाह इच्छेति। धीविकासोक्त्यनन्तरम् चिकीर्षाप्रयत्नशक्त्यादिविचारे प्रवृत्तानामस्माकमैच्छिकदेहत्वदेवोपमत्वे वक्तव्यतया प्रसक्ते अभूताम्। एवं तर्हि देवसाम्यात् अशक्तिरस्वातन्त्र्यं न युक्तमिति शंका ततः प्रसक्तेति एतच्छ्लोकप्रवृत्तिरिति। अनूद्येति। श्लोके पश्चादुक्तस्यापि अन्वये पूर्वभावात् व्युत्पत्तिः। मुक्तः स्यादित्यन्वयभ्रमं वारयति विश्वदेही स्यादिति। प्राप्त्यभावात् कर्तुमवसरस्यालाभात्। एतद्विचारश्च, 'त्वदाश्रितानाम्' इति स्तोत्ररत्नश्लोकव्याख्यानादावपि द्रष्टव्यः। अकर्मेति। अप्रतिहतेच्छत्वं स्वातन्त्र्यम्। अकर्मवश्यत्वं तदुपपादकतयोक्तम्। 'क्वचिदपि' इति मूलात् जगद्व्यापारादावपीति न मन्तव्यमित्याशयेन विवृणोति परिमितपराधीनस्वदेह-

सृष्ट्यादावित्यर्थः ॥ इति पराधीनस्यापि मुक्तस्येच्छाविहतिराहित्यम् ॥ ६३ ॥

आविर्भूतस्वरूपा निरवधिकसुखब्रह्मभुक्तिस्तु मुक्तिः,
सेवात्वात् दुःखकृत् सा भवति यदि, न तत् धर्मिमानेन बाधात् ।
पाप्मा चास्मिन्नुपाधिः, स च न खलु तदा पुण्यपापव्यपायात्
आत्मानो विष्णुशेषा इति च सुखमयी सा स्वरूपानुरूप्यात् ॥ ६४ ॥

अत्र कश्चित् सिद्धान्त्यभिमतायां मुक्तौ दोषं विवक्षुस्तामनुभाषते आविर्भूतेति ॥ परशेषतैक-

---

*श्री—* सृष्ट्यादाविति। *तर्हि अन्यत्र मुक्तेच्छाप्रतिहतिरेवोक्ता भवतीति चेन्न-स्वाश्रये, ईश्वर-*प्रतिहन्यमानतया स्वद्वये च व्यापारे सर्वज्ञो विवेकी कथमिच्छां वहेत्। ईश्वरो वा कथं कर्मपरवशे तस्मिन् प्रतिघातार्हामिच्छामुत्पादयेदिति ॥ ६३ ॥

जगद्व्यापारसूत्रं विचारितम्। भोगसाम्यसूत्रार्थो विचार्यते। पारतन्त्र्याविरुद्धं मुक्तस्वातन्त्र्य-मित्युक्तम्। एवं पारतन्त्र्ये सेवकत्वे दुःखस्यावर्जनीयत्वात् भोगे परमसाम्यं न भवति। जीवस्य भोगः कथमपि दुःखमिश्र एवेति शङ्कते आविरिति। आविर्भूतं स्वरूपं जैवापहतपाप्मत्वादिकं यस्यां सा आनन्दमयब्रह्मानुभूतिर्मुक्तिरितीष्यते। तस्याः दुःखकृत्त्वं शास्त्रेणानुक्तत्वेऽपि सेवात्व-रूपहेतुसिद्धम्। ब्रह्मानुभूतिर्हि स्वक्रियमाणकैङ्कर्यप्रतिबन्धितया ब्रह्मदर्शनम्। मानसी वाचिकी कायि-कीति सेवात्रये मानसीसेवा भवत्यनुभूतिः, मानसनमनवत्। भवति यदीति। इतिशब्दोऽध्याहार्यः। भवतीति चेत्। निरस्यति न तदिति। परमात्मसेवा दुःखकृत् सेवात्वादित्यनुमाने आश्रयासिद्धौ उद्भावितायां पक्षरूपधर्मिसाधनं शास्त्रमाश्रयैव कार्यम्। तेन धर्मिसाधकमानेन *'नारोगं नोत दुःखताम्'* इति दुःखासंकीर्णानन्दत्वस्यापि बोधनात् दुःखकृत्त्वरूपसाध्यं बाध्यम्। अत आश्रयासाधने असिद्धिरूपो दोषः, साधने बाधरूपो दोष इत्युभयथाऽप्यनुमानं दुष्टम्। ननु लोकसिद्धव्याप्त्यभंगेन दुःखाभावश्रुतेर्गौण एवार्थो वाच्यः, *'यन्न दुःखेन संभिन्नम्'* इति स्वर्गनिर्वचनवाक्ये मुख्यार्थो न हि स्वीक्रियत इति चेत्—अस्तु तावत् वाक्यार्थविचारः। हेतुस्ते दुष्ट एवेति नानुमानप्रसक्तिः। तदाह पाप्मेति। *सेवा वा स्यात् अन्यद्वा। सर्वत्र दुःखं प्रति पापमेव कारणमिति निश्चप्रचम्।* सेवान्तरेषु दुःखदर्शनात् तेषां पापघटितत्वं सिद्धम्। पापञ्च निषिद्धानुष्ठानजन्यम्। विधूतपुण्यपापे विधिनिषेधाद्वये भगवदत्यन्तप्रिये विवेकिनि पापप्रसक्त्यभावात् पक्षे पापघटितत्वं न भवति। अतः पाप्मा अस्मिन् अनुमाने उपाधिः। तदा = मुक्तिदशायां सः = पाप्मा न हि भवति। पुण्यपापव्यपाय-शालात्। *ननु दुःखकृत्त्वसाधने सपापत्वमुपाधिः स्यात्। सुखरूपत्वाभाव एव साध्यते इत्यत्राह* आत्मान इति। सुखरूपत्वाभाव इत्यस्य कोऽर्थः? सुखाजनकत्वं वा सुखमात्राजनकत्वं वा। आद्ये स्वसंतोषक्रियमाणसेवायां व्यभिचारः। लोके अनुकूलप्रतिकूलोदासीनरूपेण क्रियात्रैविध्यदर्शनात् सेवारूपक्रियासमुदाये सर्वसमाहारात् सुखपात्ररूपत्वाभावरूपं साध्यमक्षतमिति चेत्—तदपि पापाधीनमेवेति पाप्मोपाधिकत्वदूषणं तदवस्थम्। असिद्धिबाधौ च प्रागुक्तौ। पादार्थस्तु-आत्मानः सर्वे विष्णुशेषा इति शास्त्रम्। लोके पुंसां प्रवृत्तिः आत्माभिमानानुगुणपुरुषार्थमुद्दिश्य। देहात्माभि-मानिनां देहपोषणादौ प्रवृत्तिः पशुपक्षिनरसुराणां स्वदेहाभिमानानुगुणं आहारादौ प्रवृत्तिः। देहातिरिक्तात्मविवेकपूर्वके आचरणे ऐहिकं विहाय स्वर्गादौ प्रवृत्तिः। तथा विष्णुशेषत्वमेव स्वरूपमिति विवेके सति पतिशेषत्वविवेकिन्याः पत्न्याः पतिपरिचर्ययामिव विष्णुपरिचर्ययामेव प्रवृत्तिरुत्साहपूर्वेति शेषत्वस्वरूपानुरूपकार्यत्वाभिमानात् इष्टत्वात् सुखमात्रस्वरूपत्वमेव। परि-

रसस्वरूपाविर्भावयुक्तेत्यर्थः । बाढमित्यत्र बाधकं शङ्कते **सेवात्वादिति** । अयमाशयः ; स्वामिभृत्यभाव-बुद्ध्यनुवृत्तिः सेवात्मा प्रसिद्धा । सा च दुःखात्मतया तद्धेतुतया वा व्याप्ता । तदत्रापि तथा स्यादिति । अत्र धर्मिण्यप्रसिद्धे हेतोराश्रयासिद्धिमभिप्रेत्याह--**न तदिति** । प्रमिते तद्ग्राहकेण बाधमाह **धर्मीति** । श्रूयते हि, "रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इति । (?) "आनन्दं ब्रह्मणो रूपं तच्च मोक्षेऽभिव्यज्यते" इति । स्मर्यते च, "तदस्य त्रिविधस्यापि" इत्यारभ्य "निरस्तातिशयाह्लादसुखभावैक-लक्षणा । भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिकी मता ॥" इति । सोपाधिकत्वमप्याह **पाप्मेति** । नित्यानामनित्यानां वा दुःखकृत्त्वं हि सहकारिणि पापे सत्येव ; अनित्यानां तु पापजन्यतयाऽपि । एवं साध्यव्यापकत्वं सिद्धम् । साधनाव्यापकत्वमप्याह **स चेति** । **पुण्यपापक्षयादित्यनेन** श्रुतिस्मृतिसूचनम् । अस्तु तर्हि सुखरूपत्वाभावे सेवात्वं हेतुः इत्यत्रापि धर्मिसिद्ध्यसिद्धिविकल्प-दोषस्यास्य तदवस्थत्वादव्यक्तमप्रयोजकत्वं व्यनक्ति **आत्मान इति** । अयं भावः— कर्मोपाधिकसेवा हि कर्मवैचित्र्यात् प्रतिकूला उदासीना किञ्चिदनुकूला च स्यात् । । इयं तु निरुपाधिकस्वामिसेवा यथागमं निरवधिकसुखरूपेति । एतेन प्रसङ्गोत्थानमपि निरस्तम् । श्रुतिविरोधे व्याप्तिशैथिल्ये च तस्याप्ययोगात् ।

ये च मुक्ते ज्ञानचिकीर्षाप्रयत्नसुखदेहादियोग। [त् ?] दुःखादिसाधकाः प्रयोगा , तेऽपि यथोक्त-प्रकारेण प्रतिषेध्याः, ब्रह्मणा चानैकान्ता इति ॥ अथापि यदि मुक्तौ सुखम् , तदा सुखरागान्मुमुक्षुः प्रवर्तेत इति कथं वीतरागाधिकार । रागाच्च प्रवृत्त प्रागिव बध्येत ॥ हन्त यदि (?) रागः सर्वो बन्धहेतु-रिति मन्यसे, तद्विशेषो वा, आद्ये सर्वाभीष्टः संसारनिवृत्तिरागोऽपि तथा स्यात् । द्वितीये कोऽसौ

---

श्री— चर्यायां देहश्रमादिकं तु कर्मकृतदेहत्वे । न सर्वोपयोगितया स्वेच्छाकृतदेहत्वे स्वरूपाननुरूप-पुरुषार्थप्रवृत्तास्तु संसरन्त्येव । स्वस्वरूपप्राप्तिर्मुक्तिरित्यत्र न कस्यापि विप्रतिपत्तिः । आनुकूल्य-ज्ञानेऽनुवर्तमाने च को नु दुःखं वदेदिदम् ।

परशेषतैकरसेति । 'अपहतपाप्मा विजर' इति वाक्ये अपहतपाप्मत्वं परशेषतैकरसत्वरूप-भावात्मकम् । 'विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः' इति विजरत्वादिकमप्राकृताद्भुतदेह-वत्त्वरूपमिति स्यात् । बाढमित्यत्रेति । इदमंगीकृतमेवेत्याशंकायामित्यर्थः । 'रसो वै, रसं ह्येव' इति अवधारणात् दुःखाभावोऽपि स्पष्टः । आनन्दं ब्रह्मण इति । इदं स्ववाक्यं वा श्रुतिवाक्यं वेति चिन्त्यम् । उभयथाऽपि अर्शआद्यजन्ततया कान्ततया आनन्दविशिष्टं रूपमित्यर्थः । अभिव्यज्यते—अभितो व्यज्यते । विना दुःखमिति । आनन्दमित्यादिवाक्यं प्रक्षिप्तमिति भाति । विष्णुपुराणं दर्शयति स्मर्यत इति । सुखभावैकेति । एकपदे नैर्भर्यम् । हेतुसाध्यैक्यदोषपरिहारायाह श्रुतिस्मृतिसूचनमिति । एतेनेति । आश्रयासिद्धिरूपदोषपरिहारार्थमनुमानवेषं परित्यज्य प्रसङ्गवेषेण तर्कः प्रयुज्यते यदि, यदि मुक्तिः परसेवा स्यात् दुःखकृत् स्यादिति—तदपि निरस्तम् तर्कस्यापि व्याप्तिसापेक्षत्वात् तद्भङ्गात् । ये चेति । मुक्तो दुःखवान् ज्ञानवत्त्वात् चिकीर्षावत्त्वादित्यादयः प्रयोगाः । अतो दुःखादियोगा इत्यत्र दुःखादियोगादिति पठनीयम् । यद्वा योगाभ्युपगन्तॄन् प्रति इति रीत्या पूरणीयम् । न्यायभाष्यादौ मोक्षे नित्यं सुखमभिव्यज्यते इति भूषणमतनिरासं 'रागस्य बन्धनसमाज्ञानात्' इत्याद्युक्तिञ्च मनसि-कृत्याऽऽह अथापीति । हन्त यदीति । अत्र पाठान्तरोल्लेखोऽनेकधा भाव्येत । स्थितरीत्यैव पाठे तु

विशेषः ॥ सुखविषयत्वमेवेति चेन्न; तादृशस्यापि पापानारब्धत्वादेव दुःखहेतुत्वायोगात् । अथ तदप्यत्र शङ्क्येत, तदा आगमबाध इति । एवं मुक्तस्य स्वदेहसृष्ट्यादिरागोऽपि व्याख्यात इति ॥ ६४ ॥

सर्वस्याप्यानुकूल्यं स्वत इह जगतो वासुदेवात्मकस्य;
व्यक्तिं तन्मुक्तिकाले भजति भवकृतज्ञानसङ्कोचहानेः ।
प्राचीनप्रातिकूल्यक्रमविषयधिया नैव दुःख्येत् तदानीं
प्रागप्येतत् स्वकर्मोपधिकृतभगवन्निग्रहैकप्रयुक्तम् ॥ ६५ ॥

ननु यदि मुक्तः सर्वज्ञः, स कथं न दुःख्येत्? विषयविशेषसंदर्शनं हि बद्धस्यापि दुःखहेतुः, अबुद्धिपूर्वकदुःखोत्पत्त्यसंभवात् । न चानुकूलमात्रविषया मुक्तधीः; 'सर्वं हि पश्यः पश्यति' इति श्रुतेः सङ्कोचानभ्युपगमात् ॥ 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्' इति पूर्वोक्त्या सोढव्यस्सङ्कोच इति चेन्न; सङ्कोचकानां निश्शेषक्षीणत्वात्' न चात्र, 'काणतां जनयेत् दीपो निम्बवृन्दाकरेणुमान्' इतिवत् किञ्चिन्निमित्तमन्तरेण स्वतःप्राप्तप्रकाशैकदेशभङ्गः स्यात् । 'मण्डूकवसयाऽक्ताक्षा वंशानुरगबुद्धिभिः'

---

स॰— सर्वस्यापीति । सङ्कोचककर्माभावेऽपि प्रतिकूलविषये ज्ञानसङ्कोचोऽङ्गीक्रियत इत्याशङ्क्य स्वतः सर्वप्रकाशनशक्तस्य हेतुमन्तरेण सङ्कोचानुपपत्तिं दृष्टान्तेनोपपादयति—नचात्रकाणतामिति ।
श्री— यदीत्यस्य किमित्यर्थः । यदि वेत्यादौ तथा दृष्टेः । यद्येवमिति भाष्यादौ तथा प्रयोगाच्च । अन्यथा पुनः, रागः सर्वः तद्विशेषो वा बन्धहेतुरिति यदि मन्यसे इति रीत्या व्याख्येयम् ॥ ६४ ॥

आविर्भूतस्वरूपत्वस्य परशेषत्वकैङ्कर्यरतित्वरूपत्वात् दुःखरूपत्वमाशंक्य परिहृतम् । अथ परिपूर्णब्रह्मानुभवरूपत्वात् दुःखमिश्रत्वमवर्जनीयमिति शंकां परिहरति सर्वस्येति । इह=प्रकृतौ निरवधिकसुखरूपब्रह्मान्तर्यामिकस्य सर्वस्य जगतः=तत्तज्जन्मनि प्रतिकूलतया भातस्यापि वस्तुजातस्य आनुकूल्यमेव स्वतः=स्वाभाविकम् । तत्—आनुकूल्यं संसारबलात् पूर्वमव्यक्तमपि, भवेन=संसारभावकपापेन कृतस्य ज्ञानसंकोचस्य मुक्तिकाले हानेः=अपायात्, व्यक्तिम्=प्रकाशं भजति । पूर्वभातस्य प्रातिकूल्यस्यावस्तुत्वात् तत्राभावात् निर्दुष्टस्य मुक्तस्य तन्न भाति । आनुकूल्यज्ञानमनुकूलमेव सुखमिति क दुःखम् । ननु इदानीमनुकूलतया ज्ञानेऽपि, पूर्वमिदं प्रतिकूलमासीदिति ज्ञायमानतया दुःखी स्यादित्यत्राह प्राचीनेति । पूर्वतत्तज्जन्मस्थितानां प्रातिकूल्यानाम्=अनिष्टत्वानां यः क्रमः=संततिः पौर्वापर्यम् उच्चनीचरीतिर्वा । तद्विषयकधिया इदानीं वर्तमानया न दुःखवान् भवेत् । पूर्वस्थितप्रातिकूल्यज्ञानस्य दुःखत्वाभावात् । ननु पूर्वानुभूतसुखस्मरणे सुखोद्भववत् पूर्वदुःखस्मरणे दुःखमपि स्यादेव; सुतरामतीतदुःखसाक्षात्कारे इति चेत्—अनिष्टतया ज्ञाने हि दुःखम् । स्मरणस्य साक्षात्कारस्य वाऽनुकूलत्वेन भाने कथं दुःखप्रसक्तिः? ननु निर्दोषाणां परैः पीडितानां कदाचित् तत्स्मरणे ततो दुःखं तेषु प्रातिकूल्यधीश्च भवति हीत्यत्र निर्दोषत्वमसिद्धमित्याह प्रागपीति । स्वस्मिन् कर्मरूपदोषस्यापि स्थित येदानीं साक्षात्कारात् परेषु प्रातिकूल्यग्रहणस्य नावसर इति ।

सोढव्यः संकोच इति । मृत्युरोगदुःखतादिकतिपयादर्शनस्य तत्रोक्तत्वात् न सर्वदर्शनमित्यर्थः । तद्वचनस्यान्यपरत्वे कारणमाह संकोचकानामिति । ज्ञानोत्पत्तेः प्राप्तत्वेऽपि ज्ञानाभावो बाह्यनिमित्तवशादेव वक्तव्यः स इह नास्तीत्याह न चेति । एवं प्रतिकूलेषु प्रतिकूल्यज्ञानमावश्यकमित्युक्तम् । मुक्तस्य तु प्राक्प्रतिकूलेष्वनुकूलताबुद्धिरिष्यते सिद्धान्ते । साऽपि न युक्तेत्याह मण्डूकेति । वंशोरगबुद्धेरुक्ततया 'अनुकूलेषु प्रतिकूलबुद्धिः' इति स्थितः पाठः सम्यक् । याकारः पूर्वमज्ञान-

इतिवद्वा केनचिद्धेतुना प्राक् अनुकूलेषु प्रतिकूलबुद्धिर्युक्ता । इदानीं तु प्रतिकूलेष्वनुकूलधीर्यदि तादृशोपाधिनः स्यात्, तथासति भ्रान्त्यनुवृत्त्या कर्माद्यनुवृत्तिरपि दुर्वारा । एतेन नित्यानां मुक्तानां च क्वचिदस्थानभयशङ्कावादोऽप्यन्यपरतया नेतव्यः । एवं मुक्तबुद्धेः सङ्कोचासङ्कोचविकल्पासहतयाऽत्र पाषाणकल्प[त्व?]पक्ष एव ज्यायानिति । तत्राह सर्वस्येति । यदि स्वतोऽनुकूलस्वामिविभूतितया दृश्यमानं सर्वमपि स्वतोऽनुकूलमेव भायात्, तर्हि बद्धदशायामपि तथा भासेतेत्यत्राह क्वचितमिति । तादृक्त्वं प्रतिबन्धकविगमे हि प्रकाशेत ॥ ब्रह्मवत् अनुकूलस्वभावं तदात्मकं सर्वं कथमिदानीं कैश्चित् प्रतिकूलतया गृह्यत इति चेत्—इत्थम् । कर्मसंवृतधियां यथाकर्म भानभेदोपपत्तेः । यथाऽऽहुः. "वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च । कोपाय च यतस्तस्मात् वस्तु वस्त्वात्मकं कुतः ॥" इति । "तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते । तदेव कोपाय यतः प्रसादाय च जायते ॥" इति च । अत उपाधिविगमे स्वतःप्राप्ताभिव्यक्तिर्युक्ता । ननु संसृत्यवस्थासिद्धं निरयाणां प्रातिकूल्यं स्वानुभूतं च दुःखं मुक्तः पश्यति

---

पु— ज्ञानस्य सङ्कोचाभावेऽपि हेतुमन्तरेण प्रतिकूलस्यानुकूलतया भानमनुपपन्नम्, हेतुवशादनुकूलानां प्रतिकूलतया भानस्य लोके बहुलमुपलब्धेः मुक्तावपि तथैव स्यादित्याह—मण्डूकवसयेति । वाशब्द एवकारार्थः । प्रतिकूलबुद्धेरेव युक्तेरित्यर्थः । अत्र, 'प्राक्प्रतिकूलेषु अनुकूलबुद्धिर्युक्तेति पाठो दृश्यते' चेत्, साधुः । तत्रायमर्थः—मुक्तस्य दुःखदर्शनाभावश्रुतिवशात् प्रतिकूलविषये मुक्तस्य ज्ञानसङ्कोचः कल्प्यते ; सङ्कोचाभावेऽपि प्रतिकूलानामनुकूलतया भानं वा कल्प्यते इत्याशङ्क्य दृष्टविरुद्धकल्पनमयुक्तमित्याह—न च काणतामित्यादिना वाक्यद्वयेन । प्रकाशनशक्तिभङ्गस्य सहेतुकत्वनियमदर्शनात् तद्विरुद्धनिर्हेतुकशक्तिभङ्गकल्पनमयुक्तमिति प्रथमवाक्यार्थः । प्रागतथाभूतस्य तथा भानमपि सहेतुकमेव दृष्टम् । तत्राप्यनुकूलानां प्रतिकूलबुद्धिविषयत्वमेव दृष्टमिति तद्विरुद्धं प्रतिकूलेषु अनुकूलबुद्धिकल्पनमयुक्तमिति द्वितीयवाक्यार्थः । न चानुकूलबुद्धिर्युक्तेत्यन्वयः । हेतुवशात् प्रतिकूलानां अनुकूलतया भानेऽपि अनिष्टमाह—इदानीं त्विति । भ्रान्त्यनुवृत्त्या कर्मानुवृत्तिः कथम्? कर्मसम्बन्धशून्यानामेव नित्यानां मुक्तानां च अस्थाने भयशङ्कारूपा भ्रान्तिर्हि शास्त्रे श्रूयत इत्याशङ्क्याह—एतेनेति । अन्यपरतया नेतव्य इति । अनुपपन्नमर्थं शास्त्रं न प्रतिपादयति, अतः.. ......तादृशस्नेहसद्भावप्रतिपादनपरमिति भावः ।

वी— विषये दृष्टान्तः प्रादर्शि । अत्र भ्रमविषये तत्प्रदर्शनमिति भेददर्शि । उपलक्षणमिदं प्रतिकूलेष्वनुकूलबुद्धेरुदाहरणान्तरपूर्वकं प्रदर्शनीयायाः । स्थितपाठनिर्वाहः प्रादर्शि । अन्यः सम्यक्पाठ उपलभ्यते चेत्, ग्राह्यः । पूर्वव्याख्यादर्शितरीतिरपि द्रष्टव्या । ननु सिद्धान्ते समुचितहेत्वभावेऽपि अन्यादृशभ्रम इष्ट इतीदं निरस्यति एतेनेति । क्वचित् अस्थानभयशंकावाद इति । अखिलहेयप्रत्यनीककल्याणगुणैकतानस्य किमप्यत्याहितमिति भयस्य सर्वेशनित्यसूरिगततया वर्णनमेवास्थाने । स्नेहातिशयप्रकाशनाय तदुक्तिः । भयं विनैव स्वरूपमात्रं मङ्गलाशासनं भृत्यैस्तत्र क्रियते राजाधिराजविषये । इह लोके तु तस्यानिष्टलेशस्याप्यभावेऽपि तदनुभवपरकर्मिजनकृतं तन्मूलं शङ्कमानैर्युज्यते भयप्रदर्शनम् ॥

एवं नचानुकूलमात्रविषयेत्यारभ्य नेतव्य इत्यन्तेन मुक्तस्यासर्वज्ञत्वपक्षं व्युदस्य सर्वज्ञत्वं स्थापितम् । तथा च सर्वज्ञत्वात् दुःखित्वमवर्जनीयमिति पूर्वपक्षसारः । एतद्दुःखित्वापादनस्यापि परमं लक्ष्यमाह एवं.. ...पाषाणकल्पत्वपक्ष एव ज्यायानिति । वस्तु वस्त्वात्मकं कुत इति । इदं वस्तु प्रतिकूलमेव, इदमेवानुकूलमिति कुत इत्यर्थः । तथाचैकं रूपं वास्तवम्, अन्यत् आरोपितम् ।

वा, न वा। आद्ये, "गन्धाश्मरजसा स्पृष्टो नष्टो दीप पुनर्ज्वलेत्" इति न्यायेन पुनरपि दु खसन्तति-रुदियात्। उत्तरत्र, धीसङ्कोचाभ्युपगमप्रसङ्ग, तथाऽपि दु खित्व स्यात्, तस्य तद्व्याप्तचन्द्रीकारादि त्यत्राह प्राचीनेति। क्रमशब्द तदातनसन्तानसूचनार्थ, कर्मानन्तर्यपरो वा। तदानीं—मुक्तिकाले। न हि प्राप्ताभिषेक प्राचीनकारागृहवासधीर्दु खाकरोति। स्वाधारवर्तमानसुखादिसाक्षात्कार च भोग माहु। प्रसिद्ध च—'प्राप्तानि दु खान्यपि दण्डकेषु सचिन्त्यमानानि सुखीनभूवु' इति। पूर्वमपि प्राति कूल्य यत्प्रयुक्तम्, तन्निवृत्तौ कथ तत् स्यादित्यभिप्रायेणाह प्रागपीति॥

इति निरुपाधिकब्रह्मानुभवस्य दुःखरहितनिरतिशयानन्दत्वम्॥ ६५॥

अन्ये चानादिशुद्धा श्रुतिसमधिगताः सूरयः सन्त्यसङ्ख्या,
कर्माभावादनादेर्न तु भवति कदाऽप्येषु ससारबन्धः।
शेषाणां शेषिणश्च स्फुरति सुखतया सर्वदा सर्वतत्त्वे
नित्यानां मुक्तिभाजामपि भुवनकृता भोगमात्र समानम्॥ ६६॥

यत्तु तन्त्रान्तरस्थैरुच्यते—"मुक्तात्मानोऽपि शिवा किं त्वेते यत्प्रसादतो मुक्ता। सोऽनादि मुक्त एको विज्ञेय पञ्चमन्त्रतनु॥" इति—तत्र श्रुतिविरोधमभिप्रेत्याह अन्ये इति। श्रुतिसमधिगताः

---

प्रा- प्रातिकूल्यक्रमेत्यत्र क्रमशब्दस्य प्रातिकूल्य पौर्वापर्यपरत्वस्वारस्यादाह—क्रमशब्द इति। सन्तानप्रतिपादने प्रयोजनमान्द्यात् कर्मानन्तर्यप्रतिपादनस्य कर्मनिवृत्त्या प्रातिकूल्यनिवृत्त्युप-योगितया साफल्यात् कर्मानन्तर्यपरतया व्याचष्टे—कर्मानन्तर्यति॥ ६५॥

श्री— मुक्तिकालीनज्ञानस्य यथार्थत्वात् आनुकूल्यमेव वास्तवमिति। स्वाधारेति। अन्यनिष्ठसुखस्य साक्षात्कारे भोगत्ववारणाय स्वाधारेति। स्वाधिकरणकेत्यर्थ। सुखस्यातीतादिरूपत्वे भोगत्ववारणाय वर्तमानेति। आहुरित्यनेन तार्किकादिसमतमिदमिति ज्ञाप्यते। स्वमते तु सुखमेव भोग। अनुकूल भानमेव च सुखमित्यलमत्र॥ ६५॥

कक्ष्यपर्यन्तपरिपूर्णब्रह्मानुभव आनन्दैकरूपो जीवाना मुक्तिरूपो भवतीत्युपपादि। अथाय-मनुभव केषाञ्चिदनादिरित्याह अन्ये चेति। अनादि यथा तथा शुद्धा—बन्धरहिता। वृत्तौ सिद्धेति पाठ दृष्ट्वा अत्र तथा न शोधनीयम्। अनादिसिद्धत्वस्य सर्वजीवसाधारण्यात् विवक्षिता-सिद्धे। वृत्तिरेव शोधनीया। बन्धराहित्यानादित्व बन्धहेतूनामनादित्वेवाभावादित्याह कर्मेति। अनादिभूतात् कर्माभावादिति अनादिशुद्धा इत्यत्रान्वेति। उपरि तुशब्दश्रवणात्। ननु कर्मवश्यत्व-योग्यताया सत्या कथ कर्माभावोऽनादि। न हि पश्चाद्वा कर्मसंबन्ध कदाचिदुपपादयितु शक्यत इत्यत्राह नत्विति। एषु पारतन्त्र्यरूपयोग्यतासत्त्वेऽपि ससारबन्धरूप कार्य न जायते। सहकारि-योग्यताया अभावात्। ननु तत्पारतन्त्र्येऽपि तद्वत् अनादिशुद्धत्वस्वीकारे मुक्तापेक्षया नित्येषु स्वगतशुद्धत्वातिशयप्रयुक्तभोगाधिक्य स्यादेवेत्यत्राह शेषाणामिति। आनुकूल्यज्ञान भोग। यस्य कस्यापि ईषत् प्रतिकूलतया भाने सति भोगवैषम्यम्। अनुभाव्यकिञ्चिदननुभवाद्वा स्यात् वैषम्यम्। तत् किमपि नास्तीति न परमसाम्यक्षति। अन्यथा परमात्मनि भुवनहेतुत्वानन्याधीनत्वादि-स्वीकारात् तन्निबन्धनभोगाधिक्य नित्यसूर्यपक्षयाऽपि तस्येति कि न स्यादित्यर्थः।

शिवशब्दो जीवपरत्वात् कमङ्गलवाची। एकशब्द नारायणपर। पञ्चमन्त्रतनु -पञ्चोपनिषन्मन्त्रवेद्य

"सदा पश्यन्ति" इति श्रुत्या निर्बाधमधिगता इत्यर्थः । न ह्यसौ श्रुतिः मुक्तविषया, मुक्तानामेकैकशः सदा दर्शनाभावात् । इयं हि दर्शनं सदेति विशिंषत्यपि सदादर्शनविशिष्टान् सर्वान् स्वरसतोऽवगमयति ; न त्वादिमद्दर्शनप्रवाहसातत्यम् । तत्र बहुवचनस्य सङ्कोचकादृष्टेः उपबृंहणतश्च कपिञ्जलन्यायानवतारात् असंख्या इत्युक्तम् । ननु परतन्त्रचेतनानामस्मदादिवत् संसृतिरवर्जनीया । अथ (अतः?) कथमनादि सि(शु?)द्धत्वमित्यत्राह **कर्माभावादिति** ॥ उक्तहेतुना कर्माप्यवर्जनीयमिति चेन्न ; सदादर्शनश्रुत्यैव मिथ्याज्ञानादिपूर्वकस्य कर्मणः प्रत्यासेधात् । अन्यथा कथमीश्वरोऽप्यङ्गीक्रियते? ॥ मा भूदिति चेत्, श्रुतिबाध इति; शेषं पठ ॥ सर्वप्रशासितुः शास्त्रवश्यत्वाभावान्न कर्मवश्यत्वमिति चेन्न ; पारतन्त्र्येऽप्यनादि सर्वज्ञानामपि तदभावं पश्य ॥ अथापि कर्माभावो न तावत् अन्योन्याभावः ; संसृत्यभावं प्रति अप्रयोजकत्वात् । न प्रागभावः ; तस्य भावशिरस्कत्वात् । न प्रध्वंसः ; भावपूर्वकत्वात् । न संसर्गाभावः ; तस्यापि प्रागभावादिविकल्पदौःस्थ्यादिति चेत्—तन्न, कर्मात्यन्ताभावस्य विवक्षितत्वात् । अन्यथा ईश्वरेऽप्येवं विकल्पप्रसङ्गात् । नित्येषु च नाशकारणाभावात् नाशाभाव इत्यभ्युपगमस्य भङ्गप्रसङ्गात् ॥ कस्यचित् अनादिसि(शु?)द्धत्वे को हेतुरिति पृच्छन्तस्तु अहेतुविद्भिरनुग्राह्याः । अत एव, 'कथमीश्वरस्य क्वचिदिच्छा नित्या, क्वचिदनित्या' इति वैषम्यानुयोगश्च विधूतः ।

---

श्री–इति यदि वैष्णवादतोऽस्य वाक्यस्यार्थः तदापि तस्य नित्यसूरिनिवारकत्वमयुक्तमिति इहोपपाद्यते। श्रुत्येति। 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' इत्यनया सदापश्यदसंख्यसूरिविशिष्टविष्णुसंबन्धिपरमपदरूपविशिष्टार्थविधानात् विशेषणानामपि विधेयत्वमिति भावः। ननु 'आलयेऽस्मिन् अर्चा सदा पश्यन्ति' इत्युक्तौ सार्वकालिकदर्शनाश्रयः न प्रतीयन्ते। किं तु तदातदा विभिन्नजनसमागमात् दर्शनं जायमानं प्रवाहरूपेणास्तीत्येतावदेवेति शंकां परिहर्तुमाह नहीति। दर्शनं विशिंषती—दर्शनविशेषणतया सदेति निर्दिशन्ती। सदातनाः सदास्थिताः इति निर्देशे हि सूरीणामनादित्वं बुध्येतेति भावः। एकैकस्यापि सूरेः सार्वकालिकदर्शनाश्रयत्वस्यैव स्वरसतः प्रतीतेः तद्बाधे किं मानम्। अर्चादर्शनवाक्ये तथाप्रतीतार्थपरित्यागः लोके देहिनां सादित्वानित्यत्वभावात्। अतः एकैकस्यापि मुक्तस्य सदादर्शनाश्रयत्वाभावात् न मुक्तविषयेयम्; अर्चादर्शनवाक्य इवात्र दर्शनमात्रे सदेति विशेषणान्वयेऽपि तादृशदर्शनविशिष्टत्वस्य एकैकसूराद्यन्वयात्। एवञ्च दर्शनमिदं सार्वकालिकत्वात् अनादि, न त्वादिमत्; प्रत्येकपुरुषं नित्यम्। आदिमत्त्वे हि दर्शनप्रवाहो विषयः स्यात्। सन्तु तर्हि अनन्तगरुडविष्वक्सेनास्त्रयः बहुवचनादित्यत्राह तत्रेति। तत्र—नित्यसूरिसिद्धौ। संकोचकेति। कपिञ्जलाधिकरणमनुष्ठेयार्थविषयकम् असंकोचेन सर्वग्रहणे अनुष्ठानायोगात् संकोचसापेक्षं तत्र वैषम्ये मानाभावात् यावतो न्यूनत्वे शास्त्रार्थसंख्याभंगो न स्यात् तावति विश्राम्यति। अत्रासंकोचादसंख्यग्रहणमेव स्वरसम्। अल्पसंख्यामात्रग्राह्युपबृंहणसत्त्वे तु तावदेव ग्राह्यं स्यात्; तदपि नेति। शेषं पठेति। नित्यसूरयः कर्मवन्तः परतन्त्रत्वादित्याद्यनुमाने आश्रयासिद्धिव्याप्यत्वासिद्धिप्रभृति पूर्ववदिति भावः। यद्वा श्रुतेरप्रामाण्यशंकायां तत्प्रामाण्यस्थापकम् उपनिषदस्वरसार्थकल्पनायां कर्मकाण्डस्यार्थान्तरकल्पनाप्रतिबन्धादिपरञ्च ग्रन्थजातं पठेत्यर्थः। अथापीति। चेतने कर्मसरूपयोग्ये कर्मात्यन्ताभावो न भवेदित्याशयेन शंका। अहेतुविद्भिः—शुद्धिर्नाम मलाभावः। मलरूपहेत्वभाववद्भिः शुद्धपाक्षिपिणः क्षेप्याः। नन्वनन्तगरुडादयः क्षेत्रिणः प्राकृतशरीराः अधिकारिविशेष-

न चाधिकारवैचित्र्यादनन्तादिष्वक्षेत्रिषु इन्द्रादिवत् क्षेत्रित्वानुमितिः शक्या, स्वच्छन्देशावतारवत्।

यदपि मुक्तानां शिवत्वमुक्तम्, तत् किमीश्वरतादात्म्यं तज्जातीयत्वं वा तद्गुणसाम्यं वा? नाद्य; हेतुमुक्तस्यानादिमुक्ततादात्म्यासंभवात्। न द्वितीय; 'न तत्समश्चाभ्यधिकश्च', 'न त्वत्समोऽस्ति' इत्यादिविरोधात्। न तृतीय.; पारतन्त्र्येऽपि शुद्धिमाङ्गल्यसार्वज्ञ्यादिमात्रेण तत्सिद्धेः।

अथ नित्यानां मुक्तानामनीश्वरत्वे तद्भोगसाम्यं न स्यादिति मन्वीथा., तत्र भ्रमः शेषाणामिति। स्वतन्त्रपरतन्त्रयो यथार्हपि भोग्यसाम्यात् भोगसाम्यं युज्यते। सूत्रितं चैतत्-'भोगमात्रसाम्यलिङ्गाच्च' इति॥

**इति नित्यमुक्तिसिद्धिः, नित्यमुक्तेश्वराणामपि भोगसाम्यं च ॥ ६६ ॥**

**सालोक्याद्याः प्रभेदा ननु परिपठिताः क्वापि मोक्षस्य; मैवं**
**सायुज्यस्यैव तत्त्वात्; तदितरविषये मुक्तिशब्दस्तु भाक्तः।**
**तस्मिंस्ते च त्रयः स्युः; तदपि च सयुजोर्भाव इत्यैकरस्यम्;**
**युक्साम्यं लोकसाम्यादिवत्; अपटुधियां तात्रतैवैक्यमोहः ॥ ६७ ॥**

ननु अग्निहोत्रदर्शपूर्णमासादिसाधनविशेषात् तत्साध्यस्वर्गे तारतम्यमङ्गीकुर्म, तथा मोक्षेऽपि स्यात्; अन्यथा कथमाप्तशास्त्रे क्वचित् सालोक्यादिमुक्तिभेदकथनमिति शङ्कते **सालोक्येति**। तेषु मुक्तिशब्दो न मुख्य इत्यभिप्रायेणाह **मैवमिति**। मुख्यं मुक्तिशब्दविषयमाह **सायुज्यस्येति**। अन्यत्र प्रयोगः

---

व्वी— त्वात् इन्द्रादिवदित्यनुमेयमित्यत्राह न चेति। हेतुः प्राकृतत्वप्रयोजको न भवतीति भावः॥६६॥

ननु भोगसाम्यं न मुक्तिः, तस्याः सालोक्यसामीप्यसारूप्यसायुज्यभेदेन चतुर्विधत्वात् फलवैषम्यस्यावश्यकत्वादित्यत्राह सालोक्येति। क्वापि=पुराणपाञ्चरात्रादिषु। मोक्षस्य प्रभेदाः=अवान्तरभेदाः परिपठिताः। तत् कथं भोगसाम्यं मुक्तिरिति प्रश्नः। निरस्यति मैवमिति। मुक्तेश्चतुर्भेदत्वं मा भूत्। तदन्तर्गतस्य सायुज्यस्यैव तत्त्वात्=मुक्तित्वात्। तथा तर्केणैव वाक्येनापि नियमनात्। भाक्तः=औपचारिकः अमुख्यः। भाक्तत्वमुपपादयति तस्मिन्निति। तस्मिन् सायुज्ये मोक्षे। ते— सालोक्यसामीप्यसारूप्यात्मकाः त्रयो मोक्षप्रभेदा., अन्तर्गताः स्युः—भवन्ति। वैकुण्ठलोके समानं रूपं गृहीत्वा समीपमुपेतस्यैव भोगसाम्यदानात् तदनुभवसमये तेषामाकाराणामपि सत्त्वात् तेषां तदङ्गत्वात्। सालोक्यादौ तु सायुज्यं नान्तर्भवति, लोकप्राप्तिकालादावेव भोगसाम्यस्यालब्धत्वात्। ननु भोगसाम्यमित्युक्तौ द्वयोर्भोगौ मिथस्समौ इत्यर्थः प्रतीयते। सायुज्यञ्च समानयुक्त्वम्। समानशब्द एकार्थकः। युक्शब्दस्य भोगार्थकत्वे एकभोगकत्वमित्यर्थो भवति। भोगैक्यञ्च भोक्तुरेकत्व एव। भोगसाम्यं तु भोक्त्रोर्भेदे। अतः कथमुभयोरैक्यमित्यत्राह तदपि चेति। अस्तु समानशब्द एकार्थकः। एकपदञ्च नैकत्वसंख्याविशिष्टार्थकम्, किन्तु अभिन्नेत्यर्थकम्, सामानाधिकरण्यमित्यादाविव। अतो व्यक्तिद्वयमादाय, उभयोरिदं समानम्, 'अनयोः समाना माता' इतिवदिति वक्तव्यम्। तथाच समानं युक् ययोस्तौ सयुजौ तयोर्भाव· सायुज्यम्। तत्र द्वयोश्चेतनयोः भोग्यस्य— अनुभाव्यस्यैकत्वेऽपि तदधीनस्य भोगस्य तत्तत्क्षोत्पन्नस्य भेदात् भोगव्यक्त्यैक्याभावात् भोगसाम्यस्यैव वाच्यतया युक्पदेन भोगग्रहणायोगात् भोग्यं गृह्यते। तच्च परिपूर्णं ब्रह्मैवेह। एवं भोग्ये ऐक्येऽपि भोगे ऐक्याभावादेव भोगैक्यमिति नोच्यते; किंतु भोगसाम्यमिति। साम्यरूपार्थविवक्षया ऐक्यशब्दप्रयोगस्तु न वार्यते, यथा साम्यशब्दस्य समानत्वमेकत्वमित्यर्थेऽपि लोकसाम्य-

कथमित्यत्राह **तदितरेति**। तथाच निगम्यते, "लोकेषु विष्णोर्निवसन्ति केचित् समीपमृच्छन्ति च केचिदन्ये। अन्ये तु रूपं सदृशं भजन्ते सायुज्यमन्ये स तु मोक्ष उक्तः ॥" इति। तर्हि सायुज्ये सालोक्यादिभोगाभावात् भोगसाम्यसूत्रं परिमितविषयं स्यादित्यत्राह **तस्मिन्निति**। सायुज्ये हि, सहस्रे शतादिकमिव, सालोक्यादित्रिकमन्तर्भवतीति। एकस्मिन् वाक्ये ब्रह्मसायुज्यसालोक्ययोः सहपाठोऽपि एवमन्तर्भावविवक्षया मुख्यगौणमुक्त्यपेक्षिपुरुषभेदानुरोधाद्वा यथार्हं निर्वाह्यः। ननु यदि सायुज्यमेव मोक्षः, तदा पूर्वोक्तं भोगसाम्यं न स्यात्। ऐक्यापत्तिरेव हि सायुज्यम्। अतः कस्य केन भोगसाम्यमित्यत्राह **तदपीति**। नन्वेकीभूतयोर्भावो हि सयुजोर्भावः। तत्र परं प्राचीनब्रह्मानन्दानुवृत्तिमात्रमेव स्यात्। 'अन्यूनश्चाप्यवृद्धिश्च' इति स्थापनात्। अतो भोक्तृद्वित्वाभावाचोद्यं तदवस्थमित्यत्राह **युक्साम्यमिति**। अत्र सालोक्यादिनयात् श्रूयमाणे युक्छब्दार्थः। तेन भोगसाम्यमाक्षिप्यते। सायुज्यसार्ष्टितासहपाठे तु कण्ठोक्तम्। न हि सयुक्छब्द एकशब्दपर्यायः; तथा क्वचिदपि प्रयोगाभावात्। "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते" इति द्वयोरेव प्रयोगाच्च। "तयोरन्यः" इत्युत्तरवाक्ये च स्पष्टमेतत्। "एतासामेव देवतानाँ सायुज्यम्" इत्यत्र बहुदेवतासायुज्यं युगपत्, क्रमेण वा। नाद्यः; भिन्नैरेकस्य युगपदेकतापत्त्ययोगात्। न द्वितीयः; विभागाविभागविकल्पदौःस्थ्यात्। विभागयोग्यत्वे हि संयोगविशेषमात्रं स्यात्। तदभावे तु क्रमेणोत्तरोत्तरतादात्म्यात् एकपरिशेषः स्यात्; न चैतत् क्वचिद्दृष्टमिष्टं वा। यदि कश्चित् नैघण्टुकः ऐक्य सायुज्यमिति पठेत, तत् तस्य स्वपक्षाभिनिवेशेन शब्दशक्तिग्रहणापरिशुद्ध(?)तया वा प्रयुक्तमित्युपेक्षणीयम्। द्वित्वे स्थितेऽपि सरित्समुद्रसलिलयोरिव संभेदविशेषकृतमेकराशित्वं वा विवक्षितम् ॥ **इति मुक्तानुभवस्य समानभोगत्वलक्षणसायुज्यैकरूपत्वम्** ॥ ६७ ॥

---

थी— मित्यादौ। सारूप्यमित्यत्र रूपैक्यायोगेन रूपसाम्यस्यैव वाच्यत्वात् तद्वासनया ऐक्येऽपि साम्यशब्दप्रयोग इति ग्राह्यम्। युक्शब्देन गुणग्रहणेन (श्रु. प्र) समानगुणकत्वं सायुज्यमित्युक्तौ सारूप्यपद इव साम्यमिष्टम। अतो युज ऐक्येऽपि युक्साम्यवचनं लोकसाम्यवचनवत् अमुख्यम्। न तावता भोगैक्यम्। एवं विवेचनपाटवमप्राप्ता येषां धीः, तेषां सायुज्यशब्दार्थं एकत्वमिति मोह इति।

परिमितविषयमिति। भोगसाम्यस्य दुर्वचत्वात् कतिपयविषयमात्र भोगसाम्यं वाच्यं स्यादित्यर्थः। तत्र परमिति। परं तु तत्रेत्यर्थः। यद्वा परं=त्वदुक्तभोगादन्यदित्यर्थः। प्राचीनेति अनादित्वपरम्। अन्यानन्दोत्पत्तिस्वीकारे, पूर्वमानन्दस्य न्यूनता पश्चात् वृद्धिश्च स्यादिति मानविरोध इत्याह अन्यून इति। कण्ठोक्तमिति। "सायुज्यमुभयोस्तत्र भोक्तव्यस्याविशिष्टता। सार्ष्टिता तस्य भोगस्य तारतम्यविहीनता॥" इति सार्ष्टिता-ऋष्टिर्भोगः तस्य समतेति। सायुज्यशब्दप्रयोगस्थलेऽपि ऐक्यरूपार्थानन्वयं दर्शयति एतासामेवेति। बहुदेवतासायुज्यं बहुदेवतैक्यम्। विभागेति। भिन्नयोरेकीभावो दुर्वचः। 'अन्यद् द्रव्यं हि नैति तद्द्रव्यताम्'। एकीभूतस्य पुनर्भेदश्च न भवति। इदमस्यं संश्लेषविशेष इत्येव वक्तव्यम्। तथा च सायुज्यं न मुख्यमैक्यमिति। तत्=सायुज्यमिति परम्। तस्येति अभिनिवेशोऽन्वेति। प्रयुक्तम्। तेनेति शेषः। प्रेरितमिति वा प्रयुक्तपदस्यार्थः॥ ६७॥

भोगसाम्यघटितमेकभोग्यकत्वं सायुज्यमित्युक्तम्। अथ भोगमात्रसाम्यम्। न तु सर्वाकारेणेति समर्थनीयम्। तत्र परमसाम्यश्रुतिविरोधः पुनरावृत्तिप्रसंगश्च बाधक इति तदुभयं परिहरति

विश्वाधारस्य लक्ष्मेत्यभिहितमखिलं सम्भवेन्नापवृक्ते
तन्निष्ठत्वादि सर्वं न हि विलयमियात् तच्छरीरस्य तस्य ।
तन्निघ्नत्वेऽपि मुक्तो न भवति पुनरावृत्तिशङ्काकलङ्की
तादृक्सौहार्ददृष्टेः ; वयमिह तत् अनावृत्तिशास्त्रेण विद्मः ॥ ६८ ॥

यदि मुक्तोऽपि परतन्त्रः, तर्हि स्वच्छन्दप्रवृत्तपरबुद्ध्या पुनरपि बध्येत किं भवेदिति नित्यं शङ्काकलङ्कितः स्यात् । अतः पारतन्त्र्यादिपरिहारेण परब्रह्मसाम्यसिद्धिरवधार्या । अन्यथा, "निरञ्जनः परमं साम्यमुपैति" इति परमत्वविशेषणं व्यर्थं स्यादित्यत्राह विश्वाधारस्येति ॥ अयं भावः —ईश्वरस्य यत् लक्षणत्वेनोक्तम्, तत् सर्वं मुक्ते न स्यात्, लक्ष्येतरगामित्वे लक्षणत्वायोगात् । एकः सर्वशरीरी इति च शास्त्रसिद्धम् । अतो मुक्तस्याप्याधेयत्वादिनियमो न निवर्तेत । परमत्वविशेषणं तु तुलाधृतसुवर्ण-पाषाणयोरिव न सर्वाकारसाम्यं साधयितुमर्हतीति॥ अतिशङ्कामपाकरोति तन्निघ्नत्वेऽपीति। मुक्तस्य शङ्कानिवृत्तिहेतुमाह तादृगिति । स्वतन्त्रेऽपि स्वाभाविकसौहार्ददर्शनादित्यर्थः । मुमुक्षूणां मुक्तावर्तनशङ्का केन निवार्येत्यत्राह वयमिति श्रुतिस्मृतिचक्षुषो वयं विद्मः । तस्मादस्माकमपि परसौहार्ददर्शनं सिद्धमिति भावः । "सर्वेषु लोकेषु कामचारो भवति", "इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्" "स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति" इत्यादिश्रुत्यनुसरण्या च पुनरावृत्तिं वयं

---

श्री— विश्वेति। ब्रह्मणो लक्षणत्वेन यत् अभिहितं श्रुत्यादौ, तत् सर्वम् अपवृक्ते=अपवर्ग—मोक्षं प्राप्तवति जीवे न भवति। ननु संसारदशायामेव जीवं प्रति ब्रह्मण आधारत्वादिकम्, न मोक्षे इत्यत्राह तन्निष्ठत्वेति । प्राकृतसूक्ष्मत्वसहार्यत्वादिरूपकतिपयाकारलोपेऽपि आधेयत्वविधेयत्वशेषत्वादिकं जीवे मोक्षेऽप्यस्ति। अन्यथा यावत्सत्त्वं नियमेन धार्यत्वादिकमस्तीत्यस्य दुर्वचत्वात् शरीरात्मभाव एव न स्यात्। अतो विश्वाधारं प्रति शरीरस्यास्य जीवस्य तत् सर्वं सार्वदिकम्। एवं कारणत्वमुमुक्षूपास्यत्वमोक्षप्रदत्वश्रीपतित्वसर्वविभूतिनिग्रहकर्तृत्वादिकं तन्मात्रनिष्ठमिति न सर्वाकारेण परमसाम्यप्रसक्तिः । ननु ब्रह्मासाधारणधर्माणामभावेऽपि पूर्वमेतस्मिन् स्थितस्य पारतन्त्र्यस्याभावोऽस्त्वेव । अन्यथा भोगसाम्यमपि न सिध्यति, 'परतन्त्रोऽहं जातु भगवन्नाऽध पात्येय' इति भयमिश्रत्वाद् भोगस्य दुःखानुषक्तत्वादित्यत्राह तन्निघ्नत्वेऽपीति । शङ्केयं मुक्तिदशायां वा मुमुक्षुदशायां वा । नाद्य, विश्वाधारपरतन्त्रत्वेऽपि सर्वसाक्षात्कारात् अनावृत्तिपर्यन्तस्य न सौहार्दस्य दृष्टत्वात्। दृष्टेरित्यस्य तृतीयपादेऽन्वयः । स नावर्तयिष्यतीत्यस्यापि निश्चितत्वात्। आवृत्तेरस्तित्वे आवृत्तिसाक्षात्कार एव स्यादिति न शङ्का। तदभावे च, अनावृत्तेरेव साक्षात्कारान्न शङ्का । नान्त्यः । अस्माकं तथाविधसाक्षात्काराभावेऽपि श्रुतिचक्षुर्मूलकमनावृत्तिदर्शनमस्तीति ॥

मुक्तावर्तनशङ्का=मुक्ता आवर्तेरन्निति शङ्का । परमत्वेति । सुवर्णं यथाविभवं गुञ्जादिना पाषाणेन वा तोलयन्ति । तत्र घटद्वयनिक्षिप्तस्य मानमेयद्वयस्य साम्यं परममपेक्षितम्। न हि तत्र परमोक्तिमात्रेण सुवर्णवत् मूल्याधिक्याभरणत्वादेः पाषाणादौ प्रसक्तिः । अतो यमंशमादाय साम्यमुक्तम्, तदंशमात्रे परस्य तारतम्याभाव एव विवक्षित इति । तत्रापि अनन्याधीनत्वान्याधीनत्वरूपवैषम्यं सह्यम्। मोक्षप्रदत्वश्रुत्यैव तदावश्यकत्वसिद्धेः । पितरस्समुत्तिष्ठन्तीति । नहि मुक्तस्य पूर्वजन्मसु ये पितर आसन्, तेषां समुत्थानं वैकुण्ठेऽनेन वाक्येनोच्यते, अननुष्ठितोपायानां तेषां

शङ्केमहीति चेन्न ; ईदृशवाक्यानां विधूतपुण्यपापस्य स्वच्छन्दवृत्तौ तात्पर्यात् । अन्यथा महावाक्यविरोधात् । ननु, "एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" इति सविशेषणश्रवणादावर्तान्तरेष्वावृत्तिः शङ्क्येतेति चेन्न ; अहेतुकावृत्त्ययोगात् बहुश्रुतिविरोधात् विशेषको(णो?)क्तेश्च घोरत्वानुवादपरत्वेन सफलतयाऽन्यत्रावृत्तावौदासीन्यात् । अन्यथा उपबृंहणशतं च प्रकुप्येत् । गीयते च, 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥'' इति । "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥" इति [च?] ॥ एतत् सर्वमभिप्रेत्य सूत्रम्, "अनावृत्तिश्शब्दात्" इति ॥ इति पुनरावृत्तिप्रसङ्गपरिहारः ॥ ६८ ॥

विश्वैर्वैशेषिकैस्तैर्भवति विरहितो नाशितादृग्गुणत्वात्
जीवात्मा जन्मकाले घटवदिति यदि, स्यादिहाम्नायबाधः ।
दृष्टान्तः साध्यहीनः ; क इव निगमविल्लिप्सते मुक्तिमेतां
धीर्नित्येच्छादयस्तत्परिणतय इति स्याच्च हेतोरसिद्धिः ॥ ६९ ॥

---

व्री— ब्रह्मणाऽपि तत्र नयनायोगात् । पितृत्पादनं त्वशक्यम् स्वोत्पादितानां स्वपितृत्वाद्ययोगात् । अशक्यश्च मुक्तौ पितृत्वाद्यारोपः। अतः प्रकृतिमण्डले परमात्मा दशरथादिकमिव स्वयं बद्धजीवं पितृत्वादिभाजं कल्पयतीति । महावाक्यविरोधादिति यस्मिन् प्रकरणे विचार्यमाणं वाक्यमस्ति । आदित आरभ्य आन्तं तत्रत्यं वाक्यजातं महावाक्यमित्युच्यते । तद्विरोधात् । एतदर्थस्वीकारे पूर्वापरं बहु अनन्वितं स्यादित्यर्थः ।

ननु किमत्र बहुना । बालस्य प्रदीपकलिकाक्रीडयैव नगरदाहः । 'इमं मानवमावर्तम्' इत्यत्रत्यम् इममिति पदमेव पर्याप्तं पुनरावृत्तिसद्भावे इति शंकते नन्विति ॥ ६८ ॥

एवं स्वपक्षे मोक्ष उक्तः । अथैकेन श्लोकेन तार्किकपक्षम्, अनेकैश्च सांख्यपक्षं क्रमेण निरस्यति विश्वैरित्यादिना । वैशेषिकैरिति विशेषभूतैरित्यर्थः । तार्किकैः सामान्यगुणविशेषगुणरूपेण गुणद्वैविध्यमुक्तम् । सर्वद्रव्यसाधारणाः संख्यासंयोगविभागादयः सामान्यगुणाः । स्वाश्रयव्यवच्छेदोचितजातिविशेषयुक्तो गुणो विशेषगुण इति निष्कृष्टमुक्तमस्माभिर्वैशेषिक रसायने यथा । पृथिव्यादीनां रूपादयः, तथा आत्मनां ज्ञानेच्छाप्रयत्नादयो विशेषगुणाः। एषां देहमूलत्वात् तदुच्छेदे तदुच्छेदः, सर्वपुण्यपापोच्छेदाच्च पुनर्देहप्रसक्त्यभावात् न ज्ञानादेः प्रसक्तिः । अवान्तरप्रलयेषु धर्माधर्मसद्भावात् न सर्वविशेषगुणोच्छेदः । अतो मुक्तावेवायम् । तदापि आत्मनि पृथिव्यादिसर्वद्रव्यसंयोगादिसद्भावात् सर्वगुणोच्छेदायोगात् आत्मगताशेषविशेषगुणोच्छेदो मोक्ष इति विशेषपदम् । तत्रानुमानमपि तार्किकप्रयुक्तम्—आत्मा कदाचिदशेषविशेषगुणशून्यः अनित्यविशेषगुणवत्त्वात् आद्यक्षणावच्छिन्नघटवदिति । तदाह घटवदित्यन्तेन । नाशितादृग्गुणत्वात्= अनित्यविशेषगुणवत्त्वात् । अत्र तार्किकैः, भूषणमतस्य कौमारिलमतस्य च निरासेन 'तदत्यन्तविमोक्षोऽपवर्गः' इति गौतमाभिमतं मोक्षस्वरूपं स्थापयति । अदृष्टाभावोऽपवर्ग इत्येतावत एव पर्याप्तत्वेऽपि स्वमते परमतवैलक्षण्यव्यक्तये अशेषविशेषगुणाभाव इत्युच्यते। अत्र दोषं सिद्धान्त्याह स्यादिहेति । 'सर्वं ह पश्यः पश्यति' इत्येवं सर्वदर्शित्वसत्यसंकल्पत्वश्रुत्या बाधः। दृष्टान्तः घटादिः गुणशून्यत्वरूपसाध्यविकलः, अवयवातिरिक्तावयविवादिना तेन पिण्डावयवातिरिक्तद्रव्योत्पत्तिरुक्ता । तस्यान्यत्वे तत्र गुणः कथमिति शंकायां गुणोऽपि जायत इत्युक्तम् । जायमानं गुणं प्रति घटस्य समवायिकारणत्वात्

अथ वैशेषिकादिपठितं प्रस्तरप्रायमोक्षं पराचिकीर्षुः तदुक्तं प्रयोगमनुवदति जीवैरिति । जीवाः पार्थिवपरमाणव आकाशश्च कदाचिदशेषविशेषगुणशून्याः, अनित्यविशेषगुणवत्त्वात्, उत्पत्तिक्षणे घटवत्। न चात्र दृष्टान्तः साध्यविकल ; कार्यद्रव्यगुणाना तद्धर्म्युत्पत्त्यनन्तरभावित्वनियमात् । सहोत्पत्तौ उपादानोपादेयभावायोगात् । न च भाव समवायिकारणेन विना कश्चित् उत्पद्यते । ननु जीव सर्वदा विशेषगुणवान् आत्मत्वात् ईश्वरवत् इति प्रतिप्रयोग स्यात् । तन्न, निरीश्वरवादिनां दृष्टान्तासिद्धेः ।

भूषणस्य तु मुक्तिदशायां ज्ञानं कार्यमकार्यं वा ? आद्ये, करणसापेक्षत्वात् नश्वरत्वादिप्रसङ्गः । उत्तरत्र, इदानीमप्युपलभ्येत । एकदा चैकस्य ज्ञानद्वयमयुक्तम् । किंच नित्यज्ञानं मुक्तौ भासते न वा? आद्ये, स्वतो भानेऽपसिद्धान्त ; परतो भाने ज्ञानान्तरक्लृप्तिगौरवम ; तदपि कार्यमकार्यं वेति विकल्प दौःस्थ्यं च । उत्तरत्र निर्विषयं सविषयं वा ? नाद्य, तादृशस्यात्यनभ्युपगमात् । द्वितीये तु सर्वविषयं नियतविषयं वा ? आद्येऽनेकानादिसर्वज्ञवादप्रसङ्गः ॥ मुक्तिदशाया सर्वज्ञत्वं भवतु इति चेन्न, तथाऽपि तादृशत्वयन्तवादानङ्गीकारात् । नियतविषयत्वं तु ईश्वरज्ञानस्येव मुक्तज्ञानस्यापि नित्यस्य दुस्साधम्। सामग्रीभेदतो हि सर्वत्र धिया विषयनियम. । विषयश्च तस्य क ? आनन्द इति चेत्, स किं कार्योऽकार्यो वा ? नाद्यः, अनभ्युपगतेः, हेतुनिरूपणायोगाच्च । न द्वितीयः, अद्याप्युपलब्धिप्रसङ्गात् ॥

---

श्री— तत्समर्थनाय 'उत्पन्नं द्रव्यं क्षणमगुणं तिष्ठति' इत्युक्तम् । सिद्धान्ते अवयवातिरिक्तावयव्यभावात् पिण्डावयवगुणातिरिक्तस्य घटगुणस्यानावश्यकतया, आद्यक्षणे गुणो नेति न वक्तुं शक्यते । अतः साध्यवैकल्यमित्यर्थः । आत्मा मोक्षकाले शुभगुणविशिष्टः, उत्कृष्टपुरुषार्थवत्त्वात् । न च निगमविरोधः ; अत्रैव निगमस्यानुकूलत्वादित्याशयेनाऽऽह क इवेति । इष्टप्राप्त्यनिष्टनिवृत्त्योर्मध्ये इष्टप्राप्तेरेवात्यन्तमनुकूलत्वात् सा मुक्तौ भवति न वेति जिज्ञासमानमिन्द्रं प्रति प्रजापतिना तदस्तित्वबोधनादनेन त्वदनुमानं सत्प्रतिपक्षितम् । अत्रास्मदीयस्य प्रतिपक्षहेतोः प्राबल्यं श्रुत्यनुरोधित्वादिति भावः । असिद्धिरूपदोषमप्याह धीरिति । धर्मभूतज्ञानस्य द्रव्यस्य ज्ञानेच्छाप्रयत्नादयः परिणामा इत्यस्मन्मतम् । तत्र द्रव्यस्य अवस्थानां वा त्वदभिमतगुणत्वं नास्ति । द्रव्ये ध्वंसप्रतियोगित्वरूपम् अनित्यत्वं नास्ति । अवस्थाग्रहणे तद्वत्त्वं साक्षादात्मनि नास्ति । असत्संमतरीत्या हेतुप्रयोगे त्वन्मते असिद्धिः । तदा हेतुपदेनैव नित्यधर्मभूतज्ञानसद्भावावगमात् आत्मा विशेषरहित इति साधने बाधो विरोधश्च स्यादिति भावः ॥

जीवा इत्यादिना तार्किकपूर्वपक्षार्थविवरणम् । मध्ये विशेषगुणवत्त्वानुमानं भूषणमत कौमारिलमतञ्च निरस्य स्वमतं निगमयिष्यति, "अतः समस्तविशेषगुणशून्यात्मानुमानं निष्कम्पम्" इति । जलादिपरमाणुषु रूपादीनामपाकजत्वात् नित्यत्वमिति तन्मतम् ; अतः पार्थिवेति । भूषणस्येति । भूषणाख्योऽयं नित्यसुखाभिव्यक्तिर्मुक्ताविति मन्यते । तत्र ज्ञानं ज्ञेयञ्च नित्यं न वेति विमर्शः । एकदा चेति । नित्यस्यानुभवस्य संसारिदशायां सर्वे लौकिकज्ञानानि न जायेरन्, ज्ञानद्वययौगपद्यायोगादित्यर्थः। स्थितोऽप्यनुभवो नाभिव्यज्यत इति मतिनिरासाय विकल्पयति किञ्चेति । तदपि— ज्ञानान्तरमपि । उत्तरत्र—अकार्यमिति पक्षे । तादृशेति । अनादिसर्वज्ञा अनेके मुक्तिस्थाने सन्ति नित्यसूरय इति वादो न भूषणेनाङ्गीक्रियते । बद्धस्य मुक्तिकाले सार्वज्ञ्यमिति चेत्, तस्य नानादित्वम्। धर्मभूतज्ञानमनादि मुक्तौ किञ्चिद्रूपेण परिणमत इति च न भूषणस्येष्टमित्यर्थः। सुखाभिव्यक्तेरेव तदुक्तत्वात् सुखमेव विषय इति पक्षमाह आनन्द इति । अनुभवस्य नित्यत्वानित्यत्वविचारः

विषयविषयित्वानुपपत्त्याऽनुपलब्धिरिति चेत्; तन्न, [निर्विषयानुभवाप्रसिद्धेः। विषयविषयित्वञ्च ?] किं तयोः स्वरूपम्, अतिरिक्तं वा? आद्ये, अनाद्युपलब्धिप्रसङ्गः। उत्तरत्र, भावस्योत्पन्नस्य ध्वंसित्वं स्यात्॥ उत्पन्नोऽपि कश्चिद्भावो न नश्यतीति चेन्न; अदर्शनात् कल्पकाभावात्॥ "आनन्दं ब्रह्मणो रूपं तच्च मोक्षेऽभिव्यज्यते" इति श्रुत्या तथाऽङ्गीकुर्म इति चेन्न; अयमानन्दशब्दो जीवविषयः परविषयो वा इत्यनिर्धारणात्। स्वानन्दश्च साक्षात्क्रियमाणः साधारो निराधारो वा भाति। पूर्वत्र आनन्दमात्रविषयत्वव्याघातः। परत्र 'अहं सुखी' इति भानाभावात् आनन्दाभिव्यक्त्याऽपि न पुरुषार्थभोक्तृत्वसिद्धिः। सुखादेः स्वसमवेततयाऽनुभवो हि भोगः इत्यास्तामेतत्।

यदि कश्चित् **कौमारिल** एवं प्रयुञ्जीत—देवदत्तमुक्तिकाल· एतज्ज्ञानवान् कालत्वादिति, तस्य देवदत्तसुषुप्त्यादिकालैरनैकान्त्यम्। तेषामपि पक्षीकरणे तदातनज्ञानस्य निर्विषयत्वसविषयत्वादिविकल्पक्षोभः। अत एव, "निजं यत्त्वात्मचैतन्यमानन्दोऽभ्यक्ष्यते च यः। यच्च नित्यविभुत्वादि तेनाऽऽत्मा नैव मुच्यते॥ मनःकरणकेनाऽऽत्मा प्रत्यक्षेण प्रतीयते।" इत्युपदेशोऽप्यश्रद्धेयः।

यच्च कैश्चित् चिन्मात्रस्वरूप आत्मा चेतयितृत्वादिरहितः प्रकाशत इत्यनुशिष्यते, तदपि निष्प्रमाणकम्—

अतः समस्तविशेषगुणशून्यात्मानुमानं निष्कम्पमिति।

तत्राह **स्यादिति**। यद्यत्र, कदाचित् जीव. स्वधर्मभूतज्ञानरहित इति साध्यम्, तदा तन्नित्यत्वश्रुतिविरोधः। अथ तद्विकारविशेषरहित इति, तत्राव्यवहिताधारत्वनिषेधे सिद्धसाधनम्। व्यवहिताधारत्व निषेधे तु शास्त्रबाधः, स्वमतेन साध्याप्रसिद्धिश्च। उत्पत्त्यवस्थघटदृष्टान्तश्च साध्यविकल इत्याह **दृष्टान्त इति**। प्राक् असद्व्योत्पत्तेर्निरस्तत्वेन आश्रयहान्या तन्निदर्शनायोगात्। नित्यस्य तु त्रिगुणस्य द्रव्यस्य नित्यं यत्किञ्चिद्विशेषगुणवत्त्वादिति शेषः॥ अनुमानस्य बाधकतर्कमाह **क इवेति**। अत्रेदमाकूतम्—केवलं दुःखनिवृत्त्यर्थो न क्वचिदपि कस्य चिदपि प्रवृत्तिर्दृश्यते। उत्तरसुखमभिसन्धायैव सर्वेषां दुःखनिरासप्रवृत्तिरिति लोकवादविदः। अन्यथाऽपि ब्रूमः—सुषुप्त्यवस्थजीवमुपदिष्टवति प्रजापताविन्द्रः प्राह—

---

टी— प्राकृतः; सुखस्य तद्विचार इह। सुखस्यानुभवस्य च स्थितत्वेऽपि तयोरिदानीं न विषयविषयिभाव इति स शंकते विषयेति। तन्नेत्येतदनन्तरं, 'निर्विषयानुभवाप्रसिद्धेः; विषयविषयित्वञ्च' इत्येतावद् भ्रष्टमिति भाति। तन्नेत्यत्र नञ् वा न स्यात्। तयोः स्वरूपम् = विषयविषय्यभिन्नम्। इति श्रुत्येति। चतुष्षष्टितमश्लोकवृत्तौ एतद्वाक्यं प्रक्षिप्तम्; स्ववाक्यत्वे श्रुतिस्मृत्युदाहरणमध्यनिवेशायोगात्। श्रुतिवाक्यत्वे पूर्वम् इतिशब्दायोगात्; उत्तरत्र इतिचेति चशब्दाभावात्। अस्याः श्रुतेरप्रसिद्धत्वाच्च। अत्र स्थितं दृष्ट्वा तत्रापि प्रक्षेपः कृतः स्यादिति। साधार इति। आधारेण सह साक्षात्कारो वा, आधारं विना वेत्यर्थः। एतद्ज्ञानवान्—देवदत्तसमवेतज्ञानवान्। अत एव—ज्ञानस्य निर्विषयकत्वसविषयकत्वानियतविषयकत्वनियतविषयकत्वविकल्पक्षोभादेवाश्रद्धेय इति। स्वमतपरिशोधनाय शिष्टमतनिरासमपि संगृह्णाति यच्चेति। कैश्चित् = सांख्याद्वैतिप्रभृतिभिः।

उक्ततार्किकमतनिरासफांशमवतारयति तत्राहेति। तद्विकारविशेषेति। तदीयज्ञानत्वेच्छात्वाद्यवस्थाविशेषेत्यर्थः। सिद्धसाधनम्; आत्मन्यवस्थानां साक्षादभावात्। साध्याप्रसिद्धिः; तार्किकैः ज्ञानगतविकारानिष्टेः। साध्यहीनत्वसाधकं हेतुं पूरयति प्रागित्यादिना शेष इत्यन्तेन।

"नाह खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति; नो एवेमानि भूतानि; विनाशमेवापीतो भवति; नाहमत्र भोग्यं पश्यामि" इति। ततः प्रजापतिरपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तगुणकं ब्रह्मसमं मुक्तमुपदिदेश। अतः केवलं दुःखनिवृत्तिर्न मुक्तिरिति जानन् कथं त्वदुक्तमुक्तिकामः प्रवर्त्स्यतीति।

हेतावपि विकल्पाक्षमत्वं मत्वाऽऽह धीरिति। अनित्यविशेषगुणवत्त्वादिति वदता किं धीस्वरूपं तत्परिणतयो वा आत्मगुणत्वेन कथ्यन्ते, स्वसिद्धान्तदृष्ट्या पुरुषगुणभूतागन्तुकचैतन्यादयो वा? तत्राद्यस्य दूषणम्— धीर्नित्येति। अनित्यविशेषगुणवत्त्वमसिद्धमित्यर्थः। द्वितीये तु आत्मनस्तद्वत्त्वं नेति। मतद्वयेऽपि स्वरूपासिद्धिमाह इच्छादय इति। तृतीयेऽपि त्वयन्तविद्भिरनङ्गीकारात् असिद्धिस्सुगमेति तस्य पृथगनुद्धारः।

एवं दुःखसन्ततिरत्यन्तमुच्छिद्यते सन्ततित्वात् प्रदीपसन्ततिवत् इत्यनुमानमपि निरस्तम्; आगमसिद्धाभिर्नित्यसन्ततिभिरनैकान्त्यात्, प्रदीपावयविसन्ततेश्चास्मान् प्रति निदर्शनायोगात्, अवस्थासन्ततेश्चोच्छेदाभावात् दीपत्वावस्थासन्ततिवदिति त्वया निदर्शयितुमयुक्तत्वादिति॥

इति पाषाणवन्मोक्षभङ्गः॥ ६९॥

**आत्मा चिन्मात्ररूपो विकृतिमति जडे बिम्बितो बुद्धितत्त्वे;**
**तच्चास्मिन्; तद्विवेकाग्रहणविरचितः पुंसि संसारमोहः।**
**अन्त्या विज्ञानवृत्तिः प्रकृतिपुरुषयोरन्यतां गाहमाना**
**तादृक्संसारभेत्री; पुरुष इह सदा मुक्त एवेति साङ्ख्याः॥ ७०॥**

---

टी— नाह खल्विति। नेति पृथक्पदम्। अहेत्यव्ययं खलुना सह। अयमिति। सुषुप्त इत्यर्थः। संप्रतीति= सम्यगित्यर्थः। धीस्वरूपमिति। कथ्यत इति विपरिणतस्यापकर्षः। सिद्धान्ते दुःखसंतत्यत्यन्तोच्छेदस्येष्टत्वेऽपि अनुमानस्याभासत्वमाह एवमिति। नित्यसन्ततीति। प्रकृतिसततपरिणामधर्मभूतज्ञानसततपरिणामादिः। प्रदीपसंततीति अवयविसन्ततिर्वा प्रदीपत्वरूपावस्थासंततिर्वेति विकल्प्य दृष्टान्तदूषणं प्रदीपेति॥ ६९॥

तार्किकमोक्षो निरस्तः, सांख्यमोक्षं निरसितुं तन्मतमेकेन श्लोकेनानुवदति आत्मेति। मूलप्रकृतिरेका, जीवा अनेके इति तत्त्वद्वयं तदभ्युपगतम्। प्रकृतेर्महदहङ्कारादिरूपेण त्रयोविंशतिधा परिणामः। आहत्य पञ्चविंशतिस्तत्त्वानि। प्रथमविकृतिर्महत्तत्त्वमेव बुद्धिरित्युच्यते। जीवाश्चैतन्यमात्रस्वरूपाः स्वयंप्रकाशाः। प्रकृत्यादयः स्वयम्प्रकाशत्वाभावाज्जडा इत्युच्यन्ते। परं तु तत् बुद्धितत्त्वमति स्वच्छम्। अतः प्रकृतिपरिणामभूते विकृतिमति—विविधविक्रियास्पदे जडेऽपि स्वच्छे बुद्धितत्त्वे चैतन्यमात्रस्वरूप आत्मा—जीवः सर्वः प्रतिबिम्बितो भवति। तच्च—बुद्धितत्त्वञ्च अस्मिन् आत्मनि प्रतिबिम्बितम्। तयोर्वस्तुतो विवेके—भेदे सत्यपि तदग्रहणात्, प्रतिबिम्बस्थले आधारगतांशानां प्रतिबिम्बे आरोपदर्शनाच्च बुद्धितत्त्वगतविकाराणामात्मनि आरोपः, आत्मगतस्य चेतनरूपत्वस्य बुद्धौ चारोपः। विवेकपदं भेदमात्रार्थम्, ग्रहणपदसत्त्वात्। एषा बुद्धिगतधर्माणां स्वगततयोपलब्धिरात्मनः संसारमोह इत्युच्यते। वस्तुतस्तद्धर्माणामत्राभावादसंसारित्वमेव। एवं विवेकाग्रहमूलकत्वादस्यैतन्निवृत्तये विवेकग्रहः प्रकृतिपुरुषभेदज्ञानमेव संपाद्यम्। इदं ज्ञानं बुद्धौ जायमानं वृत्तिज्ञानमित्युच्यते—इदं प्रकृतिपुरुषयोर्मिथो भेदग्राहि सत्, अन्त्यं—वैराग्यादिसंपत्त्यनन्तरभवं तादृक्संसारस्य—मोहरूपसंसारस्य निवर्तकं भवति। एवं बुद्धिगतविकाराणामात्मनि आरोपेऽपि वस्तुतो निर्विकारत्वात्। नित्यमुक्त एव स इति सांख्यमतम्।

अथ साङ्ख्योक्त चिदचिद्विवेक ससार तन्निवृत्तिप्रकार च सगृह्णाति आत्मेति । चिन्मात्ररूप इति पुरुषस्वरूपशोधनम् । नासावचित्स्वभाव , न च ज्ञातेत्यर्थ । **विकृतिमति** जड इति अचेतनधर्माणा उपलक्षणम् । एव हि विविच्यते, "मूलप्रकृतिरविकृतिर्महदाद्या प्रकृतिविकृतय सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृति पुरुष ॥", "त्रिगुणमविवेकि विषय सामान्यमचेतनं प्रसवधर्मि । व्यक्त तथा प्रधान तद्विपरीत तथा च पुमान् ॥" इति । **विभ्रित** इत्यादिना प्रकृतिपुरुषयोरितरेतरधर्माध्यासे हेतुविशेष उच्यते । अप्रकाशमाने कथ तद्धर्माध्यास इत्यत्रोक्तम् **तचास्मिन्निति** । स चाध्यास एव कथ्यते—"तस्मात् तत्सयोगात् अचेतनं चेतनावदिव लिङ्गम्। गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीन ॥" इति । फलितमाह **तदिति** । **विवेकः** भेद । **तदग्रहण**शब्देन सामग्र्येकदेशोपादानम् ॥ "ज्ञानेन चापवर्गो विपर्ययात् तद्विपर्यास (विपर्ययादिष्यते बन्ध ?)। वैराग्यात् प्रकृतिलय ससारो भवति राजसात् रागात् ॥" इति कारणान्तरमपि हि सगृह्यते । कृपाणप्रतिफलितमुखमलिनतान्यायसूचनाय **मोहश**ब्द । अस्य किं निवर्तकमित्यत्राह **अन्त्येति**। **विज्ञानवृत्तिः** विज्ञानरूपान्त करणवृत्ति , विज्ञानस्य वा बुद्धि तत्त्वस्य विवेकख्यातिरूपा परिणति । "विवेकख्यातिपर्यन्तमज्ञान चित्तचेष्टितम् (ज्ञेय प्रकृतिचेष्टितम् ?)",

---

श्रु॰—आत्मा चिन्मात्ररूप इति। त्रिगुणमिति। गुणत्रयात्मकमविवेकिविषय अविवेकिना(?) भोग्यभूतम् सामान्य—सर्वचेतनसाधारणम् । अचेतनम् जडम् । प्रसवधर्मि—कार्योत्पादनधर्मवत् । तद्विपरीत उक्तप्रकृत्याकाररहित नित्यत्वविभुत्वाभ्या प्रकृतितुल्यश्चेत्यर्थ । विपर्ययात् तद्विपर्यास इति । भ्रान्तिरूपात् ज्ञानात् विपर्यास अपवर्गविपर्यास , ससार इत्यर्थ । विज्ञानवृत्तिरिति पद विज्ञान शब्दस्य विविक्त ज्ञान विज्ञानमिति विवेकपरत्वमङ्गीकृत्य समानाधिकरणसमासपरतया व्याचष्टे—विज्ञानरूपेति । कस्य वृत्तिरित्यपेक्षाया अन्त करणस्येत्यध्याहार इति सूचितम् । अन्त करणवृत्तिरिति । अध्याहारानौचित्यात् विज्ञानशब्दस्य बुद्धितत्त्वपरत्वप्रसिद्धेश्च षष्ठीसमासाश्रयणेन व्याचष्टे—विज्ञानस्य वेति। विवेकज्ञान(ख्याति)पर्यन्तमज्ञान चित्तचेष्टितमिति। अज्ञान विवेकज्ञानादन्यत् तदुपयुक्त श्रवणादिक चित्तपरिणतिरित्यर्थ । एव तत्त्वाभ्यासादिति । श्रवणमननध्यानरूपात् नाहमस्मि [प्रकृति ?] अपरिशेष समस्त न मे = मदीय नेति[मयि अहत्व नेति च?] केवल केवलात्मविषय विपर्ययात्मकत्वात्

वी॰— प्रकृतिविकृतय —प्रकृतयश्च ता विकृतयश्च । षोडशक —इन्द्रियादिषोडशतत्त्वसमुदाय । त्रिगुण—गुणत्रयात्मकम् । अविवेकि = गुणत्रयस्य सम्भूयकारित्वात् पृथग्भावानर्हम् । इद पृथग्विशेषणम् । विषय ज्ञेयम्, न तु पुरुषवत् ज्ञातृस्वरूपम् । सामान्य-सर्वपुरुषसाधारणम् । प्रसवधर्मि-अनेकरूपेण परिणामि । व्यक्त-महदादि । प्रधानम्-अव्यक्त प्रकृतिरपि तथा = त्रिगुणत्वादिमत् । तद्विपरीत —त्रैगुण्यादिरहित । तथा च—अनादित्वानाशित्वादिना प्रकृतितुल्यश्च जीव । लिङ्ग—लिङ्गशरीरम् । गुणकर्तृत्वे—सत्त्वादिगुणमयवस्तुगते कर्तृत्वे सति । 'विपर्ययात् तद्विपर्यास' इत्यत्र, 'विपर्ययादिष्यते बन्ध ' इति पाठ्यम् । धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणाम् अष्टाना कार्यमत्र कथ्यते । विपर्ययात्—अज्ञानात् बन्ध इत्यर्थ । 'विपर्ययात् तद्विपर्यास ' इति तु अनन्तरश्लोकचतुर्थपाद । अनैश्वर्यात् इच्छाविघात इति तदर्थ । प्रकृतिलय इति भोग विना प्रकृतौ तत्कार्येषु भूतपर्यन्तेषु लयोऽपि बन्धविशेष एव तत्तदुचितोपायसाध्य । ससार —सुखदु खभोगरूप । कारणान्तर = वैराग्य ज्ञानसहकारि । 'अज्ञान चित्तचेष्टितम्' इत्यत्रान्य पाठ तत्त्वकौमुद्याम्,

"एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् । अविपर्ययात् विशुद्धं केवलमुत्पद्यते ज्ञानम् । तेन निवृत्तप्रसवामर्थवशात् सप्तरूपविनिवृत्ताम् । प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः सुस्थः (स्वच्छः?) ॥ प्रकृतेः सुकुमारतरं न किंचिदस्तीति मे मतिर्भवति ॥ *या दृष्टाऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्य* ॥" इति । स्फटिकरागनिवृत्तिन्यायसूचनाय **तादृक्**शब्दः । यद्यपि संसारः पुरुषस्याऽऽरोपितः, तथाऽपि तद्भ्रमो दुस्त्यज इत्यत्राह **पुरुष** इति । इह—संसारे वर्तमानेऽपि, पुरुषस्तु *भ्रान्त्याऽस्पर्शनाघ्रातः* सर्वदा पुष्करपलाशवन्निर्लेप इत्यर्थः । तथा चाहुः, "तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित् । संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥" इति । **इति समीक्षोक्तसंसाराद्यनुवादः ॥ ७० ॥**

**नीरूपे बिम्बितत्वं क नु भवति ; कथं रूपशून्यस्य तत् स्यात् ;**
**निर्लेपे संसृतिः का ; कथमतिविशदो निष्क्रियश्चैष मुह्येत् ।**
**नित्यं वा किं न मुह्येत् उपधिभिरितरैः ; वेत्तु भेदं कथं वा ;**
**को वा मोक्षोऽद्य पुंसः ; प्रथममपि न खल्वस्य दुःखादिगन्धः ॥ ७१ ॥**

एवमनूदितेष्वर्थेषु चिन्मात्ररूपत्वस्य प्रागेव ज्ञातृत्वसाधनेन निरस्तत्वात् तदनन्तरोक्तं बिम्बितत्वं दुदूषयिषुः, तत् मुख्यममुख्यं वेति विकल्पं भावयन् मुख्यं दूषयति **नीरूप** इति॥ [मुख?]मुकुरादीनां च रूपवत्त्वनियमात् आत्मान्तःकरणयोस्तदुभयस्थानीयत्वं न घटत इति वाक्यद्वयाभिप्रायः ॥ स्वच्छक्ति (चिच्छक्तिः?) रूपः संसरन् आत्मा (पुरुषः) स्वभोगार्थं स्वनिष्ठां बुद्धिं व्यनक्ति । तेनाबोद्धाऽपि सन् बोद्धेव भवति । बुद्धिरपि सलिलादिवत् स्वच्छस्वभावतया स्वनिष्ठां चिच्छक्तिं व्यनक्ति। तेन स्वयमबोद्ध्री सती बोद्ध्री भवति।

---

७०— विशुद्धज्ञानमुत्पद्यत इत्यर्थः । तेनेति । तेन ज्ञानेन निवृत्तकार्योत्पादनशक्तिकाम् अत एव महदहङ्कारतन्मात्रात्मक(?)सप्तरूपविनिवृत्तां पुरुषः पश्यतीत्यर्थः ॥ ७० ॥

७१—"यथाऽऽहुः विवेकख्यातिपर्यन्तं ज्ञेयं प्रकृतिचेष्टितम् इति" इति तत्रानुवादात् । तत्त्वाभ्यासात् = साक्षात्कारपर्यन्तं दीर्घकालनिरन्तरसाधितज्ञानाऽऽवृत्तिबलात् । सप्तरूपपदेन पूर्वोक्ते भावाष्टके ज्ञानातिरिक्तस्याज्ञानादिसप्तकस्य ग्रहणम् । तदन्तर्गतं वैराग्यं परिमिताकारम् । तदपि त्याज्यमेव । स्फटिकरागेति । रक्तवर्णस्य जपाकुसुमस्थस्याऽऽरोपमात्रं स्फटिके, तथेहात्मनि बुद्धिधर्माणामिति ॥

अत्र संसारकारणं संसारः मोक्षोपायः मोक्ष इति सर्वं दुरुपपादमित्याह नीरूपे इति । बुद्धेर्नीरूपत्वात् तत्र कस्यचित् प्रतिबिम्बनं दुर्वचम् । दर्पणादौ सरूप एव प्रतिबिम्बनसंभवादित्यर्थः । कथमित्यादि । *आत्मनश्च नीरूपत्वात् कुत्रापि प्रतिबिम्बनं न भवति ।* प्रतिबिम्बनं हि चाक्षुषरश्मिप्रतिघातकार्यम् ; बिम्बस्य प्रतिबिम्बनाधारस्य चक्षुर्ग्राह्यत्व एव तत् स्यात्—चक्षुर्ग्राह्यत्वञ्च न नीरूपद्रव्यस्येति। निर्लेपे संसृतिः का जीवस्य संसारित्वे सति हि मुक्तये प्रवृत्तिः । स तु पुष्करपलाशवन्निर्लेपः कर्तृत्वधर्माधर्मभोक्तृत्वरहितः । *तद्वत्त्वं किल संसारित्वम् । तदभावे तत्सद्भावभ्रमोह एव संसार इति चेत्*— निर्विकारे मोहरूपविकारस्य कथं प्रसक्तिः । अतिविशदत्वात् = स्वयंप्रकाशत्वात् अज्ञातधर्मान्तराभावाच्च न मोहः । ननु संनिधानमेव मोहः पुरुषस्य प्रकृतिमहदाद्युपाधीनाञ्चेति चेत्—इतरैः उक्तैरुपधिभिः—संनिकृष्टवस्तुभिः संनिधानं सर्वदेवेति सर्वदा मोह एव स्यात् । न मोक्षः । किञ्च प्रकृतिपुरुषविवेकवेदने सति हि मोक्षः । वेदनं कस्य ? आत्मनो नैतत् . निर्विकारत्वादिति ।

एतावतैव त्रिम्बितत्ववाचोयुक्तिरित्यमुख्यपक्षेऽपि, 'संसरन्नात्मेति विशेषितम्। न तावदिदं निरर्थकम्; वाक्ये अनन्वयापत्तेः। मुक्तबुद्धयोरपि परस्पराभिव्यञ्जकत्वप्रसङ्गाच्च। सार्थकत्वे निर्लेपत्वसमर्थनविरोधः' इत्यभिप्रायेण, आह **निर्लेप** इति। एतेन शास्त्रारम्भहेतुभूता मुमुक्षा दुःखत्रयाभि(प?)घातकजिज्ञासा च न संभवतीत्यपि सूच्यते। संसृतिहेतुं भेदाग्रहं तन्मूलं भ्रममपि निरस्यति **कथ**मिति। चिद्रूपस्यात्मनो भेदः स्वरूपं धर्मो वा? आद्ये चिद्रूपतयैवातिविशदो भातीति कथं भेदस्याग्रहः; तस्य तत्त्वात्। द्वितीये ज्ञातृत्व कर्तृत्वभोक्तृत्वादिधर्मस्त्वयैवात्मन्यपोढ इति न तादृशधर्माग्रहः। प्रकृतिपुरुषसाधारणयोस्तु नित्यत्वविमुत्वयोरग्रहो न ते भेदाग्रहः॥ कार्यप्रकृतौ तयोरभावात् वैधर्म्यरूपत्वमिति चेन्न; कार्यकारणप्रकृत्योः तादात्म्याभ्युपगमात् कार्येऽपि तयोरङ्गीकर्तव्यत्वात्। अन्यथा कथं नासत्कार्यवादः? धर्मधर्मितादात्म्यवादे च धर्मिभाने धर्मोऽपि भायादेवेति कथंचिदपि न भेदाग्रहसंभवः। अत एवात्मा न मुह्येत्! **निष्क्रियत्वाच्च**। ज्ञानमेव क्रियेति भीत्या जहतः कथं तद्विशेषग्रहः? अमुह्यन्नपि अन्यमोहं स्वस्मिन्नध्यवस्यतीति चेत्, तदिदं शतमदित्सतः शतार्द्धद्वयदानमिति। ननु विकृतिविशेषवदुपाधिसंनिधानमेवास्य मोहोऽस्त्वित्यत्राह **नित्य**मिति। ईदृशोपाधिसंनिधानस्य कालान्तरेऽपि सुलभत्वात् कदा मुक्तिः॥ निरधिकारप्रकृतिदशायामिति चेन्न, सर्वनित्यत्ववादिभिरधिकारस्यापि ध्वंसपरिग्रहायोगात्। अनभिव्यक्तिश्च तस्य दुर्वचा,अभिव्यक्तेरपि निवृत्त्यसंभवादेवेति। मोहनिवृत्त्यर्थो भेदग्रहश्च न स्यादित्याह **वेत्त्वि**ति। प्रकृतिधर्माध्यासश्च प्रत्यूढ इति भावः॥ क्रियावती प्रकृतिरेव चिच्छायापत्तिमती वेत्री भवतीति चेन्न, छायापत्तेर्निरस्तत्वात्। पुरुषस्य भेदग्रहाभावे च स्ववाक्यविरोधः; यदाह, "प्रकृतिं पश्यति पुरुषः", "दृष्टा मयेत्युपेक्षते एकः" इत्यादि॥ भाक्तमिदं द्रष्टृत्वमिति चेत्, तर्हि प्रागिव भेदाग्रह एव। अस्तु वा प्रकृतिरनुपकारिणः पुंस उपकारिणी, तदर्थं भेदग्राहिणी; तथाऽप्यनया तस्य न किंचित् उपकर्तव्यमित्याह **को** वेति। संसारनिवृत्तिरिति चेत्, तत्राह **प्रथम**मिति। पूर्वमित्यर्थः। मा भूदुपकर्तव्यम्, का हानिरिति चेत्, "तस्यार्थमपार्थकं चरति", "पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य", "कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति" इति स्वोक्तहानिः॥ "रूपैः सप्तभिरेवं( तैः) बध्नात्यात्मानमात्मना प्रकृतिः। सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण॥" इत्यप्युक्तमिति चेत्— तथाऽपि स्वोक्तहानिरेव। **पुरुषार्थं प्रती**त्यपि व्यर्थं वचः। सृष्टिप्रलयबन्धमोक्षादयश्च स्वन्मते कथं पौर्वापर्यं भजेरन्? सर्वनित्यत्ववादिनः तत्तद्धेतुभूतगुणवैषम्यादेरपि क्रमभावित्वायोगादिति॥ ७१॥

---

पु०— नीरूप इति। तस्य तत्त्वात्—भेदस्य स्वरूपत्वादित्यर्थः। बध्नात्यात्मानमात्मना स्वात्मानं स्वयमेव बध्नातीत्यर्थः। सैवेति। सप्तरूपेण सन्धि(न्दि?)ता प्रकृतिरेव पुरुषप्रयोजनं प्रति अव्यक्तैकरूपा स्वात्मानं मोचयतीत्यर्थः॥ ७१॥

श्री— दकुच्छन्तीत्यादिना अमुख्यपक्षोक्तिः। अमुख्यपक्षेऽपीत्यस्य आहेत्यत्रान्वयः। उक्तमिति। अमुख्यपक्षोक्तिमध्ये इति शेषः। अभि(प?)घातकजिज्ञासा—दुःखत्रयापघातकविषयकजिज्ञासा। तथा च तत्कारिका, "जिज्ञासा तदपघातके हेतौ" इति॥ ७१॥

**व्यापिन्येकाऽपि सांख्यैः प्रकृतिरभिहिता ; सर्वसाधारणी सा ;**
**व्याप्ता जीवाश्च सर्वे ; प्रकृतिपरिणतिर्भोग एषामभीष्टः ।**
**सर्वे सर्वस्य भोगाः स्युरिह तत इमे संनिधानादिसाम्यात्**
**बुद्धीच्छाद्यं च सर्वं प्रकृतिगतम् ; अतो न व्यवस्था ततोऽपि ॥ ७२ ॥**

अत्र, "**नित्यं वा**" इति वाक्ये बद्धमुक्तव्यवस्था न स्यादित्युक्तम् । अथ, "जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च । पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥" इति पुरुषबहुत्वसाधकतयोक्ता च व्यवस्था न सिध्यतीत्याह **व्यापिनीति** ॥ **एकत्वं** सत्त्वरजस्तमोरूपद्रव्यसङ्घातात्मकतया । शेषं तु पूर्वार्धे सूहम् । ततः किमित्यत्राह **सर्वे** इति । **इमे** *प्रत्यक्षानुमानागमैः सर्वेषामात्मसाक्षिकं प्रतिनियततया* प्रख्याता इत्यर्थः । व्यवस्थापकानुपपत्तिमात्रे हेतुमाह **संनिधानेति** । स्वरूपसंनिधिस्तावत् सर्वत्र सर्वेषां समः । तद्विशेषो दुर्वचः ॥ विशेषवतां संनिधिरेव **संनिधिविशेष** इति चेन्न, औलूक्यपठित-विशेषस्यानादरात् । अङ्गीकारेऽपि तस्य भोगहेतुत्वाभावेन व्यवस्थापकत्वायोगात् । विहितनिषिद्धजनिता दृष्टभेदैरेव हि भोगव्यवस्था । अन्यथा निर्निमित्तभोगवादप्रसङ्गात् ॥ अस्तु तर्हि तादृशनिमित्तोपश्लेषात् *व्यवस्था ॥ मैवम् ; निष्क्रियस्य ज्ञानचिकीर्षाप्रयत्नानभ्युपगमेन कर्तृत्वाभावव्यवस्थापनात् ।* अकर्तुश्च न क्रियाजन्यादृष्टाश्रयत्वं तत्फलभोक्तृत्वं वा समस्ति ।

श्लो— अस्वधर्मसमानीतैः अन्यनिष्ठैरुपाधिभिः । यदि लिप्येत यः कश्चित्, न लिप्येरन् कथं परे ? ॥
प्रकृत्यंशगतैर्धर्मैर्यदि तादृक्व्यवस्थितिः ।, अजागलस्तनप्रायः पुमान् किमिति कल्प्यते ॥
तप्तायःपिण्डनीतिश्च नोदाहर्तुमिह क्षमा । तत्र संसर्गिसंसर्गभेदात् सर्वोपपत्तितः ॥
न सत् प्रच्यवते यस्य नासदात्मानमृच्छति । तस्य बन्धश्च मोक्षश्च कथं न सह तिष्ठतः ॥

---

*प्रौ*— अयःपिण्डलोष्टादीनां वह्निसंसर्गाविशेषेऽपि अयःपिण्ड एव वह्निबुद्धिः, न लोष्टादिषु; तद्वत् प्रकृतिसंनिध्यविशेषेऽपि व्यवस्था भविष्यतीत्यत्राह—तप्तायःपिण्डेति । संसर्गिणामयःपिण्ड-लोष्टादीनामन्योन्यविशेषात् तत्प्रयुक्तसंसर्गविशेषाच्च व्यवस्थोपपत्तिः, नात्र तथेति भावः । प्रकृति-

श्री— बद्धमुक्तव्यवस्थाभंगः स्यादित्युक्तम् ; पुरुषबहुत्वस्थापकभोगव्यवस्थाभंगश्च सांख्यमते स्यादित्युच्यते व्यापिनीति । अपिशब्दः पूर्ववाक्यार्थसमुच्चये । व्यापित्वैकत्वविशिष्टा प्रकृतिः । अतः सर्वजीवसाधारणी । धर्माधर्मसुखदुःखज्ञानादिः सर्वः प्रकृतिपरिणामभूतबुद्धिद्रव्यगतत्वात् प्रकृतिपरिणाम एव ; न तु जीवधर्मः इति प्रकृतिपरिणतिरूपो भोग एव एषां = सांख्यानामिष्टः । तद्गतभोगमादाय एकस्य जीवस्य यथा, तथा सर्वस्यापि भोगित्वकल्पना भवितुमर्हति । अतो भोगव्यवस्था न स्यात् । ननु यो ज्ञानेच्छाकृतिमान् स एव भुञ्जीतेति चेत्—बुद्धीच्छादिकमपि महत्तत्त्वनिष्ठमेव हि सांख्यानाम् ॥

औलूक्येति । औलूक्यपठितविशेषः सप्तपदार्थ्यां षष्ठः परमाण्वात्मादिगतः मिथो व्यावर्तकतया कल्पितः । स नैतदिष्टः । पुमान् किमिति कल्प्यते । कर्तृत्वभोक्तृत्वादिकं सर्वं बुद्धेरेव चेत्, तत् तस्य स्वाभाविकमित्येवेष्यताम्, किं जीवैः । तस्याश्चैतन्यं नेति चेत्—प्रकृतिपरिणामत्वं परित्यज्य चेतनत्वञ्चेष्यताम् ; मा भूत् बुद्धितत्त्वम् । अजागलेति । बुद्धेरेवात्मत्वस्यापि स्वीकार्यत्वादिति भावः ।

तदेतत् सर्वमभिप्रेत्याह बुद्धीति । प्रकृतिगतमित्यनेन बाह्यगतत्वं मूलप्रकृतौ नित्यस्थितत्वं चाभिसंहितम् ॥ इति सांख्यसंसारमोक्षादिनिरासः ॥ ७२ ॥

**मुक्तिः प्राणाक्षदेहादिभिरुपधिभिरत्यन्तविश्लेषरूपा**
**जीवद्भावोऽपि तैस्सङ्गम इति विहतेर्जीवतस्सा कथं स्यात् ।**
**आपस्तम्बादयश्च श्रुतिगतिभिरिमां युक्तिमिच्छ व्युदासुः**
**जीवन्मुक्तादिशब्दः क्वचिदुपचरितस्तत्समावस्थयैव ॥ ७३ ॥**

अथ मुख्यामुख्यप्रयोगानभिज्ञकल्पितां जीवन्मुक्तिं दूषयति मुक्तिरिति ॥ यदि कतिपयनिवृत्तिमात्रे मुक्तिशब्दः, तदाऽतिप्रसङ्ग इति भावः । नित्यसिद्धस्य पुरुषस्य जीवनमपि ह्युपाधिविशेषसंबन्ध इत्याह जीवद्भाव इति । फलितमाह विहतेरिति । अत्र महर्षिवाक्यविरोधमप्याह—आपस्तम्बादय इति। प्रागेवैतत् प्रदर्शितम्। "अमृत इह भवति", "जीवन्मुक्ता भवन्ति" इत्यादेः का गतिरित्यत्राह जीवन्मुक्तादिशब्द इति। श्रुत्यादिष्वन्यथागत्याभुपचारः स्वीकृत इति भावः॥ इति जीवन्मुक्तिभङ्गः॥७३॥

**चन्द्रैकत्वादिबुद्ध्या न हि विलयमियात् चक्षुरर्थादिदोषः ;**
**स्यात् बाधेऽपि द्विचन्द्रप्रभृतिषु हि ततो भ्रान्तिमात्रानुवृत्तिः ।**
**विस्रम्भाभावतः स्यात् फलमपि ; न तु ते जाघटीति द्वयं तत्**
**ब्रह्मान्याशेषबाधादनतिबलतया बाध्यतो बाधकस्य ॥ ७४ ॥**

अद्वैतिनस्त्वाहुः—"श्रवणमननाभ्यां भेदसत्यत्वविस्रम्भे निरस्तेऽप्यविद्याबाधकमद्वैतज्ञानं नोदेति, ध्यानेन तु निरस्तसमस्तभेदवासनस्याद्वैतवाक्यादविद्यानिवर्तकधीसंभवः ; निवृत्ताविद्यस्यापि द्विचन्द्रादिदर्शनन्यायेन यावच्छरीरं बाधितानुवृत्तिः स्यात्, तादृश्यां दशायां ब्रह्मवित् जीवति च मुक्तश्चेत्युच्यते" इत्याहुरिति।

पूर्ती— गतमित्यनेनेति। 'अस्वधर्मसमानीतैः' इत्याद्युक्तातिप्रसङ्गमूलत्वेन बाह्यगतस्याभिसंहितत्वमुक्तम्। 'प्रकृत्यंशगतैः' इत्याद्युक्तात्मकल्पननैरर्थक्यहेतुत्वेन मूलप्रकृतौ नित्यस्य तस्याभिसंहितत्वमुक्तम् ॥ ७२ ॥

चन्द्रैकत्वादीति। महर्षिवाक्यविरोधपरिहारार्थम् 'श्रवणमननाभ्यां' इत्यादिना वाक्यार्थज्ञानस्याविद्यानिवर्तकत्वाभाव उक्तः। निवृत्ताविद्यस्येत्यादिना व्याहतिपरिहार उक्तः ॥ ७४ ॥

श्री— न सदिति। यस्य—यस्य मते। तस्य–तस्य मते। बन्धः सन् कथं नश्येत्। असन् मोक्षः कथमुत्पद्येत। तथा च बन्धमोक्षयोर्नित्यत्वं यौगपद्यम्। एकतरपरिशेषो वा ॥ ७२ ॥

अद्वैतिनां जीवन्मुक्तिवादः सांख्योपज्ञमिति, "सम्यग्ज्ञानाधिगमात् धर्मादीनामकारणप्राप्तौ। तिष्ठति संस्कारवशात् चक्रभ्रमवत् धृतशरीरः" इति सांख्यकारिकातः स्पष्टम्। अतः सांख्यपक्षनिरासे जीवन्मुक्तिनिरासमपि घटयति मुक्तिरिति। विहतेः—देहप्राणेन्द्रियादिसंश्लेषविश्लेषयोर्युगपत् व्याहतत्वादित्यर्थः। तत्समेति। अमुक्तोऽपि मुक्तसमो जीवन्मुक्तः। साम्यञ्च, इह सञ्चितपुण्यपापसंबन्धोपेतत्वम् ब्रह्मानुभवधारा च ॥ ७३ ॥

साक्षात्काररूपज्ञानात् अविद्यालयरूपा भवति मुक्तिः। प्रारब्धशरीरादिमत्त्वाच्च जीवत्वमिति अद्वैती मृषावादी। तन्निरस्यति चन्द्रेति। सर्वमिथ्यात्ववादिना अविद्यानाशे किञ्चित्परिशेषणायोगात्

एतदपि दूषयति **चन्द्रैकत्वेति** ॥ तत्र तावत् लोके बाधितानुवृत्तिर्युज्यते, बाधकज्ञानेन भ्रमानुवृत्तिहेतोः दोषस्याबाधितत्वात् । न हि, चक्षुर्गतास्तिमिरादयः, शुक्त्यादिगता वा दूरत्वसादृश्यादयो बाधकज्ञानेनाप ह्रियन्ते ; सत्यत्वात् । तत्प्रकाश्याकारविरोधित्वाभावात् न बाध्यन्त इति भावः । मात्रचाऽभिप्रेतं व्यनक्ति **विस्रम्भाभावत** इति । एवं बाधितानुवृत्तिर्बाधकधीसाफल्यं च त्वन्मते न संभवतीत्याह **न त्विति** । प्रथमस्यासंभवं विवृणोति **ब्रह्मान्येति** । ब्रह्मव्यतिरिक्तं कृत्स्नं मिथ्येति हि बाधकप्रत्ययः । तत्र यदि महीयसी बलीयसी च मूलाविद्या विलीयेत, कथं तदा तूलकल्पः तदेकदेशो विलयं न गच्छेत् ? यदि चास्य ज्ञानादन्यद् बाधकम्, तदाऽपसिद्धान्तः स्यात् । सत्यत्वप्रसङ्गश्च । अविद्याबाधकेनाबाधितं च कथमन्यदपि ज्ञानं बाधेत ? अहेतुकनिवृत्तिश्च प्रागेव दूषिता । अन्त्यशब्दचरमसंस्कारादीनामपि हेतुविशेषत एव निवृत्तेः । अत्र बाधकफलस्याप्यसंभवमाह **अनतिबलतयेति** । अयं भावः — श्रवणमनन दशायामेव हि निषेध्यप्रपञ्चज्ञानं निषेधकज्ञानं चाविद्यामूलमित्यध्यवस्यति, तथासति एकदोषप्रसूतत्वे परत्वस्याकिंचित्करत्वात्, अन्यथा माध्यमिकविजयप्रसङ्गाच्च, नोत्तरे बाधकत्वविस्रम्भः स्यात् । अत एव न तदर्थध्याने प्रवर्तेत, न च रागद्वेषादिभिरुज्झितः स्यादिति ॥ **इति परोक्तबाधितानुवृत्तिभङ्गः** ॥७४॥

(145) **स्वातन्त्र्यं ब्रह्मणैक्यं पशुपतिसमतां वासनोच्छेदमात्रं**
**धीसन्तानप्रणाशं निजमतिसुखयोर्नित्ययोः सन्निकर्षम् ।**
**चित्तेन स्वात्मसौख्यानुभवम् उपलवद्भावम् ऊर्ध्वप्रयाणं**
**शून्याद्वैतं च मुक्तौ श्रुतिरुपकृतये कल्पतां जल्पतां वः ॥ ७५ ॥**

अथ मुक्तिविषये वादिनां प्रलापान् संक्षेपेणोद्गृह्णन् प्रत्येकदोषः श्रोतृभिः स्वयमूह्य इति मत्वा साधारणं श्रुतिविरोधं तावत् सूचयति **स्वातन्त्र्यमिति** ॥ सिद्धिवासनामित्रासितमनोभिरेतदिष्यते । न च तत् युक्तम् ; सर्वेषां सर्वनियन्तृत्वायोगात् । ब्रह्मणैक्यं तु त्रय्यन्तैकदेशिनः संगिरन्ते । तत्र साम्यसाधर्म्य-सहशब्दादिभिर्विरोधः । भेदसहं केवलं वा नित्यतादात्म्यमिच्छतां किमिदानीमैक्यं साध्यम् ? एकत्व-

---

(145)[a]— स्वातन्त्र्यमिति । स्वातन्त्र्यादिपक्षाणां प्रत्येकं दूषणम[न ?]भिधाय केवलतत्पक्षसंग्रहणं, तेषां 'श्रुतिरुपकृतये' इति प्रार्थनं चानुचितमित्याशङ्कां परिहरन् श्लोकमवतारयति—अथ मुक्तिविषये इति । श्रुतिविरोधं तावत् सूचयतीति । उपकृतिशब्देन विपरीतलक्षणया अपकृतिरेव प्रार्थ्यत इत्यर्थः । किमिदानीमैक्यं साध्यमिति । अतो मोक्षप्रवृत्तिवैयर्थ्यमिति भावः ।

७४— जीवत्वं दुर्वचम् ; सत्यत्ववादिनः सांख्यस्य मते आत्मनि प्रकृतिसंबन्धमात्रहानेः प्रकृतितत्कार्य-सर्वप्रपञ्चनिवृत्त्यभावात् जीवत्वमस्ति ; मुख्यं मुक्तत्वं तु नास्ति । अतस्तत्समावस्थैवेति पूर्वोक्तोप-पादनार्थोऽयं श्लोकः । चक्षुरर्थादिदोषः—इन्द्रियगतो विषयगतो वा दोषः । अबाधितश्चेति कर्म । ज्ञानमिति कर्तृ । अन्त्यशब्देति । शब्दवीचीपरम्परायामुत्तरोत्तरशब्देन पूर्वपूर्वशब्दनाश इति वदद्भि-स्तार्किकैरपि अन्त्यशब्दस्य निर्हेतुकनाशो नेष्ट इति भावः ॥ ७४ ॥

नानामतदर्शनादनिर्धारिततत्त्वाः श्रुतिं शरणमुपगम्य तत्र स्वोत्प्रेक्षितान् कुतर्कान् अनायोज्य यत्र स्वरसत ऐकरस्यं तत्पराश्चेत्, अस्मन्मतां मुक्तिमाद्रियेरन्नित्याह स्वातन्त्र्यमिति । सिद्धिः—अणि-

नानात्व-विभागाविभागशक्तिमत्त्वपक्षश्च न प्रामाणिकैः श्रद्धेयः। कल्पादावुत्पन्नाः कल्पान्ते ब्रह्मणैक्यं लभन्त इति पक्षे तु अकृताभ्यागमकृतविप्रणाशप्रसङ्गोऽप्यधिकः। **पशुपतिसमतां** तन्मतस्थाः प्राहुः। तत्रावान्तरभेदेषु विशेषश्च द्रष्टव्यः। प्रत्युक्तं तन्मतम्, "पत्युरसामञ्जस्यात्" इति। **वासनोच्छेदमात्रं** तु बौद्धैकदेशिनः। तत्र सर्वज्ञानसन्तानैकतापत्तिः स्यान्न वेति विभागः। तत्र तत्प्रक्रियाप्रतिषेध एवोत्तरम्। **धीसन्तानप्रणाशं तु प्रज्ञाकरमतस्थाः।** तत्रान्तिमस्यार्थक्रियाविरहादसत्त्वे तत्पूर्वेषामपि तथेति शून्य[ता]-वादावतारः। **निजमतिसुखयोर्नित्ययोः सन्निकर्षं तु न्यायैकदेशिनः।** इदं च मतं प्रागेवापास्तम्। **चित्तेन स्वात्मसौख्यानुभवं भाट्टाः।** उपलवद्भावं त्वौलूक्याः, न्यायमीमांसैकदेशिनश्च। अनयोरपि साधकासंभव उक्तः। **ऊर्ध्वप्रयाणं तु जैनाः।** तत्र भूम्याः नित्यपतनवत्, नित्योर्ध्वगमनमेके। अन्ये तु लोकाकाशमतिक्रम्य सकललोकमस्तकस्थायिनि अलोकाकाशे देहमेकमनेकं वा परिगृह्य वसन्तीति। इदं तु तत्कथामात्रसिद्धम्। **शून्याद्वैतं तु माध्यमिकाः।** तत्र सर्वतोमुखी व्याहतिरुद्या। तथा च तत्प्रति-क्षेपमूलम्, 'सर्वथाऽनुपपत्तेश्च' इति। चकारोऽनुक्तान् मुक्तितारतम्य-चिन्मात्रस्फुरणादिपक्षान् संगृह्णाति। एतत् सर्वं जल्पतां **श्रुतिरुपकृतये कल्पताम्** इति उपालम्भकाक्वा बाधकत्वपरम्; सर्वभूतदयालुत्वस्मरणादिदं सानुग्रहवाक्यं वा। आयुर्वेदविद्भिरप्यन्वाख्यायते, "आत्मद्रुहममर्यादं मूढमुन्मुक्त(ज्झित)सत्पथम्। सुतरामनुकम्पेत नरकार्चिष्मदिन्धनम्॥" इति। तदिह, "परात्परं पुरुषमुपैति दिव्यम्" इत्युपनिषत्सिद्ध एव मोक्ष इति भावः॥ **इति परमते विरुद्धानामर्थानां मोक्षविरुद्धत्वप्रतिपादनम्॥ ७५॥**

**॥ इति श्रीकवितार्किकसिंह-सर्वतन्त्रस्वतन्त्र-श्रीमद्वेङ्कटनाथ-वेदान्ताचार्यकृतिषु सर्वार्थसिद्धिसमेते तत्त्वमुक्ताकलापे जीवसरो द्वितीयः॥ २॥**

---

५७— कृतविप्रणाशप्रसङ्गोऽप्यधिक इति। सहश्रुत्यादिभिर्विरोधोऽत्रापि सम इति भावः। तत्प्रक्रिया-प्रतिषेध इति। तन्मतदूषणमित्यर्थः॥ ७५॥

**इति वाधूलकुलतिलकसमरपुङ्गवाचार्यपादसमधिगतशारीरकभाष्यहृदयेन महाचार्यापरनामधेयेन वाधूलश्रीनिवासेन विरचितायां सर्वार्थसिद्धितात्पर्यप्रकाशिकायां जीवसरो द्वितीयः॥**

७१— मायष्टैश्वर्यसिद्धिः। न्यायैकदेशिनः=भूषणादयः। कल्पतामितीति। कल्पतामितीदमित्यर्थः। इदम्परमित्यस्येदं विशेष्यम्। काकेति। उपकृतये कल्पतां किम्। न। अपकृतये—बाधनायैव कल्पेतेत्यर्थः॥

**शरीरादितोऽन्यान् स्वयंभासमानान् अणून् कर्तृभोक्तॄन् असंख्यांश्च जीवान्।**
**चतुर्भेदतां तत्र भक्तिं विमुक्तिप्रकारश्च मानैर्यथावज्जगाद॥**

**इति अभिनवदेशिक-वात्स्यवीरराघवाचार्यकृतौ अलभ्यलाभाख्ये व्याख्याने जीवसरो द्वितीयः॥**

—o—o—

## अथ नायकसरस्तृतीयः ॥

व्याप्त्याद्यव्याकुलाभिः श्रुतिभिरधिगतो विश्वनेता ; स विश्वं
क्रीडाकारुण्यतन्त्रः सृजति समतया जीवकर्मानुरूपम् ।
रोषोऽपि प्रीतये स्यात् सुनिरसविषयस्तस्य निस्सीमशक्तेः ;
स्वेच्छायां सर्वसिद्धिं वदति भगवतोऽवाप्तकामत्ववादः ॥ १ ॥

तदेवं प्रत्यगर्थद्वये प्रथमोद्दिष्टो जीवश्चिन्तितः। अथेश्वरश्चिन्त्यते । तत्र तावत् प्रमाणविशेषात् सिद्धिमस्तौति व्याप्त्याद्यव्याकुलाभिरिति ॥ धर्मप्रवृत्तियुक्तसर्वदेशकालव्यापितयाऽन्यथाकरणशङ्कानर्हाभि-

---

### सर्वार्थसिद्धितात्पर्यप्रकाशिकायां नायकसरः तृतीयः ॥

(ग्रं)— व्याप्त्याद्यव्याकुलाभिरिति । अथेश्वरे निरूपणीये प्रमाणसिद्धस्यैव निरूप्यत्वात् प्रमाणतः सिद्धं(द्धिं?) प्रथमं दर्शयतीत्यभिप्रायेण—तत्र तावदित्युक्तम् । 'व्याप्त्याद्यव्याकुलाभिः' इत्यत्र व्याप्त्यादिस्वरूपस्य साक्षात् व्याकुलताहेतुत्वस्य स्वतः प्रतीयमानत्वात् व्याप्तिशब्दं सर्वदेशव्याप्तिपरं, तत्समभिव्याहृतमादिशब्दञ्च सर्वकालवृत्तित्वपरमङ्गीकृत्य [नञर्थेऽन्वयपरतया?] व्याचष्टे धर्मप्रवृत्तियुक्तेति ।

### अलभ्यलाभाख्ये व्याख्याने तृतीयसरः ॥

(श्री)— इत्थं सरद्वयमशेषगुरुप्रसत्तिमालम्ब्य किञ्चिदिव साधु विवृत्य, मध्यम् ।
संगृह्य नायकसरं विवरीतुकामे सन्तो भवन्तु सरसेक्षणभव्यभावाः ॥

परमात्मनि प्रमाणं श्रुतिरेवेति शास्त्रयोनित्वाधिकरणे स्थापितमादौ दर्शयति व्याप्तीति । विश्वनेता श्रुतिभिरधिगतः=दृढं निश्चितः । कीदृशीभिः? व्याप्त्याद्यव्याकुलाभिः । अखिलहेयप्रत्यनीकस्य चेतनसार्वभौमस्य निरवयवस्य निरुपकरणस्य अवाप्तसमस्तकामस्य जगत्कारणत्वं न भवति, नतरां निमित्तत्वे सति उपादानत्वमिति लोकदृष्टसामान्यमुखव्याप्तीरादाय कपिलादिस्मृतिमादाय च या व्याकुलता संभाविता, तस्याः सर्वस्याः शारीरके विशेषतः परिहृतत्वात् व्याप्त्याभासस्मृत्याभासप्रयुक्तव्याकुलतारहिता आसन् श्रुतयः ; ताभिरित्यर्थः । शीघ्रमर्थग्रहणं स्यादिति एवमुक्तम् । समुचितमर्थद्वयं वृत्तावेव द्रष्टव्यम् । ईश्वरसुखानंगीकारि-सेश्वरतार्किकाद्यस्वीकृतमवाप्तसमस्तकामत्वमेकमस्मदिष्टम् ; तद्विशिष्याऽऽक्षिप्य स्थापयितुं स इत्यादिकम् । क्रीडापरतन्त्रत्वात् स्वप्रयोजनवानपि, कारुण्यपरतन्त्रत्वात् परप्रयोजनवानपि । कारुण्याधीनत्वेऽपि दुःखिसृष्टिर्भवति ; कर्मानुरूपत्वात् तस्याः। तर्हि कर्मानुरूपनिग्रहकृतः क्रोधस्यावश्यकत्वात्, शास्त्रे तत्रतत्रेश्वरे क्रोधवत्त्वावगमाच्च तस्य च प्रतिकूलत्वात् तस्य दुःखित्वापत्तिरित्यत्राह रोषोऽपीति । दुर्निरसविषयनिरसनार्थमशक्तस्य जातः क्रोधः कार्यपूर्त्या दुःखाय भवति ; सर्वशक्तस्य तु क्रोधविषयः सुनिरस एवेति कार्यपूर्त्या प्रीतय एव स भवति । कथञ्चानुकूलत्वेन भासमानस्य तस्य दुःखत्वम्? अवाप्तसमस्तकामस्य लीलया कारुण्येन क्रोधेन वा किं साध्यमिति न शंक्यम् ; न हि अवाप्तकामत्वं सर्वदा सर्वसुखसंपन्नत्वम् ; किंतु अपेक्षितस्य सर्वस्येच्छाकाले संपद्यमानत्वम्, तदौपयिकपुष्कलसामग्रीमत्त्वं सर्वदेति ॥

प्रथमविशेषणस्यार्थद्वयमाह धर्मेत्यादिना । श्रुतीनां सर्वदेशसर्वकालव्याप्तत्वात् अनादित्वं प्रामाण्यञ्च स्थितम् । न नास्तिकादिदेशादौ व्याप्त्यभावो दोषाय ; धर्मविषयकप्रवृत्तिमन्महाजनदेशादौ व्यापनस्यैव पर्याप्तत्वात् । आदिना अबाधितार्थकत्वग्रहणम् । व्याप्तीत्यनेन अपौरुषेयतया निर्दोषत्वमुक्तम् । एवञ्च दोषबाधयोरभावात् अव्याकुलत्वम् अन्यथाकरणशंकानर्हत्वम्=अप्रामाण्यशंकानर्हत्वम् । अत्र पक्षे व्याप्तिः व्यापनं देशकालकर्मकं लोकप्रसिद्धम् ।

रित्यर्थः । यद्वा अनुमानवत् व्याप्तिपक्षधर्मतानिरूपणजनितव्यभिचारसंभावना(संभवा)दिरहिताभिरिति । **श्रुतिभिरि**ति भ्रमादिमूलत्वासंभवख्यापनम् । शब्दानां सिद्धे व्युत्पत्तिः, तत्र तात्पर्यं च साधयिष्यते । **विश्वनेता**—विश्वेषां यथेष्टं विनियोक्ता ॥

स कथं श्रुतिभिरधिगतः, कारणवाक्येषु **सदादिशब्दैः**, 'तद्धेदं तर्ह्यव्याकृतमासीत्' इत्यादिप्रदर्शितस्याव्यक्तापरपर्यायस्य प्रधानस्याभिधानादिति चेत्—तन्न ; अव्यक्तस्य, 'तदैक्षत', 'सोऽकामयत' इत्याद्युक्तस्वसङ्कल्पपूर्वकसृष्ट्याद्यसंभवात् । न खलु **ईक्षणादि**शब्दो भाक्तः; मुख्ये बाधकाभावस्य साधकभूयस्त्वस्य च **शारीरके** स्थापितत्वात् ॥ 'सदेव सोम्येदमग्र आसीत्' इत्याद्यचेतनसामानाधिकरण्यात् कारणमचेतनमिति चेन्न ; सामानाधिकरण्यस्य स्थूलसूक्ष्मचिदचिद्वस्तुविशिष्टविवक्षयाऽप्युपपत्तेः । सर्वं च जगत् कर्तुश्शरीरतयाऽऽम्नातम् ; 'अस्मान्मायी सृजते विश्वमेतत्' इति । ईदृशी च सृष्टिः, 'सोऽभिध्याय शरीरात् स्वात्' इत्युपबृंहिता । अधीयते **चाऽऽथर्वणिकाः**, "विकारजननीमज्ञामष्टरूपामजां ध्रुवाम् । ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः ॥ सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत् । गौरनाद्यन्तवती सा जनित्री भूतभाविनी ॥" इति । **अगीयत** चैतत्, 'मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्' इति । अतः साक्षात् संकल्पाश्रयत्वम्, व्यवधानेन तु विकाराश्रयत्वमिति सर्वाविरोधः ।

ननु **सद्विद्यायां** मृत्पिण्ड लोहमणि नखनिकृन्तनदृष्टान्तैः, "यथा पृथिव्यामोषधयः संभवन्ति" इत्याथर्वणिकवाक्याच्चाचेतनमात्रोपादानत्वं जगतः प्रतीयत इति चेन्न ; मृत्पिण्डादिनिदर्शनानामेकविज्ञानेन सर्वविज्ञानस्यासंभवचोद्यपरिहारपरत्वात् ; 'यथा पृथिव्याम्' इति वाक्यस्य तु एकस्मात् विचित्रानन्तोत्पत्तिसंभवार्थत्वात् । न तु चेतननैरपेक्ष्यमेतैः सूच्यम् ; अन्यथा, "यथा सतः पुरुषात् केशलोमानि" इति चेतनसन्निधिसापेक्षोत्पत्तिनिदर्शनायोगात् ॥ अस्तु तर्हि तद्वत् अयस्कान्तादिनयेन निर्व्यापारपुरुषसन्निधानात् प्रकृतेः प्रवृत्तिः ; सर्वस्य च कार्यजातस्य जीवकर्महेतुकत्वात्, अपहतपाप्मत्वसर्वज्ञत्वादीनां च तस्मिन् अवस्थाभेदेनोपपत्तेरिति(?)॥ तन्न । "यथोर्णनाभि. सृजते गृह्णते च" इति प्रथमोक्तदृष्टान्तविघट्यात्। 'प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः । क्षोभयामास संप्राप्ते सर्गकाले व्ययाव्ययौ ॥' इति पुरुषस्यापि परा-

---

आ—व्याप्त्यादिशब्दस्य व्याप्तिपक्षधर्मतादौ प्रसिद्धिप्राचुर्यात् व्याचष्टे यद्वेति । व्यभिचारा(र?)-सम्भावनादीति । आदिशब्देन असिद्धिसम्भावना गृह्यते । श्रुतिभिरितीति । श्रूयते नित्यमिति हि श्रुतिरिति भावः ।

श्री—तार्किकपरिमापितव्याप्तिस्वीकारेणार्थान्तरमाह यद्वेति । आदिना पक्षधर्मताग्रहणम् । रहिताभिरितीति । अर्थ इत्यनुषज्यते । अनुमानेनैवेश्वरसिद्धिर्न मन्तव्या, तस्य व्यभिचारसंभावनादिदुष्टत्वात् । श्रुतयस्तु तद्दोषरहिताः । तथाचानुमानप्रयोगे व्याप्तिपक्षधर्मतयोरावश्यकतया तन्निरूपणार्थं जनितम् उद्भावितं यत् व्यभिचारसंभावनादिकम्, तेन रहिताः श्रुतयः; व्याप्तिपक्षधर्मतानपेक्षत्वादिति स्थितपाठे प्राप्तोऽर्थः। श्रुतीनामेव प्रकृत्याद्यचेतने बद्धमुक्तान्यतरचेतने वा जगत्कारणत्वपरत्वं कुतो नेति शङ्कां विस्तरेण परिहर्तुमाह स कथमित्यादि । सदादिशब्दैरिति । 'सदेव सोम्येदम्', 'असद्वा इदमग्र आसीत्' इत्यादिषु प्रयुक्तैरिति शेषः। अव्यक्तेति। अव्याकृतं हि अव्यक्तमेवेति सदादिसामान्यशब्दानां तत्र विशेषे पर्यवसानमिति भावः । सूयते = उत्पादयति । एतत् = एतदुपनिषदुक्तम् ।

धिष्ठानेन जगत्सृष्ट्युपयोगोक्तेः । न च जीवस्य संवर्तसमयसंहृतकरणकलेबरस्य मुख्येक्षणादिसंभवः ।

मुक्तस्तर्हि प्रकृतिपुरुषयोरधिष्ठाता स्यात्; तस्य सत्यसंकल्पस्य स्वेच्छया पितृलोकादिविचित्र-कार्यस्रष्टृत्वाम्नानात् मुख्येक्षणसिद्धेः । जीवान्यत्ववादाश्च बद्धान्यत्वविषयाः स्युः । 'ममैवांशो जीवलोके जीवभूतस्सनातनः' इति जीवत्वस्यावस्थारूपत्वोक्तेः मुक्तस्यैव हिरण्यगर्भादिदेहाधिष्ठानेन सृष्टिस्थित्यादि हेतुत्वमिति सर्वपुराणादिसामरस्यमिति ॥ तदपि मन्दम् । एकस्यैवानाद्यन्तस्य सर्वमुक्तोपसृप्यत्वश्रवणात्; "मम साधर्म्यमागताः", "स्वातन्त्र्यमतुलं प्राप्य तेनैव सह मोदते" इत्याद्युपबृंहणविरोधाच्च । 'सायुज्यं प्रतिपन्ना ये तीव्रभक्तास्तपस्विनः । किङ्करा मम ते नित्यं भवन्ति निरुपद्रवाः ॥' इति च **भगवदुक्तिः। मोक्षधर्मे** च, 'अनेन साम्यं यास्यामि' इति मुमुक्षोरभिसन्धिवचनम् । प्रपञ्चितं चैतत्—'परेण परधर्मी च भवत्येष समेत्य वै' इत्यादिभिः । एकस्य च सर्वप्रशासितृत्वं निस्सीम[शक्ति?]त्वं च श्रुतिस्मृतिशतसिद्धम् । अपि च मुक्ताः सर्वे किं संभूय जगत् सृजन्ति, उत प्रतिनियतकार्याः? नाद्यः; 'स यदि पितृलोककामः' इत्यादिभिरव्यवस्थितेच्छादृष्टेः । सर्वेषामेकरूपेच्छावल्प्तौ गौरवात् । तथा चाश्रवणात् । न द्वितीयः, 'इदं सर्वमसृजत' इत्यादिभिरेकस्य सर्वकर्तृत्वोक्तेः । समुदायैकत्वविवक्षा तु क्लिष्टा निर्मूला च; श्रुत्या क्लृप्त्या वा तदयोगात् । अतः, 'पतिं विश्वस्यात्मेश्वरम्' इति श्रुत एक एव सर्वकर्तेश्वरः ॥

श्लो—प्रयोजनादिविरहान्न कर्तेश इति ब्रुवन् । तस्य सिद्धावसिद्धौ च व्याघातादिपराहतः ॥

मा भूदनुमानम्, प्रसङ्गस्तु स्यादिति चेन्न; प्रयोजनशून्यत्वे कर्तृत्वं न स्यात् । अस्ति च कर्तृत्वम्; अतः प्रयोजनवानिति विपर्ययविश्रमात् । तथा सति नेश्वरस्य बाधः ॥ प्रयोजनसाधकानुग्रहार्थत्वात् ॥ अथ प्रयोजनवत्त्वे कर्मवश्यत्वप्रसक्तिः; तदभावात् प्रयोजनशून्य इति—एवमपि प्रयोजनशून्यविश्वकर्तृत्वं वादिनामिष्टप्रसङ्ग.॥ प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तत इति चेत्, तर्हि प्रवृत्तिदर्शनात् प्रयोजनं किञ्चिदङ्गीकुरुष्व ॥ स्वार्थे परार्थे वा प्रवर्तते इत्यत्र उभयार्थमित्याह **स इति**। विषमसृष्ट्या साम्यं दुःखसृष्ट्या कारुण्यं च भज्येतेत्यत्राह **समतयेति** । साम्यकारुण्यवत् यथाकर्मफलदायित्वमपि श्रुतिबलादङ्गीकार्यम्। अतस्तदविरोधेन गुणान्तरं व्यवस्थाप्यमिति भाव.। दुःखनिवर्तनांशे कारुण्यसिद्धिः ॥ ननु सुखसृष्टदुःखनिवर्तनेन कारुण्यलाभात् वरं दुःखानुत्पादनमेव । अत: 'सुखैकतानं जनयेत् जगत् करुणया सृजन्' इति चेत्—किमयमीश्वरं प्रत्युपदेशः, अन्यान् प्रति वा? नाद्यः, तस्य परोपदेशाधीनप्रवृत्तित्वाभावात् । न द्वितीयः, तत्तत्प्रमाणसिद्धवस्तुस्वभावानामपर्यनुयोज्यत्वात् । स्मर्यते च, "शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः। यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः । भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता ॥"

---

ल०— उभयार्थमिति । क्रीडातन्त्र इति स्वार्थत्वम्, कारुणतन्त्र इति परार्थत्वं च विवक्षितम् ।

श्री– श्लोके सविभ्रममित्यादिभागं विवरीतुमारभते प्रयोजनेत्यादिना । उभयार्थमिति। परार्थमित्येतावत् तार्किकेष्टम् । तन्निरासायैव सूत्रे, 'लोकवत्तु लीलाकैवल्यम्' इति स्वप्रयोजनं विशिष्योक्तम् । न तु कैवल्यपदेन परप्रयोजनवारणम् । लीलातिरिक्तस्वप्रयोजनवारणाय कैवल्यपदम् । लोकदृष्टान्तेन उपरितनसूत्रेण च परप्रयोजनमपि सिद्धम् ।

इति ॥ ननु दयावैकल्यपरिहारायानुग्रहांशे एव भगवतः कर्तृत्वमङ्गीक्रियताम् ॥ स्यादेतदेवम्, यदि वयमेव स्वेच्छया वस्तु व्यवस्थापयामः, किंतु प्रमाणदृष्ट्यैव । अतो निग्रहांशेऽपि निरङ्कुशं कर्तृत्वम् ।

अथ स्यात्—क्रोधो हि निग्रहहेतुः ; स च स्वाश्रयदुःखाविनाभूत.॥ "अरोषणो ह्यसौ देवः" इति प्रसिद्धस्य च कथं क्रोध इति चेन्न ; "एतौ द्वौ विबुधश्रेष्ठौ" इत्यादिषु कण्ठोक्तेः ॥ भाक्तोऽयं क्रोधशब्द इति चेत्–तन्न; प्रसादशब्दस्यापि तथात्वप्रसङ्गात् । अस्त्वेवमिति चेन्न; भिक्षुपादप्रसारणन्यायेन निरीश्वरवादावतारात् । अतः क्रोधावश्यंभावादीश्वरस्यापि दुःखावश्यंभाव इत्यत्राह रोषोऽपीति । क्रोधरोषादिशब्दार्थो हि परपीडेच्छामात्रम् । स तावन्न स्वरूपतो दुःखम् ; दुःखहेतुत्वमप्यस्य अशक्यविषये; तथा दृष्टेः । स्मर्यते हि—"द्वाविमौ कण्टकौ तीक्ष्णौ शरीरपरिशोषणौ । यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः ॥" इति । न सर्वशक्तेरीश्वरस्य चिकीर्षितमशक्यं किञ्चिदस्ति । अतोऽस्य न दुःखाय क्रोधः, प्रत्युत निग्रहविहारेण प्रीतये स्यादिति ॥ ननु इह विहारः क्रीडा ; सा च अरतिपरिहारार्था लोके प्रसिद्धा । जगतः सृष्टारमधिकृत्य, "स एकाकी न रमते" इति[च?]श्रूयते । अतः क्रीडायोगात् अरतियोगः, तदभावाद्वा तदभावः स्यात् ॥ मैवम् ; क्रीडा हि प्रीतिविशेषप्रभवः स्वयंप्रियो व्यापारः। अन्यथा तल्लक्षणमव्यापकं स्यात् । अतो नारतिप्रसङ्गः । अरतिश्रुतिश्च, 'तदानीमेकाकित्वमनिष्टम्, अतो ब्रह्मादिसृष्टावुदयुङ्क्त' इत्यभिसन्धत्ते; न पुरुषान्तरवत् अप्रवृत्तिजन्यदुःखभयात् प्रावर्ततेति; अशास्त्रवश्यस्य दुःखानर्हत्वात् । तथाऽपि, 'क्रीडार्थं सृजतो विश्वं विहन्येत कृतार्थता' इत्यत्राह—स्वेच्छायामिति । अवाप्तसमस्तकामत्ववादो हि न काम्यनिवृत्तिपरः, अवाचकत्वात्, सत्यकामत्वश्रुतिविरोधाच्च। नापि कामनानिषेधार्थः; 'सोऽकामयत', 'सत्यसंकल्पः' इत्यादिबाधात् । अतो यथाकामं सर्वसिद्धिमभिसन्धत्त इति ॥

श्लो—सहकारिभिरारम्भे न स्वातन्त्र्यं विहन्यते । तत्सद्भावप्रवृत्त्योश्च स्वाधीनत्वव्यवस्थितेः ॥
कारकान्तरवैधुर्ये किमपेक्ष्य स्वतन्त्रता । शरीरमप्यधिष्ठेयं सहकार्येव कुर्वतः ॥

---

पुं— अन्यथा लक्षणमव्यापकं स्यादिति । 'अरतिपरिहारार्थो व्यापारो लीला' इत्युक्ते राज्ञां प्रीतिपूर्वकेषु कन्दुकाद्यारम्भेषु अव्याप्तिः स्यादित्यर्थः । कर्मकालादिकं सहकारीकृत्य जगत् सृजतीति मते स्वतन्त्रकारणत्वं भज्येतेत्याशङ्क्याह—सहकारिभिरिति । सहकारिणां स्वनिष्टत्व एव भगवतः स्वातन्त्र्यहानिः तत्स्वरूपस्थित्यादेश्च भगवदायत्तत्वात् न स्वातन्त्र्यहानिरित्यर्थः । किमित्येवं क्लिष्टगतिः? सहकारिविधुर एव सृजतीत्यङ्गीक्रियतामित्यत आह—कारकान्तरेति । ननु 'प्रधानकारणी-
वी— द्वाविमाविति। क्रोधस्य दुःखहेतुत्वशंकी कामस्य तथात्वं कथं त्यजेदिति भावः । अरतियोग इति । पूर्वमरत्यभावे क्रीडाऽभावादिति भावः । श्रुतिश्चेति । "स एकाकी न रमते" इति श्रुतिरित्यर्थः। प्रावर्ततेतीति । प्रावर्ततेति अरतिश्रुतिर्नाभिसंधत्त इत्यर्थः। चतुर्थपादमवतारयति तथापीति। कृतार्थता=संपन्नसर्वफलता अवाप्तसमस्तकामत्वम् । अभिसंधत्त इति । अवाप्तसमस्तकामत्ववाद इति कर्तुरनुषंगः । नन्वयं जगत् सृजन् किं सहकारिविशिष्टः करोति, उत तद्रहितः । नान्त्यः, जीवकर्मानुरूपमिति प्रागुक्तत्वात् । नाद्यः, स्वातन्त्र्यहानेरित्यत्राह सहकारिभिरिति । तदिति सहकारीत्यर्थकम् । किमपेक्ष्येति । कारकचक्रप्रयोक्तृत्वं हि स्वातन्त्र्यमिति भावः । शरीरमिति । कुर्वतः—कार्यं कुर्वाणस्य सर्वस्य यत् साक्षादधिष्ठेयं भवति शरीरम्, तदपि सहकार्येव । अतः शरीरतुल्यतया

निरपेक्षस्तन्त्रस्य सहकारिमतस्सदा । अप्रवृत्तिः प्रवृत्तिर्वा नित्यं स्यादिति चेत्, न तत् ॥
तत्तदिच्छाविशेषेण तत्क्रमस्योपपत्तितः । इच्छासन्तत्यनादित्वात् न च मूलक्षयः क्वचित् ॥
गुणेतरविपर्यासमन्योन्यसहकारिताम् । विवक्षातः क्वचित् प्राहुः निस्समत्वान्निमित्तताम् ॥
प्राप्यः परमभोग्यत्वात् निषेव्यः स्वामिभावतः । शक्तिकारुण्यभूम्ना च शरण्यः सीदतां प्रभुः ॥
बहिरन्तश्च तद्व्याप्तिस्तत्र, यत्रोभयं भवेत् । विभोरणोश्च न बहिर्नान्तस्तस्मान्न सा तयोः ॥
विभोर्न च्छिद्रमणुना नाणूनां विभुना च तत् । यथाप्रमाणं संबन्धमात्रमेव तयोर्भवेत् ॥

---

स०— भूताः' इति कर्मणः प्रधानकारणत्वोक्त्या भगवतोऽप्राधान्यं गम्यते, 'अधिष्ठानं तथा कर्ता' इत्यादिषु अन्योन्यसहकारितया समप्राधान्यं गम्यते, 'असृजत' इत्यादिषु निमित्तत्वं च; एतत् त्रयं कथमुपपद्यते इत्यत आह—गुणेतरविपर्यासमिति । गुणेतरविपर्यासः प्राधान्याप्राधान्यव्यत्ययः । विवक्षात इति । तत्तत्कर्मानुगुणमेव ईश्वरः सृजतीति 'प्रधानकारणीभूताः' इत्यत्र विवक्षा । अन्योन्यसहकारिताप्रतिपादकानां तु, कारकान्तराणामपि ईश्वरः शक्त्याधानेनोपकरोति इति विवक्षा । उभयमविरुद्धम् । वस्तुवृत्तेन निस्समत्वेन निमित्तकारणत्वं च आहुरित्यर्थः । एवं तत्तद्धेतुवशात् आकारत्रयोपपत्तिमुक्त्वा प्रसङ्गात् प्राप्यत्वादित्रयमपि तद्धेतुवशादुपपन्नमित्याह—प्राप्यः परमभोग्यत्वात् इति । हेतुवशात् प्राप्यत्वप्रापकत्ववत् विभूनामणूनां च भगवतोऽन्तर्बहिर्व्यापकत्वं च निरूप्यतामित्यत्राह—बहिरन्तश्चेति । अत्यन्तानुपपन्नं शास्त्रमपि न प्रतिपादयेदिति भावः । अन्तर्बहिरसंभवमेवोपपादयति—विभोर्नच्छिद्रमिति । अणुना विभुना च इति च आकृष्यते । विभोरणुनाऽपि

आ०— सर्वेषां सहकारित्वमिति । शंकते निरपेक्षेति । स्वानधीनसहकारिनिरपेक्षस्य, स्वाधीनसहकारिमात्रेण कार्यकृत्त्वे, कदाचिदकर्तृत्वे सर्वदैवाकर्तृत्वम्, कर्तृत्वे च सर्वदैव कर्तृत्वं स्यात्, व्यवस्थाहेत्वभावादिति शंका । इच्छा नियामिकेति उत्तरयति तत्तदिति । इच्छैव सर्वदा कुतो नेत्यत्राह इच्छासंततीति । एवं सहकारिविशिष्टस्यास्य स्वतन्त्रतया प्रधानत्वे सति, "निमित्तमात्रं भव सव्यसाचिन्" इत्यादितस्तस्मिन् दृढीकृते च सति, अप्रधाने सहकारिणि प्रधानत्वोक्तिः, परमात्मनि सहकारित्वोक्तिश्च कथमित्यत्र विवक्षात इत्युत्तरमाह गुणेति । गुणेतरविपर्यासः । गुणशब्दोऽप्रधानपरः । इतरत् प्रधानम् । प्रधानाप्रधानभावपरिवर्तनम् । क्वचित्, "प्रधानकारणीभूता यतो वै सृज्यशक्तयः" इति जीवकर्मादिषु इमं विपर्यासं विवक्षातः= अप्रधाने प्राधान्यविवक्षया आहुः । क्वचित्, 'दैवञ्चैवात्र पञ्चमम्' इत्यत्र प्रधानेऽस्मिन् सहकारिताञ्च समत्वविवक्षाविशेषादाहुः । अथापि गुणशब्दे प्रयोक्तव्ये निमित्तमात्रमेवेति निमित्तशब्दप्रयोगः कथम् । नित्यनैमित्तिकस्थले अवश्यानुष्ठापकतया प्रधानस्यैव हि निमित्तपदव्यवहार्यतेत्यत्राह निस्समत्वान्निमित्ततामिति । आहुरित्यनुषंगः । लोके उपादानोपादेययोः द्रव्यैक्यादिना साम्यसद्भावात् असाधारणकारणत्वमुपादानस्य । परमात्मा तु, 'साधारण्येन हेतुः सलिलमिव विभुः सर्वकार्याङ्कुराणाम्' इत्युक्तरीत्या साधारणभूतः उपादेयगतवैलक्षण्यप्रयोजकाकाररहिततया निस्समत्वात् निमित्तमित्युच्यते । एतदर्थस्फुटीकरणायैव निमित्तमात्रमित्यत्र मात्रपदम् । 'निमित्तमात्रं भव सव्यसाचिन्' इत्यत्र मात्रपदेन, 'इदमपि निमित्तत्वं ते मदधीनम्' इत्युच्यते । निस्समत्वं सदृशाकाररहितत्वम् । ननु स्वयमुपायस्यास्योपेयत्वं नन्तव्यत्वं सहकारिसापेक्षस्य निरपेक्षोपायत्वञ्च कथमित्यत्र तत्तन्नियामकाकारभेदं दर्शयति प्राप्य इति । भूम्नेति पदेनाकिञ्चनविषये तदुपयोगाधिक्यं कथ्यते । एवमन्यान्यदपि विरुद्धवत्प्रतीतमविरुद्धं घटनीयमिति न तदर्थं युक्त्या वस्त्वपलाप इत्याह बहिरित्यादिना । ननु गच्छता द्रव्येणाऽऽकाशः, मत्स्यादिना

आकाशव्यतिभेदादेरसंभाव्यस्य चोदना । आकाशादिकमिच्छद्भिरनिच्छद्भिश्च दुर्वचा ॥
न विभज्येत गच्छद्भिर्न विहन्ति गतिं च यत्। अस्पर्शत्वात् तथाभूतं विभु चाविभु चास्ति नः ॥
विभ्वणुप्रतिषेधेन मध्यमं च निषेधता । सर्वासत्त्वं च दुस्साधं सदसत्त्वविकल्पतः ॥
समस्तमूर्तसंयोगः संभवेत् यस्य, तत् विभु । तत्संभवोज्झितं द्रव्यं महत्त्वाणुत्वचिन्तितम् ॥
'अणोरणीयान् महतो महीयान्' इत्यनुश्रव. । विश्वव्यापित्वतात्पर्यान्न मिथो बाधमृच्छति ॥
यत् अल्पपरिमाणेन पृथूनां ग्रसनं श्रुतम् । अचिन्त्यमिदमित्येके चिन्तनश्रमभीरवः ॥

इत्यागमिकेश्वरसिद्धिः ॥ १ ॥

---

ण्ॐ— छिद्रं न सम्भवति, किमुत विभुना । एवं च विभुना परमात्मना छिद्रीकरणासंभवात् न तेष्वन्तर्व्याप्तिः, विभुद्रव्यैः परमात्मनि च्छिद्रीकरणेन अन्तः प्रवेशासम्भवात्, तत्र तेषु बहिर्व्याप्तिरपि नास्ति। एवमणूनां विभुना परमात्मना छिद्रीकरणासंभवात् न तेषु अन्तर्व्याप्तिः । एवमणुभिः विभुनि परमात्मनि च्छिद्रीकरणासंभवात् न तेषु बहिर्व्याप्तिश्च संभवतीत्यर्थः। तर्हि, 'अन्तर्बहिश्च तत् सर्वम्' इति प्रतिपादितसर्वविषयोभयव्याप्तेः का गतिरित्यत्राह—यथाप्रमाणमिति । संबन्धमात्रं अस्पृष्टप्रदेशवैधुर्येण सम्बन्धमात्रमित्यर्थः। गच्छद्भिर्मनुष्यैराकाशो यथा विभज्यते-एवं विभूनामणूनां च व्यतिभेदः सम्भवतीत्याशङ्क्याह—आकाशव्यतिभेदादेरिति । यथा आकाशादिकमनिच्छद्भिः तद्व्यतिभेदो दुर्वचः, तथा आकाशादिकमिच्छद्भिरपि अस्पर्शद्रव्यत्वात् तद्व्यतिभेदो दुर्वच इत्यर्थः। व्यतिभेदाभावे गतिप्रतिरोधः कथं न स्यादित्यत्राह-न विभज्येतेति । अस्पर्शत्वात् तथाभूतं = विभागाभावेऽपि गतिप्रतिघातकं विभु—परमात्मादिकं अविभु—आकाशादिकं च अस्माभिरङ्गीक्रियत इत्यर्थः । विभ्वणुप्रसङ्गात् तन्निषेधमुखेन सर्वसत्त्ववादिनो दूषणमाह—विभ्वणुप्रतिषेधेनेति । विभूनामणूनां च अनुपलब्ध्या अभावे सति तत्सापेक्षस्य मध्यमपरिमाणस्य च अभावात् सर्वासत्त्वं दुस्साधम्; विभ्वणुमध्यमप्रतिषेधकहेतूनां सत्त्वासत्त्वविकल्पे सर्वासत्त्वासिद्धिः । विप्रतिषेधक-युक्तीनामपि सर्वशब्दान्तर्गतत्वात् तेषां च सत्त्वात् । असत्त्वे तु प्रतिषेधकानामसत्त्वे प्रतिषेध्यसत्त्व-प्रसङ्गाच्च इत्यर्थः । प्रसङ्गात् विभ्वविभुनोर्लक्षणमाह—समस्तमूर्तेति । महत्त्वाणुत्वचिन्तितमिति अविभुद्रव्यान्तरभेदकथनम् । 'अणोरणीयान्' इत्यादिश्रुतेरणुष्वपि अन्तःप्रवेशः स्वीकार्य इत्याशङ्क्य श्रुतितात्पर्यमाह—अणोरणीयानिति । यदि उपपत्त्यनुरोधेन शास्त्रार्थानुवर्णनम्, तर्हि अल्पपरिमाण-विग्रहेण भगवता पृथुजगन्निगिरणं कथं निर्व्यूढमित्यत्राह—यदल्पपरिमाणेनेति । चिन्तनश्रमभीरव इति । अनेन चिन्तनश्रमभीरूणां चिन्त्यत्वं सूचितम् । अयमभिप्रायः—जगत्संकोचेन वा, अल्पपरि-ण्ॐ—सलिलमिव न भिद्यते चेत्, कथं गतिः स्यादित्यत्राह आकाशेति । व्यतिभेदः = (मिथो) भेदनम् । आकाशादिकमिच्छद्भिरिति । आकाशम्, तत्कारणं महदादि, तस्य सावयवत्वमित्यादिकमिच्छद्भिः, वेदान्तिभिः, अनिच्छद्भिः अनादिर्निरवयव इति वदद्भिस्तार्किकैश्च दुर्वचः। आकाशस्येश्वरेण व्यष्ट्यर्थं विभजनेऽपि असदादिविभाज्यत्वरूपं स्थूलत्वं न वेदान्तीष्टमित्यर्थः । तत्र हेतुरप्रतिघातिद्रव्यत्वम् अस्पर्शत्वम् । माध्यमिकस्तु, 'षट्केन युगपद्योगात् परमाणोः षडंशता' इत्येवमत्यन्ताणुनिषेधम्, अत एव सर्वस्य दिक्परिच्छिन्नत्वात् विभुनिषेधम्, एवं तत्तदभावेऽपि तत्तत्प्रतीतिनिर्वाहे मध्यमपरि-माणस्यापि स्वाप्नकल्पत्वञ्च मन्यते; तत्राह विभ्विति । सदसत्त्वेति । सत्त्वपक्ष इवासत्त्वपक्षेऽपि प्रति-योगिनोऽधिकरणस्य चापेक्षितत्वात् अभावस्यापि भावरूपत्वाच्च न शून्यवाद इति भावः । यद-ल्पेति । एतद्विवरणमेतत्सरान्ते पृथक्श्लोकेन भविष्यति ॥ १ ॥

147. अप्रत्यक्षः परात्मा ; तदिह न घटते धातुरध्यक्षबाधो
योग्यादृष्टेरभावात् ; न खलु न भवता स्वीकृतः स्वेतरात्मा ।
तस्मिन् देहानपेक्षे श्रुतिभिरधिगते देहबाधात् न बाधो
वेदेभ्यो नानुमानं न च पुरुषवचस्तिष्ठते बद्धवैरम् ॥ २ ॥

यदि अङ्कुराद्युत्पत्तौ कश्चित् कर्ता, स कथं न दृश्येत ? अतो यूपादित्यैक्यमिव प्रत्यक्षबाधितं न श्रुतिः प्रतिपादयतीत्यत्राह अप्रत्यक्ष इति । सर्वेषां स्वव्यतिरिक्तस्यात्मनः प्रत्यक्षत्वासिद्धेः ईश्वरेऽपि योग्यानुपलब्ध्यभावात् नात्र प्रत्यक्षबाध इत्यर्थः । इह — दूर्वादिकार्योत्पत्तौ । कर्तुरदृष्टस्य कथं सिद्धिरिति चार्वाकचोद्यं वारयति न खल्विति । अयं भावः — न तावत् अर्धलोकायतिकैरद्वैतिभिरिवाऽऽत्मभेदोऽनङ्गीकृतः । भिन्नाश्चात्मानः परस्परमप्रत्यक्षाः । एवमीश्वरोऽपि स्वप्रत्यक्षोऽन्याप्रत्यक्षतया निषेद्धुं न शक्य इति ॥ अनुमानादात्मान्तरस्वीकार इति चेत्, आगमादीश्वरोऽपि स्वीकर्तव्यः ; प्रमाणत्वेन श्रद्धेयत्वाविशेषात् । परोक्षत्वेन न्यक्कारस्यानुमानेऽपि प्रसङ्गात् । लोकायतिकानां तु यद्यपि

ग्रसे— माणस्य स्वविग्रहस्य तादात्विकपृथूकरणेन वा ग्रसनमुपपद्यते । न च—जगत्संकोचनपक्षे जगतः सूक्ष्मतया विविक्तस्फुटप्रतिभासानुपपत्तिः, अल्पपरिमाणतया प्रतीतिप्रसङ्गश्च; विग्रहपृथूकरणे अल्पपरिमाणेन ग्रसनप्रतीत्यनुपपत्तिरिति वाच्यम्—पूर्वत्र शक्तिमदीश्वरसंकल्पवशात् विविक्तस्फुटप्रतिभासस्य स्वल्पपरिमाणत्वाग्रहस्य च उपपत्तेः । उत्तरत्र जगद्दर्शनात् पूर्वम् अल्पपरिमाणतया गृहीतस्य जगद्दर्शनकाले विपुलस्याप्यगृहीतवैपुल्यस्य पुनर्विग्रहदर्शनकाले स्वल्पीकृततया अल्पपरिमाणत्वेन, 'अल्पपरिमाणेन ग्रस्तम्' इति प्रतीत्युपपत्तेश्चेति ॥ १ ॥

चार्वाकचोद्यं वारयतीति । चार्वाका द्विविधाः—अर्धलोकायतिका लोकायतिकाश्चेति । तत्रार्धलोकायतिकैः बाह्येन्द्रियमनसामन्य[तम?]स्य आत्मत्वमङ्गीक्रियते । लोकायतिकैस्तु भूतपरिणति-

र्वी— ईश्वरस्याप्रत्यक्षत्वात् अनुपलब्ध्या तदभावं चार्वाक आह । तत्पक्षग्राहिणमास्तिकं निरस्यति अप्रत्यक्ष इति । प्रत्यक्षयोग्यविषयानुपलब्धिरेव अभावसाधिका । परमात्मा तु अप्रत्यक्षः । अतो धातुः-ईश्वरस्य अध्यक्षेण-प्रत्यक्षेण न बाधः, योग्यादृष्टेः=योग्यानुपलम्भरूपस्य साधकस्याभावात् । अन्यथा जीवात्मानः परेऽपि न सिध्येयुरित्याह न खल्विति । ननु जीवानां देहवत्त्वात् न तदपलापः, तदभावात् स एव नेत्यत्राह तस्मिन्निति । देहगतप्रवृत्तिनिवृत्त्यादिमूलं परजीवस्यानुमानेन साधनवत् नेश्वरस्य साधनम् ; किं तु वेदेन । स चेत् तम् 'अपाणिपाद' इति कार्यार्थदेहानपेक्षमेव बोधयेत्, कथं देहाभावेन तदभावसाधनम् । प्रबलैर्वेदैस्सह स्पर्धितुं न शक्नोत्यनुमानम्, वेदेभ्यो बद्धवैरम्= वेदबाधनक्षमम् ॥ तथा कपिलाद्यागमवचोऽपि न वेदेभ्यो बद्धवैरम्; पौरुषेयत्वादक्षमम् ।

अदृष्टस्य=अनुपलब्धस्य । चार्वाकचोद्यमिति । चार्वाकयुक्तिग्रहणात् चार्वाकप्रायाणामपि चार्वाकपदेन ग्रहणम् । अतो निरीश्वरवादिनः वैदिका अपि अर्धलोकायतिकपदेन गृह्यन्ते । लोकायतिकानां त्वित्यनेन चार्वाकाणां ग्रहणम् । तत्र भूतपरिणति इदं देहेन्द्रियदेहैकदेशादिरूप-चार्वाकायान्तरभेदसंमतसर्वात्मभेदसंग्राहकम् । तन्मते भूतचतुष्टयातिरिक्तवस्त्वभावात् । अतः श्लोकोऽयमनुपलब्ध्या ईश्वरनास्तित्ववादिचार्वाकतदितरसर्वदूषणपरः । वेदस्यान्यार्थकत्वात् अनुमानस्य चाप्रतिष्ठितत्वात् प्रत्यक्षस्य चाभावादीश्वरो नेति तत्पक्षः। तत्र अशक्यविमर्शः पूर्वश्लोकेन सिद्ध इति परिशिष्टमत्रोच्यत इति ध्येयम् । अर्धलोकायतिकाः अप्रत्यक्षान् देहातिरिक्तान् जीवान् स्वीकृत्य ईश्वरापलापिनः ।

भूतपरिणतिरूपः परात्माऽपि प्रत्यक्षः, तथाऽपि चैतन्यविशिष्टो न प्रत्यक्षेण गृह्यते। यदन्यतस्तु कुतश्चित् तद्विशिष्टतया गृहीतः, एवमीश्वरोऽपि किं न गृह्येत ? बाधानर्हत्वात्॥ शरीरतया परात्मग्रहणमिति चेत्- आत्मनः शरीरत्वे सिद्धे हि तथा ग्रहणम्; तदन्यत्वसिद्धौ तु परशरीरेऽपि तथैव स्यादिति।

अस्तु तर्हि व्यापकानुपलब्ध्या बाधः, कर्तुर्हि शरीरं व्यापकम्; न चाङ्कुराद्युत्पत्तौ शरीरं दृश्यते॥ अतीन्द्रियं तत्र शरीरमस्त्विति चेन्न; अङ्कुराद्युत्पादकतया तादृशशरीरानभ्युपगमात्। तदभ्युपगमेऽपि करणकलेबरसापेक्षस्य कर्तुः कथमीश्वरत्वम्? तत्राह **तस्मिन्निति**। (?) देहानपेक्ष इत्युपलक्षणम् (?)। श्रूयते हि-"पश्यत्यचक्षुः स शृणोत्यकर्णः अपाणिपादो जवनो गृहीता" इति। [**देहानपेक्ष** इत्युपलक्षणम्।?] यदि सर्वशरीरत्वस्य श्रुतिस्मृतिसिद्धत्वात् सर्वेषु कार्येषु शरीरसापेक्षत्वमिति, तथा सति न व्यापकानुपलब्ध्या बाधः। सर्वकार्यानुगुणतत्तद्द्रव्यशरीरकतया शास्त्रैरुपलब्धेः।

अथ विगीतमकर्तृकं कर्मवश्याजन्यत्वादित्याद्यनुमानैरीश्वरस्य बाध इत्युच्येत। तत्राह **वेदेभ्य** इति। अयं भावः—आप्तशास्त्रस्यानुमानैर्विरोधे शास्त्रेणैव तेषां बाधोपपत्तिः; अन्यथा स्वर्गनरकादीनामतीन्द्रियाणां कुतश्चिदनुमानाद् बाधप्रसङ्गात्। शक्यं हि—विगीतं न दुःखासंभिन्नसुखसाधनम्; साधनत्वात् किल्बिषवदिति [त्यनुमातुमिति?]। एवमन्यत्राप्यूह्यम्। किंचात्र **नैयायिकादिसंमते**-रीश्वरानुमानैर्बाधः प्रतिरोधो वा दुर्वारः; विपक्षे बाधकसदसद्भावौ समचर्चौ।

अस्तु तर्हि आदिविदुषस्सिद्धस्य **कपिल**स्याऽऽगमेन ब्रह्मकारणवादभङ्ग इत्यत्राह **न चेति**। नित्यनिर्दोषश्रुतिविरोधे हि स्मृतेरेव बाध्यत्वं **विरोधाधिकरणसिद्धम्**। अन्यथा बौद्धाद्यागमैरपि किं न कृत्स्नवेदबाधः? तेषां भ्रमादिमूलत्वसंभावनयेति चेत्; सममेतत्॥ सर्वज्ञः सांख्याचार्यः परमाप्त इति चेन्न; समाधिजनितसार्वज्ञ्यानामपि कर्मभेदैः कदाचित् भ्रमसंभवात्। न च सार्वज्ञ्ये प्रमाणमस्ति। आहुश्च, "कपिलो यदि सर्वज्ञः कणादो नेति का प्रमा। तावुभौ यदि सर्वज्ञौ मत(ति)भेदः कथं भवेत्॥" इति। ननु, "ददृशुः कपिलं तत्र वासुदेवं सनातनम्" इत्यादिभिः स्वतस्सर्वज्ञपरमकारुणिकावतारतया सिद्धस्य

आ॰— विशेषस्यात्मत्वमङ्गीकृतम्। एवमुभयविधचार्वाकचोद्यं वारयतीत्यर्थः। उभयचोद्यवारणप्रकारं दर्शयति—अयं भाव इत्यादिना। तदन्यत्वसिद्धौ तु इति। स्वात्मनः, मम शरीरमित्यादिना तदन्यत्वसिद्धावित्यर्थः। देहानपेक्ष इत्युपलक्षणमिति। करणानपेक्षत्वस्येति शेषः। एवमन्यत्राप्यूह्यमिति। विगीतं सुखासंभिन्नदुःखजनकं न भवति, साधनत्वात् पुण्यवत् इत्यूह्यमित्यर्थः।

श्री— अन्यतः कुतश्चित्-अनुमानात् वेदाद्वा। आत्मनः=स्वात्मनः। शरीरत्वे-शरीरानतिरिक्तत्वे। व्यापकाभावाद् व्याप्याभाव इति शंकायामुत्तरार्धमित्याह अस्तु तर्हीति। व्यापकाभावरूपहेतोरसिद्धिमपि वक्तुमाह देहानपेक्ष इत्युपलक्षणमिति। देहापेक्षत्वस्येति शेषः। वाक्यमिदं श्रूयते हीत्यतः पूर्वं पठन्ति; तन्न युक्तम्। विपरिवर्तन एवोभयं संगतम्। पूर्वेषां व्याख्या तत्पाठानुसरिणी।

अनुमानान्तरदूषकतया तुरीयपादमवतारयति अथेति। असंभिन्नेति अमिश्रेत्यर्थः। प्रतिरोधः=सत्प्रतिपक्षितत्वम्। विपक्षे बाधक इति अनुकूलतर्क उच्यते। तुरीयस्योत्तरभागं कपिलागमदौर्बल्यपरं व्याख्याति अस्तुतर्हीति। समाधिजनितेति। सर्वज्ञत्वे सत्यपि कदाचित् तद्भंगसंभवात् कपिलः अभ्रष्टसार्वज्ञ्य इति साधयितुं न शक्यते। वस्तुतः सामान्यतस्सर्वज्ञत्वमपि दुस्साधमित्याह न चेति।

कथमनाप्तत्वशङ्केति चेन्न; बुद्धेऽपि समत्वात्॥ आविष्टत्वमात्रं तत्रेति चेत्, अत्रापि तथा; विरोधाभावात्; अन्यथा बुद्धादीन् प्रेरयत ईश्वरस्यासुरादिषु विप्रलिप्सा दुस्त्यजा। "मोहयिष्यामि मानवान् (मायया?)" इत्यादि च स्वयमेवाह। अतः पौरुषेयवाक्यम् आर्षमपि वेदाविरोधेन नेतव्यमिति। एवं **निरीश्वरमीमांसका** अपि निर्मूला निगमान्तविद्भिरनुग्राह्याः।

श्लो— य एवं स्यादसर्वज्ञः, सर्वज्ञं न स बुध्यते। इति ब्रुवाणाः सार्वज्ञ्यं लभन्तां तन्निषेधतः॥

**इतीश्वरस्य निर्बाधत्वम्॥ २॥**

148. **वाच्यत्वं वेद्यतां च स्वयमभिदधति ब्रह्मणोऽनुश्रवान्ताः;**
**वाङ्चित्तागोचरत्वश्रुतिरपि हि परिच्छित्त्यभावप्रयुक्ता।**
**नो चेत्, पूर्वापरोक्तिस्ववचनकलहः; सर्ववेदान्तबाधः;**
**तत्सिद्धिर्हेतुभिश्चेत्, प्रसजति विहतिर्धर्मिसाध्यादिशब्दैः॥ ३॥**

ननु **श्रुतिभिरधिगत** इत्यादि अयुक्तम्; स्वयंप्रकाशतया तत्सिद्धेः। अतो वेद्यत्वमेव न यत्र, तत्र कथं शब्दवेद्यत्व[रूपवाच्यत्व?]म्? "यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह", "यद्वाचाऽनभ्युदितम्" इत्यादिभिश्च तदुभयं निषिध्यत इत्यत्राह **वाच्यत्वमिति**। अयं भावः—स्वप्रकाशत्वं तावत् निगमवेद्यत्वेऽपि घटते; दर्शनस्पर्शनाभ्यामेकार्थग्रहणवत् उपपत्तेः। अथानन्यवेद्यत्वमेव स्वयंप्रकाशत्वम्; तदा कथं ततस्तत्साध्यत्वम्? अवेद्यत्वग्राहकात् तत् साध्यत इति चेत्, किं तद्ग्राहकम्? न तावत् ब्रह्मस्वरूपम्, तस्य स्ववेद्यत्वावेद्यत्वयोरुदासीनत्वात्; अन्यथा तत्र तत्संशयाद्यनुत्पत्तिप्रसङ्गात्। नापि वृत्तिज्ञानानि,

---

आ— निरीश्वरवादिभिरुक्तमनिष्टप्रसङ्गं परिहरति य एवं स्यादिति। [अ?] सर्वज्ञत्वात् सर्वज्ञोऽस्तीति वक्तुं न शक्यत इति चेत्, सर्वज्ञं निषेधतामपि सर्वप्रतीतिसापेक्षत्वात् अशक्यत्वं समानम्॥

भा— अन्यथेति। वेददर्शितप्रकारविरुद्धमार्गेणेत्यर्थः। अस्य प्रेरयत इत्यत्रान्वयः। ननु सर्वज्ञ ईश्वरोऽस्तीति साधनं स्वयमसर्वज्ञेन कथं कर्तुं शक्यमित्याशङ्क्य, असर्वज्ञेन त्वया कथं सर्वज्ञो नास्तीति साधयितुं शक्यते, प्रतियोगिज्ञानाभावे निषेधज्ञानानुदयादित्याह य एवमिति॥ २॥

'न खलु न भवता स्वीकृतः स्वेतरात्मा' इति पूर्वश्लोके भवतेति पदेनाद्वैती व्यावर्तितः। तत् शृण्वन् स एव प्रत्यवतिष्ठते आत्मशब्दविवक्षितस्यार्थस्य न वेदवेद्यत्वं नाप्यप्रत्यक्षत्वम्, भासमानत्वादिति। तन्निरस्यति वाच्यत्वमिति। 'सर्वे वेदा यत् पदमामनन्ति', 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्यादयः अनुश्रवाणां=वेदानामन्ताः—उपनिषदः स्वयं—साक्षात् वाच्यत्वादिकं वदन्ति। 'यतो वाचो निवर्तन्ते' इत्यादिश्रुतिरपि यत इति पदेनोत्तरार्धेन पूर्वापरवाक्यैश्च तद्वेदकत्वात्, इयदेव ब्रह्म, नेतोऽधिकमिति परिच्छेदस्याभावं निमित्तीकृत्य प्रवृत्ता सती कार्त्स्न्येन ग्रहणस्यैवाशक्यतां दर्शयति। नो चेत्—वाच्यत्ववेद्यत्वयोः सर्वथाऽनंगीकारे, यत् स्ववचनं=ब्रह्म न वेद्यमिति, तत्त्वमस्यादिवाक्यं ब्रह्मपरमित्यादि च, तद्विरोधश्च। ननु मा भूत् श्रुतिभिरवेद्यत्वसिद्धिः, किं त्वनुमानैरिति पक्षं निरस्यति तदिति। ब्रह्म न वेद्यं स्वयंप्रकाशत्वादित्यादिप्रयोगे ब्रह्मपदेन तदबोधने धर्म्यसिद्धिः, तद्बोधने न साध्यान्वयः, अत एव हेत्वसिद्धिश्चेत्यादि।

ततस्तत्साध्यत्वमिति। अवेद्यत्वस्वयम्प्रकाशत्वयोरैक्ये कथं तेनैव तत्साधनम्। अन्यदेवावेद्यत्वग्राहकमिति शंकते अवेद्यत्वेति। किमित्यादिना ग्राहकं तत् ब्रह्म वा वृत्तिज्ञानं वा साक्षि

तद्ग्राहकत्वे तदभावे च तदवेद्यत्वसाधनायोगात्। एवं साक्षिण्यप्यवेद्यत्वग्रहणायुक्तिर्भाव्या॥ ग्राहकान्तरै- रग्राह्यं गृह्यत इत्यविरोध इति चेत्, तर्हि घटादेरप्यवेद्यत्वं सिद्धम्; स्वग्राहकेतराग्राह्यत्वात्। यैश्च त्वयनन्ते- रवाच्यत्वादिकं सिषाधयिषसि, त एव स्वयं वाच्यत्वादिकमभिदधति, "तस्योदिति नाम", "अथ नामधेयं सत्यस्य सत्यम्" इत्यादिषु तद्वाचकविधानात्। "सर्वे वेदा यत्रैकं भवन्ति", "यो वेद निहितं गुहायां परमे व्योमन्", "यत् प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व", "येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्" इत्यादिषु वाक्यतोऽन्यतश्च वेद्यत्वप्रतिपादनादिति। तर्हि, 'यतो वाचो निवर्तन्त' इत्यादेः निर्विषयत्वप्रसङ्ग इत्यत्राह वाकुचित्तेति। 'सैषाऽऽनन्दस्य मीमांसा भवति' इत्यादिना ब्रह्मानन्दस्या- परिच्छेद्यताप्रतिपादने हि वाक्यतात्पर्यं गम्यते। अन्यथा "ब्रह्मविदाप्नोति परम्", "आनन्दं ब्रह्मणो विद्वान्" इत्यादिपूर्वापरविरोधः स्ववचनविरोधश्च स्यात्। तदिदमाह **नो चे**दिति। ब्रह्मप्रतिपादक- भागश्च सर्वो निर्विषयः स्यादित्यत्राह(दित्याह?) **सर्वे**ति। उपलक्षणमेतत् वेदोपबृंहणशतबाधस्य। "वेदैश्च सर्वैरहमेव वेद्यः", "वचसां वाच्यमुत्तमम्" इत्यादिभिश्च, "यतो वाचो निवर्तन्त" इत्यादेरान्यपर्यं ग्राह्यम्।

माऽस्त्वत्र श्रुतिभिरवाच्यत्वादिसिद्धिः, अनुमानतस्तु स्यादिति शङ्कते **तत्सिद्धि**रिति। श्रुतिवदेव विरोधप्रसक्त्या परिहरति **प्रसज**तीति। ब्रह्म अवाच्यमवेद्यं वा एवंत्वादिति हि प्रयोक्तव्यम्; तत्र ब्रह्मपदं साध्याधारं ब्रूते न वा? आद्ये, कथं तद्विरुद्धसाध्यधीः? द्वितीये तु निरर्थकता; निराश्रयसाध्योक्तिश्च। एवं साध्यपदमपि धर्मिपदसमानाधिकरणं न वा? पूर्वत्र, स्वस्य धर्मिणं ब्रूते स्वव्यापारविरुद्धं च ब्रूत इति चित्रमेतत्। उत्तरत्र, अनन्वयः। हेतुपदे च स्वपक्षधर्मत्ववाचिनि प्रकृत्यंशो धर्मिविषयः। अन्यथा कथं प्रत्ययांशस्य तन्निष्ठभावाभिधायित्वम्? अतो धर्म्युल्लेखन(खेन?)तद्भाववाचकं हेतुपदं न स्वप्रकृति विरुद्धं साध्यं साधयेत्। एवमनुग्राहकतर्केऽपि धर्मि-प्रसञ्जक-प्रसञ्जनीयपदेषु विहतिरवधार्या। प्रति- प्रयोगोऽपि—विगीतं वेद्यं वाच्यं च, भासमानत्वादिति। नात्र द्वितीयस्य व्यक्त्याऽनैकान्त्यम्; जाति वत् व्यक्तेरपि वाच्यत्वस्य वक्ष्यमाणत्वात्। युष्माकं च तत्र विमत्यभावात्॥ नन्वत्र धर्मिपदस्य धर्मिणि मुख्यवृत्तिरसिद्धा, सिषाधयिषितावस्थत्वात्; उपचाराभ्युपगमे तु विवक्षितविरोधः स्यात्॥ मैवम्; वृत्तिमात्रस्य स्वपरसंमतत्वेन वाच्यत्वानिश्चयेऽपि प्रयोगोपपत्तेः।

---

श्री— चेति विकल्प्य दूषयति। तद्ग्राहकत्वे इति। वृत्तिज्ञानानां ब्रह्मग्राहकत्वे, कथं तत्र गृहीते अवेद्यत्वग्रहः। ब्रह्मग्राहकत्वाभावे, कस्यावेद्यत्वं गृह्येतेत्यर्थः। साध्यपदमपि = साध्यवाचकपदमपि। स्वस्य—साध्यस्य। स्वव्यापारः-धर्म्यन्वितसाध्यबोधनम्। तद्विरुद्धमवेद्यत्वम्। हेतुपदे-हेतुवाचक- पदे स्वयंप्रकाशत्वादित्यस्मिन् स्वपक्षधर्मत्ववाचिनि—पक्षनिष्ठधर्मरूपस्ववाचिनि प्रकृत्यंशः तद्धित- प्रकृतिभूतस्वयंप्रकाशशब्दः ब्रह्मविषयकः; त्वप्रत्ययः तन्निष्ठं भावं-धर्मं ब्रूते। एवं ब्रह्मवेदकं सदेव कथमवेद्यत्वं साधयेत्। युष्माकञ्चेति। मीमांसकानामपि घटशब्दादेर्व्यक्तिवाचित्वाभावेऽपि व्यक्त्यादिशब्दे तद्वाचित्वमिष्टमिति चकारेण ज्ञाप्यते। नन्विति। अत्र प्रयोगे ब्रह्मादिपदं शक्त्या ब्रह्मपरं न भवति, वाच्यत्वे विवादात्। अतः कथं प्रयोगः। विवक्षितविरोध इति। ब्रह्मशब्दलक्ष्यं पक्षीकृत्य ब्रह्मशब्दवाच्यत्वसाधने विरोध इत्यर्थः। समाधत्ते वृत्तीति। शक्तिलक्षणारूपविशेषानिर्देशेन वेद्यत्वं साध्यम्। भासमानत्वस्य च व्यवहारानुगुण्यरूपत्वात् व्यवहारविषयत्वसाधकत्वौचित्यम्।

श्लो— दुस्साधं क्वचिदप्येवमवाच्यत्वादि कस्यचित् । किं पुनः सर्ववचसां प्रतिष्ठा यत्र तत्र तु ॥

इत्यवाच्यत्वावेद्यत्वपरिहारः ॥ ३ ॥

149. नित्यं ब्रह्मादिशब्दा निरुपधिकसतो लक्षका इत्ययुक्तं ;
मुख्यस्यान्यस्य हानेर्न च निपुणधियो मुख्यमिच्छन्ति लक्ष्यम् ।
मुख्यत्वे बाधकं च क्वचिदपि न वयं किञ्चिदालोकयामो
मुख्यं लक्ष्यं च वाचः पदमिति न च तद्गोचरत्वातिपातः ॥ ४ ॥

ननु लक्षणया धर्म्यादिपदानि प्रवर्तन्ताम्, मुख्यवृत्तिविषयत्वाभावस्तु साध्यत इति को विरोध इत्यत्राह नित्यमिति । अयुक्तत्वं कुत इत्यत्राह मुख्यस्येति । तीरं गङ्गापदलक्ष्यमितिवत् । मुख्यवृत्त्यनर्हं किंचित् न लाक्षणिकं दृष्टम् । सामान्यतो विशेषतो वा स्ववाचकपदान्तरनिर्दिष्टे हि पदान्तरस्य लक्षणा।

---

भा— कथं मुख्यवृत्त्यनर्हस्य न लाक्षणिकत्वम्; इक्षुक्षीरादिरसविशेषा हि मुख्यवाचकपदान्तररहिता इक्षुरसादिशब्दैर्लक्ष्यन्ते इत्याशङ्क्याह—सामान्यतो विशेषतो वेति । प्रायेण विशेषतः स्ववाचकपदविशिष्ट एव लक्षणा । इक्षुरसादिषु तु विशेषवाचकपदाभावेऽपि सामान्यतो रसादिशब्दैः मुख्यया वृत्त्या बोधितेष्वेव लक्षणा भवतीत्यर्थः । यद्यपि इक्षुरसादिशब्दानामपि रसविशेषे मुख्यत्वमेव, तथापि परमतानुसारेण इदमुक्त(?)मिति द्रष्टव्यम् । पङ्कजासनादिशब्दवत् इक्षुरसादि-

वी— 'सर्ववचसां प्रतिष्ठा । सर्वशब्दमुख्यार्थत्वं ब्रह्मणः, वस्त्वन्तरवाचिनामपि अपर्यवसानवृत्त्या अन्तर्यामिब्रह्मबोधकत्वादिति भावः ॥ ३ ॥

स्वाभिमतब्रह्मणः शब्दबोध्यत्वमेव नास्तीति पक्षं परित्यज्य मुख्यवृत्त्या बोध्यत्वरूपं वाच्यत्वमेव नास्ति, लक्षणया बोध्यत्वरूपं लक्ष्यत्वं त्विष्टमेवेति वदतो दूषयति नित्यमिति । ब्रह्मबोधकत्वेनेष्टाः सर्वेऽपि सामान्यशब्दा विशेषशब्दा वा लक्षणयैव तद् बोधयन्ति, न कश्चित् निरुपधिकसतः—औपाधिकसत्तारहितस्य सर्वदा सतः निर्विशेषस्य वाचकोऽस्ति इति तन्मतम् । नित्यमिति पदं सर्वं इत्यर्थपर्यवसायि । लक्ष्यतायाः कादाचित्कत्वनिषेधस्याप्रसक्तेः । किञ्चिदर्थवाचकत्वं विनैवेत्यर्थपरं वा । निरस्यति इत्ययुक्तमिति । मुख्यस्यान्यस्य हानेरिति । मुख्यमर्थान्तरं प्रदर्श्य हि तत्संबन्धो लक्षणेति लक्ष्यत्वमिहोपपादनीयम् । तस्याभावादिदं दुर्वचमिति । तर्हि तस्यैव मुख्यत्वं लक्ष्यत्वञ्चास्तु इत्यत्राह न चेति । संभवति मुख्यत्वे तस्य केनचित् सह वा विना वा लक्ष्यत्वमयुक्तमित्यर्थः । ननु क एवमेकस्यार्थस्य मुख्यत्वं लक्ष्यत्वञ्च ब्रूयात्? अतोऽयमप्रसक्तप्रतिषेध इति चेन्न—मुख्यवृत्तिविषयत्वं काल्पनिकमिति तदाशयात् । किञ्च तन्मते कारणत्वादिधर्मविशिष्टवेषेण ब्रह्म वाच्यम्, धर्मविनाभूतो धर्म्यंशो लक्ष्य इति स्वीकृतत्वात् तत्खण्डने तात्पर्यात् । अयं भावः—विशिष्टं शुद्धादनन्यदेवेति शुद्धस्य न लक्ष्यत्वम्; वाच्यत्वमेव । शुद्धादन्यदिति चेत्, तर्हि शक्यसंबन्धरूपलक्षणायाः शुद्धे दुर्वचत्वात् लक्ष्यत्वमपि नेति । द्वितीयतुरीयपादयोः मुख्यपदमर्थगतमुख्यत्वपरम् । तृतीयपादे मुख्यत्वं शब्दगतम् । ब्रह्मादिशब्दस्य मुख्यार्थविश्रान्तत्वेऽनुपपत्तेर्मात्रयाऽप्यभावात् लक्ष्यमन्यत्र वक्तव्यमित्यर्थः । निर्विशेषे तात्पर्यग्राहकं न किञ्चिदस्तीति भावः । लक्ष्यत्वमात्रस्वीकारेऽपि निर्विशेषत्वभंग एवेत्याह मुख्यमिति ।

तीरं गंगापदलक्ष्यमितिवदित्यत्र वाक्यसमाप्तिः । गंगापदलक्षणास्थले मुख्यार्थप्रवाहसत्त्ववत् ब्रह्मादिपदे मुख्यार्थस्यान्यस्याभावादित्यर्थः । मुख्यार्थो मा भूदित्यत्राह मुख्येति । यत् पदं मुख्य-

वाच्या । अन्यथा, 'ब्रह्मादिशब्दा. लक्षणया प्रवर्तन्ते' इत्युक्ते परेष्टमात्रोक्तिः स्यात् । व्यक्तिविशेषमनिष्कृष्य, 'ब्रह्मशब्दवेद्ये लक्षणया प्रवर्तन्ते' इत्युक्तेऽपि प्रकृत्यादौ तथा प्रवृत्तेरुक्तदोषो दुर्वारः । अथ सर्वकारणत्वादिलक्षिते लक्षणावृत्तिं ब्रह्मादिशब्दानां साध्येत, तदा तत्र मुख्यवृत्तौ न काचिदनुपपत्तिः । प्रवृत्तिनिमित्तपौष्कल्यादुपपत्तिरेव । अन्यस्य तु मुख्यस्य हानि.; तद्गुणलेशयोगात् प्रयोगोपपत्तेः । साध्यवाचकपदमप्यवाच्यसंबन्धिनि लक्षणया वर्तत इति वक्तव्यम् । न चान्यत् किञ्चिदवाच्यं दृष्टमिष्टं वा । तदभ्युपगमेऽप्यत्र ब्रह्मणः तत्सम्बन्धित्वं साधितं स्यात्; न त्ववाच्यत्वम् । स्वयंप्रकाशत्वादिति

आ— शब्दानामपि रसविशेषे मुख्यत्वमेव हि न्याय्यम् । अन्यथा तेषामपि लाक्षणिकत्वप्रसङ्गः । 'प्रवृत्तिनिमित्तपौष्कल्यात् उपपत्तिरेव' इत्यस्यानन्तरं "यद्वा ब्रह्मादिशब्दानां मुख्यस्यार्थान्तरस्याभावात् मुख्यार्थसम्बन्धिनि वृत्तेरेव लक्षणात्वात् एतेषां ब्रह्मणि लक्षणावृत्तिः [न?] युक्तेत्यर्थः" इत्येतावान् ग्रन्थः पतित इति भाति । तथासति हि, कथं मुख्यार्थान्तराभाव इति शङ्कापरिहारार्थः अन्यस्य तु इत्यादिग्रन्थः सङ्गच्छते ; मुख्यार्थसम्बन्धिनि वृत्तिर्लक्षणा इत्येतदुपजीवनेन दूषणान्तरप्रतिपादकग्रन्थसंघटना च । यथास्थिते तु–प्रवृत्तिनिमित्तपौष्कल्यात् ब्रह्मणि मुख्यत्वोपपत्तिमुक्त्वा प्रसङ्गादन्यस्यैव मुख्यत्वानुपपत्तिरिति प्रतिपादयति अन्यस्य त्विति । मुख्यार्थसम्बन्धिनि वृत्तिर्लक्षणेति पूर्वमनुक्तत्वेऽपि, वस्तुवृत्त्या लक्षणायास्तादृप्यात् दूषणान्तरमुच्यते—इत्येवं योजनीयम् ॥ ४ ॥

भा— वृत्त्यनर्हं=तद्रहितम्, तत् लाक्षणिकं न दृष्टमित्यर्थः । नायं द्वितीयपादद्वितीयवाक्यार्थः; तस्योपरि वक्ष्यमाणत्वात् । द्वितीयपादप्रथमवाक्यार्थोपपादनमेवात्र बहुदूरमिति । यदि अमुख्यमिति पदं विभज्य बहुव्रीहिं स्वीकृत्य, 'मुख्यार्थरहितं लक्ष्यार्थं निपुणधियो नेच्छन्ति' इति अर्थान्तरमपि वर्ण्यते, काममस्तु । सामान्यतो इति । सदादि सामान्यपदम्; विशेषपदं ब्रह्मादि । दृष्टान्ते नद्यादिपदं सामान्यम्, गङ्गादि विशेषपदम् । लक्ष्यार्थः सर्वः पदान्तरवाच्य एव भवतीति प्रकृतब्रह्मणोऽपि किञ्चिद्वाच्यत्वमवर्जनीयम् । मुख्यस्यान्यस्य हानेरित्यस्य ब्रह्मादिपदं न ब्रह्मलक्षकं ब्रह्मवाचकपदरहितत्वादित्यप्यर्थः । विगीतं शब्दान्तरवाच्यं लक्ष्यत्वादिति च प्रत्यनुमानम्, अस्मिन्नर्थे लक्षणेति वाचकपदान्तरेण तस्य दर्शयत्वादिति भावः। अस्मिन्नर्थे इत्यनिर्देशे दोषमाह अन्यथेति । सामान्यनिर्देशेऽपि तमेव दोषमाह व्यक्तीति । मुख्यस्यान्यस्य हानेरित्येतत् ब्रह्मादिशब्दस्य मुख्यार्थान्तरस्वीकारिगतशंकान्तरपरिहारपरतयाऽपि व्याख्यातुं शंकते अथेति । ब्रह्मादिशब्दार्थः बृहत्त्वविशिष्टप्रकृत्यादिरूपः कश्चिदस्तु । यतो वा इत्यादिवाक्यरूपगमकबलात् सर्वजगत्कारणवस्तुनि लक्षणेति भावः । खण्डयति तदेति । अयमेव मुख्यार्थः, न तु प्रकृत्यादिरित्युक्तौ न किञ्चिद्बाधकमित्यर्थ. । साधकमप्याह प्रवृत्तीति । सर्वजगन्निरूपितसर्वविधकारणत्वरूपपुष्कलबृहत्त्वाश्रयस्य मुख्यार्थत्वं हि युक्तमिति भाव· । नन्वेवं प्रकृत्याद्यर्थान्तरेऽपि शक्तिकल्पनया गौरवमित्यत्राह अन्यस्य त्विति । हर्यादिशब्द इव तत्रापि शक्तिरवर्जनीयेत्यत्राह तद्गुणेति । एकशब्दार्थसंबन्धरूपलक्षणादिक्रमादाय निर्वाहासंभवस्थल एवानेकशक्तिकल्पनेति भावः । एवं पक्षवाचकब्रह्मपदस्य वाच्यान्तराभावात् तत्संबन्धिनि लक्षणा दुर्वचेत्युक्तम्, साध्यहेतुवाचकपदविषयेऽपि तदाह साध्येति । न वाच्यमिति साध्यं ब्रह्मपरम् । तत्र सर्वस्य शब्दस्य लक्षणयैव ब्रह्मपरतेति पक्षे अवाच्यपदशक्यार्थमन्यं प्रदर्श्य हि तत्संबन्धि ब्रह्मेति वक्तव्यम् । एवं भासमानरूपहेतुपदशक्यार्थं प्रदर्श्य ब्रह्मणि तत्संबन्धित्वरूपलक्ष्यार्थं प्रदर्श्य. । तत्र क शक्यार्थोऽन्य इति । साधनमशक्यमित्युक्तम्; साधनेऽपि अभिमतासिद्धिं बाधकञ्चाह तदभ्युपगमेऽपीति । यदि संबन्धिपर्यन्तलक्षणां विना अवाच्यशब्दभासमान-

हेतुपद स्वेल स्वयप्रकाशसंबन्धिपर स्यात्, तथा सति अन्यत स्वप्रकाशम्, ब्रह्म तु तत्सन्निधानात्प्रगिति साधु सिद्धान्त समर्थित । अथ काल्पनिक मुख्यवृत्तिविषयत्व ब्रह्मण स्यादित्यत्राह न चेति । अय भाव —स्वन्मतेऽन्येषामपि हि मुख्यत्व काल्पनिकमेव, तथा सति यस्य पदस्य यन्मुख्य तत् तस्य लक्ष्यमिति त्वैवेद शोभते। लक्षणानिमित्त चात्र नासीत्याह **मुख्यत्व** इति । **क्वचिदपि** । सद्ब्रह्मादि शब्देषु कुत्रचिदपीत्यर्थं । किंच श्रुतिविरोधपरिहाराय मुख्यवृत्तिबाध इष्ट, लक्षणावृत्त्यङ्गीकारेऽपि तद्विरोधस्ते स्थित एवेत्याह **मुख्यमिति** । विरोधशमन त्वसदिष्टमेव साधीय इति भाव ॥

**इति सद्ब्रह्मादिशब्दानां नित्यलक्षकत्वानुपपत्तिः ॥ ४ ॥**

150. **निस्साधारण्यनारायणपदविषये निश्चय यान्त्यबाधे**
**सद्ब्रह्माद्याः समानप्रकरणपठिताः शङ्कितान्यार्थशब्दाः ।**
**अन्तर्यन्ता च नारायण इति कथितः ; कारण चान्तरात्मे-**
**त्यस्मादप्यैककण्ठ्य भवति निरुपधिस्तत्र शम्भ्वादिशब्दः ॥ ५ ॥**

एवमीश्वरस्य त्वव्यन्तवेद्यत्व शब्दवाच्यत्व च स्थापितम् । स तु हिरण्यगर्भादिष्वन्यतम इति शङ्कायां **पुरुषनिर्णया**दिसाधित विशेषनिर्धारण सगृह्णाति **निस्साधारण्येति** । साधकबाधकाभ्या

---

वा— शब्दमुख्यार्थत्वमेवेष्यते, तर्हि वाच्यत्वाभावो दु साध इति च भाव । ननु स्वीकृत मुख्यार्थत्व कारणस्य ब्रह्मण, ब्रह्म वाच्य न भवतीत्यस्य पारमार्थिक वाच्यत्व नास्तीत्यर्थ इति शङ्कायामुत्थित न चेत्यादि द्वितीयपादद्वितीयवाक्यमित्याह अथेति । घटपटादीनामपि वाच्यत्वममुख्यमेवेति न विशेष । लक्ष्यत्वमपि तथैव काल्पनिकमिति तत्स्वीकार कुत । एतेन घटस्य तद्गतवाच्यत्वस्य च तुल्य व्यावहारिक सत्यत्वम्, ब्रह्मण तद्वाच्यत्वस्य च न तुल्यम्, धर्मिण परमार्थत्वादिति शङ्काऽपि निरस्ता । तथा सति वाच्यत्वत्यागेन लक्ष्यत्वस्वीकारायोगात् । ननु सगुण ब्रह्म सर्वत्र ब्रह्मेश्वरसर्वेशादिपदवाच्यम्, निर्विशेष तु लक्ष्यमिति चेत्—तर्हि लक्ष्यत्वरूपधर्मोऽपि सविशेषस्यैव । अतोऽर्धजरतीयवचनमयुक्तम् । निर्विशेषश्चासिद्धमिति प्रागेवोक्तम् । असदिष्टमिति । परिच्छिन्नत्व-भावप्रयुक्तमिति प्रागुक्तमेवेत्यर्थ ॥ ४ ॥

सविशेषेश्वरतत्त्व शास्त्रवेद्यमित्युक्तम् । स नारायण इत्युच्यते निरिति । साधारण्यात् निष्क्रान्त निस्साधारण्य नारायणपदम् । भवादिशब्दाना साधारण्य सर्वसमतम् । ब्रह्मशब्दस्य तु परीक्षकबुद्ध्या भगवदसाधारण्येऽपि अन्यत्रापि प्रयोगदर्शिनामपरीक्षकाणा बुद्ध्या प्रकृति जीव-शरीरादिसाधारण्यम् । नारायणपद तु न तथेति । पूर्वार्ध, 'एको ह वै नारायण आसीत्' इति कारण वाक्यैककण्ठ्यमन्येषा कारणवाक्यानामिति नारायणपारम्यमुक्तम् । अन्यत्र अन्तर्यामिणो नारायणत्व कारणस्यैवान्तर्यामित्वञ्चोक्तमित्यतोऽपि तत्परत्वमुत्तरार्धेनाह । एवञ्च —नारायणशब्दस्य नारायणा-न्तर्यामी शम्भुरित्यर्थ शम्भुशब्द एव रुद्रमात्रपर इति शङ्का निरस्ता । नारायणस्यैवान्तर्यामित्वोक्त ।

श्रीपतिमात्रासाधारण यत् नारायणपद तद्विषये अबाधे-प्रलयकालावृत्ति वेनानुक्ते श्रीपतौ निश्चय यान्ति = पर्यवस्यन्ति । के? समानप्रकरणपठिता —कारणरूपैकार्थविषयकतया एकप्रकरणत्वेन ग्राह्याणि यानि कारणवाक्यानि तेषु श्रुता साधारण वभ्रमया वा साधारणत्वभ्रमेण वा अन्यार्थ परत्वेनापि शङ्क्यमाना सत् ब्रह्म असत् आत्मेत्यादय शब्दा । साधकेति । अस्तित्वेन अभावप्रतियोगि

मप्राप्ते शास्त्रमर्थवदित्यभिप्रायेणोक्तम् **अत्राप इति**। **सदादिशब्दानां** कथं शङ्कितान्यार्थत्वम्? इत्थम्। सच्छब्दस्तावत् सत्तायोगिषु सर्वेषु प्रवृत्ततया न विशेषनिर्धारणार्हः। ब्रह्मशब्द एकरूढोऽपि बहुषु रूढवत् प्रयुक्ततयाऽन्यार्थत्वशङ्कार्हः स्यात्। आत्मशब्दश्च जीवपरादिसाधारणप्रयोगः। एवं **पुरुषप्राणा**क्षरादिशब्दा अपि। **नारायण**शब्दस्तु न जात्युपाधिवचनः; न वाऽनेकरूढः। अतस्तेन अन्येषां विषय विशेषनिर्धारणं युक्तम। तत्र च हेतुः समानप्रकरणपठितत्वम्। अन्यथा पश्वधिकरणादेरपि भङ्गः स्यात्।

प्रकारान्तरेणापि निर्दिधारयिषुराह **अन्तर्यन्तेति**। यथा **सुबालोपनिषदि,** "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इति। एतेन **अन्तर्यामिब्राह्मण**मप्येतद्विषयमिति निर्धारितम्। ततः किमित्यत्राह **कारणमिति**। "तत् सृष्ट्वा तदेवानुप्राविशत्" इत्यादिना हि सर्वस्रष्टुः सर्वान्तर्यामित्वमप्याम्नातम्। फलितमाह **अस्मादिति**। **नारायणशब्देन सदादिशब्दानामिति** शेषः। ननु "कारणं तु ध्येयः" इत्यत्र "शम्भुराकाशमध्ये" इति समाख्यान्तरं दृष्टम्॥ ततः किम्? कारणानुवादेन ध्येयत्वविधिपरं हीदं वाक्यम्। पुरोवादे च नारायणत्वनिर्णये तस्मिन् निरुपाधिकावयवार्थभूम्ना तद्वृत्तिरुपपन्ना। तथा च **नारायणानुवाकेऽपि,** "विश्वशम्भुवम्" इत्युच्यते, "शाश्वतं शिवम्" इति च। अतोऽन्यपरवाक्यस्थसमाख्यामात्रमकिञ्चित्करमिति भावः॥ ५॥

151. विष्णोरप्यस्त्यभिख्या शिव इति; शुभतारूढिरत्रानुपाधिः
तस्मात् ध्येयः श्रुतोऽसौ शिव इति; शिव एवेति वाक्यं त्वनूक्तिः।
उक्तं नारायणाधिष्ठितमिति च तमोऽनेकबाधोऽन्यथा स्यात्
ब्रह्मेशादेर्महत्यामुपनिषदि विलयाद्युक्तम्; एवं तु नात्र॥ ६॥

७१— तया वा प्रमाणान्तराज्ञाते इत्यर्थः। पश्वधिकरणं–छागपशुन्यायः। पुरोवादः–कारणवाक्यानि। अत्र कारणानुवादेन ध्येयत्वविधानात् कारणानुवादिवाक्यमेवैतत्। निरुपाधिकेति। शं=सुखम्। तद्भावकत्वरूपशम्भुत्वं नारायणे निरुपाधिकम्; मोक्षान्तस्य सर्वस्य सुखस्यानन्याधीनं दातृत्वात्। शाश्वतपदं शिवविशेषणम्, अशाश्वतकार्यशिवव्यावृत्त्यर्थम्। शम्भ्वादिशब्द इत्यत्र आदिपदेन शिवरुद्रहिरण्यगर्भादिशब्दग्रहणम्। आकाशमध्ये=हृदयाकाशे॥ ५॥

पूर्वोक्ताथर्वशिखावाक्येऽन्यत्र च स्थितं शिवशब्दं विचारयति विष्णोरिति। शिव इति नाम विष्णोरपि विष्णुनामसहस्रेऽस्ति। ननु तत्र गुणप्रयुक्तो व्यवहारः, रूढिस्तु रुद्रे इत्यत्राह शुभतेति। शिवमात्रे काचित् रूढिरस्तु नाम। शुभत्वं निमित्तमादाय रूढिः विष्णावपि। ननु सापि रूढिः रुद्रे स्यादिति चेत्–तत्र रूढिः सोपधिः परिच्छिन्नविषयिणी। विष्णौ तु निरुपाधिकशुभत्वविषयिणी। प्रागेव नारायणस्य कारणतायाः स्थापितत्वात्। तस्मात् अथर्वशिखायां, 'शिव एको ध्येयः' इति वाक्ये ध्यानविधौ कर्मत्वेन शिव इति श्रुतः असौ=प्रागुक्तविष्णुरेव। यत्तु वाक्यान्तरं श्वेताश्वतरोपनिषदि, 'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासत् शिव एव केवलः। तदक्षरं तत् सवितुर्वरेण्यं प्रज्ञा च तस्मात् प्रसृता पुराणी' इति, तत्र पूर्वार्धमनुवादरूपम्। उत्तरार्धे, 'तदक्षरम्' इत्यादिना अक्षरत्वादिविधानात्। पूर्वार्धे कारणभूततमस्सत्ताकाले दिवादिनिषेधवत् शिव एवेति वाक्येन केवलशिवातिरिक्तचेतननिषेधः। एवकारघटितवाक्ये एवकारार्थो विधेयः, अन्यत् अनूद्यत इति सुनिश्चितम्। अतः तमःकाले यः स्थितत्वेनान्यत्र प्रसिद्धः तं केवलशिवपदेनानूद्य तदन्यचेतननिषेधः क्रियते।

शिवशब्दस्य न केवलं शुभा(द्ध्या)दिपौष्कल्यमात्रात् नारायणे वृत्तिः, किंतु नामतयाऽपीत्याह **विष्णोरिति** ॥ "सर्वश्शर्वश्शिवः स्थाणुः" इति हि **तन्नामसहस्रे** पठ्यते । ननु शुभतया रुद्रेऽस्य रूढिः स्यादित्यत्राह **शुभेति** । शुभतया जनिता ह्यस्य रूढिः, "मङ्गलानां च मङ्गलम्" इत्यादिभिर्निरुपाधिक-शुभत्वशालिनि भगवत्येव युक्ता । अन्यत्र तु तद्गुणलेशयोगात् वृत्तिः स्यात् । प्रसिद्धिप्रकर्षस्तु प्रणव-वेदादिषु ब्रह्मशब्दवत् प्रचुरप्रयोगमात्रात् स्यात् । यत्र तु शिवस्य ध्येयत्वोक्तिः, तत्रापि **शाश्वतशिवा-**नुवादेन ध्यानं विधीयते । नैतावता प्रसिद्धशिवस्य श्रुतिविरुद्धं कारणत्वं कल्पयितुं शक्यमित्याह **तस्मादिति** । **असौ**—विष्णुरेव । महापुरुषवेदनस्य हि मुक्तिहेतुत्वं प्रतिपाद्य, "नान्यः पन्था [अयनाय विद्यते]" इति नियम्यते । ननु, "यदा तमस्तत्" इति वाक्ये, 'शिव एव केवलः' इत्युच्यते ; अतः प्रसिद्धशिवः कारणमित्यत्राह **शिव एवेति** । इदं तावत् वाक्यं न कारणतमसः प्रतिपादकम्, यदेति कालविशेषप्राप्तानुवादात् । "अव्यक्तमक्षरे लीयते; अक्षरं तमसि लीयते" इति **सुबालोपनिषद्वाक्येन** तत्प्राप्तिः । सा चोपनिषत् नारायणस्यैव कारणत्वोपास्यत्वादिकं बहुधा वक्ति । अव्यक्ताक्षरक्रमेण तमःस्थाने, "यस्य मृत्युश्शरीरम्" इति पठ्यते । अतो नारायणाधिष्ठिततमोवाक्यमिह पुरोवादः ॥ "नासदासीत् नो सदासीत् तदानीम् । तम आसीत्" इत्यादिवाक्यमत्र पुरोवादः किं न स्यादिति चेत्, तथाऽपि तस्य **सौबाल**वाक्यसमानार्थत्वं ग्राह्यम् । अतः कारणतमोधिष्ठातृत्वेन प्रसिद्धो नारायण एवात्र शब्दान्तरपरामृष्टः । अनन्तरं च, 'तदक्षरम्', 'तत् सवितुर्वरेण्यम्' इत्यादिना तत्प्रकारविशेषो-पदेशः । **मानवे** च, 'आसीदिदं तमोभूतमप्रज्ञातम्' इत्यारभ्य, 'तेन नारायणः स्मृतः' इत्यन्तेन स एव कारणतमोधिष्ठातेति स्पष्टमुक्तम् । तदेतत् सर्वमभिप्रेत्याह **उक्तमिति** । एवमनभ्युपगमे बहुश्रुति-स्मृतीतिहासादिबाधः स्यादित्याह **अनेकबाध** इति । अपि च नारायणकारणत्वप्रतिपादिकायां **महोप-निषदि**, "न ब्रह्मा नेशानो नेमे द्यावापृथिवी" इत्यादिना नारायणात् ब्रह्मेशानयोरुत्पत्त्यादिकं श्रुतम् । 'यदा तम' इति वाक्ये, 'न दिवा न रात्रिः' इत्येतावदुक्तम् । एतेन, 'हिरण्यगर्भस्समवर्तताग्रे' इति वाक्य-

श्री—केवलमिति अव्ययाभावात् पुल्लिङ्गेन केवलत्वविशिष्टशिवेत्युक्त्या च नायं प्रसिद्ध इति ज्ञायते । "न सच्च चासत्" इत्यस्य, "न मूर्तं न चामूर्तम्" इत्यर्थः । शेषं श्वेताश्वतरोपनिषद्भाष्यपरिष्कारयोः द्रष्टव्यम् । उक्तमिति । सुबालोपनिषदीति शेषः । अनेकबाधः—बहुश्रुतिस्मृतिबाधः । महत्यामुपनिषदि = महोपनिषदि । 'न ब्रह्मा नेशान' इति । एवं—रुद्रादिनिषेधवत् अत्र नारायणनिषेधो न श्रूयत इत्यर्थः ।

शुभतया रुद्रे इति । ननु रुद्रत्वेनासाधारणधर्मेण रुद्रे रूढौ स्थितायां किमिति साधारणेन शुभत्वेन रूढिः । अतः शुभतयेति न स्यादिति चेत्—असाधारणरूढिवत् विष्णुस्वीकारार्थाभिमत-साधारणरूढिरप्यस्ति शिवे इति ज्ञापनाय तदुक्तिरिति भाव्यम् । न कारणतमसः प्रतिपादकमिति । 'यदा तम' इति वाक्ये तमश्शब्दो मूलप्रकृतिभूततमःपर एव । अन्धकारपरत्वे हि, 'न तमः' इति निषेधः श्रूयेत । तथापि तद्विधायकं तत्प्रापकं नेदं वाक्यम् ; किंतु मानान्तरप्राप्तानुवादकमिति भावः । कालविशेषप्राप्तानुवादादिति । कालविशेषे कार्यरहिततया स्थितत्वेन ज्ञातस्य तस्यानुवादादित्यर्थः । यच्छब्दघटितत्वं हि अनुवादत्वसाधकमिति भावः । उत्तरार्धं विधायकमिति वक्ष्यते । नारायणा-न्तर्यामिकत्वबोधकवाक्यान्तरमेव पुरोवादोऽस्तु इति शंकते नासदिति । शिवाधीनत्वं तु तत्रापि नोक्तम् । एतेनेति । 'न ब्रह्मा' इति चतुर्मुखस्यापि प्रलये निषेधेनेत्यर्थः ॥ ६ ॥

मपि निरूढम्; "'अद्भ्यस्संभृतो हिरण्यगर्भ' इत्यष्टौ" इति तद्विषयानुवाकान्तरसमानार्थत्वसिद्धेश्चेति ॥६॥

(152) यः प्रोक्तः सर्वकर्तुः परमखिलतनोर्नापरं किञ्चिदस्ती-
त्यस्यैव स्यादनूक्त्योत्तरतरकथनं; न स्थितोऽन्यस्य; बाधात्।
विश्वव्याप्तस्य तस्योचितमुपधिपरिच्छेदनादुन्मितत्वम्;
स्वस्यैव प्रापकत्वादशिथिलचिदचिद्धारणाच्चैष सेतुः ॥ ७ ॥

ननु, 'यस्मात् परं नापरमस्ति किञ्चित्' इत्यादिना, 'तेनेदं पूर्णं पुरुषेण सर्वम्' इत्यन्तेन पुरुषसूक्तादिप्रसिद्धं पुरुषमनूद्य, 'ततो यदुत्तरतरम्' इत्यादिना तस्मात् परस्यैव वेदनममृतत्वादिसाधकमुक्तम्; स एव सर्वेश्वरः स्यादित्यत्राह यः प्रोक्त इति। सर्वकर्तृत्वं पुरुषसूक्तार्थप्रत्यभिज्ञया सिद्धम्। अखिलतनुत्वं च, 'पुरुष एवेदं सर्वम्' इतिवत् 'तेनेदं पूर्णं पुरुषेण सर्वम्'इत्यनेन व्यञ्जितम्। यस्मादपरं किञ्चित् परं नास्तीत्यन्वयः। तेन, 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्ययमर्थोऽनूदितो भवति। एवं समाभ्यधिकदरिद्रस्य विश्वव्यापिनोऽस्यैव सहेतुकं ततो यदुत्तरतरमित्यनुवादः। अत एव तद्रूपमनामय-

---

[1]— सहेतुकं ततो यदुत्तर(तर?)मित्यनुवाद इति। तत इति पदं नोत्तरस्यावधिप्रतिपादकम्। किन्तु पूर्वोक्तपरान्तराभावं हेतुतया परामृशतीति भावः। यच्छब्दान्वयेऽपि 'यदाग्नेयः' इत्यादिवत् अ[न?]नुवादत्वं किं न स्यादित्यत आह—अत एवेति। 'तद्रूपमनामयम्' इत्यादियच्छब्दनिर्दिष्टं तदिति

[2]— ननु विष्णोरेवं विश्वान्तर्यामित्वोपादानत्वब्रह्मशब्दवाच्यत्वादिस्वीकारेऽपि परतरं मुक्तो प्राप्यमन्यदस्त्येवेति पराधिकरणोक्तशंका अनूद्य निरस्यति य इति। श्वेताश्वतरवाक्यम्, "ततो यदुत्तरतरं तद्रूपमनामयम्। य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापि यन्ति" इति। तत्र, "तेनेदं पूर्णं पुरुषेण सर्वम्" इति अन्तर्यामिणं प्रस्तुत्य तदपेक्षया यत् उत्तरतरं = उत्कृष्टम् तदेव वेदनीयमित्युक्तत्वात् न विष्णोः सर्वपरत्वमिति न; यदुत्तरतरमिति कथनं हि पूर्वोक्तान्तर्यामिण एवानूक्त्या स्यात्। "ज्योतिष्टोमेन यजेत", "प्रकृत्या चारुः" इतिवत् अनूक्त्येति विशेषणे तृतीया। अन्तर्याम्यनुवादरूपेण कथनम्। अनुवादरूपमेवेत्यर्थः। यदुत्तरतरमिति पदेन अन्तर्याम्येवानूद्यते इति। पूर्वमन्त्रे स यथोक्तः, तं प्रकारमाह प्रथमपादेन। यस्मात्परमिति वाक्ये, अत्र च परमिति पदमुत्कृष्टार्थकम्। अपरमित्यस्य अन्यदित्यर्थः। सर्वकर्तुः अखिलतनोरिति पदद्वयं पञ्चम्यन्तम्। तस्य परमपरमित्युभयत्रान्वयः। तदपेक्षयाऽन्यत् किमपि तदपेक्षयोत्कृष्टं न भवतीत्येतदर्थः। एवं यः पुरुषः स्वाभ्यधिकरहितत्वेनोक्तः तस्यानूक्तिरिह उत्तरतरमिति। इतः = पुरुषात् अन्यस्य उत्तरतरपदेन न ग्रहणम्। तथासति पूर्वं कथितस्य स्वाभ्यधिकराहित्यस्य बहुप्रमाणस्य च बाधप्रसंगादित्यर्थः। ननु तत इति पञ्चम्या पुरुषापेक्षयेत्यर्थिकया तदन्यस्योत्तरतरत्वे स्पष्टे कथमपलाप इति चेत्—तत इति श्रौतं पदं न तदपेक्षयेत्यर्थकम्, किं तु तस्मात् कारणादिति हेतुपरम्। सर्वकर्तुरिति पदेन—अन्तर्यामिणोऽस्योपादानत्वमात्रम्, निमित्तं तु महेश्वरः ततः पर इति न मन्तव्यम्; "तदैक्षत बहु स्याम्" इत्यैक्यपरवचनशतविरोधात् इति सूच्यते। ननु ब्रह्मणः परिच्छिन्नत्वावगमात् कथं व्यापित्वमित्यत्राह विश्वेति। उन्मितत्वम् = वस्त्वन्तरं गृहीत्वा तन्मितत्वं कथितं युक्तम्, तेनोपाधिना परिच्छेदात्; न तु स्वतः परिच्छेदात्। ननु सेतुरिति कथनात् तद्द्वारा प्राप्यमन्यदेव स्यादित्यत्राह स्वस्येति। एकत्र सेतुपदं स्वस्यैव स्वयंप्रापकमिति प्राप्यप्रापकैक्यपरम्। अन्यत्र वाक्ये चेतनाचेतनसर्ववस्तुस्वभावपरस्परासंकरकरत्वपरम्॥

सहेतुकमिति पदेन तत इति पदं हेतुपरमिति दर्शितम्। तथा च पूर्वोक्तहेतुना सर्वव्यापि-

मित्यादिभिराकारान्तरोपदेशः। प्रकार्यन्तर(प्रकारान्तर)स्यासिद्धत्वात् **यदुत्तरतरमित्यनुवादायोगमभिप्रे**त्याह **न त्वितोऽन्यस्येति**। अयं भावः(?)—'य एतद्विदुरमृतास्ते भवन्ति, अथेतरे दुःखमेवापियन्ति' इति च तद्विषयमेव। अन्यथा, 'नान्यः पन्था अयनाय' इति पुंसूक्तवाक्येन व्याघातः। एकविषयत्व एव ह्युभयत्रान्यवेदनस्य मोक्षहेतुत्वाभावोक्तिः संघटते। तत्र बहुधा विरोधमप्याह **बाधादिति**। पूर्ववाक्ये तावत् परान्तरनिषेधादुपक्रमनयेन तद्विरुद्धमुत्तरमुदेतुं नालम्। उत्तरत्र **सर्वाननशिरोग्रीवत्वा**दिना, 'सहस्रशीर्षा पुरुषः', 'सहस्रशीर्षं देवम्' इत्याद्युक्तमिह प्रत्यभिज्ञातम्। अतोऽपि न तदन्यस्योत्तरतरत्वोक्तिसंभवः। अन्यथा, "न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः" इत्याद्युपबृंहणशतबाधश्चेति। ननु, 'पादोऽस्य विश्वा भूतानि', 'एष त आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा' इत्यादिभिः कारणपुरुषस्य परिच्छिन्नत्वोक्त्या ततोऽन्यदपरिच्छिन्नं परतरमित्यत्राह **विश्वव्याप्तस्येति**। अयं भावः—यत्रयत्र परिच्छेदोक्तिः, तत्रतत्र विश्वव्याप्तत्वमप्युक्तम्। अतस्तथातथोपासनार्थमौपाधिकः परिच्छेद उच्यत इति। सेतुत्वश्रुत्या तेनोपायेन कूलान्तरवत् प्राप्यान्तरं गम्यत इत्यत्राह **स्वस्यैवेति**। 'अमृतस्यैष सेतुः' इत्यत्र तावत् **अमृत**-शब्देन श्रुत्यन्तरवत् ब्रह्माभिधाने स्वप्राप्तेः स्वयमुपाय इत्येतावदेव सिध्येत्। मोक्षाभिधानेऽपि तदुपायतयाऽन्यः परतरो न कल्पयितुं शक्यते। 'एष सेतुर्विधरण एषां लोकानामसंभेदाय' इत्यत्र तु 'षिञ् बन्धने' इति धातौ स्वस्मिन् आधारे विश्वमसङ्कीर्णं बध्नातीति **सेतुः**। तत्रापि न ततः परसंभवः। 'एतं सेतुं तीर्त्वा' इत्यत्रापि, 'अन्धस्सन् अनन्धो भवति' इत्यादिपूत्तरवाक्येषु पुरुषस्य प्राप्यान्तरानभिधानात् **तरतिः** प्राप्तिवचनः। एवं, 'नैतं सेतुम्' इत्यादावप्यन्यथासिद्धसेतुव्यपदेशो न प्राप्यान्तरकल्पनक्षम इति॥७

---

प्र- परामृश्य अरूपानामयत्वाद्युपदेशादनुवादत्वमित्यर्थः। अथापि 'यस्मात्' इति निर्दिष्टादन्यस्योत्तरतरत्वानुवादः किं न स्यादित्यत्राह प्रकार्यन्तरस्येति। 'प्रकारान्तरस्य' इति पाठे उत्तरतरान्तरसद्भावरूपस्य प्रकारान्तरस्येत्यर्थः। उत्तरतरसमभिव्याहृतस्य तत इति पदस्य तदपेक्षितावधिप्रतिपादकत्वौचित्यात् उत्तरतरान्तरसद्भावसिद्धिरन्वेषणीयेत्याशङ्क्य नेत्यस्य अभिप्रायमाह अयमभिप्राय इति। विश्वव्याप्तस्येति। श्रुत्यन्तरवदिति। 'आत्माऽऽनन्दोऽजरोऽमृतः' इत्यादिश्रुत्यन्तरवदित्यर्थः॥ ७॥

वी—त्वाभ्यधिकराहित्येन यत् उत्तरमित्यवधृतम्, तत् अरूपत्वादिविशिष्टं वेद्यं प्राप्यञ्चेति वाक्यार्थ इति भावः। श्रीभाष्ये पराधिकरणे एतदर्थवर्णनावसरे यतस्तत इति पदद्वयं न मन्त्रगततत:पदार्थाभिप्रायेण; पूर्वार्धार्थस्य उत्तरार्धप्रमेयहेतुत्वार्थं स्वयं पूरितम्। मन्त्रगततत:पदार्थस्तु पूर्ववाक्येन ज्ञापितः। अन्यथा वाक्यार्थवर्णने क्लेशादिति हृद्गतम्। भाष्यार्थदर्पणेऽस्मदुक्तापेक्षया इत्थं वर्णनं स्वरसम्। अनुवादायोगमिति। यदि पूर्वोक्तब्रह्माधिकमत्र विवक्षितं स्यात्, तर्हि तस्य प्रमाणान्तराप्राप्ततया ततोऽप्यस्त्युत्तरतरमिति प्रयोगः स्यात्, न तु यदुत्तरतरमिति अनुवादभूतयच्छब्दप्रयोग इति भावः। नत्वित्यादिप्रतीकधारणानन्तरम्, अयं भाव इतीदं न स्यात्, तदनुक्तेः; उपरि तत्समापकेतिशब्दाभावाच्च। पूर्वपादत एव न त्विति निषेधे हेतोरवगतत्वात् बाधादितीदमधिकदोषपरतयाऽवतारयति तत्रेति। श्रुत्यन्तरवदिति "एष ते आत्माऽन्तर्याम्यमृतः" इत्यत्रेवेत्यर्थः। मोक्षाभिधानेऽपीति। कोशप्रसिद्धेश्चेति भावः। इत्यत्र त्विति। असंभेदायेति असंकररूपार्थबोधनात् असंकीर्णं बध्नातीति=असंकरकरत्वात् सेतुः=सेतुशब्दव्यपदेश्यो भवति। तत्रापि—तादृशार्थेऽपि। ततः परेति। तदधिकेत्यर्थः॥ ७॥

(158) पुंसूक्तं सर्ववेदप्रपठनमहितं यत्परत्वैकतानं
तस्यैव श्रीपतित्वं विशदमभिदधे पुत्तरत्रानुवाके ।
आम्नातश्चैष नारायण इति निखिलब्रह्मविद्यासु वेद्यः
तत्तद्विद्याप्रदेशश्रुतविविधपदप्रत्यभिज्ञप्तिपूर्वम् ॥ ८ ॥

अथ पुरुषसूक्तस्य विनियोगविशेषात् नारायणपरत्वे सिद्धेऽपि शब्दसाधारण्यात् सन्दिहानाना प्राकरणिकादनन्यथासिद्धलिङ्गात् विशेषनिश्चयमुत्पादयति **पुंसूक्तमिति** । **सर्ववेदप्रपठनमहितमित्यनेन** परतत्त्वविषयप्रमाणाना मिथोविरोधप्रसक्तौ बलाबलचिन्तायां परिग्रहातिशयादेतस्य प्राबल्यं सूच्यते । उक्तं च तदभिप्रायेण **महाभारते**, "इदं पुरुषसूक्तं हि सर्ववेदेषु पठ्यते" इति । उत्तरानुवाकं पुरुषसूक्तोक्तमहापुरुषविषयं, सन्निध्यनुगुणशब्दार्थप्रत्यभिज्ञानात् । तत्र, "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति **तैत्तिरीयाः** समामनन्ति, **वाजसनेयिनस्तु**, 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति । न चात्रानुवाकद्वये **धातृप्रजापतिशब्दाभ्यामन्यविषयत्वमाशङ्कनीयम्**, **विश्वकर्मत्वष्टृशब्दाभ्यामपि प्रसङ्गात्** । अतः प्रसिद्धतमलिङ्गानुरोधेन धातृ(त्वष्टृ)प्रभृतिशब्दानां योगत एव मुख्यत्वमेष्टव्यम् । किंच **नारायणानुवाके**, 'सहस्रशीर्षं देवम्' इत्यादिभिः पुरुषसूक्तप्रभृतिसर्वपरविद्यावेद्यं पुरुषं प्रत्यभिज्ञाप्य तस्य नारायणत्वं बहुशोऽभ्य-

---

**टी—** ननु पुरुषसूक्तं कारणवाक्यम्, परविद्यावाक्यञ्च, सर्वसृष्टत्वमोक्षार्थोपासनोभयप्रतिपादनात् । तदितरापेक्षया प्रकृष्टम् । सर्ववेदघोषितत्वात् । तत्तु नारायण इति वाऽन्यथा वा व्यक्तिविशेषं न दर्शयति । तस्मात् तथा निर्धारणमयुक्तमिति तदाशयं उन्नीयत इत्यत्राह पुंसूक्तमिति । तत् यत्परत्वैकतानम् = यस्य जगत्कारणस्य परत्वेदम्परम्, तस्य कारणस्यैव श्रीपतित्वं हि विशदमनन्तरानुवाके उक्तम् । तथा सर्वपरविद्यावेद्यो नारायण इति व्यक्तिनिर्धारणार्थं नारायणानुवाके, "सहस्रशीर्षं देवम्" इति पुरुषसूक्तगतपदोपक्रमेण एष पुरुषसूक्तवेद्यो नारायण इति वेदितम् । एवं श्रीपति, नारायण इत्यसाधारणपदद्वयज्ञापितव्यक्तिपरत्वादेव सर्वं प्रमाणजातं नारायणविषयमेव पुरुषसूक्तविनियोजकं दृश्यते । परीक्षणासमर्थानां प्रमाणजातमिदमेव पुरुषसूक्तस्य नारायणपरत्वे पर्याप्तं साधकमिति ॥

पतिशब्दाभ्यामिति । पूर्वानुवाके, 'धाता पुरस्तात् यमुदाजहार' इत्युक्तो धाता महापुरुषभिन्नः । धातृप्रजापतिशब्दयोरेकस्य चतुर्मुखे रूढत्वं कोशात् । अतश्चतुर्मुखपरमेवानुवाकद्वयम् । प्रसिद्धञ्च तच्छरीरात् वर्णादिसृष्ट्यादिकम् । उपास्यत्वमपि तस्यैव कार्यब्रह्मण । नारायणस्य लक्ष्मीपतित्वे निर्विवादेऽपि अनुवाकद्वयप्रधानार्थोऽन्यः किं न स्यादिति शङ्का । विश्वेति । विश्वकर्मपदं त्वष्टृपदञ्च देवशिल्पिविशेषे रूढमिति तत्परमेवानुवाकद्वयं किं न स्यादिति प्रतिबन्दिः । तथा च स्वरसप्रतीतं महापुरुषस्यैव वर्णादिस्रष्टृत्वं नोपेक्ष्यम् । धाता = ब्रह्मा तत्रोपसर्जनतयैव शक्रादिवदुक्तः । अत उपास्योऽपि न कार्यब्रह्मण । एवम्, 'अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टौ' इति श्रुत्या नारायणोपनिषद्येव परमात्मपरत्वावगमादपि न कार्यब्रह्मपरत्वम् । एवं धातृपदस्यात्र मुख्यार्थत्वेऽपि प्रजापतिपदमुत्तरानुवाके यौगिकं महापुरुषपरम् । त्वष्टृविश्वकर्मपदयोरपि तत्रैव यौगिकत्वम् । लक्ष्मीपतित्वार्हस्यैव प्रजापत्यादिशब्दग्राह्यत्वादिति भावः । धातृप्रभृतिशब्दानामित्यत्र त्वष्टृप्रभृतिशब्दानामिति शोधनीयम् । पूर्वं द्विवचनम् । इह बहुवचनमिति विषयभेदः । धातृशब्दश्चतुर्मुखे रूढो नान्यथा क्रियते पुरुषसूक्ते इति धातृशब्दे योगार्थवर्णनायुक्तञ्च । त्वष्टृशब्दो विश्वकर्मशब्दः प्रजापतिशब्दश्च महापुरुषपरत्वात्

त्तम् । अतो यत्रयत्र **परब्रह्म-परतत्त्व-परज्योतिः-परमात्मादिशब्दा** दृष्टाः, तत्र सर्वत्र नारायण एव प्रतिपाद्यत इति निश्चीयते । अतः परतत्त्वनिर्णयेऽयमेवानुवाकः पर्याप्त इत्यभिप्रायेणाह **आम्नात** इति ॥८

(154) **रुद्रेन्द्रादिश्च यत्र स्फुरति परतयाऽनन्यथासिद्धलिङ्गैः**
**तत्तत्त्वैर्विशिष्टो हरिरखिलतनुस्तासु विद्यासु वेद्यः ।**
**पारम्यं त्वान्यपर्यान्न भवति, नकिरित्यादिभिः स्तोत्रवाक्यैः**
**अन्याकूतैर्नमस्यादिभिरपि न परः स्यादनैकान्त्यदुःस्थैः ॥ ९ ॥**

तथाऽपि स्वातन्त्र्यधादिलिङ्गैः प्रसिद्धेन्द्रादिविषयासु मोक्षार्थविद्यासु का गतिरित्यत्राह **रुद्रेन्द्रादि**रिति । प्रसिद्धेन्द्रादिलिङ्गानां परमात्मलिङ्गानां चानन्यथासिद्धौ उभयानुरोधेन सद्वारकमद्वारकं च तत्तद्विशिष्टब्रह्मोपासनपरत्वं स्वीकर्तव्यमित्यर्थः । कर्मविधिप्रकरणेषु, 'न किरिन्द्र त्वदुत्तरः' इत्यादिभिः प्राकरणिकदेवताप्रशंसापरैः न तासां परत्वसिद्धिरित्याह **पारम्यमिति** । 'न किरिन्द्र' इत्यस्य वस्त्वादित्यादिषु त्वदुत्तरो नास्तीति याथार्थ्यसिद्धिः । 'एक एव रुद्रो न द्वितीयाय तस्थे' इतीदमपि तत्रत्यपशुविशेषे द्वितीयानन्वयपरमिति **मीमांसाभाष्यकारादिभि**र्व्याख्यातम् । एवमीदृशवाक्यान्तराणि

ष्टी— यौगिक इति वाक्यार्थः । 'विश्वकर्मा मनुस्त्वष्टा' इति नामसहस्रे व्युत्पत्तिर्द्रष्टव्या । त्वक्ष— तनूकरणे इति धातुनिष्पन्नत्वात् तनूकर्ता व्यक्तावयवी कर्तेत्यर्थः । त्वक्षेत्यत्र ककारलोपात् त्वष्टेति । तनूकरणं न्यूनीकरणम् । यद्वा तनुः शरीरम् । व्यष्टिदेहः कारणावस्थायां जीवस्याशरीरं अङ्गप्रत्यङ्गविशिष्टविलक्षणावयवितया निष्पाद्यत इति त्वष्टृत्वं परमात्मनः ॥ ८ ॥

एवं नारायणातिरिक्तस्य पारम्ये परास्ते, शम्भुशिवादिशब्दानामर्थान्तरग्रहणेन नारायणे समन्वय इति प्रागुक्तं यत्र दुःस्वीकरम् रुद्रेन्द्रादिमात्रान्वयि-भस्मधारित्वत्वाष्ट्रवधादिधर्मवचनात्, तत्र तदन्वयार्थतत्स्वीकारस्यावश्यकत्वात् कथं निर्वाहः । तर्हि तादृशवाक्यानां भगवत्परत्वं मा भूदिति चेन्न—भगवन्मात्रान्वयार्हधर्माणामप्यविशेषेण स्फूर्तौ तत्त्यागस्याप्ययोगादित्याशङ्कायां 'शास्त्रदृष्ट्या तु' इति सूत्रोक्तरीतिं दर्शयति रुद्रेति । अनन्यथासिद्धैः रुद्रेन्द्रादिग्रहणमन्तराऽन्वयमलभमानैः लिङ्गैः=धर्मैः यत्र विद्यासु=वाक्येषु रुद्रेन्द्रादिः स्फुरति । परतयेति परमात्मधर्मभानग्रहणार्थम् । तत्तत्त्वैः रुद्रेन्द्रादिभिर्विशिष्टः । वैशिष्ट्यं कीदृशमित्यत्र अखिलतनुरित्युक्तम् । विशिष्टवाचकत्वगमकमतुबाद्यभावेऽपि शरीरवाचकानां शरीरिपर्यन्तपरत्वस्य लोकवेदसिद्धतया वैशिष्ट्यलाभः । यद्यपि अनन्यथासिद्धलिङ्गस्थले "गम्भीरायां नद्यां घोषः" इत्यादौ गम्भीरत्वान्वयाय प्रवाहरूपार्थस्य दुस्त्यजत्वात् गम्भीरत्वविशिष्टनदीतीरे इत्यर्थो वाक्ये लक्षणास्वीकारेण वर्ण्यते-तथापि शास्त्रे शास्त्रदृष्टिं विहाय लोकदृष्टिग्रहणस्यानुचितत्वात्, शक्त्यैव निर्वाहे लक्षणानुपपत्तेश्च रुद्राद्यन्तर्यामीत्यर्थ एवोचित इति भावः । विद्यासु इत्यनेन परविद्यावाक्यानां मोक्षार्थोपासनपरत्वात् तत्र परमात्मन उपास्यत्वस्यावर्जनीयत्वात् एवं निर्वाह इति ज्ञापितम् ॥ यत्र परमात्मनो ग्रहणं नावश्यकम्, तत्र परमात्मधर्मारोपेण वा संकुचितार्थग्रहणेन वा रुद्रेन्द्रादिमात्रविश्रान्तिः । अतस्ततोऽपि न तत्पारम्यलाभ इत्याह पारम्यमिति । अन्याकूतैः=अन्याभिप्रायकैः भीतिपरिहारादिकार्यान्तरसिद्ध्युद्देश्यकैः । नमस्या=नमस्कारः । आदिना स्तवनपूजनादिग्रहणम् । नमस्कृतत्वस्तुतत्वपूजितत्वादिकं न परत्वसाधकमित्यर्थः । अनैकान्त्यदुःस्थैः=व्यवस्थाया अभावात् निकृष्टेपि दर्शनात्, पारम्यासाधकैः । नकिरिति—नास्तीत्यर्थः । द्वितीयानन्वयेति । बहुषु रुद्रेषु एकरुद्रातिरिक्तस्य प्रकृतपशुसंबन्धा-

यथार्हं नेतव्यानि। यस्तु नमस्कारभूम्ना, बहुप्रदेशबहुवाक्यप्रतिपन्नतया, तत्तदपदानविशेषैश्चान्यस्य क्वचित् परत्व शङ्कते, त प्रत्याह अन्यार्कृतैरिति। नमस्कारस्तावत् बाधभीत्या सान्त्वनाभिप्रायेण लोकवत् वेदेऽपि दृष्ट, 'नमस्ते अस्तु मा मा हिसी' इति। तद्भूयस्त्व च भीतिभूयस्त्वादेरपि स्यात्। अस्ति च तेषुतेषु देवताविशेषेषु नमस्कारस्तद्भूमा बहुप्रदेशपाठादिकमतिशयितापदानं च। अतो नैनैरेक पर स्यात्। सैवषा च सर्वसात्परत्व व्याघातदु स्थमिति भाव ॥ ९ ॥

(15०) धर्माणां स्थापनार्थं स्वयमपि भजते शासिता शासनं स्वं
स्वस्यापि प्रत्यवायान् अभिनयति नृणां पापभीतिं विधित्सुः।
शुद्धैः स्वेच्छावतारैर्भजति सुलभतां तावतोत्पत्त्यनूक्तिः
प्रोक्तो विष्णुः शिखायामपि हि स पुरुषः प्राप्ततारार्धमात्रः ॥ १० ॥

नन्ववतारेषु भगवन शास्त्रार्थानुष्ठान तत्फलभोगश्च श्रुतिस्मृतिषु बहुधा दृश्यते। अतस्तस्यापि कर्मवश्यत्व स्यादित्यत्राह धर्माणामिति। तदेतत्, "न मे पार्थास्ति कर्तव्यम्", "धर्मसस्थापनार्थाय"

---

वी— भावेत्यर्थ। मीमासाभाष्येति। तथा च सेश्वरमीमासायाम्, (1–2–47) "कर्मविशेषस्य रुद्रदेवतात्वमुच्यते, आयुस्ते रुद्र पशु, त जुषस्व इति वाक्यशेषानुसारात्। तथा च शाबरम्, 'एकरुद्रदेवत्ये एको रुद्र शतरुद्रदेवत्ये शत रुद्रा इत्यविरोध' इति" इति ॥ ९ ॥

धर्माणामिति। स्वशासनस्य श्रुतिस्मृतिरूपस्य स्वय वश्यत्वायोगेऽपि, 'न कर्मणा वर्धते नो कनीयान्' इति स्वभाववत्त्वेऽपि स्वयमवतारेषु धर्माचरण लोके धर्मस्थापनार्थम्। निषिद्धवर्जन तच्च जीवाना पापभीत्युत्पादनार्थम्। ननु स्वयमपि पुण्यपापफल लभते अन्यथा कथमुत्पत्तिरित्यत्राह शुद्धैरिति। नेद कर्माधीनप्राकृतशरीरग्रहणम्। किन्तु शुद्धसत्त्वमयविग्रहग्रहणम्। तदपि सौलभ्यार्थम्। सौलभ्यार्थदेहसबन्धदर्शनमात्रेण लोके बहुभिस्तस्योत्पन्नत्वेन व्यवहारात् शास्त्रेषु तथोत्पत्त्यनुवादमात्रम्। तदभिमतोऽर्थस्तु अवतार एव। परत्वविस्मरणे हि सुलभत्वमतिशयित भवति। एकेनैव, 'सप्रसूयन्त' इति पदेन कर्मजोत्पत्त्यवतारद्वयकथन कथमिति चेत्, प्राकृतत्वाप्राकृतत्वरूपाशत्यागेन साधारण्येन देहसबन्ध इत्यस्य तदर्थत्वान्न दोष। सबन्धश्च तन्नियमनोपयिकधर्मभूतज्ञानगतावस्थाविशेष। अवस्थावाचिनोत्पत्तिपदेन तद्ग्रहणमपि नायुक्तम्। किञ्च सप्रसूयन्त इति वाक्यम्–कारणानामपि कारण तदेव ध्येयमिति परमकारणस्य ध्येयत्वविधायक यद् वाक्य तच्छेषभूत सत् प्रमाणान्तरप्राप्ततत्तदुत्पत्त्यनुवादकम्। अत प्रापकप्रमाणोक्ता यस्य यादृशी कर्माधीना वा ऐच्छिकी वा, सैवोत्पत्तिरनुवदितु शक्यते। नारायण एव विष्णुरिति न हि, "पालनसामर्थ्य ऋते सर्वेश्वर हरिम्", 'रक्षार्थ सर्वभूताना विष्णुत्वमुपजग्मिवान्" इति प्रमाणसिद्धमिति न विष्णुर्जीव। यत्राथर्वशिखायाम्, "विष्णु सप्रसूयत" इत्युक्तम्, तत्र शिखायामपि प्रणवार्धमात्रार्थत्वेन पुरुष = पुरुषोत्तम उक्त इति, स विष्णोरभिन्न प्रमाणसिद्ध इति न तदतिरिक्तस्य कस्यचित् पारम्यप्रसक्ति। अस्तु नारायण पर, विष्णुस्तु रुद्रादिवज्जीव इति वादस्तु सहृदयविसवादी। सोऽपि वादो नोन्मिषति यथावत् शिखादर्शने। तत्र हि, "ध्याता रुद्र ध्यान विष्णु" इत्युक्तम्। उपासकाना रुद्रत्व तद्वत् भगवदुपासन कार्यमिति ज्ञापनाय कथ्यते। उपासनस्य विष्णुवन्धनश्च ध्यानस्य विष्णुमयत्वाय, 'अधराहितचारुवशनाला' इति श्लोकोक्तरीत्या ज्ञानज्ञेयभेदग्रहदार्ढ्यव्युत्पादनाय। एवञ्च प्राप्ततारार्धमात्र स —ध्येय पर एव ध्याने विष्णुत्वोक्तिमुखेन विष्णुनयोक्त इतिशिखाऽपि विष्णुपारम्यपरैवेति।

इत्यादिभिः सिद्धम्। यद्यपि, "जनितेन्द्रस्य जनितोऽत विष्णोः" इत्येतत् प्रीणनद्रव्यप्रशंसार्थम्, तथाऽपि **अथर्वशिखायाम्**, "ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते" इति ब्रह्मादेरिव भगवतोऽपि प्रसूतिः श्रूयते। अतस्तदतिरिक्तं कारणं तत्र ध्येयतयोच्यत इत्यत्राह **शुद्धैरिति**। अकर्महेतुकैरप्राकृतैरित्यर्थः। सौलभ्यार्थावतारानुवादस्तस्यैव सर्वकारणस्य ध्येयत्वविधानार्थमिति भावः। तत्रैव प्रणवनिरूपणे स्वार्थस्थापनं व्यनक्ति **प्रोक्त** इति। प्रणवस्य तिसृणां मात्राणां वर्णभेदान् त्रिमूर्तिदेवताकत्वं चोक्त्वा तस्य चतुर्थ्या *अर्धमात्रायाः सर्ववर्णत्वं पुरुषदेवताकत्वं चोक्तम्। स च पुरुषः, "सृष्टिस्थित्यन्तकरणीम्"* इत्यादावुक्त एव जनार्दनः। "तस्य हैतस्य पुरुषस्य रूपं यथा माहारजनं वासः, यथा पाण्ड्वाविकम्, यथेन्द्रगोपः" इत्यादिना च पुरुषस्य सर्ववर्णविग्रहः श्रुतः। **भारतादौ** च विश्वरूपादिविग्रहे व्यक्तमेतत्। **"भगवानिति** शब्दोऽयं तथा पुरुष इत्यपि। निरुपाधी च वर्तेते वासुदेवे सनातने ॥" इति च समर्थने इति ॥१०॥

**(156) आद्यं रामायणं तत् स च निगमगणे पञ्चमः पञ्चरात्रं**
**सत्त्वोपज्ञं पुराणं मनुमुखमुनिभिर्निर्मितं धर्मशास्त्रम्।**
**त्यक्तान्यो मूलवेदः कठपरिपठिता वह्निकास्तापनीयं**
**सौबालब्रह्मबिन्दुप्रमृतिकमपि नस्तत्परं तत्परत्वे ॥ ११ ॥**

उक्तस्यार्थस्यानन्यथासिद्धस्थापकभूयस्त्वमाह **आद्यमिति**। मानवा(भारता?)दिभ्योऽपि पूर्वमित्यर्थः। **तदिति** परिग्रहप्रसिद्धिव्यञ्जनम्; **स चे**त्यपि तथैव। **निगमगणे पञ्चमत्वं** च, 'वेदान्

---

श्री— अवतारानुवाद इति। अनुवादत्वकथनं वस्तुस्थितिमनुसृत्य। अस्यैवाऽऽसातत्राषकतारूपबोधकत्वेऽपि उत्पत्तिरेतद्विषयेऽवताररूपैव भवेत्। जनार्दन इति। "सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम्। स संज्ञां याति भगवानेक एव जनार्दनः" इति पूर्णश्लोकः। 'सर्ववर्णा' इतीदं विवृणोति बृहदारण्यकमादाय तस्येति। माहारजनं=कौसुम्भरञ्जितं वासः—वस्त्रम्। आविकं—कम्बलम्। इन्द्रगोपः—वर्षाकालिकजन्तुविशेषः। एतत्त्रयसाम्यस्य तद्रूपे कथनात् तस्य श्यामरूपवत्तायाः बहुप्रमाणसिद्धत्वाच्च सर्ववर्णत्वमिति भावः। *युगभेदेन वर्णभेदश्च भगवद्रूपे प्रसिद्धः।* विश्वरूपे च। व्यक्तमिति। "नानाविधानि दिव्यानि नानावर्णाकृतीनि च" इत्युक्तेः ॥ १० ॥

महाभारतमित्यनुक्त्वा निगमगणे पञ्चममित्युक्तिः निगमान्तराणि एतन्निगमनिर्णयार्थानीति ज्ञापनाय। सत्त्वोपज्ञमिति। उपज्ञायत इति उपज्ञा। समासे क्लीबता। सत्त्वे गुणे अकर्तरि उपज्ञानकर्तृत्वारोपे सत्त्वेनोपज्ञायमानमित्यर्थलाभः। सत्त्वपदम् अर्शआद्यचा सत्त्वविशिष्टचतुर्मुखपरं वा। ननु सत्त्वोपज्ञपुराणस्यैवाऽऽदरणीयत्वे अन्यानि अप्रमाणानि स्युरिति चेन्न—अविरुद्धांशे सर्वस्यैव प्रमाणत्वात्। तर्ह्यन्यदपि सत्त्वोपज्ञमेव स्यादिति चेन्न; भ्रमात्मकज्ञानेऽपि अधिष्ठानांशपारमार्थ्यवत् कतिपयांशप्रामाणिकत्वस्य सर्वज्ञानपायात्। अप्रामाणिकांशे भूयस्त्वमादरं वा विमृश्य राजसत्वादिकथनात्। तत्परत्वे=तस्य नारायणस्य परत्वे=सर्वापेक्षयोत्कृष्टत्वे तत्परम्—तात्पर्यवत्। नारायणपरत्वपरमिति यावत् ॥ त्यक्तान्यः—देवतान्तरप्रशंसनादिरहितः मूलवेदः—एकायनशाखा। तापनीयेषु नृसिंहतापनीयस्य रुद्राराध्यतया नृसिंहबोधनेऽपि तात्पर्यविगमात् विशिष्य तदुक्तिः।

मानवादिभ्य इति। ननु, "श्रूयते मनुना गीतौ श्लोकौ चारित्रवत्सलौ" इति निर्दिश्य मानवश्लोकोदाहरणात् रामायणं मानवात् पश्चादेव, औचित्याच्चेति चेत्—अतद्गुणसंविज्ञानबहुव्रीहिरस्तु।

अध्यापयामास महाभारतपञ्चमान्' इति प्रदर्शितम्। पञ्चरात्रस्य कार्त्स्न्येन प्रामाण्यं च महाभारतादि-प्रसिद्धम्, शारीरके स्थापितं च। सत्त्वेन गुणेनाऽऽदिभूतेन उपज्ञापमानत्वात् सत्त्वोपज्ञं वैष्णवादि-पुराणम्। तेन मात्स्यादिपु विभक्तराजसतामसेभ्यः प्राबल्यं सूच्यते। मनुमुखमुनिभिरिति। अनेन, 'मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते' इत्युक्तं मानवप्राबल्यं व्यज्यते। त्यक्तान्यः परित्यक्तदेवता न्तरतद्धर्मः। मूलवेदः—अनन्यधर्ममूलभूतो वेदभागः। कठवल्लीषु, 'विज्ञानसारथिर्यस्तु मनःप्रग्रह-वान्नरः। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्॥' इति प्राप्यविशेषदर्शनात् तासु पुरुषादि शब्दोक्त उपास्यो विष्णुरेवेति युक्तम्। तापनीयोपनिषत्तु नृसिंहरूपभगवदवतारैकविषया। सुबालोपनिषच्च नारायणस्यैव परत्वं बहुधा प्रपञ्चयति। ब्रह्मबिन्दूपनिषदपि, 'अहं वासुदेवः' इत्य हंग्रहोपासनदर्शनात् वासुदेवविषया। प्रभृतिशब्देन नारायणोपनिषदादिसंग्रहः। तत्परत्वे तत्परं भगवत्पारम्ये प्रधानाभिप्रायवदित्यर्थः॥ ११॥

(157) मध्यस्थोक्तिर्विरुद्धे, परमहिमपरे वत्रतत्रैवदुक्तिः,
वृत्तान्तास्ते विचित्राः, स्वमतमभिहितं देवतातत्त्वविद्भिः।
वैषम्यं शिल्पशास्त्रप्रभृतिषु विविधं, वैदिकस्वीकृतत्वं
प्रज्ञासंस्कारभाजां भवति भगवति स्वप्रधाने प्रमाणम्॥ १२॥

तत्राभ्युच्चययुक्तिमाह मध्यस्थोक्तिरिति। राजसादिपुराणान्यतमेन सात्त्विकपुराणे विरुद्धे तदुभयमध्यस्थपुराणान्तरोक्तिसंवादात् निर्णयः स्यात्। ब्रह्मरुद्रादेकैकमहिमतत्परे च पुराणे बहुषु प्रदेशेषु

---

ळी— पाठान्तरं वा। अनन्यधर्ममूलेति। ननु, 'महतो वेदवृक्षस्य मूलभूतो महानयम्। स्कन्धभूता ऋगाद्यास्तु' इति वेदान्तराणि प्रति मूलत्वे घुष्यमाणे कथमर्थान्तरोक्तिरिति चेत्—उपनिषत्पर्यन्तानां सर्वेषामपि भागानामपौरुषेयतया कार्यकारणभावायोगादर्थान्तरवर्णनम्। मूलस्कन्धशाखासु पौर्वा-पर्येऽपि नात्र तथा। अत्र प्रतिपाद्यानां धर्माणां कृतयुगादिकालेषु क्रमेण ग्रहणात् पूर्वाशकानामुत्तरो धर्म इत्यर्थपौर्वापर्यं स्थितं नित्येषु वेदेष्वारोपितमिति भावः॥ ११॥

मध्यस्थोक्तिरित्यादीनां प्रथमान्तानां भवति प्रमाणमित्यत्र प्रत्येकमन्वयः। क्वचित् वचनविपरि-णामः। अभ्युच्चययुक्तिमिति। अप्रधानयुक्तिमित्यर्थः। मध्यस्थानां शिल्पशास्त्रादीनामुत्तरार्धे वक्ष्य-माणत्वात् मध्यस्थोक्तिर्विरुद्धे इति किंविषयकमित्यत्राह राजसेति। अयं भावः—गुणत्रये सत्त्वश्रैष्ठ्यं सर्वसंमतम्। पुराणेषु सात्त्विकराजसतामसविभागः पुराणेनैव क्रियते। तस्य विभागवाक्यस्य सात्त्विकत्वं वा राजसत्वादि वेति विचिकित्सा कथं निवार्येत इत्याक्षेपः स्यात्। तत्रेदमुत्तरम्—स्वतःप्रामाण्यं प्राप्तं विरोधे सत्येव शंकास्पदं भवति, 'संकीर्णाः सात्त्विकाश्चैव राजसास्तामसा' इत्यादिमात्स्यपुराणगतं वाक्यं सत्यमूलमन्यमूलकं वेति विचारोऽस्माकमनपेक्षितः। एतद्विरुद्धार्थ-प्रापकवाक्यान्तरादर्शनात् स्वतः प्रामाण्यात्। परतत्त्वस्यान्यथान्यथाप्रतिपादकपुराणानि तु विरुद्ध-त्वादनिश्चेयार्थानि नियामकमपेक्षन्ते इति तत्रेदं वाक्यं मध्यस्थोक्तित्वेन गृह्यते। अविरुद्धांशविषये तु सर्वं प्रमाणमेव। एतच्च, 'पूर्वश्लोकोक्तं सत्त्वोपज्ञत्वमेव कथं क्वचिन्निश्चीयते' इति शंका शमिता। एकैकेति। अन्यान्येत्यर्थः।

भगवत्पारम्यं दृश्यते । रक्तरुष्टयोरपि दोषगुणोक्तौ प्रत्ययितत्वमाहुः । **वृत्तान्ताः**—'क्रान्त्वा निगीर्य पुनरुद्गिरति' इत्यादिभिः संगृहीताः । **देवतातत्त्वविद्भिः** पराशरपाराशर्यादिभिः । 'विष्णोस्सकाशादुद्भूतम्', 'आलोड्य सर्वशास्त्राणि', 'सत्यं सत्यं पुनस्सत्यम्' इत्यादिभिः समतमभिहितम् । **शिल्पशास्त्रे** च परावरभावेन वैषम्यं दृश्यते । तत्र ह्युत्तमभ्यमाधमविमानान्यधिकृत्योक्तम्, '*स्यान्नागरद्राविडवेसरं(?) च क्रमेण वै सत्त्वरजस्तमांसि । महीसुरोर्वीपतिवैश्यकास्ते हरिर्विधाता हर आदिदेव:(वाः ?)* ॥' इति । 'विष्णोरन्ये राध्यमाना न साक्षाच्छ्रीकराः सुराः । सर्वदेवास्पदे विष्णौ धिष्ण्यं संपत्सुखावहम्' ॥ इति । **प्रभृतिशब्देन**ऽऽयुर्वेदादिसंग्रहः । पठ्यते, 'हरिं हरीतकीं चैव' इत्यादि । **ज्यौतिषे** च, (?) 'धन्यं तदेव लग्नम्' इत्यादि । **वैदिकस्वीकृतत्वं**=वेदविदुत्तमैः सर्वैः **बोधायन-टङ्क-द्रमिड-गुहदेव कपर्दि-भारुचि**-प्रभृतिभिर्भगवत एव परत्वेनाङ्गीकृतत्वम् । एतत् सर्वं सदाचार्यशिक्षाजनितप्रज्ञासंस्कारभाजाम् **आत्मेश्वरमिति स्वप्रधान**तयाऽधीते *भगवति प्रमाणं भवतीति* ॥ **इति भगवत्पारम्येऽभ्युच्चययुक्तयः** ॥

(158) **इन्द्रेशानाद्यभिख्या स्वयमिह महदाद्युक्तिभिर्वा विशिष्टा**
**तत्तत्पारम्यमानं न भवति बलवद्धर्मिमानोपरोधात् ।**
**नो चेत्, स्यात् नैक ईशो, न भवति यदि वा कश्चिदन्योन्यबाधात्**
**लोकेऽप्यन्वर्थभावं न हि दधति महावृक्षमुख्याः समाख्याः ॥ १३ ॥**

**कश्चिदाह—ईश्वरशब्दो** निर्विशेषणो महत्परमशब्दविशेषितश्च कस्यचित् समाख्या ; अन्यस्यैव त्रिविधः पुरुषशब्दः । अतस्तयोरवसीयते परावरभाव इति । अत्रेन्द्रप्रतिबन्दिं सहोक्त्या सूचयन् प्रतिवक्ति **इन्द्रेशानादीति** । अयं भाव.—इन्द्रशब्दो हि परमैश्वर्यवाचिधातुनिष्पन्नः केवलोऽपि

---

*श्री*— रक्तेति । अनुरक्तो यदि दोषं ब्रूयात्, रुष्टश्च यदि गुणम्, तस्यतस्य वास्तवत्वं संमतमित्यर्थः । प्रत्ययितत्वं= विश्वसनीयत्वम् । नागरेति । विमानसंस्थानं त्रिविधं वर्णितमस्ति । अधिकभेदाश्च पाञ्चादौ । तत्रैषु त्रिषु नागरप्राधान्यं वक्तुं तेषां सत्त्वादिरूपेण हर्यादिरूपेण च स्तवः । पूर्वानुरूप्यात् औचित्याच्च आदिदेवा इति बहुवचनान्तपाठो युक्तः । अत्र हरेः प्राधान्यं सिद्धवत्कृत्यकथितमिति तस्य तात्त्विकता । ज्योतिष इति 'तदेव लग्नं सुदिनं तदेव      अंघ्रियुगं स्मरामि' इति वाक्योदाहरणे धन्यमिति पदं न स्यात् । यद्वा धन्यमित्यारब्धं श्लोकान्तरमेतत् ॥ १२ ॥

तयोरवसीयत इति । पुरुषशब्दः सर्वसाधारणः, ईश्वरशब्द उत्कृष्टवचनः । महापुरुषः परमपुरुष इत्येतदपेक्षया महेश्वरः परमेश्वर इत्यनयोः परत्वसाधकत्वातिशयात् महापुरुषोऽवर इत्यवसीयत इत्यर्थः । भृत्यपरश्च पुरुषशब्दः । अतो महाभृत्य इत्यप्यर्थः स्यात् । नन्विन्द्रस्य पारम्यं केनापि न मन्यते । तत् कथं श्लोके इन्द्रपदघटनमित्यत्र प्रतिबन्दिप्रदर्शनाय तदित्याह अत्रेन्द्रेति । केवलादीश्वरपदात् इन्द्रपदं श्रेयः । अतो महेन्द्रात्–महापरमेश्वरात् केवलमहेश्वरोऽवरः स्यादिति भावः । नो चेत्= समाख्यामात्रेण तस्यतस्य पारम्ये । नैक ईश इति । अनेके ईशा भवेयुरित्यर्थः । सर्वे ईशाः स्युः । विरोधाद्वा कोऽपीशो न स्यात् । तर्हि महत्त्वपारम्यनिर्वाहः कथमित्यत्राह लोकेऽपीति । अन्वर्थभावम्–अनुमतार्थकत्वम्–अनुमतावयवार्थकत्वम् । महादेवशब्दे महत्त्वनिर्वाहो भारते कर्णपर्वणि तस्य भगवदपेक्षयाऽवरत्वं स्वीकृत्यैव यथा कृतः, तथा सर्वमविरुद्धं निर्वाह्यम् । रूढिमात्रमिति पक्षे तु अवयवार्थविचार-

परमेश्वरत्वं ब्रूते ; किमुत महत्पूर्वः ; तथाऽपि येन तत्र समाख्यासङ्कोचः, स रुद्रेऽपि समः, कार्यत्व-कर्मवश्यत्वयोः समचर्चत्वादिति । समाख्यातः श्रुत्यादेर्बलीयस्त्वं सूचयन् हेतुमाह **बलवदिति** । एव मनभ्युपगमे बाधकप्रसङ्गद्वयमाह **नो चेदिति** । समाख्यामात्रावलम्बने रुद्रेन्द्रादयो बहव ईश्वराः स्युः ; न वा कश्चित्, तुल्ययोगक्षेमत्वादिति भावः । नाममात्रस्यासाधकत्वं सर्वसंप्रतिपत्त्या दर्शयति **लोकेऽपीति** । महौषधमहानद्यादिसंग्रहाय मुख्यशब्दः ॥ **इति समाख्याचिन्तया भगवतः परत्वम् ॥**

**(159) एकं त्रेधा विभक्तं, त्रितयसमधिकं तत्त्वम्, ईशास्त्रयस्ते,**
**विष्ण्वन्या मूर्तिरीष्टे, प्रभवननियमः कल्पभेदात् त्रयाणाम् ।**
**इन्द्रादीनामिव स्यान्निजसुकृतवशादीश्वराणां प्रवाहः**
**स्यादेकस्येश्वरत्वं प्रतिफलनवदित्यादि चैवं परास्तम् ॥ १४ ॥**

अथात्र न्यायाभासमूलानि मतान्तराण्यनूद्य तेषां दत्तोत्तरत्वमाह **एकमिति** ॥ 'एकस्यैव राम कृष्णादिवत् साक्षादवतारे त्रिधा विभागः' इति पक्षः, 'एकैव मूर्तिर्बिभिदे त्रिधा सा' इत्यादिषु विवक्षितः ; तत्र **मूलभूतानां** 'विष्णुरेव परं ब्रह्म त्रिभेदमिह पठ्यते', 'सृष्टिस्थित्यन्तकरणीम्' इत्यादीनां, 'तवान्तरात्मा

---

र्थ-प्रसक्त्यभावात् कथं समाख्यया पारम्यलाभः। ईश्वरपदे रूढिश्चेत्–ईशनरूपार्थो हि न लभ्यते। योगश्चेत्, नारायण एवेशनं ब्रवीतु; कथं रुद्रे। एवञ्च नारायणगते ईशने महत्त्वं पारम्यञ्चोक्तं भवति। ईश्वरपदरूढ्यर्थे महत्त्वपारम्यान्वये तु इन्द्रशब्दरूढ्यर्थे शचीपतौ महत्त्वं वृत्रहन्तृत्वरूप-विशेष इतिवत् रुद्रगतं यत् किञ्चित् महत्त्वं पारम्यञ्च स्यात्; न सर्वलोकेशनम्। समाख्या-मात्रावलम्बने इति। ननु आध्वर्यवमित्यादिसमाख्यापेक्षया श्रुत्यादेः प्राबल्यं युक्तम्; आध्वर्यवपदे अध्वर्योरिदमिति विग्रहे अध्वर्योः कर्मभागविशेषस्य च वाचकपदसत्त्वेऽपि अङ्गतावोधकपदाभावात्, श्रुतौ च तत्सत्त्वात्। अत्र कथं प्राबल्यदौर्बल्यस्थितिरिति चेत्–समाख्या हि एकं पदम्। तत् एकप्रसक्ता-भंगभिया रुद्रे पारम्यं विधातुं न शक्नोति। विष्णुपारम्यश्रुतयस्तु वाक्यरूपत्वात् विधानसमर्थाः। समाख्यातो वाक्यादिकल्पनया तद्बोधनप्रारम्भे च ततः प्रागेव श्रुत्या विष्णुपारम्यं ज्ञातमिति। वस्तुतो महत्त्वं पारम्यञ्च कीदृशमित्यप्यत्र दुर्विवेचम्; पदस्य सामान्यरूपत्वात्। श्लोके ईशानादीत्यत्रेशा-नादेरभिख्येति विग्रहः। अभिख्या तु ईश्वर इति। इन्द्रेत्याख्येश्वरेति इत्युक्तं भवति ॥ १३ ॥

महेश्वरमहापुरुषादिशब्दस्वारस्यमूला शंका परिहृता। आद्यं रामायणमिति श्लोकेनैव सर्वपक्षपरासात् पृथग्वक्तव्यं न किञ्चित्। अथापि दूष्याणां पक्षाणां स्वरूपवैशद्यार्थमेव तेषु मुख्यान् पक्षान् आह एकमिति। प्रतिफलनात्मकमैश्वर्यमिति योगमतं चतुर्थपादे वदति। सत्यभूतैश्वर्यपक्षा अन्ये। तत्र पक्षत्रयं प्रथमपादे, द्वयं द्वितीये, एकं तृतीये च निर्दिशति। प्रथमपक्षस्य काव्य-ग्रन्थेष्वपि प्रसिद्धिं दर्शयति एकैवेति। कालिदासः कुमारसंभवे पार्वतीविवाहे परमशिवस्येतर-देवतापेक्षयोत्कर्षं दर्शयन्, "कम्पेन मूर्ध्नः शतपत्रयोनिं वाचा हरिं वृत्रहणं स्मितेन। आलोक-मात्रेण सुरान् अशेषान् संभावयामास" इति वदन् अत्र विष्णोरितरापेक्षया प्राधान्ये प्रतीतेऽपि, 'शिवापेक्षयाऽपि तस्य प्राधान्यं प्रामाणिकम्; तथा चतुर्मुखस्यापि। अतः प्रणाम एव शिवेन तदा कार्यः' इति शंका मा भूदिति मत्वा हरिब्रह्महराणामैक्यं स्वपक्षमाह एकैवेति। श्लोके, 'एवं परास्तम्' इति दत्तोत्तरत्वमेव दर्शितम्। तत् स्वयं किञ्चित् विशदयति, तत्र मूलभूतानामिति।

मम च' इत्यादिवाक्यान्तरानुविधानात् क्षेत्रज्ञव्यवधानेन द्वयोः, एकत्राव्यवधानेन च वृत्तिं (प्रतीतिं) व्याचख्युः। 'त्रिमूर्त्युत्तीर्णं पुरुषान्तरं सच्चिन्मात्रं वा परतत्त्वम्' इति पक्षे, 'स संज्ञां याति भगवान् एक एव जनार्दनः' इत्यादिभिरपि बाधः। 'परस्परं भिन्ना ईश्वरास्त्रयः' इति पक्षश्चैकस्य सर्वप्रशासितृत्वादिभिर्निरस्तः। 'विष्णोरन्य एव ब्रह्मा रुद्र आदित्यो वा कश्चिदीश्वरः' इति वादोऽपि विष्णोरेव सर्वेश्वरत्वस्थापनादपास्तः। 'त्रयः ईश्वराः सत्त्वादिगुणोन्मेषभिदुरकल्पभेदात् चक्रनेमिनीत्या निम्नोन्नतैश्वर्याः' इति कल्पनाऽपि निरस्ता। प्रवाहेश्वरपक्षश्च, 'न कर्मणा वर्धते नो कनीयान्', 'स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयान्' इत्यादिश्रुतिभिरवधूतः। 'अस्त्वेक एवेश्वरः; तस्येश्वरत्वं नित्यसत्त्वविशेषसन्निधाननिबन्धनं प्रतिफलनकल्पम्' इति योगराद्धान्तश्च, 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्यादिभिरपोढः। आदिशब्देन नित्यचिकीर्षाप्रयत्नवान्, चिकीर्षारहितोऽपि वा ज्ञानप्रयत्नमात्रवान्

---

श्री— अयं भावः—कुमारसंभवे मूर्तिपदं नात्मवाचकम्; अप्रसिद्धेः। आत्मनः सर्वस्य भेद्यत्वच्छेद्यत्वाद्ययोगात् त्रिधा विभिदे इत्युक्तप्रयोगाच्च। मूर्तेः शरीरस्य त्रिधा भेदश्च न जरासन्धादिदेह इव। किं तु एकस्मात् रुद्रादेकादशरुद्राविर्भाववत् परवासुदेवात् व्यूहविभवाद्यवतारवत् प्रधानमूर्तिसूक्ष्मांशस्य निस्सृतस्य, बीजस्य वृक्षरूपेणेवोपचयः। एकमूर्तिगतसूक्ष्मांशत्रयात् मूर्तित्रयोन्मेष इत्युक्तं भवतीति। इदञ्च परवासुदेवरूपात्मकमूलवस्तुपरवाक्यमूलकमिति वस्तुस्थितिः विष्णुरेवेत्यादौ स्पष्टा। सृष्टीति श्लोके उत्तरार्धे, 'एक एव जनार्दन' इति जनार्दनपदप्रयोगात्, विष्णुजनार्दनयोरैक्यात् तस्यैव वासुदेवत्वात् वासुदेवरूपमुक्तं भवति। अस्तु नाम; तथापि ब्रह्मशिवयोरपि वासुदेवत्वमेव विष्णोरिवेत्यत्र बाधकप्रमाणप्रदर्शनेन तात्पर्यान्तरमाह तवेति। इदं रुद्रं प्रति ब्रह्मवचनम्। न च 'तव, मम' इति पदद्वयं रुद्रब्रह्मदेहमात्रविषयकम्; 'ये चान्ये देहिसंज्ञिताः' इति द्वितीयपादे देहिपदप्रयोगात् आत्मपरत्वावगतेः। तदत्र ब्रह्मरुद्रजीवात्मभेदः तयोः परमात्मतो भेदश्च स्पष्ट इति वासुदेवात्मनो भेदे सिद्धे वासुदेवमूर्त्यंशयोरेतन्मूर्तित्वासंभवात् बाधितार्थकोऽयं काव्यश्लोकः। मूर्तिपदस्य परवासुदेवात्मपरत्वस्वीकारेऽपि सामान्यमेषां प्रथमावरत्वमित्युक्तमयुक्तम्। मूलभूतवचनानि तु ब्रह्मशिवयोः स्वातन्त्र्यनिराकरणाय तदन्तरात्मत्वस्य वासुदेवे स्थापनार्थं प्रवृत्तानि। तथा च विष्णुरूपः ब्रह्मरूपजीवशरीरकः रुद्ररूपजीवशरीरकश्चैक एवेति तत्र वाच्यार्थः। द्वयोरेकत्रेति। द्वयोः=ब्रह्मशरीररुद्रशरीरयोः तत्तत्क्षेत्रज्ञव्यवधानेन जनार्दने वृत्तिः प्रतीतिश्च। एकत्र=विष्णुशरीरे अव्यवधानेन परवासुदेवरामकृष्णादिमूर्तिष्विव वृत्तिः प्रतीतिश्चेति व्याचख्युः पूर्वे आचार्याः। त्रितयसमधिकं तत्त्वमित्यस्यार्थमाह त्रिमूर्तीति। पुरुषान्तरमिति व्योमातीतवादः। सच्चिन्मात्रमिति यादवप्रकाशादिपक्षः। ईशास्त्रयस्ते इति पक्षं विशदयति परस्परमिति। त्रिष्वन्या मूर्तिरीष्टे इत्यस्य मूर्तित्रये विष्णुभिन्ना मूर्तिः ब्रह्मा रुद्रो वेश्वर इत्यर्थः। मूर्तिशब्द आत्मपरः। इममर्थमाह विष्णोरिति। प्रभवनेत्यादिपक्षं विशदयति त्रय इति। *प्रभवनं=प्रभुत्वम्; नियमः=व्यवस्था*। कल्पनाऽपि निरस्तेति। अत्र परं हेत्वनुक्तिः, 'स्वरूपव्याक्रियैव पराक्रिया' इति न्यायेन स्वयमेव निरस्तत्वात्। सत्त्वादिगुणाधीनत्वे हि ईश्वरत्वमस्वाभाविकं स्यात्। सत्त्वादौ वैषम्यञ्च निष्कारणकं स्यात्। अचेतनपराधीनस्य च किमिदमीश्वरत्वं नामेति। इन्द्रादीनामिति पादार्थमाह प्रवाहेति। अद्यतनप्रजाराज्य इव सर्वोऽपि चेतनः सति सुकृते ईश्वरो भवितुमर्हति, न पुनस्त्रय एवेति भावः। व्यक्त्यैक्यमंगीकृत्य तद्विशेषस्यैश्वर्यस्यायथार्थत्ववर्णनं योगमते। तन्निरासश्चतुर्थपादेन। तदाह अस्त्विति। आत्मसामान्यस्य सांख्यमत इव निर्विकारत्वात् अहंकारादिगतधर्माणामेवाऽऽत्मनि आरोपात् जीवस्य कर्तृत्वभोक्तृत्वा-

इत्यादिमतभेदसग्रह । एव=श्रुतिलिङ्गादिप्रामाण्यस्थापनप्रकारेणेत्यर्थ ॥ इति त्रिमूर्त्यैक्यादिपक्षनिरास ॥

(तार्किकपक्षनिरासारम्भ )

(१६०) **सर्गादीनामसिद्धौ न हि निगमगिरां भज्यते सप्रदाय**
**तत्सिद्धौ नानुमान प्रभवति, यदिदं बाधशून्य विपक्षे ।**
**शास्त्रेभ्यस्तत्प्रसिद्धौ सहपरिपठनात् विश्वकर्ताऽपि सिध्येत्**
**धर्मानुष्ठापनार्थं तदनुमितिरतो नैव शक्या कदाचित् ॥ १५ ॥**

श्रुतिसिद्ध ईश्वर इत्युक्तम्। अनुमानतोऽपि सिद्ध इति वदन्त प्रतिवक्त या। तत्र तावत् उपदेशलिङ्ग दूष्यते **सर्गादीना**मिति। किमसदादीना धर्मोपदेशार्थमीश्वर कल्प्यते, उत कल्पादिसभवाना पुरुषविशेषाणाम्? नाद्य, पित्रादिक्रमेण सप्रदायप्रवृत्तेरीश्वरनैरपेक्ष्यात् ॥ पित्रादिप्रेरणार्थमीश्वरोऽपेक्षित इति चेत्-न तर्हीदमुपदेशलिङ्गम्, कार्यलिङ्गानुप्रवेशात्। न द्वितीय, सर्गाद्यसिद्धौ इदानीमिवानादिसप्रदायाविच्छेदेन तत्प्रवर्तकानपेक्षणात्। सिद्धिस्तु सर्गादेरनुमानात् आगमाद्वेति विकल्प पूर्वं दूषयति **तत्सिद्धा**विति।

अय भाव —विश्वस ततिरत्यन्तमुच्छिद्यते सन्ततित्वात् प्रदीपसन्ततिवदित्यनुमान तावत् सर्वात्ममोक्षमिच्छतामन्त्यमुक्तिसमयभाविना सर्वकार्योच्छेदेन चरितार्थं स्यात् वर्तमानब्रह्माण्डपरमाणव पूर्व

---

र्वा-दिवत् ईश्वरस्यापि कल्पित स्वच्छन्दानन्दित्वादीति तदाशय तदिद सांख्यनिरसनेनैव निरस्तम्। ततोऽपि न्यून सर्वथा सुजयस्वीकारिमतमाह आदिशब्देनेति। तार्किकखण्डनावसरे इद शास्यते ॥१४

अथानुमानिकेश्वरवादितार्किकखण्डन द्वादशभि । सर्गादीनामिति । अत्रोदयनाचार्यकुसुमाञ्जलिखण्डन प्राय । तत्रोक्तम्, सर्गप्रलयसम्भवात् ज्ञानानुष्ठानसप्रदायप्रवाहस्योच्छेदात् सर्गारम्भे सर्वमिद किञ्चिदुपदेशनाधीनम्, अन्यथा तदनवगमात् इति, उपदेशकतया ईश्वरसिद्धिरिति। सर्गारम्भ एवेश्वरापेक्षा। अन्यदा तु स्वपूर्वपुरुषकार्यो भवत्युपदेश । त सप्रदायानुवृत्तश्च प्रलये विच्छेद इति । इद दूष्यते—असिन्ननुमाने सर्गारम्भ इति पक्षविशेषणासिद्ध्याऽऽश्रयासिद्धयुद्भावन मीमासकेन सर्गप्रलयानङ्गीकारिणा कृत कथ परिह्रियते । सर्गाद्यसिद्धिरूपतत्पक्षे निगमगिरा सप्रदाय =वेदोपदेशादि न हि भज्यते अद्येव सर्वदा पित्रादिभि करणात्। सर्गादिकमस्तीति चेत्, कि प्रमाणम्? अनुमानम् आगमो वा । नाद्य यत् =यस्मात् इदम्—अनुमान विपक्षे बाधशून्यम्=अनुकूलतर्करूपविपक्षबाधकरहितम् अप्रयोजकमिति यावत्। अन्त्ये आगमात् सर्गप्रलयस्वीकारे तत एवागमात् ईश्वरस्यापि सिद्धिरिति उपदेशकतया तदनुमानमित्युक्तमयुक्त स्यात्। अत धर्मानुष्ठापनार्थम्—उपदेशेन स्वानुष्ठानेन च व्यापारेण धर्मानुष्ठानस्य कार्यतया तदुपदेशादिकर्तृतयेश्वरानुमान न कदापि शक्यमिति ॥ पित्रादिप्रेरणार्थमिति । उपदेशार्थं पित्रादिप्रवृत्तिरदृष्टाधीना। अचेतनश्चादृष्ट चेतनप्रेरितमेव सत् कार्यकरमिति भाव । न तर्हीति। उपदेशकत्वस्येश्वरेऽनुक्तेरिति भाव । कार्यलिङ्गेति। सकर्तृक कार्यत्वादिति कार्यण कर्त्रनुमानेऽन्तर्भवेदित्यर्थ । विकल्प इति। विकल्प हृदि निधायेत्यर्थ । कुसुमाञ्जल्युक्तमनुमान खण्डयितुमनुवदति विश्वेति । न्यायपरिशुद्धिरपि द्रष्टव्या। नानुमान प्रभवतीत्यत्र मूलेऽभिप्रेत दोषमाह सर्वात्मेति। अन्त्यमुक्तीति। अन्तिमात्ममुक्तौत्यर्थ । महाप्रळयात् पूर्वं सर्वमुक्ति । अत एव तदैव महाप्रलय, ततो नेव सृष्टिरिति तार्किकमतम्। एवञ्च तदानीन्तनोच्छेदेनैवानुमानस्य विषयसिद्ध्या अर्थान्तरम्=अवान्तरप्रलयरूपाभिमतार्थातिरिक्तसिद्धिरेव, न तत्सिद्धिरिति। अर्थान्तरमिति एक निग्रहस्थान

मुत्पादितसजातीयसन्तानान्तरा नित्यत्वे सति तदारम्भकत्वात् घटादिपरमाणुवदित्यत्राप्युपचयापचय भिदुरब्रह्माण्डभेदेन तत्तत्परमाणूना प्रागपि ब्रह्माण्डसन्तत्यन्तरारम्भसभवेनार्थान्तरत्वापातादिति । साधारण दोषमाह **यदिदमिति** । न तावत् सर्गाद्यभावे काचिदनुपपत्ति । यद्यप्यारब्धाना भावाना नश्वरत्वमाल गम्यते, तथाऽपि तत्सन्ततीनामनुच्छेदोक्तौ न विरोध । यत्तूक्तम्, "प्रमाया परतन्त्रत्वात् सर्गप्रलय सभवात्। तदन्यस्मिन् अनाश्वासात् न विधातुरसभव (विधान्तरसभव)॥" इति—तत्राद्यो हेतुर्बुद्धिसरे दूषयिष्यते । द्वितीयस्त्विदानीं दूषित । तृतीयोऽपि विमत । सभवन्ति हि सर्गादिकाले प्राचीनसुकृत सञ्चयविपाकनैजात्यात्(विध्यात्) प्रतिबुद्धवेदाशयो देवा महर्षयश्च, ते युष्माभिरपि वेदचतुरास्ति ख्यापनाय, तदुपदेशग्रहणप्रवचनाद्यर्थं च स्वीकृता । ऋषित्वमपि सुप्तप्रबुद्धन्यायेन सुकृतवशात् प्राग धीतप्रस्मृतवेदभागप्रत्यक्षीकरणमेव, श्रूयते हि, "अजान् ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयम्भु अभ्या नर्षत्। त ऋषयोऽभवन् । तदृषीणामृषित्वम्" इति। अतस्तैरेव सर्गोपपत्तौ किमन्येन ? एतेन बहुपरि- ग्रहगौरव चापास्तम् । विजातीयक्लृप्तावेव हि गौरवम् । न च बहुष्वनाश्वास , एकस्मिन्निव तेष्वपि

---

श्री— न्यायदर्शनोक्तम् । प्रलयानुमान दूषितम् । सर्गप्रलयोभयानुमान दूषयति वर्तमानेति । सजातीयेति । ब्रह्माण्डेत्यर्थ । तन्तुपु पटारम्भकेपु पूर्वमनुत्पादितपटान्तरेपु व्यभिचारवारणाय नित्यत्वे सतीति। आकाशादौ व्यभिचारवारणाय आरम्भकत्वादिति। इत्यत्रापि=एतदनुमानेऽपि। अर्थान्तरमिति दोषमुपपादयति उपचयेति । महाघटस्य सूत्या स्वराशभेदेऽपि तदन्य खण्डघट इति तन्मतम्। तद्वत् ब्रह्माण्डे यत्र क्वापि कतिपयशकलापाये प्राप्ते तत पर चिर खण्डब्रह्माण्डमेव। अत इदमेव वर्तमान ब्रह्माण्डम् । प्रतिक्षणञ्च मृदादेरेकस्थानादन्यस्थानप्राप्तौ विलक्षणावयवसयोग- वलादवयव्यन्तरोत्पत्तिरवर्जनीयेति, महाब्रह्माण्डसतति प्रागेवाऽऽसीत्, इदानीञ्च खण्डब्रह्माण्ड सततिरिति वक्तव्यम्। अतो महाब्रह्माण्डसततिमादाय सिद्धसाधनादर्थान्तरमिति नास्य प्रलया- नन्तरसर्गसाधकत्वमिति भाव । साधारणदोषमिति। पूर्वमर्थान्तरदोषस्यापि साधारणत्वेऽपि वर्तमानब्रह्माण्डपरमाणव इत्येतत्स्थाने सर्गाद्यकालस्थितब्रह्माण्डपरमाणव इति पक्षे तद्दोषाभावात् सर्वसाधारणदोषोऽन्य उच्यत इति भाव । हेतुरस्तु, साध्य मास्तु इति विपक्षबाधकशङ्का सर्वत्र दुष्परिहरेत्यर्थ । 'न विरोध' इत्यन्तेन सर्गादेरेवासिद्ध्या, तदात्वेऽपेक्षिततया किञ्चिदुपदेशक- साधन न भवतीत्युक्तम्। अथ सर्गादिसिद्धावपि ईश्वररूपोपदेशकासिद्धिरेवेति वक्तुमारभते यत्त्वित्यादिना। उपदेशकस्य कस्य चिदावश्यकत्वे हेतुत्रय कारिकोक्तम् । प्रमाया परतन्त्रत्व प्रथमम्। प्रामाण्यस्योत्पत्तौ ज्ञप्तौ च परसापेक्षत्वात् उपदेशभूतवेदवाक्यप्रामाण्यमुपदेष्टृभूताप्त पुरुषगतगुणाधीनमिति तादृशगुणाश्रयतयेश्वरसिद्धिरिति । इद तत प्रामाण्यस्य बुद्धिसरे स्थाप यिष्यमाणत्वात् निरस्त भविष्यति। सर्गप्रलयसभवरूपद्वितीयहेतु सर्गप्रलयसाधकानुमानासभ वोक्त्या इदानीं दूषित । सर्गादिसद्भावेऽपि उपदेष्टुरावश्यकत्वेऽपि ईश्वरातिरिक्तैरेवोपदेशनिर्वा हात्, तदन्यस्मिन् अनाश्वासरूपस्तृतीयो हेतुर्दूष्यते। तदाह तृतीयोऽपि विमत इति। विप्रतिपन्न इत्यर्थ । स्वमते वस्तुत ईश्वरसद्भावात् 'बाधित' इति नोक्तम्। आस्तिख्यापनायेति। वेदा आप्त प्रणीता महाजनपरिगृहीतत्वादित्यनुमानादिति भाव । तदुपदेशेति। ईश्वरो येभ्य उपदिश्य सम्प्रदायप्रवर्तकत्वेनेष्ट , त एवालम्, कि तेनेति भाव । तेषा योग्यतासपत्तिरुपदेश विनैव पूर्व सुकृतात्, सनकादिवत्। ननु ते ऋषित्वेन ख्याता । ऋषित्वञ्च सद्गुरुमूलश्रुतवेदानुष्ठित-

तत्परिहारस्य समचर्चत्वादिति । आगमात् सर्गादिसिद्धौ सर्वकर्तुरपि तत एव सिद्धिमाह **शास्त्रेभ्य** इति । सर्वकर्तारं पुरस्कृत्यैव हि सर्गादिकथनम्; अतोऽनुमेयं नावशिष्यत इति भावः । विमतं प्रति प्रयोगसंभवेऽप्यनुमानासामर्थ्यं दर्शितम् ॥ **सांख्यागमैः** सर्गादिसिद्धिः स्यादिति चेन्न; श्रुतिविरोधे बाधात्; अन्यथा सेश्वरसांख्येऽनुमेयाभाव एवेति । अनुमानान्तरैरपि सर्गाद्यसिद्धिं तत एवोपदेशलिङ्गस्य निर्मूलतां चाभिप्रेत्य निगमयति—**धर्मेति** ॥ **इत्युपदेशानुमानभङ्गः ॥ १५ ॥**

**(161) साध्यं यादृक् सपक्षे नियतमवगतं, स्याद्धि पक्षेऽपि तादृक्,**
**तस्मात् कर्मादियुक्तः प्रसजति विमते कार्यताद्यैस्तु कर्ता ।**
**'एतत् तत्सिद्ध्यसिद्ध्योर्न घटत' इति न, क्ष्मादिपक्षे सपक्ष-**
**व्याप्ताकारप्रसङ्गात्, तदनुपगमने न क्वचित् स्यात् प्रसङ्गः ॥ १६ ॥**

यानि च बहून्यनुमानानि संजगृहुः, "कार्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः । वाक्यात् संख्याविशेषाच्च साध्यो विश्वविद(व्य)यः ॥" इति, तत्रान्वयिषु साधारण्यमाह **साध्यमिति** ॥ **यादृक् सपक्षे नियतमवगतम्**—येनाकारेण व्याप्तं प्रमितमित्यर्थः । **स्याद्धि पक्षेऽपि तादृक्** । न हि पर्वते

---

श्री—तपोलभ्यमिति गुरुरपेक्षित इत्यत्राह ऋषित्वमपीति । बहुपरिग्रहेति । अनेकव्यक्तिकल्पने गौरवमित्यर्थः । बहुष्विति । प्रत्युत बहुभिरादृतत्वे विश्वासातिशय एवेति भावः । विमतं प्रतीति । श्रुतौ विश्वासरहितं विवदमानं प्रतीत्यर्थः । असामर्थ्यम् । अर्थान्तरत्वाप्रयोजकत्वाभ्याम् । श्रुतिविरोधे=अब्रह्मात्मकप्रकृत्यधीनसृष्टिवादे श्रुतिविरोधः । अनुमेयाभावः । श्रुत्यैव ज्ञातत्वात् ॥ १५ ॥

कुसुमाञ्जलौ द्वितीयस्तबके उपदेशकस्याऽऽवश्यकतयेश्वरः साधितः । तदेवं निरस्तमासीत् । पञ्चमस्तबके एकया कारिकया बहून्यनुमानानि संगृह्य तस्या अर्थश्च द्वेधा वर्णितः । स च तत्रैवासद्व्याख्यानेऽपि द्रष्टव्यः । संग्रहेण तद्दूषणमाह साध्यमिति । साध्यं सपक्षे=दृष्टान्ते यदाकारविशिष्टं नियतं=व्यापकत्वेन अवगतम्, पक्षे तदाकारविशिष्टमेव स्यात् । अतः विमते=विवादास्पदे क्षित्यादिपक्षे कर्ता कार्यत्वादिहेतुभिः साध्यमानः कर्मादियुक्तः=पुण्यपापरूपकर्म-तदधीनकायेन्द्रियादियुक्त एव स्यात् । ननु प्रसजतीत्यनेनाऽऽपादनमुक्तम् । कथं तदापादनम्? यदि ईश्वरः कर्ता स्यात् कर्मादिपरवशः स्यादित्येवमिति चेत्–ईश्वररूपधर्मिणः प्रागेव सिद्ध्यभावे एवं प्रसंगो न भवति । प्रागेव सिद्धत्वे कर्मानधीनत्वेनैव सिद्धत्वात् कथं तदापादमित्याशंकामाह 'एतत् तत्सिद्ध्यसिद्ध्योर्न घटते' इति । ईश्वरः कर्मादिवशः कर्तृत्वादित्यनुमाने तु सुतरामयं दोष इति भावः । परिहरति इति नेति । क्ष्मादिपक्षे—पृथिव्यादिरूपे आश्रये सपक्षव्याप्ताकारस्य=घटपटादिदृष्टान्ते सर्वत्र स्थितस्य कर्माधीनदेहवत्कर्तृकत्वादिरूपधर्मस्य प्रसंगात्=सकर्तृकत्वमुखेनापादनादित्यर्थः । क्षित्यादिकं यदि सकर्तृकं स्यात् घटादिवत् कर्मवशकायादिमत्कर्तृकं स्यादित्यापादनं निर्दुष्टमिति भावः । तदनुपगमने=एतद्रीतिपरित्यागे ईश्वरादिरूपं साध्यमाश्रयं कृत्वैवाऽऽपादनं कार्यमित्युक्तौ आश्रयासिद्ध्या, प्रसंगः=आपादनं परेष्टसाध्यविशेषस्थले क्वचिदपि न स्यात् । यथेच्छं परः स्वाभीष्टं सर्वं विशेषं तत्रतत्र साधयेदित्यर्थः ।

व्याप्तं प्रमितमिति । व्याप्तमिति कर्तरि क्तः । व्यापकतया प्रमितमित्यर्थः । तत्साधने तद्व्यापकमपि साधितप्रायम् । व्यवहितेऽपीति । चक्षुर्व्यवहितेऽप्यनुमाने अनुमानेन औष्ण्यासिद्धा—

वह्निरनुमीयमानः उष्णत्वमपहाय सिध्येदिति भावः ॥ व्यवहितेऽपि पश्चादुष्णत्वदर्शनात् तत्सिद्धिरिति चेन्न; प्रालेयमर्मरितैः पद्मपत्रादिभिः प्रालेयसन्निहितानुद्भूतरूपद्रुतवह्न्यनुमाने तदसिद्धेः । न च तत्रानुष्णो वह्निरनुमीयेत; मर्मरीभावस्यैवासिद्धिप्रसङ्गात् । यद्यनुष्णो वह्निः कश्चित् पचेत्, अन्वय-व्यतिरेकवान् नीहार एव पाचकः किं न कल्प्येत ? एवं सामान्यतश्शिक्षितया व्याप्त्या प्रस्तुतेऽनिष्ट प्रसङ्गमाह तस्मादिति । कार्यत्वादिभिरुर्वीदूर्वादौ कर्ता यदि सिध्येत्, कर्तृव्यापककायकरणकर्मादिमान् स्यात् । तथा च नाभ्युपगम्यत इत्यनिष्टता, विपर्यये विभ्रमश्च । नन्वनुमानवत् तर्कोऽपि धर्मिसिद्धि-सापेक्षः । अन्यथा प्रसञ्जकं कुत्राऽऽहार्यम्, अनिष्टं कुत्र वा प्रसञ्जनीयम् ? तदिहेश्वरसिद्धौ विदेहतयैव तत्सिद्धेः; तद्विरुद्धप्रसङ्गानुत्थानम्; तदसिद्धौ निराश्रयस्तर्कः कुत्र किं प्रसञ्जयेदित्यभिप्रायेण चोदयति **एतदिति** । परोक्तहेत्वाश्रय एव प्रतिकूलतर्काश्रय इत्यभिप्रायेण प्रतिवक्ति **नेति** । विवृणोति **क्ष्मादीति** । *अयं भावः— यदि वयमीश्वरे धर्मिणि प्रसङ्गमवतारयामः, तदा सिद्ध्यसिद्धिविकल्पदौःस्थ्यं* स्यात्; यदि च पृथिव्यादावाश्रये कार्यत्वहेतुना कर्तारं देहादिमन्तमुपस्थापयेम, तदा दूर्वादौ व्यभिचारात् न प्रतिसाधनं न प्रतितर्कश्चेति स्यात्; किंतु सप्रतिपन्ने धर्मिणि साध्यधर्मस्वभावात् तद्व्यापक प्रसक्तिं ब्रूमः; अतो न कश्चित् विरोध इति । अथ साक्षात् परसाध्यमाश्रयीकृत्य प्रसङ्ग प्रयोक्तव्य इति मन्येत, तदा प्रसङ्गस्यैवोच्छेद इति प्रसञ्जयति **तदनुपगमन** इति । परेष्टसाध्यविशेषस्य स्वीकारे बहिष्कारे च व्याघातस्य दुष्परिहरत्वादिति शेषः ॥ **इति देहादिरहितचेतनकर्तृत्वभंगः ॥ १६ ॥**

**(162) यत् कार्यस्योपयुक्तं तदिह भवतु नः किं परेणेति चेन्न**

***ज्ञानादेरुद्भवे तद्विषयनियमनेऽप्यर्थनादिन्द्रियादेः ।***

**'नित्यं ज्ञानं विभोस्तद्व नियतविषयं तेन नान्यार्थनं' चेत्**

---

*टी*— वपि न तदसिद्धिः; पश्चाद्दर्शनात् सिद्धिसंभवादित्यर्थः । प्रालेयमर्मरितैः=तुहिनेन शुष्कीकृतैः । प्रालेयसंनिहितेति । प्रालेये अनुद्भूतरूपाग्निः संनिहित इत्यनुमाने, 'तृणादिमर्मरीभावहेतुत्वादग्निमत् हिमम्'(न्या-सि ) इत्यनुमाने इत्यर्थः । तदसिद्धेः=प्रत्यक्षेणोष्णत्वसिद्ध्ययोगादित्यर्थः । ननु क्षित्यादिकं कर्मवशादेहवत्कर्तृकं कार्यत्वादिति तदनिष्टानुमानं वा, कार्यं यदि सकर्तृकं स्यात्, कर्मिदेहिकर्तृकमपि स्यादिति प्रतितर्को वा किं न भवेदित्यत्र, तत्रानुपपत्तिमाह यदि च पृथिव्यादाविति । दूर्वादाविति । दूर्वादीनां पक्षकोटिनिविष्टत्वं नेति कश्चित् पक्ष ईश्वरसिद्ध्यादौ दृष्टः । तदनुसारेण 'व्यभिचारात्' इत्युक्तम् । उच्छेद इति । उक्तञ्च न्यायपरिशुद्धौ, "अनुमानान्यतायामप्येष न स्यादनाश्रयः । वन्ध्यासुतो बुभुक्षुश्चेत् भुञ्जीतेति हि नोच्यते" इति ॥ १६ ॥

यदिति । कार्यसामान्ये देहादिकमप्यपेक्षितमिति न वक्तव्यमिति चेन्न; कार्यं ज्ञानसापेक्षमिति भवदिष्टम् । कायेन्द्रियाभावे कारणाभावात् ज्ञानमेव न भवेदिति कायाद्यपेक्षाप्यस्त्येव । ज्ञानञ्च सविषयकम् । तत्रेदं ज्ञानमेतद्विषयकमित्येवं विषयव्यवस्था च इन्द्रियविशेषाधीनत्वमाश्रयैवोपपाद्या । नित्यमिति । ईश्वरज्ञानस्य नित्यत्वात् कारणतया कायाद्यपेक्षा नास्ति; सर्वविषयकत्वात् *विषयव्यवस्थापकहेत्वपेक्षाविरहात् विषयनियामकतयाऽपि नेन्द्रियापेक्षेति चेदित्यर्थः । ईश्वरज्ञानं* करणादिनिरपेक्षं नित्यत्वादित्यनुमाने स्वरूपासिद्धिः; इदं ज्ञानमनित्यं ज्ञानत्वादित्यनुमाना-

**नानित्यस्यैव दृष्टेस्तव कथमजसंयोगभङ्गोऽन्यथा स्यात् ॥ १७ ॥**

ननु कार्योत्पत्तौ कर्तुर्ज्ञानचिकीर्षाप्रयत्नमात्रमुपयुज्यते ; देहादेः कार्यव्यापकत्वादर्शनात् ॥ कार्यविशेषे तदुपयोगो दृष्ट इति चेत्, यत्र दृष्टस्तत्र तथाऽस्तु, न सर्वत्र ; अतिप्रसङ्गात् इत्यभिप्रायेण शङ्कते **यदिति**। **उपयुक्तं**--ज्ञानचिकीर्षादिकम्। **परेण**--कार्योत्पत्त्यनुपयुक्तेनेत्यर्थः। अनुपयोगो दुर्वच इत्यभिप्रायेणाह **नेति**। तत् साधयति **ज्ञानादेरिति**। सपक्षव्याप्तप्रकारेण पक्षेऽपि कर्तुर्ज्ञानादिना कार्येण भवितव्यम्। ततस्तत्कारणतया कायकरणकर्मादियोगोऽपि दुस्त्यजः। प्रयत्नस्य विषयनियमश्चिकीर्षया ; तस्याश्च प्रियाप्रियप्राप्तिपरिहारव्यापारकारणेन तावद्बुद्ध्या ; सा च तत्तत्सामग्रीनियतविषयेति विषयनियमे स्थिते सामग्रीशून्यं ज्ञानं कथं सविषयम् ? निर्विषये च तस्मिन् किं चिकीर्षेत ? अचिकीर्षुश्च कुतः प्रयतेत ॥

ननु कार्यस्यैव सामग्र्यपेक्षणम् ; नित्यस्य तु स्वतस्सर्वविषयस्योत्पत्ति-विषयनियत्योरभावात् किं सामग्र्येति शङ्कते **नित्यमिति**। त्वयन्तिनामिव नित्यज्ञानसिद्धावेतत् वक्तव्यम्, नान्यथेति स्थापयितुमाह **नेति**। अहेतुकं ज्ञानं किं दृष्टम्, उत कल्पितम् ? नाद्यः, असिद्धेः। न द्वितीयः, दृष्टविजातीयक्लृप्त्ययोगादित्यभिप्रायेणाह **अनित्यस्येति**। तादृशज्ञानक्लृप्तौ परस्येष्टविरोधमाह **तवेति**। मूर्तवत् द्रव्यत्वादिना विभूना विभुना संयोगे कल्प्यमाने संयोगकारणानाम् अन्यतरकर्मोभयकर्मसंयोगानामसंभवात् तन्निषेधः कृतः। तथेहापि विज्ञानकारणानामिन्द्रियलिङ्गादीनामभावात् तदभावः स्यात्। नित्यत्वात् नैरपेक्ष्यमजसंयोगेऽपि सुवचम्। विभूनां मिथस्संयोगाभावे न किंचित् [1]बाधकमिति चेत्, नित्यज्ञानाभावेऽपि किम् ? ॥ असदाद्यशक्यकार्यानुत्पत्तिप्रसङ्ग इति चेत्, न, कारणान्तरैरेव तदुत्पत्त्युपपत्तेः ॥ कर्तृनिरपेक्षैः कारणान्तरैः कार्योत्पत्तिर्न दृष्टेति चेत्, अन्यत्रादृष्टाऽप्यत्र तथा स्यात्, प्रध्वंसस्येव निमित्तमात्रजन्यत्वम्। वरं हि कल्पितस्य ज्ञानादेः कारणनैरपेक्ष्यकल्पनात् सिद्धस्य हेतुवर्गस्य क्वचित् कर्तृनैरपेक्ष्याङ्गीकारः।

---

त्वी— दित्यर्थः। अजसंयोगेति। विभुद्वयसंयोगस्तैर्नेष्यते ; संयोगत्वेन हेतुना सर्वत्र जन्यत्वानुमानात् अजत्वायोगात्। नित्यज्ञानस्वीकारे नित्यसंयोगोऽपीष्यतामिति प्रतिबन्दिः।

देहादेरिति। श्लोके इन्द्रियोक्तिः विषयनियमस्य तदधीनत्वात् ; अत्र हेतुत्वमात्रकथनात् प्रधानस्य देहस्योक्तिः। निर्विषये चेति। यद्विषयं ज्ञानं तद्विषया चिकीर्षा, प्रयत्नश्च तद्विषयक इति हि व्यवस्थेति भावः। तथाच प्रयत्नस्य चिकीर्षापेक्षा, चिकीर्षायाः ज्ञानापेक्षा च यथा, तथा ज्ञानस्यापि विषयनियामकापेक्षेति। मूर्तवदिति। परिच्छिन्नवस्तुवदित्यर्थः, द्रव्ययोः संबन्धः—संयोगः। स घटपटादिस्थल इव विभुद्वयेऽपि तुल्यः। अन्यतरेति। "अन्यतरकर्मज उभयकर्मजः संयोगजश्च संयोगः" इति (7-2-9) कणादसूत्रम्। श्येनपर्वतसंयोगे श्येनक्रियामात्रं कारणम् ; अन्यस्याचलत्वात्। मल्लयोर्मेषयोर्वा संयोगे उभयोः क्रिया। अवयवावयव्यंगीकारात् हस्तपुस्तकसंयोगात् कायपुस्तकसंयोगो भवति। तत्र क्रियापेक्षा नेति। [1]बाधकमिति आन्ध्रलिपिपाठः शुद्धः ; न तु साधकमिति पाठः। अजसंयोगो मा भूत्, तत्साध्यस्य कस्य चिदभावादिति तदाशयः। नित्यज्ञानमपि मा भूदिति प्रत्याह नित्येति। नित्यज्ञानकार्यमस्तीति वैषम्यं शंकते असदिति। निमित्तमात्रेति। भावकार्याणां समवाय्यसमवायिनिमित्तरूपत्रिविधकारणापेक्षा, न तु प्रध्वंसस्याभावस्येति तत्पक्षः। वरं हीति। अन्वयव्यतिरेकाभ्यां हि कार्यकारणभावकल्पना। क्षित्यादौ यावदन्वयव्यतिरेकसंभवः,

[तस्मान्नित्यज्ञानास्वीकारो वा ?]अजसंयोगस्वीकारो वेति (वा?) ॥ स्वीक्रियतां का हानिरिति चेत्, सिद्धान्तहानिरिति ॥ इति तार्किकोक्तज्ञाननित्यत्वानुमानभंगः ॥ १७ ॥

(163) किं वा धीच्छे गृहीते ? विषयनियतये ते हि यत्नोऽत्र नेच्छेत्
निर्हेतुस्तत्प्रमेष्टा भवतु विषयवानेष तद्वत् स्वतस्ते ।
'प्रोक्ते यत्ने स्वभावाद्विषयवति स धीः स्यात्' इतीदं क्व दृष्टम् ?
यद्वा धीस्ते हि नित्यं न तु जनयति ते; सा कथं तन्नियन्त्री ॥ १८ ॥

नन्वहेतुकसंयोगमिच्छद्भिरहेतुकज्ञानं न दूष्यम् ; तद्दूषणे वा सिद्धान्तहानिः स्यादित्यत्राह किं वेति । कर्तुरनुमानेऽपि प्रयत्नमात्राधारत्वमनुमीयताम् ॥ प्रयत्नव्यापकतया ते अपि सिध्येतामिति चेन्न; जीवनपूर्वकप्रयत्नमन्विच्छतां तत्र व्याप्तिभङ्गात् । अतः(?) प्रयत्नक्लृप्तावपि ज्ञानचिकीर्षानैरपेक्ष्यमाह

टिप्पणी- (?) 'अतः प्रयत्नक्लृप्तावपि' इत्यस्यानन्तरं 'न तद्व्यापकतया ज्ञानचिकीर्षासिद्धिरिति। विषय-
—तावदधिकं कारणत्वेन न स्वीकार्यमिति । एतच्छ्लोकवृत्त्यन्ते वाक्यं शोधनीयमिति शोधितम् ।
सिद्धान्तहानिरिति । एवमुक्तिः स्वपक्षे नित्यज्ञानस्याजसंयोगस्य चांगीकारात् । ज्ञानकालादिरूप-विभुद्रव्यस्य परमात्मनश्च संबन्धस्याधाराधेयभावस्य चेष्टत्वात् । अपृथक्सिद्धिमात्रं तदिति चेत्, अद्रव्यस्थले स्वरूपानतिरेकेऽपि द्रव्यस्थले संयोगत्वमेव हि तत्संबन्धस्य स्वरसम् । विभुनोरसंबन्धस्तु दुर्वचः । ज्ञाननित्यत्वं च नित्यसूरिप्रभृतीनामपि । आगमस्य मानत्वात् तत्र नानुपपत्तिः ॥ १७ ॥

अजसंयोगस्वीकारे सिद्धान्तहानिरिति तत्त्यागी नित्यज्ञानमपि तुल्ययुक्त्या त्यजत्वित्यस्मान् प्रति दूषणेऽपि, सिद्धान्तिना अजसंयोगमिच्छता कथं नित्यज्ञानं नेत्युच्यते । स्वीकृतस्य तस्यासंमतौ तवापि सिद्धान्तहानिरित्यत्र वैषम्यं दर्शयति किं वेति । ईश्वरमिच्छद्भिरेव त्वां प्रतीश्वरनिषेधवचनं यदस्माकम्, तत्तुल्यमिदं नित्यज्ञाननिषेधवचनमपि । अस्माभिस्तु धीच्छे शास्त्रबलात् स्वीकृते । तत एव धियो नित्यत्वमपि । त्वया यत्ने नित्ये सति किमिति ज्ञानेच्छे स्वीकृते ? ननु यत्नस्य विषय-नियतये ज्ञानमिच्छा च स्वीकृते । यथोक्तं कुसुमाञ्जलौ, "न च प्रयत्न आत्मलाभार्थमेव मति-मपेक्षते, विषयलाभार्थमप्यपेक्षणात् । नित्ये च प्रयत्ने नित्यैव बुद्धिः प्रवर्तते, नानित्या । न हि तया तस्य विषयलाभसंभवः" इति इति चेत्, हि=यतः यत्नो विषयनियतये ते=धीच्छे नापेक्षेत । जीवनयोनियत्ने तदनपेक्षणात् । अत्र=प्रकृतविषये । घटादिविषये तु स्यान्नाम । ज्ञानेच्छयोरभावेऽपि कथं तस्य स्वतस्सविषयकत्वमिति चेत्, उच्यते । निर्हेतुस्तत्प्रमेष्टा । तस्य—भगवतः प्रमा निर्हेतुतयेष्टा, तस्य ज्ञानं तस्यानुभवत्वं प्रमात्वं प्रत्यक्षत्वं प्रामाण्यं सर्वं त्वदिष्टम्, लोके ज्ञानं तस्यानुभवत्वादि-धर्मांश्च तत्तदुचितकारणायत्ततया स्वीकृत्यात्र परं निर्हेतुकमिति वदसि । ततः=तस्मात् ते=त्वत्पक्षे एषः—यत्नः स्वत एव विषयवान् भवतु तद्वत् । यत्तूक्तम्, यत्ने स्वभावात्=ज्ञानापेक्षां विनैव विषयवति प्रोक्ते=सविषयकत्वेनेष्टे सति, सः=यत्नः धीरेव स्यात् । धिय एव इतरनिरपेक्षं विषय-वत्त्वादिति—इदं क्व दृष्टम्; लोके ज्ञानानामिन्द्रियादिकरणाधीनतया तदधीनतयैव विषयलाभ-दर्शनात् । अस्त्विदं लोके । ईश्वरयत्नं नित्यं ते=त्वन्मते तद्धीः न हि जनयति; नित्यत्वात् । ज्ञानस्य स्वजन्ययत्ने एव स्वविषयसमर्पकत्वं दृष्टम्, न तु तत्पुरुषीययत्नान्तरे कस्यापि ज्ञानस्य विषयसमर्प-कत्वम् । अतः सा=धीः तस्य-यत्नस्य नियन्त्री=नियतविषयकत्वापादिका कथं भवेदिति ॥

व्यापकतयेति । नचाप्रयोजकत्वम्; यदि ज्ञानं न स्यात्, यत्ने विषयनियमो न स्यादित्यनुकूल-तर्कसद्भावात् । अतो यत्रयत्र विषये यत्नः, तत्रतत्र ज्ञानमिति व्याप्तिरिति । अन्विच्छताम्=पुरु

विषयेति । सर्वकार्यविषयस्य हि प्रयत्नस्य विषयनियमाभावादेव न तदर्थं चिकीर्षाद्यपेक्षा(??) । उक्तमर्थं प्रतिबन्दिगतं विवृणोति **निर्हेतुरिति** । अयं भावः—अन्यत्र ज्ञानं सर्वं सकारणकम्, तत्प्रामाण्यं च कारणगुणाधीनमिति स्थापयद्भिरीश्वरज्ञानं तत्प्रामाण्यं च निष्कारणकमिति दृष्टविपरीतं कल्प्यते । अत्र ज्ञानचिकीर्षाख्यधर्म्यन्तरक्लृप्तिमपहाय प्रयत्नमात्रेऽन्यनिरपेक्षं विषयित्वमङ्गीकर्तुं युक्तम् ।

श्लो—नित्या चेश्वरबुद्धिस्ते नानुभूतिर्न च स्मृतिः । न प्रमा न भ्रमश्च स्यात् तत्तत्कारणवर्जनात् ॥
अनुभूत्यादिहेतूनामभावेऽपि तथा यदि । स्मृतिहेतोरभावेऽपि स्मृतिरेषा न किं भवेत् ॥

कुतश्चित् प्रमात्वादिकल्पनेऽपि तद्वदेव यत्नस्य विषयित्वेऽन्यनैरपेक्ष्यमपरिहार्यमिति ।

अत्र परोक्तं प्रसङ्गमनूद्य प्रतिषेधति **प्रोक्त** इति । ज्ञानस्य स्वत एव सविषयत्वमित्येतदेव क्व दृष्टम्? सर्वत्र ज्ञाने सामग्रीनियतविषयत्वदर्शनात् । नित्यस्य चेश्वरयत्नस्य कार्यविशेषानुगुणसहकारिलाभमन्तरेण कार्यविषयत्वं नाम न किञ्चित् संभवति । न च [स्वतो?] विषयित्वमेव ज्ञानलक्षणम्, शक्त्यादीनामपि विषयधर्माणां धीत्वप्रसङ्गात् । यस्त्विच्छामनङ्गीकृत्य बुद्धियत्नावीश्वरस्य ब्रूते, सोऽपि प्रत्युत्पन्नवादी ; नित्ययत्नमात्रेणापि सर्वकार्यसिद्धेरुक्तत्वात् । अबुद्धिपूर्वप्रवृत्तस्य कथं, 'स्वतन्त्रः कर्ता' इति लक्षणयोगः, कथंतरामीश्वरत्वयोग इति चेत्, अनिच्छापूर्वप्रवृत्तस्यापि सममेतत् । अत एव कारकान्तराप्रयोज्यत्वे सति कारकान्तरप्रयोक्तृत्वरूपं कर्तृत्वं कथमचेतनस्येत्यपि प्रत्युक्तम् ; प्रयत्नवत एव प्रयोक्तृत्वसंभवात् । तन्नित्यतया प्रयोज्यत्वाभावाच्च । ननु चेतनत्वमात्मलक्षणम् ; तदभावे तत्त्वं न स्यादिति चेत्—मैवम् ; यत्नवत्त्वेन तल्लक्षणसिद्धेः ;

---

ग्रं—नियमार्थमपि' इत्येतावत् पतितमिति भाति । अन्यथा अत इति प्रयत्नव्यापकतया ज्ञानचिकीर्षयोरसिद्धिं हेतुतया परामृश्य ज्ञानचिकीर्षानैरपेक्ष्यमाह इति 'विषयनियतये' इति श्लोकैकदेशावतारिकाग्रन्थो न संगच्छते । (??) 'न तदर्थं चिकीर्षाद्यपेक्षा' इत्यस्यानन्तरं, 'स्वत एव सविषयत्वोपपत्तेः न तदर्थमपि चिकीर्षाद्यपेक्षा' इत्येतावद् द्रष्टव्यम् । अन्यथा उक्तमर्थं इत्याद्यनन्तरग्रन्थानाञ्च स्यात् । उक्तमर्थम्=स्वतः सविषयत्वात् ज्ञानादिनैरपेक्ष्यमित्यर्थः । ज्ञाननित्यत्वे बाधकतर्कमाह—नित्या चेति । स्मृतित्वभ्रमत्ववत् अनुभूतित्वप्रमात्वे न स्यातामित्यर्थः । ईश्वरप्रयत्नस्य मुख्यं विषयित्वमपि नास्तीत्याह—नित्यस्य चेति । यथाकथञ्चित् विषयित्वमेव ज्ञानस्य लक्षणमित्याशङ्क्याह—नचेति ।

व्यं— विना भगवतस्संकल्पेनैवोच्छ्वासनिश्वाससंभवेऽपि कारणं विना जीवनयोनियत्नान्वेषणपराणाम् । अत इत्यस्य व्याप्तिभंगादित्यर्थः । अतो नात्र ग्रन्थभ्रंशस्यावश्यकता । भवत्विति वाक्यस्यार्थमाह कुतश्चिदिति । दोषादर्शनात् बाधाभावाच्च प्रमात्वम्, प्रथमातिक्रमे कारणाभावादनुभवत्वं वैशद्यातिशयाच्च प्रत्यक्षत्वमिति । नित्यस्य चेति । यत्नस्य सविषयकत्वं किमर्थम् । तद्विषयोत्पादनार्थम् । नित्यत्वेन सर्वदा सविषयकत्वात् सर्वदैव कार्यं स्यात् । अत एव यदा ज्ञानेन विषयार्पणं तदैव सविषयकत्वमिति चेत्, ज्ञानस्य सर्वदैव सविषयकस्य सदैव विषयार्पकत्वप्रसंगात् स एव दोषः । सहकार्यन्तरमेलन एव कार्यमिति चेत्—तत एव कार्योपाधायकत्वसिद्धौ ज्ञानसाध्यं न किञ्चिदिति भावः । ज्ञानस्य सामग्रीबलादेव सविषयत्वम् । स्वभावत इति स्वीकारेऽपि नैतत् ज्ञानमात्रवृत्ति वा ज्ञानत्वमेव चेत्याह न चेति । अचेतने चैतन्यासंभवज्ञापनाय विषयधर्माणामित्युक्तम् । प्रत्युत्पन्नवादीति । तत्काले प्रतिसमाधानाय यत् प्रतिभातं, तत् युक्तमयुक्तं वेत्यविमृश्य वदतीत्यर्थः । ननु न्यायदर्शने इच्छाद्वेषादिरूपगुणानां देहातिरिक्तात्मसाधकत्वं वदन् अन्ते ज्ञानं निर्दिदेश । इतराभावेऽपि

अन्यथेच्छाविरहेऽपि तदसिद्धिप्रसङ्ग. । 'इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मलिङ्गम्' इत्याक्षपादी (1-1) सहपठितिः, "क्रियावत् गुणवत् समवायिकारणमिति द्रव्यलक्षणम्" इति (1-1-17) काणभक्षीव कथंचिन्नेया । ज्ञानाद्यत्यन्तायोगव्यवच्छेदवन्निष्ठद्रव्यत्वावान्तरजात्याधार आत्मेति ॥ अस्तु तर्हि यत्नमात्र-वानीश्वरः, तथाऽप्यनुमानं न प्रतिक्षिप्तमिति चेन्न, 'यस्सर्वज्ञस्सर्ववित्', 'तदैक्षत बहु स्यां प्रजायेय', 'सोऽकामयत बहु स्यां प्रजायेय' इत्यादिश्रुतिशतविरोधादिति ॥

दूषणान्तरमाह—यद्वेति । धीर्हि जनयित्री चिकीर्षाया विषयं नियच्छेत्; साऽपि तादृशी यत्नस्य । इह तु जनकत्वाभावान्न ततस्तद्विषयनियमः । सामानाधिकरण्यमात्रात् तन्नियमे जीवेश्वर-गुणान्तराणामपि सविषयत्वप्रसङ्ग इति भावः ॥ **इति प्रकृतयत्नस्य ज्ञानसापेक्षत्वभंगः ॥ १८ ॥**

**(164) निश्वासादिप्रयत्नक्रम इह भवतां जीव एवास्त्वदृष्टैः**
**यद्वा तैरेव सर्वं घटत इति भवेत् तत्कृता सिद्धसाध्यम् ।**
**फलभावन्यस्य कर्तृद्वयमुपनमति त्वत्सपक्षे, तथा स्यात्**
**पक्षेऽपीत्यव्यवस्था ; यदि विफलतया त्यक्तिराद्येऽपि सा स्यात् ॥ १९ ॥**

---

पू°–काणभक्षीवेति । यथा क्रियावत् द्रव्यं इति काणभक्षलक्षणं क्रियावन्निष्ठात्यन्ताभावाप्रति-योगिसत्तावान्तरजातियोगि द्रव्यमित्येवं नेयम्—तद्वदित्यर्थः । तदेव दर्शयति—ज्ञानेति ॥ १८ ॥

श्री–ज्ञानमादाय लक्षणमुदितम्; ईश्वरसाधारणं स्यादिति । तदीश्वरे ज्ञानास्वीकारे नोपपद्यत इत्यत्राह इच्छेति । कथञ्चिदिति । तत्तद्घटितधर्मपर्यन्ते लक्षणायाः स्वीकारेणेत्यर्थः । कणादसूत्रे गुणवत्त्वं सम-वायिकारणत्वञ्च द्रव्यलक्षणं सुस्थम् । क्रियावत्त्वं गगनादावव्याप्तम् । अतः क्रियासमानाधिकरण-सत्ताव्याप्यजातिमत्त्वमिति परिष्करणीयम् । सा च जातिर्द्रव्यत्वम् । तद्वदिहापि परिष्कारे तात्पर्यम् । अन्यथा द्वेषादिगुणकाले इच्छादिगुणाभावात् सुषुप्तिमरणप्रलयकैवल्यदशासु कस्याप्यस्य गुणस्या-भावाच्च तत्तत्कालावच्छेदेनाव्याप्तिः स्यात् । यद्यपि इच्छादितत्तद्गुणात्यन्तायोगव्यवच्छेदवत्त्वादीनि लक्षणानीत्युक्तौ नोक्ताव्याप्तिः, अथापि संभवति परमात्मसाधारण्येनापि लक्षणनिर्वचने तत्त्या-गायोगात् इच्छावन्निष्ठद्रव्यत्वव्याप्यजातिमत्त्वमिति परिष्क्रियते, कणादसूत्रे क्रियावत्त्वमिव । एवञ्च द्वेषादिघटितमपीश्वरलक्षणं भवितुमर्हतीति न सूत्रस्य न्यूनता । अतो ज्ञानस्येश्वरेऽसंगीकारेऽपि न लक्षणहानिः । लक्षणेऽत्यन्तायोगव्यवच्छेदेति न निवेश्यम्, ज्ञानादिमन्निष्ठत्वस्यैव पर्याप्तत्वात् । अथापि अव्याप्तिपरिहारायात्यन्तायोगव्यवच्छेदनिवेशवत् एवं निवेश्यापि लक्षणं सुवचमिति ज्ञाप-नायेदमिति ध्येयम् । विरोधादिति । यत्नानुमानेनाऽऽत्मसिद्धावपि जीवैरेवान्यथासिद्ध्या विव-क्षितासिद्धिश्च । दूषणान्तरमिति । नित्ययत्नविषयनियामकतया नित्यज्ञानसिद्धिरित्यत्रेति शेषः ॥१८॥

एवं ज्ञानेच्छयोरसिद्धिर्दर्शिता । अथ यत्नसिद्धावपि तस्य जीवनिष्ठत्वोक्तिसंभवात् ईश्वरा-सिद्धिरेवेत्याह निश्वासेति । अदृष्टैः=तत्तत्कार्यविशेषहेतुत्वदृष्टविशेषाधीनः भवत्संमतनिश्वासो-च्छ्वासविषयप्रयत्नन्यायो जीवगत एव इह–क्षित्यादिकार्यविशेषे अस्तु । कार्यविशेषनियामकयागाद्य-दृष्टरूपसहकारिकारणं विना ईश्वरस्य कर्तृत्वायोगात् तेषामावश्यकत्वे तैः सह जीवनिष्ठो यत्न एव हेतुः स्यात् । नन्वंकुरादिकं स्वप्रयत्नकृतमिति न कस्याप्यनुभव इति चेत्—अनुभवागोचरा एव यत्ना इमे । भवता निश्वासादिहेतुतया तादृशयत्नस्य स्वीकृतत्वादत्रापि तन्न्यायसंभवात् । यद्वा यत्नोऽपि मा भूत् । तैरेव=अदृष्टमात्रेण सर्वं कार्यं घटते=भवितुमर्हति । उभयथाऽपि चेतनकर्तृक-

अस्तु नित्ययत्नवान् ईश्वरोऽनुमेयः संप्लवाभ्युपगमादवशिष्टमागमिकं स्यादित्यत्राह **निश्वासेति**॥ जीवनपूर्वकप्रयत्नन्यायादद्दष्टविशेषजनितयत्नवद्भिर्जीवैः क्षित्यादेः सकर्तृकत्वसंभवे किं नित्ययत्नतदाधारकल्पनागौरवेण? यादृशैरेवादृष्टैः शरीरादिनिरपेक्षैस्सहकृत ईश्वरः स्रष्टेति मन्यसे, तादृशैरेव तत्फलभोक्तृष्वेव यत्नकल्पनैर्लघुत्वात्। एतेन मनःकरणकागन्तुकज्ञानादिमान् ईश्वर इति मतान्तरमपि निरस्तम्; तत्रापि देहादिनिरपेक्षमनःप्रवृत्तिकल्पनैर्गुरुत्वात्। अथवा कल्पनीये हि यत्ने सर्वमिदं चिन्त्यम्; तत्कल्पनैव न युक्तेत्याह **यद्वेति**। व्यवस्थापकैरदृष्टैरेव यत्नादिनिरपेक्षैरित्यर्थः। **सर्वं** व्यणुकादि पर्वतादि च। **घटते**— उत्पत्तुमर्हति। एतेनानुमानस्य किमायातमित्यत्राह— **भवेदिति**। **तत्कृता** चोदितमनुतिष्ठता तत एव फलद्वारभूतादृष्टकर्त्रा जीवेनेत्यर्थः। न च क्रियाहेतुगुणेष्वन्यतमेन कार्यसंभवे तत्र गुणान्तरमपि हेतुतया कल्प्यम्; अदृष्टस्य च सर्वकार्यनिमित्तत्वेऽपि विशेषतः क्वचित् क्रियाहेतुगुणत्वं पृथ, "अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणुमनसोश्चाद्यं कर्मेत्यदृष्टकारितानि" (वै. द. 5 2.18) इति। तत् कस्य हेतोः? नूनं क्रियाहेतुगुणान्तरनिवृत्त्यै स्यात्। एवं सति यत्नादृष्टप्रागल्भ्यम्, तत्र मुधा तत्पूर्वक्षणवर्तिज्ञानचिकीर्षाप्रयत्नकल्पना । प्राचीनैरेव तैर्जीवस्य तत्कर्तृत्वोपपत्तेः। अन्यथा शराभिचारकृत्यादिप्रयोगे वेधपीडादिकर्तृत्वं प्रयोक्तुर्न स्यात्। मा भूदिति चेन्न, लौकिकवैदिकचित्तविसंवादात्। नन्वदृष्टमचेतनं चेतनानधिष्ठितं कथं प्रवर्तेत? इत्थम्। स्वकारणोपनीतसहकारिसंपन्नतातिरिक्तस्प्रवृत्त्यभावात् कारणानामपि

---

त्वी— त्वानुमानं जीवमादाय निरूढमिति सिद्धसाधनम्। द्वितीयपक्षे यत्नाभावात् चेतनकर्तृकत्वसिद्धिः कथमिति चेत्-अदृष्टानां यत्नपूर्वकयागादिसाध्यत्वात् तदेव कर्तृत्वं कर्तृपदविवक्षितम्। अतः तत्कृता=अदृष्टकर्त्रा जीवेन=जीवमादाय अनुमानं सिद्धसाध्यकमेव। सर्वकर्तृत्वमीश्वरे दुस्साधश्चेत्याह फलतावितिं। घटपटादिविषये कुलालकुविन्दादेः कर्तृत्वमावश्यकम्; तदभावे कार्याभावात्। तेन सह परमात्मनोऽपि कर्तृत्वे, त्वया सपक्षतया स्वीकृते घटादौ कर्तृद्वयं स्यात्। ननु संमतमेवेदं कुसुमाञ्जलौ, 'वैमाद्यधिष्ठानस्यापि न्यायप्राप्तत्वात्','एकाधिष्ठानेनैव कार्यं स्यात्' इति चेत्, स्यादेव। तथापि, 'न संभेदेऽन्यतरवैयर्थ्यम्' इतीति चेत्—एवं तर्हि, तथा स्यात् पक्षेऽपि। क्षित्यादिकं चेतनद्वयकर्तृकं घटादिवदिति पुनरनुमानापत्तिः। अथ सपक्षे द्वयसिद्धौ तदनुमानमपि पक्षे इति अनन्तकर्त्रापत्तिः। वैयर्थ्यान्नेत्यमिति चेत्, प्रथमसंभेदेऽपि वैयर्थ्यमेव। अतः सा त्यक्तिः एकातिरिक्तकर्तृत्यागः। आद्येऽपीति। घटपटाद्यतिरिक्तमात्रे ईश्वरः कर्ता स्यात्। तथा आद्ये क्षित्यादिविषये तदनुमानेऽपि विफलता स्यात्; अदृष्टविशिष्टजीवैरेव सर्वनिर्वाहात्। तत्कृतेति कृञ्धातुप्रयोगः जीवस्य सकर्तृकमिति कर्तृपदेन ग्रहणसंभवप्रदर्शनार्थः।

संप्लवेति। "प्रमाणानि किं संप्लवन्ते उत व्यवतिष्ठन्ते" इति न्यायभाष्ये व्यचारि। एकप्रमाणज्ञापितार्थे प्रमाणान्तरस्याप्रसंगो व्यवस्था। उभयसंबन्धः संप्लवः। एक एवार्थो दृश्यतेऽनुमीयते शब्देन वेद्यते चेति। ईश्वरविषये शास्त्रानुमानयोः संप्लवः। एकज्ञापिताधिकमन्यज्ञाप्यमपि स्वीकार्यम्। अनुमानगृहीतादधिकस्यांशस्य प्रत्यक्षेण धर्मिणा सह ग्रहणवत्।

विशेषतः=असाधारण्येनापि। अणुमनसोः=सर्गादौ पृथिव्यादिपरमाणुषु, मनसि तदा, सुषुप्त्यवसानादौ च प्राचीनैरेव=यागाद्यनुष्ठानार्थैरेव। अन्यथा=परम्परयाऽपि यत्नस्य कारणत्वास्वीकारे। स्वेति। प्रवर्तेतेत्यत्र विवक्षिता प्रवृत्तिर्न सहकारिसंपत्तिव्यतिरिक्ता। कारणानां प्रवृत्तिश्च

तत्तत्कारणोपनेयत्वात् ॥ तान्यप्यचेतनानि चेतनाधिष्ठेयानीति चेन्न; ईश्वरप्रयत्ने तदभावात् ॥ चैतन्यायोगव्यवच्छेदवन्निष्ठतामात्रेण तस्यापि तदधिष्ठितत्वमिति चेन्न, तावतोऽधिष्ठानशब्दार्थतया कैश्चिदप्यनङ्गीकारात् ॥ मयैवमङ्गीकृतमिति चेत्, अन्यैरपि तर्हि चैतन्यात्यन्तायोगव्यवच्छेदवन्निष्ठत्वमेव चेतनाधिष्ठितत्वमदृष्टानामित्यङ्गीक्रियेत ॥ ईश्वरधीविशेषमदृष्टमिच्छता त्वया नैवमङ्गीकार्यमिति चेन्न; तथाविधादृष्टे त्वयाऽपि चेतनाधिष्ठेयत्वस्यासाध्यत्वात्। त्वन्मतेऽपि कारणवर्गानुप्रवेशिनो नित्यस्येश्वरज्ञानस्याचेतनस्य चेतनाधिग(ष्ठि ?)तत्वकल्पने तादृशचेतनान्तरक्लृप्तिप्रसङ्गः।

श्लो— ईश्वराकूतमेवं च श्रौतादृष्टं यदीच्छसि। नृगुणापूर्वक्लृप्तिस्ते निष्फलैव तदा भवेत् ॥

नन्वीश्वरप्रयत्नादेरसिद्धौ न त्वयाऽत्र व्यभिचार उदाहार्यः; तत्सिद्धौ तद्व्यतिरिक्ताचेतनेषु चेतनाधिष्ठाननियमसिद्धिरिति चेत्—अन्येषामपि तद्वदृष्टादिव्यतिरिक्तविषये तन्नियमः स्यात्। अतः अदृष्टवद्भिर्जीवैरेव जगदुत्पत्तिसिद्धिरिति सिद्धसाधनता दुर्वारा।

जीवातिरिक्तकर्तृकल्पने अनिष्टं प्रसञ्जयति क्लृप्ताविति। एककर्तृकतया प्रसिद्धे सपक्षे कर्तृद्वयं स्यात्। अनेककर्तृकेऽपि संप्रतिपन्नातिरिक्तकर्तृकत्वम्। कल्प्यमानो हि न केवलं क्षित्यादिमात्रकर्तृत्वेन कल्प्यते; तत्प्रयत्नस्य परिच्छेदकाभावेन सर्वविषयत्वात्। ततः किमित्यत्राह तथेति। अयं भावः—क्षित्यादिकर्तरि साध्यमाने, विश्वकर्ता तेन घटादेर्द्विकर्तृकत्वमायातम्। ततस्तद्दृष्टान्तेन पक्षस्य द्विकर्तृकत्वमापतेत्; ततः सपक्षस्य त्रिकर्तृकत्वं स्यात्; एवं क्रमेणोपर्युपरि क्लृप्तावनन्तेश्वरापत्त्या, "द्यावापृथिवी जनयन् देव एकः", "एकः शास्ता न द्वितीयः" इति व्यवस्था भज्येतेति। अत्र परोक्तं कल्पनागौरवं शङ्कते यदीति। एकेनेश्वरेण विश्वकार्यसिद्धौ द्वितीयक्लृप्तेर्निष्फलत्वात् तत्परित्याग इति तत्र गौरवभिया त्याग एकस्मिन्नपि स्यादित्याह आद्येऽपीति। उक्तं हि जीवैरेव कर्तृभिरदृष्टद्वारा सर्वं कार्यं सिध्येदिति॥ १९

(165) साध्यो हेत्वादिवेदी मत इह कलया सर्वथा वा तवासौ,
पूर्वत्रेशो न सिध्येत्; न कथमपि भवेत् व्याप्तिसिद्धिः परत्र।
पक्षस्पर्शात् विशेषान्न खलु समधिकं पक्षधर्मत्वलभ्यं
कल्प्योऽन्यस्ते विशेषः, सुकृतविषमिता जीवशक्तिस्तु सिद्धा ॥ २० ॥

---

व्या— तत्कारणसहकारिसंपत्तिरेव। तान्यपि =कारणान्यपि। अधिष्ठितत्वं यत्नाधीनक्रियावत्त्वम्—तत् कथमीश्वरप्रयत्ने इति पृष्टे समाधानं शंकते चैतन्येति। तदयोगव्यवच्छेद इत्यनेनेश्वरे ज्ञानस्य सार्वदिकत्वमुक्तम्। 'तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते' इत्युक्तं कुसुमाञ्जलौ। जीवज्ञानस्य सार्वदिकत्वाभावात् चैतन्यात्यन्तायोगव्यवच्छेदेत्युक्तम्। ईश्वरप्रयत्ने तदभावादितीदमयुक्तमिति शंकते नन्वीश्वरेति। अधिष्ठाननियमसिद्धिरिति। धर्मिग्राहकमानेन तदधिष्ठातृतयैव तत्सिद्धेरिति भावः॥

कुलालकुविन्दादिकार्यघटपटादिविषये ईश्वरस्यापि कर्तृत्वं व्यर्थमिति तज्ज्ञानादिसंकोच उक्तः। यत्र क्षित्यादौ कर्तृत्वमावश्यकम्, तत्रापि उपादानादिकृत्स्नविषयकज्ञानं नापेक्षितम्, नतरां साक्षात्काररूपमिति संकोचाधिक्यं दर्शयति साध्य इति। इह—ईश्वरानुमाने, असौ—कर्ता कलया =अंशतः हेत्वादिवेदी—उपादानोपकरणभूतहेतु-प्रयोजन-संप्रदानादिज्ञानवान् वा तव

पुनरपि विकल्पमुखेनानिष्टमाह साध्य इति । किमत्रोपादानादिज्ञानवन्मात्रं सिषाधयिषितम्, उतोपादानादिकृत्स्नगोचरज्ञानवानि[ती ?]ति विकल्पः । तत्राद्यं दूषयति पूर्वत्रेति । जानन्ति हि जीवाः जगदुपादानं पृथिव्यादिद्रव्यम् कुम्भाद्युपयोगिपरमाणुद्व्यणुकादिज्ञानाभावेऽपि कुम्भादिकर्तृत्वं सर्वानुमतम्। द्व्यणुकप्रभृतिजगदुपकरणं च यागादि जानन्त्येव जीवाः । तच्छक्तेर्द्वारस्य वा साक्षात्काराभावेऽपि कुम्भादिन्यायात् यागादिप्रवृत्तिरिष्टा । संप्रदानं च भोक्तारं स्वात्मानमात्मीयान् वा, प्रयोजनं च इष्टप्राप्तिमनिष्टनिवृत्तिं वा न हि ते न जानीयुः । अतस्तेषामेव क्षित्यादिकर्तृत्वमविरुद्धम् । उत्तरं दूषयति न कथमपीति । न हि कुम्भादिसामग्र्यन्तर्गतं सर्वं कुम्भकारादयो जानन्ति ॥ योगिनां स्वकार्यसामग्रीसाकल्यज्ञानमस्तीति चेत्, किमतः ? योगसिद्धसार्वज्ञ्या अपि हि न कुतश्चित् कल्पयितुं शक्यन्ते; अतो न तत्कार्यैः सपक्षसिद्धिः । आगमतस्सिद्धौ तु तद्वत् ईश्वरोऽपि तदनुविधेयः(धेः ?)सिद्ध इति नानुमेयं किञ्चित् ॥ अस्तु व्याप्त्या कर्तृमात्रमुपस्थाप्यम्, पक्षधर्मताबलात् सार्वज्ञ्यादिविशेषसिद्धिरित्यत्राह पक्षेति । व्याप्यस्य पक्षधर्मतया हि व्यापकस्य प्रागविदितो धर्मिविशेषसंबन्धः सिध्येत्; न तु सदपि सपक्षदृष्टवैजात्यम् । अन्यथा धूमानुमिते वह्नौ तार्णतादिविशेषविलोपप्रसङ्गात् । सपक्षदृष्टान्यता-

श्री– साध्यो मतः–साध्यत्वेन त्वदभिमतः, किं वा सर्वथा हेत्वादिवेदी–उपादानोपकरणसंप्रदानप्रयोजनपरम्परानिखिलसर्वधर्मधर्मिविषयज्ञानवान् साध्यत्वेन त्वदभिमत इति विकल्पः। पूर्वत्र–आद्यपक्षे संकुचितज्ञानरूपपुरुषसिद्धावपि सर्वेश्वरसिद्धिर्न भवति । परत्र—कृत्स्नज्ञानवत्साध्यकत्वपक्षे व्याप्तिसिद्धिः सर्वथा न भवेत्। घटादिसपक्षकर्तृषु मृत्पिण्डतत्कारणपरम्परा–तद्गृहीतृपुरुषगुणदोषादितल्लभ्यप्रयोजनविशेषरूपसर्वांशविषयकज्ञानाभावेन साध्यवैकल्यात् अनुमानस्यैव भंगात् । ननु कुलालादिष्विव सामान्यज्ञानादिमत्पुरुषसाधनेऽपि क्षित्यादिसर्वपदार्थपक्षकत्वात् अनुमानस्य सर्वविषयकज्ञानादिमत्पुरुषसाधकत्वं पक्षधर्मताबलात्=पक्षे यादृशसाध्यान्वयौचित्यं तत्सामर्थ्यात् भविष्यतीत्यत्राह पक्षेति । साध्यस्य पक्षस्पर्शः–पक्षसंबन्धरूपो यो विशेषः, तावदेव पक्षधर्मताबललभ्यम्; नाधिकम् । एकैककार्यं प्रत्यपि तदुपादानादिसामान्यज्ञानमेव सिध्येत्; न तु तदधिकम् । त्वदिष्टं तु अकर्मवश्यत्व–देहादिनिरपेक्षत्व–प्रयोजनानपेक्षत्व-नित्यज्ञानादिमत्त्व-कारणत्वानौपयिकानन्तवस्तुधर्मादिज्ञान-शक्त्यादिसाक्षात्कारवत्त्वम्। तदंशे पक्षधर्मताबलं नास्ति। घटपटादिकर्तृजीवान्यत्वमपि न सिध्येत्; कुतस्तद्वैलक्षण्यम् । ननु यागादिकर्तृत्वमात्रेण जीवानामदृष्टद्वारा जगत्कर्तृत्वे स्वीकृते लोकदृष्टकुलालादिवैलक्षण्यमापतति । तदपेक्षया सर्वोपकरणाद्युपयोक्तृत्वाकारवत्पुरुषानुमानं युक्तमिति चेत्—यावदंशोपयोक्तृतया ये सिद्धाः तैर्जीवैरेव सर्वनिर्वाहे सर्वकर्त्रेकपुरुषरूपविशेषस्याक्लृप्तस्य कल्पनं कुतः। अतस्त्वदभिमतो विशेषः कल्प्यत्वादुपेक्ष्यः । लोके ज्ञानशक्त्यादितारतम्यस्य दर्शनात् तदाधिक्यस्य विश्रान्तिस्थानमपि कश्चिज्जीव एव । जीवशक्तितारतम्यस्य सुकृताधीनताया दर्शनादिति ।

संप्रदानम्= क्रियमाणं वस्तु यदर्थं क्रियते स पुरुषः स्वात्मा अन्यो वा। किमत इति । तावता कार्यत्वहेतोर्घटादौ व्यभिचारवारणं कथमित्यर्थः। कार्यविशेषत्वस्य हेतुत्वे आह योगेति । आगमतः सिद्धाविति। योगसिद्धसर्वज्ञानामिति शेषः। तदनुविधेयः= शास्त्रैकगम्यः। तदनुविधेरिति स्यात्। योगिसिद्धयर्थवेदविमर्शानुसारादेवेति तदाऽर्थः। तार्णतादीति। तृणजत्वारणिजत्वादिरूपविशेषेत्यर्थः। सपक्षदृष्टान्यतेति। सपक्षे पक्षे च साध्यव्यक्तिभेदस्थल एवान्यत्वं संभाव्यम्। न तु

मात्रमपि नानुमेयनियतम्; जातिव्याप्यैर्जात्यनुमाने तदनभ्युपगमात्। अतो नात्र व्याप्यपक्षधर्मतया विवक्षितविशेषसिद्धिः॥ परिशेषात् तर्हि तत्सिद्धिरिति चेन्न; परिशेषानुमानमपि हि, क्षित्यादिकं, सामान्यतस्सिद्धं तत्कर्तारं वा पक्षीकृत्य स्यात्? आद्ये, किञ्चिज्ज्ञकर्तृकत्वनिषेधो वा स्वतस्सर्वज्ञकर्तृकत्वं वा साध्यम्। नाद्यः; तत्संभवस्य स्थापितत्वात्। न द्वितीयः। तद्धि कृत्स्नं कार्यं पक्षीकृत्य कार्यत्वलिङ्गेन वा साध्यम्, प्रकृतपक्षमात्रनिष्ठेन वा केनचित्? पूर्वत्र किमन्वयिपुरस्कारेण; व्यतिरेकिण एवास्य युष्माभिः पृथगुपन्यासात्। अत एव कार्यविशेषतोऽपि सर्वज्ञानुमाने तेनैवालम्; किमन्वयिना कार्यलिङ्गेन? क्षित्यादिकर्तृपक्षीकारेण जीवासंभावितविशेषसाधनं तु दुश्शकम्; तादृशविशेषासंभवेऽपि जीवानामेव तत्कर्तृत्वस्य दर्शितत्वात्। तेषामेव तद्विरुद्धविशेषानुमानायोगाच्च। ननु घटादिकर्तृव्यावृत्तो विशेषः क्षित्यादिकर्तॄणां स्वीकार्यः; तदुत्पत्त्यासन्नपूर्वकाले तेषां तदनुगुणबुद्ध्यादिरहितत्वात्। अतो दृष्टविपरीतवत्कल्प्यविशेषे किमीश्वरक्लृप्तिप्रद्वेषेणेत्यत्राह कल्प्य इति। अयं भावः—निश्वासादौ अधी-पूर्वयत्नेनापि कर्तृत्वं त्वयैष्टव्यम्, कालविप्रकृष्टबुद्ध्याऽपि कर्तृत्वम् आभिचारिकपरपीडादौ लोकवेदसिद्धम्। कुम्भाद्युत्पत्तावपि कुम्भकारादे चक्रचीवरदण्डसूत्रादिव्यापारहेतुभूतस्वदेहादिव्यापारे ह्यव्यवहितप्रवृत्त्यु-

वी— सपक्षस्यस्यैवानुमाने। अनभ्युपगमादिति। संस्थानरूपजातिपक्षे कथञ्चिद् भेदः स्यात्; न तु त्वत्पक्ष इति भावः। एकव्यक्त्यनुमानमपि बहुलमस्ति। ननु सामान्यतः कर्तृसिद्धौ, स न देवमनुष्यादि-रूप इतीतरबाधरूपपरिशेषात् विलक्षणस्य सिद्धिः; यथा शब्देन सामान्यतो द्रव्यसिद्धौ पृथिव्यादि-बाधात् सर्वव्यापिनो विलक्षणस्याऽऽकाशस्य सिद्धिरिति शङ्कते परिशेषात् तर्हीति। निरस्यति नेति। क्षित्यादिकं किञ्चिज्ज्ञकर्तृकं न भवतीति वा, स्वतस्सर्वज्ञकर्तृकमिति वा। तत्र किञ्चिज्ज्ञकर्तृकत्व-स्योपपादितत्वान्नाद्यः। न द्वितीयः, घटादिदृष्टान्तेनान्वयव्याप्तिमत्कार्यत्वरूपलिङ्गस्यात्रानुपयोगात्। आद्ये= क्षित्यादिपक्षकत्वपक्षे। नाद्यः= किञ्चिज्ज्ञकर्तृकत्वनिषेधो न शक्यः। तद्धि—सर्वज्ञकर्तृ-कत्वसाधनं हि। प्रकृतेति। कार्यविशेषत्वादिरूपलिङ्गेनेत्यर्थः। पूर्वत्र-कार्यत्वस्यैव लिङ्गत्वे। अन्व-यीति। प्रथमं क्षित्यादिकं सकर्तृकं कार्यत्वादिति घटादौ सपक्षे साध्यान्वयप्रदर्शनेन एकमनुमानम्, अथेदं परिशेषानुमानं क्षित्यादिकं सर्वज्ञकर्तृकं कार्यत्वादिति। अस्य घटादौ साध्याभावेन अन्वयित्वं न भवति। अस्यैव साधकत्वे आवश्यकत्वे च सति प्रथमानुमानं किमर्थमित्यर्थः। व्यभिचारादिदूषणं तु स्पष्टत्वान्नोक्तम्। 'पक्षमात्रनिष्ठेन हेतुना' इति पक्षं निरस्यति अत एवेति। अतएवेति पदस्या-न्वयार्थं नोत्तरः इति पूरणीयम्। स्थितभ्रष्टं वा। प्रथमविकल्पे द्वितीयकल्पे दूषणमाह क्षित्यादीति। अत्र पक्षे जीवासंभाविनविशेषत्वं साध्यम्। दर्शितत्वादिति। जीवासंभावितविशेषसाधने हेतुरप्रयोजकः इति भावः। क्षित्यादिकर्तृपदेन जीवग्रहणं वा तदन्यग्रहणं वा। अन्योऽ-प्रसिद्धः। जीवग्रहणे च जीवासंभावितधर्मानन्वयात् बाधश्चेत्याह तेषामेवेति। जीवासंभावित-विशेषः सार्वज्ञ्यादिः। इदमुपलक्षणम्—ईश्वरस्य क्षित्यादिकर्तृपदेन ग्रहणे आश्रयासिद्धिरिदानीम्। जीवग्रहणे बाधः। क्षित्यादिषु कतिपयांशकर्तृत्वस्य कतिपयजीवगतत्वसंभवस्यास्मदिष्टत्वात् क्षिति-कर्तरि जलकर्तृत्वनिषेधे सिद्धसाधनम्; तत्कर्तरि तदकर्तृत्वोक्तौ बाध इति। तदुत्पत्त्यासन्नपूर्वकाले इति। घटोत्पादककुलालः घटोत्पत्तिप्राक्क्षणे तदुपादानाद्यभिज्ञः; क्षित्यादिकर्ता जीवस्तु स्वकृतयागजन्यादृष्टमात्रेण तत्कर्तृत्वात् क्षित्युत्पत्त्यव्यवहितप्राक्काले उपादानादि न जानातीति विशेष इति। तदानीमज्ञानेऽपि कर्तृत्वं भवेत् निश्वासादाविवेत्याह अयं भाव इति॥ २०॥

पयोग , नान्यथा । समवायिनिष्पत्तौ वय दृष्टान्तानुरोधेन व्यवहितव्यापारादपि कर्तृत्व ब्रूम , भवद्भिस्त्वदृष्टचरमेव वैषम्य कल्प्यत इति । अथ स्यात्—कुम्भादिकृदसभाविनो गोपुरादिकर्तृषु बुद्धिशक्तिप्रकर्षो दृष्ट , मनुष्यासभावितश्च शकुन्त लतादिजन्त्वन्तरेषु , मनुष्येषु च विश्वामित्रादिषु , एव देवासुरसिद्धादिषु पितामहपर्यन्तेषु इति स्थिते बुद्धिशक्तिप्रकर्षतारतम्यस्य कचिद्विश्रमात्, यत्रासौ, स ईश्वरस्सेद्धुमर्हतीति । तत्राह सुकृतेति । कर्मभेदतन्त्रमेव तारतम्य त्वया निदर्शितम् । जन्मौषधिमन्त्रतप -समाधिजाश्च सर्वा सिद्धय तत्तददृष्टेष्वायतन्ते । एवसति अदृष्टाधीनधीशक्तिप्रकर्षतारतम्य कालभेदेन कर्मवश्येष्वेव केषुचित् भवतु , न विश्रमस्थानानन्तरं मृग्यमिति भाव ॥ इति कर्तृसार्वज्ञ्यभगः ॥२०॥

(166) कार्यं स्यात् कर्त्रभावेऽप्यवधिभिरितरैः कालवत् स ह्यसिद्धः(कालवन्नैव सिद्धः ?)
ते चादृष्टप्रयुक्तास्तदपि यतनवत् स्यात्तु यत्नानपेक्षम् ।
एकत्यागेऽन्यहेतुत्यजनमिति च न, ध्वंसवत् सावधित्वात्
तस्मात् हेतोरभावे न फलमिति गतिस्तद्विशेषे विशेषः ॥ २१ ॥

अथात्र परेष्ट विपक्षे बाध दूषयति कार्यमिति । एव हि मन्यते—कारणाभावे कार्याभाव उभयाभ्युपेत , कारणान्तराणि च कर्तुपहितमर्यादानि कथ कर्त्रभावे व्याप्रियेरन् ? अत कार्यस्य सांख्य सौगतचार्वाकवर्तन्या नित्यत्व(नित्यसत्त्व?)मसत्त्वमाकस्मिकत्व वा स्यादिति । तत्रेदमुत्तरम् कार्यमिति । अय प्रतिविधि —कारणाभावे कार्यं न स्यात् , न तु कारणविशेषाभावे , अन्यथा कचिद् दृष्टस्य कर्मकारकादेरभावेऽपि क्रियानुत्पत्तिप्रसङ्गात् । अत कर्त्रभावेऽपि कारणान्तरै कार्यसिद्ध्युपपत्तिरिति । ननु कालो यथा सर्वकार्यनिमित्तम्, तथेश्वरोऽपि , तत्परित्यागे समानन्याय कालोऽपि त्यज्यतामित्यत्राह कालवदिति । कालोऽप्युपाधिविशेषातिरिक्तो न वेति यथामतमस्तु । स तावत् लोकशास्त्रसिद्ध ,

श्री— एकोनविंशश्लोके, 'सत्क्रियाद्येऽपि सा स्यात्' इति क्षित्यादिक कर्तृनिरपेक्षमेव कारणान्तरमात्रात् भवत्विति पक्ष उपन्यस्त । अथ विशे जीव एव स्यात् कर्तेत्युक्तम् । तत्र कर्तृनिरपेक्षत्वमयुक्तमित्याक्षेप परिहरति कार्यमिति । अवधिर्द्विविध पूर्व उत्तरश्च । पूर्व कारणम् उत्तर कार्यम् । अत्र इतरैरवधिभिरित्यस्य कर्त्रतिरिक्तै कारणैरित्यर्थ । ननु कर्तुरभावेऽपि कार्य चेत्, कालस्याभावेऽपि कार्य स्यात् । अत कालोऽपि सामान्यकारण मा भूदिति शङ्काया वैषम्य दर्शयति कालवदिति । काल सर्वलोकप्रसिद्ध तद्वत् स =ईश्वर असिद्ध =न सिद्ध । कालवदिति व्यतिरेकदृष्टान्त । "कालवन्नैव सिद्ध " इति पाठ स्यात् । तदपि =अदृष्टमपि नाधिष्ठातृसापेक्षम् । पुरुषप्रयत्नस्य तथा ईश्वरप्रयत्नस्याधिष्ठातारमन्य विनैव कार्यकरत्वदर्शनात्, अदृष्टस्यापि तन्महिमस्वभावात् । एकेति । यदि कर्तार विना कार्य स्यात्—उपादानादिक विनापि स्यादिति न । एकाभावेऽप्यन्यस्य यथापेक्ष स्वीकारात् । अत एव ध्वंसो निमित्तमात्रसापेक्ष । हेतोरेवाभावे तु फलस्याभाव एव । कार्यविशेषे तत्र तत्र फलप्रकारणविशेषणाख्ये कस्यचिदभावेऽपि कार्याभाव एव । कर्तृसापेक्षाणि कार्याणि घटादीन्येव, न क्षित्यादीनि । अतस्तदपि तादृशविशेषाभाव एव ।

कर्तुपहितमर्यादानि=कर्तृजनितस्वकार्यनियमानि । अत =सर्वात्मना कारणाभावात् । नित्य सत्त्व सांख्येयम्, असत्त्व सौगतस्य, आकस्मिकत्व चार्वाकस्य । स तावदिति । सामान्यत कालत्वेन

कालप्रतीक्षया कर्षकादिप्रवृत्तेः ; काले कर्मचोदनात् ; शुभाशुभकालविभागे च कस्यचित् वेदाङ्गस्य व्यापारात् । ननु अस्वधीनामप्यचेतनानां चेतनानधिष्ठितत्वे प्रवृत्तिर्न स्यादित्यत्राह ते चेति । अदृष्टप्रेरितानामेव प्रवृत्त्युपपत्तौ किं तत्र प्रयत्नगवेषणेन ॥ अदृष्टस्याप्यचेतनस्य प्रवृत्तौ चेतनाधिष्ठानमपेक्षितमित्यत्राह तदपीति । ईश्वरप्रयत्नो ह्यचेतनोऽपि जगत्सृष्टौ न प्रयोजकप्रयत्नाधिष्ठित. । न च कुम्भारम्भ इव जीवप्रयत्न सहकृत.। अतस्तत्र व्याप्तिसङ्कोचावश्यम्भावादत्र अदृष्टेऽपि क्वचित् सङ्कोचः स्यात् ; अन्यथा गौरवात् ॥ ईश्वरप्रयत्नस्य नित्यत्वात् प्रयत्नानधिष्ठितत्वमिति चेन्न ; नित्यानामपि परमाण्वादीना तदपेक्षाङ्गीकारात् ॥ अन्यत्रान्वयव्यतिरेकनियमवतामन्यतमस्य त्यागे सर्वहेतुत्यागोऽपि स्यादिति शङ्कते एकेति । सर्वहेतुत्यागे कादाचित्कत्वविरोधं प्रकृते तदभावं चाभिप्रेत्याह नेति । प्रतिबन्दिं सूचयन् अन्यहेत्वपरित्यागे हेतुमाह ध्वंसवदिति । ध्वंसो ह्यभूत्वा भवन् हेतुमपेक्षमाण समवाय्यसमवायिनोरसंभवात् निमित्तमात्र निष्पाद्यस्त्वया स्वीकृत ; तथा पक्षेऽपि जीवातिरिक्तस्य कर्तु· कल्पयितुमशक्यत्वात् कथंचिज्जीवकर्तृकत्वं कर्तृनिरपेक्षत्वं वा स्वीक्रियतामिति भाव: । विपक्षे बाधकाभावं निगमयति तस्मादिति । हेत्वभावे कार्यं न स्यात् ; न तु कार्यमात्रानपेक्षितहेतुविशेषाभावे । तत्र तु कार्यविशेषनिवृत्तिर्वा— यथा कलमबीजाभावे कलमाङ्कुरस्य ; "हेत्वभावे फलाभावो विशेषस्तु विशेषवान्" इति न्यायात्—अथवा कारणान्तरैरेव कार्यसिद्धि , यथा प्रध्वंसस्येति विशेष. ॥ इति क्षित्यादौ कर्त्रावश्यकत्वभगः ॥ २१ ॥

(167) धर्मो यावत्सपक्षानुगत उपधिरित्यभ्युपेतस्त्वयाऽपि,
त्यागे तस्यात्र तद्वत् शिथिलितनियमाः क्वापि नोपाधयः स्युः ।
तादृग्धर्मात्ययाच्च प्रकरणसमता स्यात् , न चातिप्रसङ्गः
पक्षादिस्थित्यबाधान्निरुपधिकतया स्यात् परात्मानुमा तु ॥ २२ ॥

---

*सर्वा*– कार्यं स्यादिति। तद्विशेषे विशेष इत्येतत् तद्विशेषे–हेतुत्यागविशेषे–हेतुविशेषत्यागे, विशेषः= तद्विशेषः, फलाभावविशेषः फलविशेषाभाव इत्येवं तच्छब्दाध्याहारमभिप्रयन् आचष्टे–तत्र तु इति। कर्तृरूपकारणविशेषाभावेऽपि इतरकारणैः कार्यं सिद्ध्यतीति प्रतिपिपादयिषितार्थपरतया तच्छब्दान-ध्याहारेण व्याचष्टे—अथवा कारणान्तरैरिति । अत्र च तद्विशेषे—हेतुविशेषाभावे कारणान्तरैरेव कार्यं सिद्ध्यतीति, विशेष.—हेतुमात्राभावस्थलाद् विशेष इति व्याख्या ॥ २१ ॥

*भा*-काल इत्यर्थ.। प्रयोजकेति। ईश्वरप्रेरकेत्यर्थ.। अदृष्टेऽपि क्वचिदिति। अग्नेरूर्ध्वज्वलनमित्यादौ अनुपलभ्यमानकर्त्रादिकारणान्तरे अदृष्टविशेषे इत्यर्थ । अभूत्वा भवन्= पूर्वमस्थित्वा पश्चात् सन् । सर्वथा कारणत्यागे, स्यादेव, न स्यादेव वा, न तु कदाचित् स्यादिति भाव । हेत्वभाव इति (न्या. कु 5-4) श्लोकोत्तरार्धम् । तत्रैतदर्थस्यानुक्तत्वेऽपि तस्य प्रवृत्तेऽपि स्वयं समन्वयात् न्यायेनेत्युक्तम् । सर्वथा कारणाभावे कार्यमेव न भवति ; कारणविशेषाभावे तत्कार्यविशेष एव न भवतीति कार्यविशेषस्यैव कारणविशेषसापेक्षत्वम् । कर्ता च कारणविशेषः तत्सापेक्षकार्यं प्रत्येव कारणमिति । विशेषनिवृत्तिर्वेति प्रथमकल्पेन सह वक्तव्यं द्वितीयकल्पमाह अथवेति ॥ २१ ॥

कार्यसामान्ये कर्तु· कारणत्वास्वीकारात् कार्यत्वेन सकर्तृकत्वानुमानं न भवतीत्युक्तम् । अथ तत्र सोपाधिकत्वमप्याह धर्म इति । शरीरजन्यत्वमुपाधिः। यत्रयत्र सकर्तृकत्वम्, तत्र यावत्सु= सर्वेषु

सोपाधिकत्वमपि दर्शयितुमाह धर्म इति । यावत्सपक्षानुगतः—पक्षे विपक्षे चावर्तमानः सपक्षाभिव्याप्त इत्यर्थ । अस्ति चात्र तादृशो धर्मः शरीरजन्यत्वम् । यद्यप्यसौ पक्षीकृते शरीरगुणादि-

—————

(आ)— धर्मो यावदिति । सपक्षव्यापकत्वमात्रस्य उपाधिलक्षणत्वाभावात् यावत्सपक्षानुगतपदाभिप्रेतमाह—यावत्सपक्षेति । पक्षे विपक्षे च अवर्तमान इति । साधनाव्यापकत्वं साध्यसमव्याप्तत्वं च दर्शितम् । परिसंख्यान्यायात् सपक्षे सत्त्वप्रतिपादनेन पक्षविपक्षयोरसत्त्वं सूच्यत इति भावः ।

(श्री)— सपक्षेषु घटपटादिषु शरीरजन्यत्वमप्यस्ति । यावत्सपक्षेत्यत्रावधारणं विवक्षितम् अब्भक्ष इत्यादिवत् । अतः सपक्षातिरिक्तावृत्तित्वमपि लब्धम् । सपक्षातिरिक्तश्च पक्षो विपक्षश्च । तदवृत्तित्वोक्त्या उपाधिलक्षणनिवेश्यदलान्तरलाभात् तदनुक्तिप्रयुक्तन्यूनता श्लोकस्य नास्ति । पक्षावृत्तित्वोक्त्या साधनाव्यापकत्वदललाभः। विपक्षावृत्तित्वोक्त्या उपाधौ साध्यव्याप्यत्वस्यापि लाभः । तत् सर्वमस्ति शरीरजन्यत्वस्य। ननु,"अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः।तैर्दृष्टैरपि नैवेष्टा व्यापकांशावधारणा ॥" इति वदद्भिः मीमांसकैः यन्निष्ठा साध्यव्याप्तिर्हेतावारोप्यते, स उपाधिरित्यंगीकृतम् । यथा जपाकुसुमं स्फटिके स्वगतारुण्यारोपकत्वादुपाधिः, तद्वदिति। अत्र च शरीरजन्यत्वं न सकर्तृकत्वरूपसाध्यव्याप्यम्, शरीरजन्ये शरीरगते वाय्वादिवस्त्वन्तरसंयोगादौ सकर्तृकत्वाभावात्। अतः कथमुपाधित्वमित्यत्राह अभ्युपेतस्त्वयापीति । पक्षातिरिक्ते साध्यव्याप्यत्वमस्त्येव । किञ्च उपाधिशब्दप्रवृत्तये तदंशोक्तावपि साध्यव्यापकत्वमेव विवक्षितम्, न साध्यव्याप्यत्वम् दूषकत्वाविशेषादिति निष्कृष्टम्। अत एव श्लोके तस्य स्पष्टमनुक्तिरिति। त्यागे इति। एवं साध्यव्यापकत्वेऽपि साध्यसमव्याप्तत्वाभावेनोपाधित्वानिष्टौ, शिथिलितनियमाः—साध्यव्याप्यत्वरहितास्तत्रतत्रोपाधित्वेनेष्टाः उपाधयो न भवेयुः ; यथा 'धूमवान् वह्नेः' इत्यादौ आर्द्रेन्धनसंयोगादिः । एवं सोपाधिकत्वेन कार्यत्वहेतोः व्याप्यत्वासिद्धिरूपः [सत्प्रतिपक्षितत्वरूपश्च दोष उक्तः । सत्प्रतिपक्षविशेषमप्याह तादृगिति । क्षित्यादिकं न कर्तृजन्यं [शरीराजन्यत्वादिति पूर्वोक्तोपाध्यभाव एव प्रतिहेतुः प्रकरणसमः =साध्यसंदेहजनकः । ननु कार्यत्वेन सकर्तृकत्वानुमानायोगे रथगोपुरादिदर्शनेन विचित्रशक्तिमत्कर्त्रनुमानमपि भज्येतेत्यत्राह न चातिप्रसंग इति । तत्र रथगोपुरादौ पक्षे अकर्तृकत्वस्थितेर्बाधोऽस्ति, रथादिकर्तृ-तद्द्रष्टृपुरुषमूलं सकर्तृकत्वस्य शब्दादितो ग्रहणात् । न त्वत्रैवम् । तथाच तत्र कार्यत्वविशेषेण कर्त्रनुमानम् ; न तु कार्यत्वमात्रेणेति भावः । सर्वानुमानोच्छेदशंकयाऽन्योऽप्यर्थः- यदि पक्षावृत्तित्वमात्रेण शरीरजन्यत्वं गृहीत्वा तदभाव. प्रतिपक्षहेतुरित्युच्यते, तर्हि पक्षेतरत्वस्य पक्षावृत्तित्वात् तदभावेनापि साध्याभाव उन्नीयतामित्ययमतिसंगो न भवति। तथासति 'पर्वतो वह्निमान् धूमात्' इत्यादौ वह्न्यभावः साध्येत । वस्तुगत्या तत्र वह्नेः सत्त्वात् पक्षादौ तत्स्थितेर्बाधः स्यात्। एवमस्य पक्षस्य विपक्षत्वस्वीकारे पक्षसपक्षविपक्षविभागस्थितेर्बाध एव स्यात् । अतः पक्षेतरत्वं नोपाधिः । प्रकृते तु तथा बाधाभावात् शरीरजन्यत्वमुपाधिरिति वैषम्यम् । नन्वेवं कार्यत्वादिना परमात्मानुमानास्वीकारे, "प्रवृत्तिनिवृत्ती च प्रत्यगात्मनि दृष्टे परत्र लिङ्गम्" इति कणादोक्तरीत्या देहातिरिक्तात्मन्यायेन यत् देहान्तरे परात्मानुमानम्, तदपि न स्यादिति चेत्-परात्मविषयकानुमानं तु स्यात्; निरुपधिकत्वात्—तत्रोपाध्यभावात् । एकेनापि पुरुषेण देहातिरिक्तस्वस्यानुमानात् तद्गृहीतात्मापलापे तुल्यन्यायतया स्वात्मनोऽप्यसिद्ध्यापत्तेस्तदनुमायाः निरुपाधित्वमिति ॥

ननु शरीरजन्यत्वस्य न पक्षावृत्तित्वम्, क्षित्यादिवत् तनुभुवनादिकमिति शरीरतद्गुणादीनामपि पक्षत्वात्, शरीरगुणे च शरीरजन्यत्वाधद्यभावादित्यत्राह यद्यपीति । पक्षैकदेशवृत्तित्वेऽपि यावत्पक्षावर्तित्वेन साधनाव्यापकत्वमक्षतम् । उपाधिलक्षणे हि न पक्षावृत्तित्वं घटकम् । किंतु

विशेषे वर्तते, तथाऽपि साधनव्यापकत्वाभावात् स्वनिवृत्त्या साध्यनिवर्तनशक्तेश्चोपाधिः स्यादेव। तादृशस्य धर्मस्यानोपाधित्वानङ्गीकारेऽतिप्रसङ्गमाह **स्याग** इति। न हि निषिद्धत्वादीनामेतस्य च विशेषोऽस्ति; येन, 'त एव तत्रतत्रोपाधयः स्युः, नासावत्र' इति नियम्येत। एवं सोपाधिकत्वे मतभेदेन व्याप्यत्वासिद्धिः, व्यापकनिवृत्त्या व्याप्यनिवृत्तिर्वा स्यादिति भावः। शरीराजन्यत्वसमबलत्वाभिमाने प्रतिरोधमाह **तादृगिति**। ननु उपाधौ प्रतिसाधने च शरीरोपादानं व्यर्थम्; आत्मादिषु जन्यत्वनिवृत्तिमात्रेण सकर्तृकत्वनिवृत्तावुपपन्नायां विशिष्टनिवृत्त्यनपेक्षणात्। अतो निरुपाधिकं निष्प्रतिसाधनं च विश्वकृदनुमानम्॥ मैवम्; 'क्षित्यादिकं सकर्तृकम्' इत्यत्र न हि कर्तृसंबन्धमात्रं साध्यम्, सिद्धसाधनत्वात्; सन्ति हि त्वत्पक्षे कुम्भादिकर्तारश्चेतनाः। स्वरूपतः सर्वत्र संबद्धाश्च तैः क्षित्यादयः। अस्मत्पक्षेऽपि, 'अङ्गुलस्याष्टभागोऽपि न सोऽस्ति द्विजसत्तम। न सन्ति प्राणिनो यत्र कर्मबन्धनिबन्धनाः॥ दारुण्यग्निर्यथा तैलं तिले तद्वत् पुमानपि।' इत्यादिभिः सर्वमचेतनं पुण्यपापकर्तृचेतनमिश्रम्। अतः सकर्तृकमिति चेतनव्यापारपूर्वकत्वं साध्यम्। तत्र व्यापारपूर्वकत्वनिवृत्तिमात्रेण कादाचित्कत्वनिवृत्त्युपपत्तौ तद्विशेषणवैयर्थ्यं स्यात्॥ व्याप्त्युपयोगाभावेऽपि सिद्धसाधनत्वनिवृत्त्यै तदुपादानमिति चेत्–तर्हि शरीराजन्यत्वेऽप्यसिद्धिपरिहारे[ण ?] विशेषणं समर्थमाशङ्क्य एकामसिद्धिं परिहरतो द्वितीयापत्तेरित्युक्तं वितथं स्यात्।

---

[illegible]-मतभेदेनेति। उपाधेर्व्यभिचारोन्नायकत्वमतेन व्याप्यत्वासिद्धिः। बाधोन्नायकत्वमतेन व्यापक-

७१—साधनाव्यापकत्वमित्याह तथापीति। व्यभिचारोन्नायकत्ववत् बाधोन्नायकत्वमप्युपाधेरिष्टम्। तदप्यक्षतमित्याह स्वनिवृत्त्येति। व्यभिचारोन्नायकत्वं नाम उपाधिना हेतौ स्वाव्याप्यत्वमुखेन साध्याव्याप्यत्वानुमानम्। बाधोन्नायकत्वं नाम उपाधिना स्वाभावमुखेन पक्षे साध्याभावानुमानम्। निषिद्धत्वेति। 'अग्नीषोमीयहिंसा अधर्मः हिंसात्वात्, लौकिकहिंसावत्' इत्यत्र निषिद्धत्वमुपाधिः। समबलत्वेति। शरीराजन्यत्वं प्रतिहेतुः तस्य कार्यत्वहेत्वपेक्षया प्रबलत्वे निश्चिते तेन साध्यबाध एव। समबलत्वे—बलाबलानिर्धारणे सत्प्रतिपक्षता। प्रकरणसमशब्दः प्राच्यैः संदेहापादकत्वरूपवति सत्प्रतिपक्षे परिभाषितः। विशिष्टनिवृत्त्येति। शरीरनिरूपितत्वविशिष्टं यत् जन्यत्वं तदभावेत्यर्थः। अतः शरीरजन्यत्वाभावरूपहेतुघटकः शरीरांशो व्यर्थ इति विशिष्टहेतोर्व्याप्यत्वासिद्धिरिति भावः। कर्तृसंबन्धमात्रं=संयोगरूपम्। अष्टभागः=अष्टस्वेको भागः। दारुणि—अरण्यादौ यथा अग्निर्गूढः। अतः=सिद्धसाधनदोषात्। चेतनव्यापारेति। सकर्तृकत्वं कर्तृसंबन्धित्वम्। कर्ता च कृतिमान्। कृतिश्चेतनव्यापारः। घटविषयकृत्यग्रहणाय स्वविषयकृतीति वक्तव्यम्; स्वविषयकत्वं स्वसाधकत्वम्। एवञ्च स्वसाधकचेतनव्यापारवत्पुरुषसंबन्धित्वमित्यर्थे अधिकांशवैयर्थ्यात् चेतनव्यापारसाध्यत्वमेव साध्यमिति भावः। कादाचित्कत्वं=कार्यत्वम्। विशेषणवैयर्थ्यमिति। साध्यहेत्वोर्व्यतिरेकव्याप्तौ व्यापारपूर्वकत्वाभावमात्रस्य व्याप्यत्वसंभवे चेतनेत्यंशघटितस्य व्याप्यत्वं न भवतीत्यर्थः। व्यापारपूर्वकत्वमात्रे साध्ये अपेक्षितचेतनासिद्ध्या सिद्धसाधनमिति शंकते व्याप्तीति। दोषवारणाय दलनिवेशे सति न दोष इति चेत्—तर्हि शरीराजन्यत्वेत्यत्र शरीरांशत्यागे अजन्यत्वमात्रोक्तौ क्षित्यादौ स्वरूपासिद्धिरिति दोषपरिहारार्थमेव दलनिवेश इति तुल्यम्। एवं स्थिते स्वरूपासिद्धिपरिहारेण विशेषणं समर्थत्वेन=सार्थत्वेनाऽऽशंक्य यत् तार्किकेणोक्तम्, एकामसिद्धिं परिहरतो द्वितीयापत्तेरिति, तद् वितथम्=अपार्थम्। स्वरूपा-

ननु ज्ञानादिमत्त्वान् कर्ता; तत्पूर्वकत्वे साध्ये व्यापारगर्भतया न पृथग्व्यापारपदोपादानम्, येन विशेषणवैयर्थ्यापत्तिरिति चेन्न–अन्यतमनिवृत्तिमात्रेण कार्यत्वनिवृत्त्युपपत्तौ त्रिकोपादानवैयर्थ्यात्। अन्यतमसाधने त्वदिष्टमसाधितं स्यात्॥ शेषं शास्त्रतः सेत्स्यतीति चेन्न; कार्यत्वनिवृत्तेः हेतुपूर्वकत्वनिवृत्तिप्रयुक्ततया प्रयत्नादिनिवृत्तेरप्रयोजकत्वापातात्। तदिह तत्तद्विशेषव्यतिरेकस्यापि व्याप्तिनिवेशाङ्गीकारे शरीरजन्यत्वव्यतिरेकेऽपि न वैयर्थ्यं वाच्यमिति॥ नन्वेवमदृष्टचरसौधादिदर्शने सावयवत्वात् कार्यत्वमनुमाय तत एव तदुचितकर्तृमत्त्वानुमानं कुलालादिपूर्वकत्वनिवृत्त्या बाध्येत प्रतिरुध्येत वेति मन्दशङ्कां वारयति **न चेति।** व्याप्तितदभावाभ्यां विशेषादिति शेषः। यदि अव्यापकधर्मस्य निवर्त्यतया प्रत्यवस्थीयेत, तदा सर्वत्र तस्याः सुलभत्वात् क्वचिदप्यनुमाने पक्षो न स्यात्। साध्यवत्तया वर्ण्यमानो हि पक्षः। तदभावे तत्सापेक्षौ सपक्षविपक्षावपि न स्याताम्; ततोऽनुमानकथैवोत्सीदेत्। प्रस्तुतेऽपि नैवं प्रसङ्गः, तद्व्याप्तेः उक्तत्वादित्यभिप्रायेणाह **पक्षादीति।** यद्वा, शरीरजन्यत्वमुपाधिरित्यत्र पक्षव्यवच्छेदार्थं हि विशेषणम्; तथासति पक्षेतरत्वमप्युपाधिः स्यादित्यत्रोक्तं **न चेति।** नात्र पक्षान्यत्वेऽतिप्रसङ्गः; उपाधेः साध्यसमव्याप्तिस्वीकारपक्षे अन्वयव्यतिरेकिणि पक्षेतरत्वस्य साध्याव्याप्तत्वात्। केवलान्वयिनि साध्यसमव्याप्तत्वेऽपि पक्षेतरत्वान्यत्वेनाप्युपाधेर्विशेषणात्। अन्यथाऽनुमानोच्छेदप्रसङ्गात्। इयमेव साध्यव्यापित्वमात्रमुपाधेरपेक्षितमिति पक्षेऽपि गतिः। ईदृशं चेदं शरीरजन्यत्वमिहोपाधिः स्यादेवेति। पक्षेतरत्वे तु उपाधौ पूर्ववदेव पक्षादिव्यवस्था भज्येत, इह तु न तथेत्याह **पक्षादीति॥** ईश्वरानुमानाभावे तद्वत्

---

[1]—निवृत्तिरिति विभागः। 'नचातिप्रसङ्गः' इत्येतत् उपाधिफलभूतप्रतिरोधादिस्वीकारेऽतिप्रसङ्गशङ्कापरिहारपरतया व्याचष्टे नन्वेवमिति। व्यवहितनिर्दिष्टस्यापि विशिष्टोपाधेः प्रतिरोधादिमूलत्वेन प्रधानत्वात् तदुपाधित्वनिबन्धनातिप्रसङ्गशङ्कापरिहारार्थत्वमुचितमिति अन्यथा व्याचष्टे यद्वेति।

[2]–सिद्धिपरिहाराय शरीररूपविशेषणघटने व्याप्यत्वासिद्धिरूपासिद्ध्यन्तरापत्तिरिति किल तदर्थः। इदमिहापि तुल्यम्, सिद्धसाधनरूपदोषपरिहाराय चेतनेति विशेषणघटने व्याप्यत्वासिद्धिरूपदोष इति। चेतनव्यापारत्वेन ज्ञानेच्छाकृतयो न गृह्यन्ते, किं तु ज्ञानेच्छाकृतिमज्जन्यत्वमेव साध्यमिति शंकते नन्विति। अप्रयोजकतापातादिति। यदि प्रयत्नजन्यं न स्यात् कार्यत्वं न स्यादिति न शक्यं वक्तुम्, प्रयत्नस्याधिकस्य घटनात् तस्य वैयर्थ्यादिति भावः। ननु सामान्यस्य व्याप्यत्वे विशिष्टस्य व्याप्यत्वं सुतराम्। किञ्च जन्यत्वाभावापेक्षया प्रयत्नजन्यत्वाभावोऽन्यः; प्रतियोगितावच्छेदकभेदे अभावभेदस्याऽऽवश्यकत्वात्। अतः–'विशेषणरहितस्य तस्यैव व्याप्यत्वसंभवे विशिष्टस्य व्याप्यत्वमयुक्तम्; यथाऽग्निं प्रति नीलधूमस्य' इति प्रश्नस्य नात्र संबन्धः, विशिष्टस्य विशेषणरहितस्य चैक्याभावादित्यत्राह तदिहेति। अङ्गीकारे इत्यत्र अभावयोर्भिन्नत्वादिति हृद्गतम्। यद्यव्यापकधर्मस्येति। रथगोपुरादौ कुलालादिकर्तृनिषेधवत् विलक्षणकर्तुरपि निषेध एव; हेतुं प्रति अव्यापकत्वस्य तत्तत्कर्तृविशेषे सर्वत्र तुल्यत्वादिति प्रत्यवस्थानम्। अव्यापकधर्मस्य साध्यांशस्य निवर्त्यतामादाय प्रत्यवस्थानमयुक्तम्; 'पर्वतोऽग्निमान्' इत्यत्रापि स्थलान्तरस्थिताग्नेरिव एकैकाग्नेरपि विशेषतया तस्याः=पर्वतीयाग्नेर्निवर्त्यतायाः अपि प्रसंगात् अनुमानोच्छेदापत्तेः। समव्याप्तीति। साध्यसमव्याप्तत्वे सति साधनाव्यापकत्वमुपाधित्वमिति कश्चित् पक्षः। साध्यव्यापकत्वे सति साधनाव्यापकत्वमिति पक्षान्तरम्।

स्वेतरात्मानुमानमपि न स्यात्, स्वात्मसाध्येष्वेव व्याप्तिनियमप्रसक्तेरित्यत्राह **निरुपधिकतयेति**। यदि परशरीरस्थलिङ्गैः कर्तुर्भोक्तुश्चानुमाने स्वशरीरस्थतया स्वकर्तृकतया वा व्याप्तिरवच्छिद्येत, तदा हृदयविसंवादः; चेतनान्तरानुमानाभावे व्युत्पत्तिरेव न स्यात्; कुतः शिष्याचार्यवादिप्रतिवादिशत्रुमित्रादिसंव्यवहारः?

श्लो—न च स्वेनान्यदेहादेः अधिष्ठानादिसंभवः। सौभरिन्यायतस्तत्र प्रतिसन्धिप्रसङ्गतः॥

न च स्वान्यानुमानेऽपि विजातीयत्वकल्पना। निरुपाधिकता तत्र भवेत् अनुमितेस्ततः॥

तुशब्दः कल्पनागौरवनिवृत्त्यर्थः, उक्तबाधकतर्कसूचनार्थो वा। किंच—

श्लो—परदेहस्थलिङ्गानामन्यथासिद्धिकल्पने। स्वदेहेऽपि तथैवेति नैरात्म्यमवशिष्यते॥

आगमादात्मनां सिद्धावीश्वरस्य तु किं पुनः। परात्मनिश्चयाभावे स्वागमोऽपि न सेत्स्यति॥

**इत्यन्वय्यनुमानभंगः ॥ २२ ॥**

**(168) सर्वस्यावीतहेतोरपि च निरसनं द्रक्ष्यसि स्वप्रसङ्गे-**

**श्रुत्याऽत्र व्याप्तिसिद्धावलमनुमितिभिः; निष्फलः संप्लवोऽपि।**

**तस्मात् उच्छ्लोकभूमा स कथमनुमया विश्वकर्ता प्रसिध्येत्;**

**शास्त्रानुक्तत्वबाधद्वयपरिहृतये शास्त्रयोनित्वसूत्रम् ॥ २३ ॥**

---

*पूर्वं*—व्याप्तिनियमप्रसक्तेरिति। शरीरान्तरस्थगमनादिक्रिया चेतनाधिष्ठानपूर्विका वायूदकाद्यप्रेरितशरीरक्रियात्वात् अस्मच्छरीरस्थगमनादिक्रियावदिति परात्मानुमाने स्वशरीरस्थक्रियात्वं [स्वकर्तृकत्वं?] वोपाधिरिति नियतविषयत्वप्रसक्तेरित्यर्थः। हृदयविसंवादं विवृणोति चेतनान्तरानुमानाभावे इति। अनेन परात्मानुमानस्य अनुकूलतर्कसध्रीचीनतया उपाधेः साध्यव्यापकत्वाभावान्न क्षतिरिति दर्शितम्। शिष्याचार्यादिव्यवहारस्यान्यथासिद्धतया नानुकूलतर्कसद्भाव इत्याशङ्क्याह न च स्वेनेति। कल्पनागौरवलक्षणप्रतिकूलतर्कपराहतत्वात् ईश्वरानुमानस्य तत्र पक्षमात्रव्यावर्तकविशेषणवतोऽप्युपाधित्वं न्याय्यम्। परात्मानुमाने तु प्रतिकूलतर्काभावात् न तादृशस्योपाधित्वमित्यभिप्रायेणाह न च स्वान्येति। 'निरुपधिकतया' इत्यत्र विवक्षितात् विपक्षे बाधकतर्कात् अधिकविशेषप्रतिपादने साफल्यमस्तीति तुशब्दं कल्पनागौरवाभावपरतया व्याचष्टे तुशब्दः कल्पनेति। कल्पनागौरवस्य श्लोकानिर्दिष्टतया उक्तबाधकतर्कसूचने प्रतिपत्तिसौकर्यात्, बाधकाभावनिबन्धनसूचनादपि साधकसद्भावनिबन्धनवैषम्यसूचनस्य न्याय्यत्वाच्च, विपक्षे बाधकतर्कसूचनार्थतया व्याचष्टे उक्तबाधकेति। परदेहस्थलिङ्गानामन्यथासिद्ध्यसम्भवः पूर्वमुक्तः; इदानीमन्यथासिद्धिकल्पनेऽनिष्टमाह—परदेहस्थेति। स्वदेहस्थानामन्यथासिद्धत्वेऽपि कथं नैरात्म्यावशेषः, आगमादात्मनां सिद्धेरित्याशङ्क्याह—आगमादिति। एवमागमतः सिद्धिमङ्गीकृत्य दूषणमुक्तम्; परात्मनिश्चयाभावे परात्मसद्भावनिश्चायक आगमोऽपि न सिद्ध्येदित्याह—परात्मनिश्चयाभावे इति ॥२२॥

*श्री*— स्वशरीरस्थतयेति। परशरीरस्थक्रियां पक्षीकृत्य इयमात्माधीना प्रवृत्तित्वादित्यनुमाने स्वशरीरस्थत्वं वा स्वकर्तृकत्वं वोपाधिरित्युक्तो तादृशोपाध्यभावमुखेन परशरीरे आत्माभावसाधने स्वहृदयविसंवादः। अन्येनापि एतच्छरीरे आत्माभावसाधनसंभवात्। अतो बाधः स्वानुभवसिद्ध इत्यर्थः ॥२२॥

ईश्वरसाधकानि अन्वय्यनुमानानि निरस्तानि। केवलव्यतिरेक्यनुमानानि निरस्यन् तार्किकानुमानखण्डनमुपसंहरति सर्वस्येति श्लोकेन। 'कार्यं सर्वं सर्वज्ञकर्तृकं कादाचित्कत्वात् यन्नैवम्, तन्नैवम्, यथा आत्मादि' इत्यादि केवलव्यतिरेक्यनुमानम्। अयमेवावीतहेतुः। वीतः=विशेषेण इतः भूय-

अथ स्यात्—अन्वयिनि हेतौ यावत्सपक्षान्वयिधर्मसंभवेन सोपाधिकता शङ्क्येत । केवल-व्यतिरेकिणि तु सपक्षाभावात् न तच्छङ्केति । अत आह **सर्वस्येति** । **स्वप्रसङ्गे**—हेतुचिन्तावसरे । अयं भावः—व्यर्थविशेषणत्वमर्थान्तरत्वं च केवलव्यतिरेकिणां सर्वेषां द्योत्यते । तथाहि ; 'सर्वं कार्यं सर्ववित्कर्तृपूर्वकं कादाचित्कत्वात्' इत्यत्र व्यतिरेके कर्तृपूर्वकत्वनिवृत्त्यैव कादाचित्कत्वनिवृत्तौ उपपन्नायां किं **सर्वविद्विशेषणेन?** सिद्धसाधनत्वनिवृत्त्यै तद्ग्रह इति चेन्न ; शरीराजन्यत्वहेतौ असिद्धिपरिहारे विशेषणं समर्थमिति वदन्तं प्रति एकामसिद्धिं परिहरतो द्वितीयापत्तेरिति युष्मदुक्तस्यात्र दुर्वारत्वात् । तर्हि **कर्तृ**पदं हित्वा सर्ववित्पूर्वकमित्येतावदुक्तौ न वैयर्थ्यमिति चेत्, तथाऽपि वित्पूर्वकत्वनिवृत्त्या व्याप्तिसिद्धौ सर्वविशेषणवैयर्थ्यमेव । एवं नित्यज्ञानपूर्वकत्वादिनिर्देशेऽपि द्रष्टव्यम् । न च विशेषणेऽपि सिद्धसाधनतापरिहारः, सर्वेषां चेतनानां सर्वशब्दार्थवेदिनामसर्ववित्त्वायोगात् ; अन्यथा सर्ववित्साधन-स्यापि दुश्शकत्वात् । विशेषतः सर्वं न सर्वे विजानन्तीति चेन्न ; विशेषाणामपि **सर्वशब्दसंग्रहात्** । सर्वसाक्षात्कर्तृपूर्वकत्वं साधयाम इति चेन्न ; योगिभिरर्थान्तरतापातात् । नित्यसाक्षात्कारिपूर्वकत्वं

वी—स्वसाध्यवद्देशस्थितः अन्वयव्याप्तिमान् हेतुः। अवीतस्तद्भिन्नः अन्वयव्याप्तिरहितः व्यतिरेकव्याप्ति-मात्रवान्। सर्वस्यावीतहेतोः=ईश्वरसाधकस्यान्यविषयकस्य च सर्वस्य केवलव्यतिरेक्यनुमानस्य निरसनं बुद्धिसरे अनुमाननिरूपणावसरे द्रक्ष्यसि। अस्मत्सिद्धान्ते केवलव्यतिरेकीति अनुमानविभाग एव नास्तीति। विशिष्येश्वरसाधके केवलव्यतिरेकिणि दूषणमत्र क्रियते। सर्वज्ञकर्तृत्वं साध्यं सर्व-ज्ञस्यैवाप्रसिद्ध्या दुर्वचम्। श्रुत्या सर्वज्ञप्रसिद्ध्या व्यतिरेकव्याप्तिनिर्वाहे सिद्धविषयत्वात् अनुमानानि मा भूवन्। नन्वेकप्रमाणबोधितमपि प्रमाणान्तरेण बोध्यताम् ; प्रमाणसंप्लवोऽस्माभिरिष्यते। अनुमितमपि प्रत्यक्षीक्रियते। प्रत्यक्षदृष्टमप्यनुमीयते। तदुक्तम्, "प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः" इति। एवं, 'कथयन्तश्च मां नित्यम्' इति ज्ञातज्ञापनमप्यनुमन्यते इति चेत्—निष्फलः संप्लवोऽपि। तत्त्वबुभुत्सुगुरुशिष्यवादादौ नास्योपयोगः। एकप्रमाणज्ञापि-तादधिकमीषत् यत्र, तत्रैव संप्लवः सफलः। तस्मात् सर्वज्ञासिद्ध्या विश्वकर्ता उल्लोकभूमा= लोकं=सर्वं जीवमतिक्रान्तो भूमा–महिमा सर्वज्ञत्व–अशरीरत्वादिर्यस्य तादृशः अनुमानेन अन्वयिहेतुना वा केवलव्यतिरेकिना वा साधयितुं न शक्यत इति। अथ तार्किकानुमानदूषणफलमाह शास्त्रेति। 'शास्त्रयोनित्वात्' इति सूत्रं शास्त्रैकवेद्यः ईश्वर इति स्थापकम्। शास्त्रेण ब्रह्म नोच्यते, कर्मविधिमात्रपरत्वात् तस्य, सिद्धपराणामुपनिषदामनुमानसिद्धेश्वरानुवादरूपतया कर्मकाण्डशेष-त्वादिति शास्त्रानुक्तत्वशंका तत्र परिहृता। तथा बाधद्वयपरिहारार्थमपि शास्त्रगम्यत्वस्थापनम्। जगन्निमित्तकारणत्वेनानुमिते ईश्वरे नित्यशरीरवत्त्वजगदुपादानत्वादिधर्माणामयोगात् शास्त्रोक्त-तदंशबाध इति एको बाधः। न कदाचिदनीदृशं जगदिति जगतो नित्यत्वात् जगत्कर्तृतये-श्वरो न स्वीकर्तव्य इति बाधान्तरम्। एतदुभयमपौरुषेयवेदविरुद्धमत्र निराचिकीर्षितमिति ॥

ईश्वरसाधककेवलव्यतिरेक्यनुमानदूषणमात्रमत्र वक्तव्यमाह तथाहीति। नित्यज्ञानेति। ज्ञान-पूर्वकत्वाभावादेव कादाचित्कत्वव्यतिरेकः सुवच इति नित्येति व्यर्थमिति। विशेषणेऽपीति। सर्वेति विशेषणनिवेशेऽपीत्यर्थः। सर्वशब्दार्थवेदिनामिति। सर्वमिति शब्दस्यार्थं जानतामित्यर्थः। विशेषाणा-मपीति। सर्वशब्दो ह्यविशेषेण धर्मिणो धर्मान् धर्मधर्मिसंबन्धांश्च विशकलितरूपेण विशिष्टरूपेण च वक्तीत्यर्थः। योगिभिरिति। जीवान् आदायैव सकर्तृकत्वं निर्वहद्भिः योगिरूपजीवानां

साध्यमिति चेत्, एवमपि व्याप्तौ नित्यविशेषणवैयर्थ्यमेव। अन्यतो विशेषणसाफल्ये शरीराजन्यत्वेऽपि साफल्यं सिध्येदेव। 'वेदाः सर्वज्ञप्रणीताः वेदत्वात्' इत्यत्राप्येवमर्थान्तरत्वविशेषणवैयर्थ्ये बोद्धव्ये। प्रणीतत्वनिवृत्तिमात्रेण ज्ञप्रणीतत्वनिवृत्तिमात्रेण वा व्याप्तिग्रहोपपत्तेः। अपि च केवलव्यतिरेकिणः सपक्षे सति आभासत्वं संगिरध्वे। सन्ति चानन्तानि सर्वज्ञप्रणीतानि वेदेतरवाक्यानि भारतादिमध्यपातीनि, स्मृतितन्त्ररूपाणि, कल्पादिषु लोकवेदसंव्यवहारप्रवर्तनौपयिकानि च। न च तेषु वेदत्वम्, प्रसिद्धिविरोधात्। अवेदत्वेनैव महर्षिप्रभृतिभिर्व्यपदेशाच्च। अतस्तेषां न वेदत्वेन पक्षीकरणं शक्यम्। संग्राहकान्तरं च दुर्वचम्। जीवप्रणीतेतरवाक्यत्वम् ईश्वरप्रोक्तत्वं वा नान्यतः सिद्धम्। इत एव तत्साधने अन्योन्याश्रयः। तदिह तेषां पक्षीकारे तदभावे वा वेदत्वहेतुस्तेष्वसिध्यन् हेत्वाभासकक्ष्यां (भासत्वं) नातिक्रामेत्। एवं वक्ष्यमाणैश्च वेदनित्यत्वसाधकैर्बाधोऽप्यत्र मन्तव्यः। एवं, 'घटः सर्वज्ञकर्तृकः घटत्वात्', 'यजुः सर्वज्ञप्रणीतं यजुष्ट्वात्' इत्यादिविशेषपक्षीकारेण प्रयोगाश्च निरस्ता वेदितव्याः।

ननु कार्याणां सर्वेषां सर्वज्ञपूर्वकत्वव्याप्तिः श्रुत्या सिध्यति। अविदितनिगमवृत्तान्तानां, नालिकेरद्वीपवासिनामिव वह्नौ, महेश्वरे मा भूत् अनुमानम्, अन्येषां तु तत्प्रवृत्तिसंभव इत्यत्राह **श्रुत्येति**। व्याप्तिग्राहकेणैव साध्यसिद्धौ किमत्रानुमितिसाध्यमित्यर्थः। संप्लववादे, सिद्धेऽपि मानान्तरस्य प्रवृत्तिः स्यादित्यत्राह **निष्फल** इति। मानान्तरसिद्धे वस्तुनि आकारान्तरसमर्पणे हि संप्लवः शोभेत। अन्यथा सिद्धसाधनत्वं वा, सर्वत्र सिद्धसाधनत्वदोषोच्छेदो वा स्यादिति भावः। अत्र, 'कार्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः। वाक्यात् संख्याविशेषाच्च साध्यो विश्वविदव्ययः॥' इति **न्यायाचार्य**संगृहीतानां सर्वेषां हेतूनां **स्थालीपुलाक**न्यायेन निरस्तप्रायत्वं निगमनव्याजेन नियमयति **तस्मादिति**।

नन्वनिरस्तेऽपि जगत्कर्तुरनुमाने परतत्त्वपरमहितपरमपुरुषार्थेषु शारीरकं निष्प्रतिघातम्। अत किमत्र तन्निरासप्रयासेनेत्यत्राह **शास्त्रेति**। यदि जगत्कर्तुरनुमानं न प्रतिषिध्येत, तदा मतान्तरप्रामाण्यव्यवसायिनः कस्यचित्, 'इदं सर्वमसृजत', 'यतो वा इमानि भूतानि जायन्ते' इत्यादिवाक्यानामनुमानसिद्धानुवादित्वं मन्यमानस्य जगत्कर्तृत्वादिवाक्यानामनुमानविरुद्धोपस्थापकत्वे मूलघातित्वात्, तत्सिद्धमात्रबोधने

---

पू॰— अनुमानविरुद्धोपस्थापकत्वे मूलघातित्वादिति। अनुमानविरुद्धनिमित्तोपादानैक्य-वियदादि-

टी॰— ग्रहणेन सिद्धसाधनकथनसंभवादिति। नित्यसाक्षात्कारीत्यत्र सर्वत्यनिवेशो वैयर्थ्यात्। सिध्येदेवेति। तथाच तेनाकर्तृकत्वसाधनात् सत्प्रतिपक्षत्वम्। तथा सर्वं शरीरजन्यं कार्यत्वादिति तार्किकानिष्टापत्तिश्च। प्रणीतत्वनिवृत्तिमात्रेणेति। आत्मकालादौ प्रणीतत्वाभावात् वेदत्वाभावाच्च। आभासत्वमिति। सर्वसपक्षविपक्षव्यावृत्तोऽसाधारण इति असाधारणहेत्वाभासत्वमित्यर्थः। भारतादिमध्यपातीनि श्रीकृष्णश्रीराममत्स्यवराहादिरूपभगवद्वाक्यानि। तदन्यान्यप्याह स्मृतीति। विष्णुस्मृतिः पञ्चरात्रञ्चेत्यर्थः। संग्राहकान्तरमाशंक्य निराकरोति जीवप्रणीतेति। तेषां पक्षीकारे तत्र वेदत्वरूपहेत्वभावात् भागासिद्धिरूपस्वरूपासिद्धिः; तदभावे पूर्वोक्तमसाधारणहेत्वाभासत्वम्। अन्यान् केवलव्यतिरेकिणो दूषयति एवं घट इति।

मतान्तरेति। तार्किकमतेत्यर्थः। मूलघातित्वात्=उपजीव्यनुमानप्रमाणविरोधित्वापत्त्या।

नैरपेक्ष्यात्, सिद्धांशेऽनुमानानाघ्रातासंभवाच्च सिद्धपरवाक्यविमर्शो न कार्य इति मोह स्यात्। अत तदनुजिघृक्षयाऽनुमानं निरसनीयम्। किञ्च विश्वकर्तुरनुमेयत्वं मन्यमानस्य तत्तद्धादिकल्पितैर्हेतुभि बाधद्वयमापद्येत, 'ब्रह्मण आनन्द' इत्याद्युक्तप्रामाणिकत्यागात्, अप्रामाणिकायथापूर्वेदकल्पनस्वीकाराच्च। यद्वा प्रागुक्ताभ्यां प्रतिप्रमाणतर्काभ्यां बाधद्वयम्। अथवा अनुमिते सोपाधिकत्वादिकारणदोषात् साक्षात् अकर्तृकत्वानुमानेन साध्यप्रतिषेधाच्च। अपि वा विश्वकर्त्रनुमाने प्रवर्तमानं स्वयं तावत् नित्यप्रयत्नं समानन्यायतया स्वोपस्थापितानुमानेन नित्यशरीरादिरहितत्वं चोपस्थाप्य आगमविषयमपहरेत्।

श्लो—तस्मादेवंविधानेकबाधशङ्कापनुत्तये। नित्यनिर्दोषशास्त्रैकवेद्यत्वमिह सूत्रि(चि)तम्॥

शब्दप्रमाणके तस्मिन् यथाशब्दं व्यवस्थिति। सैरनतिलङ्घ्येति न शङ्कातङ्कसंभव॥

नन्वीश्वरानुमानदूषणे, 'विद्याचोरो गुरुद्रोही वेदेश्वरविदूषक। त एते बहुपाप्मान सद्यो दण्ड्या इति श्रुति॥' इति शास्त्रविरोध स्यादिति चेन्न, अनुमानदूषणेऽप्यागमात् तत्सिद्धे। अन्यथा

---

सर्वा—सृष्ट्युपस्थापकत्वे स्वमूलभूतानुमानघातित्वादित्यर्थ। तत्सिद्धमात्रबोधन इति। अनुमान सिद्धमात्रबोधन इत्यर्थ। अनुमानाविरुद्धांशप्रतिपादनेन साफल्यात् तद्वाक्यविमर्शो कार्य इत्याशङ्क्याह—सिद्धांशेऽनुमानानाघ्रातासम्भवाच्चेति। बाधद्वयपरिहृतय इत्येतत् प्रामाणिकत्यागाप्रामाणिकस्वीकाररूपबाधनीयपरिहाररूपतया व्याचष्टे—ब्रह्मण आनन्द इत्यादीति। अस्मिन् प्रकरणेऽनिर्दिष्टत्वात् तत्र प्रतिपत्तिसौकर्यं नास्तीति अन्यथा व्याचष्टे—यद्वेति। तर्कस्य प्रमाणानुग्राहकतया पृथग् बाधकत्वाभावात् बाधद्वित्वमनुचितमित्यन्यथा व्याचष्टे—अथवेति। सोपाधिकत्वादिरूपात् हेतुदोषादनुमितेरेको बाध, साक्षात् अकर्तृकत्वानुमानेन साध्यप्रतिषेधाच्चापर इति बाधद्वयम्। तत्परिहारार्थमीश्वरस्यानुमानप्रमाणगम्यत्वापादनसमर्थनमिति भाव। अनुमितेर्बाधद्वयपरिहारार्थत्वादप्यागमबाधपरिहारार्थत्वं शास्त्रारम्भसमर्थनसूत्रस्योचितमिति अन्यथा व्याचष्टे—अपि वा विश्वेति। 'बहु स्या तत्तेजोऽसृजत' इत्याद्यनित्यप्रयत्नप्रतिपादकागमानां नित्यप्रयत्नोपस्थापकेन जगत्कर्त्रनुमानेन एको बाध, लोकदृष्टसाहचर्यमूलतासाम्यात् जगत्कर्त्रनुमानोपस्थापितेन सावयवत्वादनित्यमित्यनुमानेन नित्यशरीरप्रतिपादकागमानां बाधोऽपर, एवमुभयविधागमबाधपरिहारार्थं शास्त्रयोनिसूत्रेऽनुमाननिराकरणमित्यर्थ। एवंविधानेकबाधशङ्कापनुत्तय इति। अनेन व्याख्याविकल्पानां विषयव्याप्त्यर्थत्वं च सूचितम्।

श्री—मोह स्यादिति। एवं शास्त्रानुक्तत्वशङ्कोपपादनम्। अथ बाधद्वयमाह किञ्चेति। आनन्द इति। तार्किकैर्नित्यज्ञानेच्छाकृतिव्यतिरिक्तविशेषगुणानङ्गीकारात्। नित्य आनन्देऽनुमानायोगात्, अनित्यत्वानन्दे ईश्वरत्वभङ्गादिति भाव। द्वितीयो बाध प्रतिकल्पमीश्वरकृतविभिन्नवेदस्वीकारेण वेदापौरुषेयत्वादिबाध। आनन्दपरमादिबाधस्यैव प्रमाणमुखेन प्रतितर्कण च निरूपणात् बाधद्वयत्वम्। अथवेति। अनुमानस्वीकारे हि बाधद्वयेनेश्वरापलाप। तदनवकाशायानुमानास्वीकार इति भाव। बाधद्वयं कारणे परामर्शे दोषोद्भावनम्, कार्येऽनुमितौ बाधोपपादनञ्चेति। अपि वेति। नित्यप्रयत्नेन अनित्यगुणबाधेन नित्यशरीरबाधेन च सकलविग्रहवत्त्वादिवचनबाध प्राप्त परिहर्तुमित्यर्थ।

अनुमानदूषणेऽपीति। ईश्वरस्याभ्युपगतत्वान्नेश्वरदूषणम्, किं त्वनुमानमात्रदूषणमिति भाव। ईश्वरदूषणं हि नाम ईश्वरस्यापलाप, ईश्वरे विद्यमानगुणापलाप, अविद्यमानदोषारोपणम्,

असदादिप्रत्यक्षवेद्यत्वनिषेधेन तथापि तद्रूपकत्वप्रसङ्गः ॥ 'आगमेनानुमानेन ध्यानाभ्यासरसेन(वशेन) च । त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम् ॥' इत्याप्तोक्तिः कथम् ? इत्थम् । श्रवणमननध्यानानां योगहेतुत्वस्य विवक्षितत्वात् मननं चात्रानुग्राहकयुक्तिभिः स्थिरीकरणम् । तदेवात्र श्रवणानन्तरभावितया **अनुमान**शब्देन *महीतुमुचितम् ; अनुग्राहकयुक्तय एव वा, 'यस्तर्केणानुसन्धत्ते' इति स्मरणात्* । तर्कानुमानयोरदूरविप्रकर्षात् समाख्याविपर्यासश्च दृष्ट इति ॥ **इति ईश्वरानुमानभङ्गः ॥ २३ ॥**

**(169) प्राज्ञाधिष्ठानशून्यं न तु परिणमितुं शक्तमव्यक्ततत्त्वं**
**वास्यादौ व्याप्तिसिद्धेरिति यदभिहितं सांख्यसिद्धान्तभङ्गे ।**
**सोऽपि प्राज्ञव्युदासेऽप्यनुमितिशरणात् प्रत्युपात्तः प्रसङ्गः ;**
**नेष्टे तत्सिद्ध्यसिद्ध्योरनुमितिरिति खल्वाशयः सूत्रकर्तुः ॥ २४ ॥**

तथाऽपि सांख्याधिकरणविरोधः स्यात् । तत्र हि परोक्तानां पक्षदृष्टान्तभूतानामचेतनानां संप्रतिपन्नवत् प्राज्ञाधिष्ठितत्वं **सूत्रभाष्याभ्या** साध्यते । अतः शास्त्रयोनित्वमूलमन्यपरं नेतव्यमिति शङ्कायां तावद्विरुद्धोक्तिमनुवदति **प्राज्ञे**ति । तात्पर्यवृत्त्या विरोधं शमयति **सोऽपी**ति । तात्पर्यभेदं विवृणोति **ने**ति । प्राज्ञानधिष्ठितत्वमनुमातुं न शक्यमिति सांख्याधिकरणतात्पर्यम् । शास्त्रयोन्यधिकरणस्य तु अधिष्ठितत्वं

---

*सर्वा*— अनुमानशब्दस्य *मननपरत्वे रूढिपरित्यागः स्यादिति रूढ्यपरित्यागेन व्याचष्टे*—अनुग्राहकयुक्तयो एव वेति । तत्रापि रूढिपरित्यागमाशङ्क्याह—तर्कानुमानयोरिति ॥ २३ ॥

*श्री*— मद्विभूतित्वापलापश्च । योगमुत्तममिति । ध्यानाभ्यासस्यापि योगत्वात्, तद्वारणायोत्तममिति। तेन समाधिग्रहणम् । ध्यानाभ्यासरसशब्दः ध्यानोपयोगि-आलम्बनसंशीलनपरो वा । अदूरविप्रकर्षादिति । न्यायपरिशुद्धावेतद्विस्तरः । तार्किकानुमानदूषणफलविस्तरश्च न्यायसिद्धाञ्जने ॥ २३ ॥

रचनानुपपत्तेश्चेति सांख्याधिकरणस्य शास्त्रयोन्यधिकरणस्य च मिथो विरोधमाशंक्य परिहरति प्राज्ञेति । न तु इति तुशब्दः सांख्यमतहेयत्वपरः । अव्यक्तं प्राज्ञाधिष्ठितम् अचेतनत्वे सति परिणामित्वात् दार्वादिवत् । व्यापारवत्त्वादिति वा हेतुः । वासीप्रभृतिकमपि तदा दृष्टान्तः इति तत्रोक्तम्, लोके चेतनानन्वये कार्याभावं चेतनान्वये प्रवृत्तिश्चोपलभ्य । एवं तत्र प्राज्ञकर्तृकत्वमिष्टम्, *शास्त्रयोन्यधिकरणे तु प्राज्ञकर्तृकत्वं निरस्तमिति विरोधः । तत्राह सोऽपीति । सोऽपि* प्रसंगः—यदि प्राज्ञाधिष्ठितं न स्यात्, तर्हि न परिणमेत्, न प्रवर्तेतेति प्रतितर्कः प्राज्ञव्युदासेऽप्यनुमितिशरणान्= अनुमानेन प्राज्ञानधिष्ठितत्वसाधकान् प्रति उपात्तः । यथाऽत्राधिकरणे प्राज्ञाधिष्ठितत्वसाधकमनुमानं दूषितम्, तथा तत्र प्राज्ञानधिष्ठितत्वसाधकमनुमानं दूषितम् । तथाच प्राज्ञस्य साधनेऽपि न प्रभवति अनुमानम्, बाधनेऽपीत्युक्तं भवति । पक्षदृष्टान्तेति । पक्षः क्षित्यादि प्रपञ्चः । दृष्टान्तः पयोम्बुवच्चेदित्यादिसूत्रदर्शितः परोक्तः । अन्यपरम् वेदवक्तृत्वपरम् । अत्रेदं बोध्यम्—सर्वज्ञसर्वशक्तिपुरुषधौरेयसापेक्षत्वानुमानमत्र दूषितम्, अकर्तृकमपि कार्यं भवेत्, *सकर्तृकत्वेप्यल्पज्ञानशक्त्यनेकजीवकर्तृकमपि भवेत् । अतोऽन्यथाऽपि सिद्धत्वात् न पुरुषधौरेयेण* सह व्याप्तिरिति अत्रोक्तं भवति । सांख्याधिकरणे तु लोके कार्याणां प्रायः सकर्तृकत्वदर्शनात् अत्र कर्त्रनुपलम्भमात्रेण अकर्तृकमेवेति निश्चेतुं न शक्यम्। तेन च कर्ता निर्विकारसांख्येष्टपुरुषविलक्षणेन भाव्यम् । स सर्वज्ञः सर्वशक्तिर्वा स्यात् अल्पज्ञानशक्तिकानेकपुरुषसंघो वेत्येतावदुक्तम् । अतोऽनुप-

नानुमातुं शक्यमिति। अतः साधकबाधकाभावे शास्त्रं निरङ्कुशप्रसरमिति सूत्रकाराभिप्राय एव भाष्ये दर्शित इति ॥ इति शास्त्रयोन्यधिकरणसांख्याधिकरणविरोधपरिहारः ॥ २४ ॥

(170) अस्यैवाचिन्त्यशक्तेः अखिलजनयितुः स्यादुपादानभावः
सूक्ष्माव्यक्तादिदेहः परिणमति यतोऽनेकधा स्थूलवृत्त्या ।
निष्कृष्टेऽस्मिन् शरीरिण्यमलगुणगणालङ्कृतानन्दरूपे
संपद्यन्ते समस्ताः समुचितगतयो निर्विकारादिवादाः ॥ २५ ॥

श्रुतिसिद्धस्य विश्वकर्तुः श्रौतमुपादानत्वमपि प्रस्तौति अस्येति । अखिलजनयितुरस्यैवेति विरोधशङ्कासूचनम् । अचिन्त्यशक्तेरिति परिहारनिदानगर्भम् । विकारापुरुषार्थनिषेधकशास्त्रविरोध शान्त्यै सर्वोपादानत्वं बाल्ययुवपरिणतिवत् सद्वारकमित्याह सूक्ष्मेति । सूक्ष्मस्थूलत्वोक्तिः हेतुकार्य-

---

प्र॰— विरोधशङ्कासूचनमिति । एकस्यैव निमित्तत्वोपादानत्वविरोधशङ्कासूचनमित्यर्थः । परिहारनिदानगर्भमिति । मृत्पिण्डकुलालादिषु अशक्तिनिबन्धनं एकस्य निमित्तत्वोपादानत्वासम्भवः । इह तु सर्वशक्तेर्ब्रह्मण उभयं सम्भवतीति विरोधपरिहारहेत्वभिप्रायमित्यर्थः ॥ २५ ॥

वी— लम्भमात्रेण अकर्तृकत्वानुमानं प्रधानस्याब्रह्मात्मकत्वसाधनं न भवतीति विवक्षितमिति सांख्येष्टः सर्वचेतनव्युदासो वा तार्किकेष्टः सर्वज्ञैकपुरुषस्वीकारो वा न शक्य इति न कश्चिद् विरोधः । तथा चाव्यक्तं परं ब्रह्म साधनं दूषणं वा नार्हति । एवञ्च, 'असंनिकृष्टवाचा हि द्वयमत्र जिज्ञासितम् । तादृरूप्येण परिच्छित्तिः तद्विपर्ययतोऽपि वा ॥' इत्युक्तरीत्या ब्रह्मविषये शास्त्रं सम्यक् प्रवर्तते । मानान्तरेणासिद्धत्वात् अबाधितत्वाच्चेति सूत्रकारनिष्कर्षः ॥ २४ ॥

ईश्वरस्यानुमानतः सिद्धौ उपादानत्वस्य दुर्वचत्वं स्यादिति प्रथममनुमानप्रवृत्तिं निरस्य शास्त्रैकवेद्यतया यथाशास्त्रमुपादानत्वमप्यस्तीत्याह अस्येति । अस्य=अचेतनाधिष्ठातृत्वेनोक्तस्य अत एवाखिलस्य कार्यस्य जनयितुः—सृष्टुर्निमित्तकारणस्याचिन्त्यानेकशक्तिकत्वात् उपादानकारणत्वमप्यस्ति । तर्हि सविकारः स्यादिति चेत्—किमादाय सविकारत्वापादनम्? किं स्थूलाचेतनप्रपञ्चगतान् परिणामान् आदाय, किं वा जीवगतान् ज्ञानसंकोचरागद्वेषादिदुरवस्था आदाय, आहो ईश्वरगतान् तत्तन्नियमनधर्मान् आदाय। नान्त्यः, तस्य हेयत्वाभावात्, न प्रथमद्वितीयौ; चेतनाचेतनयोस्तं प्रति देहतया कारणावस्थायां कार्यावस्थायाञ्च तेषां विकाराणां चेतनाचेतनरूपसूक्ष्मस्थूलदेहगततया देहिनि परमात्मनि तदभावात्। सूक्ष्माव्यक्तादीति आदिपदेन जीवग्रहणम् तदुभयशरीरकः परमात्मा स्थूलतदुभयशरीरकतयैव परिणमति, न तु स्वरूपतः । अनेकधेति वस्तुस्थितिकथनम्। न तस्य दोषपरिहारोपयोगित्वम्। 'निष्कलं निष्क्रियं शान्तं निरञ्जनम्', 'अविकाराय शुद्धाय' इत्याद्युक्तधर्मास्तु निष्कृष्टे=विशेष्यभूते परमात्मनि । अमलम्—अखिलहेयप्रत्यनीकम् गुणगणालंकृतञ्च आनन्दस्वरूपं यस्य तस्मिन् समुचितगतयः इति । परेषां पक्षे निर्विकारत्वादिकं सर्वकालावच्छेदेन सर्वप्रदेशावच्छेदेन वक्तुं न शक्यत इति तेषां वादानां प्रतिपादनशक्तिः तत्रतत्र कुण्ठितगतिर्भवति। न तथाऽस्माकमिति भावः। विकारापुरुषार्थेति । विकाराः महत्त्वाहंकारत्वादयो देवत्वमनुष्यत्वादयो बालत्वयुवत्वादय इत्येवम् । अपुरुषार्थाः चेतनगताः ज्ञानसंकोचसुखदुःखभ्रमरागद्वेषादयः। तर्हि महदाद्यवस्थाश्रयत्वमचेतनस्यैवेति ब्रह्मण्युपादानत्वमुपादेयत्वञ्च कथमित्यत्राह बाल्ययुवपरिणतिवत् सद्वारकमिति । 'बालो युवा भवति' इत्यत्र शरीरस्यैव जीवस्यापि

भावघटनार्था । अनेकधेत्युक्त्या, 'तम एकीभवति' इत्यादिप्रसिद्धप्राच्यावस्थातो वैषम्यं व्यज्यते । उपादानतया विकाराद्याश्रयस्य कथं तदभावोपदेश इत्यत्राह **निष्कृष्ट** इति ॥

**इति निर्विकारस्याप्युपादानत्वम् ॥ २५ ॥**

**(171) कर्तोपादानमेव स्वसुखमुखगुणे स्वप्रयत्नप्रसूते**
**संयोगं स्वस्य मूर्तैः स्वयमुपजनयन् ईश्वरोऽप्येवमिष्टः ।**
**सर्वोपादानभावस्तत इह घटते सर्वकर्तर्यमुष्मिन्**
**सर्वश्रुत्यैकरस्यप्रणयिभिरुचितं द्वारमत्राभ्युपेतम् ॥ २६ ॥**

ननु यत् यस्य निमित्तं, न तत् तस्योपादानमिति स्थिते साक्षात् सद्वारकं वा कथमुपादानत्वमित्यत्र, परप्रक्रिययैव विरोधं परिहरति **कर्तेति** । जीवस्तावत् तैस्तैरुपायैः स्वसुखादीन् उत्पादयति, तेषां समवायिकारणं च भवतीति मन्यसे । तावदेव च निमित्तोपादानत्वम् । ईश्वरेऽपि तदुभयं कश्चिदङ्गीकरोतीत्याह **संयोगमिति** । न चात्रोपादानत्वं भाक्तम्, विपरिवर्तस्य सुवचत्वात् । अतः प्रकृत्यधिकरणसाधितं न प्रतिक्षेप्तुं शक्यमित्याह **सर्वेति** । तर्हि, 'सोऽकामयत', 'तदात्मानं स्वयमकुरुत' इत्यादिकं स्वरूपपरिणामवादिब्रह्मदत्तभास्करादिमतभेदैरव्यवहितमेव(?) किं न निरुह्यत इत्यत्राह **सर्वश्रुतीति** ।

---

*प्र०*— लोके सर्वत्र निमित्तोपादानयोर्भेदे दृश्यमानेऽस्याशक्त्युपाधिप्रयुक्तत्वकथनं निर्मूलमिति शङ्कापरिहारपरतया उत्तरश्लोकमवतारयति—ननु यद् यस्य निमित्तमिति ॥ २६ ॥

*श्री*— उपादानोपादेयभावः परीक्षकलोकसंमतः । जीवे तत्रावर्तमाने बालशरीरे युवत्वासंभवात् । अतो युवत्वावस्थापन्नदेहं प्रति बालत्वावस्थापन्नदेहस्योपादानत्ववत् स्वाश्रयाधिष्ठातृत्वसंबन्धेन युवत्वविशिष्टजीवं प्रति तेनैव परम्परासंबन्धेन बालत्वविशिष्टो जीव उपादानमित्येष्टव्यम् । तद्वदेव परमात्मनस्तत्र संबन्धाभावे तत्तदवस्थोत्पत्तेरसंभवस्य प्रामाणिकत्वादयं तत्र कारणमिति स्वाश्रयाधिष्ठातृजीवाधिष्ठातृत्वसंबन्धेन युवत्वविशिष्टं प्रति तेन संबन्धेन बालत्वविशिष्टः कारणमित्यपीष्यते । एवं सद्वारकमवस्थाश्रय इति उपादेयत्वमुपादानत्वञ्च । तम एकी भवतीति । परमात्मातिरिक्तमपि तमोरूपप्रकृतिद्रव्यमविभक्तसर्वनामरूपं भवतीत्यर्थः । अनेकधाभावश्च (बहुभवनं) विभक्तनामरूपता ॥ २५ ॥

निमित्तकारणं कर्ता कथमुपादानकारणमिति तार्किकाः । तत्राचिन्त्यशक्तौ शास्त्रैकवेद्ये उभयं घटत इति समाधानमुदितमासीत् । तैरपि तदुभयमेकत्र स्वीकृतमिति प्रदर्श्य तन्नियमं निरस्यति **कर्तेति** । कार्योत्पत्त्यनुकूलकृत्याश्रयत्वं कर्तृत्वम्, कार्यसमवायिकारणत्वमुपादानत्वमिति तार्किकनिष्कृष्टम् । यदा पुरुषः स्वस्य सुखसंपत्तये ज्ञानसंपत्तये मुमुक्षासंपत्तये ऐश्वर्यसंपत्तये च प्रवर्तते, साधयति च सर्वम्, तदा तत्तदुत्पत्त्यनुकूलयत्नाश्रयत्वात् स निमित्तम्, सुखादीनां गुणानां तस्मिन्नेव समवायेनोत्पत्त्या समवायिकारणत्वादुपादानमपि । एवमीश्वरेऽपि तार्किकैरुपादानत्वमिष्टमित्याह **संयोगमिति** । ईश्वरो विभुः । विभुत्वञ्च सर्वमूर्तद्रव्यसंयोगित्वम् । ते संयोगा ईश्वरसंकल्पाधीना एव । तस्य सर्वकारणत्वात् । ते संयोगा ईश्वरे समवायसंबन्धेनोत्पद्यन्त इति समवायिकारणत्वमपि तस्य । अतो निमित्तोपादानैक्यम् । ननु संयोगादीनां साक्षादेवाऽऽत्मनि स्वीकारवत् महदाद्यवस्था अपि साक्षादेव तत्रेष्यन्तामित्यत्राह **सर्वश्रुतीति** । कतिपयश्रुतिमात्रदृष्टयः

अन्यथा जीवानां प्रतिकल्पमुत्पत्तिप्रलयौ स्याताम्; अकृताभ्यागमः कृतविप्रणाशो विषमसृष्ट्यादिभङ्गश्च भवेयुः। ब्रह्मणस्तदंशस्य वा सर्वेश्वरस्य, 'बहु स्याम्', इति सङ्कल्पयतोऽनादिजीवद्वारा क्लेशाद्यन्वयः, त्रिगुणांशद्वारा विकारान्वय इति पक्षेऽपि सर्वदोषाकरत्वम्; विरुद्धधर्माध्यासश्च दुस्त्यजः। अतश्चिदचिच्छरीरद्वारा बहुभवनादिकमिति कृत्स्नविद्भिर्निरुह्यत इति [एवं वैशिष्ट्यादुपादानमपि कर्तैव(?)] ॥

इति ईश्वरस्य जगन्निमित्तोपादानत्वोपपत्तिः ॥ २६ ॥

(172) साविद्यं केऽपि, सोपाधिकमथ कतिचित्, शक्तिभिर्जुष्टमन्ये
स्वीकृत्यैकाद्वितीयश्रुतिमपि जगदुस्तद्विशिष्टैक्यनिष्ठाम्।
नित्यत्वं विग्रहत्वं प्रकृतिपुरुषयोर्हेतुतां विश्वकर्तु-
स्तद्वैशिष्ट्यं च शास्त्रप्रथितमजहतां कोऽपराधोऽतिरिक्तः ॥ २७ ॥

व्या- केचित् वेदान्तिनस्त्वत्पृष्ठां रीतिमाद्रियन्ते भास्करादयः। वयं तु निर्विकारत्वादिपरश्रुत्यैकरस्याय तादृशावस्थाश्रयत्वं सद्वारकं ब्रूम इत्यर्थः। ऐकरस्यानादरे दोषान् दर्शयति अन्यथेति। अन्ते इतीति इति हेतोरित्यर्थः। एवमिति वाक्येऽन्वयः ॥ २६ ॥

श्रुतिवाक्ये स्वरसतः परमात्ममात्रपरे प्रतीयमाने चेतनाचेतनरूपविशेषणविशिष्टपरमात्मेत्यर्थवर्णनं क्लिष्टमित्याशंकायाम्, 'एष प्रश्नो वेदान्तव्याख्यानप्रवृत्तेषु केन क्रियते, मृषावादिना भास्करेण यादवप्रकाशेन वा। सर्वैरपि स्वाभिमतविशेषणवचनात् नैवं प्रश्न उदेति' इत्याह साविद्यमिति। किमिदं परमात्ममात्रबोधकं वाक्यम्? 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्येतदेव। अनेकैवकार-एकपद-अद्वितीयपदवत्त्वादिति चेत्—तस्य सजातीयविजातीयस्वगतभेदरहितं ब्रह्म आसीदित्यर्थः कैश्चिदर्वाचीनैरद्वैतिभिरुच्यते। स न युक्तः, 'अग्र आसीत्' इति कालविशेषे तत्सद्भावकथनात् कालस्यापि सत्ताप्रतीतेः। कश्चायं कालः। प्रलयकाल इति चेत्—तदा तत् शुद्धमुक्तस्वरूपं चेत्—मुक्तस्य कथं पुनः संसारः। अविद्याया अनष्टत्वात् न तदा मुक्तत्वमिति चेत्—तर्हि साविद्यमेव ब्रह्म स्वीकृतम्। एवमविद्या-तत्संबन्धयोरंगीकृतत्वे च विजातीयभेदस्य स्वगतभेदस्य च स्थितत्वात् कथम् एकमेवाद्वितीयमित्युच्येत। अविद्यादिकमपरमार्थं इति चेत्, इदानीमप्यविद्यादिरपरमार्थ एवेति 'अग्र आसीत्' इत्युक्तिर्न घटते। अतः प्रपञ्चरूपकार्यरहितं तन्निमित्तपुरुषान्तररहितं सृष्ट्युपयोग्यविद्याजीवकर्मादिविशिष्टं ब्रह्म तदाऽऽसीदित्येव वक्तव्यम्। एवमेव केऽपि=मृषावादिमूर्धन्याः साविद्यमेव ब्रह्म स्वीकृत्य 'एकमेवाद्वितीयम्' इति श्रुतिमपि तद्विशिष्टैक्यनिष्ठाम्= अविद्याविशिष्टब्रह्मैक्यविषयिणीं व्याचख्युः। अथ=तदनन्तरभवाः कतिचित्=भास्करीयाः सोपाधिकम्—अचिदंशविकारोपहितचिदंशकं स्वीकृत्य तां श्रुतिं तदैक्यविषयिणीम्। अथान्ये-यादवप्रकाशीयाः अचिदंशचिदंशेश्वरांशकारणभूताभिस्तिसृभिः शक्तिभिर्विशिष्टतया स्वीकृत्य तां श्रुतिं तद्विशिष्टैक्यविषयिणीम्। अतो न कस्यापि मते शुद्धं ब्रह्म कारणम्। तर्हि तदन्यतमपक्ष एव कस्माद् भवता न स्वीक्रियत इत्यत्राह नित्यत्वमिति। शास्त्रैरबाधिततया ज्ञापितं तावत् ब्रह्मण इव प्रकृतेरचेतनस्य पुरुषस्य चेतनवर्गस्य च नित्यत्वं—प्रलयेऽपि वर्तमानत्वम्; तथा परमात्मानं प्रति तयोः शरीरत्वञ्च; तथा तयोर्जगत् प्रति हेतुत्वञ्च; तथा हेतुभूतनित्यतदुभयवैशिष्ट्यञ्च कारणस्य ब्रह्मणः। सर्वमिदं शास्त्रप्रमितमविहाय चिदचिद्विशिष्टं ब्रह्म कारणमिति वदतामस्माकम्, एकमद्वितीयमिति श्रवणेऽपि वैशिष्ट्यस्वीकाररूपो योऽपराधः सर्वसाधारणः, तदपेक्षयाऽतिरिक्तः कोऽस्ति। श्रुतहानम् अश्रुताविद्योपाधिशक्तिकल्पनमित्ययमधिकोऽपराधस्तेषामेवेत्यर्थः।

एवं वैशिष्ट्यादुपादानमपि कर्तैव (??)। अन्यैरपि त्वय्यन्तवादिभिर्यत्किंचिद्वैशिष्ट्यमङ्गीकृतमित्याह **साविद्यमिति**। **अद्वैतव्याख्यायिनः** खल्वाहु, "अनिर्वाच्याऽविद्याद्वितयसचिवस्य प्रभवतो विवर्ता यस्यैते वियदनिलतेजोबवनयः।" इति। **भास्करीयास्तु**—चिदचिदंशविभक्त ब्रह्मद्रव्यमचिदंशेन विक्रियते, तद्विकारोपहितेन चिदंशेन संसरतीति। **यादवप्रकाशीयास्तु**—सर्वात्मकं सद्रूपं ब्रह्म चिदचिदीश्वररूपांशत्रयशक्तिविशिष्टं समुद्र इव फेनबुद्बुदतरङ्गप्रभेदेन सावान्तरभेदत्रिविधव्यष्टिभावेन परिणमते इति। एवमद्वितीयश्रुत्यविरुद्धानि अविद्योपाधिशक्तिरूपविशेषणानि चेत् विचित्रचिदचिदुपादानतोपयोगीनि स्वीक्रियन्ते, तदा श्रुतिस्मृतिशतसिद्धस्वरूपविशेषणाभ्युपगमे क प्रद्वेष? स्वपक्षस्य प्रमाणतस्सिद्धिं विरोधाभावादौचित्यातिशयं च प्रपञ्चयति **नित्यत्वमिति**। **कोऽपराधोऽतिरिक्त** इत्यनेन विशेषणपरिग्रहमात्रमपराधश्चेत्, सर्वेषामपि समानदोषत्वम्; अतिरिक्तापराधोऽपि तेषामेवेति व्यज्यते॥

इति जगत्कारणवैशिष्ट्यावश्यम्भावः॥ २७॥

**(178) ब्रह्मोपात्तान् विकारान् कतिचिदभिदधुश्चेतनाचेतनेशान्**
**नैतद्युक्तं यदीशादनधिकमनघं निर्विकारं श्रुतं तत्।**
**भिन्नाया ब्रह्मशक्तेर्विकृतय इति चेत्, ब्रह्मजन्यत्वभङ्गः;**
**भेदाभेदोपपाद्यं सकलमिति मते सप्तभङ्गी न दूष्या॥ २८॥**

---

पु- अविद्याद्वितयेति। आच्छादिकाऽविद्या विक्षेपिकाऽविद्येति अविद्याद्वितयसचिवस्येत्यर्थः॥२७

त्रिष्वपि विकारतयाऽभिमतेषु श्रुतिविरोधादयुक्तिमुपपादयतीति। 'ईशादनधिकम्' इत्यनेन

वी- (??)'एवं वैशिष्ट्यादुपादानमपि कर्तैव' इति वाक्यं पूर्वश्लोकवृत्त्यन्ते निवेद्यम्। कर्तैवाथ तार्किकमते किञ्चिद्विषये स्वरूपेणोपादानं निरूढम् इति हेतो. चिदचिद्वैशिष्ट्यादुपादानमपि भवितुमर्हतीति तच्छ्लोकार्थनिगमनम्। अन्यैरपीत्यारभ्य प्रकृतश्लोकवृत्तिः। अनिर्वाच्येत्यादिर्भामतीमङ्गलश्लोकः। अनिर्वचनीयमविद्याद्वितयं सचिवं—सहकारि यस्य तस्य, प्रभवत.= शक्तिमत. यस्य ब्रह्मणो विवर्ताः विलक्षणपरिणामा भवन्ति गगनपवनदहनसलिलधरणिरूपाणि पञ्च भूतानि समष्टिरूपाणीति तदर्थ.। अविद्याद्वितयं देवताधिकरणे वक्ष्यमाणं यत् भावरूपाज्ञानम्, तत् पूर्वपूर्वविभ्रमसंस्कारश्चेति तद्व्याख्या कल्पतरः। अनेन विजातीयो भेद तदा दर्शित। प्रभवत इति स्वगतभेदोऽप्युक्तः। ब्रह्म चाविद्याद्वितयविषयभूतम्। आश्रयास्तु जीवाः। अविद्यारूपधर्मसद्भावकथनादेव धर्मिणां जीवानामपि स्थितिरुक्तैव भवति। आश्रयं विना अस्य स्थित्ययोगात्। सर्वात्मकम्= 'सर्वं खल्विदं ब्रह्म' इति श्रुत्या सर्वभूतम्। अशत्रयशक्तीति। अंशत्रयहेतुभूतशक्तित्रयेत्यर्थ। भास्करमते चिदचितौ ब्रह्मांशौ, न तु तज्जन्यौ। एतन्मते अंशत्रयं ब्रह्मगतशक्तिजन्यम्। अथापि तदभिन्नम् उपादानोपादेयैक्यात्। तत्र दृष्टान्त उच्यते समुद्र इवेति। फेनेत्यादि यथासंख्यम्। सिद्धेत्यादि। सिद्धस्वरूपाणां विशेषणानामित्यर्थः॥ २७॥

अत्र यादवप्रकाशीयोक्तं विशिष्य निरस्यति ब्रह्मेति। त्रयाणां ब्रह्मजन्यत्वमुक्तमयुक्तम्, त्रयाणामनादित्वनित्यत्वादिश्रवणात्। ब्रह्मणस्तत्त्रितयकारणत्वमप्ययुक्तमित्युपपादयति यदिति। ईशादनधिकम्। ईशब्रह्मणोरत्यन्तैक्यस्यैव श्रवणात् न तत्रोपादानोपादेयभावः। अनघम्। ब्रह्मणोऽनघत्वेन श्रवणात् अघिजीवरूपेण परिणामो न भवति। निर्विकारम्। निर्विकारत्वश्रवणाच्च न जाड्यादि-

नन्वेकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय मृत्तत्कार्यदृष्टान्तैस्तदुपपादनात्, "ईश्वराव्याकृतप्राणैर्विराट् सिन्धुरिवोर्मिभिः। यत् प्रनृत्यदिवाऽऽभाति तस्मै सद्ब्रह्मणे नमः ॥" इति **कात्यायनकारिकया** च सद्ब्रह्मोदन्वदूर्मिभेदाश्चिदचिदीश्वरा इति निर्णीयते। तदेतदनुवक्ति **ब्रह्मेति**। अत्र प्रतिज्ञाया अनन्यथासिद्धबहुश्रुत्यविरोधात् विशिष्टैकानेकविषयविज्ञानार्थत्वात्, दृष्टान्तानामप्युपादानोपादेयैक्यसंभवार्थत्वात्, ऋषिवचनस्यापि, "न चानृषेर्दर्शनमस्ति किंचित्" इति न्यायेन विरोधाधिकरणनीत्या चानपेक्ष्यत्वात्, 'नित्यो नित्यानां चेतनश्चेतनानाम्', 'अजामेकाम्', 'न त्वेवाहं जातु नासम्', 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' इत्यादिश्रुतिस्मृतिशतदृष्टेश्च अपन्यायमूलमेतदित्यभिप्रायेणाह **नैतद्युक्तमिति**। त्रिष्वपि विकारतयाऽभिमतेषु श्रुतिविरोधादयुक्तिमुपपादयति **यदिति**। 'नारायणः परं ब्रह्म' इत्यादिभिरीश्वरस्यैव परब्रह्मत्वं सिद्धम्। अतो न तत् तदुपादानम्। अवतरणपरिणत्याऽपि नेश्वरस्योपादेयत्वम्। "स एव सृज्यः" इत्यादिकमपि विशिष्ट(विश्वसृष्टि)विषयम्। "स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयान्", 'न कर्मणा वर्धते नो कनीयान्' इत्यादिभिरकर्मवश्यतया प्रसिद्धस्य न खलु निरयनिपातादिदुरत्ययदुःखकारणदुरितपराधीनानन्तजीवभावेन परिणामः। "नास्य जरयैतज्जीर्यति", "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिभिर्विकारजाड्यादिविधुरतया श्रुतस्य कथं तद्विपरीतविकारागमः? तत्र परोक्तं परिहाराभासं शङ्कते **भिन्नाया** इति। अभिन्नत्वे परिहारगन्धाभावात् भिन्नत्वानुवादः। यदि ब्रह्मव्यतिरिक्ता तच्छक्तिर्विक्रियते, तदा ब्रह्मण उपादानत्वं न स्यात्। (?) अनादितया श्रुतस्य त्रिकस्य जन्यत्वायोगश्च न परिहृत इत्यभिप्रायेणाह **ब्रह्मजन्यत्वभङ्ग** इति। अथ शक्तिशक्तिमतोरभेदात् ब्रह्मण उपादानत्वनिर्विकारत्वादिकमिति परेष्टमनुवक्ति **भेदाभेदेति**।

---

गु॰— अविद्यापरस्य ब्रह्मविकारत्वं 'नारायण परं ब्रह्म' इत्यादिश्रुतिविरोधादयुक्तमिति सूचितम्। 'अनघम्' इत्यनेन दुरितपरवशानां जीवानां ब्रह्मविकारत्वं 'स न साधुना' इत्यादिश्रुतिविरोधादयुक्तमिति सूचितम्। 'निर्विकारम्' इत्यनेन विकारवदचितो ब्रह्मविकारत्वं सत्यज्ञानादिश्रुतिविरोधादयुक्तमिति सूचितमिति भावः ॥ २८ ॥

वै॰— विकारापन्नप्रकृतिरूपेण परिणमति। ननु न ब्रह्मणः परिणामः, किं तु ब्रह्मशक्तेरित्यत्राह भिन्नाया इति। ब्रह्मजन्यत्वेति। ब्रह्मज्ञानेन सर्वविज्ञानमिति ब्रह्मणः सर्वजनकत्वोपपादनं प्रकम्य शक्तिपरिणामत्वोक्तिरयुक्ता। शक्तिब्रह्मणोर्भेदाभेदान्न दोष इति चेत्—अनघत्वनिर्विकारत्वादिश्रुतिभंग एव। भेदाभेदस्वीकारे जैनमतप्रवेशापत्तिश्चेत्याह भेदेति। तथाच प्रकृत्यादीनां जन्यत्वमपि श्रुतिविरुद्धम्, ब्रह्मणस्तदुपादानत्वमपीति ॥

ईश्वराव्याकृतप्राणैरिति। अव्याकृतं प्रकृतिः; प्राणाः जीवाः। श्रुत्यविरोधादिति। केवलस्योपादानत्वे श्रुतिविरोध इति भावः। ऋषिवचनस्य= कात्यायनकारिकात्वेन केश्चिदुक्तस्य। अनपेक्ष्यत्वात्—उपेक्ष्यत्वात् श्रुतिरूपापेक्ष्यरहितत्वादिति वा। 'विरोधे त्वनपेक्षं स्यात्' इति जैमिनिसूत्रपाठाभिप्रायेणैवम्। अयुक्तिम्= ब्रह्मण उपादानत्वायोगम्। उपादेयत्वम्—अपुरुषार्थाश्रयत्वापादकमुपादेयत्वम्। सृज्यः इति सर्वजगद्ग्रहणम्। अनघमित्येतद् विवृणोति स न साधुनेति।

अत्रानिष्टमाह सप्तभङ्गीति । स्यादस्ति स्यान्नास्तीत्यादीनां विरोधस्फोरणात् तदुक्तिः । सर्वोऽपि परपक्षो न दूष्यः ; कथंचिदभेदात्, स्वपक्षस्य परपक्षत्वेऽपि विरोधस्य दुर्वचत्वादिति तात्पर्यम् ॥

इति ब्रह्मणश्चिदचिदीश्वरविकारवत्त्वभङ्गः ॥ २८ ॥

(174) विश्वं चित् तद्गुणानुद्भव इह घटते रत्नगन्धादिनीत्या
सर्वं ब्रह्मेत्यधीतं त्रिविधमिति च तत् दाशताद्यस्य चोक्तम् ।
तस्मात् सर्वानुवृत्तं सत् अनवधिदशाचित्रमित्यप्ययुक्तं
प्रत्यक्षागोचरत्वप्रभृतिबहुभिदावादिसर्वोक्तिबाधात् ॥ २९ ॥

अथ सच्चित्सुखस्वरूपं ब्रह्म सर्वत्र तादात्म्येनानुवृत्तमित्येतदनूद्य प्रत्याह विश्वमिति ॥ चिच्छब्देन स्वप्रकाशत्वं चेतनत्वं च तन्त्रेण गृह्येते । उपलम्भविरोधनिवृत्त्यर्थमाह तद्गुणानुद्भव इति । रत्ने

---

प्र॰— स्वयंप्रकाशत्वं चेतनत्वं च तन्त्रेण गृह्यत इति । 'तद्गुणानुद्भवत्वं' इति उत्तरत्र दर्शनात् चैतन्यगुणयोगित्वमपि चिच्छब्देन विवक्षितमिति भावः । जाग्रद्दशायामिव कदाचित् कार्यसम्भवः

श्री— निर्विकारमित्यस्य विवरणम् नास्येत्यादि । सर्वोपीति श्लोके सप्तभंगीत्युपलक्षणम्, सर्वः परपक्ष इत्येव विवक्षितमिति भावः ॥ २८ ॥

चिदचिदंशात्मकं ब्रह्मेति भास्करोक्तम् । अत्र ब्रह्मेश्वरभेदो नोक्तः । चिदचिदीश्वररूपांशत्रय-हेतुशक्तिमत् ब्रह्मेति यादवप्रकाशोक्तमनन्तरमेव विचारितम् । अचित्त्वेन व्यवह्रियमाणस्यापि सर्वस्य सच्चिदानन्दरूपत्वमस्तीति ब्रह्माभेद उपपद्यत इत्यपि तैरुक्तम्, [मृषावादिभिरपि] । तदनूद्य निरस्यति विश्वं चिदिति । विश्वं सच्चिदानन्दरूपमित्यत्र अस्ति भाति प्रियमिति लोकानुभवः प्रमाणम् । इदमस्ति, इदं भाति, इदमनुकूलमिति सर्वत्र व्यवहारात् । तत्र सत्त्वप्रियत्वयोर्ब्रह्माभेदानंगीकारेऽपीष्टत्वात् मुख्यदूष्यं चित्त्वांशमात्रमाह । इदं भातीति प्रयोगात् प्रकाशमानत्वलाभेऽपि स्वयम्प्रकाशत्वं न सिद्ध्यति । अथापि तदंश एवायमिति तदाशयः । आत्मनश्चेतनत्वेन प्रसिद्ध्या अचेतनं विश्वं कथं तदभिन्नमिति शंकावारणाय चेतनत्वमपि विश्वस्मिन् ते स्वीकुर्वन्ति । अतः चिदिति पदं स्वप्रकाशत्वज्ञानाश्रयत्वोभयपरम् । स्वाश्रयत्वस्वाश्रयाश्रयत्वोभयसंबन्धेन स्वप्रकाशत्वविशिष्टमिति तदर्थः । ज्ञानाश्रयत्वे तत्कार्यं जायेत; अचेतनमिति व्यवहारश्च न स्यादित्यत्राह तद्गुणानुद्भव इति । अनुद्भूतं ज्ञानमस्ति, यथा रत्नेषु पार्थिवेषु अनुद्भूत एव गन्धः सर्वदा, न तु पाषाणादौ भस्मीभावे गन्धोपलब्धिवत् तदुपलब्धिः कदापि—तथेति । एवं चित्त्वांगीकारे प्रमाणमाह सर्वमिति । 'सर्वं खल्विदं ब्रह्म', 'सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्', 'ब्रह्म दाशा 'ब्रह्म दासाः ब्रह्मेमे कितवा उत' इति चिदचित्सु सर्वत्र ब्रह्मत्वोक्त्या तत्सिद्धिः । सर्वानुवृत्तं सदिति । चित्त्वमुपपाद्य सत्त्वं कथं निगम्यत इति चेत्—सच्चिदानन्दरूपे सर्वस्मिन् चित्त्वस्य विमर्शलभ्यत्वात्, आनन्दत्वस्य च कदाचिदेव स्फुरणात् सर्वदा निर्विवादं स्वीकृतं सत्त्वमात्रमादाय एवमिदं चिदानन्दत्वसमानाधिकरणसत्त्वमिति निश्चेयमिति ब्रह्मरूपतेत्युपपादनाशयेन । अनवधिदशाचित्रम्—दृश्यमानसर्वविधावस्थाविचित्रमिति।

पक्षमिमं निरस्यति इत्यप्ययुक्तमिति । प्रत्यक्षगोचरः प्रपञ्चः ; अप्रत्यक्षं ब्रह्म ; मनसोऽपि शुद्धस्यैव गोचरः ; 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः', 'अस्मात् मायी सृजते', 'तस्मिंश्चान्यो मायया संनिरुद्धः', 'यः पृथिव्यां तिष्ठन्...य आत्मनि तिष्ठन्', 'अनश्नन् अन्योऽभिचाकशीति', 'पिबन्त्येनामविपमामविज्ञाताः कुमारकाः', 'निरवद्यं निरञ्जनम्' इत्येवं बहुविधभेदबोधिश्रुतिबाधप्रसंगान्न द्रव्यैक्यम् । ब्रह्मेति व्यवहारस्तु न चिदचितोः साक्षात् ब्रह्मत्वसाधक इति ।

गन्धस्य नित्यानुपलम्भात् तन्निदर्शनम्। न हि नित्य(त्यं ?)गन्धानुपलम्भेऽपि रत्नस्य पृथिवीत्वं नाङ्गीकृतम्। एवमिहापि। अथ भाव —चित्तस्य स्वप्रकाशत्व तावन्न निषेद्धु शक्यम्, प्रत्यात्म स्वप्रकाशत्वस्य परैरनुपलम्भेऽप्यङ्गीकारात्। चेतनत्वमपि घटादेर्न प्रत्यक्षत प्रतिक्षेप्तुं युक्तम्, परचैतन्ये सर्वत्र योग्यानुपलम्भाभावात्। कार्याभावादपि न तत्प्रतिक्षेप। सुषुप्त्यादिनयेन कार्याभावोपपत्ते। स्वभावभेदाच्च नित्यानुद्भवोपपत्तिरिति॥ चिद्रूपत्वे सिद्धे हि चैतन्यानुद्भव कल्प्य, तदेव तु कथमित्यत्राह— सर्वमिति। 'सर्वं खलु' इति श्रुत्या सर्वस्य ब्रह्मत्वं विधीयते। तच्च ज्ञानादिस्वभावगर्भम्। भोक्तृभोग्यादीन् प्रक्रम्य, 'सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' इति श्रूयते। अत्र हि स्वरूपत्रैविध्यं स्वारसिकम्। "ब्रह्म दाशा ब्रह्म दासा" इत्यादौ च ब्रह्मण एव दाशत्वादिकमाम्नातम्। तत्र व्यवधानकल्पनास्तु गुर्वी, तस्मात् स्वरूपतादात्म्येन चिदचिदीश्वरानुगत सद् ब्रह्मैकम्, तदेव त्रितयपूर्वावान्तरव्यष्टिभिरनन्तविषमावस्थाविशिष्टमिति भाव। ब्रह्मात्मके ब्रह्मणि चित्रपटन्यायसूचनार्थं चित्रशब्द। एतदपि दूषयति इत्यप्ययुक्तमिति। श्रुतस्य कथमयुक्तिरित्यत्राह प्रत्यक्षेति। 'अद्रेश्यमग्राह्य', 'निष्कलं निष्क्रियं शान्तम्' इत्यादिभि श्रुतिभिस्तावत् बाध सिद्ध। भेदश्रुतयश्च नाभेदं सहन्ते। शरीरात्मभावश्रुतयश्च भेदगर्भा। अत एवाभेदश्रुतयोऽपि विशिष्टैक्यविषया स्थापनीया।

किञ्चाचेतनस्य चेतनस्य वा कस्यचित् ब्रह्मत्वविधौ किमत्रेद विधेयम्? सत्त्वमिति चेत्, तन्न, सर्वत्र सर्वथा सुप्रसिद्धत्वेन तदुपदेशायोगात्॥ कारणत्वमिति चेत्, तत् प्रातिस्विककार्यं प्रति प्रसिद्धमेव। आदिकारणत्व तु कार्यस्य विरुद्धम्॥ कार्यस्य कारणद्रव्यतादात्म्यमुपदिश्यत इति चेन्न, श्रुतिसिद्धविशिष्टकारणतादात्म्ये त्वदिष्टासिद्धे। मदर्शित च विशिष्टपरिणामस्त युष्माभिरपि दुस्त्यजत्वम्॥ ईश्वरत्वमशान्तरयोरुपदिश्यत इति चेन्न, प्रत्यक्षाद्यशेषप्रमाणविरोधात्। न च परागादे पर्वतत्वं शरावादेर्वा मणिकत्व संव्यवहरन्ति॥ साजात्यविवक्षया तथा संव्यवहार स्यादिति चेत्, तर्हि सजातीयैरीश्वरसाजात्यमुपदिष्टं स्यात्। तत्र चानुपदेश्यत्वमुक्तमेव। एवं सर्वश्रुतिव्याघात ब्रह्मसामानाधिकरण्यैनिघश्रुतिभिरविरुद्धविषयतया नीयेतेति।

यदपि कल्पयन्ति जीवत्वपृथिवत् ईश्वरत्वमपयोऽप्यन्तरत्वा, तत्र प्रापस्वयस्तोमयव्याख्ययत्व प्रथमो विभाग, तिस्रश्च नभादिमूर्तयस्तद्यष्ट्य इति—इदमप्येकस्यैव चैतन्यस्य स्वमायाकल्पितविचित्रान्तःकरणदर्पणप्रतिबिम्बितया विश्वतैजसप्राज्ञरूपविभाग इति वल्लमित्वत् अनादर्तव्यम्॥

इति सर्वानुवृत्तसन्मात्रब्रह्मत्वभङ्गः॥ २९॥

(सं)— स्यादित्यत्राह स्वभावेति। चित्रपटन्यायेति। यथा चित्रपटे तत्तत्तन्तुगतशौक्ल्यादीना तत्तत्प्रदेशव्यवस्थिति, एवं विकारदु श्चितादीनामपि तत्तत्प्रदेशे व्यवस्थितिरिति सूचनार्थमित्यर्थ॥

(वि)— विधेयत्व प्रकार किमिति विचार्य ध्यर्थेन्य निषेधति किञ्चेत्यादिना। सर्वस्य ब्रह्मैक्याभावेऽपि प्राणमयादिषु केचुचित् तदन्तु इति शारा परिहरति यदपीति। ज्योतिरधिकरणश्रुतप्रकारादिनाया यावद्वमराणीषधिगमस्थले इद द्रष्टव्यम्। अन्त करणप्रतिबिम्बतया विश्वतैजसादिवादो मायावादिनाम। भागवते विश्वादिरव्याकृतागादिपरमिति माण्डूक्यभाष्यगमादौ द्रष्टव्यम्॥ २९॥

(175) अव्यक्तं त्वन्मतेऽपि ह्यनवयवमथाप्येतदंशा विकाराः
ते चान्योन्यं विचित्राः पुनरपि विलयं तत्र तत्त्वेन यान्ति ।
इत्थं ब्रह्मापि जीवः परिणमति विहृत्यर्थमित्यप्यसारं
स्वानर्थैकप्रवृत्तेः ; प्रसजति च तदा सर्वशास्त्रोपघातः ॥ ३० ॥

अन्ये तु भेदाभेदिन आहुः—निष्कलचिदानन्दजलनिधिः अपारस्वानन्दानुभवप्रीतिजनितनानाविकार एव स्वरूपमंशं जडरूपं संकल्प्य तमेवाजडेन चिदंशान्तरेण संयोज्य अनन्तविचित्रसुखदुःखानुभवभागिनं कृत्वा तद्दर्शनेन प्रीयत इति । यथोक्तम्, "स्व चिन्महोदधिरणुं तव बिन्दुमेकं कृत्वा जडं तमजडेन नियोज्य" इत्यादि । दृश्यन्ते जगति कतिचिदात्मपीडावहा क्रीडा सादरमनुतिष्ठन्तः । अन्यथा कथमवतारेषु तादृशा विहाराः, कथं च स्वेच्छया कर्मफलान्यनुभवेदिति । एतदनुभाषते अव्यक्तमिति । तदिदमसमञ्जवृत्तान्तादप्यधिकजुगुप्सनीयतममित्याह असारमिति । अव्यक्तनिदर्शनमिह मन्दप्रलोभनमिति कृत्वा तत् दूषयितुं परोक्तप्रक्रियामेव हेतुमाह स्वानर्थेति । अयं भावः—यद्यपि दुःखपायेषूपायेषु प्रभूतसुखार्थिनः प्रवर्तन्ते, यद्यपि, "भ्रान्तिज्ञानवता पुंसा प्रहारोऽपि सुखायते" इत्यादिन्यायेन बालिशैस्ताडनादिभिः क्रीडारस उपादीयते—तथाऽपि सर्वज्ञस्य सर्वशक्तेः सदुःखल्पोत्पादनमपि न युक्तम् । किंपुनः अनन्तजीवात्मभावेन दुर्विषहदुःखोत्पादनम् ? अतः क्रीडारसकणिका सत्यपि निरवधिकस्वानर्थनिमित्तनिर्मितेति, अत्र स्वानर्थैकप्रवृत्त ईश्वरः स्यात् । अवतारवृत्तान्ता शैलूषन्यायेन निरूढा इति । अस्मन्मते तु विशेषणगता दोषा न विशेष्यं स्पृशन्ति, ऐक्य-भेदाभेदानङ्गीकारात् । अकर्मवश्ये संसर्गजदोषाणामसंभवाच्चेति ॥

इति ब्रह्मणः स्वलीलार्थं जीवादिपरिणामवादभङ्गः ॥ ३० ॥

(176) 'ब्रह्मैवोपाधिभिन्नं भजति बहुविधां संसृतिं, सोऽप्यनादिः,
तस्माद्वात्यन्तभिन्नो जडः' इति तु मते दुःखमद्वारकं स्यात् ।

---

ष्टी— अव्यक्तनिदर्शनमिह मन्दप्रलोभनमिति । अव्यक्तस्याचेतनत्वात् नानाविधविकाररूपेण परिणतिरुपपद्यते ब्रह्मणस्तु सर्वज्ञतया दुःखात्मकजगद्रूपेण परिणतिरनुपपन्नेति भावः ॥ ३० ॥

वी— प्रत्यक्षागोचरत्वेत्युक्तमसहमानः शङ्कते अव्यक्तमिति । एकस्यामवस्थाया प्रत्यक्षागोचरत्वम्, अवस्थान्तरे तद्गोचरत्वञ्चाचेतने स्वीकृतं हि, तथाऽस्त्विति । निरस्यति इत्यप्यसारमिति । प्रवृत्ते = प्रवृत्तिप्रसंगात् । प्रवर्तताम्, यथा उद्बन्धन-स्वदाहनादौ स्वयमेव केषाञ्चित् प्रवृत्तिरित्यत्राह प्रसजति चेति—असमञ्जेति । असमञ्जः सगरपुत्रः (रामायणे) सरय्वादौ सकलबालप्रक्षेपकः । शैलूषन्यायेनेति । बाह्याभिनयमात्रम् न तु वस्तुतः खेदादीति भावः । पूर्वपक्षे, "दुःखानुभवभागिनं कृत्वा प्रीयते" इत्युक्तया स्वलीलारसप्रवृत्तस्य सर्वत्र स्वाच्छन्द्यावगमात् पूर्वकर्मानुसारेणैव प्रवृत्तिर्ब्रह्मण इत्यपि दुर्वचमिति, सर्वशास्त्रोपघात इति श्लोकोक्तदोषोऽत्रपक्षे दुष्परिहरतम इति ज्ञायते ॥ ३० ॥

'सावित्र केऽपि सोपाधिकमथ कतिचित् शक्तिभिर्जुष्टमन्ये' इति वेदान्तिपक्षत्रय प्रस्तुतम् । तत्र व्युत्क्रमेण तन्निरसने प्रवृत्य यादवप्रकाशनिरसनानन्तरं भास्करमतं निरसितुमाह ब्रह्मैवेति ।

**सौभर्यादौ व्यवस्था न कथमुपधिभिः, स्वावतारेषु चैषा,**
**सर्वज्ञः स्वैक्यवेदी कथमनवधिभिर्जीवदुःखैर्न दुःख्येत् ॥ ३१ ॥**

उक्तपक्षासत्त्वं भास्करपक्षमुपालभते **ब्रह्मैवेति** । एवकारो विरोधं व्यनक्ति । महाकाशघटाकाशादिनयात्, ईश्वरात् मिथश्च जीवानां भेदेन गुणदोषसंकरपरिजिहीर्षया उपाधिभिन्नत्वे स्वीकृतेऽपि, प्रलयदशायामुपाधिविलयेन भेदाभावे मुक्तिप्रसङ्गः । ततश्च प्राग्वत् अकृताभ्यागमादिः स्यादित्यत्राह **सोऽपीति** । उपाधिभेद इत्यर्थः । प्रलयेऽपि प्रतिजीवमुपाधयः सूक्ष्मरूपेण तिष्ठन्ति ; ततस्तदवच्छिन्नजीवभेदस्थितिरुपपद्यत इति भावः । अनाद्युपाधिभेदस्वीकारे ब्रह्मव्यतिरिक्ताङ्गीकारः स्यादित्यत्राह **तस्मादिति** । बहुधा भिन्नोऽपि ह्युपाधिर्ब्रह्माभिन्नः ; तस्मान्नाब्रह्मतत्त्वाङ्गीकृतिरिति भावः । ब्रह्मतादात्म्याविशेषेऽपि उपाधेस्तद्वतो वैषम्यमाह **जड इति** । पूर्वापरदूष्येभ्यो विशेषं व्यनक्ति **इति तु मत इति** । **दुःखमद्वारकं स्यात्** । न ह्यस्मन्मतवत् विशेषणद्वारकम् ; न च त्वन्मते विकारवत् उपाध्यंशद्वारकमित्यर्थः । औपाधिक्यां व्यवस्थितावतिप्रसङ्गमाह **सौभर्यादीति** । अस्ति हि योगिनां युगपदनेकदेहभृतां तत्तद्देहोपाधिकृतभोगप्रतिसन्धानम् । स्मर्यते हि, 'आत्मनो वै शरीराणि बहूनि मनुजेश्वर । प्राप्य योगबलं कुर्यात्' इत्यादि । अवतारेषु त्रैकालिकावतारान्तरवृत्तान्तव्यवहारास्तत्र तत्र दृश्यन्ते ॥ तथाऽपि कर्मोपरोधादप्रतिसन्धानमित्यत्राह **सर्वज्ञ इति** । न हि नित्यसर्वज्ञतयाऽभ्युपगत ईश्वरांशः स्वात्मगतमुपाधितत्परिच्छिन्नं स्वांशं च स्वेनाभिन्नं न वेत्ति । ततश्चाहमेवोपाधिपरवशतयाऽनन्तदुःखमनुभवामीति [प्रतिसंदधानो ?] न कथं दुःख्येत् ॥ ३१ ॥

(177) **बन्धो ब्रह्मण्यशेषे प्रसजति ; स यदोपाधिसंयोगमात्रात्**
**सादेश्याचेत् उपाधौ व्यति(भि)चरति भवेत् बन्धमोक्षाव्यवस्था ।**

---

७१– शांकरपक्षस्य विस्तरेण निरसनीयत्वादन्ते निवेशनम्। भास्करपक्षे जीवस्योत्पत्तिर्न भवति। घटावच्छिन्नाकाशवत् उपाध्यवच्छिन्नब्रह्मप्रदेशो जीवः । उपाधिश्च प्रकृतिपरिणामः । प्रकृतिर्ब्रह्मैकदेशोऽचिदंशः । अतः उपाधेस्तत्कार्यत्वादभेदो भेदश्च स्वाभाविकः ; जीवस्य तु अभेदः स्वाभाविकः, भेदस्तूपाधिप्रयुक्तः । अत्र पक्षे जडपरिणामाः सर्वे न साक्षात् ब्रह्मणि निर्विकारांशे । जीवदोषास्तु ब्रह्मण्येव, स्वाभाविकस्य भेदस्यासंमतेः । तदाह 'इति तु मते दुःखमद्वारकं स्यात्' इति । एवञ्च ब्रह्म जीवदुःखान्यनुभवेत् 'अहं दुःखि' इति । एवमेको जीवः अन्यजीवदुःखादिकमप्यनुभवेत् । अहं तेन शरीरेण दुःखीत्येवम्। सौभरिप्रभृतयो योगिनो हि नानाशरीरग्राहिणः एकोपाधिप्रदेशजातं दुःखमन्यत्रापि तदुपाध्यवच्छिन्नत्वेनानुसंदधते। 'पादे मे वेदना शिरसि सुखम्' इत्यादिवत्। उपाधिप्रयुक्तव्यवस्थास्वीकारे सौभर्यादावपि तथा स्यात्। तथा स्वावतारेषु चोपाधिभिः एषा = व्यवस्था कथं न। तत्राव्यवस्थाया एव दर्शनात्। आह हि भगवान्, 'तान्यहं वेद सर्वाणि न त्वं वेत्थ', 'इमं विवस्वते योगं प्रोक्तवानहमव्ययम्' इत्यादि। कर्मवशात् तदैक्यप्रतिसंधानं निरुद्धमिति चेत्—ब्रह्म कर्मापरवशं कथं सर्वं दुःखं स्वस्मिन् न प्रतिसंदध्यादिति पृच्छति सर्वज्ञ इति। तदैक्याग्रहणं तस्य न सुवचम्, सर्वज्ञत्वात्। अनवधिभिः = अनन्तैः—असंख्यैः ॥ ३१ ॥

इतरव्यपदेशाधिकरणोक्तदोषा उपन्यस्ताः। ममन्त्राधिकरणभाष्ये भास्करपक्षनिरसनस्थलोक्तं

**अच्छेद्ये छेदनादिर्विहत उपधिभिः ; न स्वतोऽशस्त्वयास्मिन् ;**
**नोपाधिर्जीवतामप्यनुभवितुमलं ब्रह्मरूपोऽप्यचित्त्वात् ॥ ३२ ॥**

अपि चात्रोपाध्यवच्छिन्नं ब्रह्म जीव इति परोक्ते(1) किमुपाधिसंयोगमात्रविशेषितं ब्रह्मस्वरूपमेव जीवः, (2) उत घटाकाशवदव(वि)च्छेदेन विभक्तो भागः, (3) अथ घटोदकवत् विच्छेदेन, (4) यद्वा विदारित-मृद्दलनयात् किञ्चिद्विदलनेन।(5)यद्वा उपाधिसंयोगव्यञ्जितविभागः कश्चित् सहजोंऽशः,(6) घटाद्यवच्छिन्न-पृथिव्यंशवत् उपाधिभावेन परिच्छिन्न एव वा कश्चिद् ब्रह्मांशः इति विकल्पं विभाव्य प्रथमे दोषमाह **बन्ध** इति । अत्र नित्यमुक्त ईश्वरांशो निष्कृष्टुं न शक्यः ; बद्धमुक्तविभागश्च न स्यादिति भावः । द्वितीयमनुवक्ति **सादेश्याचेदिति** । तत्रोपाधिसञ्चारदशायां घटाकाशनीत्यैव नियतजीवांशासंभवात् बद्धमुक्तप्रदेशनियमा-भावमाह **उपाधाविति।** कर्मनिरपेक्षो बन्धः तत्कालसमुचितविद्यानिरपेक्षो मोक्षश्च स्यादित्याकूतम्। एवं सति, "*आकाशमेकं हि यथा घटादिषु पृथक्भवेत् । तथाऽऽत्मैकोऽप्यनेकस्थो जलाधारेष्विवांशुमान् ॥*" इति स्मृतिः कथमिति चेत्— इत्थम्—आकाशोऽपि पृथिव्यादिवत् सभागः ; पञ्चीकरणप्रक्रियया तत्सिद्धेः । तद्भागानां त्वेकरूपाणामपि यथा घटादिसंयोगभेदैरेव मिथो वैषम्यम्, एवमात्मनां देवादिपिण्डसंयोग-भेदैरिति जीवविषयत्वे निर्वाहः । परमात्मविषयत्वेऽपि ब्रूमः—अत्र तत्तत्संसर्गप्रयुक्तविकारादिराहित्ये तात्पर्यम् ; एतच्च वृद्धिह्रासादिसूत्रभाष्ये व्यक्तमनुसंधेयमिति । "एक एव हि भूतात्मा भूतेभूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥" इत्यपि गतार्थम् । "घटध्वंसे घटाकाशो न भिन्नो

---

*(श्री)*— बद्धमुक्तप्रदेशनियमाभावे का हानिरित्यत्राह—कर्मानपेक्षो (?) बन्ध इति ॥ ३२ ॥

*(आ)*— विशदयन् आह बन्ध इति । उपाधिभिन्नं ब्रह्म जीव इति पूर्वश्लोके उक्तम् । किमिदमुपाधि-भिन्नत्वमिति विचार्यते । तत् षोढा विकल्प्य दूषयति । संयोग-अवच्छेद-विच्छेद-विदलन-भेदव्यञ्जन-तादात्म्यापत्तयः षट्-पक्षाः। यदेत्यस्य यदीत्यर्थः। ब्रह्मणि बन्धः यदि उपाधिसंयोगमात्रात्, तर्हि अशेषे प्रसजति । पूर्णं ब्रह्म बन्धभाक् भवेत् । तथाचांशो जीव इति न स्यात् । यदि स तत्र सादेश्यात्— देशः—प्रदेशः तत्सहितत्वात्—उपाध्यवच्छिन्नप्रदेशत्वाद् भवति, तदा एक एवोपाधिर्यं यं प्रदेशम-वच्छिन्द्यात्, स स जीवः स्यात्। त्यक्तः प्रदेशो मुक्तः स्यात्। मुक्तो देशोऽवच्छिन्नस्सन् बद्धस्स्यात्। छेदनपक्षः ईषच्छिदलनपक्षश्चाच्छेद्ये न संभवति । ननु ब्रह्मणि स्वत एवांशाः सन्ति । ते उपाधिभिः व्यज्यन्ते । सकृदुपाधिसंयोगे न व्यञ्जितो जीवतयाऽनुवर्तत इति चेत्—अपसिद्धान्तः, निरवयवे स्वाभाविकांशानिष्टेः । ननु ब्रह्म उपाधिभिन्न इति नेश्वरांशे उपाधिकृतभेदविवक्षा उपाधीनामपि ब्रह्मांशत्वात् उपाधिभूतं ब्रह्मेत्येव विवक्षेति पक्षं निरस्यति चतुर्थपादेन । ब्रह्मत्वेऽप्यचेतनरूपांश-त्वात् चेतनत्वरूपजीवत्वं कथमिति भावः, नित्यमुक्तईश्वरांश इति । अत्र परमतभंगोक्तो भास्करमत-निष्कर्षोऽनुसंधानमर्हति—, 'ब्रह्मेति द्रव्यमेकम् । तत्रेश्वरांशः प्रकृत्यंश इति अंशद्वयम् । प्रकृत्यंशे सर्वः परिणामः। ईश्वरांशे तत्तत्प्रकृतिपरिणामावच्छिन्नांशाः जीवा भवन्ति । उपाधिविगमेन मुक्तौ ईश्वरांशैक्यं जीवानाम्' इति । अत्र एतत्पक्षे फेनबुद्बुदतरङ्गेति भेदत्रयं नास्ति ; तत्तु यादवप्रकाश-पक्षे । परमतभंगे भास्करभंगाधिकार इति नाम निष्कास्य जैनग्रन्थिवेदान्तिभंगाधिकार इति नाम निक्षेप्तव्यमित्यलमधिकेन। जीवविषयत्वे इति । आकाशमेकमिति श्लोको जीवात्मविषयकश्चेत्, एकै-कोपि जीवात्मा स्वयमेकरूपोऽपि देवादिदेहादिभेदबलात् पृथग्रूपो लक्ष्यत इत्यर्थः। परमात्मविषयक-

नभसो(सा) यथा" इति मुक्तविषयस्मृतिरप्यौपाधिकविशेषनिवृत्तिपरा । न ह्यत्र घटाकाशस्य नभस्तत्त्वतादात्म्यं निदर्श्यते(दिश्यते) तस्य घटसंयोगदशायामप्यवस्थानात् । नापि बहिर्भूतमहाकाशादितादात्म्यम्; तस्य घटध्वंसदशायामप्यसंभवात् । तत्समानतापत्तिस्त्वैक्यविरोधिन्येव । तृतीयचतुर्थौ दूषयति—**अच्छेद्य** इति । पञ्चमेऽपसिद्धान्तमाह—**न स्वत** इति । षष्ठे क्वचिदंशवल्लृप्तिव्याघातमाह—**नोपाधिरिति** । भूतेन्द्रियचैतन्यवादसमोऽयं पक्ष इति च भावः ॥ **इति ब्रह्मण औपाधिकजीवभावभङ्गः ॥ ३२ ॥**

(ब्रह्माज्ञानवादनिरासः)

(178) **नापि ब्रह्मण्यविद्यास्थगितनिजतनौ विश्वमेतत् विवृत्तं**
**तस्मिन् सा स्वप्रकाशे कथमिव विलगेत् तत्प्रकाशैकबाध्या ।**
**न ह्येतस्मिन् अविद्याविलयकृदधिको वृत्तिवेद्यो विशेषः,**
**बाधो वृत्तिस्वरूपात् यदि, भवति तदा ज्ञानबाध्यत्वभङ्गः ॥ ३३ ॥**

एवमिह जैनग्रन्थिनां जल्पितानि निराकारिषत । अथ सौगतग्रन्थिनां निराक्रियन्ते । तत्र प्रत्यस्तमितसमस्तभेदकूटस्थविज्ञानैकरसं ब्रह्म अनाद्यनिर्वचनीयाविद्यातिरोहितस्वरूपमनन्तभेदप्रपञ्चात्मना विवर्तत इति मृषावादस्तावत् अपोह्यते **नापीति** । आस्तां तिरोधानम्; आलोकसन्निधौ अन्धकारस्येव

---

(मू)—पक्षस्तावदपोह्यत इति । जीवाज्ञानवादिपक्षनिरसनात् प्राथम्यं तावच्छब्दार्थः । आस्तामिति । निर्विशेषप्रकाशैकस्वरूपस्य ब्रह्मणस्तिरोधानं स्वरूपनाशप्रसङ्गादिना अनुपपन्नमिति वक्ष्यते; इदानीं

(श्री)—इच्चेत्, विरूपानेकवस्तुसंबन्धेऽपि तदधीनविकारत्वान्न भवति, 'किं तु आकाशवत् जलाधारप्रतिबिम्बित-बिम्बभूतसूर्यवच्चैकरूप एवावतिष्ठत इत्यर्थः ॥ ३२ ॥

वेदान्तिमतत्रये व्युत्क्रमेण व्युदस्यमाने भास्करमतखण्डनानन्तरं शिष्टं "साविद्यं केपि" इति प्रक्रान्तं मृषावादिमतं व्युदस्यति नापीति । षष्टितमं श्लोकं यावत् इदं वितन्यते । आदौ ब्रह्माज्ञाननिरासः । अपिशब्दो निरस्तमतद्वयसमुच्चये । अविद्यया स्थगिता = आच्छादिता निजा तनुः = स्वरूपं यस्य तस्मिन् ब्रह्मणि । अविद्याच्छादिते इति यावत् विश्वमेतत् = जडप्रपञ्चभूतं विवृत्तम् = विवर्तीय विकारवत् । सदसदनिर्वचनीयस्य प्रपञ्चस्य तद्विलक्षणात् सत्तारूपादुत्पद्यमानस्य ब्रह्मसारूप्यायोगात् अविद्यासारूप्यस्यैव स्वरसात् परिणतिमनुक्त्वा विवृत्तमित्युक्तम् । व्युदासे हेतुमाह तस्मिन्निति । स्वप्रकाशे = स्वयं पूर्णतया प्रकाशमाने तत्प्रकाशैकबाध्या = तेन तस्य प्रकाशेनैव बाधनीया प्रदीपेनैवोत्पाद्यकज्जलरूप धूमविलक्षणा सा अविद्या कथं लगेत् = संबध्नीयात् । स्थितिरेव न भवति, कुतो लगनम्; कुतस्तरां स्थगनम् । ननु न ब्रह्मणः स्वप्रकाशोऽविद्यां विलापयति, किंतु ब्रह्मविषयकवृत्तिज्ञानम्; तत् तदा नेत्यत्राह नहीति । लोके कस्यापि 'अहमस्मि न वा' इति संशयो न जायते । कस्मात् । अहमिति प्रकाशसत्त्वात् । स प्रकाशो वृत्तिज्ञानं वा स्वयंप्रकाशो वेत्यत्र स्वयंप्रकाश इत्येवोभयसंमतम् । अन्यथा स्वयंप्रकाशान्वयस्यैव विलोपापत्तेः । तत्रास्वप्रकाशस्य वृत्तिवेद्यस्य संशयनिवर्तकस्याभावादेव हि स्वप्रकाशमात्रनिवर्त्यता संशयस्य, तथेहापि वृत्तिवेद्यस्यास्वप्रकाशस्य प्रपञ्चनिवर्तकांशस्याभावात् स्वप्रकाशेनैवाविद्या निवर्तेत । अस्ति विशेष इति चेत्—अतस्तज्ज्ञानान्मुक्तिरित्युक्तं स्यात् । ब्रह्मणः सविशेषत्वं वा स्यात् । स विशेषोऽपारमार्थिक इति चेत्, उक्त एव दोषः । अतो ब्रह्मस्वरूपमात्रं वृत्तिवेद्यं निवर्तकमिति वक्तव्यम् । तदंशः स्वयंप्रकाश एवेति न वृत्तेरपेक्षा । अथ केयं वृत्तिः ? अन्तःकरणपरिणामः । तथा

अनादित्वप्रकाशब्रह्मसंनिधौ तदज्ञानस्य स्वरूपलब्धिरेव न स्यादित्यभिप्रायेणाह **तस्मिन्निति**। प्रदीप-कज्जलन्यायशङ्कापनुत्त्यै विरोधं व्यनक्ति—**तत्प्रकाशैकबाध्येति**। ननु ब्रह्मस्वरूपप्रकाशो नाज्ञानं बाधते, किंतु साक्षित्वेनावस्थाय साधयत्येव। तत्त्वावेदकवाक्यजन्यं तु वृत्तिज्ञानं तद्बाधकमित्यत्र, वृत्तेर्बाधकत्वं विषयस्य विशेषप्रकाशनशक्त्या स्वरूपशक्त्या वेति विकल्पं सङ्कल्प्य प्रथमं प्रतिक्षिपति **नहीति**। **अधिकः**—स्वरूपादन्यः, विशेषस्याविद्यादित्वहेतुत्वं स्वधीद्वारा। यदि तु वृत्तिः कल्पितविशेषविषयतया ब्रह्माज्ञानं बाधेत, तर्हि तत्त्वधीबाध्यत्वं तस्य न स्यात्। द्वितीयमनुवदति **बाध इति**। वृत्तिस्वरूपात् प्रदीपवह्नि(?)मुद्गरादिवत् किञ्चित्प्रकाशनिरपेक्षादिति यावत्। दूषयति **तदेति**। अज्ञानस्य ज्ञाननिवर्त्यत्वं न स्यात्। तत एव मिथ्यात्वलक्षणातिक्रम इति भावः ॥ **इति साविद्यब्रह्मविवर्तवादभङ्गः** ॥ ३३ ॥

(170) **छन्नत्वे स्वप्रकाशादनधिकवपुषो ब्रह्मणः स्यादभावः,**
**भावानां छादनं हि स्फुरणविलयनं तस्य चोत्पत्तिरोधः।**
**मिथ्यादोषात् भ्रमोक्तौ कथमधिकरणं सत्यमित्येव वाच्यं**
**नाधिष्ठानानवस्था भवतु, तव यथा नास्त्यविद्याऽनवस्था ॥ ३४ ॥**

तिरोधिमपि दूषयति **छन्नत्व इति**। घटादीनां स्वस्वरूपातिरिक्तप्रकाशवत्त्वात् तन्निवर्तकैस्तिरोधानं युक्तम्, ब्रह्मणस्तु न तथेत्याशयः। अभावापत्तिं तिरोधानविकल्पेन व्यनक्ति **भावानामिति**। **स्फुरण-विलयनं**—सिद्धस्य प्रकाशस्य नाशः। **तस्य**—स्फुरणस्येत्यर्थः। असिद्धस्येत्यर्थापन्नम् ॥ ननु वृत्त्यधीनप्रकाशान्तरापेक्षया तिरोधानं सिध्येत् तन्न ॥ तस्यापि ह्यनुत्पन्नस्य नाश्यत्वायोगादुत्पत्तिरोध इत्येष्टव्यम्। ततश्च सत्यामविद्यायां कथं तद्बाधिका वृत्तिरुत्पद्यते ? अन्यतस्तन्निवृत्तौ किं पुनरेषा वृत्तिः साधयेत् ॥

---

प्र०—ब्रह्मणोऽविद्यासम्बन्ध एवानुपपन्न इति उच्यत इत्यर्थः। प्रदीपकज्जलन्यायशङ्केति। यथा शुक्लभास्वरतेजोविरोधिनः कज्जलस्यावस्थानं तद्वदिति शङ्कापनुत्त्ये इत्यर्थः। विरोधं व्यनक्तीति। दीपकज्जलयोः निवर्त्यनिवर्तकविरोधो नास्ति, ब्रह्मप्रकाशाविद्ययोस्तु सोऽस्तीति भावः ॥ ३३ ॥

*श्री—अन्यथा अविद्यास्विबाधे ज्ञानबाध्यत्वभङ्गः स्यादिति सर्वस्य सत्यत्वमेव स्यात्। ननु लोके मिथ्या-*भूतं सर्पादिकं वृत्तिज्ञाननिवर्त्यमेव दृष्टमिति चेत्—तत् विरोधिनो रज्जुत्वादेरस्वयंप्रकाशत्वात्, प्रकाशेनैवाज्ञानस्य निवर्त्यत्वात्। यदि तु सत्यपि प्रकाशे तेन न निवृत्तिः, किंतु प्रकाशातिरिक्तेनेत्युच्यते, तर्हि मुद्गरहतसर्पवत् सत्यतैव स्यात्। सर्वथा ज्ञानानां स्वयंप्रकाशत्वपक्षे तत्तज्ज्ञानविषयकाज्ञाननिवृत्त्यर्थं नहि वृत्त्यन्तरमपेक्ष्यते। कुतः ? प्रकाशमानत्वादेव। तद्वत् ब्रह्मणि प्रकाशमाने अविद्या न भवेदेवेति ॥ ३३ ॥

अविद्या न भवतीत्युक्तम्। तत्सत्त्वे ब्रह्म न भवेदित्युच्यते छन्नेति। अविद्यायाश्छादकत्वं पूर्वार्धे दूष्यम्, विक्षेपकत्वदूषणमुत्तरार्धेन। ब्रह्म तत्प्रकाश इति द्वयस्वीकारे सविशेषत्वापत्त्या ब्रह्मैव प्रकाश इति भावादिष्टम्। छादनं नाम प्रकाशाभावः। स चाभावः पूर्वं प्रकाशस्य स्थितत्वे तन्नाशरूपः। अस्थितत्वे उत्पत्तिप्रतिबन्धरूपः। यथा सूर्यप्रकाशो मेघच्छन्न इत्यादौ। अत्र ब्रह्मणोऽनादेः सत्त्वात् अविद्या तन्नाशयतीति स्यात्। अनाद्यविद्यया तच्छादनं तदुत्पत्तिनिरोधश्चेत्—ब्रह्म शशशृङ्गमेवेति सर्वथैव ब्रह्माभावः। एवमविद्याया विक्षेपशक्तिरपि नास्ति। विक्षेपणं विविधविकल्पापादनम्।

स्वयमेवाविद्यां निवर्त्योत्पद्यत इति चेन्न ; परस्पराश्रयात्तेः ; स्वोत्पत्त्या प्रतिबन्धकनिवृत्तिः तया च सेति।

एवं तिरोधानं दूषितम्। तदधीनं विक्षेपमपि विक्षिपति मिथ्येति। सर्वासु भ्रान्तिष्वधिष्ठान दोषयोः सत्यत्वम् आरोप्यस्य च मिथ्यात्वं दृष्टम्। ततश्च माध्यमिकं प्रति निरधिष्ठानभ्रमानुपपत्तिं वदन्, भ्रममूलस्य दोषस्य कथं मिथ्यात्वं ब्रवीषि॥ यद्यधिष्ठानं मिथ्या, तदा तदध्यासस्याधिष्ठानान्तरं वाच्यम्। एवं चानवस्था स्यादिति चेत्—दोषमिथ्यात्वेऽपि तदध्यासार्थं दोषान्तरापेक्षयाऽनवस्था स्यादेव॥ यदि दोषस्य स्वरूपतः प्रवाहतो वाऽनादित्वात् नानवस्थादोष इति मन्यसे, एवमधिष्ठानमिथ्यात्वेऽप्यधिष्ठानस्य दोषवदुभयथाऽ[प्य ?]नादित्वान्न दोषः स्यात्॥ अथ स्यात्—न वयं निरधिष्ठानभ्रमभीत्या अधिष्ठानस्य सत्यत्वं ब्रूमः; अपि तु "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिश्रुतिसिद्धमङ्गीकुर्म इति॥ तर्हि दोषतयाऽभिमतायाः जगत्प्रकृतेरपि, "गौरनाद्यन्तवती सा जनित्री भूतभाविनी", "अव्यक्तं कारणं यत्तन्नित्यं सदसदात्मकम्" इत्यादिभिरनश्वरत्ववचनात् सर्वकालानुवृत्त्या सत्यत्वमङ्गीकार्यम्॥ "भूयश्चान्ते विश्वमायानिवृत्तिः" इति तद्विनाशः श्रुत इति चेन्न ; पुरुषस्य मायासंबन्धनिवृत्तौ तत्र तात्पर्यात्॥ मायाशब्द एव मिथ्यात्वं बोधयतीति चेन्न ; आश्चर्यसृष्टिहेतुतया तदुपपत्तेः। अन्यथा "देवमायेव निर्मिता", "तेन मायासहस्रं तत्" इत्यादिविरोधात्। न च शुक्तिरूप्यादिषु क्वचिदपि मायाशब्दो दृष्टः। नापि मिथ्याशब्दपर्यायतया मायाशब्दं लोकवेदनिघण्टुकाराः पठन्ति। "अनृतेन हि प्रत्यूढाः" इत्यत्रानृतशब्दो न जगत्प्रकृतिविषयः, किंतु ऋतेतरदुष्कर्मपरः ; ऋतं चात्र फलाभिसन्धिरहितं कर्म स्यात्। कारणविषयत्वेऽपि ब्रह्मविषया-सच्छब्दवदान्यपर्यमवसेयम्। एतेन "नासदासीन्नो सदासीत् तदानीं", "न सत्तन्नासदुच्यते" इत्याद्यपि सदसच्छब्दाभिप्रेतव्यष्टिभेदप्रलयपरतया न तद्वैलक्षण्याय योज्यमिति॥ इति तिरोधानाद्यनुपपत्तिः॥२४

---

टी-विकल्पो भ्रमः। स च दोषात्। स कः? अविद्येव चेत्-सा हि मिथ्या। न हि मिथ्याभूतो दोषो भ्रमं जनयेत्। ज्ञानिनां सर्वेषां भ्रान्तत्वप्रसंगात्। मिथ्याभूतस्यापि भ्रमहेतुत्वे, यत्र स भ्रमः तत् सत्यमित्येव कथम्। असत्यमपि स्यात्। अधिष्ठानमपि मिथ्याभूतमेव भ्रमहेतुर्भवतु। अतः शून्यपक्ष एव स्यात्। अधिष्ठानस्य कल्पितत्वे तत्कल्पनं यत्र, तदप्यन्यदधिष्ठानं कल्पनीयमित्यनवस्था स्यादिति चेत्—तुल्यमिदं दोषमिथ्यात्वेऽपि। दोषकल्पकस्य दोषस्य कल्पनीयत्वात्। अधिष्ठानसत्यत्वं शास्त्रा-दिति चेत्—जगत्सत्यत्वमप्येकविज्ञानेन सर्वविज्ञानादिशास्त्राद् भविष्यतीति भवन्मतं निर्मूलमेव। अधिष्ठानस्य मिथ्यात्वेऽप्यनवस्था न भवति, अविद्याया मिथ्यात्वेऽप्यनवस्था नेति भवदुक्तेः, कथमिति चेत्—त्वया सादित्व एवानवस्थेति अनादित्वस्वीकारात्।

तया च सेति। प्रतिबन्धकनिवृत्त्या स्वोत्पत्तिरित्यर्थः। जगत्प्रकृतीति। जगत्कारणेत्यर्थः। कारणविषयत्वेऽपि=दुष्कर्मपरत्वं विना जगदुपादानप्रधानपरत्वे स्वीकृतेऽपि। असच्छब्दवदिति। 'असद्वा' इत्यत्र असच्छब्दो हि सच्छब्दवाच्यकार्यावस्थविलक्षणकारणावस्थब्रह्मपरः। तथा अनृत-शब्दोऽपि 'ऋ गतौ' इति धातोः ऋतं—परिणतं कार्यद्रव्यम् अनृतं-परिणामप्राग्दशापन्नं कारणमित्य-र्थपर इति भावः। 'नासदासीन्नो सदासीत्' इति सदसदनिर्वचनीयत्वं तमस उच्यत इति स मन्यते। तन्न ; सदिति जीवव्यष्टेः असदिति अचेतनव्यष्टेश्च ग्रहणेन तद्भिन्नं कारणावस्थं तम आसीदित्यु-च्यते। व्यष्टिसमष्टिभेदेत्यनुक्त्वा व्यष्टिभेदेत्येवोक्तत्वात् चेतनाचेतनव्यष्टिपरं व्याख्यातम्। ननु

(180) दोषाभावेऽप्यविद्या स्फुरति यदि ततः किं न विश्वं तथा स्यात्
सा चान्यां कल्पितां(कां) चेदभिलपति, तथा साऽपि चेत्यव्यवस्था ।
नापेक्षा चेत् अनादेः, अकलुषधिषणागोचरत्वात् सती स्यात्
ब्रह्मैवास्यास्तु दोषो यदि, न तु विरमेत् ब्रह्मणो नित्यभावात् ॥ ३५ ॥

अथाविद्यास्वरूपसिद्धिरूप ब्रह्मणस्तत्साक्षित्वं दोषनिरपेक्षं तत्सापेक्षं वेति विकल्पे पूर्वानुवादेना निष्टमाह **दोषेति** । मिथ्याभूतस्य कस्यचिद् दोषनिरपेक्षप्रकाशत्वे वियदादिप्रपञ्चस्यापि तथात्व लाघवात् स्वीकार्यमेव । न चासौ प्रपञ्चप्रतिभासहेतुर्दृष्ट , येन लोकसिद्धदोषवन्न त्यज्येतेति भाव । अनुमान तु निरसिष्यते । उत्तरानुवादेनानवस्थामाह **सेति** । अनवस्थापरिहार शङ्कते **नापेक्षेति** । स्वरूपानादे स्तावत् अविद्याया न कल्पकापेक्षा । प्रवाहानादेर्नानवस्था दोष , स्वकारणातिरिक्तानपेक्षणादिति भाव । पक्षद्वयेऽप्यनिष्टमाह **अकलुषेति** । स्वरूपानादिरविद्या निर्दोषया संविदा भाति , अन्यथा अनवस्थानात् । तथाच सत्यत्व दुस्त्यजम् ॥ [अथ ?] अविद्या स्वप्रकाशे स्वकार्यप्रकाशे च स्वयमेव दोष इति मन्यसे, तर्हि सर्वमप्यनिर्वचनीय दोषान्तरमनपेक्ष्यावभासेत, अविशेषात् ॥ अन्यदनिर्वचनीय कादाचित्कत्वात्

---

ब्र्ह्मणि–गीतायां, 'न सत् तन्नासदुच्यते' इति त्रयोदशाध्याये ब्रह्मण एव कथनात् तत्र सदसदनिर्वचनीय विवक्षा स कथ शक्नेतेति चेत्—सत्यम्, तत्र यथा ब्रह्मणि सदसदनिर्वचनीयत्वरूपार्थस्त्यज्यते, तथैवान्यत्रापीति व्युत्पादनाय तदुक्ति । तद्वैलक्षण्यायेति । सदसद्वैलक्षण्यार्थकमित्यर्थ ॥ ३४ ॥

दोषमिथ्यात्वे अधिष्ठानमिथ्यात्वमप्यस्त्विति दोषसत्यत्वमुक्तम् । मुखान्तरेणापि दोषसत्यत्वमाह दोषेति । असत्यत्वे स्फुरणमावश्यकम् । तच्च दुरुपपादमिति । दोषेति । अविद्याया कल्पितत्वे यावत्सत्त्व स्फुरणमावश्यकम् । तथैव कल्पितवस्तूना स्वभाव । तत्स्फुरण प्रति कारणतया दोषान्तर वक्तव्यम् । यदि दोषमन्य विनापि अविद्या स्फुरेत्, तत = तर्हि, विश्व = जगदेव तथा = दोष विनैव स्फुरत् कि न स्यात् । अतो विश्वस्फुरणार्थमविद्या न कल्प्या स्यात् । प्रथमपादे वाक्यभेदे एवमप्यर्थ स्यात्– 'यदि दोषाभावेऽप्यविद्या स्फुरेदिति मयोच्यते, तत किम्' इति अद्वैतिप्रश्न । नेति पृथग्वाक्य तत्खण्डनम् । तत्र हेतुरुच्यते–'विश्व तथा स्यात्' इति । विश्वमपि दोषनिरपेक्ष प्रकाशताम् अविद्याकल्पनमेव मा भूदिति स एवार्थ । अत स्फुरणार्थ दोषान्तर वक्तव्यम् । सापि काचिदविद्येति चेत्— सा अविद्या सत्या चेत्—द्वैतापत्ति । कल्पिता चेत्—तत्स्फुरणाय तृतीयाविद्या कल्पनीयेत्येवमनवस्था स्यात् । ननु प्रथमाविद्याया एवानादित्वात् कल्पकाविद्यापेक्षा नास्तीति चेत्—इयमविद्या स्वरूपेण एका भूत्वा अनादि , कि वा प्रवाहरूपेणानादिरिति किञ्चिद्विचार्यमस्ति, तदास्ताम् । सर्वथा तद्विषयकधिषणाया अकलुषत्वात् = दोषनिरपेक्ष ज्ञातत्वात्, अविद्या सत्यैव स्यात् । अथ दोषसापेक्षैव धिषणेष्यते । परन्त्वनवस्थादिपरिहारार्थं सत्यमेक यद् ब्रह्म, तदेव दोषत्वेनेष्यते इति चेत्—तर्हि अविद्याया ब्रह्माधीनत्वात् सर्वदेव स्थिति स्यात् मोक्ष एव न भवेदिति ॥

पूर्वानुवादेन = प्रथमपक्षानुवादपूर्वकम् । अविद्याया सत्यत्वपरिहाराय दोषसापेक्षत्वमिष्ट्वा अनवस्थापरिहाराय स्वस्यैव दोषत्वमपि शङ्कते अविद्येति । स्वकार्यजगत्प्रकाशे इव स्वप्रकाशेऽपि दोषविधया कारणमित्यर्थ । कल्प्यकल्पकयोरैक्य न युक्तमिति दूषणमप्यत्र भाव्यम् । तर्हीति । स्वकार्य प्रकाशकस्य दोषत्व किमर्थम् । तथा सर्पादिप्रकाशेऽपि दोषत्वेन किञ्चित् कारण मा भूदिति भाव । किमत इति । कार्यस्य कारणापेक्षा युज्यते । दोषत्वेन कस्यचिदपेक्षा कुत इति । ननु

कारणमपेक्षत इति चेत्, किमतः ? न हि मृदादयो घटादीनां हेतवोऽपि दोषा इति व्यवह्रियन्ते। न च स्वेष्टमुक्तिहेतोर्दोषत्वं ब्रूपे। भवन्तु वा हेतवो दोषाः। अविद्याप्रवाहवादिभिः पूर्वनिवृत्तावप्युत्तरस्य स्थैर्यमङ्गीकृतम्; चिरप्रकाशश्च। तत्र दोषनिवृत्तावपि सिध्यता प्रकाशेन प्राग्वत् विषयस्य सत्यत्वं प्रसज्येत॥ सामग्र्यवस्थपूर्वदोषचरमक्षणजनितौ उत्तरप्रकाशौ चिरमनुवर्तेते इति चेन्न; विषयस्थैर्येऽपि वृत्तिप्रकाशानामाशुतरविनाशित्वाभ्युपगमात्। सामग्रीसन्तत्या धारावाहिकदृष्टेश्च। न चाध्यासकाल एवाविद्या भाति, पश्चात्तु स्वरूपेणैवावतिष्ठत इति वाच्यम्; संविदधीनस्वसिद्धेस्तस्या अप्रकाशमानक्षणावस्थानायोगात्॥ ईश्वरस्य भातीति चेन्न; ईश्वरस्य बुद्धेरप्यदोषायत्तप्रकाशत्वे तद्विषयस्य सत्यत्वं सिध्येत। दोषायत्तत्वे तु तद्दोषप्रकाशो निर्दोषस्य सदोषस्य वेति विकल्पदौःस्थ्यं प्राग्वत्।

अथान्यनिरपेक्षं ब्रह्मैवाविद्याप्रकाशप्रयोजको दोष इति शङ्कते ब्रह्मेति। एवं सति स्वरूपतः प्रवाहतो वाऽनादिरविद्या नोच्छिद्यत इत्याह **न त्विति**। तत्र निरपेक्षदोषानुवृत्तिं हेतुमाह **ब्रह्मण इति**॥ तत्त्वधीप्रागभावविशिष्टस्य दोषत्वात् तदभावे कथमविद्या भासेतेति चेत्, हन्तैवं प्राप्ताप्राप्तविवेकेन तत्त्वधीप्रागभावस्यैव दोषत्वमायातम्; अलं भावरूपाविद्यादोहलेनेति॥ **इत्यविद्यादर्शनानुपपत्तिः॥३५॥**

(अथ प्रमाणानुपपत्तिः)

**(181) ज्ञातेऽज्ञातेऽप्यभावः खलु दुरवगमस्संविदः ; तेन भावः**
**स्यादज्ञानं यदी(यदि, इ)दृप्यपरिहृतमिदं तद्विरोधादिसाम्यात्।**
**तुल्यैवाऽऽकारभेदात् परिहृतिरुभयोः ; बन्धुस्त्वत्राधिका ते ;**
**मुग्धोऽस्मीत्यादिसाक्षात्कृतिरपि नियतं तत्प्रतिद्वन्द्विगर्भा॥ ३६॥**

---

आ—कारणमपेक्षत इति। तत्कारणं दोष इति भावः। किमत इति। कारणदोषयोर्भिन्नत्वात् कारणापेक्षायामपि न दोषापेक्षेति भावः। हेतूनां दोषत्वमङ्गीकृत्य प्रवाहानादित्वपक्षे दोषमाह भवन्तु वेति। उत्तरप्रकाशाविति। उत्तराविद्यास्वरूपं तत्प्रकाशश्चेत्यर्थः॥ ३५॥

भा—हेत्वपेक्षैव दोषापेक्षेत्यत्राह नहीति। मुक्तिहेतोरिति। तत्त्वज्ञानस्येति शेषः। अनिर्वचनीयं प्रति ये हेतवः ते दोषा इत्युक्तावपि प्रवाहानाद्यविद्यापक्षे दोषं वक्तुमाह भवन्त्विति। सत्यत्वप्रसज्येतेति। अनिर्वचनीयत्वे दोषनिवृत्तौ स्थितेः प्रकाशस्य चायोगादिति भावः। उत्तरप्रकाशौ=दोषतयोपगतपूर्वाविद्याकार्यद्वितीयाविद्याविषयकः प्रकाशस्तत्कार्यप्रपञ्चविषयप्रकाशश्चेति द्वौ। पूर्वव्याख्योक्तोऽर्थो वा। दोषनाशे प्रकाशोत्पत्त्ययोगेऽपि जातस्यानुवृत्तौ न दोष इति भावः। विषयस्थैर्येऽपीति। दोषाभावे दोषकार्यविषयसत्ताऽपि न युक्ता। नतरां प्रकाशसत्तेति। अध्यासकाले=कल्पनारम्भे। अवतिष्ठते=न तु भातीत्यर्थः। ईश्वरस्य बुद्धेरपीति। ईश्वरबुद्धेरपीत्यर्थः। दोहलेन=आशया॥३५॥

एवमविद्यारूपदोषस्य सत्यत्वस्थापनशेषतया दर्शनानुपपत्त्या कल्पितत्वासंभव उक्तः। एवं छादनविक्षेपशक्ती निरस्ते। अथ भावरूपाविद्यायां प्रमाणानुपपत्तिः प्रपञ्च्यते। प्रथमं प्रत्यक्षप्रमाणायोगः ज्ञात इति श्लोकेन। यदीत्यन्तेन पूर्वपक्षानुवादः। अहमज्ञ इत्यज्ञानप्रत्यक्षं तावत् आनुभविकम्। तत्र विषयभूतमज्ञानं ज्ञानाभावो वा भावात्मकं वेति विचार्यम्। नेदमभावात्मकम्। प्रत्यक्षं हि वर्तमानग्राहि। ज्ञानाभावप्रत्यक्षकाले प्रत्यक्षरूपज्ञानसत्त्वे ज्ञानाभावः कथं स्यात्।

ननु यत् अज्ञानमात्मसाक्षिकं भाति, तत् भावरूपमेव स्यात्, ज्ञानप्रागभावस्य दुर्ग्रहत्वादिति शङ्कते ज्ञात इति। अयं भावः—अभावो ह्याश्रयप्रतियोगिनिरूप्यः; प्रतियोगि च ज्ञानम्; तत्र सर्वज्ञानाभावस्तावन्न कदाचिदपि ग्राह्यः; अभावज्ञानस्य तदाश्रयप्रतियोगिज्ञानस्य च विद्यमानत्वात्। अथ विषयविशेषावच्छिन्नस्य ज्ञानान्तरस्य प्रागभावः सुग्रह इत्युच्येत; तदपि न, विषयविशेषज्ञान-सदसद्भावयोस्तज्ज्ञानाभावस्य दुर्ग्रहत्वात्। षष्ठप्रमाणवेद्यश्चाभावः कथमपरोक्षधीविषयः स्यात्? भाव

---

श्री—प्रत्यक्षातिरिक्तज्ञानपक्षेऽप्ययं दोषोऽस्त्येव। ज्ञाने सति ज्ञानाभावरूपाज्ञानवर्तमानतायाः दुर्वचत्वात्। श्लोकार्थस्तु—लोके अभावज्ञानं प्रति प्रतियोगिनः आश्रयस्य च ज्ञानमपेक्षितम्। 'अघटं भूतलम्' इति ज्ञानं हि घटस्य प्रतियोगिनः, भूतलरूपाश्रयस्य च ज्ञानं विना न भवति। 'अहं ज्ञानाभाव-वान्' इत्यत्र च ज्ञानं प्रतियोगि, अहमर्थ आश्रयः। तदुभयज्ञाने सति ज्ञानस्यैव सत्त्वात् ज्ञानाभावो न वर्तेत। ततो न तत्प्रत्यक्षम्। यदि तदुभयविषयकज्ञानं न स्यात्, कारणाभावात् अभावज्ञानं न भवितुमर्हति। तथा 'अहं ज्ञानाभाववान्' इत्यत्र अहमर्थस्य-ज्ञानस्य च घटकतया घटकपदार्थग्रहणाभावे तद्घटितपदार्थज्ञानमपि न भवितुमर्हति। तथा च प्रतियोग्यादौ ज्ञातेऽपि संविदभावो दुरवगमः= प्रत्यक्षाविषयः; अवर्तमानत्वात्। अज्ञातेऽपि प्रतियोग्यादौ, तद्विशिष्टोऽभावः दुर्ग्रह इति। तेन= तस्माद्धेतोः अज्ञानं भावः स्यात्=भावरूपं स्यात्। भावस्य सप्रतियोगिकत्वाभावात् न प्रतियोग्य-पेक्षेति तज्ज्ञानाभावेऽपि भावरूपस्याज्ञानस्य ज्ञानं भवितुमर्हतीति। इदं निरस्यति इहापीति। भावरूपा-ज्ञानपक्षेऽपि इदं दूषणमपरिहृतम्। भावरूपमपि तत् अज्ञानमित्येव हि प्रतीयते। अज्ञानमित्यस्य च न ज्ञानमज्ञानमित्येव विवरणम्। तत्र ज्ञानाभाव इत्यर्थत्यागेऽपि ज्ञानभिन्नमिति ज्ञानविरोधीति वाऽर्थो वाच्यः। 'तदन्य-तद्विरुद्ध-तदभावेषु नञ्' इत्यनुशासनात्। एवञ्च 'घटाज्ञानवान् अहम्' इति, 'ब्रह्मा-ज्ञानवान् अहम्' इति वा ज्ञाने घटादेर्ब्रह्मादेश्च ज्ञानस्यापेक्षितत्वात् तस्मिन् सति तद्विरोधित्वेनेष्टमज्ञानं कथं स्यात्। कथञ्चाविद्यमानस्य प्रत्यक्षम्। अथाऽऽकारभेदादविरोध इत्याशंकां परिहरति तुल्येति। घटब्रह्मादेः सामान्येन ज्ञानमस्ति, तदेव विशेषरूपेणाज्ञानं भानरूपमपीत्यविरोध इतीदं ज्ञाना-भावपक्षेऽपि तुल्यम्। तुल्यत्वेऽस्मत्पक्ष एवास्त्विति तु न शंक्यम्—भावात्मकाप्रसिद्धकल्पना ह्यधिका त्वन्मते। ननु न कल्पयामः; प्रत्यक्षसिद्धत्वात्। अज्ञानमिति प्रत्यक्षे प्रतियोगिसापेक्षत्वं स्यान्नाम। 'मुग्धोऽस्मि' इति, 'मोहवानहम्' इति प्रत्यक्षे मोहत्वेनैव भानात् न ज्ञानादिभानमित्यत्राह मुग्ध इति। यथा तेजोऽभावस्तम इति पक्षे व्यवहारे तमश्शब्दस्य तेजःपदाघटितस्य प्रयोगेऽपि तत्प्रत्यक्षं तेजसा सहैवाभावं विषयीकरोति, तथाऽज्ञानमिति ज्ञानविरुद्धमिति ग्रहीतमेव मोहशब्देन व्यवह्रियते। विशिष्य ज्ञानवाचकपदस्याघटनेऽपि मोहशब्दात् अज्ञानं ज्ञानविरोधीत्येवार्थप्रतीतिः। अतो मोहविषयकसाक्षात्कारोऽपि नियमेन तस्य मोहस्य अज्ञानस्य यत् प्रतिद्वन्द्वि घटज्ञानं ब्रह्मज्ञान-मित्येवंरूपम्, तद्गर्भा=तद्घटिता। विशिष्टस्य साक्षात्कारे विशेषणग्रहणमप्यस्त्येवेति। यद्वा तस्य घटज्ञानादेः प्रतिद्वन्द्वित्वेनैवाज्ञानविषयिणीत्यर्थः॥

अभावज्ञानस्येति। ज्ञानाभावज्ञानं वा अभावप्रतियोगिनो ज्ञानस्य ज्ञानं वा अभावाश्रयस्याह-मर्थदिज्ञानं वा यद्यस्ति, तदा ज्ञानाभावरूपमज्ञानं कथं स्यादित्यर्थः। तदभावे च न तत्प्रत्यक्षमिति। अथेति। सामान्यतो ब्रह्मज्ञानमस्ति, विशेषरूपेण ब्रह्मज्ञानस्य प्रागभावोऽपि तदा स्यादिति तद्ग्रहण-मिति शंका। नेति। तत्प्रागभावं प्रति विशेषरूपवद्ब्रह्मज्ञानस्यैव प्रतियोगित्वात् तद्रूपेण प्रति-योगिज्ञानाभावे तदभावज्ञानं कथम्। तद्रूपेण प्रतियोगिज्ञाने च तदभावः कथमित्यर्थः। न चान्यत्

रूपाज्ञाने तु न तावत् भावाभावरूपत्वविरोध ; न चान्यत् किंचिदिह स्यादिति । अतः स्वेष्टस्य फलितत्वमाह तेनेति । ईदृशं दुर्ग्रहत्वं त्वदिष्टेऽपि स्यादिति प्रत्याह इहापीति । तत्र तदुक्तमेव हेतुमाह तद्विरोधेति । भावरूपस्यापि ह्यज्ञानस्य ज्ञानविरोधित्वं समानम् ; तस्य तद्बाध्यत्वाभ्युपगमात् । आदिशब्देन विषयविशेषनिरूप्यप्रतिसंबन्ध्यादिसापेक्षत्वग्रहः । अपरोक्षधीविषयत्वं च मतान्तरेणाभावस्याप्यस्ति । षष्ठप्रमाणवेद्यत्वेऽपि विरोधस्समः । तत्रापि प्रमाणतयाऽभिमत उपलब्ध्यभाव. केनचित् प्रमाणेन निर्धार्यते । तेन च ज्ञानप्रागभावोऽपि गृह्यमाण आश्रयप्रतियोगिस्वधीसद्भावे कथं सिध्येत् ॥ मा भूत् ततोऽपि ज्ञानाभावग्रह इति चेत्—तन्न ; ज्ञानाभावस्य दुर्ग्रहत्वं साधयताऽपि हि गृहीत एव ज्ञानाभावः । अन्यथा कथं प्रमाणज्ञानं पक्षीकृत्य स्वप्रागभावव्यतिरिक्तेत्यादि वक्ष्यसि ? देवदत्तप्रमा पक्षीकारेण, "तत्स्थप्रमाभावातिरेकिण·" इत्यादि च ? ननु भावरूपाज्ञानग्रहणे किं तदितरज्ञानेन ; प्रतियोग्यादिनिरपेक्षत्वादिति चेन्न—अज्ञानमिति गृह्यमाणस्य तदन्यतया तद्विरोधितया तदभावतया वा प्रतीतौ प्रतियोग्यादिभिर्नैरपेक्ष्यायोगात् । नन्वज्ञानावच्छेदकतया सामान्यत. किंचिद्विषयं प्रतियोगि

---

पृ-नचान्यत् किञ्चिदिति। विरोधा(ध्य?)न्तरमित्यर्थः। विषयविशेषनिरूप्यप्रतिसम्बन्ध्यादिसापेक्षत्वमिति । विषयविशेषनिरूप्यं यज्ज्ञानं प्रतिसम्बन्धि, तत्सापेक्षत्वादित्यर्थः । आदिशब्देन विषयग्रहः । भावरूपस्याप्यज्ञानमिति सिद्ध्यतः एतज्ज्ञानविरोधीति वा एतद्विध्वंस्य(?)मिति वा प्रत्येतव्यत्वात् उक्तदोषो दुर्वार इति भावः । केनचित् प्रमाणेन निर्धार्यत इति । उपलब्ध्यभावस्य सत्तया हेतुत्वे तज्जन्यज्ञानस्य अज्ञातकारणकतया प्रत्यक्षत्वापातात् तज्ज्ञानमावश्यकमिति भावः । ननु अज्ञानावच्छेदकतयेति । भावरूपाज्ञानावच्छेदकं सविषयं ज्ञानम् । साक्षिचैतन्यं च सामान्यतो विषयावच्छिन्नं प्रतियोगिभूतं तदानीं अविद्यमानज्ञानमेव गृह्णाति, ज्ञाताज्ञातग्राहित्वात् । तत्र भावरूपाज्ञानविरोधि । प्रमाणजन्यं विशेषतो विषयग्राहिज्ञानमेव विरोधि ; अतो भावरूपाज्ञानग्रहणमुपपन्नमित्यर्थः ॥ ३६ ॥

श्री—किञ्चिदिति । तत् प्रति तदभावस्येव तदभावव्याप्यस्यापि विरोधित्वमस्ति । भावरूपमज्ञानं तदुभयविलक्षणमित्यर्थः । मतान्तरेणेति । तार्किकमते ह्यभावस्यापि इन्द्रियग्राह्यत्वमिष्टम् । ज्ञानाभावश्च मानसप्रत्यक्षवेद्यः । मीमांसकानामद्वैतिनाञ्चानुपलब्धिरूपषष्ठप्रमाणगम्यः ।

ननु प्रत्यक्षकाले विषयस्याऽऽपि वर्तमानत्वस्यावश्यकतया ज्ञान-ज्ञानाभावयोर्यौगपद्यायोगात् प्रत्यक्षविषयभूतमज्ञानं भावरूपमेव । ज्ञानाभावग्रहणं तु षष्ठेन प्रमाणेनानुपलब्ध्याख्येनेति ब्रूम इत्यर्धनिशंकायां तत्रापि विरोधस्य समत्वं षष्ठेत्यारभ्य, 'कथं सिध्येत्' इत्यन्तेनोपपादयति । तत्रापीति । प्रमेयभूतस्य ज्ञानाभावस्येव प्रमाणभूतस्योपलब्ध्यभावस्यापि मानान्तरवेद्यत्वात् तत्रापि प्रतियोगितदभावयौगपद्यायोगरूपोऽधिको दोष इति भावः । इदमत्राकूतम्—अनुपलब्धिप्रमाणं किं स्वरूपसत् प्रमाणम्, उत ज्ञायमानम् । आद्ये वर्तमानविषये एव तदधीनं ज्ञानमिष्टमिति ज्ञानाभावो न गृह्येत । अन्त्ये प्रमाणस्यापि दुर्ग्रहत्वमिहोक्तमिति । स्वधीति । आश्रयधीः प्रतियोगिधीः अभावधीश्च । ज्ञानाभावस्याग्राह्यत्वे तदसिद्धौ सुतरां सर्वत्र भावरूपाज्ञानस्यैव सिद्धिरिति मनोरथेन पृच्छति मा भूदिति । देवदत्तेति । इदमनुमानं चित्सुखोक्तमष्टमिश्लोके द्रष्टव्यम् । नन्विति । प्रतियोगीति पृथक् पदं ज्ञानवाचि । किञ्चिद्विषयं—प्रमेयघटपटादिर्यत्किञ्चिद्विषयकम् । विशेषरूपेण प्रतियोगिग्रहणमेव भावरूपाज्ञानविरोधि । न तु सामान्यतो ग्रहणम् । सामान्यतो ग्रहणस्य साक्षिचैतन्यरूपतया वृत्तिज्ञानस्याज्ञानविरोधितया न तेनाज्ञानभंगः । प्रत्युत अज्ञानग्रहणस्य तत् कारणविधयाऽनु-

साक्षिचैतन्येन ज्ञाताज्ञातसर्वग्राहिणा विषयीक्रियते, विशेषतस्तु गृह्णत् प्रमाणज्ञानं चानादिभावरूपाज्ञानं बाधकमिति । तत्राह तुल्येति । अभावरूपेऽप्यज्ञाने तथैव प्रतियोगिधीर्व्यवस्थितेति न विरोध इत्यर्थः । तुल्यत्वे कथमितरप्रद्वेष इत्यत्राह कल्प्तिरिति । लाघवादभावपक्ष एव ग्राह्य इति भावः । स्यादेतत्—प्रतिसंबन्ध्यपेक्षानियमे हि प्रतिबन्ध्यवतारः, स्वरूपेण तु 'मुग्धोऽसि', 'मूढोऽसि' इत्यज्ञानं साक्षिणा प्रकाश्यते, अतो न विरोध इति । तत्राह मुग्ध इति । अयं भावः—मोहादिशब्दा स्वरूपत बुद्ध्यभावरूढा सविषयप्रतियोग्यवच्छिन्नमेव स्वार्थमुपस्थापयन्ति प्रलयादिशब्दवत्, नत्प्रयोगाभावमात्रात् नैरपेक्ष्याभिमान इति ॥ इति भावरूपाज्ञानप्रत्यक्षत्वभङ्गः ॥ ३६ ॥

(182) स्वाजन्मान्य-स्वदेश्य-स्वविषयवृतिकृत्-स्वव्यपोह्यार्थपूर्वा
ध्वान्तोत्थाद्यप्रभावत् विमतमितिरिहापूर्वनिर्भासनाच्चेत् ।
अज्ञानाज्ञानमैत्री किमियमनुमितिः, स्वेष्टभङ्गोऽन्यथा तु
व्यर्थाऽसाविन्द्रियादिव्यतिचरणमसिद्ध्यादि च स्यात् विकल्पे ॥ ३७ ॥

---

वी— कृत्स्नमेवेति शङ्कितुराशय । ज्ञाताज्ञातेति । तदुक्तं श्रीभाष्येऽपि, "सर्वमेव विषयजातं ज्ञाततया अज्ञाततया वा साक्षिचैतन्यस्य विषयभूतम्" इति । प्रतियोग्यवच्छिन्नम्—घटादिविषयकज्ञानरूपप्रतियोगिविशेषितमभावमेव ॥ ३६ ॥

प्रत्यक्षं विचारितम् । अनुमानद्वय तदुक्तम् । तत्र चित्सुखोक्तमुपरि वक्ष्यति । शाङ्करभाष्यव्याख्याभूतायां पञ्चपादिकाया यद् विवरणम्, तत्रोक्तं भावरूपाज्ञानानुमानं पूर्वार्धेनानूद्य उत्तरार्धेन निरस्यति स्वाजन्मेति । अजन्म=अनुत्पत्तिः प्रागभावः । स्वाजन्मान्येति । स्वप्रागभावव्यतिरिक्तेत्यर्थः । अर्थस्य विशेषणम् । स्वदेश्येति स्वदेशगतत्वरूपविशेषणान्तरम् । वृतिः = आवरणक्रिया । तत्कृत्—आवारकम् । स्वविषयावरणत्वमन्यत् विशेषणम् । स्वव्यपोह्येति स्वनिवर्त्यत्वरूपविशेषणमुक्तम् । एतत्पादोक्तक्रमेण वृत्ता विशेषणानामनुवादः । ज्ञानप्रागभावमादाय सिद्धसाधनवारणाय स्वाजन्मान्येति । घटप्रमया पुरुषनिष्ठस्याज्ञानस्यैव घटगताया अज्ञाततायाः अपि निवर्तनात् सिद्धसाधनं स्यादिति स्वदेश्येति । घटप्रमोत्पादकादृष्टमादाय सिद्धसाधनवारणाय स्वविषयवृतिकृदिति । स्वप्रतिबन्धकादृष्टमादाय सिद्धसाधनपरिहाराय स्वव्यपोह्येति । एवं दलकृत्यवर्णने लघुमार्गः शतदूषण्यां दर्शितः । विमतमितिरिति पक्षः । विवादाध्यासितं प्रमाणज्ञानमित्यर्थः । प्रथमपादोक्तविशिष्टवस्तुपूर्वकत्वं साध्यम् । प्रमाणज्ञानं नाम प्रमाभूतं घटादिज्ञानम् । भ्रान्तिज्ञानस्य स्वविषयावरणाज्ञानपूर्वकत्वाभावात् बाधः स्यादिति प्रमाणज्ञानमित्युक्तम् । धारावाहिज्ञानेषु द्वितीयादौ साध्याभावात् बाधदोषः स्यादिति तद्वारणाय विमतेत्युक्तम् । विवादास्पदप्रमामात्रं ग्राह्यम् । इहेति ज्ञानेषु इत्यर्थः । ज्ञानेषु विमतमितिरित्यन्वयः । अपूर्वनिर्भासनादिति हेतुः अप्रकाशितार्थप्रकाशकत्वादित्युक्तं भवति । तत्र अप्रकाशितेत्यस्यानुक्तौ धारावाहिकज्ञाने साध्याभाववति प्रकाशकत्वरूपहेतुसत्त्वात् व्यभिचारः स्यात् । प्रथमज्ञानप्रकाशितप्रकाशकमेव तत् नापूर्वप्रकाशकमिति न व्यभिचारः । दृष्टान्तमाह ध्वान्तोत्थाद्यप्रभावदिति । अन्धकारोत्पन्नप्रथमप्रभावदित्यर्थः । द्वितीयप्रभाया तमोनिवर्तकत्वाभावात् आद्येति, प्रथमेति । निस्तमस्के स्थले दीपे एकस्मिन् ज्वलति द्वितीयदीपारोपणे तदीयप्रथमप्रभाया अपि स्वनिवर्त्यपूर्वकत्वाभावात् दृष्टान्तत्वायोगात् अन्धकारे इति ध्वान्तोत्थ इति विशेषितम् ।

अथ (अत्र) **पञ्चपादिका** विवरणोक्तमनुमानमनुभाषते **स्वाजन्मेति**। विप्रतिपन्नं मानज्ञानं स्वप्राग भावव्यतिरिक्तस्वदेशगतस्वविषयावरणस्वनिवर्त्यवस्त्वन्तरपूर्वकम् अप्रकाशितार्थप्रकाशकत्वात् अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति प्रयोगः। अत्रैतदनुमानज्ञानं स्वविषयावरणनिवर्तकं न वेति विकल्पे प्रथममनुयुङ्क्ते **अज्ञानेति**। तदभ्युपगमेऽनिष्टमाह—**स्वेष्टभङ्ग** इति। अज्ञानस्य ह्यज्ञानान्तरावृतत्वे तदपि तथेत्यनन्तादियावल्लिगौरवं स्यात्। आवृता च साक्षिणा न दृश्येत। तत्कटाक्षविरहादलब्धस्वरूपा वन्ध्यासुतेव न प्रजाः प्रजनयेदिति भावः। द्वितीयमनूद्य दूषयति **अन्यथा त्विति**। यदि अज्ञानविषयाज्ञानमनयाऽनुमित्या न निरस्येत, निष्फलैवासौ प्रसज्येत; निरसनीयाभावात्; प्रकाशितमात्रप्रकाशकत्वाद्वा।

अपि चेयमनुमितिः पक्षकोटिस्तदन्या वा। आद्ये अंशतो बाधः; द्वितीये तस्यामतिचारः। हेतुविकल्पे च दोषानाह **इन्द्रियादिष्विति**। अयं भावः— प्रकाशहेतुत्वमिह (1) ज्ञानहेतुत्वम्, (2) ज्ञानकरणत्वम्, (3) तदनुग्राहकत्वम्, (4) ज्ञानत्वम्, (5) विषयविस्फुरणरूपत्वम्, (6) स्वविषयावरणनिरासकत्वम्, (7) अन्यद्वा किञ्चित्। नाद्यः, आत्मादृष्टादिभिरनैकान्त्यात्; ज्ञानस्य च ज्ञानहेतुत्वनियमाभावात्। अत एव न द्वितीयतृतीयौ; इन्द्रियादिष्वतिचाराच्च। नापि चतुर्थ, दृष्टान्तस्य साधनविकलत्वात्, साक्षिज्ञाने च विपक्षे हेतुवृत्तेः सपक्षवृत्त्यभावाच्च विरुद्धत्वापत्तेः। नापि पञ्चमः, पक्षसपक्षयोर्हेतुवृत्त्यभावादेव।

अभि— स्वप्रागभावव्यतिरिक्तेति। वस्त्वन्तरपूर्वकत्वमित्युक्ते इन्द्रियादिना अर्थान्तरता स्यादिति स्वनिवर्त्येत्युक्तम्। स्वप्रागभावेनार्थान्तरतापरिहारार्थं स्वप्रागभावव्यतिरिक्तेति। वेद्यगतविषयाभिव्यक्तिप्रागभावेनार्थान्तरतापरिहाराय स्वदेशगतेति। ज्ञानफलकादृष्टेन फलविनाश्येनार्थान्तरतापरिहाराय, भयादिना अर्थान्तरतापरिहाराय वा स्वविषयावरणेति। इति विशेषणप्रयोजनम्। ज्ञानस्य च ज्ञानहेतुत्वनियमाभावादिति। येषु ज्ञानेषु ज्ञानहेतुत्वं नास्ति, तेषु हेतोरसिद्धिरिति भावः। अत एवेति। कारणत्वानुग्राहकत्वयोरनिष्पन्नियतत्वादेवेत्यर्थः। पक्षसपक्षयोर्हेतुवृत्त्यभावादिति। विषयस्फुरणस्य तद्गतव्यवहारानुगुण्यरूपस्य ज्ञानदीपप्रभयोरभावादित्यर्थः। यत्तु कैश्चिदुक्तम्—"साक्षाद्वा परम्परया वा व्यवहारानुगुण्यापादकत्वमते न पक्षदृष्टान्तयोर्हेत्वभावः। न च इन्द्रियेष्वनैकान्त्यम्—भासमानत्वे सतीति विशेषणात्। नापि धूमादिष्वनैकान्त्यम्—अपरोक्षव्यवहारानुगुण्यापादकत्वस्य विवक्षितत्वात्" इति—तदयुक्तम्। 'चिदाध्यासितं प्रमाणज्ञानम्' इति युष्मत्तीर्थकरैः प्रमामात्रस्यैव...

श्री—निरस्यति अज्ञानेति। अन्ते स्थितं 'विकल्पे' इति पदं प्रथमं ग्राह्यम्। विकल्पे क्रियमाणे। इयम् प्रकृतप्रयोगाधीना अज्ञानसाधिका अनुमितिः अज्ञानाज्ञानमेतन्नी। किम् अग्निसाधकानुमितेरन्यज्ञाननिवर्तकत्ववत् अज्ञानसाधकानुमितेरज्ञानाज्ञाननिवर्तकत्वमिष्टश्चेदित्यर्थः तदा स्वेष्टभंगः। एतदनुमानात् पूर्वमज्ञानस्य ज्ञानान्तरावृतत्वसिद्ध्या तस्य साक्षिभास्यत्वाभावात् कार्यकरत्वमेव न स्यात्। प्रपञ्चानुदयः अनुमानस्याप्यनवकाशः। अन्यथा तु= अज्ञानाज्ञाननिवर्तकत्वं नेति कल्पान्तरस्वीकारे इयमनुमितिर्व्यर्थैव स्यात्। पूर्वमेवाज्ञानस्य भानत्वात्। अथ च विकल्पे—हेतुः किंरूप इति विकल्पान्तरे प्रकाशकत्वस्य ज्ञानहेतुत्वादिरूपत्वे इन्द्रियादिष्वपि हेतुसत्त्वात् साध्याभावात् अतिचरणम्= व्यभिचारः। पक्षभूतानां ज्ञानानां सर्वेषां ज्ञानहेतुत्वनियमाभावात् हेतोर्भागासिद्धिः। प्रकाशकत्वं व्यवहारानुगुण्यापादकत्वं चेत्, दृष्टान्ते प्रभायां तदभावात् साधनवैकल्यमादिपदग्राह्यम्॥

प्रथमे साध्यविकल्पे दूषणान्तरं समुच्चिनोति अपि चेयमिति। तस्यामतिचार इति। हेतं-

नापि षष्ठ, तस्य साध्यानुप्रविष्टत्वात् । सप्तमस्तु कश्चिन्न दृश्यत एवेति । चकारात् दोषान्तराण्यपि द्योत्यन्ते । तथा हि—स्वप्रागभावव्यतिरिक्तेति स्वदेशगतेति च पृथगुपादानं निरर्थकम्, अभावव्यतिरिक्तेत्येनैव वेद्यगतत्व(वि)षयाभिव्यक्तिप्रागभावस्यापि व्यवच्छित्तेः । स्वविषयावरणे च स्थिते स्वोत्पत्तिरेव न सम्भवतीत्युक्तम् । ब्रह्माश्रयतया चाभ्युपगतस्य विश्वप्रकृतेः तदज्ञानस्य न घटाद्यज्ञानवत् प्रमाणज्ञानदेशगतत्वं युक्तमिति ॥ इति पञ्चपादिकाविवरणोक्तभावरूपाज्ञानानुमानभङ्गः ॥३७॥

(188) यच्चोक्तं दैवदत्ती मितिरियमितिन्यायतो हन्त्यनादि

मात्वात् तन्मित्यभावाधिकमिति, तदपि स्यादबाधं विपक्षे ।

सर्वा— कारात् हेतो भागासिद्धिप्रसङ्गात् । तत्रापि प्रत्यक्षप्रमामात्रपक्षीकरणविवक्षाकल्पने तेषामकौशलाऽऽविष्करणमात्रम् । 'तत्त्वमस्यादि वाक्यजन्यज्ञानस्याविद्यानिव सिद्धिप्रसङ्गात् । न च वाक्यजन्यं प्रत्यक्षं निवर्तकम् शब्दजन्यप्रत्यक्षस्य निराकृतत्वात् । किञ्च अनुमानागमादिज्ञानेषु भावरूपाज्ञाननिवर्तकत्वमस्ति, न वा? न चेत्—प्रत्यक्षप्रमा न भावरूपाज्ञाननिवर्तिका प्रमात्वात् अनुमित्यादिवत् इति त्वदीयानुमानस्य बाधप्रतिबन्धयोरन्यतरापात । तद्विषयावारकाज्ञानस्यानिवृत्ततया तत्तद्विषयव्यवहारविलोपप्रसङ्गश्च । न च तत्र विषयावरणमेव नास्तीति वाच्यम् तेषां प्रत्यक्ष णेऽप्यावरणनिवर्तकत्वाभावप्रसङ्गात् । अस्तु, किं नश्छिन्नमिति चेत्—त्वदुक्तानुमानस्य तत्र व्यभिचारेण च्छेद । तेष्वपि निवर्त्याज्ञानपूर्वकत्वमस्तीत्यत्र किं प्रमाणम्? अनुमानान्तरमिति चेत्— सर्वप्रमाणसाधारण्येन अनुमाने सम्भवति, किं प्रत्यक्षमात्रपक्षीकरणेनेति ॥ ३७ ॥

श्री—गीर्वाणे इदम् । तदभावे अनुमितिवैयर्थ्यं प्रागेवोक्तम् । निर्भासन प्रकाशकत्व व्यवहारानुगुण्यापादनमित्याशयेन ज्ञानत्वमिति फल । निर्भासन स्फुरणमित्यनन्तरफल्य । स्वदेशगतेति घटगताया अज्ञाततायाः वारणायेत्युक्तं तैः । अज्ञातता नाम ज्ञातताप्रागभाव वृत्त(विषय)भिव्यक्तिप्रागभाव । विषयभिव्यक्ति —विषयधीनविषयाभिव्यक्ति । तद्वारण स्वप्रागभावव्यतिरिक्तेत्येतत्स्थाने अभावव्यतिरिक्तेति निवेशादेव भवति । किं वृथाऽधिकस्युक्तया दलान्तरस्यापि निवेशेनेति भाव । उक्तमिति । स्वविषयावरणस्य स्वनिवर्त्यत्व न भवति विषयाच्छादके विद्यमाने स्व ज्ञान कथ जायेत । आवरणत्व हि ज्ञानप्रतिबन्धकत्वम् । अन्येनावरणे निरस्ते पश्चात् प्रतिबन्धकाभावात् ज्ञान जायेत । अतो न तस्य स्वनिवर्त्यत्वम् । प्रमाणज्ञानदेशेति । अज्ञानस्य ब्रह्माश्रितत्वपक्षे प्रमाणज्ञानस्य जीवाश्रितत्वात् स्वदेशगतत्वरूपदलमपि न भवतीत्यर्थ । इदमनन्तरश्लोके विशदयिष्यते ॥ ३७ ॥

श्रीभाष्योक्त विवरणानुमानदूषण विवृतम् । अथ स्वयं भावरूपाज्ञानसाधकमनुमानान्तर चित्सुखोक्तमनूद्य निरस्यति यच्चेति । दैवदत्ती मितिरिति पक्ष, तन्मित्यभावाधिकमनादि हन्तीति साध्यम् मात्वादिति हेतु । इतरस्य=यज्ञदत्तादेर्मितिर्दृष्टान्त । देवदत्तगतप्रमा तदीयमित्यभावातिरिक्तानादिकिञ्चिन्निवर्तिका प्रमात्वात् यज्ञदत्तादिप्रमावत् । यज्ञदत्तप्रमया स्वप्रागभाव एव निवर्त्यते न तु देवदत्तप्रमाप्रागभाव । प्रागभावश्चानादि । साध्यघटकतच्छब्देन देवदत्तस्यैव ग्रहणम् । तदीयप्रमाप्रागभावातिरिक्तस्वप्रागभावरूपानादिकिञ्चिन्निवर्तकत्वात् दृष्टान्ते समन्वय । देवदत्तप्रमाया स्वप्रागभावनिवर्तकत्वमादाय सिद्धसाधनं मा भूदिति अतिरिक्तान्तनिवेश । तदतिरिक्तध्वंसादिनाशमादाय सिद्धसाधनवारणाय अनादीति । एवञ्च प्रागभावातिरिक्त देवदत्तीयमनादि अन्याभावात् अज्ञानमित्येव सेत्स्यति अभावातिरिक्तोक्त्या भावत्वसिद्धिश्चेति । इतीति । इति

नाभावो भावतोऽन्यो न च पुरुषभिदाऽप्येकजीवत्ववादे
दृष्टान्ते ध्वंसकत्वं न च विदितमिदं ध्वंसतामात्रसिद्धेः ॥ ३८ ॥

यत्तु कश्चिदाह—"देवदत्तप्रमा तत्स्वप्रमाभावातिरेकिणः । अनादेर्ध्वंसिनी मात्वाद्यज्ञदत्तप्रमा यथा ॥" इति, तदनुभाषते यच्चेति ॥ दूषयति तदिति । अपिना पूर्वानुमानेऽप्ययं दोषोऽस्तीति ज्ञाप्यते ; विपक्षे बाधकमेव हि प्रतिबन्धरहस्यमाहुः ; न चेह तदस्ति, अतो नेदं साधकमिति भावः । भावान्तराभावनयेन दूषणमाह—**नाभाव** इति । यदि अभावो भावातिरिक्तः स्यात् तदा स्वप्रमाभावव्यवच्छेदार्थं विशेषणं स्यात् । न च भावातिरिक्तोऽभाव इति वक्ष्यते । 'मा भूत् तर्हि विशेषणम्' इति चेन्न ; परसंमतमात्रसाधने सिद्धसाधनात् । तावदुक्त्या च स्वदिष्टासिद्धेः । तदतिरिक्तस्य चानुपस्थापनात् । परस्य पक्षदृष्टान्तविभागायोगमप्याह न चेति । ये ह्यद्वैतिनो जीवमप्येकमेवेच्छन्ति, तन्मते देवदत्त एव यज्ञदत्त इत्यपि कल्प्यते ॥ लोकव्यवहारमात्रात् परसंमत्या वा पक्षादिभेदक्लृप्तिरिति चेन्न ; स्वानभ्युपगतस्य साधनाङ्गत्वेनोपादानायोगात् । अस्तु नानाजीवमतेन दृष्टान्तोक्तिरिति चेन्न ; तन्मतेऽपि

---

(ब)— मा भूत् तर्हि विशेषणमिति । प्रमाभावातिरेकीति विशेषणं मा भूदित्यर्थः । विशेषणत्यागे तत्स्थानादेर्ध्वंसिनीति साध्यनिर्देशः स्यात् । तथा सति किमनेन । परेष्टमात्रम् ; उत त्वदिष्टम् ? उत उभयातिरिक्तमिति विकल्पमभिप्रेत्य क्रमेण दूषयति न परसम्मतेत्यादिना । जीवानां प्रमाधारत्वेति ।

(आ)— यच्चानुमानमुक्तम् , तदपि विपक्षे बाधकरूपानुकूलतर्करहितम् । हेतुरप्रयोजक इत्यर्थः । यच्चेति चकारस्वरसात् पुनस्तदपीत्यपिशब्दः पूर्वोक्तानुमानमपि अनुकूलतर्करहितमित्यधिकमर्थं ज्ञापयति । विपक्षे अबाधमपीति योजनायां दोषान्तरसमुच्चयोऽपि । देवदत्तप्रमास्तु धारावाहिज्ञानातिरिक्तमेव तेन पक्षीकर्तव्यम् , अन्यथाज्ञाननिवर्तकत्वायोगात् । एवञ्च विमता देवदत्तप्रमा स्वप्रागभावातिरिक्तानादिनिवर्तिका न भवति मात्वात् तदीयधारावाहिज्ञानवदिति हेतोर्विरुद्धत्वस्यापि प्रसंगः । किञ्च एवं साध्यनिर्देश एव न भवति । भावातिरिक्ताभावानंगीकारात् देवदत्तप्रमाभावातिरिक्तेति विशेषणवैयर्थ्यात् । न च भावस्यैवाभावरूपत्वेऽपि तत्प्रमाभावरूपभावव्यावर्तनाय तदिति वाच्यम् । तत्प्रमोत्पत्तिप्राक्कालिकतदात्मगतगुणपरम्परया एव तत्प्रमाप्रागभावरूपतया तत्र कस्याप्यनादित्वाभावेन अनादीत्यनेनैव तद्वारणात् । अनादीति [illegible] विशेषश्च न भवति । दृष्टान्तस्यापि भावप्रवाहरूपाभावप्रागभावनिवर्तकतया अनादिनिवर्तकत्वाभावात् । अना[illegible]त्यागेन एतत्प्रागभावरूपभावान्यभावनिवर्तकत्वोक्तौ अनाद्यज्ञानासिद्धिः । एवमविद्यासाधने पुनर[illegible]त्तप्रमामेव पक्षीकृत्य इयं प्रमा [illegible]स्वप्रागभावरूपभावोभयातिरिक्तभावनिवर्तिका यज्ञदत्तप्रमावा[illegible]ति उपर्युपरि अविद्यानुमानाद्दिशा [illegible] दोषान्तरमाह न चेति । जगत् एककर्तृकमिति पक्षे देवदत्तयज्ञदत्त[illegible] एव । साध्यवैकल्यप्रसङ्गात् नानुमानसंभवः । भावरूपाज्ञानं प्रमाश्रितमिति पक्षे [illegible] एव । [illegible] [illegible]ध्वंसगात् दृष्टान्त इति । दृष्टान्ते स्वप्रागभावध्वंसकत्वरूपं साध्यं न भवति । [illegible] ध्वंसरूपस्य च [illegible] उचितभावरूपतया यज्ञदत्तप्रमाप्रागभावध्वंसः यज्ञदत्तप्रमैव । [illegible] न भवति । [illegible] । स्वस्य स्वहेतुत्वायोगात् । अतो दृष्टान्ते निर्दिष्टम् , तत् इदं [illegible] [illegible] वा । अस्य दृष्टान्तस्य एतद्ध्वंसतामात्रस्य अत एव [illegible] सिद्धमित्यर्थः ।

जीवानां प्रमाधारत्वासिद्धेः। न हि स्वरूपचैतन्यं वा साक्षिचैतन्यं वा जीवतया कल्पितं वा जीवाश्रितमिति युष्माभिः कल्प्यते। वृत्तिरूपा प्रमा अन्तःकरणनिष्ठा कथ्यते। अतः पुरुषस्थतया प्रमानिर्देशो न युक्तः॥ कृपाणादिप्रतिफलितमुखमलिनिमादिन्यायेन प्रातीतिकतया पुरुषस्थत्वोक्तिरिति चेन्न; प्रातीतिकसत्तां (सत्तायां) अर्थक्रियाकारित्वानभ्युपगमात्॥ अन्तःकरणवृत्तिद्वयमेव पक्षदृष्टान्ताविति चेन्न; तस्य परसंमत्यभावेन परान् प्रति प्रयोगायोगात्। किंच देवदत्तनिष्ठधारावाहिकद्वितीयादिज्ञानेषु देवदत्तप्रमाभावातिरिक्तानादिनिवर्तकत्वाभावेऽपि प्रमात्वं दृष्टम्। तद्व्यवच्छेदाय पूर्ववत् अप्रकाशितार्थप्रमात्वादिविशेषणेऽपि देवदत्तप्रमान्तराभावातिरिक्तानादिस्वप्रागभावध्वंसनात् सिद्धसाधनत्वम्॥ देवदत्तप्रमाभावत्वात्यन्ताभाववदनादिध्वंसकत्वं साध्यमिति चेत्, इदमपि स्वजन्यसंस्कारप्रागभावध्वंसनेन दत्तोत्तरमेव। किंच, "अनादेर्ध्वंसिनी" इत्यत्र ध्वंसरूपत्वमात्रं वा ध्वंससंबन्धित्वं वा ध्वंसहेतुत्वं वा विवक्षितम्? नाद्यः; अनभ्युपगमात्। न च ध्वंसो घातक इति युज्यते। न द्वितीयः, विवक्षितस्याज्ञाननिवर्तकत्वस्यानुक्तेः। अस्ति हि स्वजन्यसंस्कारप्रागभावोऽनादिः। तस्य च ध्वंसरूपः संस्कार एकाश्रयत्वादिना स्वसंबन्धी च। दृष्टान्ते च अनादिप्रतियोगिकध्वंससंबन्धित्वासिद्धेः। अतस्तृतीयः परिशिष्यते। अत्रापि दृष्टान्तस्य साध्यविकलत्वमाह— **दृष्टान्त** इति। उक्तं हि पूर्वमेव प्रागभावस्य कार्यस्य चैकक्षणसंपातायोगात् तयोर्वध्यघातकभावो न

---

*सर्वा०*— प्रमाशब्दाभिप्रेतं किं स्वरूपचैतन्यं, उत साक्षिचैतन्यं, जीवतया कल्पितं वा चैतन्यं, वृत्तिज्ञानमेव वेति विकल्पमभिप्रेत्य क्रमेणानुपपत्तीर्दर्शयति नहीत्यादिना। प्रमाया ध्वंसरूपत्वाभ्युपगमेऽपि अभिमतमविद्यानिवर्तकत्वमसिद्धमित्याह—न च ध्वंसो घातक इति। कथमज्ञाननिवर्तकस्यानुक्तिः, *प्रमाया ध्वंसेन संबन्धाभावात्, जन्यजनकसम्बन्ध एव परिशिष्यत इत्यत्राह—अस्ति हीति*। ननु वि... ... .. ... ...ध्वंससंबन्धित्वस्य विवक्षितत्वात् संस्कारप्रागभावस्य च प्रमाविरोधित्वात् न संस्कारसम्बन्धित्वेनार्थान्तरता इत्याशङ्क्य दोषान्तरमाह—दृष्टान्ते चेति। ध्वंससम्बन्धित्वासिद्धेरिति। यज्ञदत्तप्रमाया ध्वंसप्रागभावध्वंसरूपत्वादिति भावः॥ ३८॥

*श्री*—कल्पितं वेति। अन्तःकरणावच्छिन्नचैतन्यं वा अन्तःकरणगतप्रतिबिम्बं वेत्यर्थः। वृत्तिरूपं चैतन्यं जीवनिष्ठमिति मतिं व्युदस्यति वृत्तिरूपेति। अन्तःकरणेति। देवदत्तयज्ञदत्तपदयोस्तत्तदन्तःकरणमर्थ इति तदाशयः। प्रमान्तरेति। तन्निष्ठप्रमेत्यनेन पक्षभूततत्तत्प्रमातिरिक्तदेवदत्तप्रमापि हि ग्राह्या भवति। अत्यन्तेति। तत्स्थप्रमाभावातिरिक्तेत्यस्य तत्स्थप्रमाभावत्वरूपसामान्यधर्माभाववदित्यर्थः। अनादिपदगृहीते देवदत्तप्रमाप्रागभावे स सामान्याभावो नास्ति। अतः यज्ञदत्तप्रमाप्रागभाव एव ग्राह्य इति भावः। दत्तोत्तरमेव। सिद्धसाधनदोष एवेति भावः। देवदत्तगतप्रमाभावातिरिक्तः तत्प्रमाजन्यसंस्कारस्य प्रागभावः तद्ध्वंसकत्वं देवदत्तप्रमायाः। कथमिति चेत्—संस्कारप्रागभावध्वंसो हि संस्कार एव। तज्जनकत्वं प्रमाया इति। अनभ्युपगमादिति। पक्षभूतायाः प्रमायाः अज्ञानध्वंसत्वमेव त्वदभ्युपगतम्; नत्वज्ञानध्वंसरूपत्वम्। उपपादयति न चेति। *त्वया ध्वंसकत्वं ह्युक्तम्। ननु ध्वंसत्वमित्यर्थः। ध्वंससंबन्धित्वं सामानाधिकरण्यसंबन्धेन* ध्वंसविशिष्टत्वम्। ध्वंसश्च संस्कारः। तस्य प्रमायाश्च सामानाधिकरण्यमक्षतम्। संबन्धित्वासिद्धेरिति। प्रागभावध्वंसस्य प्रमायाधिकत्वादिति भावः। एकक्षणेति। ध्वंसहेतुत्वे हि प्रमा स्वोत्तरक्षण एव ध्वंसं जनयेत्। तदा प्रमातत्प्रागभावयोरेकक्षणे स्थितिरापद्येत। न च भावाभावयोर्यौगपद्य-

सम्भवतीति । एतदेवाभिप्रेत्याह **ध्वंसमात्रसिद्धेरिति** । अपि चात्र स्वप्रागभावातिरिक्तानादिध्वंस-कत्वसाधने तद्ध्वंसनीयमनादि किंचित् भावरूपमिति कुतस्सिद्धम् ? न तावत् व्याप्त्या, दृष्टान्ते तदसिद्धेः । नापि पक्षधर्मताबलात्; पक्षस्थस्य हेतोस्तादृशबलादृष्टेः । दृष्टस्य च [तादृश]पक्षधर्मसंबन्धमात्ररूपस्य पक्षसाध्यसंबन्धमात्रार्थत्वात् । न च परिशेषात्; अभावान्तरनिवर्तकत्वेऽपि विरोधाभावात् । दण्डचक्रादयो हि स्वाभावातिरिक्तं घटाभावं निवर्तयन्ति । तद्वत् देवदत्तप्रमाऽपि संस्कारोत्पत्तिहेतुभूता स्वसंस्कारप्रागभावं ध्वंसयत्येव ॥ एतत्परिहाराय अभावव्यतिरिक्तानादिध्वंसिनीत्येतावन्मात्रमुपाददीमहीति चेत्; हन्त ! तर्हि सिद्धसाधनत्वं परिजिहीर्षता दृष्टान्तस्य साध्यविकलत्वापत्तौ न दृष्टिर्दीयते ॥

**इति चित्सुखोक्तभावरूपाज्ञानानुमानभङ्गः ॥ ३८ ॥**

**(184) अस्पृष्टावद्यतोक्तेर्न खलु विषयतामभ्युपेयादविद्या;**
**न क्षेत्रज्ञोऽपि, तापत्रयपरितपनात्; नापि तव ब्रह्म मौग्ध्यात् ।**
**मिथ्यात्वात् दोषभावो न भवति यदि, किं तन्निरासप्रयासैः**
**उच्छेत्तव्यापुमर्थान्वयत इह परः कोऽभिलप्येत दोषः ॥ ३९ ॥**

अथ ब्रह्माज्ञानकल्पनां श्रुतिविरोधेन निर्मूलयति **अस्पृष्टेति** । न तावत् निरवद्यत्वश्रुतिरनादर्तव्या; सर्वश्रुत्यनादरप्रसङ्गेन निष्कञ्चुकबाह्यत्वापातात् । न चासौ स्तोमवन्निरर्थिका; स्वबोधितेऽर्थे स्वतःप्रामाण्यात् । अतः मतिपक्षत्वे केवलमविद्यैव वा तद्विषयः, तत्कल्पितो जीवो वा, तदवरुद्धं ब्रह्म वेति विकल्पं विभाव्य प्रथमं प्रतिक्षिपति— **न खल्विति** । 'निरवद्यम्' इति श्रुतिर्ब्रह्मैव विशिनष्टि, न त्वविद्याम्; त्वत्पक्षे ह्यविद्यान्तराभावात् निरवद्यत्वश्रुतिस्तद्विषया स्यादित्युपालम्भकाकूक्तिरियम् । अतो नात्राभागिप्रतिषेधः । द्वितीयं दूषयति **न क्षेत्रज्ञ इति** । न हि त्वन्मते प्रतिबिम्बप्रायस्य जीवस्या-

---

वी-मिति भावः। भावरूपाज्ञानश्रद्धालुना भावत्वानिश्चायकानुमानप्रयोगो न युक्त इत्याह अपि चेति । बलादिति । पक्षधर्मता—पक्षे हेतोर्वर्तमानता । यदन्तरा हेतोः पक्षधर्मत्वं न सिद्ध्येत्, तादृक्साध्यमात्रं तद्बलात्सिद्ध्येदिति भावः। साध्यविकलत्वेति । देवदत्तप्रमानिवर्त्यो ह्यनादिरभाव एवेति ॥३८॥

ब्रह्मणः साविद्यत्वे निरवद्यत्वश्रुतेः को विषय इति पृच्छति अस्पृष्टेति । अवद्यासंस्पृष्टत्वं निरवद्यत्वम्; न तु अवद्यात् निष्क्रमित्वम् । तच्च अविद्यास्पर्शात्यन्ताभाव एव । तद्वचोक्तिरूपस्य तस्य पदस्य विषयतां अर्थतां किं वस्तु लभते । अज्ञानाच्छादकाज्ञानान्तराभावात् निरवद्यत्वमविद्याया एव घटते । तच्च न कस्यापि संमतम्, अज्ञानादि अस्वयंप्रकाशे च वस्तुनि अज्ञानरहितत्ववचनस्याप्रसक्तत्वात् । जीवोऽपि न निरवद्यशब्दविषयः अनेकावद्ययुक्तत्वात् । न च ब्रह्म तत्=सर्वाध्यासाधिष्ठानतया त्वदिष्टं विषयतामभ्युपेयात्; तिरोधानविक्षेपयोराश्रयत्वात् । ननु ब्रह्मगतावद्यानामविद्यादीनां मिथ्यात्वात् दोषभावः=परमार्थदोषता नास्तीति चेत्—तन्निरासार्थश्रवणमनननिदिध्यासनमनकण्डनखण्डनस्थापनमठप्रतिष्ठापनादिकं सर्वं व्यर्थम् । ननु दोषाभावेऽपि दोषत्वेन प्रतिभानात् तन्निवृत्तये प्रवृत्तिरित्यत्राह उच्छेत्तव्येति । प्रतिभानस्यापि मिथ्यात्वात् नोच्छेद्यता । उच्छेद्यत्वेऽपि चापुरुषार्थता तस्य स्वीकार्या । अपुरुषार्थभूतत्वबाध्यत्वयोः च सामान्यमिति कथं निरवद्यत्वेति । कोऽभिलप्येत दोष इति । दोषत्वस्य अपुरुषार्थाश्रयत्वेन प्रसिद्धो दोष इति । अतः=भवितव्यं निरवद्यत्वरूपार्थान्वयात् (पू. मी. 1. 2. 5) अभागिप्रतिषेधः=अप्रसक्तप्रतिषेधः न ।

यस्यान्तरेणापि निर्दोषत्वमिति भावः । तथैव तृतीयमपि निरस्यति **नापीति** । तच्छब्देन सर्वा-ध्यासाधिष्ठानत्वादिसूचनम् । **मौग्ध्यात्** अविद्यातिरोहितस्वप्रकाशत्वात् इत्याशयः । ननु कल्पिते जीवे कल्पनाधिष्ठाने ब्रह्मणि वा निरवद्यत्वादिश्रुतिः संबोभवीति, अविद्यातत्कार्याणामसत्यतया दोषत्वा-भावादिति शङ्कते **मिथ्यात्वादिति** । परिहरति **किमिति** । यदि अविद्यादीनां स्वकालसत्त्वं दोषत्वं च न स्यात्, तर्हि किं तन्निरासार्थसाधनचतुष्टयसंपत्तिपूर्वकश्रवणमनननिदिध्यासनप्रयासैः ? अविद्या-निरासकदर्शनार्थमेव हि तद्विधिमातिष्ठध्वे । ननु असत्यस्य दोषत्वमप्यसत्यम् ; तादृशदोषवत्त्वेऽपि तात्त्विक-दोषात्यन्ताभावात् निर्दोषत्वश्रुतिरर्थवती स्यादित्यत्राह **उच्छेत्तव्येति** । असत्योऽपि दोषः उच्छेत्तव्यो न वा ? पूर्वत्र तादृशापुरुषार्थान्वयादतिरिक्तः को नाम **दोषशब्दार्थः** ? उत्तरत्र तन्निरासप्रयास-नैरर्थक्यमेवेति भावः । अनिर्वचनीयस्य नित्यनिवृत्तस्वरूपस्य किं निवर्तनेन ; अत्यन्ताभावस्यासंपाद्यत्वात् तत्प्रतिभासोऽप्यनिर्वचनीय एवेति सोऽपि नित्यनिवृत्तत्वात् न संपाद्यनिवृत्तिः । किंच तात्त्विकदोषः श्रुत्या निरस्यत इति वदता स दोषः किं ब्रह्मस्वरूपमेवेत्यभिमतम्, अन्यद्वा किंचित् । पूर्वत्र किं तदधीनसत्ताकया अविद्यया ? तेन च सर्वोपपत्तेः दोषभूतस्वाधीनप्रकाशतया ब्रह्मापि मिथ्या स्यात् । उत्तरत्र द्वैतापत्तिः ; यत्र कचिद्विद्यमानत्वाभावे तात्त्विकत्वविरोधात् ॥ भावाद्वैतिनो ब्रह्मस्वरूपातिरिक्त तात्त्विक-अभावरूप दोषसंभवात् तन्निषेधिका श्रुतिरियमिति चेन्न; अभावनिषेधे तत्प्रतियोगिभावसंबन्धापातात् । ततश्चाद्वैत-वादो निरुध्येत ॥ दोषस्य परमार्थत्वं नास्तीति निरवद्यत्वश्रुत्यर्थ इति चेन्न ; दोषस्वरूपनिषेधके तदनुज्ञया तत्सत्यत्वनिषेधकशब्दाभावात् । तत्परत्वकल्पनेश्च गुरुत्वात् । अतो भावमभावं वा सत्यमसत्यं वा ब्रह्मणि निरसनीयं किंचिदिच्छता निर्विषयैव निरवद्यत्वश्रुतिरापादितेति ॥

इति ब्रह्माज्ञानानुमानानां नित्यनिर्दोषश्रुतिबाध्यत्वम् ॥ ३९ ॥

(185) शुद्धे ब्रह्मण्यविद्या न यदि, न घटते तस्य जीवैक्यवादः
तस्मान्निर्दोषतोक्तिर्निरुपधिदशया निर्वहेदित्ययुक्तम् ।
प्रत्यक्षादिप्रमाणानुगुणबहुविधश्रुत्यबाधेन नेतुं
शक्येऽप्यैक्यादिवाक्ये बहुगुणनिधये ब्रह्मणोऽन्नूयसि त्वम् ॥ ४० ॥

---

श्री— अथ दोषोऽयमनिर्वचनीयो वा तात्त्विको वेति विकल्पमभिप्रेत्य प्रथमं निरस्यति अनिर्वचनी-यस्येति । संपाद्यनिवृत्तिरिति । संपाद्या निवृत्तिर्यस्य स इति बहुव्रीहिः । द्वितीयं निरस्यति दोष-भूतस्येति । ब्रह्मणः स्वयंप्रकाशत्वं नाम स्वाधीनप्रकाशत्वम् । स्वं च तत् दोष एवेति दोषाधीनप्रकाशं मिथ्यैवेति । तात्त्विकोऽयं दोषः अभावरूप इति पक्षे आह भावेति । निरुध्येति । न चाभावरूप-दोषस्याभावो ब्रह्मैवेति वाच्यम् ; यस्याभावो दोषः स एव हि तदभावः स्यात् । न हि ब्रह्माभावो दोषः । दोषाभावस्य ब्रह्मत्वे च ब्रह्मसद्भावात् दोष एव न स्यात् । अथानिर्वचनीयत्वपक्षमेवावलम्ब्य श्रुतेरन्यथा व्याख्यानं शंकते दोषस्येति ॥ ३९ ॥

ननु निरवद्यमित्यस्यावद्यात्यन्ताभाववदिति नार्थः ; तथा सति ब्रह्मणः शुद्धत्वात् जीवैक्या-योगात् । तत्त्वमसीति च जीवैक्यस्योक्तत्वात् । अतो निष्क्रमणार्हविद्यत्वं निरवद्य-त्वमिति पूर्वार्धेन शंकते शुद्धे इति । शुद्धत्वान्न ब्रह्मण्यविद्येति यदि, तर्हि तस्य जीवेनैक्यमुक्तं न घटेत । अतस्तदुक्तिः

यदि निरवद्यत्वश्रुतिविषये ब्रह्मणि अविद्या कदाचिदपि न स्यादित्युच्येत, तर्हि तस्य जीवैक्योपदेशो न घटेत। तस्मात् निर्दोषत्वश्रुतिस्त्वदभिमतजीववत् निवृत्ताविद्यस्वरूपपरतया निरुह्येनेति शङ्कते शुद्धे इति। अत्र, "स एष देव कृतभूतभावन स्वय विशुद्धो विरजा प्रकाशते" इत्यादिभिर्बद्धमुक्तावस्थाद्वय भागिन कर्मवश्याद॰यत्वेन प्रतीतस्य परस्य ब्रह्मण सदोषनिर्दोषावस्थाद्वयकल्पसि साहसमित्यभिप्रायेणाह इत्ययुक्तमिति। "तत्त्वमसि", "अयमात्मा ब्रह्म" इत्युपदेशो भेदनिषेधश्च कथमित्यत्राह प्रत्यक्षादीति। अय भाव —यद्यपि जीवपरभेद(भेदाभेद?)श्रुतिमात्रादवस्थाद्वय (मात्रमवस्थाद्वयविषयमिति) मिति शङ्कितु शक्येत—तथाऽप्येकैकस्यामेवावस्थाया जीवादन्य पर प्रतिपाद्यते। जागरे तावत्, "तयोरन्य पिप्पल स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति" इति। तथा च सूत्रम्, "स्थित्यदनाभ्या च" इति। "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमान। जुष्ट यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक॥" इति चोच्यते। स्वप्ने च, "य एष सुप्तेषु जागर्ति कामकाम पुरुषो निर्मिमाण" इति। तत्र च स्वतन्त्रपरतन्त्र-विभागव्यञ्जक सूत्रम्, "पराभिध्यानात्तु तिरोहित ततो ह्यस्य बन्धविपर्ययौ" इति। सुषुप्तिप्रायणयोश्च, "प्राज्ञेनात्मना सपरिष्वक्तो न बाह्य किञ्चन वेद नान्तरम्' इति। 'प्राज्ञेनाऽऽत्मनाऽन्वारूढ उत्सर्जन् याति' इति च। तत्रापि सूत्रम्, 'सुषुप्त्युत्क्रान्त्योर्भेदेन' इति। मुक्तावस्थायामपि, 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति। अत्र यदि भोक्तृसाहित्यमभिप्रेतम्, तदा सु॰यक्त एव भेद। यदा तु प्रस्तुत ब्राह्मणपदविवरणक्रमेण भोग्यसाहित्ये तात्पर्यम्, तदाऽपि भोक्तुर्भोग्यस्य च स्वारसिकी भेदधीर्न बाधमर्हति। ब्राह्मणस्थपरश॰दानुग्रहाच्च। एवम्, "परात्पर पुरुषमुपैति दि॰यम्" इत्यादि। एतदपि सूत्रितम्, "मुक्तोप सृप्य॰यपदेशाच्च' इति। "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिवाक्य तु मुक्तविषयतयैव, "निरञ्जन परमं साम्यमुपैति" इति प्राकरणिकेन वाक्येन परमसाम्यतत्परतया स्थापितार्थम्। परमसाम्य च, 'भोगमात्रसाम्य-लिङ्गाच्च' इति सूत्रेण नियमितम्। श्रुत्यन्तरे च, 'तादृगेव भवति' इति निदर्शितम्। 'विष्णुरेव भूत्वा' इत्यादि न्यायाच्च। मोक्षधर्मे च, 'परेण परधर्मी च भवत्येष समेत्य वै' इत्यादिभि परमसाम्यमेव प्रदर्शितम्। 'अनेन साम्य यास्यामि' इति च मुमुक्षोरभिसन्धिरप्यभिधीयते। स्वय चागीयत, 'मम साधर्म्यमागता' इति। 'इतर॰यपदेशात् हिताकरणादिदोषप्रसक्ति' इति, जीवब्रह्मतादात्म्योक्त्याऽनिष्टप्रसङ्गमाशङ्क्य,'अधिक तु भेदनिर्देशात्' इति च प्रत्युक्तम्। स्रष्टृ सृ॰यस्य भेद श्रुत्यैव हि निर्दिश्यते। 'अस्मान्मायी सृजते

---

सुधा— यदि निरवद्ये इत्यादिना श्रुत्यर्थापत्त्या अविद्यासिद्धिराशङ्क्यते।

श्री— निरुपधिदशाया=भविष्यन्तीं निर्दोषत्वदशामादाय निरुह्यन इतीदमयुक्तमित्यर्थ। प्रत्यक्षेति। प्रत्यक्षानुमान कर्मकाण्डोपासनभाग सगुणतत्त्वप्रतिपादकभागा सर्वे बाध्यन्ते, ऐक्यश्रुतेर्भवदिष्टार्थ स्वीकारे। तथा तदैक्यश्रुतिप्रतीतधर्मा अपि बाध्यन्ते। अपार्थत्वात् लक्षणादिदोषाच्च इतरबाधे सति नेतुमशक्यमैक्यवचनम्। अबाधेन चेदमपि सम्यङ् नेतु शक्यम्। तथाऽप्ययमाग्रहो नूनमसूया फलम्। अत आसुरभावस्त्याज्य। मात्रादिति। ऐक्यभेदोभयविषयश्रुतिमात्रमत्त्वे इत्यर्थ। मुक्त-विषयतयैव–मुक्तविषयत्वादेव। दोषप्रसक्तिरिति॥ इत्यनेनाकाङ्क्षयेत्यन्वय। स्रष्टृगिति पञ्चमी।

विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः' इति । एवं भस्पष्टार्थसूत्रप्रतिष्ठापितस्वरसार्थानां भेदश्रुतीनां न त्वदभीष्टवत् प्रत्यक्षादिविरोधः ; प्रत्युतानुगुण्यमेव । तस्मादेवंविधनिर्बाधानन्यपरबहुविधश्रुत्यनुसारेण जीवपरसामानाधिकरण्यस्य भेदनिषेधस्य च निर्वाहे संभवति, निर्दोषकल्याणगुणाकरे ब्रह्मणि अविद्यादिदोषमाविष्कुर्वन् आत्मीयामसूयामेवाविष्करोषि। निर्णीतं (तन्निर्णीतं) च मोक्षधर्मान्ते परस्य बन्धप्रसङ्गरहितत्वम्, इतरस्य बन्धमोक्षभागित्वं च, "तत्र यः परमात्मा तु स नित्यो निर्गुणो मतः । स तु नारायणो ज्ञेयः सर्वात्मा पुरुषो हि सः ॥ न लिप्यते कर्मफलैः पद्मपत्रमिवाम्भसा । कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते ॥" इति ॥ इत्यविद्याकल्पकश्रुतार्थापत्तिभङ्गः ॥ ४० ॥

(186) **मायाविद्यादिशब्दैः प्रकृतिरभिम(हि)ता ज्ञानकर्मादयो वे-**
**त्येतत् तत्तत्प्रदेशे स्फुटविदितम् ; अतो न त्वदिष्टाऽस्त्यविद्या ।**
**किंचाविद्यादिशून्यः पर इति विविधाम्नायकण्ठोक्तमर्थं**
**क्षेप्तुं मायादिशब्दः क्षम इति वदतः स्यादविद्या तवैव ॥ ४१ ॥**

आस्तां श्रुतार्थापत्तिः ; श्रुतिभिरेव भावरूपाज्ञानं सिध्यतीत्यत्राह **माये**ति ॥ 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इत्यत्र न प्रकृतेर्मिथ्यात्वं प्रतिपाद्यते ; यथाक्रममुद्देश्योपादेयस्थापनोपपत्तेः। अत्र हि पूर्ववाक्यस्थ**मायामायि**शब्दार्थबुभुत्सायां प्रसिद्धार्थ**प्रकृतिमहेश्वर**शब्दाभ्यां संशयादिरपाचिकीर्ष्यते ; अन्यथा उद्देश्योपादेयक्रमविपर्यासः । तथा चाहुः, "यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्" इति ।

न च **माया**शब्दो मिथ्यावाची ; लोकवेदनिघण्टुपाठाभावात् । क्वचित्प्रयोगस्तु भाक्तः स्यात् ; अन्यथा, 'देवमायेव निर्मिता', 'स्वमायया सांप्रतमागतं वा', "ऋते मायां विशालाक्षीं तव पूर्वपरिग्रहाम्", "तेन मायासहस्रं तत्" 'इत्यादिभिर्विरुध्येत । **नीतिशास्त्रे**षु च मुख्यामुख्यसंकलनेन सप्तविधोपायपरिगणने **मायेन्द्रजालयो**रन्यथाकरणान्यथाप्रतिभासनसामर्थ्यरूपतया विभागः सिद्धः । मन्त्रौषधादि-

---

प्रौ — ब्रह्मण्यविद्यादिदोषप्रतिपादनं असूयाविष्करणं इत्येतत् द्रढयितुं निर्णीतं चेत्यादि उक्तम् ॥४०॥

श्री — तन्निर्णीतमित्यत्र अन्यो वा पाठः । नेन सूत्रकृता निर्णीतमित्यर्थो वा । वस्तुतः तदिति न स्यात् । पूर्वव्याख्यायां तत्पदं विनोपादानाच्च ॥ ४० ॥

अविद्याविषये प्रत्यक्षप्रमाणं निरस्तम् । अनुमानञ्च द्विविधं तर्केण श्रुतिविरोधेन च व्युदस्तम् । श्रुत्यर्थापत्तिरपि शातिता । अथ श्रुतिरेव साक्षादस्तीति वादः क्षिप्यते । श्रुतौ मायाशब्दः अविद्याशब्दः अनृतशब्दः असच्छब्दादिश्च श्रूयमाणाः यथायथं प्रकृतिवाचिनः । मायाशब्देन क्वचित् ज्ञानमुच्यते ; अविद्याशब्देनानृतशब्देन च कर्म । असच्छब्देनाचेतनादि । इत्येतत्—इत्ययमर्थः, तत्तत्प्रदेशे पूर्वापरपरिशीलने स्पष्टं स्वयमेव ज्ञातं भवति । त्वदिष्टा तु या अविद्या ब्रह्माश्रिता जीवाश्रिता वा मिथ्याभूता दोषभूता च, न सा तत्र विदिता भवति । किञ्च श्रुत्यन्तरैः ब्रह्मणि अविद्यादिसर्वदोषदूरे कथ्यमाने तद्विरोधेन तस्मिन्नेव तत्संबन्धं मायादिपदघटितानि वाक्यानि न बोधयेयुरित्यतोऽपि तेषामन्यार्थकत्वं ग्राह्यम् । एवं स्थितेऽपि मायादिशब्दमादाय ब्रह्मणि दोषं वदतस्ते अद्वैतिन एव अविद्या = यथावच्छास्त्रार्थज्ञानमस्तीति वक्तव्यं भवति ॥

सप्तविधेति । "दण्डनीतौ सामाद्युपायचतुष्टयादन्ये मायोपेक्षेन्द्रजालरूपाः अमुख्यास्त्रय उपाया उपदिष्टाः" इति तात्पर्यचन्द्रिका (गी. 7. 14.) ।

यदि निरवद्यत्वश्रुतिविषये ब्रह्मणि अविद्या कदाचिदपि न स्यादित्युच्येत, तर्हि तस्य जीवैक्योपदेशो न घटेत। तस्मात् निर्दोषत्वश्रुतिस्त्वदभिमतजीववत् निवृत्ताविद्यस्वरूपपरतया निरुह्येतेति शङ्कते शुद्धे इति। अत्र, "स एष देवः कृतभूतभावनः स्वयं विशुद्धो विरजाः प्रकाशते" इत्यादिभिर्बद्धमुक्तावस्थाद्वय भागिनः कर्मवश्यादन्यत्वेन प्रतीतस्य परस्य ब्रह्मणः सदोषनिर्दोषावस्थाद्वयक्लृप्तिःसाहसमित्यभिप्रायेणाह इत्ययुक्तमिति। "तत्त्वमसि", "अयमात्मा ब्रह्म" इत्युपदेशो भेदनिषेधश्च कथमित्यत्राह प्रत्यक्षादीति। अयं भावः—यद्यपि जीवपरभेद(भेदाभेद?)श्रुतिमात्रादवस्थाद्वय (मात्रमवस्थाद्वयविषयमिति) मिति शङ्कितुं शक्येत—तथाऽप्येकैकस्यामेवावस्थायां जीवादन्यः परः प्रतिपाद्यते। जागरे तावत्, "तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति" इति। तथा च सूत्रम्, "स्थित्यदनाभ्यां च" इति। "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः॥" इति चोच्यते। स्वप्ने च, "य एष सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाणः" इति। तत्र च स्वतन्त्रपरतन्त्र-विभागव्यञ्जकं सूत्रम्, "पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ" इति। सुषुप्तिप्रायणयोश्च, "प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" इति। 'प्राज्ञेनाऽऽत्मनाऽन्वारूढः उत्सर्जन् याति' इति च। तत्रापि सूत्रम्, 'सुषुप्त्युत्क्रान्त्योर्भेदेन' इति। मुक्तावस्थायामपि, 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति। अत्र यदि भोक्तृसाहित्यमभिप्रेतम्, तदा सुव्यक्त एव भेदः। यदा तु प्रस्तुत ब्राह्मणपदविवरणक्रमेण भोग्यसाहित्ये तात्पर्यम्, तदाऽपि भोक्तुर्भोग्यस्य च स्वारसिकी भेदधीर्न बाधमर्हति। ब्राह्मणस्थपरशब्दानुग्रहाच्च। एवम्, "परात्परं पुरुषमुपैति दिव्यम्" इत्यादि। एतदपि सूत्रितम्, "मुक्तोप-सृप्यव्यपदेशाच्च" इति। "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिवाक्यं तु मुक्तविषयतयैव, "निरञ्जनः परमं साम्यमुपैति" इति प्राकरणिकेन वाक्येन परमसाम्यतत्परतया स्थापितार्थम्। परमसाम्यं च, 'भोगमात्रसाम्य-लिङ्गाच्च' इति सूत्रेण नियमितम्। श्रुत्यन्तरे च, 'तादृगेव भवति' इति निदर्शितम्। 'विष्णुरेव भूत्वा' इत्यादि-न्यायाच्च। मोक्षधर्मे च, 'परेण परधर्मी च भवत्येष समेत्य वै' इत्यादिभिः परमसाम्यमेव प्रदर्शितम्। 'अनेन साम्यं यास्यामि' इति च मुमुक्षोरभिसन्धिरप्यभिधीयते। स्वयं चागीयत, 'मम साधर्म्यमागताः' इति। 'इतरव्यपदेशात् हिताकरणादिदोषप्रसक्तिः' इति, जीवब्रह्मतादात्म्योक्त्याऽनिष्टप्रसङ्गमाशङ्क्य, 'अधिकं तु भेदनिर्देशात्' इति च प्रत्युक्तम्। स्रष्टुः सृज्यस्य भेदः श्रुत्यैव हि निर्दिश्यते। 'अस्मान्मायी सृजते

---

पु॰— यदि निरवद्ये इत्यादिना श्रुत्यर्थापत्त्या अविद्यासिद्धिराशङ्क्यते।

श्री— निरुपाधिदशया=भविष्यन्तीं निर्दोषत्वदशामादाय निरुह्यत इतीदमयुक्तमित्यर्थः। प्रत्यक्षेति। प्रत्यक्षानुमान-कर्मकाण्डोपासनभाग-सगुणतत्त्वप्रतिपादकभागाः सर्वे बाध्यन्ते, ऐक्यश्रुतेर्भवदिष्टार्थ-स्वीकारे। तथा तदैक्यश्रुतिप्रतीतधर्मा अपि बाध्यन्ते। अपार्थत्वात् लक्षणादिदोषाच्च इतरबाधे सति नेतुमशक्यमैक्यवचनम्। अबाधेन चेदमपि सम्यङ् नेतुं शक्यम्। तथाऽप्ययमाग्रहो नूनमसूया-फलम्। अत आसुरभावस्त्याज्यः। मात्रादिति। ऐक्यभेदोभयविषयश्रुतिमात्रमत्त्वे इत्यर्थः। मुक्त-विषयतयैव-मुक्तविषयत्वादेव। दोषप्रसक्तिरितीति॥ इत्यनेनाशङ्क्येत्यन्वयः। स्रष्टुरिति पञ्चमी।

विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः' इति । एवं प्रस्पष्टार्थमूलप्रतिष्ठापितस्वरसार्थानां भेदश्रुतीनां न त्वदभीष्टवत् प्रत्यक्षादिविरोधः ; प्रत्युतानुगुण्यमेव । तस्मादेवंविधनिर्बाधानन्यपरबहुविधश्रुत्यनुसारेण जीवपरसामानाधिकरण्यस्य भेदनिषेधस्य च निर्वाहे संभवति, निर्दोषकल्याणगुणाकरे ब्रह्मणि अविद्यादिदोषमाविष्कुर्वन् आत्मीयामसूयामेवाविष्करोषि। निर्णीतं (तन्निर्णीतं) च **मोक्षधर्मान्ते** परस्य बन्धप्रसङ्गरहितत्वम्, इतरस्य बन्धमोक्षभागित्वं च, "तत्र यः परमात्मा तु स नित्यो निर्गुणो मतः । स तु नारायणो ज्ञेयः सर्वात्मा पुरुषो हि सः ॥ न लिप्यते कर्मफलैः पद्मपत्रमिवाम्भसा । कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते ॥" इति ॥ **इत्यविद्याकल्पकश्रुतार्थापत्तिभङ्गः ॥ ४० ॥**

**(186) मायाविद्यादिशब्दैः प्रकृतिरभिम(हि)ता ज्ञानकर्मादयो वे-**
**त्येतत् तत्तत्प्रदेशे स्फुटविदितम् ; अतो न त्वदिष्टाऽस्त्यविद्या ।**
**किंचाविद्यादिशून्यः पर इति विविधाम्नायकण्ठोक्तमर्थं**
**क्षेप्तुं मायादिशब्दः क्षम इति वदतः स्यादविद्या तवैव ॥ ४१ ॥**

आस्तां श्रुतार्थापत्तिः ; श्रुतिभिरेव भावरूपाज्ञानं सिध्यतीत्यत्राह **मायेति** ॥ 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इत्यत्र न प्रकृतेर्मिथ्यात्वं प्रतिपाद्यते ; यथाक्रममुद्देश्योपादेयस्थापनोपपत्तेः। अत्र हि पूर्ववाक्यस्थ**मायामायि**शब्दार्थबुभुत्सायां प्रसिद्धार्थ**प्रकृतिमहेश्वर**शब्दाभ्यां संशयादिरपाचिकीर्ष्यते ; अन्यथा उद्देश्योपादेयक्रमविपर्यासः । तथा चाहुः, "यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्" इति ।

न च **मायाशब्दो** मिथ्यावाची ; लोकवेदनिघण्टुपाठाभावात् । क्वचित्प्रयोगस्तु भाक्तः स्यात् ; अन्यथा, 'देवमायेव निर्मिता', 'स्वमायया सांप्रतमागतं वा', "ऋते मायां विशालाक्षीं तव पूर्वपरिग्रहाम्', "तेन मायासहस्रं तत्" 'इत्यादिभिर्विरुध्येत । **नीतिशास्त्रेषु** च मुख्यामुख्यसंकलनेन सप्तविधोपायपरिगणने **मायेन्द्रजालयो**रन्यथाकरणान्यथाप्रतिभासनसामर्थ्यरूपतया विभागः सिद्धः। मन्त्रौषधादि-

---

प्रा॰ – ब्रह्मण्यविद्यादिदोषप्रतिपादनं असूयाविष्करणं इत्येतत् द्रढयितुं निर्णीतं चेत्यादि उक्तम् ॥४०॥

वी॰— तन्निर्णीतमित्यत्र अन्यो वा पाठः। तेन सूत्रकृता निर्णीतमित्यर्थो वा। वस्तुतः तदिति न स्यात्। पूर्वव्याख्यायां तत्पदं विनोपादानाच्च ॥ ४० ॥

अविद्याविषये प्रत्यक्षप्रमाणं निरस्तम्। अनुमानञ्च द्विविधं तर्केण श्रुतिविरोधेन च व्युदस्तम्। श्रुत्यर्थापत्तिरपि शातिता । अथ श्रुतिरेव साक्षादस्तीति वादः क्षिप्यते। श्रुतौ मायाशब्दः अविद्याशब्दः अनृतशब्दः असच्छब्दादिश्च श्रूयमाणाः यथायथं प्रकृतिवाचिनः। मायाशब्देन कचित् ज्ञानमुच्यते ;अविद्याशब्देनानृतशब्देन च कर्म। असच्छब्देनाचेतनादि। इत्येतत्—इत्ययमर्थः, तत्तत्प्रदेशे पूर्वापरपरिशीलने स्पष्टं स्वयमेव ज्ञातं भवति। त्वदिष्टा तु या अविद्या ब्रह्माश्रिता जीवाश्रिता वा मिथ्याभूता दोषभूता च, न सा तत्र विदिता भवति। किञ्च श्रुत्यन्तरैः ब्रह्मणि अविद्यादिसर्वदोषदूरे कथ्यमाने तद्विरोधेन तस्मिन्नेव तत्संबन्धं मायादिपदघटितानि वाक्यानि न बोधयेयुरित्यतोऽपि तेषामन्यार्थकत्वं ग्राह्यम्। एवं स्थितेऽपि मायादिशब्दमादाय ब्रह्मणि दोषं वदतस्ते अद्वैतिन एव अविद्या=यथावच्छास्त्रार्थज्ञानमस्तीति वक्तव्यं भवति ॥

सप्तविधेति । "दण्डनीतौ सामाद्युपायचतुष्टयादन्ये मायोपेक्षेन्द्रजालरूपाः अमुख्यास्त्रय उपाया उपदिष्टाः" इति तात्पर्यचन्द्रिका (गी. 7. 14.)

विशेषवति च मायावीति प्रयोगः । न तु क्वचिदपि मिथ्यार्थसंबन्धिनि । तिमिरादिभासितरज्जुसर्पादौ च मायाशब्दो न दृष्टचरः । स्वमतव्यामोहितानां प्रयोगस्त्वनादेयः । "मायां न सेवे भद्रं ते न वृथा धर्ममाचरे", "मायाविनं मायया वर्तमानम्" इत्यत्र च व्यामोहनमात्रं विवक्षितम् । "तेन वञ्चयते लोकान् मायायोगेन केशवः" इत्येतदप्यसुरवञ्चनशक्तियोगपरम् । "इन्द्रो मायाभिः पुरुरूप ईयते" इत्येतच्च शक्तिविशेषैः प्रभूतरूपप्रकाशनपरम्; अन्यथाऽनन्वयात् । न चेदमिन्द्रभ्रान्तिपरं वाक्यम्, प्रशंसार्थप्रकरणविरोधात्। कथमन्यथा, "युक्ता ह्यस्य हरयः शता दश", "भूरि त्वष्टेव(ह) राजति" इत्यादिकं घटते? "संभवाम्यात्ममायया" इत्येतदप्यौचित्यात् स्वच्छन्दावतारहेतुभूतबुद्धिविशेषविषयम्, 'माया वयुनं ज्ञानम्' इति च नैघण्टुकाः। एवं सति, "इच्छागृहीताभिमतोरुदेहः", "समस्तशक्ति रूपाणि तत् करोति जनेश्वर । देवतिर्यङ्मनुष्याख्याचेष्टावन्ति स्वलीलया ॥" इत्यादिभिरैकार्थ्यं स्यात् । "मम माया दुरत्यया" इत्यादिषु 'गुणमयी' इति विशेषणात् त्रिगुणद्रव्यविषयत्वमेव कण्ठोक्तम् । तथा च तन्नामपाठः। एतेन, "भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया" इत्यपि गतार्थम्। 'भूयश्चान्ते विश्वमायानिवृत्तिः' इत्येतदपि प्रस्तुतयोगबलात् निश्शेषमायातरणमेव निर्दिशति । एवं "विष्णुमायामहावर्त....", "विष्णोर्विचित्राः प्रभवन्ति मायाः" इत्यादिकमपि सत्यविषयमेव संमन्तव्यम् । "मायामात्रं तु" इति सौत्रं पदमपि स्वतन्त्रसंकल्पमूलस्वाप्नसर्गस्याश्चर्यत्वेनमत्त्वपरम् । जीवकर्तृकसृष्टित्वव्यवच्छेद एव ह्यधिकरणे युज्येत । प्रागेव हि स्थापितप्रपञ्चमिथ्यात्वानामिह पुनस्सुप्रसिद्धे स्वप्नविषये विशेषतश्शङ्का नाङ्कुरति । योगे वा जागरप्रपञ्चसत्यत्वमभ्यनुज्ञायैव चिन्ता न स्यात् ।

अविद्याशब्दोऽपि न क्वचिदप्यनिर्वचनीयजगदुपादानविषयः। तथा हि, "क्षरं त्वविद्या ह्यमृतं तु विद्या" इत्यादौ, 'क्षरं प्रधानम्' इत्यादिप्राकरणिकवाक्यैकार्थ्यात् प्रधानविषयत्वमेव युक्तम्। अत्र च विद्याशब्दोक्तात् पुरुषादन्यतामात्रेण प्रकृतौ अविद्याशब्दः । न च सा मिथ्या, 'गौरनाद्यन्तवती सा जनित्री भूतभावनी', 'त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम्', 'अचेतना परार्था च नित्या सततविक्रिया' इत्यादिभिस्तन्नित्यत्वसिद्धेः । कथं तर्हि, 'मृत्युर्वै परे देव एकीभवति', 'तमः परे देव एकीभवति' इति वाक्ययोः निर्वाहः? इत्थम्–सर्वाधारभूते परस्मिन् देवे विभक्तावस्थात्यागेन एकत्वदशावस्थानमात्रं ह्यत्राभिप्रेतम् । एतेन, 'प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी । पुरुषश्चाप्युभौ एतौ लीयेते परमात्मनि ॥' इत्येतदपि व्याख्यातम्। 'अविद्यया मृत्युं तीर्त्वा' इत्यत्राविद्याशब्दस्तत्त्वज्ञानविरोधिनिवर्तकसत्कर्मविषयतया भाष्ये व्याख्यातः। अनुवाकप्रकृतयोर्विद्याकर्मणोरेव 'विद्यां च अविद्यां च यस्तद्वेदोभयं सह' इति परामर्शात्, पर्युदासवृत्तेर्नञश्चात्र विषयत्वोपपत्तेः। 'अविद्यया मृत्युं प्राप्य स्थित' इति निर्वाहस्य चातिक्लिष्टत्वात्।

व्यी— परमात्ममात्रपरिशेषणात् मायाया अनित्यत्वं बाधितत्वं वा स्यादिति शङ्कते कथमिति। एकत्वदशावस्थानेति । एकत्वदशायाऽवस्थानेत्यर्थः । अनुवाके प्रकृतयोरिति । ईशावास्यानुवाके, 'तेन त्यक्तेन भुञ्जीथाः', 'कुर्वन्नेवेह कर्माणि', 'अविद्वांसोऽबुधो जनाः', 'आत्मैवाभूत् विजानतः' इति विद्याकर्मणोरेव प्रकृतत्वम्। पर्युदासवृत्तेरिति । प्रतिषेधः पर्युदासश्च नञर्थः। प्रतिषेधः संसर्गाभावः। पर्युदासो भेदः। विद्याभिन्नरूपार्थवाचित्व इत्युक्तं भवति ।

बाधाभावे च स्वरसपरित्यागायोगात्। 'ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया' इत्युपबृंहणानुगुण्याच्च। 'अविद्या कर्मसंज्ञाऽन्या' इत्यत्र बन्धककर्मविषयत्वं वाक्यशेषसिद्धम्। 'अविद्यायामन्तरे वर्तमानाः', 'सोऽविद्याग्रन्थिं विकिरतीह सौम्य', 'अविद्यासञ्चितं कर्म', 'अविद्यातरुसंभूतिबीजमेतद् द्विधा स्थितम्' इत्यादौ प्रकरणानुगुणतदर्थविषयत्वं ग्राह्यम्।

आदिशब्देन 'अनृतेन हि प्रत्यूढाः', 'त इमे सत्याः कामाः अनृतापिधानाः', 'तेषां सत्यानां सतामनृतमपिधानम्' इत्याम्नातोऽनृतशब्दश्च संगृहीतः। सत्कर्मणि ऋतशब्ददर्शनात् तदितरवृत्त्या दुष्कर्मविषयोऽत्रानृतशब्दः। दुष्कृतस्य च ज्ञानपिधायित्वं श्रुतिस्मृतिसिद्धम्, त्वयाऽपि दुस्त्यजं च। एवमसद्व्याकृतशब्दैरपि (?) न मिथ्यार्थग्रहः, अवस्थाविशेषवैशिष्ट्यपरत्वात्।

तदत्र फलितमाह **अत** इति। **त्वदिष्टा** अनिर्वचनीयत्वादिविशिष्टेत्यर्थः। अनन्यथासिद्धबहुश्रुतिप्रतिहतेश्च **मायादिशब्दैर्न** ब्रह्माज्ञानक्लृप्तिरित्याह **किं चेति**। 'निरवद्यः' इति सामान्योक्त्याऽप्यज्ञानरूपमवद्यं निरस्यते। अस्ति चाकर्मवश्यत्वस्वतस्सर्वज्ञत्वश्रुतिः, 'सकला न यत्र क्लेशादयः सन्ति परावरेशे' इत्याद्युपबृंहणशतं च। मोक्षप्रदत्वश्रुत्या च स्वयं न मायासंबद्धः; तत्प्रसादाधीनं ह्येषां मायातरणं गीयते। ननु, 'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि' इति कर्मवश्यस्य योगसिद्धस्य गुरोरविद्यातारकत्वमाम्नातमिति चेत्; अस्तु तत्रार्थस्वभावात् परम्परया तारकत्वम्, ब्रह्मण एव साक्षान्मोक्षप्रदत्वेन प्रतिपादनात्। एवमविद्याप्रसङ्गरहिते ब्रह्मणि असाधकतमैः शब्दविशेषैरविद्यां वदतस्तवैव अप्रतिपत्तिविप्रतिपत्तिभ्यां निग्रहः स्यादित्यभिप्रायेणोक्तम् **स्यादविद्या तवैवेति**॥

**इति मायादिशब्दानां ब्रह्मदोषप्रतिपादकत्वानुपपत्तिः॥ ४१॥**

**(187) निर्दोषश्रुत्यबाधप्रणयिभिरुदितो ब्रह्मजीवानुबन्धी**
**मायाविद्याविभागोऽप्यफल इह; परोन्मोहनार्था हि माया।**

---

श्री— अविद्यातरिति। अविद्यावृक्षोत्पत्तिबीजम् = अहंकारममकारोभयमित्यर्थः। आदीति। मायाऽविद्यादीति आदिशब्देन। असद्व्याकृतशब्दैरिति बहुवचनश्रवणात् शब्द एको भ्रष्ट इति ज्ञायते। अज्ञानादिशब्दाः सन्ति निर्देष्टव्याः। परंतु अवस्थाविशेषवैशिष्ट्यपरत्वादित्युक्त्या तद्ग्रहणं न भवति। 'नासदासीन्नो सत्' इत्युक्तसदसद्भिन्नशब्दो गृहीत। अतोऽसद्व्याकृतादिशब्दैरिति वा पाठः। अव्याकृतशब्दः कथं मिथ्यार्थक इति चेत्—नामरूपरहितमित्यनिर्वचनीयपर्याय इत्यभिमानः। अस्ति चेति। 'स न साधुना', 'अपहतपाप्मा' इत्यादिः श्रुतिः, 'यः सर्वज्ञः' इत्यादिश्च। निग्रह इति। 'स्यात् अविद्या तवैव' इति नाद्वैतिनः प्रति क्रोधोक्तिः; किंतु वादे निग्रहस्थानप्रसक्तौ तदनाविष्कारे स्वस्य निग्राह्यत्वापत्त्या तत्परिहाराय प्रतिवादिगताप्रतिपत्तिविप्रतिपत्तिरूपनिग्रहस्थानोद्भावनमित्याशयः॥

ब्रह्मण्येवाविद्यास्वीकारे निर्दोषत्वश्रुतिविरोध इति व्यवहारदशायामपि ईश्वरभूतस्य ब्रह्मणो निर्दोषत्वं जीवभूतब्रह्मण एव सदोषत्वं वक्तव्यमिति आस्तिक्यातिशयात् मायाऽविद्ययोर्भेदमङ्गीकृत्य ईश्वरस्य मायित्वं जीवस्य चाविद्यावत्त्वमास्थिषत केचिदद्वैतिनः। तदिदं जरदद्वैतिमतं विवरणकारादिभिः तैरेव निरस्तं स्वयमपि निरस्यति निर्दोषेति। नात्र अद्वैतमते श्रुतेर्निर्दोषत्वमुच्यते। किंतु निर्दोषमिति श्रुतिः निर्दोषश्रुतिः। इह—ब्रह्मणो निर्दोषत्वप्रतिपादकश्रुतेरबाधे प्रणयिभिः आसक्तैरद्वैत्येक-

मिथ्यार्थान् दर्शयित्वा विहरणमपि तैस्तादृश भावयन्ती
मायैव स्यादविद्या न कथम्; इतरथा स्यादनुच्छेदनीया ॥ ४२ ॥

अत्र केचिन्निर्दोषश्रुत्यविरोधमाकाङ्क्षन्त एव व्यमाहु (इहु)—अविद्या किल स्वकल्पिताना क्षेत्रज्ञाना सत्य तिरोधायासत्य सत्यत्वेन प्रकाशयति, दु खादिक च दोग्धि। माया तु ब्रह्मण सत्यमसत्य च सम्यगेव दर्शयन्ती, दु खादिक चानुत्पादयन्ती विश्वव्यापारलीलारस प्रसूत इति। इम विभागमनुभाष्य दूषयति-निर्दोषेति। अफलत्व विवृणोति परेति। अय भाव —ये नाम केचिन्मायया क्रीडन्ति, न तेऽनया मोमुह्यन्ते, परानेव व्यामोहयन्ति। अत्र तु न वस्तुतस्सन्ति भवता परे मोहनीया। कल्पितास्तु क्षेत्रिण कल्पितानि च मोहकरणोपकरणानि स्वय सर्ववित् परमेश्वरो मायावी यदि कल्पितत्वेन पश्येत्, कथ तान् मुमोहयिषेत्? कथ च तैश्चिक्रीडिषेत्? अत ईदृशोपाधिविभागेन

---

श्री-देशिभि उदित मायाया अविद्यायाश्च विभाग = भेद। तत्र ब्रह्मगता माया, जीवगता चाविद्या। एवञ्च सदोषनिर्दोषविभागे यादृशा दोषा जीवे सन्ति व्यावहारिका —पारमार्थिकदोषस्याप्रसिद्धत्वात्—ते ब्रह्मणि न सन्तीत्यस्यैव निर्दोषशब्दविवक्षितत्व सिद्धम्। परेषु भ्रान्तिदु खादिहेतु माया, स्वस्मिन्नेव भ्रान्तिदु खादिहेतुरविद्या। यथा मायावी मायया परान् वञ्चयन् स्वयमभ्रान्त एव, तथेश्वर इति। नन्वीश्वरमाययैव जीवेषु भ्रान्तिसभवे जीवेष्वविद्यास्वीकार किमर्थ इति चेत्—अविद्याधीनत्वात् जीवभावस्य, साऽपि स्वीकार्या। अविद्याराहित्ये च मायाया अपि न भ्रान्तिजननसामर्थ्यम्, यथा मुक्तेषु। मायाविनश्चेश्वरस्य लीलारसानुभवरूप आनन्द एव, न दु खलेशोऽपीति। एव विभागस्तदुक्त उपपादित। अफल इत्यादि। एवमुदितो विभाग अफल, उभयोरप्युभयकार्यकरत्वात्। यत्रैको जीवो जीवान्तर वञ्चयति, यथा मायावी, तत्र जीवगता ह्यविद्या मायाकार्य जनयति। तथा ईश्वरस्य लीलरसमभिलपतो जीवाजीवरूपसर्वप्रपञ्चज्ञानस्यावश्यकत्वात् तस्य प्रपञ्चस्य च मिथ्यात्वात् ब्रह्मातिरिक्तसर्वज्ञान मायाधीनमेव वक्तव्यमिति मायाया स्वाश्रयेऽपि भ्रान्तिहेतुत्वात् अविद्यात्वमस्त्येवेति। एवञ्च कथ निर्दोषत्वम्। श्लोके उपरि मायाशब्दस्य द्वि प्रयुक्तत्वात्, परोन्मोहनार्था हि मायेति वाक्य पृथक् मिथ्यार्थानित्यादि पृथक। तदुक्तार्थे विकल्प क्रियते। मायाया जीवादिभ्रान्तिजनकत्वेऽपि, 'इद सर्वमसत्यम्, ब्रह्मैकमेव सत्यम्' इति याथबुद्धिहेतुत्वमप्यस्ति जीवगताविद्या तु सर्वप्रपञ्च सत्यत्वेन दर्शयति तथा मायाया दु खहेतुत्व नास्ति अविद्यायास्तु तदपीति विभाग इष्यते, न वा। आद्ये परमोहनार्था माया परान् सत्यत्वेन यो गृह्णाति तस्यैवोपकरण भवितुमर्हति। न ह्यसत्यत्वेन ज्ञातान् वञ्चयितु मायावी यतते। तथा चेश्वरो न व्याम्रियेत। यदि असत्य सर्वं सत्यत्वेन गृह्णाति, तर्हि परमात्मान प्रति मिथ्याभूतान् तदधीनञ्च लीलारसार्थं विहार दर्शयन्ती माया यदि सत्यत्वेन दर्शयेत्, सा माया अविद्याकार्यकरत्वादविद्यैव स्यात्। चतुर्थपादे 'मायैव स्यादविद्या न कथम्' इत्यत्र वाक्यसमाप्ति। इतरथेत्यादि वाक्यान्तरम्। इतरथेति। मायाया अपि असत्याना सत्यत्वेन प्रदर्शनार्थत्वेऽपि दु खहेतुत्वाभावात् विभागो युक्त इति चेत्—तर्हीत्यर्थः। तदा आनन्दमयत्वहेतुर्माया कदाऽप्युच्छेद्या न भवेत्। सुखहेतुत्वेनात्यन्तेष्टत्वात्। तथा च द्वैतापत्ति। ईश्वरेणोच्छेदे प्रकृत्यपकरणेऽपि जीवगताद्वैतज्ञानात् ईश्वरस्यापि लोप इति चेत्—स्वनाशहेतुत्वात् ईश्वरो जीवानुग्राहकोऽपि न स्यात्। एव तर्हि सर्वजीवाविद्याविलयप्रसगश्च।

व्यमाहुरिति सर्वत्र स्थित पाठ श्रीभाष्ये दहरविद्याधिकरण इवाशुद्धः। विभागपदस्यैवोपरि

जीवेश्वरयो सदोषनिर्दोषत्वविभागो दुस्साध इति। अथ परविद्याकल्पितानि जीवाद्युपकरणानि ब्रह्मापि स्वमायया परमार्थवत्पश्यतीति मन्वीत, तत्राह **मिथ्यार्थानिति। दर्शयित्वा।** सत्यत्वेनेति शेष.। **तादृशं** मिथ्याभूतमित्यर्थ। इय स्वयमसत्येन माया स्वसिद्धानि अविद्यासिद्धानि वा मिथ्याभूतानि विहारोपकरणानि तत्साध्यं विहरणं च यदि सत्यत्वेन दर्शयन्ती अर्भकादीनामिव प्रतिबिम्बकल्पैजीवैस्संव्यवहारमारभेत, सैव कथमविद्या न स्यात॥ सुखजनकत्वादिति चेन्न, अविद्यायामपि तस्याभ्युपगमात्। दुःखाजनकत्वे सतीति चेत्, तत्राह **इतरथेति। इतरथा**--दुःखासंभिन्नसुखजनकत्वेनाविद्यात्मकत्वाभावे सतीत्यर्थ। ननु अनादित्ववत् मायाया अनुच्छेद्यत्वमप्यस्तु, का नो हानिरिति चेत्, प्रथमं तावत् असत्यस्य सर्वस्यानित्यत्वाभ्युपगमविरोध, अथ च ब्रह्मस्वरूपवत् निर्बाधस्य नित्यस्य भावरूपस्यासत्यत्वकल्पितिविरोध., अथवा (अपिच?) विश्वमायानिवृत्तिरिति स्वाभीष्टपरतया व्याख्यातश्रुतिविरोध, नित्यानित्यवस्तुविवेकवैयर्थ्यं चेति॥ **इति मायाविद्याविभागभङ्गः॥ ४२॥**

(188) **मिथ्याभूतस्य सत्यं निरुपधि भजते न ह्युपादानभावं**
**तस्योपाधिश्च मिथ्यात्मक इति निरधिष्ठानता नास्य युक्ता।**
**तस्मात् सत्यानृते द्वे मिथुनमिति न सत्; विश्वसत्ता ह्यबाध्या**
**सद्विद्यायां च, 'कार्यं ननु कथमसतस्सद्भवेत्', इत्युपात्तम्॥ ४३॥**

यत्तु मिथ्याभूतस्य प्रपञ्चस्य तादृशमेवोपादानं भवितुमर्हतीत्याहु, तदनुभाषते **मिथ्येति।** अयं भाव—यद्यपि ब्रह्मोपादानकमशेषं कार्यमाम्नातम्, तथाऽपि तस्य न स्वरूपत तदुपादानत्वं युक्तम्, निर्विकारत्वात्; विरूपत्वाच्च। अत उपाध्यपेक्षाया ब्रह्मण उपादानत्वघटकतया प्राप्त उपाधि स्वकार्यवत्

---

वी–प्रयोगात्, भंगार्थकत्वाभावात्। प्रथममिति सामान्ये नपुंसकम्। प्रथमं यथा तथा हानिर्भवतीत्यर्थो अथ चेत्यादिद्वितीयतृतीयतुरीयमिति पदस्थाने वा। एव प्रथम द्वितीयमित्यादिः प्रयोगो न्यायकुसुमाञ्जलावपि। असत्य सर्वमनित्यमिति स्वाभ्युपगमविरोध· प्रथमा हानिः। द्वितीयामाह अथचेति। तृतीयामाह अथवेति। वाशब्दः समुच्चये इति संदर्भतः सुज्ञानम्। चतुर्थीमाह नित्येति॥ ४२॥

अविद्यासाधकप्रमाणेषु अर्थापत्तौ श्रुतार्थापत्तिर्निरस्ता श्रुतिविरोध प्रदर्श्य। अथ श्रुतिश्च न तदर्थिकेत्युक्तम्। अथ लौकिकार्थापत्तिर्विचार्यते मिथ्येति। जगतो मिथ्यात्वान्यथानुपपत्त्या उपादानस्यापि मिथ्यात्वम्। ननु ब्रह्मणः सत्यस्योपादानत्वमद्वैतीष्टमिति चेत्—अत एव असत्योपाधिविशिष्टमेव तत् उपादानम्, न तु निरुपाधिकम्। तर्हि उपाधिमात्रमुपादानमिति न, कार्यस्य कारणस्य च मिथ्याभूतस्याधिष्ठान ह्यावश्यकम्। तस्मात् 'सत्यं ब्रह्म, अनृतमविद्या' इत्युभयं मिथुनीभूय जगदुपादानमिति पूर्वपक्ष·। निरस्यति इति नेति। विश्वस्य सत्ता पारमार्थिकी, न तु व्यावहारिकी, तथैव सर्वप्रमाणसिद्धत्वात्। ननु सद्विद्यायां, 'मृत्तिकेत्येव सत्यम्' इति कार्यमिथ्यात्वमवगम्यत इति चेत्, तत्राह सदिति। सद्विद्यायामपि त्वदुपात्तस्थलेऽपि, 'कथमसतस्सज्जायेत' इति वाक्येन जगत सत्यत्वमनुभवसिद्धं स्थिरं कृत्वा यस्मादिदं सत्, तस्मात् नास्यासत् उपादानमिति कारणस्यापि सत्यत्व स्थापितम्। 'कथमसतः सद् भवेत्' इति कार्यं सत्यत्वेनोपात्तं ननु। अत एतद्विरोधेन मृत्तिकावाक्यार्थवर्णनमयुक्तम्। प्रत्युत सत्यविशेषणतयाऽप्यसत्यस्य कारणत्वमेव त्याज्यम्।

विरूपत्वात्=चेतनत्वेन वैलक्षण्यात्। न सदित्यत्र वक्ष्यमाणातिरिक्तमभिप्रेता युक्ति दर्शयति।

मिथ्याभूत एवायः । स च स्वरूपसत्यत्वाभावात् निरधिष्ठानो न सिध्येत् । अतो ब्रह्मण उपादानत्वार्थमुपाधेः स्वरूपसिद्ध्यर्थं मिथःकरम्बितसत्यानृतमिथुनसंभवः सर्गः स्वीकार्यः—इति । अत्र लोकसिद्धोपादानप्रक्रियाविरोधमभिप्रेत्याह **इति न सदिति** । सत्ययोरेव हि प्रकृतिविकृतित्वं दृष्टम् । न च कल्पितरजताद्युपहितस्य तत्तदर्थक्रियाकारित्वम् । अतो मिथ्योपसृष्टतयाऽपि ब्रह्मण उपादानत्वं मृग्यमिति भावः । उपादानमिथ्यात्वकल्पकासिद्धिमाह **विश्वेति** । प्रपञ्चस्य सत्यत्वं तावत् व्यावहारिकव्यपदेशेन त्वयाऽपि संगृह्यते । बाधश्च परिहरिष्यत इति भावः । श्रुतिविरुद्धं च कार्यमिथ्यात्वमित्याह **सद्विद्यायामिति** । "तद्धैक आहुः, असदेवेदमग्र आसीत्" इति परमतमनूद्य स्वमतेन तत्प्रतिक्षेपे, "कुतस्तु खलु सोम्यैवं स्यात् कथमसतः सज्जायेत" इति कार्यसत्यत्वं संप्रतिपन्नत्वेनोपात्तम् । अतः प्रथमप्रतीतानुसारेण, (१)'अपागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयम्' इत्यादिकमसत्कार्यवादनिरासार्थतया नेतव्यमिति भावः। एवं, 'मृत्तिकेत्येव सत्यम्', 'त्रीणि रूपाणीत्येव सत्यम्' इत्यादौ च श्रुत्युपात्तमृत्तिकादिसत्यत्वानुरोधेन उपादानोपादेयद्रव्यतादात्म्यपरत्वसंग्रह एव साधीयान् । "अथ नामधेयं सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्यम्" इत्यत्र च प्रकृत्यवगतप्राणसत्यत्वाबाधेन संबन्धविभक्तेः उचितविशेषसंभवे विपरीतविवक्षाकल्पनमन्याय्यम् । यदि च प्राणेषु व्यावहारिकं सत्यत्वमिहानूद्येत, तदा, 'मिथ्याभूतानाम् एव सत्यम्' इति किं नाम त्वदिष्टं स्यात्? प्रत्युत समभिव्याहारसामर्थ्यात् ब्रह्मणोऽपि सत्यत्वमविशिष्टोपात्ततया व्यावहारिकमित्येव सिध्येत् । स्वरूपेऽधिकसत्यत्वविधौ च तस्य नीलादिवत् निष्प्रतियोगिकत्वात् न षष्ठी समन्वीयेत । अतो यथाभाष्यमिहार्थः ॥ **इत्यविद्याकल्पककार्यमिथ्यात्वानुपपत्तिभङ्गः ॥ ४३ ॥**

---

(१)– सत्ययोरेवेति । तत्तदर्थक्रिया = आभरणादिनिष्पत्तिः। शुक्तौ रजतकल्पनेव ब्रह्मणि जगत्कल्पनेति वदद्भिः दृष्टान्ते कार्यकारणभावप्रकारविचारावसरे दार्ष्टान्तिके स्वाभिमतरीतेरतिदेशनमयुक्तम् । अतः शुक्त्यज्ञानं रजतरूपेण परिणमतीति वादोऽनुभवदूरः । अज्ञानं चाकचक्याधीनरजतसंस्कारः काचादिदोष इत्येषां सहकारित्वं स्वीकृत्य शुक्तिः रजतरूपेण विवर्तत इत्येतावदेव वक्तुं शक्यम्। तत्र परिणाम्युपादानस्य कस्यचिदपेक्षा व्यर्था। तद्वत् ब्रह्म अविद्याद्वितयेति भामत्युक्ताज्ञान-पूर्वसंस्कारोभयसहकृतं जगद्रूपेण विवर्तत इत्येतावदेव युज्यते ; न त्वविद्यायाः उपादानकोटिप्रवेशः । विवर्तवादस्य कार्यकारणवैरूप्यं पोषकमेव । अतो ब्रह्ममात्रमुपादानं भवतु इति चात्र विवक्षितम्।

वाचारम्भणमिति वाक्यम् अपागादिति वाक्यसमनन्तरश्रुतम्; न तु मृत्तिकावाक्यस्थम्। तदा कुतस्त्वित्यादेः प्रथमप्रतीतत्वाभावात्। 'वाचारम्भणं विकारो नामधेयम्, अपागादग्नेरग्नित्वम्' इति घृत्तौ पाठक्रमःस्थितो मा भूत् । असत्कार्यवादः = तार्किकीयोऽवयवातिरिक्तावयविद्रव्योत्पत्तिवादः । मृत्तिकादिसत्यत्वेति । घटकरकादेर्मृत्तिकात्वमबाधितमित्युक्त्या जगत्सत्यत्वावगमात् दृष्टान्तदार्ष्टान्तिकता न सत्यानृतभावेन, किं तूपादानोपादेयैक्येनेति ब्रह्मैक्यं जगति सत्यमेवोपपादनीयमिति भावः। प्राणा इति । सत्यस्येति षष्ठ्यन्तप्रकृतिभूतसत्यपदोक्तसत्यत्वाबाधेन षष्ठ्यर्थो वाच्यः निर्वाहकत्वादिरूपः। तस्य = सत्यत्वस्य निष्प्रतियोगिकत्वात् । किमपेक्ष्य सत्यमिति किञ्चिदपेक्षकत्वाभावात् । अधिकसत्यत्वमिति आधिक्यस्य सप्रतियोगिकत्वेऽपि पञ्चमीनिर्देशस्यैव कार्यतया षष्ठ्ययोग एवेति भावः ॥ ४३ ॥

(189) कार्याणां यत् सरूपं किमपि गुणमयं कारणं कापिलोक्तं
तत् क्षिप्तं माक्षिकादेः क्रिमिमुखजननात् सूत्रकारैर्द्वितीये ।
तस्मात् मिथ्यात्मकस्य स्वयमनुपधिकं सत्यमेवास्तु सूतिः
सत्योपादानवादे जगदपि न मृषा स्यादितीष्टं त्विदं नः ॥ ४४ ॥

अत्र यदुपजीवनेन मिथ्याभूतस्य मिथ्याभूतमेवोपादानमिति कल्प्यते, तमेव प्रकृतिविकृत्यैक रूप्यनियमं निरस्यति **कार्याणा**मिति । नविलक्षणत्वाधिकरणे हि, 'सत्त्वरजस्तमोमयस्य जगतः तादृशमेवोपादानं युक्तम् । न तु निर्गुणं ब्रह्म' इति वदतः सांख्यस्य द्वितीयेऽध्याये सूत्रकारैरुत्तरं दत्तम्, 'दृश्यते तु' इति । कथंचित् सारूप्यं ब्रह्मणोऽपि सिद्धम्; सर्वथा सारूप्यं न ते प्रकृतेरपि स्यात्; भेदाभेदाङ्गीकारेऽपि समविषमदशाभेदव्यवस्थापनात् । अतः कार्यान्तरकारणव्यावर्तकाकारेण सारूप्यमपेक्षितमिति वक्तव्यम् । तत्र माक्षिकगोमयादिभ्यः क्रिमिवृश्चिकाद्युत्पत्तिदर्शनात् व्यभिचारः ॥ एष्वपि पार्थिवत्वाकारेण सारूप्यमस्तीति चेत्, किमतः? तेनाऽऽकारेण तेषां तत्कारणत्वे पार्थिवान्तरेभ्योऽपि तज्जातीयोत्पत्तिप्रसङ्गात् । यदि च असजातीयोत्पादकव्यावर्तकाकारेण सारूप्यमिष्येत, कथमिदं प्रकृतौ संभाव्येत? सर्वस्याप्यन्ततः प्रकृतिकार्यत्वाभ्युपगमात् तद्व्यतिरिक्तोपादानानङ्गीकाराच्च । एवं कार्यस्य विजातीयकार्यव्यावर्तकाकारेण सरूपमुपादानमित्यपि नियमो दूष्यः; सारूप्यविकल्पदौःस्थ्यस्य दुर्वारत्वात् । शरावादिजातीयव्यावर्तकघटत्वादिना मृदः सारूप्यायोगात् । अतः सारूप्येण वा वैरूप्येण वा अन्वयव्यतिरेकवता धर्मिग्राहकसिद्धेन वा केनचिदाकारेण निमित्तवत् उपादान[त्व]मपीति नियम.(?) ।

---

श्री— वैरूप्यात् ब्रह्म नोपादानमिति युक्तिं निरस्यति कार्याणामिति। कार्याणां जगति भूतादीनां सत्त्वरजस्तमोगुणमयत्वात् तत्सदृशमेव प्रकृतिद्रव्यमुपादानं भवितुमर्हतीति यत् अब्रह्मात्मकं प्रधानमुक्तम्, तत्, "न विलक्षणत्वात्" इत्यधिकरणे "दृश्यते तु" इति सूत्रेण माक्षिकगोमयादितः क्रिमिवृश्चिकाद्युत्पत्तिं प्रदर्श्य सूत्रकारैरस्मदुभयसंमतैः द्वितीयाध्याये क्षिप्तम् । श्लोके जननादिति प्राचीनान्ध्रलिपिग्रन्थपाठः शुद्धः । जनिनेति पाठे तु क्लेशः । जनिशब्दस्य स्त्रीलिङ्गत्वात् । तस्मात् विलक्षणस्याप्युपादानत्वस्य श्रुतिबोधितत्वेन स्वीकार्यत्वात् जगतो मिथ्यात्मकत्वेऽपि तस्य सत्यं ब्रह्मैव साक्षादुपादानं भवतु । सत्यस्योपादानत्वे जगत् कथमसत्यमिति चेत्–शुक्तितद्ज्ञानकाचादिदोषचाकचक्यादिषु किं मिथ्याभूतं रजतकारणमस्ति । अतः सत्यादेवासत्यं तत्राप्येष्टव्यम् । तत्रापि मिथ्याभूताविद्येष्यते इति चेत्–लोकप्रसिद्धं किल प्रदर्शनीयम्, न तु दार्ष्टान्तिके सङ्कल्पितं दृष्टान्ते स्वच्छन्दत आनेयम् । वस्तुतो जगत् सत्यं स्यादितीदं नास्मान् प्रति अनिष्टापादनम् । युष्मदनिष्टापत्तिभीतिश्चेत्—तत्प्राधान्ये त्यज्यतां श्रुतिरेवेति । अस्तु इति प्रयोगः सिद्धान्ते एवं स्वयमनङ्गीकारात् । इष्टंत्विदमित्यत्र इदं तु इष्टमिति तुशब्देन, यत् यदुपादानकं तत् तत्सरूपमिति नियमरूपमिदं वस्तुतो न सिध्यति, व्याप्तिग्राहकमानाभावादिति ज्ञाप्यते ॥

असजातीयेति=स्वसमानजातीयरहितेत्यर्थः । विजातीयेति । स्वावृत्तिकिञ्चिज्जातिमदित्यर्थः । अन्वयव्यतिरेकवतेति अनुमानसिद्धत्वोक्तिः । निमित्तवदिति । निमित्तमिवोपादानमपि भवतीत्यर्थः । इति नियम इति । इतीति पूर्वार्धविवक्षितोपपादनसमाप्तिः । अतः नियम इति न स्यात् ॥ ४४ ॥

एवं स्थिते सत्यकारणत्वं कार्याणामसत्यत्वं च स्थापयतस्ते निरुपाधिकात् सतो जगदुत्पत्तौ न विरोध ्त्याह तस्मादिति । निर्विकारश्रुतिविरोधात् उपहितब्रह्म इति चेन्न ; विकारमिथ्यात्वेन युष्माभिः तत्समाधानात् । सूतिः ; अध्यासाधिष्ठानतया उपादानमित्यर्थः । अत्र प्रसङ्गान्तरमाशङ्क्य परिहरति सत्येति । तुशब्देन, 'न केवलमिष्टप्रसङ्गता ; व्याप्तिसापेक्षे प्रसङ्गे पूर्ववत्सारूप्यनियमभङ्गोऽप्यस्ति' इति द्योत्यते ॥

इत्युपादानोपादेयसालक्षण्यनियमभङ्गः ॥ ४४ ॥

(190) दृश्यत्वात् विश्वमिथ्यावचसि विहतयोऽसिद्धयश्चात्र बह्व्यः,
पक्षादेः सिद्ध्यसिद्ध्योर्न हि गतिरितरा, नापि वादाङ्गमीदृक् ।
मर्यादा लोकसिद्धा विजहत इह ते नापरा सा प्रसिध्येत्,
निर्मर्यादोक्तिमात्रात् जगदपलपतः किं न सत्यं ततस्तत् ॥ ४५ ॥

अथ कार्यमिथ्यात्वासिद्धिरेवासिद्धा, अनुमानतः तत्सिद्धेरित्यत्राह दृश्यत्वादिति । मिथ्याशब्दोऽत्र, 'द्व्येकयोः' इतिवत् भावप्रधानः। 'विगीतं मिथ्या दृश्यत्वात्, यद् दृश्यं तन्मिथ्या यथा शुक्तिरूप्यम्' इत्यत्र सर्वे दोषाः समाह्रियन्ते ।

विहतयस्तावत् —विगीतपदं किञ्चिन्निष्ठं विगीतत्वमुपस्थापयति ; तस्यापि पक्षीकरणात् तन्निष्ठात्यन्ताभावो मिथ्यापदेनोपस्थाप्यत इति प्रतिज्ञापदयोर्व्याघातः ॥ द्वयोरपि पदयोः तत्त्वतः स्वार्थसमर्पकत्वाभावात् न व्याघात इति चेत्, एवं सति त्वन्मते क्वचिदपि प्रतिज्ञाविरोधो न स्यादिति

श्री— अर्थापत्तिप्रमाणेनाविद्यासिद्धिरिति वादस्य दूषणं कृतम्—कार्यमिथ्यात्वानुपपत्तिरूपं तत् प्रमाणमेव, न ; कार्यमिथ्यात्वासिद्धेः, तथा कार्यमिथ्यात्वे सत्यपि कारणमिथ्यात्वं न सिध्यति; तत्सत्यत्वेऽपि कार्यमिथ्यात्वं स्यात् ; वैलक्षण्येऽपि कार्यकारणभावसिद्धेरिति । तत्र कार्यमिथ्यात्वासिद्धिं परिहर्तुं मिथ्यात्वे दृश्यत्वं हेतुरिति अनुमानप्रमाणं 'विगितं मिथ्या दृश्यत्वात्' इत्युपन्यस्तं तैः। तद् दूषयति दृश्यत्वादिति। एवं 'कार्यमिथ्यात्वेऽपि कारणमिथ्यात्वं न सिध्यतीत्यसदुक्तिमात्रेण कार्यमिथ्यात्वमसद्दिष्टमिति न मन्तव्यमित्याविष्कर्तुञ्चेदं दूषणमिति मन्तव्यम् । मिथ्यावचसि=मिथ्यात्ववचसि । दृश्यत्वहेतुकं यत् विश्वस्य मिथ्यात्वं तत्प्रतिपादकवाक्यप्रयोगे इत्यर्थः । तत्र व्याघाताः असिद्धयश्चानेकविधाः । मिथो विरोधः अनुमानेऽन्यत्र च संभावितः व्याघात इत्युच्यते । असिद्धिस्तु प्रत्येकमेव सुवचा । मिथ्यात्वेऽपि व्यावहारिकसत्यत्वमस्तीति मन्वानः असिद्धौ सत्यामपि सिद्धिं स्वीचिकीर्षेदित्याशयेन तन्निरस्यति पक्षेति। पक्षे हेतावन्यत्र च सिद्धेरसिद्धेश्चोभयोः इतरा गतिः= समुच्चयरूपा निषेधरूपा वा न भवति । भावाभावयोर्विरोधात् । ननु विरुद्धमपि जल्पवितण्डारूपयोः कथयोर्दृष्टमित्यत्राह नापीति । यद्यपि दृश्येत, अथापि नास्य तदङ्गत्वम् । आवश्यकं ह्यङ्गं भवति । असामर्थ्यमूलकस्यावश्यकत्वं को नाम ब्रूयादिति । विरुद्धं न वक्तुमुचितमिति सर्वसंमतमर्यादासत्त्वेऽपि तामतिक्रम्यैव ब्रूम इति चेत्—तत्राह मर्यादामिति। मर्यादान्तरमंगीकृत्य पूर्वमर्यादा त्याज्या । का साऽन्या मर्यादा । यदायदा यथायथा विवक्ष्यते तदातदा तथातथोच्यते, कि मर्यादयेति चेत्—अनया रीत्या मिथ्यात्वमेव सिध्येदिति किम् ; सत्यत्वमपि सिध्येदिति ।

विगीतं मिथ्येति । मिथ्यात्वामिथ्यात्वविवादास्पदमिति पक्षः ; मिथ्यात्वं साध्यम् । तत्र विवादास्पदत्वरूपधर्मो नास्ति चेत्—न तस्य पक्षत्वम् । अस्ति चेत्—विश्वान्तर्गतस्य तस्य कथम्

विशृङ्खलविरुद्धभाषितेन भवता भवित यम् । ईदृशतत्त्ववेदिना च त्वया प्रतिवादिनोऽपि विरुद्धं वदन्तो न निग्राह्या ॥ परबुद्धिसिद्धविरोधात् तन्निग्रह इति न , परबुद्धिसिद्धेऽपि त्वया तत्त्वशून्यत्वावधारणात् । किंच, विगीतत्व यदि मिथ्या स्यात् , तदा सत्यत्वेन वा मिथ्यात्वेन वा सप्रतिपत्ति स्यात् । तत्राद्ये, मिथ्यात्वसाधनव्याघात । द्वितीये, साध्यत्व याघात । मिथ्यापदं च सत्यमसत्यमनिर्धारितविशेषद्वय वा मिथ्यात्वमुपस्थापयति(पाददीत) । प्रथमे तस्य मिथ्यावृत्तित्वव्याघात । न हि सत्य रूप्यत्व शुक्तिरूप्ये वर्त्स्यति । सिद्धान्तव्याघातश्च । ब्रह्मस्वरूपस्य सत्यस्य निराधारस्यासत्यवृत्तित्वे व्याघात । तदतिरिक्त-स्वीकारे सत्याद्वैतव्याघात । हेतुपदेन च पक्षधर्मतयोपस्थाप्यमानं लिङ्ग साध्यपदेनापह्नियत इति प्रतिज्ञाहेतुविरोध । शुक्तिरूप्यगतयोश्च साध्यसाधनयो सत्यत्वेन ग्रहणे प्राग्वत् विरोध । असत्यत्वेन ग्रहणे तु उदाहरणवाक्येन व्याप्तिप्रदर्शनविरोध । दृष्टान्ते च मिथ्यात्वेन प्रदर्शितस्य साध्यस्य पक्षे सत्यत्वेनोपसहारे प्रतिज्ञोदाहरणविरोध । असत्यत्वेनोपसहारे च विधायकमेव निषेधकमिति व्याघात ।

एवमसिद्धयश्च । तथाहि— यद्यपि तर्कस्यारोपितलिङ्गधीरङ्गम्, तथाऽपि साधने तु न तथा, तथैवोभयव्यवस्थादृष्टे । अन्यथा स्वबुद्धिकल्पितधेनुपर्वतादिषु कल्पितैरेव कैश्चिल्लिङ्गै पय पावकादीन् अनुमाय तदर्थिना तत्र प्रवृत्तिप्रसङ्गात् ॥ व्यावहारिकसदेव साधनाङ्गम्, न प्रातिभासिकमिति चेन्न, शुक्तिरूप्यस्य त्वया दृष्टान्ततयोपादानात् । अत एव प्रमितत्वेन लोकबुद्ध्यारूढमाश्रयादि भवतीत्यपि निरस्तम् ॥ प्रतिवादिसमतत्वमात्रेण पक्षीकारादि स्यादिति चेन्न, स्वार्थानुमाने तदयोगात् । तत्पूर्वकत्वात् परार्थप्रयोगस्य । अन्यतरासिद्ध[त्व]लोपप्रसङ्गाच्च । तदिह पक्षादीना प्रमाणत सिद्धौ तन्मिथ्यात्वसाधन याघात । असिद्धौ च आश्रयाद्यसिद्धयो बह्वय समन्तव्या ।

विरुद्धद्वयसमुच्चयनिषेधौ तु सुदुर्वचो इत्यभिप्रायेणाह— **पक्षादेरिति** । यदि ह्यसिद्ध्यादिदोपदुष्टमपि साधकमङ्गीक्रियेत, तदा कैव कथा कथाया तत्फलव्यवस्थायाश्चेत्यभिप्रायेणाह **नापीति** ॥ दुष्टमपि जल्पवितण्डयोरङ्गमिति चेन्न, तयो निग्रहस्थाननिवृत्तिप्रसङ्गात् । न हि कथाङ्गस्वीकर्तु कश्चिदपराध स्यात् । अत प्रतिभाक्षये परव्यामोहनेन पाक्षिकावष्टम्भविजयावहतया तयो तदनुज्ञानम्,

---

*दृ—* व्यवस्थात् इति । सत्यस्य मिथ्यावृत्तित्वे कथ सिद्धो व्याघात इत्याशङ्क्य मिथ्यावर्तिन सत्यस्य ब्रह्मस्वरूपत्वम् उत तदतिरिक्तत्वमिति विकल्पमभिप्रेत्य पक्ष[द्वयेऽ?]पि व्याहतिमाह— ब्रह्मस्वरूपस्येत्यादिना । प्रमाणसिद्ध्यसिद्ध्यो अन्यतरग्रहे हि व्याघातासिद्ध्योरन्यतरापात । समुच्चितमुभयं तदभावो वा स्वीक्रियत इत्यत्र न हि[गतिरितरे?]त्यनेनाभिप्रेत दूषणमाह–विरुद्धद्वयेति।

*श्री—* अमिथ्यात्वम् । विगीतत्वस्य मिथ्यात्वे सत्यत्वमिथ्यात्वविवादो नास्तीत्युक्त भवति । एवञ्च सत्यत्वेन वा मिथ्यात्वेन वा निश्चितत्वमेव भवेत् । आद्ये मिथ्यात्वं दुस्साधम् । अन्त्ये सिद्धसाधनमिति । यद्यपीत्यादि । व्याप्यारोपेण व्यापकारोपस्तर्क । तत्र व्याप्यस्यारोपितत्वमावश्यकम्, न तु वास्तवत्वम् । साधने तु— अनुमानप्रयोगे तु व्याप्यस्य वास्तवत्वमपेक्षितमित्यर्थ । विरुद्धद्वयसमुच्चयनिषेधाविति । विरुद्धयोर्द्वयो समुच्चयोऽपि दुर्वच, उभयनिषेधोऽपि दुर्वच इत्यर्थ ।

न स्वज्ञतया । अवश्यप्रयोक्तृ यत्वप्रसङ्गाच्च । न च दुष्टाना कथाङ्गत्व कैश्चिदनुशिष्टम् । अतिक्रान्त-मर्यादानामभिमति उन्मदिष्णूनामिवोपेक्षणीया । माध्यमिकादयोऽप्येताह्वशैहेतुभि स्वदनिष्ट तत्तत् साध्य साधयन्त त्वया न निगृह्येरन् । 'विमतम् असाधकं दृश्यत्वात् , संमतवत्' इति स्वदुक्तोपालम्भे च किं वक्ष्यसि ? केन चान्यदपि किञ्चित् स्वयंप्रकाशत्वादिकं साधयिष्यसि॥ स्वव्याघातदुष्टतया माध्यमिकादिप्रयोगोऽनास्थेय इति चेत् , स्वोक्तमपि तथाऽवधारय । स्वपरनिर्वाहकत्वसमाधिरसत्प्रयोगे (त्वक्षे) तु इष्ट इति चेत् , अन्येषामपि तथा किं न स्यात् , अविशेषात् ।

ननु आभिमानिकसिद्धिभि प्रमाणै सर्वसिद्धान्ता स्थाप्यन्ते, अत ईदृशमपि कथायामङ्गं भवतीति मर्यादान्तर मया कल्प्यत इत्यत्र, सेय कल्पना प्रमाणतर्कसिद्धेत्यभिमता, उत स्ववाङ्मात्रसिद्धेति विकल्पे पूर्वस्य निर्मूलतया अनुदयमाह **मर्यादामिति** । स्वाभीष्टमर्यादाया प्रमाणादिसिद्धत्व हि लोकमर्यादानुरोधेन वक्तव्यम् , अन्यथा तत्साधकासिद्धे । अत स्वमर्यादासिद्ध्यर्थं लोकमर्यादा अनतिक्रमणीयेति भाव । उत्तरत्र विपरीतप्रसक्तिमाह **निर्मर्यादेति** । स्वोक्तिमात्रसिद्धमर्यादया जगन्मिथ्यात्वाभिधाने मदुक्तिमात्रसिद्धमर्यादया, सत्यत्वसाधकप्रमाणाभावेऽपि, जगत्सत्यमिति प्रत्युक्ति-मात्रेण सिद्धौ बाधितविषय त्वदनुमान स्यादिति भाव ॥ **इति मिथ्यात्वानुमानप्रयोगभङ्गः ॥४५॥**

**(191) साध्ये सत्येतरत्वे कथित इह भवेत् स्वस्य हि स्वान्यभावः,**
**नान्यत् सत्य तु दृष्ट ; तदवधिकभिदासाधने चेष्टसिद्धिः ।**
**सत्यत्व चेत् निषेध्य, प्रभजति दहनेऽप्युष्णताया निषेधः**
**साध्य त्वक्षाद्यबाध्य यदि किमपि पर, तेन न व्याप्तिसिद्धिः ॥ ४६ ॥**

---

पु़ं— अन्यथा तत्साधकासिद्धेरिति । स्वेष्टमर्यादासाधकप्रमाणतर्कासिद्धेरित्यर्थ । मदुक्ति-सिद्धमर्यादया इत्यनेन किं न स [त्य ततस्तत् इति श्लो ?] कावयवो व्याख्यात ॥ ४५ ॥

श्री— प्रसंगादिति । विरुद्ध सर्वमिष्यते चेत्–जल्पे वितण्डायाञ्च वादी तत्तद्दोषोद्भावनेन निग्राह्य इति सर्वसमत त्याज्य स्यादिति भाव । उन्मदिष्णूनाम्=उन्मत्तानाम् ।

प्रमाणतर्कसिद्धेत्यभिमतेत्यादि । मर्यादान्तरकल्पन प्रामाणिक युक्तियुक्तञ्चेत्याशयो वा न वेत्यर्थ । लोकानभ्युपगतस्य कथ प्रामाणिकत्वादीति खण्ड्यते उपरि ॥ ४५ ॥

सामान्यतो दूषितमनुमानम् । अथ साध्य मिथ्यात्व श्लोकचतुष्टयेन दूषयति । ततो हेतु दृश्यत्व दूषयिष्यति । तत्र मिथ्यात्व किंरूपमिति निरूप्य दूषण श्लोकत्रयेण । मिथ्यात्वं कीदृशमिति तद्धर्मं विचारश्चतुर्थन । आद्यत्र श्लोके मिथ्यात्व सत्यभिन्नत्व वा सत्यत्वाभावो वेति विकल्प्य दूष्यते । साध्ये इह=साध्यत्वाभिमते मिथ्यात्वे सत्येतरत्वे कथिते=सत्यभिन्नत्वरूपे कथ्यमाने सति किञ्चि-त्साध्यप्रतियोगिक अन्यभाव = भेद एव स स्यात् , न तु यावत्सत्यप्रतियोगिकभेद । विगीतपदेन यद्यद्गृहीत्वा साध्य तत्रोत्पादने तस्य तस्यापि यावत्सत्यान्तर्गततया तत्र सर्वप्रतियोगिकभेदस्य दुर्वचत्वात् । अत्र किञ्चि सत्यप्रतियोगिकभेदसाधने सिद्धसाधनम् । घटादौ पटादिभेदस्य प्रागेव सिद्धे । ननु विश्वान्तर्गत न सत्यपदग्राह्यम्, किं तु अन्यदेव (ब्रह्मरूपम्) इति चेत्, तत्र दृष्टम्—सत्यत्वेन नावधृतम् । अत प्रतियोग्यप्रसिद्ध्या तद्भेदो दुस्साध । तद्दृष्टमिति स्वीकारेऽपि तद्भेदस्य विश्वस्मिन् दृष्टत्वात् इष्टसिद्धि =सिद्धसाधनमेव । ननु विश्वसत्यत्ववादिभिर्वेदान्तिभि विश्व-प्रसिद्धमपीष्टम् । अतस्तान् प्रति तत्सत्यभेद साध्यत इति चेत्—विश्वशब्देन यद्गृहीत्वा तत्र

मिथ्याशब्दविवक्षितं च विकल्पासहत्वेन दूषयति **साध्य** इति । अयं भावः—किं यतः-कुतश्चिदन्यत्वं सिषाधयिषितम्, उत सर्वस्मात् ? आद्ये, सत्यानां पृथिव्यादीनां परस्परान्यत्वेन सिद्धसाधनता । द्वितीये, सर्वेषां प्रत्येकं सत्यशब्दवाच्यतया स्वस्मादप्यन्यत्वं सर्वेषां प्रतिज्ञातं स्यात् । तथाच व्याघातः, तत्त्वातत्त्वयोरेकस्मिन् असंभवात्; अन्यथा कथमनेकान्तवादनिस्तार इति । ननु विगीतानां व्यावहारिकसत्यत्वनिबन्धनं मिथस्सत्येतरत्वं न साधयामः । किंत्वस्ति किञ्चिदशेषकल्पनारहितं परमार्थसत्यम्, ततोऽन्यत्वं त्विहाऽऽतिष्ठामहे; तत्राह **नान्यदि**ति । अशेषविशेषोज्झितं किञ्चित् परमार्थसत्यं न प्रत्यक्षादिषु कुतश्चित् प्रमाणात् सिद्धम् । न च तथा स्वयं प्रकाशते, तत्रापि हृदयविसंवाददिति भावः । ननु त्वयाऽपि परमार्थसद्ब्रह्म अङ्गीकृतम्; अतस्तदन्यत्वसाधनमनुपालम्भनीयमित्येतदपि दूषयति **तदवधिके**ति । न हि वयं जगतो जैनगन्धिवत् ब्रह्मानन्यत्वमङ्गीकुर्म इति भावः ।

अथ **मिथ्याशब्दस्य** सत्यत्वशून्यत्वमर्थ इति शङ्कते **सत्यत्वमि**ति । अत्र कालातीतत्वं निदर्शने प्रसक्त्या निर्धारयति **प्रसजती**ति । अयं भावः—इह हि प्रातीतिकं व्यावहारिकं पारमार्थिकं वा सत्यत्वं निषिध्येत ? तत्राऽऽद्यः परानिष्टोपालम्भ इति अन्त्यौ शिष्येते । तयोश्च व्यावहारिकसत्यत्वनिषेधे, यत्रैव यस्य प्रसिद्धिं मन्यसे तत्रैव तन्निषेधसीति न कथं कालातीतेन च अपसिद्धान्तेन च निगृह्येथाः ? व्यावहारिकं च मिथ्येति त्वद्दृष्टिः; मिथ्याभूतसत्यत्वनिषेधेऽपि परेष्टमेव त्वया प्रतिष्ठापितं स्यादिति । सत्यत्वान्तरनिषेधमनुवक्ति **साध्यमि**ति । **तुः** परेष्टविशेषनिषेधद्योतकः ।

---

पृ— कालातीतत्वं निदर्शने प्रसक्त्या निर्धारयतीति । निदर्शने वह्नौ अनुष्णत्वानुमानप्रसक्त्या
टी— ब्रह्मैक्याभावस्त्वया साध्यते, तत्रैक्यं नास्माकमिष्टमिति सिद्धसाधनमेव । भास्करादिभिरैक्यांगीकारात् तान् प्रति ऐक्याभावः साध्यते चेत्—तदापि तस्य मिथ्यात्वस्य तत्त्वज्ञानबाध्यत्वरूपत्वासिद्ध्या त्वदिष्टासिद्धिरेव । अथ सत्यत्वाभावरूपद्वितीयकल्पोऽपि न । सत्यत्वं निषेध्यं चेत्—तेन किमुक्तं भवति । यत् यत्र प्रतीयते, तत्र तन्नास्तीति । तथा सति भूतले घटो नास्ति, घटे जलं नास्ति, जले शैत्यं नास्ति, अग्नावौष्ण्यं नास्ति, पृथिव्यां गन्धो नास्तीति तत्प्रतीतिस्थले तदभाव उक्तः स्यात् । अन्यत्र तदभावस्य स्वत एव सिद्धेः । स च बाधितः । ननु अबाध्यो यः सत्यत्वाभावः, स एव साध्यः । स च ब्रह्मनिष्ठं यत् पारमार्थिकसत्यत्वं तदभाव इति चेत्—यदि किमपि पारमार्थिकसत्यत्वप्रतियोगिकाभावरूपं परं=पूर्वोक्तादन्यदेव अक्षादिना=प्रत्यक्षादिना अबाध्यं साध्यमित्युच्यते, तर्हि तस्य पारमार्थिकसत्यत्वस्य लोके केनापि पूर्वमगृहीतत्वात् तत्प्रतियोगिकाभावस्य शुक्तिरूप्यादौ पूर्वमगृहीततया तेन सत्यत्वाभावेन सह व्याप्तिग्रहणं दुर्वचम् । व्यावहारिकपदार्थगतसत्यत्वाभाव एव हि शुक्तिरूप्यादौ पूर्वमनुभूतः ॥

व्यावहारिकसत्यत्वनिबन्धनमिति । एकस्मिन् अन्यसत्यप्रतियोगिकभेदो हि अन्यस्य सत्यत्वे स्वीकृते सत्येव । तच्च स्वीकृतं व्यावहारिकमेवेति भावः । अशेषविशेषोज्झितमित्यनेन अस्मदिष्टं त्वदिष्टञ्च नैकमिति नोभयवादिसिद्धतेति ज्ञाप्यते । हृदयविसंवाददिति । अहमित्येव स्वयंप्रकाशात् एकत्वानुकूलस्वरूपविशेषभानादिति भावः । ननु विशेषसदसद्भावविचार आस्ताम् धर्मि तूभयसंमतमिति पृच्छति नन्विति । कालातीतत्वं=बाधितत्वम् । सत्यत्वसामान्यनिषेधे हि व्यावहारिकसत्यत्वमपि प्रतियोगि । तदभावः कथं पक्षे इति च सिद्धान्त्याशयः ।

**परम्** अन्यत् । परमार्थसत्यत्वं हि लोकदृष्टादन्यत् ब्रह्मनिष्ठम् । तद्वैधुर्यं चात्र बाधयोग्यादन्यदेव । अत कथं बाधादिप्रसङ्ग इति भाव । तद्दूषयति **तेनेति**। परमार्थसत्यत्व हि व्यावहारिकादेव प्रमाणात् सिध्येत्, पारमार्थिकाद्वा ? नाद्य ; प्रपञ्चस्यापि तत एव तत्सिद्धौ बाधस्य दुर्वच(र्वार)त्वात्, क्वचित् तस्य तत्साधकत्वं क्वचिन्नेति नियामकाभावात् । द्वितीये तु अपसिद्धान्त. । व्यावहारिकप्रमाणागोचर सत्यत्वनिरूपिताभावेन सह व्यावहारिकप्रमाणेन कथं व्याप्ति. गृह्येत ? तत्रापि पारमार्थिकप्रमाणात् ग्रहणे सिद्धान्तविरोधादि(सिद्धान्तादिविरोध)दोषस्तदवस्थ ।

**शुक्तिरूप्यशब्देन** च (1) किं रूप्यत्वाश्रयतया (2) रूप्यतादात्म्येन वा प्रतीतं भास्वरं द्रव्यं निर्दिश्यते, (3) एतन्निष्ठतया प्रतीतं रूप्यत्व वा, (4) इदंत्वेन भातरूप्य वा, (5) रूप्यत्वसंसर्गो वा, (6) रूप्यतादात्म्य वा, (7) विकल्पभेदारूढमतद्व्यावृत्तिरूपमलीक वा, (8) रजतसरूपबुद्ध्याकारविशेषो वा, (9) शुक्त्यवच्छिन्नाविद्याकृतचैतन्यविवर्तो वा, (10) शुक्तिरजतव्यवहारगोचरमात्र वा किञ्चित् ।

आद्येषु चतुर्षु अन्यथाख्यातिस्वीकारप्रसङ्ग । तत्र च निरुपाधिकमिथ्यात्वं न दृष्टम् । सोपाधिकमिथ्यात्वसाधने सर्वस्यापि प्रपञ्चस्य परस्परारोपयोग्यस्य देशकालान्तराद्यपधानेन मिथ्यात्वसाधनात् सिद्धसाधनता । न पञ्चमषष्ठौ ; तयोरपि स्वस्थाने सम्यक्त्वात् । शुक्तिस्थयोस्तयोः असदनभ्युपगतयो स्त्वयोदाहर्तुमशक्यत्वात् । अत एव न सप्तम , व्यावहारिकसत्यानामपि तथात्वाभ्युपगमप्रसङ्गाच्च । नाप्यष्टम । न हि सत्याया बुद्धेराकारो मिथ्या स्यात्, अन्यतया अनन्यतया वा प्रमितस्य तदयोगात् । अप्रमितस्य चानुदाहर्तव्यत्वात् । अन्यथाऽतिप्रसङ्गात् ॥ भ्रान्तिज्ञाने बुद्धितदाकारौ असत्याविति तदाकारनिदर्शनोपपत्तिरिति चेन्न, बाधाभावात्, परानभ्युपगतेश्च । नवमोऽप्यत्यन्ताप्रसिद्धेरपास्त । अपाकरिष्यते चानिर्वचनीयोत्पत्त्यादि । नापि दशम, सत्येषु शुक्त्यादिषु अन्यतमस्यैव कयाचित् विवक्षया

---

*गु*— अत्र = सत्यत्वनिषेधानुमाने कालातीतत्वं निर्धारयतीत्यर्थः। द्वितीये तु अपसिद्धान्त इति । प्रतियोगिग्राहकजातीयेनैव तदभावव्याप्तिग्रहस्य भवत्सिद्धान्तत्वात् पारमार्थिकप्रमाणगम्यसत्यत्वाभावेन सह लिङ्ग व्यावहारिकप्रमाणेन व्याप्तिग्रहाङ्गीकारेऽपसिद्धान्त इत्यर्थः। न केवलमपसिद्धान्तता, अयुक्तिश्चेत्याह—व्यावहारिकप्रमाणागोचरेति । सिद्धान्तविरोधादीति । ब्रह्मान्यतया व्याप्तेरपरमार्थत्वात् तस्याः पारमार्थिकप्रमाणविषयत्व युष्मत्सिद्धान्तविरुद्धमित्यर्थः। आदिशब्देनायुक्तत्वं गृह्यते । 'न व्याप्ति' इत्यत्र अभिप्रेतं (?) दृष्टान्तान्तरमाह—शुक्तिरूप्यशब्देनेत्यादिना ॥ ४६ ॥

*वी*— बाधयोग्यादन्यदेव= अबाध्यमेव । साध्यस्य प्राक् गृहीतत्वे हि व्याप्तिग्रहः स्यात् । अगृहीतत्वमेवेत्युपपादयति परमार्थसत्यत्व हीति । अथ व्याप्तिग्रहणस्थलत्वेनाभिमतं शुक्तिरूप्यमेव किमिति विकल्प्य दूषयति शुक्तीति । अन्यथाख्यातीति । तत्र तत्र प्रतीतशब्देनान्यथाख्यातिविषयस्यैव ग्रहणादिति भाव· । निरुपाधिकमिथ्यात्व= क्वचिदप्यविद्यमानत्वे सति प्रतीतत्वरूपम् । अत एव= यौद्धभिमतेन त्वयोदाहर्तुमशक्यत्वादेव । बाधाभावादिति । न हि भ्रान्तिर्बाध्यते । नापि तद्विषयतेति भावः। अत्यन्ताप्रसिद्धेरिति । ब्रह्मविवर्तत्वं जगति परिकल्प्य तदनन्तर किलेयं रीतिः शुक्तिरूप्यादावतिदिश्यते । न त्वेतत् लोकसिद्धमिति । दृष्टान्तस्वरूपस्यैवासिद्धिमाह अपाकरिष्यत इति ॥ ४६ ॥

शुक्तिरजतव्यवहारविषयत्वात् ; अन्यथा वर्णक्रमनिर्देशवत् निरर्थकत्वापातात् ; तथाचाऽऽश्रयहीन मुदाहरणमिति न कथञ्चिदपि व्याप्तिसिद्धिरिति ॥ **इति सत्यत्वघटितमिथ्यात्वकल्पदूषणम् ॥४६॥**

(192) **स्वात्यन्ताभावदेशे विदितमिति यदि स्थाप्यम्, इष्टं क्वचित् तत् ;**
**तत्रैवेति त्वशक्यम् ; क्वचिदपि न तथा ह्यस्ति सिद्धान्तसिद्धिः ।**
**बाधश्चास्मिन् उपाधिः समधिगतदशादेशकालाद्युपाधौ ;**
**नासौ साध्योऽत्र मानं निखिलमपि यतस्तद्विधानैकतानम् ॥ ४७ ॥**

पुनः साध्यविकल्पे कोट्यन्तरमनुवक्ति स्वात्यन्तेति । स्थाप्यं साध्यम् । तत्र सिद्धसाधनतामाह इष्टमिति । क्वचित् योग्यस्थले । सर्वेऽपि हि पदार्थाः सामग्रीविशेषैः स्वात्यन्ताभाववस्तु अध्यस्यन्ते ।

---

भा°— मिथ्यात्वनिर्वचनमन्यत् दूषयति स्वात्यन्तेति । तस्य मिथ्यात्वं नाम तदत्यन्ताभावाधिकरणे तस्य प्रतीयमानत्वम् ; स्वप्रतीतिदेशे स्वात्यन्ताभावकथनात् वस्तुमिथ्यात्वमुक्तं भवति इति, इदं मिथ्यात्वं स्थाप्यमिष्टं यदि=साधयितुमिष्टं चेत्—क्वचित् तदिष्टम् । सिद्धसाधनमित्यर्थः । किं विश्वान्तर्गतस्य सर्वस्य स्वात्यन्ताभाववति देशे प्रतीयमानत्वं साध्यते, किं वा अवच्छेदकावच्छेदेनेति पक्षं परित्यज्य सामानाधिकरण्येन । आद्यमशक्यम्—कालाकाशादीनां किञ्चिदधिकरणकतया प्रतीत्यभावात् । आधाराधेयभावो न विवक्षितः, किं तु संबन्धमात्रमिति चेत्, ब्रह्मणोऽपि तत्तत्संबन्धितया प्रतीतत्वात् मिथ्यात्वं स्यात् । सामानाधिकरण्येन साध्यं त्विष्टम् ; जलादौ गन्धादेः प्रतीतेः । ननु तत्रैव–स्वात्यन्ताभाववद्देश एव प्रतीयमानत्वं साध्यम् ; गन्धादेः स्वाधिकरणे पृथिव्यामपि प्रतीतेर्न दोष इति चेत्—इति त्वशक्यम्=एवं साधनमशक्यम् । तत्र हेतुमाह क्वचिदपीति । स्वात्यन्ताभावाधिकरण एव स्वस्य प्रतीतत्वमितीदं न कुत्रापि कदापि कस्यापि दृष्टमित्यर्थः । तथा सिद्धान्तस्य=तादृशत्वसिद्धान्तस्य कुत्रापि सिद्धिः=अनुभवो नास्तीति वाच्यार्थः । प्रातिभासिकस्थलेऽपि देशान्तरस्थितरजतादेः संस्कारवशात् प्रतीतेः, अनिर्वचनीयनिरासादिति भावः । उपाधिमाह बाधश्चेति । घटादयः सत्त्वेन परेष्टा अपि स्वात्यन्ताभाववद्देश एव प्रतीयन्ते दृश्यत्वात् शुक्तिरूप्यवदिति त्वदनुमाने प्रतिपन्नोपाधौ बाधितत्वमुपाधिः । शुक्तिरूप्यादिकं हि यस्मिन् देशे काले प्रतीयते तत्रैव नास्तित्वेन प्रतीयते । पक्षे चैवं प्रतीयमानत्वं न ह्यस्तीति । अतः समधिगते स्वतत्त्वेन प्रतीते, दशा=अवस्था, देशः, कालः तदादौ । आदिपदेन असाधारणाधिकरणमपि ग्राह्यम् । तत्र यो बाधः स उपाधिः । ननु त्वयोपाधित्वेन यदुच्यते तदेवास्माभिः साध्यते घटादयः प्रतिपन्नोपाधौ बाध्या इति । तत् कथमुपाधित्वमिति चेत्—नासौ बाधविशेषः साध्यः । कुत इति चेत्–इदमनुमानं हि केनापि प्रमाणेन घटादीनां बाधितत्वं भवेदित्येतावदेवाऽऽवेदयति । न तु घटादीन् बाधते । बाधकप्रमाणे चान्विष्यमाणे सर्वं घटादेर्भूतलादौ स्वाधिकरणे स्थितिप्रदर्शकं स्वाभाववति अभावप्रदर्शकञ्चैव लक्ष्यते ; न तु स्वाधिकरण एव स्वाभावप्रदर्शकम् । यत एवं सर्वमपि मानं तत्तद्वस्तुनस्तत्रतत्र देशे विधाने=सद्भावज्ञापन एव एकतानं=व्यग्रम् ; न निषेधने । अतो बाधितत्वानुमानमेव बाधनीयम् । मानं विनैव बाधितत्वमस्त्विति चेत्—अप्रामाणिकं बाधसहस्रमप्यस्तु । किं नस्तेन । न हि तैमिरिकाः वस्तुतरमपलपन्तीत्येतावता वस्त्वसिद्धिः । शास्त्रात् बाधः प्रतीयत इति चेत्–कुत्राधिकरणे? भूतलादौ घटाद्यभावस्य शास्त्रेऽनुक्तेः । ब्रह्मणीति चेत्–तत्र मा भूवन् । तावता कथमसत्यत्वम् । तत्र तत्सत्ताप्रतिपादकशास्त्रस्य तस्य च विरोधः कथं शमनीय इति चेत्—नेदमस्माकं प्रकृतम् । आगमसिद्धत्वे चानुमानं व्यर्थमिति ॥

तद्विभूतिप्रपञ्चस्याप्यस्तीति बोधने नियमेन प्रवृत्तत्वात् न तद्बाधकमित्यर्थः ॥

इति स्वात्यन्ताभावसामानाधिकरण्यरूपसाध्यभंगः ॥ ४७ ॥

(198) तुच्छत्वं ते न हीष्टं, सदसदितरता व्याहतत्वादिदुःस्थाऽ-
सिद्धा चासौ परेषां, भवदनभिमतोऽनात्मना वेद्यतादिः ।
विश्वं हीदं मृषा नस्तदितरवपुषा त्वन्मतारोपितैश्च ;
स्यादेवं दूरतस्ते ध्रुवमपसरतोऽप्युक्तदोषानुषङ्गः ॥ ४८ ॥

---

व्या— निरुक्ते मिथ्यात्वे दूषिते किमन्यत् वक्तुमर्हमिति विमृशति अद्वैती। तदा तं प्रति स्वयमेव प्रकारान्तराणि प्रदर्श्य प्रतिषेधति तुच्छत्वमिति। मिथ्यात्वं तुच्छत्वरूपं न ते इष्टम्। शून्यवादिना सौगतेनैव तथोक्तेः। या तु त्वदिष्टा सदसदितरता, सा व्याघातात् सिद्धसाधनाच्च स्थातुमनर्हा। सत्सामान्येतरत्वमसत्सामान्येतरत्वञ्च नैकत्र समावेशमर्हतीति व्याघातः। यत्किञ्चित्सद्भिन्नत्वादि च सत्येऽप्यस्तीति सिद्धसाधनम्। इदमेवार्थान्तरमिति कैश्चिदुच्यते, सिद्धसाधनस्य हेतुदोषत्वाभावात् अभीष्टार्थव्यतिरिक्तपर्यवसानात् अर्थान्तरमिति निग्रहस्थानमेव वादे उद्भाव्यमित्याशयेन। असिद्धेति। सत्सामान्यासत्सामान्यभेदसाधनञ्च न संभवति। कुत्रापि तदभावात् व्याप्तिग्रहायोगात्। शुक्तिरजतादौ सिद्धेति चेन्न, तस्यैव लोके सिद्ध्यभावात्। असौ-सदसदितरता तस्मादसिद्धा च। ननु 'सिद्धा नैषा परेषाम्' इति सुकरे, किम् अकारप्रश्लेषक्लेशेनेति चेन्न; नञं विना, सिद्धा चैषा परेषामिति योजनाया अपीष्टत्वात्। तदर्थश्च—ननु साध्याप्रसिद्धिरिति अनुमानदूषणमयुक्तम्; शुक्तिरूप्यादौ साध्यप्रसिद्ध्यभावेनान्वयव्याप्त्या तत्साधनासंभवेऽपि केवलव्यतिरेकिनयसंभवात्। पृथिव्यादेर्गन्धवत्त्वादिकं हि लक्षणं केवलव्यतिरेकि। व्यावृत्तिर्व्यवहारो वा हि लक्षणस्य प्रयोजनम्—अतो लक्ष्येतरभेदस्य पृथिवीत्यादिव्यवहारस्य च लक्षणेन साधनम्। तत्र साध्यं लक्ष्यातिरिक्तेऽनवस्थितमपि साध्यते, यत्रेतरभेदाभावः पृथिवीत्यादिव्यवहाराभावो वा तत्रैतल्लक्षणाभाव इति व्यतिरेकेण। ननु इतरभेदः इतरत्वावच्छिन्नप्रतियोगिताकभेदो वा जलादितावत्पदार्थसमुदायप्रतियोगिकभेदो वा। आद्यो दुर्वचः इतरत्वस्याभावरूपतया प्रतियोगिसापेक्षत्वात् पृथिवीतरत्वेनैव वक्तव्यतया पृथिवीयत्ताया इदानीमनिर्धारितत्वात्। जलादिसमुदायभेदस्तु एकं नोभयमिति रीत्या जलादावप्यस्तीति न तस्य व्यावृत्तिरूपतेति चेन्न—जलभेदतेजोभेदेति रीत्या प्रत्येकभेदसमुदायसाधनात्। तस्य क्वचिदप्रसिद्धत्वेऽपि व्यतिरेकव्याप्तिसंभवात्। यदि तत्र पक्षैकदेशे पुष्पादौ भेदसमुदायः प्रागेव सिद्ध इत्युच्यते, तर्हि अत्रापि तथाऽस्तु इति चेत्—सिद्धा चैषा परेषाम्। एषा सदसद्विलक्षणताऽपि सिद्धैव। पृथिव्यां जलभेदतेजोभेदादिसमुदायवत् अत्र निरुपाधिकसद्भेद-शशशृंगाद्यसद्भेदोभयं हि साध्यम्। तच्च पक्षे स्वपेव प्रागेव प्रतिपन्नम्। किञ्चास्मन्मते भावातिरिक्ताभावाभावात् लक्षणमेवेतरभेद इति लक्षणज्ञानमेवेतरभेदज्ञानम्। अतो न तत्र साध्यं किञ्चिदस्ति। ननु पराभिमतमेव मिथ्यात्वं साध्यमस्त्वित्यत्राह भवदिति। रजतस्य मिथ्यात्वं नाम अनात्मना=स्वस्वरूपभिन्नेन धर्म्यन्तरेण वेद्यत्वम्, अन्यथाख्यातिविषयत्वमिति यावत्। इदं तार्किकसंमतम्। सांख्यसंमतमादिपदग्राह्यम्। रजतस्य स्वभिन्नेन सह भेदाग्रहः स्वः ईदृशं मिथ्यात्वरूपेण न भवत्स्वीकृतमिति कथं त्वया तत्साधनम्। मिथ्यात्वं किमप्यस्तु; तत्साधने सिद्धसाधनदोषश्चेत्याह विश्वमिति। तदितरवपुषेति। घटस्य पटादिरूपेणाभाव एव घटस्य मिथ्यात्वम्। एवं घटादिषु अनिर्वचनीयत्ववाच्यत्वादिरूपेण भवन्मात्रसिद्धेन मृषैव। एवं पक्षेतरधर्मारोप उक्तः। तथा तत्संसर्गादिके तत्संसर्गारोपे संसर्ग-

पुनरप्यसंभवतोऽपि तत्तद्वाद्यभिमानात् संभवत इव साध्यविकल्पभेदान् अनूद्य दूषयति **तुच्छत्वमिति** श्लोकेन। तुच्छत्वं खपुष्पादिवत् असत्त्वम्। ते माध्यमिकसमाख्यामनिच्छत इति भावः। **न हीष्टम्**। एतत्साधनेऽपसिद्धान्त इति भावः। अस्तु मिथ्यात्वं सदसत्कोटिबहिर्भूतत्वमित्यत्राह **सदसदितरतेति**। आदिशब्देनार्थान्तरत्वादिसंग्रहः। अयं भावः—सदसद्विलक्षणत्वं नाम (1) सत्त्वासत्त्वात्यन्ताभावसमुदायवत्त्वं वा, (2) सतोऽसतश्च कुतश्चित् व्यावृत्तत्वं वा, (3) **सदस**च्छब्द गोचरसर्वान्यत्वं वा, (4) ब्रह्मतुच्छव्यावृत्तत्वं वा, (5) ब्रह्मत्वतुच्छत्वसमुदायशून्यत्वं वा, (6) तदुभयात्यन्ताभावसमुदायो वा, (7) अन्यद्वा किंचित्। आद्ये, व्याहतता; "परस्परविरोधे हि न प्रकारान्तरस्थितिः" इति न्यायात्। न हि अत्रानुष्णाशीतवत् गतिः; कोट्यन्तरस्यात्यन्तानुपलम्भात्। न च तत्राप्युष्णानुष्णविकल्पे कोट्यन्तरं समस्ति। द्वितीये, सिद्धसाध्यता; सतामेव परस्परमसद्भ्यश्च व्यावृत्तत्वात्। तृतीयेऽपि स एव दोषः। अस्ति हि सत एवैकस्य तत्; एकस्य सर्वसदसद्रूपत्वाभावात्। अत एव न चतुर्थः; न हि वयं ब्रह्मस्वरूपं वा निरुपाधिकतुच्छं वा विश्वं ब्रूमः। विरुद्धार्थान्तरता च; खरशृङ्गे खपुष्पाद्यन्यस्मिंस्तद्भावात्। एवं पञ्चमेऽपि; खरशृङ्गादौ ब्रह्मणि ब्रह्मत्वतुच्छत्वयोरसमुचितत्वात्। षष्ठेऽपि सिद्धसाध्यता। न तु विगीतं ब्रह्मस्वरूपं न च तुच्छम्। (7) **अन्यदपि** केनचित् **विशेष**शब्देनोपस्थापयितुं शक्यं वा न वा। शक्यं चेत्, अस्माभिरपि विशेषतो दूषयितुं शक्यम्। अशक्यं चेत्, अव्यपदेश्ययत्किंचिद्धर्मवत्त्वं साध्यं स्यादिति कस्तत्र विमन्यते? अतो यत्किंचिदेवैतदिति।

किंच विगीतप्रयोगेषु सर्वेषु यत्कुत्रचित् पूर्वसिद्धमेव पक्षे साध्यम्; इह तु ब्रह्मणि तुच्छे वा न साध्यग्रहः; तयोर्विपक्षत्वात्। न च विगीते; तस्य संदिग्धसाध्यत्वात्। सपक्षस्तु **शुक्तिरजत**शब्देन प्रदर्शयितुं न शक्य इत्युक्तम्। न च परासिद्धः साध्यावस्थो दृष्टान्तः स्यात्। तत्साधनं च दूषयिष्यते। तदसौ त्वदभिमता सदसद्विलक्षणता परेषां सर्वत्रासिद्धतया पक्षे दुस्साधेत्यभिप्रयन्नाह **असिद्धा चेति**। ननु घटादौ तावत् असद्विलक्षणत्वं संप्रतिपन्नम्। सद्विलक्षणत्वमपि; पटादिवैलक्षण्यात् ब्रह्मवैलक्षण्याद्वा। अतो भेदव्यवहारव्यवस्थापकलक्षणरूपकेवलव्यतिरेकिन्यायेन साध्यस्य पक्षैकदेशसिद्धस्यैवाभिव्याप्त्या साधनात् न साध्याप्रसिद्धिरिति। अत्र तु **सिद्धा चासाविति** **नञ्**ग्रहणेनोत्तरं पक्षे सर्वत्र सिद्धैवेत्युक्तम्। तथाऽपि, **मिथ्याशब्द**निमित्तं किंचित् त्वयाऽङ्गीक्रियते, तदेव साधयाम इत्यत्राह **भवदनभिमत** इति। परे हि रजतादेः शुक्त्याद्यात्मना वेद्यत्वं वा, रजतादेः अतत्संसृष्टस्य तत्संसृष्टतया भातत्वं वा, बाध्यव्यवहारहेतुधीविषयत्वं वा **मिथ्याशब्द**निमित्तं सिद्धान्तयन्ति। न चैतत् त्वया साध्यम्;

---

**पूर्ण**— तुच्छत्वमिति। अर्थान्तरत्वादिसंग्रह इति। अत्र आदिशब्देन सिद्धसाधनताग्रहः। अयं भाव इति। सदसत्सामान्यप्रतियोगिकात्यन्ताभावसमुदायः, प्रथमः, तत्प्रतियोगिकात्यन्ताभावसमुदायः षष्ठ इति भिदा।

*श्री*- यत्त्वेन रूपेण मृषात्वमपि चकारगम्यम्। स्यादिति। श्लोकद्वयेनैवापसरतस्ते प्रकृतश्लोकोक्तश्रयणेन दूरमपसरणं सिद्धम्। एवम्भूतस्य तेऽन्यत्र गमनानन्तरम् अनिर्वाच्यत्वादिकं पक्षान्तरं नोक्तमिति हे,शो

तत एव हि सर्वत्र पूर्वपक्षोदयः। आहार्यलिङ्गजा च तर्कधीः सार्वत्रिकी निरनिष्टेऽनिष्टमुल्लेढि। अत एव हि विपर्यये पर्यवस्यति ॥ ननु स्वात्यन्ताभावदेश एव विदितमिति साध्यं स्यात्; तथाच न सिद्धसाध्यतेत्यत्राह तत्रैवेतीति। अत्र ह्यवधारणं स्वदेशव्यवच्छेदार्थम्। तदिदं स्वदेशसदसद्भावयोरशक्यमेव॥ स्वदेश एव स्वात्यन्ताभावदेश इति प्रस्तुतप्रतिज्ञाभिप्राय इत्यत्र व्याप्तिग्रहणाभावमाह क्वचिदपीति। यत्र क्वचिद्देशे काले वा, जागरस्वप्नावस्थयोः व्यावहारिकप्रातिभासिकयोर्वेत्यर्थः। शुक्तिरूप्योदाहरणं तु असिद्धिप्रदर्शनेन प्रत्युक्तम्। एतेन स्वात्यन्ताभावप्रदेशवर्तित्वं साध्यमित्यपि निरस्तम्। सिद्धसाध्यत्वपरिहारेऽपि व्याघातादेरपरिहार्यत्वात्।

श्लो—न हि वस्तु विकल्प्येत न विरुद्धसमुच्चयः। न चोभयपरित्यागो विहर्तिं जहतः क्वचित् ॥

न हि तदेव तत्रैव तदानीमेव विद्यते न विद्यते वेति(चेति?) विरुद्धानियतरूपता; ईदृशस्यानियमस्य जैनैरप्यनङ्गीकारात्। न च तदङ्गीकृतविरुद्धसमुच्चयः; स्वपरपक्षसमुच्चये सर्वकथोच्छेदापत्तेः। अत एव नोभयमिथ्यात्वेनोभयत्यागः, विरुद्धान्यतरविधिनिषेधयोः इतरनिषेधविधिनान्तरीयकत्वात्। स्वात्यन्ताभावसामानाधिकरण्यसाधनायोगाच्च। अस्तु वा कश्चित् **मिथ्याशब्दार्थः**; तत्र दृश्यत्वस्याप्रयोजकत्वमाह **बाधश्चेति**। **मिथ्याशब्दवाच्यत्वे** हि प्रतिपन्नोपाधौ बाधितत्वं प्रयोजकम्। अत एव न तदेव तदित्यनुपाधित्वम्। ननु बाध एवात्र साध्यः स्यात्, तत्र च नोपाधिः शक्यो वक्तुम्; तत्राह **नासाविति**। अयं भावः— किमत्र यस्य कस्यचित् पुरुषस्य यत्र कुत्रचिद्देशे काले वा बाधोऽस्तीत्येतावन्मात्रं साध्यम्, उतानेन प्रमाणेनास्य बाधो दृश्यत इति। न प्रथमः, एतावन्मात्रसाधनस्य ब्रह्मण्यपि सुवचत्वात्। शक्यं हि साहसिकस्य भासमानत्वमात्रेण सर्वमिथ्यात्वं साधयितुम्। किंच ब्रह्मव्यतिरिक्तकृत्स्नपक्षीकारेण बाधं साधयतः तद्बहिर्भूतपुरुषदेशकालानामभावात्, 'कस्यचित्पुरुषस्य' इत्यादि-

---

प्र—न च तदङ्गीकृतविरुद्धसमुच्चयः= अस्ति च नास्ति चेति जैनाङ्गीकृतास्तित्वनास्तित्वसमुच्चय इत्यर्थः। सर्वकथोच्छेदापत्तेः इत्यस्यानन्तरं 'स्वात्यन्ताभावसामानाधिकरण्यायोगाच्च' इति द्रष्टव्यम्। उभयत्यागनिषेधहेतुत्वायोगात् ॥ ४७ ॥

श्री—निरनिष्टे अनिष्टमुल्लेढीति। यद्यग्निर्न स्यात् धूमोऽपि न स्यादिति अविद्यमानाग्न्यभावरूपलिङ्गजन्यं धूमाभावज्ञानम् अस्मदनिष्टेन धूमाभावेन रहिते स्थले अनिष्टं धूमाभावं गृह्णाति = आरोपयति। द्वितीयपादमवतारयति ननु स्वेति। क्वचिदपीति ग्रन्थमवतारयति स्वदेश एवेति। अत्र विदितत्वं न घटकम्। अभिप्राय इत्यत्र = अभिप्राय इत्याशंकायाम्। इत्यर्थ इति। सर्वस्यास्मन्मते सत्यत्वादिति भावः। एतेन = अनिर्वचनीयस्य किञ्चिद्वर्तित्वाभावेन। नहीति। वस्तुनि विकल्पायोगात्। क्रियायामेव विकल्पस्येष्टत्वात्। न चोभयेति। विहर्तिं जहतः = विरोधो नास्तीति मन्यमानस्य नोभयत्यागः, उभयसमावेशस्यैव संभवादित्यर्थः। यद्वा कारिकाविवरणान्तर्गतस्य विरुद्धान्यतरेति वाक्यस्यानुरोधेनैवमर्थः—विहर्तिं जहतः = विरुद्धं न समुच्चेयमिति मन्यमानस्य नोभयत्यागः। विधेरन्यथैवेति। स्वात्यन्तेति। उभयत्यागे अभावयोः किल सामानाधिकरण्यम्; न तु तस्य तदभावस्य चेत्यर्थः। मिथ्याशब्दनिर्वचनं सर्वमपि दूष्यं येन तद्दूषणमाह अस्तुवेति। किमत्रेति। प्रमाणघटनं विना बाध उच्यते, उत प्रमाणेनेति विकल्पः। भासमानत्वमात्रेणेति।

निर्देशो निर्विषयः । तदन्तर्गतपुरुषदेशकालविवक्षया प्रयोगे तु, विद्यमानेऽप्यविद्यमानभ्रमवतः कस्यचित् क्वचित् कदाचित् तत्र तन्नास्तीति धीसंभवात् सिद्धसाध्यता । मन्यते च **माध्यमिकः** सांवृतेन मानेन सर्वमिथ्यात्वम् । तथा तस्य विश्वबाधकज्ञानं जातमिति च वयमपि विद्मः ॥ अप्रमाणमूलत्वात् अपारमार्थिकः तदुक्तो बाध इति चेत्, त्वदुक्तोऽप्येवमेव॥ व्यावहारिकप्रमाणतो मदुक्तसिद्धिरिति चेत्, तदुक्तसिद्धिरपि तथैव । संवृतादिसमाख्यावैषम्यं च अकिंचित्करम् ॥ नापि द्वितीयः । प्रत्यक्षेण तावत् अस्तीत्येव प्रपञ्चः प्रतीयते। यदा च कुत्रचित् नास्तीति मनुषे, तदाऽपि त्वत्रैव तदभावस्य सत्यत्वम्, अन्यत्र च तत्सत्यत्वमध्यक्षयामः । आह च **न्यायभाष्यकारः**, "सत् सदिति गृह्यमाणं तथाभूतम विपरीतं च तत्त्वम्" इति, "असच्च असदिति गृह्यमाणं तथाभूतं विपरीतं (अविपरीतं?) च तत्त्वम्" इति। अनुमानं तु अद्याप्यलब्धजीवितम् । आगमिकस्तु निषेधो विध्यनुरोधेन नेतव्यः ; अन्यथाऽतिप्रसङ्गात् । **वाचारम्भणादि**शब्दाश्च द्रव्यान्तरनिरासपराः दर्शिताः । ननु **अनन्त**पदेन असंकोचात् वस्तुपरिच्छेदराहित्यमपि गृह्यते; सति वस्त्वन्तरे तत्परिच्छेदाभावो दुर्वच इति चेन्न; यथा देशकालसद्भावो न कस्यचित् देशकालपरिच्छेदः ; किंतु परिमितदेशकालवर्तित्वम्—तथा न वस्त्वन्तरसद्भावो वस्तुपरिच्छेदः ; अपि तर्हि परिमितवस्त्वन्तरप्रकारित्वम्; यथा, 'गौः शुक्लो गच्छति' इत्यादौ । न तथाऽत्र; "सर्वं खल्विदं ब्रह्म", "पुरुष एवेदं सर्वम्" इति विश्वरूपतया व्यपदेशात् । ततश्चायं सर्वाविरुद्धः संग्रहः—श्लो— अविधेयमनाधेयमशेषमधिकं समम् । नेति वस्तुपरिच्छेदाभावः स्यात् विश्वदेहिनः ॥

यस्तु वस्त्वन्तराभावमपरिच्छित्तिमिच्छति । कथितोऽसौ कथानर्हः क्षीबोन्मत्तैडमूकवत् ॥

किञ्च संख्यापरिच्छेदराहित्यं किं न दृश्यते । मानबाधात् यदि, समं निर्बाधेऽर्थे स्थितिः स्थिता ॥

पराभिमतैरुपमानार्थापत्त्यादिभिरपि न जगद्बाधः ; तेषामन्तर्भावबहिर्भावयोः उक्तानतिरिक्तशक्तित्वादिति । तदेतत् सर्वमभिप्रयन् आह **मान**मिति । निखिलं स्वपराभ्युपेतं सर्वं **तद्विधानैकतानम्** । ब्रह्मण इव

---

वी— दृश्यमानत्वस्थाने भासमानत्वरूपहेतुप्रयोगेणेत्यर्थः । संवृतेति । संवृतिसत्यं जगदिति सौगताः; न तथा वयमिति शब्दभेदोऽकिञ्चित्करः । संवृतिपदेन तैरावरणमुच्यते । तदधीनव्यवहारो भवद्भिः । सेव समाख्या साधीयसी । असच्चेति । सदपि तत्त्वम्, असच्च तत्त्वम् । असदित्यभाव उच्यते। असच्चेति वाक्येऽपि न्यायभाष्ये अविपरीतमित्येव पाठः, न तु विपरीतमिति। विध्यनुरोधेन—ब्रह्मकर्तृकसर्वजगत्सृष्टिस्थित्यादिवचनाविरोधेन अब्रह्मात्मकतया वस्त्वभावपरतया। वाचारम्भणेति। इदमेकं पदं श्रुतौ अद्वैतिसंमतम् । वाचेति पृथक्पदमसम्मते । तथा न वस्त्वन्तरेति । न हि कालपरिच्छेदो नेत्यस्य कालपदार्थ एव लोके नास्तीत्यर्थः । एवं देशापरिच्छेदोऽपि न देशाभावः । तुल्यरीत्या वस्त्वपरिच्छेदोऽपि न वस्त्वन्तराभावः । किंतु किञ्चित्कालमात्रसंबन्धित्वाभावः, किञ्चिद्देशमात्रसंबन्धित्वाभावः किञ्चिद्वस्तुमात्रसंबन्धित्वाभावश्चात्रोच्यत इति कालदेशवस्तूनां सत्यत्वमेवेति । वस्तुसंबन्धेत्यत्र संबन्धविशेषान् सूचयति अविधेयमित्यादिना । अशेषम्= शेषत्वरहितम् । संख्येति । अनन्तपदस्य असंख्यमित्यर्थः कुतो नेति प्रश्नः । एवं मानत्रयं न बाधकमित्युपन्यस्तम् । अन्यदपि नेत्याह परेति ॥ ४७ ॥

अन्यथाख्यातेरख्यातेर्वा स्वीकारप्रसंगात्; तथा च अपसिद्धान्तः ॥ स्वदेशादौ च विश्वं सत्यं स्यादिति विवक्षितविपरीतसाधनापत्तिः; अतः सिद्धसाध्यत्वं चाह **विश्वमिति**। हिशब्द आगोपाल-पण्डितं दुरपह्नवां प्रसिद्धिं द्योतयति। **तदितरवपुषा** स्वेतरस्वरूपतयेत्यर्थः। न हि स्वप्रतियोगिकान्योन्या-भाववत्त्वं वा स्वेतरतादात्म्यं वा कस्यचित् अनुबोभूयामहे, शोश्रूयामहे वा ॥ परसिद्धान्तकल्पिताकारवत्तया च मिथ्यात्वं सिद्धमित्याह **त्वन्मतारोपितैश्चेति**। ब्रह्माविद्याविवर्तत्वानिर्वचनीयत्वबाध्यत्वैरिति शेषः। चकारात् असंसृष्टसंसृष्टतयेत्यपि गृह्यते। एवमनिर्वाच्यत्वादिविकल्पकोट्यन्तरेष्वपि तत्तद्विकल्पावतारेण बाधापसिद्धान्तसिद्धसाधनत्वादिदोषाणामनतिक्रमणीयत्वं प्रच्छन्नबौद्धोपालम्भव्याजेन छात्रान् प्रतिबोधयति **स्यादिति**। **ध्रुवं** निश्चितम्, प्रसञ्जकानामङ्गपञ्चकसंपत्तेरिति भावः। **इति मिथ्यात्वान्तरभंगः** ॥४८॥

(194) **साध्यं मिथ्या न वा ते, द्वितयमनुचितं निष्फलत्वादिदोषात्;**
**आद्यं हीष्टं ममापि; प्रसजति भवतः सत्यभेदः परस्मिन्।**
**पक्षीकारेऽस्य बाधादिकम्; अतिचरणं तद्बहिष्कारपक्षे;**
**तच्चेत् ब्रह्मस्वरूपं, भुवनमभिहितं हन्त सब्रह्मकं स्यात्** ॥ ४९ ॥

स्वरूपविकल्पेन दूषितं मिथ्यात्वं धर्मतोऽपि विकल्पासहमित्याह **साध्यमिति**। **ते**=ब्रह्म-व्यतिरिक्तविश्वमिथ्यात्ववादिनः। **द्वितयं**=मिथ्यात्वस्य मिथ्यात्वं तत्प्रतिभटं सत्यत्वं च। अनयोरनौचित्ये क्रमात् कारणमाह **निष्फलत्वादिदोषादिति**। आदिपदमपसिद्धान्तार्थम्। नैष्फल्यं सिद्धसाधनतया विवृणोति **आद्यमिति**। अपसिद्धान्तमुद्घाटयति **प्रसजतीति**।

---

गु— कोट्यन्तरेष्वपि तत्तद्विकल्पावतारेणेति। अनिर्वचनीयत्वं किं सदसच्छब्दानिर्वाच्यत्वम् उत ब्रह्मतुच्छशब्दावाच्यत्वमित्यादिविकल्पावतारेणेत्यर्थः ॥ ४८ ॥

श्री- मा भूत्। एवम्-एतत्तुल्यपक्षेऽपि उक्तदोषानुषङ्गः स्यादेवेति॥ अङ्गपञ्चकेति। प्रसञ्जकप्रसञ्जनीययो व्याप्तिः, प्रतितर्कापराहतत्वम्, विपर्यये पर्यवसानम्, अनिष्टत्वं परपक्षासाधकत्वञ्च पञ्च ॥ ४८ ॥

एवं मिथ्यात्वस्वरूपं शोधितम्। अथ मिथ्यात्वगतधर्मविचारेणानुमानदूषणमुच्यते साध्य-मिति। विश्वं मिथ्या दृश्यत्वादित्यनुमाने यत् साध्यं मिथ्यात्वं तत् मिथ्या वा सत्यं वा ते=त्वद्बुद्ध्या। तत्र कतरत् त्वदिष्टमिति प्रश्नः। भिन्नभिन्नदोषेणोभयं दूषयति द्वितयमिति। निष्फल-त्वादीति आदिपदेन अपसिद्धान्तग्रहणम्। मिथ्यात्वस्य मिथ्यात्वमपि त्वन्मते दुर्वचम्, सत्यत्वमपि। मिथ्यात्वं चेत् मिथ्या—तर्हि मिथ्याभूतमिथ्यात्वसाधनं निष्फलम्। प्रपञ्चसत्यत्वाप्रतिषेधात्। मिथ्यात्वस्य तथाविधस्य ममापीष्टत्वात्। मिथ्यात्वस्य सत्यत्वमिति अपसिद्धान्तः। तदा हि परस्मिन् पक्षे=भवन्मते सत्यभेदः ब्रह्म मिथ्यात्वञ्चेति सत्यद्वयमापतेत्। अन्यच्च दूषणम्—साध्यं यत् मिथ्यात्वं तस्यापि विश्वान्तर्गततया पक्षत्वमेष्टव्यम्। तदा तस्य सत्यत्वे मिथ्यात्वरूपसाध्याभावात् बाधः, मिथ्याभूतमिथ्यात्वमस्तीति चेत्, तत् प्रागेव सिद्धमिष्टमिति सिद्धसाधनम्। विश्वान्तर्गते मिथ्यात्वातिरिक्तवस्तुनि मिथ्यात्वं साधयता तन्निष्ठे मिथ्यात्वे साध्ये मिथ्यात्वस्य साधने साध्य-गतमिथ्यात्वसाधनमेव कृतं भवेत्। एवञ्चैकेनैव साधनबाधनयोः करणात् व्याघातश्च। तद्बहिष्कार-पक्षे=मिथ्यात्वस्य पक्षकोट्यप्रवेशे तस्य सत्यत्वेऽपि अतिचरणम्=हेतुमति तत्र साध्याभावात् व्यभिचारः। ननु विश्वमिथ्यात्वं नाम ब्रह्मणस्सद्वितीयत्वाभावः। अभावश्च धर्मिरूपेति मिथ्यात्वं

पुनरपि साध्यमेतन्मिथ्यात्वं पक्षीकृतं न वेति विकल्पे पूर्वं दूषयति **पक्षीकार** इति । अत्र हि प्रामाणिकमिथ्यात्वं पक्षीकृत्य तस्य मिथ्यात्वसाधने बाधः ; अन्यस्य तु सिद्धसाध्यता; विधेयस्य निषेधात् व्याघातश्चेत्यर्थः । न ह्यत्र स्वपरनिर्वाहकनीतिः ; यतः—

श्लो—मिथ्यात्वस्य हि मिथ्यात्वे मिथ्यात्वं बाधितं भवेत् । सत्यत्वस्य तु सत्यत्वे सत्यत्वं स्थापितं भवेत् ॥

उत्तरोत्तरमाह **अतिचरणमि**ति । पक्षबहिर्भावो हि सपक्षतया विपक्षतया वा स्यात् । आद्ये, जगन्मिथ्यात्वस्य हि मिथ्यात्वे संप्रतिपन्ने कथं तद्विरुद्धं साध्येत ? द्वितीये, मिथ्यात्वस्य सत्यत्वसंप्रतिपत्त्या तत्र च **हेतुवृत्तेरतिचरणम्** । यदीदं न दृश्यम् , तदा साध्यमपि न स्यात् ; साधनाधीनदृग्विषयत्वायोगात् । अपि च ब्रह्मवदिह विपक्षभूतं मिथ्यात्वं ब्रह्मणः सद्वितीयत्वमापादयेत् ॥ अभावरूपं जगन्मिथ्यात्वमसत्यमप्ये**कदेशि**भिरङ्गीक्रियत इति चेत् , तथाऽपि तत्र **हेतुवृत्तेरतिचरणं** दुस्तरमेव ॥ सत्यमेव जगन्मिथ्यात्वम् ; तच्च ब्रह्मस्वरूपमेवेति नापसिद्धान्तादिदोष इति पराभिप्रेतं कृत्वाऽनुब्रूते **तच्चेदि**ति । तत्रापि सिद्धसाधनत्वमाह **भुवनमि**ति । मिथ्यात्वयोगि **मिथ्या** । तच्च मिथ्यात्वं यदि ब्रह्म, तदा विगीतं ब्रह्मवदिति साध्यार्थः स्यात् । तत्र न वयं प्रत्याख्यातार इति भावः ॥

**इति मिथ्यात्वमिथ्यात्ववादिभंगः ॥ ४९ ॥**

**(195) दृष्टं ब्रह्मापि दृश्यं तव च कथयतः तस्य जिज्ञास्यतादीन् ,**
**मिथ्या चेत् दृश्यताऽस्मिन् , ननु विमतिपदेऽप्येवमेषा त्वयेष्टा ।**

---

*प्रभ*— मिथ्यात्वस्य विपक्षत्वेऽपि तत्र दृश्यत्वाभावात् न व्यभिचार इत्यत्राह—यदीदं न दृश्यमिति ॥
*बो*—साध्यं न ब्रह्मातिरिक्तमिति चेत् , तत्राह तच्चेदिति । तर्हि विश्वं मिथ्येत्यस्य विश्वं मिथ्यात्वयोगि, विश्वं ब्रह्मवत् इत्यर्थः स्यात् । तदिष्टमेवेति सिद्धसाधनम् ।

*स्वपरनिर्वाहकेति* । वस्तुनः सत्यत्वं यदुच्यते, तत् स्वपरनिर्वाहकम् ; स्वस्य वस्तुनश्च सत्यत्वं स्थापयतीति । न तथा मिथ्यात्वम् , वैषम्यादिति । ननु नातिचरणम् , हेतोर्मिथ्यात्वेऽनंगीकारादिति शंकित्वा परिहरति यदीदमिति । एकदेशिभिः= अभावस्य सत्यस्यान्यस्य सत्त्वेऽपि न भावाद्वैतहानिरिति वदद्भिः । मिथ्यात्वयोगि मिथ्येति । मिथ्येति साध्यवाचकपदं मिथ्यात्वयोगीत्यर्थकमित्यर्थः । ननु मिथ्यात्वस्य ब्रह्मैक्ये जगन्निरूपिताधेयत्वं मिथ्यात्वे यथा, तथा ब्रह्मण्यप्युक्तं स्यात् । तदस्माकं कथमिष्टमिति चेत्—कस्यापि तन्नेष्टम् , तस्मात् तत्साधनमशक्यमिति ज्ञापनाय मिथ्यात्वाश्रय इत्यनुक्त्वा मिथ्यात्वयोगीत्युक्तम् । एवं मिथ्यात्वं जगदभावः, अभावश्च ब्रह्मेत्युक्तौ जगति अभावप्रतियोगित्वस्यैव सत्त्वात् ब्रह्मप्रतियोगित्वमेव साध्यं स्यात् । तदपीष्टमेव । जगद्ब्रह्मणोः संबन्धस्यापृथक्सिद्ध्यादेः स्वरूपानतिरिक्ततया, संबन्धप्रतियोगित्वस्य ब्रह्मप्रतियोगित्वरूपत्वसंभवात् । न च ब्रह्म सर्वदा जगदभाववत् इत्याकारकप्रतीतिविषयप्रतियोगि तावत् विश्वमिति साध्यत इति वाच्यम् ; दृष्टान्ते तादृशप्रतियोगित्वरूपसाध्यवैकल्यात् । न च *ब्रह्मणि* दृश्यत्वात् ब्रह्मनिष्ठाभावप्रतियोगित्वं विश्वस्मिन् साध्यते, यत् यत्र दृश्यं तत् तन्निष्ठाभावप्रतियोगि यथा शुक्तिरूप्यमिति एवं विवक्षणान्न दोष इति वाच्यम्—पक्षे हेतोरसिद्धेरित्यलं बहुना ॥ ४९ ॥

अथ दृश्यत्वरूपहेतुशोधनेन दूषयति दृष्टमिति । ब्रह्मापि = विश्वमिव ब्रह्म च । तस्य—ब्रह्मणः विजिज्ञासस्व, द्रष्टव्यः, निचाय्य, तस्मिन् दृष्टे, श्रोतव्यो मन्तव्यः इत्येवं जिज्ञास्यत्वादिधर्मान् कथयतस्तव च तदपि, दृश्यमिष्टम्—ज्ञानविषयत्वाश्रयत्वरूपदृश्यत्ववत्तयेष्टमिति तस्यापि मिथ्या-

लिङ्गं जाड्यादिकं चेत्, तदपि मम मते ह्यंशतः स्यात् असिद्धं
मिथ्यालिङ्गैश्च सिध्येत् किमपि यदि, भवेद् बाष्पधूमोऽग्निलिङ्गम् ॥ ५० ॥

एवं व्यापकवत् व्याप्यस्यापि विकल्पासहत्वं चतुष्पद्या दर्शयति **दृष्टमिति**। यत् एतन्मिथ्यात्वसाधकतयोक्तं दृश्यत्वम्, तद् ब्रह्मणि विद्यते न वेति विचारे नेति पक्षः तावत् [श्लोके] दूष्यते, "अथातो ब्रह्मजिज्ञासा", "तद्विजिज्ञासस्व। तद्ब्रह्म", "आत्मा वा अरे द्रष्टव्यः", "आत्मन्येवाऽऽत्मानं पश्येत्" इत्येवमादीनि परश्शतं वाक्यानि पुरस्कृत्य श्रोतव्यमन्तव्यत्वादिविशेषान् साधयतस्ते ब्रह्मणि दृश्यत्वनिषेधो न युक्तः [इति ?]। विद्यत इति पक्षे [विपक्षे] हेतोरतिचार इति भावः। ब्रह्मणि दृश्यत्वं तत् मिथ्याभूतम्; अतो न तत्रातिचार इति शङ्कते **मिथ्या चेदिति**। एतदुपालभते **नन्विति**। मिथ्याभूतेनैव हि दृश्यत्वेन ब्रह्मव्यतिरिक्तेऽपि मिथ्यात्वं त्वया साध्यते। न हि दृश्यं मिथ्या, तद्धर्मस्तु दृश्यत्वं सत्यमिति संभवति; तथाऽङ्गीकारे तत्रैवातिचारः, सत्यद्वित्वप्रसङ्गश्चेति भावः। ननु दृश्यत्वे दृश्यत्वं त्वयाऽपि वक्तुं न शक्यम्; आत्माश्रयादिप्रसङ्गात्। अतः सत्येऽपि तस्मिन् हेतुवृत्त्यभावात् नातिचारः स्यात् ॥ मैवम्; दृश्यत्वं नाम लिङ्गं दृश्यत्वादिति हेतुपदेन बोध्यं न वा। आद्येऽतिचारः त्वयैवेष्टः। द्वितीये, साध्यव्याप्यमनुपस्थापयतो हेतुपदस्य प्रयोगाङ्गत्वायोगः। न चैवमात्माश्रयादिदोषः; स्वपरनिर्वाहकसमाधिना दृश्यत्वधर्मस्य तदाश्रयाणां च **दृश्यपदेन** संग्रहणस्य त्वया स्वीकार्यत्वात्; अन्यथा दृश्यमिति स्वोक्तिविषयत्वव्याघातात्। यदि च **हेतुपदजन्यधीविषयताऽभावेऽपि हेतुपदं** तत्र प्रयुज्येत, एवम**नैकान्तिका**दिपदमपि तज्जन्यधीविषयत्वाभावेऽपि तत्र लब्धप्रसरमिति सर्वदोषसंपातः स्यात् ॥ दोषाभावे कथं **दुष्टशब्दः** सार्थ इति चेत्, दृश्यत्वाभावे कथं **दृश्यशब्दः** सार्थ इति सममेतत्। किंच दृश्यत्वरहितं दृश्यत्वं निष्प्रकारं

---

पृ०—दृष्टमिति। विकल्पासहत्वं चतुष्पद्या दर्शयतीति। पूर्वश्लोकवत् नात्र विकल्पप्रतिपादनम्, विकल्पस्त्वभिप्रेतः, विकल्पासहत्वमेव समस्तेन श्लोकेन प्रतिपाद्यत इत्यभिप्रायेण चतुष्पद्येति उक्तम्। नेति पक्षस्तावद् दूष्यत इति। कण्ठोक्त्येति शेषः। अभिप्रेते विद्यते इति पक्षे दोषं दर्शयति विपक्ष इति।

भी—त्वापत्तिः। अस्मिन् ब्रह्मणि या दृश्यता सा मिथ्याभूता; परमार्थदृश्यत्वं तु नास्तीति चेत्, विमतिपदे = विवादास्पदे विश्वस्मिन्नपि एषा एवं = मिथ्यात्वेनैव त्वयेष्टा ननु। अतः = परमार्थत्वमनिवेश्यम्। निवेशे चाप्रसिद्धिः। न च स्वसमानसत्ताकदृष्टिविषयताश्रयत्वं हेतुः; विश्वस्य हेतोश्च व्यावहारिकसत्ता तुल्या; ब्रह्मणस्तु पारमार्थिक्येवेति न तत्र हेतुरिति वाच्यम्—अस्य वैषम्यस्य मिथ्यात्वसिद्ध्यनन्तरमेव विमृश्यत्वात् तत्सिद्धेः पूर्वं तदसिद्धेः। अथ दृश्यत्वं नाम जडत्वं पराक्त्वमित्यादिरूपमस्त्वित्यत्राह लिंगमिति। तदपि मम मते विश्वान्तर्गते जीवादौ नास्तीति हेतोर्भागासिद्धिः। न च जीवब्रह्मैक्यस्वीकारात् अचेतनमात्रपक्षीकरणान्न दोष इति वाच्यम्—हेतोरप्रयोजकत्वात्। प्रतिपन्नोपाधौ बाधितत्वमुपाधिरिति प्रागेवोक्तत्वात्। वस्तुतः पक्षे सर्वत्र हेतोरसिद्धिरेव मिथ्यात्वादित्याह मिथ्यालिङ्गैश्चेति। यदि किमपि सिद्ध्येत् = मिथ्याभूतमपि दृश्यत्वादिकिञ्चित्साध्यसाधकं यदि, तर्हि बाष्परूपधूमः अग्नेः लिंगं स्यात्; त्वन्मते बाष्पधूमस्यापि धूमत्वात्। न केवलं ब्रह्माभिन्नतया मिथ्यात्वम्, दृग्दृश्यसंबन्धानुपपत्तिं वदतां भवतां मते सर्वत्र दृश्यत्वं नास्त्येवेत्यनोऽपि मिथ्यालिङ्गमेव तत् ॥ चतुष्पद्येति। श्लोकगतपादचतुष्टयेनार्पादित्यर्थः।

स्वप्रकाश वा? नाद्य, स्वोक्तिव्याघातादेव। न द्वितीय, अन्तरत्वात्। अत कथ दृशिनिषयत्व नासादयेत् ?

अथ स्यात्— दृश्यत्वशब्देन स्वगोचरदृशिनिरपेक्षप्रकाशात्यन्ताभावो वा दृशिजन्यफलाश्रयत्वं वा विवक्षितम्। तदुभय स्वयञ्ज्योतिषि ब्रह्मणि नास्तीति कथ तत्रातिचार इत्यपसर्पणवाक्यमनुभाषते **लिङ्गमिति**। तदुभय दूषयति **तदपीति**। अस्मन्मते हि ब्रह्मव्यतिरिक्ता जीवा धर्मभूतज्ञान च स्वयंप्रकाशतया स्वगोचरदृशिनिरपेक्षप्रकाशानि। अतो हेतोर्भागासिद्धि। दृशिजन्यफल च त्वदनुविधेयाभिमत प्राकट्य वा? त्वदभिमत वेद्यगतवित्तिस्फुरण वा। द्वयोरपि विगीते क्वचिदपि अस्माभिरनङ्गीकारात् सार्वत्रिकी स्वरूपासिद्धि। तथापि स्फुरणस्य वाच्यं व्याहाराख्य फल विगीतस्यापीति चेत्, तर्हि तत् ब्रह्मापि व्याप्नोति। अन्यथा तत्र मौनैकशरण कथ तद्याचिख्यासया प्रवर्तेथा ?

भवन्तु चात्र यानि कानिचिल्लिङ्गानि, तानि सत्यानि असत्यानि वेति विकल्पे पूर्वत्रापसिद्धान्तादि स्फुटमिति कृत्वा पश्चिममनुवक्ति **मिथ्यालिङ्गैरिति**। तत्रानिष्टमाह **भवेदिति**। **बाष्पधूमः** बाष्पारोपितधूम ॥ भ्रान्तिसिद्धस्य धूमस्य व्यभिचारदृष्ट्या वह्निगमकत्वाभाव, न तु मिथ्यात्वादिति चेत्— तत एव यन्मिथ्या न तद्गमकमिति व्याप्तिसिद्धे त्वदभिमतान्यपि न साध्य साधयेयु। साधने वा ब्रह्मण्यपि तानि कथञ्चित्कल्पितानि तदप्यपरमार्थयेयु।

एतेन परोक्त बाधकमपि प्रतितर्कप्रत्यूढ दर्शित भवति। अपिच सत्यत्वपक्षे याऽसौ दृग्दृश्य सम्बन्धानुपपत्तिर्बाधिकेति समाश्यते। असत्यत्वेऽपि सा अस्ति वा न वा। आद्ये, तर्काङ्गपञ्चकान्यतमहाने अतर्कत्वम् (आभासत्वम्) तदा चासत्यत्वे साध्ये कथ दृश्यत्व हेतुरुपादीयेत ? द्वितीये, सत्या

---

प्र॰— एतेन परोक्त बाधकमिति। सत्यत्वे दृग्दृश्यसम्बन्धानुपपत्तिरिति बाधक। काल्पनिकलिङ्गै प्रपञ्चमिथ्यात्वे ब्रह्मणोऽपि मिथ्यात्वप्रसङ्ग इति प्रतितर्कपराहतमित्यर्थ। तर्काङ्गपञ्चकान्यतमहानेराभासत्वमिति। असत्यत्वे दृग्दृश्यसम्बन्धानुपपत्तिरिति प्रतितर्कपराघातेन वा विपर्ययापर्यवसानाद्वा तर्काभासत्वमित्यर्थ। तदा चेति। असत्यत्वा नुपा न कथम सत्यत्व साधयेदित्यर्थ। द्वितीय इति। सत्यत्व एव दृश्यत्वानुपपत्तिर्नास्ति सत्यत्व इति पक्षे सत्येतरत्वप्रयुक्तत्वात् दृश्यत्वोपप पुष्पादीनामपि सत्येतरत्वात् तत्र दृश्यत्वानुपपत्तिर्न

श्री— अपसर्पणेति। वादाहवे पश्चादपसर्पणमिदम्। त्वदनुविधेयेति। व्यवहारे भट्टनय इति हि तदुक्ति। तत एवेति। मिथ्याभूतस्य व्यभिचारित्वदर्शनादेव। एतेन=ब्रह्मणोऽपि मिथ्यात्वापादकत्वोपपादनेन, परोक्त=दृग्दृश्यसम्बन्धानुपपत्तिरूपम्, बाधक=सत्यत्वबाधकमपि निरस्तम्। यदि सत्य स्यात् जगत् दृक्सम्बन्धि न भवेदिति तर्क, यदि दृश्यत्व मिथ्यात्वसाधक स्यात् ब्रह्मणोऽपि मिथ्यात्व स्यादिति प्रतितर्कहत इति भाव। दृग्दृश्यसम्बन्धानुपपत्ति प्रकारान्तरेणापि दूषयति अपिचेति। दृग्दृश्यसम्बन्धानुपपत्तिरिति। दृक्=ज्ञानम् दृश्य=जगत् ज्ञानरूपब्रह्मणो जगतश्चाऽऽरोप विना वास्तव सम्बन्धो नास्तीति साधनाय जगत्सत्यत्वे ज्ञानज्ञेयसम्बन्ध एव नेति तैर्वैतु प्रवृत्तम्। एव वदन्त दृश्यमिति पदमपि प्रयोक्तु नार्हन्ति। कथमेव सति दृश्यत्व हेतु वदन्तीत्याह विस्तरेण। अन्यतमहानेरिति। यदि सत्य स्यात्, दृग्दृश्यसम्बन्धो न स्यादित्युक्ति दृग्दृश्यसम्बन्धस्य दृष्टत्वे निश्चसिन् सत्त्वे, तन्मुखेन विपर्यये पर्यवसाने च घटेत। असत्यत्वपक्षेऽपि

दन्यस्मिन् खपुष्पेऽपि दृश्यत्वानुपपत्तिर्न स्यात् ॥ माभूदिति चेन्न ; ख्यातिबाधान्यथानुपपत्तितर्कानुदयप्रसङ्गात् ॥ अथ शब्दज्ञानानुपातिवस्तुशून्यविकल्पगोचरतामात्रेण तस्य दृश्यत्वम्, सत्येतरत्वसाध्यापेक्षया च सपक्षत्वमिष्येत--तदा तद्वदेव तुच्छत्वेऽपि संभवति अभिमतानिर्वचनीयत्वं न नियम्येत । शब्दज्ञाननिरपेक्षश्च खपुष्पाद्यध्यासः प्रागपि दर्शितः॥ भवतु तत्राप्यनिर्वचनीयत्वम् ; शब्दमात्रानुपातिविकल्पविषये तुच्छत्वम् ; तत्र च विवक्षितदृश्यत्वानुपपत्तिः सिद्धेति चेत् - तदपि न ; शब्दमात्रप्रतीतबाह्यागमविकल्पविषयाणामन्येषामपि पूर्वपक्षवाक्यार्थानामनिर्वचनीयत्वाभ्युपगमात् ॥ अस्तु तत्रापि तुच्छत्वम् ; किं नश्छिन्नमिति चेन्न ; प्रत्यक्षाद्याभासप्रतिपन्नेऽप्याभासप्रतिपन्नत्वाविशेषेण तुच्छबहिर्भावक्लृप्तिभङ्गप्रसङ्गात् । ननु सत्ये दृक्संबन्धोऽनुपपन्नः ; अस्वयंप्रकाशस्य स्वतस्सिद्धिविरहेण सत्यत्वायोगात् । तुच्छेऽपि तथा, स्वरूपाभावे संबन्धाभावात् ; अनिर्वचनीये तु अविद्यामाहात्म्यादाध्यासिकस्संबन्धः सिध्यन् दुरपह्नव इति, तन्न ; पराधीनसिद्धेरपि निर्बाधस्य सत्यत्वाविरोधात् ; सत्येऽपि ब्रह्मणि आध्यासिकदृक्संबन्धाभ्युपगमाच्च ।

श्लो— दृक्संबन्धश्च दृश्यानां असत्यत्वे विवक्षितः । सत्यत्वादिविकल्पेन सीदत्यनुपपत्तिमान् ॥

सत्यत्वे त्व(त्वेना)नुपपद्यमानो हि दृक्संबन्धः (1) सत्यः (2) असत्यः (3) उभयरूपः (4) अनुभयरूपो वा । नाद्यः, सत्यत्वे प्रपञ्चस्य दृक्संबन्धः सत्यो न स्यात् ; असत्यश्चासाविति विपर्ययविश्रमायोगात् ॥ विषयसत्यत्वे हि धिया संबन्धः स्वीकार्यः । न चासौ घटते विकल्पदौःस्थ्यादिति प्रसङ्ग-

---

अ— स्यादित्यर्थः । इष्टापत्तिं शङ्कते —मा भूदिति चेदिति । तर्कानुदयप्रसङ्गादिति । खपुष्पवद सत्त्वे......स्या......नुपपत्तिं वदतां दृश्यत्वोपपत्तिः खपुष्पादेरनिष्टेति भावः। ननु शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः; तद्गोचरतया दृश्यत्वमिष्टमेव ; शब्दनिरपेक्षधीविषयत्वरूपं दृश्यत्वमनिष्टम्, तदवलम्बनेन तर्कोदय इति न विरोध इत्यभिप्रायेण शङ्कते—अथ शब्दज्ञानेति । हेतोः खपुष्पादौ व्यभिचारः स्यादित्याह—सत्येतरेति । विवक्षितासिद्ध्या दूषयति—तदा तद्वदिति । खपुष्पादेः शब्दज्ञान.........निरपेक्षधीविषयत्वानुपपत्तिश्च नास्तीत्यत आह—शब्दज्ञाननिरपेक्ष इति । विवक्षितप्रपञ्चानिर्वचनीयत्वसिद्ध्यर्थं खपुष्पादेरप्यनिर्वचनीयत्वाङ्गीकारं शङ्कते—भवतु तत्रापीति। तर्हि तुच्छत्वं कस्येत्यत्राह—शब्दज्ञानमात्रेति । विवक्षितदृश्यत्वानुपपत्तिरत्र शब्दनिरपेक्षधीविषयत्वरूपदृश्यत्वानुपपत्तिरित्यर्थः । उक्तदोषपरिहारार्थं सत्यतुच्छयोर्दृश्यत्वानुपपत्तिमनिर्वचनीये तदुपपत्तिं च शङ्कते—ननु सत्ये दृक्संबन्ध इत्यादिना । अस्वयम्प्रकाशस्येति । सत्यस्य दृक्सम्बन्धे तस्य परप्रकाश्यतया स्वतस्सिद्धिविरहात् अस्वतस्सिद्धस्य च सत्यत्वयोगादित्यर्थः । सत्येऽपि ब्रह्मणीति । ततश्च तत्र व्यभिचारस्तदवस्थ इति भावः । असत्यत्वे विवक्षित इति । असत्यत्वेनैवोपपद्यमानतया विवक्षित इत्यर्थः । श्लोकं व्याचष्टे—सत्यत्वेनानुपपद्यमान इत्यादिना ।

टी— तत्संबन्धानुपपत्तावियिष्टायां तर्कभङ्ग इत्यर्थः । ख्यातीति । खपुष्पादेः ख्यात्यभावादेवात्यन्तासत्त्वम् । तत्र दृश्यत्वमनुपपन्नमित्येव वक्तव्यम् । अथेति । 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति योगशास्त्रे अत्यन्तासतोऽपि खपुष्पमित्यादिशब्दात् ज्ञेयत्वमिष्टम् । तदा व्यभिचारवारणाय साध्यमप्यन्यथाकरोति सत्येतरत्वेति । अस्वयंप्रकाशस्य सत्यत्वायोगादितीदं निरस्यति पराधीनेति । अनिर्वचनीये यथाऽऽध्यासिकसंबन्ध इतीदं क्षिपति सत्येऽपीति । दृक्संबन्ध इति कारिकामेव विवृणोति, सत्यत्वे

तद्विपर्ययाविति चेन्न ; इष्टप्रसङ्गत्वात् । दृशः सत्यत्वेऽपि दृश्यसंबन्धासत्यत्ववत् दृश्यस्य सत्यत्वेऽपि दृशिसंबन्धमात्रासत्यत्वमनुपपत्त्या कल्प्यम् ॥ दृक्संबन्धासत्त्वे तदधीनसिद्धेः कथं सत्यत्वमिति चेन्न ; असत्यात् सत्यसिद्धेः त्वया त्वद्विधैश्च जोघुष्यमाणत्वात् ; अस्माकं तु संबन्धविकल्पदौःस्थ्यानङ्गीकारादेव समीहितसिद्धिः ।

श्लो संबन्धफलसिद्धौ च स्वरूपे दुरपह्नवे । अन्तर्भावबहिर्भावविवादस्त्विह निष्फलः ॥
ये च दृग्दृश्यसंबन्धे संयोगादिविकल्पतः । दोषाः प्रलपितास्तेऽत्र दृश्यासत्यत्वभीरवः ॥
संबन्धमात्रदौर्घट्यात् तद्विशेषोऽपि दुर्घटः । इति चान्धस्य जात्यन्धयष्टिदानोपमं विदुः ॥

न द्वितीयः, विषयस्य सत्यतायां असत्यसंबन्धो न स्यादिति ह्यत्र प्रसङ्गः स्यात् । अयं ब्रह्मण्यतिचरितः ; इष्टप्रसङ्गश्च ; विपर्यये विश्रान्तिश्चाप्यसिद्धा । अत एव न तृतीयचतुर्थौ, व्याघाताच्च । तथाऽपि कोऽसौ दृग्दृश्ययोः संबन्ध इति निर्मत्सराः पृच्छाम इति चेत्, वयमपि निर्मत्सराः पृच्छन्तं पृच्छामः । तत्र (1) किंनामेति वा, (2) किंस्वरूप इति वा, (3) संयोगादिषु कतम इति वा, (4) तेष्वन्तर्भूतो बहिर्भूतो वेति वा, (5) सत्योऽसत्यो वेत्यादिप्रकारकोटिभेदेन वा प्रश्नार्थ स्यात् ? नाद्यः, अप्रज्ञातविशेषनाम्नामानन्त्यात् ; सामान्यतस्तु प्रश्नत्रयेऽपि प्रत्युक्तेः । न द्वितीयः, सर्वत्र स्वरूपमात्रे प्रश्नोत्तरविचारादेरनवतारात् । न तृतीयः, संयोगादिराश्यन्तर्भावनिर्बन्धाभावात् । अन्यथा सर्वत्र तज्जातीयराशिविशेषप्रश्नप्रसङ्गात् । नापि चतुर्थः, उभयथाऽपि स्वरूपलाभे विशेषनिर्धारणवैफल्यात् । अनिर्धारितेऽप्यन्यतरकोटेरनपायात् । न पञ्चमः, परस्परविरुद्धे सर्वत्रानुपपत्तिरहितान्यतरकोटेः यथार्हमवशेषणीयत्वात् । दूषिता च संबन्धरक्षानुपपत्तिः । दर्शितश्चासंबन्धपक्षे दोषः । यदि चैतादृशः तर्कोऽनुग्राहकः, स तर्हि, 'यत् प्रकाशते तन्मिथ्या ; यथा ग्राह्यग्राहकौ ; तथा संवित्'इत्यादिसंविन्मिथ्यात्वसाधकानुमानेष्वपि सुलभः; सत्यत्वस्वप्रकाशत्वादिधर्मसंबन्धानुपपत्तेः त्वत्प्रलापप्रस्थित्यैवाकुण्ठितप्रसरत्वात् ।

पृ— इष्टप्रसङ्गत्वादिति । सत्यस्य दृक्सम्बन्धस्याभिमतत्वादिति भावः । दुर्घटस्य कथमभिमतत्वमित्यत्र दौर्घट्यमङ्गीकृत्य सम्बन्धदौर्घट्ये तस्यैवासत्यत्वं, न दृश्यस्येति सनिदर्शनमाह दृशः सत्यत्वेऽपीति । विकल्पदौःस्थ्यानङ्गीकारमेवाह—सम्बन्धफलेति । दृक्सम्बन्धफलस्य व्यवहारानुगुण्यस्य सिद्धेः तत्कारणसम्बन्धस्वरूपे दुरपह्नवे सति संयोगाद्यन्तर्भावादिविचारोऽनर्थक इत्यर्थः । विचारसाफल्येऽपि विकल्पदोषा दृश्यासत्यत्व... नाक्षमा इत्याह—ये चेति । सम्बन्धस्वरूपस्य फलसिद्ध्या दुरपह्नवत्वेन सम्बन्धसामान्यदौर्घट्यात् विशेषदौर्घट्यो..... नं अत्यन्ता-सिद्धेनासिद्धसाधनमित्याह—सम्बन्धमात्रदौर्घट्यादिति । ब्रह्मण्यतिचरित इति । ब्रह्मणि कल्पनिकदृशिसम्बन्धस्य भवदभिमतत्वादिति भावः । अत एवेति । इष्टप्रसङ्गादेवेत्यर्थः । दृश्यत्वमिथ्यात्वयोर्निरुपाधिकसम्बन्धस्वीकारे ज्ञानानां विषयमिथ्यात्वस्यौत्सर्गिकतया स्वतो......

श्री— त्विति । दौःस्थ्यानंगीकारादित्येतद्विवरणम् । संबन्धेति कारिका । संबन्धफलं = व्यवहारः । अन्तर्भावेति । किं संयोगादिरूपः तदन्यो वा, किं धर्मधर्मिस्वरूपः तदन्यो वेति विवाद इत्यर्थः । दृश्यासत्यत्वभीरव इति । दृश्यसत्यत्वस्थापका इत्यर्थः । जात्यन्धेति । संबन्धदौर्घट्यस्यैवानंगीकारादिति भावः । न तृतीयचतुर्थाविति । उभयरूपोऽनुभयरूपो वेति पक्षावित्यर्थः । ...

श्लो— मिथ्यात्वेन च दृश्यत्वं स्वतस्संबन्धि साधयन्। अप्रामाण्यस्वतस्सिद्धिमुद्गिरत्यनया गिरा ॥

**इति दृश्यत्वानुमानभङ्गः ॥ ५० ॥**

(196) **व्यावृत्तं शुक्तिरूप्यं विदितमिह मृषा; विश्वमेवं न किं स्यात्?**
**मैवं हेतोरयुक्तेः; स खलु भिदुरता बाध्यता नाशिता वा।**
**आद्येऽनैकान्त्यमन्त्ये स्वसमयविहतिर्मध्यमे स्यादसिद्धिः;**
**धीविच्छेदादिकल्पान्तरमपि कथितैश्चूर्णितं दोषवृन्दैः ॥ ५१ ॥**

उक्तदोषदुष्टमप्यनुमानान्तरमधिकदोषशिक्षार्थं व्याचष्टे **व्यावृत्तमिति**। **इह**-यत्र भाति तत्रेत्यर्थः। अन्यत्र तु प्रसङ्ग एव नास्ति। यद्वा सर्वस्मिन्निह जगतीत्यर्थ.। विमतं मिथ्या व्यावर्तमानत्वात्, यदुक्तसाधनम्, तदुक्तसाध्यम्; यथा शुक्तिरूप्यम्। तत् खलु स्वतादात्म्येन भाते शुक्तिद्रव्येऽनुवर्तमाने स्वयं व्यावर्तते। अतो मिथ्या। एवं रज्ज्वादेः सर्पभूदलनाम्बुधारादेश्च सत्यत्वमिथ्यात्वे व्यवतिष्ठेते इति। अत्रापि प्रागुक्तदूषणानि न प्रसर्तव्यानीत्यभिप्रायेण प्रतिवक्ति **मैवमिति**। तत्र हेतुदौ.र्थ्यं हेतुमाह **हेतोरिति**। अयुक्तिं प्रथयितुं विकल्पयति **स खल्विति**। योऽयं(सोऽयं?) व्यावर्तमानत्वहेतुः कुनश्चित् भिन्नत्वं वा बाध्यत्वं वा नश्वरत्वं वा। प्रथमं दूषयति **आद्य** इति। भिन्नत्वं ह्यत्र स्वप्रतियोगिकं वा, स्वेतरप्रतियोगिकं वा, स्वतोऽन्यतो वेति विशेषानादरेण यत्किंचित्प्रतियोगिकं वा। आदिमस्तु असंभवग्रस्तः। भेदाभेदकुदृष्टिश्च त्वया नाङ्गीक्रियते। अनन्तरस्तु अनैकान्त्यहत.। सत्ये ब्रह्मणि अन्याऽवृत्तिं वर्णयता त्वयैव स्वेतरान्यत्वस्य स्वीकारात्। तत एव सामान्योक्तिरपि निर्धूता। अत्र क्रमस्य

---

[गू]— पक्षः स्वीकृतः स्यादित्याह—मिथ्यात्वेन चेति ॥ ५० ॥

'विदितमिह मृषा' इत्यत्र 'इह' इति पदस्य 'मृषा' इत्यनेनान्वयस्य स्वारस्यात् अतः प्रतीयमानत्वात् तदनुरोधेन व्याचष्टे–इह=यत्र भाति तत्रेत्यर्थ इति। यस्मिन् देशे प्रतीयते तत्र मिथ्यात्वं विवक्षितमित्यर्थः। किमित्येवं देशविशेषावच्छेदेन मिथ्यात्वमुच्यत इत्यत्राह, अन्यत्र तु प्रसंग एव नास्तीति। देशान्तरे सत्त्वप्रसक्त्यभावात् तत्र मिथ्यात्वप्रतिपादनमनपेक्षितमिति भावः। मिथ्यात्वस्य देशविशेषकीर्तने प्रयोजनमान्द्यात् अन्यथा व्याचष्टे–यद्वा सर्वस्मिन् इति। व्यावृत्तं शुक्तिरूप्यं सर्वस्मिन् जगति मृषा विदितमिति हेतुसाहचर्यात् दर्शनस्य सार्वत्रिकत्वं विवक्षितमिति भावः।

[श्री]— साधयन्निति। दृश्यत्वे मिथ्यात्वनिरूपितानौपाधिकसंबन्धरूपव्याप्तिस्वीकारी दृशः=ज्ञानस्य मिथ्याविषयकत्वमेव सहजमिति स्वतः असत्यविषयकत्वमप्रामाण्यमेव बौद्धवन्मन्यत इत्यर्थः॥५०॥

दृश्यत्वरूपो हेतुर्निरस्तः; व्यावर्तमानत्वादिति हेतुं विकल्प्य निरसितुमाह व्यावृत्तमिति। शुक्तिरूप्यादिकमिह प्रपञ्चे व्यावृत्तञ्च मृषा च विदितमिति, यद् व्यावृत्तं तन्मृषा इति व्याप्त्यवधारणात् विश्वमेव व्यावृत्तत्वात् मृषा किं न स्यादिति चेत्—मैवम्। व्यावृत्तत्वरूपहेतोः अयुक्तेः=साधनयोग्यतारहितत्वात्। स खलु—व्यावृत्तत्वरूपहेतुः खलु भिदुरत्वादिरूपः स्यादित्यर्थः। खलुशब्दः श्रीभाष्यादावेतद्विकल्पप्रसिद्धिं दर्शयति। आद्ये=भिन्नत्वपक्षे अनैकान्त्यम्। ब्रह्मण्यपि अविद्यादितो भेदसत्त्वात्। अन्त्ये=नाशित्वपक्षे, स्वसमयविहतिः=अपसिद्धान्तः। मध्यमपक्षस्यैव तदिष्टत्वात् तस्यान्ते उक्तिः। धीविच्छेदः=कदाचिदप्रकाशमानत्वं कनिश्चयबुद्ध्यविषयत्वं वा। कथितेति। श्रीभाष्यादिदर्शितैरित्यर्थः। अनुवर्तमान इति। अयं सर्पः, इदं भूदलनम्, इदमम्बुधारा

दूषणानुपयोगित्वात् अपसिद्धान्तोद्घाटनत्वरया च तृतीयं दूषयति अन्त्य इति । यदि ह्यत्र स्वकाल-सत्त्वमभ्युपेत्य उत्तरकालासत्त्वं हेतुरुद्गृह्यते, तदा मिथ्यात्वेन सिषाधयिषितस्य स्वकालसत्त्वाभ्यनुज्ञाने अपसिद्धान्तः; हेतुसाध्यपदव्याघातश्च । अनभ्युपगतस्वकालसत्त्वे तु नश्वरत्वहेतुरसिद्धः । न खलु नित्यासतां खपुष्पादीनां नश्वरत्वं पामरः परीक्षको वा कश्चित् प्रत्येति ।

श्लो— तत्रापि नश्वरत्वेन नित्यसत्त्वं निरुध्यताम् । स्वकालेतरकाले च तेन मिथ्यात्वमिष्यताम् ॥

बाध्यत्वहेतुं बाधते मध्यम इति । प्रपञ्चस्य बाध्यत्वं हि स्वदेशादौ वा स्वारोपदेशादौ वा, आद्ये तु, असिद्धिरवस्थापिता । द्वितीये, बाधस्थलेष्वेव मिथ्यात्वसाधने सिद्धसाध्यता । अन्यत्र साधने तु अविषयवृत्तित्वम् । अन्यथाऽतिप्रसङ्गः; प्रपञ्चविषयबाधेन ब्रह्मबाधस्यापि सुवचत्वात् । ब्रह्म मिथ्या, सप्रपञ्चात्मना बाधितत्वात् । यत् कथंचित् बाध्यते, तत् सर्वथा बाध्यत इति त्वयैवाश्रितत्वादिति ।

ननु (1) यत् सत्यम्, तन्नित्यं प्रकाशते, (2) स्वतश्च; यथा ब्रह्म, विगीतं तु न तथा; सुषुप्त्यादौ प्रपञ्चभानाभावात्, जागरादौ चान्यत एव भानात् । (3) किंच सत्यस्य सर्वस्मिन् प्रकाशमाने प्रकाशो दृश्यते, यथा संवित्स्वरूपस्य । न तथा प्रपञ्चस्य; अप्रकाशमाने घटादौ पटादिप्रकाशदर्शनात् । (4) सत्यं च ब्रह्म देशपरिच्छेदरहितम्; न तथा विगीतमिति मिथ्या स्यात् । अत. कोट्यन्तरसंभवात् विकल्पन्यूनः प्रस्तुत उपन्यास इति शङ्कापनुत्त्यै कोट्यन्तरेष्वप्युक्तदोषान् अतिदिशति धीविच्छेदेति । (1) यदत्र कदाचिदप्रकाशमानत्वात् मिथ्येति—तत्र किमसदाद्यपेक्षया कदाचित् अप्रकाशमानत्वं हेतुः उत सर्वापेक्षया ।

नाद्य, सामग्र्यनुदयप्रयुक्तस्य प्रकाशाभावस्य प्रकाश्यमिथ्यात्वसाधकत्वायोगात् । न च पशुभिर्नृपशुभिश्च अविदितेष्वदृष्टेश्वरादिषु प्रामाणिकैरसत्यत्वमध्यवसीयते ॥ वयं तु तत्राप्यध्यवस्याम इति चेन्न; ब्रह्मण्यपि प्रसङ्गात् ॥ विदितमेवास्माभिरप्यात्मतया ब्रह्मेति चेत्, किमर्थं तर्हि तद्विविदिषया यज्ञदानाद्युपादानम्, शारीरकारम्भश्च ? ॥ अविदिताकारबोधार्थमिति चेन्न; तस्यैवाकारस्य मिथ्यात्वप्रसङ्गात् ।

प्र— हेतुसाध्यपदव्याघातश्चेति । नाशित्वादिति पदं स्वकाले सत्त्वमुपस्थापयति, मिथ्यापदं तु—प्रतीतं नश्वरत्वं अङ्गीक्रियते चेत् नश्वरत्वेन नित्यासत्वसाध... ..स्यादित्यत्राह—स्वकालेतरकाले चेति । तेन नश्वरत्वेन स्वकालेतरकाल एव मिथ्यात्वं च इष्यतामित्यर्थः । चशब्देन नश्वरत्वं यथा स्वकालेतरकाले असत्त्वं साधयति—एवं मिथ्यात्वमपि स्वकालेतरकाल एव साधयतीति सूचितम् । तस्यैवाकारस्य मिथ्यात्वप्रसङ्गादिति । तत्र कदाचित् अप्रकाशमानत्वहेतोर्विधमानत्वादिति भावः ।

श्री— इत्यादिष्वानेष्विति शेषः। त्वरया चेति। इदमुपलक्षणम्; बाध्यत्वस्यैतद्द्वयापेक्षया मिथ्यात्वरूपसाध्यान्तरङ्गत्वात् तत्परिशेषणेन विचार इति। अन्त्यपक्षे यदिह्यत्रेत्यादिदूषणमुत्तरश्लोकोक्तसंग्रहरूपम् । नश्वरत्वहेतुरसिद्ध इति । किञ्चित्कालसत्त्व एव नश्वरत्वस्वीकारादिति भावः । ननु नित्यासत्ता यदि नित्यमसत्ता, तदा नश्वरत्वेन तत्साधनं जगत्सत्यत्ववादी नेच्छेत् । नित्यसत्ताया अभावो नित्यासत्ता नश्वरे सर्वत्रेति चेत्—तर्हि खपुष्पादौ नश्वरत्वं, नित्यसत्ताया अभावः, स्वकालोत्तरकालसत्त्वं, तेन मिथ्यात्वञ्च स्यादित्याह तत्रापीति । कदाचिदप्रकाशमानत्वं, स्वतोऽप्रकाशमानत्वं, सर्वप्रकाशानियतप्रकाशत्वाभावः, देशापरिच्छिन्नत्वमित्यादीनां व्यावर्तमानत्वकल्पानां पृथग्दूषणस्यानावश्यकत्वात् पूर्वमविकल्पनमित्याशयं चतुर्थपादस्य वक्तुमाह नन्वित्यादि । जागरादौ चान्यत

तत्त्वावेदकत्वस्यवेद्यस्य च मिथ्यात्वं व्याहतम् । निराकारे च कथं विदिताविदिताकारभेदः ?॥ तत्कल्पनयेति चेत्, तर्हि कल्पिताकारविविदिषयैव शास्त्राद्यारम्भात् स्वेष्टोपप्लवः ।

न द्वितीय, ईश्वरस्य नित्यसर्वज्ञतया तदसिद्धेः । प्रकाशप्रकाश्ययोश्च भिन्नायुक्तत्वं युष्माभिरपि दुरपह्नवम् ; अनादिसाक्षिचैतन्यविषयभूतानामविद्याव्यतिरिक्तानामनादित्वानङ्गीकारात् ।

(2) स्वतः प्रकाशमानत्वाभावाच सत्यत्वनिषेधः पूर्वहेतुविकल्पे दूषितः । परतः प्रकाशोऽपि कारणदोषबाधकप्रत्ययाभावात् प्रतिष्ठितप्रामाण्यः । (3) यच्च सत्यं संवित्स्वरूपं सर्वस्मिन् प्रकाशमाने प्रकाशते, न तथा विगीतम् ; अतो मिथ्येति ; तदसत् ; सर्वसंविदामैक्यस्यास्माभिरनभ्युपगमात्, त्वयाऽपि तस्य दुस्साधत्वाच । अन्यथा कथं न सर्वे सर्वज्ञाः ? स्वसंविदो गुरुसंविदा प्रतिवादिसंविदा चैक्यं पश्यन् किं तदनुगुणं नाचरसि ? भिदुरास्तु संविदः स्ववेद्येतरप्रकाशदशायां न प्रकाशन्त इति. न तन्निदर्शनम् । एतेन सत्यं सत् सर्वत्र वेद्ये प्रकाशत इत्यपि दत्तोत्तरम् ; प्रतिवित्तिवेद्यानां सतां परस्परव्यावृत्तत्वात् । सत्तारूपस्तु तेषां धर्मो न त्वया सत्यत्वेन स्वीक्रियते । शेषं तु स्वस्थाने भविष्यति । (4) यत्तु देशपरिच्छेदवत्तां स्वदेशेऽपि निवृत्ति. सेत्स्यतीति, तदपि नश्वरत्वोक्तन्यायेन प्रत्युक्तम् । यदि हि यत्र क्वचिद्देशे व्यावृत्तिर्हेतुः, स तर्हि स्वदेशासत्त्वं न साधयेत् ; तत्सत्त्वे विरोधाभावात् । सार्वत्रिकव्यावृत्तिस्तु साध्यधर्मेति न हेतुः स्यात् ।

श्लो —-यत्र क्वचिन्न क्वचित् तत्खरशृङ्गादिरीतितः । इति मध्यमशिक्षा च स्वविधिक्षेपखण्डिता ॥

**इति व्यावर्तमानत्वानुमानभङ्गः ॥ ५१ ॥**

---

गुरु- दृष्टप्रसङ्गानां परिहरति—तत्त्वावेदकेति । ईश्वरज्ञानस्य नित्यत्वेन कादाचित्कपदार्थविषयीकरणं कथमित्यत्राह—प्रकाशप्रकाश्ययोश्चेति । पूर्वहेतुविकल्पे दूषित इति । दृश्यत्वहेतुविकल्पे जडत्वपक्षे दूषित इत्यर्थः। शेषं तु स्वस्थान इति । सर्वानुवृत्तस्य सन्मात्रस्य दूषणान्तराणि स्वस्थाने वक्ष्यन्त इत्यर्थः । क्वचिद्व्यावृत्त्या सार्वत्रिकी व्यावृत्तिरिति साध्यतामित्यत्राह—यत्र क्वचिदिति । यत् क्वचिद् नास्ति, तत् खरशृङ्गादिवत् क्वचिदपि नास्तीति माध्यमिकशिक्षा च, 'यत्कचिन्नास्ति' इति देशविशेषनिषेधेन क्वचिद् सत्त्वं विहितमिति सर्वदेशासत्त्वस्य क्षिप्तत्वात् खण्डितेत्यर्थः ॥ ५१ ॥

श्री— स्वभानादिति विवृतं स्वतोऽप्रकाशमानत्वरूपं द्वितीयं पक्षं निराकरोति स्वतः प्रकाशमानेति। संवित्स्वरूपस्य निदर्शनत्वं किं सर्वसंविदामैक्यविवक्षया, किं वा भेदेऽपि । आद्ये आह सर्वसंविदामिति । अन्त्ये आह भिदुरास्त्वति । अतः सर्वप्रकाशानुयायिप्रकाशत्वं सर्वथा नास्तीति । 'सत्यं च ब्रह्म देशपरिच्छेद...' इत्यादि प्रागुक्तमनूद्य निरस्यति यत्तु देशेत्यादिना । वस्तुतो माध्यमिकवादोऽयं न भवद्भिर्वक्तुं शक्यत इत्याह यत्रेति । स्वविधीति । शिक्षा स्वस्याऽऽत्मनः शिक्षास्वरूपस्य विधेः क्षेपेण खण्डिता । शिक्षेयं भवता क्रियमाणा भवन्निकटेऽपि नास्ति अन्यत्रावर्तमानत्वात् । अतः शिक्षाया अभावात् बाधकाभावात् सर्वमेव स्यात् । किञ्च भवन्मते आत्माऽपि न स्यात् । अहमस्मीति प्रतीतेः स्वस्थल एव सत्वेन देशान्तरे अभावेन, अन्यत्राभावादत्रापि नास्तीति स्वविधेः आत्मस्थितेः । क्षेपसंभवात् । तथा स्वस्याहमर्थस्य ब्रह्मणः विधिः प्रापकं तत्त्वमस्यादिकम्, तस्यापि क्षेपेण संभाव्यमानेन वेदस्य देशान्तरे अभावादत्राप्यभाव इति साधकप्रमाणाभावेन ब्रह्माभावसंभावनया जगतस्सर्वस्यैवाभावोऽपि निरसनीय इति ॥ ५१ ॥

(197) 'यत् स्यात्, तत् सर्वदा स्यात्; यदपि च न भवेत्, तच्च न स्यात् कदाऽपि
क्वापि व्योमारविन्दादिवत्' इति यदि, न व्याहतेः साध्यहेत्वोः।
मध्ये सत्त्वं गृहीत्वा खलु तदुभयतोऽसत्त्वलिङ्गं गृहीतम्;
सामग्र्या चावधी द्वौ स्फुटतरविदितौ; साऽपि तत्तत्प्रवाहात् ॥ ५२ ॥

नश्वरत्वहेतौ उक्तदोषमनिर्धारयत कालपरिच्छेदसामान्यमुखेन मिथ्यात्वशङ्कामङ्कुरन्तीमुज्जिहीर्षु रुद्घाटयति यत् स्यादिति। विवक्षितस्य हेतोरनादरमतिरोधाय प्रथममिहानुग्राहकोक्तिः। यत् कचित् काले स्यात्, तत् कालान्तरेऽपि स्यात्, सत्स्वभावत्वे ब्रह्मण इव सामग्रीसहस्रेणाप्यसत्त्वापादनायोगात्। असत्स्वभावत्वे खपुष्पस्येव कालविशेषे सत्त्वापादनासम्भवात्। तदिहानुग्राह्याभिप्रायेणाह यदपीति। अयमत्र प्रयोग — यत् प्रागूर्ध्वं चासत्, तन्मध्येऽप्यसत्, यथा सम्प्रतिपन्नम्, विमतं च तथात्वा न्मिथ्येति। अनयो तर्कानुमानयोराभासतामभिप्रेत्याह नेति। तर्के तावत् कालविशेषोपश्लिष्टं सत्त्वं प्रसञ्जनीयं वा, उताविवक्षितकालविशेषं सत्त्वमात्रम्। नाद्य, स्वस्वरूपस्यैवाभावे स्वकालाभावात् तदवधिककालान्तरासिद्धे तदुपश्लिष्टप्रसञ्जनीयत्वोधासम्भवेन तत्प्रसङ्गायोगात्। न द्वितीय, इष्टप्रसङ्गत्वात्, प्रसङ्गैकदेशस्य प्रसञ्जनीयत्वायोगाच्च। अथ विशिष्टाङ्गीकारे विशेष्याङ्गीकारप्रसङ्ग, तच्च नास्ति बाधादित्याकूतम्—तदपि न, अन्यतो बाधादृष्टे। एतेन तर्केण बाधमुज्जीव्यैतत्सिद्धेरशक्यसम्पादनत्वात्। कुतश्चिदसत्त्वस्यासिद्धौ

---

*प्र*—इष्टप्रसङ्गस्य प्रसङ्गैकदेशस्य प्रसञ्जनीयत्वायोगं च परिजिहीर्षु शङ्कते—अथ विशिष्टाङ्गीकार

*श्री*— पूर्वश्लोके नाशितेति कल्पे स्वसमयविहतिरूपदूषणमुक्तम्। तत्र वृत्तौ यत्स्यादित्यादिमद्वत-श्लोकार्थसंग्रहेऽपि मूले तादर्थस्फुटप्रतीत्यभावात् नाशित्वे अपसिद्धान्तरूपा स्वसमयविहति मिथ्याभूताना बाधितत्वस्येवेष्टत्वात् नाशित्वस्यानिष्टत्वादुक्तेति पूर्वपक्षी मेने। अतो नाशित्वमित्य-नुक्त्वा किञ्चिदन्यथोक्त्वा प्रत्यवतिष्ठते यत् स्यादिति। विगीतं स्वकालेऽप्यसत् किञ्चित्कालास-त्त्वादित्यनुमानम्। *तत्रानुग्राहकतर्कः प्रथममुच्यते यत्स्यादिति। स्वकाले स्याच्चेत् कालान्तरेऽपि* स्यादिति तर्कः। यदपि चेत्यादि प्रस्तुतानुमानव्याप्तिप्रदर्शक उदाहरणरूपोऽवयव सदृष्टान्त। इमं पक्षमनूद्य निरस्यति इति यदि नेति। साध्यस्य हेतोश्च व्याहति स्वकालातिरिक्तेति किञ्चित्कालसत्त्वं स्वयमेव स्वीकृत्य तत्रासत्त्वसाधनात्। उपपादयति मध्ये इति। मध्ये = मध्यकाले। उभयत = पूर्वोत्तर-कालयो असत्त्वरूपं लिङ्गमसत्त्वलिङ्गम्। यदि स्यात् सर्वदा स्यादिति तर्कः कदाचिदसत्त्वात् सर्व-दैवासदित्यनुमाने च स्वोक्तिव्याघातवत् प्रत्यक्षबाधोऽपीत्याह सामग्र्या चेति। अवधी द्वाविति। प्रागभावरूपावधिरुत्पत्तिसामग्रीसंभरणात् ज्ञायते। नाशरूपावधिश्च नाशसामग्रीबलात् भवति। तत्तत्सामग्री च तत्कारणादित्यनादिरयं प्रवाह।

कालपरिच्छेदसामान्यमुखेनेति। किञ्चित्कालासत्त्वमुखेनेत्यर्थ। अनुग्राहकोक्ति = अनुमा-नेतिकर्तव्यताभूतानुकूलतर्कस्य पूर्वपक्षिणोक्ति। स्वस्वरूपस्यैवाभाव इति। स्वस्य मिथ्यात्वादिति भाव। तच्च नास्तीति। विशिष्टश्च नास्तीत्यर्थ। नास्य तर्कस्य केवलसत्त्वापादने तात्पर्यम्। विशिष्टसत्त्वे हि सत्त्वं स्यात् कालविशिष्टसत्त्वमेव नास्तीत्यत्र *विशेषणाः सर्वेषामभावः, तत्र* सामान्यस्याप्यभाव एवेति शङ्कितुराशय। बाधादित्युक्तमसिद्धमित्याह अन्यत इत्यादिना।

सत्त्वस्य प्रसञ्जनीयत्वायोगाच्चेति भाव ।

अनुग्राह्यग्राहकत्वे विरोधं हेतूकरोति साध्यहेत्वोरिति। एतत्, "लक्षणहेत्वोः" (पा. 3.2.126) इतिवत्। अत्र हेतुसाध्ययोः व्याहतिं विवृणोति मध्य इति। अयमाशयः—कालविशेषासत्त्वं ह्यसिद्धं तावत् न लिङ्गं स्यात्, त्वयाऽपि तथाऽनभ्युपगमात्। तत्सिद्धिस्तु स्वकालेऽप्यसत्त्वं क्रोडीकृत्य वा बहिष्कृत्य वा। पूर्वत्रासिद्धिः। अशतस्साध्याविशेषश्च, स्वदेशकालासत्त्वात्मनो मिथ्यात्वस्य प्रचिख्यापयिषितत्वात्। उत्तरत्र स्वकालसत्त्वानुमतिलब्धजीवितेन हेतुना कथं सा प्रतिक्षिप्येत॥ तत्कालवर्तित्वबुद्ध्यपेक्षया प्रागुत्तरकालपरिक्लृप्तिरिति चेत्, न, नित्ययाऽपि धिया तत्कालवर्तित्वग्रहणोपपत्ते॥ अनित्यबुद्ध्यपेक्षया प्रागूर्ध्वसमयसिद्धिरिति चेत्, बुद्धेस्तर्हि स्वकाल सत्त्वमेष्टव्यम्। अन्यथा तदवधिकपूर्वोत्तरासिद्धे॥ बुद्धिरपि बुद्ध्यधीनसिद्धिः, न तु वस्तुतस्सतीति चेन्न; अनित्यबुद्धिवत् नित्यबुद्धिरपि तथेति प्रसङ्गे निवारकाभावात्। किंचासौ स्वाधीनसिद्धिर्वा स्वेतरबुद्ध्यधीनसिद्धिर्वा? नाद्य, अनित्यबुद्धेस्त्वया स्वयप्रकाशतानभ्युपगमात्; अभ्युपगमे वा नित्यसत्यत्वप्रसक्ते। न द्वितीय, अन्यबुद्ध्या तत्स्वरूपसिद्धौ अनित्यबुद्धेः नित्यभानप्रसङ्गात्, ईश्वरबुद्धिवत् स्वकालवर्तित्वप्रतिभासे स्व एव सत्याया अनित्यबुद्धेः कालोपाधित्वप्रसङ्गात्। तत एव तदपेक्ष पूर्वोत्तरकालासत्त्वलिङ्गेन स्वोपजीव्यमध्यकालसत्त्वप्रतिषेधः प्रासादनिगरणप्रयासप्राय इति।

अत्र सतोऽसत्त्व असतस्सत्त्वं च दुस्साधमिति दुरभिमानमुन्मूलयति सामग्र्येति। अपरोक्षप्रमिति-सामग्र्येत्यर्थ। यद्वा जनिध्वससामग्र्या उपलक्षितौ पूर्वापरावधी प्रत्येकं समुदायतो वा यथावस्तु प्रत्यक्ष-सिद्धाविति वाक्यार्थ। तरपा पण्डितपृथुकतिर्यक्पर्यन्तदुरपह्नवत्वं सूच्यते। ततश्च निर्बाधस्फुटदृष्टापह्नवे वैभाषिकादिपरिभाषया प्रमाणोऽपि कालपरिच्छेदरहितत्वादेव खपुष्पकल्पत्वं प्रसज्यत इति भाव। ननु कालपरिच्छिन्नोत्पत्तिज्ञप्तिसामग्रीसिद्धौ एवं वाच्यम्, सैव कुतस्येत्यत्राह साऽपीति। सामग्री·

---

पृ—इत्यादिना। अनभ्युपगमे वा नित्यसत्त्वप्रसक्तेरिति। संविदित्या स्वयम्प्रकाशत्वादित्यनुमाना-दिति भावः। नित्यबुद्धेर्नित्यभानप्रसङ्गादिति। अनित्यबुद्धिव्यतिरिक्ताया बुद्धेर्नित्यत्वात् तया बुद्ध्या नित्यभानप्रसङ्गादित्यर्थः। त्वन्मते यथा नित्यया ईश्वरबुद्ध्या अनित्यपदार्थानां तत्तत्कालवृत्तिग्रहणम्, तथा स्वकालवर्तितया ग्रहणं भविष्यतीत्याशङ्क्याह—ईश्वरबुद्धिवदिति। 'सामग्र्या चावधी द्वौ स्फुटतरविदितौ' इत्यत्र 'सामग्र्या' इति तृतीयायाः कारकविभक्तित्वौचित्यात् 'विदितौ' इत्यनेना-न्वयमभिप्रेत्याह-अपरोक्षप्रमीतिसामग्र्येति। वेदनसामग्रीकथनादपि अवधिद्वयोपलक्षणकथनस्यापे-क्षिततयास् अन्वयद्वितान्वयसिद्धेः अन्यथा व्याचष्टे—यद्वेति। अत्र तृतीया इत्थम्भावलक्षणा।

श्री-प्रसञ्जनीयत्वायोगाच्चेति। सत्त्वमनिष्टञ्चेत्, प्रसञ्जनीयं भवेत्। अनिष्टता च तद्विरोधिनोऽसत्त्वस्य निश्चिततयेति भावः। लक्षणहेत्वोरिति। द्वन्द्वसमासे घिसंज्ञकस्य उकारान्तस्य पूर्वनिपाता-भावेऽप्यन्येऽपि उक्तत्र प्रयोगो नासाधुः; पाणिनिनैव तथा प्रयुक्तत्वेन तदनित्यत्वनिश्चयादिति भावः। बुद्धेस्तर्हीति। तथाच सर्वस्य कथमसत्त्वमित्यर्थः। तथेति। बुद्ध्यधीनसिद्धिरित्यर्थः। अतो बुद्धिरूपं प्रमाण्यमसत् स्यात्। अनभ्युपगमादिति। वृत्तेः साक्ष्यादिवेद्यत्वादिति भावः। स्फुटतर-विदितावित्यनेन प्रत्यक्षोक्तया सामग्रीपदस्य तथाऽर्थो मा भूदिति अर्थान्तरमाह जनिध्वंससामग्र्येति।

स्वरूपप्रवाहः तद्बोधकप्रवाहश्चानादिरपर्यनुयोज्य इति भावः ।

श्लो— किंचानित्यत्वमत्यत्वे नानित्यं सत्यतां त्यजेत् । तदसत्यत्वपक्षे तु नित्यत्वात् सत्यता भवेत् ॥

इति अनित्यमिथ्यात्वक्लृप्तिपरिहारः ॥ ५२ ॥

(१९४) आम्नायस्यापि शक्तिर्न खलु गमयितुं स्वोपजीव्यप्रतीपम् ;
यूपादित्यैक्यवाक्यप्रभृतिरितरथा नोपचारं भजेत ।
अक्षाम्नायस्वपूर्वापरविहतिभयात् नेतिनेत्यादिवाक्यं
वैलक्षण्यादिमात्रं प्रथयति भुवनात् ब्रह्मणो विश्वमूर्तेः ॥ ५३ ॥

मा भूदनुमानम् ; नित्यनिर्दोषनिगमवाक्यवर्गैरेव निर्विशेषस्वप्रकाशसच्चिदानन्दब्रह्मव्यतिरिक्तसर्वमिथ्यात्वसिद्धिः स्यादित्यत्राह आम्नायस्येति । अयं भावः—प्रत्यक्षमुपजीव्यं अनुमानस्य, ते उभे उपजीव्ये शास्त्रस्य च प्रवृत्तौ । तच्चैते (तच्चेदेते ?) बाधेत, अनुमानेऽपि कालात्ययापदिष्टकथैव न स्यात् । तथाच

---

सर्वा— अनित्यानां सत्यत्वं दुस्त्यजमिति नानित्यानां मिथ्यात्वमित्याह—किञ्चेति । नानित्यं सत्यतां त्यजेदिति । सत्यधर्माश्रयस्य सत्यत्वावश्यम्भावादिति भावः ॥ ५२ ॥

आ— सर्वासत्यत्वं दुर्वचमिति दूषणान्तरमाह किञ्चेति ॥ ५२ ॥

यत्स्यादिति पूर्वश्लोकः व्यावर्तमानत्वानुमानविचारान्तर्गतनादितावियत्कशोधनपरत्वात् तच्छेषभूतः । अत एतावत् मिथ्यात्वसाधकत्वमनुमानस्य नेत्युक्तम् । नेतिनेतीत्यादिश्रुतिवाक्यस्य मिथ्यात्वसाधकत्वं शंकमानस्योत्तरमाह आम्नायस्यापीति । अपिशब्दः पूर्वोक्तानुमानसमुच्चये । अथवा प्रत्यक्षानुमानागृहीतापूर्वार्थप्रतिपादनसामर्थ्यसत्त्वेऽपीत्याशयः । स्वस्य=आम्नायस्य उपजीव्यभूतं प्रत्यक्षं तदनुरोधि अनुमानञ्च ; तयोः प्रतीपं=विरुद्धमर्थं गमयितुं=प्रतिपादयितुं शक्तिराम्नायस्यापि न खलु=नास्ति हि । यथा अनुमानस्य स्वोपजीव्यप्रत्यक्षप्रतीपं गमयितुं न शक्तिः ; अत एव अग्निरनुष्ण इत्याद्यनुमाने बाधितमाभास इत्युच्यते, तथेति । इतरथा=यदि उपजीव्यमपि विरुन्ध्यात् तदा, 'आदित्यो यूपः', 'यजमानः प्रस्तरः' इत्यादिवाक्यम् उपचारं=लक्षणावृत्तिं न भजेत । तत्र यूपे आदित्यैक्यं प्रस्तराख्यदर्भमुष्टिविशेषे यजमानैक्यञ्च प्रत्यक्षविरुद्धं न श्रुत्यर्थ इति गौणार्थग्रहणमेवोपपादितम् ; 'आदित्यसदृशो यूपः, यजमानसदृशः प्रस्तरः' इति पूर्वमीमांसायाम् (1-4) तत्सिद्धिपेटिकायाम् । तर्हि को निषेधश्रुत्यर्थ इति चेत्—'नेति नेति', 'नेह नानास्ति' इत्यादिवाक्यम् अक्षस्य=लौकिकप्रमाणस्य, आम्नायस्य=श्रुत्यन्तरस्य, स्वपूर्वापरयोः=प्रकृतवाक्यपूर्वोत्तरवाक्ययोश्च, विहतिः=प्रतिपाद्यार्थविरोधः स्यादिति भयात् अर्थान्तरपरं सत् विश्वमूर्तेः=मूर्तामूर्तसर्वशरीरकत्वसंपन्नस्य ब्रह्मणः भुवनात्=जगदपेक्षया वैलक्षण्यमात्रं प्रथयति=बोधयति । मात्रपदं विश्वनिषेधव्यवच्छेदकम् । प्रतीतविश्वनिषेधं न करोतीति । वैलक्षण्यादीति आदिपदेन संभावितसमुचितभाष्याभिमतार्थान्तरग्रहणम् । तत् वृत्तौ वक्ष्यते ।

तच्चैते बाधेत=शास्त्रं च एते प्रत्यक्षानुमाने बाधेत । तदुभयबाधकं स्यात् । तदयुक्तमिति भावः । अत्र चकारवैयर्थ्यात्, शास्त्रे प्रत्यक्षबाधकमिति तेनैवोक्ततया तदापादनमात्रे वाक्यपर्यवसानायोगात्, 'तच्चेदेते बाधेत' इत्येव वाक्यं स्थितं स्यात् । तस्योपरितनवाक्येनैकवाक्यता । अनुमानेऽपीति । तदा अनुमानमपि प्रत्यक्षबाधकं स्यात् । कालात्ययापदिष्टं=बाधितमिदमनुमानमिति

बाधाभावे कथं दूष्यदूषणव्यवस्थेति कथात्रयोच्छेदः । ननु पदपदार्थादिस्वरूपमात्रं शास्त्रस्य प्रत्यक्षात् उपजीव्यम् ; अनुपजीव्यं तु तत्सत्यत्वं प्रमाणाभासभासितं शास्त्रेण बाध्येत ॥ मैवम् ; न हि जगत्सत्यत्वग्राहिणः प्रमाणाभासत्वम् इतःपूर्वं सिद्धम् । ततश्च, 'तदाभासत्वसिद्ध्या शास्त्रेण तद्बाधः, तेन च सा' इति मिथस्संश्रयः स्यात् । अस्तु आम्नायत्वमेव प्राबल्यकारणमित्यत्रातिप्रसङ्गमाह **यूपादित्येति** । ननु, "आदित्यो यूपः" इत्यादेराम्नायस्य कर्मविधिशेषतयाऽन्यपरत्वात् दुर्बलतया प्रत्यक्षानुविधानेन वृत्त्यन्तरस्वीकारः । इह तु तत्त्वावेदकवाक्यस्यातत्परत्वासंभवात् प्रत्यक्षादिबाधकत्वं युज्यते ॥ हन्त ! किं क्रियाशेषत्वमेव मन्त्रार्थवादानां स्वार्थप्रहाणकारणम् ? तथा सति अतिप्रसङ्गात् । तावता तु अन्यार्थे स्वार्थबोधनं सिध्येत् । क्वचिच्च स्वार्थप्रहाणं बाधादेव ; न त्वन्यशेषत्वात् । तथैव हि लोके वेदे च स्तुत्यादेर्दृष्टिः । अनन्यपरेष्वपि, "ब्रह्म वनं ब्रह्म स वृक्ष आसीत्" इत्यादिषु अर्थासंभवे भाक्तो निर्देशः ।

ननु जगद्ब्रह्मसामानाधिकरण्येऽपि स्वरूपैक्यविरोधात् बाधार्थतयोपचारः स्यात् ॥ तन्न ; श्रुतिस्मृतिशताबाधेन संभवन्त्यां गतौ विपरीतलक्षणाङ्गीकारायोगात् । व्याप्तिविशेषापेक्षया च सामानाधिकरण्यं व्यज्यते ; "स भूमिं विश्वतो वृत्वा, अत्यतिष्ठत् दशाङ्गुलम् । पुरुष एवेदं सर्वम्", "सर्वं समाप्नोषि ततोऽसि सर्वः", "सर्वगत्वादनन्तस्य स एवाहमवस्थितः" इत्यादिषु । अत एव, "ब्रह्मैवेदं सर्वम्", "आत्मैवेदं सर्वम्", "यत्र त्वस्य सर्वमात्मैवाभूत्" इत्याद्याः सावधारणनिर्देशाश्च अब्रह्मात्मकत्वनिषेधाभिप्रायाः ।

तथा च, "नेह नानाऽस्ति किञ्चन" इत्यादिकमपि गतार्थम् । इदं च वाक्यं यदि ब्रह्मणि नानात्वं प्रतिषेधेत् ; तदा ब्रह्मैकत्वसिद्धौ का कथा तद्गुणविभूतिनिषेधस्य ? अथ भावप्राधान्यानाश्रयं किञ्चनेति

---

(गु)— तावता तु इति । क्रियाशेषत्वमात्रेणेत्यर्थः । कथं तर्हि अन्यशेषत्वे क्वचित् क्वचित् स्वार्थप्रहाणमित्यत्र आह—क्वचिच्च स्वार्थप्रहाणमिति ।

(श्री)–बाधरूपहेतुदोष एव न स्यादित्यर्थः । कथात्रयम् = वादजल्पवितण्डारूपम् । आपातशंकामुत्थाप्य परिहरति नन्वित्यादिना । तेन च = बाधेन च, सा = आभासत्वसिद्धिः । मिथस्संश्रयः = अन्योन्याश्रयः । अतत्परत्वासंभवादिति । कर्मविधिशेषकिञ्चित्परत्वासंभवात् वाच्यार्थपरत्वत्यागासंभवादित्यर्थः । अतिप्रसंगादिति । कर्मविधिशेषत्वञ्चेदन्यपरत्वप्रयोजकम्, कर्मविधिशेषेषु यथाश्रुतार्थपरतया समञ्जसेष्वपि वाक्येषु अमुख्यार्थग्रहणापत्तेरित्यर्थः । तावता = क्रियाप्रकरणगततया । अनन्यपरेष्वपि = क्रियाशेषभूतार्थप्रतिपादकेष्वपि । भाक्त इति । वनत्ववृक्षत्वादेर्ब्रह्मणि बाधादिति भावः । ननु प्रत्यक्षसिद्धस्य जगदाकारस्य श्रुतिसिद्धब्रह्मस्वरूपस्य च विरोधात् समावेशायोगात् प्रत्यक्षविरोधपरिहारार्थेव जगन्निषेधः क्रियत इति शंकते नन्विति । ऐक्यस्वीकारे प्रत्यक्षविरोधवत् जगद्रूपधर्म्यपलापेऽपि प्रत्यक्षविरोध एवः न तावन्मात्रम्, श्रुत्यादिविरोधोऽपीत्याशयेनाह तन्नेति । विपरीतलक्षणेति । लक्षणाङ्गीकाररूपदोषस्योभयपक्षाविशिष्टत्वेऽपि सर्वप्रमाणाविरुद्धलक्षणैव प्राह्येत्यर्थः । अस्मन्मते लक्षणैव नास्तीति तु हृद्गतम् । स्वीकार्यमर्थं श्रुतिरेव व्यनक्तीत्याह व्याप्तीति । अत एव–ब्रह्मात्मकत्वोपदेशस्य पुरुषसूक्तस्य युक्तत्वादेव । गतार्थम् = ब्रह्मात्मकम् अब्रह्मात्मकमिति द्विविधं वस्तु नास्तीत्येतत्परम् । श्लोके आदिपदग्राह्यासंभवात् एतद्वाक्यार्थं विशिष्य शोधयति इदञ्चेति । श्रुतौ इहेत्यस्य ब्रह्मणीत्यर्थः । नानाशब्दो भावप्रधानः इति एतदाऽऽह यदीति । भावप्रधानतां त्यक्त्वाऽऽह अथेति । अस्मिन्नर्थे ब्रह्मणि सर्वतद्भावनिषेधात् जगन्नास्तीत्युक्तं भवतीति पूर्वपक्षि-

पदवैयर्थ्यं च मत्वा नानाभूतं किञ्चन वस्तु ब्रह्मणि नास्तीति युज्येत (योज्येत !), तथाऽपि (तदाऽपि) न जगन्निषेधः ; ब्रह्मण्यविद्यमानानाम् अपक्षय-विनाश-रूप-वर्णादीनामिव, स्वाधारेषु, निराधारतया वा वृत्त्युपपत्तेः ॥ बहुव्यापिनि सर्वाधारतया चाधिगते ब्रह्मणि, "नास्ति किञ्चन" इति निषेधात् तन्मिथ्यात्वे तात्पर्यं गम्यत इति चेत्, तथा सति नेदं किञ्चनाऽऽस्तीत्येतावद्वक्तव्यम् । अधिकरणोक्तिस्त्वजागलस्तनायेत । अथ प्रपञ्चे, 'नानात्वं नास्ति' [इति ?], 'नानाभूतं नास्ति' इति वा प्रतिपाद्येत, तथाऽपि (तदाऽपि) न प्रपञ्चस्वरूपबाधः, तन्नानात्वनिषेधे वाक्यप्रवृत्तेः। तत्र दृष्टश्रुतविरोधपरिहृत्यै विश्वस्य ब्रह्मात्मकत्वादिसाधर्म्यविधौ वा जडपण्डितशत्रुमित्रादिवैधर्म्यदृष्टिनिषेधे वा तात्पर्यं स्थापनीयम् । इयं च गतिः, "एकधैवानुद्रष्टव्यम्", "विद्याविनयसंपन्ने", "सुहृन्मित्रार्युदासीन" इत्यादिभिरनुगृह्यते (ह्येन) । अत ईदृशेषु सर्वेषु वाक्येष्वेवं सर्वाविरुद्धः कश्चिदर्थः समर्थनीय इत्यभिप्रायेण, "अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत् परमस्ति" इति वाक्यं तावत् अविरुद्धार्थविषयं साधयति अक्षेति । प्रत्यक्षग्रहणमनुमानस्याप्युपलक्षणम् । आम्नायशब्दः इह श्रुत्यन्तरपरः । अत्र, "द्वे वाव ब्रह्मणो रूपे मूर्तं च अमूर्तञ्च" इत्यादि पूर्ववाक्यम् । "अथ नामधेयं सत्यस्य सत्यम्" इत्यादि पश्चिमम् । तदिह प्रत्यक्षानुमानश्रुत्यन्तरपूर्वापरविरोधभीत्या मध्यमं, "नेति नेति" इत्यादिवाक्यं ब्रह्मगुणविभूतिविग्रहाद्यबाधेन ब्रह्मण्येवानुक्ता-

---

र्थी–हृदयम् । स्वाभिमतं तात्पर्यमाह अविद्यमानानामिति । ब्रह्मण्यपक्षयविनाशादयो न सन्तीत्युक्तौ देहादीनामप्यपक्षयविनाशादिकं नास्तीति वा देहादय एव न सन्तीति वा न हि कश्चिदर्थं ब्रूयात् । ते तु स्वस्वाधारेषु स्युरेव । तद्वत् घटपटादयो ब्रह्मणि न सन्तीत्यनेन भूतलपुरुषादौ तन्निषेधः कथम्? ते तत्र स्युरेव । ये तु भूम्यन्तरिक्षादयो ब्रह्मणि निषिध्यन्ते, तेऽपि तावता ब्रह्मणि मा भूवन् । निराधारतया तेषां स्थितिस्तु प्रत्यक्षावगता न बाध्येतेत्यर्थः । नेदं किञ्चनेति । श्रुतेस्त्वदभिमतार्थकत्वे नानेति पदमधिकम् । इदमिति अन्यत् पदमावश्यकम् । अन्यथा प्रत्यक्षापलापायोगात् एतदतिरिक्तं किमपि नास्तीत्येवार्थसंभवात् । एवम् इहेत्यपि विपरीतार्थग्राहकम् । किञ्च ब्रह्मणि नाना नास्तीत्युक्तौ एकमस्तीत्यर्थः स्यात् । तदापि द्वैतमेव । इहेत्यस्य प्रपञ्चपरतायामाह अथेति । ब्रह्मात्मकत्वादीति आदिना सत्यत्वहेयत्वदुःखमयत्वादिग्रहणम् । इहेत्यस्य जीवपरत्वे आह जडेत्यादि । एकधैव=एकप्रकारेणैव । नेह नानेति श्रुत्यर्थः अस्मदीयपरमार्थप्रकाशिकादौ विशेषतो द्रष्टव्यः । नानाशब्दः पृथगित्यर्थकश्च । 'अथात आदेशो नेति नेति' इत्यस्यार्थं कश्चिदेवं ब्रूयात्-मूर्तं रूपं नेति आदेशः, अमूर्तं रूपं नेति चाऽऽदेश इति । अन्यो वदेत्—रूपं सर्वं नेत्यादेशः, रूपि ब्रह्म च नेत्यादेश इति । अक्षश्रुतिविरोध उभयोस्तुल्यः । तृतीयो व्याचक्षीत, इति नेति=उक्तप्रकारकं नेति न । तावद्युक्तमेवेति । नेदानीं विरोधः । किं तु पौनरुक्त्यशंका स्यात् । अन्वयव्यतिरेकोभयमुखेनोक्तिः परमतनिरासार्थमिति सा परिहार्या । एवं स्थिते श्रुतिः स्वयमेव व्याख्याति, 'न ह्येतस्मादिति नेत्यन्यत्परमस्ति' इति । अनेन वाक्येन, इति नेत्येतस्मात्= इति नेति वाक्योक्तादन्यत् परम्= उत्कृष्टं नास्ति इत्युक्त्या पूर्ववाक्ये इति न इति न इत्यन्वयो दर्श्यते । एतदधिकवस्त्वभावात् अत्रैव।सर्वस्यापि महिम्नो वक्तव्यत्वात्, इदमेतावदेव न; अन्याकारवदपीत्युक्तं भवति। इदं सूत्रारूढं श्रीभाष्योक्तञ्च। येऽन्येऽर्थान्तरमुक्त्वा अद्वैतं निषेधन्ति, तत्र केचित्-इति न= अचेतनसलक्षणं न, इति न= चेतनसलक्षणमपि न, इति वदन्तः इह= उपात्तमध्यमवाक्ये नेतिनेतीति भागं लोकदृष्टप्रकारवैलक्षण्यार्थकमाहुः । अन्ये

तिशयान्तरपरं नेतव्यम्। ततश्च लोकद्वयप्रकारवैलक्षण्यार्थमिह केचिदाहुः। अन्ये तु 'इति न'ति व्यवहारेण इतोऽधिकं किञ्चिदस्तीति निर्देष्टव्यं नास्तीति। प्रकृतैतावत्त्वसूत्रभाष्योक्तमिह आदिशब्दसंगृहीतं ब्रूमः। पूर्वप्रदर्शितप्रकारमात्रयोगाद् ब्रह्मणः प्रकृतमेतावत्त्वम्, "नेति नेति" इत्यादिवाक्यं प्रतिषेधतीति। ब्रह्मणो विश्वमूर्तेरिति पदाभ्यां धर्मिग्राहकप्रसिद्धगुणविभूत्यादिप्रकर्षः प्रख्याप्यते ॥

इति निषेधश्रुतीनां प्रत्यक्षादिविरुद्धप्रतिपादकत्वानुपपत्तिः ॥ ५३ ॥

(199) प्रत्यक्षेणैव पुंसां भवति दृढतरो देह एवाऽऽत्ममोहो
ज्वालैक्यप्रत्यभिज्ञाद्यु(ऽप्यु ?)भयमपि च तत् बाध्यते ह्यागमाद्यैः ।
तस्मात् अक्षादिसिद्धं श्रुतिभिरपि जगत् बाध्यतामित्ययुक्तम् ;
सन्देहार्हेषु शक्तं यदिह, न खलु तत् दोषदूरेष्वपि स्यात् ॥ ५४ ॥

पृ— ततश्च लोकद्वयप्रकारं परामृश्य नञा तन्निषेधेन ब्रह्मणो जगद्वैलक्षण्यं प्रतिपादयतीति केचिदाहुरित्यर्थः। अन्ये तु इत्यस्यानन्तरं पूर्वप्रदर्शितप्रकारमात्रयोगात् इत्यादिः प्रतिषेधतीत्यन्तो ग्रन्थो द्रष्टव्यः(?)प्रतिषेधतीत्याहुरित्यनुषङ्गः ॥ ५३ ॥

वी– तु, 'न ह्येतस्मात्' इति हिशब्दश्रवणात् उत्तरवाक्यस्य पूर्ववाक्यविवरणरूपत्वावगमात् नेतिनेतीति वाक्यमन्यनिषेधपरम्। ततश्चायमर्थः–इति नेति न = उक्तं ब्रह्म यत्प्रकारकम्, तत्प्रकारकं न; तदप्रकारकमप्यस्तीति न ; निर्गुणमन्यन्नेत्यर्थमाहुरिति स्थितपाठे अर्थः। अत्र पूर्वव्याख्यायां पंक्तिपरिवर्तनमिष्टम्। अर्थस्तु नोक्तः। अतः पाठो निरीक्ष्यः। उपर्युक्तं तु भाष्येष्टम्। स्वाभिमतार्थः श्लोके कुतो नोक्त इत्यत्राह प्रकृतेति। अस्मदभिमतस्य सूत्रार्थभाष्यप्रसिद्धत्वात् आदिपदेनैव तद् ब्रूम इत्यर्थः। तमेवार्थं दर्शयति पूर्वेति। श्लोकार्थः एवमपि भवितुमर्हति–नेतिनेतीति त्वदुक्तं वाक्यमुभयत्र श्रूयते मूर्तामूर्तब्राह्मणे पश्चात् याज्ञवल्क्योपदेशे च। तत्रोत्तरत्र चेतनाचेतनविलक्षणमित्यर्थः; पूर्वापरसंदर्भात्। तदुक्तं वैलक्षण्येति पदेन। आदिपदेन मूर्तामूर्तब्राह्मणे सूत्राद्युक्तस्य एतावत्त्वनिषेधरूपार्थस्योक्तिरिति ॥

प्रत्यक्षं मानान्तराबाध्यम् उपजीव्यत्वादित्युक्तम्। क्वचिद् बाध्यं भवतीति तच्छंकायाम् तत् अंगीकृत्य तत्र विवेकं व्युत्पादयति प्रत्यक्षेणैवेति। दृढतरः देह एवाऽऽत्ममोहः = देहात्मभ्रमः मनुष्योऽहं स्थूलोऽहमित्यादिरूपः पुंसां = जीवानां तिर्यगादीनामपि प्रत्यक्षेणैव भवति। विशेषणे तृतीया। प्रत्यक्षरूप एवेत्यर्थः। प्रत्यक्षशब्देन चक्षुरादिकरणग्रहणे प्रत्यक्षजन्यो मोह इत्यर्थः। नात्र आत्मनि देहभ्रान्तिः, किं तु देहे आत्मभ्रान्तिः, 'अनात्मन्यात्मबुद्धिर्या' इति वचनात्। न च देह एवात्मेतिवत् आत्मैव देह इति कश्चित् विपर्यस्यति। आत्मन्येव स्थौल्यमित्यादि तु स्यात्। तत्र अस्य देहस्य तदैक्ये प्रत्यक्षेण भ्रान्त्या गृहीते तस्याप्येतदैक्यस्याविनाभावबलेनावगमात्। अतोऽस्य चाक्षुषप्रत्यक्षत्वमुपपन्नमिति ज्ञापयितुम्, देह एवेति एवकारः। मोहान्तरमाह ज्वालेति। 'सेयं दीपज्वाला' इति प्रत्यभिज्ञाऽपि प्रत्यक्षेणैव भवतीत्यन्वयः। प्रत्यभिज्ञादीति आदिपदस्थाने अपीति युक्तम्। तदैव कतिपयपदानुषंगो ज्ञापितः स्यात्। अन्यथा चकारेण मोहान्तरसमुच्चयोक्त्या आदिपदवैयर्थ्यं च। अपिशब्दस्तु पूर्वपादोक्तसमुच्चये। चकारेणेतरसमुच्चयः। वृत्तौ द्वितीयापिशब्दप्रयोजनमुक्तम्; न त्वस्य। तस्मात् = परोक्षस्यापि प्रबलत्वसंभवात्। तद्वदिति शेषः। क्षिपतीति इत्ययुक्तमिति। संदेहेति। मिथो विरुद्धप्रत्यक्षदर्शनात् संदिग्धप्रामाण्यकं यत् यत् प्रत्यक्षं तत्र तत्र परं परोक्षज्ञानमपि बाधने शक्तम्। यदेवं शक्तम्, तत् दोषदूरेषु अत एव प्रामाण्यसंदेहानास्पदेषु प्रत्यक्षेष्वपि न हि शक्तं भवितुमर्हतीत्यर्थः॥

ननु प्रत्यक्षस्य प्रत्यक्षान्तरेणेव परोक्षेणापि बाधः तत्रतत्र संमतः, तद्वदिहापि स्यादिति शङ्कते **प्रत्यक्षेणे**ति। अस्ति हि मनुष्यत्वस्थूलत्वादिविशिष्टे पिण्डे तिरश्चामिव विपश्चितामप्यात्मत्वाभिमानः। तत्र च आमोक्षादसमाहितदशायां जाग्रतः स्वपतो वा, दर्पणतलदत्तदृष्टेरिव, सामग्रीसामर्थ्यात् अनिच्छतोऽपि देह विभ्रमे बाधितानुवृत्तिरित्यभिप्रायेण **दृढतरशब्दः**। अस्य **ज्वालैक्यप्रत्यभिज्ञायां** विपरिणतानु(त्या अनु?) षक्तिः। **अपि**। प्रत्यक्षस्य बाध्यत्वसंभावनार्थः; चकारश्चन्द्रसूर्यपरिमाणाल्पत्वादिभ्रमाकारसंग्रहार्थः। **आगमाद्यै**रित्यनेन अनुमानवत् परेष्टमर्थापत्त्यादिकमपि गृह्यते। अत्र देहात्मबोधस्यानुमानागमाभ्याम्, ज्वालैक्यग्रहस्य चानुमानेन बाधः। एवं निदर्शितमर्थं प्रकृते निवेशयति **तस्मा**दिति। विषमो दृष्टान्त इत्यभिप्रायेणाह **इत्ययुक्त**मिति। **सन्देहार्हे**ष्विति। अयं भावः—क्षेत्रभूषणादिनयात्, 'मम देहः' इति व्यतिरेक प्रत्ययस्तावत् दुरपह्नवः। ममात्मेत्येतत्तु घटस्यात्मेतिवत् स्वरूपपरमिति सर्वसंमतम्। वीतरागजन्मादर्शनादिभिश्च देहात्मभेदः संभाव्यते। अतः तप्तायःपिण्डादिन्यायात् भ्रमहेतुसंसर्गविशेषवति द्रव्यद्वये स्थौल्यचैतन्यादिगुणव्यतिहारधीः स्यादिति शङ्काकलङ्कितः तत्तद्देहात्मबोधः सर्वेषां सर्वदा संभवन्नपि नित्यनिर्दोषनिगमजन्यधिया न्यक्कारमर्हति। ज्वालैक्यधीरप्यदृष्टनिर्वापणस्य पुनरारोपितदीपेऽपि संभवात् सादृश्य-सादेश्य-भेदाग्रहादिप्रसूतेति लैङ्गिकया धिया नियम्येत। चन्द्रसूर्यपरिमाणाल्पत्वादिबोधेष्वपि दूरत्वादिदोषसंप्रतिपत्त्या अनन्यथासिद्धानुमानागमसिद्धया बुद्ध्या बाधः साधीयान्। इह तु तत्तत्प्रमाणदोषत्वेन संभावितानां सर्वेषामसिद्धेर्न शास्त्रबाध्यत्वं संभाव्यमिति॥

**इति परोक्षबाध्यत्वयोग्यायोग्यप्रत्यक्षविभागः ॥ ५४ ॥**

(200) **प्रत्यक्षं दोषमूलं, श्रुतिरिह न तथा, पौरुषेयत्वहानेः;**
**तस्मात् सा बाधिकाऽस्येत्यसत्, अखिलधियामन्ततो दोषसाम्यात्।**

---

*टी*— स्वपतः=स्वप्नमनुभवतः। दर्पणेति। यथा दर्पणे मुखं नास्तीति बाधज्ञाने सत्यपि तत्र चाक्षुषरश्मिप्रतिघातादिदोषवशात् अत्र मुखमिति प्रतीत्यनुवृत्तिर्दर्पणनिक्षिप्तचक्षुष्कस्य पुंसः, तथेत्यर्थः। *विपरिणत्या अनुषक्तिः=दृढतरेति स्त्रीलिङ्गविपरिणामपूर्वकानुषंग इत्यर्थः। प्रत्यभिज्ञाद्रा*-वित्यनुक्त्वा प्रत्यभिज्ञायामित्युक्तत्वादपि अपिशब्द एव श्लोके, न तु आदिपदमिति ज्ञायते। आगमसाहाय्येनानुमानस्य प्रत्यक्षस्य च बाधकत्वात् आगमाद्यैरिति बहुवचनमिति निर्वाहो भवेत्; अथापि लघुमार्गमाह परेष्टमिति। 'वीतरागजन्मादर्शनात्' इति न्यायसूत्रम्। सरागस्यैव जन्मदर्शनात् रागार्थं पूर्वपूर्वजन्म स्वीकार्यमिति आत्मानादित्वमित्यनुमानं प्रमाणम्। सादृश्येति। पुनरारोपितस्य निर्वापितदीपेन सादृश्यमस्ति, समानदेशकत्वञ्च भेदाग्रहश्च। तदधीनेत्यर्थः। इदञ्चान्यथाख्यातिपक्षेण। ऐक्यस्य संख्यारूपस्याभेदरूपस्य वा स्थिरघटादौ क्षणभेदेन सत्त्वात् इहाभावात् सिद्धान्ते ऐक्यधीरपि भेदाग्रह एवेति। 'मम देह' इति भेदप्रत्ययवत् ज्वालास्थलेऽपि नवनवेणीनिस्सरणमपि सूक्ष्मदृशां लक्ष्यत इति श्रीभट्टपराशराशयोऽन्यत्रोक्तोऽप्यनुसंधेयः॥ ५४॥

अथाद्वैतिना शास्त्रस्याक्षादिवैलक्षण्यं दुर्वचमिति सुतरां तत्पक्षे शास्त्रस्याबाधकत्वमित्याह प्रत्यक्षमिति। सा श्रुतिः अस्य=भेदप्रत्यक्षस्य। इति असदिति। शास्त्रजन्यज्ञानस्य प्रत्यक्षबाधकत्वं न भवतीत्यर्थः। हेतुमाह अखिलेति। प्रत्यक्षस्येव शास्त्रजन्यज्ञानस्यापि दोषमूलकत्वात् बाधकत्व-

-भेदवासनाख्यो दोषः प्रत्यक्षे प्रसिद्ध इति चेन्न ; शब्देऽपि तस्याः तद्वत् प्रसिद्धत्वात् । न ह्यत्र प्रकृतिप्रत्ययपदवाक्यपदार्थवाक्यार्थादिविकल्पान् वासनानपेक्षान् अभिमन्यध्वे । न च द्विचन्द्रादिवासनानां वासनात्वादेव दोषत्वम् ; किंतु भ्रान्तिमूलत्वात् । अतः अभिन्नेष्वेव भेदवासना दोषः, अयथार्थस्मृति-हेतुत्वात् । अन्यथा हि अद्वैतवासनाया अपि दोषत्वप्रसक्तिः ॥ प्रत्यक्षे तु वासना भ्रान्तिप्रसूतैवेति चेत् ; न ; 'वासनाया दोषत्वसिद्धौ तद्धेतोरनुभवस्य भ्रान्तित्वसिद्धिः ; ततश्च तत्सिद्धिः' इति मिथस्सं-श्रयात् । एतेन भेदधीजनकत्वात् वासनाया दोषत्वमित्यपि प्रत्युक्तम् ; 'पृथिव्यादिभेदधियां भ्रान्तित्वसिद्धौ तज्जनकवासनाया दोषत्वम् , ततश्च तत्' इति ॥ तत्त्वावेदकवाक्यबाधितत्वात् भेदधियां भ्रान्तित्वे सिद्धे ततः तद्धेतोर्दोषत्वक्लृप्तौ नान्योन्याश्रय इति चेन्न ; प्रत्यक्षस्य वासनाख्यदोषमूलत्वे सिद्धे वाक्यस्य तद्विरुद्धतत्त्वावेदकत्वम् ; ततश्च भेदधियां भ्रान्तित्वम् ; तत एव तद्धेतुवासनाया दोषत्वम् ; ततः प्रत्यक्षस्य दोषमूलत्वमिति चक्रकापत्तेः ॥ पर्वसंकोचेन मिथस्संश्रयो वा । प्रत्यक्षं सर्वं भेदवासनामूलमित्यपि निर्विकल्पके दुर्वचम् ; तस्य त्वयापि संस्कारजन्यत्वानभ्युपगमात् । अस्ति च शब्दानुगमवादिनामप्यवासनाधीनं प्रथमाक्षसन्निपातजं प्रत्यक्षम् ; तत्कल्पितयोः शब्दविवर्तपरिणत्योः संस्कारापेक्षप्रकाशत्वात्॥ अस्तु(स्ति) सर्वजननी मायैव निर्विकल्पके दोष इति चेन्न; वाक्यतज्जन्यज्ञानयोरपि तदपत्यभेदत्वादिति । तदिदमाह **शास्त्रस्यापीति** । **प्रभृति**शब्देन भेदवासनां तन्मूलभेदभ्रमं च गृह्णाति । अतः प्रत्यक्षमात्रस्य दोषमूलत्वकल्पना निर्दोषशास्त्रसद्भावं न सहेतेति निश्चिनुमः । अथ शास्त्रस्य ब्रह्मवत् अविद्यावच्च अनादित्वादविद्यामूलत्वं नास्तीति मुग्धाद्वैतिमतमनूद्य दूषयति **तस्येति** । तत्र शास्त्रस्यादोषकल्पितानादिभावत्वात् ब्रह्मवत् अविद्यातद्विवर्तान्यतया च सत्यत्वप्रसक्तौ स्वाभिमतमद्वैतं भज्येतेति भावः ॥ **इति शास्त्रप्रत्यक्षयोर्दोषसाम्यापादनम् ॥ ५५ ॥**

---

*(अ)*—निर्विकल्पकस्य संस्कारजत्वाभावेऽप्यविद्यादोषमूलत्वमाशङ्कते अस्ति सर्वजननीति। साम्यापाद-नेन परिहरति-नेति। तदपत्यभेदत्वात्= अविद्याकल्पितभेदत्वादित्यर्थः। भ्रमविप्रलम्भादीनामेव शब्द-दोषत्वम् , नाविद्याया इति चेत्-प्रत्यक्षेऽपि तर्हि काचादीनामेव दोषत्वात् नाविद्याया इति तुल्यमिति॥

*(वी)*— च हेत्वप्रसिद्धिः । अद्वैततत्त्वपदेन निर्विशेषाद्वैतग्रहणे अप्रसिद्धेः । विशिष्टाद्वैततत्त्वग्रहणे च तद्विरुद्धत्वरूपविशेष्याभावादिति ॥ अतोऽभिन्नेष्वेवेति । पृथिव्यादिस्वरूपाणां वस्तुतो भिन्नत्वात् भेदज्ञानस्य यथार्थत्वात् तत्र भेदवासना न दोष इति भावः। शब्दविवर्तपरिणत्योरिति। सूक्ष्मशब्दस्य स्थूलवाचिकशब्दात्मना परिणामः, अर्थरूपेण विवर्त इत्येवम् ॥ ५५ ॥

अद्वैतिन आहुः—अद्वैतं नाम द्वैताभावः । तत्र प्रतियोगिज्ञानस्य अभावज्ञाने कारणत्वात् प्रति-योगिभूतद्वैतप्रतिपादकशास्त्रं पूर्वम् । अद्वैतशास्त्रमुत्तरम् । पूर्वशास्त्रार्थज्ञानस्य परशास्त्रार्थज्ञानं बाधकमिति च पूर्वमीमांसायामपच्छेदाधिकरणे निर्णीतम् (6-5-51.)। बहिष्पवमानस्तोत्रार्थं संततं गच्छतामृत्विजां मध्ये एकैकर्त्विगपच्छेदे एकैकं प्रायश्चित्तं विहितमस्ति । तत्रैकेन ऋत्विजा अपच्छेदे कृते तत्प्रायश्चित्तशास्त्रे चिन्त्यमाने यद्यन्योऽप्यपच्छिन्द्यात् , तदा एतन्निमित्तकप्रायश्चित्त-शास्त्रे चिन्त्यमाने द्वयोर्विरोधे किं प्रायश्चित्तमनुष्ठेयमिति विचिन्त्य अपच्छेदाधिकरणे निर्णीतम् उत्तरगृहीतप्रायश्चित्तशास्त्रार्थज्ञानेन पूर्वगृहीतशास्त्रार्थज्ञानस्य बाध इति । तद्वदिहापि अद्वैत-

(201) दोषोत्थत्वाविशेषे न हि भवति पर पूर्वबाधप्रगल्भं
दोषज्ञान तु मा भूदविदुषि पुरुषे ; वस्तुतस्त्वन्यथा तत् ।
निर्दोषत्वाभिमन्त्रस्वसमयिमतिभिः किं न मिथ्या कृतान्ताः ?
प्राबल्य(बलस्य) चेन्निषेधः पर इति, मुखर तुर्यबौद्धस तूर्यम् ॥ ५६ ॥

अत्र कैश्चिदनाकलिततर्कतन्त्रगतिभि प्रपञ्चलुण्टाकैरेव प्रत्यवस्थितम्, "दोषमूलत्वाविशेषेऽपि परत्वादद्वैतवाक्यजन्य ज्ञान प्रत्यक्षस्य बाधकम्, 'पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सेत्स्यति' इति न्यायात् । न चाविशेष परस्य बाधकत्व प्रतिरुन्ध्यात्, प्रमाणत्वाविशेषेऽप्युद्गातृप्रतिहर्त्रोरपच्छेदयोर्युगपदुभयसंभवे परस्य नैमित्तिकशास्त्रस्य बाधकत्वस्थापनात् । अपैति च रज्जुसर्पभीति कस्यचिदनाप्तवाक्येनापि । अत शास्त्रत प्रत्यक्षबाध शक्य" इति । तत् प्रतिक्षिपति दोषोत्थत्वेति । अय भाव –न हि सर्पभूदलनभ्रमयो रुपरितनस्य बलीयस्त्वमुत्पाद(मुपपाद ?)यितु शक्यम् । अनाप्तवाक्यबाधिते रज्जुसर्पे तदनाप्तत्वपरामर्शिनस्तद्द्वय पुनरनुवर्तते । इह त्वादावेव दोषमूलत्वाविशेष शिक्षित प्रतिसहितश्चेति न परबली-

¹—तु वैपरीत्यद्योतक इति । ज्ञानाभावेऽपि दोषसद्भावरूपवैपरीत्यद्योतक इत्यर्थ । वस्तुतस्त्वित्यत्रेति । अय तुशब्दो वस्तुतो दोषसद्भावमात्रात् विदुषा तज्ज्ञानसम्भवरूपं विशेष द्योतयतीत्यर्थ ॥

²—शास्त्रज्ञानस्योत्तरतया तेन द्वैतशास्त्रार्थज्ञानस्य बाध इति । तत्राऽऽह दोषेति । बाधकत्वाभिमत ज्ञान दोषमूलकत्वेनावधृतञ्चेत् बाधक न भवति । तदत्र द्वैतशास्त्रार्थज्ञानस्य पूर्वस्य बाधे परशास्त्रजज्ञानमद्वैतविषयक प्रगल्भ=समर्थ न भवति । उभयोरविद्यादिदोषमूलकत्वस्याविशिष्टत्वात् । तथा ज्ञातत्वाच्च । अविद्यारूपदोषायत्तशास्त्रज्ञान हीदमुभयमपि । दोषमूलकत्व स्थितमज्ञातञ्चेत्, तदापि न बाधकमित्याह द्वितीयपादेन । अविदुषि पुरुषे दोषज्ञान यद्यपि न भवेत्–अथापि न बाधकम् । रज्जौ सर्पभ्रम पश्चात् भूदलनभ्रमश्च भवति चेत् तत्रोत्तर दोषोत्थत्वेन मा गृह्यताम् तदापि तत् तज्ज्ञानगृहीतम् अन्यथा =अयथावदेव । द्वितीयतुशब्दस्य तथापीत्यर्थ । न केवल दोषोत्थत्वाज्ञाने, निर्दोषत्वज्ञानेऽपि तत्र वस्तु यथावन्न भवति । तदाह निर्दोषेति । कृतान्ता =सिद्धान्ता मिथो विरुद्धा लोके सन्ति । वस्तुनि विकल्पायोगात् एक एव सम्यक् । ते सिद्धान्तिन स्वस्वसमयिन =स्वस्वमताभिनिवेशिन स्वस्वमतनिर्दोषत्वाभिमानिन । तेषा मतिबलात् सिद्धान्ता मिथ्या न भवन्ति किम् । तेषा तथाऽभिमानेऽपि मिथ्यात्वमेव । तथाचाद्वैतशास्त्रज्ञाने द्वैतशास्त्रज्ञाने च सदोषत्वस्याविशिष्टत्वात् तथा ज्ञातत्वाच्च न बाधकत्वम् । तथा ज्ञातत्वाभावेऽपि वस्तुतो दोषमूलत्वाच्च प्रमेयसिद्धिरिति । दुष्टमदुष्ट वा भवतु, पर बाधकमेवेत्यत्राह प्राबल्य चेदिति । निषेधशास्त्र परमिति हेतुना प्राबल्यमिष्यते चेत्, तुर्यबौद्धस्य=माध्यमिकस्य शून्यवादिन तूर्यं जयवाद्यं मुखर भवेत् । एकमस्तीति अद्वैतवाक्यादपि, तदपि नास्तीति वादस्य परत्वात् । परप्राबल्यस्य च त्वदिष्टत्वात् । दोषमूलत्वस्य चाबाधकत्वात् ॥

पूर्वबाधेनेति मीमांसावार्तिकम् । उत्तरज्ञान जात पूर्वजातज्ञानस्य बाधकमेव । तदबाधेन तस्योत्पत्त्यसंभवात् । तस्य बाधकत्वे इद पथ्यमुत्पत्त्येन । उत्पन्नत्वादेव तस्य बाधकमित्यर्थ । युगपदिति । एकप्रयोगे इत्यर्थ । न तु अपच्छेदद्वयस्यैकक्षणे जातत्वे विवक्षितम् । तथासति पौर्वापर्याभावात् । विकल्पस्यैव च तत्रेष्टत्वात् । प्रमाणेति च पूरणीयम् । लोकदृष्टान्तमप्याह अपैतीति । अनाप्तेति पद दुष्टस्यापि बाधकत्वस्थापनाय ।

यत्त्वभावनावकाश इति । दोषपरामर्शाभावमन्यरीत्याऽपि दूषयति **दोषज्ञानमिति** । तुः वैपरीत्य-द्योतकः । वस्तुतस्त्वित्यत्र तुः विदुषि तद्धीसंभवद्योतनार्थः । दोष एव ह्ययथार्थधीहेतुः । तज्ज्ञानं तु तद्विस्रम्भ(भ्रम)निवर्तकम् । दुष्टस्यापि बोधस्य दोषपरामर्शाभावमात्रात् वस्तुस्थितिवैपरीत्य-व्यवस्थापकत्वेऽतिप्रसङ्गमाह **निर्दोषत्वेति** । सर्वे हि वादिनः स्वसिद्धान्तस्थापकं निर्दोषमभिमन्यन्ते । न च तत् तथ्यम् ; न च तथातथाभिधेन वस्तुगतिः ; व्याघातात् । तदिह स्वपक्षस्थापकदोषानाकलन-मात्रेण बाह्यसिद्धान्ता विपश्चिद्भिर्विदितदोषाः किं न मिथ्या भवन्ति ? तद्वदिहापि बाधकदोषस्य सतः परामर्शे अन्यथाऽपि वा बाध्यबाधकभावो दुर्धर्ष[ण] इति भावः । अनन्यगतिकापच्छेदन्यायदर्शनमात्रेण तुल्यस्यापि परस्य प्राबल्ये, सर्वबाधकमाध्यमिकविजयतूर्यं जोघुष्येतेत्याह **प्राबल्यमिति** । **निषेधः पर** इत्येतावता तस्य **प्राबल्यं चेदि**त्यन्वयः ॥ इति दोषसाम्ये परस्य बाधकत्वानुपपत्तिः ॥ ५६ ॥

(202) **निर्दोषं यच्च शास्त्रं तदपि बहुविधं बोधयत्येव भेदं ;**
**वाक्ये तत्त्वोपदेशप्रकरणपठने नान्यपर्यं प्रतीमः ।**
**नात्रापच्छेदनीतिर्नियतिमति सदोपक्रमन्यायसिद्धेः ;**
**स्वप्रख्याप्यापलापे श्रुतिरपि वृषलोद्वाहमन्त्रायते वा ॥ ५७ ॥**

असंभावितदोषात् औपनिषदशब्दादद्वैतज्ञानं सिध्यतीति परोक्ते प्रतिबन्दिं प्रस्तुवान इव स्वपक्षमपि स्थापयति **निर्दोषमिति** । **बहुविधं भेदम्**—आधाराधेयभावादिभिरीशेशितव्यभेदम्, भोक्तृभोग्य-नियन्तृभावैस्तत्त्वत्रयभेदम्, अणुत्वविभुत्वादिभिर्जीवेश्वरभेदम्, बद्धमुक्तनित्यत्वदवान्तरविभागैर्जीवभेदम्,

---

०ी—अनन्यगतिकेति । उभयस्यापि निर्दोषत्वे एकेन चेतरबाधस्यावश्यवक्तव्यत्वे च सति लोके लौकिकप्रत्यक्षेण जातेन परेण परोक्षज्ञानस्य पूर्वस्य बाधदर्शनात् तन्न्यायोऽनुसृतः इति भावः ॥५६

अपच्छेदनयव्यवस्था च कृता, "पूर्वात् परबलीयस्त्वं तत्र नाम प्रतीयताम् । अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत्" इति । अत्र तु द्वैतनिषेधज्ञानस्य द्वैतरूपप्रतियोगिज्ञानसापेक्षत्वात् निरपेक्षता नास्ति । सापेक्षस्थले च पूर्वप्राबल्यम्, असंजातविरोधन्यायादिति मीमांसासरणिः । असंजात-विरोधन्याय एवोपक्रमन्यायः । तदिदं मनसिकृत्याह निर्दोषमिति । सापेक्षस्थले पूर्वशास्त्राविरोधेन उत्तरशास्त्रं नेयमित्युक्त्यर्थं पूर्वशास्त्रं बहु दर्शयति पूर्वार्धम् । न केवलं निर्दोषं प्रत्यक्षं भेदं बोध-यति, शास्त्रमपि निर्दोषं भेदं बोधयति । तत्र प्रत्यक्षादप्यधिकं बहुविधं परलोकतत्त्वदेवादि-महिमादिरूपमपीति विशेषः । न कर्मकाण्डमात्रे क्रियाशेषभूते एवं भेदम्; तदशेषभूते स्वातन्त्र्येण तत्त्वप्रतिबोधनार्थप्रवृत्ते देवतादिसृष्टिगुणब्रह्मादिपरेऽपि भेदं प्रतीमः । न तु तत्र अन्यपर्यम् तत्तत्प्रतिपाद्यं यथाश्रुतार्थं विहाय अर्थान्तरप्रतिपादकत्वं न प्रतीमः—न जानीमः । एवञ्च द्वैतनिषेध-परत्वाभिमतवाक्यव्यतिरिक्तं सर्वं भेदपरमेव । अत्र =एवं शास्त्रस्थितौ, नियतिमति तदपेक्षानियमवति अत्र =अद्वैतवाक्ये अपच्छेदनीतिः= अपच्छेदाधिकरणन्यायः न प्रवर्तते । साक्षात् भेदनिषेधपरं वा तत्त्वमस्यादिवत् अर्थात् भेदपर्यवसायितया वा वर्ण्यमानं भवतु । नियतिमति सदा उपक्रमन्याय एव, 'वेदो वा प्रायदर्शनात्' इत्युक्तन्यायः अश्वप्रतिग्रहेष्टिन्यायवदेव सिध्यति । किमत्र न्यायसदसद्भाव-विचारेण ? मीमांसापारदर्शनाभावेऽपि व्याहतार्थप्रतिपादनपरवाक्ये न कश्चिदङ्गीकुर्यादित्याह स्वेति । स्वप्रख्याप्यस्यार्थस्य स्वयमपलापं यदि श्रुतिः कुर्यात्, तर्हि सा वृषलोद्वाहमन्त्रतुल्या स्यात् ।

एतेषु(एषु) च कालभेदेन तत्तदवस्थाभेद चेत्यर्थ । प्रतिषेधगन्धिना त्वयाऽपि प्रतिषेध्यधीर्दुरपलपेति **एव** काराभिप्राय । प्रस्तुतभेदवाक्यानि अन्यपरत्वान्न भेद विदधतीत्यत्राह **वाक्य** इति । न हि सद्विद्यादिषु कर्मविषय उपासनविषयो वा सन्निदधतीति त्वयाऽपि संप्रधार्यते । सन्ति च तत्रापि, 'अहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नाम रूपे व्याकरवाणि' इत्यादीनि तत्तद्द्रव्यस्वरूपव्यापारादिविविध भेदविषयाणि वाक्यानि । अतोऽनन्यपरनिर्दोषवाक्यसिद्धत्वादद्वैतवत् द्वैतमपि दुर्निषेधमित्यभिप्राय । ननु प्रतिषेधस्य प्रसक्तिसापेक्षत्वात् भेदप्रसञ्जकवाक्य पूर्वम्, तन्निषेधक तु परत्वेनापच्छेदनयात् तद्बाधक स्यादित्यत्राह **नात्रेति** । **अत्रेत्यनेनाभिप्रेत हेतुमाह नियतिमतीति** । अयं भाव —अनियतपौर्वापर्ये हि अपच्छेदनय, नियमे तु उपक्रमनयात् परानुत्पत्तिरेवेति नीतिविद । इह च त्वयैव प्रसञ्जकप्रतिषेधकयो पौर्वापर्यनियम स्थापित । अत परस्यैव दौर्बल्य मन्तव्यमिति । अनुष्ठाने तु अस्य न्यायस्यान(?)-न्यथाभावमभिप्रेत्य **सदाशब्द** । ननु लोकसिद्धान् भेदांस्तावत् प्रसिद्धत्वादनुवदति, अलौकिकानपि प्रतिषेधार्थमेवोपदिश्य प्रतिषेधतीति परप्राबल्य दुर्वारम्, तत्राह **स्वप्रख्याप्येति** । अप्रख्यातस्य प्रख्यापनात् वर तत्र तूष्णींभाव । न हि भ्रमनिवर्तनाय प्रवृत्तं शास्त्र भ्रमान्तरमुत्पादयतीति त्वदन्य प्रतिपद्येत । तदिह श्रुति प्रत्यक्षाद्यनवगतान् भेदान् स्वय विधत्ते प्रतिषेधति चेति वृषलविवाहमन्त्रवत् व्याघात एव परिशिष्यते इति भाव । एतेन सगुणनिर्गुणश्रुत्योरपि परप्राबल्यवर्णन निरस्तम् ॥

**इति भेदतन्निषेधश्रुत्योरपच्छेदान्यायानर्हत्वम् ॥ ५७ ॥**

---

वी—नून वृषलोद्वाहमन्त्राभ्यासवासनानिबन्धनमद्वैतार्थस्य श्रुतौ कल्पन वृषलवशीकाराय । वृषलोद्वाहमन्त्रश्चाधिकरणचिन्तामणौ दर्शित, 'अश्मान प्रहर, प्रहृत्य न प्रहरामि इति वद' इत्यादि ॥

चेत्यर्थ इति । चकारेण कर्मकाण्डोक्तभेदोऽपि ग्राह्य । उपासनाविधायकवाक्यान्यपि क्रियापरत्वाविशेषात् प्रथमपाद एव गृहीतानि । उपासनाया अविद्यमानभेदारोपरूपकल्पनेऽपि तत्फलप्रतिपादकस्वर्गवैकुण्ठतत्रत्यनानाभोगप्रतिपादकाना तत्त्वोपदेशकानामपार्थकल्पनमशक्यम्, उपासनादेरेवासिद्धिप्रसङ्गात् । परानुत्पत्तिरेवेति । उत्पन्न किल पर ज्ञान पूर्वबाधक स्यात् । उत्पत्तिरेव नेति भाव । श्लोके सदाशब्द किमर्थ इत्यत्राह अनुष्ठाने त्विति । अत्र अनन्यथाभावमिति पाठ उतान्यथाभावमितीति विचार्यम् । श्लोके सदाशब्द नात्रेत्यत्रान्वेति या सिद्धेरिति पञ्चम्यन्तेन चेति च । अपच्छेदाधिकरणे अनुष्ठेयार्थविचार अत्र तु तत्त्वविचार । अनुष्ठेय विकल्प्येत, न तत्त्वम् । एकैकापच्छेदे तत्तन्नैमित्तिकमेवानुष्ठेयमिति सर्वं नैमित्तिकशास्त्र चरितार्थम् । अपच्छेदद्वयस्थलेऽपि अयमेवापच्छेद पूर्वमिति नियमाभावात् श्रुतौ प्रथमश्रुतोऽप्यपच्छेद पश्चाद्भवेदिति यथायथ सर्वं शास्त्र प्रवर्तक भवत् लब्धप्रामाण्यमेव । इह तु पौर्वापर्यनियमादुत्तरानुसारेण पूर्वगृहीतार्थत्यागे तद्वाक्यस्याप्रामाण्यमेव, न कदापि चरितार्थत्वमितीद वैषम्य प्रकृतवाक्यविवक्षितम् । तथाचोपक्रमन्यायस्य तत्त्वस्थले सदा प्रवृत्ति, अनुष्ठानस्थले अन्यथाभावोऽपि=कदाचिदप्रवृत्तिरपि, यदोत्तरवाक्यार्थस्यानुष्ठेयता । अत एव 'अतिरात्रे षोडशिन गृह्णाति', 'नातिरात्रे षोडशिन गृह्णाति' एकविषयकविधिनिषेधपरवाक्यद्वये उत्तरवाक्यार्थस्वीकारकाले पक्रमन्यायस्याप्रवृत्ति । अस्य न्यायस्येत्यनेनापच्छेदन्यायग्रहणे अपच्छेदद्वयस्थले, अनुष्ठानविषयकत्वात् अपच्छेदन्यायस्य न्यथाभाव =अप्रवृत्तिर्नास्ति । प्रवृत्ति सदेत्यलम् ॥ ५७ ॥

(208) भेदः प्रत्यक्षसिद्धो न निगमविषयः स्यादिति त्वर्भकोक्तिः
प्रख्यातादन्यमेनं प्रथयति यदसौ त्वन्मताद्वैतवन्नः ।
सन्मात्रग्राहि चाक्षं नियमयसि; ततो ब्रह्म दृश्यं मृषा स्यात्
किं ते श्रुत्या तदानीं; फलमपि लभतां क्वापशूद्राधिकारः ॥ ५८ ॥

एवमपि मुग्धान् प्रति मुग्धैरुपादेशि— भेदस्तावद् भूतभौतिकादिषु आसंसारं प्रसिद्धः; अतीन्द्रियनिष्ठोऽप्यसौ सामान्यतः प्रत्यक्ष एव; अन्यथा भेदसामान्यप्रयुक्तभेदशब्दवाच्यत्वादि-व्याप्तिग्रहणायोगात् । व्याप्तिग्रहणरूपं हि प्रत्यक्षमदृष्टसकलव्यक्तिगोचरमिति धूमानुमानादिष्वपि समर्थयन्ते । सावयवत्वानित्यत्वव्याप्तिग्रहणमतीन्द्रियसावयवपक्षीकारेण शिक्षयन्ति । तदिह भेदमात्रस्य प्रत्यक्षविषयत्वात् अप्राप्तप्रापकस्वभावशास्त्रगोचरत्वं न संभवतीति । एतदनुभाष्योपालभते भेद इति । तुः सर्वशास्त्रनिर्विषयत्वप्रसङ्गावहत्वं द्योतयति । प्रायेण हि तत्रापि यत्किंचिद्भेदविषयं सर्वं शास्त्रम्; अन्ततः प्रतिपन्नादन्यदेव हि सर्व[त्रापि?]शास्त्रे प्रख्याप्यम् । तत् यदि यस्यकस्यचिद्भेदान्तरस्य प्रत्यक्षतया सामान्यतः सर्वभेदग्रहणात् शास्त्रस्य विषयलोपः स्यात्, लुप्येत तर्हि सकललौकिकवैदिक-शास्त्रविषयः । व्याकरणादिव्युत्पत्तिलोपात् अद्वैतशास्त्रमप्यशक्यारम्भं स्यात् । अतो भेदस्य शास्त्रविषयत्वं निराचिकीर्षता सिषाधयिषितस्याभेदस्यापि तन्निराकृतमेवेति । अथ सर्वशास्त्रे प्रतिपत्तॄणाम्

---

प्रौ॰– सर्वशास्त्रनिर्विषयत्वप्रसङ्गं दर्शयति—प्रायेण हीति । सर्वं हि शास्त्रं परप्रतिपन्नतत्तद्वस्तु-प्रकारात् आकारान्तरप्रतिपादनपरम्, अन्यथा शास्त्रवैयर्थ्यात् । अतो यत्किञ्चिद्भेदस्य प्रत्यक्षत्वमात्रेण भेदमात्रस्य शास्त्राविषयत्वे सर्वं शास्त्रं निर्विषयं स्यादित्यर्थः । ‘असौ’ इति प्राधान्येन प्रकरण-

वी॰– ननु भेदानां बहूनां शास्त्रगम्यत्वात् स्वप्रख्याप्यपलापः स्वयमेव कथं क्रियत इति चोद्यमयुक्तम् तेषां स्वप्रख्याप्यत्वाभावात् । प्रत्यक्षसिद्धत्वात् । तस्मादद्वैतमात्र एव शास्त्रतात्पर्यमिति शंकां परिहरति भेद इति । सर्वोऽपि भेदः प्रत्यक्षसिद्ध एव, न शास्त्रविषय इतीदमर्भकस्य= शिशोरज्ञस्य वचनम् । यत् =यस्मात् असौ =निगमः, प्रख्यातात्= प्रत्यक्षसिद्धात् अन्यं एनं= भेदं प्रथयति नः= तद्विषयक-ज्ञानरहितान् युष्मान् अस्मांश्च प्रति बहुमाह। प्रत्यक्षदृष्टभेदानुवादस्तु स्वल्पः; अयं भाग एवाधिक इति भावः। त्वन्मताद्वैतवत् । यथा त्वदभ्युपेतं न प्रत्यक्षगम्यं किं तु शास्त्रैकवेद्यं तद्वदित्यर्थः । नन्वद्वैतस्य दृष्टान्तत्वोक्त्या इदमपि ते संमतश्चेत्, कथमावयोः कलह इति शंकापरिहाराय त्वन्मतेत्युक्तम् । त्वया तथा भावनीयमित्येतदर्थं तदुक्तावपि नास्माभिस्तदिष्यत इति भावः । त्वदुक्ताद्वैतस्यैव शास्त्रवेद्यत्वं त्वदुक्तरीत्याऽपि न भवतीत्याह सन्मात्रेति । अक्षम्=इन्द्रियं सर्वं घटोऽस्ति, पटोऽस्तीत्यादौ सन्मात्रं यद् ब्रह्म तदेकग्राहि, न तु घटपटादिग्राहि इति नियमयसि=तदेकग्राहित्वेन व्यवस्थां करोषि । तथाच ब्रह्मणः प्राप्तत्वात् कथं शास्त्रं तत्परम् । किञ्च प्रत्यक्षदृष्टत्वेन ब्रह्म मिथ्या स्यात् दृश्यत्वहेतुमत्त्वात् । किञ्चापशूद्राधिकरणं भवन्मते निष्फलम् । शास्त्रैकवेद्यं चेत् अद्वैतं, शास्त्रानधिकारात् शूद्रो न तत्राधिकुर्यादिति स्यात् । प्रत्यक्षेण सन्मात्रग्रहणात् अनुमाने च भेदनिरा-सात् ब्रह्मणः द्वैताभावस्य च प्रत्यक्षानुमानावगतत्वात् शूद्रस्य प्रत्यक्षानुमाने न स्त इति दुर्वचत्वात् अद्वैतं सर्वाधिकारमेव स्यादिति ।

अन्यप्रतिपन्नादन्यत विशेषतः प्रतिपित्सार्हं प्रतिपाद्यमिति पश्यसि, तदा अस्मन्मतेऽपि लोकप्रसिद्ध-गजतुरग-नीलपीतादिभेदातिरिक्तः पराचरादिभेद उपनिषद्घोषणीयः। तदिदमाह **प्रख्यातादिति**। **असाविति** औचित्यात् निगमः परामृश्यते। **त्वन्मताद्वैतवदिति** प्रतिबन्दिपरम्। तथा हि, यदि भेदमात्रस्य प्रसिद्धत्वादलौकिकभेदोऽपि शास्त्रविषयो न स्यात्, अभेदमात्रस्यापि प्रतिवस्तु सर्वलोक-प्रसिद्धत्वात् त्वदभिमतमद्वैतमपि तदविषयः स्यात्। यदि प्रसिद्धविलक्षणमद्वैतं तत्प्रतिपाद्यं पश्यसि, भेदेऽपि तादृशे तथैव दीयतां दृष्टिरिति। प्रत्यक्षविषयत्वादेव शास्त्राविषयत्वे परस्य सिद्धान्तविरोधमपि सूचयति **सन्मात्रेति**। भेदस्य भ्रान्तिविषयत्वं सन्मात्रस्य प्रत्यक्षविषयत्वं च त्वया स्थाप्यते। अतः तस्यापि शास्त्रविषयत्वं त्वया दुस्साधमिति भावः॥ अस्तु सन्मात्रमनागमविषयः, भेदनिषेधमात्रे त्वय्यन्ततात्पर्यात्; सन्मात्रं तु प्रत्यक्षत एव सिध्यतीति; तत्राह **तत्र** इति। यदि प्रत्यक्षत एव ब्रह्मणस्सिद्धिः, तदा दृश्यत्वसामान्यसंगृहीत्या युष्मत्पदव्या मिथ्यात्वं दुस्तरं स्यादिति भावः। अन्यमपि सिद्धान्तविरोधमाह **किमिति**। प्रत्यक्षत एव ब्रह्मस्वरूपसिद्धौ तद्विभूतिगुणादेश्च मिथ्यात्वादनुपदेश्यत्वे भेदनिषेधस्य च माध्यमिकोपदिष्टैरेव तर्कैस्सिद्धौ शारीरकविचारार्थिनः श्रुतिभाष्यं न किंचित् स्यादित्यर्थः। ब्रह्मविद्यायां शूद्राधिकारप्रतिषेधोऽपि दुश्शक इत्याह **फलमिति**। ब्रह्मणस्त्वय्यन्तवेद्यत्वे सिद्धेः हि अनधीतश्रुतीनां शूद्रादीनां ब्रह्मविद्यायामनधिकारः सिध्येत्। प्रत्यक्षवेद्यत्वे तु त्रैवर्णिका विशिष्टः शूद्रोऽनधिकारी न स्यादिति भावः॥ इति **अलौकिकभेदस्य शास्त्रवेद्यत्वोपपत्तिः** ॥ ५८ ॥

**(204) वेदा बुद्धागमाश्च स्वयमपि हि मृषा; मानता चैवमेषाम्;**
**बोद्धा बुद्धिः फलं च, स्थिरतदितरताद्यन्तरालं च बुद्धेः।**
**आतस्त्रैविद्यडिम्भान् ग्रसितुमुपनिषद्वारवाणोपगूढैः**
**प्रायः प्रच्छादिता सा पटुभिरसुरता पौण्ड्रकाद्वैतनिष्ठैः ॥ ५९ ॥**

---

पू— प्रतिपाद्यशास्त्रपरामर्शेन नपुंसकलिङ्गता स्यादित्यत आह—असावितीति। औचित्यादिति। उपसर्जनस्यापि एतच्छ्लोकस्थनिगमशब्दोक्तस्य परामर्शौचित्यादित्यर्थः॥ ५८॥

वी— अन्यप्रतिपन्नात्=प्रमाणान्तरप्रतिपन्नात्। एकमेवानेकशाखाविधेयमस्ति। तत्र प्रतिपत्तृभेदेन वचनस्याप्राप्तार्थप्रतिपादकत्वमिष्यते। सर्वथैव प्रमाणान्तरावेद्यस्य शास्त्रज्ञाप्यत्वे कः संदेह इति भावः। प्रतिपित्सार्हं=ज्ञातुमिष्टम्। भेदनिषेधरूपाद्वैतमात्रे त्वय्यन्ततात्पर्यादित्युक्तमपि किं ते इत्यादिना तुर्यपादेन निरस्तमित्याशयेनाह अन्यमपीति॥ ५८॥

ननु युक्तिमात्रेण तत्त्वसाधनप्रवृत्तो बौद्धः शून्यवादमारभते। अतः शास्त्रं प्रमाणीकृतम्। अत एकमात्रपरिशेषणं शास्त्रकृत्यमित्यत्राह वेदा इति। अत्र, "वेदोऽनृतो बुद्धकृदागमोऽनृतः प्रामाण्य-मेतस्य च तस्य चानृतम्। बोद्धाऽनृतो बुद्धिफले तथाऽनृते यूयञ्च बौद्धाश्च समानसंसदः" इति जगन्मिथ्यात्वमन्वदमानस्याद्वैतिनो वचनमेवानूद्यते पूर्वार्धेन। तत्र बुद्धेः क्षणिकत्वं बौद्धोक्तम्, अस्माभिस्तु बुद्धिर्ब्रह्मैव तत् स्थिरमित्युक्तमिति विशेषोऽस्तीत्याशंकायां तच्छ्लोके कण्ठतोऽनुक्तमप्याह स्थिरतदितरताद्यन्तरालं च बुद्धेरिति। स्थिरत्वं त्वदिष्टं, क्षणिकत्वं तदिष्टम्। उभयमपि मृषैव। आदिपदेन आनन्दरूपत्वं गृह्यते। अद्वैतिमात्रेष्टं तदपि मृषैवेत्यर्थः। आतः=अतः। त्रैविद्यडिम्भान्

ये चैते प्रमाणप्रमेयादिभेदान् भ्रान्तिसिद्धान् साधयन्ति, तेषां योगाचारादिसमयमनास्थाय त्रय्यन्तवादाश्रयणं बालप्रलोभनार्थमित्यभिप्रायेणाह **वेदा** इति । **स्वयं** स्वरूपतः । अपिना व्यापारानुग्राहकयोस्संग्रहः । **मानता** प्रामाण्यम् । **एवं** मृषा । **एषाम्** उभयेषाम् । स्थिराभावादेव सौगतानां बोद्धा मिथ्याभूतः; स्थिरसद्भावेऽप्यद्वैतिनामात्मनोऽनुभूतिमात्ररूपत्वेनाबोद्धृत्वात् तदाश्रयतया भातस्याहमर्थस्याविद्याविवर्तत्वाच्च बोद्धुर्मिथ्यात्वं सिद्धम् । बुद्धिरपि सर्वा माध्यमिकस्य मिथ्या ; मायावादिनस्तु शास्त्रसाध्या ; साध्यत्वादेव सत्यव्यतिरिक्ता । अपि च अनेनोक्तं बुद्धिस्थैर्यं निर्विशेषत्वविरोधात् काल्पनिकम् ; योगाचारोक्तं क्षणिकत्वमपि तथैव, क्षणिकधियां ग्राह्यग्राहकस्वगतविशेषस्य मिथ्यात्वाभ्युपगमात् । **फलं** व्याहारो हानोपादानादि च । एवं सर्वतस्साम्ये कुदृष्टीनामन्यतरपरिग्रहनियतौ निदानमुत्प्रेक्षमाण इवोपालभते **प्राय** इति । शेषमतिरोहिततात्पर्यम् । एवमिह **यादवप्रकाशीयः** संग्रहः । श्लो—"वेदोऽनृतो बुद्धकृतागमोऽनृतः प्रामाण्यमेतस्य च तस्य चानृतम् । बोद्धाऽनृतो बुद्धिफले तथाऽनृते यूयं च बौद्धाश्च समानसंसदः ॥" इति ॥ **इति प्रपञ्चमिथ्यात्ववादिनां सौगतसाम्यापादनम् ॥**

**(205) स्वन्निष्ठासिद्ध्यसिद्ध्योः परमतनियतिः सिद्धिमेवाधिरूढा ;**
**वेदस्यामानतायां त्वदभिमतहतिर्मानतायां च तद्वत् ।**
**साध्याऽसाध्याऽपि मुक्तिस्त्वदुपगमहता ; तत्समं चान्यत् इत्थं**
**रक्षोभ्यः प्रेषितोऽयं रघुपतिविशिखो राहुमीमांसकेभ्यः ॥ ६० ॥**

अथास्मिन् पश्यतोहराणां पक्षे विकल्पदौःस्थ्यं विविधमुदाहरति **स्वन्निष्ठेति** । नितिष्ठत्यस्मिन् परीक्षेति निर्णयोऽत्र **निष्ठा** ; तद्विषय एव वा राद्धान्तः । याऽसौ त्वन्निष्ठा, सा असिद्धा भ्रान्तिसिद्धा

---

*प्रकृ*— स्थिराभावादेवेति । योगाचारमते ग्राहकाभिमानारूढधीसन्तानस्य बोद्धृत्वात् मृषावादिनां बुद्धिस्थैर्यमिथ्यात्वं सौगतानां तत्क्षणिकत्वमिथ्यात्वं च कथमित्यत्राह बुद्धिस्थैर्यमित्यादि ॥ ५९ ॥

निष्ठाशब्दस्य निर्णये मुख्यत्वेऽपि निर्णयस्य प्रमितिसिद्धत्वात् कथं विषयद्वारा वाच्यत्वम्? इत्यपरितोषादन्यथा व्याचष्टे—तद्विषयो वा सिद्धान्त इति । उभयत्र लक्षणातौल्येऽपि उद्देश्य-

*सौ*— विद्यात्रयं वेदत्रयम् तदधीतिनः तदर्थानभिज्ञान् तर्काकुशलान् जनान् । उपनिषद्रूपेण वारबाणेन=कवचेन उपगूढैः प्रच्छादितस्वात्मभिः । पौण्ड्रकाद्वैतिभिः । पौण्ड्रकेन हि अहमेव वासुदेवः नान्य इति स्वस्य वस्तुतो जीवस्येश्वरेणैक्यं घोषितम् । स्वस्य जीवत्वनिषेधः, वस्तुतो य ईश्वरः तस्येश्वरत्वनिषेधश्च पौण्ड्रकेणापि कृतः, एभिरपि ॥

व्यापारानुग्राहकयोरिति । व्यापारः वृत्त्या वाक्यार्थबोधनम् । अनुग्राहकः तर्कः । स्थिराभावादिति । अस्थिरत्वे हि आत्मनो बोद्धृत्वं न भवति । ग्राह्येति । ग्राह्याणां विषयाणां, ग्राहकाणामात्मनां, स्वगतधर्मस्य चेत्यर्थः । प्राय इति श्लोकस्थं पदं वयं बौद्धा एवेति तेऽपि कदाचित् कोणे रपष्टं व्यवहरन्तीति ज्ञापनाय । यादवप्रकाशीयेति । भास्करीयेऽपि पद्यमिदमस्तीव ॥ ५९ ॥

एषां प्रच्छन्नबौद्धत्वात् बौद्धानिवापि एनान् खण्डयन् अमोघेन रामबाणेनाद्वैतं मारितमिति निगमयति त्वदिति । सिद्धान्तस्य सत्यत्वं वेदस्य प्रामाण्यं मुक्तेः साध्यत्वमितीदं त्रयं यो नेच्छति, तस्य वादो व्यर्थ इत्यत्रोच्यते । तत्र अद्वैतिनः निष्ठायाः=सिद्धान्तस्य सिद्धौ, तदभावे च परमतप्रकर्षं स्थितम् । आद्ये, ब्रह्मातिरिक्तसत्यवस्तुस्वीकारेणाद्वैतहानेः । एवं वेदस्य मानत्वे, पूर्वम-

वा [चेत् ?], तर्हि तद्विपरीता परेषां निष्ठेव प्रमितिसिद्धिमधिरोहेत्। अथ प्रमितिसिद्धा, प्रमितिरसौ, चेत् (?) व्यवहारिकी वा, पारमार्थिकी वा; न प्रथमः, दत्तोत्तरत्वात्। तादृश्या तया परमतान्यपि किं न सिध्येयुः ? अस्मदुक्तबाधकैरिति चेत्, तदुक्तबाधकैस्त्वन्मतमपि न सिध्येत्॥ ते बाधकाभासा इति चेत्, त्वदुक्ता अपि तथैवेति अन्ततस्त्वमेव ब्रूषे। स्वव्याघातादिदोषस्त्वधिकः। तदिदं संजगृहुः, "स्वशास्त्रनिर्णये सिद्धे सिद्धा (सत्ये सत्याः) स्युर्लोकनिर्णयाः। स्वशास्त्रनिर्णये सिद्धे सिद्धाः स्युर्लोकनिर्णयाः॥"

अपि च वेदाः प्रमाणमप्रमाणं वा, अप्रमाणत्वे कथं ततस्तद्विषयसिद्धिः ? अन्यथा बाह्यागमैरपि तत्तद्विषयाः किं न सिध्येयुः, कथं तर्हि अप्रमाणात् भयविसंवादिसिद्धिः ? इत्थम्। न हि वयमप्रमाणस्य स्वानुरूपार्थक्रियाकारित्वं नेति ब्रूमः; किंतु न ततस्तद्विषयसत्यत्वस्थापनं सिध्येदिति। प्रमाणत्वं तु तस्य सत्यमसत्यं वा। [आद्ये ?] ब्रह्मणः स्वरूपभूतम् अन्यद्वा। नाद्य., ब्रह्मणः शब्दधर्मत्वायोगात्। न द्वितीयः, सद्द्वैतव्याघातात्। असत्यत्वे तु कृतमेवोत्तरम्। मुक्तिश्च ब्रह्मण उपायसाध्या वा उत स्वरूपत्वात् असाध्या? आद्ये, भावरूपा अभावरूपा वा। पूर्वत्राद्वैतभङ्गः। उत्तरत्र सत्यमिथ्याप्रतियोगिकत्वविकल्पे प्राच्योऽपसिद्धान्तहतः। पश्चिमस्तु प्रध्वंसमिथ्यात्वमपि स्थापयेदेव; अलब्धस्वरूपस्य हि प्रध्वंसोऽपि स्वरूपं न लभेत। एवं स्वयंप्रकाशत्वादिषु स्वतस्सिद्धत्वान्यतस्सिद्धत्वादिविकल्पदौःस्थ्यं दुस्तरमित्याह **तत्समं चान्यदिति**।

उक्तानुक्ततर्काणाममोघत्वं व्यञ्जयन् निगमयति **इत्थमिति**। **रक्षोभ्य** इत्यनेन स्वव्याघातकमायाप्रवर्तकत्वं व्यज्यते। **रघुपतिविशिखः**—तद्वत् सर्वत्राप्रतिहत इति तात्पर्यम्। **शाडुमीमांसक**शब्देन सशिरस्कवेदनिर्णयप्रवृत्तमीमांसाशास्त्रशरीरेऽपि शकलितशिरोमालसंमहीतृत्वं सूच्यते॥

**इति प्रपञ्चमिथ्यात्ववादिनां बाधकविकल्पोदाहरणम्॥ ६०॥**

---

पू.— वाचिपदनिष्ठमात्रलक्षणा न्याय्या, नोपायवाचिसिद्धासिद्धपदद्वयलक्षणेति भावः। उत्तरत्र सत्यमिथ्याप्रतियोगिकत्वविकल्प इति। मुक्तेर्बन्धध्वंसरूपायाः सत्यप्रतियोगिकत्वविकल्प इत्यर्थः। अपसिद्धान्तहत इति। प्रतियोगिनो बन्धसत्यत्वस्य त्वदभिमतत्वादिति भावः। स्वयंप्रकाशत्वादिषु स्वतस्सिद्धत्वान्यतस्सिद्धत्वादिविकल्पदौःस्थ्यमिति। स्वयंप्रकाशत्वादिकं संविदधीनप्रकाशमन्याधीनप्रकाशं वेति विकल्पे स्वप्रकाशत्वे तद्विषयविवादाभावप्रसंगः अनुमानेन तव तत्साधनप्रयासश्च निष्फलः। परप्रकाश्यत्वे तु स्वयंप्रकाशत्वग्राहिणा परेण तदाश्रयसंविदोऽपि ग्राह्यत्वात् तस्याः त्वदभिमतस्वयंप्रकाशत्वहानिः, दृश्यत्वहेतोरनैकान्त्यं चेति दौःस्थ्यमित्यर्थः॥ ६०॥

श्री— विद्यमानायाः मुक्तेः पश्चात्सिद्धौ चाद्वैतहानिरिति बोध्यम्। तत्समं चान्यदिति। ब्रह्मणः सत्यचिदानन्दत्वादिकमपि सत्यमसत्यं वेति विचार्यमित्यर्थः। इत्थमिति पदं चतुर्थपादेऽन्वेति। नापि ब्रह्मण्यपि (३३) इत्यारभ्यैतावद्भिः श्लोकैरुपपादितप्रकारेणेति तदर्थः। अयम् = अस्मन्मन्त्रितः॥

असिद्धा भ्रान्तिसिद्धा वेति नायं कृत्स्नविकल्पः। अतो यदीति शेषः पूरणीयः। वस्तुतः उपरि 'प्रमिति रसौ चेत्' इत्यत्रत्यं चेत्पदम् अत्र स्थितमेव स्यात्; तत्रानपेक्षितत्वात्। तर्हि = पक्षद्वये। तृतीयं पक्षमाह अथ प्रमितीति। उक्तबाधकैरित्यत्र कर्मधारयः। निर्णये सिद्धे इत्यत्र एकस्मिन्नथ अकारप्रश्लेषः। सत्य इति पाठः सम्यक्। स्वनिर्णयस्य सत्यत्वे, अद्वैतहान्या, स्वनिर्णयस्यासत्यत्वे, यथाकथंचिदबाधपरमतं सत्यमित्यर्थः। अलब्धस्वरूपस्येति। प्रतियोगिनो मिथ्यात्वे इत्यर्थः॥६०॥

## नित्यभूतिपरीक्षा

(206) शुद्धस्याशुद्धसृष्टिक्रम इति कथितः ; शुद्धसत्त्वे तु तत्त्वे
स्थानं नित्यं श्रुतं तत् स्मृतमपि ; कलया तत्र देहाद्यवस्थाः ।
सृष्टेः प्रागेकमेवेत्यपि निगमवचः सूक्ष्ममागव्यपेक्षम् ;
नो चेत्, स्वाभीष्टमायोपधिमुखविलये स्वस्ति विश्वप्रसूत्यै ॥ ६१ ॥

एवं प्रसक्तानुप्रसक्ति(क्तं?) परिसमाप्य परमप्रकृतसृष्टिविशेषोक्तिं संगमयन् प्रकरणारम्भोद्दिष्टलक्षित-नित्यविभूतिपरीक्षां परिमितनिरूप्यत्वात् औचित्याच्च प्रधानप्राप्यप्रापकभूतपरतत्त्वनिरूपणानन्तरं निवेशयति शुद्धस्येति। शुद्धस्येत्यनुकथनमशुद्धद्रव्यानुप्रवेशात् तत्सृष्ट्यादिभिश्च स्वतन्त्रस्याप्यशुद्धिशङ्कामपनयति।

---

*धूः*- जीवेश्वरनिरूपणानन्तरं तद्धर्मभूतस्याजडतया तत्तुल्यस्य ज्ञानस्य निरूपणे कर्तुमुचिते, किमिति जडतद्धर्मभूतनित्यविभूतिनिरूपणमित्याशङ्क्य, परीक्षाया उद्देशलक्षणक्रमेण कर्तुमुचितत्वात् निरूप्यबाहुल्याभावात् प्राप्यभूतेश्वरनिरूपणानन्तरं प्राप्यान्तर्भूतविभूतिनिरूपणौचित्याच्च नित्यविभूतिनिरूपणमत्रोचितमित्याह प्रकरणारम्भेति।

*श्री*-जीवसरे यथा तस्य सशरीरत्वाद्यवस्थानिरूपणस्यापि संगतत्वमावश्यकत्वञ्च, तथा नायकसरे अत्र नायकस्य विग्रहविशिष्टस्यैव प्राप्यत्वात् परव्यूहविभवहार्दार्चारूपविग्रहभेदेन प्रापकत्वाच्च स्वरूपगुणवत् रूपस्यापि निरूपणं कार्यम्। तच्च रूपमप्राकृतमिति तदुपपादनायैव नित्यविभूतिरप्युपपादनीयतामिहाश्नुते। एवञ्च ग्रन्थोपक्रमे विभक्तायाः नित्यभूतेर्निरूपणाय मतेः प्राक् पृथक् सरो मा भूदिति तद्विषयं सर्वमत्राह शुद्धस्येति। लीलाविभूतौ नित्यविभूतौ च प्रविष्टस्य परस्य तत्तद्देशभेदेन शुद्धत्वमशुद्धत्वञ्चेति न मन्तव्यमिति ज्ञापनाय तस्य नित्यशुद्धत्वोक्तिः। अशुद्धसृष्टिक्रमः= सूक्ष्मचिन्मूलप्रकृतिविशिष्टतया स्थितस्य महदहङ्कारादिसमष्टितदधीनव्यष्टिक्रमः। २६ श्लोके तस्य विशिष्टवेषेणोपादानत्वे कथिते त्रिविधाद्वैत्युक्तविशेषणानामविद्यादीनामनुपपन्नत्वमप्रामाणिकत्वञ्चैतावतोपपादितम्। तदेवमशुद्धसृष्टौ विशिष्टस्योपादानत्वं शोधितमासीत्। शुद्धसत्त्वे त्विस्यत्र सृष्टिक्रम इति विभज्यानुषङ्गात् शुद्धसत्त्वे तत्त्वे सृष्टिक्रमस्तु इत्यर्थः। द्वितीयपादेन तत्कथनम्। रजस्तमोगुणामिश्रे प्रकृतिव्यतिरिक्ते नित्यभूत्याख्ये तत्त्वे व्योमभागवत् पृथिव्यप्तेजोवायुमयं स्थानं तत्= संसारिणां सर्वेषामगोचरभूतमपि *अतिप्रसिद्धं नित्यतया श्रुतं स्मृतञ्च। अपिशब्दश्चार्थे। तर्हि का तत्र सृष्टिरिति चेत्,* तत्र कलया= तत्रत्यपृथिव्याद्येकदेशेन देहाद्यवस्थाः ईश्वरस्य व्यूहविभवहार्दार्चारूपदेहाः नित्यमुक्तानाञ्चापेक्षितदेहाः नित्योपकरणव्यतिरिक्तानि तदातदा संकल्प्यमानानि भोग्यभोगोपकरणानि च भवन्ति। तत्रापि पत्रपुष्पादिवत् कश्चित् क्रमोऽस्ति ; वासुदेवात् प्रद्युम्नः, प्रद्युम्नादनिरुद्ध इत्येवम्। यद्येतावन्नित्यवस्तुसद्भावः, कथं तर्हि, एकमेवाग्र आसीदिति एकत्वश्रुतिरित्यत्राह सृष्टेरिति। सृष्टिकाले यत् नूतनतया भावि बहु, तद्गतबहुत्वप्रत्यनीकमेकत्वमविभक्तनामरूपत्वं तत्रोक्तम्। न तु एकमात्रसत्ता। जीवादीनामपि प्रलये सद्भावस्य प्रागेवोक्तत्वात्। नो चेत् =तथा नेष्यते चेत्, प्रलये शांकरभास्करादिमतसिद्धानां मायाद्रव्यस्योपाधेः शक्तेश्चाप्यभाव एवेति विश्वसृष्टिरेव न भवेत्। ननु सत्यादिलोकवत् वैकुण्ठलोकोऽप्यविद्यमान एव सृष्ट्यारम्भे सृज्यतामिति चेन्न, तन्नित्यत्वश्रवणात्। "आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन। मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते। इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" इति च गीयते॥

परमप्रकृतसृष्टिविशेषेति अत्र सरे २३ श्लोकोक्तग्रहणम्। प्रकरणारम्भेति ग्रन्थारम्भविवक्षा,

**अशुद्धसृष्टिक्रमः कथित** इति। अत्र शुद्धसृष्टिक्रमस्तु वक्तव्य इति शेषः। **शुद्धसत्त्वे तु तत्त्वे** इत्यनुवादेन तद्ग्राहकप्रमाणमपि सूच्यते। तस्याप्राकृतत्वस्थापकमाह **स्थान**मिति। श्रूयते हि, "तत् विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इति। तदिदं सदापश्यत्सूरिविशिष्टस्थानविधानार्थमिति **वेदार्थसंग्रहे** स्थापितम्। एवम्, "आदित्यवर्णं तमसः परस्तात्", "क्षयन्तमस्य रजसः पराके" इत्यादि-। **शाट्यायनिन**श्च एवमामनन्ति, "सहस्रस्थूणे विमिते दृढ उग्रे यत्र देवानामधिदेव आस्ते" इति। **कौषीतकिनां** पर्यङ्कविद्या चात्र पठितव्या। सर्वमेतत् संक्षिप्तं **पदार्थसंक्षेपे**, "व्यतिरेकाधिकरणनिवासशब्दैः" इति। "तद्विप्रासो विपन्यवो जागृवांसस्समिन्धते, विष्णोर्यत्परमं पदम्" इत्यादिप्रसिद्धिसूचनार्थस्तुच्छब्दः। अस्यार्थस्योपबृंहणप्रतिष्ठितत्वमाह **स्मृतमपी**ति। यथोक्त**मुत्तररामायणे**, "त(य)द्वाऽऽकाशं सनातनम्" इति। **महाभारते** च, "दिव्यं स्थानमजरं चाप्रमेयम्" इति। **भगवच्छास्त्रसंहितासु** च विस्तरः सिद्धः।

ननु, "अक्षरे परमे व्योमन्" इति, अव्यक्ततमसोरन्तरालेऽधीतः त्रिगुणपरिणतिविशेष ईश्वरस्य मुक्तानां च भोगस्थानतयाऽऽम्नायत इति **यादवप्रकाशो**क्तं युक्तम्, अक्षरशब्दप्रत्यभिज्ञानन्यायात्र बाधकाभावात्, शुद्धसत्त्वव्यपदेशस्य रजस्तमसोरभिभूततयोपपत्तेः। अप्राकृतस्थानक्लृप्तौ च गौरवात्। तत्रापि पृथिव्यादिभेदाभ्युपगमेन प्राकृतत्वं प्रज्ञायत इति॥ अत्र ब्रूमः—अक्षरशब्दप्रत्यभिज्ञामात्रं तु अतिप्रसञ्जकम्। अस्ति चात्र **परमे व्योमन्** इति समभिव्याहारो बाधकः। न हि तमोनन्तरस्याक्षरस्य व्योमत्वम्। उपचारस्तु गत्यभावे। अस्मत्पक्षे **तु अक्षरपरम**विशेषणाभ्यां प्रसिद्धव्योमवैलक्षण्यं युक्तम्। न च स्थानान्तरादिस्वीकारे गौरवम्; यथाश्रुतमात्रसंग्रहणात्। पृथिव्यादिभेदस्तु शब्दादिगुणतारतम्य-सारूप्यात्। युष्मदिष्टाक्षरस्थाने च प्रकृत्यामिव पृथिव्यादीनामसन्निधानात्। न च तत्त्वसंख्याधिक्यप्रसङ्गो दोषः, कालवदेव पृथक्त्वोपपत्तेः; "तं षड्विंशकमित्याहुः सप्तविंशमथापरे" इत्यधिकसंख्याम्नानात्। न चैवं षट्त्रिंशत्तत्त्ववादस्यापि स्वीकार्यत्वम्; अनाप्तागमप्रणीतस्यानादरणीयत्वात्। आप्तागमे तु अधिकगणनम्

---

प्र॰—कालवदेवेति। कालस्य दृढप्रमाणासिद्धतया तद्व्यतिरिक्तभगवन्नियाम्यतत्त्वानां पञ्चविंशतित्वं भगवतः षड्विंशत्वम्, कालान्तर्भाविन सप्तविंशत्वं च। एवं नित्यविभूतेरपि प्रमाणसिद्धत्वात् अष्टविंशत्वमपि शास्त्रानुमतमिति भावः॥ ६१॥

श्री—प्रकरणग्रन्थोऽयमित्याशयेन। शाट्यायनिन इति। तलवकारोपनिषदीति श्रुतप्रकाशिकायाम्। वेदार्थसंग्रहेति। अत्र जीवसरे, "अन्ये चानादिसिद्धाः" इति श्लोक (६६) वृत्तिर्द्रष्टव्या। व्यतिरेकाधिकरणनिवासशब्दैरिति। विष्णोः परमं पदमिति षष्ठीविभक्त्या विष्णुव्यतिरिक्तमिदं पदं तदीयमिति ज्ञापनात्, तमसः परस्तात् इति देशापरात् अस्तातिप्रत्ययात्, क्षयन्तम्= निवसन्तमिति निवासोक्त्या चेत्यर्थः। 'अव्यक्ततमसोरन्तराले' इति अचेतनरूपं प्रथमकार्यद्रव्यमक्षरपदेनोक्तम्। अक्षरशब्दश्रवणमात्रेण, 'तदक्षरे परमे व्योमन्' इत्यत्रापि तदेवोच्यत इति तदाशयः। व्योमत्वमिति। व्योमत्व प्रयासिद्धे कथं जन्यस्य परमव्योमतेति भावः। ननु तत्र पृथ्वीजलादिसद्भावात् तेषाञ्च प्रकृतिकार्यत्वात् प्रकृत्यन्तर्भूतं परमपदमित्यत्राह पृथिव्यादीति। अजन्यद्रव्यत्वम् पृथिवीत्वम्, तेजोजन्यद्रव्यत्वं जलत्वमित्येवं तत्र नेष्टम्; नित्यत्वात् गन्धादिगुणेषु सर्वाश्रयत्वकिञ्चिन्न्यूनाश्रयत्वादिना भेदः पृथिव्यादिशब्दनिमित्तमिति भावः। वक्ष्यत इदं 64 श्लोके। षट्त्रिंशत्तत्त्ववादः

अनतिविप्रकृष्टावान्तरपरिणामख्यापनाभिप्राय गोद्धव्यम्। "लोक वैकुण्ठनामानम्" इति प्रकृत्य, "अप्राकृत सुरैर्वन्द्यम्" इति विशेष्यते । अत एव ण्डान्तर्वर्तिलोकविशेषत्वशङ्काऽपि निर्धूता । "न तस्य प्राकृता मूर्ति" इत्यनेनापि द्रव्यान्तर सिध्यति । न च तत्र बाधकमस्ति। अतश्शुद्धाशुद्धविभूतियुगल व्यवस्थितमिति ।

नन्वेवमपि नित्यानित्यविभूतिविभागोऽनुपपन्न , अत्राप्यात्मस्वरूपादेर्नित्यत्वात्, तत्राप्यैच्छ देहादेरनित्यत्वात्। तत्राह कलयेति । नित्यानित्यप्राचुर्यविवक्षया तथा विभाग इति भाव । न हि तत्रत्याना पृथिव्यादीनामीश्वरदेहादीना चात्रत्यवत् सृष्टिप्रलयौ । उक्तं हि **महाभारते**, "नित्य हि नास्ति जगति भूतं स्थावरजङ्गमम् । ऋते तमेक पुरुषं वासुदेवं सनातनम्" इति । भूतशब्दोऽत्र कार्यांशपर । अत एव जीवत्र्योक्तिरौपचारिकी । वासुदेवशब्दोऽत्र परविग्रहविशिष्टपर , स्वरूपनित्यत्वस्य जीवेष्वपि समत्वात् । विशिष्टत्वस्य वासुदेवे विश्वविशिष्टेऽपि सिद्धत्वात्। परविग्रहनित्यत्वोक्ति तदनुबन्ध्युपलक्षणार्था। ननु कारणत्रयेषु एकत्वावधारणात् अनन्तरं च बहुभवनसङ्कल्पोक्तेर्नित्यस्यानादि व्यपदेश त्रिदशामरत्वन्यायेन नेतव्य इति तत्र्यन्तरुद्दष्टीना सर्वेषा व्याघोषी । तत्राह **सृष्टेरि**ति । अय भाव —सृष्टिकालापेक्षया सृज्यमानस्य जगत उपदेशकालापेक्षयेदङ्कारगोचरस्य प्रलयदशायामविभक्तनामरूपतया **एकत्व**मवधार्यते । अत एव हि, "तद्धेद तर्हि अ याकृतमासीत् । तन्नामरूपाभ्यां व्याक्रियत" इति श्रुतिरेकत्वबहुत्वप्रकारमेतमेव व्यनक्ति ॥ अथापि यथाश्रुति जीवादिसमन्वये को दोष इत्यत्राह **नो चेदि**ति । अय भाव --' प्रकृतिं पुरुष चैव विद्ध्यनादी उभावपि" इत्यादिकमास्ता तावत्। चोदयितृणा तु स्वसिद्धान्तविरोध स्यात्। न हि मायाविलय प्रलये मृषावादिभिरङ्गीक्रियते , औपाधिक भेदवादिभिश्चोपाध्यशप्रध्वस । **मुख्यशब्द** स्वाभाविकभेदाभेदवाद्युक्तचिदचिदीश्वरशक्तित्रयसमहार्य । यदि मायोपाधिशक्तीनामपि विलयस्तैरभ्युपगम्येत, तदुपहितात् ब्रह्मणो विश्वप्रभूत्यभावात् , अनुपहितस्य च तस्य तत्कारणत्वानभ्युपगमात् बहुभवनसङ्कल्पपूर्वकविश्वसृष्ट्याद्यभावात् कारणवाक्य सर्वं कबन्धमीमा सककल्पितमूकत्वमेव भजेतेति स्वस्तीत्युपालम्भकाकुगर्भम् ॥ इति नित्यविभूतिमङ्गावः ॥६१॥

(207) ज्ञानत्व चेत् रहस्यागमविदितमिति स्वीकृतं नित्यभूतेः

*षाड्गुण्यात्मत्वमेव प्रसजति सह तत्पाठतोऽसौ जडा सा ।*

तत्संबन्धात् कुतश्चित् तदुपचरणमित्याहुरेके ; परे तु

ज्ञानत्वाजाड्यकण्ठोक्त्यनुगुणमवदन् मुख्यतामात्मनीव । ६२ ॥

---

*वी*— शैवागमसिद्ध । अनान्तरपरिणामेति । अव्यक्ताक्षररूपेति विवक्षा। कार्यांशपर इति । शरीर विशिष्टचेतनो भूतम्। तत्र विशेषणांशस्यानित्यत्वमिति वासुदेवाख्य भूत तु विशेषणभूतविग्रहांशेऽपि नित्यमिति । व्याघोषी= व्याघोषभाव । मोक्षस्थानाभाव-मोक्षस्थानस्वाधीनत्वे वारयितुमिव सर्वेषामेव मत व्यावर्तयितुमप्यस्माभिर्नित्यविभूतिशब्देन तत् पद व्यवह्रियते। तमोनन्तराक्षराभिन्नत्वे हि—अक्षर तमसि लीयते इति लयश्रवणात्र नित्यत्व स्यादिति। प्रध्वस इति । नहीत्यनुपग ॥ ६१ ॥

शुद्धसत्त्वस्य नित्यानित्यपरीक्षा वृत्ता , जडाजडपरीक्षा क्रियते ज्ञानत्वमिति । उपनिषत्सु ज्ञानशब्द आत्मधर्मभूतज्ञानोभयसाधारण्येन प्रयुज्यते। तत्र साधारण रूप स्वयम्प्रकाशत्वम्। *अत इहापि तदर्थ एव तच्छब्दप्रयोग इति ज्ञानत्व नित्यविभूतेरिष्यते चेत्—षाड्गुण्यमपीष्यताम्। तस्यापि*

नित्यविभूतौ जडाजडविकल्पे प्रथमं दर्शयति **ज्ञानत्वमिति** । अयं भावः— प्रसिद्धशास्त्रेषु तावत् अजडत्वं शुद्धस्य सत्त्वस्य न पश्यामः । अथ **रहस्यागम**वाक्यविशेषैस्तदिष्येत, एवं तर्हि षाड्गुण्यमयत्वमपि ; तस्यापि तस्मिन्नेव शास्त्रे सहपाठात् ॥ इष्टप्रसङ्गोऽयमिति चेन्न ; चेतनत्वप्रसङ्गात् । न च तदप्यस्त्विति वाच्यम् , जीवेश्वरविकल्पबाधात् ॥ षाड्गुण्यमयत्वमौपचारिकमिति चेत् , ज्ञानमयत्वमपि तथैव स्यादविशेषात् । अतस्त्रिगुणा विभूतिरिवाद्यापि (न्याऽपि?) सा विभूतिरन्याधीनसिद्धितया जडैवेति । कुतस्तत्र ज्ञानत्वोक्तिरित्यत्राह **तत्संबन्धादिति** । निश्शेषाविद्यानिवृत्तिहेतुतया, निरुपाधिकज्ञानविकासस्थानतया, अन्यतो वा कुतश्चित् संबन्धात 'आयुर्घृतम्' इतिवत् जडेऽपि ज्ञानत्वोपचार इत्यवोचन् केचित् । पक्षान्तरमुपक्षिपति **परे त्विति** । "किमात्मिकैवैषा भगवतो व्यक्तिः" इत्यनुयोगे, "यदात्मको भगवान्" इति प्रतिवचनात् , "किमात्मको भगवान्" इति पुनरनुयोगे च, "ज्ञानात्मकः" इत्यादिप्रत्युक्तेः शबल्यात्मकत्वादिवत् मुख्यत्वविरोधाभावाच्च, "स्वसत्ताभासकं सत्त्वं गुणसत्त्वात् विलक्षणम्" इत्युपबृंहणस्वारस्याच्च विषयाश्रयावच्छेदनिरपेक्षं स्वगोचरज्ञाननिरपेक्षप्रकाश[न]त्वनिमित्तेनाऽऽत्मनीव ज्ञानत्वं मुख्यमिति ॥

**इति नित्यविभूतेर्जडत्वाजडत्वपक्षौ ॥ ६२ ॥**

---

वी-तत्सहपाठात् । तदनिष्टौ स्वयम्प्रकाशत्वमपि नेष्यताम् । अतः सा नित्यभूतिर्जडैव, प्रकृतिवत् । तर्हि ज्ञानशब्दप्रयोगः कथमिति चेत्—महदाख्ये तत्त्वे बुद्धिशब्दप्रयोगः कथम् ? अतो ज्ञानेन कुतश्चित् संबन्धात् =संबन्धविशेषात् उपचरणं =ज्ञानशब्दस्य लक्षणया प्रयोगः । कः संबन्ध इति चेत्= पूर्णज्ञानजीवमालाधारत्वं वा, बद्धस्य ज्ञानविकासस्थानत्वं वा किमप्यस्तु इति एके= सिद्धान्त्येकदेशिन आहुः। परे तु ज्ञानशब्दस्य मुख्यतामेवाऽऽमनन्ति । ननु मुख्यं ज्ञानत्वं सविषयकत्वम्; तत् कथमिति चेत्, तन्मा भूत्, यत् आत्मनि भूरिप्रयोगमूलमिष्टमन्यत् स्वयम्प्रकाशत्वं सविषयकज्ञानसाधारणं प्रवृत्तिनिमित्तम्, स्वीकोडीकारस्य युक्तत्वात् तदिष्यते । तत्र प्रमाणमाह ज्ञानत्वेति । यदि ज्ञानाधारत्वमात्रेणाऽऽत्मनि ज्ञानशब्दः प्रयुज्येत, तर्ह्यविशेषात् तार्किकादिभिरपि वेदान्तिवत् निर्गलं प्रयुज्येत । अतस्तत्संमतो वेदान्तिसामान्यसाधारणः कश्चिदर्थो भाव्यः । श्रुतिश्च, 'अत्रायं पुरुषः स्वयंज्योतिर्भवति', 'हृद्यन्तर्ज्योतिः पुरुषः' इत्येवं ज्योतिश्शब्दं प्रयुञ्जाना, सूर्यादितत्प्रभोभयसाधारणज्योतिष्ट्ववत् धर्मिधर्मोभयसाधारणं ज्ञानत्वरूपं कञ्चन धर्मं सूचयति । अत एव ज्ञानेन जायमानेन सर्वेण स्वस्वरूपस्येवाहमर्थस्यापि ग्राह्यत्वात् तद्रूपं ज्ञानत्वमित्यपि न । न चैतावता सविषयकत्वरूपज्ञानशब्दार्थत्यागापत्तिः ; सर्वलोकवेदसाधारण्येन सकर्मकज्ञाधातुमूलकस्य तथाप्रयोगस्यापलापायोगात् । अतस्तन्मुख्यम् । स्वयंप्रकाशत्वं तु कतिपयमात्रसंमतत्वात् पारिभाषिकम् । इदं वैलक्षण्यं ज्ञापयितुमेव, 'ज्ञानानन्दमयस्त्वात्मा' इत्यादिवचनप्रवृत्तिः । एवमेव, 'ज्ञानानन्दमया लोकाः' इति प्रयोगात् परमपदेऽपि ज्ञानत्वमिदं युक्तम् । विशिष्य च, 'स्वसत्ताभासकं सत्त्वम्' इति प्रयोगात् स्वयमेव स्वसत्तां प्रकाशयतीति स्वयंप्रकाशत्वे कण्ठोक्ते, आत्मनीव तेन पारिभाषिकार्थेनैव व्यवहारे संभवति साम्प्रतिकलक्षणादिस्वीकारो नोचितः । स्वयम्प्रकाशत्वमेवाज्ञत्वम् । ननु सत्त्वस्य गुणस्यैव स्वयंप्रकाशत्वं प्रमाणश्लोकतो ज्ञायते, न तु धर्मिण इति चेन्न— धर्मप्रकाशोक्तौ धर्मिप्रकाशस्य स्वतस्सिद्धेः ; धर्म्यधीनप्रकाशत्वात् धर्मस्य । लोकरूपद्रव्ये ज्ञानानन्दमयत्वकथनाच्च । न च गुणसत्त्वाद्विलक्षणमिति प्रयोगात्, परमपदस्य सत्त्वं न गुणः, किंतु स्वरूपमेवेति वाच्यम्—रजस्तमसी प्रति प्राकृतं सत्त्वं गुणीभवति—अप्रधानीभवति कदाचित् । तत् सत्त्वं न न तथा, तत्र रजस्तमसोरभावादित्यर्थसंभवात् । भगवतो व्यक्तिः =भगवन्मूर्तिः ॥ ६२ ॥

(208) निस्संकोचा समस्तं चुलकयति मतिर्नित्यमुक्तेश्वराणाम् ;
बद्धानां नित्यभूतिर्न विलसति ; ततः कस्य सा स्वप्रकाशा ।
मैवं नित्येश्वरादेः सति मतिविभवे साऽस्तु तेनानपेक्षा
वेद्यानुद्भासकाले मतिरिव न तु सा बन्धकाले विभाति ॥ ६३ ॥

नन्विह जडपक्ष एव साधीयान् ; पक्षान्तरं तु न संभवमृच्छतीत्यभिप्रायेण चोदयति **निस्सङ्कोचेति**। न हि कंचित् पुरुषमनपेक्ष्य, किंचित् प्रकाशत इति संभवति। पुरुषास्तु नित्यमुक्तेश्वराः सर्वज्ञाः निष्प्रतिघया स्वधर्मभूतधिया सर्वं साक्षात्कुर्वते। बद्धानां तु नित्यविभूतिर्न प्रकाशत एव। अतः स्वप्रकाशत्वं न स्यादित्याक्षेपः। तत्र यथाश्रुतस्वारस्यसत्करसमाधत्ते **मैवमिति**। अभिप्रेतं विवृणोति **नित्येति**। यथाऽऽत्मनां नित्यस्वप्रकाशानां धर्मभूतधीगृह्यमाणदशायामपि स्वप्रकाशत्वं नापैति, तथा सर्वज्ञैस्तद्धिया साक्षात्क्रियमाणस्यापि शुद्धसत्त्वस्य स्वप्रकाशत्वमविरुद्धमिति। तर्हि सर्वसाधारण्यात् बद्धान् प्रत्यपि भासेतेत्यत्राह **वेद्येति**। यथा धर्मभूतज्ञानस्य विषयग्रहणवेलायां स्वाश्रयायैव भातीत्यवस्थाभेदात् पुरुषभेदाच्च भाननियमः, तथा स्वसाक्षात्कर्तॄणामेव स्वयमपि प्रकाशत इति व्यवस्थायां न कश्चिद्बाधः। पुरुषाणां नैरपेक्ष्यं न वस्तुस्वभावं प्रतिरुणद्धीति भावः। नन्वयं प्रकाशः स्वविषयबुद्धिधर्मो वा स्वधर्मो वा, पूर्वत्र स्वप्रकाशत्वहानिः। उत्तरत्रानादिः, आगन्तुको वा। आद्ये, बद्धान् प्रत्यप्यनादिरिति भानप्रसङ्गो दुर्वारः। द्वितीये, कारणानिरूपणादसंभवः॥ मैवम् ; न ह्यागन्तूनां सर्वेषां

---

श्री—ननु प्रमाणतः प्रतीतस्याप्यजडत्वस्यानुपपन्नत्वादस्वीकार एव युक्त इत्याशंक्य परिहरति निस्संकोचेति। मतिनिरपेक्षप्रकाशत्वं हि स्वयंप्रकाशत्वम्। तच्च मत्यभावसमये उपपादनीयम्। नित्यानां मुक्तानामीश्वरस्य च मतिः संकोचाभावात् सर्वविषयिणीति शुद्धसत्त्वविषये तदभावो दुर्वचः। बद्धा एव तद्विषयमतिरहिताः। तेभ्यस्तु न प्रकाशते। ततः कस्य=कं पुरुषं प्रति सा स्वप्रकाशा? न कस्यापि इति स्वप्रकाशत्वमेव नास्तीति। मैवमिति। नित्यान् ईश्वरं मुक्तांश्च प्रति मतिविषयत्वे वर्तमान एव स्वप्रकाशत्वमपि प्रमाणबलादिष्यते। अतः सा नित्यभूतिः तेन=मतिविभवेन अनपेक्षा=सापेक्षा न भवति। ज्ञानसापेक्षा न भवतीति यावत्। यथा तेषां नित्यमुक्तेश्वराणां तत्तदात्मस्वरूपं स्वयंप्रकाशत्वात् स्थितमपि मतिविभवं नापेक्षते; तद्वदिति भावः। मतिनिरपेक्षत्वे बद्धान् प्रति प्रकाशतामित्यत्राह वेद्येति। स्वयंप्रकाशस्य कदाचिदप्रकाशे बद्धधर्मभूतज्ञानं दृष्टान्तः। वेद्यस्य=विषयस्य अनुद्भासः=अग्रहणम् ; तत्काले मतिर्न प्रकाशत इति भाष्ये व्यक्तम्। तद्वत् सा नित्यभूतिर्बन्धकाले तु न प्रकाशते। अत्र प्रसरणदशापन्नमपि ज्ञानं यथा स्वाश्रयायैव प्रकाशते, तद्वदेव शुद्धसत्त्वद्रव्यमपि बद्धव्यतिरिक्तान् प्रत्येव प्रकाशते इत्यप्यर्थः॥

कञ्चित् पुरुषमिति। प्रकाशो हि व्यवहारानुगुण्यम्। तत् व्यवहर्तारं प्रत्येव वक्तव्यमिति। तत्तद्धियेति। नित्यविकसित-पश्चात्तनविकासान्यतररूपधियेत्यर्थः। विषयग्रहणवेलायामित्यत्राप्येवकारस्याऽऽवश्यकत्वेऽपि तदप्रयोगः, अवतारिकायां पुरुषमात्रस्य प्रस्तुतत्वात्। अतः स्वाश्रयायैवेत्येकत्रैव तत्प्रयोगः। अवस्थाभेदादिति दृष्टान्ततयोक्तिः। नैरपेक्ष्यं=नित्यभूतिगतस्वप्रकाशसापेक्षत्वाभावः। नन्वित्यादि। नित्यविभूतेः स्वाभाविकप्रकाशत्वे तत्प्रकाशस्य कादाचित्कत्वं कतिपयात्मविषये यदीष्टम्, तर्हि तदाभवत् कारणं किञ्चित् वक्तव्यमिति प्रश्नः। अन्तत ईश्वरेच्छारूपकारणमस्तीति

विशेषकारणमस्माभिर्विविच्यते। न चास्मदविवेचितमिति नास्ति; अतिप्रसङ्गात्। सामान्यकारणं तु विश्वकर्तुरिच्छादिकं श्रुतमेव। अत एव हि नित्यानां मुक्तानां च स्वच्छन्दचिकीर्षासन्ततिभेदसिद्धिरिति ॥

**इति नित्यविभूतेरजडत्वपक्षोपपत्तिः ॥ ६३ ॥**

(209) **तत्त्वान्यप्राकृतानि त्रिगुण इव परीणामतश्चेत् भवेयुः**
**स्थानादि स्यादनित्यम्; न यदि; न घटते भूततादीति चेन्न।**
**अत्रत्यक्ष्मादितत्त्वक्रमनियतगुणप्रक्रियाद्यैकरूप्यात्**
**नित्येऽपि स्यात् निमित्तानुगतिनियमितस्तत्तदाख्याविशेषः ॥ ६४ ॥**

दिव्यस्थानादेर्नित्यत्वमाक्षिप्य प्रत्याह **तत्त्वानी**त्यर्धेन। **त्रिगुण इव** त्रिगुणद्रव्ये यथा **परिणामतः** पृथिव्यादिविभागस्तथेत्यर्थः। **स्थानादि स्यादनित्यमि**ति। सङ्घातिनामनित्यत्वे कथं तत्सङ्घातनित्यत्वमिति भावः। अपरिणामपक्षं शङ्कते **न यदी**ति। तत्र चोद्यमाह **न घटत** इति। अप्राकृत(ते?)पञ्चभूतादिव्यपदेशो न युज्यत इत्यर्थः। अनित्येष्वप्याकाशादिपञ्चभूतसमाख्यानिवेशस्यान्यथा सिद्धिमाह **अत्रत्ये**ति। त्रिगुणविकृतीनां हि तत्त्वानां परिणतिविशेषादेकद्वित्रादिगुणनियतिः। दिव्यतत्त्वानां तु नित्यसिद्धा। ततश्च यथा नित्ये चानित्ये च निमित्ताविशेषात् परेषां **पृथिव्यादि-**

**टी**— समाधिः। अस्मदविवेचितमितीति। अस्माभिस्तद्विवेचनं न कृतमिति हेतुना वस्त्वभावो न भवतीत्यर्थः। अत्रेदं बोध्यम्—नित्यविभूतेः स्वयंप्रकाशत्वेऽपि तत एव तद्गतसर्वधर्मभाने मानाभावात्, यथाऽऽत्मनां स्वप्रकाशत्वेऽपि तद्गताणुत्वनित्यत्वादिधर्माणां धर्मभूतज्ञानत एव प्रकाशः, तथा शुद्धसत्त्वगतानेकधर्मभानं मत्यपेक्षमेव। बद्धानां तद्विभूत्यप्रकाशेऽपि, मुक्तिं गच्छतां विरजानद्यतिक्रमणप्रभृति धर्मभूतज्ञानप्रसरात्प्रागेव सामान्यतो नित्यविभूतिस्फुरणं श्रद्धार्थे भवतीति स्वीक्रियते। ईश्वरेच्छायां सत्यां बद्धा अपि तां भूतिं व्यवहरेयुः ज्ञानाप्रसरेऽपि। अस्वप्रकाशवस्तुज्ञानाय दिव्यचक्षुरिव स्वप्रकाशविषये स्वतो व्यवहारमपि सोऽनुगृह्णीयात्। श्रीकृष्णेन गोपान् प्रति वैकुण्ठदर्शनं कारितमिति श्रीभागवतोक्तम्। इदं धर्मभूतज्ञानप्रसरं विना तद्व्यवहारानुग्रहरूपमपि स्यात्। न हि प्रयोजनानाकलनमात्रेण वस्तुनः प्रमितस्यापलापः। विमृश्यस्तु यथावसरमुपयोग इति ॥ ६३ ॥

विभूतेर्नित्यत्वमुक्तम्। तत्र पञ्चानां भूतानामिन्द्रियाणाञ्च तथा नित्यत्वमेव। महदहङ्कारादिस्तु नेष्यते। तत्र तेषां नित्यत्वे पृथिव्यादिव्यवहारो न शक्यः; अजन्यद्रव्यं पृथिवी, अहङ्कारजन्यमिन्द्रियमिति तत्तल्लक्षणाभावादिति शंकते तत्त्वानीति। स्थानादि इत्यादिपदेन गोपुरमण्टपोपवनादिग्रहणम्। न यदि=परिणामो न चेत्। भूततादीत्यादिपदेन इन्द्रियत्वगोपुरत्वादिग्रहः। समाधत्ते अत्रत्येति। नियतगुणेति। रूपादिपञ्चकचतुष्कत्रिकद्विकैकत्वनियमः कठिनत्वशीतत्वोष्णत्वादि च ग्राह्यम्। चक्षुरादीन्द्रियत्वमपि रूपग्राहकत्वादिरूपम्, न त्वहंकारजन्यत्वम्; विमानत्वादिकं संनिवेशविशेषः, न तु भौतिकत्वादीति गुणप्रक्रियायाः आदिपदग्राह्यस्य संनिवेशविशेषरूपग्राहकत्वादेश्च ऐकरूप्यात् प्राकृताप्राकृतयोरविशिष्टत्वात् नित्ये भूतेन्द्रियादावपि प्रवृत्तिनिमित्तानुगत्या पृथिव्यादिसमाख्या नियमिना (अव्याप्त्यतिव्याप्तिरहिता) भवतीत्यर्थः। चोद्यमाहेति। प्रष्टव्ये पृच्छतीत्यर्थः। परेषामिति। तार्किकैः परमाणुषु नित्येष्वपि पृथिवीत्यादिना निमित्तेन व्यवहारः क्रियते। तन्मते अनित्येष्वपि अजन्यत्वं दुर्वचम्। अतः सर्वसंमतलक्षणमिदम् अप्राकृतपृथिव्यादावप्यक्षतमिति भावः ॥ ६४ ॥

शब्दः, तथाऽत्रापि तत्तद्गुणतारतम्यनिमित्तस्तत्तच्छब्द इति नित्यत्वाविरोधः ॥

इति अप्राकृतस्थानादेरनित्यत्वादिपरिहारः ॥ ६४ ॥

(210) निर्दिष्टं पौष्करादौ स्वयमखिलकृता स्वं वपुर्नित्यसिद्धम्;
नित्याऽलिङ्गेति चैकायननिगमविदो, वाक्यभाष्यादि चैवम् ।
नित्यत्वं वासुदेवाह्वयवपुषि जगौ मोक्षधर्मे मुनीन्द्रो
नित्येच्छावस्तथा तत्, तदिह विहतिमान् सांशजन्मादितर्कः ॥ ६५ ॥

अथ परविग्रहनित्यतां प्रमाणतः स्थापयति निर्दिष्टमिति । श्रीपौष्करे तावत्, "नित्यसिद्धे तदाकारे तत्परत्वे च पौष्कर" इति । श्रीसात्त्वते च, "नित्यं नित्याकृतिधरम्" इति । भगवन्मूर्तिं प्रस्तुत्य, "नित्याऽलिङ्गा स्वभावसंसिद्धिः" इति रहस्याम्नायोक्तमाह नित्येति । अत्र ब्रह्मनन्द्यादिसंप्रदायमाह वाक्येति । आप्ततमोपबृंहणमाह नित्यत्वमिति । यथा, 'नित्यं हि नास्ति जगति भूतं

---

श्री— ननु यत् सांशं=सावयवं तत् जन्मवत् विनाशि चेति व्याप्तौ सत्यां कथं पृथिव्यादीनां तत्र नित्यता; कथंतराश्च भगवद्विग्रहगोपुरमण्टपादेरित्याशंकां प्रमाणबाधितत्वात् तर्कः आभासः प्राण्यङ्गत्वादिना कपालशुचित्वाद्यनुमानवदिति गमयति निर्दिष्टमिति । पौष्करादौ-पौष्करसंहितादिरूपपाञ्चरात्रग्रन्थे अखिलकृता=विश्वस्रष्ट्रा भगवता स्वयमेव । रत्नत्रयं हि साक्षात् भगवन्मुखोद्गतम्। "पाञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्" इति च महाभारते । स्वकीयं वपुः नित्यतया निर्दिष्टम् । एकायननिगमं=रहस्याम्नायब्राह्मणं विदन्तश्च नित्यालिङ्गेति श्रुतिवाक्यमधीयते । छान्दोग्यव्याख्यानं ब्रह्मनन्दिकृतं वाक्यनामकम्, तद्भाष्यञ्च द्रमिडाचार्यविरचितम् अन्यच्च एवम्=विग्रहादिनित्यत्वप्रतिपादकम् । न केवलं पाञ्चरात्रे, तदादृतश्रुतौ, संप्रदायग्रन्थे च ; किं तु सर्वसंमते महाभारतेऽपि मोक्षधर्मे मुनीन्द्रः=व्यासः परवासुदेवाख्यं वपुर्नित्यमवोचत् । इदमुपलक्षणं श्रीविष्णुपुराणादेः । नन्वेवं निरवयवत्वसावयवत्वादेर्नित्यत्वानित्यत्वनियामकत्वाभावे किञ्चित् विग्रहादिकमपि नित्यम्, अन्यदनित्यमित्यत्र किं नियामकमित्यत्राह नित्येच्छेति । तत् तत् प्रकृति-नित्यविभूति-चेतनविग्रहगोपुरादिकं नित्येच्छावलात् इदमिदं नित्यं भवत्वितीच्छावशात् तथा=नित्यं भवेत् । इह=एवं वस्तुतत्त्वे, विग्रहविषये उक्तः सांशस्य जन्म च नाशश्चेति तर्कः विहतिमान्=मानबाधित इति ॥ नित्यसिद्धे=नित्यमेव वर्तमाने, तदाकारे वासुदेवाख्ये विग्रहे, तत्परत्वे=तस्य परमात्मनः परत्वे=सर्वापेक्षयोत्कृष्टत्वे । आकारविशिष्टश्चेत्, निकृष्ट एव स्यादिति न मन्तव्यमिति भावः । यद्वा तस्याऽऽकारस्य व्यूहविभवादिमूलतया परत्वे चेत्यर्थः । 'यस्यास्ति सत्ता हृदये तस्यासौ संनिधिं व्रजेत्' इत्युत्तरार्धम् । सत्तेत्यत्र सक्तिरित्येव मूलग्रन्थपाठः । अलिङ्गा=अतर्क्या, युक्त्याऽनुमातुमशक्या । स्वभावसंसिद्धिः=अनादिः। संप्रदायमिति । वाक्यकारेण (वे. सं), "स्यात् रूपं कृतकमनुग्रहार्थम्" इति तद्रूपस्य सर्वस्य कृतकत्वमाशंक्य, "रूपं वाऽतीन्द्रियमन्तःकरणप्रत्यक्षं तन्निर्देशात्" इति परिहारः कृतः । अत्र कृतकत्वनिषेधकत्वात् वाक्यस्य रूपपदं स्वाभाविकपरम् । भाष्यकारेण चैतद्व्याख्यातम्, "अञ्जसैव विश्वसृजो रूपम्...न ह्यरूपाया देवताया रूपमुपदिश्यते" इति । अरूप एव परमात्मा कदाचिदेव रूपं गृह्णातीति नेति हि अत्रोपपाद्यते । हिरण्मय इति शब्दार्थविचारावसरे च भाषितम्, "न मयडत्र विकारमादाय प्रयुज्यते अनारभ्यत्वादात्मनः" इति । आत्मन इति पदं 'हिरण्मयः पुरुषः' इत्युक्तस्य पुरुषस्येत्यर्थकम् । पुरुषशब्दश्चाऽऽकार-

स्थावरजङ्गमम् । ऋते तमेकं पुरुषं वासुदेवं सनातनम्" इति । श्रीवैष्णवे पुराणे, "सदैकरूपरूपाय" इति । "इच्छागृहीताभिमतोरुदेहः" इति स्मरणात् विग्रहस्येच्छागृहीतत्वे कथं नित्यत्वम्, तस्मिन् वा कथं तदित्यत्राह **नित्येच्छात** इति । अयं भावः—अवतारविग्रहेषु तावत् इच्छागृहीतत्वमविरुद्धम् । नित्येऽप्यनिच्छायामनित्यत्वप्रसङ्गमभिसन्धाय नित्येच्छाधीनस्थितित्वविवक्षया इच्छागृहीतत्ववाचोयुक्तिः युक्तेति । अत्र तर्कबाधं परिहरति **तदिति** । **तथा** प्रमाणसिद्धत्वादित्यर्थः । सांशत्वेन जन्मादिसहितत्वं तद्विरहेण वा निरंशत्वं प्रसञ्जयितुं न शक्यमिति भावः । यत्तु **कैश्चिदुच्यते**, "नित्यं निष्कलं निर्विकारं च परं ब्रह्म अशरीरश्रुत्या स्वरूपत एव विचित्रविग्रहाकारम्; तत एव विग्रह[ा]नित्यत्वम्; न चात्र स्वरूपविग्रहयोर्भेदः, नापि भेदाभेदप्रसङ्गः" इति । न तत् भावनीयम्; अन्यथा विश्वाद्वैतस्यापि संग्राह्यत्वप्रसङ्गादिति ॥

**इति परविग्रहनित्यत्वम् ॥ ६५ ॥**

(211) अस्त्रैर्वा भूषणैर्वा किमिह भगवतोऽवाप्तकामस्य? तस्मात्
देवो देहेऽपि वीतावरण इति जगुः केऽपि जैनोपजल्पाः (प्याः ?) ।
किं वा देहेन विश्वात्मन इति वदतां किं प्रतिब्रूयुरेते?
तच्चेत् तस्याश्रितार्थं, तदधिकरणकं सर्वमप्येवमस्तु ॥ ६६ ॥

केचिदाहुः, "वीरशृङ्गारादिरसानुबन्धीनि अस्त्रभूषणा[दी]नि; तानि तदुचिताधिकारिणां

---

वी - विशेषविशिष्टवाची । नित्यं हीति । जीवानामपि नित्यत्वे प्रमाणसिद्धे नित्यान्तरनिषेधः भूतशब्देन पुरुषशब्देन च वपुरपि गृहीत्वा वासुदेवाख्यवपुर्भिन्नस्य वपुषो नित्यत्वविषयकः । नन्वनादिर्विग्रहादिः तथैव नित्येच्छासिद्धत्वादिति व्याहतं वचनम् । इच्छाधीनत्वे अनादित्वायोगादित्यत्राह नित्येऽपीति । नित्येच्छाधीनत्वं नाम न नित्येच्छाजन्यत्वम्; किं तु नित्येच्छाविरहप्रसञ्जनप्रसञ्जिताभावप्रतियोगित्वमिति भावः । इदमिदमनुवर्ततामिति भगवदिच्छायाः प्रतिक्षणं वर्तमानत्वात् पूर्वपूर्वक्षणेच्छाधीना तेषामुत्तरोत्तरक्षणस्थितिः । ईदृशपरिस्थितेरनादित्वान्नोत्पत्तिविनाशप्रसक्तिरित्यपि सुवचम् । तथा सति नित्यमुत्पद्यमानमिति मतिः स्यादिति कृत्वा, तार्किकैः कारणाभावात् कार्याभाव इत्यादौ अभिमता रीतिरनुसृता । माध्वादिपक्षमनुवदति यत्तु कैश्चिदिति । माध्वैः स्वरूपविग्रहयोर्भेदाभेद इष्ट इति विशेषः । परमात्मस्वरूपमेव विग्रहात्मकमपीत्युक्तौ मूर्तिषाड्गुण्यप्रतिपादकवाक्यं समञ्जसम् । 'सा किं त्वमेव तव चेति वितर्कडोलाम्' इति चैतदनूदितम् । न चात्रेति । नित्ये वासुदेवाख्यरूपे । न तदिति । अनित्यविग्रहस्य स्वरूपाभेदे निर्विकारत्वश्रुतिविरोधः । नित्यविग्रहस्य तदभेदे निष्कलत्वश्रुतिविरोधः । कृत्स्नप्रसक्त्यधिकरणे च निरवयवत्वं सूत्रकृता कण्ठोक्तम् ॥ ६५ ॥

स्यान्नाम तस्य विग्रहः, अथाप्यस्त्रभूषणाम्बरादिकं किमर्थम्; तथा महिषीपरिजनद्वारपालपार्षदादिभिर्वा किं तस्य साध्यमस्तीति शंकां परिहरति अस्त्रैरिति । देहेऽपीति । देहे स्वीकृतेऽपीत्यर्थः। यद्वा स्वरूपे देहे चेति । वीतावरण इति पीताम्बरादिकमप्यनपेक्षितमित्युच्यते । जैनाः=दिगम्बराः। पक्षमिमं परास्यति किं वेति। तच्चेदिति। तत्=विग्रहधारणं तस्य आश्रितार्थम्=आश्रितानामुपासनादितत्तदपेक्षितकार्यनिर्वृत्तये इति चेत्, अस्त्रादिकमपि तदधिकरणकं=तन्निष्ठम् एवम्=आश्रितार्थमस्तु। प्रयोजनं शीलनीयम्; न तु प्रयोजनस्यापातादर्शनेन प्रामाणिकेष्वनादरो युक्तः। अवाप्तसमस्तकामत्वञ्च स्वेच्छाधीनलिङ्कसर्वसिद्धयौपयिकसामग्रीसंपन्नत्वमेव, न त्वपूर्वसुखानाश्रयत्वादिरूपमिति प्रागेवोक्तम् । अनन्ततत्तद्रसानुभवजन्यानन्दाश्रयत्वं देहवत् तस्य सर्वसंपत्तिर्युज्यत एवेति

यद्यपि तत्तद्विग्रहेष्वनुसंधेयानि, तथाऽप्यत्यन्तनिष्कामानां तादृशचिन्तनमयुक्तम्, "प्रशान्तं साक्षसूत्रकम्" इत्यादिविशेषणाच्च। न चावाप्तसमस्तकामस्य, "निर्दोषो निरनिष्टः" इत्यादिप्रख्यातप्रकारस्य परमात्मनो भूषणादिसाध्यं किंचिदस्ति। अत इदमुच्यते, "न ते रूपं न चाऽऽकारो नायुधानि न चास्पदम्" इति; तदिदमनुभाषते अस्त्रैरिति। देहेऽपीत्यादिकमुपालम्भकाकुगर्भम्। अपिशब्देन स्वरूपे वीतावरणत्वं व्यज्यते; तेनातिरोहितस्वभावत्वमनुसन्धत्ते। अत्र प्रतिबन्दिमुखेन परिहारमाह किं चेति। अयं भावः— विश्वशरीरिण ईश्वरस्य किं विशेषतः केनचिद्विग्रहेण परिगृहीतेनेति चोदयतां किमेते प्रत्युत्तरं ब्रूयुः? अथ योगविशेषसक्तानां चित्तालम्बनसिद्ध्यर्थमीश्वरस्य दिव्यगात्रपरिग्रह इति, तथैवास्त्रभूषणादिपरिग्रहोऽपीति तुल्यप्रमाणसिद्धत्वादेष्टव्यम्। न च शान्त्यर्थभावनाविरोधः, यथोपदेशमस्त्राद्युपयोगस्य स्वीकार्यत्वात्, "दामोदरं बन्धगतः" इतिवत्। तथा भगवज्जन्मादिवेदिनो जन्मादिनिवृत्तिश्च स्मर्यते। ऊहमात्रेण विरोधवल्ल्सतिस्त्वतिप्रसक्त्यै स्यात्॥ **इति परस्यास्त्रभूषणाद्यनुपपत्तिपरिहारः॥ ६६॥**

(212) **रूपस्थानायुधाख्याजनिलयविधृतिव्याप्तीच्छागुणादेः**
**विश्वाधारे निषेधो विधिरपि विषयद्वैतशाम्यद्विरोधौ।**
**इत्थंभूते निषेधः क्वचिदपि न विधिं बाधते सावकाशः**
**कल्याणैरस्य योगस्तदितरविरहोऽप्येकवाक्यश्रुतौ च॥ ६७॥**

---

प्र०— तदुचिताधिकारिणामिति। अस्त्राद्युचितशत्रुजयादिफलकामानामित्यर्थः। फलार्थोपासनेषु अविद्यमानमप्यनुसन्धेयमिति भावः। निष्कामानां तादृशचिन्तनमयुक्तमिति। शान्तिविरुद्धत्वादिति भावः। निष्कामानुसन्धेयत्वे खलु तात्त्विकत्वमित्याशयः। उपालम्भका आगन्तु (उपालम्भकाकुगर्भ?) मिति। भूषणवत् अलङ्कारप्रधानोपकरणस्य वस्त्रस्याप्यभावात् नग्नत्वप्रसङ्ग इत्युपालम्भः॥ ६६॥

श्री— अनुसंधेयानीति। निष्कामचिन्त्यं यावत्, तावत् सत्यम्; अन्यत् आरोपितमपीति भावः। निर्दोष इति। विग्रहदोषच्छादनार्थं भूषणम्। अनिष्टनिवर्तनार्थश्चाऽऽयुधमिति भावः॥ ६६॥

शास्त्रज्ञापितानां तर्कमात्रेण निषेधायोगेऽपि निषेधशास्त्रबलादभावः स्वीकार्य इति शंकामपाकरोति रूपेति। 'न ते रूपं न चाऽऽकारो नायुधानि न चास्पदम्', 'अनिरुक्तेऽनिलयने', 'अजायमानः', 'महानजः', 'अमृतः', 'अजरममृतम्', 'न च मत्स्थानि भूतानि', 'असंगो न हि सज्यते', 'विश्वस्य कर्तारमव्ययम्', 'निर्गुणम्', 'अकायमव्रणमस्नाविरम्' इति रूपादीनां निषेधो न जीवे, किं तु साक्षादीश्वर एव दृश्यते। अत्र विधिवाक्यैः समर्पितं प्रतियोगि गृहीत्वा निषेधस्तदभावं बोधयतीति न। यतः विधिनिषेधावत्र विषयद्वैतेन विभिन्नविषयकतया विरोधरहितौ। इत्थम्भूते=विधिविहितधर्माक्रान्ते क्वचिदपि निषेधः न विधिं बाधते, यस्मात् सावकाशः=विहितव्यतिरिक्तविषयकत्वेन शक्यनिर्वाहः। अत एव हि स निषेधः सर्वाणीति विशेषणे क्रियमाणेऽपि अग्नीषोमीयादिविहितव्यतिरिक्तविषयकः। 'नातिरात्रे षोडशिनं गृह्णाति' इत्यादिविशेषनिषेधोऽपि न सर्वात्मना विहितापलापकः; विकल्पस्वीकारात्। तत्रविषये विकल्पायोगात् विशेषनिषेधश्चेत् स्यात्, कालदेशभेदेन निर्वाहः स्यात्—न तु विहितस्य मिथ्यात्वम्। परमात्मनि रूपादिविधिनिषेधनिर्वाहप्रकारश्च, क इति नास्माभिरन्वेषणीयः; तस्य श्रुत्यैव प्रदर्शितत्वात्। तदाह कल्याणैरिति। 'अपहतपाप्मा विजरः, इत्यारभ्य, 'सत्यकामः सत्यसंकल्प' इति वाक्यं हि

ये तु मन्यन्ते, "परस्य ब्रह्मणो विग्रहादिषु विधिनिषेधौ दृश्येते, तत्र निषेधप्राबल्याद्विधीनामन्यार्थत्वम्" इति, तान् प्रत्याह **रूपेति**। विषयद्वैतं विषयभेदः। तेन विधिनिषेधौ **शाम्यद्विरोधौ**। ततः किमित्यत्राह **इत्थमिति**। **इत्थंभूते** आलम्भादिवत् विशेषविधिसिद्धावित्यर्थः। एवमनभ्युपगमेऽतिप्रसङ्ग इति भावः। विधिनिषेधयोरत्र विषयभेदं विवृण्वन् तस्यैकश्रुतिपठितत्वेन न्यायनिरपेक्ष(?)सिद्धिमप्याह **कल्याणैरिति**। एतेनापच्छेदन्यायस्यात्र दूरनिरस्तत्वं सूच्यते॥

**इति विग्रहादिविधिनिषेधविरोधप्रशमनम्॥ ६७॥**

(218) **देहादिर्देवतानां हविरनुभवनं सन्निधेर्यौगपद्यं**
**प्रीतिर्दानं फलस्याप्यसदिति कथयन्त्यर्धलोकायतस्थाः।**
**तत्राध्यक्षादिदूरस्वमहिमसदृशाशेषवैशिष्ट्यभाजां**
**तत्तद्विध्यर्थवादप्रभृतिभिरविदुः तत्परैरेव शिष्टाः॥ ६८॥**

अत्र प्रसङ्गात् सर्वदेवतानां विग्रहादिपञ्चकनिरासं परिहर्तुं तमनुभाषते **देहादिरिति**। आदिशब्देन इन्द्रियभोग्यभोगोपकरणादिसंग्रहः। **अर्धलोकायत[मत]म्** कर्माराध्यापह्नवमतम्। एतत्प्रतिक्षिपति **तत्रेति**। तस्मिन् पक्षे प्रतिक्षेप्ये सतीत्यर्थः। **अध्यक्षादिदूरत्वोक्तिः** यूपादित्यैक्यादिवत् नात्र बाधप्रसङ्ग इति ज्ञापनार्थम्। **स्वमहिमसदृश**त्वोक्त्या स्वपरोपयोगिसाधनानुगुण्यसूचनम्। **अशेष**शब्देन तत्तदाराध्यप्रतिनियतविग्रहतदनुबन्ध्यस्त्रादिसर्वसंग्रहः। **प्रभृति**शब्देन मन्त्राणां स्मृतीतिहासपुराणानां

---

{{६६}}- दूरनिरस्तत्वमिति। नियतविरोधपौर्वापर्यत्वात् निरस्तः, एकशास्त्रप्रतिपन्नत्वात् कल्याणहेयगुणविधिनिषेधयोः भिन्नशास्त्रविषयत्वात् अपच्छेदन्यायविषय(यस्य तद्धि?)यत्वं दूरोत्सारितमित्यर्थः॥

{{६७}}- विध्यनन्तरं निषेधे कृते अपच्छेदनयमानिनीषेदिति विभाव्य निषेधानन्तरं विधि घटयत्, तत्र पाप्मसत्यादिशब्दयोजनेन विधेयविशेषं निषेध्यविशेषञ्च विशदयतीति॥ ६७॥

नित्यविभूतिः नित्यविग्रहभूषणायुधनित्यसूर्यादयश्च स्थापिताः। अवतारविग्रहादिकमथ वक्तव्यम्। ततः प्राक् प्रसंगात् देवताविग्रहाद्यपलापिमीमांसकमतं निरस्यति। अवतारस्य देवांशासंपन्नानुग्रहतदन्यनिग्रहार्थत्वात् देवतास्वीकारस्य प्रकृतोपयोगित्वाच्च। देहादिरिति। "विग्रहो हविरादानं युगपत्कर्मसंनिधिः। प्रीतिः फलप्रदानञ्च देवतानां न विद्यते" इति पञ्चकं तन्निषिद्धमाह क्रमेण। इदं पञ्चकम् असत्-नास्तीति वदन्ति। असदिति स्त्रीनपुंसकैकशेषः। स्वपक्षमाह तत्रेति। तत्र =तस्मिन् कथने सति। तदनादरणेनेति यावत्। आराध्यापलापेनाऽऽराधनमात्रस्वीकारिणो अर्धलोकायतस्थाः। अप्रत्यक्षं सर्वमपि नेच्छन्ति चार्वाकाः। अमी मीमांसकास्तु स्वर्गादिकमप्रत्यक्षं स्वीकुर्वन्त एव देवताविग्रहं श्रुतिकण्ठोक्तमप्यपलपन्तीति तदर्धभूताः न शिष्टाः; स्वतःप्रमाणवेदार्थत्यागात्। अनपलापिनस्तु शिष्टाः। ईश्वरदेवतादिस्थापकाः तत्तद्विध्यर्थवादप्रभृतिभिः कर्मविधिवाक्यानां प्राधान्यं स्वीकृत्यैव तत्तद्वाक्यशेषभूतैरर्थवादैः तदर्थानुष्ठानोपयोगिभिर्मन्त्रैश्चैव तत्परैः =स्वस्वप्रतिपाद्यदेवताविग्रहप्रतिग्रहप्रीतिदानादौ तात्पर्यवद्भिः। सर्वस्यापि विध्यपेक्षितत्वादिति भावः। आसां =नाममात्रेण मीमांसकस्वीकृतानां देवतानां अध्यक्षादिदूरैः =प्रत्यक्षानुमानागोचरैः अत एव बाधानर्हैः स्वमहिमसदृशैः =ब्रह्मरुद्रेन्द्रवाय्वग्न्यादितत्तन्माहात्म्यानुरूपैः अशेषैः नानाविग्रहपरिग्रहफलविशेषप्रदानादिभिराकारविशिष्टानाम् अविदुः-निरचिन्वन्॥ अपलापिनामाशयं संग्रहेण निरस्यति

च संग्रहः। अप्रधानेऽप्युपयुक्ते तात्पर्यमस्त्येवेत्यभिप्रायेण **तत्परैरेवेत्युक्तम्। देवताधिकरणे च** विग्रहादिनिरासो न सूत्रोक्तः। प्रयोजकाप्रयोजकविभागमात्रं तु न विग्रहादिसदसत्त्वापेक्षम्। हवि र्देवतासामान्ये हविर्बलीयस्त्वं प्रमाणप्रसक्तिवैषम्यात्। विशेषणतः पर्यायतश्च देवताभेदोक्तिस्तथात्यागोद्देशार्था। विस्तरस्त्वन्यत्र। शिष्टाः=बोधायनटङ्कद्रमिडादयः ॥

इति विग्रहादिपञ्चकनिराकरणपरिहारः ॥ ६८ ॥

(214) साधुत्राणादिहेतोः तदुचितसमये विग्रहांशैः स्वकीयैः

स्वेच्छातः सत्यरूपो विभुरवतरति स्वान् गुणौघान् अनुज्झन्।

व्यूहे संकर्षणादौ गुणनियतिरभिव्यक्तिवैषम्यमात्रात्

वृद्धिह्रासाद्यभावात् स हि भवति सदा पूर्णषाड्गुण्यशाली ॥ ६९ ॥

यद्यपि भगवतो गुणविग्रहादियोगः सत्यः, तथाऽपि षाड्गुण्यस्य व्यापित्वमयुक्तम्; विभवेषु विपरीतदृष्टेः, व्यूहेषु संकर्षणादिषु ज्ञानबलादिगुणद्वन्द्वनियमोक्तेरित्यत्राह साधुत्राणेति। "अजोऽपि

---

७१-देवताधिकरणे चेति। पूर्वमीमांसादेवताधिकरणे देवताविग्रहप्रीत्यादिनिरासेन अपूर्वस्यैव फलद्वारत्वं स्थापितमिति तेषां व्याख्यानम्। तदनुगुणं सूत्रं तु न किञ्चित्। प्रयोजकेति। देवतानां कर्मविषये प्रयोजकत्वं स्वार्थमनुष्ठापकत्वमस्ति न वेति विचार्य अप्रयोजकत्वं साधितम्। तत्र विग्रहादिमत्त्वे प्रयोजकत्वं स्यात्; अप्रयोजकत्वकथनादविग्रहत्वमिति न कल्पनीयम्। तत्सत्त्वेऽपि प्रयोजकत्वासंभवात्। अग्न्यादेर्यागादौ गुणत्वेनैवान्वयात्। अन्यत् तैरुक्तम्, हविषा देवतया च साम्ये, तयोर्मध्ये हविर्बलीयस्त्वस्य सूत्रे स्थापितत्वात् देवताया आकाराद्यभावो गम्यत इति। तदपि नेत्याह हविरिति। हविः प्रत्यक्षसिद्धम्; देवता तु परोक्षा। अतः प्रमाणप्राबल्यात् शीघ्रगृहीतत्वेन हविःप्राबल्यमुक्तमिति समाधानम्। ननु अग्निः, पत्नीवान् अग्निः, पावकोऽग्निः, इन्द्रः, महेन्द्र इत्यादिशब्दभेदमादाय देवताभेद उक्तः। अर्थस्य देवतात्वे पत्नीवत्त्वादिना अग्न्यादिभेदः कथमित्यत्राह विशेषणतः इति। देवतोद्देशेन द्रव्यत्यागेन, तत्तत्पदगमितज्ञाताज्ञातसर्वार्थत्यागाय तत्तत्पदप्रयोगपुरस्सरमेवोद्देशः कार्य इत्युक्त्या अनेकेषां विशेषाणां सद्भाव एव ज्ञापितो भवेत्, नापलपित इति। अन्यत्रेति। सारावलि-तत्त्वटीका-सेश्वरमीमांसादावित्यर्थः। श्रुतप्रकाशिका, तदुपोद्घातरूपाऽस्मदीया उपयुक्तमीमांसा च द्रष्टव्या ॥६८

अथावतारविग्रहान् दर्शयन् तत्रतत्र कतिपयगुणमात्रकथनात् गुणान्तराभावावगमात् कथं गुणपूर्णत्वं सर्वत्र इत्याशंकामपि, 'स्थितानां गुणानां विग्रहद्वाराऽनाविष्कारात् आविर्भावितगुणमात्रमादाय तद्वत्ताव्यवहारो न तदितराभावतात्पर्यकः। क्षुद्रो जीवोऽपि कदाचित् गभीरमनाः स्वमनीषितं नाविष्करोति। किं तावता तस्य तदभावः' इति परिहरति साध्विति। 'पूर्वार्धेनावताररहस्यसंग्रहः। तत्र षडंशाः, "अवतारस्य सत्यत्वम् अजहत्स्वस्वभावता। शुद्धसत्त्वमयत्वञ्च स्वेच्छामात्रनिदानता। धर्मग्लानौ समुदयः साधुसंरक्षणार्थता" (र-त्र-सा-चरम) इति। सदेति। परमात्मस्वरूपे यत्प्रदेशावच्छेदेन एकस्मिन् विग्रहे गुणमेकं प्रकाशितवान्, तदवच्छेदेनैव गुणान्तरं विग्रहान्तरे प्रदर्शयति। तत्र तस्मिन् प्रदेशे तस्य तस्य गुणस्य कादाचित्कत्वांगीकारे सदातनत्वभंगः स्यात्। स्वाभाविकत्वाच्च। व्याप्यवृत्तित्वाभावे मानाभावात् स्वरूपव्यापित्वञ्च गुणानामेष्टव्यमिति। गुणनियतिः=संकर्षणे ज्ञानबले द्वे, प्रद्युम्ने वीर्यैश्वर्ये, अनिरुद्धे शक्तितेजसी इति। सर्वतः सर्व-

सन् अव्ययात्मा" इत्यादिप्रसिद्धमिह प्रतिसन्धेयम् । प्रतिनियतगुणद्वन्द्वोक्तेरन्यथासिद्धिमाह व्यूह इति । अयं भावः—

श्लो—निगूहनं चतुष्काणां द्वन्द्वानां च प्रकाशनम् । षड्गुणस्य तथाभूतसमाधिस्थोपयोगतः ॥

मोहनशक्त्या मनुष्यादिसजातीयशङ्कास्पदेषु विभवेष्वपि हि सिद्धं षाड्गुण्यम् । व्यूहेषु कैमुत्यसिद्धम् । सर्वेष्वपि हि भगवत्त्वं पूर्णत्वं च मख्याप्यते । संकर्षणादौ व्यवस्थया गुणद्वन्द्वाभिव्यक्तेः गुणचतुष्कान्तराणामनभिव्यक्तेश्च विशेषनिर्देशोपपत्तिरिति । "न कर्मणा वर्धते नो कनीयान्", "स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयान्", "अन्यूनश्चाप्यवृद्ध(द्धि)श्च' इत्यादिश्रुतिस्मृतिबलेन वृद्धिहासाद्यभावाद् व्यूहादिषु गुणकार्त्स्न्यमाह वृद्धीति ॥

इति परव्यूहादिपञ्चकस्यापि पूर्णषाड्गुण्यवत्त्वम् ॥ ६९ ॥

(215) शास्त्रादीनां प्रवृत्तिः प्रतिततु नियता स्याद्धि संकर्षणादौ ;
जीवादौ या(यौ ?) विभज्याभिमतिरिह लयोत्पत्तिरक्षाविधिश्च ।
तत्तद्विद्याविशेषप्रतिनियतगुणन्यायतस्तौ तु नेयौ
सर्वस्यैकोऽभिमन्ता स हि सकलजगद्व्याप्रतिष्वेककर्ता ॥ ७० ॥

---

व्यी—गुणवत्त्वास्वीकारे वृद्धिहासाभावप्रतिपादकवाक्यविरोध इत्याह वृद्धीति । परमात्मनः पूर्णत्वञ्च सर्वत्र षाड्गुण्यपूर्णत्वमिति भावः ॥ मोहनशक्त्येत्यस्य शंकायामन्वयः ॥ ६९ ॥

ननु व्यूहानां भगवदवतारत्वे निश्चिते स्थितानामपि गुणानामनाविष्कारमात्रमिति निर्वाहः स्यात् । भगवदंशयुक्ताः जीवविशेषा एव व्यूहाः, यथा ब्रह्मरुद्रेन्द्रा इति स्वीकृत्य गुणानामभाव एव मन्यताम, अवश्यञ्च जीवत्वं संकर्षणादिषु त्रिषु स्वीकर्तव्यम्, प्रतिनियतकार्यदर्शनादिति शंकां तद्विषयशोधनेन निरस्यति शास्त्रेति । प्रतिनियतकार्येत्यनेन शंकितुर्विवक्षितं किम् । एकैकस्यांशत्रयमस्ति । 'संकर्षणो नाम जीवो जायते', 'प्रद्युम्नसंज्ञं मनो जायते', 'अनिरुद्धसंज्ञोऽहंकारो जायते' इति क्रमेण त्रयाणां जीवमनोहंकाराभिमानित्वमुक्तम् ; इह=व्यूहे गुणद्वयविभागस्थले संकर्षणस्य संजिहीर्षावत्त्वं शास्त्रप्रवर्तकत्वञ्च, प्रद्युम्नस्य सिसृक्षावत्त्वं धर्मप्रवर्तक(नेतृ)त्वञ्च, अनिरुद्धस्य रक्षणाभिसंधिमत्त्वं तत्त्वबोधकत्वञ्चेति गुणक्रियाविभागोऽपि कृतोऽस्ति । तत्र यास्तावत् क्रियाः तत्तत्प्रवर्तकत्वबोधकत्वरूपा उक्ताः, तासाम्, देहनिष्ठत्वात् भगवदवतारभूतासु संकर्षणादितनुषु प्रत्येकं स्थितिर्युज्यत एव । अतो मध्ये जीवं विनैव शास्त्रादीनां=शास्त्र-धर्म-तत्त्वानां प्रवर्तनं नियतं स्यात् । न तत्र विरोधः कश्चित् । प्रथमपादे हिशब्दः तदविरोधस्पाष्ट्यदर्शी । यानि तु जीवाभिमानित्वं संजिहीर्षा च, मनोभिमानित्वं सिसृक्षा च, अहंकाराभिमानित्वं रिरक्षिषा चेति त्रीणि द्विकानि, तानि आत्मगुणत्वात् विग्रहे न भवन्ति ॥ आत्मा तु त्रयाणां परमात्मा एक एवेति कथमेषां व्यवस्थितत्वम् । अतो जीवात्मनिष्ठत्वमेषां स्वीकृत्य विभागः समर्थनीय इति नैषां साक्षादवतारत्वमिति सत्यं शंका भवेत् । तत्रोच्यते । जीवादौ=जीवे मनसि अहंकारे च विभज्य अभिमतिः= स्वकीयत्वाभिमानः संकर्षणादिगतः, तथा लयोत्पत्तिरक्षाविधिश्च । विधिः प्रवर्तना, उत्पादना, लयो जायताम् उत्पत्तिर्भवतु रक्षा भवतु इतीच्छा, एतौ द्वौ तत्तन्नियतत्वेन नेयौ, यथा सद्विद्यादहरविद्यादिगुणाः वस्तुनः सर्वेषां भगवन्निष्ठत्वाविशेषेऽपि तत्तद्विद्यानियतत्वेन भाव्यन्ते, तथा साधारण्येऽपि संकर्षणादावेव तत्तद्धिकरत्वेनोपासनं कार्यम् । 'रुद्राः कालान्तकाद्याश्च', 'मन्हा दक्षादयः',

उक्तेषु व्यूहेषु क्रमात् शास्त्रप्रवर्तनधर्मनयनतत्त्वगमनरूपमुपकारत्रयं जीवमनोहङ्कारेषु अभिमानत्रयं संहारसृष्टिरक्षारूपलीलात्रयं च व्यपदिश्यते; तत्र प्रथमत्रिके व्यवस्थानुपपत्तिचोद्यं सुपरिहरमित्यभिप्रायेणाह **शास्त्रादीनामिति**। द्वितीयतृतीयत्रिके(कयुगे?) विरोधं परिजिहीर्षुरनुभाषते जीवादाविति। अत्रेदमाभिप्रायिकं चोद्यम्—यदि सङ्कर्षणादयोऽपि वासुदेव एव स्युः, तदा अभिमानत्रयस्य संजिहीर्षादित्रयस्य च एकाश्रयत्वात् व्यवस्था न स्यात्; अतस्ते परस्मादन्ये केचित् पुरुषा इति। परिहरति **तत्तदिति**। यथा एक एव परमात्मा तत्तद्विद्याविशेषव्यवस्थितगुणविशेषवत्तयोपास्य इति **गुणोपसंहारपादे** निरणायि, तथाऽत्रापि मिथस्संघटितविग्रहाभिमानव्यापारविशेषवत्तया व्यूहनिष्ठैर्विभज्यानुसन्धेय इति भावः। चेतनभेदकल्पने बाधमाह **सर्वस्येति**। न हि विश्वमूर्तेरभिमानः कश्चित् संकुचति। न च संहारादौ कश्चित् उदास्ते। न च हिरण्यगर्भादिवत् विशेषणभूतचेतनान्तराण्यत्र वचनान्तरप्राप्तानि; प्रत्युत ऐक्यमेव प्रतिपादितमित्याशयः॥ **इति व्यूहेषु विशेषाभिमानादिविरोधपरिहारः ॥ ७० ॥**

(216) त्रिव्यूहः क्वापि देवः क्वचिदपि हि चतुर्व्यूह उक्तस्तदेवं
व्याघातेऽन्योन्यबाधात् उभयमिदमसत्कल्पनामात्रमस्तु।
तन्नाद्ये व्यूहभेदे त्रियुगगुणतया चिन्तनीये परस्मात्
युक्ता भेदाविवक्षा तदनुपगमने तत्त्वसंख्यादिबाधः ॥ ७१ ॥

७१–'विष्णुर्मन्वादयः कालः' इति लयोत्पत्तिरक्षाव्यापृतत्वेन विष्णुपुराणोक्तेषु जीवाः स्वकार्यशक्तिप्रदतया संकर्षणादिमूर्तीस्तत्तद्गुणवत्त्वेनोपासते, अन्ये च तद्विवेकिन इति विभागसार्थक्यम्। किञ्च तद्द्विकं प्रत्येकं तत्तत्तन्त्ववच्छेदेन परमात्मनि उत्पद्यमानतया नियतत्वेन भावनीयम्। विभुद्रव्यगतविशेषगुणानां ज्ञानसुखादीनां प्रतिनियतप्रदेशावच्छेदेनाव्याप्यवृत्तित्वमपि स्वीकृतं तार्किकैः। अवश्यञ्च जीवानां द्वारतास्वीकारेऽपि तत्तन्मुखेन परमात्माऽभिमन्ता स्वीकर्तव्यः। अतः सर्वत्रैक एवाभिमन्ताऽस्तु। किं जीवैः। स हि, 'यतो वा इमानि भूतानि' इत्यादौ सृष्टिस्थितिसंहारविषयस्वतन्त्रकर्तृत्वेन श्रुतोऽस्ति। अत एषां तत्तदवच्छेदेनोत्पत्त्या तत्तदवच्छेदेन स्थितिभावनात् नाव्यवस्थेति। अतो जीवद्वारीकरणाभावात् साक्षात् भगवदवतारा एवेमे॥ ७०॥

एवमपि व्यूहत्रित्वचतुष्ट्ववचनविरोधात् व्यूहत्वमविद्यमानकल्पनामात्रमिति पूर्वोक्तं सर्वमतथ्यमिति पूर्वार्धेन शङ्कते त्रीति। पाञ्चरात्रे क्वचित् व्यूहत्रयमेव निरूप्य त्रिव्यूहशब्दोऽपि प्रयुक्तः, अन्यत्र चतुर्व्यूहः। अतो व्याघातात्=मिथोविरोधात् उभयमपि बाधितमिति उभयमपि नास्त्येव। तर्हि कथं शास्त्रेणोक्तमिति चेत्, दृष्ट्युपासने शास्त्रं कल्पितमेव हि ब्रवीतीति। निरस्यति तन्नेति। चतुर्व्यूहपक्षस्यैव वास्तवत्वेऽपि प्रणवे अक्षरत्रयस्यैव सद्भावात् तदर्थतया व्यूहत्रयमात्रध्यानं विधातुं व्यूहत्रयपक्षावलम्बनम्, व्यूहभेदे=व्यूहत्रये त्रियुगगुणतया=त्रीणि युगानि गुणाः यस्य तत्तया चिन्तनीये स्थिते, परस्मात्=परवासुदेवात् व्यूहवासुदेवस्य षाड्गुण्यप्रकाशरूपतासाम्येन, स्थितभेदाविवक्षैव युक्ता। सर्वस्य श्रुतस्य कल्पनामात्रत्वकल्पनापेक्षया परव्यूहवासुदेवयोः क्वचित्परम् अभेदकल्पना साधीयसी। युक्ता भेदाविवक्षा। भेदविवक्षाया अभावमात्रम्। क्वचिदभेदविवक्षाऽपि स्यात्। आद्ये इत्यस्य त्रिव्यूहपक्षे इत्यर्थः। तदनुपगमने एवं विरोधपरिहारानभ्युपगमे; त्रिव्यूहशास्त्रस्य व्यूहान्तराभाव एव तात्पर्यमिति वादे तत्त्वसंख्यादिबाधः स्यात्। चतुर्विंशतिसंख्यासंख्यातेषु तत्त्वेषु

मानमेयमलिम्लुचास्त्वाहुः—'त्रिव्यूहचतुर्व्यूहवाक्ययोः विरोधात् सर्वमेतदुपासनार्थकल्पनामात्रसिद्धम्' इति। तदनुवदते त्रिव्यूह इति। प्रतिवदति तन्नेति। विरोधं शमयति आद्य इति। वस्तुतः चतुर्व्यूहत्वेऽप्याद्यव्यूहस्य षड्गुणतयाऽनुसन्धेयत्वात् परस्मादभेदं विवक्षित्वा त्रिव्यूहत्वोक्तिः प्रवृत्तेति न मिथो बाधः शङ्कनीय इति हृदयम्। उक्तप्रकारानभ्युपगमेऽतिप्रसङ्गमाह **तदनुपगमन** इति। एवमिह प्रसङ्ग.—यदि न्यूनाधिकनिर्देशमात्रात् विरोधः, तदा क्वचिदप्यनुक्तमन्यतो ग्राह्यं न स्यात्। ततश्च विद्यैक्ये गुणोपसंहारः त्यज्येत। तथा **छान्दोग्ये** भूतत्रयं **तैत्तिरीयके** भूतपञ्चकम् अन्यत्र च तथा तथा न्यूनमधिकं च तत्त्वजातमधीतमिति तत्त्वसंख्याव्यवस्थापनं च विलीयेतेति। आतिवाहिकगणनादिसंग्रहार्थः आदिशब्दः। एवं च पञ्चमूर्त्यादिपरिगणनाऽपि परित्राततेति वेदितव्यम्॥

**इति व्यूहगणनावैषम्यनिर्वाहः ॥ ७१ ॥**

(217) **मूर्तीनां मूलमूलिप्रभृतिषु बहुधा वैपरीत्यप्रतीतेः**
**वर्णादौ बीजतादिव्यवहृतिवदियं वर्णना भावनार्था।**

---

७१— तत्रतत्र नानारूपेण न्यूनतयैव कथनात् व्याघाते बाधात् सर्वलोपः स्यात्। एवमातिवाहिकगणनायामपि मिथोव्याघातात् सर्वबाधः स्यात्। व्यूहापलापे व्यूहान्तरकेशवाद्यपलापोऽपि स्यात्। विभवहार्दार्चारूपमूर्तिष्वपि मूर्त्यपलाप-जीवीयत्वकल्पनादिक्षोभोऽप्यापद्येत। अतो नायं पन्थाः। "तदनुपगमने तत्त्वसंख्यादिबाधः" इति मूलस्यैवमप्यर्थः स्यात्। यदि व्यूहत्रयमेवेष्यते, वासुदेवाख्यो व्यूहो नेष्यते, तदा एकैकस्मात् केशवादयस्त्रयस्त्रयो जायन्त इति द्वादशव्यूहान्तरसंख्या न स्यात्—परवासुदेवस्यैव केशवादित्रिकृकारणत्वे इतराविशेषेण व्यूहान्तरत्वेन गणना न स्यात्। आदिना विशाखयूपे चातुर्व्यूह्यचातुर्विध्यकथनम्, 'चतुरात्मा चतुर्व्यूहः' इति प्रसिद्धवचनादिकञ्च बाध्येतेति। एवमर्थान्तराशयेनैव, श्लोकेऽत्रांशे तुल्यन्यायादिति पदस्याप्रयोगः॥ ७१॥

अशान्तरेषु प्रमाणानां परस्परविरोधं प्रदर्श्य सर्वस्य भावनामात्रार्थतामाशंक्य, परिहरति मूर्तीनामिति। मूर्तीनां=भगवन्मूर्तीनां मध्ये किं कस्य मूलमिति मूले कारणे, मूलिनि कार्ये तत्तद्व्यापारादिषु प्रमाणग्रन्थेषु वैपरीत्यस्य=मिथोविरोधस्य प्रतीतेः सर्वेयं वर्णना भावनार्था=तथातथा ध्यानार्था। अवस्तुनोऽपि ध्यानं कार्यकरं दृष्टम्। अत एव मन्त्रजपादौ मन्त्रे वर्णस्य=अक्षरस्य कस्यचित् बीजत्वं कस्यचित् शक्तित्वं कवचकीलकशुक्रादिवर्णप्रभृतिकञ्चाविद्यमानमेवाऽऽरोप्य भाव्यते। व्यूहादीनां प्रादुर्भावक्रमे विपर्यासे प्रमाणमन्वेषणीयम्। अन्यत् वैपरीत्यमेवमुदाहर्तुं शक्यम्, पुरुषसूक्तभाष्ये पुराणीयतत्त्वाध्यायवचनान्येनमुपात्तानि, "परमव्योमनिलयो वासुदेवः सनातनः। शरीरात् स्वाज्जगत् स्रष्टुं संकर्षणमभावयत्॥ स चाण्डजातमसृजत् महाभूतानि पञ्च च। दशोत्तराणि सर्वाणि परस्तात् प्रकृतेर्व्यधात्॥ तत्रस्थानाञ्च भूतानामन्योन्यानुभवाय च। प्रद्युम्नं भावयामास सदा कामरसप्रदम्॥ एवमप्राकृतान्येव बाह्यान्यण्डानि केशवः। सृष्ट्वाऽत्र प्राकृतञ्चाण्डं स्रष्टुं दध्रे समानसम्॥ ततः स वासुदेवोऽयं प्रद्युम्नादुदपादयत्। सर्वस्य जगतः कोशमनिरुद्धाह्वयं हरिम्॥ स चानिरुद्धो भगवान् आदौ जलमभावयत्। जले तस्मिन् प्रचिक्षेप निजवीर्यं जगन्मयम्॥ तद्धिरण्याण्डमभवत् अण्डात् ब्रह्मा व्यजायत" इत्यादि। वराहपुराणे च, "सिसृक्षोरनिरुद्धाख्यात् अण्डं प्रथमसुद्भौ। अण्डाद् ब्रह्माऽप्यजायत निर्मातुं सकलं जगत्" इत्यादि। अत्र पूर्वोक्तरीत्या सृष्टिस्थितिसंहारकार्यव्यवस्था न दृश्यते। संकर्षणप्रद्युम्नानिरुद्धानां त्रयाणामपि प्रतिनियतभागसर्गकरत्वम् अनिरुद्धस्य अन्यत्र रक्षकत्वेनोक्तस्यात्र ब्रह्मस्रष्टृत्वं ब्रह्माणं प्रति वेदोपदेशः श्रीहयग्रीवावतार

**मैवं कालादिभेदात् प्रशमितविहतौ कल्पितत्वं न कल्प्यम् ;**
**नो चेत्, ब्रह्माद्युदन्तेष्वपि विषमकथाभेदवैयाकुली स्यात् ॥ ७२ ॥**

पुनरपि मुखान्तरेण मूर्तिकल्पनामनुभाषते **मूर्तीनामिति** । अस्ति हि तत्त्वसंहितासु अभिन्ननाम्नो मूर्तेः भिन्नकारणकत्वं वर्णभुजादिवैषम्यं च । अतो मन्त्राक्षरेषु बीजतत्कार्यव्यपदेशवत् सितरक्तादिव्यपदेशवच्च भावनार्थं दृष्ट्युपदेशमात्रमेतदिति भावः । एतन्निषेधति **मैवमिति** । काल्पनिकत्वशङ्कामूलं विरोधं परिहरति **कालादिभेदादिति** । उक्तानभ्युपगमेऽतिप्रसङ्गमाह **नो चेदिति** । सन्ति हि चतुर्मुखस्य सप्त जन्मानि ; रुद्रस्य ब्रह्मपुत्रत्वं ब्रह्मानुजत्वं च । इन्द्रा(चन्द्रा)दीनामपि कारणभेदाः कथ्यन्ते । न चैतेषु कल्पादिभेदप्रशमितविरोधेषु काल्पनिकत्वशङ्कावकाशः, तथाऽत्रापि स्यात् ; अन्यथा तत्रापि विपरीतापत्तिरिति ॥ इति प्रादुर्भावादिप्रक्रियान्तरोपपत्तिः ॥ ७२ ॥

(218) **ईशस्य व्यष्टिभेदान् अभिदधति मनोवाङ्मयादीन् यदन्ये,**
**तत्र त्रेधा यदीशा विकृतिः, अविषया निर्विकारागमाः स्युः ।**
**नित्यत्वित्वे तु नैकेश्वरनियमगतिः ; भ्रान्तिसिद्धे विभागे**
**मायादायादपक्षः ; श्रुतिरपि नियतैरस्त्वधिष्ठानभेदैः ॥ ७३ ॥**

---

ण्यौ—इत्यादि च वर्ण्यते । अतः कस्यांशस्य को व्यूहो मूलमित्यत्राव्यवस्थैव लक्ष्यते इति । समाधत्ते मैवमिति । कालादिभेदात् कल्पभेदेन सर्वमपि तथ्यमित्युक्त्या प्रकृतविषये प्रशमितविहतौ = प्रशमिता विहतिः विरोधो यत्र तथाभूते सति, कल्पितत्वं मिथ्यात्वं भावनामात्रार्थत्वं न कल्पनीयम् । नो चेत् = ईदृशनिर्वाहाकृतौ ब्रह्माद्युदन्तेष्वपि = स्तोत्रभाष्यदर्शितरीत्या ब्रह्मणः भगवतश्चक्षुःश्रोत्रादिभ्यः सप्तभ्योऽवयवेभ्यः पृथक् पृथक् जन्म कथयतां वचनानां मिथोविरोधात् 'भगवतो ललाटात् क्रोधजो रुद्रोऽजायत' इति महोपनिषदि, 'चतुर्मुख एव रुद्रमजनयत्' इति शतपथब्राह्मणे च कथनात् मिथो विरोधात्, एवमन्यान्यविषयेऽपि । तथा *श्रीरामस्य मूर्तिः* क्षीराब्धिशायिना भगवता देवैः प्रार्थितेन स्वांशत्वेन कृता, एवं श्रीकृष्णस्यापीति कतिपयग्रन्थेषु । विष्णुरेव देवैः सदसि देवैः प्रार्थितः प्रादुर्बभूव, उपेन्द्र एव श्रीकृष्ण इति च । विशाखयूपाख्यस्य *भगवद्रूपस्य चतुर्षु स्थलेषु चतसृषु दिक्षु प्राच्यादिषु शाखावत् वासुदेवादिमूर्तयः सन्ति ।* तासां जाग्रत्सुषुप्तमूर्छितशब्दव्यपदेश्यता व्यापारन्यूनाधिकभावात् । तत्र जाग्रच्चातुरात्म्यस्य सुप्तचातुरात्म्यं कारणमित्युक्त्या पूर्णसंहृतिव्यापारशालिनः जाग्रत्संकर्षणस्य वासुदेवादेव साक्षादुत्पत्तिरिति नास्तीति ज्ञायते । विषमैः मिथोविरुद्धैः कथाभेदैः वैयाकुली = व्याकुलता वचनानां स्यादिति सर्वत्रैवानाश्वास इति अर्धलोकायतिकेषु प्रवेशं लिप्समानेषु तानपि निरस्य लोकायतिका एव स्थिति लभेरन्निति ॥ ७२ ॥

ज्योतिरधिकरणश्रुतप्रकाशिकायामप्यनूदितो यादवप्रकाशीयोक्त ईशव्यष्टिभेदपक्ष इह निरस्यते ईशस्येति । आदिना प्राणमयपरिग्रहः । अन्ये अभिदधतीति यत् तत्रेत्यन्वयः । यद्वा यत्पदमभिधानक्रियाविशेषणम् । तत्र = अभिधाने इत्यर्थः । विकल्पत्रयं मनसि निधाय प्रथमकल्पमुक्त्वा निरस्यति त्रेधेति ; द्वितीयं नित्येति ; तृतीयं भ्रान्तीति । अयमर्थः—यदि ईशस्य विकृतिः = परिणाम एव वाङ्मयादिरूपेण त्रेधा, तदा निर्विकारत्वप्रतिपादका आगमाः निर्विषया भवेयुः। ब्रह्मणः सन्मात्रस्य सविकारत्वेऽपि निर्विकारत्वश्रुतय ईशविषया इति भवद्भिरुक्तम् । तदपीदानीं त्यज्यत इति। अपरिणा-

इह केचिदीश्वरस्वरूपेऽपि भोक्तृभोग्यन्यायेन समष्टिव्यष्टिभेद वर्णयन्ति, वदन्ति च मनोमय प्राणमयवाङ्मयाख्य व्यूहत्रयम्, तदनुभाषते ईशस्येति। ईदृशोऽयं भेद किं भोग्यवत् परिणामत, उत भोक्तृवत् स्वभावत, अथ प्रतिबिम्बितचन्द्रादेरिव भ्रान्तित इति विकल्प मन्वान प्रथमे निर्विकारश्रुतिविरोधमाह तत्रेति। त्रेधेत्यनन्तव्यष्ट्यन्तराणामुपलक्षणम्। सर्वात्मनो ब्रह्मण सविकारत्वात् ईश्वरांशे हि तैर्निर्विकारत्वश्रुति निवेशिता, तत्राप्यनवकाशत्व तस्या प्रसक्तम्। द्वितीय दूषयति नित्य त्रित्व इति। "एको देव सर्वभूतेषु गूढ", "एक शास्ता, न द्वितीयोऽस्ति शास्ता" इत्यादिभि विरोध स्यादिति भाव। तृतीयेऽनिष्टमाह भ्रान्तीति। मायादायादपक्षः मायार्जितभ्रान्तिविभागोप जीविपक्ष, स ते(तेषा?) स्यादिति शेष। सत्यमीश्वरमनभ्युपगच्छतामीश्वरत्रित्वश्रुतिस्तर्हि निरधिष्ठानभ्रम विषया स्यादित्यत्राह श्रुतिरपीति। अय भाव —ईश्वरस्तावत् मायोपहिते ब्रह्मणि कल्प्यताम्, त्रित्व च तस्य द्विचन्द्रादिन्यायात् मायाविलासविप्लुतब्रह्माधिष्ठानतया स्वीक्रियतामिति। यद्वा मनोमयादि विभागवादिनी श्रुति कथ निर्वोढव्येत्यत्राह श्रुतिरपीति। अपिशब्द इह एतादृशश्रुत्यसम्भवाभिप्राय। सम्भवेऽप्युच्यते, परोपकारकमन प्रभृत्यधिष्ठानभेदात् ईश्वरस्य मनोमयत्वादिविभागो निरुह्यतामिति॥

**इति ईश्वरस्वरूपविषयसमष्टिव्यष्ट्यादिवादनिरास: ॥ ७३ ॥**

**(219) युक्तिः प्रश्नोत्तरादेः न हि पुरुषमिदां बुद्धिभेदं च मुक्त्वा**
**तस्मात् व्यूहादिभेदे कतिचन पुरुषाः स्युः परेणानुबद्धाः।**

---

पुर्व— न्यायेनेति। यथा भोक्तृषु जीवेषु, भोग्येऽचिद्वस्तुनि च समष्टिव्यष्टिभाव, तद्वदित्यर्थ। 'श्रुतिरपि' इत्यादि श्लोकशेष, मायावादपक्षस्य प्रस्तुतत्वात् अधिष्ठानशब्दस्य भ्रमाधिष्ठाने प्रसिद्धिप्राचुर्याच्च तन्मते निरधिष्ठानभ्रमविषयत्वप्रसङ्गपरिहारपरतया व्याचष्टे सत्यमीश्वरमित्यादिना। स्वपक्षोपपादनपरत्वस्य न्याय्यत्वात् अन्यथा व्याचष्टे यद्वेति ॥ ७३ ॥

वी— मेन सर्वदा ईश्वरत्रयमनादीत्युच्यते चेत् 'एकश्शास्ता', 'एको देव ' इत्यादिश्रौतनियमस्य गति र्नास्ति। अथ चन्द्रे द्वित्वादिकल्पनावत् एकस्मिन् ईशे नानात्वकल्पनेति चेत्—तर्हि मायादायादपक्ष स्यात्—मृषावादाद्दत्तमायाया दायम् अंशमाददानाना पक्षोऽय स्यात्। तद्दायग्रहणमूलक स्यात्। जगन्मिथ्यात्वासहिष्णवोऽपि भवन्त श्रुतिवाक्य मिथ्यार्थप्रतिपादकतया नयन्तीति चित्रम्। तर्हि वाङ्मयादिश्रुत्यर्थ क इति चेत्—प्राणेन्द्रियमध्ये वाक्प्राणमनसा तत्तत्र प्राधान्य प्रतिपादयन्ति श्रुतय। अत्र तदौपयिकमधिष्ठानवैचित्र्य त्रिविधमुच्यते इति नेश्वरव्यक्तिभेद इति। भोक्तृभोग्य न्यायेनेति। यथा भोक्तार देवमनुष्यादिभेदा अनेके, यथा च भोग्यानि भूतभौतिकभेदेन, तथेशोऽपि त्रेधेति। उपलक्षणमिति। यदि कश्चित्, 'अन्नमय प्राणमय' इति श्रुति गृहीत्वा ईशा पञ्चेति ब्रूयात्, अयो वाऽन्यथा, सर्वमेव निरस्यमिति भाव। श्रुतिरपीति श्लोकभाग द्वेधा व्याचिकीर्षु प्रथमप्रकारमाह सत्यमित्यादिना। ईशत्रयस्यापि कल्पितत्वे चन्द्रद्वित्व प्रतिबिम्बन्यायाभावात् निरधिष्ठानभ्रम किल स्यात्। मायादायादा कथ तथा ब्रूयुरिति चेत्—मायोपहित ब्रह्मैवाधिष्ठानम्। कल्पनात्रय तु एकस्या रज्जौ सर्पभूदलनाम्बुधाराकल्पनावत् अधिष्ठानगतभेदप्रकारे स्यादिति पूर्वपक्ष्यर्थनिर्वाहप्रकारपरा योजना। सिद्धान्तार्थप्रतिपादिकामन्या योजनामाह यद्वेति ॥

युक्तिरिति श्लोकेन—यथाऽनेकव्यष्टिरूपत्वमीशस्य ईश्वरानेकत्वस्वीकारेण दुर्वचम्, तथा सङ्कर्षणाद्यवताररूपत्वमपि दुर्वचमेव मूर्त्योरुपदेष्टृपदेश्यभूतयोरेकात्म्यायोगादित्याक्षेपमनूद्य परि-

**तन्न ; स्वच्छन्दलीलः स्वयमभिनयति स्वान्यतां सर्ववेदी**
**तद्वत् शिष्यादिवृत्तिप्रसृतिमिह सतां शिक्षयन् सानुकम्पः ॥ ७४ ॥**

पुनरपि परव्यूहादिषु पुरुषभेदमाशङ्कते युक्तिरिति । आदिशब्देन कृष्णबलभद्रादिषु मिथो विषादकोपादि संगृह्यते । अस्ति तावत् सात्त्वतादिषु गुरुशिष्यन्याये (न्यायेन?) वासुदेवसंकर्षणादीनां प्रश्नप्रतिवचनक्रमेण विद्याधिगमः । तत्र न तावत् स्वात्मानं स्वयं पृच्छति प्रतिवदति वा ; हेतुप्रयोजनयोरसंभवात् । अतः प्रष्टृप्रतिवक्तृचेतनभेदः कस्य इति । ननु भेदकानिश्चये कथं भेदक्लृप्तिरित्यत्राह बुद्धिभेदं च मुक्त्वेति। न्यूनबुद्धिः [परि]पृच्छेत् [चेत् ?], अधिकबुद्धिरनुशास्तीति लोकवेदप्रसिद्धमिति भावः । एतदन्यथासिद्धमित्यभिप्रायेण प्रतिक्षिपति तन्नेति । चेतनभेदाभावेऽपि प्रश्नोत्तराद्युपपत्तिमाह स्वच्छन्दलील इति । स्वयमित्यनेन स्वस्यैवेति गम्यते । अभिनयप्रयोजनमाह तद्वदिति । शिष्याचार्यादिभिरेवं वर्तितव्यमिति धार्मिकशिक्षणं देवस्य दयान्वितलीलाप्रसूतमिति भावः ॥

**इति ईश्वरस्य स्वात्मनि शिष्याचार्यत्वाद्यभिनयफलम् ॥ ७४ ॥**

(220) **विश्वान्तर्वर्तिबालोदरगतमखिलं कस्य विश्वासभूमिः ?**
**तस्मात् औपेन्द्रमीदृक् भवतु रसवशादिन्द्रजालं प्रवृत्तम् ।**
**मा भूत् ; आश्चर्यशक्तेरवितथमिदमित्येव सर्वाप्तसिद्धेः ;**
**व्याघातस्योपशान्तिः तदनुगुणदशाभेदयोगादिभिः स्यात् ॥ ७५ ॥**

---

७४– हरति । एकया मूर्त्या प्रश्नः क्रियते; अन्यया तस्योत्तरं दीयते; एका अन्यस्यै कुप्यतीत्यादेः युक्तिः॥ योगः पुरुषभिदां मुक्त्वा =आत्मभेदाभावे, बुद्धिभेदस्य= ज्ञानतारतम्यस्याभिप्रायभेदस्य चाभावे न हि भवति । तस्मात् व्यूहादिमूर्तिषु कतिचित् जीवाः उपदेष्ट्रादिरूपेण परमात्मना संबद्धाः स्युरित्याक्षेपः । निरस्यति तन्नेति । एक एवेश्वरः नरनारायणवत् मूर्तिद्वयमुखेन गुरुशिष्यभावमभिनयति, वस्तुतोऽभिन्नत्वेऽपि लोकं प्रति तत्तद्धर्मव्युत्पादनमिच्छन् । तद्वदित्यादि । स्वकृतशिष्यादिवत् लोके जीवेषु शिष्यादिवृत्तिप्रचारं स्वयमनुकम्पया शिक्षयितुमित्यर्थः। श्लोके अभिनयतीति पदं 'लक्षणहेत्वोः' इति सूत्रबलात् हेत्वर्थे शत्रन्तम्, अभिचरन् यजेतेतिवदित्यभिप्रेत्याह अभिनयप्रयोजनमिति ॥ ७४ ॥

एवं भगवदवताराणां सत्यत्वं व्यूहादीनामवतारूपत्वञ्च स्थापितम् । वटपत्रशायिनि अवताररूपत्वं दुर्वचमिति तस्यासत्यत्वं तदुदरसर्वाधारत्ववचनस्यायथार्थत्वञ्च शंकमानं प्रति वक्तुमाह विश्वेति । विश्वस्यान्तरेव बालरूपेण भगवान् अस्ति, तस्योदरान्तरेव विश्वं वर्तते चेत्युच्यते पुराणेषु । एवं तदुदरगतत्वेन रूपेण जगद्विषये विश्वासः कस्य स्यात् । तस्मादविश्वसनीयत्वात् अघटनात् ईदृक् प्रवृत्तं कार्यम् इन्द्रजालमेव । ननु कोऽसौ इन्द्रजालप्रदर्शी, तत्राह औपेन्द्रमिति। इन्द्रस्यानुजः किलायमुपेन्द्रः । अत इन्द्रजाल तदधीनं स कदाचिदाविष्कुर्यादेवेति । निरस्यति मा भूदिति । एवमिति शेषः । सर्वेषामाप्तानां महर्ष्यादीनामत्र सिद्धिः=ज्ञानं तावत्, आश्चर्यशक्तेः अन्याशक्यविषयं कार्यमिदं यथाभूतमित्याकारकमेव हि । तस्मान्नेन्द्रजालता । तर्हि कथं विरोधपरिहार इति चेत्—उच्यते । सर्वशक्तौ भगवति अघटनीयस्यापि घटनं स्यादेव । तावता व्याहतमपि भवतीति न वयं ब्रूमः । मिथो विरुद्धसर्वांशस्वीकारे प्रायेणोत्तरमीमांसा व्यर्थैव स्यात् । निषेधति च सूत्रकारो जैनदूषणावसरे विरुद्धपक्षव्यतिषङ्गम् । अतो व्याघात उपशमनीय एव ।

अत्र मायामतानुसारी चोदयति **विश्वेति**। **विश्वशब्देन** त्रैलोक्यादि गृह्यते। कस्यचिदन्तरे किंचित् वर्तते, तदेव तदानीमेव तस्मात् बहिरेव। क एतत् श्रद्दधीतेति भावः। विश्वापह्नवाभिलाषी स्वोक्तफलितमाह **तस्मादिति**। **रमवशात्**=इच्छावशात् ईप्सितक्रीडारसवशाद्वा। तादृशाद्भुतविवक्षया प्रतिषेधति **मा भूदिति**। तत्तत्प्रकरणपरामर्शेन मिथ्यात्वपरिहारे सिद्धे विरुद्धवत् प्रतिपन्नं सर्वमविरुद्धावस्थाविशेषादिविवक्षया निर्वोढुं शक्यम्। तत्र भगवद्विग्रहविभूत्यादीनां सङ्कोचशक्तिर्विकासशक्तिः तत्तदभिमानविषयसजातीयोत्पादनशक्तिः सूक्ष्मस्थूलावस्थाभेदः परिमितविग्रहव्यङ्ग्यापरिमितस्वरूपलक्षणमित्यादिकं यथार्हमवधारणीयम्। एवम्, 'अणोरणीयान् महतो महीयान्' इत्यादीनि ब्रह्मस्वरूपविषयवाक्यान्यपि तत्तदविरुद्धार्थविवक्षया नेतव्यानि। वस्त्वन्तरादृष्टवैचित्र्यमात्रेण विरोधशङ्कायां सर्वत्रातिप्रसङ्गः स्यादिति॥ **इति आश्चर्यवृत्तान्तविशेषसत्यत्वम्** ॥ ७५ ॥

---

*श्री— भगवतो बालरूपेणावतारादिः सत्य एव। तस्यान्तरेव बहिरेव च भासमानस्य विश्वस्य विग्रहस्य च दशाभेदस्वीकारेण वा प्रकारान्तरैर्वा व्याघातशमनं शक्यमेवेति भूमः॥*

विश्वेत्यादिप्रथमपदस्य व्याख्यानम्—कस्यचिदन्तरेव किञ्चित् वर्तते, तदेव तदानीमेव तस्मात् बहिरेवेति। नात्र विश्वद्वयग्रहणेन समाधिरिति ज्ञापनायैव विश्वपदनिखिलपदप्रयोगः। कस्य विश्वासभूमिरित्येतद् व्याचष्टे क इति। एतत् एवं स्थितमपि को विश्वसेत्? यदि वस्तुद्वयं स्यात्, यदि वा, 'अर्धमन्तर्वेदि अर्धं बहिर्वेदि' इतिवत् एकमेवान्तर्बहिरपीति स्यात्, इष्येत। अत्र तु एकमेवान्तरेव बहिरेव चेति वक्तव्यम्। तत् कथमिति। तस्मेत्यादि। भगवत्संकल्पवशात् विश्वं संकोचशक्तिं प्राप्य संकुचदेव बालोदरान्तर्वर्तते। रेखागवयादौ स्थूलगवयादिज्ञानवत् मार्कण्डेयतुल्यानां द्रष्टृणामसंकुचिततद्ग्रहणं भवति। तदेव वस्तु गर्भस्थशिशुरिव बहिराविर्भवति यदा, तदा विकासशक्तिं प्रतिपद्यते। नन्वेकमेव युगपदेवान्तरेव बहिरेवेति कथमिति चेत्—स्थूलस्य बाह्यस्य सजातीयोत्पादनशक्त्या अन्तस्स्थितिः। तथाचेन्द्रजालवत् धर्मिणो नाभावः। स्वप्नदृष्टवन्ध्यादीनां वास्तवबन्ध्यादिसाजात्यादेव हि तदेवेति प्रतीतिः। ननु वस्त्वैक्यमेव वक्तव्यम्। प्रकृतिपुरुषादिसूक्ष्मवस्तूनामपि बालोदरे सद्भावकथनात्, तत्र सजातीयोत्पत्त्ययोगादिति चेत्—तदुदरगतस्य प्रकृतिपुरुषादेः सूक्ष्मस्यैव स्थूलहेतुत्वात् न्यग्रोधबीजे पूर्णतद्वृक्षानुभववत् स्थूलहेतुशक्तिदर्शनस्यैव स्थूलदर्शनरूपत्वाभ्युपगमेन तथा व्यवहार इति भाव्यम्। यद्वा यथा मुखादेः दूरस्थपदार्थव्यञ्जकत्वम्, स्वगततया सर्ववस्तुप्रदर्शकत्वम्, तथा भगवदुदरस्यापि विश्वव्यञ्जकत्वम्। अथवा योगिभिर्वस्तुगतप्रतिघातशक्त्यपोहनेन भूमावुन्मज्जनादिवास्तवक्रियानिष्पादनवत् अत्यल्पोदरविवरस्य महाविश्वप्रवेशप्रतिरोधकत्वशक्तिविघटनात्, यदल्पं तन्न महदाश्रय इति व्याप्तिभञ्जनादन्तर्वर्तित्वसंभवः। अपि=वा चाक्षुषसामग्र्यद्वये एकया स्वदेशयुक्तचन्द्रस्य, अन्यया स्वदेशवियुक्तचन्द्रदेशान्तरोभयस्य च ग्रहणात् चन्द्रद्वित्वप्रतीतिः, तथा विश्वस्योभयथा प्रतीतिः। यद्वा विश्वान्तर्वर्तिं महान्तं परमात्मविग्रहं तदन्तर्गतञ्च विश्वं सदोषया सामग्र्या, दूरस्थं चन्द्रमिव, स्वल्पपरिमाणं ये पश्यन्ति, तदैव ते तदातनसामग्र्यन्तरेण स्थूलं विश्वं परमात्मरूपं विना च पश्यन्तीति विश्वद्वयप्रतीतिः शिशोरन्तर्बहिश्चेत्येवं विमृश्यम्॥ यदि विरुद्धद्वयस्य भावाभावरूपस्यापि समावेश इष्टः स्यात्, तर्हि भाष्ये सूत्रे, 'अणोरणीयान् महतो महीयान्' इत्यत्राणीयस्त्वस्योपाधिकत्वं नोच्येतेति ज्ञापये तद्वाक्यमप्यविरुद्धं नेयमित्याह एवमणोरिति। तदिदमीशोपनिषदाचार्यभाष्यतात्पर्यग्रन्थे निपुणमस्माभिरुपपादितमस्ति। भावाभावरूपविरुद्धद्वयघटनं नैवेश्वरः करोति। अनित्यत्वसाय-

(221) यत् भावित्वेन बुद्धं भवति तदथ चातीतरूपं ; तदस्मिन्
उल्लेखो भिद्यते चेत्, अकरणजमतेरैकरूप्यं प्रकुप्येत् ।
प्राचीनोल्लेख एव स्थितवति तु गते भाविबुद्धिर्भ्रमः स्यात्
मैवं, पूर्वापरादिक्रमनियतसदोल्लेखसत्यत्वसिद्धेः ॥ ७६ ॥

अथ निखिलजगत्कारणतयाऽवधृतस्येश्वरस्य सर्वस्रष्टृत्वानुगुणेषु ज्ञानशक्त्यादिषु अनुपपत्तिः परिह्रियते । तत्र ज्ञाने तावत् अयुक्तिरेवं शङ्क्यते—नित्यसर्वज्ञ ईश्वरः भविष्यद्वस्तु भविष्यत्त्वेन पश्यति न वा ? पूर्वत्र, तस्यैव वस्तुनो भवदवस्थायां भूतावस्थायां च किं स एवोल्लेखः, तदन्यो वा ? आद्ये, भवतो भूतस्य च भविष्यत्त्वेनोल्लेखात् भ्रान्तिरेव स्यात्; द्वितीये, "पश्यत्यचक्षुः" इत्यादिना करणनिरपेक्षज्ञानवत्त्वेन कथितस्य कार्यज्ञानासंभवात् प्रतिक्षणं भिदुरानन्तोल्लेखसन्ततिपरिग्रहो निर्मूलः स्यात् । भविष्यतां भविष्यत्त्वेनादर्शनं तु तेषामदर्शनेन एव वा, स्वस्वरूपमात्रदर्शनेन वा, वर्तमानत्वभूतत्वदर्शनेन वा स्यात् ? आद्ये, किंचिज्ज्ञत्वप्रसङ्गः । द्वितीयेऽपि प्रकारतस्स एव । तृतीये भ्रान्तत्वं दुस्तरम् । एवं वर्तमानेऽतीते च वर्तमानत्वादिबुद्धिरस्ति वा न वा, सा च निवृत्तिमती नित्या वा इत्यादिविकल्पेन प्रसक्ता दोषाः प्रतिसन्धेया इति । तदभिप्रेत्याह **यत् भावित्वेनेति** । **भवति** **तत्** वर्तमानत्वावस्थां प्राप्नोति । **अथ चातीतरूपम्** वर्तमानत्वावस्थानन्तरमतीतावस्थं स्यादित्यर्थः । **तत्** तस्मात् । **अस्मिन्** अवस्थात्रयवति वस्तुनि । नित्यसर्वज्ञबुद्धेरागामित्वाद्युल्लेखो भिद्यते चेत्, करणनिरपेक्षबुद्धेरीश्वरस्य नित्यैकरूपसर्वदर्शनानुपपत्तिः स्यात् । प्राचीनोल्लेखे नित्यानुवृत्ते तु, वर्तमाने गते च भविष्यत्त्वबुद्धि-

---

ची— यत्तत्त्वयोरिव लोकदृष्टसामान्यव्याप्त्या विरुद्धवद्भासमानविषये तु तद्व्याप्तिभंगमेव स्वीकृत्य भगवद्विग्रहादौ नित्यत्वसावयवत्वे इव विरुद्धवत्प्रतीतयोर्घटनमपि कुर्यादित्यलम् ॥ ७५ ॥

ईश्वरस्य प्रधानभूतौ गुणौ द्वौ ज्ञानं शक्तिश्चेति । सर्वेषामन्येषामत्रैवान्तर्भावः । उभयमिदं सर्वविषयकमिति सिद्धान्तः । तत्र ज्ञाने सर्वविषयकत्वासंभवः परिह्रियते प्रथमं यदितिश्लोकेन । शक्तिविषये तद्विचारोऽनन्तरश्लोके । ईश्वरविग्रहेऽपि सर्वस्थित्यसंभवशंका परिहृता । तज्ज्ञाने नित्ये सर्वस्य यथावद्विषयत्वायोगः शंक्यते । तत् निरसितुमाह यदिति । पादत्रयेण शंका । ईश्वरीय-नित्यज्ञाने यत् वस्तु भविष्यत्त्वेन गृहीतम्, तद्वस्तु स्वकाले वर्तमानत्वेन स्वात्ययानन्तरञ्चातीतत्वेन तेन गृह्यते चेत्—एवंरूपेण तस्य नित्यत्वं कथम्। तदा अकरणजमतेः =करणं विना स्थितायाः सर्वदा सर्वस्यैकरूपेणावगाहनमिति न स्यात् । भविष्यत्त्वेनैव गृह्यते चेत्, तदा तदीश्वरज्ञानं भ्रमो भवेत्। सर्वदा भविष्यत्त्वाभावादिति शंका । पदानामर्थो वृत्तौ विशद एव । निरस्यति मैवमिति, कदाचित् भविष्यत्त्वेन, अन्यदा वर्तमानत्वादिना चोल्लेख इति भेदेऽपि निर्वाहो वृत्तौ वक्ष्यते । एकरूप एव सर्वदोल्लेख इत्यदोष इत्याह पूर्वेति । भविष्यत्त्वातीतत्वादिकं हि तत्तद्वस्त्वपेक्षयैवोपपादनीयम्। परमात्मबुद्धिश्च सर्वदा तत्तद्वस्तु यद्यत्पूर्वत्वेन यद्यदुत्तरत्वेन यद्यत्समकालिकत्वेन च वर्तते, तथा तथा तत्तत् गृह्णाति । तथा गृह्यमाणानां भविष्यत्त्वादिरूपमर्थात् सिध्यति । तथाच तत्तद्वस्तु-पूर्वोत्तरवर्तमानत्वरूपक्रमस्य नियमेन सत्त्वात् तदैव सदोल्लेखात् न कदाऽप्युल्लेखासत्यतेति भावः ॥

'पश्यति न वा' इति विकल्पे नेति पक्षं निरस्यति भविष्यतामिति । भविष्यतामित्यस्यानुवृत्त्या, स्वस्व-रूपेत्यत्र स्वपदं भविष्यत्परम् । 'स्थितवति तु' इत्येतत् नित्यानुवृत्ते तु इति विवृतम् । श्लोके, गते इत्येतत्

भ्रान्तिः स्यादिति परिचोदनानुवादः। अत्रोल्लेखभेदे तदभावे चादोष इत्यभिप्रायेण प्रतिषेधति **मैवमिति**। उल्लेखभेदपक्षे तावदेवं निस्तारः। न ह्यत्र करणनिरपेक्षज्ञानवत्त्वविरोधः; चक्षुरादिनिरपेक्षत्वेऽपि हेतुतः साध्यप्रकाशोपपत्तेः। हेतुश्चोल्लेखसन्ततौ उत्तरोत्तरस्य पूर्वपूर्वः। तत्प्रवाहानादित्वाच्च न कदाचित् निर्मूलत्वम्। न चेदृशानवस्था दोष इति। एकरूपोल्लेखपक्षे त्वाह **पूर्वापरेति**। अयं भावः— सर्वं कार्यं स्वकाले न हि नित्यासत्। तच्च किंचिदपेक्ष्य पूर्वम्, किंचिदपेक्ष्योत्तरम्। तत एवं त्रिप्रकारं कार्यं सर्वदैकबुद्धिसमारूढम्। न कदाचिदपि स्वकालवर्तिनः कालान्तरवर्तित्वेनोल्लेख। भविष्यत्त्वादिकं च आपेक्षिकम्। किंचिदपेक्ष्योत्तरत्वमेव कस्यचित् तत्समकालप्रागभाववतः तदपेक्षया भविष्यत्त्वम्। एवं किंचिदपेक्षया पूर्वत्वमेव तत्समकालप्रध्वंसवतोऽतीतत्वम्, तच्च किञ्चित् कादाचित्कम्; न हि नित्यापेक्षया किंचित् भविष्यत् भूतं वा। एवं सर्वप्रकारं वस्तु सर्वज्ञबुद्ध्या यथावस्थितरूपेण सर्वदैवोल्लिख्यत इति करणनैरपेक्ष्यं विपर्यासविरहश्च सिध्यतीति।

श्लो— य एव स्यादसर्वज्ञः स सर्वज्ञं न बुध्यते। इति तद्बोधबाधार्थी तन्निषेधेऽपि न क्षमः॥

**इति सार्वज्ञ्यानुपपत्तिनिरासः ॥ ७६ ॥**

**(222) नीलं किंचित् तदानीमरुणमिति न खल्विन्द्रजालाद् ऋतेऽद्धा;**
**नो चेदेवं विरोधः क्वचिदपि न भवेत्; कश्च जैनेऽपराधः।**
**तस्मात् ईशो विरुद्धद्वितयमघटयन् सर्वशक्तिः कथं स्यात्?**
**मैवं व्याघातशून्येष्वनितरसुशकेष्वस्य तादृक्त्वसिद्धेः ॥ ७७ ॥**

ईश्वरस्य सर्वशक्तित्ववादमपह्नोतुमिच्छन् कश्चित् विरुद्धोदाहरणं तावत् व्यवस्थापयति **नीलमिति**। अद्धा सत्यम्। इत्यद्धेत्यन्वयः। इन्द्रजालतिरोहितस्तु एवमद्धेत्यभिमन्येतेति भाव। उक्तानभ्युपगमेऽतिप्रसङ्गमाह **नो चेदिति**। क्वचिदपि दूष्यदूषणपूर्वपक्षसिद्धान्तादावपीत्यर्थः। अतिप्रसङ्गान्तरमाह **कश्चेति**। विरुद्धसप्तभङ्गीपरिग्रहो हि जैनस्यापराधः, विरोधोच्छेदे सोऽपि न निगृह्येतेति भावः। विरोधसिद्धिमुपजीव्य चोदयति **तस्मादिति**। शक्तिर्हि शक्यविषया; विरुद्धे तु घटयितुं न शक्यम्। अतो

टी— वर्तमाने इत्यस्योपलक्षणम्। पाठभेदो वा। नह्यत्रेति। करणनिरपेक्षज्ञाने उल्लेखभेदः कथमिति चेत्–परमात्मज्ञानं चक्षुरादिकरणनिरपेक्षमनादि नित्यम्। अथापि तस्येच्छायामनुमानादिप्रमाणाधीनानुमित्यादिरूपा उल्लेखा अपीष्यन्ते। एवञ्च भविष्यत्त्वातीतत्वादीनामुल्लेखास्तदातदैव भवन्तीति न भ्रमत्वप्रसक्तिरिति। अयं भाव इति। परमात्मज्ञाने स्वकालापेक्षया भविष्यत्त्वातीतत्वादिग्रहणायोगेऽपि यस्य यदपेक्षया भविष्यत्त्वमतीतत्वं वा, तत्तन्निरूपितातीतत्वभविष्यत्त्वादीनां सर्वदा ग्रहणं हि नानुपपन्नमिति। य एवेति। स्वयमसर्वज्ञः, सर्वज्ञोऽस्तीति कथं ब्रूयात्। सर्वज्ञानाभावे सर्वज्ञज्ञानायोगादिति सर्वज्ञनिषेधे प्रवृत्तं वयं पृच्छामः, तत्र सर्वविषयकज्ञानाभावात् त्वं कथं सर्वज्ञाभावं जानासि, विशेषणीभूतस्य सर्वस्य ज्ञानाभावे तज्ज्ञस्य तदभावस्य च ज्ञानं ते कथमित्यर्थः॥ ७६॥

सर्वशक्तित्वं निषेधति नीलमिति। पूर्वपादेऽन्वयस्तावत्—न खलु इन्द्रजालात् ऋते किञ्चित् नीलं सत् तदानीमेवारुणं भवतीत्येतत् अद्धा= सत्यमिति। नो चेत्=भावाभावयोर्यौगपद्ये। कश्च जैनेऽपराध इति। नैकस्मिन्नसम्भवादिकरणविरोध इत्यर्थः। [illegible]

शक्यसद्भावात् कथं सर्वशक्तिः स्यादित्याक्षेपः । अविवक्षितदूषणमिदमित्यभिप्रायेण प्रत्याह मैवमिति । अभिप्रेतं विवृणोति व्याघातेति । न हि, व्याहतमीश्वरो घटयतीति तस्य सर्वशक्तित्वं ब्रूमः ; किंतु यत् कार्यं तत् सर्वं करोति । ततश्च अन्यैरप्यशक्यं (न्यैरशक्यमपि ?) करोतीति सिध्येत् । ईदृशमस्य सर्वशक्तित्वमागमाभिप्रेतम् । तच्च विरोधाभावात् युज्यत एवेति ॥ **इति सर्वशक्तित्वस्थापनम् ॥ ७७ ॥**

**(228) संगृह्य ज्ञानयत्नौ कतिचन निखिलस्रष्टुरिच्छां तु नैच्छन् ;**
**तस्यां द्वेषः क एषामनुमितिशरणानीकनासीरभाजाम् ।**
**श्रुत्या तद्बोध(तज्ज्ञान)यत्नावभिदधति यदि, क्षम्यतामेवमिच्छा ;**
**निर्वाह्यं त्वाप्तकामप्रभृतिवचनमप्यान्यपर्योपरुद्धम् ॥ ७८ ॥**

एवमस्तु सर्वज्ञः सर्वशक्तिरीश्वरः ; तथाऽपि चिकीर्षा नाङ्गीकार्या । न हि कर्तुः कार्योत्पादकत्वमिच्छाप्रयुक्तम् ; यत्नाभावे कचिदपि ततस्तदसिद्धेः । इच्छाऽभावेऽपि प्रयत्नतः कार्यसिद्धिर्जीवनपूर्वकप्रयत्नकार्यनिश्वासादिनिष्पत्त्या संगृहीता । अतः कार्यलिङ्गेन उपदेशलिङ्गेन वा कर्तुर्ज्ञानयत्नवत्त्व-

---

७७– एवञ्च तस्य कथं सर्वशक्तित्वम् । इमां शंकां निरस्यति मैवमिति । ईश्वरस्य यद्यत्साधनविषये शक्तिरस्ति, सर्वतद्विषये शक्तिरन्येषां नास्तीत्याशयेन सर्वशक्तिरीश्वर इत्युच्यते । एवञ्चान्याशक्यमपि करोतीत्येतावदेव । न तु विरुद्धमपि घटयतीति । न हि सर्वोत्पादक इत्युक्तौ नित्यस्याप्युत्पादक इति कश्चिदर्थं ब्रूयादिति भावः। यदि घटयेत्, कथं विरोधः। शिष्टं 75 श्लोके स्पष्टम् ॥ ७७

एवं सर्वविषयकज्ञानशक्तिरूपगुणद्वयं स्थापितम् । तत एव तदवान्तरभेदाः यथार्हमिष्टा भवन्ति । इच्छायत्नयोर्ज्ञानानन्तर्भावं मन्यमानास्तार्किका अपि युक्त्या ज्ञानमिव इच्छायत्नावपि प्रायः स्वीकुर्वन्ति । तत्र कतिचित् इच्छां परं नेच्छन्ति । तद्दूषयति संगृह्येति । निखिलजगत्स्रष्टृत्वात् कृतेरावश्यकत्वात् ज्ञानयत्नौ स्ताम्, किमिच्छयेति तदाशयः । तत्राह तस्यामिति । अनुमितिरेव शरणं=प्रमाणमीश्वरसिद्धौ येषां तेषामनीकस्य=सैन्यस्य नासीरम्=अग्रभागं भजताम्, श्रुतिमुपेक्ष्यानुमितिविषयमात्रसद्भावमानिनामपि इच्छायां द्वेषः कः=कीदृशः किंमूलः ; विशेषहेत्वदर्शनादिति भावः । नित्यत्वादीश्वरयत्नस्य तत्कारणतयेच्छापेक्षा नास्तीति चेत्, तत्कारणतया ज्ञानापेक्षाऽपि मा भूत् । विनिगमनाविरहात् साक्षात् ज्ञानस्यापि जगत्कारणत्वेष्टौ इच्छाया अपि तत् स्यादिति भावः। श्रुत्येति । तस्येश्वरस्य बोधं=ज्ञानं यत्नञ्च श्रुतिप्रमाणतश्चेत् अभिदधति=ते वदन्ति, तर्हि क्षम्यतां=स्वीक्रियताम् एवं=ज्ञानयत्नवदेव एवं=श्रुतिमूलतया इच्छाऽपि। यद्वा यदि यत्नमात्रेण निर्वाहेऽपि श्रुत्या ज्ञानस्योक्तत्वात् तस्यै न कोपः प्रदर्शनीय इति क्षान्तिरत्रलभ्यते, इच्छाविषयेऽपि तत् क्रियताम् ; 'सोऽकामयत बहु स्याम्' इति श्रुतेः । नन्विच्छानिषेधिकाऽपि श्रुतिरस्ति आप्तकाम इति । यो हि कामनाविषयत्वार्हं वस्तु स्वतः प्राप्तवान्, तस्य हि कामना न भवत्येवेति चेत्– तत्राह निर्वाह्यं त्विति । 'आप्तकामः', 'असंगः, न हि सज्यते', 'अवाक्यनादरः' इत्यादिवचनं तु तदिच्छानिषेधाक्षमतया आन्यपर्योपरुद्धम्=अन्यपरत्वेन अन्यार्थतात्पर्येण उपरुद्धम्=आक्रान्ततया निर्वाह्यम् । आप्तकामपदं हि कामनाविषयार्थककामपदघटितम् ईश्वरस्यापि कामनामेव साधयेत् । न च, 'सिसृक्षुर्विविधाः प्रजाः' इत्यादावुक्तः सर्गेच्छादिरूपः कामः जीवसंबन्धीच्छारूपो भवेत् । न च तदिच्छाविषयस्य सर्गस्य प्रागेवाऽऽप्तत्वं सुवचम् । हेयभोगेच्छाराहित्यं तु तस्य युज्यते, न सर्वविधेच्छाराहित्यमिति ॥

मात्रमेवानुमेयम् ; किमजागलस्तनकल्पया चिकीर्षयेति **काश्यपीयाः** केचिदाचक्षते । तदिदमन्वाचष्टे **संगृह्णेति** । तुशब्दः प्रदर्शितमनपेक्षितत्वं द्योतयति । अत्र प्रतिबन्दिमभिप्रेत्य प्रतिब्रूते **तस्यामिति** । अनुमानादागमाच्चेश्वरसिद्धिं **नैयायिका** निर्धारयन्ति ; **वैशेषिकास्त्वा**गममप्यनुमानीकृत्य तदेकवेद्यमीश्वरं तन्वयन्ति । अनुमानं च ज्ञानयत्नवत् चिकीर्षामपि समर्थयितुं शक्नोति । तत्र यदि जीवनपूर्वकप्रयत्नन्यायेन चिकीर्षानैरपेक्ष्यं संगृह्णेत, तद्वदेव ज्ञाननैरपेक्ष्यं किं न स्यात् । न हि ज्ञानमपि प्रयत्नमनपेक्ष्य क्वचित् कार्यं जनयति । प्रयत्नस्तु ज्ञानमनपेक्ष्यापीति दृष्टमेव ॥ अत एव, 'चिकीर्षा प्रयत्नोत्पत्त्यर्थमन्यत्रापेक्ष्यते, इह तु नित्यप्रयत्ने किं तया' इत्यपि मन्दम् । चिकीर्षोत्पत्त्यर्थमन्यत्र ज्ञानमपेक्ष्यते, इह तु प्रयत्नस्य नित्यत्वेन चिकीर्षानैरपेक्ष्यात् किं ज्ञानेनेत्यपि सुवचत्वात् ॥ प्रयत्नस्य स्वतो विषयनियमाभावात् ज्ञानविषयेण सविषयत्वं वक्तव्यमिति चेन्न, उक्तोत्तरत्वात् । न हि जीवनपूर्वकप्रयत्नस्य स्वाधारज्ञाननियतविषयत्वम् । न च सर्वकार्यविषयस्य ईश्वरप्रयत्नस्य विषयनियामकापेक्षा । सत्यां च तस्यां सहकारिशक्तिभूतजीवादृष्टविशेषत एव प्रयत्नस्य नियतविषयत्वे संभवति सर्वविषयज्ञानेन प्रयत्नस्य विषयनियमकल्पनं बालिशकृत्यम् । विषयत्वमात्रं चात्र न यावद्धीविषयत्वम्, नित्यानामपि निष्पाद्यत्वप्रसङ्गात् ; अशक्यविषयप्रयत्नवत्तया वा डिम्भादिकल्प ईश्वरः स्यात् ॥ अथ स्वासाधारण(स्वाधार)धीविषयेणैव विषयवत्त्वं प्रयत्नस्येति मन्येत, तदपि न ; धिय इव प्रयत्नस्यापि नियामकनिरपेक्षविषयत्वोपपत्तेः ; अन्यथा कल्पनागौरवात् ॥ स्वतस्सविषयत्वे ज्ञानत्वप्रसङ्ग इति चेन्न ; धियोऽपि तन्नियामकत्वाभावात् । न च स्वाधारधीविषयस्य

---

५९– ननु न धीविषयभूतं सर्वमपि यत्नस्य विषयः, येनोक्तदोषः स्यात्, किन्तु धीविषयीकृतस्यैव प्रयत्नविषयत्वम्, नान्यस्येति नियमो विवक्षित इति शंकते अथ स्वाधारेति । धियोऽपि तन्नियामक-

७१– जीवनपूर्वकप्रयत्नेति । जीवनयोनियत्नो जीवगतः । तद्वशात् सुषुप्तिकाले उच्छ्वासनिश्वासोदयः । स च यत्नोऽतीन्द्रियः ज्ञानेच्छानिरपेक्षोत्पत्तिः । तत्र कारणं पुरुषजीवनादृष्टमेवेति तार्किकमतम् । तथाच जीवनपदम्, येन जीवति, तस्य करणस्यादृष्टस्य वाचकम् । तत्पूर्वको यत्न इत्यर्थः । स जीवनस्य श्वासस्य हेतुश्च । काश्यपीयाः= काणादाः । अनुमानीकृत्येति । काणादमते प्रत्यक्षमनुमानञ्चेति द्वे एव प्रमाणे । तावता न शब्दस्याप्रमाणत्वम् ; किं तु क्लृप्तेऽनुमान एवान्तर्भावः । अतः शब्दैकगम्यत्वं शब्दरूपानुमानगम्यत्वमेवेति । प्रयत्नस्याऽऽवश्यकत्वमाह नहीति । दृष्टमेव । सुषुप्ताविति शेषः । प्रयत्नस्येति । प्रयत्नविषयत्वं कस्य कस्येत्यत्र नियामकं ज्ञानविषयत्वम् । लोके जीवानां ज्ञातविषय एव प्रयत्नदर्शनादिति भावः । तस्यां= विषयनियामकापेक्षायाम् । ज्ञानविषयत्वस्य नियामकत्वे तत् नियामकत्वं किंरूपम्, यत्रयत्र धीविषयत्वं तत्रतत्र यत्नविषयत्वमिति वा, धीविषयत्वं विना यत्नविषयत्वं न भवतीति वेति विकल्पे नाद्य इत्याह विषयत्वमात्रमिति । मात्रपदं कृत्स्नार्थकम्, यत्नीयविषयत्वं सर्वेमित्यर्थः । न यावद्धीविषयत्वमिति । यावति धीविषयत्वं तावति नेत्यर्थः । यावन्ति धीविषयत्वानि तावत्सु इत्यर्थेऽपि स एव भावः । अन्त्ये आह अथेति । स्वासाधारणेति । स्वसमानाधिकरणेत्यर्थः । तथैव पाठो वा । वक्ष्यति च स्वाधारधीति । तत्रापि स्वाधारवति धीत्यर्थः । तथैवात्रापि पूर्वव्याख्यापाठः । धिय इवेति । ज्ञानविषयताया नियामकं किम् । तस्या अनपेक्षत्वे अत्रापि तदस्तु इति भावः । तन्नियामकत्वाभावात्= यत्नादिविषयताप्रयोजकस्य विषयताकत्वाभावात् । यद्वा मानत्वं प्रति नियामकत्वाभावादित्यर्थः । धीविषयतायाः

सर्वस्य प्रयत्नविषयत्वमिति मन्यसे। सारूप्येऽप्यवान्तरलक्षणेन भेदोपपत्तेः। अन्यथाऽतिप्रसङ्गात्। किंच सामग्रीनियतविषये निरीश्वरज्ञाने व्याप्तिर्दुर्ग्रहा; ईश्वरज्ञानं त्वद्याप्यसिद्धम्। यदि च यथादृष्टप्रकारानादरेण बुद्धियत्नयोर्हेतुनिरपेक्षत्वं कल्प्यते, तथा यत्नस्य बुद्धिनिरपेक्षविषयत्वमदृष्टमभिमन्यताम्, अविशेषात् लाघवाच्च ॥ एवं बुद्धिमात्रमवलम्ब्य प्रयत्नपरित्यागप्रतिबन्दिरपि प्रयोक्तव्या। ईश्वर इच्छात्यन्ताभाववान् कर्मवश्यव्यतिरिक्तत्वात् घटादिवत् इत्यादिषु च तादृशप्रयोगः प्रतियोक्तव्यः। धर्मिसिद्ध्यादिविकल्पेन दूषणजातं च दुस्तरमिति।

यथा (अथ ?)श्रुतिबलादीश्वरज्ञानप्रयत्नस्थापनं शङ्कते श्रुत्येति। [यथा श्रुतिबलादीश्वरज्ञानप्रयत्नस्थापनम् ?] तथा, 'सोऽकामयत' इत्यादिश्रुतिबलात् तदिच्छाऽपि स्वीक्रियतामित्याह **क्षम्यतामिति**। नन्वाप्तकामत्वपूर्णत्वादिश्रुतिस्मृतिशतैरिच्छाराहित्यमीश्वरस्य सिध्येदित्यत्राह **निर्वाह्यमिति**। तुः शङ्कानिवृत्त्यर्थः। अयं भावः—**आप्तकाम**शब्दस्तावत् ईशितुरैश्वर्याभावमिच्छाराहित्यं वा न ब्रूते। अत्र **काम**शब्दस्य काम्यपरत्वे कामनापरत्वे वा तत्प्राप्तिवचनतः(वचनतया?)तन्निषेधायोगात्। अत इदं सर्वमस्य प्राप्तमेव भवतीति तात्पर्यं ग्राह्यम्। (?) अनित्यानां (नित्यानां ?) वा भोग्यानां प्राप्तत्वं प्रत्येतव्यम्।

---

*प्रो*–त्वाभावादिति। सविषयत्वनियामकत्वाभावादित्यर्थः। कथं नियामकत्वाभाव इत्यत आह नचेति। धीविषयत्वं प्रयत्नविषयत्वप्रयोजकं चेत् धीविषयभूतानां गगनादीनां यत्नविषयत्वप्रसंगः, न च तदिष्टमिति भावः। यत्नस्यापि स्वतः सविषयत्वे धीप्रयत्नयोर्भेदो न स्यात् इत्यत आह सारूप्येऽपीति। अवान्तरलक्षणेनेति। आत्मधर्मित्वे सति (?) अधर्मप्रकाशकत्वादिलक्षणभेदेनेत्यर्थः। अन्यथाऽतिप्रसङ्गादिति। अवान्तराकारभेदे सत्यपि, यत्किञ्चित्सारूप्येणाभेदे सर्वेषां अभेदप्रसङ्ग इत्यर्थः ॥७८॥

*श्री*— यत्नविषयताप्रयोजकत्वे दोषान्तरमाह नचेति। स्वाधारेश्वरगतज्ञानविषयस्य सर्वस्य न हि यत्नविषयत्वं मन्यसे, नित्यविषये यत्नाभावादित्यर्थः। ननु स्वतस्सविषयकत्वे ईश्वरीयं तत् यत्न इति किम्; ज्ञानमेव किं न भवेदित्यत्राह सारूप्येति। यद्वा जीवनयोनियत्नविलक्षणः ईश्वरीययत्नः कुलालादियत्नसरूपः। अतोऽत्र धीविषयत्वव्याप्तिरित्यत्राह सारूप्येऽपीति। ईश्वरीययत्नस्याप्यतीन्द्रियत्वात् वैरूप्यमेव। जगतो निश्वसितत्वोक्तेश्च। सारूप्येऽपि अवान्तर-यत्ननित्यत्वानित्यत्वरूपवैषम्येण भेदात् अनित्ययत्नमात्र एव व्याप्तिरस्त्विति भावः। अतिप्रसंगात्= ईश्वरीयज्ञानस्यापि पुण्यपापादिनियामकापेक्षत्वप्रसंगात्। स्वतस्सविषयकत्वे ज्ञानत्वापत्तिरिति दूषणञ्च किं जीवज्ञाने तद् दृष्ट्वा उतेश्वरज्ञाने इति विकल्पे, आद्ये आह किंचेति। निरीश्वरेत्यस्य ईश्वरात् निष्क्रान्तेति, ईश्वरज्ञानव्यतिरिक्तेत्यर्थः। जैवज्ञानं सर्वं स्वसामग्रीनियमादेव नियतविषयकम्, न तु स्वत इत्यर्थः। अन्त्ये आह ईश्वरेति। हेतुनिरपेक्षत्वं ईश्वरे तयोरनादित्वम्। अदृष्टमिति। लोके ज्ञानस्य प्रयत्नविषयताप्रयोजकत्वे दृष्टेऽपि तद्भिन्नधर्म एवेश्वरीययत्ने इति भावः।

एवं युक्तिवादो व्युदस्तः; श्रुतिग्रहणे त्वाह अथ श्रुतीति। यथेति स्थाने अथेति युक्तम्। उपरीवालापि श्रुतिबलादित्येकपदं युक्तम्। यद्वा, "शंकते श्रुत्येति। यथा श्रुतिबलात् ईश्वरज्ञानप्रयत्नस्थापनं तथा" इति पाठः स्यात्। निषेधायोगादिति। कामनास्थापकत्वादिति भावः। प्राप्तमेवेति। प्राप्तप्रायम्, सुप्राप्तमित्यर्थः। अनित्यानामित्यत्र नित्यानामिति स्यात्। जीवानां नित्यं किञ्चित्प्राप्तं नास्ति भोग्यम्। ईश्वरस्तु इतःप्राप्यानेकभोग्योऽपि नित्यप्राप्तानेकभोग्यश्चास्तीति भावः। नास्य

अत एव पूर्णशब्दोऽपि गुणादिपौष्कल्यमाह; न तु श्रौतीं कामनां निरुन्ध्यात्। विधिनिषेधविरोधशमनं च प्रागेव स्थापितम्। तदिह सर्वकार्यविषयाप्रतिहतानन्याधीनेच्छावान् ईश्वरः; जीवस्तु न तथा। ईप्सितालाभजनितदुःखं च क्षेत्रज्ञस्यैव; नित्यमुक्तेश्वराणां तदलाभ एव नास्तीति नियमः॥

**इति ईश्वरस्येच्छावत्त्वसिद्धिः ॥ ७८ ॥**

**(224) स्वीकुर्वन्येशानतत्त्वं कतिचन जहतस्तत्प्रसादादिसाध्यं**
**गङ्गाम्भःपञ्चगव्यप्रभृतिवत् अवदन् पावनत्वादि तस्य।**
**तच्छ्रुत्यादिप्रतीपम्; यदपि च फलदं दर्शितं निष्प्रसादं**
**तच्चैतस्य प्रसादादिति हि निजगदुर्धर्ममर्मज्ञचित्ताः ॥ ७९ ॥**

अथ प्रस्तुतानुबन्धं पण्डितम्मन्यप्रलपितं प्रदर्शयति **स्वीकुर्वन्येति**। अयमत्राभिसन्धिः—यद्यपि राजादिवत् कर्मवश्या देवताः कुप्यन्ति तृप्यन्ति च, तथाऽपि न तथा परः पुरुषः; निरपेक्षत्वात् सर्वभूतसुहृत्त्वाच्च। अतस्तस्मिन् प्रसादकोपव्यपदेशौ भाक्तौ; तदुपचारापचारशक्तित एवानुकूलप्रतिकूलसंपत्तिः। पावनत्वं मोक्षप्रदत्वं च तस्य, "यस्य देवे परा भक्तिः" इत्यादिसारस्यात् गङ्गोदकादेरिव स्वविहितविषयानुष्ठानसामर्थ्यात् स्यादिति। इमं पक्षं पण्डितरूपपदव्या प्रतिक्षिपति **तदिति**। "धातुः प्रसादात्", "मत्प्रसादात्" इत्यादिश्रुतिरिह प्रख्यापिता। अत्र च मुख्ये संभवति न गौणत्वकल्पना न्याय्या॥ प्रशस्तवस्तुविषयतत्तत्कर्मशक्त्यैव फलसिद्धिरित्युक्तं प्रतिवक्ति **यदपीति**। **निष्प्रसादम्** आराध्यप्रसादनिरपेक्षमित्यर्थः। यद्वा क्रियादिस्वरूपं स्वयमचेतनत्वात् प्रसादवत् निष्प्रसादं फलप्रदमिति। उपलक्षणमेतत्। निष्कोपमित्यपि ग्राह्यम्। **एतस्य** सर्वकर्तुः सर्वसुहृद इति भावः। **धर्ममर्मज्ञचित्ता** इत्यत्र धर्माणां कारणभूतं कार्यभूतं च भगवत्कटाक्षणं स्वपीडायां धर्मपीडनात् धर्ममर्मत्वेनोपचरितम्। धर्मस्य यथा परप्रसादः कारणम्, एवमधर्मस्यापि तत्कोपः कारणम्। श्रूयते हि तस्य साध्वसाधुकर्मकारयितृत्वम्। स्मर्यते च बहुशः॥ **इतीश्वरस्य साध्यप्रसादादिमत्त्वम् ॥ ७९ ॥**

---

५०६— निष्प्रसादशब्दं अर्थौचित्यानुसारेण व्याचष्टे—आराध्यप्रसादनिरपेक्षमिति। शब्दस्वारस्यानुरोधेन अन्यथा व्याचष्टे—यद्वा क्रियादीति॥ ७९॥

७१— प्राप्यभोग्यव्यवच्छेदकत्वमिति भावः॥ ७८॥

इच्छा साधिता; प्रीतिकोपावपि साधयति स्वीकुर्वन्येति। जहत इति प्रथमाबहुवचनं कतिचनेत्यस्य विशेषणम्। प्रीत्याधारतां विना पावनत्वे अचेतनं गङ्गाजलादि निदर्शनम्। तत्=प्रीत्यद्वारकं पावनत्वं श्रुतिस्मृतिसंप्रदायविरुद्धम्। यदपि गंगाम्भःप्रभृतिकं प्रसादं विनैव फलदत्वेन निदर्शितम्, तदपि एतस्य=परमात्मनः प्रसादादेव फलदमिति निजगदुः। चेतने देवतान्तरे प्रसादाश्रये सत्यपि एतत्प्रसादस्य मुख्यत्वे स्थिते, किं पुनरचेतनस्थले। विधिर्हीनदर्शितैव। आज्ञापयितुः प्रीतिरेव सर्वत्र फलहेतुः। धर्ममर्मेति। धृतिसाधनं धर्मः। धृतिश्च प्रीतिरिति मीमांसकैरप्युक्तम्। प्रीतिपदेन जीवलभ्यसुखसामान्यं ग्राह्यमिति तदाशयः। स्वपरप्रयोजनकार्येषु तदभावात् प्रीतिपदेन [द्वारभूत] परमात्मप्रीतिग्रहणं युक्तमिति धर्ममर्मविद इति भावः। कुप्यन्तीति पूर्वं प्रयोगः देवतास्तु तस्य

(225) त्रय्यन्तोदन्तचिन्तासहचरणसहैरेभिरस्मिन् परस्मिन्
भक्तिश्रद्धास्तिकत्वप्रभृतिगुणसिरावेधिभिस्तर्कशस्त्रैः ।
स्वार्थत्व-स्वाश्रयत्व-स्ववशयतनताद्यूहवर्गोपसर्गः
छिद्येताच्छेद्यपूर्वोत्तरसरयुगलस्यूततत्त्वस्थितीनाम् ॥ ८० ॥

एवं सकलफलप्रदस्य सत्त्वस्थानां स्वयंफलभूतस्य च परस्य प्रतिपादनेन श्रोतॄणामनुनिष्पन्नं फलविशेषमाह त्रय्यन्तेति । पूर्वोत्तरयोः सरयुगलयोः समर्थितानां चेतनाचेतनतत्त्वस्थितीनां यथासंभवं स्वशेषत्वं स्वाधारत्वं स्वाधीनव्यापारत्वं चेतनान्तरशेषत्वादिकं च विवेकशून्या मन्यन्ते । सोऽयमुपद्रवः सर्वशेषिणः सर्वाधारस्य सर्वनियन्तुरीश्वरस्य प्रतिष्ठापकैः प्रमाणानुग्राहकैः प्रतिक्षिप्येतेति ॥

इति ईश्वरनिरूपणप्रयोजनविशेषः ॥ ८० ॥

॥ इति श्रीकवितार्किकसिंह-सर्वतन्त्रस्वतन्त्र-श्रीमद्वेदान्तदेशिकविरचिते
सर्वार्थसिद्धिसमेते तत्त्वमुक्ताकलापे नायकसरः तृतीयः ॥ ३ ॥

---

*प्र॰*— उपद्रवशब्देन उपसर्गशब्दो व्याख्यातः । प्रमाणानुग्राहकैरिति 'सहचरणसहैः' इत्यस्य व्याख्या ॥ ८० ॥

इति वाधूलकुलतिलकसमरपुङ्गवाचार्यपादसेवासमधिगतशारीरकमीमांसाभाष्यहृदयेन
वाधूलश्रीनिवासेन कृतायां सर्वार्थसिद्धितात्पर्यप्रकाशिकायां नायकसरस्तृतीयः।

*आ॰*— सहजत्वात् । पण्डितरूपेति पदं पण्डितम्मन्येति पूर्वप्रयुक्तपदप्रतिरूपम् । रूपप्प्रत्ययोऽयम् । "प्रशंसायां रूपप्" । प्रशस्तपण्डितेत्यर्थः। श्रुतिरिति पदं छत्रिन्यायात् स्मृतिपरमपि । स्वपीडायां= भगवत्कटाक्षपीडायाम् । उपलक्षणमिति । धर्मपदमप्यधर्मोपलक्षणं भाव्यम् ॥ ७९ ॥

सराणां मध्ये स्थितस्य नायकप्रतिपादकस्य नायकरत्नैकमयस्यास्य सरस्य नायकत्वं दर्शयति त्रय्यन्तेति । वेदान्तप्रतिपाद्यार्थमीमांसेतिकर्तव्यताभूतैः, अस्मिन्=एवं प्रतिपादिते परमात्मनि विषये भक्तिमुख्यगुणप्रवाहहेतुनाडीवेधनशीलैः; गुणाभिवर्धकैरिति यावत् । शस्त्रपदानुसारात् वेधिभिरिति ग्राह्यम्, न तु वेदिभिरिति । शेषत्वज्ञानात् स्वार्थत्वच्छेदः, तदाधारकत्वज्ञानात् स्वाश्रयकत्वच्छेदः, तदधीनप्रवृत्तिकत्वकथनात् स्वाधीनप्रयत्नकत्वच्छेदः । त्रयमिदं शरीरशरीरिभावदर्शि । ऊहवर्गेत्यनेनाप्रामाणिकत्वज्ञापनम् । एतत्कृत उपसर्गः=उपद्रवः पूर्वसरयुगले उत्तरसरयोः बुद्धि-अद्रव्यविषययोर्युगले च स्यूता मिथस्संगततया निवेशिता तत्त्वस्थितिर्येषां मनसि तेषाम् उक्तविध उपसर्गः छिद्यते नायकसरगतैस्तर्कशस्त्रैरिति ॥ ८० ॥

कतिपयगुणं कालच्छेद्यैर्गुणैर्युतमीश्वरं कलितविकृतिं कारुण्यादेः सुखस्य च दूरगम् ।
जगदुरिह ये निस्सत्त्वास्ते निरीश्वरसोदराः निरघनिखिलश्रेयोव्धीशप्रसाधनयाधिताः ॥

अभिनवदेशिकविहिते व्याख्यानेऽस्मिन् अलभ्यलाभाख्ये ।
सर्वार्थसिद्धिनायकसरविवृतिः सम्मुदेऽस्त्वेयम् ॥

इति श्रीवात्स्यवीरराघवाचार्यकृतिषु अलभ्यलाभाख्यव्याख्याने नायकसरस्तृतीयः ॥

शुभमस्तु ॥

## ॥ अथ बुद्धिसरः चतुर्थः ॥

(226) धीत्वात् वेद्मीति सिद्धा स्वयमितरमतिर्बुद्धिलक्ष्मादिधीवत्
यद्वा सर्वज्ञधीवत्; न स मतियुगवान्; नापि चैकोनवेदी।
नो चेत्, धारामती सा प्रथममपि सती नावबुद्धेति धीः स्यात्;
स्वस्यां वृत्तेर्विरोधोऽप्युपशमनमियादुक्तदृष्टान्तनीत्या ॥ १ ॥

आत्मतत्त्वं परमपरं च निरूपितम्। अथ यथोद्देशलक्षणं तद्धर्मभूता बुद्धिश्चिन्त्यते। तत्र प्रथमं तत्स्वरूपस्य स्वतस्सिद्धिमाह **धीत्वादिति**। **इतरमतिः** विप्रतिपन्ना बुद्धिः। **स्वयं सिद्धा** स्वगोचर-

---

### सर्वार्थसिद्धितात्पर्यप्रकाशिकायां बुद्धिसरश्चतुर्थः

प्रो॰– इतरमतिः विप्रतिपन्ना बुद्धिरिति। वक्ष्यमाणसम्प्रतिपन्नबुद्धिलक्ष्मादिधीव्यतिरिक्तत्वम् इतरपद-अलभ्यलाभः

श्री—

अथ बुद्धिसरः प्राप्तो बुद्धितैक्ष्ण्यविधायकः।
पूर्वोत्तरसरप्रोक्तस्वोक्तार्थग्राहिधीपरः ॥

बुद्धिः=धर्मभूतज्ञानम्। तस्याः स्वयम्प्रकाशत्वम्, अर्थात् सत्ताञ्च साधयति प्रथमश्लोकेन। इतरशब्दः दृष्टान्तत्वेनाभिमतकतिपयधीव्यक्तिव्यतिरिक्तपरः। दृष्टान्तभूतानामनन्तानां व्यक्तीनां पृथक् पृथक् ग्रहणेन तत्तद्भिन्नमतिरित्यस्य दुर्वचत्वात् इतरपदं विमतेत्यर्थपर्यवसायि। साध्यवत्त्वविवाद-विषयभूता मतिरिह पक्ष इत्युक्तं भवति। सा स्वयंसिद्धा=स्वप्रकाशा। तदाकारः प्रदर्श्यते वेद्मीति। 'घटमहं वेद्मि' इत्यादौ प्रकृतोपयुक्तमात्रग्रहणम्। धीत्वादिति हेतुः। बुद्धिलक्ष्मादिधीवत्। बुद्धेर्लक्षणं किञ्चिदुच्यते चेत्—तल्लक्षणविषयकं यत् ज्ञानं भवति, तद्वत्। ज्ञानलक्षणलक्ष्यं हि ज्ञान-सामान्यम्। अतो लक्ष्मविषयकज्ञानं स्वविषयभूतं लक्षणं स्वस्मिन्नपि गृह्णातीति भवति स्वप्रकाशम्। आदिपदेन, ज्ञानमस्ति, ज्ञानसामान्यम्, ज्ञानभिन्नम्, ज्ञानाभावः इत्यादिज्ञानपरिग्रहः। तेषां ज्ञान-त्वेन रूपेण स्वात्मकज्ञानविषयकत्वस्यापि सत्त्वात्। एतद्दृष्टान्तेन धीत्वहेतुना स्वप्रकाशत्वसाधनम्। ननु ज्ञानं परप्रकाश्यं ज्ञानत्वात् अभिज्ञोऽयमिति परविषयकज्ञानवदिति सत्प्रतिपक्ष इति चेन्न; अविरोधात्। परप्रकाश्यत्वस्याप्यस्मदिष्टत्वात्। अस्वप्रकाशत्वं तु तेन हेतुना न साधयितुं शक्यते। दृष्टान्तान्तरमाह यद्वेति। सर्वज्ञस्य हि ज्ञानं सर्वविषयकत्वात् स्वमपि विषयीकरोति। ननु सर्वज्ञे ज्ञानद्वयम्। एकं स्वेतरसर्वविषयकम्, अन्यत् एतज्ज्ञानविषयकम्। अतो न स्वप्रकाशतेत्यत्राह न मति-युगवानिति। तथा त्वयाऽनुक्तत्वादिति भावः। वक्तुं न शक्यत इति च पश्चात् वक्ष्यते। सर्वशब्दः संकु-चितार्थक इति पक्षमपि निरस्यति नापि चैकोनवेदीति। एकन्यूनसर्ववित्; तज्ज्ञानमेकं मुक्त्वाऽन्यत् सर्वं गृह्णातीति न। अपसिद्धान्तात्। तज्ज्ञानस्येव, तज्ज्ञानभिन्नत्वेन तज्ज्ञानविषयत्वादिना च सर्वेषाम-प्यग्रहणात् अनेकावेदित्वमेव च स्यात्। ननु ज्ञानसामान्यग्राहिव्यतिरिक्तस्य ज्ञानस्य स्वप्रकाशत्वं नास्ति। न हि शब्द इति शब्दस्य शब्दत्वसामान्याक्रान्ततया शब्द इत्यानुपूर्वीकशब्दविषयकत्वेऽपि घट इति शब्दस्य घटशब्दविषयकत्वमिति शंकायाम्, अनिष्टान्तरमाह नो चेति। धीः स्वयंसिद्धा न चेत्, धारावाहिकज्ञाने, सा=अहमनुस्यूतैतद्विषयकज्ञानधारावान् आसमिति पश्चादनुसंधीयमाना, प्रथमं सती=अन्तिमज्ञानात् पूर्वभाविनी धीरपि तदा नावबुद्धा=नानुभूतेति स्यात्। तथाचानुभवाभावे कथं स्मरणम्। ननु धीः स्वस्वरूपं कथं विषयीकुर्यात्, स्वक्रियायां स्वयं कर्मत्वस्यायोगादित्यत्राह स्वस्यामिति। स्वस्यां स्वात्मिकायां बुद्धौ बुद्धेः कर्मतया वृत्तिर्विरुद्धेत्येवं स्वीकारे बुद्धिलक्ष्मादिधीषु तत्सद्भावः कथम्। तत्रेष्यते चेत्=तथैव स्यात् सर्वत्र ॥

यथोद्देशलक्षणम्=प्रथमसरे प्रक्रमे कृतं नाम्ना पदार्थानां संकीर्तनं लक्षणकथनञ्चानतिक्रम्य तत्क्रममनुसृत्य। इतरेत्यस्य दृष्टान्तभूतधीव्यक्तिसामान्येतरेत्यर्थः। तद्व्यक्तीनामानन्त्यात् पर्यवसित-

ज्ञाननिरपेक्षव्यवहारानुगुणेत्यर्थः। वेद्मीत्युपलम्भानुगुण्यप्रदर्शनम्। अस्ति तावत् सर्वसिद्धान्तिनाम्, इदमहं वेद्मीति कर्मकर्तृघटितक्रियाविशेषावभासः। सोऽयं पूर्वज्ञानगोचरेण मानसप्रत्यक्षेण, प्राकट्यलिङ्गजनितेन अनुमितिज्ञानेन वेति न केनचिद् दृष्टम्। तत्कल्पने तु गौरवम्॥ बुद्धिसामग्र्येवात्र बोद्धृविशेषणत्वेन भातीति चेत्, तदेतत् अनुमेयवादिनं प्रति उत्तरं स्यात्; न तु प्रत्यक्षरूपां बुद्धिसिद्धिमिच्छन्तं प्रति। प्रत्यक्षाप्रत्यक्षसमुदायरूपा च सामग्री न प्रत्यक्षा स्यात्। न च प्रत्यक्षं किंचिदन्यत्, 'वेद्मि' इत्यत्र बोद्धृविशेषणतया भाति। अतो यदत्रैवं प्रत्यक्षम्, तदेव ज्ञानमिति धर्मिसिद्धिः॥ तथाऽप्यदृष्टचरं स्वयंप्रकाशत्वं न ज्ञाने कल्पयितुं शक्यम्; तत्रैव तत्सिद्धौ न कल्प्यत्वम्; अन्यत्र तत्सिद्धिरसिद्धा॥ एवं तर्हि युष्मदिष्टमपि तत्र चान्यत्र चासिद्धं न तत्र कल्प्यमिति पश्य॥ प्राकट्यानुमेयत्वस्यान्यत्र सिद्धावपि मानसप्रत्यक्षत्वं सुखादिषु स्वात्मनि च सिद्धमिति चेन्न॥ सुखादीनि स्वात्मा च, स्वयं भासन्ते मानसप्रत्यक्षतो वेति को विविङ्क्ते? अस्तु वा तत्र तत्सिद्धिः; अस्मदिष्टमपि क्वचित् स्वयैष्ट व्यमित्यभिप्रायेणाह बुद्धिलक्ष्मादिधीवदिति। बुद्धिलक्षणधीर्हि लक्ष्यभूतस्वबुद्ध्यभिव्याप्तासाधारण धर्मविषया तद्योगेन स्वात्मानमपि विषयीकरोति। बुद्धिरस्तीति च बुद्धिः स्वात्मना विषयिणी; बुद्धित्व-

---

५९– विवक्षितमिति भावः। हेतोराश्रयासिद्धिमभिप्रेत्य शङ्कते–बुद्धिसामग्र्येवेति। 'लक्ष्मादि' इत्यादि-शब्दार्थमाह–बुद्धिरस्तीति चेति। स्वसंवेद्यत्वं नाम किं घटादिवत् स्वस्य स्वात्मानं प्रति कर्मकारकत्वम्,

७१– माह विप्रतिपन्नेति। स्वयंसिद्धेत्यस्य स्वनिरूपितविषयत्वाख्यकर्मत्वाश्रयः इत्यर्थो नांगीकरिष्यते। स्वप्रयोज्यं यत् व्यवहारानुगुण्यं तद्वतीत्युक्तो विषयगतमानुगुण्यं प्रति विषयस्य धर्मितया प्रयोजकत्व-संभवात् सिद्धसाधनं स्यात्। अतोऽन्यमर्थमाह स्वगोचरेति। अद्वैतिवैलक्षण्येनास्माभिः ज्ञान-विषयकज्ञानान्तरस्याप्यंगीकारात् न साध्याप्रसिद्धिः। उपलम्भेति। तेन ज्ञानसत्तापि श्लोकेन साधिता भवति। तद्विशदीकरणम् अस्ति तावदित्यादिना। मानसप्रत्यक्षेण=अनुव्यवसायेन। इदं तार्किकमतं मीमांसकमुरारिमिश्रमतञ्च। भाट्टमतमाह प्राकट्येति। न दृष्टमित्यनेन प्रत्यक्षसिद्धत्वे गौरवमपि सोढव्यम्; तन्नेत्युच्यते। सामग्र्येवेति। प्रत्यक्षमनुमितिरित्यादिकं यत् यत् ज्ञानम्, तत् सर्वं प्रतिनियतेन्द्रियसंनिकर्षलिङ्गज्ञानादिसामग्रीं विना न भविष्यति। 'अहं घटं जानामि' इत्यस्य तादृश-सामग्रीजन्यघटादिज्ञानवानित्यर्थापेक्षया घटादिसंबन्धीन्द्रियसंनिकर्षादिमदीय इत्येवार्थोऽस्तु। ज्ञानमिति पदार्थ एव मा भूदिति चेदित्यर्थः। तदिति। अयमाक्षेपः भाट्टं प्रति कर्तुं शक्यते। तेन ज्ञानप्रत्यक्षानंगीकारात्। प्रत्यक्षे तु वर्तमाने वस्त्वपलापो न शक्यः। सामग्री तु अदृष्टादिघटितत्वात् न प्रत्यक्षा। अन्यत्तु न किञ्चित् ज्ञायते वेद्मीति गृह्यमाणम्। अतो ज्ञानाख्यं वस्त्वेव प्रत्यक्षम्। एवं धर्मि-सिद्धिरित्यन्तेन ग्रन्थेन धीसत्तास्थापनम्। अथ स्वयंप्रकाशत्वस्थापनम्। श्लोकेऽपि वेद्मीति सिद्धेति सत्तास्थापनम्, स्वयंसिद्धेति स्वयंप्रकाशत्वसाधनमिति ग्राह्यम्। साध्याप्रसिद्ध्या दृष्टान्ताभावस्य कैमुत्यसिद्धत्वात् नैतदनुमानमिति शंकते तथापीति। कल्पयितुम्=अनुमातुं न शक्यम्; अप्रसिद्धेः। भाट्ट एवं शंकते इति कृत्वाऽऽह एवं तर्हीति। न भाट्टः शंकते, किं तु तार्किको मुरारिमिश्रो वेति पुनराक्षिप्यते प्राकट्येति। मानसप्रत्यक्षविषयत्वे अन्यत्र क्लृप्ते अत्रापि संभवति किमिति स्वयंप्रकाश-त्वकल्पनेति किल शंका। मानसप्रत्यक्षस्याप्यसिद्धिः, सर्वस्य स्वयंप्रकाशत्वस्वीकारादिति भावः। ननु प्रत्यक्षविषयत्वमेव घटादौ सिद्धं सामान्यतो ज्ञानेऽपि ब्रूमः। तत् मानसे पर्यवस्यतीत्यत्राह अस्तुवेति। दृष्टान्तलाभात् तत्र तदावश्यकत्वोपपादनात् इहापि तदनुमानमिति भावः। अनवच्छि-

सामान्योपष्टब्धसर्वव्यक्तिभासनात्। न च तदाऽनुव्यवसायाद्यवकाशः; शब्दशब्दादिवत् सामान्यतः स्वात्मप्रकाशने तैरपेक्ष्यात्। बुद्धिव्यतिरिक्तत्वादिबुद्धयोऽप्येवं ग्राह्याः। दृष्टान्तान्तरमाह **यद्वा सर्वज्ञधीवदिति**। सामान्यतो विशेषतो वा सार्वज्ञ्य(सर्वज्ञ)मिच्छतां तद्बुद्धिः स्वात्मानमपि सर्वानुप्रविष्टं युगपदेव प्रकाशयति; अन्यथाऽनवच्छिन्नसर्वशब्दप्रयोगादिकमपि न स्यादिति भावः। यत्तु **कैश्चिदुक्तम्**, 'सर्वज्ञबुद्ध्यादीनां स्वसंवेद्यत्वमस्ति; न तु स्वयंप्रकाशत्वम्' इति, तत् तेभ्य एव रोचेत। न ह्यत्र स्वात्मानं प्रति कर्मकारकत्वं स्वव्योद्भूत्वं वा विधातुं युक्तम्। न च स्वगोचरधीनिरपेक्ष व्यवहारानुगुण्यं निषेद्धुं शक्यम्।

अथ **केचिदूचुः**—स्वेतराशेषगोचरज्ञानद्वयवत्तया सर्वज्ञत्वमीश्वरस्येति। तद् दूषयति **न स मतियुगवानिति**। अयं भावः—'ईदृशज्ञानद्वयवान् ईश्वरः' इत्यत्र न किंचित् प्रमाणं पश्यामः। सर्वज्ञत्वान्यथानुपपत्त्या तत्कल्पनं चायुक्तम्, स्वपरनिर्वाहकसमाधिनाऽपि तदुपपत्तेः।

यच्च स्वयंप्रकाशत्वमसहमानैरेकोनसर्वज्ञत्वमीश्वरस्योक्तम्, तत् प्रतिक्षिपति **नापि चेति**। यदि स्वज्ञानमीश्वरो न जानाति, तदा अन्येषां हेतूनां तद्बुद्धिविषयभूतानामेव हेतुत्वम्, तद्बुद्धेस्तु तदविषयभूतायाः इति विभागः स्यात्। तथाऽन्येषां स्वगोचरधीविषयतयैव प्रकाशमानत्वम्, तस्यास्तु तन्निरपेक्षमिति किं न विभज्येत? अपिच स्वज्ञानमजानता सर्वज्ञेन, स्वस्य तदाधारत्वम्, अन्येषां तदनाधारत्वं तद्विषयत्वतदन्यत्वादीनि स्वज्ञानविशेषणानि सर्वाणि दुर्ग्रहाणि स्युः। ततश्चानन्तज्ञानवत्त्वमिवानन्ताज्ञानवत्त्वमपि तस्य स्यात्। तथाच जीवप्रायत्वे तैरेवालम्। आयोजनहेतुश्च भग्नव्याप्तिकः; अचेतनाऽपि हि तवद्बुद्धिर्न चेतनायोजिता प्रवर्तते। ततश्चादृष्टादेरपि तथात्वं लाघवादेष्टव्यम्। अपिच

---

पूर्ती— उत स्वात्मानं प्रति भासमानत्वम्? उभयमपि बुद्धेर्न विधातुं युक्तमित्याह—नह्यत्रेति ॥ १ ॥

श्री—न्नेति। निर्विशेषणेत्यर्थः। पूर्वनिरुक्तं स्वयम्प्रकाशत्वमस्वीकृत्य घटादीनां व्यवहारे ज्ञानविषयत्वं यथा प्रयोजकम्, तथा ज्ञानस्य स्वविषयत्वमेव तत्र प्रयोजकमित्येकदेशिपक्षं निरस्यति यत्त्विति। अत्र = ज्ञाने स्वसंवेद्यत्वं स्वनिरूपितकर्मकारकत्वम्। ज्ञानस्य स्वकर्मकत्वं नाम स्वव्योद्भूत्वम् स्वनिष्ठविषयतानिरूपकत्वं तदिष्टम्। उभयसंमतेन स्वगोचरधीनिरपेक्षव्यवहारानुगुण्यरूपस्वयम्प्रकाशत्वेनैवोपपत्तौ किं स्वस्मिन् स्वकर्मकत्वकल्पनेनेति भावः। स्वेतरेति। स्वस्य स्वेनैव प्रकाशाभावात् स्वप्रकाशकं ज्ञानान्तरं कल्पनीयम्। तत्प्रकाशश्च पूर्वज्ञानेन। एतज्ज्ञानद्वयातिरिक्तं तु विनिगमनाविरहात् ज्ञानद्वयस्यापि विषयः। अत उभयस्यापि स्वेतरसर्वविषयकत्वम्। ईदृशेति। ज्ञानस्य स्वविषयेण सहैव ज्ञानान्तरवेद्यत्वात् ज्ञानग्राहकज्ञानान्तरस्य अनवस्थापरिहाराय प्रथमज्ञानग्राह्यत्वांगीकारे तद्विषयेण स्वात्मकज्ञानेन सहैव तस्य ग्रहणमिति स्वप्रकाशत्वमायातम्। तथाच भक्षितेऽपि लशुने न शान्तो व्याधिरिति किं ज्ञानान्तरेणेति ज्ञानान्तराभावप्रमाणमेव प्रत्युत लक्ष्यत इति भावः। स्वज्ञानविशेषणानि = स्वज्ञानं विशेषणं येषां तानि विशिष्टानि। एवम् इदं ज्ञानं मन्निष्ठम् मदन्यावृत्तिमन्मदितरविषयकम् एतदन्यदिति ज्ञानस्य विशेषणान्यपि ईश्वरेण न गृह्येरन्, ज्ञानाग्रहणात्। आयोजनाद्धेतुश्चेति। न्यायकुसुमाञ्जलौ (5) कार्यायोजनेति कारिकायाम् ईश्वरसाधको द्वितीयो हेतुरायोजनाख्य उक्तः। आयोजनं—द्व्यणुकारम्भकं सर्गाद्यकालिकं परमाणुकर्म। तत् चेतनाधिष्ठितमेव हेतुः अचेतनत्वादिति। यद्वा आयोजनम् प्रेरणम्। परमाणुः प्रेरणाधीनहेतुताकः अचेतनत्वादिति। अनेश्वरज्ञाने ईश्वरज्ञाने अत एव तत्प्रेरिते हेतुमत्त्वाद्वैकान्त्यमित्यर्थः। अदृष्टादेरपीति। तथाच प्रथमलक्षणे

पक्षे सर्वज्ञत्वश्रुतिबाधेन ; भवतां च सर्वज्ञपूर्वकत्वं साधयन् अवीतहेतुरलब्धविषयः स्यादिति भावः । स्वयंप्रकाशत्वानभ्युपगमे अनिष्टप्रसङ्गमाह **नो चेदिति** । कस्मिंश्चिद्विषये कदाचित् धारावाहिकबुद्धिः सर्वसम्मता । सा च पश्चात्, इयन्तं कालमिममर्थमद्राक्षमिति परामृश्यते । न चान्यतः पूर्वं तद्ग्रहसंभवः; धाराविच्छेदप्रसङ्गात् । अतो धारावाहिकधीः, पूर्वमनवबुद्धेति मानाभावात्, अवबुद्धेति परामर्शाच्चात्मनैव भातेति भाव्यते । ननु नाङ्गुल्यग्रं स्वात्मानं स्पृशति; न कुठारः स्वात्मानं छिनत्ति; न वह्निः स्वात्मानं दहति । तद्वत् बुद्धेः स्वात्मनि वृत्तिविरोधात् न स्वयंप्रकाशत्वमित्यत्राह **स्वस्यामिति** । **उक्तदृष्टान्तनीत्या** । स्वपरनिर्वाहकवर्गन्यायेनेति भावः । यथा च आत्मा ग्राह्यश्च ग्राहकश्च, यथा प्रत्यक्षे विषयः स्वयं बोध्यः स्वगोचरबोधजनकश्च, एवं यथादृष्टि सर्वमिति ॥ **इति ज्ञानसत्तास्वयंप्रकाशत्वे ॥ १ ॥**

**(227) स्मृत्या शब्दानुमानप्रभृतिभिरपि धीर्वेद्यते स्वप्रकाशा ;**
**धीत्वादेस्तामवेद्यामनुपधि वदतः स्वोक्तिबाधादयः स्युः ।**
**वेद्यत्वे सा जडा स्यादिति च विहतिमत् ; व्याप्तिभङ्गश्च ; नो चेत्**
**शिष्याचार्यादिसर्वव्यवहृतिविरहात् जातमौनं जगत् स्यात् ॥ २ ॥**

---

*वी*— अदृष्टाधिष्ठातृतया, द्वितीये वेदकर्तृत्वादिना चेश्वरानुमानमपि न स्यादिति भावः । अवीतहेतुः = केवलव्यतिरेकिहेतुः । कार्यं सर्वज्ञपूर्वकं कार्यत्वादिति । परमात्मनोऽसर्वज्ञत्वोक्त्या सर्वज्ञसाधनासंभव इत्यर्थः । स्वात्मनि वृत्तिविरोधे त्वया दृष्टान्ताः प्रदर्श्यन्ते, विपरीतदृष्टान्ता अपि सुप्रदर्शा इत्याशयेनाह यथाचेति । अत एवारम्भे चकारः । तथाच तत्पक्षखण्डनसौकर्याय एतदुक्तिः । सिद्धान्ते तु यथा रूपादिकं घटादौ चाक्षुषत्वादिहेतुः स्वगतचाक्षुषत्वाद्यर्थं रूपसंबन्धं नापेक्षते, तथा ज्ञानं स्वेन वाऽन्येन वा ज्ञानेनासंबद्धमग्राह्यमेव स्वव्यवहारहेतुर्भवतीति । इदमेव प्राक्, "न ह्यत्र स्वात्मानं प्रति कर्मकारकत्वं स्वधोद्भूतत्वं वा विधातुं युक्तम्; न च स्वगोचरधीनिरपेक्षव्यवहारानुगुण्यं निषेद्धुं शक्यम्" इति दर्शितम् । प्रत्यक्षविषय इति । घटपटादिर्हि प्रत्यक्षे विषयस्य कारणत्वात् ग्राहकोऽपि; विषयत्वात् ग्राह्यश्चेति भावः ॥ १ ॥

धीरस्वयंप्रकाशा वेद्या चेति तार्किकाः, धीरवेद्या स्वयंप्रकाशेत्यद्वैतिनः । धीः स्वयंप्रकाशा वेद्या चेति वयम् । तार्किकोक्तमस्वप्रकाशत्वमपास्तम् । अद्वैतिसंमतमवेद्यत्वमत्र निरस्यते । प्रथमपादेन स्वपक्षमाह स्मृत्येति । स्वप्रकाशा = पूर्वश्लोकसाधितस्वप्रकाशत्वविशिष्टा धीः स्मृत्या वेद्या भवति । "इदमहमद्राक्षम्" इति स्मृतिर्हि पूर्ववृत्तं दर्शनं विषयीकरोति । शब्देन च बुद्धिः ज्ञानमुपलब्धिरित्यादिना वेद्यते । पूर्वश्लोकोक्तेनानुमानप्रमाणेन च । प्रभृतिपदं योगशक्तिग्राहकम् । यदर्थमिदमुक्तं तदाह श्लोकशेषेण । अवेद्यत्वमद्वैतिना अनुमानेन साध्यते । तत्रानुकूलतर्कश्च प्रदर्श्यते । तदुभयं क्रमेण पादद्वयेन निरस्यति । शेषेण प्रतितर्कमप्याह । धीत्वादेः = धीत्वात् स्वयम्प्रकाशत्वाच्च तां = धियम् . अनुपधि अवेद्याम् = किञ्चिद्विशेषणानवच्छिन्नवेद्यत्वाभाववतीं = वेद्यत्वसामान्याभाववतीं, वदतः अद्वैतिनः तदुक्तानुमानस्य स्वोक्तिबाधः तदुक्त्यैव धीरवेद्येत्यादिरूपयैव वेद्यत्वात् बाधः। एवं तद्बुद्ध्या वेद्यत्वात्, तत्सिद्धान्तबलाच्च बाधः । तथा तदनुमानोपयोग्यनुकूलतर्करूपं, यदि वेद्या भवेत् जडा भवेदिति वाक्यमपि विहतिमत् । वाक्येन धियं गृहीत्वा हि तस्या वेद्यत्वापादनं जडत्वापादनञ्च क्रियते । व्याहतमेतत् । अत एव यदि वेद्यं स्यात् इति वेद्यत्वस्यात्र सत्त्वात् जडत्वाभावाच्च व्याप्ति-

अपरे तु बुद्धेः स्वयंप्रकाशत्वं ज्ञातुकामाः वेद्यत्वमपह्नुवते ; तान् प्रत्याह **स्मृतेति** । अत्र **स्वप्रकाशेति** संमतांशानुवादो वेद्यत्वविरोधाभावज्ञापनार्थः। **स्मृति**स्तावदिह, "देवदत्तमद्राक्षम्" इत्यादिषु दृष्टा। शब्दश्च बुद्धिपर्यायः सर्वो बुद्धिं बोधयति। परबुद्धयश्च प्रवृत्त्यादिभिरनुमीयन्ते ; स्वबुद्धिं च भविष्यन्तीमनुमाय शृणोति । **प्रभृति**शब्देन योगिप्रत्यक्षादिग्रहणम् । पराभिमतप्रमाणान्तरानुधावनं वा । अत्र परोक्तमवीतहेतुमपाकरोति **धीत्वादेरि**ति । आदिशब्देन स्वयंप्रकाशत्वधीशब्दवाच्यत्वादीनि गृह्यन्ते । पुरुषभेदेन कालभेदेन च बुद्धेर्वेद्यत्वमस्ति ; न तु सर्वैः सर्वदेत्यभिप्रायेणानुपधीत्युक्तम्। **आदि**शब्देन स्वबुद्धिबाधः स्वसिद्धान्तबाधश्च गृह्यते। तत्र स्वोक्तिविरोधस्तावत् , 'अनुभूतिः स्वयंप्रकाशा अनुभूतित्वात्' इत्यादिभिः। धर्मिसाध्यहेत्वादिशब्दैरनुभूतिर्बोध्यते, न वा ? आद्ये, कथं न तद्बाधः ? द्वितीये, कथमयं प्रयोगस्त्वदिष्टं साधयेत् ? भ्रान्त्या बोध्यते, न तु वस्तुत इति चेत्–तर्हि भ्रान्तिसिद्धं बोध्यत्वमनुमतत्वात् न प्रतिषेध्यम् । वस्तुतस्तु बोध्यत्वं न क्वचित् सिद्धमिति, तथाऽपि (तदापि?) (तदपि ?) न प्रतिषेध्यम् । अपि च तादृशस्य वेद्यत्वस्याभावः सर्वत्र प्रसिद्ध इति सपक्षे सति पक्षमात्रवर्ती हेतुरयं कथं[म]नाभासः ? एवं परबुद्धिमहं जानामीति स्वबुद्धिबाधः ; ज्ञानरूपब्रह्मबोधनार्थं शास्त्रमिति स्वसिद्धान्तबाधश्च ।

अत्रानुग्राहकमपि परप्रयुक्तं दूषयति **वेद्यत्वे** इति । वेद्यत्वे जडत्वप्रसङ्ग इति वदता प्रसञ्जकप्रसञ्जनीयधर्मान्वितत्वेन शब्दवेद्यत्वं स्वीकृतम् , न वा ? पूर्वत्र व्याघातः। उत्तरत्र वैयर्थ्यम् । किं चात्र प्रसज्यमानं जडत्वम् ? (1) वेद्यत्वमात्रं वा, (2) स्वगोचरवेदनेनैव सिद्धत्वं वा, (3) स्वयंप्रकाशत्वाभावो वा, (4) अविदितावस्थायोगो वा, (5) अन्यद्वा किंचित् ? न प्रथमः ; इष्टप्रसङ्गरूपत्वात् , प्रसञ्जकप्रसञ्जनीययोरविशेषाच्च । न द्वितीयः ; अवधारणव्यवच्छेद्यस्य स्वगोचरवेदननिरपेक्षसिद्धित्वस्य अनुमानादिना समर्थ्यमानस्य स्वाश्रयवेद्यत्वसहदृष्ट्या प्रसङ्गस्य भग्नव्याप्तिकत्वात् । अत एव न तृतीयः; नामभेदमात्रत्वात् । नापि चतुर्थ , इष्टप्रसङ्गत्वात् ; न हि बुद्धिर्विद्यमानावस्थायां स्वबुद्ध्यन्तरविदिता ॥

---

46— स्वप्रकाशा धीरिति पक्षविशेषणं व्यर्थमित्याशङ्क्याह—अत्र स्वप्रकाशेति । प्रभृतिशब्दस्य स्वाभिमतप्रमाणग्रहणौचित्यमभिप्रेत्याह—प्रभृतिशब्देनेति । अनुमानप्रभृतीति प्रमाणान्तरभेदवाचिपदसमभिव्याहृतस्य प्रभृतिशब्दस्य अवान्तरतद्भेदग्राहकत्वौचित्यात् योगिप्रत्यक्षस्य सर्वसम्मतत्वाभावाद्वान्यथा व्याचष्टे—पराभिमतप्रमाणान्तरानुधावनं चेति । 'अनुपधि' इति साध्यविशेषप्रयोजनमाह-पुरुषभेदेनेति अविदितावस्थायोगो वेत्यत्र अविदितशब्देनाभिमतं ज्ञानान्तराविषयत्वं वा ? अनवभातत्वं वेति विकल्पमभिप्रेत्य, आद्यं निराकरोति इष्टप्रसंगत्वादिति । द्वितीयं शङ्कते—

47– भङ्गः स्यात्। नो चेत् = एवं वेद्यत्वानंगीकारे गुरुशिष्ययोः वादिप्रतिवादिनोश्च व्यवहाराः सर्वे नैव भवेयुः। इदं वाक्यमेतद्बुद्धिजनकमिति बुद्धिग्रहणाभावे को वा व्यवहरेदिति ॥ प्रवृत्त्यादिभिरिति। तथा च कणादः, "प्रवृत्तिनिवृत्ती च प्रत्यगात्मनि दृष्टे परत्र लिङ्गम्" इति। वस्तुतस्तु बोध्यत्वम् = वास्तवं बोध्यत्वं तु। तादृशस्य = पारमार्थिकस्य। हेतुरयं धीत्वादिः सर्वपक्षव्यावृत्तत्वात् असाधारणहेत्वाभासः। आदय इति आदिपदार्थमाह एवमिति। प्रसञ्जकमिह वेद्यत्वम्। प्रसञ्जनीयं जडत्वम्। किंचिदिति। किंरूपमिति प्रश्नः। चकारः पूर्वोक्तदोषसमुच्चायकः। नामभेदेति। स्वयंप्रकाशशब्देनापि तदेवोच्यत इति ॥ 2 ॥

अप्रकाशमानावस्थाप्रसङ्गे तात्पर्यमिति चेन्न; सर्वेषां सर्वदा अप्रकाशमानत्वावस्थायाश्शून्यवादिनां घटादिष्वप्यसंमतत्वात्। कदाचित् कस्यचिदप्रकाशमानत्वस्य बुद्धावप्यस्माभिरभ्युपगमात्। नापि पञ्चमः; बुद्धौ दृष्टस्य कस्यचित् विरुद्धधर्मे प्रसज्यमाने पूर्ववत् व्याप्तिभङ्गादेव। अतथाभूतस्य तु यथासंभवमिष्टप्रसङ्गत्वात्, व्याप्तिरहितत्वाद्वेति।

एवं परोक्तं प्रसङ्गं प्रतिक्षिप्य प्रतिप्रसङ्गमाह **नो चेदिति**। 'न तावत् शिष्याचार्यौ परस्परबुद्ध्यनभिज्ञौ; प्रश्नप्रतिवचनाद्यसंभवप्रसङ्गात्। एवं वादिप्रतिवादिप्रभृतयोऽपि मिथो बुद्धिमबुद्ध्यमानाः न विवादादिकं कुर्युः। तथा पामराणामपि संलापो न स्यादिति भावः। ननु अन्तःकरणवृत्तय एव परस्परं बुद्ध्यन्ताम्; तत एव च सर्वो व्यवहारः स्यात्॥ न स्यात्; बाह्यकरणव्यापाराणामिवान्तःकरणव्यापारस्यापि ज्ञानशब्दवाच्यत्वाभावात्। भावे वा तदतिरिक्तचैतन्यस्वीकारायोगात्॥ एतेन वृत्त्यवच्छिन्नचैतन्यं मिथो वेद्यम्, न तु शुद्धमित्यादिकमपि दुराशामात्रम्॥ इति बुद्धेरवेद्यत्वभङ्गः॥२

(228) **बुद्धेरर्थप्रकाशादनुमितिरिति चेत्, तन्न साध्याविशेषात्;**
**साध्याङ्गेदेऽपि बुद्धिर्यत उदयति ते, स्यात् ततोऽर्थप्रकाशः।**
**मध्ये बुद्धिः किमर्था? ननु समग्रमयोरप्यसाधारणत्वम्;**
**तत् सा नित्यानुमेया यदि, फलति तदा बुद्धितत्त्वापलापः॥ ३॥**

---

स०—अप्रकाशमानेति। अत्रापि सर्वदा सर्वेषां अनवभातत्वं वा? कदाचित् कस्यचित् अनवभातत्वं वेति विकल्पमभिप्रेत्य क्रमेण दूषणमाह—सर्वदेत्यादिना। अनथाभूतस्य तु इति। बुद्धौ दृष्टधर्मविरुद्धस्येत्यर्थः। यथासम्भवमिष्टप्रसंगत्वात् व्याप्तिरहितत्वाद्वा इति। अविरुद्धधर्मस्य बुद्धौ विद्यमानत्वे व्याप्तिरहितत्वमिति विभागप्रसञ्जकस्य वेद्यत्वस्य बुद्धौ अवश्याङ्गीकार्यत्वात् तत्र प्रसञ्जनीयस्य धर्मस्याभावाच्च व्याप्तिरहितत्वमिति भावः॥ २॥

श्री— सर्वथैवावेद्यत्वमद्वैतीष्टम्। प्रत्यक्षावेद्यत्वं भाट्टमतम्: अनुमेयत्वस्थापनेन तत् सूचयति बुद्धेरिति। बुद्धेः =ज्ञानस्य अर्थप्रकाशात्= अर्थगतप्राकट्यात् प्रत्यक्ष्यमाणात् पूर्वस्थापितस्वप्रकाशत्वासहनेन अनुमितिरेव चोद्यते चेत्, तन्न; साध्याविशेषात्। प्रकाशो हि ज्ञातता। तया ज्ञानानुमानञ्च घटो ज्ञातः ज्ञातताश्रयत्वादित्येव। तत्र हेतुसाध्ययोरविशेषः। ननु ज्ञातता नाम कश्चिदखण्डो धर्मः ज्ञानक्रियाफलभूतः। तेन ज्ञातता नानुमीयते, किंतु ज्ञानम्। तदयं प्रयोगः, 'इयं ज्ञातता ज्ञानजन्या कारणान्तराजन्यत्वे सति कार्यत्वात्' इति, तत्राह साध्यादिति। हेत्वसिद्धिः, ज्ञानसामग्रीत्वेन ते यदिष्टम्, तत एव साक्षात् ज्ञाततायाः भवितुमर्हत्वेन कारणान्तराजन्यत्वरूपविशेषणाभावादित्यर्थः। ननु कुलालपितुः कुलालेनान्यथासिद्धिवत् ज्ञानादेव ज्ञाततासंभवे ज्ञानसामग्र्या अन्यथासिद्धिरिति चेत्—कुलालवत् ज्ञानस्यापि सिद्धत्वे तथा स्यात्, तदेव नेत्याह मध्ये बुद्धिः किमर्थेति। ननु ज्ञानसामग्र्याः आत्मादेः सर्वज्ञाततासाधारण्यात् प्रकृतासाधारणकारणं किञ्चिदपेक्षितम्, तत्राह नन्विति। सामग्र्याः साधारणत्वे प्रकृतज्ञानमेव जायते इति कथम्। प्रत्येकं कारणस्य साधारणत्वेऽपि सामग्र्याः असाधारणत्वमेव सर्वत्रेति। ततः किमित्यत्राह तदिति। अपलापपदेनानुभवविरोधो दर्शितः। विषयापलापेन ज्ञानमात्रास्तित्ववादी यथा निराक्रियते, तथा विषय-

**कौमारिलास्तु** कथयन्ति—'न स्वयंप्रकाशा, नापि मानसप्रत्यक्षा बुद्धिः ; स्वफलेन तु विषयप्रकाशेनानुमीयते' इति । तदनुभाषते **बुद्धेरिति** । "बुद्धिलक्ष्मादिधीवत्" इत्यादिना पूर्वोदाहृतं स्वप्रकाशत्वं दुस्त्यजमित्यभिप्रायेण प्रतिक्षिपति **तन्नेति** । अर्थप्रकाशो बुद्धिरिति हि बुद्धिं लक्षयन्ति । अत. कथं तेनैव लिङ्गेन तस्यैवानुमानमिति व्यञ्जयन् आह **साध्याविशेषादिति** । ननु अर्थगतः प्रकाशो लिङ्गम्, पुरुषगतः प्रकाशोऽनुमेय इत्यत्राह **साध्यादिति** । अयं भावः—पुरुषगतप्रकाशकल्पनेऽपि यद्यर्थगतप्रकाशमन्तरेण व्यवहारो न जायेत, तदा बुद्धिजनकत्वेनाभिमतैव सामग्री लाघवात् अर्थगतप्रकाशस्याव्यवहितहेतुरिति कल्प्यतामिति । फलितमाह **मध्य इति** । **किमर्था** । न तावत् अर्थव्यवहारार्था, नाप्यर्थप्रकाशार्था; द्वयोर[प्यः]न्यथासिद्धेरिति भाव. । प्रतिपुरुषनियतविशेषमन्तरेण कथमर्थप्रकाश प्रतिपुरुषनियतो भवेदित्यत्राह **ननु सममिति** । बुद्धेरिव बुद्धिसामग्र्या अपि तत्तत्पुरुषासाधारणत्वं त्वयाऽपि स्वीकृतम् । अन्यथा कथमेकपुरुषमात्रनिष्ठबुद्धिजनकत्वमिति भावः । उक्तं निगमनेन व्यनक्ति **तदिति** ॥ **इति बुद्धेर्नित्यानुमेयत्वभङ्गः** ॥ ३ ॥

**(229) ज्ञातुर्ज्ञप्तेरलोपं कथयति निगमः ; स्मर्यते चैवमेषा ;**
**तस्मादेकत्वसिद्धौ प्रसरणभिदया तद्भिदैकत्र पुंसि ।**
**योग्यादृष्टेरभावात् न च भवति सुषुप्त्याद्यवस्थासु बाधः ;**
**तत्तद्वस्तुप्रकाशक्षणविरहवती न प्रकाशेत बुद्धिः ॥ ४ ॥**

धी- मात्रस्वीकारेण ज्ञानापलाप्यपि निराकार्यः। ज्ञानसिद्धावेव हि तदाश्रयतयाऽऽत्मसिद्धिः बन्धमोक्षादिचिन्ता च। वस्तुनो ज्ञाततैवासिद्धा अप्रत्यक्षा असार्वत्रिकी चेत्यादिकमन्यत्रानुसंधेयम् ॥३॥

आत्मस्वरूपानतिरिक्तं ज्ञानं नित्यमेकमित्यद्वैतिनः। प्रत्यात्मं भिन्नं ज्ञानमनित्यमनेकञ्चेति तार्किकादयः। प्रत्यात्मं भिन्नं ज्ञानमेकमेव नित्यञ्चेति वयम्। अत्र प्रमाणमाह **ज्ञातुरिति** । निगमः=वेदः । 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते, इत्ययम् आत्मगतस्य ज्ञानस्यालोपं=सर्वदा स्थितिं कथयति। एषा=ज्ञप्तिः एवम् अलोपवत्त्वेन स्मर्यते च शौनकादिभिः । तस्मात्=श्रुत्या स्मृत्या तन्मूलार्थापत्त्या च एकत्र पुंसि=एकैकस्मिन्नपि जीवे एकत्वसिद्धौ=ज्ञानद्रव्यमेकमेव सर्वदेति निश्चये जाते अनुभूयमाना तद्भिदा, प्रतिपुरुषं प्रतिसमयं ज्ञानभेदः, प्रसरणभिदया=तत्प्रसाररूपावस्थाभेदमादायेति वक्तव्यम्। तर्हि सुषुप्तिमूर्च्छामरणावस्थास्वपि ज्ञानमात्मना सह प्रकाशताम् । अनुपलम्भात् नास्ति तदा ज्ञप्तिरिति चेत्—तदा ज्ञप्तेर्बाधो न भवति । केवलानुपलब्धेरभावं प्रति मानत्वाभावात्। योग्यानुपलब्धिरूपस्य च मानस्य तदानीमभावात्। यथा घटस्य योग्यस्याप्यन्धकारे तत्सत्त्वेऽप्यनुपलब्धिमात्रेण बाधो न भवति। योग्यदशायामनुपलब्धिर्हि योग्यानुपलब्धिः। अन्धकारे च घटस्य ग्रहणयोग्यता नास्तीति न सा योग्यदशा—तथैवेहापि। ज्ञानस्य योग्यदशा केति चेत्—आह **तत्तदिति** । घटस्य योग्यदशा घटातिरिक्ततद्ग्राहकसामग्रीसद्भावदशा; अत्र ज्ञानस्य योग्यदशा च यत्किञ्चिद्विषयग्रहणदशा । सुषुप्त्यादौ च तदभावात् तदानीन्तनानुपलब्धिर्न योग्यानुपलब्धिरिति। न चैवमात्मनोऽपि ज्ञानेन विषये गृह्यमाण एव स्फुरणं नान्यदेति योग्यायोग्यदशाद्वयं स्यादिति वाच्यम् ; 'सुखमहमस्वाप्सम्' इति स्वापे तत्प्रकाशप्रतीत्या लाघवाच्च योग्यदशामात्रस्यैवीकारात्। तथाच तत्तद्वस्तुप्रकाशक्षणो ज्ञानयोग्यदशा। तदभाववती बुद्धिर्न प्रकाशेतेति।

**वैशेषिकादयो** वदन्ति — 'अनीश्वराणामात्मनामक्षजन्यमेव ज्ञानम्; न तु स्वाभाविकम्' इति। तन्निरासार्थमाह **ज्ञातुरिति**। श्रूयते हि, "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इत्यादि। नेयं श्रुतिः ईश्वरधीविषया, प्रकरणवैघट्यात्। न धीप्रवाहाविच्छेदपरा; सुषुप्त्यादौ तद्विच्छेदस्य युष्माभिरेवोक्तेः। न ज्ञानशक्तिनित्यत्वार्था; मुख्ये सति उपचारायोगात्। नाऽऽत्मस्वरूपनित्यत्वार्था; व्यतिरेकोक्तेः। न चात्र सामानाधिकरण्यम्; आत्मस्वरूपनित्यत्वस्थापने विशेषणनैरपेक्ष्यात्। अत्र स्वाभीष्टार्थस्य उपबृंहणसिद्धत्वमाह **सर्वत** इति। एवं-विपरिलोपरहितत्वेनेत्यर्थः। तदाह भगवान् **शौनकः**, "यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः। दोषप्रहाणात् न ज्ञानमात्मनः क्रियते तथा॥ यथोदपानकरणात् क्रियते न जलाम्बरम्। सदेव नीयते व्यक्तिमसतः संभवः कुतः॥ तथा हेयगुणध्वंसात् अवबोधादयो गुणाः। प्रकाश्यन्ते, न जन्यन्ते, नित्या एवाऽऽत्मनो हि ते॥" इति। एवं तर्हि स्मृत्यनुभवरूपेण (भेदेन?) प्रत्यक्षपरोक्षभेदेन, दर्शनश्रवणादिभेदेन, पूर्वापरादिभेदेन च सर्वलोकविदितो धीभेदः कथं निर्वाह्य इत्यत्राह **तस्मादिति**। अत्र, "प्रज्ञा च तस्मात् प्रसृता पुराणी", "तेनास्य क्षरति प्रज्ञा", "आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा" इत्यादिकमप्यभिप्रस्तारस्यमिति भावः। पुरुषभेदेन(भेदनियत)धीभेदस्य प्रसरणभेदोपाधिकत्वाभावात् **एकत्र पुंसीति** नियमितम्। ननु सुषुप्त्यादिषु स्वतोऽन्यतो वा बुद्धेरुपलम्भासंभवात् नित्यत्वश्रुतिः, "आदित्यो यूपः" इत्यादिवत् अपहृतविषया; तत्राह **योग्यादृष्टेरिति**। योग्यानुपलब्धेरभावात् अनुपलब्धिमात्रस्याबाधकत्वाच न तदानीं तद्बाधः। यूपद्रव्यस्य तच्छक्तेर्वा तपनतादात्म्ये विरुद्धधर्मसहिततद्धर्मिग्राहकेण विद्रावितमिति भाव.। कथमत्र योग्यादृष्टेरभाव इत्यत्राह **तत्तदिति**। प्रकाशयोग्यदशायामप्रकाशो(शे) हि योग्यानुपलब्धिः स्यात्। विषयप्रकाशरहितावस्थायां न बुद्धिरनन्याधीनप्रकाशा। अतः सुषुप्त्यादौ तस्याः स्वतःप्रकाशयोग्यत्वाभावात् न योग्यानुपलब्धिरिति॥

**इति क्षेत्रज्ञबुद्धेरपि स्वरूपनित्यत्वम्॥ ४॥**

---

श्री— इत्यादीति। 'न द्रष्टुर्दृष्टेर्विपरिलोपः' इत्यादिकमपि ग्राह्यम्। ननु 'न वक्तुर्वचो विपरिलोपो विद्यते' इति श्रवणात् वागपि नित्या स्यादिति चेन्न-वचनशक्तेरेव तत्र विवक्षितत्वात्। तदनादित्वस्येष्टत्वात्। यद्वा वचनानुकूलयत्नोऽपि ज्ञानपरिणाम एवेति तत्रापि वाक्ये ज्ञाननित्यत्वमेव कथितम्। सामानाधिकरण्यम् = ज्ञप्तिरूपस्य विज्ञातुरिति वा; विज्ञातृरूपज्ञप्तेरिति वा। आत्मनोऽपि ज्ञानस्वरूपत्वादेवमाशंका युज्यते। श्लोके एकत्र पुंसीत्येतद्व्यर्थमिति शंकां परिहरति पुरुषेति। प्रतिपुरुषं ज्ञानस्य स्वरूपत एव भेदोऽस्ति। न ह्येकमेव ज्ञानं प्रकृतिवत् सर्वपुरुषसाधारणमिष्यते। अतः प्रसरणभेदप्रयुक्तज्ञानभेदो न तत्र वक्तव्यः, किन्तु तत्तत्र पुरुषे कालभेदेन भेदमात्रं इति भावः। प्रसृता पुराणीति। अनेन बुद्धेरनादित्वं संकोचप्रसरणशीलत्वं च दर्शितम्। अत एव द्रव्यत्वमपि। द्रव्यञ्च सर्वमपि स्वरूपेण नित्यम्, अवस्थाभेदादेवानित्यं तत्र किञ्चिदित्यनुभवात् बुद्धिद्रव्यस्यापि तथात्वौचित्यात् धर्मभूतज्ञानस्य नित्यत्वं प्रसरणश्रुत्यन्यथानुपपत्त्यापि ज्ञायते। अत एव श्रुतिः "अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा" इति। न विद्यते उच्छित्तिर्यस्य सः अनुच्छित्तिः धर्मः=धर्मभूतज्ञानं यस्य सः आत्मा। एतद्धर्मस्यैव नित्यत्वे एतन्नित्यत्वं कैमुत्यसिद्धमिति हेतुगर्भविशेषणमिदम्। योग्यदशायामिति। नव्यतार्किकैः योग्या च सा अनुपलब्धिश्चेति विग्रहः क्रियते। प्राच्यैः योग्यस्यानुपलब्धिरिति। योग्यस्य योग्यदशापन्नस्य = स्वग्राहकसामग्रीविशिष्टस्येत्यर्थः॥४॥

(230) उत्पत्त्यादेरभावान्न यदि दृशि भिदा, नो, दशाभेददृष्टेः ;
दृष्टादृष्टान्यवस्था क्वचिदिह पुरुषे बुद्ध्यवस्थाभिरेव ।
अज्ञानाद्यैरनैकान्तिकमपि ; न च धीरात्मभेदेऽप्यभिन्ना
ज्ञत्वाज्ञत्वादिभेदः कथमिव घटते सर्वथैका मतिश्चेत् ॥ ५ ॥

यदाहु —'संविन्न नाना उत्पत्तिरहितत्वात् नाशरहितत्वाद्वा, न यदेवं न तदेवम् यथा घट' इति—तदनुभाषते **उत्पत्त्यादेरिति**। अत्र परमार्थभेदो वा अपरमार्थभेदो वा प्रतिक्षिप्यते। नाद्य, व्यतिरेकस्थाने घटादौ परमार्थभेदाभ्युपगमप्रसङ्गात्। न द्वितीय, पक्षे परमार्थभेदाभ्युपगमप्रसङ्गात्। तथाच किं नश्छिन्नम्, कल्पितभेदास्वीकारात्। तन्निषेधे स्वमतविरोधश्च। अत एव भेदमात्रप्रतिषेधमति ज्ञाऽपि दुस्स(श)केत्यभिप्रायेण प्रतिवक्ति **नो** इति। बाधितत्वमाह **दशाभेददृष्टेरिति**। उत्पत्तिनाशाद्यवस्था संविद सर्वलौकिकपरीक्षकसदृष्ट, तत्प्रतिषेधस्तैरेव प्रतिषिध्येतेति भाव। हेत्वसिद्धिमपि दर्शयन् दशाभेद दर्शयति **दृष्टादृष्टेति**। यदि तु एकैव बुद्धि सर्वदा सर्वविषया, 'किंचिन्मया दृश्यते, नान्यत्', 'दृष्ट च तत्तत् इदानीं न दृश्यते' इत्यादिप्रतीतिप्रतीत व्यवहारा प्रलुप्येरन्, चिन्तावुभुत्साप्रश्नोत्तरादयश्च

श्री— संविदो नित्यत्वमुक्तम्। तत्र एकत्व पुंसीत्यनेन पुरुषभेदे संविद्भेद स्वरूपत एवेत्युक्तमाक्षिपत्यद्वैती। ब्रह्मात्मिका संविदेकैव नानापुरुषनिष्ठीयनानाज्ञानरूपेण विकल्प्यत इति संविदैक्यमनुमानेनापि साध्यते तेन। सिद्धान्ती तु एकप्रकृतिजन्याना घटपटादीना मिथोभेदवत् एकज्ञानीय परिणामभूतज्ञानानामपि मिथोभेदस्य प्रामाणिकत्वात् पुरुषभेदे ज्ञानभेदस्य सिद्धत्वाच्च ब्रह्मभूत संविदैक्य सर्वथा न भवतीति प्रत्याह। सर्वमिदं श्रीभाष्येऽपि। बुद्धि नाना न भवति उत्पत्त्यभावात् विनाशाभावाच्चेत्यनुमानद्वयमादौ निरस्यते। दृशि= बुद्धौ, भिदा= भेद नानात्व न, उत्पत्तेर्नाशस्य चाभावात्। बुद्धिभेदशून्या अनुत्पन्नत्वात् अनाशित्वाच्चेति तदुक्ति। निरस्यति नो इति। कुत इत्यत्र प्रत्यक्षेण बाधादित्याह दशाभेददृष्टेरिति। एकपुरुषीयज्ञानभेदमादाय बाधवर्णन प्रथमम्। पुरुषभेद भिन्नज्ञानमादाय बाधमन्ते वक्ष्यति। दशा स्मृतित्वानुभवत्वप्रत्यक्षत्वानुमितित्वादय वृत्त्युक्ताश्च। एते भेदा तेषा दर्शनात्। तेन नानात्वेन बाध। भेदत इत्येतावदनुक्त्वा दशापदप्रयोगौचित्य विवृण्वन् स्वरूपासिद्धिमप्याह। प्रत्यक्षवादीना दृग्भेदकत्वे सिद्धान्तिना कथ नित्यैकधर्मभूतज्ञानाङ्गीकार इत्यत्रोत्तरदानार्थं क्वचित् पुरुषे बुद्ध्यवस्थाभिरेवेत्युक्तम्। तथाच एकैकपुरुषीयज्ञाने प्रत्यक्षत्वाद्यवस्थाना दृष्ट अवस्थाभेदप्रयुक्त नानात्वमावश्यकम्। द्रव्या निर्विकारत्वस्वीकारात् तथा नानात्व ते न भवति। एकपुरुषीयप्रत्यक्षादिक परपुरुषीयप्रत्यक्षादिकञ्च स्वत एव भिन्नम्। अन्यथा प्रत्यक्षस्यैकीयस्य सर्वीयत्वे लोके दृष्टादृष्टव्यवस्थैव न स्यात्। तथा पूर्वमिद न दृष्टम् तत्तु दृष्टमिति एकस्यापि पुरुषस्य दृष्टदृश्यमानव्यवस्था ज्ञानस्योत्पत्तिविनाशोभयसाधिका। अतोऽनुत्पत्तिरूप अनाशित्वरूपश्च हेतुरसिद्ध। एव व्यभिचारश्च। अज्ञाने अविद्याया हेतुद्वयसत्त्वात् तत्र भेदाभावरूपसाध्याभावात्। अनेकजीववादे अनेकाविद्यासत्त्वोक्त। आद्यपदेन प्रागभावे अनुत्पत्तिहेतो व्यभिचार प्रध्वंसे अनाशित्वहेतोर्व्यभिचारश्च ज्ञाप्यते। विभिन्नपुरुषीयज्ञानाना भेदस्य लोकप्रसिद्धत्वादपि बाधमाह न चेति। सर्वमतेरप्येकत्वे दोषमाह ज्ञत्वेति ॥ व्यतिरेकस्थाने= व्यतिरेकदृष्टान्ते। सर्वदा सर्वविषयेति। बुद्धिरेकैवेति पक्षे सार्वकालिकत्वं सर्वविषयकत्वञ्च स्वीकर्तव्यमिति भाव। सर्वविषयकत्वेऽनुपपत्तिरुच्यते किञ्चिदिति। सार्वकालिकत्वेऽनुपपत्तिरुच्यते दृष्टेति।

न भवेयुरित्याशयः । पुरुषभेदनियतबुद्धिभेदस्यावश्यांभेदप्रयुक्तत्वाभावात् क्वचिदिह पुरुष इति विशेषितम् । किंच उत्पत्तिरहित. प्रागभाव, त्वदिष्टं देवदत्तादिभेदप्रतिनियतप्रमानिवर्त्यानादिभावरूपं घटाद्यज्ञानं च त्वयैव भेदवत्तयाऽङ्गीक्रियते । नाशरहितश्च घटपटादिप्रध्वंसो नानाभूतः । अतस्तैः त्वदुक्तमनुमानमनैकान्तिकमित्याह अज्ञानाद्यैरिति। उत्पत्तिनाशाभावद्वयसमुदायात्मा युगलहेतुर्नानैकान्तिक इति चेत्— तदपि न ; अत्यन्ताभावैरुभयान्तरहितैः प्रतियोगिभेदेन नानाभूतैरनैकान्त्यस्य दुस्तरत्वात् । तेषां चोत्पत्त्यादिमत्त्वे प्रागूर्ध्वं च तदाश्रये प्रतियोगिप्रसङ्गेनात्यन्ताभावरूपत्वव्याघातात् । न चैक एवात्यन्ताभावः सर्वप्रतियोगिकः, एकशून्यस्य सर्वशून्यत्वप्रसङ्गादिति भावः । प्रकारान्तरेणापि बाधं दर्शयति न चेति । अयं भाव -अस्माभिस्तावत् नित्यस्सत्यश्चात्मभेदः स्वीकृतः; युष्माभिरपि काल्पनिकः । पक्षद्वयेऽपि जडपण्डित गुरुशिष्यादिव्यवस्था संविच्छेदमन्तरेण न संपद्येत । ततश्च पुरुषभेदनियतबुद्धिभेदा पक्षत्र सहृदयविसंवादीति हृदयम् । उक्तं विवृणोति ज्ञत्वेति । यत्तु मायाकृतविच्छेदप्रत्ययात् चिच्छक्ति-चित्रभित्तौ विचित्रप्रतिभास इति बाह्याद्वैतिभिरुक्तम्—तत्र यदि वैचित्र्यं सत्यम्, ऐक्यव्याघातोऽपि दुर्वार । अथ काल्पनिकम्, तद्यन्याद्वैतमतवदेव सर्वोपप्लवप्रसङ्ग इति । सर्वथा-विषयाश्रयस्वगतभेद विधूननेनेत्यर्थः ॥

इति पारमार्थिकसंविच्छेदः ॥ ५ ॥

(231) भेदादिर्दृश्यभावाश्च दृशि, दृशितया दृश्यधर्मा न दृक् चेत्
पूर्वस्मिन्नित्यताद्यैरनियतिविहती ; वाग्विरोधादि शेषे ।
बाधश्चात्र द्वयोः स्यात्, स्वगत इह च यैस्साध्यते ये च साध्याः
नैते मिथ्या, विरोधात् ; न दृशिरविमतेः ; स्यादभावोऽपि धर्मः ॥ ६ ॥

---

श्री— देवदत्तादीति । नायकसरस्थः यथोक्तं देवदत्ती (38) इति श्लोकोऽत्रानुसंधेयः। अनेनाविद्या-यामनैकान्त्यं नानात्वसत्त्वादित्यर्थपरश्रीभाष्यवाक्यस्यानेकाविद्यापक्षपरत्वमपि दर्शितम् । युगल-हेतुरिति । उत्पत्त्यादेरभावादित्यस्य उत्पत्तिविनाशोभयाभावादिति नार्थः, किंतु उत्पत्त्यभावविनाशा-भावद्वयादिति। तत्र प्रत्येकमिव युगलं मिलितमपि हेतुर्न भवतीति अभिधीयते। उभयान्तरहितैरिति। प्रागभावप्रध्वंसाभावरूपोभयावधिरहितैरित्यर्थः। प्रकारान्तरेणापीति । दृशाभेदं विना ज्ञानभेद-मादायैवेत्यर्थः। पुरुषभेदेन हि ज्ञानमपि भिन्नम् । विषयाश्रयेति। अनुभूतिर्निर्विषया निराश्रया निर्धर्मका चेत्युक्तेरिति भावः ॥ ५ ॥

एकमेव निर्धर्मकत्वरूपप्रमेयं भेदपक्षकानुमानेन बुद्धिपक्षकानुमानेन चोच्यते दृशिर्धीर्बुद्धि-रनुभूतिरिति पर्यायाः। भाष्ये अनुभूतिपदं प्रयुक्तम् । भेदादिरिति । धर्म इत्यर्थः । दृश्यभावादिति । दृश्यत्वादिति हेतुः। अयं रूपादिदृष्टान्तत्वात् वीतहेतुः-अन्वयिहेतु। अनुभूतित्वादिति हेतुरवीत-हेतुः=व्यतिरेकहेतुः । न दृशि =नानुभूतिनिष्ठ इत्यर्थः । साध्यमेतत् । अतीतानुमानं दृशितया= अनुभूतित्वात् दृक्=अनुभूतिः दृश्यधर्मा नेति । निर्धर्मकत्वं साध्यम्। पूर्वस्मिन् भेदादिपक्षकानुमाने नित्यत्वाद्यैः अनुभूतिनिष्ठैः धर्मैः अनियतिः= अनैकान्त्यम्। तत्रानुभूतिनिष्ठत्वाभावरूपसाध्याभावात् । ननु तेषामपि पक्षीकारेणानुभूतिनिष्ठत्वाभावस्य साधनाद्म व्यभिचार इति चेत्, आह विहतिर्दोष इति । बौद्धादिविलक्षणाय स्वोक्तस्य नित्यत्वादेः स्वयमेव निरासे व्याघात इत्यर्थः । शेषे=द्वितीयानु-माने दृशित्वहेतुके स्ववाग्विरोध. हेतुसाध्यरूपधर्मकथनं निर्धर्मकत्वकथनञ्च हि निरुद्धम् । आदिपदेन

अन्यदपि संविदो निर्भेदत्वे निर्धर्मकत्वे च परोक्तं वीतमवीतं चानुमानमनुभाषते **भेदादि**ति । आदिशब्देन जन्मादयः स्मृतित्वानुभूतित्वादयश्च गृह्यन्ते । 'विगीता धर्मा न संविदि वर्तन्ते, दृश्यत्वात् रूपादिवत्' इत्येकः । 'अनुभूतिर्धर्मरहिता, अनुभूतित्वात्' इत्यपरः । तत्राद्यं दूषयति **पूर्वस्मि**न्निति । अयं भाव.—अत्र नित्यत्वस्वयंप्रकाशत्वादयो धर्माः पक्षीक्रियन्ते, न वा ? न चेत्, तेषां दृश्यत्वेऽपि संविद्वर्तित्वेन तैरनैकान्त्यम् ; पक्षीकारे तु सौगतादीन् प्रति त्वयैव साध्यन्ते बाध्यन्ते चेति सिद्धान्तव्याघात इति । द्वितीयमपि दूषयति **वाग्विरोधादी**ति । आदिशब्देनासिद्धि-बाध सिद्धान्तविरोधसंग्रहः । अत्रापि विकल्पन. प्रयुक्तिः । संविदि निर्धर्मकत्वं साधयता प्रयुज्यमानौ हेतुसाध्यधर्मौ तत्रान्वीयेते, न वा ? पूर्वत्र स्ववाग्विरोधः, उत्तरत्र हेत्वनन्वयात् स्वरूपासिद्धिः, साध्यानन्वयात् बाधः, स्वसिद्धान्तसिद्धयोरुभयोरपि प्रतिषेधादपसिद्धान्त इति ।

कि च, **श्लो.**—सत्यधर्मनिषेधे स्यात् घटादेः सत्यधर्मता । सत्येतरनिषेधे तु दुस्तरं सिद्धसाधनम् ॥

**बाधश्चे**ति । प्रत्यक्षानुमानागमैरिति शेषः । पुनरपि द्वयोस्साधारणं दूषणं वक्तुं विकल्पालम्बनमनुवदति **स्वमत** इति । युष्मत्सिद्धान्ते साधकत्वेन साध्यत्वेन च ये धर्माः संगृहीताः, ते दृशिस्वरूपादतिरिक्ताः, अनतिरिक्ता वा । अतिरिक्तत्वपक्षे सत्याः, मिथ्या वा । सत्यत्वे च तत्पक्षीकारबहिष्कारयोरुक्तमेव दूषणम् । मिथ्यात्वं निषेधति **नैत** इति । मिथ्यात्वे तद्विपरीतानित्यत्वजडत्वादिप्रसङ्गं सिद्धान्तविरोधं चाभिप्रेत्याह **विरोधादि**ति । अनतिरेकपक्षं प्रतिक्षिपति **न दृशिरि**ति । विरुद्धधर्माध्यासेन व्यतिरेकमभिप्रयन् आह **अविमतेरि**ति । न ह्युभयाविगीतमनुभूतिस्वरूपम् ; विगीतं च नित्यत्वादिकं न मिथोऽतिरिच्येतेति भाव· । नन्वस्मिन् सिद्धान्ते साधकाः साध्याश्च सर्वे धर्मा· तत्तद्विरोध्यभावमात्ररूपा , अतो हेत्वादिसिद्धिर्निर्धर्मकत्वाविरोधश्चेति ; तत्राह **स्या**दिति । अयं भाव·—अभावरूपा अपि हेतुसाध्यविशेषा पक्षीकारबहिष्कार सत्यत्वमिथ्यात्व धर्म्यन्वयानन्वयविकल्पैर्यथोचित दूषणप्रसरैः प्रत्युक्ता एवेति ॥

**इति संवित्सधर्मकत्वम् ॥ ६ ॥**

ठी—हेत्वाभासरूपासिद्ध्यादिदोष उच्यते । उभयसाधारणं दोषमाहोत्तरार्धेन । बाध इति । धर्मसामान्यस्य पक्षत्वे प्रथमानुमाने बाधः । धर्मसामान्याभावस्य साधने द्वितीयानुमाने बाधः । यत्किञ्चिद्धर्मविवक्षायां च सिद्धसाधनम् । एवमनुभूतौ सिद्धान्ते इष्टानां धर्माणां सत्यत्वपक्षे दूषणमुक्तम् । मिथ्यात्वपक्षे आह स्वमत इति । इह =अनुमाने । यैः साध्यते इति । ये हेतव इत्यर्थः। साध्यत इत्येकवचनमेकप्रयोगाभिप्रायेण । अन्यदा एकत्वमविवक्षितम् । सत्यधर्मेति । संवित् निर्धर्मा इत्यत्र निषेध्यधर्मः सत्यश्चेत् व्यतिरेकदृष्टान्ते घटादौ सत्यधर्मवत्त्वं स्यात् । संविदि असत्यो धर्मो नास्तीत्युच्यते असाभिरपि। तत्रासत्यधर्मो नेष्यत इति सिद्धसाधनमित्यर्थः। विरोधादिति। नित्यत्वादेर्मिथ्यात्वे अनित्यत्वाद्यापत्तेरित्यर्थः । ननु नित्यत्वादयः अनुभूत्यनतिरिक्ताः। अतस्तेषां धर्मत्वाभावकथनं युक्तमित्यत्राह न दृशिरविमतेरिति । दृशिस्वरूपे विवादाभावात् नित्यत्वादिविषये वादिनां विमतेश्च नित्यत्वादिकं दृशिर्न भवति ; उभयैक्यं न भवतीत्यर्थः। ननु नित्यत्वादिकमनित्यत्वाभावादिरूपम् ; अभावस्याधिकरणात्मकत्वं मीमांसकेष्टमित्यत्राह स्यादभावोऽपि धर्म इति । विवादास्पदस्य अभावस्य तदनास्पदस्य दृशश्चैक्यं न भवतीत्यर्थः ॥ ६ ॥

(282) बुद्धिर्द्रव्यं विकारान्वयत इतरवत्, चोद्भवत्वाजडत्वात्
संकोचादिप्रयोगा बहव इह तथा न ह्यमुख्या भवेयुः ।
एवं नास्या गुणत्वं गलति, न खलु तत् तन्त्रसङ्केतसिद्धम्;
लोके धर्मस्वभावो गुण इति विदितं; साऽपि सिद्धा प्रभावत् ॥ ७ ॥

---

श्री— अत्र बुद्धिपरीक्षायां स्वयंप्रकाशत्व-नित्यत्व-प्रतिपुरुषभिन्नत्वपरीक्षणेनाद्वैत्यभिमतनिराश्रय-निर्विषयनिर्धर्मानुभूत्यद्वैतमपि निरस्तम्। अथ तद्वत् ग्रन्थारम्भोक्तद्रव्यत्वमपि द्वाभ्यां परीक्ष्यते बुद्धिरिति। 'बुद्धिर्द्रव्यम् अवस्थावत्त्वात् इतरवत् = मृदादिवत्', 'बुद्धिर्द्रव्यम् अजडत्वात् आत्मवत्' इत्यनुमानद्वयम्। प्रथमानुमाने न साध्याविशेषो हेतोः। द्रव्यशब्दवाच्यत्वस्य साध्यत्वात्। न च हेत्वसिद्धिः; श्रुतिस्मृत्यादिषु संकोचादिप्रयोगबलादवस्थाप्रतीतेः। 'आवृतं ज्ञानमेतेन', 'प्रज्ञा च तस्मात् प्रसृता', 'प्रदीपवदावेशः', 'तेनास्य क्षरति प्रज्ञा' इति प्रयोगाः ग्राह्याः। तथेति। विकारार्थका इत्यर्थः। हि = यस्मादिमे अमुख्या न भवेयुः, तस्मादवस्थावत्त्वसिद्ध्या न स्वरूपासिद्धिः; नापि बाध इति। एवञ्च द्वितीयानुमाने स्वयंप्रकाशत्वमस्तु, द्रव्यत्वं माऽस्तु इत्यप्रयोजकशंकायामपि द्वितीयपादः एवोत्तरम्। संकोचादिशब्दस्वारस्यात् त्वया द्रव्यत्वस्य स्वीकार्यत्वात्। अप्रयोजकशंका हि हेतुमत्त्वेऽपि साध्याभावसंभावनार्था। साऽत्र साध्यस्य शास्त्रानुमतत्वात् न भवतीति।

ननु ज्ञानशक्तिबलैश्वर्यादिसमस्तकल्याणगुणात्मको भगवान् विना हेयैर्गुणादिभिः स्थितः इत्यादीनि ज्ञानस्य गुणत्वपराणि वचनानि परश्शतानि सन्ति। कथं तद्विरुद्धं द्रव्यत्वमनुमातुं शक्यमित्यत्रोत्तरार्धम् एवमित्यादि। नात्र वचनविरोधः गुणत्वस्यापीष्टत्वात्, अविरोधात्। तत् गुणत्वं तन्त्रसंकेतसिद्धं = तार्किकपरिभाषितं यत् द्रव्यान्यत्वे सति कर्मान्यत्वे सति सत्तावत्त्वमित्येवंरूपम्, तन्न खलु। तत्परिभाषितस्य सर्वस्वीकार्यत्वे मानाभावात्। मीमांसका दध्यादिद्रव्यमपि क्रियाशेषभूतं गुणमाहुः। उपसर्जनं सर्वं गुणमाहुर्वैयाकरणाः तद्गुणसंविज्ञानो बहुव्रीहिरित्यादौ। शेषत्वं गुणत्वमिति च केचित्। द्रव्योपसर्जनं गुणः; स द्विविधः कर्म तद्भिन्नश्चेत्यपि विभागो मन्यते। तस्मादद्रव्यत्वरूपं गुणत्वं न ज्ञाने ब्रूमः। अतः शास्त्रे ज्ञानस्य गुणत्वेन व्यवहारः तस्यैव स्वतन्त्रद्रव्यत्वमात्मत्वञ्च मन्यमानानां मतव्यवच्छेदाय। न तु द्रव्यत्ववारणायेति ध्येयम्। द्रव्येऽपि गुणत्वव्यवहारो लोकेऽपि। तद्दृष्टान्तीकरणमपि ज्ञानविषये शास्त्रदृष्टम्। अतः शास्त्रानुमतञ्च द्रव्यत्वं न केवलानुमानसिद्धमित्याह लोके इति। धर्मस्वभावत्वं गुणत्वम्; नेदं द्रव्यव्यावृत्तलक्षणम्। संभवत्सर्वस्थलगतम्। ईदृशधर्मस्वभावत्वेन साऽपि = बुद्धिरपि प्रभावत् प्रमाणसिद्धा। "यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः। तथा हेयगुणध्वंसादवबोधादयो गुणाः" इति द्रव्यत्वगुणत्वोभयप्रतीतेः। सापि सिद्धेति वाक्येन, "अहं जानामीति ज्ञातृता भ्रान्तिसिद्धा; अहंकारव्यङ्ग्यं ज्ञानम्" इत्यद्वैतपक्षनिरासोऽपि भाव्यः।

ननु द्वितीयानुमाने किमिदमजडत्वम्? नायकसरे 62 श्लोके, 'ज्ञानत्वाजाड्य' इत्यत्र विषयाश्रयावच्छेदनिरपेक्षं स्वगोचरज्ञाननिरपेक्षप्रकाशवत्वरूपं आत्मनित्यविभूतिसाधारणं यदुक्तम्, तदत्र न भवति, धर्मभूतज्ञाने विषयाश्रयवैशिष्ट्येनैव प्रकाशस्वीकारात्। न च स्वाधीनप्रकाशाश्रयत्वरूपस्वयंप्रकाशत्वमेवाजडत्वमत्रैव वृत्तावुक्तमिति, किं प्रश्नेनेति वाच्यम्—तस्य जीवात्मगत-एकत्वानुकूलत्वयोः ज्ञानगतज्ञानत्वप्रत्यक्षत्वानुमितित्वादौ च सत्त्वेन तत्र द्रव्यत्वाभावेन व्यभिचारात्। अत एव प्रथमनिरुक्तधर्मघटकविशेष्यांशः स्वगोचरज्ञाननिरपेक्षप्रकाशत्वमेवाजडत्वमित्यपि न ग्राह्यम्; उक्तधर्मस्यैकान्त्यादिति चेत्—

1

प्रागुक्तं बुद्धेर्द्रव्यत्वं प्राप्तावसरे प्रतिष्ठापयति **बुद्धिर्द्रव्यमिति**। समवायिकारणं द्रव्यमिति वदद्भिः परैरपि विकाराश्रयो द्रव्यमित्यङ्गीकृतम्। अतो **विकारान्वयत** इति द्रव्यलक्षणयोगकथनम्। **इतरवत्** संप्रतिपन्नद्रव्यवदित्यर्थ.। यानि अन्यानि द्रव्याणि, तानि सर्वाणि यत्किंचिद्विकारवन्ति। **अतो** द्रव्याभिव्याप्तलक्षणयोगात् द्रव्यत्वं युक्तमिति। न चात्र साध्याविशेषः। **द्रव्य**शब्दवाच्यत्वसाधने तदभावात्। व्यवहारव्यवस्थापकत्वं च लक्षणस्य परैर[प्य]ङ्गीकृतम्। अनुमानान्तरमाह **बोद्धृवदिति**। पुरुषस्य स्वयंप्रकाशत्वं प्रागेव श्रुतिभिः प्रदर्शितम्; बुद्धेरप्येतत्सरादौ स्थापितम्; तदयं प्रयोगः—

---

ळी— एकत्वादीनामेषां धर्माणां धर्मिभास्यत्वस्वीकारात् स्वाधीनप्रकाशत्वाभावात् न व्यभिचार इति केचित्। अत्रेदं विचार्यम्–किमिदं धर्मिभास्यत्वं नाम? धर्म्यधीनप्रकाशाश्रयत्वमिति चेत्—धर्मभूतज्ञानस्यापि तदस्ति। 'स्वसंबन्धितया ह्यस्याः सत्ता विज्ञप्तितादि च' इति भाष्यात्। आत्मसिद्धौ ज्ञाने आत्माधीनप्रकाशतोक्तेश्च। अथात्माधीनत्वेऽपि स्वाधीनत्वमपि ज्ञानप्रकाशे स्वीकार्यम्–अन्यथा धर्मिमात्रस्य प्रयोजकत्वे तद्गतनित्यत्वाणुत्वादीनामपि प्रकाशापत्तेरिति चेत्–तर्हि ज्ञानस्य स्वाधीनप्रकाशस्य धर्मिसंबन्धित्वबलात् तत्प्रकाशे तदधीनत्वमवर्जनीयमित्युक्तं भवति। एवमेव एकत्वानुकूलत्वप्रत्यक्षत्वादीनां स्वत एव प्रकाशमानानां आत्मतज्ज्ञानरूपधर्मिसंबन्धायत्तं धर्मिभास्यत्वमप्यस्तु, न तु स्वाधीनतावारकत्वम्, अन्यथा ज्ञानगतधर्मान्तराणामपि ज्ञानरूपधर्मिप्रभावात् प्रकाशापत्तेः। अतः स्वयोग्यताऽप्यपेक्षितैव। किञ्च स्वाधीनप्रकाशेत्यत्र प्रकाशो नाम कः? न तावत् विषयता। संयोगाद्यतिरिक्तविषयत्वानंगीकारात्। धर्मभूतज्ञानकर्मण्येव विषयत्वस्येष्टत्वात् आत्मप्रकाशज्ञानप्रकाशादेः कर्मत्वरूपत्वाभावात्। "अङ्गुल्यग्रचोद्यस्य च कर्मत्वाद्यनभ्युपगमेन परिहृतत्वाच्च" इति न्यायसिद्धाञ्जने। अत्र प्रथमश्लोकवृत्तौ च, "न ह्यत्र स्वात्मानं प्रति कर्मकारकत्वं स्वबोद्धृत्वं वा विधातुं युक्तम्" इति। धर्मभूतज्ञानस्य विषयित्वमसाधारणमिति च श्रीमद्रहस्यत्रयसारे। अतो न स्वस्य स्वविषयत्वम्। "स्वयं सिद्धा=स्वगोचरज्ञाननिरपेक्षव्यवहारानुगुणा" इति, "न च स्वगोचरज्ञाननिरपेक्षव्यवहारानुगुण्यं निषेद्धुं शक्यम्" इति चोक्त्याऽपि एतदतिरिक्तं नाचार्यसंमतमिति।

एवं तर्हि एकत्वानुकूलत्वप्रत्यक्षत्वादौ अजडत्वहेतोरनैकान्त्यं कथं परिहार्यमिति चेत्–धर्मधर्मिणोर्विद्यमानवैलक्षण्यविवेचनादेव। यथा हि धर्मधर्मिज्ञानयोः स्वयंप्रकाशत्वाविशेषेऽपि आत्मनित्यविभूतिमात्रगतप्रकाशे धर्मभूतज्ञानवैलक्षण्यं प्रागुपात्तन्यायकुसुमवृत्तौ दर्शितम्, तथाऽत्रापि एकत्वादीनां सामान्यतः स्वयंप्रकाशत्वे सत्यपि स्वयं=स्वेनैव स्वगोचरज्ञानान्तरं विनैव स्वप्रयोज्यभानान्तर्गतस्वेतरधर्माधीनतां विनाऽपि भासमानत्वरूपं तन्नास्तीति। आत्मन एकत्वानुकूलत्वविशिष्टतया भानमेकमात्माधीनम्, ज्ञानस्य ज्ञानत्वप्रत्यक्षत्वादिविशिष्टतया भानमेकम्। तत्र विशेष्यमात्रं वा विशेषणमात्रं वा न भासते। विशिष्य धर्माणां विशेष्यतया भानञ्च कदापि नास्ति। तथाच स्वयंप्रकाशधर्मयत्वं धर्मगतस्वयंप्रकाशताप्रयोजकत्वं स्वगोचरज्ञाननिरपेक्षस्वविशेष्यकव्यवहारानुगुण्यमिति धर्माः आत्मधर्मभूतज्ञानसाधारणाः एकत्वादिव्यावृत्तास्सन्तीति तथाविवक्षायां न कश्चिद् दोषः। जीवसरे, प्रत्यक्त्वमिति सप्तमे श्लोके चास्मदुक्तमनुसंधेयम्। न्यायसिद्धाञ्जने ज्ञानत्वात् द्रव्यमित्युक्तम्। एकत्वानुकूलत्वादौ स्वयंप्रकाशेऽपि ज्ञानशब्दाप्रयोगः विशेष्यतया भानाभावादपि। अयं गौरितिवत् अत्र गोत्वमिति प्रत्यक्षं न भवतीत्युक्तं शास्त्रदीपिकायाम्। तद्वदेव, 'अत्रैकत्वम्' अत्र प्रत्यक्षत्वमनुमितित्वमिति प्रकाशो न भवति। अतः प्रकारतैकस्वभावता तेषामिति।

हेतोः साध्यसमव्याप्तत्वमप्यस्तीति ज्ञापनाय यान्यन्यानीत्यादि ॥ ७ ॥

बुद्धिर्द्रव्यम् स्वयंप्रकाशत्वात् आत्मवदिति । प्रथमस्यासिद्धिपरिहारं द्वितीयस्यानुग्राहकं चाभिप्रेत्याह **सङ्कोचादीति** । सङ्कोचप्रयोगस्तावत्, "आवृतं ज्ञानम्" इत्यादिना दर्शितः । **आदिशब्देन** प्रसरण-क्षरणसंग्रहः । तत्प्रयोगश्च दर्शित एव । द्रव्यत्वे ह्येतेषामबाधात् मुख्यत्वम्; अन्यथा श्रुतिस्मृतिसिद्ध-बहुप्रयोगमुख्यत्वभङ्गः स्यादिति भावः । ननु बुद्धेरात्मगुणत्वं बोद्धृसद्भावा(वपरा ?)गमेषु सर्वेषु प्रसिद्धम्; गुणस्य चाद्रव्यत्वं रूपादिषु दृष्टम्; तदत्र धर्मिग्राहकबाधितमनुमानमित्यत्राह **एवमिति** । द्रव्यत्वे सत्यपीत्यर्थः। कथं तर्हि **कणचरणा**दिभिरद्रव्येष्वेव गुणत्वमवस्थापितमित्यत्राह **न खल्विति** । अर्थशास्त्रेषु सन्धिविग्रहादयो गुणत्वेन गृह्यन्ते। तद्वत् परोक्तम् अद्रव्यनियतं (अद्रव्येष्वेव) गुणत्वमिह न मम इत्यभि-प्रायः । किंनिमित्तस्तर्हि बुद्धौ **गुण**शब्दप्रयोग इत्यत्राह **लोके** इति । दासादयो हि गुणभूता उच्यन्ते, दध्यादिद्रव्यविधानं च गुणविधिरिति व्यवह्रियते । ननु बुद्धिर्बोद्धृधर्मः; बोद्धा तु तदभिव्यक्तिस्थानम्; तत एव तद्यज्ञद्रव्यत्वात् धर्मत्वारोपः । वस्तुतस्तु सा न द्रव्यं न च गुण इति परोक्तं बाधितुमाह **साऽपीति** । प्रभावतो यथा प्रभा धर्मत्वेन प्रख्याता, तथा बुद्धिरपि बोद्धृधर्मत्वेन प्रत्यक्षादिभिः प्रसिद्धा; न चात्र प्रतिबिम्बादिवत् बाध इति भावः ॥ इति ज्ञानद्रव्यत्वम् ॥ ७ ॥

**(288) नित्या धीर्हेतुतोऽस्या भवति विषयितेत्येवमिच्छन्त एव**
**द्रव्यत्वं नास्ति बुद्धेरिति गुणगणने तामपि स्थापयन्ति ।**
**अद्रव्यत्वं कथं स्यात् विकृतिमति? विकृत्युज्झने पूर्ववत् स्यात्;**
**इत्थंभूतात् विकारान्न भवति यदि, नातिप्रसङ्गप्रसङ्गात् ॥ ८ ॥**

---

ळी- वरदनारायणभट्टारकैः प्रज्ञापरित्राणे, "गुणत्वमेव ज्ञानस्य न तु द्रव्यत्वसंभवः" इति साधितम्। तर्हि विषयैः संयुज्य ज्ञानं व्यवहारं जनयतीति कथम्; अद्रव्ये संयोगायोगादिति चेत्-नास्त्येव संयोगः। अतीतानागतपदार्थज्ञानस्थले संयोगसंबन्धायोगात् विषयविषयिभाव एव संबन्धो वाच्य इति यथाप्रतीति गुणत्वमेव। भाष्ये द्रव्यत्वव्यवहारस्तु गौणः। यथा उष्णस्पर्शादयो गुणाः स्वाश्रयाग्न्याद्यसंयुक्ते दाहादिकं न जनयन्ति, न तथा ज्ञानम्; स्वाश्रयाण्वात्मासंयुक्तपदार्थ-विषयव्यवहारस्यापि करणात्। अस्मात् गुणवैरूप्यात् द्रव्यशब्दप्रयोगमात्रमित्युक्तम्। तदिदम् प्रमाणस्वारस्यमूलकात्मसिद्धिश्रीभाष्यादिविरुद्धम्; तेजोद्रव्यभूतप्रभासादृश्यस्य प्रसरणादेश्चोप-पादनाच्चेति न्यायसिद्धाञ्जने उक्तम्। सेयं सयूथ्यमतिर्धर्ष्यत इह। नित्येति। धीर्नित्या, तस्याः घटपटादिना सविषयकत्वं कादाचित्कम्, प्रत्यक्षानुमानादिसामग्रीकाल एवेति भाष्यादिरीत्यैव सर्वैमिष्ट्वा तार्किकवत् आगन्तुकं ज्ञानमित्यनुक्त्वा तदुक्तविषयविषयिभावसंबन्धं स्वीकृत्य द्रव्यत्व-विषये विवदमानाः गुणान्तरवत् अद्रव्यत्वेनैव तां=बुद्धिमपि गणयन्ति सयूथ्याः। तत्रोच्यते। प्रत्यक्षत्वानुमितित्वस्मृतित्वानुभवत्वादिरूपावस्थावति नित्ये ज्ञाने कथमद्रव्यत्वम्। अवस्थाभाक्त्व-मेव हि द्रव्यत्वम्। विकृत्युज्झने=सामग्र्यधीनावस्थाभेदास्वीकारे प्रलयकालिकज्ञानवत् निर्विषय-कमेव ज्ञानं स्यात्। अथ ज्ञानगताः विकाराः न घटत्वादितुल्याः, किं तु तत्तद्विषयकत्वरूपा इति ईदृशात् विकारात् द्रव्यत्वापत्तिर्न भवतीति चेन्न, अतिप्रसंगप्रसंगात्। घटत्वपटत्वादिष्वपि मिथोवैलक्षण्यात् एकस्यावस्थात्वं न त्वन्यस्येति स्यात्। यदि गमनपचनादिक्रियादिवत् ज्ञानमप्या-गन्तुकमिष्येत, तदा तेषां धर्माणामवस्थात्वाभावात् द्रव्यत्वापत्तिर्न स्यात्। न हि तथेष्यत इति।

उक्तार्थे सयूथ्यविमतिं वारयितुं तदुक्तप्रकारं तावदाह **नित्येति**। एवकारः स्वोक्तिविरोधसूचनार्थः। **गुणगणने** द्रव्यत्वरहितगुणगणनायामित्यर्थः। एवकारद्योतितं विकल्पमुखेन व्यनक्ति **अद्रव्यत्वमिति**। **विकृतिमतीति** सामान्याभिप्रायेण नपुंसकलिङ्गनिर्देशः। यदि नित्यायां बुद्धौ तत्तत्सामग्रीभिः तत्तद्विषयित्वावस्थाः संभवन्ति, तदा कथमसौ द्रव्यं न स्यात्? न हि विकृतिमति क्वचिदद्रव्यत्वमन्यत्र संमतम्। विकृत्यसंभवपक्षे दोषमाह **विकृत्युज्झन** इति। **पूर्ववत् स्यात्**। सामग्रीसंपातेऽपि प्रागिव न किंचिद्विषयीकुर्यादित्यर्थः। विषयित्वलक्षणविकारेण द्रव्यत्वं न स्यादिति शङ्कते **इत्थंभूतादिति**। सामान्यलक्षणयोगे सति अवान्तरवैषम्यात् कथमतज्जातीयत्वमित्यभिप्रायेण प्रत्याह **नेति**। अन्यथा बाधकमाह **अतिप्रसङ्गप्रसङ्गादिति**। द्रव्यत्वेन संमतेष्वपि तत्तदवान्तरविशेषोपादानेन द्रव्येतरत्वसाधनं प्रसज्येतेत्यर्थः। तदिह सयूथ्यवाक्यस्य भाष्यानुगुणमान्यपर्यमवसेयम्॥

**इति अद्रव्यनित्यबुद्धिवादभङ्गः ॥ ८ ॥**

**(भ्रान्तिस्वरूपविवेचनप्रारम्भः)**

(284) सर्वं ज्ञानं न मानं परमतविजयात्; नाप्रमाणं स्वबाधात्;<br>
मानामानव्यवस्था तदियमनुमता लौकिकैर्यौक्तिकैश्च।<br>
तत्रामाने त्ववर्ज्यं स्वरसमिति वदन्त्यन्यथाभानमेके;<br>
तत्सामग्र्यैव तादृग्व्यवहृतिमपरे लाघवादाश्रयन्ति ॥ ९ ॥

---

वी- भाष्यानुगुणमान्यपर्यमवसेयमिति। उष्णस्पर्शादयो गुणाः स्वाश्रयासंयुक्ते कार्यं न जनयन्ति, प्रभा तु स्वाश्रयदीपाद्यसंयुक्तेऽपि प्रकाशं जनयन्तीति वैलक्षण्यात् प्रभा यथा द्रव्यम्, तथा ज्ञानमपि; स्वाश्रयाण्वात्मासंयुक्तवस्तुव्यवहारहेतुत्वात्। तत्र प्रभावैलक्षण्येनातीतादिसंबन्धोऽपि भवतीति यत्, न तेन द्रव्यत्वबाधः। विषयविषयिभावोऽपि हि गुणत्व इव द्रव्यत्वेऽपि भवितुमर्हति। वस्तुतस्तु संयोगादिना क्लृप्तेनैव धर्मेण निर्वाहात् तस्यैव विषयविषयिभाव इति ज्ञानस्थले नामान्तरमिति तु संप्रदायगतिः। अतः परैस्सह दन्तादन्तितन्द्वयैव तावति तैरुपरतमिति भावः॥ ८ ॥

तदेवं ज्ञानं स्वप्रकाशं प्रत्यात्मभिन्नं नित्यं द्रव्यमिति स्थापितम्। एवम्भूतं वाऽन्यादृशं वैतत् प्रमाणाप्रमाणरूपेण द्वेधा लोके व्यवह्रियते। तत्राप्रमाणस्वरूपशोधने मतिभेदा लक्ष्यन्ते। तद्विचारं त्रिंश(३०)श्लोकपर्यन्तं वर्तयिष्यति। तत्र सांख्यतार्किकमते परं भाष्यकारानुमतत्वेन विचार्यमाणे आदरिष्यमाण आह सर्वमिति। अत्र मानामानप्रमाणाप्रमाणशब्देषु भावे ल्युट्। मितिः=प्रमितिः। अप्रमितिर्भ्रमः। ज्ञानस्येदं द्वैविध्यमेष्टव्यम्। न तु सर्वं ज्ञानं प्रमितिः। तथासति परमतस्यापि विजयात्=वास्तवत्वापत्तेः। नापि सर्वं ज्ञानमप्रमा, स्वमतस्याप्यसत्यत्वापत्तेः। लौकिकैः=पामरैः। यौक्तिकैः=परीक्षकैः। तत्र शुक्तिसन्निकर्षे इयं शुक्तिरिति ज्ञानं प्रमा, इदं रजतमिति त्वमानम्। तत्र अमानविषये भाष्यकाराहतं पक्षद्वयमुच्यते, एके=अस्मदीयेषु तार्किकानुयायिनः—अमाने अन्यथाभानम्=शुक्तेः रजतत्वरूपेण ग्रहणमेव स्वरसम्--अनुभवारूढमिति अवर्ज्यमिति च हेतोर्वदन्ति। अपरे सांख्यानुयायिनस्त्वाहुः—तस्यान्यथाभानस्य सामग्री, शुक्तिरूपधर्मिज्ञानं शुक्तिरजतसाधारणाकारस्फूर्तिः, रजतस्मरणम्, तद्रजतस्य शुक्तेश्च वस्तुतो वर्तमानो यो भेदस्तदग्रहश्चेति, इयमेव सामग्री अमानशब्दवाच्या। एतत्सामग्रीबलात् शुक्तौ रजतत्वेन रूपेण ज्ञानमेकं जायते, ततो व्यवहार इत्येन-

अथ पूर्वापरसरस्यूतसर्वप्रमेयप्रतिष्ठापकं प्रमाणं शोधयितुं सामान्यतः प्रमाणाप्रमाणविभागं तावदाह **सर्वमिति**। अयमर्थः—न तावत् सर्वं ज्ञानं प्रमितिः, प्रतिपक्षविजयाभ्युपगमप्रसङ्गात् ॥ यत्र ख्यातिरेव नास्ति, तत्र कथं विजयप्रसङ्ग इति चेन्न; सहृदयविसंवादात्। परोक्तीनां स्वोक्तिविरुद्ध-बुद्धिजनकत्वाभावे विवादविलयप्रसङ्गः। अन्यथा स्वोक्तानुभाषणवर्णक्रमपाठादावपि विवादः प्रसज्येत। अत एव प्रतिपक्षतो जाताऽपि ख्यातिः प्रमितिरिति न वक्तव्यम्; स्वोक्तमात्रविषयत्वे, अनुक्तमात्र-विषयत्वे, स्वोक्तानुक्तमात्रविषयत्वे च विवादायोगात्। विरुद्धविषयत्वे तु अन्यतरबुद्धेरप्रमात्वमपरिहार्य-मिति। सर्वबुद्धीनामप्रमात्वमपि प्रतिषेधति **नाप्रमाणमिति**। स्ववचनस्वसिद्धान्तसर्वलोकधीविरोधमभि-प्रेत्याह **स्वबाधादिति**। स्वोक्तं लौकिकपरीक्षकसर्वसंमतमित्याह **मानामानेति**। एवमन्यथाख्याति-पक्षाभिप्रायेण दर्शिते विभागे **भाष्योक्तं** पक्षान्तरमपि प्रतुष्टुपुरुक्तस्य प्रतीतिस्वारस्यरसिकैरेकदेशिभिः संगृहीतत्वमाह **तत्रेति**। **अमाने**-संशयविपर्ययात्मकबुद्धावित्यर्थः। **अवर्ज्यं**-ख्यात्यन्तरवादिभिरपि दूरापसर्पणेऽपि दुस्त्यजम्। स्वत एव रसो यस्य तत् **स्वरसम्**। अस्ति हि, 'शुक्तिशकलमेव मया रजततया गृहीतम्' इत्यादिप्रतीतिस्वारस्यम्; "योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते। अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी", "अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः" इत्याद्याप्त-वाक्यस्वारस्यं च। अतो भ्रान्तावन्यथाभानं प्रथममुपन्यस्तं **भाष्यकाराभिप्रेतमित्येके** वदन्ति। केषांचित् पक्षान्तरपरिग्रहं सहेतुकमाह **तत्सामग्र्येति**। व्यवहारविशेषान्यथानुपपत्त्या हि अन्यथाभान-मवस्थाप्यते; तत्रान्यथाख्यातिसाध्यतयाऽभिमता व्यवहृतिः तज्जनकतयाऽभिमतसामग्र्यैव संपाद्यताम्; अदृष्टचरान्यथाख्यातिसंग्रहः (तु) तन्मध्ये **मुधेत्यपरे समाश्रयन्ति**। पक्षद्वयोपन्यासप्रपञ्चस्तु **न्याय-कुलिशे** [अस्मदाचार्यविरचिते] निपुणमवधारणीयः ॥ **इति प्रमाणाप्रमाणव्यवस्था** ॥ ९ ॥

(285) **नाथैरुक्ता यथार्था विमतमतिरपि न्यायतत्त्वे; तदेतत्**
**भाष्येऽनूक्तं; त्वदत्र व्यवहृतिरुभयी बाधिताबाधिताख्या।**

---

ऽपि-दर्पेक्ष्यपर सामग्रीत एव साक्षात् व्यवहार इत्युक्तौ मध्ये ज्ञानस्योत्पत्त्यस्वीकारेण लाघवात्। अतः इदं रजतमिति व्यवहारः शुक्तिदर्शनरजतस्मरणतदुभयभेदाग्रहत एव साध्य इति। तथा च अमानादि-पदस्य शुक्तौ रजताभेदग्रह इति नार्थः, किं तु रजतभेदाग्रह इति। तदियमख्यातिरिति सांप्रमतम्॥

ननु परोक्तितो ज्ञानमेव न जायते, अयोग्यार्थकस्थले अग्निना सिञ्चेदित्यादौ बोधास्वीकारात्। तत् कथं प्रमितित्वप्रसक्तिरिति शंकते यत्रेति। अर्थज्ञानाभावेऽपि परमुखोद्गतः शब्द इत्येतावतैव कलहे दोषमाह अन्यथेति। स्वोक्तम्=प्रथमपादोक्तम्। अन्यथाख्यातिपक्षाभिप्रायेणेति कथनं तस्यैव झटिति बुद्ध्यावारोहात्। लाघवाश्रयणात्तु तत्यागः। न हि प्रत्यक्षविरुद्धं लाघवमादर्तव्यम्। अन्यथा ज्ञानसामग्रीत एव कार्यनिर्वाहे सर्वस्यापि ज्ञानस्यापलापापत्तेरिति हृदयम्॥ ९॥

श्रीभाष्यकारैः प्रथमतोऽन्यथाख्यातौ स्वारस्यं प्रदर्श्य, अथवेति यथार्थख्यातिपक्षो विस्तरेणा-भाष्यत। यथार्थख्यातिपक्षश्च प्राभाकराणामिति शालिकनाथीयप्रकरणपञ्चिकायां नयवीथीप्रकरणे व्यक्तम्; यदाह, "यथार्थं सर्वमेवेह विज्ञानमिति सिद्धये। प्रभाकरगुरोर्भावः समीचीनः प्रकाश्यते" इति। एवञ्चाख्यातिपक्ष एव यथार्थख्यातिपक्ष इति सिद्ध्यति। इदमर्थदर्शनं रजतस्मरणं भेदाग्रहः

**शुक्तौ रूप्य प्रभाम्भः श्रुतिनयवशतः स्वाप्नमप्यस्तु सत्य ;**
**योग्यायोग्यादिभेदाग्रह इह चरमां गाहते सप्रतिष्ठाम् ॥ १० ॥**

उक्तपक्षद्वये द्वितीयस्य साम्प्रदायिकत्वमाह **नाथैरिति**। **विमतमतिः** शुक्तिरजतादिबुद्धि । सा **न्यायतत्त्वे भ्रान्त्यधिकरणसिद्धान्ते,** "षष्ठी चेयं ख्यातिर्यथार्थख्याति" इत्यादिना निरधार्यत । अय च पक्ष, "अथवा, यथार्थं सर्वविज्ञानमिति वेदविदां मतम्" इति **भाष्यकारैर**न्वभाषि। कथमस्मिन् पक्षे प्रमाणाप्रमाणव्यवस्थादिकमित्यत्राह **व्यवहृतिरिति** । बाध्यव्यवहारहेतुर्ज्ञानमप्रमाणं भ्रान्तिरित्युच्यते । तत्र मणिप्रभादिदर्शने मण्याद्यर्थप्रवृत्तौ तत्संवादोऽन्यायत्त । अबाध्यव्यवहारहेतुर्ज्ञानं प्रमाणमभ्रान्तिरिति

---

श्री—व्यवहारस्य बाध्यत्वं नाम वैफल्यम्। तत्संवाद अन्यायत्त इति। प्रभामूलदेशे मणिसद्भाव इत्येवरूपसामग्र्याम् अग्रहस्य निविष्टत्वात् अख्यातिरिति व्यवहार, दर्शनस्य स्मरणस्य च तत्तद्विषयकस्य यथार्थत्वात् यथार्थख्यातिरिति च । अन्यथाख्याति स्वरसा परित्यज्यैतदादरण न केवल लाघवात्, किंतु बहुषु स्थलेषु भ्रान्तौ विशकलितदर्शनस्मरणे आदायैव विशिष्टज्ञानमादायापि यथार्थत्वोपपादनसंभवात्, तत्र स्वारस्यस्याप्यनपायात् सर्वत्र यथार्थख्यातिरिति एकैव रीतिरस्तु इत्याशयेन चेति विचार्य अख्यातिपक्षमवलम्बमानोऽत्रैव मूलपुरुषसंमति दर्शयन् सर्वं विशदयति नाथैरिति। श्रीरङ्गनाथनामधेयैर्भगवन्नाथमुनिभि स्वकीये न्यायतत्त्वाख्ये शास्त्रे प्रमाप्रमाण प्रमेय प्रमातृविचारात्मके सर्वमतसमालोडनपूर्व स्वमतस्थापनप्रवृत्ते भ्रान्त्यधिकरणसिद्धान्ते विमतमति =किरूपेति विवादविषयभूता भ्रान्तिरपि यथार्थमतित्वेनैवोक्ता । तत्र यावद्बल विशिष्टज्ञान एव यथार्थत्वम्। तदसंभवे अख्यातिपक्षावलम्बनेन यथार्थत्वम्, तत्=सांख्यादृत एतत्=नाथमुन्युक्त भाष्योक्तम्=श्रीभाष्ये विस्तरेण स्वय वक्ष्यमाणैः कारिकाभि अनन्तरसंदर्भेण च भावितम् । एव भ्रान्तेरपि यथार्थत्वे तद्विषयस्य विशिष्टस्य सत्यत्वात् नेद रजतमिति कथमिति चेत्–यत्र भ्रान्तौ प्रमाभूत विशिष्टज्ञान तत्र रजतादिसद्भावात् यद्यपि न तद्बाध, अथापि तदधीना व्यवहृति हानोपादानादिरूपा बाधिता, प्रमास्थले चाबाधिता इति, द्विविधाख्यावान् भवति व्यवहार । व्यवहारस्य बाधितत्वमुद्दिष्टाङ्गुलीयकाद्यर्थत्वायोगात् नैष्फल्यम्। कथ तत्र यथार्थख्यातित्वमित्यत्राह शुक्ताविति। त्रिवृत्करणश्रुत्यभिमतपञ्चीकरणन्यायप्रवृत्त्या एकभूते भूतान्तरमिश्रणात् शुक्तावपि रजतांश, प्रभासु= मरीचिकास्वपि अम्भ = ईषज्जल सत्यम्, स्वाप्न स्वप्नदृष्ट वस्तु सत्यम्, तथा श्रुत्यर्थविचारप्रवृत्ताधिकरणसिद्धत्वात् । तथाच सत्यविषयकत्वात् यथार्थत्वम्। बाधस्तु शुक्त्यन्तर्गतरजतांशस्याल्पत्वात् भूयश्शुक्त्यंशाभिभूतत्वाच्च नाङ्गुलीयकपरिणामार्हता, न प्रभाम्भस स्नानार्हता, न स्वाप्नस्य जागरानुभवार्हतेति । एव यथार्थख्यात्युपपादनेऽपि अख्यातिरपि अन्तर्निविष्टास्तीति दर्शयति योग्येति । अङ्गुलीयकाद्यनर्हं तत्तत् अर्हमिति प्रथम बुद्ध्यते। तत्रानर्ह अर्हभेदाग्रह, स्वप्नदृष्टे वस्तुनि तात्कालिके वस्तुतो वन्ध्यादिभिन्ने वन्ध्यादिभेदाग्रह इति चरमा सप्रतिष्ठा गाहते=अन्तत अख्यातौ पर्यवसानम् । यथार्थख्यात्यसंभवस्थले तु सुतरामिति ॥

षष्ठी चेय ख्यातिरिति । असत्ख्याति, आत्मख्याति, अनिर्वचनीयख्याति, अन्यथाख्याति, अख्यातिरिति पञ्चसु ख्यातिषु षष्ठी अख्यातिसवलितयथार्थख्याति । ननु अख्याते ख्यातिशब्द वाच्यत्व व्याहतमिति चेत्—अत्र, "अख्यातिपक्षेऽपि तत्तत्सामग्र्यनुप्रविष्टज्ञान तत्तत् तच्छब्देन व्यपदिश्यते' इति न्यायपरिशुद्धिरनुसंधेया । ननु मणिप्रभा मणिरिति भ्रान्त्या गृह्णन् गत्वा मणिमेव लभते । तत्र व्यवहारस्य न बाध्यता । तत्र भ्रान्तिलक्षण कथमित्यत्राह मणीति । प्रभाया मणि

व्यवह्रियते । तत्र कदाचित् पक्षिबुद्बुदादौ प्रवृत्तिविसंवादो विषयापक्रमादेरिति भावः ।

यत्तु शुक्तौ सादृश्यात् रजतसद्भावः; मरीचिकायां पञ्चीकरणानुरोधेन तोयसद्भावः; स्वप्ने च रथादेः सृष्टिविशेषतया सत्यत्वं [इति?] भावितम्--तत्र विषयसत्यत्वेऽप्यप्रमाणव्यवहारनिदानमाचिख्यासुः यथाभावितमनुभाषते शुक्ताविति । प्रभाम्भः--सूर्यप्रभायां दृश्यमानं तोयमित्यर्थः । स्वाप्नं स्वप्नसिद्धं रथादि । यद्यप्यत्रातस्मिन् तद्बुद्धिर्नास्ति ; अतज्जातीयभेदाग्रहश्च न प्रवर्तकः--तथाऽपि तज्जातीये स्वाभीष्टयोग्यायोग्यादिभेदाग्रहात् प्रवृत्ता व्यवहृतिर्विसंवदेतेति अप्रमाणव्यवहारोऽस्त्यर्थे घटेतेत्यभिप्रायेणाह योग्येति । शुक्तिलीनं रजतं मरीचिकास्थं जलं चाङ्गुलीयक सेकाद्यनर्हम् । अतः तदनर्हे तदर्हभेदाग्रहात् प्रवृत्तिर्विं तथा भवति । एवं स्वाप्नेष्वपि धनपित्रादिषु जागरदृष्टस्वरूपेषु तद्भेदाग्रहात् प्रवृत्ता दुराशा मोघा भवति । आदिशब्देन नष्टानष्टादिसंग्रहः । चरमां संप्रतिष्ठां व्यवहारविसंवादनिदानतामित्यर्थः ॥१०॥

(286) भेदाज्ञानात् प्रवृत्तौ न कथमुपरतिः स्यात् अभेदाप्रतीत्या
रूप्यारूप्यभ्रमादाविव यदि (?), न, यतोऽनिष्टभेदाग्रहात् सा ।

प्रौ— निबन्धन इत्यर्थः । अनन्यायत्तसंवादरहितप्रवृत्तिजनकं ज्ञानमप्रमेत्युक्तं भवति । विसंवादो विषयापक्रमादेरिति । अनन्यप्रयुक्तविसंवादरहितप्रवृत्तिजनकं ज्ञानं प्रमेत्युक्तं भवति । 'चरमां सम्प्रतिष्ठाम्' इत्येतद् व्याचष्टे-विसंवादनिदानतामिति । विसंवादाधिकरणतामित्यर्थः ॥ १० ॥

श्री-बुद्धिर्न तल्लाभकारणम् ; किं तु समीपं गतस्य संनिकर्षाधीनं मणिज्ञानमेव । तद्ग्रहणं प्रति तद्व्यक्तिदर्शनस्यैव कारणत्वात् । पूर्वं मणिव्यक्तिग्रहणाभावादिति भावः । ननु दूरात् वृक्षे पक्षिणं पश्यन् ग्रहणार्थं प्रवृत्तो जातु तं न लभते, तथा बुद्बुदमपि, तत्र कथं प्रमालक्षणमित्यत्राह कदाचित् पक्षिबुद्बुदादाविति । कार्यं प्रति न वस्तुग्रहणमात्रं कारणम् ; किं तु सामग्री । तत्र पक्षिणोऽन्यत्रापसरणात् बुद्बुदस्यापायाच्च तल्लाभेऽपि योग्यता नापैतीति भावः। सत्यत्वं भावितमित्यत्र सत्यत्वमिति भावितमिति पाठः स्यात् ; अन्यथाऽनन्वयात् । भावितम्= भाषणम् । अतस्मिन्नित्यादि । प्रवर्तकः... भेदाग्रहश्च नेत्यन्वयः। न हि शुक्तिरूप्यमरूप्यम्, न च शुक्तिरूप्यादि रूप्यादिजातीयभिन्नमिति भावः ॥१०॥

ननु, यथार्थख्यात्यसंभवस्थल इव यथार्थख्यातिस्थलेऽपि, "योग्यायोग्यादिभेदाग्रह इह चरमां गाहते संप्रतिष्ठाम्" इति भेदाग्रहस्यानुयायितया अख्यातिपक्षादरणमयुक्तम्-भेदाग्रहस्य प्रवृत्तिकारणत्वासंभवादिति अन्यथाख्यातिवादिशंकामनूद्य निरस्यति भेदेति । रूप्यविषयकप्रवृत्तिं प्रति रूप्यमिति ज्ञानमेव कारणं क्लृप्तम्, न तु रूप्यभेदाग्रहः । भेदाज्ञानात्= भेदाग्रहात् प्रवृत्तौ इष्यमाणायाम्, अभेदाप्रतीत्या= तदा वर्तमानात् रजताभेदाग्रहात् उपरतिः= ततो निवृत्तिरेव, न कथम्= किं न स्यात् । अभेदाग्रहस्य निवृत्तिकारणत्वं कुत्र दृष्टमिति चेत्, आह रूप्यारूप्यभ्रमादाविवेति । यत्र रूप्ये अरूप्यभ्रम इति लोकेऽनुभवः, तत्र रूप्ये रूप्याभेदाग्रहस्तावदस्ति । इदं रजतमित्यत्र च रूप्ये रूप्याभेदग्रहस्य प्रवृत्तिकारणत्वं दृष्टम् । रजतत्वग्रहस्य कारणत्वमित्युक्तावपि तदेवोक्तं भवति ; रजतत्वं हि रूप्याभेद एव । एवं प्रवृत्तिकारणत्वेन क्लृप्तस्य रजताभेदग्रहस्य शुक्तिरूप्यग्रहस्थले अभावात् निवृत्तिः कुतो न स्यात्। ननु शुक्तिरजतभ्रमस्थले तत्र रूप्याभेदग्रह एवास्तीति चेन्न-तद्धि अन्यथाख्यातिस्वीकारापत्तेः। अतः शुक्तावविद्यमानस्य रजताभेदस्य तन्मते तत्र ग्रहणायोगात् अभेदाग्रह एवेति । यदीत्यस्य इतियदीत्यर्थः । यदिपदस्थाने नन्विति पदं वा । निरस्यति । नेति। यतः= यस्मात् सा= निवृत्तिः अनिष्टभेदाग्रहादेव भवति। निवृत्तिं प्रत्यपि भेदाग्रह एव कारणम्।

आधारे भेदवर्जं स्फुरति सदृशवस्त्वन्तरे चोपपन्ना
तत्तद्वस्तूचितैव व्यवहृतिनियतिस्त्वन्मते बुद्धिवन्नः ॥ ११ ॥

ननु अन्वयव्यतिरेकाभ्यां कारणविशेषः सर्वत्र व्यवस्थाप्यः। तत्र चेतनप्रवृत्तिरिच्छातः; सा चानुकूलताज्ञानात्। न चात्र ज्ञानेच्छाप्रवृत्तीनां भिन्नविषयत्वं युक्तम्। यद्यपि शुष्के पतिष्यामीति कर्दमे पतति; तथाऽप्यवशागतप्रवृत्तिन्याय इह नाऽऽस्थेयः; इदं रजतम् इत्यत्रेदमर्थभूतभास्वरद्रव्यजिघृक्षयैव प्रवृत्तेः। न च रजतभेदाग्रहादरजते प्रवृत्तिः; अग्रहस्य क्वचिदपि प्रवृत्तिहेतुत्वादृष्टेः इति मत्वा

---

आ०—ज्ञानेच्छाप्रवृत्तीनां भिन्नविषयत्वायोगः कथम्, शुष्के पतिष्यामीति कर्दमे पतति पुरुषे भिन्नविषयत्वं हि दृश्यत इत्यत्राह—यद्यपीति। तर्कस्य प्रमाणानुग्राहकतयैवार्थव्यवस्थापकत्वात् भेदाग्रहस्य प्रवृत्तिकारणत्वाभावे प्रमाणमनुपन्यस्य, केवलातिप्रसङ्गरूपतर्कोपन्यासो न युक्त इत्याशङ्क्यानुग्राह्यमन्वयव्यतिरेकाभावरूपं प्रमाणमभिप्रेतमित्याह—न च रजतभेदाग्रहादिति। हेतुत्वादृष्टेरिति अन्वयाभावो दर्शितः। भेदाग्रहस्य प्रवृत्तिस्थले सर्वत्र विद्यमानतया अन्वये सत्यपि तस्य भ्रान्त्यु-

श्री०- न चैकस्यैव कथं विरुद्धोभयहेतुत्वमिति वाच्यम्—हेतुवैलक्षण्यात्। यस्य हि रूप्यमिष्टं न भवति, तस्य रूप्यभेदाग्रहः कथं प्रवृत्तिकारणं भवेत्। अतः कारणकोटौ इष्टत्वानिष्टत्वघटनेन इष्टभेदाग्रहः प्रवृत्तिकारणम् अनिष्टभेदाग्रहो निवृत्तिकारणमिति वक्तव्यम्। भेदप्रतियोगिनः इष्टत्वानिष्टत्वरूपवैलक्षण्यात् कारणे वैचित्र्यसिद्धिः। शुक्तिरूप्यभ्रमस्थले च यद्यपि इष्टरजतभेदाग्रहवत् अनिष्टशुक्तिभेदाग्रहोऽप्यस्ति, तथापि ततो न निवृत्तिः। अग्रहस्य कारणत्वं हि ग्रहस्य प्रतिबन्धकतया प्रतिबन्धकाभावविधया। शुक्तौ रजतभेदस्य स्थितस्य ग्रहः प्रतिबन्धकः प्रवृत्तिं प्रति। तदभावे च प्रवृत्तिः। तथा रूप्ये अनिष्टरूप्यभेदग्रहो निवृत्तिप्रतिबन्धकः। तदभावो निवृत्तिहेतुः। शुक्तिरूप्यभ्रमस्थले विद्यमानः शुक्तिभेदाग्रहस्तु न प्रतिबन्धकाभावरूपतया स्थितः, किं तु शुक्तौ शुक्तिभेदासंभवात् तद्ग्रहासंभवप्रयुक्तः। असंभविनश्च का प्रतिबन्धकता। एतेन प्रथमं यत् पृष्टम्, शुक्तौ रजताभेदाग्रहस्य वर्तमानत्वात् निवृत्तिरपि भवत्विति, तत्रेदमपि समाधानम्। तत्र हि रजताभेदस्यासंभावितत्वात् असंभावितवस्तुग्रहणायोगप्रयुक्त एव रजताभेदग्रहाभावः, न तु रजताभेदग्रहरूपप्रवृत्तिकारणाभावप्रयुक्तः। शुक्तिविशेष्यकरजताभेदग्रहस्यासंभावितत्वादिति।

तत्र त्विदं वक्तव्यम्—केवलस्य इष्टभेदाग्रहस्य प्रवृत्तिं प्रति केवलस्यानिष्टभेदाग्रहस्य च निवृत्तिं प्रति कारणत्वे, शुक्तिरूपधर्मिज्ञानाभावेऽपि प्रतियोगिभूतेष्टानिष्टवस्तुस्मरणाद्यभावेऽपि प्रवृत्तिर्निवृत्तिश्च यथायथं स्यादिति भेदानुयोगिनि शुक्त्यादौ प्रतियोगिनि च तत्सदृशे इष्टानिष्टवस्तुनि स्फुरति = गृह्यमाणे स्मर्यमाणे वा प्रवृत्त्यादि भवति। भेदग्रहे प्रतिबन्धके जाते तु न भवतीति भेदवर्जमित्युच्यते। भेदवर्जमिति पदेन च भेदग्रहस्य प्रतिबन्धकविधया स्थितिर्द्योत्यते। एवं कारणकलापे सति प्रवृत्तिर्वा निवृत्तिर्वा इष्टानिष्टवस्तूचिता जायते इति।

यत्तु किञ्चिदुक्तम् तत्तद्वस्तुप्रवृत्तिं प्रति तद्वस्तुविषयकज्ञानमेव कारणं क्लृप्तम्; न तु भेदाग्रह इति--तत्र ब्रूमः, "त्वन्मते बुद्धिवन्नः" इति। अन्यथाख्यातिं स्वीकुर्वता त्वया तां प्रति आधारज्ञानमिष्टानिष्टवस्तुज्ञानं भेदाग्रहश्च कारणत्वेनेष्यते। न हि रजतभेदग्रहकाले रजतभ्रमो भवितुमर्हति। तादृशाग्रहस्य भ्रमस्य च कार्यकारणभावः अपूर्वो यथा कल्प्यते, तथाऽस्माभिरपि प्रवृत्तिं निवृत्तिं च प्रत्येव तादृशाग्रहस्य कारणत्वं कल्प्यत इति लाघवादस्मत्पक्ष एव युक्तः इति॥

जिघृक्षयैव प्रवृत्तेरिति। तथा च तद्विषयकप्रवृत्तिं प्रति तद्विषयकज्ञानेच्छे कारणभूते क्लृप्ते इति भावः।

भेदाग्रहात् प्रवृत्तावतिप्रसङ्गमाह **भेदाज्ञानादिति**। यदि निवृत्तिकारणभूतभेदग्रहाभावात् प्रवर्तते, तथा प्रवृत्तिकारणभूताभेदग्रहाभावात् किं न निवर्तेत? यथा भेदग्रहस्य निवृत्तिकारणत्वं, नेदं रजतमित्यत्र दृश्यते, एवमभेदग्रहस्य प्रवृत्तिकारणत्वम् इदं रजतमित्यभ्रान्तबुद्धौ दृष्टमेव। ततश्चाभेदग्रहरूपप्रवृत्तिकारणाभावात् प्रवृत्तिप्रतिपक्षभूता निवृत्तिः कथं न स्यादिति भावः॥ अथ रजते प्रवृत्तिरपि रजतभेदाग्रहादेवेति दृष्टम्; स चात्रापि समानः इति मन्यसे; तर्हि रजतार्थिनः कदाचिदरजतात् (कदाचित् रजतात्?) (कदाचिद्रजतभ्रमदशायां रजतात्?) निवृत्तिरपि रजताभेदाग्रहादिति दृश्यते। अतो निवृत्तिकारणभूतरजताभेदाग्रहसद्भावात् निवृत्तिरनिवार्या—इत्यभिप्रायेणोदाहरति **रूप्यारूप्यभ्रमादाविवेति**। तत्र निवृत्तिरन्यकारणिकेत्यभिप्रायेणाह **नेति**। हार्दं विवृणोति **यत इति**। **सा निवृत्तिः**। अयं भावः—न ह्यसौ रजतार्थिनस्ततो निवृत्तिरिष्टरजताभेदाग्रहात्, किंतु अनिष्टारजतभेदाग्रहात्। अरजताद्भेदो रजतत्वम्; तदग्रहादेव हि तत्रापि तदर्थिनो निवृत्तिः॥ कथं प्रवृत्तिर्निवृत्तिश्च भेदाग्रहतः स्यातामिति चेत्; इत्थम्—प्रतियोगिविषयभेदेन सामग्रीभेदात् इष्टभेदाग्रहात् प्रवृत्तिः, अनिष्टभेदाग्रहात् निवृत्तिरिति। किंचोपादानवत् हानमपि प्रवृत्तिविशेषः; तत्र भेदाग्रहः प्रवृत्तिसामान्यप्रयोजकः, तद्विशेषस्य तु तद्विशेष इति किं नो बाध्यते?

नन्वधिकरणप्रतियोगिनोरुभयोः, अन्यतरस्य वा ग्रहणाभावेऽपि तद्भेदाग्रहसिद्धिः। किं तत्रापि प्रवृत्तिः स्यात्? नेत्याह **आधार इति**। भेदाधारे भेदमन्तरेण भासमाने सतीत्यर्थः। **स्फुरतीत्यत्र** ग्रहणतः स्मरणतो वेति यथासंभवं ग्राह्यम्। **सदृशवस्त्वन्तरे** अभिमतेऽनभिमते वाऽन्यस्मिन् वस्तुनि। **तत्वदिति** इष्टानिष्टविभागाभिप्रायम्। एवमनभ्युपगमे अन्यथाख्यातिपक्षेऽप्यतिप्रसङ्गो दुर्वार इत्यभिप्रायेणाह **त्वन्मत इति**। भ्रान्तेर्हि विशेषाग्रहसहकृतसामग्र्या सिद्धिः त्वयोच्यते। तत्र न ह्यधिकरणादिग्रहणरहितभेदा-

---

[1]–स्पादनोपक्षीणतया अन्यथासिद्धत्वात् न ततो हेतुत्वनिश्चय इति भावः। यद्यपि भ्रान्तिज्ञानस्य उभयवाद्यसम्प्रतिपन्नतया अन्यथासिद्धत्वनिश्चयो नास्ति, तथाप्यनन्यथासिद्धिनिश्चयोऽपि नास्तीति न ततो हेतुत्वनिश्चय इति हृदयम्। अन्वयव्यतिरेकानिश्चयेऽपि रजतभ्रान्त्या प्रवृत्तस्य, 'नेदं रजतम्' *इति बुद्ध्या निवृत्तौ रजतभेदग्रहस्य निवृत्तिकारणत्वदर्शनात् रजतभेदाग्रहस्य तद्विरोधिनो निवृत्ति*-विरोधिप्रवृत्तिकारणत्वं निश्चेतुं शक्यमिति शङ्कामनूद्य परिहरति यदि निवृत्तिकारणेत्यादिना। अभ्रान्तिस्थलेऽपि रजतभेदाग्रहस्यैव प्रवृत्तिकारणत्वमिति शङ्कते—अरजते प्रवृत्ति .....रजते [अ?] रजतभ्रान्त्या निवृत्तौ रजताभेदाग्रहस्य रजतभ्रान्तिस्थले सद्भावात् निवृत्तिरनिवार्येति परिहरति तर्हि रजतार्थिन इति। अस्यार्थस्य श्लोकाभिप्रेतत्वं दर्शयति—इत्यभिप्रायेणेति। रूप्यारूप्यभ्रमादाविति। रूप्यविषयारूप्यविषयभ्रमादावित्यर्थः। अन्यकारणिकेति। अनिष्टभेदाग्रहकारणिकेत्यर्थः। विषयप्रतियोगिभेदेऽपि भेदाग्रहरूपेण कारणैकरूप्यात् कार्येऽप्यैकरूप्येण भवितव्यमित्याशङ्क्य, *कार्येऽप्यैकरूप्यं दर्शयति—किञ्चोपादानवदित्यादिना। विशेषकारणापेक्षामिति। कोटिद्वयस्मरणैक*-

[2]–इति मत्वेति। इति शंकां मत्वेत्यर्थः। कदाचित्–अरजतभ्रमो यदा रजते तदा। निवृत्तिः शुक्तिरजतभ्रमस्थले। अन्यकारणिकेति। न तु अभेदाग्रहकारणिकेत्यर्थः। प्रतियोगिविषयभेदेन–भेदप्रतियोगिभूतवस्तुगतेष्टत्वानिष्टत्वरूपवैलक्षण्येन। सदृशेति। सदृशपदप्रयोगः भेदप्रतियोग्यनुयोगिनोः सादृश्ये सत्येव भ्रमसंभवात्। विशेषकारणापेक्षामिति। संशयस्थले साधारणधर्मज्ञानादिकं विरुद्धनाना-

ग्रहस्य सहकारित्वं मन्यसे । संशयविपर्ययरूपविशेषोत्पत्तौ च विशेषकारणापेक्षां ब्रूषे । तद्वदिहाप्यति-प्रसङ्गपरिहारः ॥ ननु यदा शुक्तौ रजतभेदाग्रहः, तदा तत्र शुक्तिभेदाग्रहोऽपि विद्यते । अतः अनिष्टशुक्तिभेदाग्रहात् ततो निवृत्तिः किं न स्यात् ॥ तत्र शुक्ति[भेद]भ्रमात् पूर्वक्षणे अन्यत्रभ्रमकारण-तयाऽभिमतशुक्तिभेदाग्रहात् शुक्तिभ्रमः किं न स्यात् ॥ शुक्तौ शुक्तिभ्रमो न घटत इति चेत्, शुक्तौ रजतधीरप्यघटितैव त्वयाऽङ्गीक्रियते । न हि रजतोल्लेखिनी धीः अरजतविषयेति घटते ; अदृष्टचर त्वात् ॥ अदृष्टमपि भेदाग्रहविशेषो घटयतीति चेत्, तद्वदिहापि शुक्तौ शुक्तिभ्रममघटितं घटयतु ॥ दर्शनादर्शनाभ्यां विशेष इति चेत्, एवं निवृत्तिहेतुत्वेऽपि निष्यातव्यमिति । एतदपि प्रतिबन्द्यैव प्रज्ञापितम् । अग्रहणस्य प्रवृत्तिकारणत्वं न दृष्टमित्यस्याप्येषैव प्रतिबन्दिः ; न ह्यग्रहस्य बुद्धिकारणत्व-मप्यन्यत्र दृष्टं भवति । अगत्या कल्पनं तु अन्यत्रापि समानम् । त्वन्मते गौरवमधिकम् ॥

**इति भेदाग्रहस्यैव प्रवृत्तिनिवृत्तिहेतुत्वम् । इति अख्यातिसंवलितयथार्थख्यातिपक्षः ॥११॥**

**(अथ अन्यथाख्यातिनिरासः)**

**(237) अन्यस्मिन् अन्यबुद्धिर्न यदि, न घटते तत्प्रवृत्तिस्तदिच्छोः**
**इष्टं तत्साधनं वा यदभिमतमतोऽन्यत्र सा नेति चेन्न ।**
**रत्नांशौ रत्नबुद्ध्या विदुरनवगते रत्न एव प्रवृत्तिं**
**ज्ञातस्वेष्टानुषङ्गादविदितमपि खल्वाददीतात्र चैवम् ॥ १२ ॥**

---

दी— कोटिस्मरणरूपकारणविशेषापेक्षामित्यर्थः । प्रतिबन्द्यैवेति । बुद्धिप्रतिबन्द्यैवेत्यर्थः ॥ ११ ॥

श्री- विशेषधर्मोपस्थितिश्च कारणम् । विपर्ययं प्रति एकविशेषधर्मोपस्थितिमात्रमिति भेदः । श्लोके बुद्धिवदिति प्रयोगः अस्मन्मते क्रियमाणमापादनं त्वन्मतेऽप्यस्तीति ज्ञापनार्थम् । प्रतिबन्दीं प्रदर्शयितुमारभते नन्विति । निष्यातव्यमिति । निष्यानप्रकारः प्रतिबन्धकाभावरूपत्वतदभाव-रूपवैषम्यविषयक इति श्लोकार्थवर्णनसमय एव दर्शितम् ॥ ११ ॥

अन्यथाख्यातिं विना प्रवृत्त्यसिद्धिमेकदेशिमतामाशङ्क्य परिहरति अन्यस्मिन्निति । अन्यस्मिन् अन्य-बुद्धिः=शुक्तिविशेष्यकरजताभेदप्रकारकग्रहरूपान्यथाख्यातिर्न चेत्, तदिच्छोः=रजतेच्छोः तत्प्र-वृत्तिः=शुक्तिविषये प्रवृत्तिः न घटते। तत्र हेतुमाह इष्टमिति । तद्विषयकप्रवृत्तौ तद्विषयकेच्छा कारणम्, तदिच्छां प्रति तद्विषयकानुकूलत्वाभिमतिर्वा तद्विषयकेष्टसाधनत्वाभिमतिर्वा कारणम् । एतदभि-मतिविषयादन्यत्र सा=प्रवृत्तिर्न भवति । शुक्तेश्च तादृशज्ञानतज्जन्येच्छाविषयत्वाभावात् तत्र न स्यात् प्रवृत्तिरिति चेत्—न ; यत्र मणिकिरणमण्डले मणिभ्रमेण प्रवृत्तिः, तत्र मणिलाभो दृष्टः । अतो मणेः प्रवृत्तिविषयत्वमस्ति । तत्र मणिविषयकज्ञानं नास्ति । 'न चायं मणिः' इति ग्रहात् मणि-ज्ञानमस्त्येवेति वाच्यम् ; पूर्वानुभूतमणिस्मरणाधीना ह्यन्यथाख्यातिः । सा कथं पुरोवर्तिमणि-विषयिणी स्यात् ; अस्मत्पक्षे तु मणिभेदस्य तत्राग्रहणात् भेदाग्रहरूपकारणं सुस्थम् । तथाच तद्विषयकप्रवृत्तिं प्रति इष्टतत्साधनभेदग्रहाविशेष्यत्वमेव हेतुः ; मण्यंशुविषयकप्रवृत्तेर्मणिविषयकत्वं अंशुमण्योः संसृष्टत्वात् । अविदितस्य मणेरपि प्रवृत्तिविषयत्वे, सामान्यतः इदमिति विषये शुक्तौ कथं प्रवृत्तिविषयत्वं न स्यात् । भेदाग्रहविशिष्टधीविषयत्वरूपसामग्रीसत्वात् इदमाह ज्ञातेति । ज्ञातं यत् स्वेष्टं पयःप्रभृति तदनुषङ्गात् तत्संसृष्टत्वात् अविदितं तत्संसृष्टं तृणादिकमपि प्रवृत्तिविषयो

अत्र प्रसङ्गमुखेनान्यथाख्यातिसाधनमनुभाषते अन्यस्मिन्निति। विवादपदं शुक्तिशकलं रजतज्ञानविषयः रजतोपायान्यत्वे सति रजतार्थिप्रवृत्तिविषयत्वात्, सम्यग्रजतवत्। यदि पुरोवर्तिनो रजतबुद्धिविषयत्वं न स्यात्, किं तत्र पुरुषः प्रवर्तते? सुखे दुःखनिवृत्तौ तदुभयसाधने वा बुद्ध्यारूढे पुरुषस्येच्छा भवति; इष्टे च प्रवर्तते। तदिह शुक्तौ यद्युपादित्साप्रसाधिका रजतधीर्न स्यात्; तर्हि न स्यादेव तत्र प्रवृत्तिरिति। अतोऽन्यत्र सा न–सुखदुःखनिवृत्तितत्साधनबुद्धिविषयादन्यत्र पुंसां प्रवृत्तिर्न दृष्टेत्यर्थः। प्रवृत्ते स्वविषयबुद्धिपूर्वकत्वनियमो नास्तीत्यभिप्रायेण प्रत्याह नेति। व्यभिचारमुदाहरति रत्नांशाविति। स्वपक्षे हि रत्नांशुविषयेण रत्नभ्रमेण प्रसारितहस्तः तत्रत्यमनवगतं रत्नमुपादत्ते। तत्र रत्नार्थिप्रवृत्तिविषयभूतं रत्नं न प्रवृत्तिहेतुरत्नधीविषयः, प्रभाया एव तत्र धीविषयत्वात्। असत्पक्षेऽपि सामान्यतो रत्नजातीयस्मृत्या प्रवृत्तिः, न तु तदानीं गृह्यमाणरत्नविशेषविषयस्मृत्या; तस्याननुभूतचरत्वात्॥ सामान्यतो विदितत्वादप्यविदितत्वं नास्तीति चेन्न; एतावता विदितत्वेन प्रवृत्तिविषयत्वेऽतिप्रसङ्गात्। एवं व्यभिचारस्थलान्तरमाह ज्ञातेति। किंचिदिष्टं क्षीरादिकं कश्चिदुपादत्ते, तत्र सामान्यतोऽप्यज्ञाततोयतृणादिकमप्युपात्तं भवति॥ पुरुषप्रवृत्तिविषयत्वं तत्र नास्तीति चेन्न; ज्ञातानामज्ञातानां च तत्प्रवृत्तिजन्यफलाधारत्वाविशेषात्। तदेवमविदितस्यापि प्रवृत्तिविषयत्वे पुरोवर्तिनि इदंत्वेन विदितस्य [रजतस्य] रजतत्वेनाविदितस्यापि प्रवृत्तिविषयत्वं कैमुत्यसिद्धमित्यभिप्रायेणाह अत्र चैवमिति। चकारात् दूषणान्तरमपि समुच्चिनोति। तत्र रजतोल्लेखस्य शुक्त्युल्लेखरूपत्वमसंभवीति पूर्वमेवोक्तम्। संभवद्विषयत्वे तु अनुमानस्य सिद्धसाधनता, शुक्तिरजते इत्युभयग्राहिण एकज्ञानस्य सर्वसंमतत्वात्। रजतत्वविशिष्टज्ञानविषय इत्युक्तेऽपि स एव दोषः। यत् ज्ञानं रजतत्वाश्रयतया स्वविषयं गृह्णाति, तस्य

---

ञ्छ—साधनमननुभाष्य तर्कमात्रानुभाषणमनुचितमित्याशङ्क्याह—अत्र प्रसङ्गमुखेनेति। चशब्दसमुच्चितदूषणान्तरं दर्शयति—सम्भवद्विषयत्वे तु इति। रजतज्ञानविषय इति साध्यवाचिपदनिरुक्तिभेदेन सिद्धसाध्यतापरिहारो न सम्भवतीत्याह—रजतत्वविशिष्टेत्यादिना। रजतज्ञानविषय इति यथास्थिते शुक्तिरजतोभयावगाहिनि ज्ञाने रजतज्ञानत्वसंभवात् तद्विषयतयाऽपि सिद्धसाध्यता स्यादिति तत्परिहाराय रजतत्वविशिष्टेत्युक्तम्। एवमपि वस्तुतो रजतत्ववैशिष्ट्यं तत्रास्तीति दोषतादवस्थ्यमाशङ्क्य यज्ज्ञानं रजतत्वाश्रयतया स्वविषयं गृह्णातीत्युक्तम्। शुक्तिनिष्ठरजतत्वा-

ध्वी–भवति। अतः तद्विषयकप्रवृत्तौ न तदिष्टतत्साधनत्वाभिमतिरेव कारणम्। किं तु तद्विषयकज्ञानं तत्तत्संसृष्टतद्भिन्नत्वाग्रहाविषयसर्वविषयकप्रवृत्तिं प्रति कारणमिति अन्वयव्यतिरेकबलादवसेयमिति।

रजतज्ञानविषयत्वरूपसाध्याभाववति रजतोपाये व्यभिचारवारणाय रजतोपायान्यत्वे सतीति। अनुकूलतर्कमाह यदीति। पुरुषस्येच्छा = उपादित्सा। ननु 'अत्र चैवम्' इत्यत्र 'अत्र नैवम्' इति युक्तम्। रत्नमविदितमेव प्रवृत्तिविषयः = अत्र तु नैवं; शुक्तेर्विदितत्वादित्यर्थात्। अथ सर्वथैवाविदितं रत्नम्, शुक्तिस्तु रजतत्वेनाविदितेति, एवमिति पदमविदितत्वपरमिति चेत्–अथापि चकारो नातीवावश्यकः इत्यत्र तत्फलमाह चकार इति। दूषणान्तरं सिद्धसाधनम्। पूर्वमेवोक्तमिति। शुक्त्युल्लेखस्य प्रत्यक्षरूपत्वात् रजतोल्लेखस्य च स्मृतिरूपत्वात्। वस्तुनोर्भिन्नत्वेन एकज्ञानस्य नियमेनान्यविषयकत्वायोगाच्च। नियमेन तदविषयकत्वेऽपि कदाचित् तदस्तु इत्यत्र समूहालम्बनज्ञानमादाय सिद्धसाधनमाह संभवदिति। रजतत्वविशिष्टेति। रजतत्वविशिष्टतया शुक्तिग्राहिज्ञानमिति शंकितुरिष्टम्। रजतत्वविशिष्टतया रजतस्यापि ग्रहणसंभवात् परिष्कारोऽयं व्यर्थ इति सिद्धान्त्याशयः स्ववि-

विषय इत्युक्तेऽपि रजतव्यक्तिं रजतत्वाश्रयतया विषयीकुर्वतो ज्ञानस्य शुक्तिरपि विषय इति स्यात् ॥ अथैतन्निष्ठरजतत्वाश्रयतया ज्ञानस्य विषय इति साध्यते, तत्र दृष्टान्तासिद्धिः ; साध्यस्वरूपासंभवश्च, एतन्निष्ठरजतत्वाद्यभावात् । स्वविषयरजतताज्ञानविषय इत्युक्तेऽपि न निस्तारः ; रजतगतरजतत्वोल्लेखि ज्ञानस्यैवैतद्विषयत्वसंभवात् । अथ स्वोपादित्साहेतुभूतरजतज्ञानविषय इति ब्रूषे, तथाऽपि सहकारि-विशेषात् तद्धेतुभूतरजतस्मृतेः सन्निहितासन्निहितानुभवजनितसंस्काराभ्यामुत्पत्तिसंभवात् तद्विषयतया अर्थान्तरतैव । रजतानुभवविषय इति विशेषितेऽपि (पणेऽपि) स्मृतिमूलप्रवृत्तिविषये रजते व्यभिचार इति ॥

इति धीप्रवृत्त्योः समानविषयकत्वभङ्गः ॥ १२ ॥

(२३४) शुक्तित्वारूप्यतादेर्न तु रजततया भाति शुक्तिर्विगीता ;
यद्वा धीत्वात् यथार्था विमतमतिः ; अतो बुद्धिबाधोक्त्ययोगः ।
वैशिष्ट्यासिद्धिमात्रप्रथनमिह परं बाधकस्यापि कृत्यं ;
किंचासत्ख्यातिरंशे प्रभजति भवतामन्यथाख्यातिवेद्ये ॥ १३ ॥

---

आ— श्रयतयेति विशेषणेन सिद्धसाध्यतेति शङ्कते—एतन्निष्ठेति । असम्भवादिनि परिहाराय शङ्कते— स्वविषयेति । न निस्तार इति । शुक्तिरजते इति प्रमाविषयतया सिद्धसाध्यताया अपरिहार इत्यर्थः । स्वविषयोपादित्साहेतुभूतेति रजतज्ञानविशेषणे नोक्तदोष इति शङ्कते अथ स्वोपादित्सेति । एवमपि पुरुषस्य शुक्तिदर्शनानन्तरं तज्जनितसंस्कारेण तदुद्बोधितपूर्वरजतानुभवजनितसंस्कारेण च एकस्मृतिज्ञानोत्पत्तौ तस्य शुक्तीष्टसाधनाज्ञानरूपसहकारिलाभे सति तस्य शुक्तिरजतस्मृतिज्ञानस्य शुक्त्युपादित्साहेतुत्वात् सिद्धसाध्यतेति परिहरति तथापीति । रजतानुभवविषय इति विशेषणे-ऽपीति । स्मृतिविषयतया अर्थान्तरतापरिहारायानुभवत्वविवक्षायां रजतस्मृतिमूलकप्रवृत्तिविषय-रजतेऽनुभवविषयत्वरूपसाध्याभावेऽपि रजतार्थप्रवृत्तिविषयत्वहेतुसत्त्वात् व्यभिचार इत्यर्थः ॥ १२ ॥

भा— एवमिति । अनेन शुक्तिग्रहणं पूर्वपक्षी मन्यते, सिद्धान्ती रजतमेव गृह्णाति । एतन्निष्ठेति । एतत्पदं शुक्तिपरम् । एवं शुक्तेर्विशिष्य निवेशे सम्यग्रजतादिस्थुक्ते दृष्टान्ते साध्यानन्वयः ; अन्यदृष्टान्ताभावश्चेति । न निस्तार इति । पूर्ववत् समूहालम्बने तदुपपादनात् । स्वोपादित्सेति । स्वशब्दार्थः शुक्तिः । तदुपादित्साहेतुभूता इदमर्थस्मृतिः संनिहितानुभवजसंस्कारजन्या, सैव रजत-स्मृतिरपि असंनिहितरजतानुभवजन्यसंस्कारजन्यत्वे । तादृशस्मृतिरूपज्ञानमादाय सिद्धसाधन-मित्यर्थः । ज्ञानस्थाने अनुभवेत्युक्तौ स्मृतिवारणेऽपि व्यभिचार इत्याह रजतानुभवेति । प्रवृत्तिविषयत्वं स्मृतिजन्यप्रवृत्तिविषयरजते ; तत्रानुभवविषयत्वरूपसाध्याभावात् । ननु रजतानुभवविषय इत्यस्य रजतत्वनिष्ठप्रकारतानिरूपितविशेष्यताश्रय इत्यर्थः । 'इदं रजतम्' इति वास्तवज्ञानीयरजते तदस्ति । तस्य शुक्तौ साधने एकज्ञानविषयत्वलाभ इति चेत्—यथा सिद्धान्ते अहमर्थस्य, धर्मभूतज्ञानस्य च स्वयम्प्रकाशतया विशिष्टज्ञानाभावेऽपि विशिष्टज्ञानहेतुव्यवहारजनकता, तथा पृथग्भातयोरपि इदमर्थश्रवणरजतस्मरणयोः भेदाग्रहरूपसहकारिबलात् मिथो निरूप्यनिरूपक-भावापन्नविषयताप्रयोजकत्वमिष्यते । अतो ज्ञानद्वयत्वेऽपि रजतत्वनिष्ठप्रकारतानिरूपितविशेष्यता-श्रयत्वमिदमर्थेऽस्तीति सिद्धसाधनमेव । एवञ्च प्रवृत्तिं प्रति निरूप्यनिरूपकभावापन्नज्ञानं कारणमित्येवोक्त्या विशिष्टज्ञानस्यानपेक्षितत्वात् नान्यथाख्यातिरिति ध्येयम् ॥ १२ ॥

अन्यथाख्यातिसाधकानुमानं दूषितम् । तन्निरासकमनुमानमाह शुक्तित्वेति । विगीता=

अन्यथाख्यातिवादमनुमानेनोऽपि प्रत्याचष्टे; तत्र चोध्यपक्षीकारेण तावदाह शुक्तित्वेति। विगीता शुक्तिर्न रजततया भाति, शुक्तित्वात्; अरूप्यत्वाद्वा। आदिशब्देन रजतविरुद्धार्थक्रियाकारित्व-संग्रहः। अन्यथाख्यातिसमर्थनहेतोः सविशेषणत्वात् निर्विशेषणशुक्तित्वादिहेतुः प्रबल इति द्योतनार्थः तुशब्दः। किंच मदुक्तस्य विपक्षे गौरवप्रसङ्गो बाधकः संभवति; न तु त्वदुक्तस्य। प्रवृत्तिविशेषो हि भेदाग्रहादप्युपपन्नो दर्शित.। अथ बुद्धिपक्षीकारेणाप्याह यद्वेति। विगीता बुद्धिर्यथार्था बुद्धित्वात् संप्रतिपन्नवत्॥ नन्वन्यथाख्यातिपक्षीकृतौ आश्रयासिद्धिः, धर्मिग्राहकविरोधो वा। अथ विषयांशभेदेन तद्याथात्म्यमभिप्रेतम्, तदा सिद्धसाधनम्; धर्मिण. समानधर्मस्य चानारोपितत्वात्; बुद्ध्यन्तरपक्षीकारेऽप्ययमेव दोष इति॥ मैवम्; अत्र हि पुरोवर्त्यर्थे(र्थं?)व्यवहर्तुरुपादित्सां प्रति

---

प्रा॰— बुद्ध्यन्तरपक्षीकारेऽप्ययमेवेति। असत्ख्यातिपक्षीकारे तदसिद्धौ आश्रयासिद्धिः; तत्सिद्धौ धर्मिग्राहकमानबाधः। यथार्थज्ञानपक्षीकारे तु सिद्धसाध्यतेत्यर्थः। अन्यथाख्यातिरिति वा

श्री— प्रकृतसाध्यवत्त्वविवादास्पदभूता शुक्तिः न रजततया भाति=न रजतत्वप्रकारकज्ञानविषयः शुक्तित्वादित्यनुमानम्; एवम् अरूप्यत्वादिति। इदं सीसादिसर्वपक्षानुयायि। आदिना रजतवि-रुद्धार्थक्रियाकारित्वरूपहेतुविवक्षा। विषयपक्षकानुमानमुक्तम्; धीपक्षकानुमानमाह यद्वेति। विमत-मतिः=विवादविषयमतिः रजतोपादित्साकारणभूतप्रकृतमतिरिति यावत्। यथार्थेति साध्यम्; धीत्वादिति हेतुः। अतः=एवमेवानुमानयोः प्रयोगात् बुद्धिबाधोक्तेः=अन्यथाख्यातिरूपां बुद्धिं तद्रूपेण गृहीत्वा तद्बाधः क्रियते; तच्चायुक्तम्, अन्यथाख्यातेः स्वपक्षे अप्रसिद्धत्वादित्युक्तेः, अयोगः। तथा विशिष्य गृहीत्वा बाधानुक्तेः। तद्बाधस्येत एवार्थसिद्धत्वात्। यद्वा एवमर्थः—अतः=सर्वत्र यथार्थत्वसाधनात् बुद्धिबाधोक्तेः=बुद्धिषु कतिपया बुद्धिर्बाध्यते इत्युक्तेः अयोगः=नावकाशः। सर्वस्या अप्यबाध्यत्वात्। न च तर्हि बुद्धिबाधस्येवाप्रसिद्धौ, 'स न युज्यते' इत्यप्रसिद्धनिषेधः कथमिति चेत्—न वयं बुद्धिबाधं निषेधामः, अप्रसिद्धत्वात्। अस्मन्मते बुद्धेर्बाधोऽस्तीति त्वदुक्तिं वारयामः, उक्तिरियमपार्थेति ब्रूमः। एवमत्रोक्तिपदस्य प्रयोजनम्। तर्हि 'नेदं रजतम्' इति ज्ञानं पूर्वज्ञाना-बाधकं किं करोतीति चेत्—न रजतत्ववैशिष्ट्यप्रतीतिं निरस्यति; तदप्रसक्तेः। किं तु रजतत्ववैशिष्ट्यं पुरोवर्तिनि निरस्यति। सफलप्रवृत्तिकस्थले पुरोवर्तिनि रजतत्ववैशिष्ट्यसत्त्वात् अत्र तदभाव-प्रकाशनं नेदं रजतमिति बाधकज्ञानस्य कार्यम्। अप्रसक्तप्रतिषेधः कथमिति चेत्-प्रसक्तप्रवृत्तिवारण-रूपफलसंपत्तये एवमुक्तिरिति मन्यताम्। यथार्थख्यातिवादिभिरस्माभिरिव, असत्ख्यातिवादिभिरपि त्वत्पक्षो निरसितुं शक्यत इत्याह किंचेति। असत् न ख्यायते, किं तु सदेव। इदं रजतमित्यत्र इदमर्थः सन्, रजतत्वमप्यन्यत्र सदिति त्वयोच्यते। तर्हि सत एव ग्रहणे कुतोऽन्यथाख्यातित्वरूप-मयथार्थत्वम्। यदि रजततादात्म्यं विषयः, रजतत्वसमवायो वा। सर्वं रजतेऽस्त्येव। अथापि शुक्तौ तत्तादात्म्यसमवाययोरसत्त्वात् तथेति चेत्—तस्यासत्त्वेऽपि ज्ञानस्य कथमयथार्थत्वम्। असद्भूततद्विषयकत्वादिति चेत्, आगतोऽसि असत्ख्यातिपक्षमिति।

सविशेषणत्वादिति। रजतबुद्धिः शुक्तिविषयिणी शुक्तिविषयकप्रवृत्तिहेतुत्वात्, शुक्तिबुद्धिः रजतविषयिणी रजतार्थिप्रवृत्तिहेतुत्वादित्यत्र प्रवृत्तिः सविशेषणा हीति भावः। द्वितीयानुमानायोगं शंकते नन्विति। अन्यथाख्यातेः सिद्धत्वे त्वाह धर्मिग्राहकेति। बुद्ध्यन्तरेति, अन्यथाख्याति-रूपव्यत्ययपक्षीकारेण, शुक्तिबुद्धिः रजतबुद्धिरिति पक्षीकारेऽपि सिद्धसाधनमित्यर्थः। पुरोवर्त्यर्थे-

अव्यवहितहेतुभूता काचित् बुद्धिरस्तीति सामान्यत उभयाभ्युपेतम्। यद्यपि सिद्धस्य वा असिद्धस्य वा धर्मिण सत्त्वासत्त्वे विधिनिषेधानर्हे, तथाऽपि गृह्यमाणयत्किंचिदाकारेण सत्ये पर्वतादौ अवयवि-सङ्घात-प्रकृतिपरिणामादिविवादानादरेण पक्षीकरण सर्वसमतम्। तद्वदिहापि शुक्तिविषयत्वतदविषयत्वादिविवादे सत्यपि उभयानुमत-उपादित्साकरणत्वविशिष्टज्ञानपक्षीकारेणात्र प्रयोगोपपत्ति। यथा च प्रमितिरूपत्वभ्रान्तिरूपत्वविशेषानादरेण शुक्तिशकलस्य रजतज्ञानविषयत्वमात्र सामान्यत साध्यते। तत्र च, 'प्रमितिरूपत्वे विरोध, भ्रान्तिरूपत्वे तु अप्रसिद्धविशेषणत्वम्' इति पर्यनुयोग न क्षमते। एवमिहापि सामान्यत पक्षसिद्धिरिति मध्यस्थदृष्टिमनुसन्धत्स्व ॥

तथाऽप्यत्र साध्य यथार्थत्व अनारोपितविषयत्वम्, आरोपितविषयरहितत्व वा। आद्ये, धर्म्यंशादेरनारोपितत्वात् तद्विषयत्वेन सिद्धसाधनत्वम्। आरोपितविषयत्वान्ताऽसिद्धौ चानारोपितविषयत्व दुर्वचम्। अत एव न द्वितीय, निष्प्रतियोगिकनिषेधायोगात् इत्यत्राह अत इति। यथार्थत्वप्रतिज्ञानवशात् व्यवच्छेद्यत्वेन क्वचित् बुद्धिबाध स्यादित्युक्तेरयोग इत्यर्थ। अय भाव —**योगाचारादयो हि** स्वप्नादिनिदर्शनेन सर्वप्रत्ययाना प्रत्ययत्वेनायथार्थत्व साधयन्ति, सर्वत्रासिद्ध च यथार्थत्व प्रतिषेध्य प्रति

---

आ॰–ज्ञानान्तरमिति वा विशिष्य न पक्षीक्रियते, येनोक्तदोष स्यात्। अपितु शुक्तिविषयोपादित्साहेतुभूता काचिद् बुद्धिरस्तीति उभयसम्मता सा पक्षीक्रियत इत्यभिप्रायेणाह–अत्र हि पुरोवर्त्यर्थमिति। सामान्याकारेण सिद्धमस्तु अथापि अनुमानस्यान्यथाख्यातिनिषेधार्थत्वात् असिद्धाया तस्या निषेधोऽनुपपन्न 'सिद्धस्य वा, असिद्धस्य वा धर्मिण सत्त्वासत्त्वे विधिनिषेधानर्ह" इति न्यायेन सामान्याकारमात्रेण सिद्धस्य पक्षीकरण वा कथमिति शङ्कायामाह—यद्यपि सिद्धस्येत्यादिना। उपादित्साकारणत्वविशिष्टपक्षीकारेणात्र प्रयोगोपपत्तिरिति। असिद्धाया साक्षान्निषेधानर्हत्वेऽपि सामान्याकारेण सिद्धज्ञानपक्षीकारेण याथात्म्यसाधनेऽन्यथाख्यातिनिषेधोऽर्थात् सिद्ध्यतीति भाव। कथमुक्तेरयोग व्यवच्छेद्यस्य बुद्धिबाधस्यावश्याभ्युपगमनीयत्वात् इत्याशङ्क्याह अय भावइति॥

श्री— व्यवहर्तुरित्येक पदम्। अर्थमिति द्वितीयान्तत्वे व्यवहर्तुरिति तृजन्तम्। पुरोवर्त्यर्थोपादित्साहेतुभूतबुद्धिरिति सामान्येन पक्षीकार इति भाव। सिद्धस्येति। पूर्वमेव सिद्ध न साधनीयम्, नापि बाधितु शक्यम्। असिद्धमप्येवमित्यर्थ। पर्वतादाविति। बौद्धसाङ्ख्यतार्किकादिविवादे पर्वतपक्षीकारेण किञ्चित्साधनेऽन्यतर पृच्छेत्, पर्वतपदेन किं विवक्षितम्? अवयवि चेत्, तार्किकमत एव तत्प्रसिद्धि। सङ्घातश्चेत्, न तन्मते प्रसिद्धि। प्रकृतिपरिणामश्चेत्, साङ्ख्यादिमत एव। अतो वाद्यन्तरदृष्ट्या आश्रयासिद्धिरिति लोकव्यवहार एव न सिद्ध्येत्। अत तत्पदवाच्यत्वादिना सामान्येन ग्रहणमदुष्टमिति भाव। प्रयोगोपपत्तिरित्येतत् दृष्टान्तान्तरेणापि समर्थयते यथाचेति। तार्किकै शुक्तिशकल रजतज्ञानविषय रजतार्थिप्रवृत्तिविषयत्वादिति किलेहानुमीयते। तत्र विषयपक्षकानुमाने पृच्छाम, रजतज्ञानपदेन स्मरणग्रहण वा प्रमितिग्रहण वा अयथाख्यातिग्रहण वा। आद्यद्वये बाध अन्त्ये साध्याप्रसिद्धि। तस्मात् ज्ञानत्वेन रूपेण सामान्यत प्रयोग इत्युपपादनीयम् तद्वदित्यर्थ। साध्यत इत्यन्त पूर्वशेषम्। तदुपपादन तत्र चेत्यादिना।

अथ द्वितीयानुमाने साध्यविषयविचार प्रवर्तयति तथापीति। अत इत्यस्यार्थमाह यथार्थत्वप्रतिज्ञानवशादिति। क्वचित् आरोपात्मकबुद्धिर्भवति, तद्बाध इहोच्यते तद्व्यवच्छेदायेति त्वया न वक्तव्यमित्यर्थ। तत्र हेतुमाविष्करोति अय भाव इति। श्लोके उक्तिरादृत्य

पद्यन्ते। तान् उद्दिश्यायं प्रयोगः स्यात्। पिशाचानां पिशाचभाषयैव हि उत्तरं देयम्। तदिह यद्वेत्यनेन पक्षान्तरान्वारोहः प्रख्याप्यते। कस्तर्हि तान् प्रति दृष्टान्तो वाच्य? यस्तेषां स्वपक्षसाधकबोधः। न हि तस्यायथार्थत्वं तैर्वक्तुं युक्तम्, स्वपक्षासिद्धिप्रसङ्गादिति॥ ननु बुद्धिबाध. कश्चित् सिद्धो न वा? आद्ये कथं तन्निषेधः? द्वितीये कथंतरामिति चेत् —उच्यते। न हि वयं बुद्धिबाधशब्दस्य कंचिदर्थमनुमत्य प्रतिषेधामः। किंतु बुद्धिबाधोक्तिरयोग्यपदसमभिव्याहाररूपा न विशिष्टमर्थं बोधयतीति तत्प्रयोगस्यायुक्ततामात्रं ब्रूम इति भावः।

एतेनान्यथाख्यातिः क्वचिदस्ति न वेत्यादिकमपि प्रत्युक्तम्। अस्ति तावत् परस्परविरुद्धाकारभानरूपान्यथाख्यातिः सर्वेषु वस्तुषु। सेयं शुक्तिविरुद्धाकारवत्तया अन्यत्र सिद्धा। अन्यथाख्यातिः शुक्त्यालम्बना न भवतीत्युक्तौ क्वचित् सिद्धस्यैवान्यत्र निषेधः। यत्तु शुक्तेरेव बाधदशायां रजतादन्यथात्वेन भानम्, न तत् निषेध्यम्; स्वाकारविरुद्धाकारवत्तया भानमिति तु अयोग्यपदसमभिव्याहारमात्रमिति।

ननु पूर्वधीबाधाभावे परस्य कथं बाधकत्वमित्यत्राह वैशिष्ट्येति। बाधकज्ञानं हि पुरोवर्तिनि रूप्यत्ववैशिष्ट्यं नास्तीति बोधयति। तच्च रूप्ये सिद्धं प्रतियोगि भवति। अत एव भेदग्रहसिद्धौ भेदाग्रहप्रभवप्रवृत्तिरूपसाध्यापहारात् पूर्वोत्तरधियोर्बाध्यबाधकत्ववाचोयुक्तिरिति भावः।

असत्ख्यातिदूषणेनान्यथाख्यातिसाधननामनिष्टप्रसङ्गमाह किंचेति। यद्यप्यधिष्ठानं सत्यं भाति, यद्यपि रजतस्य रजतत्वस्य चान्यत्र सिद्धे, तदारोपे नात्यन्तासत्ख्यातिः—तथाऽपि शुक्तिशकले रजततादात्म्यस्य रजतत्वसंसर्गस्य वा तत्र चान्यत्र चासिद्धस्य निषेध्यस्य ख्यातिविषयत्वात् अत्यन्तासत्ख्यातिरनिवार्या। एतावदसत्ख्यातिरङ्गीक्रियत इति चेत्—इदमपि गौरवान्तरम्। तथाच असत्ख्यातिदूषणात् विरन्तव्यम्, अन्यथाख्यातिसाधनाद्वेति॥ इति अन्यथाख्यातिबाधकानुमानम्॥ १३॥

(239) योऽसौ बोधोऽन्यथाधीजनक इति जगे भ्रान्तिरित्युच्यतेऽसौ;
नेत्थं बोधापलापः क्वचिदपि वदतां बोधमध्यक्षसिद्धम्।

---

श्री–दर्शयितुं प्रश्नमुत्थापयति नन्विति। तार्किकं प्रति बुद्धिबाधो नास्तीति त्वया कथमुच्यतेति प्रश्नः। 'बुद्धिबाधोऽस्ति' इत्यानुपूर्वीकं वाक्यं तार्किकादिप्रयुक्तमयुक्तम्, बोधाजनकत्वादिति ब्रूम इति समाधिः। एतेनेति। अन्यथाख्यातिर्नास्तीति प्रयोगे शुक्तिविषयकशुक्त्यवृत्तिधर्मप्रकारकधीर्नास्तीत्यर्थः स्यात्। तथा चाप्रसिद्धिः। अतः शुक्त्यन्यवर्तिरजतत्वधीः शुक्त्यालम्बना नेत्येव ब्रूम इति न दोष इति भावः॥ १३॥

ननु अन्यथाख्यात्यनंगीकारे भ्रान्त्यादिशब्दाः सर्वसंमताः निरर्थकाः स्युः, अनुभवापलापश्चेत्यत्राह य इति। तार्किकेणान्यथाख्यातिवादिना यो बोधः=यत् ज्ञानं धर्मिग्रहणं रजतस्मरणमित्यादिरन्यथाख्यातिजनकतया जगे=उक्तः, स एव बोधः भ्रान्तिशब्दार्थः। अतो न शब्दार्थापलापः। इत्थं सति बोधस्यास्मत्पक्षे अपलापः कथम्। वयं हि ज्ञानमनुमेयं मन्यमानान् भाट्टादीन्लक्षण्येन ज्ञानस्य प्रत्यक्षसिद्धत्वं स्वयम्प्रकाशत्वं ब्रूमः। किं तदिह स्वयंप्रकाशमिति चेत्—धर्मिग्रहणं रजतस्मरणञ्चेत्येव ब्रूमः।

यत्र प्रत्यक्षसिद्धादधिकमपि परे निष्फलं कल्पयेयुः,
सिद्धेरेवात्र तत्तद्व्यवहृतिरिति हि स्थापितं भाष्यकारैः ॥ १४ ॥

ननु अन्यथाख्यातिमपह्नुवानानां सर्वस्या बुद्धेर्याथार्थ्याविशेषात् भ्रान्तिशब्दः क्वचिदपि न स्यात्। न ह्यसावसाधुः; न च साधुरपि निर्विषयः स्यात्। स्पष्टदृष्टबोधापलापे च सर्वबोधापलापप्रसक्त्या विश्वविलोपः स्यादित्यत्राह योऽसाविति। अयं भावः—अस्ति हि अधिष्ठानादिगोचरं भेदाग्रहविशेषसहकृतं भ्रान्तिजनकत्वेन युष्मदभिमतं किंचित् ज्ञानम्। तदेव भ्रान्तिरित्युच्यते। न चात्र बोधापलापः; ईदृशबोधोपलम्भस्याभ्युपगमात्, तदतिरिक्तबोधोपलम्भस्याभावाच्चेति। नन्वनादेशिकमेतत्; भाष्यादिष्वनुक्तेरित्यत्राह यत्रेति। यत्र संप्रतिपन्नैः कैश्चित् व्यवहारः संभवति, तत्र मध्ये न किंचित् कल्पनीयमिति अभाव-जाति अवयवि-भेदादिनिरासे भाष्यकारैर्निरणायि। प्रस्तुतार्थश्च भ्रान्तिचिन्तायां प्रदर्शितप्राय इति।

ननु च, "अख्यातिपक्षेऽप्यन्यविशेषणमन्यविशेषणत्वेन" इति भाष्ये कथं चोदितम्? किमिति

---

श्री-ननु भाष्यकारैः अन्यथाख्यातिः ख्यात्यन्तरवादिनामवर्जनीयेति अन्यथाख्यातेरनुभूयमानत्वे कथिते धर्मिग्रहधर्मस्मरणानुभव एवास्तीति तद्विरुद्धं कथमुच्यत इत्यत्राह यत्रेति। ग्रहणस्मरणभेदाग्रहैः समुदितैरेव सर्वभ्रान्तिनिर्वाहस्योपरि भ्रान्तिचिन्तायां भाष्ये विस्तरेण कथनात् मध्ये भ्रान्तिरूपज्ञानजन्म न कल्पनीयमित्याशयः स्पष्टः। अन्यथा सर्वज्ञानयाथार्थ्यप्रतिज्ञाया भंगापत्तेः। मध्ये पदार्थान्तरकल्पनं विना यत्र यत्रानुभवनिर्वाहो भवति, तत्र सर्वत्र तदंगीकारो भाष्यकृतामनिष्ट इति यदुक्तं दृष्टम्—यथा नास्तीति प्रतीतौ सत्यामपि भावातिरिक्ताभावो नेष्टः; घटः, घट इत्याद्यनुगतप्रतीतौ सत्यामपि घटत्वादिजातिर्नेष्टा; 'एको घटः' इति प्रतीतावपि अवयवातिरिक्तावयवि नेष्टम्। 'अयं घटः, न तु पटः' इति पृथक् पटभेदभानेऽपि घटत्वादिसंस्थानातिरिक्तो भेदो नेष्टः। आकृतिव्यक्त्या जातिरिति भेदे कथ्यमानेऽपि आकृतिरूपसंस्थानातिरिक्ता जातिर्नेष्टा। 'श्यामो युवा लोहिताक्षोऽयम्' इति शब्दचतुष्टयात् धर्मिभानचतुष्टये सत्यपि सर्वधर्मविशिष्टधर्मिभानमेकमेवेष्टम्। नैतावताऽनुभवापलापो भवति; किं तु अनुभवशोधनमेव। अत एव प्रत्यक्षेऽपि तर्कस्य सहकारित्वम्। वस्त्वपलापेन सर्वं भ्रान्तिसिद्धमित्युक्त्यैव प्रत्यक्षविरोधः स्यात्। तथाच यत्रयत्र तर्कोपस्कृतप्रत्यक्षसिद्धातिरिक्तं यत् यत् परकल्पितम्, तत् सर्वं नेष्टम्। कल्पनस्य निष्फलत्वात्। तदभावेऽपि व्यवहारसिद्धेः। अत एव हि तार्किकस्वीकृतपरत्वापरत्व-पृथक्त्व-विभाग-द्वित्वादिसंख्या-दिगादिद्रव्यव्यवहाराणां क्लृप्तैरेव निर्वाहादनतिरिक्तत्वमिति दीधितिकारादयस्तार्किका एव शीलयन्ति। न हि तावता प्रत्यक्षापलापो भवति। आस्तामिदम्—अन्यथाख्यातिरवर्जनीयेति कथं भाषितमिति चेत्—तत्र भाष्यश्रीसूक्तिस्तावत्, "अन्यथावभासोऽवश्याश्रयणीयः" इति। अन्यथावभास इत्यस्य शुक्तिज्ञानव्यक्तेः रजतप्रकारकत्वमिति नार्थः। किं तु शुक्तिनिष्ठोऽवभासः विषयता अन्यथा = अन्यप्रकारकः अन्यनिष्ठविषयतानिरूपितेति। तथाच ज्ञानद्वयत्वेऽपि तत्तद्विषयतयोर्निरूप्यनिरूपकभावोऽस्ति। एवं विशिष्टायां विषयतायां विद्यमानमैक्यं वित्तौ मन्यते। यथा अग्नीषोमयोः पत्नीयजमानयोः देवतैक्यं कर्त्रैक्यमिति व्यवहार इति।

न ह्यसावसाधुरिति। अपभ्रंशानामर्थावाचकत्वमिष्टम्। भ्रान्त्यादिशब्दानां प्रातिपदिकत्वं व्याकरणसंस्कृतत्वं वाचकत्वञ्चेष्टमित्यर्थः। निर्विषय इति। प्रातिपदिकं हि सविषयकमेव। न च यदृच्छाशब्दवत् 'स्वं रूपं शब्दस्य' इति रीत्या वा तत्तच्छब्दपरत्वेन साधुतेत्यर्थः।

वा तत्रापदिष्टोत्तरम्?॥ सत्यम् । तदुच्यते—सर्पभूदलनाम्बुधारादिभ्रमेषु अयं सर्पः, इदं भूदलनम्, इयमम्बुधारेति सर्पादिविशेष्यलिङ्गभाञ्जि विशेषणानि भवन्ति; इदं च समानाधिकरणत्वाभिमानात् । अतोऽन्यथाख्यातिरवर्जनीयेति चोद्याभिप्रायः । परिहारानुक्तिस्तु तत्तद्भेदाग्रहनिबन्धनवाचकव्यवहार-विशेषमात्रमिति स्वयमूहक्षमशिष्यशिक्षार्थेति ॥

श्लो— तर्कतत्फलसामर्थ्यात् अन्यथाधीप्रसञ्जनम् । दत्तोत्तरमिति ग्राह्यं दृष्टगौरवलाघवैः ॥

*यदेतदाहार्यव्याप्यजनितमारोपितव्यापकविषयं ज्ञानं तर्क इति ब्रूषे, तज्जनकतयाऽभिमत[स्य]ज्ञान-*
स्यैव तर्कशब्दवाच्यत्व, तस्यैव च मानानुग्राहकत्वमिति ॥

इति अनुभवापलापदोषनिरासः (इति अन्यथाख्यातिभङ्गप्रकारः) ॥ १४ ॥

(240) एकाधारे विरुद्धाकृतियुगयुगपत्ख्यातिरन्योन्यबाध्या
डोलाविक्षेपकल्पा तदनियतिरियं धीक्रमे साक्षिणी नः ।
तस्मात् तत्तद्विशेषस्मृतिसमसमय छन्नतत्तद्विरोधः
ख्यातः साधारणोऽर्थः परमिह विशये; येन बुद्ध्यन्तरं वा ॥ १५ ॥

---

आ- तर्कत फलसामर्थ्यादिति। आरोपितव्यापकविषयज्ञानरूपस्य तर्कस्य, विपक्षजिज्ञासाविच्छेदरूपस्य तत्फलस्य च सामर्थ्यादित्यर्थः। तज्जनकतयाऽभिमतस्येति । भवदभिमतव्याप्यव्यापकारोपहेतुतया अभिमतस्येत्यर्थः। एतच्च त्वदभिमतविपक्षजिज्ञासाशब्दवाच्य(?)तज्जनकं ज्ञानमिति तस्योपलक्षणम्॥

श्री— कथं चोदितमित्यत्र कारणमाह सर्पेति । उत्तरादाने कारणमाह परिहारेति । ऊहक्षमशिष्य-शिक्षार्थेति । परिहारानुक्तिः ऊहक्षमैः शिष्यैः स्वत एव शिक्षा प्रष्टून् प्रति क्रियेतेति तत्कर्तृकशि-क्षोद्देश्यिकेत्यर्थः ॥ ननु तर्कस्य लक्षणम्, 'व्याप्यारोपेण व्यापकारोपः' इति। तर्कस्य फलञ्च विपक्षजिज्ञासाविच्छेदः। पक्षे साध्याभावगरममस्त्विति कामनायाः अनिष्टापादनेन निरसनमिति यावत्। तेन पूर्वोक्ताशंका निवर्तते। ततो हेतुबलात् साध्यसिद्धिः। एतद्बलेन तस्यारोप एव, न तु सत्तेति ज्ञायते। अत्र आरोपास्वीकारे कथमेतदित्यत्राह तर्केति। परपक्षगौरव-स्वपक्षलाघव-दर्शिभि-र्ग्राह्यमुपपादयति यदिति। धर्मिग्रहणधर्मस्मरणभेदाग्रहसमुदाये भ्रान्तिव्यवहारः। बाध-तत्काली-नेच्छा-धर्मधर्मिज्ञानसमुदाये सति आरोपव्यवहारः। अतो न तत्राप्यान्तरालिकं भ्रान्तिज्ञानमिति॥

ननु भ्रान्तिस्थले अन्यथाख्यातिं विना निर्वाहेऽपि संशयस्थले सेयमवर्जनीया। न च संशयस्यानंगीकारो युक्तः, तदभावे सर्वविचारलोपात्। अत एव, 'प्रमाणप्रमेयसंशय' इति न्यायसूत्रे संशयस्य सर्वापेक्षया प्रथमं परिगणनम्। सा चान्यथाख्यातिरेव। भ्रान्तिस्थल इव तत्र निर्वाहो न भवति, धर्मिग्रहण एककोटिस्मरण-कोट्यन्तरस्मरण तत्तद्विरोधज्ञान-साधारणधर्मज्ञानानां यौगपद्या-योगेन तत एव निर्वाहस्य दुर्वचत्वात्। ज्ञानानां पृथक्त्वे भिन्नविषयत्वे च, विरोधाभावेन वाकारोल्लेखा-योगाच्चेत्यत्राह एकेति। प्रथमपादेन संशयरूपैकज्ञानोदयायोगः, द्वितीयेन तत्र धीक्रमानुभवः, शेषेण स्वयौगपद्यसंभवश्चोपपाद्यते। एकस्मिन् पुरोवर्तिनि आरोहपरिणाहशब्दवाच्योर्ध्वत्व-पृथुत्ववति आधारे विरुद्धयोः स्थाणुत्वपुरुषत्वरूपयोराकारयोर्युगस्य युगपद्ग्रहणं तावत् अशक्यम्, अन्योन्यबाधात्। तद्विशेष्यकतद्वत्ताबुद्धौ तद्विशेष्यकतद्विरुद्धधर्मवत्ताज्ञानस्य बाधकत्वात्। न च संशयात्मकज्ञानं न बाधकमिति शंक्यम्, तदसिद्धिप्रस्तावे तत्सिद्धयत्कारेण प्रत्युक्तययोगात्। जायते किलेति चेत्—यतो जायते, अत एवेदं विरुद्धाकारद्वयभानं एकाधारे नेति निश्चिनुमः।

अथ स्यात् — विरुद्धानियतकोटिद्वयगोचरं संशयात्मकं ज्ञानं सर्वेषां प्रसिद्धम्, तच्च वस्तुनि निर्विकल्पस्य विरुद्धानियताकारत्वस्य चायोगात् अन्यथाख्यातिरूपमेव । तदनभ्युपगमे, 'संदिग्धे न्यायप्रवृत्तिः', 'विपर्ययसंशयश्चैव' इत्यादिकमुच्छिद्येतेत्यत्राह एकाधार इति । अयं भावः — यदि स्थाणुत्वविशिष्टतया पुरोवर्ति भायात्, पुरुषत्वविशिष्टतया न भायादेव, तथाऽन्यत्र सर्वत्र दृष्टेः । तदयं प्रयोगः — विप्रतिपन्नं स्थाणुपुरुषभानं भिन्नाधारे स्थाणुत्वपुरुषत्वे बोधयति, स्थाणुपुरुषभानत्वात् स्थाणुपुरुषाविति भानवत् । ततश्च पुरोवर्तिभानं स्थाणुपुरुषभानं च मिथो भिन्नमिति सिद्धम् । तस्मात्, ऊर्ध्वद्रव्यभानमनुभवः,

गुरु — 'एकाधारे' इति श्लोके प्रथमपादं तात्पर्यतो व्याचष्टे — यदि स्थाणुत्वविशिष्टतयेत्यादिना । पुरुषत्वविशिष्टतया न भायादेवेत्यनेन 'अन्योन्यबाध्या' इति पदं परस्परप्रतिक्षेप्यत्वपरं, न तु 'नेदं रजतम्' इतिवत् निषेध्यत्वपरमिति दर्शितम् । एवमेकस्मिन् ऊर्ध्वत्वादिविशिष्टद्रव्ये स्थाणुत्वपुरुषत्वादिविरुद्धाकारद्वयवैशिष्ट्यभानं न सम्भवतीति परोक्तसंशयस्यानुपपन्नत्वं दर्शितम् । फलितमाह ततश्चेति । धीभेदफलितो धीक्रम इत्याह — तस्मादिति ।

श्री — तथा च, 'अयं स्थाणुर्वा पुरुषो वा' इत्यत्र अयमिति पुरोवर्तिग्रहणमन्यत्, स्थाणुर्वेति स्थाणुत्वविशिष्टपूर्वदृष्टव्यक्तिस्मरणमन्यत् । पुरुषो वेत्यपि तथा । ननु वाकारोल्लेखादेव ज्ञानमिति वक्तव्यमित्यत्राह डोलेति । वाकारबलादेवानेकज्ञानत्वमित्याशयः । समुच्चये हि युगपदुभयग्रहणमुपपन्नम् । अत्र तु लोके संशयडोलेति व्यवहारः प्रसिद्धः । डोला च चलन्ती प्राच्यकोटिं प्रतीच्यकोटिं च युगपन्न गृह्णाति, प्रतीचीं गत्वा पुनः प्राचीमायाति । तत्रानियतिर्दृष्टा । तद्वत् स्थाणुत्वग्रहकालोऽन्यः पुरुषत्वग्रहकालश्च तदन्यः । इदञ्च पूर्वं स्थाणुत्वेन गृहीतस्य पश्चात् पुरुषत्वग्रहणेन तद्व्युदासरूपं परं न मन्तव्यम्, अनियमात् । पुनः स्थाणुत्वस्पर्शोऽप्यस्ति । प्रथमस्य त्यागः प्रथमेन वाकारेण ज्ञाप्यते द्वितीयस्यापि त्यागो द्वितीयेन वाकारेण । तृतीयं तु न स्पृशति । तथाच स्थाणुत्वग्रहणं पुरुषत्वग्रहणभिन्नकालिकं डोलाविक्षेपकल्पत्वादित्यनुमीयते । तर्हि यौगपद्यं कथमित्यत्राह तस्मादिति । ज्ञानभेदस्यानुभवसिद्धत्वात् प्रथमतः ऊर्ध्वत्वादिसाधारणधर्मज्ञानानन्तरं तत्सजातीयधर्म्यन्तरस्मरणे स्थाणुत्वपुरुषत्वयोः तत्समानाधिकरणयोः स्मृतिर्भवति । एकानन्तरमन्यस्य स्मरणेऽपि न दोषः, ज्ञानस्य त्रिचतुरक्षणस्थायित्वसम्भवात् सामग्रीमेलनात् । अथ वा पुनरनन्तरक्षणे उभयविषयकैकस्मरणसम्भवः । तत्समसमयं स्यात् = गृहीतो भवति साधारणोऽर्थः । पूर्वं साधारणधर्मग्रहणादेव विशेषस्मृत्युत्पत्तौ तन्नाशेऽपि पुनरपि साधारणधर्मविशिष्टस्य ग्रहणं स्मरणं वा भवतीति ब्रूमः । एवञ्च पूर्वक्षणजातविशेषद्वयस्मृतेः अस्य चोत्तरक्षणे यौगपद्यम् । परं तु यदि ऊर्ध्वत्वविशिष्टोऽयं स्थाणुत्वादिकिञ्चिद्विरुद्धाकारवत्तयाऽपि गृह्येत, तदा न संशयप्रसक्तिः । अतः छादनवद्विरोध इत्युक्तम् । स्थाणुत्वपुरुषत्वयोर्मिथो विरोधो वाकारसूचितो गृह्यत एव । अथापि पुरोवर्तिनि विरोधवद्धर्मवत्ताग्रहणं नास्तीति भावः । एवञ्च धर्ममिथोविरोधस्फूर्तिरपि स्मृतौ अन्तर्गता भवति । तादृशस्मृतिविशिष्टख्यातिविशिष्टः साधारणधर्मवद्धर्मी इह विशये = संशयव्यवहारे विषयीभवति । स्मृतिविशिष्टसाधारणार्थख्यातिर्विशयपदार्थ इति यावत् । परमित्यनेन ज्ञानान्यविशयाख्यज्ञानान्तरव्यावृत्तिः । त्वयापि एवं यौगपद्येन सामग्र्यसम्भवे संशयोत्पत्तिर्वक्तुं न शक्यत इति वक्तुमाह 'येन बुद्ध्यन्तरं च' इति । येन उक्तविधसाधारणार्थेन युष्माभिर्मध्ये निष्फलबुद्ध्यन्तरकल्पना कार्येति ॥

व्यवस्थितविकल्पस्यापि विकल्पत्वात् तत्र संशयाभावादाह विरुद्धानियतेति । भ्रान्तिस्थल इवात्रापि प्रथमपादविवक्षितमनुमानमाह तदयं प्रयोग इति । विप्रतिपन्नमिति दृष्टान्तव्यावृत्तये ।

स्थाणुपुरुषभाने तु स्मरणम् । न चैकस्मिन् पुरुषे स्मृत्यनुभवयोरेकदा संभवं मन्यसे ; स्मर्यमाणाधारसंशये धर्मिस्फुरणस्य कोटिद्वयस्फुरणस्य च स्मृतित्वाविशेषेऽपि धर्मिस्फुरणस्य कोटिद्वयस्मृतिहेतुसंस्कारोद्बोधकतया पूर्वत्वमनिवार्यमिति । प्रकारान्तरेणापि धीक्रमं साधयति डोलेति । 'संशयडोलाधिरूढः', 'डोलायमानमानसः' इति रूपकोपमानाभ्यां क्रमेण विरुद्धयोगिसारूप्यं व्यज्यते । अनियतत्वव्यञ्जकश्च वाकारप्रयोगोऽन्यतरस्फुरणमितरोल्लेखवर्जितं स्वरसतो दर्शयति । न ह्यसाविह समुच्चयार्थः; तथा सति अनियमानुल्लेखेन संशयरूपत्वाभावप्रसङ्गात् । वाकार(चकार ?)श्चाविशेषात् प्रयुज्येत । नाप्युपमानार्थः (पमार्थः?); धर्मिणः तत्तदन्यत्वानिश्चयेन तत्तदुपमेयत्वायोगात् । न च मिथः ; अयमिति पुरोवर्तिनिर्देशेनाघटितत्वात् ; अध्याहारवाक्यभेदयोरवर्जनीयत्वाच्च । अतोऽत्र विकल्पतः प्रवृत्तमिदमव्ययम्, 'तत्त्वे अतदयोगात् ऊर्ध्वः पदार्थः कश्चित् स्थाणुर्भवति, कश्चित् पुरुषो भवति' इति ऊर्ध्वत्वस्य स्थाणुत्वपुरुषत्वाभ्यां विभज्य

---

पूर्वी—रूपकोपमानाभ्यामिति । संशयडोलामिति उपमानम् (?) डोलायमानमानस इति रूपकम् । न केवलं रूपकोपमानाभ्याम्, वाशब्देन च कोटिद्वयस्फुरणस्य क्रमिकत्वं सिद्धमित्याह-(अ?) नियतत्व-

श्री—स्थाणुपुरुषभानमिति । ननु दृष्टान्ते अस्यैकज्ञानत्वेऽपि स्थाणुज्ञानस्य पुरुषज्ञानस्य चात्र क्रमिकतया भिन्नत्वात् अन्यथाख्यातिपक्षे चैकत्वात् कथमैकरूप्यमिति चेत्—अस्माकमपि ग्रहणकाले तत्तज्ज्ञानस्य भिन्नत्वेऽपि युगपदुभयस्मरणस्य विवक्षितत्वान्न ज्ञानैक्यभंगः। भानं = ज्ञानम्। बोधयति = प्रकाशयति; गृह्णाति। भिन्नज्ञानत्वदार्ढ्यसंपादनाय न चैकस्मिन्निति वाक्यम्। अनुभूयमानाधारस्थले संशये ज्ञानभेदवत् स्मर्यमाणाधारविषये पूर्वानुत्पन्न एव संशयः कश्चित् भवेत् यदि, तत्र धर्मिज्ञानस्य स्मृतिरूपत्वेऽपि ज्ञानभेद एवेत्याह स्मर्यमाणेति । अनिवार्यमिति । ननु पूर्वस्मरणेऽपि पश्चादपि धर्मिधर्मसर्वांशविषयैकस्मरणे को दोष इति चेत्—भवतु कामम् । अथापि अनुभूतमात्रविषयके तत्र धर्मधर्मिवैशिष्ट्यभानायोगात् नान्यथाख्यातिप्रसक्तिरिति । संशयडोलेति । ननु डोलाया एकस्या उभयकोटिस्पर्शो यथा, तथैकत्र ज्ञान एव कोटिद्वयस्पर्शस्य वक्तव्यतया ज्ञानभेदः कथमिति चेत्, न, दृष्टान्तस्य यावत्संभवमेव ग्राह्यत्वात् । ज्ञानं पूर्वजातं पश्चात् विलम्बेन विषयमुल्लिखतीति न केनापीष्टम् । विरम्यव्यापारायोगादिति तत् दूषितञ्च बौद्धैः । अतः कालभेदेन कोटिग्रहणात् ज्ञानद्वयमेव । डोलासाम्यं संशये पुष्कलं न भवति चेत्, मनसि तदस्तु । एकं मनः पुरुषज्ञानं स्पृष्ट्वा पश्चात् स्थाणुज्ञानमपि स्पृशतीति । संशयपदमपि संशयहेतुत्वावस्थमनःपरमेव । एतदाशयेन च डोलायमानमानस इत्युक्तम् । प्रथमोदाहरणे रूपणम् ; उत्तरत्रोपमेति वैलक्षण्यमप्यस्ति । सादृश्यं तु उभयत्रापेक्षितमेव । नह्यसाविहेति । 'कदाचित् केशवे भक्तिस्तद्भक्तैर्वा समागमः' इति वाकारप्रयोगात्; 'पूर्वं संसारविषवृक्षस्य द्वे फले अमृतोपमे' इति द्वित्वोक्त्या समुच्चयावगतेस्तत्र वाकारः समुच्चयार्थः । 'वाकारश्चाविशेषात्' इत्यत्र चकारश्चाविशेषादिति पाठो युक्तः । नोपमानार्थ इति 'पद्मिनीं वाऽन्यरूपाम्' इत्यादौ उपमार्थे प्रयोगादिति भावः। उपमानम् = उपमा । तथैव वा पाठः । धर्मिणः = इदमर्थस्य । न च मिथ इति । स्थाणुपुरुषयोर्मिथ उपमाविवक्षा नेत्यर्थः । तदा वाकार एक एव स्यादित्यपि ध्येयम् । पुरुषतुल्यस्थाणुरयम्, स्थाणुतुल्यपुरुषोऽयमित्याद्यर्थे वाक्यभेदादि । संशयरूपत्वाभावप्रसंगदोषोऽपि सर्वत्र । विकल्पतः = विकल्परूपार्थे । अत इत्यारभ्य व्यनक्तीत्यन्तमेकं वाक्यम् ; अव्ययमित्येतत् व्यनक्तीत्यस्य कर्म । तत्र हेतुः तत्त्वे अतदयोगादिति । स्थाणुत्वे

साहचर्यं व्यनक्ति । तदिह अयमिति पुरोवर्तिमात्रमगृहीतविशेषमनुभूयते, स्थाणुपुरुषौ तु स्मर्येते इति विभागः । एतदेव निगमनव्याजेन स्पष्टयति तस्मादिति । समसमयमिति अगृहीतक्रमयोरनुभवस्मृत्योः निरन्तरभानाभिप्रायम् । अथवा पुरोवर्त्यनुभवजनितसंस्कारेण कोटिद्वयस्मृतिहेतुसंस्काराभ्यां च संभूय तैर्युगपदेकस्मृतिसंभवात् तदुल्लिख्यमानविषयत्रययुगपत्प्रकाशख्यापनार्थमेतत् । छन्नतत्तद्विरोध इति । एतद्भेदकधर्मानुल्लेखपरम् । साधारणः साधारणाकारविशिष्ट इत्यर्थः । परं पश्चात्, केवलमिति वा[अर्थः]। एतावतैव संशयव्यवहार इति भावः । ईदृशस्य ज्ञानस्य संशयव्यवहारजनकत्वं न क्वचिद् दृष्टमित्यत्र लाघवं प्रतिबन्दिं चाभिप्रेत्याह येनेति । साधारणख्यातिपरामर्शोऽयम् । ईदृशबोधेन संशयरूप-

496— व्यञ्जक इति । उक्तफलितं विभागं दर्शयति—तदिहेति । तत् = तस्मात् विरुद्धाकारद्वयभानस्य अन्योन्यप्रतिक्षेपकत्वात् डोलासाम्यप्रतिपादनात् संशयाभिलापस्यवाशब्दाच्च अधिकम(?) सिद्धेरित्यर्थः । स्थाणुपुरुषौ तु स्मर्येते इति । क्रमेणेति शेषः । अत्र पुरोवर्तिमानं, स्थाणुपुरुषभानं चेति पूर्वत्र, उत्तरत्र च अगृहीतक्रमयोरनुभवस्मरणयोरिति कोटिद्वयविषयमेकं स्मरणमिति प्रतीयते, तथापि धीक्रमे इति बुद्धिक्रम इति बुद्धिक्रमस्य श्लोकस्वरसतः प्रतीतेः, व्याख्याने च धीक्रमं साधयतीति बुद्धिक्रमाभिधानाच्च कोटिद्वयविषयं स्मरणद्वयं कोटिद्वयस्मृतित्वसाम्यादेकीकृत्य निर्दिष्टमिति बोद्धव्यम् । एवञ्च, 'धर्मिग्रहणं, कोटिद्वयस्फुरणद्वयं च संशयः' इत्युक्तं भवति । यदा तु एकवचनस्य व्यक्त्यैक्यविषयत्वम्, तदा धीक्रमशब्द एकया स्मृत्या क्रमेण कोटिद्वयोल्लेखाभिप्रायो वर्णनीयः । पूर्वं धर्मिग्रहणस्य, कोटिद्वयस्मरणस्य च क्रमाभिधानात् निगमनग्रन्थे समसमयत्वोक्तिः कथं घटते? इत्याशङ्कायामाह—समसमयमितीति। समसमयशब्दस्वारस्यानुरोधार्थं, संशयस्य एकज्ञानत्वप्रसिद्ध्यनुरोधार्थं च 'तस्मात्' इत्यादिकं अन्यथा व्याचष्टे—अथवा पुरोवर्त्यनुभवजनितेति । अस्मिन् व्याख्याने 'तस्मात्' इत्येतत् अवधिपरम्, न हेतुपरम् । परं इत्येतच्च पश्चात्कालपरम् । पूर्वव्याख्याने परं केवलमित्यर्थः । एतदभिप्रायेण—'परम् = पश्चात्, केवलमिति वाऽर्थः' इति वक्ष्यति । एवं कोटिद्वयस्मरणं साधारणाकारविशिष्टवस्तुदर्शनं च भेदाग्रहसहितं संशय इति कश्चित् पक्षः । समानधर्मविशिष्टवस्तुदर्शन-कोटिद्वयस्मरणानन्तरधर्मिग्रहणजनितसंस्कारेण कोटिद्वयस्मृतिहेतुसंस्काराभ्यां च सम्भूय जनितं त्रितयविषयं स्मरणं भेदाग्रहसहितं संशय इति पक्षान्तरं च दर्शितम् । नच द्वितीयपक्षे ज्ञानान्तराङ्गीकारात् गौरवं संस्काराणाम्, सम्भूय स्मृतिजनकत्वस्य लोकदृष्टतया अदृष्टकल्पनाभावात्; अन्यस्य अन्यथा भानं तु अत्यन्तापरिदृष्टं कल्प्यत इति तत्रैव गौरवमिति भावः।

497— अस्थाणुत्वायोगादित्यर्थः। निरन्तरभानेति। अव्यवहितत्वे एकस्मिन् क्षणे उभयोः समसमयत्वमिति भावः । ननु कोट्योरिह मिथोविरोधस्यापि ग्राह्यतया ख्याततत्तद्विरोध इति वक्तव्ये छन्नतत्तद्विरोध इति कथमित्यत्राह छन्नतत्तद्विरोध इत्येतदिति । भेदकेति । विरोध इत्यस्य अर्थविशेषणत्वात् धर्मिणः स्थाणुना पुरुषेण च विरोधो नोल्लिख्यत इत्यर्थः। न तु स्थाणुत्वपुरुषत्वयोर्विरोधो नोल्लिख्यते । तथा च भेदाग्रहरूपकारणसंनिधानमुक्तं भवतीति भावः । प्रकारयोर्विरोधस्तु विशेषस्मृतीत्यत्र ज्ञापितप्रायः; विरुद्धधर्मद्वयस्मृतीत्यर्थात् । एतेन वाकारस्य स्थाणुत्वविरुद्धपुरुषत्वेति नार्थः। तथा सति स्थाणु-त्वविरुद्धपुरुषत्ववान् (पुरुषत्वविरुद्धस्थाणुत्ववान्) इत्येतत्समानार्थकत्वप्रसंगात् । किंतु अन्यतरभेदवत्त्वं धर्मिणि वाकारवेद्यम् एवमपि तत्तद्भेदाग्रहस्य न भंगः । परमित्यस्य पश्चादित्यर्थे तस्मात् परमिति श्लोकेऽन्वयः। येनेत्यस्यासाधारणार्थपरत्वे तस्य बुद्धिजनकत्वक्लेशादाह साधारणख्यातीति । परामर्शः = परामर्शकः । श्लोके ख्यातपदस्यापि स्वरसात् साधारणधर्मिख्यातं येनेति

ज्ञानोत्पत्तिरप्यन्यत्र न दृष्टा, व्यवहारविशेषस्तु तद्विषयतत्कारणेनैव सिध्येदिति भाव ।

श्लो — ऊहानध्यवसायौ च परोक्तौ संशयात्मकौ । तदन्यत्वेऽपि निर्वाहः समानन्यायतः स्थितः ॥

इति संशययाथार्थ्यप्रकारः ॥ १५ ॥

(241) दुस्साधा बाधधीभ्यां सदसदितरता कुत्रचित्, व्याहतत्वात् ;
सत्त्वासत्त्वं च ताभ्यां कथमिव न भवेत् ; व्याहतेश्चेत्, समं तत् ।
दृष्टत्वाद्वा विशेषः ; क्वचिदपि न हि नस्सर्वरूपेण सत्त्वं
नासत्ता चानुपाधिः ; न च विमतिरिह ब्रह्मतुच्छातिरेके ॥ १६ ॥

---

ऊ — समानन्यायतः स्थित इति । परोक्तसंशयसामग्र्या संशयकार्यसिद्धिवत् तदभ्युपगतोभादि(तोहादि ?) सामग्र्यैव तत्तत्कार्यसिद्धिरित्यर्थ ॥ १५ ॥

श्री — सुवचमिति भाव । अवतरणवाक्ये विशय इति प्रतीकाग्रहणात् न तत्पदमुत्तरान्वयि। ननु न्यायसूत्रे ऊहस्तर्क इत्यत्र न्यायभाष्ये इदमेवमेव स्यादित्यूहस्तर्क इति संभावनारूप ऊह उक्त । वैशेषिकप्रशस्तभाष्ये कोटिद्वयानुल्लेखि किंस्विदित्यनध्यवसायात्मकज्ञान संशयातिरिक्तमिष्टम् । तयोर्न यथार्थत्वमित्यत्राह ऊह इति । संशयात्मकौ = संशयविशेषावेव । उत्कटैकतरकोटिक संशयो हि संभावना । अनध्यायश्चानवधारण ज्ञातजातीय वाऽन्यद्वेति संशय एवेति भाव । एव साधारणधर्मज्ञानमुक्तम् । न्यायदर्शनोक्तान्याहशकारणानिष्टावपि विप्रतिपत्ति साधारणधर्मवत् क्वचित्संशये कारणत्वेन स्वीकृतेति तदुपलक्ष्यम् । एतत्पद्धत्या संशयलक्षणञ्चैवमुक्त न्यायपरिशुद्धौ, "सामान्यधर्मिस्फुरणे सति अप्रतिपन्नतद्विरोधप्रतिपन्नमिथोविरोधानेकविशेषस्फुरण संशय" इति ॥ १५ ॥

एतावत् कृतमन्यथाख्यातिनिरसन तामिच्छतामेकदेशिनामाशयानादरेण। अथ सर्वथैवानभिमताना ख्यातीना दूषणम् । तत्रानिर्वचनीयस्य ख्यातिर्निरस्यते । वस्तूनामनिर्वाच्यत्वे सिद्धे किल ख्यातेस्तन्नामकत्वम् । अनिर्वाच्यत्वमेवानिर्वाच्यमित्याह दु साधेति । सदसदन्यत्व सत्त्वासत्त्वरहितत्व ब्रह्मतुच्छभिन्नत्वमिति पक्षत्रय निरस्यत इह । कुत्रचित् = घटपटादौ कुत्रापि, 'इदमिद न भवति' इति बाध, 'इद भवति' इति धियश्चाऽऽदाय सदसदन्यता साधयितुमशक्या। 'घट पटो न' इति तत्र पटान्यत्व गृह्यते, न तु सामान्यत सदन्यत्वम् । 'घटो भवति' इति च असत्प्रतियोगिक भेदत्वरूपेण तद्वत्त्वरूपमसदन्यत्व न गृह्यते । किञ्च व्याहतत्वमेव सदन्यत्वासदन्यत्वयो । किञ्च बाधात् असत्त्व, भवतीति धिया सत्त्व चेति सत्त्वासत्त्वोभयमेव ताभ्या बाधधीभ्या कथ न भवेत् । भावाभावयोर्विरोधात् व्याहतिरिति चेत्, सदन्यत्वासदन्यत्वयोरपि विरोधात् वाचोर्व्याहतत्व समम् । प्रत्युत अस्ति, नास्तीति प्रतीतेर्दृष्टत्वात् । सत्त्वासत्त्वस्वीकारे युक्तत्वरूपविशेषोऽस्ति । व्याहत कथ प्रतीयत इति चेत्—अत्रोत्तर क्वचिदपीत्यारभ्य अनुपाधिरित्यन्तम् । अस्तीत्युच्यमान हि सत्त्व न कुत्रापि पदार्थ घटपटादौ सर्वरूपेण सत्त्वात्मक भवेत्। अत किञ्चिद्रूपेणैव सत्त्वसिद्धि । एवमसत्ताऽपि न सर्वरूपेण, 'घट पटो न भवति, कटो न भवति' इत्युच्येत, न तु घटोऽपि न भवतीति। उपाधि विशेषण निर्दिश्यैव तद्भेद, तत्त्वाभावश्च वक्तव्य इति अनुभूयमान तादृशमसत्त्वमिष्टम् । सदसदन्यत्वमिति प्रयोगे तु सत्सामान्यभिन्नत्वासत्सामान्यभिन्नत्वरूपार्थस्यैव सत्त्वसत्त्वात् तत् दुर्वचमेव। अथ सद्विशेषासद्विशेषभिन्नत्वमेव चेदुच्यते, सर्वपदार्थानुगत तत् किंरूपम्, घटभेदपटभेदादे सर्वाननुगतत्वात्। शिष्यते तु ब्रह्मतुच्छभिन्नत्वम्। जगतस्तदिष्यत एवेति। न परमतवैलक्षण्यम्॥

एतावत् कृतमन्यथाख्यातिनिरसन न तार्किकाक्षेप परिहर्तुमेव भाष्यकारसमतत्वाभिमत

श्लो—मयूख्यमतभेदौ द्वौ भ्रमे किंचित प्रदर्शितौ । अथ प्रतिमतस्थानां प्रलापः प्रतिरुध्यते ॥

तत्र तावत् कचोल्लुञ्छनमतोञ्छितामनिर्वचनीयख्यातिमधिक्षिपामः । तत्र यदाहुः—"सत्त्वे न भ्रान्तिबाधौ स्तां नासत्त्वे ख्यातिबाधने । सदसद्भ्यामनिर्वाच्या...."इत्यादि । **अनिर्वाच्यत्वं** नाम किं (1) वाच्यादन्यत्वम्, (2) वाच्यत्वराहित्यम्, (3) निरुपाख्यत्वम्, (4) सदसदन्यत्वम्, (5) सत्त्वासत्त्वरहितत्वम्, (6) ब्रह्मतुच्छविलक्षणत्वम्, (7) अन्यद्वा किञ्चित्? नाद्यः; सर्वलौकिकवैदिकव्यवहारविरोधात; स्ववचनादिविरोधाच्च । वाच्यानामेव मिथोऽन्यत्वेन तत्साधने सिद्धसाधनात् । सर्ववाच्यान्यत्वमप्येकैकस्मिन् विहत एव; न हि एकैकस्यापि वाच्यस्य सर्ववाच्यत्वम् ॥ सर्वेषां वाच्यान्योन्याभावानामाश्रयत्वमित्यप्ययुक्तम्; अनिर्वाच्यादिशब्दवाच्यस्य स्वान्योन्याभावाधारत्वायोगात् । अत एव न द्वितीयः; ब्रह्मणि तुच्छे च वाच्यत्वानभ्युपगमात्; तयोरपि प्रपञ्चतुल्यत्वस्वीकारप्रसक्तिश्च । न तृतीय, निरुपाख्यशब्दस्य यौगिकत्वे दत्तोत्तरत्वात् । निरुपाख्योपाख्यया च त्वयैव विगीतस्योपादानात् । रूढिमात्रस्य परिभाषाप्रायत्वेन विगीतसत्यत्वानुपरोधित्वात् । खरशृङ्गाद्यविशेषसाधने दृष्टविरोधात् । अपसिद्धान्ताच्च । एवं स्थिते चतुर्थादीन् दूषयति दुस्साधेति । **बाधधीभ्या**मित्युपलक्षणम् । नाशधीभ्यामित्यपि भाव्यम् । अयं भावः—(4) **सदसदन्यत्वं** तावत् सतामेव सदन्तरव्यावृत्त्या तुच्छव्यावृत्त्या च संभवति । सर्वेभ्यः सद्भ्योऽन्यत्वं च त्वया दुर्वचम्; अनेक

प्रौ—कचोल्लुञ्छनमतोञ्छितामिति । आर्हतमतार्जितामित्यर्थः। ते हि, 'स्यादवक्तव्यम्' इति जगतो अनिर्वचनीयत्वं वदन्ति । कथं वाच्यान्यत्वादिसाधने स्ववचनादिविरोधः इत्याशङ्क्य, यत्किञ्चिद्वाच्यान्यत्वसाधने सर्ववाच्यान्यत्वसाधने सिद्धसाधनात् सर्वेषामन्योन्याभावानामाश्रयत्वं वाच्यम्; तदा स्ववाग्विरोधादिकमित्यभिप्रेत्याह—वाच्यानामेवेत्यादि । यद्वा, न केवलं व्यवहारादिविरोधः, विकल्पमुखेन सिद्धसाधनत्वासम्भवौ च स्यातामिति दर्शयति ।

श्री—पक्षद्वयतारतम्यं शीलयितुमपि । अत एव, 'स्थापितं भाष्यकारैः' इत्यादिरीत्या तद्विवेचनमिति कारिकया दर्शयति मयूख्येति । तावत्=उपक्रमे । कचोल्लुञ्छनाः=जैनाः; तेभ्य उञ्छितं=भिक्षितम् । स्यादस्ति, स्यान्नास्ति, स्यादवक्तव्यमिति सप्तभंग्यां तैरुक्तत्वात् । परं सत्य एव वस्तुनि सर्वमस्तीति ते । एवम्भूतत्वं मिथ्यात्वोपयोगितयाऽऽदृतमेभिः। अनिर्वाच्येत्यादीति । अस्य तुरीयं पादमेतच्छ्लोकवृत्त्यन्तेऽनुवदिष्यति, 'अविद्या आविद्यैः सह भ्रमः' इति । निरित्युपसर्गस्यानतिप्रयोजनत्वात् तत्त्यागेन प्रयुंक्ते वाच्यादित्यादि। प्रथमकल्पे वाच्यरूपधर्म्यन्तरस्यावश्यकता, न तु द्वितीये सेति भेदः। निरुपाख्यत्वमित्यत्र उपाख्यापदं ज्ञानपरं वाक्परञ्च प्रयुज्यते, तथा "प्रख्योपाख्ये भवतः' इति । निरुपाख्यपदं गगनकुसुमाद्यत्यन्तासद्विषये परिभाषितमपि। इदमत्र न भवतीति अनुयोगिप्रतियोगिरूपोपाख्ये विना प्रयुज्यमाने शून्यस्वरूपे बौद्धसंमते अभावेऽपि । एवं वाच्यत्वं नास्ति, ज्ञेयत्वं नास्तीत्येवमुक्तौ उक्तिज्ञानयोरभावेऽपि वस्तु सत्यमस्तीति मन्येतेति मनसिकृत्य अद्वैतिभिरेव अनिर्वचनीयशब्दवाच्यार्थानादरेण सदसदन्यत्वादिरूपेण निर्वचनं कृतम् । तस्मात् मूले तावन्मात्रनिर्देशः। सर्ववाच्यान्यत्वमिति । वाच्यसमुदायभिन्नत्वमित्यर्थः । वाच्यत्वावच्छिन्नप्रतियोगिकभेदरूपार्थे एतद्दोषाभावादाह अनिर्वाच्यादीति । बाधः=प्रतीतनिषेधः अवस्तुविषयकः । नाशः=स्थितस्य ध्वंसः सत्प्रतियोगिकः ।

सदनभ्युपगमात् ॥ यद्यपि पारमार्थिकं सदेकमेव; तथाऽपि प्रातिभासिकानि व्यावहारिकाणि च बहूनि सन्तीति चेत्—किमतः ? अनिर्वचनीयत्वाभिमतस्य व्यावहारिकसतः ससादन्यत्वायोगेन सर्वसदन्योन्याभावकार्त्स्न्यासिद्धेः। व्यावहारिकराशिबहिर्भावाभ्युपगमे च पारमार्थिकप्रातिभासिकतुच्छ कोटिप्रवेशप्रसङ्गेन समतादिव्याघातात्। अत एव (5) सत्त्वासत्त्वरहितत्वमपि निरस्तम् ; व्यावहारिक सत्त्वराहित्यस्य सत्त्वमात्रराहित्यस्य वा साधने व्याघातात् । पारमार्थिकसत्त्वराहित्यविवक्षायां तु ब्रह्मतुच्छयोरपि तद्राहित्यात् तदविशेषप्रसङ्गः। न हि ब्रह्मण्यपि पारमार्थिकं सत्त्वं नाम धर्मस्त्वयेष्यते ॥ तदपि तत्र प्रपञ्चवत् कल्पितमिति चेत्, अन्यत्रापि तस्य कल्पितत्वादविशेष एव । ब्रह्मणि च तस्य कल्पितत्वे कथं ब्रह्म परमार्थसत् ? तथात्वे वा विमतमपि कथं न तथा ? (6) एवं ब्रह्मतुच्छान्यत्वमपि दुस्साधम् ; सत्यस्य तस्य असत्यवृत्तित्वव्याघातात् । तदसत्यत्वे तु सत्यासत्ययोः तुच्छातुच्छयोश्च तादात्म्यापत्त्या व्याघातादेव । ब्रह्मणि तुच्छे च ब्रह्मतुच्छान्यत्वमसत्यं विद्यत इत्यविशेषश्च ।

(7) यदप्यन्यत् किंचित्, तदपि विमीते सत्यत्वं सहेत, न वा। पूर्वत्र न विवादः। उत्तरत्र स्वयं सत्यमसत्यं वा ? आद्ये, ब्रह्मान्यत्वानन्यत्वोभयसमुच्चय-उभयप्रतिषेधविकल्पेनापसिद्धान्त-सिद्धसाधनत्व-व्याघातादयः। द्वितीये, स्वसाध्यमसत्यं वदतस्ते न किंचिदस्मैर्दूषणं देयम् ; तत्प्रदानफलस्य त्वदुक्त्यैव सिद्धत्वादिति। अथ प्रतिबन्द्यभिप्रायेण विपरिवर्त्य प्रसञ्जयति सत्त्वासत्त्वमिति। समाहारद्वन्द्वोऽयम्। चकारो जैनानुधावनप्रसक्तिं सूचयति। ख्यात्यन्यथानुपपत्त्या सत्त्वं बाधान्यथानुपपत्त्या(चा ?)सत्त्वं किं न कल्प्यत इति भावः। प्रतिक्षेपार्थं कथंशब्दं प्रश्नार्थं मन्यमानस्य प्रत्युक्तिं शङ्कते व्याहतेश्चेदिति। सत्त्वासत्त्वयोः सितासितत्वन्यायेन मिथो विरोधात् नैकत्रैकदा तयोस्संभव इति भावः। हार्दमुद्रिरति समं तदिति। तत् व्याहतिप्रयुक्तमभवनं त्वदुक्तेऽपि समानमित्यर्थः। अयं भावः—यदि सत्त्वमसत्त्वं च मिथो विरुद्धं मन्यसे, तदा तदभावयोरपि तथात्वं नान्तरीयकम्। यद्यपि परस्पराभावव्याप्य[ता]मात्ररूपाणां

[1]-सत्यासत्ययोस्तुच्छातुच्छयोश्च तादात्म्यापत्त्येति। ब्रह्मान्यत्वस्यासत्यत्वे ब्रह्मणोऽसत्यस्य जगतस्तादात्म्यापत्तिः। तुच्छान्यत्वस्यासत्यत्वे तुच्छस्य शशविषाणादेरतुच्छस्य जगतस्तादात्म्यापत्तिरिति विवेकः। ब्रह्मान्यत्वानन्यत्वेत्यादि। सत्यस्य ब्रह्मान्यत्वाङ्गीकारेऽपसिद्धान्तः। ब्रह्मानन्यत्वे सिद्धसाधनम्। उभयसमुच्चयोभयप्रतिषेधयोर्व्याघात इति विभागः। आदिशब्देन सत्यधर्माधारत्वेन जगतः सत्यत्वप्रसङ्गः, ब्रह्मानन्यस्य प्रपञ्चाश्रितत्वविरोधश्च गृह्यते। व्याहतमुभयात्मकत्वं कथं बाधधीभ्यां भवेदित्याशङ्क्य प्रतिबन्द्यभिप्रायेणेत्युक्तम्। प्रतिबन्दिप्रदर्शन एव तात्पर्यम्, न तत्साधन इति भावः। अनुष्णाशीतवत् समावेश इत्याशङ्क्याह यद्यपीति। अभावव्याप्यतामात्ररूपाणामिति मात्रचा अभावरूपताव्यावृत्तिः। परस्पराभावरूपाणां तु न सम्भवतीति भावः॥ १६ ॥

श्री—न हि ब्रह्मण्यपीति। तथा च निर्गुणब्रह्मसत्त्वे पारमार्थिकत्वभ्रान्तिः, प्रपञ्चसत्त्वे च व्यावहारिकत्वस्य बाध्यत्वस्य भ्रान्तिर्भवतामित्येव सिद्ध्येत्। तेन निर्गुणब्रह्माभावः प्रपञ्चपारमार्थिकत्वञ्च भवदिष्टमिति पर्यवस्येदिति। अन्तिमकल्पं निरस्यति यदप्यन्यदिति। कथमिव न भवेदिति मूलवाक्ये अन्यथेति पदाध्याहारे, "व्याहतेश्चेत् समं तत्" इति वाक्यस्य न प्रसक्तिः; सिद्धत्वात्। तद्बुध्या 'कथम्' इति जिज्ञासया प्रयोग इति मत्वा व्याहतेरिति पूर्वपक्षी आहेत्याशयमाह प्रतिक्षेपार्थ-

शीतोष्णनीलपीतादीनां मिथो विरोधेऽप्युभयाभावः क्वचिन्न विरुध्यते, दृष्टस्य दुरपह्नवत्वात्; तथाऽपि उष्णत्वानुष्णत्वनीलत्वानीलत्वादीनामिव परस्पराभावात्मनोस्सत्त्वासत्त्वयोरेकत्रोभयसमुच्चयवत् उभयव्यतिरेकोऽपि व्याहत एव ; यत्र सत्त्वं तत्र नासत्त्वं यथा ब्रह्मणि, यत्रासत्त्वं तत्र न सत्त्वं यथा कूर्मरोमणीतिवत्—यत्र सत्त्वाभावः तत्र नासत्त्वाभावः, यथा खपुष्पे ; यत्र नासत्त्वाभावः तत्र न सत्त्वाभावः, यथा ब्रह्मण्येवेति नियमस्य निर्व्याघातत्वादिति ॥ यदि समत्वं, तर्हि त्वत्पक्षाय कुतस्तुष्यसि मत्पक्षाय किमिति कुप्यसीत्यशिक्षितप्रतिबन्दिशक्तेरनुयोगे सत्त्वासत्त्वसमुच्चयपक्षस्य प्रत्यक्षाद्यानुगुण्यमाह **दृष्टत्वा-दिति** । अनयोः सहभावः क्व दृष्ट इत्यत्र सर्वत्रेत्यभिप्रायेणाह **क्वचिदपीति** । **सर्वरूपेण** सर्वप्रकारेण । कालतो देशतः स्वभावतश्च तत्रतत्र नियतं हि सत्त्वम् ; अन्यथा सर्वनित्यत्व-सर्वविभुत्व-सर्वाद्वैतवादानां प्रसङ्गात् । असत्त्वमपि तथैव ; अन्यथा सर्वशून्यत्वप्रसङ्गात् ॥ एतावत् सदसत्त्वमविरोधादङ्गीकुर्मः ; नान्यत् विरुद्धमिति चेत्, सदसद्व्यतिरेकमप्येवं यथादर्शनमविरुद्धमेवाङ्गीकुरुष्व; न तु विरुद्धम्। सदसद्व्यतिरेकवादः शास्त्रेषु दृश्यत इति चेत्, तथा सदसत्त्ववादोऽपि तत्रतत्र दृश्यत एव ॥ अन्यविषयोऽयमन्यपरश्चेति चेत्, त्वत्प्रदर्शितोऽपि तथैवेति ॥ **सदसद्विलक्षण**शब्देन ब्रह्मतुच्छान्यत्वविवक्षायां दूषणान्तरमाह **न चेति** । **इह** प्रपञ्चे । ब्रह्मतुच्छान्यत्वस्यास्मदभिमतत्वात् तत्साधने सिद्धसाध्यत्वप्रसक्तिरिति भावः । एतेन, "सत्त्वे न भ्रान्तिबाधौ स्तां नासत्त्वे ख्यातिबाधने । सदसद्भ्यामनिर्वाच्याविद्याऽऽविद्यैस्सह भ्रमः ॥" इति डिम्भजृम्भितं प्रत्यूढम् । **यदपि** तत्तन्निर्वचनखण्डनया सर्वमनिर्वाच्यमिति, तदपि, अनिर्वचनीयनिर्वचनखण्डनया सर्वं निर्वचनीयं भवेदिति प्रतिवक्तव्यम् ॥ निर्वचनीयत्वानिर्वचनीयत्वखण्डनयाऽपि प्रपञ्चस्यानिर्वचनीयत्वं सिध्येदिति चेत् ; ब्रह्मतुच्छयोरपि तत्खण्डनया किं तन्न सिध्येत् ? ॥ सिध्यतु ; न ततः प्रस्तुतबाध इति चेन्न ; तृतीयसौगतसीमातिलङ्घनेन तुर्यसौगतगङ्गाप्रवेशप्रसङ्गात् ।

श्लो—किंच निर्वचनीयत्वखण्डनोक्त्यनिरुक्तितः । विश्वनिर्वचनीयत्वमखण्डितमपेक्ष्यताम् ॥

एवं त्वदभिमतानिर्वचनीयासंभवात् न तत्ख्यातिसाधने यतितव्यम् ॥ **इत्यनिर्वचनीयख्यातिभङ्गः** ॥१६

**(२५२) रूप्यं जातं तदा चेत्, न रजतमिति धीरप्रमा स्यादमुष्मिन्**
**कार्यासामर्थ्यमात्रात् न तदिति कथनं कल्पतेऽतिप्रसक्त्यै ।**

---

र्थ- मिति । सदसद्व्यतिरेकवादः 'न सन्नासत्' इति सौवाले । खण्डनखण्डखाद्यग्रन्थमधिकृत्याह यदपि तत्तदिति। अद्वैतिनः प्रच्छन्नबौद्धत्वात् तदभिमानमनुसृत्य प्रश्नः 'सिध्यतु' इति। छादकं कवचं भिन्दन्नाह तृतीयेति । किञ्चेति । निर्वचनासंभवः एकैकस्मिन्नपि वस्तुनि दुर्वचदुर्ग्रहानन्तविशेषवत्त्वमेव साधयेत्; न तु गृहीतानामप्यभावः इक्षुक्षीरगुडादीनां माधुर्यस्येवेति भावः ॥ १६ ॥

भ्रान्तिविषयस्यानिर्वचनीयत्वं वारितम् । अथानिर्वचनीयस्योत्पत्तिं वारयति रूप्यमिति । नञो योजनाभेदात् प्रथमपादे द्वितीयपादे चार्थद्वयं ग्राह्यम् । अन्तिमवाक्ये च वक्ष्यत्यर्थत्रयम् । तदा=रजतबुद्धिप्राक्काले, रूप्यं=रजतं जातं चेत्, 'अमुष्मिन् न रजतम्' इति धीरेवाप्रमा यात्, रजतस्यैव जातत्वात्। रजतमिति धीरप्रमा न स्यादिति च। ननु न तत् रजतम्, जतकार्याङ्गुलीयकजननासामर्थ्यादिति चेत्–कार्यासामर्थ्यमात्रेण नेदं रजतमिति कथनम् सुवर्ण-

**शुक्तौ चैतत् तदात्वे कथमिव जनयेत् दुर्घटाऽनाद्यविद्या ?**
**नाक्षादिस्त्वर्थहेतुः ; न च रजतमतिः ; सा हि तेनैव जन्या ॥ १७ ॥**

यदपि शुक्तिप्रदेशनियताविद्याशकलशबलितात् ब्रह्मणः किमप्यनिर्वचनीयं रजतं तदानीमुत्पन्नम् इदं रजतमिति भातीति भावयन्ति, तत् दूषयति **रूप्यमिति**। यदि सामग्रीविशेषात् तत्रोत्पन्नं रजतजातीयं **रजतमिति** गृह्येत, तदाऽऽपणस्थरजतधीवत् अमुष्मिन्नपि रजतधीरप्रमा **न स्यात्**। अपि **चामुष्मिन्**, **नेदं रजतमिति** बाधकधीरप्रमा स्यात्। तथा च बाधायोगात् अबाधितस्य सत्यत्वसिद्धिः। रजते च रजतान्यत्वमुल्लिखन्ती बुद्धिरन्यथाख्यातिः स्यात्। अथ नेदं रजतमिति बुद्धिः शुक्तिविषयेत्युच्यते, तदा [अनया] पूर्वसिद्धस्य रजतस्य कथं बाधः ? न हि रजतसंसृष्टस्याऽऽपणादेररजतत्वबुद्ध्या रजतं बाध्येत। अन्यथा, तत्र रजते, नेयं शुक्तिरिति बुद्ध्या शुक्तिरेव किं न बाध्येत ? ननु नेदं रजतमिति बुद्धि अध्यासाधिष्ठानं ब्रह्म रजतान्यत्वेन गृह्णती तत्रत्य रजतात्मतां बाधताम् ॥ तर्हि अरजतस्याधिष्ठानस्य रजतात्मताबुद्धिरन्यथाख्यातिरेवेति मुधा तत्प्रद्वेषः। अधिष्ठानरजतयोः भेदबुद्ध्या च न रजतबाधः ; किंतु तदुभयनिरूपितं तादात्म्यमेव बाध्येत ॥ तथाऽप्यधिष्ठानस्य निषिध्यमानात्यन्ताभावाधिकरणत्वग्राहिणी निषेधबुद्धिः तत्रत्यं रजतत्वमेव बाधत इति चेत्—बाध्यतामधिष्ठाने तत्र रजतत्वम् ; किमायातं तत्रोत्पन्नस्य तन्निष्ठरजतत्वस्य ; निषेधाभावात् ? न हि रजतत्वं किंचिन्निष्ठात्यन्ताभावप्रतियोगित्वग्रहणेन सर्वत्र मिथ्या भवति। अपिचास्य रजतत्वस्य स्वाधिकरणतया प्रतिपन्ने निषेधात् बाधः, उत यत्किञ्चिन्निष्ठात्यन्ताभावबोधात् ? आद्ये, अन्यथाख्यातिरनिवार्या ; तदनधिकरणे तदधिकरणत्वबोधात्। द्वितीये, विगीतस्य को विशेषः, सर्वस्य सर्वनिष्ठत्वाभावात्।

---

*पूर्वी*– विगीतस्य को विशेष इति। शुक्तिरजतस्य सम्यग्रजतात् को विशेष इत्यर्थः। सर्वस्य सर्वनिष्ठत्वाभावादिति। सर्वेषां यत्किञ्चिन्निष्ठात्यन्ताभावबोधविषयत्वं सम्भवतीति भावः। अनिर्वच-

*पूर्वी*– कार्यानुपयोगिनां मेर्वादीनां सुवर्णत्वाद्यभावादिरूपातिप्रसंगहेतुः स्यात्। न कल्पते इत्यन्वये तु तदिति कथनं = रजतमिदमिति कथनं कार्यसामर्थ्यमात्रेणातिप्रसक्तत्वान्न्यायार्हं न भवतीत्यर्थः। अतः इदं रजतमिति बुद्धेरप्रमात्वात् रजतं नोत्पन्नमित्येव युक्तम्। कारणाभावादपि रजतोत्पत्तिर्नेत्याह शुक्ताविति। मिथ्यार्थहेतुतया त्वदभिमता अविद्या। सा चानादिः चेतनाश्रिता। सा पूर्वमनुत्पाद्य तदात्वे कथं जनयेदिति। तत्रोत्पन्नमिति। कल्पनामात्रमित्युक्त्वा व्यावहारिकरजतस्येवोत्पत्त्यंगीकारे इति भावः। प्रथमपादस्य द्वितीययोजनामाह अपि चेति। रजतान्यत्वमिति। 'लोहितः स्फटिकः' इति प्रत्यक्षविषये अनिर्वचनीयोत्पत्तिर्नेष्टा संनिकृष्टजपालौहित्येनैव निर्वाहात्। तथा शुक्तिरजते उत्पन्नत्वाभिमते रजतान्यत्वं नेदं रजतमिति गृह्यमाणं संनिकृष्टशुक्तिगतमेव भवितुमर्हतीति तत् अन्यत्वं न प्रातिभासिकम्। तथा च तत्रान्यथाख्यातिरेव। न च बाधज्ञाने इदम्पदेन शुक्तेरेव ग्रहणात् यथार्थख्यातिरेवेति वाच्यम् ; तर्हि इदं रजतमिति पूर्वप्रतीतावपि इदमिति शुक्तेरेव ग्रहणात् तस्याः तत्रोत्पन्नरजतैक्याभावेन तदैक्यभानमन्यथाख्यातिरेव स्यात्। अन्यथेति। स्वसंसृष्टे बाधबुद्धिमात्रेण स्वस्मिन्नपि बाधस्वीकारे इत्यर्थः। नन्विति प्रश्नः ; तर्हीत्यादिः समाधिः। अनिवार्येति। 'स्वाधिकरणतया प्रतिपन्ने' इत्युक्तत्वादिति भावः। विगीतस्य = विवादास्पदस्य, प्रतिभासिकस्य।

श्लो—जाते च सदसद्भावे सदसद्धीः क्रमात् सती । स्वच्छायामिव दुर्लङ्घा(ङ्घ्या)मन्यथाख्यातिमावहेत् ॥
अन्यथाख्यातिरस्तीति परबुद्धिं निषेधता । इष्टा तदन्यथाख्यातिरन्यथा किं निषिध्यते ॥

अथ स्यात्—उत्पन्नमेव रजतं रजतकार्यानर्हतया नेदं रजतमिति निषेध्यते, 'अगोप्ता राजा न राजा' इति न्यायादिति ; तत्राह कार्येति । अयमाशयः—न हि किंचिज्जातीयं कुतश्चित् वैगुण्यात् तज्जातीयकार्यानर्हत्वेनातज्जातीयम्, अनृतं वा भवति; अतिप्रसङ्गात्। अतस्तज्जातीयेऽप्यतत्तज्जातीयत्वोपचारमात्रमिति न बाधसद्भावः ॥ ननु उपचारोऽपि बाधाविनाभूतः॥ सत्यम्, न तत्रोपचर्यमाणस्वभावबाधः, किं तु उपचारशब्दमुख्यार्थबाधमात्रम् । तथाऽप्यरजतशब्दमुख्यार्थबाधे रजतं प्राणित्येवेति । एवमन्यत्र योज्यम्–कार्यासामर्थ्ये सत्यपि तदिति कथनं नातिप्रसक्त्यै कल्पत इति। ननु समर्थासमर्थस्वभावयोरैकजात्यासंभवात् अतज्जातीये कथं तदिति कथनम् ? मैवम् ; अवान्तरवैजात्यकल्पनेऽपि तज्जातीयत्वानपायात् । अन्यथा कथं तत्र रजतव्यवहारः ॥ तज्जातीयत्वव्यामोहादिति चेत्, आश्रितोऽसि तर्हि विपरीतख्यातिम् ॥ सारूप्यादिति चेन्न ; सरूपमिति बुद्धौ, सारूप्यतिरस्कारेण किंचिदिति बुद्धौ च उपादित्सायोगात् । सरूपे तद्बुद्धिद्वारा सारूप्यस्य प्रवर्तकत्वे दत्तोत्तरत्वात् । अतोऽवान्तरवैषम्येऽपि रजतजातीयमेवोत्पन्नं वक्तव्यम् । न च तस्य बाधः सुवचः ॥ अबाधे कथं पश्चात् नानुवर्तत इति चेत्, स्वाभ्युपगतात् प्रणाशादेवेति पश्य ॥ नाशोऽपि बाध एवेति चेन्न ; तस्य प्रतिपन्नोपाधौ निषेधरूपत्वाभावात् ॥ बाधाभावे नाशोऽपि न स्यादिति चेन्न ; "जातस्य हि ध्रुवो मृत्युः" इति न्यायेन जातत्वादेव नाशोपपत्तेः ; त्वया च अनिर्वचनीयं रजतं जातमित्येव समर्थनादिति ।

हेतुनिरूपणासंभवादप्यनिर्वचनीयरजतोत्पत्तिं दूषयति शुक्ताविति । कथमिव–न कथंचित् । अयं भावः—न तावत् अहेतुकमिदं रजतं जायेत, लोकायतमतप्रसङ्गात् । हेतुश्च न तत्स्वरूपम् । व्याघातात् ।

पु- नीयरजतोत्पत्तिकल्पनेऽपि अन्यथाख्यातेरवर्जनीयत्वात् व्यर्थं तत्कल्पनमित्यभिप्रायेणाह जाते चेति। सदसद्धीः 'इदं रजतम्' इति पूर्वं सिद्धम् (सद्धीः?), 'नेदं रजतम्' इति पश्चादसदिति धीश्चेत्यर्थः। मुखान्तरेणान्यथाख्यातेरवर्जनीयत्वमाह अन्यथाख्यातिरस्तीति। इष्टा तदन्यथाख्यातिरिति। अविद्यमानायामन्यथाख्यातौ विद्यमानत्वधीरूपा अन्यथाख्यातिविषया अन्यथाख्यातिः परेषामस्तीति त्वयेष्टेत्यर्थः । मुख्यार्थाभावे खलु उपचारः, अत उपचारे सति बाधोऽपि सिद्ध एवेति शंकते ननूपचार इति । 'सिंहो देवदत्तः' इत्याद्युपचारस्थलेषु सिंहत्वेनोपचर्यमाणस्य सिंहगुणशौर्यादियोग्य(ग?)स्य न बाधः ; अपितु उपचारवृत्तसिंहशब्दमुख्यार्थस्य सिंहत्वस्यैव । एवमिहापि रजतशब्दस्य मुख्यार्थस्य बाधो रजतत्वस्येति परिहरति सत्यमिति । एवं कार्याक्षमस्यापि तज्जातीयत्वबाधप्रदर्शनपरतया न तदिति कथनम् इत्यादिकं व्याख्याय, तज्जातीयत्वबाधाभावपरतयाऽपि तद्व्याचष्टे एवमन्यत्र योज्यमित्यादिना। तद्बुद्धिद्वारा = रजतबुद्धिद्वारा। दत्तोत्तरत्वात् = अन्यथाख्यात्यापत्तिरित्युक्तत्वात् इत्यर्थः॥

बो-सदसद्धीः, अस्तीति ज्ञानं बाधज्ञानञ्च। तस्यास्तत्रानिष्टसदसत्त्वविषयकत्वादिति भावः। स्वच्छायेति। न हि केनापि स्वच्छाया उल्लंघ्येति भावः। द्वितीयपादेऽपि द्वितीयां योजनामाह एवमपीति। विपरीतख्यातिम् = अन्यथाख्यातिम्। बाधाभावे इति। पूर्वं बाधज्ञानम्, ततो नाश इति तदाशयः। नाशस्थले सर्वत्र बाधस्य पूर्ववर्तित्वाभावात् नियतत्वभंगाच्च कारणत्वमित्याह जातस्य हीति। व्याघातादिति। स्वस्मात् स्वस्योत्पत्तिरित्युक्तौ पूर्ववर्तित्वपूर्ववृत्तित्वरूपधर्मसमावेशोऽपरश्च व्याघातः।

न च तत्प्रागभावमात्रम्, तस्यानादित्वेन प्रागपि तज्जनकत्वप्रसङ्गात्। अत एव न तत्सहकृतं तन्निरपेक्षं वा स्वरूपानाद्यविद्यामात्रम्। अविद्यासन्तानपक्षे च सन्तानिनः कस्यचित् रजनकारणत्वं किं दृष्टत्वादङ्गीक्रियते, कुतश्चित् कल्प्यते वा ? नाद्य, असिद्धेः। न द्वितीय., कारणसम्भवात् कार्यक्लृप्तिः, तया च तत्क्लृप्तिरिति मिथस्संश्रयात्। न ह्यत्र रजनमुत्पन्नमिति दृष्टम्; तद्बुद्धेरन्यथासिद्धतया न तयाऽपि तदुत्पत्तिक्लृप्तिः॥ "इदं सर्वमसृजत" इति श्रुत्यसंकोचात् इदङ्कारविषयस्य शुक्तिरजतस्यापि सृष्टिरवगम्यत इति चेन्न; प्रमाणसिद्धविषयत्वात् तत्र, "यदिदं किं च" इत्यनुवादस्य॥ ननु, "सत्यं चानृतं च" इत्यनन्तरमेवाप्रामाणिकमप्युपात्तमिति चेत् [न, ?] अनृतशब्दस्यात्र विकारित्वस्त्वन्तरपरत्वात्; अन्यथा, "सत्यमभवत्" इत्यादिना समन्वयवैघट्यादिति। **दुर्घटे**त्यनेन तत्स्वरूपासंभवं व्यञ्जयति। स्वयं दुर्घटाऽपि सती यदि दुर्निरूपं किञ्चित् कार्यं जनयेत्, अन्यथाख्यातिमपि तथाभूता किं न जनयेत् ? वरं च भ्रान्तिद्विविषयजननात् उभयसम्मताप्रमाणख्यातिमात्रजननमिति च भाव्यम्।

अनाद्यविद्यायास्तदातनकार्यजनकत्वं सहकारिवशात् स्यादित्यत्र सम्भावितान् सहकारिणो दूषयति **नाक्षादि**रिति। आदिशब्देन तद्दोषग्रहणम्। इन्द्रियाणि तावत् नार्थमुत्पादयन्ति, क्वचिदप्यदृष्टेः। तद्दोषाश्च तज्जन्यधीवैपरीत्यापादनेन चरितार्था नार्थविशेषजनकत्वेन कल्पनीया इति भाव.। अस्तु रजतबुद्धेरेव सहकारित्वमित्यत्राह **नचे**ति। किमत्र पूर्वानुभूतरजतस्मृतिरेव रजतजनकतया शङ्क्यते, उत स्वविषयेण सहाध्यस्यमाना, आहोस्वित् आपणस्थरजतबुद्धिवत् विषयजन्येति विकल्पे प्रथमं दूषयति **न चे**ति। न हि धीः स्वविषयसजातीयमुत्पादयन्ती क्वचित् दृष्टा। अन्वयव्यतिरेकमहिम्ना तु अन्यथाख्यातिजनकत्वमागोपालं(ल)प्रसिद्धमिति भाव। द्वितीयं दूषयति **से**ति। अत्र **तेने**ति सहयुक्ते तृतीया। सविषयवृत्त्यध्यासवादिना त्वया विषयेण सह जायमाना या बुद्धिरिष्यते, सा चेत् विषयं जनयेत्, विपरिवर्तं किं न स्यादिति भाव। तृतीयदूषणेऽप्येतदेव वाक्यमावर्तनीयम्। अत्र **तेने**ति कर्तरि तृतीया। तज्जन्यायास्तदुत्पादकत्वे हि अन्योन्याश्रय प्रसज्येत। अथ स्यात्—अस्ति सर्वसाक्षिभूतं किमपि चैतन्यम्, तदेव रजतधीरूपेणापि विवर्तते, तत्सहकृताविद्यया कालविशेषनियतरजतोत्पत्तिरिति। अत्राप्येतदेव पठितव्यम्। तत्र **ते न** इति पदद्वयम्। या साक्षित्वेन तवाभिमता संवित्, साऽनादित्वात् नैव जन्या, अत साऽपि तत्कालनियतरजतं जनयितुं नार्हति; सहकार्यन्तरस्य [च] अन्वयव्यतिरेकादिमत. कस्यचिददृष्टेरिति भाव.॥ **इति अनिर्वचनीयरजतोत्पत्तिभङ्गः॥ १७॥**

**(248) सत्त्वासत्त्वद्वयात्मपद्वयविरहचतुष्कोटिमुक्तं च तत्त्वं**
**व्याघाताद्यैर्विधूतं न यदि, तव कथं सप्तभङ्गीनिषेधः।**

---

७१– न द्वितीय इति। कारणकल्पना हि कार्योत्पत्तौ निश्चितायामिति। दुर्घटेति पदस्य प्रकृते मुख्यं कृत्यमाह स्वयमित्यादिना भाव्यमित्यन्तेन। अध्यस्यमानेति। वृत्तिरिति शेषः। स्वयमत्र स्मृत्यधिकज्ञानानंगीकारात्, तेन वृत्तेः कल्पितत्वोक्तेश्च अध्यस्यमानेत्युक्तम्। विपरिवर्तः= विषयादेव बुद्धेरुत्पत्तिः। सहयोगे तृतीया, कर्तरि तृतीयेति योजनाद्वयम्। ते इति पृथक्पदमिति तृतीययोजना॥

तुच्छालीकादिशब्दाः क्वचन सति परं क्वाप्यसत्त्वे प्रवृत्ताः ;
वन्ध्यापुत्रादिशब्दैर्भजति च समतां विष्पलीकादिवादः ॥ १८ ॥

संविद्व्यतिरिक्तं सर्वं सर्वत्राविद्यमानं [सत् प्रति]भातीति पक्षः प्रतिक्षिप्तः। अथ संविदपि तथेति पक्षः प्रतिक्षिप्यते-सत्त्वासत्त्वेति। यदाहुः, "न सन्नासन्न सदसत् न चाप्यनुभयात्मकम्। चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥" इति। अयमत्राभिसन्धिः-सच्चेत् किंचित्, न तत् बाध्येत। सर्वदा सर्वत्र सर्वथा च स्यात्। नान्यथा, स्वभावपरित्यागायोगात्। असच्चेत्, न ख्यायेत(जायेत)। न च कदाचित् कुत्रचित् कथंचिदपि स्यात्; तत एव। नापि क्वचित् सत्त्वासत्त्वसमुच्चयः; उक्तदूषणसमुच्चयात्; व्याघाताच्च। उभयशून्यत्वं च तत्समुच्चयसमानदूषणम्। अतः सदादिरूपकोटिचतुष्टयविनिर्मुक्तं सर्वं निरधिष्ठानमेव संवृतिशक्त्या भाति। इदमेव तत्त्वम्। अयमेव सर्वज्ञोपदेशसारः। शुश्रूषुबुद्धितारतम्यात् क्रमेण तद्बुद्ध्यारोहाय भिक्षुपादप्रसरणन्यायेन क्षणभङ्गादिनिबन्धनम्—इत्येवं वदता

---

व्यी— माध्यमिकसंमतामसत्ख्यातिं निराचष्टे सत्त्वेति। सत्त्वमसत्त्वं द्वयात्वं द्वयविरहश्चेति द्वन्द्वः एभिः चतुष्कोटिशब्दवाच्यैर्मुक्तम्=एतद्धर्मचतुष्टयरहितम्। द्वयपदेन सत्त्वासत्त्वग्रहणम्। द्वयमित्याख्या यस्य तदिति विग्रहः। द्वयस्य विरहः=अभावो द्वयविरहः। तथा च सद्विलक्षणमसद्विलक्षणं सदसद्विलक्षणं सदसद्विलक्षणविलक्षणञ्च शून्यापरपर्यायं तत्त्वं माध्यमिकसंमतं व्याघातादिदोषैः विधूतम्। व्याघातः=स्वोक्तिव्याघातः, स्वागमव्याघातश्च। आदिना स्वपक्षासत्यत्वस्य, स्वपक्षसाधकाभावस्य, स्वकृते निषेधे परत्वाभावादेश्च ग्रहणम्। तत्र परत्वाभावो नाम सदादिरूपं न भवतीति त्वत्कृतनिषेधमनूद्य, सदादि इदं न भवतीति न भवतीति तदुपरि निषेधसंभवात्। निषेधशास्त्रतया तस्य प्राबल्ये तन्मतस्यापायादिति। न यदि=व्याघातादेरप्यसत्यनया बाधकत्वाभावोक्तौ सप्तभंग्यादिपरमतनिषेधकत्वद्युक्तेरप्यसत्यनया तन्निषेधाभावप्रसंगात्। सप्तभंगी जैनसंमता। तस्या इह विशिष्य कथनं व्याहतत्वादित्वातिशयात्। नास्तिकमतदूषणस्यैवासंभवे आस्तिकमतदूषणानामसत्यत्वं सुतरामित्याशयः। तथा च न किमपि परमतं त्वया दूषयितुं शक्यमित्युक्तं भवति। स्वपक्षसाधकाभावस्तूक्त एव। नन्वस्मदीयशून्यवादास्वीकारे तुच्छशब्दालीकशब्दादयोऽर्थरहिता भवेयुरित्यत्राह तुच्छेति। तुच्छादिशब्दः क्वचित्=स्वाधिकरणेऽर्थे, सति परं=वर्तमानेऽर्थे एव, क्वापि=स्थलान्तरे यत् असत्त्वम्, तद्रूपार्थे प्रवृत्तः। तत्रायं विशेषः—तुच्छत्वम् अन्यत्र स्थितस्यात्राविद्यमानत्वमात्रम्। अलीकत्वम् स्वाधिकरणतया प्रतीते स्थले स्वस्यावर्तमानत्वमिति। न तु सर्वात्मना कस्यचिदभावः। परमित्यनेन अत्यन्तासति तुच्छपदप्रयोगव्यावृत्तिः; अत्यन्तासतः अत्यन्तासत्त्वादेवाप्रतीयमानतया प्रातिपदिकार्थत्वायोगात्। एतेन अलीकं द्विविधम्, विधिविषयो निषेधविषयश्च। आद्यं विवादास्पदं जगत्, द्वितीयं वन्ध्यापुत्रादि इत्यपि निरस्तमित्याशयेनाह वन्ध्येति। विष्पलीकादिशब्दोऽपि वन्ध्यापुत्रादितुल्य एव। विधिविषयत्वनिषेधविषयत्वे अप्युभयत्र तुल्ये इति यावत्। यद्वा अनन्वितार्थकत्वाविशेषात् उभयमपि तुल्यमेवेति। विष्पलीकादीति आदिपदेन संवृतिसत्यादिपदग्रहणम्। संवृतिशब्दस्य सत्यशब्दस्य चानन्वितार्थकत्वात्। अन्येन सहैकीकृत्य गृह्यमाणं हि संवृतिविषय इति संवृतिपदवाच्यम्। तदसत्यं भवति ॥

सर्वत्राविद्यमानम्=कुत्राप्यविद्यमानम्। चतुष्कोटीति, सत्त्वादिकोटिचतुष्टयेत्यर्थः। समानदूषणमिति, सद्भिन्नत्वासद्भिन्नत्वयोः क्रमेणासत्त्वसत्त्वरूपत्वादिति भावः। सर्वज्ञोपदेशेति। बुद्धोपदेशेत्यर्थः। भिक्षुपादप्रसरणेति। पादमात्रप्रसारणार्थं स्थलमपेक्षमाणो भिक्षुः पूर्णमेव गृहमाक्रम्य

स्वपक्ष-तत्प्रतीति-स्वागम-तर्क तन्मूलतत्त्वनिर्णय-जयादीनां सत्यत्वं प्रतिपाद्येत, न वा? पूर्वत्र सर्वमसत्यमिति स्वागमव्याघातः स्वोक्तिव्याघातश्च। उत्तरत्र किं तद्दूषणेन? अदूषितः तद्विसत्पक्षः सिध्येदिति चेन्न; साधकाभावे दूषणानुक्तिमात्रेण सिद्ध्यसंभवात्। संवृतिसत्यं स्वपक्षादिकमङ्गीकुर्म इति चेत्, एवमपि तथाभूत परपक्षादेरिव स्वपक्षादेरपि सिद्धिर्न स्यात्॥ सत्यपि केनचिदाकारेणाविशेषे, सर्वबाधकतयैवास्मत्पक्षस्य विशेषः सिध्यतीति चेत्, मिथो विरुद्धयोर्बलाबलवैषम्याभावे किं कस्य बाधकं बाध्यं वा॥ विधिनिषेधयोर्निषेधस्य प्रसक्तिसापेक्षत्वेन परत्वात् बलीयस्त्वमिति चेन्न; संवृतिदोषमूलत्वाविशेषे परत्वस्याकिञ्चित्करत्वात्। अन्यथा चतुष्कोटिविनिर्मुक्तं तत्त्वं नास्तीत्यसदुक्तस्य निषेधस्य बलीयस्त्वेन त्वन्मतोन्मूलनप्रसङ्गात्। असंजातविरोधिकालोत्पन्नतया वा पूर्ववृत्तविधिप्राबल्यं किं न स्यात्॥ निषेधसिद्धान्तस्यानादित्वात् न तत्पूर्वं किंचिदिति चेत्, विधिसिद्धान्तस्याप्यनाद्यनन्ततया ततः परत्वं कस्यचिन्न स्यात्। यत्तु—सतः सर्वप्रकारसत्त्वं स्यात्; अन्यथा स्वभावविरोधप्रसङ्गादिति—तदसत्; देशकालादिनियततयैव तद्वद्वस्तुस्वभावसिद्धेः, तस्य च स्वभावस्य कुतश्चिद्विरोधाभावात्। तथा अनभ्युपगमे स्वभावग्रहणस्यैवासंभवात् प्रसङ्गोऽपि निर्मूलः॥ एतेनासत्स्वभावस्य सर्वथैवासत्त्वं स्यादिति प्रसङ्गोऽपि प्रत्युक्तः। खरशृङ्गादौ तथा व्याप्तिर्दृष्टेति चेन्न; घटादिषु कालादिनियतासत्त्वदृष्ट्या व्याप्तेर्दुर्ग्रहत्वात्॥ मा भूत् असत्त्वमात्रं साध्यव्याप्तम्; खरशृङ्गादितुल्यं चासत्त्वं प्रसञ्जकमिति चेन्न; तस्य विगीतेष्वस्माभिरनभ्युपगमात्। प्रसञ्जकप्रसञ्जनीययोरविशेषप्रसङ्गाच्च। एतेन—यत् असत्, तत् सर्वथैवासत्; यथा खरशृङ्गम्; विगीतं च तथा; यत् पूर्वापरदेशकालयोरसत्, तत् मध्येऽप्यसत्; यथा खपुष्पम्; इदं च तथेत्याद्यनुमानमपि निकृत्तमूलम्।

ननु ह्रस्वत्वदीर्घत्वाणुत्वमहत्त्वान्यत्वानन्यत्वाद्यपेक्षिकधर्माणां स्वभावत्वे निरपेक्षत्वप्रसङ्गः, परसापेक्षत्वे च किंचित्प्रति स्वभावत्वं न स्यात्। न हि खपुष्पादे. शून्यत्वस्वभावः परसापेक्षः (परापेक्षः)स्यात्॥ मैवम्; यथादृष्टि सर्ववस्तूनां सापेक्षनिरपेक्षस्वभावभेदस्य दुरपह्नवत्वात्। यच्च,—"बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते। अतो निरभिलप्यास्ते निस्स्वभावाश्च देशिताः(दर्शिता")॥ इति—तदप्यसत् (तदपि न); तत्स्वभावानवधारणस्यापि स्वभावानवधारणात् विपरीतापत्तेः।

---

पृ- बुद्ध्या विविच्यमानानामिति। स्वभावानवधारणात् सत्त्वासत्त्वादिस्वभावस्य निर्धारयितुमशक्यत्वात् सर्वे स्व(निस्स्व?)भावाः अत एव दुरभिलप्या(लपा)श्च दर्शिता इत्यर्थः। स्वभावानवधारणस्यापि स्वभावानवधारणादिति। निस्स्वभावत्वदुरभिलपत्वसाधकतया उक्तस्वभावानिर्धारणादिति हेतुः बाधक(साधक?)त्वस्वभावस्य(वत्वे?) सस्वभावत्वस्वभिलपत्वयोरपि साधकः स्यात्। असाधकत्वस्वभावे तु

वी—स्वामिनमपसारयति। तद्वत् क्षणभंगमुखेन स्थिरवस्तुभंगोपदेशः क्षणरूपवस्तूनामपि क्रमेण भंगसंपिपादयिषया भिक्षुणैव बुद्धेन कृतः। अत्र ब्रह्मचारिरूपेण भिक्षुणा वामनेन महाबलिमुपेत्य कृतं पादप्रसारणमपि स्फोर्यते। साधकाभावे इति। अनेन व्याघाताद्येरित्यत्र आद्यपदाभिप्रेतो ज्ञापितः। अद्वैतिशंकापरिहारस्योद्छायया ऽऽह विधिनिषेधयोरित्यादिना।

नासदित्युक्तं निरस्यति एतेन यदसदिति। असत्त्वमात्रं = सर्वमसत्त्वम्। निकृत्तमूलमिति। अनियतासत्त्वदृष्ट्या व्याप्तेरग्रहादिति भावः। स्वभावो नावधार्यत इति। 'तदेव प्रीतये भूत्वा

तदेवमुक्तमनुक्तं च दूषणजातमभिप्रेत्योक्तम् व्याघातार्द्यैर्विधूतमिति ।

श्लो—'सर्वथाऽनुपपत्तेश्चेत्येवं सूचयता स्फुटम्। सर्वदोषाकरत्वं च पक्षस्यास्य प्रदर्शितम् ॥

अविद्यां विश्वजननीमर्धपञ्चमरूपिणीम् । निवृत्तिपञ्चमाकारां कल्पयन्तोऽप्यतः क्षताः (धः कृताः)॥

ननु व्याघातादयोऽप्यसत्याः ; सदसदादिविकल्पानुपपत्तिदुःस्थत्वात् । अतस्ते नास्मत्पक्षं दूषयिष्यन्तीत्यत आह **न यदी**ति । सप्तभङ्ग्युपादानं सर्वस्य पक्षान्तरस्योपलक्षणम् । व्याघातादिभिरेव हि सप्तभङ्ग्यादिकं त्वयाऽपि दूष्यते ; ते चेत् त्वत्पक्षे न दोषाः, त्वत्प्रतिपक्षेऽपि न दोषा भवेयुः । अतः कथं त्वया तन्निषेधः कार्य इति भावः । अथ ब्रूषे—**तुच्छादिशब्दाः** क्वचिद् व्युत्पन्नाः, न वा? नेति तावन्नाङ्गीकरोषि । व्युत्पन्नाश्चेत्, विगीते, अन्यत्र वा । विगीते चेत्, आगतोऽसि मध्यमागमानां मार्गम् । अन्यत्र चेत्, तद्दृष्टान्तेन विगीतेऽपि तुच्छत्वं साधयामः—यः शब्दार्थः, स तुच्छः ; यथा त्वदिष्टोऽन्यः; तथा च विगीतमिति ; तत्राह **तुच्छेति** । क्वचित्=अन्यत्र विद्यमाने हि पदार्थे केवलं किंचित्निष्ठाभावप्रतियोगित्वापेक्षया तुच्छशब्दः । अलीकमिथ्यानृतादिशब्दाश्च सामावाधिकरण्यस्तोपाधिकाः, न तु निरुपधिनिषेधमपेक्ष्य प्रवर्तन्ते ; यतः त्वत्पक्षावकाश इति भावः ।

---

पृ— निस्स्वभावस्वभावादेरपि असाधकः स्यात्। उभयथा च सर्वपदार्थानां सस्वभाव[त्व?] प्रसक्तेरित्यर्थः। अविद्यामिति। अर्धपञ्चमरूपिणीम्-अर्धं पञ्चमं येषां रूपाणां तानि अर्धपञ्चमरूपाणि तद्वतीमित्यर्थः। सत्त्वासत्त्वोभयात्मत्वसदसद्विलक्षणत्वरूपरूपचतुष्टयात् उपरि सदसद्विलक्षणविलक्षणत्वरूपपञ्चमाकारे माध्यमिकाभिमतेऽर्थे (?) न सद्विलक्षणविलक्षणत्वेनोपेतां भावरूपाविद्यां तन्निवृत्तिस्वभावरूपां (?) सदसद्विलक्षणविलक्षणत्वरूपपञ्चमाकारोपेतां कल्पयन्तोऽपि माध्यमिकैक-

टी— पुनर्दुःखाय जायते' इति न्यायेन सर्वं सर्वत्र संकीर्णमिति भावः । एवमुक्तमिति । "एवं वदता स्वपक्षतत्प्रतीति" इत्यारभ्योक्तमित्यर्थः। सर्वथाऽनुपपत्तेरिति । सर्वप्रकारानुपपत्तिसद्भावादित्यर्थः। प्रसंगात् मृषावाद्यभिमताविद्यानिरासोऽप्यत एवेत्याह अविद्यामिति। अत एव 'विध्यलीकादिवादः' इत्यन्तिमपदे आदिशब्देन व्यावहारिकसत्यमपि ग्राहयिष्यति । प्रसंगं दर्शयति अर्धपञ्चमरूपिणीमिति । प्रकृतं पञ्चमं रूपं चतुष्कोटिनिर्मुक्तत्वम्-तच्च सत्त्वाभाव-असत्त्वाभाव-सत्त्वविशिष्टासत्त्वाभाव—सद्विलक्षणत्वविशिष्टसद्विलक्षणत्वाभावरूपाभावचतुष्टयवत्त्वम् । तत्र प्रथमद्वयमविद्याया-मिष्टम्। तृतीयं तु प्रतियोग्यप्रसिद्ध्या नेष्टम्। चतुर्थं त्वनुयोग्यप्रसिद्धिः। ननु 'अर्धपञ्चमान् मासान्' इत्यत्र यथा सार्धान् चतुरो मासानित्यर्थं इष्यते, तथा सार्धानि चत्वारि रूपाणि अविद्यायां सन्तीति स्यात् । न चैवं मृषावादिभिरिष्यते इति चेन्न—व्यावहारिकसत्त्वस्वीकारात् सत्त्वमप्यस्ति, बाध्यत्वादसत्त्वमपि, अत एव सदसत्त्वमपि । सत्त्वादसद्विलक्षणत्वम्, असत्त्वाच्च सद्विलक्षणत्वमपीति निर्बाधसंभवात्। वस्तुतोऽर्धपञ्चमं रूपमित्येतावदेव विवक्षितमस्तु। निवृत्तिपञ्चमाकारामिति। दोषत्वानादित्वतिरोधायकत्वविक्षेपकत्वाख्याकारचतुष्टयेन सह मिथ्यात्वप्रयुक्तनिवृत्तिरूपाकारविशिष्टामित्यर्थः। स्वनिवृत्तावपि स्वस्थाने निवृत्तिरूपमिथ्यापदार्थस्थापनात् तदन्यथानुपपत्त्या दोषतदाश्रयकल्पकपुरुषाद्यापादने सर्वनिवृत्त्यसिद्धिरिति दूषणे तात्पर्येणैतदुक्तिः । एवंरूपामविद्यां कल्पयन्तोऽपि अतः=व्याघातादितः सर्वथाऽनुपपत्तेश्च क्षता इत्यर्थः। मध्यमागमानामिति । मध्यमागमनिष्ठत्वादेव माध्यमिक इत्युच्यते अपक्षपातेन सर्वशून्यवादी । तथाचेति । शब्दार्थभूतश्चेत्यर्थः। विधिपदं विधिविषयः ; निषेधपदं निषेधविषयः। एवमेव संवृतिसत्यपदेऽपि संवृतिपदं सत्यमिति विग्रहः स्यात्।

यदप्युच्यते-द्विविधमलीकं **विधिपदं** - **निषेधपदं** चेति; आद्यं विगीतम्; द्वितीयं वन्ध्यासुतादीति; एतद्दूषयति **वन्ध्यापुत्रेति**। अयं भावः-वन्ध्यासुतादेरपि न निषेधैकविषयत्वम्। "एष वन्ध्यासुतो याति शशशृङ्गधनुर्द्धरः। मृगतृष्णा(मरीचिका)म्भसि स्नातः खपुष्पकृतशेखरः॥" इत्यादिषु तदभावात्। विगीतस्यापि न विध्येकविषयत्वम्; आकारभेदैरपि निषेधैः (ध्यैः?) सर्वत्र निषेधस्य प्रसिद्धत्वात्, त्वया च सर्वप्रकारतः तन्निषेधात्। अत ईदृशो विभागो नोपपद्यत इति॥ एवमविशेषापादनात् किं त्वया लब्धमिति चेत्-एवं विशेषवर्णनाच्च किं त्वया लब्धम्। व्यवहारविशेषव्यवस्थापनमिति चेत्, तन्निषेधो मयाऽपि लभ्यत इति पश्य।

एवं वाऽभिप्रायः-विध्यलीकशब्दो न कंचिदर्थं बोधयति; अयोग्यपदसमभिव्याहाररूपत्वात् **निषेधालीकपदवदिति**। किंचिदिति हि **विधिशब्दो** बोधयेत्; न किंचिदिति **चालीकशब्दः**। कथं तयोः सामानाधिकरण्यसंभवः? यद्यपि, "अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति [हि]", तथाऽपि **वन्ध्यासुतशब्दार्थवत्** विध्यलीकशब्दार्थस्याप्यसिद्धेर्विवक्षितासिद्धिरिति। **आदिशब्देन** संवृतिसत्यव्यावहारिकसत्यादिप्रलापसंग्रहः।

संवृतिसत्यमिति तावत् किमुच्यते? किं संवृतिरेव सत्यम्, उत संवृतिसंबन्धि किंचित् सत्यमिति। नाद्यः, **संवृतिशब्दस्य** मिथ्यार्थपरत्वे **सत्यशब्दसामानाधिकरण्यायोगात्**। तदाहुः, "संवृतेर्न तु सत्यत्वं सत्यभेदः कुतो न्वयम् (न्वियम्?)। सत्या (सत्यं) चेत्, संवृतिः केयम्? मृषा चेत् सत्यता कुतः॥" इति। सत्यार्थपरत्वेऽपसिद्धान्तः; प्रपञ्चमिथ्यात्वप्रयोजकत्वायोगश्च। न द्वितीयः; सत्यस्य सतः कुतश्चित् संवृतिसंबन्धात् असत्यत्वासिद्धेः। न हि किंचिज्जातीयं तद्विजातीयसंबन्धात् स्वयमतज्जातीयं दृष्टम्। अथ वस्तुतोऽसत्यमेव असत्यत्वसंवृत्या सत्यत्वेन भासमानं संवृतिसत्यमित्युच्येत, तथासति विशेषाग्रहनिबन्धनेयमन्यथाख्यातिरेव कक्षीकृतेति न क्वचिदपि ख्यात्यन्तरकल्पनावकाशः।

एतेन संवृत्तिर्नाम भ्रान्तिरेव; तया मिथ्याभूतमेव सत्यत्वेन भासितं संवृतिसत्यमित्यपि निरस्तम्।

अथ शुक्तिकारजतमितिवत् संवृतिरूपाधिष्ठानाध्यस्तं सत्यं संवृतिसत्यमित्यभिमतम्; तथासति निरधिष्ठानभ्रमपरित्यागप्रसङ्गः॥ संवृतिमात्रे निरधिष्ठाने भ्रमं ब्रूम इति चेत्; तद्वदेव संभवे, किं प्रपञ्चस्य

---

*प्रा*— देशिनोऽपि (?) उक्तव्याघातादिदोषैर्निराकृता इत्यर्थः। 'वन्ध्यापुत्रादिशब्दैः' इत्यादिश्लोकशेषं परोक्तविध्यलीकनिषेधालीकरूपविभागपरतया व्याचष्टे यदप्युच्यत इत्यादिना। निषेधालीकस्य शब्दोपादानाभावात् विभागदूषणपरत्वमस्फुटमिति, विध्यलीकादिशब्दानां अर्थशून्यप्रतिपादनपरतया व्याचष्टे एवं वाऽभिप्राय इति। सत्यभेदः कुतो न्वय(न्विय[?])मिति। संवृतिशब्दस्यासत्यपरत्वात् संवृतिः सत्यस्य कुतो भेदो भवेत् = विशेषणं भवेत्; न कुतश्चिदित्यर्थः। भिद्यतेऽनेनेति भेदः विशेषणम्। कुतो न्वयमिति पाठे तु अयमर्थः—संवृतिसत्यत्वप्रातिभासिकसत्यत्वयोः मिथ्यात्वपरत्वाविशेषात्, 'संवृतिसत्यं, प्रातिभासिकसत्यम्' इति भेदः कुतः स्यादित्यर्थः। सत्यं चेत्, संवृतिः केयमिति। जगत् सत्यं चेत्, केयं संवृतिः?। किंशब्दः क्षेपे। सत्यस्य संवृतित्वमनुपपन्नमित्यर्थः। पूर्वार्धस्य पूर्वव्याख्यायां पूर्वार्धविवरणमुत्तरार्धमिति द्रष्टव्यम्। द्वितीयव्याख्यायां तु उक्तसंवादत्वेन दूषणान्तर-

*श्री*— अत्यन्तासतीति। विशिष्टरूपेणासतीत्यर्थः। विशकलितरूपेण सत्यत्वमक्षतम्। विशकलितानामेषामसंबन्धाग्रहादेवं व्यवहार इति सिद्धान्त्याशयः। आदिशब्दगृहीतं संवृतिसत्यं प्रकृतसंबन्धातिशयात् विस्तरेण दूषयति संवृतिसत्यमितीत्यादिना। संवृतिमात्रे निरधिष्ठानमिति।

सत्यासत्यादिविकल्पासहसंवृतिरूपाधिष्ठानकल्पनेन ? न च संवृतिरधिष्ठानं भवितुमर्हति, शुक्तिवत् केनचिदाकारेण तद्भानादृष्टेः । अत एव, संवृतिरपि संवृत्यन्तरेऽध्यस्तेति निरस्तम् ; संवृतिसन्ततेरसन्तता-नन्तसंवृतिवर्गस्य चानुपलम्भात् । सन्ततिपक्षे च पूर्वपूर्वसंवृतीनामुत्तरोत्तरसंवृतिकारणत्वमात्रं स्यात्, न तु अधिष्ठानत्वम्, असमानकालत्वात् । न हि नष्टे शुक्तिकादौ वर्तमानतया रजतमध्यस्यमानं दृष्टम् । असन्ततिपक्षे च सर्वसंवृतीनामनादित्वेन कल्पनासिद्धत्वायोगात् किमधिष्ठानेन । न ह्यकल्पितस्याऽऽपणस्थ-रजतादेरन्यदधिष्ठानमन्विष्यते ।

एवं तैमिरिककेशस्तबकादिन्यायेन संवृत्याख्यदोषाध्यस्तं संवृतिसत्यमित्यप्यसारम्; अतिदूरत्वात्यासन्नत्वसादृश्यतिमिरकाचपटलादिवत् संवृतिसंज्ञस्य दोषस्य कुतश्चित् प्रमाणादसिद्धेः ॥ अलीकप्रकाशा-न्यथानुपपत्त्या तत्कॢप्तिरिति चेत्, किं संवृतिरलीकमप्रकाशमाना प्रकाशयति, प्रकाशमाना वा ? आद्ये, अवगमाधीनसत्ताकत्वाभावात् स्वरूपसत्यत्वप्रसङ्गः । द्वितीये त्वसिद्धिः । सर्वलोकानुपलब्धिबाधितत्वात् । न हि त्वयाऽपि तादृशी संवृतिः काचिदुपलभ्यते ॥ अलीकप्रकाशान्यथानुपपत्तिप्रकाशिनाऽपि विश्वं प्रकाशयतीति चेन्न, अन्योन्याश्रयणात् । तत्प्रकाशात् अलीकप्रकाशस्तन्मूलकल्पनया च तत्प्रकाश इति । अपिचालीकप्रकाशस्य दोषोऽपेक्ष्यत इति कुतोऽवगतम् ॥ संप्रतिपन्नभ्रमेष्विति चेत्; तत्र तदधि-ष्ठान-दृष्टसारूप्य-दोषाश्रयादिकमपि कारणत्वेन दृष्टमिति तान्यपि किं न कल्प्यन्ते ॥ कल्प्यमानान्यपि तानि काल्पनिकान्येन सिध्येयुरिति चेत्, किमनया संवृत्यादिगणकल्पनया, तद्वदेव प्रपञ्चो दोषादिनिरपेक्षः कल्पित इत्यङ्गीकुरुष्व । तथाऽङ्गीकारे च संवृतिसत्यमिति रिक्तं वचः ।

एवं व्यावहारिकसत्यशब्दोऽपि न कंचित् विवक्षितसाधकः, कुतश्चिदपि समासादुपलभ्यमान सत्यत्वप्रतिषेधासिद्धेः । न च व्यावहारिकशब्दो मिथ्यापर्यायः । तथात्वे, सत्यपि सामानाधिकरण्ये सत्यशब्दान्वयदुर्घटत्वम्, वैयधिकरण्ये त्वदिष्टस्यासिद्धिः । न हि मिथ्यारजतादिसंबन्धि शुक्त्यादिकं मिथ्या भवति । अथ, 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति न्यायात् व्यवहारजन्यविकल्पकल्पितं व्यावहारि-कसत्यमिति मन्वीथाः, तदपि न, प्रत्यक्षानुमानवेद्यस्य प्रपञ्चस्य शब्दकल्पितत्वाभावात् । यत्र तु शश-शृङ्गादौ शब्दकल्पितत्वं कथंचिदभ्युपगम्येत, तत्रैव व्यावहारिकसत्यत्वं स्यात्, न तु प्रत्यक्षादिसिद्धेष्विति स्वेष्टविपरीतापत्तिः । असन्, प्रातीतिकसत्यस्य च व्यावहारिकसत्यत्वानभ्युपगमात् ।

अपिचेदमपारमार्थिकं सत्यं पारमार्थिकसत्यतया भातीत्यङ्गीकार्यम्, अन्यथा प्रवृत्त्यनुपपत्तेः । तथा चान्यथाख्यात्यनपनयात् किं ख्यात्यन्तरेणेति ॥ इत्यसत्ख्यातिभङ्गः ॥ १८ ॥

---

शुक्री— प्रतिपादकत्वेनोपात्तमिति द्रष्टव्यम् । कुतश्चिदपि समासादिति । समानाधिकरणसमासात् असमानाधिकरणसमासाच्चेत्यर्थः । उक्तमेवोपपादयति नच व्यावहारिकमित्यादिना ॥ ॥ १८ ॥

श्री—भ्रमान्तराणामधिष्ठानसापेक्षत्वेऽपि संवृतिविषयज्ञानरूपभ्रममात्रमधिष्ठाननिरपेक्षमित्यर्थः । मन्वीथा इति । यत्र शब्दव्यवहारः सत्यः, अर्थस्तु विशिष्टो न, तत्र हि व्यावहारिकसत्यशब्दः स्वरसः न तु व्यवहारमप्यपलपतो प्रकटप्रच्छन्नबौद्धमतयोरिति भावः । अन्यथाख्यातिर्न संभवतीति कृत्वा असत्ख्यातिमनिर्वचनीयख्यातिञ्च वदतो दूषयति अपिचेदमिति ॥ १८ ॥

(244) व्याघातातिप्रसङ्गौ प्रमितिपरिभवे मानतोऽमानतो वा ;
मानान्मानस्य सिद्धौ स्वतदितरपरित्राणमेकप्रवृत्त्या ।
साधीयानेष पन्थाः समयिभिरखिलैरर्थ्यतां सार्थनीत्या
नो चेत्, उच्छिन्नलोकव्यवहृतिनियमाः कामचाराः कथाः स्युः ॥ १९ ॥

ननु प्रमेयसिद्धिः प्रमाणादेष्टव्या ; प्रमाणं चासिद्धं न साधकं भवति । तत्सिद्धिश्च स्वतोऽन्यतो वा ? पूर्वत्राऽऽत्माश्रयः, उत्तरत्रानवस्था । अतः प्रमाणमात्रस्यैवासम्भवात् न किंचिदपि प्रमेयम्, न कश्चिदपि प्रमाता, न काचिदपि व्यवहृतिरिति । तत्राह व्याघातेति । अयं भावः प्रमाणस्य प्रतिषेधः प्रमाणतो वा स्यात्, अप्रमाणतो वा ।

पूर्वत्र व्याघातः ; प्रमाणस्य सर्वस्य प्रतिषेधात्, तदर्थं च कस्यचित् प्रमाणत्वेनोपादानात् ॥ ननु उपक्रम-अपच्छेद-पदाहवनीयादिन्यायेषु प्रमाणत एव प्रमाणबाधः त्वयेष्यते॥ सत्यम्, न प्रमाणमात्रं बाध्यते, येन व्याघातः स्यात् । किंतु स्वेतरत् किंचित् प्रमाणम् ॥ तथाऽपि प्रमाणस्य सतः कस्यचित् कथं बाध इति चेन्न, तत्प्रामाण्यमात्रस्यानपहारात् । प्रबलविरुद्धविशेषे हि प्रामाण्याभावः समर्थ्यते, इह पुनः कृत्स्नप्रमाणबाधाशक्यत्वमुच्यते ।

उत्तरत्र व्याघातातिप्रसङ्गौ । यदि ह्यप्रमाणतः प्रमाणं प्रतिषिध्येत, तत्प्रतिषेधोऽपि तत एव प्रति

---

श्री— एवं सत्त्वासत्त्वादिविकल्पेन प्रमेयासत्त्वं बौद्धोक्तं निरस्तम् । अथ प्रमाणाभावात् तदसत्त्वं वदन्तं प्रत्याह व्याघातेति । लोके ज्ञानेनैव विषयसिद्धिः । प्रमितिरूपज्ञानाभावात् प्रमेयाभावस्त्वयोच्यते । स प्रमित्यभावः प्रमाणतो वाऽन्यथा वा । मानतः प्रमितिपरिभवे क्रियमाणे= प्रमित्यभावे कथ्यमाने व्याघातः । मानसद्भावोक्तेर्मित्यभावोक्तेश्च विरुद्धत्वात् । मानं विनैव प्रमितिः परिभूयते चेत्, तत् परिभवनमपि प्रमाणं विनैव परिभूयेतेति स्यादतिप्रसंगः =त्वदनिष्टस्थलेऽपि दोषप्रसरः स्यात् । तर्हि मानादेव मानस्य सिद्धिरिति पक्षेऽनवस्थेति चेत्—प्रायश एकैकस्यापि मानान्तरेण सिद्धावपि किञ्चिन्मानं स्वेतरविषय इव स्वविषयेऽपि प्रवर्तते । अतो नानवस्था । यथा मानमस्तीति सामान्यवाक्यं मानान्तरमिव स्वमपि मानभूतं गृह्णाति । एवं ज्ञानेन परप्रकाशकेन स्वस्वरूपमपि स्वयं प्रकाश्यते । स्वपरनिर्वाहकत्वस्य बहुत्र दर्शनात् न तदपलापः शक्यः । सर्वथा मानादेव सिद्धिः सर्वस्येति पन्था अयं सर्वैः समयिभिः =सैद्धान्तिकैः अर्थनीयः = अपेक्षणीयः । ननु कथं सर्वैर्भिन्नमतैरेकेन पथा गमनमिति चेत्—सार्थनीत्या । यथा विभिन्नकार्यार्थं गच्छन् जनसार्थः एकेन शकटेन पोतेन वा गच्छति । तत्र शकटादिरक्षणांशे सर्वेषामैकमत्यम्, तद्वत् । नो चेत्—मानं विनापि प्रतिषेधे, लोकव्यवहारानुसरणविरहात् वादजल्पवितण्डारूपाः कथाः कामचाराः = यथेच्छपुरुषव्यापाराः भवन्त्यः तत्त्वसिद्धिविजयप्राप्तिहेतवो न भवेयुरिति ॥

प्रमाणमात्रस्य =सर्वप्रमाणस्य । स्वेतरत्= स्वभिन्नमेव, तत्रापि किञ्चिदेव । प्रामाण्यमात्रस्येति। बाध्यमानस्यापि अंशे प्रामाण्यस्वीकारान्न सर्वात्मना अप्रामाण्यम् । उपक्रमस्थले उत्तरवाक्यस्य तदनुकूलेऽर्थान्तरे प्रामाण्यस्वीकारः, अपच्छेदस्थले उत्तरेण पूर्वस्य बाधेऽपि प्रयोगान्तरे पूर्वसंबन्धिवाक्यस्य प्रामाण्यम् । पदाहवनीयस्थले उत्सर्गस्याऽऽहवनीयशास्त्रस्य पदहोमरूपापवादव्यतिरिक्तविषये प्रामाण्यमिति न कृत्स्नाप्रामाण्यमिति । उत्तरत्रेति । अप्रमाणतः प्रमाणप्रतिषेधपक्षे इत्यर्थः ।

षेध्यः स्यात्, त्वत्पक्षश्च सर्वः सर्वैः प्रतिपक्षैः ; रज्ज्वादिबुद्धिश्च सर्पादिभ्रमैः ॥ कथं तर्हि भूदलनबुद्ध्या रज्जुसर्पनिवृत्तिः ? इत्थम्—उत्तरधियः पूर्वविपरीताकारावगाहित्वेन पूर्वभ्रमानुवृत्तिप्रतिरोधात् । न हि भूदलनबुद्धिबाधिततया तत्र सर्पस्य मिथ्यात्वव्यवस्थापनम् ; तथा सति रज्जोरपि तत्प्रसङ्गात् ; किंतु प्रमाणभूतेनाधिष्ठानयाथात्म्यज्ञानेन बाधितत्वात् ; एवं प्रमाणस्याप्यप्रमाणबाधितत्वमात्रेण न मिथ्यात्वं स्यात् ।

श्लो—अप्रमाणतयाऽभीष्टात्र बाधस्तर्कतः क्वचित् । अनुग्राह्यप्रमाणानामभावे परिगृह्यते ॥
प्रसञ्जनीयधर्मस्य मानसिद्धो विपर्ययः । प्रमाणं भवति क्वापि प्रसञ्जकविपर्यये ॥

तदेवं प्रमाणतोऽप्रमाणतो वा प्रमितिपरिभवे व्याघातातिप्रसङ्गौ व्यवस्थिताविति ।

प्रमाणसिद्धिः स्वतोऽन्यतो वेति विकल्पे तु यथादर्शनमुभयथाऽपीति ब्रूमः । स्वपरनिर्वाहकसमाधिना त्वात्माश्रयानवस्थयोरपसारणम् । तदेवाह **मानादिति** । न हि वयमप्रमाणात् प्रमाणस्य [प्रमाणतया ?] अन्यथा वा सिद्धिं ब्रूमः ; किंतु प्रमाणतः । तत्र व्यक्तिभेदे तु प्रमाणान्तरात् प्रमाणसिद्धिः, यथा-एतत् दृष्टम्, इदं द्रक्ष्यामीति । यदा त्वीदृशी प्रमेति प्रमितिमात्रं गृह्यते, ईदृशं वा प्रमितिकरणमिति प्रमाकरणमात्रम्, तदा पुनः एकहेलया स्वस्वेतरलक्ष्यसमुदायव्यवस्थापनात् न अनवस्था, आत्माश्रयो वा ; शब्दशब्दादिन्यायात् ॥ तर्हि अप्रमाणादपि प्रमाणप्रतिक्षेपे स्वपरनिर्वाहकसमाधिना स्वात्माऽपि प्रतिक्षिप्यतामिति चेन्न ; अविरुद्धविषयत्वात् स्वपरनिर्वाहस्य । यथा,

श्लो— अहं सत्यं वदामीति स्वोक्तिः स्वपररक्षिणी । न कदाचिद्वदामीति वादस्तु स्वोक्तिबाधितः ॥
मानस्थापकमानस्य मानसंक्षोभकस्य च । गतिरेवमिति प्रेक्ष्य गहनां कुहनां त्यज ॥

---

आ॰— अतिप्रसङ्गं दर्शयति त्वत्पक्षश्चेत्यादिना । अप्रमाणेन प्रतिषेधो नानुपपन्नः, अप्रमाणेन तर्केण प्रमाबाधदर्शनादित्यत्राह अप्रमाणतयाऽभीष्टादिति । ननु प्रत्यक्षाद्यनुग्राह्यप्रमाणाभावस्थले केवलतर्कस्यैव बाधकत्वमिति शङ्कायाम्, तत्रापि प्रसञ्जनीयविपर्ययस्यानुग्राह्यप्रमाणत्वमित्याह प्रसञ्जनीयधर्मस्येति ।

भा॰— भूदलनबुद्धिबाधिततया = भूदलनभ्रान्त्या सर्पबुद्ध्यनुवृत्तिप्रतिरोधमात्रेण । नन्वप्रमाणस्य बाधकत्वमिष्टम् ; साध्यसाधकानुकूलतर्केण साध्याभावबुद्धिनिरोधात् । तर्कश्च व्याप्यारोपेण व्यापकारोपरूपत्वात् अप्रमैवेत्यत्राह अप्रमाणतयेति । तर्कस्य प्रमाणेतिकर्तव्यतारूपत्वात् स्वातन्त्र्येण न किञ्चिज्ज्ञाननिवर्तकत्वम् ; किं तु तर्को यस्येतिकर्तव्यता, तेन प्रमाणेनैव साध्याभावबुद्धिनिवर्तनम् । अप्रमाणतयाऽभिमतात् तर्कमात्रात् तदनुग्राह्यप्रमाणाभावेऽपि क्वचित् बाध इति न स्वीक्रियते । प्रसञ्जनीयस्य = धूमो न स्यादित्युक्तस्य धूमाभावस्य विपर्ययः = धूमवत्त्वं प्रत्यक्षादिसिद्धं प्रसञ्जकस्य विपर्यये अग्न्यभावाभावे अग्निमत्त्वे मानं भवति। क्वापि प्रसञ्जकविपर्यये = प्रकृतसाध्याभावरूपेऽन्यादृशे वेत्यर्थः । यथा अत्रैव, यदि वह्न्यभावेऽपि धूमः स्यात् धूमार्थिनो वह्नौ प्रवृत्तिर्न स्यादित्यत्र प्रसञ्जकविपर्ययो न साध्याभावरूप इति । प्रमाणस्यान्यथा वेति । प्रमाणस्य प्रमाणतया वा अप्रमाणतया वेत्यर्थः। तर्हीति। अप्रमाणात् प्रमाणप्रतिक्षेप इति पक्षे, परनिर्वाहकस्य स्वनिर्वाहकत्ववत् परप्रतिक्षेपनिर्वाहकस्य स्वप्रतिक्षेपनिर्वाहकत्वस्यापि स्वीकारात् सर्वाप्रामाण्यसिद्धिरिति शंका। यशेत्यस्य कारिकायां रक्षिणी, बाधित इत्यत्रान्वयः। गहनां कुहनां त्यज = निबिडां वञ्चनां विसृज। परस्वरूपप्रतिक्षेपकस्य स्वस्वरूपप्रतिक्षेपकत्वे परस्य प्रमाणस्य स्वरूपं यत् प्रामाण्यं तत्प्रतिक्षेपकमिदम् अप्रमाणस्य स्वस्य

सर्वैरपि सिद्धान्तिभिरियं गतिरनतिलङ्घनीयेत्यभिप्रायेणाह **साधीयानिति । समयिभिरखिलैः** प्रमाणस्थापकैरिव तद्दूषकैरपीति भावः । व्यावहारिकप्रमाणव्यवस्थाऽपि हि कचित्कचित् स्वपरनिर्वाहक-समाधिमनुरुध्यैव प्रवर्तेत । मिथ्यात्वादिसाधकेषु च त्वयाऽभ्युपगम्यते । तस्मात् **अर्थ्यताम्** इष्यता-मित्यर्थः। **सार्थनीत्या**--यथा, 'विपश्चित्प्रयुक्तः सर्वेशशब्दः सार्थः' इति वाक्ये तदन्तर्गतपदानामपि सार्थ-कत्वमविशेषेण संप्रधार्यते । यद्वा त्वद्व्यापारः सर्वोऽपि निरर्थकः सार्थको वा । आद्ये, किं स्वपक्षस्थापन परपक्षदूषणादिप्रयासेन ? द्वितीये, तत्सार्थत्वं कस्यचित् प्रमाणस्यार्थः स्यात् , न वा ? न चेत् , न तत्सिद्धिः। प्रमाणार्थश्चेत् , तत्प्रमाणाभ्युपगमः । **अथवा** तीर्थयात्रादिप्रवृत्तः सार्थः परस्परविरुद्धाभिप्रायवतां समवायेऽपि केनचिदाकारेणाभिप्रायसाम्यात् अन्योन्याविघातेन गन्तव्यं गच्छति ; तथा मिथो विरुद्धावष्टम्भेऽपि सिद्धान्तिभिः, 'प्रमाणात् प्रमेयसिद्धिः' इत्यादिकं लौकिकपरीक्षकसेतुमभिन्दानैः प्रस्थात-व्यमिति । एवमनभ्युपगमे बाधकमाह **नो चेदिति । कथाः** वादजल्पवितण्डारूपाः उच्छिन्नलोक-व्यवहारनियमतया **कामचाराः स्युः** । वक्त यावक्तव्य-कर्तव्याकर्तव्यविभागरहिततया न तत्त्वनिर्णयादि-फलपर्यन्ताः स्युरिति भाव । यद्वा **कथाः** साधनदूषणाद्युक्तयः सदसद्भावानादरेण स्वच्छन्दतः स्युरिति ॥ ननु सर्वक्षोभकस्य कथासंक्षोभप्रसङ्गेनापि किमनिष्टमापादितम् ॥ एवं वदतस्ते किञ्चिद-निष्टमस्ति वा न वा ? न चेत् , 'न सन्नासत्' इत्यादिना परपक्षो न दूष्यः । अस्ति चेत् , त्वद्वाक्य-मात्रेण स्वपक्षो दुष्ट इत्यनिष्टमापादितमेवेति ॥

**इति प्रमाणाभावोक्तिभंगः । निरधिष्ठाननिरुपाधिकासत्ख्यातिभङ्गः ॥ १९ ॥**

**(अथ योगाचारनिरासः)**

(246) **ज्ञानाकाराधिकं हि प्रथितमिदमिति श्वेतपीतादि ग्राह्यं,**
**तादात्म्ये तस्य साध्ये सहमतिनियमाद्यन्यथैवात्र सिद्धम् ।**

---

भा०—प्रमाणानुसारेण व्याचष्टे अथवेति । कथाशब्दस्य वादिषु प्रसिद्धिमनुरुध्य व्याचष्टे वाद-जल्पवितण्डेति । कामचारत्वे का हानिरित्यत्राह तत्त्वनिर्णयादीति । कामचारप्रसङ्गस्यानिष्टत्व-स्पष्टत्यर्थं कथाशब्दमन्यथा व्याचष्टे यद्वेति ॥ १९ ॥

श्री- यत् अप्रामाण्यम् , तत्प्रतिक्षेपकमेव स्यादिति अप्रामाण्यहानिरिति हृदयम्। सार्थनीत्येत्यस्यार्थत्रय-माह सार्थेति। सर्वशब्दसार्थत्वग्राहिशब्दनीत्येति, स्वाभिमतस्वार्थसार्थकव्यापारनीत्या =तत्त्वौत्ये-नेति,अनेकाभिप्रायभेदेऽप्येकीभूतसंघनीत्येति च॥ शंकते नन्विति। समाधत्ते एवं वदत इति ॥१९॥

माध्यमिकसंमतासत्ख्यातिनिरसनानन्तरं योगाचारसंमतामात्मख्यातिं निरस्यति ज्ञानेति । विंशमिममारभ्य सप्त श्लोकाः एतन्निरासकाः। ज्ञानमेवास्ति, न तु ज्ञेयमिति एतत्पक्षः। ज्ञान-स्यैवाऽऽत्मत्वाभ्युपगमात् ज्ञानख्यातिरेवाऽऽत्मख्यातिरित्युच्यते । यद्वा आत्मशब्दः स्वेत्यर्थकम्, स्वस्य ज्ञानस्यैव ख्यातिरित्यर्थः। ननु ज्ञानस्य ज्ञेयतत्तद्वस्तुतया भानात् कथं ज्ञानख्यातिरित्युच्यते ; न हि शुक्तिरजतज्ञानं शुक्तिख्यातिरित्युच्यतेति चेत्—ज्ञानाकारातिरिक्तबाह्याकारास्वीकारात् सर्वैख्यातिरपि ज्ञानख्यातिरेव। अत एव नेयमन्यथाख्यातिः। एवमसत्ख्यातिरित्यत्रापि भासमा-नानां धर्माणां धर्मिणां सर्वेषामप्यसत्त्वात् सा सर्वांशेऽप्यसत्ख्यातिरेवेति तत्तन्नामौचित्यं द्रष्टव्यम्। श्लोकस्यायमर्थः—इदमिति प्रथितं श्वेतपीतादिकं ग्राह्यं प्रथितं=ग्राह्यतया प्रतीतत्वात् योगा-

ग्राह्यात्मत्वान्मृषा स्यान्मतिरपि, यदि वा ग्राह्यमप्यस्तु तथ्यं
किंचान्योन्यं विरुद्धैर्युगपदवगतैर्धीरभिन्ना कथं स्यात् ॥ २० ॥

अथ नास्तिक्यमान्द्यात् संविदपलापे दुर्बलबुद्धीनां योगाचाराणामात्मख्यातिमपाकर्तुं प्रत्यक्षविरोधप्रतिपिपादयिषया बाह्यार्थसिद्धिं तावदाह ज्ञानाकारेति । ज्ञायत इदमिति वा, जानामीदमिति वा बोधे क्रियारूपाया बुद्धेः कर्मरूपतया प्रसिद्धं श्वेतपीतादिवस्तुजातं बुद्धितत्त्वात् बाह्यमेव भवितुमर्हति ; अन्यथा क्षणभेद-सन्ततिभेदयोरपि केनचित् ज्ञानेन गृहीतौ अगृहीतौ च क्षणभेदाद्यसिद्धिप्रसङ्गेन दत्तोत्तरत्वात् । ततश्च भेदमात्रापह्नवे त्वत्यन्तकुदृष्टिवादस्य स्वीकारः, भिद्यमानापह्नवे तु माध्यमिकमतावतार इति भावः । एतेन, "अविभागो हि बुद्ध्यात्मा विपर्यासितदर्शनैः । ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते" इति प्रलपितं प्रत्युक्तम् । श्वेतपीतादि बाह्यमिति वदतश्चायं भावः--बुद्धिबोध्ययोरभेदं ब्रुवता विरुद्धधर्माध्यासेन भेदः कश्चिदङ्गीकृतो न वा ? न चेत् दत्तमेवोत्तरम्, क्षणभेदाद्यसिद्धिप्रसङ्ग इति । अङ्गीकृतश्चेत्, श्वेतपीताद्यनेकाकारग्राहिण्येकत्र ज्ञाने कथं मिथोविरुद्धश्वेतपीतादितादात्म्यसंभव ॥ मिथो विरुद्धयोरेकबुद्धिविषयत्ववत् एकबुद्ध्याकारत्वमविरुद्धमिति चेन्न ; दर्शनादर्शनाभ्यां विशेषात् । एकत्व विरोध. एकदैकाश्रयत्वविरोधश्च श्वेतपीतादेर्दृष्टः; न त्वेकधीविषयत्वविरोधः। त्वया तु श्वेतपीतादेः बुद्ध्याकारत्वं वदता बुद्धयैक्यं बुद्धिधर्मत्वं चोच्यते । द्वितयमपि व्याघातविघटितम् । अतो बुद्ध्यतिरिक्तार्थस्य बुद्धिवत् अबाधितोपलब्धिसिद्धत्वात न तदभावः साध्य इति । सूत्रितं चैतत्, 'नाभाव उपलब्धेः' इति ।

ननु भेदोपलम्भमात्रात् न भेदसिद्धिः ; द्विचन्द्रादावपि प्रसङ्गात् ॥ बाधात् तत्र तथेति चेन्न ;

---

पृ— ग्राह्यग्राहकेति । ग्राहको ज्ञाता ।

श्री– चारोक्तरीत्या ज्ञानाकारात्मकं न भवति, किंतु तदधिकम्= ततोऽन्यदेव । ननु श्वेतपीतादिकं ज्ञानमेव ; सहोपलम्भनियमात् ; श्वेतमितिज्ञानमिति इतिशब्देनाभेदप्रतीतेश्चेति चेत्— अत्र तादात्म्ये= ज्ञानाभेदे साध्ये साधनभूतं सहमतिनियमादि अन्यथैव सिद्धम्= व्याप्तिं विनैव सिद्धम् ; अप्रयोजकमिति भावः । अन्यथैवेति एवकारेण साहित्यस्य द्वित्वाविनाभावात् भेदसाधकत्वमेवेत्युच्यते । श्वेत इति ज्ञानमित्येतावता तु नैक्यसिद्धिः, श्वेत इति पदमिति प्रयोगमात्रेण श्वेतरूपार्थतत्पदयोरप्यैक्याभावात्। एवम् आदिपदेन तत्संवेद्यत्वादित्यादिवक्ष्यमाणहेतुपरिग्रहः। ज्ञेयं ज्ञानाभिन्नं तत्संवेद्यत्वादिति । स्वयंप्रकाशत्वात् ज्ञानस्वरूपमेव दृष्टान्तः । इदमप्यन्यथासिद्धम्, भेदेऽपि संवेद्यत्वसंभवात् । दोषान्तरमाह ग्राह्येति । योगाचारेण ज्ञेयमसत्यं ज्ञानं सत्यमित्युच्यते । अभेदसाधने उभयं मिथ्या वा स्यात्, तथ्यं चेति । किं च विरुद्धैः= अन्तर्वर्तित्वबहिर्वर्तित्वस्थूलादिपरिमाणराहित्यतदभाव-स्वयंप्रकाशत्वास्वयंप्रकाशत्वादिषु भेदेषु दृश्यमानेषु धीः =ज्ञानं स्वगतैर्धर्मैः भेदकैरभिन्ना = भेदमप्रापिता एकीभूता कथं स्यात् । विरुद्धधर्माणां भेदकत्वानंगीकारे श्वेतपीतादिबाह्यानां मिथो भेदो न स्यात् । स्वमतिप्रतिवादिमत्योरप्यैक्यं स्यात् ॥

क्षणभेदेति । पूर्वक्षणादुत्तरक्षणस्य भेदः, घटक्षणसंतत्यपेक्षया पटक्षणसंततिभेदश्च कुतः । क्षणद्वयस्यैकेन ज्ञानेन ग्रहणे तदभिन्नाभिन्नस्य तदभिन्नत्वमिति नियमात् क्षणयोरैक्यापत्तिः । सर्वथैवाग्रहणे भेदापलाप एव। अविभाग इति। बुद्धिरूप आत्मा बुद्धिस्वरूपं वा अविभागः= भेदरहित एव विपर्यासितदर्शनैः= वायन्तरक्षोभितबुद्धिभिः वासनापरवशैर्वा ज्ञेयं ज्ञाता ज्ञानमिति भेदत्रयवानिव लक्ष्यत इति तन्मतोपन्यासः । अनुमानेनाभेदसाधकं द्वितीयपादमवतारयति नन्विति ।

अविशेषात् ॥ कथमविशेष । न हि प्रत्यक्षतो बोध्यबाध ; नेदमस्तीति सार्वत्रिकनिषेधाभावात् । अनुमानादिक तु न स्वोपजीव्यप्रत्यक्षप्रतिषेधक्षममिति चेन्न—ज्वालैक्यादिप्रत्यक्षस्यानुमानादिना बाधाभ्युपगमात् ॥ तत्र प्रत्यक्षस्याचिरनिर्वापितारोपित[प्र]दीपन्यायेनान्यथासिद्धिशङ्काप्रस्तनया दौर्बल्यमिति चेन्न ; इहापि प्रतिबिम्बभेदोपलब्धिन्यायेनान्यथासिद्धिसंभवात् । ततश्च ग्राह्यग्राहकयोरनुमानात् अभेदसिद्धिरित्यत्राह तादात्म्य इति । तस्य वेद्यतयैव सिद्धस्य पदार्थस्य विवितादात्म्ये सिषाधयिषिते अस्मिन् सहोपलम्भनियमादिलिङ्गमन्यथैव सिद्धमित्यर्थ । यद्यपि स्वयप्रकाशवादे वित्तिवेद्ययोः सहोपलम्भसिद्धः, तथाऽपि न तावता तयोर्मिथस्तादात्म्यसिद्धि ; भिन्नस्यापि वेद्यस्य स्वयप्रकाशसमकाले प्रकाशमानतया तेन सहोपलम्भोपपत्ते । नियमस्तु स्थिरपक्षे दुर्वच ; कालान्तरे पुरुषान्तरे चासहोपलम्भात् । अत, "सहोपलम्भनियमादभेदो नीलतद्धियोः" इति त्वप्रयोजकादप्रयोज्यव्यपदेश. ।

ननु, 'यत् यतो भिद्यते, न तत् तेन सहोपलभ्यते, यथा घटेन पट' इति व्यतिरेकशुद्ध्या व्याप्तिसिद्धौ कथमप्रयोजकत्वम् ? इत्थम्—व्यभिचारेण व्यतिरेकस्याशुद्धत्वात् । त्वत्पक्षे तावत् स्वसन्ततिपूर्वापरज्ञानानि सन्तत्यन्तरज्ञानानि च केनचित् ज्ञानान्तरेणोपलभ्यन्ते । अन्यथा कथ तानि समर्थयेरन् ? ततश्च ग्राह्यग्राहकयोस्तत्र तादात्म्ये सर्वसंविदद्वैतप्रसङ्ग । भेदे तु व्यभिचारसिद्धि ॥ यदि मन्यसे, सर्वज्ञानाना स्वेस्वे काले स्वेनैव प्रकाशनात् स्वग्राहकज्ञानान्तरेण सहोपलम्भनियमो नास्तीति, एवं सति नीलपीतादेरपि स्वग्राहकेणैकेन ज्ञानेन सहोपलम्भनियमो नास्ति , स्थिरपक्षे कालादिभेदेन पुरुषभेदेन च नीलादेरनियतानेकोपलम्भविषयत्वसिद्धे । न चैकस्य नीलस्यानेकग्रहणतादात्म्यसभव । त्वयाऽपि नेत्त् समन्यते ॥ प्रतिसंवेदन नीलभेदात् नोपलम्भानियम इति चेन्न , 'ज्ञानज्ञेयैक्यसिद्धौ प्रतिज्ञान नीलभेदः, तत्सिद्धौ च सहोपलम्भनियमात् तदैक्यसिद्धि ' इति चक्रकापत्ते ।

किंच सहभाव एव तावद् भेदसापेक्ष , तदुपलम्भनियम [तु] अभेदगन्धं न सहते । अतस्तेन कथं तादात्म्यसाधनम् ।

---

क्ष्ण—नेदमस्तीति सार्वत्रिकनिषेधाभावादिति । इहेदानीमिदं नास्तीति देशकालविशेषयोरेव निषेधः । न तु इद नास्तीत्यनवच्छिन्नतया सार्वत्रिको निषेध इत्यर्थः । ग्राह्यग्राहकयोरनुमानादभेदसिद्धिरिति । ज्ञानज्ञेययो सहोपलम्भ(?)भेदादितरभेदोऽनुमीयत इत्यर्थः । कालान्तरे ज्ञानस्यानुपलम्भात् स्वदृष्टस्य परैरुपलम्भे स्वज्ञानस्यानुपलम्भादित्यर्थः । न तत्तेन सहोपलभ्यत इति । नियमेनेति शेषः । स्वग्राहकज्ञानान्तरेण सहोपलम्भनियमो नास्तीति तदानीं ज्ञानान्तरस्याभावादिति भाव । क्षणिकपक्षे सहोपलम्भनियमसद्भावेऽपि अभेदेन व्याप्तिरित्याह न चेति ॥ २० ॥

श्री—स्वयप्रकाशवाद इति। अस्वयप्रकाशत्वे ज्ञेयस्योपलम्भः प्राक्, ज्ञानस्य तु पश्चादिति न सहोपलम्भः स्यादिति भाव । न चानुव्यवसायज्ञानेन ज्ञानग्रहणकाले ज्ञेयस्यापि तद्विशेषणतया ग्रहणात् सहोपलम्भोऽस्तीति वाच्यम्—ज्ञेयविषये तस्य प्रत्यक्षरूपोपलम्भत्वायोगात्। व्यवसायेन ज्ञानाग्रहणात् ज्ञेयं ज्ञानभिन्न ज्ञानं विना गृह्यमाणत्वादिति तत्पक्षे सत्प्रतिपक्षोपन्याससंभवाच्च। सहोपलम्भे नियमं दूषयति नियमस्त्विति । कालभेदेनानेकपुरुषीयानेकज्ञानविषयस्यैकस्य स्थिरस्य न किञ्चित्पुरुषीय ज्ञानेनापि सहोपलम्भनियम इति भाव. । सहशब्दार्थशोधनेन दूषयति किञ्च सहभाव एवेति ।

ज्ञानेनार्थस्य नियतस्सहोपलम्भश्चात्र किं ज्ञानार्थगोचरमेकं ज्ञानान्तरम्? उत स्वप्रकाशस्वगोचरज्ञानानतिरिक्तप्रकाशः? नाद्यः, ज्ञानोदयकाले ज्ञानार्थगोचरैकज्ञानान्तरादृष्टेः। अन्वयव्यतिरेकिविवक्षायां दृष्टान्ताभावाच्च। [अत एव नान्त्यः?]॥ अस्ति द्विचन्द्रदृष्टान्त इति चेन्न; अकल्पितस्य चन्द्रस्य कल्पितेन सहोपलम्भनियमाभावात्॥ अन्यतरस्य सहोपलम्भनियमो विवक्षित इति चेत्, हन्त! तर्हि तदुभयतादात्म्यं निदर्शयतस्ते कथमसौ नियमस्तस्यैवास्ति च नास्ति चेति घटेत? केवलव्यतिरेकिविवक्षायां [तु] अन्यत्र साध्यसद्भावात् आभासत्वम्। सिद्धो हि स्वेन सहोपलम्भाभावेऽपि सर्वबोधानां स्वस्मादभेदः। यद्यसौ न स्यात्, सर्वे बोधाः स्वयमेव न स्युरिति माध्यमिकमतप्रसङ्गः॥

ननु ग्राह्यस्य स्वग्रहणतादात्म्यमिह साध्यम्; तच्च नान्यत्र क्वचिदस्तीति केवलव्यतिरेकित्वोपपत्तिः स्यात्॥ मैवम्; सर्वज्ञानानां स्वग्रहणरूपत्वाभ्युपगमेन स्वग्रहणतादात्म्यस्यापि सिद्धत्वात्। व्यतिरेकश्चात्र दुर्वचः; यत् स्वग्रहणतादात्म्यरहितं, तत् सहोपलम्भनियमरहितमित्युदाहरणीयाभावात्। मन्यसे हि ग्रहणानामपि स्वग्रहणतादात्म्यम्।

आदिशब्देन संवेदनादिहेतुसंग्रहः। संवेदने तावत्—यत् येन संवेद्यते, तत् तदभिन्नमित्यन्वयव्याप्तिर्नास्ति, संविदन्तरसंवेदने व्यभिचारात्। तदनभ्युपगमेऽपि चानिष्टस्योक्तत्वात्॥ यत् यतो भिद्यते, न तत् तेन संवेद्यते; यथा(?) च घटेन पट,: यथा वा घटमात्रज्ञानेन पटः; संवेद्यते च नीलज्ञानेन नीलमिति व्यतिरेकव्याप्तिरस्तीति चेत्—न, अन्वयतो व्यभिचारे व्यतिरेकाव्यभिचारस्याकिंचित्करत्वात्। व्यतिरेकश्चात्र त्वया दुर्वचः, घटपटोदाहरणस्याऽऽश्रयविकलत्वात्॥ संविदात्मना पटादिरूपाश्रयभेदसिद्धिरिति चेत्; अस्त्वेवम्, तथाऽपि पूर्ववत् व्यभिचारो दुर्वारः; संविदन्तरस्य संविदन्तरेण व्यवस्थाप्यत्वस्थापनात्।

एतेन—भिन्नस्य ग्राह्यत्वेऽतिप्रसङ्गात्, संयोगसमवायैकार्थसमवायकारणत्वादीनामव्याप्त्यादिदुःस्थतया ग्राह्यलक्षणत्वायोगाच्च परिशेषात् तादात्म्यमेव ग्राह्यलक्षणमास्थेयमित्यपि निरस्तम्; ज्ञानान्तरेषु ज्ञानान्तरेण गृह्यमाणेषु स्वग्रहणतादात्म्यायोगादेव। किंच अतीतानागतग्राहिषु विज्ञानेषु यदि स्वग्राह्यतादात्म्यम्, तदा विज्ञानमेव स्वयमतीतमनागतं वा स्यात्; किं तदानीं तद्ग्राह्यं स्यात्? अथ

---

श्री— उपलम्भशब्दार्थशोधनेन दूषयितुमाह ज्ञानेनेति। अत्र =अनुमानप्रयोगे घटकः ज्ञानेनार्थस्य नियमः 'सहोपलम्भश्च ज्ञानेन' इति साहित्यप्रतियोगितया निर्दिष्टज्ञानादन्यो वा तदेव वेति विकल्पः। अत्र अन्त्यपक्षनिरासवाक्यादर्शनात् यथोचितं योजितम्। घटेतेति। अभेदे सति अन्यतरेणैव सहोपलम्भ इति नियमः कथमित्याशयः। अन्यत्रेति। पक्षभूतज्ञेयातिरिक्ते ज्ञानरूपे सपक्षे ज्ञानाभेदरूपसाध्यसत्वात् सपक्षव्यावृत्तत्वात् हेतुरसाधारणः स्यादित्यर्थः। तदेवोपपादयति सिद्धो हीति। सहोपलम्भाभावश्च स्वस्मिन् स्वसाहित्यायोगात्। ननु ग्राह्यस्येति। पूर्वं 'ननु यत् यतो भिद्यत' इत्यत्र ज्ञानज्ञेये न मिथोभिन्ने सहोपलम्भनियमादित्यनुमानं विवक्षितम्। एवं ज्ञेयं ज्ञानाभिन्नं सहोपलम्भनियमादित्यपि दृष्यम्। अत्र ज्ञेयं स्वग्राहकज्ञानाभिन्नमित्यनुमानविवक्षा। न न ज्ञानस्य स्वप्रकाशकज्ञानकर्मत्वं कथमिति शंक्यम्; ज्ञानज्ञेयतादात्म्यवादे ज्ञेयस्यापि तत्कर्मत्वायोगस्याविशिष्टत्वात्। ज्ञेयं ज्ञानात्मकम् संयोगसमवायादिरूपभेदसंबन्धाभावे सति संबन्धत्वादिति आदिपदग्राह्यं हेत्वन्तरं दूषयति एतेनेति। अथ तादात्म्यसाधने प्रतितर्कमाह किंचेति।

नातीतोऽनागतो वा कश्चिद्विषयः; किं तु वर्तमानज्ञानेऽतीतत्वानागतत्वकल्पनामात्रमिति मन्यसे ; तथासति अतीतानागतविज्ञानग्राहिणि विज्ञानान्तरेऽप्येवं स्यादित्येकक्षणपरिशेषो वा नित्यैकज्ञानपरिग्रहो वा स्यात । अपि च, **श्लो-**ग्राह्यग्रहणतादात्म्यं खरशृङ्गाद्यतद्ग्रहे । अस्ति चेत्, व्याहतिः; नो चेत् व्यभिचारः सुदुस्तरः॥

तादात्म्यं च ग्राह्यलक्षणं व्यवस्थापयता लक्ष्यस्य लक्षणव्यापकत्वमभिसन्धाय, किं यस्य येन तादात्म्यं, तस्य तेन ग्राह्यत्वमिति नियमो विवक्षित, उत लक्ष्यस्य लक्षणव्याप्तत्वमभिसन्धाय, यस्य येन ग्राह्यत्वं, तस्य तेन तादात्म्यमिति ? न प्रथमः, स्वेनाभिन्नस्य घटस्य ग्रहणाभावात् ॥ स्वसंवित्तादात्म्यात् तत्र स्वेन ग्रहणमिति चेन्न ; इतःपूर्वं संवित्संवेद्ययोः तादात्म्यासिद्धेः । न द्वितीयः ; संवेदनहेतुदूषणनयेन दत्तोत्तरत्वात् ।

किंच ग्राह्यस्य स्वग्रहणाभिन्नत्वनियमे खरशृङ्गशुक्तिरजतादेरपि तथात्वं प्रसज्येत । न चैतदनुमन्तव्यम् ; सत्यासत्ययोस्तादात्म्यायोगात् । योगे वा जैनवादविजयापातादिति । तत्र व्याघातशमनमिच्छतामन्यतरस्वभावपरित्यागप्रसङ्गमाह **ग्राह्यात्मत्वादिति** । मिथ्याभूतबोध्यतादात्म्यात् बुद्धेरपि मिथ्यात्वे माध्यमिकमनीषितसिद्धिः ; सत्यभूतबुद्धितादात्म्यात् बोध्यस्यापि सत्यत्वे खरशृङ्ग-कम्बुकलधौतादेरपि सत्यत्वापात इति भावः ।

उक्तहेतुत्रयस्य साधारणं श्वेतपीतादीत्यनेन पूर्वं सूचितं दूषणान्तरमाह **किंचेति** । अयं भावः--निर्विशेषवस्तुप्रकाशो नास्त्येवेति सिद्धे सर्वबुद्धीनां यत्किंचिदनेकग्राहित्वात्, अनेकेषां च मिथस्तादात्म्यायोगात् अनेकैस्तैरेकस्या बुद्धेरपि तादात्म्यमुपलम्भविरुद्धं न कथञ्चिदपि स्यादिति । एकैकस्य क्रमेणावगतौ बुद्धिभेदात् परिहारः स्यात् ; तन्निवृत्त्यै **युगपदि**त्युक्तम् ।

अथ मन्यसे—बुद्धिबोध्यतादात्म्यमुपदिशतो **बुद्धस्या**यमभिप्रायः—बुद्धिव्यतिरिक्तस्य बोध्यस्य मिथ्यात्वात् तदव्यतिरेकोपचार इति--यद्येवं बाह्यार्थमिथ्यात्वमिहाभिसंहितम्, तत्र सहोपलम्भनियमादयो न साधकाः । बुद्धोपदेशस्तु श्रद्धानेष्वेव शोभते ।

**श्लो—** स्थूलास्थूलादिकोटीनां बाधकैर्बाह्यनिह्नवः । सुन्दोपसुन्दन्यायेन बाधकानां हतेर्हि न ॥ अपि च कृत्स्नग्राह्यार्थापह्नवे अनुमानानां स्वोपजीव्यप्रत्यक्षविरोधादनुत्थानमेव ।

**श्लो—** बोध्यापह्नवयुक्तीनां निस्तारमनुपश्यता । बोद्धॄपह्नवयुक्तिश्च सुतरां सुतरां भवेत् ॥

न तावद् बुद्धिमात्रं ज्ञाताऽस्मर्थं, तद्धर्मतयैव तत्प्रतीतेः । तथा च **सूत्रम्**—"व्यतिरेको

---

**व्या—** प्रतितर्कान्तरमप्याह अपि चेति । तादात्म्यमिति । ग्राह्याणामनुगतं लक्षणं ग्रहणतादात्म्यमिति व्यवस्थापयतेत्यर्थः । संवेदनहेतुदूषणनयेनेति । संविदन्तरस्यापि संवेदनविषयत्वादिति भावः । उक्तहेतुत्रयस्येति । सहोपलम्भनियमः, संवेद्यत्वं, संबन्धान्तराभाव इति त्रयम् । तदव्यतिरेकोपचार इति । अत एवैतदनुयायिभिः तदनन्यत्वमारम्भणेति सूत्रे अनन्यत्वं व्यतिरेकेणाभावो मिथ्यात्वमित्युक्तम् । स्थूलास्थूलेति । स्थौल्यं खल्वन्यत्र कार्श्यमपेक्ष्य निरूप्यम्, कार्श्यञ्चैतदपेक्ष्येति अन्योन्याश्रयात् वस्त्वसिद्धिरित्याशयः । अण्वपेक्षया सर्वं स्थूलमेव । तारतम्यनियन्धनो गौणः कार्श्यव्यवहारस्तत्रेति सिद्धान्त्याशयः ।

एवं ज्ञेयापलापो निरस्तः। तैर्ग्राह्यग्राहकसंवित्तिभेदवानिवेति ग्राहकभूतज्ञातृज्ञानस्यापि विपर्यस्तत्वोक्त्या तद्दूषयति बोध्यापह्नवेत्यादिना । अत्र सूत्रग्रहणम् अनुभवस्याविचाल्यत्वस्थापनाय ।

गन्धवत् तथा च दर्शयति" इति। न च बुद्धावहंत्वकॢप्तिः बुद्धिरहमित्यवभासप्रसङ्गात्। नापि बुद्धेराश्रयतयाऽहमर्थकल्पना, निरधिष्ठानकल्पनाङ्गीकारात्॥ अथ निराश्रयाऽपि बुद्धिः साश्रयतया कल्प्यत इति मन्यसे, तथासति अन्यथाख्यातिः स्यात्। बाधे च सति एवं वक्तव्यम्; न चाश्रयबाधकं किंचिदबाधितमस्ति। बुद्ध्यन्यत्वादिकुतर्कैः तद्बाधे बुद्धिरपि भासमानत्वादिमाध्यमिककुतर्कैर्बाध्येत। तस्मात् ग्राह्यग्राहकापह्नवे गृहीतिमप्यपह्नोतव्या। तद्ग्रहे वा तयोरपि ग्रहणं स्यादेव। तदिदं, 'न भावोऽनुपलब्धेः' इति सूत्राभिप्रेतम्।

एवं दृग्दृश्यसंबन्धानुपपत्त्या दृश्यमिथ्यात्वमिति कुदृष्टिकल्पनाऽप्युन्मूलनीया। अत्र ह्यनुपपद्यमानसंबन्धोपपादकतया वा दृश्यमिथ्यात्वं कल्प्यते, उत सिद्धस्य संबन्धाभावस्य व्यापकतया। नाद्यः; दृश्यमिथ्यात्वे सुतरां संबन्धायोगात्। न द्वितीयः; दृश्यस्येव दृशोऽपि मिथ्यात्वकॢप्तिप्रसङ्गात्। न च मेरुमन्दरयोः संबन्धो नास्तीत्यन्यतरमिथ्यात्वमुभयमिथ्यात्वं वा कल्प्यते॥ असंबद्धयोः संबन्धित्वेन भानात् विशेष इति चेत्, तथासति तत्संबन्धस्यैव मिथ्यात्वं वाच्यम्; न तु तदुभयस्वरूपस्य॥ तदसंबद्ध(न्ध)स्य तेन वास्तवप्रकाश्यत्वायोगात् तत्प्रकाश्यत्वस्य काल्पनिकतया प्रकाश्यस्वरूपासिद्धिरिति चेत्, तर्हि काल्पनिकस्याप्यसंबद्धस्य कथं तत्प्रकाश्यत्वमिति चिन्तय॥ मायामाहात्म्यादिति चेत्, एवं सत्यस्यापि सामग्रयातिमाहात्म्यादिति यथालोकमवलोकय॥ किंचासंबद्धस्य वास्तवप्रकाश्यत्वं न घटत इति वदता संबद्धस्यैव वास्तवप्रकाश इति नियमः त्वया दृष्टः स्यात्; अन्यथा तद्व्यतिरेके तद्व्यतिरेकनियमनिर्देशायोगात्। यदि चासंबद्धस्य प्रकाशमानत्वमयुक्तं मन्यसे, तर्हि दुरपह्नवस्य प्रकाशमानत्वस्य सिद्ध्यै संबन्ध एव कश्चित् कल्पयितुं युक्तः। स तु, संप्रतिपन्नसंबन्धेष्वनन्तर्भूतश्चेत्, तदन्यः कश्चिदित्येवाङ्गीकार्यः॥ अथ तेन तस्य प्रकाशमानत्वमेव नास्तीति पक्षः, तदा कस्यानिर्वचनीयत्वादि कल्प्येत? अपिच दृग्दृश्ययोः संबन्धं प्रतिक्षिपता किं संबन्ध एव नास्तीत्यभिसंहितम्, उत क्वचित् सन्नप्यसौ प्रस्तुतयोर्नास्तीति? नाद्यः, दूष्यदूषणादिसंबन्धविलोपे स्वव्याघातादिदोषगणोन्मेषात्। न द्वितीयः। यथा संबन्धान्तरमन्तरेण कश्चिदसौ कस्यचित् सिद्धः, तथा दृग्दृश्यभावरूपः संबन्धोऽपीति (१) स्वीकर्तुमुचितः। यच्च सविषयदृश्यत्वयोगात् दृश्यवद् दृशोऽपि मिथ्यात्वमिष्यत एवेति— तदप्यसत्; साक्षिणोऽपि स्वदृश्यमिथ्यात्वेन मिथ्यात्वप्रसङ्गात्॥ अनादित्वात् तस्याकल्पिततया न मिथ्यात्वमिति चेन्न; अनादेर्भावरूपाज्ञानस्यापि तथात्वप्रसङ्गात्। अनादित्वं च तद्वदेव न कल्पितत्वविरोधि। यदि च साक्षिणो न कल्पितत्वं स्यात्, ब्रह्मस्वरूपवत् तस्यापि नित्यत्वप्रसङ्गः। न चैवं स्वीक्रियते, तद्विषयाविद्यास्वरूपस्यापि नित्यत्वप्रसङ्गेन तन्मूलजगन्निवर्तस्यापि नित्यानुवृत्तिप्रसङ्गादिति॥ इति आत्मख्यातिप्रक्रियाभङ्गः॥ २०॥

---

१)— अर्थात् 'कुदृष्टिकल्पनाऽप्युन्मूलनीया' इति उपरिकथनात् तत्राप्य पूर्णोऽन्वयः।

कल्पयितुं युक्त इति। अत्र एवातीन्द्रियसमवायकल्पना वैशेषिकाणाम्। संबन्ध एव नास्तीति। संबन्ध इति यत्कुमर्द किमपि नास्तीत्यर्थः॥ २०॥

(246) हन्त त्वय्यन्तपक्षे कणभुगभिमतो नावयव्यस्ति कश्चित् ;
संघातो नांशतोऽन्यः ; तदणुषु न भवेद् दृश्यतेत्यन्धचोद्यम् ।
संसर्गैर्विश्वमेतद् घटत इह यथादृष्टि(दृष्ट ?)दृश्याणुपक्षे
नादृष्टं कल्पयामः ; परिणतिभिरसौ दृश्यतादिः श्रुते स्यात् ॥२१ ॥

ननु बाह्यार्थ एव न संभवति, यत्प्रत्यक्षबलादात्मख्यातिभङ्गं मन्यसे। गुणानां तावत् द्रव्यासिद्धावसिद्धेः। द्रव्याणां च पृथिव्यादीनामवयवि-संघातादिविकल्पाासहत्वात्। ऐन्द्रियिकद्रव्याभावेऽतीन्द्रियस्य दूरनिरस्तत्वाच्चेत्यभिप्रायेण चोदयति हन्तेति । हर्षार्थोऽयं हन्तशब्दः; वाक्यारम्भार्थो वा। अवयवी तावत् सौगतैरिव

---

व्या— प्रत्यक्षसिद्धस्यापलापायोगात् आत्मख्यातिर्न युक्तेति तार्किकपक्षे शोभते, तैरवयविस्वीकारात् । न त्वय्यन्तपक्षे । एतन्मते, 'सर्वाग्रहणमवयव्यसिद्धेः' इति न्यायसूत्रोक्तं दूषणं निर्बाधमिति योगाचारशङ्कां परिहरति हन्तेति । कणभुजः= कणादस्य अभिमतः गौतमोपपादितः अवयवातिरिक्तोऽवयवी न कश्चिदेतन्मते। अथापि संघात इष्ट इति चेत्-संघातो नाम समुदायः। समुदायश्च समुदाय्यनतिरिक्तः। अतः अंशा अणव एवावयवी । अणुषु च दृश्यता न भवति । न च—संघातः संयोगः स चाणुतोऽन्य इति वाच्यम् ; अप्रत्यक्षाणामणूनां संयोगस्याप्यप्रत्यक्षत्वध्रौव्यादिति चोद्यम् । इदमन्धानां= त्वय्यन्तवादिमतमविदुषां चोद्यम्। परिहारप्रकारं त्रेधोपपादयति संसर्गैरिति । अदृश्या एवाणवः क्रमेण दृश्यत्रसरेणुद्वारा विश्वहेतव इति पक्षेऽपि संसर्गैः= अणुसंनिवेशविशेषरूपसंसर्गविशेषैः विश्वम् एतत् यथादृष्टि घटते =एवं दृश्यमानं भवति। अवयव्युद्भवपक्षे परं कथमप्रत्यक्षाणामणूनां प्रत्यक्षावयविजनकता । महत्त्वादिति चेत्, कथं महत्त्वमणुतः। अनेकद्रव्यवत्त्वादिति चेत्—तदापि पङ्क्तिरूपेण परमाणूनां संयोगे कार्याभावात् संनिवेशविशेषादिति वक्तव्यम्। एवञ्च तदधीनावयवि—तद्गतमहत्त्वद्वारा प्रत्यक्षमित्येतदपेक्षया अणुसंनिवेशविशेषस्यैव प्रत्यक्षकारणत्वमहिमेति यथादृष्टि मन्यताम्, दर्शनानुरोधेन कारणकल्पनात् लाघवात्। अदृश्याणुपक्षे एवम् । वस्तुतो दृश्याणुपक्ष एवास्माकमिति न त्वदुक्तदोषप्रसक्तिः ; अतीन्द्रियत्वादणूनामिति गौतमोक्तहेतोरेवासिद्धेः। वयं हि कुत्रापि नादृष्टं कल्पयामः= न तर्केण साधयामः। अतो नातीन्द्रियाः परमाणवः सन्ति । अणूनामुपादानत्वमित्यपि नास्ति । यद्यपि एकप्रकृतिमूलैव विश्वसृष्टिरित्यस्येष्टत्वात् अतीन्द्रियतया श्रुते त्रिगुणद्रव्ये उपादानोपादेयैक्यात् दृश्यतास्पृश्यतादिः कथमिति शङ्क्येत—असौ परिणतिवशादिति समाधिः यथा स्पर्शोत्पत्त्या स्पार्शनत्व-समतिघत्वे, तथा रूपोत्पत्त्या चाक्षुषत्वम् । स्थूलत्वादि च। यथादृष्टि तत्तद्वस्थापन्नस्य तत्तत्कार्यकरत्वमिति । वृत्तौ द्वितीयपक्षावतारिकायां नादृष्टमित्येव प्रतीकोद्धारात् दृश्याणुपक्षे इत्यग्रहणात् तत् पदं पूर्वान्वयि । तदा दृश्याणुपक्षे इत्येव सर्वसंमते पाठे स्वरसत एव दृश्यत्वस्वरसत्वात्, संसर्गैर्दृश्यत्वं घटते इति न वक्तव्यम्। अतः. 'त्रसरेण्ववयवाः' इति त्रसरेणुसंबन्ध्यवयवोपादनाच्च दृश्यातिरिक्ततदवयवग्रहणमिति ज्ञायते। अतः अदृश्याणुपक्षे इति पाठो युक्तः। परंतु दृश्याणुपक्षे इति पाठे परमतभंगोक्तरीत्या मूलार्थोऽन्यः सुवचः—अतीन्द्रियाणुपक्षे परमाणवः कार्त्स्न्येन वा अंशतो वा संसृज्यन्ते इति विकल्प्य दूषणसंभवेऽपि दृश्याणुपक्षे यथादृष्टि संसर्गसंभवात् विश्वं घटते =भवितुमर्हतीति। वृत्तौ तु, घटते =दृश्यं स्यादित्युक्तत्वाच्च सोऽर्थ इह । दृश्याणुपक्षे इत्यस्य शास्त्रदृश्याणुपक्षे इति वाऽर्थः स्यात्। तर्कमूलकस्त्व एवोक्तविकल्पादिदोषप्रसक्तेः। पूर्वदर्शितः परमतभंगार्थः श्लोके अन्तिमवाक्येऽपि कथञ्चित् विवक्ष्येतेत्यलम् । संघातादीति । आदिपदेनावयवसंयोगग्रहणम् ।

त्र्यन्तवादिभिरपि नाङ्गीक्रियते ; संघातस्तु [स्व]संघातिभ्यो नातिरिच्यते । तत्संबन्धश्च स्वरूपातिरिक्तो न संभवति । संभवेऽपि संघातिनामप्रत्यक्षत्वे तत्संघातस्य प्रत्यक्षत्वं न स्यात् । संघातिनां चान्ततः परमाणुपरिशेषात्, तेषां चाप्रत्यक्षत्वादिति भावः । दूषयति **इत्यन्धचोद्यमिति** । तत्त्वनिरीक्षणासामर्थ्यादन्धत्वोपचारः । परमतेन तावत् परिहारमाह **संसर्गैरिति** । त्रसरेण्ववयवा एव परमाणव इति पक्षे तत्संसर्गविशेषैरेव ह्रस्वत्व-दीर्घत्व-त्र्यश्र-चतुरश्र-वृत्त-वक्र-कुटिलत्वादिविचित्रसंनिवेशं विश्वमेतत् यथादर्शनं दृश्यं स्यादित्यर्थः । वयं तु न त्रसरेणुव्यतिरिक्तं तदवयवादि[कं] कल्पयामः, येन तदप्रत्यक्षतया विश्वाप्रत्यक्षत्वशङ्का स्यादित्यभिप्रायेणाह **नादृष्टमिति** । ननु श्रुतेऽपि सूक्ष्मद्रव्ये प्रत्यक्षत्वादिकं न मन्यसे, अतस्तदात्मकस्य प्रपञ्चस्य कथं प्रत्यक्षत्वादिकमित्यत्राह **परिणतिभिरिति** । **असाविति** दुरपह्नवत्वाभिप्रायम् । **आदि**शब्देन तत्तदिन्द्रियान्तरविषयलाभः, तत्तत्कार्यविशेषहेतुत्वादिकं च संगृह्यते ।

**श्लो**— रूपस्पर्शादिजननात् दृश्यत्वस्पृश्यतादयः । तन्नाशात् तदभावश्च युज्येत श्रुतिचक्षुषाम् ॥

**इति बाह्याप्रत्यक्षत्वयुक्तिभंगः ॥ २१ ॥**

**(247) आत्मख्यातौ मतीनां मिथ इतरतया संविदन्या न सिध्येत् ;**
**अन्योन्यार्थानभिज्ञाः कथमिव च धियो वादजल्पादि कुर्युः ।**
**मानाभासादिसीमा न कथमपि भवेद् ग्राह्यमिथ्यात्वसाम्यात्**
**सर्वं तत् संवृतेश्चेत्, न खलु (१) सदितरा साऽपि तत्तन्नियन्त्री ॥ २२ ॥**

---

**टी**— स्वरूपातिरिक्तो न संभवतीति । बौद्धपक्षे तत्तद्द्रव्यनैरन्तर्यमेव संयोगः । दूरत्वाभाव इति स्वरूपानतिरिक्तता । परमतेन = त्र्यन्तवादिना तार्किकमतान्वारोहेण । इति पक्षे इत्यन्तं अदृश्याणुपक्षे इति मूलपाठं ज्ञापयति । श्रुतेऽपि सूक्ष्मद्रव्ये इति प्रकृतिग्रहणम् । तदात्मकस्येति उपादानैक्यज्ञापनम् श्रुतिस्मृतिमूलकप्रमाणावित्यर्थोऽपि वा ॥ २१ ॥

आत्मख्यातावनुपपत्तीराह आत्मेति । आत्मख्यातिपक्षे मतीनां परस्परं भिन्नत्वावगाहिसंवेदनान्तरं न स्यात् । तत्सत्त्वे हि मतिभेदः । एवं मतीनामितरत्वं तदवगाहिज्ञानस्य च ततोऽन्यत्वमिष्टम् । तन्न स्यात् । एकसंविद्गृहीतार्थग्राहित्वप्रयुक्तः किल संविदन्तरस्य ततो भेदः । ग्राह्याभावे च कथं तत्सिद्धिः । *ग्राह्याभावादिति हेतुः पूरणीयः । ग्राह्यमिथ्यात्वसाम्यादिति तृतीयपादस्थं पदं साम्यपदं* विना प्रतिपादमर्थसिद्धं वा । प्रवृत्त्यनुपपत्तिमाह अन्योन्येति । अर्थस्यैवाभावात् वादिगृहीतार्थग्राहित्वं प्रतिवादिधियो नास्तीति किंविषये कलहः स्यात् । अर्थग्राहित्वस्वीकारेऽपि वादिधियस्तदर्थस्य प्रतिवादिधियस्तदर्थस्य चैक्यात् वादिप्रतिवादिधीसाम्यात् कथं कथा स्यात् । अन्यानुपपत्तिमाह मानेति । सीमा = व्यवस्था । मानममानम् अनुकूलतर्कस्तदाभासः इत्यादिव्यवस्था विषयमिथ्यात्वाविशेषान्न भवतीति । सर्वं तदिति । सांवृतिकसत्यत्वमादाय ज्ञानज्ञेययोः सांवृतिकभेदश्चोपेत्य सर्वनिर्वाह इति चेत्—तत्तन्नियन्त्री = तत्तद्व्यवस्थापकत्वेनाभिमता सा = संवृतिरपि न खलु तदितरा = संविदपेक्षया भिन्ना न हि । संविद्ग्राह्यत्वात् तस्याः ग्राह्यग्राहकयोरैक्याच्च संविद्रूपमेव तस्याः । तदधीनत्वं नाम संविदधीनत्वमेवेति संविदः सत्यत्वात् सर्वस्य प्रामाणिकत्वमेव स्यात् । यदि च संविद्ग्राह्यायाः संवृतेर्मिथ्यात्वेन तदैक्यात् संविदो मिथ्यात्वम्, तर्हि अपसिद्धान्तः आत्मख्यातिभंगश्च । शून्यवादप्रवेशश्च । सदितरेति पाठ एव लक्ष्यते । तदितरेति

एवं बाह्यख्यातेरसंभवं परिहृत्य स्वात्मगतख्यातेरनुपपत्तिमाह आत्मख्याताविति । ग्राह्यस्य ग्राहकतादात्म्ये संविदन्तरासिद्ध्या मतान्तरप्रसङ्गः प्राक् प्रदर्शितः । तत्र स्वप्रवृत्तिविरोधं चाह अन्योन्येति । वादिबुद्धिविषयादिकमनुल्लिखन्त्या प्रतिवादिबुद्ध्या कथं तत्प्रतिषेधव्यवहारः प्रवर्त्ये(र्ते)तेति भावः। उपलक्षणमेतत् शिष्याचार्यादिसंव्यवहाराणाम् । प्रसङ्गान्तरमाह मानाभासेति । आदिशब्देन तर्क-तदाभास-सद्वचनासद्वचनादिसंग्रहः । सर्वत्र समाधानं शङ्कते सर्वमिति । विकल्पाभिप्रायेण प्रतिक्षिपति(वक्ति) न खल्विति । अयं भावः—संवृतिः संवित्स्वरूपादन्या वा, अनन्या वा । आद्ये, कथं तदन्यस्यास्तेन ग्राह्यत्वम् ? अगृह्यमाणायाश्च सत्त्वरूपसत्यत्वाभावात् संविदधीनसिद्ध्यभावाच्च कथं मानतदाभासादिव्यवस्थापकत्वम् ? न द्वितीयः, संविदनन्यया हि संवृत्या सिद्धं संविदैव सिद्धमित्युक्तं भवति । तथाच त्यज्यतां तन्मिथ्यात्वाभिसन्धिः । अन्यथा संवित्स्वरूपमेवापह्नुतं स्यात्; तस्यास्तदभिन्नत्वादिति ॥ इत्यात्मख्यातावनुपपत्तिः ॥ २२ ॥

(248) **एकाकारप्रतीतिर्निजमतिविहता ; नैव दृष्टे गुरुत्वं ;**
**व्यर्थोऽस्मिन् संमतिस्ते ; बहिरपि नियतं वक्ष्यते ग्राह्यलक्ष्म ।**
**व्याघातो लिङ्गसंख्यापरिमितिवचसां नास्त्युपाधिप्रभेदात् ;**
**एकं नानाकृति स्यात् ; निजगुणभिदया बाधिते धीः स्वहेतोः ॥ २३ ॥**

---

श्री— स्वरसम् । तस्याः सत्त्वस्य प्रकृतोपयोगिताया विवृतत्वात् तदर्थं सत्पदप्रयोग इति वा भाव्यम् । संवृतेः संविद्ग्राह्यत्वे च सदसिद्धिरेवेति न तदधीनः सर्वनिर्वाहः ॥ २२ ॥

ननु बाह्यज्ञेयानंगीकारे ज्ञाने वैचित्र्यं न भवतीति न युक्तम्; अस्माभिर्ज्ञानेष्वेव सर्वाकारस्वीकारे तत्तज्ज्ञानवैलक्षण्यस्य व्यक्तत्वादिति योगाचारशंकां तदुद्भावितसर्वदोषपरिहरणव्याजेन निरस्यति एकाकारेति। तेषां बाह्यनिरासहेतवस्तावत् अत्र निरस्यमाना एते-(१) नीलमित्यादिज्ञाने आकारद्वयाभानादेकस्यैव भानात् ज्ञाने तत्सिद्धौ बाह्यमन्यन्निष्प्रमाणकम्; (२) ज्ञानज्ञेयद्वयकल्पने गौरवम्; (३) अतिरिक्तज्ञेयसत्त्वस्य सविवादत्वादपि तत् उपेक्ष्यम्; (४) ज्ञेयस्य ज्ञानातिरिक्तत्वे प्रकाशमानताऽपि न स्यात्; (५) लिङ्गसंख्यापरिमाणेष्वव्यवस्थादर्शनाच्च न ज्ञेयस्य सुनिरूपता; (६) एकस्य वस्तुनः कुणपकामिन्यादिता स्थूलनीलाद्यनेकाकारता च दुर्वचा;(७) बाधितेऽपि भ्रमानुवृत्त्या वस्तु विना पूर्वपूर्वज्ञानवशादेवोत्तरोत्तरज्ञानोत्पत्तिर्वक्तव्येति । अत्र क्रमेण खण्डनम्—इदं नीलमिति एकस्यैवाऽऽकारस्य प्रतीतिः; न तु ज्ञानगताऽऽकारस्य ज्ञेयगताऽऽकारस्य च द्वयोः प्रतीतिरित्येतत् निजमतिविहतम् =स्वानुभवविरुद्धम्; नीलमिदं जानामीति ज्ञेये नीलाकारस्य, ज्ञाने तद्विषयकत्वरूपाकारस्य चानुभवसिद्धत्वात् । गौरवोक्तिरप्ययुक्ता, न हि दृष्टे गौरवं नाम; यथा दृश्यते, तथैव तत्त्वस्य स्वीकार्यत्वात् । अन्यथा प्रतिपुरुषं हस्तपादनेत्रश्रोत्रादीनां द्वित्वमपि न सिध्येत्; गौरवात् । यत्तु विवादग्रस्तत्वादुपेक्ष्यमिति; तदप्ययुक्तम्; कस्यचिद् विवादमात्रेण वस्तुनस्तथान्यथाभावायोगात् । सर्वसंमतं यत् तदेव तत्त्वमिति कल्पने त्वन्मतस्याप्यसिद्धिप्रसंगात् । यत्तु ज्ञानव्यावृत्तं ग्राह्यस्य लक्षणमपि नास्ति; प्रकाशमानत्वं तु सर्वसाधारणमिति; तच्च न युक्तम् । ग्राह्यभेदेन लक्षणभेदो लक्ष्यत एव । नीलपीताद्याकाराणां बाह्यगतत्वात् । यत्तु कलत्रं भार्येति एकत्रैव लिंगभेदः, दाराः कलत्रमिति संख्याभेदः, महत्, अणु, ह्रस्वं दीर्घमिति एकत्रैव परिमाणभेदश्च कथमिति, तन्न; लिंगादिभेदस्य वाचकशब्दप्रयुक्तत्वात् । परिमाणस्य चैकस्यैव निरूपकभेदेन

अन्यानपि बौद्धोक्तान् बाह्यापह्नवप्रकारान् प्रत्याचष्टे एकाकारेति । यत् तत्राहुः—इदं नीलमित्यादिबुद्धौ नीलादिरेक एवाऽऽकार उपलभ्यते । स चेत् स्वार्थस्य, तर्हि निराकारा बुद्धिर्न प्रकाशेत ; तदप्रकाशे च कुतोऽर्थप्रकाश. ? अतः प्रकाशमान एक आकारः प्रकाशमानस्य ज्ञानस्यैव स्यादिति—अत्र ब्रूमः—एकाकारप्रतीतिः स्वमतिव्याहता, ज्ञानार्थयोर्भिन्नाकारतयैव सर्वैरुपलब्धेः । अर्थो हि नीलाद्याकारः ; ज्ञानं तु तत्प्रकाशाद्याकारमिति । न च, "अर्थेनैव विशेषो हि निराकारतया धियाम्" इति नियमः ; भेदकान्तराभावदशाविषयत्वादेवं व्यपदेशस्य ; अस्ति ह्याधारत आधेयतः कारणतः कार्यतश्च ज्ञानस्य विशेषः । अतः परस्परभिन्नाकारतयैव ज्ञानार्थयोरुपलम्भ इति ॥ तथाऽपि नीलादेर्ज्ञानाकारत्वकल्पनयैव सर्वव्यवहारसिद्धेः बाह्यार्थकल्पनायां गौरवप्रसङ्ग इत्यत्राह नैवेति । यदि वयं सौत्रान्तिकवत् ज्ञानाकारवैचित्र्येणार्थस्वभावं कल्पयामः (येम ?), तदैवमनुयुज्येमहि । दृष्टत्वादेव हि बाह्या(ह्यम)र्थमभ्युपगच्छाम इति भावः । ननु विप्रतिपन्नो बाह्यार्थ , ज्ञानं तु संप्रतिपन्नम् । अतः प्रकाशमानो नीलादिराकारः संप्रतिपन्नस्यैव भवितुमर्हति ; सिद्धसाध्ययोः सिद्धस्यैवावलम्बनीयत्वादिति-- तत्राह व्यर्थेति । यदि वादिविप्रतिपत्त्या वस्त्वतिवर्तेत, तदा हि तत्संमतिरन्वेषणीया । न चैनमस्ति। अन्यथा सर्ववादिनां परपक्षभङ्गस्यायत्नलभ्यतया साधनदूषणादिप्रयोगो निरर्थकः स्यात् । न च मत्संमतिविरहात् त्वत्पक्षं सर्वमसिद्धं मन्यस इति भावः । ननु बाह्यस्य नीलादेः प्रकाशमानत्वमौपाधिकमनौपाधिकं वा ? नाद्यः ; अप्रकाशस्वभावस्योपाधिसहस्रेणापि प्रकाशापादनायोगात् । न द्वितीयः ; अनौपाधिकप्रकाशस्य स्वयंप्रकाशत्वज्ञानत्वयोरवर्जनीयत्वात् । ततश्च वित्तिवेद्यभेदासिद्धेस्तादात्म्यमेव ग्राह्यलक्षणं स्यादिति। आह(दित्यत्राह) बहिरपीति। अयं भाव --न तावत् नीलादेरौपाधिकप्रकाशत्वे प्रकाशासिद्धिः; हेतुफलभावस्य त्वयाऽपि स्वीकारात् । अन्यथा कथमसत्स्वभावस्य हेतुसहस्रेणापि सत्त्वापादनमिति

---

वी— स्थौल्यकार्श्यादिरूपत्वसंभवात् । अत उपाधिभेदप्रयुक्तत्वात् तस्य, न व्याघातः। एकस्य कथं नानात्वमिति चेत्—धर्मिण एकत्वेऽपि रूपरसगन्धस्पर्शादीनां मिथोभिन्नानामेकनिष्ठत्वे विरोधाभावात्। वस्तुनि बाधितेऽपि भ्रान्त्यनुवृत्तिः कथमिति यत्, तन्न ; प्रथमभ्रान्तेर्यत् मूलम्, तस्य दोषस्य तस्याधिष्ठानस्य चानुवृत्तौ भ्रमानुवृत्तिः, दोषनिवृत्तौ च तदननुवृत्तिः । तत्र बाधितस्थले वस्तु किञ्चिदुत्पन्नं बाधवशान्नष्टमिति न हि वयं ब्रूमः । अतो नानुपपत्तिः ॥

ननु ज्ञेयातिरिक्तस्य ज्ञानगतस्याकारस्य स्वीकारे, "अर्थेनैव विशेषः" इति वचनविरोध इति शंकां परिहरति न चार्थेनेति । एकार्थविषयकत्वेऽपि घटप्रत्यक्षं घटानुमितिः घटशाब्दं घटस्मृतिः घटध्यानमित्येवं ज्ञानवैचित्र्यसत्त्वात् अर्थेनैव विशेष इत्येतत्, यत्र ज्ञानद्वयस्यैकजातीयता यथा घटप्रत्यक्षे पटप्रत्यक्षे चेत्येवम्, तत्रार्थेनैव विशेष इत्यभिप्रायमिति । न त्वनुभवसिद्धविशेषकान्तरव्यवच्छेदकम् ; ज्ञानानां स्वाधारपुरुषभेदात्, स्वगतप्रत्यक्षत्वानुमितित्वादिधर्मभेदात् चक्षुस्त्वगादिकारणभेदात् मन्दोत्कटप्रवृत्तिनिवृत्तिहेतुत्वादिकार्यभेदाच्च भेददर्शनात् । किञ्च अर्थेनैवेति वाक्यम्— निर्विषयकं ज्ञानं नास्ति, ज्ञेयातिरिक्तः त्वत्संमतो ज्ञानाकारो नीलपीतादिर्नास्ति इति तत्त्वकथनपरं सत् त्वत्प्रतिकूलमेव । यदि वयमिति । द्विविधनीलाकारवादिसौत्रान्तिकमते गौरवं दोषः ; न तु नः इति । तादात्म्यमेव ग्राह्यलक्षणमिति । एतन्निरासविस्तरो विशश्लोके, 'तादात्म्ये तस्य साध्ये'

माध्यमिकपर्यनुयोगे किं प्रतिवक्ष्यसि? अतः प्रत्यक्षानुपलम्भप्रतिष्ठापितहेतुविशेषाधीनं प्रकाशमानत्वं बाह्यत्वेऽपि नीलादेरप्रतिक्षेप्यमिति स्थिते, ग्राह्यस्य किं नियामकेन लक्षणान्तरेण? तदन्वेषणे च तस्यापि तथेत्यनवस्थापातात्। न हि वयं वैभाषिकसौत्रान्तिकादिवत् एकसामग्रीप्रसूतत्वं स्वाकारसमर्पण-क्षम(लक्षण?)हेतुत्वम्, अन्यद्वा किंचिदनियतं ग्राह्यलक्षणं ब्रूमः, येनातिप्रसङ्गः स्यात्; किंतु सामग्रीनियतिबलात् सदसद्वा किंचित् केनचिदेव ग्राह्यम्। एवमनभ्युपगमे किंचित् प्रति कस्यचिदेव तदन्यस्य कार्यत्वं कथं वक्ष्यसि? कारणादन्यस्य कार्यत्वेऽतिप्रसङ्गं च कथमपनेष्यसि? तदिह वैनाशिक-समयमुद्रीर्य सत्कार्यवादे स्थातुमिच्छसीति।

श्लो—एवं च दूष्यवाच्यादेस्तादात्म्यं दूषणादिभिः। कल्पनीयं त्वयेति स्यात् स्वव्याघातादिरक्षतः॥

नन्वव्यवस्थितस्वभावं न किंचिदपि तत्त्वं भवति; अन्यथाऽतिप्रसङ्गात्। न च व्यवस्थित-स्वभावं किंचित् बाह्यम्। एकमेव हि भिन्नलिङ्गं व्यपदिश्यते, 'नक्षत्रं तारका तिष्यः' इति। एकत्र योषिति दारा इति बहुवचनम्। एकमेव हि परिमाणमणुमहद्दीर्घह्रस्वात्मना विकल्प्यते; अन्यदप्येवम्प्रायम्। अतो न बाह्ये कश्चिदपि तत्त्वव्यवस्थेत्यत्राह **व्याघात** इति। उक्तेषु लिङ्गवचनाव्यवस्थितिस्तावन्न वस्तुव्यवस्थामन्यथयति; तत्तच्छब्दस्वभावप्रतिनियतत्वात् व्यपदेशभेदस्य। न हि मनुष्यादौ दृष्टं नपुंस-कत्वादि नक्षत्रादौ निर्दिश्यते; न चैका स्त्रियं दाराः इति बह्वीमभिमन्यते। परिमाणे व्यपदेशभेदस्तु प्रतियोग्युपाधिकः। तत्तदपेक्षया च तत्तद्रूपत्वं तस्य तात्त्विकमेव। तथाऽन्यदपि। एवं(तथा) अनभ्युपगमे स्वन्मतमपि निर्मूलं स्यात्। बुद्धिरपि हि न सर्वं प्रति बुद्धिः; सर्वस्याप्ययत्नतः सर्वज्ञत्वप्रसङ्गात्। सा च न सर्वं प्रति कार्यं कारणं वा; अनभ्युपगमात्; अनुपपत्तेश्च। न च सर्वत्र सदा सती, विभुत्वनित्य-त्वापातात्। न च सर्वं प्रति इष्टा, अनिष्टा वा; वेदनासाधारण्यप्रसङ्गात्। रागद्वेषानुत्थानप्रसङ्गाच्च। नापि नीलैकाकारा बुद्धिः पीतादिभिराकारिणी; सर्वाद्वैतप्रसङ्गादिति भावः।

अथ स्यात्--'नीलमुत्पलम्', 'दीर्घः पटः' इत्यादिषु एकमनेकस्वभावं बाह्यार्थवादिभिरङ्गीक्रियते।' तच्चायुक्तम्; नीलपीतादेरिवानेकस्य एकस्वभावत्वायोगात् एकस्यानेकस्वभावत्वायोगाच्च। अतो निःस्वभावमेव सर्वं बाह्यमिति। तत्राह **एकम्**इति। न खल्वेकमेवानेकमिति वयं पश्यामः, प्रतिजानीमहे वा; येन विरोधः स्यात्; किंत्वेकमनेकसंबन्धीति। न चैव विरोधगन्धः; तवापि विशेषमात्ररूपस्यै-कस्य संवेदनस्य स्वेतरसर्वप्रतिसंबन्धितयाऽपि विरोधप्रसङ्गात्। नीलोत्पलसंविदि च जातिगुणग्राहिण्या-माकारभेदस्यापरिहार्यत्वात्। नीलपीतग्राहिण्यां तु किं पुनः?

---

टी—इत्यत्र द्रष्टव्यः। प्रत्यक्षानुपलम्भेति। अन्वयव्यतिरेकेत्येतत्पर्यायतया प्रयोगोऽयं बौद्धमते। एकसामग्रीप्रसूतत्वमिति। वस्तूनां कल्पितत्वे हि भ्रान्तेर्विषयस्य चैकसामग्र्यधीनत्वं संभाव्येत। सदसद्वा = वर्तमानं वा अतीतादिकं वा। केनचित् = प्रत्यक्षेण तदन्येन वा। दूष्येति। ग्रहणरूपक्रिया-कर्मकरणयोरैक्यवादी, दूषणादिक्रियाकर्मकरणादिविषयेऽपि, दूष्यदूषक-वाच्यवाचक-भोज्य-भोजक-पाठ्यपाठक-वध्यघातकादितादात्म्यमपि किं न मन्यत इति भावः। तथाऽन्यदपीति।

श्लो— किंच सर्वज्ञसंवित्तौ सर्वाकारानुबन्धतः । सर्वस्वभावता वा स्यात् निःस्वभावत्वमेव वा ॥

ननु च बाधितोऽपि द्वितीयचन्द्रादिः पुनरपि प्रकाशमानो दृश्यते । न चात्र बाह्यं किंचिदप्यधिष्ठानं कारणं वा पश्यामः । अतो ज्ञानस्यैवाधिष्ठानत्वं समनन्तरप्रत्ययस्य च कारणत्वं कल्पयितुं युक्तमित्यत्राह बाधित इति । अयं भाव.-अन्वयव्यतिरेकावधारितं प्रथमभ्रमाधिष्ठानमेव बाधितानुवृत्तिभ्रमेऽप्यधिष्ठानम्; तत्कारणमेव चानुवृत्तं कारणम् । अतो बहिरप्यधिष्ठानकारणयोः संभवान्नान्तरत्वं कल्प्यमिति ॥

इति स्वात्माकारख्यातिशङ्का । योगाचारकृतदूषणनिरासः ॥ २३ ॥

(249) धीत्वात् स्वान्यार्थशून्या विमतमतिरिति स्वोक्तिबुद्ध्यादिभग्नं ;
ज्ञानज्ञानेऽतिचारः क्षणिकविविधधीसन्ततेः संमतत्वात् ।
दृष्टान्तः साध्यशून्यो, न च निरुपधिकासत् प्रतीतं क्वचिन्नः ;
तावन्मिथ्यात्ववलप्तौ न तु फलति तवाशेषबाह्यार्थभङ्गः ॥ २४ ॥

अथानुमानतोऽपि बाह्यापलापमनूद्य दूषयति धीत्वादिति । एवं ह्याहुः—यः प्रत्ययः, स निरालम्बनः, यथा स्वप्नादिप्रत्ययः ; तथा च विमतिपदमिति । तदेतदन्ववादिषुः, "स्तम्भादिप्रत्ययो मिथ्या प्रत्ययत्वात् तथा हि यः । प्रत्ययः स मृषा दृष्टः स्वप्नादिप्रत्ययो यथा ॥" इति । तत्र स्वोक्तिबाधस्तावत्-अयं प्रयोगो यदि न कंचित् प्रत्ययं साधयितुं प्रवृत्तः, तदा नैरर्थक्यात् भ्रमः । अथ साधयितुम्, तदा सोऽपि प्रत्ययः पक्षीकृतो न वा ? आद्ये, स्ववाक्यजन्यबुद्धेः स्वेतरालम्बनाभावसाधनात् बुद्ध्यन्तरस्य

---

श्री– कुणपः कामिनी भक्ष्यमिति विकल्पनादिकमपीत्यर्थः । किञ्च सर्वेज्ञेति । इदमुपलक्षणम्, 'अयं पटः, अयं घटः' इति ज्ञानद्वयविषययोः पुनरेकेन ज्ञानेन, 'इमौ घटपटौ' इति ग्रहणे वस्त्वभेदापत्तिः; एकस्यैव वस्तुनः अनेकप्रकारेणानेकैर्ग्रहणे वस्त्वनेकत्वापत्तिः । तत्तज्ज्ञानगतस्याऽऽकारस्य तत्तन्मात्रवेद्यत्वात् एकवस्तुनोऽनेकग्राह्यत्वानुपपत्त्या लोकव्यवहारोच्छेदश्चेत्यादि द्रष्टव्यम् ॥ २३ ॥

योगाचारोक्तं निरालम्बनानुमानं निरस्यति धीत्वादिति । विमता = विवादास्पदं जागरितरूपा मतिः स्वान्यार्थशून्या = स्वभिन्नार्थरहिता धीत्वात् स्वप्नधीवत् । उभयत्र विषयभूतबाह्यार्थाभावात् साध्यसिद्धिः । ज्ञाने ज्ञेयतादात्म्यस्य तेन स्वीकृतत्वात् स्वाभिन्नार्थसद्भावात् स्वभिन्नेति अर्थविशेषणम् । इतीदमनुमानं स्वोक्त्या स्वबुद्ध्या स्वप्रवृत्त्या च भग्नम् । एतदनुमानप्रयोग एवात्रोक्तिः । एतत्प्रयोगश्च किञ्चिद्धीजननाय । एतज्जनिताया धियो निरालम्बनत्वे प्रयोगवैयर्थ्यापत्त्या सालम्बनत्वेष्टौ तत्र निरालम्बनत्वरूपसाध्यं विना हेतुसत्त्वात् व्यभिचारः । निरालम्बनत्ववादिना सालम्बनत्वोक्त्या व्याघातश्च । एवं तद्बुद्धावपि सालम्बनत्वसत्त्वात् व्यभिचारः स्पष्टः । एवं प्रवृत्त्याऽपि भंगः । तदीयप्रवृत्तिरपि हि किंचित्प्रयोजनविषयकज्ञानाधीना ; तस्मिन् ज्ञाने तज्ज्ञानातिरिक्तप्रयोजनावगाहिताऽस्तीति सर्वैर्निष्प्रयोजनत्वासिद्धेः। ज्ञानस्य प्रयोजनानवगाहित्वे प्रवृत्तिरेव न भवेत् । एवं धीसंतत्यादिरूपज्ञानविषयकं यत् ज्ञानं तत्र स्वान्यधीसंततिरूपार्थशून्यत्वं नास्तीति अतिचारः = व्यभिचारः । न च ज्ञानविषयज्ञानमेव नेति सुवचम्—क्षणिकविज्ञानसंततिस्थापकानां ज्ञानान्तरविषयकत्वस्य दुष्परिहरत्वात् । एवं दृष्टान्तः स्वप्नधीरूपः साध्यविकलः, अस्मत्पक्षे स्वप्ने परमेश्वरसृष्टविषयकत्वसत्त्वात् । असद्विषयकत्वपक्षेऽपि अत्यन्तासतो न विषयत्वसंभव इति मिथ्याभूतासद्विषयकत्वसिद्धौ तवानुमानेनाशेषबाह्यार्थभंगो न फलति = न सिद्ध्यति ।

निरालम्बनत्व म सिध्येत् । अतस्तदर्थे वाक्यमतदर्थं भवतीति व्याघात । बहिष्कारेऽपि सालम्बनत्वनिरालम्बनत्वविकल्पेन व्याप्तिभङ्ग याघातौ स्याताम् । स्वबुद्धिविरोधस्तु—यदि असौ बुद्धि पक्षीकृतबुद्ध्यन्तराकारतया निरालम्बनत्वमवलम्बेत, तर्हि सिद्ध बुद्धे स्वेतरालम्बनत्वम् । अथ स्वाकारतयैव, तथाऽपि बुद्ध्यन्तराणा निरालम्बनत्वासिद्धि । न च बुद्ध्यन्तराकारो बुद्ध्यन्तरस्य निरालम्बनत्वम् सर्वबुद्धीना सर्वाकारत्वप्रसङ्गेन व्याघातापसिद्धान्त-मतान्तरोत्थानप्रसङ्ग (ज्ञात् ?) । आदिशब्देन प्रवृत्तिभङ्ग । बुद्धिसिद्धान्तिनामपि प्रवृत्तिर्न निष्प्रयोजना, अप्रवृत्तेरेव प्रसङ्गात् । सप्रयोजनत्वे तु साधकबुद्ध्यारूढ तत्प्रयोजन तदात्मक, ततोऽन्यद्वा ? आद्ये, वर्तमानत्वभविष्यत्त्वविरोध । द्वितीये तु बुद्धे स्वेतरालम्बनत्वमपरिहार्यम् । अनैकान्तिकत्वमाह ज्ञानेति । अय भाव —यदि ज्ञानान्तरगोचर किमपि ज्ञानं न स्यात्, क्षणिकबुद्धिसन्तानभेदाभ्युपगमो भज्येत । अत सविदन्तरग्राहिणि ज्ञाने स्वेतरालम्बनत्व स्वीकृतम् । तस्य पक्षीकारे स्वमतविरोध , अपक्षीकारे तु तत्रातिचार इति । त्रिविधशब्देन आलयविज्ञान प्रवृत्तिविज्ञान-चित्त चैत्तादिकल्पनाभेदसग्रह । स्वप्नादिदृष्टान्तस्य साध्यविकलत्वेन व्याप्त्यसिद्धिमाह **दृष्टान्त** इति । इदमत्राकूतम्—न हि वय स्वप्नादिधिया स्वविषयतादात्म्यमभ्युपगच्छाम । नापि बाह्यालम्बनशून्यत्वम् , तत्र वाऽन्यत्र वा सत एव स्वप्नादावपि भानात् । तिष्ठतु वा स्वाप्नार्थसृष्टिपक्ष , पक्षान्तरेऽपि ह्याहु, "जन्मन्येकत्र भिन्ने वा तथा कालान्तरेऽपि वा । तद्देशे वाऽन्यदेशे वा स्वप्नज्ञानस्य गोचर ॥" इति । न च जागरज्ञानेषु तद्वत् अन्यथाख्यातिरूपत्वमपि साधयितु शक्यम् , बाधाभावात् । तत्र च **सूत्रम्**, "**वैधर्म्याच्च न स्वप्नादिवत्**" इति । नन्वसद्विषयत्वे साध्ये स्यादेव दृष्टान्त सिद्धि , अन्यथाख्यातिवादिभिरपि भ्रान्तेरशतस्तथात्वस्वीकारादित्यत्राह **न चेति** । निरुपाधिकासद्विषयत्वसाधने दृष्टान्तासिद्धिरेव, भ्रमविषयससर्गतादात्म्ययोरपि सामान्यत क्वचित् सिद्धत्वात्, तदसिद्धौ च तद्भ्रमायोगात् । निषिध्यमानौ च तादात्म्यससर्गौ तत्तत्सत्यवस्त्ववच्छिन्नावेव निषेधविषयाविति भाव । सोपाधिकासद्विषयत्वसाधन तु निरशेषबाह्यार्थनिह्नवायोगात् बाधकासिद्धेश्च न युक्तम् । असद्विषयत्वमात्र तु सर्वेषा देशान्तरादावसत्त्वात् सिद्धमेवेत्यभिप्रायेणाह **तावदिति** ॥

**इति निरालम्बनानुमानभङ्गः ॥ २४ ॥**

---

व्या— पक्षीकृतेति । निरालम्बनत्वविषयकबुद्धौ भात निरालम्बनत्व सर्वजागरितधीगत चेत्— स्वान्यार्थत्व तस्यास्तीति नास्या बुद्धे स्वान्यार्थशून्यत्वम् । तन्निरालम्बनत्व विना स्वाकारभूतनिरालम्बनत्वस्यैव तत्र भाने जागरितप्रत्ययेषु निरालम्बनत्व साधितं न भवतीत्यर्थ । न हि वयमिति। स्वान्यार्थशून्यत्व नाम किम्—अर्थतादात्म्य वा बाह्यार्थाविषयकत्व वा । अस्मन्मते आद्य नेष्टमिति साध्यवैकल्य स्वाप्नज्ञाने । अन्त्येऽपि वैकल्यमेव बाह्यार्थसत्त्वात् । न केवल स्वाप्नसृष्टिस्वीकारपक्षे। पक्षान्तरेऽपि जन्मनीत्यादिश्लोके, स्वाप्नज्ञानस्य यो गोचर , स एतज्जन्मन्येव वा, जन्मान्तरे वा, एतत्काले वा, कालान्तरे वा, एतद्देशे वा, देशान्तरे वा स्थित एवेत्युक्तेरित्यर्थ । अस्त्वन्यथाख्यातिरूप मिथ्यात्वमितीद निरस्यति न च जागरेति । स्वान्यार्थशून्यत्व न साध्यम् । किं तु असद्विषयकत्वमित्यत्र प्रवृत्त न चेत्यादि । तन्यतारयति नन्वित्यादिना ॥ २४ ॥

(250) प्रत्यक्षं संप्रयुक्ते, स्मृतिरपि विदिते, व्याप्तिसिद्धेऽनुमा स्यात् ,
शाब्दी धीरन्विताद्ौ भवति, तदनुगा भ्रान्तिधीः क्वाप्यसिद्धेः(द्धे ?) ।
व्योमाम्भोजादिशब्दोऽप्यनियतमतिकृत् स्यात् पदार्थं त्यजेच्चेत् ;
नो चेत् , स्यादन्यथाधीर्ध्रुवमिह, यदि वाऽनन्वितत्वाप्रतीतिः ॥ २५ ॥

निरुपाधिकासत्प्रतीत्यभावं हेतुदर्शनाभावतः प्रपञ्चयति प्रत्यक्षमिति । कार्यमपरोक्षज्ञानमन्वय-

---

धी— ननु बाह्यं विनाऽपि स्मृत्यनुभवयोः जायमानत्वात् सर्वत्राविशेषात् अबाह्यविषयकत्वमेवास्तु। तथाहि—स्मृतिर्न बाह्यविषया, नष्टेऽप्यर्थे स्मृतिदर्शनात्। तत्र बाह्यमादाय साकारत्ववर्णनायोगात् ज्ञानाकार एव स्वीकर्तव्यः । एवमनुभवेषु प्रत्यक्षं शुक्तिरजतादेरपि विषयीकारात् असंनिकृष्टार्थविषयकमिति ज्ञायते। अनुमाऽपि अव्याप्यादपक्षधर्माद्पि हेतोः, एवं, 'नद्यास्तीरे फलानि सन्ति' इति फलासद्भावेऽपि वाक्यात् बोधः। एवं व्योमाम्भोजादिपदेऽपि। राहोः शिर इत्यादावपि। ज्ञानाकारत्वे तु सर्वमेतन्निराबाधम्। अतः तद्वदेव सर्वत्र बाह्यत्वभ्रान्तिरेव। मा भूद्वा ज्ञानाकारोऽपि; असद्बाह्यख्यातिरेव स्यात् इत्याशङ्कायां सर्वत्र बाह्यविषयकत्वमुपपादयति प्रत्यक्षमिति। सर्वस्य प्रत्यक्षं मूलमिति हेतोः, इन्द्रियसंनिकर्षजन्यत्वात् बाह्यत्वं विषये सुदृढमित्यतश्चास्य प्रथममुक्तिः। अन्येषामनुमित्यादीनां ज्ञानकरणकत्वात् पूर्वज्ञानगताकारप्रयुक्तता शङ्क्येतापि ; न तु प्रत्यक्षे तथा ; सत्तामात्रेण चक्षुरादेः कारणत्वादिति। संप्रयुक्ते=इन्द्रियसंनिकृष्टे। "सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म" इति मीमांसासूत्रे संप्रयोगशब्दः ; न्यायदर्शने संनिकर्षशब्दः। प्रत्यक्षं बाह्यविषयकं संनिकर्षजन्यत्वात्। स्मृतिरपि विदिते। पूर्वमननुभूतेऽर्थे स्मृतिर्न जायते। अनुभवश्च संनिकर्षादिजन्यः। तादृशानुभवजनितसंस्कारो यत्र विषये, तत्रैव भवति स्मृतिरिति तत्र संस्कारविषयत्वमेव प्रयोजकम्, न तु वर्तमानत्वम्। अतोऽतीतानागतविषयेऽपि स्यात्। प्रत्यक्षातिरिक्तानुभवानामप्यतीतादिविषयकत्वेऽनुभूयमाने, सर्वतदधीनस्मृतेस्तत्त्वं कैमुत्यसिद्धम्। अनुमा च व्याप्तिसिद्धे—साध्ये व्यापकत्वेन सिद्धे—गृहीत एव स्यात्। अतो बाह्यहेतुसाध्यव्याप्तिज्ञानमेव साध्यानुमितौ कारणम्। तथा शाब्दी धीः=शब्दजन्यो बोधोऽपि गामानयेत्यादौ आनयनान्वितगोपदार्थादिरूपे विशिष्टे भवतीति प्राभाकराः। पदैः पदार्थेष्वन्वयं विनाऽभिहितेषु पदार्थसामर्थ्यवशादन्वयविषये धीर्भवतीति भाट्टाः। सर्वथा तत्र बाह्यार्थाकांक्षायोग्यतादिज्ञानं कारणम्। यत्तु सर्वत्र भ्रान्तो विषयं विनैव जायमानायां कथं विषयस्यावश्यकतेति—तत्र=भ्रान्तिधीः=भ्रान्तिरूपं ज्ञानं काचित्कम्। प्रमैव भूम्ना। भूयसान्यायात् प्रमानुसारेणैव व्यवस्था। किञ्च भ्रान्तिरपि तदनुगा=तदनुरूपकारणानुसारिण्येव भवति। यथा प्रत्यक्षरूपभ्रमः प्रकारांशे भ्रमत्वेऽपि धर्म्यंशे भ्रमत्वाभावात् तत्रेन्द्रियसंनिकर्षादिसापेक्ष एव। दोषरूपाधिकबाह्यापेक्षाऽप्यस्तीति ततोऽधिकबाह्यसद्भाव एव सिध्येत्। स्मृतिरूपभ्रमः अनुभवगतभ्रान्तित्वप्रयुक्तः। अनुमितेर्भ्रमत्वं व्याप्तिज्ञानादिभ्रमत्वाधीनम्। शाब्दधीभ्रमत्वञ्च तत्कारणशक्तिज्ञानाकांक्षायोग्यतादिज्ञानगतभ्रमत्वायत्तमिति न किञ्चित् बाह्याविषयकम्। तादृशज्ञानस्य भ्रान्तित्वं तु, असिद्धेः=गृहीतप्रकाररूपेण वस्तुनः स्थित्यभावात्। असिद्धे इति सप्तम्यन्तपाठो वा। गृहीतरूपेणास्थिते क्वापि=किञ्चिदंशे भ्रमः, न तु सर्वांशे इति। ननु व्योमाम्भोजं=गगनारविन्दमित्यादौ बाह्यं किमस्तीति चेत्—सोऽपि शब्दः, पदार्थं त्यजेच्चेत्—मुख्यार्थं विहायार्थान्तरपरश्चेत्—अनियतमतिकृत्=शब्दात् मुख्यार्थप्रतीतिर्नियता। अमुख्यार्थप्रतीतिस्त्वनियतेति लक्ष्यार्थविषयकबोधकृदित्यर्थः। यथा निर्गन्धमिदमिति ज्ञप्तये गगनारविन्दमिति प्रयोगे। यथा च, 'एष वन्ध्यासुतो याति शशशृङ्गधनुर्धरः' इति वीर-

व्यतिरेकावसितेन्द्रियसंप्रयोगविशेषिते विषये भवति। यत्पुनराहुः, "स्मृतिर्न बाह्यविषया, नष्टेऽप्यर्थे स्मृतिदर्शनात्" इति, तत्राह स्मृतिरपीति। अनुभवविषयीकृते ह्यर्थे संस्कारप्रत्यासत्त्या स्मृतिर्भवति। स्मृतिकाले अतीतोऽनागतो वेति न स्वकालेऽप्यर्थो न स्यात्। न च न बाह्यः। तथैव हि स्मृतिरपि समुचितमर्थमवलम्बते, न विरुद्धाकारान्तरस्थम्, स्वाकारम्, शून्याकारं वा; स्वानुभवविरोधात्॥ कालान्तरवर्तिविषयत्वादपि सन्निहिताबाह्यविषयत्वं युक्तमिति चेन्न; अनुमेयातीतानागतसंविदामस्वात्मतायाः प्र ह्यत्वस्य वाऽभावप्रसङ्गात्। तत्र च पूर्वस्मिन् सन्ततिकल्पना लुप्येत; उत्तरत्र संविन्नित्यत्वप्रसङ्गः। स्मृतेः त्रिकालवर्त्याकारत्वात्। अतः स्मृतेः कालान्तरवर्तिबाह्यविषयत्वं न विरुद्धम्। ननु सुगतमतवर्तिनामनुमानं न वस्तुतः प्रमाणम्, अदूरविप्रकर्षमात्रेण तु प्रमाणत्वपरिगणना, निपुणनिरूपणे कल्पितसामान्याकारावलम्बनत्वात् इदमप्रमाणमेवेति कथं तन्निदर्शनेन स्मृतिरसद्विषया न स्यादित्यत्राह व्याप्तीति। प्रत्यक्षादिसिद्धस्य लिङ्गस्य तथाविधत्व व्याप्तिबलात् सामान्यतः, पक्षधर्मतया च विशेषतः सिद्धेन

---

थी—प्रसूभिन्नयोनिजातोऽयं दुर्बलो युद्धाक्षमश्चापधर इति निन्दार्थविषयकतया प्रयोगे। नो चेत्= व्योमपद-अम्भोजपदादेः मुख्यार्थस्यैव ग्रहणे तु अर्थयोर्मिथस्संबन्धाभावात् अन्यथाख्यातिर्वा असंसर्गाग्रहो वा; न तु ज्ञाने कस्यचिदाकारस्य स्वीकारः। यदि ज्ञानं सर्वं यथागृहीताकारवदेव स्यात्, तदा सर्वस्यापि यथावस्थितत्वात् प्रमाभ्रमविभाग एव न स्यात्। आन्तरे बाह्यत्वभ्रम इति चेत्—बाह्यत्वमपि कश्चित् ज्ञानाकार एव स्यात्। नो चेत् =बहिर्मुखप्रवृत्त्यादिविरोधादेवं न चेत्, तस्य बाह्यत्वदसद्भावमूलमेव तत् उपपादनीयमिति अन्यथाख्यातिर्वा, असंसर्गाग्रहरूपा अख्यातिर्वा स्यादियमिति च ध्येयम्॥

स्मृतिर्न बाह्यविषयेति। इदम् आत्मसिद्धिश्रीभाष्यादावप्युपन्यस्तम्। अस्यान्नोपादानात् योगाचारोल्लेखोऽयमिति ज्ञायते। न विरुद्धेति। शुक्तिरजतप्रतीतिर्विरुद्धशुक्तित्वाकारवद्रततया रजताकारमवगाहते; न तथेयम्। नापि ज्ञानगताकारम्, नापि च निरुपाधिकासदाकारमवगाहत इत्यर्थः। संनिहिताबाह्यः=स्मृतिरूपज्ञानगत आकारः। अनुमितिनिदर्शनेन स्मृतेः कालान्तरवर्तिविषयकत्वं स्थापयितुमापादयति एवं तर्हि अनुमितेरपि संनिहिताबाह्यविषयत्वं स्यादिति अनुमेयेति। यद्यपि अतीतघटाद्यनुमिताविष्टापत्तिः स्यात्—अथापि बाह्यापलापिना त्वया क्षणिकसंविन्सन्ततिरूपानन्तजीवस्वीकारात् जीवस्वरूपनित्यत्वं विहाय संविदां प्रवाहतो नित्यत्वमिच्छताऽनुमितिविषयातीतानागतसंवित्सन्ततीनामनुमित्याकारत्वं घटादीनामिव नेष्टम्। तत्र संनिहितविषयत्वे लाघवदर्शिना त्वया संविदां तदनाकारत्वत्यागेन तदाकारत्वस्वीकारापत्तिः। तदा च आकारातिरिक्तसंविदसिद्ध्या संततिकल्पनैव लुप्येत। अथानाकारत्वरक्षणाय संविदामनुमितिग्राह्यताभाव इष्येत, तदा संविदतीतत्वानागतत्वसंततिरूपत्वासिद्ध्या जीवनित्यत्वरूपसंविन्नित्यत्वमापद्येतेत्यर्थः। ननु नष्टेऽप्यर्थे स्मृतिदर्शनादित्युक्तदृष्टान्तेनानुमितेरतीताकारत्वापादनेऽपि आगाम्याकारत्वापादनं कथमित्यत्राह स्मृतेस्त्रिकालवर्त्याकारत्वादिति। नष्टार्थविषयकानुमित्यादिजन्यस्मृतिवत् आगामिविषयकानुमित्यादिजन्यस्मृतेरपि सद्भावात् स्मृतेस्त्रिकालवर्त्याकारत्वमस्त्येवेति तद्दृष्टान्ततयैवेति युक्तम्। तथा च संविदनुमिताविव तत्स्मृतावपि चान्यस्मृतावपि कालान्तरवर्तिबाह्यविषयकत्वं युक्तमित्याह अत इति। कल्पितसामान्याकारेति। सामान्यधर्ममुखेनैव हेतुसाध्ययोर्व्याप्तेर्ग्रहणात् बौद्धमते धूमत्वादि-

व्यापकेनानुमितिर्विषयिणी। न चात्र कारणदोषो बाधकप्रत्ययो वेति प्रमितिरेवासौ। तद्विषयश्च सन्नेव स्वकालेषु। अन्यथा सर्वसंविदां स्वमात्रप्रकाशरूपत्वे सन्तत्यन्तरस्य संविदन्तरस्य च अनुमानाभावात् परस्परानभिज्ञतया सर्वासिद्धिः, सर्वैक्यं वा स्यात्। न ह्येका संवित् अहमस्मीति संविदन्तराय स्वात्मानं साधयति। अनुमानप्रामाण्यतिरस्कारे च तद्विशेषतयाऽभिमन्नः स्वागमोऽपि तिरस्क्रियेत॥ मा भूदस्तुत शब्दोऽपि प्रमाणम्। पदपदार्थयोरेव हि सम्बन्धो मृग्यः। तद्द्वारा भवंस्तु वाक्यार्थसम्बन्धो दूरनिरस्तः। अतो वाक्यवाक्यार्थप्रत्ययौ स्वमात्रप्रकाशात्मानौ कल्पितं किंचिदलीकं स्वाकारेणोपरञ्जयतः। तेन वाक्यवाक्यार्थौ प्रमाणप्रमेयभावेनाभिमन्येते इति। तत्राह शाब्दीति। आदिशब्देन मतभेदेनान्वय-ग्रहणम्। अयं भावः—पदानि तावत् प्रत्यक्षसिद्धसद्भावानि विभक्त्यन्ततया व्याकृतानि नापह्नवमर्हन्ति, पदार्थाश्च। सम्बन्धश्च तेषां मिथः संयोगाद्यसम्भवेऽपि वाच्यवाचकभावरूपः सांव्यवहारिकः। तदन-भ्युपगमे कथानां घोषमात्रशेषत्वप्रसक्तेः। ततश्च लौकिकेष्वलौकिकेष्वपि वाक्येष्वाकाङ्क्षादि-परिष्कृतेषु संसृष्ट[र्थ]विषया संसर्गविषया वा बुद्धिर्जायत एव। सा च बाधाद्यभावे स्वार्थनियतेति स्वरूपत इव हेतुतो विषयतोऽपि नालीकभावमनुभवतीति॥ तथाऽपि बाधिताशप्रतीतेः इन्द्रियादिक-मसद्ग्रहणे हेतुः स्यादित्यत्राह तदनुगेति। प्रत्यक्षादित्रयानुगेत्यर्थः। भ्रान्तावपि ह्यसंसृष्टानां संसृष्टतया बोधने, संसर्गतादात्म्ययोर्वा सामान्यतस्सिद्धयोः स्वाभावाधिकरणनिष्ठतयाऽऽरोपे अन्यथाख्यातिमात्रपरि-शेषात्, अलीकतुच्छाविद्यमानशब्दानामपि अन्यत्र विद्यमानमेव विषयः। नित्याविद्यमानं निरुपाधिकास-दित्यादिशब्दैरपि कचिदधिकरणे कस्यचित् स्वदेशादिसिद्धसत्ताकस्यासत्त्वं विवक्षितम्। ननु, 'अङ्गुल्यग्रे हस्तियूथशतम्' इत्यत्र संसर्गः सत्योऽसत्यो वा? आद्ये, सर्वमुपप्लवेत, द्वितीये त्वसद्ग्रहणं तद्धेतुश्च सिध्यत इति॥ नैवम्, अयोग्यपदसमभिव्याहाराणामपि कचित् सिद्ध एवार्थः तदभावाधिकरणे प्रतिभास्यते।

श्लो— इह त्वारोप्यसंसर्गिसंसर्गासत्त्ववर्णनम्। नासद्ग्रहणक्लृप्त्यै स्यात् प्रमाविषयसाम्यतः॥
अदुष्टबुद्धौ तत्रैव संसर्गस्सन् विशेषकः। अन्यत्र सिद्ध एवासौ दुष्टाया दोषवैभवात्॥

---

व्या— ज्ञात्यस्वीकारात् तदभावे व्याप्त्याद्यभाव एवेति। व्यापकेनानुमितिर्विषयिणीति। अग्न्यादेः साध्यस्य अग्नित्वरूपसामान्यधर्मेण व्यापकत्वेऽपि अग्निविशेषस्य पर्वते सिद्धिस्तु विशेषरूपेणैव पक्षधर्मत्वात्। तादृशव्यापकमादायानुमितेः सविषयकत्वमित्यर्थः। सर्वैक्यं वेति। स्वमात्रप्रकाश-रूपत्वस्य सर्वत्र स्वीकारे स्वाभेदः परः सर्वत्वेति भावः। न ह्येकेति। साधयति=प्रकाशयति। संविदन्तरेणान्या संवित् न स्वयं प्रकाश्येत स्वप्रकाशस्य अहमित्याकारकत्वादित्यर्थः। संसृष्टार्थ-विषयेति अन्विताभिधानवादिमतेन। संसर्गविषयेति भाट्टतार्किकमतेन। प्रत्यक्षादित्रयेति। प्रत्यक्षानुमाशाब्दधीत्यर्थः। संसर्गतादात्म्ययोरिति। शुक्तौ, इदं रजतमिति भ्रान्तौ तादात्म्यम्। तत्स्थले इह रजतमिति प्रतीतौ संसर्गः। अन्यथाख्यातिमात्रेति मात्रपदेनासद्ग्रहव्यवच्छेदः। अलीकेति। एषां व्योमाम्भोजादिवैलक्षण्यं विशिष्टार्थबोधहेतुत्वात्। प्रमाविषयसाम्यत इति। प्रमाया भ्रमे च विषयाणां विशकलितानां साम्यं पारमार्थिकत्वादिति। अदुष्टेति। प्रमाया विषयो संसर्गः सन्=तत्रैव वर्तमानस्सन् विशेषकः=अनुयोगिव्यावर्तकः। दुष्टया बुद्धौ तु तत्रासन्नपि

अथ स्यात्—खपुष्पवन्ध्यासुतादिशब्दास्तावन्न बुद्धिं न जनयन्ति ; 'एष वन्ध्यासुतो याति' इत्यादिस्वविशिष्टोदाहृतिविरोधात्। जनयन्तश्च न निर्विषयाम् ; तदनभ्युपगमात्। सविषयामपि न प्रत्येकांश विषयाम् ; विशिष्टप्रतिभासविरोधात् ; बाधानुपपत्तेश्च। अतोऽसदेव किंचिद्विशिष्टमन्यत् खपुष्पादिशब्दैरव भास्यत इति। तत्राह व्योमाम्भोजेति। न ह्यत्र संसर्गिद्वितयमनुपस्थाप्य तदुपहितविशिष्टभ्रमः ; अतिप्रसङ्गात्। न च खपुष्पवन्ध्यासुतशब्दयोः बोध्यमसत् अविशिष्टम् ; शशशृङ्गादिभिर्वन्ध्यासुतविशेषण विरोधात्। द्वितीयं दूषयति नो चेदिति। अवयवार्थानुरोधे ह्यन्यथाधीरेव सिध्येत् ; अनन्वितेऽन्वितधीमात्रजननात्॥ कथमत्रानन्वयग्रहेऽप्यन्वितभ्रमः? ॥ इति दोषमेव पृच्छ। किं न पश्यसि चन्द्रैकत्वं बुध्यमानोऽप्यङ्गुल्यवष्टम्भाच्चन्द्रे द्वित्वम्, निर्मुखमपि मुकुरमवधार्यन्तत्र मुखमिति? अख्यातिपक्षेण त्वाह—यदि वेति। अनन्वितत्वं न गृह्यते ; अनन्वितत्वाग्रहणविशिष्टसामग्रीविशेषात् तत्र विशिष्टव्यवहार इति भावः॥ इति असद्ग्राह्यख्यातिहेतुदर्शनादिभङ्गः ॥ २५ ॥

(251) नेष्टः स्वान्यग्रहश्चेत्, क्वचिदपि न हि धीर्धर्मिणी वः कृतान्ते
बुद्ध्यात्मा वासनाऽतो न च किमपि तयाऽपेक्षणीयं बहिष्ठम्।
धीसन्ताने त्वनादौ भवति च निखिला वासनैका क्षणस्तत्
निश्शेषध्वंसिनी सा युगपदखिलमप्युद्वमेत् कल्पनौघम् ॥ २६ ॥

बुद्धेः स्वेतरालम्बननिषेधे दोषान्तरं विवक्षुर्दूष्यमनुभाषते नेष्ट इति। इदमहं पश्यामीत्यादिषु बुद्धिस्वरूपातिरिक्तानां विषयाश्रयस्वगतविशेषाणां ग्रहोऽनभ्युपगतश्चेदित्यर्थः। विवक्षितस्योपयुक्तं वासनाबुद्धिस्वरूपयोर्भेदाभावं तावदाह न हीति। बुद्धिर्हि स्वयंविशेषात्मिका, न तु विशेषवतीति

---

र्थ- दोषवशात् विशेषको भवतीत्यर्थः। विशेषणविरोधादिति। तदसद्विशिष्टत्वं तस्य कथमिति भावः। न च—अन्यासद्विशिष्टत्वमपि कथम्, असत्त्वनेकविधत्वमपि कथमिति शंक्यम्-असंभावितत्वा विशेषेऽपि, 'शशशृंगधनुर्याति वन्ध्यातनयधारकम्' इत्यप्रयोगात् विवक्षितमन्यत् स्यादिति भावः। प्रागेव विवृतमेतत्। विशिष्टे तात्पर्याभावे त्वाह द्वितीयमिति। द्वितीये त्वसद्ग्रहणं तद्धेतुश्च सिध्यत इत्युक्तमित्यर्थः॥ २५ ॥

संविदां स्वान्यार्थशून्यत्वे योगाचारमते शून्यवादपर्यवसानरूपं दोषमाह नेति। स्वापेक्षया अन्यस्य ग्रहणं क्वचिदपि संविदि न भवतीति चेत्—तर्हि वः कृतान्ते= सिद्धान्ते धीः न किञ्चिदपि प्रति धर्मिणी स्यात्=विषयाश्रयस्वधर्मविधुरैव स्यात्। तेषां ग्रहणाभावे सद्भावायोगात्। एवञ्च नीलपीतादिवैचित्र्यं कथम्। पूर्वपूर्ववासनाबलादिति चेत्—केयं वासना नाम। अतः= ग्राह्यस्यान्यस्याभावादेव वासनाऽपि बुद्ध्यात्मा= बुद्धितो नान्या। वासनात इत्यत्र वासना अत इति पदच्छेदः। बाह्यसहकारिबलात् वासना विचित्रकार्यजननीति नेत्याह नचेति। बाह्यास्वीकारादिति भावः। एवञ्चेदमेवास्य कारणमिति विशेषकस्य धर्मस्याभावे अनादिधीसंताने उत्तरोत्तरमुत्पद्यमानानां वासनानां पूर्वमनुत्पत्तौ मानाभावात् सर्वा अपि वासनाः एकक्षणरूपा एव स्युरिति। तत्= तस्मात् सा= बुद्धिर्वासना वा निश्शेषध्वंसिनी= निरन्वयं सर्वात्मना नश्यन्ती प्रागेव अखिलं कल्पनौघं= सर्वमपि भविष्यत् कार्यम् उद्वमेत्= उत्पादयेत्। पश्चात् सर्वाभावात् शून्यमेव शिष्येतेति भावः॥
इति योगाचारभंगः ॥ २६ ॥

सिद्धान्ते वासनयाऽपि धर्मवत्त्व तस्या नास्तीति यावत् । तत्फलितमाह बुद्ध्यात्मेति । बुद्धिस्वरूप-मेवेत्यर्थ । वासनाया स्वकार्ये सहकार्यसम्भवमाह न चेति । बाह्यमभावादेव नापेक्षणीयम्, बुद्ध्यन्तर तु सदपि न बुद्ध्यन्तरस्य सहकुरुते, अनभ्युपगमात् ; अभ्युपगमे च सकलाना सर्वसविदा तदुत्तरकालसविदारम्भकतया सन्ततिभेदासिद्धिप्रसङ्गादिति भाव । अनादिसवृतिसम्भृताना नानाधीसन्तानामेकैकक्षणात्मकत्वमाह धीसन्तान इति । उक्तपरम्पराफलितमनिष्टमाह तदिति । निश्शेषध्वसिनी–निरवयविनाशिनी । एतेन भविष्यत्सर्वविकल्पसामग्रीभूतबुद्धिक्षणध्वसकाले काचिदेव कल्पना जायते, नान्येति नियमो न स्यादिति व्यज्यते । अखिल– तसन्तानासंसार भविष्यत् सर्वम् । एव सर्वकल्पनायौगपद्यात् उत्तरक्षणवत् पूर्वक्षणेष्वपि तुल्यन्यायतया तत्तदुत्तरलोपे नानादि ससारप्रवाह स्यादिति माध्यमिकमध्यमध्यास्स्वेति ॥ इति योगाचारोक्तवासनाभङ्गः ॥ २६ ॥

(२५२) साकारोऽर्थः स्वबुद्धौ निहित इति च नाऽऽधारहानाद्ययोगात् ;
स्वच्छे छाया परस्मिन् न च भवति ; न च स्यादसौ रूपशून्ये ।
साम्यासत्त्याद्ययोगाद्विषयविषयिणोर्नापि भेदाग्रहः स्यात्
नैकाकारोपरक्त(रेण रक्त) द्वयमपि ; स च ते ग्राह्यतो नातिरिक्तः ॥ २७ ॥

अथ बाह्यार्थवादिबौद्धकल्पिता पक्षा प्रतिक्षिप्यन्ते । तत्र सौत्रान्तिकाः प्राहु —विज्ञान तावत् स्वप्रकाशप्रत्यक्षसिद्धम् । तच्च क्षणिकम्, पूर्वापरकालवर्तितया प्रकाशाभावात् । न चेदमर्थशून्यम्,

---

श्री– एव स्तबकैर्योगाचार निरस्य सौत्रान्तिक शमयति साकार इति । ज्ञानानामेव साकारत्वम्, बाह्या अर्था न सन्तीत्युक्तमयुक्तम् नीलज्ञानानन्तर पीतज्ञानरूपविलक्षणसविदुत्पत्ते कारणस्य दुर्वचत्वात् । बाह्यार्थसत्त्वे तु–बाह्यार्थो यो यदा सविदि स्वाकार समर्पयति, तदा तदाकारा सविदिति भेद सुवच । अतोऽर्थ बाह्य स्वगत आकार स्वबुद्धौ निहित । तथाच ज्ञानस्य तद्विषयकत्व नाम तदर्पिताकारभाक्त्वमेव–इति स आह । इदमपि निरस्यति इति च नेति । बाह्यार्था सन्तीत्येतदिष्टम् । साकारोऽर्थो बुद्धावितीद तु न आकाराणा स्वाधारहित्वाऽन्यत्र गमनायोगात् । तदाकारगमने बाह्याना निराकारत्वापातात् । आदिना बाह्यस्यानुमेयत्वस्य तदुक्तस्य ग्रहणम् । प्रत्यक्षे सुनिरूपे अनुमेय वस्य चायोगादित्यर्थ । नन्वाकारार्पण नाम प्रतिबिम्बनमेवेत्यत्राह स्वच्छे इति । ज्ञानस्य स्वच्छत्वेऽपि स्वच्छे जायमानाऽपि पूर्वक्षणमात्रस्थितस्य बाह्यस्य छाया तस्मिन् परस्मिन् =पश्चाज्जनिष्यमाणे न भवति । क्षणिकतया नष्टत्वात् । तथा ज्ञानस्य रूपशून्यत्वादपि न छायोत्पत्तिदेशत्वम् । बाह्ये च रूपशून्ये वस्तुनि छायोत्पादकत्व न भवति अदर्शनात् । अतो रूपरूप्यतिरिक्तबाह्यविषये आकारार्पणव्यतिरिक्तप्रकारेणैव ग्राह्यत्वमुपपादनीयमिति किमनेन क्वचिदभ्युपगतेनार्धजरतीयेन । साम्यासत्त्याद्ययोगादिति । बुद्धेर्बोध्यसाम्यस्य, बोध्यसमीपस्थत्वस्य, एकदर्शन–अन्यस्मृत्यादिरूप सामग्र्याश्चाभावात् मापराशिनिविष्टमषीन्यायेन बोध्यबोधयोर्बाह्यान्तरयोर्भेदाग्रहोऽपि दुर्वच । ननु जपाकुसुमगतेनाऽऽकारेण पार्श्वद्वयगतस्फटिकद्वयोपरञ्जनवत् ज्ञानस्य ज्ञेयस्य चैकेनाऽऽकारेणोपरञ्जनमस्त्वित्यपि न, न हि तृतीय कश्चिदाकारवानस्ति । किञ्च स आकार बाह्यवस्तुनद्गतगुणव्यतिरिक्तस्त्वन्मतेऽपि नेति नैव वक्तु शक्यम् ॥

नीलादिविज्ञानसन्ततौ पीतादिज्ञानसन्तत्यनुत्पादप्रसङ्गात् । स चार्थो न प्रत्यक्षः; अधिपतिसंप्रयुक्तस्य क्षणस्य निरुद्धत्वात् । असंप्रयुक्तस्योत्तरक्षणस्य प्रत्यक्षत्वेऽतिप्रसङ्गात् । अतो बुद्धिजनकग्यार्थक्षणस्य स्वाकार-समर्पकहेतुत्वमेव ग्राह्यत्वमित्युपचर्यते । तदुक्तम्, "भिन्नकालं कथं ग्राह्यमिति चेत्, ग्राह्यतां विदुः। हेतुत्वमेव युक्तिज्ञाः ज्ञानाकारार्पणक्षमम् ॥" इति । अतः स्वहेतुभूतार्थसमर्पिताकारो बुद्ध्यात्मैव वस्तुतः प्रत्यक्ष इति; तदिदमनुभाष्य प्रतिभाषते **स्वाकार** इति । विकल्पितदूष्यकोटिभञ्जकहेतुमाह **आधारहानाद्ययोगा**-दिति । अयमाशयः-योऽयमर्थेन बुद्धा॰वा(बुद्धया)कारः समर्प्यते, स किम् (1) अर्थस्य स्वरूपम्, (2) उत धर्म, (3)उभयातिरिक्तो वा? नाद्यः; क्षणध्वंसिनः क्षणान्तरवर्तिसंक्रमणायोगात्; अन्यथा स्थिरवादप्रसङ्गात्; अर्थस्य च साक्षात्प्रत्यक्षत्वापत्तेः; अनुमेयपरिशेषाभावाच्च । न द्वितीयः; धर्मधर्मिभावानभ्युपगमात् । तदभ्युप-गन्तृणामपि धर्मस्य धर्मिप्रहाणेनान्यत्र प्रवेशादृष्टेः। क्षणिकत्वस्थिरत्वविकल्पेन दत्तोत्तरत्वाच्च । अत एव न तृतीयः; अर्थस्य तेन संबन्धाभावात् । असंबद्धस्य चान्यत्र सञ्चारयितुमशक्यत्वात् । अन्यथाऽति-प्रसङ्गादिति । त्रिष्वपि च पक्षेषु परेष्टप्रत्यक्षानुमानयोरप्रवृत्तिरुद्घाटनीया । अत्रानवहितहृद्यं गत्यन्तरं शङ्कते **स्वच्छ** इति । यथाऽत्यासन्नमपि मुखं स्वयमगृह्यमाणं दर्पणसंनिधानेन तत्र समर्पितच्छायं तत्रस्थमेव गृह्यते, तथा अर्थाकारोऽपि स्वच्छबुद्धिप्रतिफलितच्छायात्मा गृह्यत इत्यर्थ. । एतदपि दूषयति **न चेति**। न हि नष्टस्य कचित् छायापत्तिर्दृष्टा; न च वर्तमानस्यापि वर्तिष्यमाणे। अन्यमपि दृष्टविरोध-माह **न चेति** । रूपवत्येव हि पदार्थे रूपवतामेव प्रतिबिम्बसिद्धिः । न च विज्ञानं रूपवत्; नाप्यर्थः; स्पर्शगन्धादिग्रहणे रूपप्रसङ्गाभावात्; नीलादौ रूपवत्त्वानभ्युपगमात्। तत्कल्पनेऽपि प्रत्यक्षत्वा नभ्युपगमेन प्रतिबिम्बप्रसङ्गाभावात् ॥ अप्रत्यक्षस्याऽऽकाशस्य जलादिषु प्रतिबिम्बितत्वं दृश्यत इति चेन्न; आकाशप्रत्यक्षत्वपक्षे तदभावात् । पक्षान्तरे तु यत् तन्मलिनताध्यासविशिष्टतया किंचिच्चाक्षुषं सर्वलोकसिद्धम्, तस्यैव जलादौ प्रतिबिम्बितत्वम् । अतो नार्थस्य बुद्धौ कथंचिदपि प्रतिबिम्बितत्वसिद्धिरिति ॥

स्यादेतत्—न मुख्यच्छायापत्तिं ब्रूमः; किं त्वध्यासमात्रम्, आरोपितार्थाकारं विज्ञानमनुभूयत इति ॥ तत् दत्तोत्तरम् । अर्थस्य तदाकारस्य च ग्रहणाभावे कथं बुद्धौ तदध्यासः ? ग्रहणे च कथमर्थो न प्रत्यक्षः ॥ अर्थग्रहणाभावेऽपि तदाकारो वासनावशादन्यत्राध्यस्यत इति चेन्न; अप्रत्यक्षमेव ह्यर्थं समर्थयमानस्य तद्वासनैव निर्मूला; सा कथमध्यासं प्रसुवीत ? अर्थनिरपेक्षवासनाप्रवाहवैचित्रीसंभवे **योगाचारयूथात्** किं निर्गतोऽसि ? किंच यत्रानुमानादौ अर्थस्य न बुद्धिहेतुत्वम्, तत्र स्वाकार-

---

*टी*— अधिपतिः=इन्द्रियं तत्सिद्धान्ते । समर्पकहेतुत्वं =समर्पकस्सन् हेतुः, तत्त्वम् । हेतुत्वं पूर्व-क्षणस्थत्वमात्रेणापि भवतीति भावः । अत एव =अर्थस्य वैभाषिकमते प्रत्यक्षत्वेऽपि ज्ञाने तत्स्व-रूपाभावादेव । सर्वलोकसिद्धमिति । उपरि चक्षुः प्रसारयद्भिः सर्वैरपि 'नीलं नभः' इति किञ्चिदध्यक्ष्यते । नभोगततत्तद्वस्तुविषयकविशेषदर्शनाभावात् वैपुल्याच्च नभश्शब्देनैव व्यवह्रियते अचाक्षुषनभोव्यतिरिक्तमेव चरन्त्विति वदन्ति । किं तदित्येतदेतावत्र निश्चितम् । स्वचक्षुःकिरण-प्रसर एवेति केचित् । मेरुशैलनीलमणिशिखरप्रभापुञ्ज इत्यन्ये । वस्त्वन्तरादर्शने तद्गततमोद्रव्यदर्शन-मिति परे । दूरत्वातिशयात् चाक्षुषप्रत्यक्षेण विशेषतो दुर्ग्रहस्थले नीलरूपारोप आनुभविक इतीतरे । यत् किमप्येवमस्त्विति भावः ।

समर्पणक्षमहेतुत्वायोगात् ग्राह्यत्वाभाव प्रसज्येत ॥ अथ स्यात्---यथा माषराशौ मषी, यथा वा नीलोत्पलवने कादम्ब तद्भेदाग्रहात् तदपृथग्भावेनाभिमन्यते व्यवह्रियते च, एव तदर्थसन्निहितविज्ञानं तथेति---इदमपि दत्तोत्तरमेव । गृह्यमाणे हि माषराश्यादौ मषीप्रभृतेस्तत्सारूप्ये तत्संसर्गे च सति, तथाऽभिमानव्यवहारौ स्याताम् । इह तु न तथा, अर्थस्याप्रत्यक्षत्वात् ज्ञानस्य च तत्सारूप्यसंसर्गयोर योगात्, तत एव भेदाग्रहस्यासम्भवादिति । अत एव वैभाषिकमुखेनापि नैतत् वाच्यम् ।

नन्वस्ति तावत् कश्चिन्नीलादिराकार , दृष्टस्य दुरपलपत्वात् । स त्वर्थे सन्नपि परमाणुगतसत्त्वान्न गृह्यते । बुद्धिगतस्तु स्थूलगतसत्त्वादुपलभ्यते । अत एकस्याऽऽकारस्योभयोपरञ्जकत्वादर्थाकारो बुद्धौ गृह्यत इत्यत्राह नैकेति । अथ स्वरूपाकार प्रागुक्तैरर्थस्वरूपधर्मादिविकल्पक्षोभैरपास्त । किंचानेकनिष्ठ अयमेकाकार सत्य, असत्यो वा ? नाद्य , जात्यादिखण्डनाशाप्रहाणप्रसङ्गात्, पूर्वापरवर्तिन एकत्वे स्थिरवादप्रसङ्गाच्च । न द्वितीय , अवगमाधीनसत्ताकस्यासत्यस्य कथमगृह्यमाणतयाऽर्थेऽवस्थानम् ? तद्ग्रहे च तत्कल्पनाधिष्ठानस्यार्थस्यापि प्रत्यक्षत्वमकामेनापि स्वीकार्यम् । अपि च नीलाद्याकारस्यार्थातिरिक्तत्व- स्वीकारेऽपसिद्धान्त , अनतिरेके तु न बुद्धौ तत्सम्भव , सम्भवे च बुद्ध्यारूढस्यार्थस्य प्रत्यक्षत्व सुदुस्त्यजमित्यभिप्रायेणाह स चेति ॥ इति ज्ञानेऽर्थाकारसमर्पणादिभङ्गः ॥ २७ ॥

(258) संसर्गात् बोध्यबुद्ध्योरभिदधति सिताद्याकृतेस्सिद्धिमन्ये ;
साद्देश्यात् तन्मतेऽसौ न तु भवति ; तथा कालजोऽतिप्रसक्त ।
व्यंशे नैवाभिमुख्य ; विषयविषयिताऽत्राकृतेः प्रागसिद्धा ;
कास्थाः संसृष्टनाशे जनिरिति कुसृतिः पूगताम्बूलनीतिः ॥ २८ ॥

---

व्री--- जात्यादीति । आकारस्य सत्यत्वे जातेरङ्गीकृतत्वसिद्ध्या, बौद्धाना या जातिखण्डने आशा, "न याति न च तत्रासीत् न चोत्पन्न न चांशवत् । जहाति पूर्वं नाधारमहो व्यसनसन्तति " इति, तस्या प्रहाण स्यादित्यर्थ । अवगमाधीनसत्ताकस्येति । कल्पितस्य, कल्पनामयस्येत्यर्थ । सुदुस्त्यजमिति । अतोऽर्थोऽनुमेय एवेति योगाचारोक्तमयुक्तमिति भाव ॥ २७ ॥

अनेन स्वगत आकारो बुद्धावर्प्यते इति प्रसिद्ध सौत्रान्तिकपक्ष प्रतिक्षिप्त । तेषु केचित् निराकारयो बुद्धिबोध्ययो संसर्गविशेषादाकारोत्पत्ति क्रमुकताम्बूलयोरिव रक्तिमेत्याहु , तन्निरस्यति संसर्गादिति । संसर्गादाकारोत्पत्ति वदन्ति केचित् । स संसर्ग साद्देश्याद्वा समानकाल- त्वाद्वा आभिमुख्याद्वा विषयविषयिभावाद्वा न भवितुमर्हति । साद्देश्यादिति । साद्देश्य समानदेश- कत्व स्वपक्षे मिथस्संयुक्तत्वरूपम्, तत्पक्षे द्वयोर्नैरन्तर्यम् । असौ =बुद्धिबोध्यसंसर्ग तन्मते साद्देश्यान्न भवति । देशरूपस्य पदार्थस्य तैरनङ्गीकारात् । देशस्वीकारेऽपि ज्ञानज्ञेययोर्भिन्नदेशस्थ त्वात् । अस्मन्मत इव ज्ञानस्य विषयदेशप्राप्तेस्तदनुक्तत्वाच्च । कालजसंसर्गस्तु अतिप्रसक्त । उभयो समानकालिकत्व नाम पूर्वोक्तदेशनैरन्तर्यवत् बुद्धिबोध्ययो कालनैरन्तर्य वा एककालिकत्वमेव वा । उभयथाऽपि समानकालिकपदार्थानामानन्त्यात् एकस्यामेव बुद्धौ सर्ववस्तुसंसर्गात् सर्ववस्त्वा कारार्पणापत्ति । नाप्याभिमुख्यात् आकार । मुखहीनयोस्तयोराभिमुख्य किं नाम ? सूर्यसूर्यकान्ता देरिवाभिमुख्य सांशयोरुच्येत, न तु निरंशयो बुद्धिबोध्ययो । नापि विषयविषयिभाव आकारहेतु ।

अन्ये त्वाहु -बुद्धिरर्थश्च वस्तुतो निराकारौ, तथाऽपि चूर्णहरिद्रायोगजरागन्यायेन सितरक्तादि-राकारस्तदोत्पन्नो गृह्यत इति। तदनुभाषते समर्गादिति। तत्र ससर्गव्यवस्थापकविकल्पभेदान् अभिसन्धाय देशैक्यात् ससर्गं तावन्निराकरोति सादेश्यादिति। यथा चूर्णहरिद्रयोरत्यासन्नदेशाधिष्ठान तया मिथ संयोग, निरन्तरत्वं वा, न तथाऽत्र, विप्रकृष्टबोध्यग्रहणात्। कालान्तरवर्तिनामपि कथाचित् बुद्ध्या गृह्यमाणत्वात्। तत्र ससर्गाभावादेव तज्जन्याकारायोगात्। स्वकारधीसिद्धेश्च वर्तमानधीसमान त्वात्। न च त्वन्मते देशो नाम कश्चिदन्य, येन सादेश्यसभव ॥ अथ मन्यसे-यत्र कालासत्तिस्तत्रैव सासर्गिक आकार, अन्यत्र तु वासनात एवेति, तत्राह तथेति। कालजो हि ग्राह्यग्रहणयोर्निरन्तर पूर्वापरत्वमात्रेण वा, समानकालतया वा। उभयत्राप्यतिप्रसक्तिरनिवार्या॥ स्वभावनियमादनतिप्रसक्तिरिति चेत, तर्हि किमर्थंससर्गेण, विज्ञानवादनीत्या बुद्धेरेव स्वभावनियमोपपत्ते ॥ नन्वयस्कान्ताभिमु-ख्यात् अयस एव विकृति, चन्द्रसूर्याभिमुख्यात तत्कान्तयोरेव। एव कुतश्चिदाभिमुख्यविशेषात् कचिदाकारविशेषोत्पत्ति स्यात्– तत्राह व्यश इति। साशयोरेव पदार्थयोरभिमुख्यसगति। इह तु द्वयोरपि निरंशत्वाभ्युपगमान्न तत्सभव इत्यर्थ। भिन्नकालयोश्च तदसभव स्पष्ट ॥ स्यादेतत्— समकालयोर्भिन्नकालयोश्च बोध्यबुद्ध्योर्विषयविषयिभाव सर्वाभिमत्य, तत एव समर्गादाकार उत्पद्ये-तेति। तदपि दूषयति विपयेति। किमत्र निराकारे वस्तुनि विषयीकृते पश्चादाकार उत्पद्यते, साकारे वा? नाद्य, अर्थस्य प्रत्यक्षत्वानभ्युपगमात्। आकारोत्पत्तिकाले बोध्यबुद्ध्योर्विनष्टतया निराधारा-कारोत्पत्तिग्रहणयो प्रसङ्गात्। आकारस्य च द्विष्ठैकनिष्ठत्वादिविकल्पदौस्थ्यात्। न द्वितीय, 'विषयीकारादाकारसिद्धि, साकारस्य विषयीकार' इति मिथस्सश्रयात्। दूषणान्तरमाह कास्या इति। अस्याः – आकृते। क्षणिकवस्तुद्वयससर्गजन्यायास्तदुभयनाशकाले तत्र वाऽन्यत्र वा स्थित्ययोगात्, निराधारत्वे च अर्थादेराकार इति ग्रहणायोगाच्च। [इति कुसृतिरिति। ?] ससर्गजाकारनीति प्रमाणा भावात् प्रमेयविरोधाच्च कुत्सितगतिरित्यर्थ। अय चात्र भाव – ज्ञानार्थससर्गादुत्पत्स्यमान आकारो न प्रत्यक्षज्ञानेन गृह्येत, ज्ञानकाले ग्राह्याकाराभावात्, आकारोत्पत्तिकाले ज्ञानस्य विनष्टत्वात्। लोकदृष्ट्या चात्र निदर्शनेन सभावना स्थाप्यते। लोकश्च स्पर्शवद्रूपवद्द्रव्यससर्गात् रक्तिमाद्युत्पत्तिं पश्यति। तत्र यद्यप्यचाक्षुषेऽर्थे कचित् रूपस्पर्शविकल्पास्पदत्वम्, तथाऽपि न बुद्धिस्तथा। अतस्तयोरुभयत्र एकत्र वा

---

  1— यद्यपि पूर्वोक्तपक्षेषु देशकालविप्रकृष्टस्य संसर्गो दुर्वच आसीत्, इदानीं स दोषो न— अथापि नाकारोत्पत्ते प्राक् विषयविषयिभाव, आकारस्यापि स्फुरणात्। किञ्चाऽऽकारोऽपि न भवितुमर्हति, क्षणिकतया तयोराकारोत्पत्तिकालेऽभावात्। निराधारमुत्पद्यमानस्याकारत्वासभवाच्च कोत्पत्ति। अन्यत्रोत्पत्तौ तस्य कथमेतदाकारत्वम्। इति=अत एभिरादता पूगताम्बूलनीति कुत्सितेव सृति॥

अर्थस्य प्रत्यक्षत्वेति। अर्थार्पित आकारो बुद्धिगत प्रत्यक्ष्यते, अर्थस्ततोऽनुमीयत इति तन्मतम्। अर्थं पूर्वं विषयीकृत्य पश्चादाकार जनयतीत्युक्तौ तस्य प्रत्यक्षत्व तदिष्ट स्यादित्यर्थ। द्विष्ठेत्यादि। इदमग्रेऽनन्ते विवृतमस्ति। न प्रत्यक्षेति। पूर्वमाकारोत्पत्त्यसंभव उक्त, कालभेदात्।

न संसर्गहेतुको नीलाद्याकार उत्पद्येत । एकस्य च द्विष्ठत्वे समतक्षोभः, विषयमात्रनिष्ठत्वे तदाकारविषयप्रत्यक्षतापत्तिः, ज्ञानमात्रनिष्ठत्वे अर्थनैरपेक्ष्यप्रसङ्गश्चोक्त इति ॥ **इति संसर्गजाकारमतभङ्गः ॥२८॥**

**(254) भ्रान्तौ रूप्यादिरर्थो विलसति निरधिष्ठान इत्याहुरेके ;**

**तन्नाधिष्ठानदृष्टेरनियतिविरहात् ; अन्यथाऽतिप्रसङ्गात् ।**

**निष्ठ्यूतस्वाक्षिदोषप्रभृतिषु च भवेत् केशगुच्छा(पुञ्जा)दिबुद्धिः ;**

**किंचैषाऽप्यन्यथाधीर्यदनिदमिदमित्यत्र मातं ब्रवीषि । २९ ॥**

अथ कैश्चिद् बाह्यार्थवादिभिः **सौगतैरुक्तां** निरधिष्ठानख्यातिमन्वाख्याति **भ्रान्ताविति** । नात्र पुरोवर्तिनि रजताध्यासः ; किं तु संस्कारोपनीतं प्रमुषितनदंशं रजतं दोषवशादिदमिति भाति । अन्यथा कथं तैमिरिककेशस्तबकटिट्टिभादिप्रत्ययः ? न हि तत्र किंचिदधिष्ठानं भ्रान्तिदशायां बाधदशायां वा भाति । न चेयं स्मृतिरेव ; अननुभूतेदंत्वग्रहणात् ॥ प्रागनुभूतमेवेदंत्वं भातीत्ययुक्तम् ; तद्भाने तत्कारप्रसङ्गात् । अन्यथा कथं भ्रान्तिः(न्ता) सविहतिरिति ॥ तदेतत् प्रतीतिविरोधादिविवक्षया प्रतिषेधति **तन्नेति** । अबाधितलोकप्रतीतिविरोधात् निरधिष्ठानत्वं दुर्वचमित्यभिप्रायेणाह **अधिष्ठानदृष्टेरिति** । पुरोवर्तिद्रव्यमङ्गुल्या निर्दिशन् इदं रजतमिति व्यपदिशति ; उपादत्ते च स्वयम् । तद्वाक्यश्रावी च तत् रजतत्वेन वदति । यदि शुक्लभास्वरशुक्तिशकलमिदंतया न प्रतीतम्, कथं रजतार्थी तदेवोपादत्ते? कथं च नेदं रजतमिति बाधकोदये जहाति इत्यभिप्रायेणाह **अनियतिविरहादिति** । अन्यथा प्रतीतिप्रवृत्त्यो रनियतिरेव स्यादित्याह **अन्यथेति** । न हि निमीलिताक्षो रजतं स्मरन् कदाचित् रजतमिदमिति भ्राम्यति । न च रजतस्मृतिकालदृष्टमङ्गुलीयकार्थी संगृह्णातीति भावः । तैमिरिकभ्रान्तिषु साधिष्ठानत्वं साधयति **निष्ठ्यूतेति** । **प्रभृतिशब्देन** गन्धर्वनगरादिभ्रमेषु मेघादेरधिष्ठानस्य संग्रहः । एवं च वर्णयतामन्यथाख्यातिरनतिक्रमणीयेत्याह **किंचेति** । इदमर्थस्य रजततया भानम्, असन्निहितस्य रजतपदार्थस्येदंतया भानमिति को विशेषः ? अस्मत्पक्षे तु प्रतीति-प्रवृत्ति-बाधानामुपपत्तिरिति विशेषः ॥

**इति बाह्यार्थवादिसौगतोक्तनिरधिष्ठानख्यातिभङ्गः ॥ २९ ॥**

---

टी—अत्र तत्प्रत्यक्षासंभव उच्यते । न बुद्धिस्तथेति । न बुद्धेः साक्षात् रूपस्पर्शाधारत्वप्रसक्तिरिति । असमानदेशकालविषये आकारासंभवदोषश्च प्रागेवोक्तः ॥ २८ ॥

एवं बुद्धेराकारवत्त्वं सौत्रान्तिकेष्टं निराकृतम् । अथ वस्तुप्रत्यक्षत्ववाद्यपि वैभाषिकादिः भ्रान्तिस्थलेऽसद्वैलक्षण्येन निरधिष्ठानभ्रममाह । तन्निरस्यति भ्रान्ताविति । इदं रजतमित्यत्र इदमिति न शुक्तिग्रहणम् । किंतु अन्यत्र प्रागनुभूतमेव, तद्देशादिकं विना स्मर्यमाणम् इदमिति पुरोवर्तितया गृह्यत इति तदुक्तिः । अनियतिविरहात्=नियमेन स्थितत्वात् न निरधिष्ठानता । अन्यथा=अधिष्ठानस्य शुक्त्यादेरभानमिति स्वीकारे अतिप्रसंगात्=शुक्त्यादिसंनिकर्षाभावेऽपि भ्रान्तिः स्यात्, शुक्तिग्रहणे प्रवृत्तिश्च न स्यादिति । ननु केशस्तबकादौ अधिष्ठानाभानमुक्तमित्यत्राह निष्ठ्यूतेति । निष्क्रान्तेत्यर्थः । प्रसंगादस्मिन् पक्षे अन्यथाख्यातेरेव स्थितिमाह चतुर्थपादेन । यत्=यस्मात् अत्र अनिदम्=अपुरोवर्ति रजतम् इदमिति भातत्वेन ब्रवीषीत्यर्थः । इदमितीत्यस्य पुरोवर्तित्वेनेति वा, पुरोवर्तिव्यक्त्यभिन्नत्वेनेति वा अर्थः ॥ २९ ॥

(255) ख्यातिं भ्रान्तिस्वरूपां जगदुरविषयां केऽपि; तत् धीविरुद्धम्;
ख्यातिः कस्यापि पुंसः क्वचिदपि विषये सिद्ध(द्धि ?)रूपा हि सिद्धा।
अत्रार्थासत्त्वतः स्यादियमविषयता, सर्वथाऽसत्त्वतो वा;
तादृक्त्वेऽप्यन्यथाख्यात्यसदधिगमयोरेव पर्याय एषः ॥ ३० ॥

अत्र केचिदेवमूचुः—ख्यात्यन्तरवादिनां तावत् अन्ततोऽख्यातिपक्षेऽन्यथाख्यातिपक्षे वा विश्रमः; तत्र च ख्यात्यपह्नवदोषमसत्ख्यातिप्रसङ्गं च परिजिहीर्षमाणैरन्यासक्तदृष्टिन्यायेन निर्विषयैव ख्यातिरङ्गीकार्येति। तदनुभाषते ख्यातिमिति। तत्र प्रतीति-प्रवृत्ति-बाध-भ्रमत्वानामनुपपत्तिरित्यभिप्रायेणाह तद्धीविरुद्धमिति। निर्विषयत्वे घटादिवत् ख्यातित्वं न स्यादिति प्रसङ्गमभिसन्धायाह ख्यातिरिति। अयं भावः — यद्यप्यात्मस्वरूपं ज्ञानमिति त्रय्यन्तसिद्धान्तः, तथाऽपि तस्य स्वप्रकाश[रूप]तामात्रेण ज्ञानत्वं श्रुतिपरतन्त्रैरङ्गीक्रियते। एवं क्षेत्रिणां धर्मभूतज्ञानस्य विषयप्रकाशरहितावस्थाऽपि। न त्विह तथा वक्तुं शक्यम्; भ्रान्तिर्निर्विषयेत्यवगमाभावात्; प्रत्युत सविषयत्वमेव तस्याः सर्वेषु शास्त्रेषु सुव्यक्तमुक्तम्। हिः प्रसिद्धौ। तदिह सविषयत्वेऽवश्यंभाविनि तदविरोधाय भ्रान्तिविषयस्यार्थस्याध्यासाधिष्ठानेष्वविद्यमानतया, सर्वत्राभावाद्वा भ्रान्तेर्निर्विषयत्वं वक्तव्यम्; तथासति अन्यथा-

ष्टी-इदमित्थमित्येव लोके सर्वा प्रतीतिः। तत्र प्रकारप्रकारिणोर्यथावत्संबद्धत्वे प्रमा। असंबन्धे भ्रान्तिः। तत्राधिष्ठानांशापलापी निरस्तः। विषय एव नेति वदन् अत्र निरस्यते। यथावस्थितादन्यस्य विषयत्वे भ्रान्तित्वमित्येव न; निर्विषयत्वात्। न च निर्विषयत्वं ख्यातित्वञ्च विरुद्धमिति वाच्यम्—आत्मनो ज्ञानस्वरूपत्वस्य निर्विषयकत्वस्य च वेदान्त्यादिसंमतत्वात्। धर्मभूतज्ञानमपि हि सुषुप्त्यादौ निर्विषयकमस्तीति सिद्धान्तिनः। न चैवं तेषां तदा भ्रान्तित्वापत्तिः; प्रवृत्तिहेतोर्निर्विषयकज्ञानस्यैव भ्रान्तित्वस्वीकारादिति तन्मतम्। तदनुवदति ख्यातिं भ्रान्तिस्वरूपां जगदुरविषयां केऽपीति। निरस्यति तदिति। धीविरुद्धत्वमेवोपपादयति ख्यातिरिति। सिद्धीति पाठ्यम्। परिणामभूतं निर्विषयकं ज्ञानं भ्रान्तिरिति वक्तव्यम्। तदस्तित्वे किं मानम्? अयं भ्राम्यति, मम प्राक् भ्रान्तिरासीदित्याद्यनुभव एव। स च अत्र भ्राम्यति, एवं भ्राम्यति, अत्रैवं भ्रान्तिमान् आसमिति विशेष्यप्रकारविषयक एवास्ति। ख्यातिसामान्यं हि साश्रयकसविषयक सिद्धिरूपत्वेनैव सिद्धम्। सिद्धेत्यनेन, "कस्य कं प्रतीति वक्तव्यम्। यदि न कस्यचित् कञ्चित् प्रति, सा तर्हि न सिद्धिः" इति भाष्यमपि स्मार्यते। सिद्धरूपेति पाठे ख्यातिसामान्यस्य यत् क्वचिद्विषये सिद्धरूपत्वं विषयाधीनस्वरूपलाभत्वं तत् लौकिकपरीक्षकसर्वजनसिद्धमित्यर्थः। एवं विषयानवगाहित्वरूपं निर्विषयकत्वं निरस्तम्। परिशेषात् भ्रान्तेरविषयकत्वम् अत्र = भ्रान्तिदेशे अधिष्ठानविशेषे अर्थस्यासत्त्वाद्वा, अत्यन्तासत्त्वाद्वा स्यात्। आद्ये अन्यथाख्यातिता। अन्त्ये च असत्ख्यातितेति पूर्वोक्ततदुभयातिरिक्ता निर्विषयख्यातिर्दुर्वचा; सविषयकत्वस्यैव सत्त्वात्। सविषयकत्वेनानुभूयमानाऽपि वस्तुतो निर्विषयकेति भ्रमः इति चेत्, निर्विषयकं सविषयकत्वेन गृह्णन् इति सर्वेषामन्यथाख्यातिर्वा, सविषयकं निर्विषयकत्वेन त्वया शंक्यत इति तवान्यथाख्यातिर्वा। यदौचित्यं तदस्तु। तादृक्त्वेऽपि = अतद्विष्ठविषयकत्वात्यन्तासद्विषयकत्वान्यतराश्रयत्ववत्, तत्तुल्ये निर्विषयकस्य सविषयकत्वेन भानमिति पक्षेऽपि। अतादृक्त्वेऽपीति च्छेदेऽप्ययमेवार्थः। सर्वथा अन्यथाख्यात्यसत्ख्यात्यन्यतरपर्यायत्वमेव निर्विषयख्यातेरिति। आत्मादिविषये वक्तव्यं वृत्तौ द्रष्टव्यम्। क्षेत्रिणां = बद्धानाम्। सर्वत्राभावाद्वेति। श्लोके सर्वथेत्यस्य अत्रेत्येतत्प्रतिनिर्देशरूपतया सर्वत्रेत्यत्र

ख्यातिरलीकख्यातिर्वा स्यादिति न निर्विषयख्यातिसिद्धिरित्युत्तरार्धेनाह **अत्रेति** । एषा—भ्रान्तिशब्दार्थो बोधः । स च निर्विषयोऽपि सविषयत्वेन भातश्चेत् अन्यथाख्यातिस्वीकारः । निर्विषयतया भाने तु प्रवृत्त्यादिहेतुत्वं न स्यादिति भावः ॥ **इति निर्विषयख्यातिभङ्गः ॥ ३० ॥**

**(२·6) प्रत्यक्षादित्रयं च स्मृतिरिति च मतिः श्रुत्यभीष्टा चतुर्धा ;**
**प्रत्यक्षं तत्र साक्षात् प्रतिपत् ; अनुमितिर्व्याप्यतो व्यापके धीः ।**
**शाब्दी वाचाऽर्थबुद्धिः ; स्मृतिरपि कथिता संस्क्रियामात्रजा सा ;**
**येषामिष्टाऽन्यथाधीः, पृथगभिदधिरे तैरिहान्येऽपि भेदाः ॥ ३१ ॥**

प्रमाणाप्रमाणविभागप्रसङ्गात् ख्यातौ वादिभेदोक्ता विकल्पाः प्रत्युक्ताः । अथ श्रुत्याद्यभिमतं बुद्धेश्चातुर्विध्यमाह **प्रत्यक्षादीति**। श्रूयते हि, "स्मृतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्" इति । ऐतिह्यमिह शाब्दज्ञानम्, औचित्यात् । आह च भगवान् **मनुः**—"प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् । त्रयं सुविदितं कार्यं धर्मसिद्धिमभीप्सता ॥" इति ॥ तज्जन्यायाः स्मृतेस्तदनुविधानात्, अधिकार्थासिद्धेश्च पृथगनुक्तिः । यथोद्देशं पादद्वयेन लक्ष्यते । अत्र—उक्तेषु चतुर्षु । प्रत्यक्षमिह साक्षात् **प्रतिपत्** बुद्धिः । तस्याः साक्षात्त्वं नाम लैङ्गिकत्वशाब्दत्वस्मृतित्वरहितज्ञानत्वम् । तेन मुक्तादीनां धर्मभूतज्ञानेषु धर्मिज्ञाने

---

*टी*— पर्यवसानमिति भावः । एवं भ्रान्तिविषये वादिनां वर्त्मानि विचारितानि ॥ ३० ॥

अत्र सर्वे बुद्धेः प्रमितिप्रमितिरूपेण द्वैविध्यमेतावदुपपादितमासीत् । तत्राप्रमितिरूपैकज्ञानासद्भावपक्षश्च दर्शितः । प्रकारान्तरेण बुद्धेश्चातुर्विध्यं स्वीकृतमथ निरूपयति प्रत्यक्षेति । प्रत्यक्षमनुमितिः शाब्दज्ञानमित्येषां त्रयम् । अस्य त्रयस्यानुभव इति सामान्यं नाम तद्विलक्षणा स्मृतिः चतुर्थी । एवं मतिः चतुर्धा=विधाचतुष्टयवत्तया श्रुत्यभीष्टा । अनुभवत्रैविध्यं विहाय, प्रत्यक्षमात्रविधावत्त्वं प्रत्यक्षानुमितिविधाद्वयवत्त्वं प्रत्यक्षानुमित्युपमितिशब्दज्ञानार्थापत्त्यनुपलब्धिरूपविधाषट्कवत्त्वादि च प्रमाणविरोधादुपेक्ष्यमिति भावः । अनुभवसामान्यलक्षणं तु स्मृतिभिन्नं ज्ञानमिति। प्रत्येकं लक्षणमाह प्रत्यक्षमिति । अत्र=चतुष्टये प्रत्यक्षं साक्षाद्रूपा प्रतिपत्=बुद्धिः । विषयेऽपि साक्षात्पदप्रयोगात् तद्व्यावृत्तये प्रतिपदिति । अनुमितिस्तु व्याप्यत्वेनज्ञाततद्धेतुजन्या व्यापकत्वेनज्ञातसाध्यविषयिणी धीः । व्याप्तिज्ञानकरणकं ज्ञानमनुमितिः । शाब्दीत्यत्र धीरित्यनुषङ्गः । शाब्दबोधात्मकं ज्ञानं तु पदार्थस्मरणाकांक्षायोग्यतादिज्ञानसहकृतवाक्यरूपवाग्ज्ञानजन्या अन्वितार्थबुद्धिः। स्मृतिलक्षणं तु संस्कारमात्रजन्यज्ञानत्वम् । संस्क्रिया=संस्कारो भावनाख्यः। सेत्यस्य धीरित्यर्थः । ननु भ्रमसंशयादिविभागं विहाय चातुर्विध्यं कथमुच्यत इत्यत्राह येषामिति । यथार्थं सर्वविज्ञानमिति प्रागुक्ततया भ्रमादिस्थलेऽपि अयथार्थज्ञानान्तरवारणात् उक्तं चातुर्विध्यं सुस्थम् । ये त्वेकदेशिनः अन्यथाख्यातिं रोचयन्ते, तैः प्रत्यक्षानुमितिशाब्दबोधस्मृतीनां प्रमित्यन्यथाख्यातिरूपेण द्वैविध्यम्, अन्यथाख्यातौ च संशयविपर्ययतर्कभेदात् त्रैविध्यञ्च वक्तव्यम् । तर्कपदमारोपसामान्यपरम्। विपर्ययमात्रे अन्यथाख्यातिव्यवहारस्तु प्रामाण्यभ्रमास्पद[निश्चयरूप]त्वादिति ।

ऐतिह्यशब्दस्य अज्ञातकर्तृक-पारम्पर्यागतार्वाचीनशब्दविशेषे प्रयोगेऽपि इह शब्दसामान्यपरत्वं तत्रापि शब्दजन्यबोधपरत्वञ्च साहचर्यबलात् स्वीकर्तव्यमित्याशयेनाह शाब्दज्ञानमिति । मनुवाक्यं तु करणपरम् । विविधागमम्=अपौरुषेयं तदुपजीवि पौरुषेयञ्चेति द्विविधागमघटितम् । यथोद्देशमिति । प्रथमपादनिर्दिष्टक्रमेण द्वितीयतृतीयपादाभ्यां लक्षणमुच्यते इत्यर्थः । ननु इन्द्रियसंनिकर्षजन्यत्वमिति लघुलक्षणं परित्यज्य किमित्येवं प्रयास इत्यत्राह तेनेति । धर्मिज्ञाने=सर्वेषामात्म-

चानुस्मृतिः। वैशद्यमात्रं साक्षात्त्वमिति तु अव्याप्तमतिव्याप्तं च ; सुषुप्त्यादौ अविशदात्मस्वरूपभानस्य परोक्षज्ञानेष्वपि प्रकाशांशवैशद्यस्य च भावित(भाषित?)त्वात् । वैशद्यविशेषः साक्षात्त्वमिति तु दुर्विवेचम् ।

ननु लैङ्गिकादिज्ञानानां स्वात्मनि साक्षात्त्वमस्ति वा न वा, आद्ये लिङ्गादिजन्ये कथं तदभावलक्षणं साक्षात्त्वम् ? न च तत्र तज्जन्यत्वं नास्ति, अजन्यत्वेनानादित्वप्रसङ्गात् । न चैकस्य निरंशस्य वेद्यांशत आगन्तुकत्वम् अंशान्तरतश्चानादित्वमिति श्रद्धेयम् (श्रद्धातव्यम्) । न द्वितीयः ; प्रत्यक्षज्ञाने स्वात्मनि प्रत्यक्षत्वाभावप्रसङ्गात् । न ह्यक्षजन्ये लिङ्गादिजन्ये वा ज्ञाने स्वात्मनि कश्चिद्विशेषो दृश्यत इति ॥ अत्र ब्रूमः । ये खल्वाहुः—"सर्वविज्ञानहेतूत्था मितौ मातरि च प्रमा । साक्षात्कर्तृत्वसामान्यात् प्रत्यक्षत्वेन संमता ॥" इति, तान् प्रति अयं पर्यनुयोगः शोभते । ये तु लैङ्गिकादिज्ञानेषु स्वात्मस्वविषय-

---

वी-स्वरूपे। इत्थंभूतं साक्षात्त्वं तत्त्वरत्नाकरोक्तम्, "आपरोक्ष्यञ्च संविदः व्यवहार्यर्थसंवन्धिज्ञानजत्वविवर्जनम्। 'पारोक्ष्यं व्यवहार्यान्तर्गतवस्तुवेदनापेक्षम्...तदन्तर्गतलिङ्गाद्यपेक्ष्य...' इति। साक्षात्त्वं जातिरिति प्रमेयसंग्रहे । अस्माभिः पृथग्जात्यस्वीकारात् धर्मविशेषतया तन्निर्वचनमेव तत्रापीष्टं मन्तव्यम् । आपरोक्ष्यं विशदावभासत्वमिति वरदविष्णुमिश्रोक्तिः । तदवलम्बनेन अस्तु वैशद्यं निर्दुष्टमिति शंकायामाह वैशद्येति । विशेषशब्दः शाब्दबोधादिगत-व्याख्यानाद्यधीनवैशद्यवारणाय ।

भावितत्वादिति। भाषितत्वादिति युक्तम्। भाष्ये प्रमाणानुपपत्तौ भावरूपाज्ञानानुभवनिरसनावसरे, "सकलावभासो विशदावभासः ; कतिपयविशेषरहितावभासोऽविशदाविभासः... यश्चांशः प्रतिपन्नः तस्मिन्नंशे तद्विषयप्रकाशो विशद एव । अतः सर्वत्र प्रकाशे अवैशद्यं न संभवति" इति भाषितम्। "तस्मै तमसः पारं दर्शयति भगवान् सनत्कुमारः" इत्यत्र दर्शनं विशदव्युत्पत्तिः ; न तु प्रत्यक्षमित्युक्तम्। तेन परोक्षेऽपि वैशद्यमस्ति ।

दुर्विवेचमिति । ननु भावनाप्रकर्षमूलं विशदज्ञानं दर्शनमिति व्यवह्रियते । तत्र साक्षात्त्वं वैशद्यं विजातीयमङ्गीकर्तव्यम्। ज्ञानाकरणकज्ञानत्वमेव साक्षात्त्वमिति प्रागुक्तपक्षस्तत्र न भवति। तस्य दर्शनस्य स्मृतिसंततिरूपत्वात् अनुभवादिरूपज्ञानकरणकत्वात्। तत्त्वरत्नाकरे व्यवहार्यान्तर्गतवस्तुज्ञानानपेक्षत्वं यदुक्तम्, तत् स्मृतावप्यस्ति ; अनुभवविषयस्य सर्वस्य स्मृतिविषयत्वसंभवात्। परंतु स्मृतिव्यावृत्तये प्रत्यक्षलक्षणे अनुभवत्वं निवेश्यमिति तदाशयः। प्रकृते दर्शनसमानाकारसंततौ साक्षात्त्वसंपत्तये अनुभवत्वानिवेशेन तत्समन्वयविवक्षायां तु दर्शनरूपत्वरहितप्रथमादिस्मृतावपि साक्षात्त्वापत्तिः स्यात्। अतः साक्षात्त्वं वैशद्यातिशयरूपमन्यदेवेति चेत्—उच्यते । तस्य वैशद्यातिशयस्य दुर्विवेचत्वात् भट्टारकाद्यभिमतं ज्ञानाकरणकज्ञानत्वमेव साक्षात्त्वम् । विशदस्मृतौ तु न साक्षात्त्वं साक्षात्। भाष्ये दर्शनसमानाकारेति साक्षात्कारसादृश्यस्यैवोक्ततया तदनुगतसाक्षात्त्वनिर्वचनस्य तदनभिप्रेतत्वप्रतीतेः । अतो मुख्यं साक्षात्त्वं ज्ञानाकरणकज्ञानत्वमेव । विशदस्मृतौ तत्साम्यञ्च, यथा रजतादिभ्रमे अन्यथाख्यातिपक्षे दोषरूपाज्ञायमानकरणकत्वप्रयुक्तः प्रत्यक्षत्वव्यवहारः, यथा च योगजशक्त्यधीने अन्यान्यज्ञाने शक्तिरूपाज्ञायमानकरणकत्वप्रयुक्तः प्रत्यक्षत्वव्यवहारः, तथा भावनाप्रकर्षरूप—अज्ञायमानकरणकत्वप्रयुक्त एव दर्शनत्वव्यवहार इति ।

स्वात्मनि=स्वस्वरूपे । कथमिति । भावाभावयोर्विरोधादिति भावः । न च तत्रेति । ज्ञानांशे इत्यर्थः। अंशोक्तिमेव निरस्यति न चैकस्येति। निरंशस्येति। निरंशत्वादित्यर्थः। द्वितीयः= ज्ञानस्वरूपे साक्षात्त्वं नास्तीति पक्षः। ये त्विति। सर्वेणापि विज्ञानेन 'घटमहं जानामि, अनुमिनोमि, स्मरामि'

विभागानादरेण ज्ञातकरण-संस्कारमात्रयोरन्यतरजन्यज्ञानत्वेन परोक्षत्वं निर्धारयन्ति, न तान् प्रत्यमौ।

श्लो— अन्ये तु भ्रमसंवित्तौ सत्यासत्यार्थते यथा। प्रत्यक्षत्वपरोक्षत्वे तथैकत्राऽऽहुरंशतः॥

अनिर्धारितसाक्षात्त्वैरत्र वक्तुं न शक्यते। बुद्धावेकत्र साक्षात्त्वं परोक्षत्वाविरोधतः॥

परोक्षेतरबोधत्वं साक्षात्त्वमिति चेन्मतम्। स्वस्य स्वान्यत्ववैधर्म्यात् साक्षात्त्वाभाव इष्यताम्॥

अनादिबुद्धिसाक्षात्त्वं कुतस्त्यमिति चेन्न; तत्। कारणेनानपेक्षत्वात्; प्रमाणं पुनरागमः॥

श्रूयते हि, 'कर्माध्यक्षस्सर्वभूताधिवासस्साक्षी चेता केवलो निर्गुणश्च' इति। स्मर्यते च 'नैव किंचित् परोक्षं ते' इत्यादि। 'पश्यत्यचक्षुः' इत्यादिभिरपि सर्वदर्शित्वं सिद्धमिति। अनुमितिरिति लक्ष्यपदम्। **व्याप्यतो व्यापके धीरिति** लक्षणपदम्। व्याप्यतया प्रतिसन्धीयमानात् तद्व्यापकतया सामान्यतः प्रसिद्धस्यार्थस्य विशेषतोऽवगतिरनुमितिरित्यर्थः। **शाब्दीत्यत्र** धीरिति योज्यम्। **वाचा** वाक्येन। **अर्थबुद्धिः** विशिष्टार्थधीः। **स्मृतिः** लक्ष्यम्॥ ननु स्मृतिलक्षणे संस्कारमात्रजन्यत्वमसंभवि; एकहेतुजन्यस्य कस्याप्यभावात्। अत्र तु तथाऽभ्युपगमे संस्कारोद्बोधकादिभिरपि नैरपेक्ष्यप्रसङ्गात्। न चैवमस्त्विति युक्तम्; अतिप्रसङ्गात्। उत्पन्नस्थिरसंस्कारस्य च प्रत्ययान्तराव्यवहितस्मृतिसन्ततिप्रसङ्गात्। सुषुप्त्याद्यभावप्रसङ्गश्चेति॥ मैवम्; न ह्यत्र साधारणकारणानां सहकारिणा च व्यवच्छित्त्यै मात्रशब्दः; किंतु पृथग्बोधजननसमर्थतत्तदसाधारणकारणानपेक्षत्वार्थम्; मनसोऽपि ज्ञानोत्पत्तौ साधारणकारणत्वात् न दोष इति। मात्रशब्दः प्रत्यभिज्ञाव्यवच्छेदार्थः। ननु सन्ति संशयादयोऽपि मतिभेदाः; किं ते न विभज्यन्त इत्यत्राह **येषामिति**। अयं भावः— यथार्थं सर्वविज्ञानमिति पक्षेण धीचातुर्विध्यमुक्तम्। अन्यथाख्यातिपक्षे तु संशयादिभेदाश्च वक्तव्याः। तद्व्यवच्छेदाय प्रत्यक्षादिलक्षणे प्रमितिशब्दः प्रयोक्तव्य इति॥ **इति प्रत्यक्षादिप्रमाणविभागलक्षणे ॥३१॥**

---

श्री— इत्याद्याकारेण ज्ञानस्य ज्ञातुश्च ग्रहणं क्रियते। स ग्रहणांशः साक्षात्काररूपः। विषयग्रहणं तु यथायथं परोक्षमपरोक्षञ्चेत्यर्थः। एवं वदतां प्राभाकरादीनां पक्षे एकस्मिन्नेव ज्ञाने साक्षात्त्वपरोक्षत्वसमावेशः स्यादिति दोषः; न त्वस्मन्मते। ज्ञानस्य ज्ञातुश्च स्वयंप्रकाशत्वात् प्रतिज्ञानं तयोर्विषयत्वाभावात्। स्वप्रकाशत्वेऽपि परोक्षत्वमेवेष्टं ज्ञानकरणकत्वे इति भावः। अनिर्धारितेति। परोक्षत्वाविरोधेन साक्षात्त्वनिर्वचनसंभवे एकत्रोभयसमावेश इष्येत। परोक्षत्वापरोक्षत्वरूपभावाभावात्मकतया व्यवहारात् परोक्षज्ञाने कुत्रापि साक्षात्त्वं नेष्टमित्यर्थः। तर्हि अज्ञायमानं यत् तत्करणकज्ञानत्वं साक्षात्त्वमिति अनादिनित्येश्वरज्ञानयोः साक्षात्त्वं न स्यादित्यत्राह अनादीति। प्रमाणं पुनरागम इति। आगमप्रामाण्यात् तत्र साक्षात्त्वमेष्टव्यम्। 'सदा पश्यन्ति सूरयः', 'साक्षी चेता' इति श्रुतेः। अतो ज्ञायमानकरणाजन्यज्ञानत्वं साक्षात्त्वमितीष्यते; न त्वज्ञातं यत् करणं तज्जन्यत्वमिति। परोक्षज्ञानेऽप्यपरोक्षत्वमतो नेति। प्रत्यभिज्ञाव्यवच्छेदार्थ इति। संस्कारमात्रजन्यत्वं नाम संस्कारेतराजन्यत्वे सति संस्कारजन्यत्वम्। अत्र विशेषणदलानन्वयादसंभवाशंका संस्कारेतरासाधारणकारणकत्वाभावे सतीति परिष्करणेन परिहृता। दलस्यावश्यकत्वे किल परिष्करणम्; दलमेव कुत इत्यत्र प्रत्यभिज्ञावारणं दलकृत्यमित्युक्तम्॥ ३१॥

(257) ईदृक्त्वात्यन्तशून्ये न हि मिषति मतिः; नापि युक्तिस्तथात्वे;
सामग्रीभेदवेद्ये पृथगवगतिरस्त्वत्र नैषाऽन्यथात्वात् ।
धीत्वादेर्वा विशिष्टं प्रथयति जनिता बुद्धिराद्याक्षयोगैः;
तस्मात् संस्कारशून्येन्द्रियजनितमतिर्निर्विकल्पेति वाच्या ॥ ३२ ॥

प्रमाणज्येष्ठतया प्रथमोद्दिष्टलक्षितस्य प्रत्यक्षस्य निर्विकल्पकसविकल्पकविभागमात्रं सर्वानुमतं सिद्धं कृत्वा निर्विकल्पकमविशिष्टविषयमिति परोक्तं निर्मूलयति ईदृक्त्वेति । अयं भावः— अप्रत्यक्षा बुद्धिरिति वादं परिहरिष्यामः । प्रत्यक्षत्वपक्षे तु नीलपीतादिवत् तत्स्वरूपमपि यथोल्लेखं निर्धार्यम् । तत्र न तावत् प्रथमाक्षसन्निपातसमनन्तरमविशिष्टविषया मे बुद्धिर्जातेति पामरः पण्डितो वा, सावधानोऽनवहितो वा कश्चिद्विजानन् व्याहरन् वा दृश्यते । न च निर्विकल्पकान्तरेण तद्ग्रहणं परैरभ्युपगम्यते । एवं सविकल्पकेनापि । तद्धि निर्विकल्पकविषयं विशिष्टं गृह्णाति; न तु निर्विकल्पकम् । यत्तु पठ्यते, "अस्ति ह्यालोचना(न)ज्ञानं प्रथमं निर्विकल्पकम् । बालमूकादिविज्ञानसदृशं

---

व्री— साक्षात्काराश्रयज्ञानरूपप्रत्यक्षे सविषयके निर्विकल्पकसविकल्पकभेदः तार्किकमीमांसकादिसंमत एव । परं तत्तत्स्वरूपविवेचने परापेक्षया स्वमते वैलक्षण्यं स्थितं स्थापयितुं परमतं निरस्यति ईदृक्त्वेति । ईदृक्त्वम् इत्थन्त्वं किञ्चिद्विशेषणविशिष्टत्वम् । इदमित्थमिति हि सर्वा प्रतीतिरुपजायते । अतः प्रकारसामान्याभाववती मतिर्न मिषति=न प्रत्यक्षेणानुभूयते । नापि तथात्वे=कस्याश्चिन्मतेः प्रकारात्यन्तशून्यत्वे युक्तिः=अनुमानमस्ति । ननु, 'विशिष्टज्ञानं विशेषणज्ञानपूर्वकं विशिष्टज्ञानत्वात् सुरभि चन्दनमिति ज्ञानवत्' इत्यनुमानमस्तीत्यत्राह सामग्रीति । अत्र भिन्नसामग्रीवेद्यप्रकारकत्वमुपाधिः । चन्दनग्राहकेन्द्रियभिन्नेन्द्रियग्राह्यत्वात् सौरभस्य, तत्र सौरभज्ञानं पृथक् पूर्वमपेक्षितम् । अन्यथा विशिष्टज्ञाने विशेषणस्य सौरभस्य भानायोगात् । तत्र पृथगवगतिः प्रागस्तु । न तु कणादोक्ता, "समवायिनः श्वैत्यात् श्वैत्यबुद्धेश्च श्वेते बुद्धिः ते एते कार्यकारणभूते" इति एकसामग्रीवेद्यस्थलेऽपि पृथगवगतिः । अत्र अन्यथात्वात्=गोतद्रूपगोत्वादेरेकेन्द्रियग्राह्यत्वात् इयं गौरिति विशिष्टज्ञानमेव प्रागिति एषा=पृथगवगतिर्न । अनुमानेनापि निर्विकल्पकस्य विशिष्टविषयकत्वमेव सुवचम्—आद्याक्षयोगैः प्रथमाक्षसंनिकर्षैर्जनिता=उत्पादिता चाक्षुषस्पार्शनादिधीः विशिष्टं प्रथयति=विशेषणविशिष्टविषयिणी, धीत्वात् सविकल्पकवदिति । ननु निर्विकल्पकज्ञानं विशिष्टविषयकमित्येतत् व्याहतार्थमित्यत्राह तस्मादिति । तस्मात्-ईदृक्त्वात्यन्तशून्यत्वाभावात् निर्विकल्पकमिति शब्देन किञ्चिद्विशेषणरहितधर्मिज्ञानमेव वाच्यम् । परंतु सविकल्पकस्यापि जातिगुणादिषु किञ्चिद्विषयकस्यान्याविषयकत्वसत्त्वात् निर्विकल्पकत्वापत्तिः । तस्मात् संस्कारनिरपेक्षेन्द्रियजन्यज्ञानमेव तत्पदवाच्यमिति तथात्वमेव तल्लक्षणम् । अतः इयं गौरिति गोत्वविशिष्टगोप्रत्यक्षं निर्विकल्पकम् । इयमपि गौरिति पूर्वानुभूतगोव्यक्तिसंस्कारसापेक्षज्ञानं सविकल्पकमिति भेदः ।

अप्रत्यक्षेति । निर्विकल्पकमतीन्द्रियम्; अथाप्यनुमानसिद्धं प्रतिसविकल्पकं पूर्वं जायमानमिति तार्किकाः । स्वप्रकाशत्वात् बुद्धेरिन्द्रियनिरपेक्षमेव प्रकाशमानत्वात् बुद्धिप्रभेदाः सर्वेऽपि प्रकाशा एव । जीवनयोनियत्नस्तु न स्वीकृतः इति स्वाशयः । अस्तु प्रत्यक्षत्वं तार्किकनिर्विकल्पज्ञानस्येत्यत्र तदसंभवं विस्तरेण दर्शयति प्रत्यक्षत्वपक्षे त्विति । प्रत्यक्षं द्विविधं निर्विकल्पकसविकल्पकभेदेनेति सर्वसंमतत्वेन निर्विकल्पकविषयकप्रत्यक्षं निर्विकल्पकं वा सविकल्पकं वेति विकल्प्य दूषयति न चेति । न तु निर्विकल्पकमिति । इयमपि गौरिति सविकल्पकज्ञानं पूर्वज्ञातनिर्विकल्पकविषयभूतगोद्रव्यादि-

शुद्धवस्तुजम् ॥" इति, तदपि डिम्भविप्रलम्भनम् । निदर्शनं च विशिष्टविषयमेव, बालमूकपश्वादीनां जातिगुणादिविशिष्टवस्तुग्रहणाभावे तत्तन्नियतप्रवृत्त्यादिभङ्गप्रसङ्गात् । शुद्धवस्तुजत्वं च वस्तुजत्वमात्रं वा, असहितवस्तुजत्वं वा, अनारोपितवस्तुजत्वं वा, निर्विशेषवस्तुजत्वं वा । नाद्य, सविकल्पकसाधारण्यात् । न द्वितीय; अनेकव्यक्तिविषयैकनिर्विकल्पकसंभवात्, जातिगुणादीनां च धर्मिणा सह मिथःसंबन्धरहित[स्य] ग्रहणस्य कैश्चिन्निर्वाहात् । न तृतीय, सविकल्पकसाधारण्यादेव । न चाऽऽरोपितवस्तुजत्वं सविकल्पकस्य कैश्चिदुपन्यस्तम्, यतस्तद्व्यवच्छेदार्थं शुद्धवस्तुजत्वोक्तिः शोभेत । न चतुर्थ; अपसिद्धान्तापातात् । न हि निर्विकल्पकगृहीतं वस्तु निर्विशेषमिति वस्सिद्धान्त, तदात्मकजात्यादिविशेषाभ्युपगमात् । अन्तर्हितसुगतमतानभ्युपगमाच्च ॥ धर्मजन्यत्वे सति धर्मिजन्यत्वं विवक्षितमिति चेन्न, धर्मधर्मितादात्म्यवादिना भवता तथोक्ते पांसुविक्षेपप्रायत्वादित्यास्तामेतत् ॥ मा भूदुपलम्भतस्तादृशधीसिद्धि; युक्तिस्तु स्यादित्यत्राह नापीति । न ह्यादौ अविशिष्टग्रहणे काचित् युक्ति, तदभावे वा काचिदयुक्तिरिति भाव । नन्वस्ति युक्ति, सर्वत्र हि विशिष्टप्रत्ययस्य विशेषणविशेष्यधीपूर्वकत्वं दृष्टम् । अतः प्रथमसविकल्पकमपि तथा, अन्यत्र (अन्यथा ?) विशिष्टप्रत्ययस्य विशिष्टप्रत्ययपूर्वकत्वनियमादनवस्थाप्रसङ्ग । अतोऽवसीयते प्रथमाक्षसन्निपातात् प्रत्येकधीरिति — तत्राह सामग्रीति । अय भाव — यत्र विशिष्टप्रत्ययस्य पृथग्विशेषणविशेष्यग्रहणपूर्वकत्वम्, तत्र भिन्नसामग्रीवेद्यत्वनिबन्धनस्तथाभाव; सुरभिचन्दनत्व(सुरभित्वचन्दन ?)योरन्योन्यनिरपेक्षभिन्नेन्द्रियग्राह्यत्वात् । तदपेक्षस्तु पश्चात् कुतश्चित् सुरभि चन्दनमिति विशिष्टप्रत्यय । स तु चाक्षुषो

---

व्री— ग्राहकमेव, न तु निर्विकल्पज्ञानग्राहकमित्यर्थ. । आलोचनाज्ञानम् = 'आलोचनं व्यापार इन्द्रियाणाम्' इति सांख्यादिव्यवहृतमालोचनात्मकं ज्ञानम् । तैः 'विकल्पस्तु मनसः' इति सविकल्पकज्ञानं मनोधीनसंस्कारसापेक्षमित्युच्यते । तेन बहिरिन्द्रियवारणं नेष्टम् । किंतु संस्कारसाहित्यमात्रविवक्षा । निदर्शनञ्चेति । बालमूकादिपूपलभ्यमानं ज्ञानमित्यर्थः । अस्तिहीति प्रसिद्धिद्योतनात् बालादिगतं ज्ञानमनुभूयमानमेवोच्यते, न त्वतीन्द्रियमिति न भवदिष्टनिर्विकल्पकप्रसक्तिरिति भाव । शुद्धवस्तुजमिति प्रयोगात्, बालमूकेति व्यवहारपाटवरहितपुरुषनिर्देशाच्च तन्निष्टज्ञानस्य वाचकशब्दाविषयत्वमेव बोध्येत । तेन शब्दार्थतादात्म्यं, ज्ञानसामान्यस्य वाचकविषयत्वञ्च वदतो वैयाकरणस्य मतं निरस्येत । यथा अव्यपदेश्यमिति पदेन प्रत्यक्षसूत्रे वात्स्यायनभाष्ये । अत्र चतुस्त्रिंशादिश्लोके चेदं व्यक्तम् । न तु निष्प्रकारकज्ञानसद्भावोपपादकत्वमस्येत्यान्तरो भाव. । शुद्धवस्तुजशब्दार्थविकल्पे असहितवस्तुजमिति कल्पे शब्दसाहित्यमप्यन्तर्भावितं मन्तव्यम् । निष्प्रकारकज्ञानं निर्विकल्पकं सप्रकारकं सविकल्पकमिति तार्किकादिपक्षः । सप्रकारकमेव निर्विकल्पकमपि । पूर्वगृहीतविषयसंस्कारसहकारे सविकल्पकमिति सिद्धान्त । अस्ति ह्यालोचनेति कारिकया पक्षान्तरमपि गम्यते—मनसा वाचकशब्दस्मरणपूर्वं जनितं सविकल्पकम्, शब्दाविषयकं सर्वं निर्विकल्पकमेवेति । जातिगुणादीनामिति । संनिकर्षसद्भावात् निर्विकल्पके जातिः गुण. द्रव्यञ्चाविशेषेण भासते, परतु न तत्र प्रकारविशेष्यभाव इत्यपि किल तार्किकसरणिरिति भावः । तदात्मकजात्यादीति । धर्मधर्मितादात्म्यस्योपर्युक्त्या धर्म्यात्मकजात्यादीत्यर्थ. । अनेनेदं बौद्धमीमांसकादेरपि खण्डनमिति ज्ञेयम् । अन्तर्हितसुगत.= प्रच्छन्नबौद्ध । अन्यत्रेति परोक्षज्ञानेषु अनुमित्यादिषु व्याप्तिज्ञानादिरूपविशिष्टज्ञानपूर्वकत्वनियमादत्र प्रत्यक्षेऽपि तथा स्वीकारेऽनवस्था स्यादित्यर्थः स्यात् ।

मानस आनुमानिको वेत्यवसरे चिन्त्यम् ॥ नन्वेकेन्द्रियवेद्येष्वपि दण्डदेवदत्तादिषु कदाचित् विशिष्ट प्रत्ययस्य पृथक्प्रत्ययपूर्वकत्वं दृष्टम् ॥ सत्यम्, तत्रापि सामग्रीप्रवाहवशात् प्रथम प्रत्येकग्रहणसामग्रीप्रवृत्ति। अनन्तर विशिष्टग्रहणमपि न पृथग्ग्रहणकारणकम्। यत्र तु विशेषणविशेष्यतत्सम्बन्धाना युगपत् योग्यै केन्द्रियसन्निधाना विशिष्टप्रत्यय, तत्र न पृथग्ग्रहणपूर्वकत्वम् अस्तीति दृष्टम् ॥ अत एव तत्राप्यनुमीयत इति चेन्न, भिन्नसामग्रीवेद्यत्वोपाधेर्निस्तारात्। विशिष्टप्रत्ययत्वं चानादिविशिष्टप्रत्यये व्यभिचरितम्। न चाविशिष्टविषयमेवेश्वरज्ञानम्, तेन कर्तृत्वानिर्वाहात् ॥ आदिमत्त्वे सतीति विशेष्यमिति चेत्, तत् कस्य हेतो? अनादेरनपेक्षत्वादिति चेन्न, आदिमतोऽप्येकसामग्रीवेद्यविषयस्य विशिष्टोल्लेखे पृथग्ग्रहण नैरपेक्ष्यात्। तदिदमभिप्रेत्याह *अत्र नैवेति। एकसामग्रीवेद्यविषये विशिष्टप्रत्यये कारणभूता पृथगवगतिर्ना* स्तीत्यर्थ। तत्र भिन्नसामग्रीवेद्यविषयत्वासम्भव हेतुमाह **अन्यथात्वादिति।** प्रतिप्रयोगमप्याह **धीत्वादेरिति।** आदिशब्देन धीशब्दवाच्यत्व-धीलक्षणयोगित्वयोर्ग्रहणम्। प्रथमाक्षसन्निपातजनिता बुद्धिर्विशिष्टविषया, धीत्वात् सप्रतिपन्नवदिति। आत्मस्वरूपप्रत्ययश्चाहत्वादिविशिष्टप्रकाशात्मेत्यङ्गीचक्रु ॥

किं तर्हि निर्विकल्पकस्योदाहरणमिति चेत्—प्रथमाक्षसंप्रयोगजमेव (सन्निपातजमेव)। कथ तस्य निर्विकल्पकशब्दवाच्यत्वम् ॥ विवक्षितविकल्पाभावमात्रात्, अल्पधने दरिद्रव्यवहारवत्। ननु तर्हि कल्पाभावतारतम्यात् व्यवहारानियति स्यात्, न च व्यवस्थापक लक्षण दृश्यते, तत्राह **तस्मादिति।** अविशिष्टविषय प्रत्यक्ष निर्विकल्पकमिति परोक्तासम्भवादित्यर्थ। संस्कारनिरपेक्षेन्द्रियजन्या मतिर्निर्वि कल्पेति लक्षणसिद्धेर्नोक्तदोष इति भाव।

एतेन प्रत्यभिज्ञाया सविकल्पकत्वमेवेति अर्थादुक्त भवति ॥ ननु भाष्ये कथम्, 'निर्विकल्पक मेकजातीयेषु प्रथमपिण्डग्रहणम्, द्वितीयादिपिण्डग्रहण सविकल्पकम्' इति विभज्यते ॥ इत्थलक्षणो *न्नयनार्थमुदाहरणप्रदर्शनपरत्वादिति।*

*नन्विह विशिष्टविषयत्वसाधनम अविशिष्टविषयव्यवच्छेदाय। तस्याश्च सिद्ध्यसिद्ध्यो, तद्व्यवच्छेदो* दुश्शक ॥ मैवम्, सर्वत्र विधौ व्यवच्छेदावश्यम्भावाभावात्। प्रसिद्ध खलु केवलान्वयी, तादृश च साध्यम्। तादृशहेतुसाध्यानभ्युपगन्तॄणामपि तत्स्वरूप सिद्धम्। न च तद्विधिर्नास्ति। सति च तस्मिन्

---

*ॐ* स तु चाक्षुषो मानस आनुमानिको वेति। सुरभि चन्दनमिति चाक्षुषम् विशेष्यस्य चक्षुस्सन्निकृष्टत्वात्। सौरभस्य प्राक्क्षणे घ्राणगृहीतस्य ज्ञानलक्षणाप्रत्यासत्त्या तत्र विशेषणत्वमिति प्रथम पक्ष। उभयत्र परेन्द्रियसम्बन्धसम्पत्तये मानस इत्युक्ति। तदा सौरभप्रातिचन्दनदृष्ट्यनन्तरभावीद विशिष्ट ज्ञानम्। अस्य मानसस्य स्मरणत्वे विशिष्टानुभवस्य पूर्वमपेक्षितत्वात्, मनसा बाह्यमात्रविशिष्टानु भवस्य स्वातन्त्र्येणोत्पादनायोगाच्च प्रमाणान्तरस्यापेक्षिततया, चक्षुरुपनिरपेक्षमेव जायमानतया च आनुमानिक इत्युक्तम्। सौरभ च गन्धाश्रितम्, विलक्षणगन्धत्वात्, आश्रयान्तरानुपलम्भे सति साश्रय त्वादित्याद्यनुमान ग्राह्यम्। न पृथग्ग्रहणकारणकमिति। किंतु तत्त्वे युगपज्ज्ञातसर्वसन्निकर्षायत्तमे वेत्यर्थ। अयथा निशकलित धीग्रहणेऽपि वैशिष्ट्यग्रहणे मानाभावात्। धीत्वस्य स्वयप्रकाशत्व रूपत्वेऽप्यव्यभिचारमाह आत्मस्वरूपेति। नन्विहेति। विशेषणत्व हि व्यावर्तकत्वमितरव्यवच्छेद

नान्यव्यवच्छित्तिः, असंभवात् । अत्र तु विशिष्टविषयत्वं सविकल्पकादौ दृष्टम् । तदभावो घटादौ । तन्निषेधे च न सिद्ध्यसिद्धिविरोध इति ।

एतेन निर्विकल्पकमप्रमाणम्, अनवधारणात्मकत्वादिति लोकायतोक्त(तैरुक्त)मपि छिन्नमूलम्; हेत्वसिद्धेरिति ॥ इत्यविशिष्टविषयनिर्विकल्पकभङ्गः ॥ ३२ ॥

(258) लिङ्गाद्यव्यापृताक्षान्वयवति विषयेऽक्षार्थजन्यो विकल्पः;
संस्कारस्त्विन्द्रियाणामिह सहकुरुतां; तावता न स्मृतित्वम् ।
न स्यात् तस्यान्यथात्वं बहुविहतिहतैः कल्पनात्वादिलिङ्गैः;
स्याद्वाऽनैकान्त्यमेषामनियतिमविसंवादिबाधश्च धत्ते ॥ ३३ ॥

---

ळी—त्वम् । इतराप्रसिद्धौ कथं विशेषणत्वमिति भावः । अत्रत्विति । अन्यव्यवच्छेदो नाम अविशिष्टविषयकं यत् ज्ञानं तद्व्यवच्छेद इति न; किंतु विशिष्टविषयकत्वाभावस्य घटादौ दृष्टस्य व्यवच्छेद इति ॥

शून्यवादिमाध्यमिक-ज्ञानमात्रवादियोगाचारव्यतिरिक्ताः बौद्धाः बाह्यार्थवादिनः । तत्र वैभाषिकः प्रत्यक्षविषयत्वं बाह्यस्य ... अपि निर्विकल्पकमेव यथावत्प्रत्यक्षम्, स्वलक्षणरूपं व्यक्तिमात्रमेव तत्त्वम्, जात्यादिविकल्प कल्पनामात्रमित्याह । निर्विकल्पकमपि विशिष्टविषयकमेवेति पूर्वमुपपादनादपि स निरस्त एव । किञ्चिद्रूपनिर्विकल्पकस्वीकारवत् किञ्चिद्रूपसविकल्पकस्य तेनास्वीकृतत्वात् सर्वसविकल्पकाप्रामाण्यवादी स इह विशिष्य व्युत्पाद्यते लिङ्गेति । यथा निर्विकल्पकं तथा विकल्पः=सविकल्पकमपि अक्षात्=इन्द्रियात्, अर्थात्=बाह्यवस्तुतश्च जन्य एव । कुत्रेति चेत्, यत्र विषये अक्षान्वयः इन्द्रियसंनिकर्षोऽस्ति । न च आनुमानस्थले यथा चक्षुरादेः लिङ्गपक्षव्यापृतत्वमिन्द्रियस्य, न साध्येन संबन्धः, तथाऽत्रेन्द्रियस्यान्यत्रैव संनिकर्षः, न त्वत्रेति वक्तुं शक्यते । अतोऽन्यत्राव्यापृतस्याक्षस्यान्वयोऽस्तीति तज्जन्यमिदं वस्तुविषयप्रत्यक्षमेव । ननु सिद्धान्तिनैव संस्कारसापेक्षत्वस्योक्तत्वात् स्मृतित्वमेव स्यादित्यत्राह संस्कारस्त्विति । चक्षुस्त्वगादिकमिन्द्रियं संस्कारं सहकारितयाऽपेक्षत इति संस्कारः सहकुरुताम्=सहकारी भवतु । तावता कथं स्मृतित्वम्; संस्कारमात्रजन्यज्ञानत्वाभावात् । प्रत्यभिज्ञाप्रत्यक्षेऽतिव्याप्तिवारणाय मात्रेति निवेशितत्वात् । ननु सर्वविकल्पस्मृतित्ववादी प्रत्यभिज्ञां कथं प्रत्यक्षत्वेन मन्येत । अतो मात्रेति निवेशममृष्यमाणो न निराकर्तुं शक्य इति चेन्न—संस्कारजन्यतया स्मृतित्ववत् इन्द्रियजन्यतया प्रत्यक्षत्वस्यापि सत्त्वेनापलापायोगात् । स्मृतेरनुभवोपजीवित्वात् अनुभवत्वास्पदमंशं न स्मृतित्वमास्कन्देत् । अतो यावति संनिकर्षः तावति प्रत्यक्षमेवेति तदन्यांश एव संस्कारोपयोगात् तत्रांशे स्मृतित्वमस्ति न वेति विचारप्रसक्तावपि सर्वथा प्रत्यक्षत्वापलापः कथम् । उभयं विरुद्धमिति चेत्, त्यज्यतां तर्हि स्मृतित्वम्, अप्रधानांशोपक्षीणत्वात् । स्मृतस्यार्थस्य प्रत्यक्षेऽर्थे विशेषणतया भानम्, सौरभस्येव चन्दने चाक्षुषप्रत्यक्षे । ननु, 'विवादास्पदं घटादिविकल्पः विभ्रमः विकल्पत्वात् नीलं नभ इत्यादिविकल्पवत्' इत्यत्राह न स्यादिति । कल्पनात्वं=विकल्पत्वम् । विकल्पत्व निर्विकल्पकेतरत्व-संस्कारजन्यत्वादीनि लिङ्गानि बहुविहतानि=बहुविधविरोधदूषितानि । एतदनुमित्यपेक्षितसाध्य-हेतु-व्याप्ति पक्षधर्मतादिज्ञानानां विभ्रमत्वं मन्यसे, न वा । मन्यसे चेत्—कथं तैरिदं साधयितुं प्रवृत्तोऽसि । न मन्यसे चेत्—कथं सर्वविभ्रमत्वसाधनमिति । अतः एभिर्लिङ्गैः, अन्यथात्वं=विभ्रमत्वं न स्यात्=न सिध्येत् । एतदनुमित्युपयोगिज्ञानानां विभ्रमत्वासाधने विभ्रमत्वासंमतौ तत्र साध्याभावात् हेतुसत्त्वाच्च व्यभिचार इत्याह स्याद्वाऽनैकान्त्यमेषामिति ।

सौगतास्तु निर्विकल्पकमेव प्रत्यक्षम् , अर्थजत्वात् अर्थविषयत्वाच्च ; विकल्पस्तूभयरहितः ; अतो न प्रत्यक्षमिति ; तान् प्रत्याह **लिङ्गादीति** । अयमर्थः—लिङ्गशब्दबोधनानुपक्षीणेन्द्रियसंप्रयोगानन्तरं यो विशिष्टप्रत्ययो जायते, स इन्द्रियार्थसंप्रयोगजन्यः ; निर्विकल्पकवत् तदन्वयव्यतिरेकानुविधानात् । परैरपि प्रत्यक्षानुपलम्भाभ्यां कारणत्वव्यवस्थापनात् । अन्यथाऽतिप्रसङ्गात् । अत्र च पराभीष्टकारण-चतुष्केऽधिपत्यालम्बनयोरनन्यथासिद्धत्वात् । तदिह निर्विकल्पकवत् अर्थजत्वमर्थविषयत्वं च दुस्त्यजम् ।

ननु निर्विकल्पकस्य विकल्पहेतुत्वं किं साक्षात् , उत संस्कारद्वारा ? नाद्यः ; नायनरश्मिप्रवाहे प्रथम-चक्षुस्संयोगस्याऽऽशुतरविनाशित्वेन सविकल्पकपूर्वक्षणे अनवस्थानात् । संप्रयोगान्तरकाले च क्षणिकस्य निर्विकल्पकस्यापक्रान्तेः। संप्रयोगनिरपेक्षनिर्विकल्पकजन्यत्वे विकल्पस्यानिन्द्रियजन्यत्वापातात्। तत एवार्थ जत्वस्याप्यसिद्धेः । अप्राप्यकारित्वस्य भवद्भिरनङ्गीकाराच्च । नापि द्वितीयः ; संस्कारजन्यत्वे विकल्पस्य स्मृतित्वप्रसङ्गादिति । तत्राह **संस्कारैरित्यति** । **इह** सविकल्पके । अयं भावः—न वयं ज्ञानेऽपि त्वदिष्टं क्षणिकत्वमिच्छाम , येन संप्रयोगान्तरकाले अनवस्थाननियमः। तथात्वेऽपि संस्कारजन्यत्वमात्रेण न स्मृतित्वापत्तिः ; प्रत्यभिज्ञान्यायेन सहकारिमात्रत्वात् संस्कारस्य । अन्यथा प्रत्यभिज्ञाऽपि स्मृतिरेव स्यात् ॥ अस्त्विति चेन्न ; अननुभूतविशिष्टग्रहणात् । अन्यथा इन्द्रियसंप्रयोगस्य तत्राकारणत्वप्रसङ्गात् ॥ भवत्वत्र कारणत्वसहकारित्वयोर्विपर्यास इति चेत् , कुतोऽयं निर्णय ? स इत्युद्देशप्राधान्यादिति चेत् , न ; अयं स इति विपरीतप्रत्यभिज्ञायां तदभावात् ॥ त्वत्पक्षेऽपि कुतस्त्य प्रधानाप्रधानविभाग इति चेत्; अस्तु यतः कुतश्चित्; मा भूद्वा ; तथाऽपि संस्कारमात्रजत्वाभावात् प्रत्यभिज्ञायास्सविकल्पकस्य च स्मृतित्वं दुरुपपादम्॥

---

९१–ननु जात्यादीनामर्थक्रियाकारित्वाभावात् स्वलक्षणभूतानां व्यक्तीनामेवार्थक्रियाकारित्वरूपावि-संवादवत्त्वात् जात्यादीनामवस्तुत्वमिति बाधः क्रियत इत्यत्राह अनियतिमिति । अन्वयव्यतिरेक-बलात् व्यक्तीनामिव जात्यादीनामप्यर्थक्रियाकारित्वस्य वर्तमानत्वात् अविसंवादित्वमेव । तथा-भूतत्द्वाधस्त्वया क्रियमाणः अनियतिम्=अद्यतनस्थानां स्वलक्षणानामपि बाध्यतां सूते। कुहेतुना बाधो माध्यमिकोक्तरीत्या व्यक्तीनामपि तुल्य इति भावः ॥

प्रत्यक्षानुपलम्भाभ्याम्=अन्वयव्यतिरेकाभ्याम् । अधिपत्यालम्बनयोरिति । अधिपतिसह-कार्यालम्बनसमनन्तरप्रत्ययाश्चत्वारः प्रत्यक्षहेतवः । तत्राधिपतिः=इन्द्रियम् ; आलम्बनं=विषयः ; सहकारी आलोकः ; समनन्तरप्रत्ययः अव्यवहितपूर्वक्षणवर्तिज्ञानमित्येषु चतुर्षु अधिपत्यालम्बने सर्वप्रत्यक्षापेक्षिते प्रत्यक्षासाधारणे । तयोर्नैव क्षतिरित्यर्थः । अस्तु यतः कुतश्चिदिति । 'सोऽयं देवदत्तः', 'अयं देवदत्तः सः' इति द्विविधा प्रत्यभिज्ञा । उद्देश्यविधेयविशेषणभेदात् द्वैविध्यम् । यदि संस्कारजत्वात् स्मृतित्वं सन्निकर्षजत्वात् प्रत्यक्षत्वमिति उभयोः समावेशायोगात् इदं ज्ञान-द्वयमित्युच्येत, तर्हि, 'स देवदत्तः, अयं देवदत्तः' इति पृथग्विशेष्यभानं स्यात्। देशान्तरकालान्तर-संबन्धरूपतत्तायाः दृश्यमानदेवदत्तनिष्ठतया, एतद्दर्शनेन तत्संस्कारोद्बोधे तद्विशिष्टत्वेनैतत्स्मृति-संभवेऽपि धर्मिणः संनिकृष्टत्वात् समाने विषये प्रत्यक्षसामग्र्याः सर्वतः प्राबल्यात् , समानविषये अनुमितिसामग्र्या अतिदौर्बल्यवत् स्मृतिसामग्र्या अपि दौर्बल्यस्य कैमुत्यसिद्धत्वात् , विशेष्यस्य द्विर्भानाभावेन च विशेषणांशे स्मृतेः पर्यवसाने, स्मृतित्वानुभवत्वयोः समावेशायोगे च सति, सौरभघ्राणानन्तरभावितद्विशिष्टचन्दनज्ञानवत् इदं स्मरणानन्तरं प्रत्यभिज्ञानमिति वा स्वीकर्तव्यम्।

ननु अविसंवादि विज्ञानं प्रमाणम्; अविसंवादश्च बाधविरहः, स च नास्ति विकल्पस्य, स्वारसिकबाधाभावेऽपि नभस्स्थलमलिनतादिष्विव यौक्तिकबाधात्। यो विकल्पः, स विभ्रमः यथाविगीतः, तथा च जात्यादिविकल्प इति। न चात्र प्रत्यक्षविरोधादनुमानमेव दुर्बलमिति वाच्यम्—ज्वालैक्यादिषु प्रसङ्गादिति। एतद्दूषयति न स्यादिति। कल्पनात्वम् विशिष्टमादित्वम्। आदि-शब्देन निर्विकल्पकेतरत्वं संस्कारजन्यत्वमित्यादि गृह्यते। बहुविहतिहतैरिति हेतुगर्भम्। सन्ति ह्यत्र बह्व्यो विहतयः। तथा हि—कल्पनात्वादिति हेतुप्रयोगे तत्पक्षदृष्टान्तादिविकल्पाः पक्षीकृताः, न वा? नाद्यः, स्वयमेवाश्रयाद्यसिद्ध्यापादनात्। न द्वितीयः, पक्षव्यतिरिक्तस्यात्र सपक्षत्वासंभवेऽपि विपक्षत्वपरि-शेषात्। तथा च तत्र कल्पनात्वादिहेतुवृत्तेरनैकान्त्यमपरिहार्यम्। तदिदमाह स्याद्धाऽनैकान्त्यमेषामिति। एवं स्वाभिमतक्षणिकत्वाद्यनुमानसाध्यादिविकल्पपक्षीकारबहिष्कारयोरुक्तदूषणमनुसन्धेयम्।

यत्पुनराहुः—'विकल्पोऽवस्तुनिर्भासादसंवादादुपप्लवः' इति, 'तस्यां यद्रूपमाभाति बाह्यमेकमिवा-न्यतः। व्यावृत्तमिव निस्तत्त्वं परीक्षानङ्गभावतः॥' इति, तदप्यसिद्धहेतुकं प्रलोभनमात्रम्, विकल्प-विषयावस्तुत्वे समीचीनयुक्त्यभावात्। कूटयुक्तिभिस्तद्भावे योगाचारमाध्यमि कोक्तस्त्वदिष्टनिर्विकल्पक-विषयनीलादिस्वलक्षणानामपि निरस्ततापत्तेः। तदिदमभिप्रेत्याह अनियतिमिति।

नन्वर्थक्रियास्थितिमविसंवादं ब्रूमः। न च विकल्पविषयाणां जात्यादीनां काचिदर्थक्रियाऽस्ति; स्वलक्षणसापेक्षत्वे तस्यैव हेतुत्वोपपत्तेः, तन्निरपेक्षत्वे तेषां पृथगेव कदाचित् कस्याश्चिदर्थक्रियायाः साधकत्वप्रसङ्गात्। अतः कल्पनात्वादिहेतुभिरविसंवादिबाधः क्रियत इति चोद्यानुयोगः॥ मैवम्;

र्थे— स्मरणविलक्षणज्ञानोपयोगित्वं वा संनिकर्षसहकारिणः संस्कारोद्बोधस्य स्वीकर्तव्यम्। अतो धर्मात् धर्मिणः प्राधान्यात् इतरज्ञानकारणापेक्षया संनिकर्षप्राधान्याच्च प्रधानाप्रधानविवेकः। तर्हि प्रत्यभिज्ञादौ ज्ञानाकरणकत्वज्ञानकरणकत्वयोः समावेशः कथम्। विशेषणांशे पूर्वानुभवसंस्कारापेक्ष-त्वादिति चेत्—ज्ञाननिष्ठकरणत्वानधीनप्रकाशवत्त्वमपरोक्षत्वमित्याशयात्। यथाविगीत इति। अविगीत इति पदच्छेदः। स च शुक्तिरजतनभोमालिन्यादिभ्रमः। विगीतस्तु जात्यादिविकल्पो नोदाहरणं भवितुमर्हति।

निर्विकल्पकेतरत्वमिति। अत्र विकल्पनीयम्, हेतुघटकं निर्विकल्पकत्वं कीदृशम्? यदि निष्प्रकारकज्ञानत्वम्, तस्यास्मदनङ्गीकृतत्वात् उभयवादिसंमत्यभावात् अन्यतरासिद्धिः। प्रथमाक्ष-पातजविशिष्टज्ञानेतरत्वनिवेशे प्रथमे विशिष्टज्ञाने हेत्वभावात् भागासिद्धिः, साध्यानुमानस्य तत्रा-भावश्चेति। विहतीति। एवमप्रयोजकत्वमपि भाव्यम्। विकल्प इति। सविकल्पकम् उपप्लवः= भ्रमात्मकम्, अवस्तुप्रकाशकत्वात् संवादाभावाच्चेत्यर्थः। हेतुद्वयमप्यसिद्धम्। जात्यादेरवस्तुत्वे मानाभावात्, सफलप्रवृत्तेरेव दर्शनाच्च। तस्यामिति। व्यक्तौ यत् रूपं गोत्वादिसामान्यमाभाति, एकमिव=अनेकव्यक्त्यनुगतमिव, अन्यतः=महिषादितः व्यावृत्तमिव च, तत् परीक्षानङ्गभावतः= क्षोदक्षमत्वाभावात् विकल्पासहत्वात् निस्तत्त्वम्=अपारमार्थिकमिति रीत्याऽर्थो बोध्यः। सामान्यं तार्किकरीत्या नित्यमेकमनेकानुगतमस्तु; मा वा। लोकव्यवहारनिर्वाहाय स्वप्रवृत्तिव्याघातपरिहाराय च किञ्चिद्रूपमेष्टव्यमेव। हेतुसाध्यसामान्यधर्माभावे व्याप्त्यग्रहणादनुमानायोगात् सामान्यखण्डक-भवदनुमानस्य भङ्गात् भवत्प्रवृत्तेरेवायोगात्। अतः परीक्षायां तत्सिद्ध्या अनङ्गभावोऽसिद्ध एवेति।

तत्तत्कार्यापेक्षया नियतपूर्वभावित्वेन प्रत्यक्षानुपलम्भनिश्चितस्वभावानां जात्यादीनां तत्तदर्थक्रियाहेतुत्वस्य दुरपह्नवत्वात्। एतेन समर्थप्रवृत्तिहेतुत्वमविसंवाद इति स्थापने [अपि] विकल्पप्रामाण्यस्य न काचित् क्षतिः। विकल्पद्वारैव हि निर्विकल्पकस्य प्रवृत्तिहेतुत्वं मन्यसे। तदविसंवादाच्च वस्तुतदविसंवादवाचोयुक्तिः। अथ मणिप्रभाविषयमणिविकल्पन्यायेन विकल्पस्य परम्परया निर्विकल्पकविषयार्थप्रतिबन्धात् विवेकाग्रहप्रसक्तोऽयं तस्मिन् अविसंवादारोप.; न तु वस्तुतस्तस्य प्रामाण्यमिति—तर्ह्यनुमानस्यापि तथैव प्रसक्तिः॥ तदेव वस्तुतस्सौगतरहस्यमिति चेत्; प्रलीनं तर्हि अत्र प्रयुक्तैरनुमानैः। उपयोगविशेषादनुमानस्य पृथक् ग्रहणमिति चेत्; तद्भूयस्तया विकल्पस्यापि तदस्तु, न वा द्वयोरपीति निपुणमवसीयतामिति॥

इति सविकल्पकबाधपरिहारः॥ ३३॥

(259) शब्दात् प्रागर्थसिद्धेः, परमपि, च तयोरक्षभेदादिबोधात्
शब्दैक्ये वाच्यभेदादपि बहुषु पदेष्वेकवाच्यप्रसिद्धेः।
साम्यासत्त्वाद्ययोगात्, युगपदवगतेर्व्यक्तिजात्यादिशब्दैः
शब्दाध्यासो न युक्तः; प्रथयति विषयं किंतु संज्ञा तटस्था॥ ३४॥

---

*ल्ली*— अनियतिमविसंवादिबाधश्च सूते। त्वदनुमेयस्य *भ्रान्तित्वस्य* बाधः अविसंवादी सन् भविकल्पकाधीनप्रवृत्त्यादिसाफल्यात् प्रामाणिकस्सन् त्वदुक्तहेतौ अनियति=व्याप्त्यभावं सूते= फलयति। भवता क्रियमाणश्चाविसंवादिविषये बाधः अनियतिम्=अव्यवस्थां सूते। कतिपयसविकल्पक एव *भ्रान्तित्वस्य लोकसंमतत्वादिति*॥ ३३॥

एवं निर्विकल्पकस्य सविकल्पकस्य च विशिष्टविषयकत्वमबाधितत्वञ्चोपपादितम्। जातिगुणादिविषयकत्ववत् संज्ञाविषयकत्वमपि कदाचित् भवेत्। वैयाकरणास्तु नियमेन शब्दभानं मन्यन्ते। तदर्थं शब्दार्थयोस्तादात्म्यमपि स्थापयन्ति। बौद्धास्तु अशब्दोऽप्यर्थः शब्दात्मना सविकल्पे अध्यस्यत इति नेदं प्रत्यक्षमित्याहुः। उभयनिरासं मनसि निधाय तदनुपपत्तिमाह शब्दादिति। शब्दात् प्रागर्थसिद्धेरित्येको हेतुः; शब्दात्परमप्यर्थसिद्धेरिति द्वितीयः; तयोरक्षभेदादिबोधाच्चेति तृतीयः। उपरि प्रतिपाद्यं हेतुद्वयमुच्यते। शब्दात्—नाम्नः पूर्वमेवार्थस्य सिद्धेः। जातस्य हि नामकरणं लोके। परमपि। 'स भूरिति व्याहरत्, भुवमसृजत' इति शब्दोत्पत्त्यनन्तरमर्थोत्पादनं हि श्रुतम्। अथार्थान्तरम्—शब्दात् प्राक्=व्यवहारात् पूर्वमेवार्थस्य सिद्धेः, शब्दज्ञानात्प्रागेवार्थज्ञानाच्च। अव्युत्पन्नाः बालपश्वादयोऽप्यर्थं जानन्तीति। परमपि। गवयादिशब्दाः ग्रामीणेन पूर्वं ज्ञायन्ते, अर्थश्च पश्चात्। एवं भाषाशिक्षायामपि। तथा ज्ञातशब्दस्यापि पुरुषस्य तद्विस्मरणे शब्दं विनाऽर्थमात्रज्ञानम्। उभयज्ञस्यापि एकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति रीत्यैवान्यग्रहणात् नोभयोरेकज्ञानविषयता। तथा तयोः=शब्दार्थयोः ग्राहकयोरक्षयोः इन्द्रिययोर्भेदात्। श्रोत्रेण शब्दः, चक्षुरादिना चार्थ इति। एवमनुमानशब्दादिनाऽप्यर्थज्ञानमिति ग्राहकभेदः आदिपदग्राह्यः। अथ चतुर्थो हेतुः—न शब्दार्थयोस्तादात्म्यम्, गोरूपवाचकशब्दस्यैकत्वात्, वाग्भूमिकेशकिरणादीनां तदर्थानामनेकत्वात्, एकानेकैक्यायोगात्। एवं बहुषु घटकुम्भकलशादिषु पर्यायपदेषु एकार्थवाचकत्वसत्त्वाच्च एकानेकैक्यायोगात्। एवम्—अर्थः शब्दतादात्म्येनाग्राह्यः, पूर्वत्वात् परत्वात् तद्ग्रहणपूर्वज्ञानविषयत्वेन तद्ग्रहणानन्तरग्रहविषयत्वेन च तद्विषयकज्ञानाविषयत्वात् तन्निष्ठ-

ननु सर्वे विकल्पा शब्दानुविद्धा एव दृश्यन्ते, शब्दश्च विकल्पविषयमर्थं स्वात्मनैवोपरञ्जयति पीतिमेव शङ्खम्, पीतशङ्ख इति। अतो भ्रान्तौ पृथगुपलम्भस्त्वध्यासोपयुक्त एव। अतोऽशब्दात्मकस्यार्थस्य शब्दात्मना भानादप्रमितिर्विकल्प इति। अत्र किमिद कृत्स्नविकल्पापेक्षयोच्यते, उत तद्विशेषापेक्षयेति बुद्ध्या विभज्य पूर्वं तावत् प्रतिक्षिपति शब्दादिति। अयमभिसन्धि — न हि सर्वो विकल्प शब्दोप रञ्जनघन एव प्रवर्तते, पश्वादीनाम व्युत्पन्नाना च तदयोगात्। व्युत्पन्नानामपि तत्तत्संज्ञाविशेषस्मरणहेतुतया तत्तत्प्रवृत्तिनिमित्तविशिष्टवस्तुग्रहणावश्यम्भावादिति। तेन शब्दप्रतीते पूर्वमर्थप्रतीतिरित्यनीत्ययमेको हेतु। हेत्वन्तरमप्याह परमपीति। विस्मृतशब्दस्य शब्दप्रतीतिमन्तरेण केवलमर्थ एव प्रतीयते, तत्रापि न शब्दप्रतीत्यवश्यम्भाव॥ किंच शब्द श्रोत्रेन्द्रियेण प्रतीयते, अर्थस्तु यथायोग तत्तदिन्द्रियेण। इद च ग्राह कमात्रोपलक्षणम्। अतो ग्राहकप्रमाणवैलक्षण्यनियमात् अर्थवत्येनैव शब्दग्रहणमसमञ्जसमित्याह तयोरिति। तथा च कतिपयविकल्पापेक्षयाऽपि शब्दाध्यासो न युक्त। पीतशङ्खादिष्वेकेन्द्रियग्राह्यत्वादन्योन्यसंसर्गाध्यासो युक्त एव। अपिच एक एव शब्दो बहूनप्यर्थानभिदधाति, शक्तिवैचित्र्यात्। तत्र परस्परविरुद्धेष्वर्थेषु एकस्यैव शब्दस्य ऐक्येन बोधन न घटत इत्याह शब्दैक्य इति। एव बहुषु परस्परविरुद्धस्वभावेषु एकस्यैव वाच्यत्वं दृश्यते पर्यायशब्देषु। तत्राप्यर्थैक्योपलम्भनमनेकेषा शब्दाना न युज्यत इति वदति बहुष्विति।

उपलभ्यते च शब्दाना साम्येऽप्यर्थवैषम्यम्, एवमर्थाना साम्येऽपि शब्दवैषम्यम्, साम्य चैकजात्यादेकाकारधर्मयोगित्वाद्वेति। एवमर्थस्य दूरस्थत्व शब्दस्य सन्निकृष्टत्व शब्दस्य दूरस्थत्वमर्थस्य

---

श्री— सत्याविरुद्धसख्याश्रयत्वाच्चेत्युक्तम्। तादात्म्याभावे इव तादात्म्याध्यासाभावे हेत्वन्तराण्यप्याह साम्येति। शुक्तिरजतयोरिव सादृश्ये सति विलासोप। आसत्तौ=सामीप्येऽपि कश्चिदारोप स्यात्। यथा स्फटिके जपाकुसुमलौहित्यस्य। साऽपि नास्ति। ऐक्ये वा आसत्तौ वा दोष उक्तो न्यायदर्शने, "पूरणप्रदाहपाटनानुपलब्धेश्च" इति। न ह्यन्नमिति शब्दप्रयोगे शब्दवत् अन्नमपि मुख पूरयति, न चाग्निरित्युक्तौ दहने, न च असिरि युक्तौ जिह्वा पाट्यत इति। आदिपदेन प्रतिबिम्बनग्रहणम्, जले चन्द्रादे प्रतिबिम्बे चलनाद्यारोपो दृष्ट। न च शब्दार्थयो बिम्बप्रतिबिम्बभावौपयिकसबन्धसपादकमस्तीति। तथा युगपदवगतेर्व्यक्तिजात्यादिशब्दै। 'इतोऽय डित्थो ब्राह्मण' इत्यत्र जातिगुणसमाश्रयव्यक्तिग्रहणमस्ति। शब्दावृत्तिजात्यादिमत्त्वेन गृहीते शब्द तादात्म्याध्यास कथम्। एव डित्थस्याय वर्णो जातिरियम्' इति व्यधिकरणप्रयोगेऽपि शब्दावृत्ति धर्माश्रयत्वेन प्रतीतेन शब्दतादात्म्यम्। एव जात्यादिवत् विशेषणतया प्रतीतस्य नाम्नो नामिना कथमैक्यम्। कथ तर्हि अर्थज्ञानाविषयस्यार्थबोधहेतुत्वमिति चेत्—तटस्थेव=तदविषयभूतेव स्वसत्ताख्याथ प्रत्याययेत्, यथा चक्षुर्विषयप्रत्यक्षम्, यथा धूमादिरनुमित्यविषय एव साध्यानुमितिम्। यद्वा कदाचिदर्थदर्शने शब्दे च स्मर्यमाणे अय डित्थ इति शब्दोपरक्तार्थसविकल्पकमपि जायते, तावता न तादात्म्यसिद्धि, वाच्यवाचकभावसबन्धेनैव विशेषणतया भानम्। तस्मात् व्यक्तिजातिगुणादीना सत्येव भेदे धर्मधर्म्यविवेकेन भेदाभेदवासनाया परा काष्ठयम् यत् शब्दार्थयो तादात्म्यमिति॥

शक्तिवैचित्र्यात्=हर्यादिशब्दानामनेकार्थप्रयोगबलेनानेकशक्तिस्थापनादिति भाव। द्वितीय पादस्यार्थान्तरमाह उपलभ्यते चेति। अश्वकर्णशब्द तुल्यानुपूर्वीकोऽपि रूढ्या वृक्षविशेष योगेन

सन्निकृष्टत्व च । एव तीव्रमन्दादि [विशदाविशदादि] विविधवैचित्र्ययोगदर्शनात् न शब्दार्थयोरन्योन्याध्यासेन प्रतिपत्तिरित्याह साम्येति । यद्वा साम्य शब्दार्थयो समदेशवर्तित्वम् । आसत्त्यादि पूर्ववदेव । युगपदवगते समानाधिकरणवाक्ये परस्परविरुद्धस्वभावैर्जात्यादिशब्दैरेकस्यैवार्थस्य यौगपद्येन प्रतीतेरपि न शब्दाध्यासो युक्त । एव व्यधिकरणवाक्येऽपि शब्दार्थससर्गयो पृथग्भावेनैव भानादिति भाव । कथ तर्हि सविकल्पकज्ञाने सज्ञा स्वोपश्लेषेणार्थं प्रकाशयतीत्याशङ्क्याह(त्यत्राह) प्रथयतीति । अयमर्थ -तटस्थैव सज्ञा विशेषणान्तरवत् वाचकत्वेनैव प्रतीयते, न पुनरर्थात्मना । अर्थात्मना प्रतीयमाने कथ वाचकत्वेन प्रतीति(वाचकत्वप्रतीति)र्नोयुज्यत इति भाव । उक्त च, "सज्ञा तु स्मर्यमाणाऽपि प्रत्यक्षत्व न बाधते । सज्ञिनस्सा तटस्था हि न रूपाच्छादनक्षमा ॥" इति । अयमत्र निर्णय —

श्लो—परस्परविरुद्धत्वप्रतिभासानुरोधत । सविकल्पकविज्ञाने शब्दाध्यासो न युज्यते इति ॥

इति शब्दाध्यासभङ्गः ॥ ३४ ॥

(260) धीत्वाच्छब्दानुविद्धा विमतमतिमुगन्त्यत्र शाब्दाः, न सत् तत् तस्यार्थस्यार्थभावात्; स्फुरतु च स कथ बालमूकादिबोधे ।

टी— तुरगयोवस्थाऽऽह । युगपद्वयो साम्येऽपि वाचकशब्दे साम्य न लक्ष्यत इत्यर्थ । अस्मिन्नर्थे एकादिपद समावर्थक ग्राह्यम् । यद्वा उत्तरार्ध साम्यपदार्थे एवायम्, शब्दवत् अर्थे अर्थवच्च शब्दे साम्यायोगादिति ।

सज्ञाविति । सविकल्पक चाक्षुषादिरूप न भवति, सज्ञासञ्ज्युभयविषयकत्वात् । स्वलक्षण विषयकनिर्विकल्पकस्यैव प्रत्यक्षत्वादिति न । सज्ञा स्मर्यमाणा कथ विकल्पस्य प्रत्यक्षत्वे बाधिका ? न हि सज्ञया वस्तुस्वरूपेन्द्रियसन्निकर्षस्य निरोध क्रियते । अतो रूपाच्छादनाभावात् सज्ञाविषयक धर्मिज्ञानमपि प्रत्यक्षमेव । अत , "विकल्पस्त्वभिलापससर्गयोग्यप्रतिभासत्वात् न स्वलक्षण स्पृशति । न ह्यभिलाप स्वलक्षण स्पृशति । यदि स्पृशेत्, अभिलापमात्रेणापि, विनाऽक्षव्यापारम्, अपरोक्षावभास स्यात् । न हि दाहशब्दतो दाहज्ञानस्याविशदावभासस्य अग्निसयोगाधीनदाहानुभवस्य चैकरूपता । यस्तु विस्फारिताक्षस्य गौरयमिति विकल्प विशदावभास , स समानकालविशदावभासनिर्विकल्पकससर्गकृत । तस्मान्निर्विकल्पकमेव प्रत्यक्षम्" (धा दी)इति बौद्धमत निरस्त मन्तव्यम् । कोऽयमभिलापससर्ग । न तावत् तादात्म्य, तादात्म्याध्यासो वा ; अत्रैव निरस्त त्वात् । अतो वाच्य वाचकभाव । तद्योग्यत्व स्वलक्षणे कुतो नास्ति ? । जातावेव शक्तिरिति चेत्, न यद्व जातिशब्दे व्यक्ति मात्रेऽपि शक्तिभावात् । अन्यत्रापि जातिविशिष्टव्यक्तावेव शक्तिरिति यथा दाहत्यधिकरणार्थवेदिना निर्णय । को हि नाम, 'स्वलक्षणमात्रज्ञान विशदावभास , नानाधर्मज्ञाने त्ववैशद्यम्' इति विपरीत वदेत् । अत , 'निर्विकल्पकससर्गादेव विकल्प विशदावभासत्वकल्पना' इति सुष्ठु सुगतसार्वज्ञ्यम् । पश्यत श्वेतमविशद स्वलक्षणम्, पश्चात् अश्वत्वरूपजातिविकल्पे सत्येव धीर्भवति, अहमिदानीं विशद पश्यामीतीत्यलम् । एव बहुप्रकारेण श्लोकेनोपपादितान् अर्थान् कोडीकृत्य एकेन हेतुना तन्निरास दर्शयति परस्परेति ॥ ३४ ॥

एवमशब्दात्मकस्यार्थस्य शब्दात्मकत्वग्राही विकल्पो भ्रान्तिरिति पक्षो निराकृत । अत एव वस्तुत एवार्थस्य शब्दात्मकत्वमस्तीति वदन्तो वैयाकरणा निरस्ता पुनर्निरस्यन्ते । तादात्म्यायोगस्त्व तु पूर्वश्लोक एव व्युत्पादित । अत्र तदुक्तमनुमान दूष्यते । तद्दूषणपरिहारस्त्व इनश्च परास्यते धीत्वा दिति । 'अय गौ , अय गवयपदवाच्य ' इत्यादिशब्दाद गोभप्रविषयकज्ञानदृष्टान्तेन सर्वेष्व ज्ञाने शब्द

सूक्ष्मा वाङ् नात्र कल्प्या ; न हि समधिगता तादृशी कापि संज्ञा ;
वाचः सूक्ष्माद्यवस्थाकथनमपि विदुर्भावनाद्यर्थमाप्ताः ॥ ३५ ॥

अत्र केचिदाहुः—अनुमानेनैव सर्वप्रतीतेः शब्दानुवेधमुपपादयाम इति, तदेतदनुवदति—धीत्वादिति । अनूदितमर्थं प्रतिक्षिपति न सत् तदिति । तत्र हेतुमाह तस्येति । अयमर्थः—परिदृश्यमान एवार्थः शब्दं स्मारयति ; तस्य कथं तदात्मना भानमिति । बालमूकादिबोधे कालात्ययापदेशमाह स्फुरतु चेति । सूक्ष्मा, पश्यन्ती, मध्यमा, वैखरीति शब्दविभागात् सूक्ष्मशब्दः सर्वत्रास्तीति न बालमूकादिबोधे कालात्ययापदेश इत्याशङ्क्य परिहरति सूक्ष्मेति । अवाचकस्य तादृशावस्थापन्नस्य

---

ल्पी–विषयकत्वस्थापनम्, विवादास्पदमतिः शब्दानुविद्धा =शब्दश्लिष्टार्थविषयिणी धीत्वात् संप्रतिपन्नधीवदिति । अत्र=उक्तरीत्या शब्दतादात्म्याभावे अर्थस्य सति, शाब्दाः=वैयाकरणाः मतिं सर्वां शब्दानुविद्धामुशन्ति =इच्छन्ति, मन्यन्ते । तन्न सत् ; तस्य =शब्दस्यार्थस्मार्यत्वात् । अर्थः इत्यनुवृद्धम् । प्रथमतोऽर्थदर्शने, एकसंबन्धिज्ञानेनापरसंबन्धिस्मरणम् इति नयेन स्मृतिविषयत्वात् सहभानायोगात् सत्प्रतिपक्षितत्वात् । किञ्च बालमूकादीनां शब्दमजानतां मतौ पक्षान्तर्गतायां शब्दानुविद्धत्वरूपसाध्याभावात् बाधः । तस्याः पक्षीकाराभावे तत्र साध्यराहित्यात् हेतुस्तत्राप्यनैकान्त्यम् । तत् सर्वमाह स्फुरतुचेति । सर्वस्य वाचकविषयकत्वे वाचकजिज्ञासैव न स्यात् । बालमूकादिज्ञाने शब्दाविषयकत्वनिश्चयादेव, 'अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम् । बालमूकादिविज्ञानसदृशम्'' इति परैरप्युक्तम् । यत्तु तैस्तत्रोक्तम्, ''न विशेषो न सामान्यं तदानीमनुभूयते । तयोराधारभूता तु व्यक्तिरेवावगम्यते'' इति—तदेतत् प्रागेव निरस्तं निर्विकल्पकस्यापि विशिष्टविषयकत्वस्थापनेन । बालमूकपश्वादीनाम् अनुवृत्तजात्यादिविषयकसविकल्पकमप्यस्त्येव । दण्डोद्यमने पलायमानाः पशवो ह्यनुमानप्रमाणेनार्थावधारिणः । न च सामान्यज्ञानाभावेऽनुमानस्यावसरः । शब्दविषयकज्ञानं तु तत्र दुर्वचम् । अत्र शाब्दाः स्थूलशब्दाभावेऽपि सूक्ष्मशब्दानुवेधोऽस्तीति कल्पयन्ति । दृष्टानुसारेणानुमाने तदयोगे बाध एव । कुतोऽदृष्टस्यानुमानम् । तदाह सूक्ष्मेति । त्वदुक्तानुमाननिर्वाहार्थं सूक्ष्मा वागत्र न कल्प्या । अथ श्रुतत्वादिष्यत इत्यत्राह नहीति । तादृशी =सूक्ष्मा, तत्तुल्या वा कापि=कुत्रापि शब्दप्रमाणे न हि समधिगता । यत्किञ्चिद्वाक्योदाहरणेऽपि तत्र सा संज्ञा =संज्ञारूपा, वाचकत्वेन रूपेण न समधिगता । 'चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥'' इति श्रुतौ, अन्यत्र मन्त्रशास्त्रे च चातुर्विध्यस्य कीर्तनेऽपि सर्वेषां वाचकत्वं न सिद्धम् । संज्ञाशब्दस्यैव ह्यत्र स्फुरणं त्वदिष्टम् । अन्यथा एकस्यार्थस्य बहवो वाचकाः शब्दाः सन्ति एकैकस्य चेमाश्चतस्रो विधा इति तेषां सर्वेषामासाञ्च सविकल्पे भानमेष्टव्यं स्यात् ; विनिगमकाभावात् । तर्हि चातुर्विध्योक्तिः किमर्थेति चेत्—उच्यते । वाचः सूक्ष्मा पश्यन्ती मध्यमा वैखरीति अवस्थाचतुष्टयकथनं तथाध्यानार्थम् । तदधिष्ठातृदेवताध्यानादिषु तदुपयोगः । द्व्यणुकव्यतिरिक्तपरमाणुप्रतिपादकवाक्यानामिवेदृशवाक्यानामान्यपर्यमेव । न हि तेषां वाचकत्वं विज्ञाय लोको व्यवहारं प्रवर्तयतीति नात्रोपयोगलेशोऽपि । सूक्ष्मादिभेदाश्च, "या सा मित्रावरुणसदनादुच्चरन्ती त्रिषष्टिं वर्णानत्र प्रकटकरणैः प्राणसंगात् प्रसूते (तान्) । तां पश्यन्तीं प्रथममुदितां मध्यमां बुद्धिसंस्थां वाचं वक्त्रे करणविशदां वैखरीञ्च प्रपद्ये" इत्युक्ताः । वायुजन्यः शब्दः प्रथमं नाभौ मित्रावरुणसदनपदवाच्ये प्राणापानवासस्थाने उदेति । साऽवस्था परा ; हृदयस्थाने यदाऽभिव्यज्यते, तदा पश्यन्ती । पुरुषप्रयत्नविशेषवशेन तत्तद्वर्णस्थाने स्थिता

शब्दस्य प्रतिपत्तिवेलायां प्रसङ्गाभावादित्यर्थः । तदेव विवृणोति न हीति । वाचकश्शब्द एवात्र विमृश्यत इति भावः । कथं तर्हि सूक्ष्माद्यवस्थाकथनं तेषु तेषु शास्त्रेष्वित्यत्रोत्तरम् वाच इति । अवस्थाभेदकथनं केवलभावनार्थम् न पुनर्वाचकत्वेन। अतः शब्दानुवेधानुमानमसमञ्जसमिति भावः । अनेन-'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते। अनुविद्धमिव ज्ञानं सर्वं शब्देन गृह्यते(भासते)॥' इति शब्दानुवेधप्रत्यक्षत्वोदाहरणमपि दत्तोत्तरम् , तादृशोपलम्भाभावादेव ॥

इति सर्वप्रत्ययानां सञ्ज्ञानुविद्धत्वभङ्गः ॥ ३५ ॥

(261) सत्त्वाद्यैरक्षगम्यं विमतमिति वदन् वक्तु बाधं विपक्षे ;<br>
श्रुत्यालम्बे तु सैव प्रभजति शरणं तादृशादृष्टसिद्धौ ।<br>
अध्यक्षं लौकिकं चेत् , अधिगतिविहतं ; भावनोत्थं न युक्तं ;<br>
नित्यं त्वक्षानपेक्षं ; निरुपधिरिह ते दुर्वचोऽक्षप्रकर्षः ॥ ३६ ॥

---

री— मध्यमा । अथ व्यक्तं परश्रोत्र्यं निष्क्रामति, साऽवस्था वैखरी । सर्वमिदमेषा श्रीपादुकासहस्रे नादपद्धतौ अन्तर्व्यस्तेरिति विशश्लोके द्रष्टव्यम् । तत्र व्याख्याने विशदमेतत् ।

न सोऽस्तीति । शब्दानुगमरहितः प्रत्ययो नास्तीति पूर्वमुक्त्वा अनुविद्धमित्यधनान्वयमुखेनाप्यनुभवः प्रदर्श्यते । बालमूकादिप्रत्यये चान्वयव्यतिरेकभङ्गो दर्शितः । अतः अनुविद्धमिवेति इवकारेण स्तोत्प्रेक्षैव नूनं ज्ञाप्यते । शब्दसूक्ष्मावस्थाभानवादी तत्कारणाकाशमूलप्रकृत्यादिभानमपि किं न स्वीकुर्यात् । श्रोत्रेण शब्दश्रवणे च ताः सर्वा अवस्थाः श्रूयन्त इति वा किं न वदेत् । शब्दार्थक्याच्च शब्दश्रवणे वान्यार्थानां स्थूलानां तत्सूक्ष्मावस्थानां च जगत्कारणस्य सर्वस्यापि भानं किं प्रतिषेधेत् । सर्वस्यापि सर्वेन्द्रियग्राह्यत्वेन सर्वे सर्वपरोक्ष्यशालिन इति विचित्रोऽयं वादः । एतेन विशेषवाचक शब्दज्ञानाभावेऽपि किमपीति सामान्यशब्दज्ञानं सर्वत्रास्तीति कल्पनाऽपि निरस्तेति ॥ ३५ ॥

प्रत्यक्षस्य द्वैविध्यं तत्तत्र विषयश्च निरूपितः । तत्र शब्दानामपि सर्वसविकल्पकविषयत्व निरासनम् । अथ सर्वस्यापि वस्तुनः प्रत्यक्षविषयत्वमनुमानेन साधयन्तं निराकरोति सत्त्वाद्यैरिति । उदयनाचार्यः न्यायकुसुमाञ्जलौ, 'धर्मादयोऽपि कस्यचित् प्रत्यक्षाः वस्तुत्वादित्याद्यनुमानोपन्यासेन, तत् दृश्यत्वमसमान् आदाय दुर्वचमिति योगिप्रत्यक्षमेतद्बलात् सिध्यति' इत्युक्तम् । शास्त्रे योगजधर्मबलेन सर्वसाक्षात्कारस्योक्तत्वात् सर्वं दृश्यं भवेत्, मुक्तौ ज्ञानविकासश्रुत्या सर्वं दृश्यं भवेदित्यागमप्रामाण्येनोपपादने तन्न प्रतिषेधामः । अनुमानेन साधयित्वा तेन योगिप्रत्यक्षसिद्धिं स्वयमैन्द्रियकत्वञ्च यदुक्तं तदत्र निरस्यते सत्त्वाद्यैरिति । आद्यपदेन प्रमेयत्वाभिधेयत्वादिग्रहणम् । इति वदन्=एवमनुमानं प्रयुञ्जानः विपक्षे बाधकं किमित्यप्रयोजकशङ्कायां विपक्षे बाधं वदतु । सर्वमुष्णं वस्तुत्वादग्निवत्, सर्वं शीतं सलिलवदित्यादितुल्यमेतत् । तदशक्तौ चानुमानासिद्धिः । 'सर्वं ह पश्यः पश्यति', 'सदा पश्यन्ति सूरयः' इत्यादिश्रुतिप्रमाणप्रदर्शने तु सैव= श्रुत्यालम्बे='सर्वं ह पश्यः पश्यति', 'सदा पश्यन्ति सूरयः' इत्यादिश्रुतिप्रमाणप्रदर्शने तु सैव=श्रुतिरेव तादृशस्य अदृष्टस्य= अननुभूयमानस्य धर्मादिदृश्यत्वस्य, सिद्धौ= निश्चये शरणम् ; किमनुमानेन । साध्याज्ञानिरूपणेनापि दूषयति अध्यक्षमिति । साध्यञ्च दर्शनम् अध्यक्षम् इन्द्रियजन्यज्ञानरूपं लौकिकं चेत्, तत् अधिगतिविहतम्= तदभावानुभवेन स्थितेन विहतम्= निरुद्धम् । लोके भयकामनाद्यायत्तभावनाप्रकर्षसत्त्वात् लौकिकं तादृशभावनाबलात् यत् प्रत्यक्षं तत्तु न युक्तम्= अयथार्थं भाव्यमानार्थमात्रविषयकं न सर्वग्राहि भवितुमर्हम् । अनेनानुमानप्रयोक्त्रा ईश्वरप्रत्यक्ष

श्लो—धर्मादिविषयत्व तु मनसो यद्विशि(द्वदि ?)ष्यते । चक्षुरादेस्तथाभावो नेष्यते केन हेतुना ॥ इति चक्षुरादिप्रतिबन्दिरेव मनसो धर्मादिविषयत्वं निवारयतीति संग्रहः । कथं तर्हि, "त्वक् च दृक् च निपिपासति जिह्वा विह्वला श्रवणवत् परिवृत्तौ । नासिका त्वयि करीश ! तथेति प्राप्नुयां कथमिमां स्विदवस्थाम् ॥" इति इन्द्रियवृत्त्यनियमो महापुरुषैरभिधीयत इति ॥ इत्थम्—इन्द्रियवृत्तिनियममन्तरेण स्वाभाविकेनैव ज्ञानेन सर्वं साक्षात्करिष्यामीति भावः । न पुनरन्येन्द्रियवृत्तिरभिधीयते । 'पश्यत्यचक्षुः स शृणोत्यकर्णः' इत्यादेः परविषयतया तस्यापि (तात्यामपि तस्य?) करणायत्तज्ञानत्वस्यासंकुचित ज्ञाने मुक्तात्मन्यपि साधारण्यात्। अयमत्र निर्णय यदि योगिप्रत्यक्षं प्रामाणिकम्, तदा श्रुत्या स्मृत्या पुराणेन च सिध्यति; न पुनरनुमानेन ; तस्यान्यथासिद्धत्वात् ; चाक्षुषत्वादिप्रसञ्जनप्रतिबन्दिग्रस्तत्वाद्वेति [इदं] पूर्वमेवोक्तम् ।

श्लो— यथौपनिषदस्त्वीशो नानुमानेन सिध्यति । तथा योगी च शास्त्रेण केवलेन प्रसिध्यतु ॥

इति योगि(इत्यायोग्य ?)प्रत्यक्षानुमानभङ्गः ॥ ३७ ॥

---

*वी* –प्रत्यक्षजनकत्वेऽपि धर्मपरमाण्वादिविषयकत्वं दुर्वचमिति सिद्धम् । तत्र प्रतिबन्दिमप्याह धर्मादीति । 'यद्विशिष्यत' इत्यत्र 'यद्वदिष्यते' इति स्यात् । यद्वदित्यस्य प्रतिनिर्देशः तथाभाव इति । प्रत्यक्षजनकत्वे स्वविषयातिक्रमः सर्वस्याप्ययुक्त एवेति । एतावता शास्त्राधीनयोगजधर्ममूलः साक्षात्कारो न वार्यते ; तावता तु न मनसो मुख्यबलसिद्धिः ।

स्वाभाविकेनैव ज्ञानेन सर्वं साक्षात्करिष्यामीति । अयमर्थः कथमितो लभ्यत इति चेत्— इत्थम् । श्लोकस्य वाच्यार्थस्तावत्—हे करीश !=हस्तिगिरिनाथ ! वरदप्रभो ! मम त्वगिन्द्रियं चक्षुरिन्द्रियञ्च रसनेन्द्रियकार्यं रसभूतत्वत्पानं कर्तुमिच्छति । श्रवणवत् जिह्वा= श्रोत्रं रसनेन्द्रियञ्च परवृत्तौ= त्वदन्यव्यापारे विह्वला प्रवृत्य श्रान्ता तत्कामैव त्वद्विषये । तथा नासिका =घ्राणेन्द्रियमपि स्वान्येन्द्रियव्यापारे इतीमां= सर्वेन्द्रियसर्वव्यापारप्रवृत्तिरूपां दशां कथंस्वित् प्राप्नुयाम् =कीदृशप्रकारस्सन् लभेयेति । अत्र चेतनगतायाः पिपासायास्त्वगादौ साक्षादभावात् अमुख्यार्थ एव ग्राह्यः, त्वगादिमुखेनाहं पातुमिच्छामीति । विह्वलेत्यनेनाक्षमत्वकथनेऽपि अनुबुभूषायामेव तात्पर्यम् । एवं करणानामिच्छावत्त्वरूपावस्थायाः कथनेऽपि करणेषु कर्तव्यापारसामर्थ्यमस्तीत्यत्राभियुक्तानां न तात्पर्यमिति सर्वेष्टम् । तथा तत्तत्करणस्य करणान्तरकार्यसामर्थ्यमस्तीत्यत्रापि न तात्पर्यमिति भाव्यम्। तदत्र करीशविषयानुभवेन तत्तदिन्द्रियकारितेन स्थितेनावृताः करणं विना कार्यं संप्रति न भवेदिति, करणान्तरं नास्तीति च मन्वानाः, 'मुडियाने' इति दशके श्रीवकुलभूषणदिव्यसूरेर्या दशा, तां प्राप्ताः, एकैकांशानुभवमपि सर्वैः करणैः साधयितुमिच्छामाविष्कुर्वन्तोऽपि करणानां तत्तद्व्यापारशालित्वे नैर्भर्यरहिताः करणायत्तमनायत्तं वा पूर्णानुभवमेव प्रेप्सन्तीति वक्तव्यम् । अतो धर्मभूतज्ञानपूर्णविकासाभावनिर्वेदमूलमिदं वचनमिति तल्लिप्सायामेव तात्पर्यमिति । उत्कटपूर्णानुबुभूषावशात्, कस्य करणस्य क्वस्मिन्नंशे सामर्थ्यमिति विवेकविस्मरणेन सर्वस्य सर्वत्र प्रेरणसंभ्रमं कदा लभेयेति कथनं तथाविधानुभवप्रकर्षलिप्सायामेव पर्यवस्येदिति । स च मुक्तेषु न करणायत्तः ।

नन्वेवं महता प्रयासेन योगिप्रत्यक्षानुमानखण्डने नास्तिक्यमेव स्यादित्यत्राह अयमत्रेति । ईश्वरानुमाननिराकरणतुल्यमिदमास्तिकैरेव क्रियमाणमनुमानस्याशक्तिप्रदर्शनार्थमिति भावः ॥ ३७ ॥

(२६४) संयुक्तव्यापकत्वप्रभृतिसहकृतैर्व्याप्तिधीसव्यपेक्षै-
रक्षैरेवानुमाधीर्भवतु, किमितरत् कल्पयित्वेति चेन्न ।
निर्व्यापारेन्द्रियस्याप्युदयति खलु सा भूतभाव्यादिलिङ्गैः
स्मृत्यारूढैः श्रुतैर्वा ; मन इह सकलज्ञानसामान्यमिष्टम् ॥ ३८ ॥

एवं योगिप्रत्यक्षादागमगम्याद्दृष्टादेरसिद्धिरुक्ता । अथायोगिप्रत्यक्षादनुमानगम्याग्न्यादेरसिद्धिरुच्यते। कश्चिदाह—धूमादिसंयुक्तमिन्द्रियमेव वह्न्यादिकं गृह्णातु ; किमनेनानुमानेन ? सहकारिसामर्थ्यं सर्वमपि संपत्स्यते। चक्षुर्धूमादिसंयोगः (संयोगघटितव्यापकत्वादिः?)प्रथमं सहकारी; तत्सहकारि च व्याप्तिपक्षधर्मत्व-परिज्ञानादि; किमितरप्रमाणपरिकल्पनयेति। एवदाशङ्कते संयुक्तेति। परिहरति नेति । परिहारं विवृणोति निर्व्यापारेति। अयमत्र भावः—नेन्द्रियमत्र वह्न्यादिज्ञाने करणम् ; अपि तु धूमादिज्ञान एव। अतो न वह्न्यादिज्ञानं प्रत्यक्षप्रमाणफलम् ; अपितु धूमादिज्ञानमेव वह्न्यादिज्ञानं जनयति । नन्वस्तु धूमादिज्ञानमवा-न्तरव्यापारः ; तद्द्वारा प्रत्यक्षमेव वह्न्यादिज्ञानं जनयतीति चेत्—तन्न ; इन्द्रियार्थसन्निकर्षजन्यधूमादि-ज्ञानमन्तरेणापि स्मृत्यारूढैः श्रुतैर्वा भूतभाव्यादिलिङ्गैरग्न्यादिज्ञानदर्शनात् । किंच यद्धि यज्जनयित्वैव

---

व्री– नन्वनुमानागम्यानामर्थानां योगिप्रत्यक्षमनुमाय तेन सिद्धिवचनं मा भूत् । अनुमानगम्यानामपि अयोगिप्रत्यक्षत एव सिद्धिसंभवात् किमनुमानप्रमाणपार्थक्येनेति अनुमानापलापिशंकामनूद्य निरस्यति संयुक्तेति । यथा प्रत्यक्षे इन्द्रियसंनिकर्षः संयोगः संयुक्तसंबन्ध इति वैविध्यं वस्त्वनु-रूपमिष्यते, तथा इन्द्रियसंयुक्तव्यापकत्वमपि संनिकर्षोऽस्तु। चक्षुस्संयुक्तधूमव्यापकत्वस्याग्नौ स्थित्या तेन संनिकर्षेण चक्षुरेवाग्निज्ञानं जनयतीति तस्य प्रत्यक्षान्तर्भाव एव । अतः, 'असाधारणेन्द्रियसा-हित्याभावात् नानुमितेः प्रत्यक्षत्वम्' इत्युदयनाचार्योक्तमयुक्तम् । एवं संबन्धसंभवात् । तर्हि धूम-दर्शिनां सर्वेषामग्निज्ञानं स्यात्, व्यापकत्वसत्त्वादिति चेत्—अग्निधूमव्याप्तिज्ञानमत्र संनिकर्षे सहकारणं धूमः । यथा विशिष्टज्ञाने विशेषणज्ञानस्य सहकारिता, सविकल्पके वा निर्विकल्पकस्य । अन्यथा प्रत्यक्षजन्यस्य प्रत्यक्षत्वं नेत्युक्तौ, सविकल्पकादिकमपि प्रत्यक्षं न भवेत् । व्यापकत्वप्रभृतीति प्रभृतिपदेन व्यतिरेकव्याप्तिरूपोऽग्निधूमसंबन्धोऽपि गृह्यते । एवं प्रत्यक्षधूमादिनाऽग्न्यनुमाने संयुक्त-व्यापकत्वं संबन्धः । ऐन्द्रियकवस्तुवृत्तिगुरुत्वादिना पतनाद्यनुमाने तु संयुक्तवृत्तिधर्मव्यापकत्व-मित्येवं नानाप्रकार इति ज्ञापनाय प्रभृतिशब्दः। यद्वा व्याप्तिज्ञानस्यापेक्षितत्वात् संनिकर्षः सामानाधि-करण्यादिरूपोऽपि पर्याप्त इति व्यापकत्वे अनादरात् प्रभृतिशब्दः। किमितरत् कल्प्यम् =अनुमानमिति पृथक् प्रमाणं न कल्प्यमिति । समाधिमाह नेति । धूमे चक्षुस्संनिकर्षे सति किल संयुक्तसामा-नाधिकरण्यरूपः संनिकर्षोऽग्नौ वक्तुं शक्यते । तादृशसंनिकर्षरूपव्यापाररहितं यस्येन्द्रियं यदा, तदा तस्य पुरुषस्यापि अग्निधीर्भवति यथा धूमस्य भूतत्वे, भविष्यत्त्वे, वर्तमानत्वेऽपि च संनिकर्षाप्रसक्तौ । तर्हि कथं धूमज्ञानमिति चेत्—स्मृतिरूपम्, धूमवान् पर्वत इति शब्दजन्यं किमप्यस्तु। एवं स्मृतेन श्रुतेन वा लिङ्गेन या उदेति तत्र नाक्षं प्रमाणमिति । तर्हि मनोरूपाक्षजन्यत्वात् मानस प्रत्यक्षान्तर्भावः; तत्राह मन इति । इह =इन्द्रियेषु मनः स्मृतिप्रत्यक्षशाब्दबोधसंशयारोपादि-सकलज्ञानं प्रति सामान्यम्= समानमिष्टम् । अतस्तज्जन्यस्य प्रत्यक्ष एवान्तर्भावो दुर्वचः॥ योगीति । आगमगम्याद्दृष्टादेर्योगिप्रत्यक्षविषयत्वानुमित्या सिद्ध्यभाव उक्त इत्यर्थः । यद्धीति, यत् दण्डादि यत्

इत्थं सर्वप्रत्ययानां शब्दानुवेधवादी निरस्तः। इदानीं सर्वेषामप्यर्थानां प्रत्यक्षत्ववादी निरस्यते। स खल्वेवमाह— धर्मादयः कस्यचित्प्रत्यक्षाः सत्त्वादित्यादिकमनुमानजातं धर्मादीनां प्रत्यक्षत्वं साधयतीति; तथा च योगिप्रत्यक्षं सिद्धमिति। तदेतदनूद्य परिहरति सत्त्वाद्यैरिति ॥ अयं भावः—किं प्रत्यक्षत्वमात्रं प्रसाध्यते? किं वा पुनरैन्द्रियकप्रत्यक्षत्वम्? पूर्वत्र न योगिप्रत्यक्षसिद्धिः; ईश्वरप्रत्यक्षेणैवान्यथासिद्धत्वात्। उत्तरत्र विपक्षे बाधकाभावात् अन्यथासिद्धिरनुमानस्य। अतो न योगिप्रत्यक्षं साधयितुमलम् ॥ श्रुतिस्मृत्यादिबाधप्रसङ्गो विपक्षे बाधक इति चेत्, तर्हि श्रुत्यादिकमेव शरणम्, किमनेना(किम)नुमानेनेत्याह श्रुत्येति। उक्तमर्थं विकल्प्यापि दूषयति अध्यक्षमिति। किमध्यक्षं लौकिकं किं वा भावनोत्थम्, उत नित्यमेव? लौकिकं चेत् प्रत्यक्षविरुद्धमित्याह अधिगतिविहतमिति। लोकोपलम्भविरुद्धमित्यर्थः। न हि धर्मादिविषयं लौकिकं प्रत्यक्षमुपलभ्यते, तथात्वे वा 'सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्' इति सूत्रविरोधः। भावनोत्थमपि प्रत्यक्षं भावनावैशद्यातिरेकेण न क्वापि दृष्टमित्याह भावनोत्थं न युक्तमिति। मारीचादेर्भावनया रामादिसाक्षात्कारो भयभरदोषनिमित्तं विपरीतज्ञानमेव, "वृक्षे वृक्षे च पश्यामि" इति। एवमनुरागादिनिमित्तकामिनीमुखदर्शनादिकमपि व्याख्यातम्। नित्यं (नित्य)प्रत्यक्षं न कारणायत्तमित्याह नित्यं त्विति। तत्साधनेऽपि न योगिप्रत्यक्षसिद्धिरिति भावः। ननु प्रकृष्यमाणं सर्वं निरतिशयदशाशिरस्कं यथा कुवलामलकबिल्वादिपरिमाणं प्रकृष्यमाणं निरतिशयदशाशिरस्के परममहत्परिमाणे विश्राम्यति। तथाचेन्द्रियशक्तेः प्रकृष्यमाणायाः सार्वज्ञ्ये विश्रमः समुचितः; एवं च योगिनां मानसप्रत्यक्षस्य सर्वविषयत्वं सेत्स्यतीत्याशङ्क्य परिहरति निरुपधिरिति। यथा चक्षुस्स्पर्शनादेः प्रकृष्यमाणस्य न सर्वविषयत्वे विश्रमः, एवं मनसोऽपीति भाव्यम्। अन्यथा धर्मादयः कस्यचिच्चाक्षुषाः, स्पार्शनाः इत्यादिकमपि वक्तुं शक्येत ॥ ३६ ॥

(262) प्रत्येकं ह्यक्षवेद्यं प्रतिनियततया सर्वलोकप्रसिद्धम्;
काकोलूकादिकानामपि निजविषये ह्यक्षि चक्षुःप्रकर्षः।
मान्धालव्यालपूर्वेष्वपि खलु रसनास्पर्शनादिक्रमात् स्यात्
अक्षस्यानैक्यमात्रे; स्थितविषयमतस्त्वक्कुपिपासादिवाक्यम् ॥ ३७ ॥

[?]– स्याप्यनुमानेन साधनात् तत्प्रत्यक्षं चेदत्र विवक्ष्यते, तर्हि तस्य नित्यत्वात् तत्साधनेन योगिप्रत्यक्षं तदिदं कथं सिध्येत्? यत्तु चाक्षुषप्रत्यक्षतारतम्यं क्वचित् विश्रान्तं तारतम्यत्वात् परिमाणतारतम्यवदित्यनुमानम्, तेन सरूपसर्वसाक्षात्कारसाधनसंभवेऽपि निरुपधिः= उपाध्यनवच्छिन्नः सरूपारूपसर्वविषयकः स प्रकर्षो न भवति। एवमिन्द्रियान्तरेऽपि भाव्यम्। नूनं बुद्धस्य सार्वज्ञ्यस्थापनायेदं तारतम्यत्वहेतुकमनुमानं तदाद्यतमैभिरप्यनूदितमिव। सेश्वरमीमांसायामपीदमनुमानं निरस्तम् ॥३६॥

ननु सर्वेषां करणानां सर्वं विषयीभवितुमर्हति। तत्र वैगुण्यं कर्मयित्वक्तृसामर्थ्यवैकल्यप्रयुक्तम्। अत एव सर्पादयश्चक्षुरादिभिरपि श्रवणादीनि कुर्वन्ति। काको दूरस्थमपि पश्यति। उलूकोऽन्धकारे निरीक्षते। अतः सर्वेषां सर्वत्र सर्वसमर्थमेव करणम्। अत एवाभियुक्तैरपि भवदीयैस्त्वगिन्द्रियादिनाऽपि पानादि सुकरमभ्यधुरिति शङ्कायामुक्तमर्थं विशदयन्ति प्रत्येकमिति। रूपरसगन्धस्पर्शादयस्तत्तदिन्द्रियवेद्यत्वेनैव सर्वलोकप्रसिद्धाः। चक्षुरादीनां विभिन्नत्वेन कल्पनमपि

तदेव प्रकाशयति प्रत्येकमिति । प्रतिनियतविषयतया हि चक्षुरादीनां प्रसिद्धिः । प्रवृत्तिरप्ये-वमेव । एवं मनसोऽपि प्रतिनियतविषयत्वं स्वीकार्यम् । दृष्टं च तत् । आत्मादिविषय एव हि मनसः स्वातन्त्र्यमवलोक्यते । बाह्यविषये पुनः इन्द्रियान्तरसहकारितामात्रमेव । परमाण्वदृष्टादिविषये पुनस्तदपि नास्ति; तेषामतीन्द्रियत्वात् । तथाच स्वात्मनि तज्ज्ञानादिषु वा शक्तस्य मनसः स्वातन्त्र्येण न बाह्यविषयेषु शक्तिः । तत्र प्रमाणमाह सर्वलोकेति । ननु चक्षुरादीनामपि स्वविषयातिलङ्घनं दृश्यते; दूरे हि काकः पश्यति । अन्धकारेऽप्युलूकादिरर्थं गृह्णाति । अतो मनसोऽपि प्रकर्षविशेषादविषयग्रहणं युक्तमित्याशङ्क्याह काकेति । काकादिचक्षुःप्रकर्षोऽपि न स्वविषयातिलङ्घी; रूप-रूपि-तदेकार्थसमवायि-मात्रग्रहणात् । न हि काकश्चक्षुषा रसं गृह्णाति; नापि च उलूकश्चक्षुषा जिघ्रति ॥ कथं तर्हि मान्थाल-व्यालादिष्विन्द्रियवृत्तिसंकरः; मान्थालो हि मुखेनैवाभ्यवहरति, निर्हरति च; व्यालश्चक्षुषैवाऽऽकर्णयति, अवलोकते च । अत इन्द्रियवृत्तेरनियमो युक्त इत्याशङ्क्य परिहरति मान्थालेति । तत्र हि रसनास्पर्शनयो-रेकस्थानवर्तित्ववत् वागपानयोश्चक्षुश्श्रोत्रयोश्च स्थानैक्यमेव; न पुनरन्येन्द्रियेणान्येन्द्रियकृत्यमाचर्यते । अतो न स्वविषयातिलङ्घनमिन्द्रियवृत्तेरिति भावः ।

---

व्ही– तत एव । अन्यथैकमेवेन्द्रियं सर्वेक्षममिति स्वीकारापत्तेः। काकोलूकादीनामपि न त्वगादिग्राह्यस्य चक्षुरादिना ग्रहणं दृश्यते । अस्मदीयचक्षुरपेक्षया तच्चक्षुः प्रकर्षश्च तद्योग्यार्थविषय एव। व्यालः= सर्पः श्रोत्रेण पश्यति, मान्थालो मुखेन मलं निस्सारयतीत्यादिकथनमविवेककृतम् । यथा सर्वेषामस्माकं रसनायां शीतोष्णग्रहणोपलम्भेऽपि सर्वशरीरव्यापिन्यास्त्वचो [रसनास्थानेऽपि सद्भावात् तत्त्व-त्वग्ग्राह्यत्वमेव स्पर्शस्य; रसस्य च न त्वग्ग्राह्यत्वम्, किंतु रसनेन्द्रियग्राह्यत्वमेव-तथा एकत्र देशे उभयेन्द्रियसमावेश इह। चक्षुश्श्रोत्ररूपेन्द्रियद्वयस्यैकस्थानगतत्वं व्यालस्य, मान्थालस्य पायुरसनयो-र्मुखरूपैकस्थानगतत्वम् । आदिपदग्राह्यं वागिन्द्रियम्; रसनास्थत्वात् । तथाच अक्षाणां =इन्द्रि-याणामेकस्थानगतत्वं यत्र, तत्रैकेनैव करणेन सर्वं भवतीत्यविवेको लोकस्य। लोको हि देहावयवमेवे-न्द्रियं मन्यते । वेदान्तिमत इव तार्किकादिमतेऽपि सूक्ष्ममन्यदेवैकैकमपीन्द्रियमिति एकत्र स्थाने नानेन्द्रियसमावेशो न विरुध्यते । यत्पुनरभियुक्तवचनम्, तत्रोच्यते, स्थितविषयमित्यादि । अतः= इन्द्रियाणां प्रतिनियतविषयकत्वस्य लोकवेदसिद्धस्याविचाल्यत्वात् त्वगादीन्द्रियकर्तृकपिपासाविषयं जिह्वाश्रवणादिकर्तृक-परव्यापारादिविषयकञ्चाभियुक्तवाक्यं स्थितविषयम्= यत् त्वगादौ वस्तुतोऽ-स्ति, प्रमाणसिद्धम्, यच्च जीवस्य, तत्परमेव; न तु लोकवेदातीतायथावस्थितपरमिति । तदिदं वृत्तौ विवरणे व्यक्तीभविष्यति ।

नन्विन्द्रियान्तराणां व्यवस्थितविषयकत्वेऽपि मनसा सर्वदर्शनं युक्तम् । अतः प्रत्येकमिति वाक्येन मनसोऽपि ग्रहणमयुक्तमित्यत्राह अतो मनसोऽपीति । मनसः सर्वविषयकत्वं नाम प्रत्यक्षानुमितिशाब्दबोधादिसर्वप्रमाणवृत्तावपि सहकारित्वम्; न पुनः स्वयमेव सर्वप्रत्यक्षहेतु-त्वम् । यद्यपि मनसः प्रमाणान्तरनिरपेक्षं किञ्चित्प्रत्यक्षजनकत्वमिष्टम्, अथापि तदपि स्वात्मतद्गत-ज्ञानेच्छादिगुणविषयकप्रत्यक्ष एव, धर्माद्यान्तरगुण-परमाण्वादिबाह्यवस्तुसाक्षात्कारहेतुत्वं न स्वत इति। निर्हरति= मलं विसृजति। वर्तित्ववदिति। रसनेन्द्रियस्य स्पर्शनेन्द्रियस्य च जिह्वारूपैकस्थान-निविष्टत्वं सर्वजन्तुसाधारणम्; एवं वाचोऽपि। अत एतद्दृष्टान्तनम् । काकेत्यारभ्य स्थानैक्यमात्र-मित्यन्तं श्लोके बाह्येन्द्रियविषयकम् । एतद्वदेव सर्वलोकप्रसिद्ध्यनुसारेण मनसः आन्तरकतिपय-

यज्जनयति, तस्य तत्र तदवान्तरव्यापारत्वमिति ह्यवान्तर व्यापारलक्षणमाचक्षते । न चेद लक्षण धूमादि ज्ञानेऽस्ति, धूमादिज्ञानमन्तरेणापि प्रत्यक्षेण वह्न्यादेर्द्रष्टु शक्यत्वात्, तथा दर्शनाच्च । अतोऽनुमानादेव साध्यसिद्धि, न पुन प्रत्यक्षात् । अन्यथा शब्दज्ञानम् अन्तरा(अवान्तर)व्यापारीकृत्य शब्दार्थज्ञानमपि प्रत्यक्षमेव प्रसज्येत(?) । न च तत युक्तम्, परोक्षापरोक्षविभागाभावप्रसङ्गात् । अथापि सर्वविषयस्य मनइन्द्रियस्य वह्न्यादिज्ञाने व्यापृतत्वान्मानसप्रत्यक्ष वह्न्यादिज्ञानमस्त्वित्याशङ्क्य परिहरति **मन** इति । **सकलज्ञानसामान्यमिति ।** संशयविपर्ययस्मृत्यादि[ज्ञान]साधारणत्वान्मनइन्द्रियस्य न तज्जन्यतमात्रेण प्रत्यक्षत्वसिद्धिरिति भाव ॥ **इति संयुक्तव्यापकत्वादेरक्षव्यापारत्वभङ्गः ॥ ३८ ॥**

**(अनुमानोपक्रमः)**

**(264) पक्षस्थं व्याप्यमादौ विदितमिह तु न व्यापकस्य प्रसक्तिः ;**
**व्याप्तिस्तेन स्मृता स्यात् न च तत उभयोर्निश्चयः पक्षयोगे ।**
**तादृग्व्याप्यान्वितोऽसाविति मतिरपि न व्यापक तत्र यच्छेत् ;**
**तस्मात् तद्व्यापिपक्षान्वयनियतमतिर्नाक्षतः संस्कृतेर्वा ॥ ३९ ॥**

उक्तार्थस्थेम्ने पुनरपि विकल्प्य दूषयति **पक्षस्थमिति ।** किं धूमादिदर्शनदशायां प्रत्यक्षो वह्नि ? तदा [हि ?] धूमादिरेव विदित, न तु वह्न्यादि । तदिदमाह **इह तु न व्यापकस्य प्रसक्तिरिति ।** यदा पुनर्व्याप्तिस्मरणम्, तदा पुन दृष्टान्त एव साध्यप्रसिद्धि, तत्रैव पूर्वं ग्रहात्, न तु पक्षे । तदिदमाह **न चेति ।** तर्ह्युपनयावस्थायां साध्यसिद्धिरस्तु, ततोऽनुमान व्यर्थमित्याशङ्क्याह **तादृगिति ।** उपनयजन्य ज्ञान व्याप्तस्य हेतो पक्षधर्मत्वमवगाहते, न पुन साध्यस्य पक्षधर्मत्वम् । तस्मात् साध्यस्य पक्षधर्मत्वप्रतीतिर्नाक्षत, नापि दर्शनजनितसंस्कारात, न चोभयस्मात् । अतो व्याप्तस्य हेतो पक्षधर्मत्व प्रतीति साध्यस्यापि पक्षधर्मत्व प्रसाध(ख्याप)यतीति सुस्थिरमनुमानम् ॥

**इति अनुमानस्य प्रत्यक्षादिबहिर्भावः ॥ ३९ ॥**

ण्णी-भ्रमणादि जनयित्वैव यत् घटादिकम् । तस्य दण्डादे तत्र घटादौ तदवान्तरव्यापारत्व = भ्रमणादिरूपव्यापारकत्वमित्यर्थ । प्रसज्येतेति । अत्र णिजन्तात् कर्मणिप्रयोग एव ल्यबन्तान्वये अक्लेश ॥३८॥

ननु अग्निमानित्यनुमिति यदा धूमचक्षुस्सन्निकर्षोऽस्ति, तत्र प्रत्यक्षेऽन्तर्भवतु, अन्यत्र व्याप्ति संस्कारायत्ततया स्मृतिरूपैवास्तु । अतो न पृथगनुमानमिति शङ्का परिहरति पक्षस्थमिति । अत्राय ज्ञानक्रम –पक्षस्थतया व्याप्य = हेतु वेद्यते प्रथमम्, धूमवान् पर्वत इति । तत्र न पर्वतेऽग्निभानम्, तदधीन व्याप्तिस्मरणम्, योयो धूमवान् सोऽग्निमान् इति । तत्र पूर्वानुभूतस्थलानां महानसादीनामेव भानात् न धूमस्याग्नेश्च पर्वतसम्बन्धो गृह्यते । अथास्माम् व्याप्तिस्मरणात् अग्निव्याप्यत्वेन गृहीतधूम बुद्धि पर्वते भवति, अग्निव्याप्यधूमवान् पर्वत इति । साऽपि मति व्यापकमग्नि पर्वते न विषयी करोति । अथ तस्य धूमस्य = यो व्यापी = व्यापक अग्नि, तस्य पक्षेऽन्वयज्ञान नियत पर्वतोऽग्निमानिति जायते । तस्मात् पूर्वज्ञानाना पर्वतेऽन्यविषयकत्वात् तादृशसंस्कारप्रसक्त्यभावात् संस्कारजन्यस्मृति रूप तत्र भवतीति अक्षधूमासन्निकर्षे तस्य पृथगनुमितिरूपत्वमेव वक्तव्यम् । एवञ्चाक्षसन्निकृष्टधूमस्थलेऽपि तावतैव कार्यसम्भवे अक्षस्य विलक्षणसन्निकर्षस्य च कारणत्वकल्पन व्यर्थमिति न सर्वथा प्रत्यक्षान्तर्भावोऽनुमितेरिति । नाक्षत = नेन्द्रियात् ॥ ३९ ॥

(265) नायोग्यस्याक्षबाधः ; स्वविषयविहतिं न क्षमेतानुमानम् ;
स्वस्यैवापेक्षितत्वादनुमितिमखिलां बाधते नागमोऽपि ।
निस्सन्देहप्रवृत्तेरिह निपुणधियां नाप्यसौ संशयात्मा ;
वैशिष्ट्यान्न स्मृतिश्चेत्यनुमितिरुदिताऽध्यक्षवन्मानमन्यत् ॥ ४० ॥

नन्वनुमानं प्रमाणमेव न भवति ; प्रामाण्ये सत्येव हि प्रत्यक्षाप्रत्यक्षविवाद. इत्याशङ्क्य परिहरति **नायोग्यस्येति**। अयमत्र विकल्पक्रम.-[किम् ?] अनुमानस्याप्रामाण्यमबाधितत्वेऽपि, उत बाधितत्वेन? तत्रापि किं बाधः प्रत्यक्षेण, अथानुमानेन, अथवाऽऽगमेन; यद्वा नियतबाधकाभावेऽपि संशयात्मकत्वेनाप्रामाण्यम्, अथवा स्मृतिरूपत्वेन ?। तत्राबाधितत्वेऽप्यप्रामाण्यमिति तावत् व्याहतम्। बाधेऽपि प्रत्यक्षबाधो योग्यस्यैव। स पुनर्धूमानुमानादौ न दृश्यते। अयोग्यविषये बाधस्त्वप्रयोजकः ; अयोग्यानुपलब्धेरबाधकत्वात्। अतो न प्रत्यक्षबाधात् अप्रामाण्यमनुमानसामान्यस्य। यत्र पुनः क्वचित् प्रत्यक्षबाध', तत्र वयमप्यप्रामाण्यमङ्गीकुर्महे। नैतावताऽनुमानतत्त्वापलापः। न चानुमानेन वा बाधः ; व्याघातात्।

---

ळी— एवं लिङ्गदर्शनव्याप्तिस्मरणव्याप्यवत्तापरामर्शजन्यमनुमितिरूपं ज्ञानमित्युक्तमर्थं व्याप्तिस्वरूपतद्ग्रहतदुपायशोधनेन विशदयितुमारभमाणः तत्र सावधानश्रवणप्रवृत्तिप्रतिबन्धिकामनुमानाप्रामाण्यशंकामादौ निरस्यति नेति। तत्रतत्रानुमानघट्टप्रारम्भ एवैतत्प्रामाण्याप्रामाण्यविचारस्य कृतत्वेऽपि, तत्स्वरूपकारणादिकमीषदप्यविज्ञातवतः शंकोत्थितेरसंभवादयमेवास्यावसरो भावितः। अग्न्यनुमितेरप्रमात्वे अनुमानमप्रमाणं स्यात्। अप्रमात्वमतिः कथम्? पक्षे साध्याभावग्रहणरूपबाधाद्वा संशयरूपत्वाद्वेति विकल्पे पादत्रयेण समाधिमाह। बाधादिति चेत्—स बाधः प्रत्यक्षरूपो वा अनुमितिरूपो वा शाब्दबोधरूपो वा। पर्वतोऽग्निमानित्यनुमितिं प्रति अग्न्यभाववत्त्वप्रत्यक्षरूपबाधो नास्ति ; प्रत्यक्षरूपबाधे योग्यानुपलब्धेः कारणत्वात्। पर्वते यत्र देशे अग्निः साध्यते, तद्देशेन्द्रियसंनिकर्षाद्यभावेन योग्यानुपलब्धेर्दुर्वचत्वात्। न द्वितीयः ; तदभाववत्त्वानुमितिरूपपरोक्षज्ञानं प्रति तद्व्याप्यवत्ताज्ञानरूपपरामर्शस्य प्रतिबन्धकतया तदनुमित्यनुदयात्। पूर्वमुदितत्वे प्रकृतव्याप्यवत्तापरामर्शेन तस्या एवाप्रामाण्यापादनात्। तदिदमुक्तम् अनुमानम् =व्याप्यवत्ताज्ञानं स्वविषयस्य व्यापकस्य विहतिं=बाधमनुमितिरूपं न क्षमेतेति। अन्योऽप्यर्थः-कृत्स्नानुमानाप्रामाण्यवादी कथमनुमानं प्रयुञ्जीत। तत्प्रयुक्तमनुमानं स्वस्मिन् प्रामाण्यस्य भंगं कथं सहेत। सहते चेत्, तस्य बाधकत्वमेव न भवतीति। न च तृतीयः। अयं निरग्निरित्यागमः=शब्द आप्तवाक्यरूपो न हि लक्ष्यते। अनुमानसामान्यमप्रमाणमिति शब्दश्च प्रमाणमेव न भवति; स्वस्यैव= स्वेनैव अनुमानस्यापेक्षितत्वात्। व्यवहारादिना व्युत्पत्तिग्रहो हि अनेकानुमानाधीनः। तदभावे च न शब्दो बोधहेतुः। एवं बाधपक्षो निरस्तः। एवमनुमितेः संशयत्वमपि न भवति। कोट्यन्तरानवगाहनात्। साध्यसंशयनिवृत्त्यर्थमेव ह्यनुमानप्रादुर्भावः। पश्चान्निष्कम्पप्रवृत्त्या चासंशयत्वं ह्यवगमितम्। ननु मा भूदप्रामाण्यम्। अस्तु स्मृतावन्तर्भावः। स्मृतेश्च, 'स्मृतिः प्रत्यक्षमैतिह्यम्' इति पृथग्गणितत्वादनुमानं नाम नान्यन्मानमिति चेत्—आह वैशिष्ट्यादिति। पूर्वश्लोकोक्तरीत्या संस्कारमात्रापेक्षज्ञानादतिरिक्तत्वादिति। चतुर्थपादस्य स्मृत्यप्रामाण्याभ्युपगमेनापि योजना भवति। सा वृत्तौ द्रष्टव्या।

व्याघातादिति। साध्यव्याप्यवत्तापरामर्शस्य साध्याभावविघटकतया बाधानवतारादित्यर्थः।

कृत्स्नानुमानाप्रामाण्ये बाधकस्याप्यनुमानस्य तदन्तर्भावात्। तदिदमाह **स्वविषयेति**। नाप्यागमेन बाधः; आगमस्यैव व्युत्पत्तिदशायामनुमानसापेक्षत्वात्। इदमप्याह **स्वस्येति**। न च संशयात्मकमनुमानम्, निश्चयेनैव प्रवृत्तिव्यवहारयोर्दर्शनात्। तदप्याह **निस्सन्देहेति**। स्मृत्यात्मकत्वमवशिष्यते। तच्च साध्यस्य पक्षधर्मताप्रतिपत्तौ न संभवतीत्युक्तं प्रागेव। एतदपि वदति **वैशिष्ट्यादिति**। अतः प्रत्यक्षवदनुमानमपि पृथगेव प्रमाणमिति निगमयति **अध्यक्षवदिति**। अत्र स्मृतेरप्रमाणत्वेनोपादानमन्वारुह्यवादेनेति भाष्यम्॥

**इत्यनुमानप्रामाण्यसिद्धिः ॥ ४० ॥**

**(266) सामान्यं प्राक् प्रसिद्धं ; न पुनरनुगमः सिद्धपूर्वो विशेषे ;**
**व्याप्तिः सर्वाऽपि मग्ना, क्वचिदपि सकलव्याप्यसङ्गत्यदृष्टेः ।**
**भूयोदृष्टेर्व्यवस्था न हि भवति ; तथोपाधयः स्युर्दुरूहाः ;**
**इत्याद्याः स्वेष्टतर्कस्थिरनियमजुषा दर्शनेनैव बाध्याः ॥ ४१ ॥**

अत्र **चार्वाकः** प्रत्यवतिष्ठते। किमनुमानेन विशेषः साध्यते, उत सामान्यम्? न तावत् सामान्यम्; प्रागेव प्रसिद्धत्वात्। न ह्यग्निमत्त्वसामान्यमप्रसिद्धम्; [तथासति?] महानसस्याप्यनग्निमत्त्वेन दृष्टान्तस्य साध्यविकलत्वप्रसङ्गात्। तदिदमाह **सामान्यमिति**। न च विशेषः साध्यः; तस्मिन्ननुगमाभावादित्याह **न पुनरिति**। यथाऽऽहुः, "विशेषेऽनुगमाभावः सामान्ये सिद्धसाधनम्। अनुमाभङ्गपङ्केऽस्मिन् निमग्ना वादिदन्तिनः॥" इति; 'विशेषेऽनुगमाभावात् सामान्ये सिद्धसाधनात्। तद्वतोऽनुपपन्नत्वादनुमानकथा कुतः॥' इति च।

---

व्यी—अनुमानसामान्याप्रामाण्यपरतयाऽपि योजयति कृत्स्नेति ॥ ४० ॥

ननु निश्चयात्मकानुमितौ व्याप्तिग्रहो हेतुः। स एव न संभवतीति शंकते पादत्रयेण सामान्यमिति। किं साध्यसामान्येन व्याप्तिः, उत विशेषेण। नाद्यः; सामान्यं प्रतिव्याप्तौ वह्निसामान्यमेव ज्ञाप्यं स्यात्। तत्तु बहुत्र पूर्वमेव तस्य दृष्टत्वात् न ज्ञाप्यम्। विशेषः= पर्वतीयवह्निः सामानाधिकरण्येन वह्निविशिष्टपर्वतत्वं वा ज्ञाप्यश्चेत्—धूमसामान्यस्य स व्यापको न भवति; महानसादौ तदभावात्। विशेषे उक्तं अनुगमः= व्याप्तिः पूर्वं न सिद्धः =न ज्ञात इति। किञ्च व्याप्तिरेव न भवति; यत्रयत्र धूम इति सर्वधूमग्रहणात् तेनाग्नेः सकलस्य संगतेः= संबन्धस्यादृष्टत्वात्। कतिपयसंबन्धग्रहश्च न व्याप्तिग्रहः। मा भूत् व्याप्तिग्रहः; भूयोदर्शनमेवालमिति चेत्, तत्राह भूय इति। भूयोदर्शनस्य न व्यवस्था, सकृत् द्विर्वा दर्शनेऽपि क्वचिदनुमितेः। दर्शनबहुत्वे कतिकृत्व इति व्यवस्था च न। तथा, दृष्टेरिति पञ्चमी। भूयोदृष्टितो न साध्यव्यवस्था; व्यभिचरितहेतुस्थलेऽपि भूयोदृष्टिसत्त्वात् तद्वदत्रापि व्यभिचारशंकासंभवात्। ननु व्याप्तिर्नाम न सर्वेण हेतुना साध्यसंबन्धः, किंतु हेतुना निरुपाधिकः संबन्ध इत्यत्राऽऽह तथोपाधयः स्युर्दुरूहा इति। अयमत्रमुपाधिः संभाव्यत इति संभावितसर्वविषयकोहस्य दुष्करतया, उपाध्यभावावधारणायोग इति, एवमुपाधिलक्षणस्य व्याप्तिघटिततया व्याप्तौ तद्घटने अन्योन्याश्रयात् दुरूहा इति च भावः। समाधत्ते इत्याद्या इति। एवमादय आक्षेपाः बाध्या भवन्ति; त्वदीयाक्षेपवाक्यानां सर्वेषामनुमानवेषत्वात्। तर्कः, तन्मूलं स्थिरीभूतो नियमश्च व्याप्त्यपरपर्यायः तवेष्टौ। तथाच तद्वदेव तर्काधीनव्याप्तिजुषां हेतूनां युष्मत्पक्षे दर्शनेन तथैवास्मत्पक्षेऽपि संभवात् आक्षेपाः बाध्यन्त इति।

विशेषे इति। अनुगमाभावात् सिद्धसाधनादिति पञ्चम्यन्तपाठोऽन्यत्र दृश्यते (न्या. प.)।

किं च, श्लो— व्याप्तिरेवानुमानस्य जीवातुः सा च सर्वथा । न संभवति संबन्धग्रहस्यानुपपत्तितः ॥

कतिपयव्यक्तिदर्शनेन संबन्धग्रहणस्य व्यभिचारिष्वपि साधारणत्वात् । सकलव्यापकव्यक्तिदर्शनेन संबन्धग्रहणमसर्वज्ञेन कर्तुं न शक्यते । यदि सर्वज्ञः संबन्धवेदी किम[नेना]नुमानेन ? एवं च सर्वाऽपि व्याप्तिर्भग्ना ; प्रमेयत्वाभिधेयत्वादौ सर्वव्यक्त्युपसंहारेण व्याप्तिग्रहणस्याशक्यत्वादित्याह **व्याप्तिरिति** ।

अस्तु भूयोदर्शनेन व्यवस्थेत्याशङ्क्याह **भूयोदृष्टेरिति** । सहस्रशो भूयोदर्शितस्यापि(दृष्टस्यापि) तत्रतत्र व्यभिचारदर्शनादिति भावः ॥ तर्हि निरुपाधिकसंबन्धो व्याप्तिरिति लक्षणं कृत्वा उपाधिविधूननेनैव व्याप्तिं प्रतिष्ठापयाम इति चेन्न ; दृष्टादृष्टोपाधीनामनन्तानां दुरूहत्वेन तद्विधूननस्यैवाशक्यत्वादित्याह **तथोपाधय इति** । इत्थमनुमाननिराकरणे दुर्वादिनां प्रलापोऽयं किमनुमानमूलः, उत तर्कमूलः, अथवा निर्मूलः ? निर्मूलत्वे प्रलाप एव ; अनुमानमूलत्वे तर्कमूलत्वे वा व्याप्तिमन्तरेण तदुभय न संभवतीति तत्रापि व्याप्तिग्रहणमवश्यम्भावि ; तथाच व्याघात इत्यभिप्रायेण परिहरति **इत्याद्या इति** । न केवलं तर्क एव परपक्षबाधकः, अपितु लोकोपलम्भोऽपीत्याह **दर्शनेनेति** ॥

**इत्यनुमानबाधकतर्कपरिहारः ॥ ४१ ॥**

**(267) दृष्टेऽतीचारशङ्का न भवति; यदि सा क्वापि देशान्तरादौ,**
**सिद्धा तत्रानुमानस्थितिः ; अथ न, तदा क्वातिशङ्कावकाशः ? ।**
**व्याघातान्ता तु शङ्का न पुनरुदयति स्वप्रवृत्त्यादिभङ्गात्**
**यावच्छङ्कं च तर्कप्रसृतिरिह ततो नानवस्थादिदोषः ॥ ४२ ॥**

---

श्री–अर्थः प्रागेवोक्तः । ननु हेतुसाध्ययोः केवलान्वयित्वे व्यभिचारशंकानवकाशात् सर्वव्याप्तिभंगः कथमित्यत्राह प्रमेयत्वेति । केवलान्वयित्वज्ञाने सति अनुमानं तत्र व्यर्थम् । तदज्ञाने व्यभिचारशंका भवेदेवेति सर्वव्यक्तिग्रहणमावश्यकमिति भावः ॥ ४१ ॥

पूर्वश्लोके भूयोदृष्टिबलात् व्यवस्था दूषिता । तत् परिजिहीर्षन् आह दृष्ट इति । सत्यपि भूयोदर्शने शंका स्यादिति यदुक्तम्, तत्रेयमतीचारशंका = व्यभिचारशंका, यत्रयत्राधिकरणे हेतुसाध्ययोः दर्शनम्, यद्यदा च दर्शनम्, तत्रैव तदैव वा, देशान्तरकालान्तरयोर्वा । नाद्यः ; तत्र द्वयोरपि दृष्टत्वात् व्यभिचारशंकानवकाशात् । न द्वितीयः ; तद्देशान्तरं कालान्तरञ्च हेतुसाध्योभयाभाववत्त्वेन यत् निश्चितम्, तद्वा, तदन्यद्वा । नाद्यः ; उभयाभावनिश्चयेन शंकानवकाशात् । अथ तदन्यदेशकालग्रहणेन शंकेति चेत्—तथाविधं देशान्तरं कालान्तरञ्च पूर्वमनुमाय हि तत्र व्यभिचारशंका कार्या । तथाचानुमानं स्वीकृतं भवति । "कालं भाविनमाकलय्य शंक्येत" इति कुसुमाञ्जलिवाक्यस्याप्येतावदर्थपरत्वं वक्तव्यम् । अथ न = यदि देशकालान्तरानुमानं न, तदा अतिशंकाया एव नावकाशः । कुत्र च सा क्रियेत । "अथ स्वीकृतमनुमानम्, सुहृद्भावेन पृच्छामः, कथमाशंका निवर्तनीया" इति कुसुमाञ्जलिपंक्तिरिहोत्तरार्धावतारिकात्वेन भाव्या । वह्निं विनाऽपि धूमः स्यादिति शंका तावदेव भवति, यावन्न व्याघातो दृश्यते । अग्निं विनापि धूमः स्यादिति शंका हि, स्वस्य परेषाञ्च धूमापेक्षाकाले नियमेन अग्न्यर्थप्रवृत्तिदर्शनात् तद्विरोधान्न पुनरुदेति । स्वप्रवृत्त्यादिभंग एव व्याघातः । अत्रेदं बोध्यम्—अनुमानप्रयोगे विपक्षजिज्ञासा भवेत् । सैव, हेतुरस्तु साध्यं मास्त्विति शंकेत्युच्यते । तस्यां प्रसक्तायामनुकूलतर्कः प्रदर्शनीयः । अनुकूलतर्कश्च साध्याभाव-

(268) व्याप्यत्वं यस्य यत्र स्फुरति सहचरे, सोऽस्य हेतोरुपाधिः ;
साध्यव्यापी समोऽयं समगणि निपुणैः साधनाव्यापकश्च ।
योग्यादृष्ट्या च तर्कैरपि तमपनुदेच्छङ्कितं निश्चितं वा ;
साम्यं नात्राऽऽहुरेके ; तदभिमतमिह व्यापकादर्शनादि ॥ ४३ ॥

उपाधिस्वरूपप्रदर्शनपूर्वकमुपाधिविधूननप्रक्रियां प्रदर्शयितुमारभते— व्याप्यत्वमिति । अत्र मतभेदेन लक्षणद्वयमाह–साधनाव्यापकत्वे सति साध्यसमव्याप्तो धर्म उपाधिरित्युदयनः। साधनाव्यापकत्वे

---

ऽपि—त्वाभावे तदारोपस्य दुर्वचत्वात् लक्षणे साध्यव्याप्यत्वमपि निवेश्यते । अत्र एतद्गतव्याप्यत्वमेव हेतावारोपितम्, न तु तस्य स्वतस्तदिति कथम्, विपरिवर्तो वा किं न स्यादिति प्रश्ने, उपाधेः साध्यव्यापकत्वमुपपाद्य, उपाधेः साधनाव्यापकत्वात् साधने उपाध्यव्याप्यत्वलाभात् साध्यव्यापकभूतोपाध्यव्याप्यतया साध्याव्याप्यत्वं हेतौ सुदृढमित्येव वक्तव्यम् । एवञ्चाऽऽवश्यकेन साध्यव्यापकत्वेनैव दूषकत्वनिर्वाहात् उपाधिः साध्यव्याप्यो भवतु मा वा, साध्यव्याप्यभूतस्योपाधेरिवाव्याप्यस्यापि दूषकत्वाविशेषात् उपाधिशब्दस्येदृशदूषकत्वरूपगुणमादाय, माणवके सिंहशब्दस्येव, अव्याप्येऽपि गौणः प्रयोग इति अन्ततः साध्यव्याप्यत्वाघटितमेव लक्षणमुदयनाचार्येष्टमपि । तदेव निष्कृष्टं लघु नवीनो वादीन्द्रोऽन्ववादीत् । तथाच प्राच्यैः प्रथममादृतं साध्यसमव्याप्तत्वम् । अथ व्याप्यत्वमुपेक्षितमिति द्विविधं लक्षणमत्र प्रदर्श्यते ।

तदयमर्थः-यस्य व्याप्यत्वं = यन्निष्ठं व्याप्यत्वं यत्र सहचरे = यस्मिन् समानाधिकरणे हेतौ स्फुरति, जपाकुसुमनिष्ठं लौहित्यं स्फटिक इव, स पदार्थः अस्य सहचरस्य हेतोरुपाधिरित्युच्यते । अतः निपुणैः = उपाधिशब्दव्युत्पादकैः अयमुपाधिः साध्यव्यापी = साध्यव्यापकः समः = साध्येन तुल्यः— साध्यं यथा स्वव्याप्यं भवति, तथा स्वयमपि साध्यव्याप्यः । यद्वा यथा साध्यं स्वव्यापकं, तथा स्वयं तद्व्यापकः ; स्वव्यापकसाध्यव्यापक इति यावत् । तथा साधनाव्यापकश्च समगणि = निरधारि । साध्यव्याप्यत्वमप्युपाधिलक्षणे न्यवेशीति यावत्। एवम्भूतस्योपाधेरुद्भावने कथं तन्निरास इति चेत्– उपाधिः स्यादिति शङ्क्यताम् ; अथवा अस्त्येवेति निश्चीयताम्, उभयथाऽपि सोऽपनोद्य एव । तत्र स दृष्टियोग्यपदार्थश्चेत्, योग्यानुपलब्धौ सत्यां तथैव तमपनुदेत् = उपाध्यभावं निश्चाययेत् । यद्यनुपलभ्यमानः, तर्हि उचितेन तर्केणैकेन बहुभिर्वा स एव नास्तीति वा, तस्य साध्यव्यापकत्वं वा साधनाव्यापकत्वं वा नास्तीति वोपपाद्यापनुदेत् । एवञ्च साध्यव्यापकत्वसाधनाव्यापकत्वयोरेवापनोदनीयत्वात् तावत एव दूषकत्वात् अत्र = उपाधौ साम्यं = साध्यतौल्यं = व्याप्यत्वांशं नाहुः = त्यजन्ति नवीनवादीन्द्रपर्यन्ताः। तर्हि कथं दूषकत्वम्, स्वगतव्याप्तेः साधने आरोपेण हि तत् वक्तव्यम् । अव्याप्यस्याप्युपाधित्वे कथं तदिति चेत्—इह = उपाधिनिर्देशस्थले व्यापकादर्शनादि = साध्यव्यापकत्वेनोक्तोपाध्यनुपलम्भादिकम्–उपाध्यभावादिकमिति यावत्–तदभिमतं = दूषकत्वेन तदिष्टम्। आरोपितव्याप्तिकत्वेन हेतुर्वस्तुतो व्याप्तिरहित इत्युद्भावनं पूर्वेषामिष्टम् । एषां तु तदंशोत्तयसंभवात् साध्यव्यापकतयोक्तस्योपाधेः पक्षवृत्तित्वं प्रदर्श्य व्यापकाभावात् व्याप्याभाव इति साध्याभावरूपबाधवर्णनमभिमतम् । एवञ्च हेतोर्बाधितहेत्वाभासत्वमुक्तं भवति । व्यापकाभावेत्यनुक्त्वा व्यापकादर्शनेति प्रयोगः व्यापकानुपलब्धिग्रहणे तत्साहित्येन बौद्धपठिता व्यापकविरुद्धोपलब्धिरादिपदेन सुग्रहा भवेदिति । शेषं वृत्तौ ।

उदयन इति । अनेनापि साध्यव्याप्यत्वं विनाऽप्युपाधिलक्षणस्योक्तत्वेऽपि, व्याप्यत्वस्याप्युप-

सति साध्यव्यापक इति समशब्दप्रतिक्षेपेण वादीन्द्रः। तत्र स्वधर्ममन्यत्रारोपयन् उपाधिशब्देनोच्यते; तथाच स्वधर्मभूताया व्याप्तेर्हेतुत्वाभिमते मैत्रीतनयत्वादौ प्रतीतिहेतुत्वात् शाकाद्याहारपरिणतिरुपाधिः, यथा स्फटिकगता(टिके स्वगता ?)रुणिमप्रतीतिहेतुर्जपा(वा)कुसुमादिः। तथाच निरुपाधिकसंबन्धत्वस्य व्याप्तिलक्षणत्वात् तदभावेन व्याप्तिमवसादयन् उपाधिर्दूषणमिति समशब्दं प्रयुञ्जानानामुपाधिशब्दार्थापरित्यागेन दूषणाभिधाने तात्पर्यम्। अन्येषां तु—समो विषमो वा भवतूपाधि, तन्निवृत्तौ पक्षे साध्यनिवृत्तेरुभयत्रापि साधारणत्वात्। तथाच साध्यनिवृत्त्यङ्गभूतव्यापकत्वो(त्वमात्रो ?)पादानमन्तरेण समशब्दप्रयोगो व्यर्थः। तथा च समो वाऽधिको वा व्यापकत्वेनाभिमत. पक्षे व्यावर्तमानः साध्यं व्यावर्तयतीति पक्षे साध्यबाधादुपाधेर्दूषणत्वम्। उपाधिशब्दार्थस्तु यथा तथा वा भवत्विति। तदेतत् सर्वं पूर्वार्धेनोक्तम्। अत्र **निपुणैरिति** कथनम् उपाधिशब्दार्थनिरूपणेन निर्वाहात्॥ अन्यथाऽपि दूषणत्वे सिद्धे कथमनपेक्षितसमशब्दोपादानमिति चेत्, इत्थम्—यथा पक्षविपक्षयोर्वर्तमानत्वेन हेतोर्दूषणत्वे सिद्धेऽपि, 'पक्षविपक्षयोरेव वर्तमानो हेतुर्विरुद्धः' इति विरुद्धलक्षणे॥ सावधारणनिर्देशः प्रकारान्तरप्रदर्शनार्थः। विपक्षे वर्तमानत्वात् साध्यासाधकत्वम्; विपक्ष एव वर्तमानत्वात् परपक्षस्यापि साधकत्वम्। तथाच अत्यन्तदुष्टमनुमानम्—इतीममर्थं प्रकाशयितुं पक्षविपक्षयोरेवेत्यवधारणप्रयोग इति चेत्—एवं तर्हि [अत्रापि?] व्यापकनिवृत्त्या व्याप्यनिवृत्तिद्वारेण पक्षे साध्यबाधं बोधयितुं व्यापकत्वोपादानम्। [व्याप्यस्य] मैत्रीतनयत्वादेर्व्याप्यत्वप्रतिभासोऽपि न स्वाभाविकः। अपि तु स्फटिकारुणिमवत् अन्यप्रयुक्त इति प्रतिभासमात्रस्यापि दुष्टत्वेन हेतोर्व्याप्तिनिवृत्तिं स्फुटमेव वक्तुं समशब्दप्रयोग इति सन्तोष्टव्यम्। व्यापकत्वमात्रोपादाने व्यापकनिवृत्त्या व्याप्यभूतसाध्यनिवृत्तिमुपजीव्य साध्यबाधेन हेतुदोषो वाच्यः। सम

---

र्थ— पादनात् तदनुयायिभिस्तद्दले आदरस्य प्रदर्शितत्वाच्चेतन्निर्देशः। अत एव ओदयनिका इति निर्देक्ष्यति। वादीन्द्र इति। 'श्रीहरकिङ्करन्यायाचार्यपरमपण्डितभट्टवादीन्द्रविरचिते महाविद्याविडम्बने' इति स्वयं स्वग्रन्थेऽयं निर्दिशति। महाविद्याख्यकेवलान्वय्यनुमानविशेषाणां खण्डनं तत्र ग्रन्थे कृतम्। अस्य प्रकृतग्रन्थकारकिञ्चित्पूर्वकालस्थिततयाऽर्वाचीनत्वेऽपि तदुपादानमेतत्पक्षादरणनिरन्तरानुवृत्तिज्ञापनाय। व्याप्यत्वाभावेऽप्युपाध्युद्भावनमन्यत्राप्युक्तम्, "वाद्युक्तसाध्यनियमच्युतोऽपि कथकैरुपाधिरुद्भाव्यः। पर्यवसितं नियमयन् दूषकताबीजसामान्यात्" इति। अत्र निपुणैरित्युक्तिः नोत्तरलक्षणस्य दुष्टत्वाशयेनेति व्यक्तये निपुणशब्दाशयमन्यथा दर्शयति उपाधिशब्देति। साध्यबाधं बोधयितुमिति। अनेन—उपाधेः साध्यव्याप्यत्वमिच्छद्भिर्लक्षणे साध्यव्यापकत्वं किमिति निवेश्यम्; न च तदनिवेशे अनित्यः शब्दः कृतकत्वादित्यादौ सावयवत्वमुपाधिः स्यादिति वाच्यम्; निरवयवानामपि नाशदर्शनेन कृतकत्वे अनित्यत्वव्याप्यतायामेवानुकूलतर्कसंभवात् व्याप्यत्वस्याऽऽरोप्यत्वायोगात् तदुपाधित्ववारणसंभवादिति शंका निरस्ता; व्यापकाभावात् व्याप्याभाव इति साध्याभावसाधनार्थमेव तद्घटनात्। मैत्रीति। 'स श्यामः मैत्रीतनयत्वात् पूर्वसर्वतनयवत्' इत्यत्र शाकाद्याहारपरिणामवत्त्वमुपाधिः। न स्वाभाविक इति। न मैत्रीशरीरतद्गर्भाशयघटकरूपादिस्वभावायत्त इत्यर्थः। संतोष्टव्यमिति। ईषत्प्रयोजनलाभेऽपि तृप्तिः कार्या; न पुनरतिव्याप्तिवारणादिकमेव दलकृत्यमिति भावः। स्फुटमेव वक्तुमित्येतद् विवृणोति व्यापकत्वमात्रेत्यादिना। उपाध्यभावेन पक्षे

अनुमाने तावत् सामान्य न साध्यते, येन सिद्धसाधनत्वमुद्भाव्येत। किंतु सामान्यव्याप्ति सहकृतेन पक्षधर्मत्वेन सामान्यस्य पक्षनिष्ठत्वरूपो विशेष साध्यते। कथ तर्हि विशेषव्याप्तिशून्येन पक्षधर्मेणापि हेतुविशेषेण तत्सिद्धिरिति मा वोच। विशेषव्याप्तेरनुमानाङ्गत्वस्वीकारे पुनरयुक्ताङ्गत्वम्, अनपेक्षितप्राप्तिकल्पनया दूषणात् [अ?]प्राप्तिसमासमाधिश्च। सामान्यव्याप्तेरेवानुमानाङ्गत्वात्॥ कथ सामान्यविषया व्याप्तिर्विशेषसिद्धावङ्गमिति चेत्— एव तर्हि युक्ताङ्गपरित्याग, सामान्यव्याप्तेरेव विशेषसिद्धौ युक्ताङ्गत्वात् विशेषव्याप्तिरूपाया प्राप्तेरङ्गत्व परिकल्प्य तदभावेन दूषणमप्राप्तिसमाप्रक्रियामनुधावति। अविषयवृत्तित्व च, सामान्यविषयाया व्याप्तेर्विशेषविषये सञ्चारणेन दूषणकथनात्। तथाच सामान्यव्याप्त्या पक्षधर्मतया च परिष्कृतो हेतु पक्षे साध्यविशेष साधयति, अन्यथा प्रत्यनुमानप्रतितर्कयोरपि कण्ठगतजीवितत्वमापद्येत। अतो 'विशेषेऽनुगमाभाव' इत्यादेरनवकाश। यत् पुन सामान्येन सर्वव्यक्तिग्रहणासभवात् न व्याप्तिग्रहण सभवतीति, तदनन्तरमेव समाधास्याम। तदवशिष्यते भूयोदर्शनात् व्याप्तिग्रहण न सभवति अतिचारशङ्कायास्सर्वत्र सुलभत्वादिति, तदेतत् विकल्प्य दूषयति [दृष्ट इति?]। भूयोदर्शनदृष्टस्याप्यर्थस्य किं दृष्ट एव देशेऽतिचारशङ्का उत देशान्तरादौ? न तावत् दृष्ट इत्याह दृष्ट इति। नापि देशान्तरादाविति वक्तुमनुवदति यदीति। देशान्तरादावतिचारशङ्काया देशान्तराद्यनुमानमेव निष्प्रतिद्वन्द्वमवतिष्ठत इत्याह सिद्धेति। देशान्तरानुमानाभावमाशङ्कते अथेति। शङ्कितमर्थ प्रतिक्षिपति तदेति। तर्हि शङ्काया को निवारक? निवारकाभावे कथ शङ्का निवर्तेतेत्यत आह व्याघातान्तेति। अयमर्थ—उत्पन्ना शङ्का व्याघातदर्शनेन निवर्तते। तेनैव व्याघातदर्शनेन उत्तरोत्तरशङ्का न जाय इति। तथा च शङ्कानिवृत्तौ तर्कप्रवृत्तिस्तावन्नैवावसीदतीत्याह यावच्छङ्कमिति। तेनोत्तरोत्तरतर्कप्रवृत्त्याऽनवस्थावचनमस्थानवाद इत्याह—तत इति। एतत् सर्वमभि[स धायो]प्रेत्योक्त न्यायविद्भि, "शङ्का चेदनुमाऽस्त्येव न चेच्छङ्का ततस्तराम्। व्याघातावधिराशङ्का तर्कश्शङ्कावधिर्मत॥" इति।

वी–स्वीकारे किञ्चिदनिष्टापादनम्। अथ तत्तर्कास्वीकारेण शङ्काया तर्कस्यापनाय व्याघातप्रदर्शनम्। तत्र प्रथमा व्यभिचारशङ्का तर्केण निवर्त्यते। तदाह यावच्छङ्कञ्च तर्कप्रसृतिरिति। तदुक्तम्, "यावद्दशाक तर्कप्रवृत्ते" इति। अय भाव —व्यभिचारशङ्काया तर्कप्रयोगे, तर्कस्यापि व्याप्यारोपेण व्यापकारोपरूपत्वात् तत्रापि व्याप्यव्यापकभावघटनात् तत्र व्यभिचारशङ्काया तर्कान्तरप्रयोगे तत्राप्येवमित्यनवस्था, प्रथमप्रवृत्तव्यभिचारशङ्काया अनिवृत्तिश्चेति न यावदाशङ्क तर्क प्रवर्तत एव। न त्वनवस्था। व्याघातप्रदर्शनानन्तर तर्कभञ्जनस्यासभवादिति। तदेतत् स्पष्टमाह ततो नानवस्थादिदोष इति।

दृष्टे इति श्लोकस्य पूर्वश्लोकोत्तरार्धमात्रसमाधानपरत्वदृष्टे पूर्वार्धसमाधि कुतो नेति शङ्का परिहर्तुं पीठिका रचयति अनुमाने तावदिति। व्याप्तिनिरूपणस्योपरि क्रियमाणतया तत एव तत्सिद्धिरिति भाव। तत्र, 'न पुनरनुगम सिद्धपूर्वो विशेषे इत्ययमनुक्तोपालम्भ इति ज्ञापयन् प्रतिवादिनमयुक्ताङ्गत्वमप्राप्तिसमेति दूषणद्वयेन दूषयति सक्षेपविस्तराभ्या विशेषेत्यादिना। न्यायविद्भि =उदयनाचार्यै॥ वक्तव्य सर्वमेमि सम्यक् विवेचितमिति इम एव न्यायविद इति भाव। अन्यायविदन्य खण्डनकार उपरि प्रस्तूयते, य शिक्षितमप्यभिनिवेशेन न गृह्णाति। शङ्का चेदिति। अयमर्थ यदि देशान्तरे कालान्तरे वा व्यभिचारशङ्का, सा देशाद्यनुमानेन न कार्येति न सर्वथाऽनुमान

अनेन, "व्याघातो यदि शङ्काऽस्ति न चेच्छङ्का ततस्तराम्। व्याघातावधिराशङ्का तर्कः शङ्कावधिः कुतः ॥" इति कुसृष्टिरपि नष्टप्राया ; यावद्व्याघातदर्शनं शङ्कायाः सत्त्वम् ; व्याघातदर्शने तन्निवृत्तिरित्युक्तत्वात् । भूयोदर्शनदृष्टाया व्याप्तेर्न निर्मूला शङ्का [विरोधिनी?] ; तस्यास्सर्वत्र सुलभत्वेन स्वप्रवृत्त्यादिविरोधप्रसङ्गात् । उपाधिदर्शनादिमूलशङ्कायामुपाधिविधूननमुत्तरत्र दर्शयिष्यते ॥ **इति अतिचारशङ्कोद्धारप्रकारः** ॥४२॥

---

व्यी— दूष्येत । अतोऽनुमारूपं प्रमाणमस्त्येव । न चेत् व्यभिचारशंका, ततः सुतरामनुमासद्भावः। अस्त्वनुमानमशंकितस्थले ; शंकायां प्रवृत्तायां कथं तन्निवृत्तिरिति चेत्—तर्कः शंकावधिः । अनुकूलतर्कः शंकायाः अवधिः= निवृत्तिहेतुः । ननु तर्कान्तर्गतस्य व्याप्यव्यापकभावस्याभावशंकायां किं कार्यमिति चेत्—आशंकेयं व्याघातावधिः । अत्र बहुव्रीहिः, व्याघातः अवधिर्यस्या इति । उत्तरशंका व्याघातग्रहणात् पूर्वमेव स्यात् । व्याघाते दर्शिते ज्ञाते तु शंका निवर्तते । अतस्तर्कस्य प्रथमस्याविचाल्यत्वात् व्यभिचारशंका निवर्तत इति। तथाचोत्तरशंकायाः व्याघातो वारकः, प्रथमशंकायास्तर्को निवर्तक इति। हेयत्वाय खण्डनखण्डखाद्यकारस्य एतत्खण्डनं दर्शयति अनेनेत्यादिना । एतदर्थस्तु—व्याघातो यदि प्रदर्श्यते मदुद्भावितशंकापरिहारार्थम्, तर्हि शंकाऽस्त्येव । व्याघातस्य शंकाश्रितत्वात् । आश्रयाभावे व्याघातहान्यापत्तेः । न चेत्= व्याघाताप्रदर्शने । शंका ततस्तराम् । अस्मदीया शंका स्थैर्यं सम्यगश्नुते । व्याघातावधिराशंका । अतो यावत्पर्यन्तं व्याघातप्रदर्शनम्, तावत् आशंकाऽस्त्येव । किञ्च व्याघातो नाम कः? विरोधनियमः। नियमश्च व्याप्तिः। तथाच तत्तद्व्याप्तिविषयेऽपि अभावशंका भवत्येव। अतः तर्कः शंकावधिः कथं भवेदिति । उक्तत्वादिति । न्यायविद्भिः प्रयुक्ते, "तदेव ह्याशङ्क्यते, यस्मिन् आशंक्यमाने स्वक्रियाव्याघातादयो नावतरन्तीति लोकमर्यादा" इति वाक्ये अवधानहान्या नूनमापतितमिदं खण्डनमित्याशयः । अथवा तैरेव तदनन्तरं लिखितम्, "सर्वं मिथ्या भविष्यति इति वाक्यवत्" इति वाक्यमस्य बौद्धप्रायस्याभिनिवेशसंधुक्षकमासीदिव । लोकमर्यादामतिलंघ्य लिखन् वैतण्डिकः पक्षहीन एव ; स्थितेऽपि पक्षे न तत्परिरक्षणक्षमश्च ॥ खण्डनश्चैवं खण्ड्यम्—शंकायामुद्भावितायां व्याघातः उत्तरत्वेन प्रदर्श्यते । तावता तदाश्रितत्वमिदं कीदृशम् । न हि पूर्वपक्षे प्राप्ते समाधानस्य प्रवृत्ततया पूर्वपक्षाश्रितमेव समाधानमित्येवमुक्तौ पूर्वपक्षरूपाश्रयाभावे स्वस्थित्ययोगात् समाधानमेव पूर्वपक्षमपि स्थापयतीति कश्चित् ब्रूयात् । सर्वथा व्याप्त्यस्वीकारे च तदीयदूषणवाक्यानां बोधकत्वमेव न स्यादित्यलम् ॥ ४२ ॥

एवं निर्मर्यादस्य निर्मूलशंका निष्फलेति निरूपितम् । अथोपाधिमूलव्यभिचारशंकायामुचितं समाधानं वक्तव्यमिति उपाधिस्वरूपशोधनं क्रियते । तथा च प्रपूर्वश्लोके, 'भूयोदृष्टेर्व्यवस्था न हि भवति' इति भागमधिकृत्य वक्तव्यं पूर्वश्लोके उक्तम् । अथ, 'तथोपाधयः स्युर्दुरूहाः' इति भागं निरसितुमारभत इत्युक्तं भवति । व्याप्यत्वमिति । हेतुस्सोपाधिको दुष्ट इत्युच्यते । कोऽसावुपाधिः। साध्यव्यापकत्वे सति साधनाव्यापको यः, स उपाधिरिति प्रसिद्धम् । तत्र कथमुपाधिशब्दप्रयोग इति शंकायां तत्प्रवृत्तिनिमित्तोपपादनायोदयनाचार्यैः, "तद्धर्मभूता हि व्याप्तिः जपाकुसुमरक्ततेव स्फटिके साधनाभिमते चकास्तीति उपाधिरसावुच्यते" इत्युक्तम् । इदं पूर्वसमादृतमिति चोपरि दर्शयामास, "अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः । तैर्दृष्टैरपि नैवेष्टा व्यापकांशावधारणा" (श्लो. वा. 1-5) इति श्लोकोद्ग्रहणेन । ततः पूर्वञ्च वाक्यं तेषामेव, "तत्रोपाधिस्तु साधनाव्यापकत्वे सति साध्यव्यापकः" इत्येतावदेव । तथाच स्वगतव्याप्तिरूपधर्मारोपकत्वमुपाधित्वमिति उपाधिशब्दप्रवृत्तिनिमित्तम् । उप=समीपे आधीयते स्वधर्मो येन सः इति । स्वस्य साध्यव्याप्य-

शब्दोपादाने तु हेतोर्व्याप्तिप्रतिभासोऽप्यौपाधिक इति साक्षाद्धेतुदोषकथनम् उद्भटत्वात् दोषस्येति । अत्र उपाधिशब्दार्थस्वारस्यादुद्भटदोषप्रकाशनौचित्याच्च समशब्दप्रयोग इत्यौदयनिका इति । अस्तूपाधि लक्षणम्, कथ तस्य निधूननमित्याशङ्क्याह—**योग्येति** । उपाधि खलु शङ्कितो निश्चितश्च । शाकाद्याहारपरिणत्यादि शङ्कित , निषिद्धत्वादिर्निश्चित । यत्र खलु साधनाव्यापकत्वसाध्यसम व्याप्तयोरन्यतररूपस्याशङ्का, स शङ्कितोपाधि , अन्तिमगर्भेऽपि शाकाद्याहारपरिणतिसभवेन साधना- व्याप्तेराशङ्कितत्वात् । यत्र पुनर्द्वयोरपि रूपयोर्निश्चय , स निश्चितोपाधि , यथा हिंसात्वानुमाने निषिद्धत्वम् , यन्निषिद्ध तदधर्महेतुरिति निर्णयात् (यमात्) साध्यव्याप्ति , वैधहिंसाया निषिद्धत्वाभावात् साधनाव्याप्ति । उभय च निश्चितम् । उभय च प्रत्यक्षेण ग्रहीतु योग्य चेत् , योग्यादृष्ट्या तावदपनुद्यते, अयोग्य चेत् तर्केणैवेति विभाग । तदिदमाह **योग्येति** । तर्कप्रवृत्तिस्तु—किमुपाधय सर्वथा प्रमाणपथमनवतीर्णा उतावतीर्णा वेत्यादिना विकल्प्य तेषुतेषु ग्रन्थेषु वादिना पठितपाठा । तथाहि ? ? समव्याप्तिपक्षस्य सर्ववादिसंप्रतिपन्नत्वात् विषमव्याप्तिमनूद्य तेषा बाधिना भावमाह— **साम्यमिति** । अयमत्र भाव —व्यापकस्योपाधे पक्षे दर्शनाभावात् व्याप्यस्य साध्यस्य बाध इति । आदिशब्देन **बौद्धोक्तषोडशविधानुपलब्ध्यन्तर्गता** व्यापकविरुद्धोपलब्धिरुच्यते , यथा द्रव्यत्वाभावात् पृथिवीत्वाभाव इति व्यापकानुपलब्धि , द्रव्यत्वविरुद्धगुणत्वाद्युपलम्भात् पृथिवीत्वाभाव इति व्यापक

---

७¹—साध्याभावे साधिते हेतोस्तद्वृत्तितया यद्यपि साध्याभाववद्वृत्तित्व हेतोर्लभ्यते—अथापि न साक्षादिति भाव । ननु अन्यस्य कस्यचिद् व्याप्यत्वप्रदर्शनमात्रेण साधनस्य व्याप्यत्व किमिति भञ्ज- नीयम् । एक व्यापक प्रति अनेकस्य व्याप्यत्वसंभवादिति चेत्—अप्रयोजकशङ्काया साध्यसाधनयो- रनुकूलतर्काभावे व्याप्तियोगचिन्तावसरे व्याप्यत्वभ्रमोऽस्य सहचरितोपाधिगतव्याप्तिप्रतिसंधा- नायत्त इत्युपपादने व्याप्त्यभावग्रहोपष्टम्भलाभात् । अत एव व्याप्यत्वासिद्ध एव सोपाधिक इत्युच्यते । अन्यथा सत्प्रतिपक्षविधया साध्याभावसाधकत्वे सोपाधिक सत्प्रतिपक्ष , सोपधिको बाधित इति स्यात् । स्वगत व्याप्त्यारोपप्रसक्तिर्यस्योपाधित्वेन प्रदर्शने नास्ति, तस्य साध्याभावसाधकस्य सत्प्रति पक्षसपादकत्वमेवास्तीति । एवमुदयनानुयायिनामाशयम् औदयनिका इति प्रदर्श्य वक्तव्यान्तर मनस्याकलय्योपसहरति अस्त्वौपाधिलक्षणमिति । अय भाव -उपाधीना स्वाभावमुखेन साध्याभाव साधकतया सत्प्रतिपक्षोत्थापकत्ववत् व्यभिचारोन्नायकत्वमपि भवति , उपाधौ साधनाव्यापकत्वे गृहीते तुल्यवित्तिवेद्यतया साधने उपाध्यव्याप्यत्वलाभात् यो यद्व्यापकव्यभिचारी, स तद्व्यभि चारीति नियमेन साध्यव्यापकोपाधिव्यभिचारित्वात् साधनमिद प्रकृतसाध्यव्यभिचारीत्यनुमान- सभवात् । अतो व्याप्तिग्रहप्रतिबन्धकतया साध्यव्यापकत्वविशिष्टसाधनाव्यापकत्वरूपलक्षणा क्रान्ताना सर्वेषा व्याप्य त्वासिद्धत्वं मुख्यमिति सभवात् उदयनाद्याशयोऽप्ययमिति गुरवमिति । आद- र्शपक्षे चानन्तरश्लोके इद द्वितीय लक्षणम् । तर्कप्रवृत्तिस्त्विति । प्रमाणेन केनचिदवधार्य अयमुपा धिरिति विशदत्र प्रदर्शने, तत्र साध्यव्यापकत्वादिक तत्पण विमृश्यम् । य कश्चित् स्यादिति निर्मूल- शङ्का तु स्वयमेव शाम्येत् । अनन्तरश्लोकदर्शितविकल्पमुखेनापि निरसन भवतीत्येव तात्पर्य स्यात् । तदर्थाद्येतदनन्तरमेवानुपपादनमन्य पूर्णः पतित इति सप्रदाय । एतादृशमर्थ प्रदर्शय ग्रन्थपाता इति सुगमम् । बौद्धोक्तषोडशेति । कुसुमाञ्जलिविस्तरे अस्माभिरेवोक्तम् , "अनुपलम्भोऽप्यादाय

विरुद्धोपलब्धिरित्यादि । एवं पक्षे साध्यव्यापकस्योपाधेरनुपलम्भे तथोपाधिविरुद्धधर्मान्तरोपलम्भेऽपि साध्यासिद्धिरिति भावः। अन्यत् सर्वं विस्तरभयान्न लिख्यते ॥ इत्युपाधिस्वरूप-तद्विधूननप्रकारौ ॥४३

(269) **नित्यो व्यापी च न स्यादुपधिरिह, सदा सर्वतस्तत्प्रसङ्गात्**
**नाप्येष व्याप्यमात्राकृतिरवियुतितो नैकलिङ्गोपपत्तेः ।**
**नासौ पक्षेतरत्वप्रभृतिरपि भवेत् व्यापकोऽतिप्रसङ्गात् ;**
**तुल्यस्साध्येन पक्षे सह यदि घटते, साधनं व्याप्नुयात् सः ॥ ४४ ॥**

अत्रोपाधिविधूनन(विवेचन?)प्रक्रिया विशेषतो दर्शयति **नित्य** इति । न तावदनुमाने धूमादौ वह्न्यादिसाधने नित्यो व्यापी वा कश्चिदुपाधित्वेन शङ्कितुं शक्यते । कुत इत्यत्राह **सदे**ति । उपाधेस्सदातनत्वप्रसङ्गात् ; सार्वत्रिकत्वप्रसङ्गात् ; तथाच तत्समवृत्तेः साध्यस्यापि वह्न्यादेः सदातनत्वं सार्वत्रिकत्वं च प्रसज्येतेति भावः । तर्ह्यनित्योऽसार्वत्रिकश्च व्याप्यमात्राकृतिरस्त्वित्याशङ्क्याह **नापी**ति । तत्र हेतुं दर्शयति **अवियुतित** इति । व्याप्यमात्ररूपस्योपाधित्वाङ्गीकारे कृतकत्वानुमाने सावयवत्वमुपाधिः स्यात् ।

श्री—न्यायबिन्दूक्ता । अन्यैश्च बौद्धैः षोडशधा । तत्र स्वभावानुपलब्धिः कार्यानुपलब्धिः व्यापकानुपलब्धिः कारणानुपलब्धिरिति चतस्रोऽनुपलब्धयः । तत्र स्वभावादीनां चतुर्णां प्रत्येकग्रहणेन तद्विरुद्धोपलब्धि-तद्विरुद्धकार्योपलब्धि-तद्विरुद्धव्याप्तविषयकोपलब्धित्रयमेलने पूर्वाभिस्सह षोडशविधत्वम्" इति । अन्यत् सर्वमिति । श्रीभट्टपराशरपादैस्तत्त्वरत्नाकरे, 'उपाधिर्नाम विशेषणम्, अवच्छेदकम् । हेतुर्यदवच्छिन्नस्सन्नेव साध्यव्याप्यत्वरूपं संबन्धं लभते, तत् अवच्छेदकम् । 'धूमवान् अग्नेः' इत्यत्र आर्द्रेन्धनावच्छिन्नाग्नेर्व्याप्यत्वात्, शाकपाकजत्वावच्छिन्नमैत्रीतनयत्वस्य श्यामत्वव्याप्यत्वात्, कर्णशष्कुल्यवच्छिन्ननभःप्रदेशत्वस्य श्रोत्रत्वव्याप्यत्वादित्येवं ग्राह्यम् । परस्मिन् स्वगतधर्मारोपकत्वरूपमुपाधित्वं प्राच्यैस्तार्किकैरुक्तम् । एभिस्तु सुप्रसिद्धमवच्छेदकत्वरूपमुपाधित्वमादायैवोपपाद्यते इत्यादिकं न्यायपरिशुद्धितो गम्यते । एवमादि ग्राह्यम् ॥ ४३ ॥

नित्य इत्यादि । एतद्विवरणमपि न्यायपरिशुद्धौ द्रष्टव्यम् । नित्यः = सर्वकालवर्ती, व्यापी = सर्वदेशवर्ती च इह = अनुमाने नोपाधिर्भवितुमर्हति । उपाधेः साध्यव्याप्यत्वात् तस्य तथात्वे सदा सर्वतः = सर्वत्र तत्प्रसंगात् = साध्यस्यापि स्थितिप्रसंगात् । उपाधेः साधनाव्यापकत्वभंगश्च स्यात् । इदञ्च तत्प्रसंगादित्यस्य उपाधेः प्रसंगादित्यर्थवर्णनेन गम्यम् । एवमनित्यस्याव्यापिन उपाधित्वे सति तत्र कीदृशस्य तदिति विचारयन् आह नापीति । यदि साध्यव्याप्यतामात्रविशिष्ट उपाधिरित्युच्येत, व्यापकत्वं त्यज्येत, तादृशोऽपि न ; अनेकलिंगोपपत्तेः। एकस्य साध्यस्य साधकं लिंगं बहु स्यात्, न हि तत्रैकं प्रति अन्यस्योपाधित्वं युक्तम् । कुत इति चेत्—अवियुतितः । युतिः = योगः । वियुतिः = विनाभावः । अवियुतिः = अविनाभावः । उपाधेरिवाविनाभावाविशेषात् प्रकृतहेतुरपि हेतुर्भवितुमर्हति हि । अत एव अनित्यः कृतकत्वादित्यत्र सावयवत्वं नोपाधिः । ननु केवलव्याप्यस्योपाधित्वं कथमाशंक्यते, साध्याभावसाधनस्य वा साध्यव्यभिचारोन्नयनस्य वा ततोऽसंभवादिति चेत्—उपाधिगतं व्याप्यत्वं प्रकृतहेतौ भातीति शंकया व्याप्यत्वविघटनमित्याशयः। अत एव विनिगमनाविरहात् तदयोग इत्योक्तः। तर्हि व्यापकत्वमात्रं निवेश्यतामित्यत्राह नासाविति । सर्वत्र पक्षेतरत्वमप्युपाधिः स्यात्, साध्यव्यापकत्वात् । तथाच सर्वानुमानोच्छेदः । अतो व्यापकत्ववत् साधनव्याप्यत्वमपि निवेश्यम्। एवमपि तादृशः सर्वोऽपि नोपाधिरित्याह तुल्य इति। उक्तरीत्या साध्येन तुल्यः स यदि पक्षे स्यात्, तदा स साधनं व्याप्नुयात् = साधनव्यापक एव भवेत् । तदा

न्यायविदां मते सावयवत्वस्यानित्यत्वकृतकत्वाभ्यां व्याप्तत्वात् उभयं चानित्यत्वसाधने सम्यगनुमानमेव। आहुश्च, "कृतसावयवत्वादिप्रयुक्ता च विनाशिता" इति। **अविप्रुतितः**—अविनाभावात्। ये तु समपदं प्रतिक्षिप्य व्यापकमात्रमुपाधिरिति वदन्ति, तेषामपि पक्षेतरत्वम्, पक्षप्रतियोगिकान्योन्याभाववत्त्वम्, पक्षत्वात्यन्ताभाववत्त्वम्, पक्षत्वविरुद्धधर्मवत्त्वम्, पक्षत्वात्यन्ताभावाविनाभूतधर्मवत्त्वमित्ये तादृशं नोपाधिरित्याह **नासाविति**। कुत इत्यत्राह **अतिप्रसङ्गादिति**। तदुक्तमस्माभिरेवान्यत्र, "नोपाधिः पक्षतोऽन्यत्वं साधनं न विपक्षतः। बाधनं न सपक्षेभ्यः सर्वानुमितिबाधनात्॥" इति। अयमर्थः—पक्षेतरत्वं नोपाधिः। एवं पर्वतो वह्निशून्यः सपक्षेतरत्वात् विपक्षवदिति बाधितुं न शक्यते। तथा पर्वतो वह्निमान् विपक्षेतरत्वात् सपक्षवदिति साधयितुमपि न शक्यते; सर्वानुमानबाधनादिति; यं पक्षीकरोति वादी तमेव प्रतिवाद्यपि विपक्षीकरोति। तथाच परस्परविरोधादनुमान[स्य]प्रामाण्यमेव संभज्येतेति। इत्थं न्यूनाधिकवृत्त्योर्निरासे समवृत्तिरवशिष्यते। स च यदि पक्षे संभवति, साधनव्यापकत्वान्नोपाधिः; असंभवे स एवोपाधिः। अत एव वह्निसामग्र्याः पक्षे संभवमाश्रित्य साधनव्यापकत्वादनुपाधित्वमाहुः। अतः उभयाव्यभिचारिणामुभयव्यभिचारिणामन्यतरव्यभिचारेऽपि व्याप्यमात्राव्यभिचारिणां व्यापकमात्राव्यभिचारेऽपि विषमवृत्तीनामनुपाधित्वे व्याप्य(साध्य)व्यापकस्वभावानां साधना-

---

थी—उपाध्यभावेन साध्याभावसाधनादिकं कथम्। अतः साधनाव्यापकत्वमप्यपेक्षितम्। यद्येतावतैव दूषकत्वसंभवात् साध्यव्याप्यत्वत्याग इष्यते, त्यज्यताम्। ईदृशलक्षणानाक्रान्तस्तु विधूननीय एव॥ न्यायेति। अस्मन्मते सावयवमप्यप्राकृतं नित्यम्। कृतसावयवत्वेति। कृतकत्वसावयवत्वेत्यर्थः। नोपाधिरित्येतदाचार्यकारिका कुत्रत्येति द्रष्टव्यम्। विपक्षतः, सपक्षेभ्यः इत्युभयत्र अन्यत्वमित्यस्यानुषंगः। विपक्षान्यत्वं साध्यसाधकं न भवति, सपक्षान्यत्वं साध्यबाधकमपि न भवति। सर्वेष्वनुमानेष्वेवं वर्णनसंभवात्। वृत्तौ विवरणं कारिकोक्तक्रमेण न लक्ष्यते। अथापि न प्रमेयभेदः। यथार्हं शोधनं वेष्यताम्। ननु विपक्षान्यत्वरूपसाधकहेतुप्रयोगे सर्वानुमितिबाधनरूपदोषः कथमुच्यत इत्यत्राऽऽशयं विवृणोति यंपक्षीकरोतीति।

तथाच यथा विपक्षान्यत्वसपक्षान्यत्वयोः साध्यतदभावसाधकत्वं नेष्यते, अप्रयोजकत्वात्, तथा पक्षेतरत्वस्योपाधित्वमपि नेष्यते। क्वचित् साध्यवत्त्वेन निश्चिते पक्षेऽपि पक्षेतरत्वासत्त्वेन साध्यव्यापकत्वभंगात् अन्यथापि नेदं साध्यव्यापकं पक्षेतरत्वात्मकत्वादित्यनुमानावकाशात्। अन्ततः साध्यसंदेह एव विश्रमाच्च। साध्यसंदेहस्य च पक्षतारूपतयाऽनुमानोपयोगितया बाधकत्वाभावादित्यप्यत्र निगूढम्। अत उभयेति। न्यायपरिशुद्धौ, "हेतुसाध्ययोरुभयोर्व्यापकः उभयाव्यापकः अन्यतराव्यापको वा" इति विकल्पः। तदनुसारे त्विह उभयाव्यभिचारिणामित्यादौ बहुव्रीहिः कर्तव्यो भवेत्। अन्यथा अर्थे क्लेशश्च। उभयं हेतुसाध्योभयमव्यभिचारि= व्याप्यं येषां तेषां साधनव्यापकत्वादनुपाधिता। उभयं व्यभिचारि येषां तेषां साध्यं व्यभिचारि भवतीति साध्यव्यापकत्वभंगादनुपाधिता। अन्यतरस्मिन् व्यभिचारे, एकतरस्याव्यभिचारः सिद्धः। अतोऽन्यतराव्यभिचारे इति पाठाभावेऽपि न क्षतिः। व्याप्यमात्राव्यभिचारिणां साधनव्याप्यकानाम्, साधनव्यापकानामिति यावत्। तेषां साधनाव्यापकत्वहानिः। व्यापकमात्राव्यभिचारेऽपि, साध्यमात्रे व्याप्यत्वस्वीकारेऽपि [illegible] इति यावत्।

व्यापकानामुपाधित्वमित्युक्तं भवति। तथाच यावत्साधनदेशमवर्तमानो यावत्साध्यदेशवृत्तिरुपाधि, साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वे सति साध्यवन्निष्ठात्यन्ताभावाप्रतियोगी उपाधिरित्यादिकमपि लक्षणं सगच्छते॥
इत्युपाधिनिर्वेचनम् ॥ ४४ ॥

(270) दृष्टं साध्यस्य यत् स्यात् सममधिकमपि क्वापि पक्षान्यता वा
तस्याभावेऽपि साध्ये सति यदि न भवेत् बाधकं व्यापि नैतत्।
दुर्वारे बाधके तद्द्वयमपि दहनानुष्णतादावुपाधिः
साध्यं तद्व्याप्यतां वा हरतु(ति ?) स विरहात् पक्षतो हेतुतश्च ॥ ४५ ॥

समाधिकव्याप्तिकपक्षाङ्गीकारेणोपाधेर्व्यापकत्वप्रकारपरिशोधनपूर्वकं तद्दूषणत्वप्रकारमपि विशदयति दृष्टमिति। पूर्वं पक्षेतरत्वस्योपाधित्वं प्रतिक्षिप्तम्। इदानीं तस्याप्युपाधित्वमङ्गीकरोति—क्वापीति। अयं भावः—यत्र वह्न्यनुष्णत्वानुमानादौ पक्षे साध्यबाधः स्फुटमेव दृश्यते, तत्र पक्षेतरत्वमप्युपाधिः। यत्र पुनर्बाधो नास्ति, न तत्र पक्षेतरत्वमुपाधिरिति विभागः। अतोपाधेर्व्यापकत्वा

श्री— शयेन तत्त्यागेनाह तथाचेति। एवमुपाधिलक्षणे समव्याप्तिनिवेशे अस्य व्याप्तिघटितत्वात्, व्याप्तेश्च निरुपाधिकत्वघटिततया उपाधिघटितत्वाच्चान्योन्याश्रय इति शङ्कापरिहारायापि व्याप्त्यघटनेन परिष्करोति तथाचेति। व्याप्तिनात्र प्रविष्टेति वैशद्याय निष्कर्षति साधनवदिति॥ ४४॥

• साध्योपाध्योर्व्याप्यव्यापकभावोऽप्यनुकूलतर्केण एवावधारणीयः अन्यथा नद्विधननमिति वदन् उपाधिकृत्यं दूषकताप्रकारमपि द्विविधमाह दृष्टमिति। प्रथमपादस्य तृतीयपादेन सम्बन्धो मुख्यः। द्वितीयपादः समाधिकपदर्शितव्यापकत्वस्यापकानुकूलतर्कविषयकत्वपरः। चतुर्थपादेन उपाधिफलोक्तिः। यत्= उपाधितया निर्दिश्य साध्यस्य समं दृष्टम्—साध्यान्यूनाधिकवृत्ति, साध्यव्याप्यं साध्याव्यापकञ्च दृष्टम्, यदपि साध्यस्याधिकं दृष्टं, साध्याधिकदेशवृत्ति =व्यापकमात्रं दृष्टम्, तद्द्वयमपीत्युपर्यन्वयः। साध्यव्यापकत्वमात्रेऽप्युपाधित्वस्वीकारे पक्षेतरत्वमप्युपाधिः स्यादिति शङ्कायाम्, तदपि क्वापि =पक्षविशेष्यकसाध्याभावनिश्चयस्थले उपाधितयेष्यते इति ज्ञापयितु, 'क्वापि पक्षान्यता वा' इति यत्तच्छब्दघटितवाक्यमध्ये वाक्यान्तरम्। अथान्यदपि वाक्यमध्ये व्यापकत्वनिश्चयोपायप्रदर्शकं तस्येत्यादि। तस्य उपाधेरभावेऽपि साध्ये सति= साध्यमस्तु उपाधिर्मास्तु इति चिन्तायाम्, यदि न भवेत् बाधकं व्यापि नैतत्। विपक्षे बाधकं यदि भवेत्, तदैव व्यापकं भवतीति यावत्। दुर्वार इति। तद्द्वयमपि उपाधिरित्येतावति वक्तव्ये अधिकोक्तिः पक्षेतरत्वस्याप्युपाधित्वोपपादनाय। पूर्वं क्वापीत्युक्तविवरणं दुर्वारे बाधके इति। पक्षे साध्याभाववत्तानिश्चायकप्रमाणे सतीत्यर्थः। तत्रैकं स्थलमुदाहरति दहनानुष्णतेति। 'अग्निरनुष्णः पदार्थत्वात्' इत्यत्र अग्नौ प्रत्यक्षप्रमाणेनानुष्णत्वबाधात् पक्षेतरत्वमुपाधिर्भवतीत्यर्थः। न च बाधेनैव हेतोर्दुष्टत्वे सिद्धे किमर्थमुपाध्युद्भावनमिति वाच्यम्, साध्यव्याप्यत्वभावविशिष्टं सर्वं साधनं सोपाधिकमिति नियमस्य न भङ्ग इति ज्ञापनेनाव्याप्यत्वदार्ढ्यार्थत्वात्। आदिपदेन मैत्रीतनयविशेषश्यामत्वादिकं ग्राह्यम्। तत्रापि बाधकं दुर्वारम्। शिशौ श्वेतत्वस्योपलभ्यमानत्वात्। अतः शाकपाकजत्वस्योपाधित्वदार्ढ्यम्। उपाधिफलमाह साध्यमिति। सः =उपाधिः विरहात्= स्वाभावमुखेन साध्यं पक्षतो हरतु= पक्षे साध्याभावं साधयतु। हरतीति लडन्तपाठो युक्तः। एवं हेतुतः तद्व्याप्यतां हरतु साध्यव्याप्यत्वाभावं हेतौ बोधयतु। तत्र प्रकारद्वयम्—पक्षे साध्याभाववत्तया निश्चिते, साध्यभाववत्पक्षवृत्तित्वस्य हेतौ ज्ञानात् व्याप्यत्वाभावावधारणमिति, यद्वा साक्षादेव हेतुः साध्यव्यभिचारी, साध्यव्यापकोपाधिव्यभिचारित्वादित्यनुमानमिति। इदमपि वृत्तौ अन्तिमवाक्ये विवक्षितम्।

वगमप्रकारमाह तस्येति । अयमस्यार्थः—यत् यस्य व्यापकत्वेन निर्दिश्यते, तस्याभावेऽपि तत्संभवे यदि बाधकतर्कः प्रवर्तते, स एव तस्य व्यापकः ; यथा शाकाद्याहारपरिणत्यभावे पुरुषगताद्यश्यामिकाभावो नियतमुपलभ्यते । एवमन्यत्रापि । अन्यथा अकारणकार्योत्पत्तिप्रसङ्ग इति तर्कः । एतादृशबाधकसद्भावे व्यापकत्वम् । या तु क्षीराद्याहारपरिणतिः, सा श्यामत्वं प्रति न व्यापिका ; विपक्षे बाधकाभावादित्यर्थः । तथाच वह्न्यनुष्णत्वानुमाने पक्षे प्रत्यक्षबाधकसद्भावात् उपजीव्यविरोधादितर्कबाधाच्च सममधिकं वा पक्षेतरत्वं पक्षेतरवह्निसामग्रीशून्यत्वमित्यादिकं सर्वमप्युपाधिः स्यादित्याह **दुर्वार** इति । **तद्द्वयमपि**—सममधिकमपि । उपाधेर्दूषणत्वप्रकारं निगमयति **साध्यमिति** । पक्षे साध्यापहारे बाधः, हेतौ साध्यव्याप्यत्वापहारे व्याप्यत्वासिद्धिः । उपाधिः खलु व्यापकस्वभावः पक्षे स्वाभावेन साध्यमपहरन् हेतोस्साध्यव्याप्यतामप्यपहरतीति भावः ॥ **इति उपाधेर्दूषकत्वप्रकारौ ॥ ४५ ॥**

(271) व्याप्तिः पक्षान्वयश्चेत्युभयमविकलं यस्य हेतुः स सम्यङ् ;
आभासौ तद्विहीनौ ; तदुभयविततिस्स्यादनैकान्तिकादिः ।
तत्तद्वक्रानुमोत्प्रेक्षणमपि घटते न क्वचित् साध्यसिद्ध्यै
स्वव्याघातादिदोषादविषयनियतेर्वाञ्छितालाभतश्च ॥ ४६ ॥

---

पुरुषगताद्यश्यामिकेति पाठे पुरुषगतेति विशेषणं काकशिशुश्यामतायां शाकपाकस्यानियामकत्वात् । आद्येति जननकालग्रहणार्थम्, अश्यामतयैवोत्पन्नस्यापि आध्यात्मिकाधिदैविकाद्युपाधिवशात् पश्चात् श्यामत्वसंभवात् तत्र शाकपाकस्यानियामकत्वात् । तथाचात्र मैत्रीशिशुपक्षके पक्षधर्मावच्छिन्नसाध्यव्यापकत्वमुपाधौ ग्राह्यम् । क्षीरादीति पदं श्यामताहेतुशाकाद्याहारव्यतिरिक्तसर्वाहारविषयम् । सा श्यामत्वं प्रति न व्यापिकेति । किमर्थमयमप्रसक्तप्रतिषेध इति चेत्—शाकादीति विशेषणकृत्यज्ञापनाय । यद्वा अश्यामिकामिति पदच्छेदेन क्षीरादीनामश्यामिकाहेतुत्वं तथा न व्यवस्थितम्, यथा शाकाद्याहारस्य श्यामिकां प्रतीत्युच्यते । व्यापकस्वभाव इति । अनेन व्यापकव्यभिचारित्वेन साध्यव्यभिचारस्य हेतौ सिद्धिरपि दर्श्यते ॥ ४५ ॥

सपरिकरो हेतुरनुमितिसाधनम् । तत्र व्याप्तेरिव पक्षधर्मताया अपि परिकरत्वं तदुभयवैकल्यप्रयुक्तं हेत्वाभासत्वञ्च प्रदर्शयन् हेतुहेत्वाभासविभागप्रकारं व्युत्पादयति व्याप्तिरिति । अनौपाधिकः संबन्धो व्याप्तिरिति तद्विज्ञानायोपाधितद्विधूननप्रकारौ ज्ञापितौ । एवमविकला व्याप्तिरिव पक्षसंबन्धोऽपि हेतुनिष्ठः परिकर इति सोऽप्यविकलः पक्षताविशिष्टे धर्मिणि हेतोः सद्भावरूपोऽपेक्षितः । यस्येदमुभयं स हेतुः सम्यङ्—सद्धेतुः । एवञ्च व्याप्तिविकलः पक्षधर्मताविकलश्चेति हेत्वाभासद्वित्वमर्थसिद्धम् । एवं स्थिते अनैकान्तिकादिरूपेण कणादेन त्रेधा, गौतमेन पञ्चधा, अन्यथाऽन्यथा च तैस्तैर्विभागे क्रियमाणेऽपि सर्वोऽयं विभाग एतदुभयविस्तार इत्येव भाव्यम् । पक्षसत्त्वं सपक्षसत्त्वं विपक्षासत्त्वमिति हेतोः रूपाणि त्रीण्यपेक्षितानि । तत्तदभावमालोच्य त्रैविध्योक्तिः । हेतोरिव साध्यस्याप्यभावं पृथग्विभाव्य बाधितत्वसत्प्रतिपक्षितत्वरूपाद्वयं गौतमो घट्यामास । एवं हेतुनाऽनुमेयमर्थं निश्चित्य श्रुतग्राहिस्या अननुमाय वक्रेण मार्गेणानुमानमपि बालक्रमेण कल्पितम् । तदिदं स्वाभीष्टसाध्यसाधनयथावस्थितहेतूपन्यासेनप्रतिवादिविजये कदाचिदप्रगल्भमानस्य तज्जयार्थं प्रयुज्यमानं भवेदित्यास्तिकमर्यादा । तच्च वक्रानुमानं बहुविधम् । यत्र पक्षे यत् साधनीयम्,

एवमनुमानेषूपाधिविधूननप्रकारमुक्त्वा हेतुतदाभासादिविभागं दर्शयति व्याप्तिरिति । द्वयमनुमानाङ्गं व्याप्तिः पक्षधर्मता चेत्युक्तम् । सा च व्याप्तिः अन्वयव्यतिरेकाभ्यां द्वेधा भवति । साधनसद्भावे साध्यसद्भावोऽन्वयः; साध्याभावे साधनाभावो व्यतिरेकः । तत्रान्वये-सर्व(सकल)सपक्षवर्तिनो हेतोस्साध्येन सह सार्वत्रिकस्संबन्धः ; तत् (?) यथा, शब्दोऽनित्यः कृतकत्वादिति । कतिपयसपक्षवर्तिनस्तस्य सपक्षे कुत्रचित् साध्येन संबन्धः ; तच्च (?) सावयवत्वमिति ; घटादिषु सावयवत्वसद्भावात् , क्रियादिष्वभावात् । व्यतिरेकस्तु सकलविपक्षव्यावृत्त्यात्मकत्वादेकरूप एव । तथाच यस्ययस्यानुमानस्यान्वयव्यतिरेकौ स्तः, तत् [तत् ?]अन्वयव्यतिरेकित्वात् सर्वाविगीतमेव । यस्य पुनः अन्वयो व्यतिरेको वा न, तयोरुभयोर्गतिरुत्तरत्र वक्ष्यते । एवं व्याप्तिपक्षधर्मताभ्यां सम्यक्त्वमुक्त्वा तदभावे पुनः असम्यक्त्वमाह आभासाविति । व्याप्त्यभावे व्याप्यत्वासिद्धिः ; पक्षधर्मताभावे स्वरूपासिद्धिः । अनैकान्तिकत्वादिकमशेषमपि हेत्वाभासजातं व्याप्तिपक्षधर्मताविरहे विश्राम्यतीत्याह तदुभयेति । तथा हि--विपक्षगामित्वे व्याप्तिविरहः ।

---

वी— तं पक्षम् ; तत्र सपक्षं विपक्षं साध्यं साध्याभावं वा पक्षीकृत्यानुमानप्रयोगात् । सर्वमिदमुपपाद्य खण्डितं वादीन्द्रेण महाविद्याविडम्बने । इदं चक्रानुमानमेव महाविद्येत्युच्यते । केवलान्वयिप्रभेदोऽयम् । मन्त्रवत् अपेक्षितसाधनत्वादियमेव विद्या । अस्य सर्वहेतुदोषदूरत्वमेव महत्त्वम् । एवमपि सर्वमिदं सद्धेतुविभागान्तर्गतमिति न मन्तव्यमित्याशयेनाह तत्तदिति । उक्तरीत्या पक्षसपक्षविपक्षादिनानापक्षकाणां, साक्षात् साध्यासाधकतया चक्राणामनुमानानां वादीन्द्रखण्डितानां तत्पूर्वैः यत् उत्प्रेक्षणम् , तत् न फलाय । तत्र निर्दुष्टत्वबुद्धिरयुक्ता, यतः स्वव्याघातः, विषयनियमाभावः इष्टासिद्धिश्चेति सन्ति दोषाः । तदुत्प्रेक्षितहेतुना तदिष्टसाधनवत् तत्प्रदर्शितरीतिकल्पितेनान्येन हेतुना तद्विपरीतस्यापि साधनसंभवात् विषयनियमाभावः, अत एव स्वव्याघातकत्वमिष्टासिद्धिश्च । तत्र यथोचित तावता हेतुदोषः कः इति चेत्—अप्रयोजकत्वमेव । तच्च व्याप्त्यसिद्धिरूपमेव । तत्र यथोचित उपाधिरुल्लेख्यो भवतु कामम् । अतः स्वपक्षविपरीतसाधनमार्गदर्शित्वात् महती अविद्येयमिति ।

तत् यथेत्यत्र तत्पदम् उपरि तच्चेति पदञ्च न स्यात् । तत्सत्त्वे अनुमानाङ्गमिति प्रागुक्तत्वात् , अनुमानाङ्गं तादृशमिति वा अनुमानं तादृशमिति वाऽर्थः । सकलसपक्षवर्तिन इति । सकलसपक्षवर्तित्वादिति हेतुगर्भविशेषणम् । कतिपयसपक्षवर्तिन इति । किञ्चित्सपक्षमात्रवर्तित्वादित्यर्थः । अन्वयव्यतिरेकौ स्त इति । यस्येति । वीप्सा अनपेक्षिता । अनुमानस्य = हेतोः अन्वयः = साध्यान्वयिसपक्षान्वयः, व्यतिरेकः साध्यव्यतिरेकवद्विपक्षान्वयाभावश्च स्तः । तत् अन्वयव्यतिरेकीत्यर्थः । अन्वयव्याप्ति-व्यतिरेकव्याप्त्युभयवदनुमानमन्वयव्यतिरेकीति यावत् । सर्वाविगीतम् = अनुमानरूपप्रमाणान्तरवादिसर्वपरीक्षकसंमतम् । उत्तरत्र = अस्मिन् सतीति अष्टचत्वारिंशश्लोकादौ । आभासौ = आभासभूतौ हेतू । अनेन हेत्वाभासपदस्य आभासभूतहेतुरित्यर्थः उक्तः । तेषामनेकत्वेऽपि द्विवचनं व्याप्त्यभावपक्षधर्मत्वाभावरूपधर्मद्वयप्रयुक्तम् । स्वरूपासिद्धिः = साधनस्वरूपस्यासिद्धिः ; पक्षवृत्तिहेतुरनुमानम् ; तादृशविशिष्टासिद्धिः । तस्य साध्येन संबन्धो व्याप्तिः ; तदसिद्धिरन्या । हेत्वाभासजातमिति । अत्र हेत्वाभासपदं हेतूनामाभासेति दोषपरम् । पक्षधर्मताविरहे इत्येकत्वमविवक्षितम् । विपक्षगामित्वे हेतोः

उक्तौ उभयस्मिन्नेव सर्वहेतुदोषान्तर्भावं दर्शयति तथाहीत्यादिना ।

पक्षविपक्षमात्रगामित्वेऽपि स एव। सपक्षे सति पक्षमात्रगामित्वेऽपि व्याप्तिप्रदर्शनाभावात् स एव; विपक्षादिव सपक्षादपि व्यावृत्तत्वेन (?) व्यतिरेकव्याप्त्यवगमात् (भावात्) (?) (व्यतिरेकव्याप्तिसत्त्वेऽप्यन्वयव्याप्त्यवगमाभावात् ?)। यदा पुनः कालात्ययापदिष्टः, तदाऽपि व्याप्त्यभावः। तदा साध्यशून्ये साधनवृत्त्या व्याप्तिभङ्ग इति केचित्। अपरे तु बाधितेऽपि सिद्धसाधनवत् साध्यसन्देहाभावात् पक्षधर्मत्वभङ्ग इति। एवं प्रकरणसमेऽपि पक्षे साध्यनिश्चयावसादनेन व्याप्तिभङ्ग इति केचित्। अन्ये तु स्वारसिकसन्देहापवादिनाऽपि विपरीतनिश्चयप्रसङ्गेन बाधतुल्यत्वमापाद्य पक्षधर्मताभङ्ग इति। इतरे तु व्याप्तिपक्षधर्मत्वयोर्द्वयोरपि विमर्दनेनोभयदोषापादनमिति। कथं तर्ह्यनुमानस्य सन्देहोऽङ्गमित्युच्यते? इत्थम्—उभयी खलु सन्देहप्रवृत्तिः। एका सर्वानुमानसाधारणी स्वारसिकी; सा भवेदनुमानाङ्गम्। द्वितीया पुनः प्रतिकूलानुमानदर्शनजनिता; सा पुनर्नानुमानाङ्गं, शङ्कापनोदनप्रवृत्तपूर्वानुमानपरिपन्थिरूपेणानुमानान्तरेण प्रवर्तितत्वात्। अतः प्राचीन एव संशयोऽनु-

---

वी–पक्षसपक्षयोरिव विपक्षेऽपि सत्त्वे, विपक्षमात्रे सत्त्व इव व्याप्तिविरहः साध्याभाववद्वृत्तित्वात्। एवं साधारणो हेत्वाभास उक्तः। पक्षविपक्षमात्रेति मात्रपदेन सपक्षव्यावृत्तिः। स एव = व्याप्तिविरह एव। अथ विपक्षासत्त्ववत् सर्वसपक्षासत्त्वस्यापि भावेऽपि तं दोषमाह सपक्षे सतीति। अत्र, 'अनित्यः शब्दः शब्दत्वात्' इत्यत्र पक्षमात्रवर्तिनि हेतौ वस्तुगत्या व्याप्तिसत्त्वात् तद्विरहः कथमिति शंका मा भूदिति व्याप्तिप्रदर्शनाभावादित्युक्तम्। सपक्षे किल व्याप्तिः प्रदर्शनीया, तत्र नित्ये घटादौ हेतुर्नास्तीति। स एवेति। व्याप्तिग्रहरूपकारणासिद्धेरिति भावः। एवं हेतोरुपन्यस्ततया पुनः विपक्षादिवेत्यादिना हेतूपन्यासो व्यर्थः। अतः किञ्चिदाशंकापरिहारार्थमुपन्यास इति वक्तव्यम्। सा च अन्वयव्याप्त्यभावेऽपि व्यतिरेकव्याप्तिसत्त्वात् कथमनुमानं दुष्टमिति शंका। तत्रोच्यते–विपक्षादिव सपक्षादपि व्यावृत्तत्वेनेति। एवञ्च व्यतिरेकव्याप्त्यभावादिति पाठोऽनन्वितः। व्यतिरेकव्याप्त्यवगमादिति पाठेऽपि सपक्षव्यावृत्तत्वरूपहेतुस्तत्र नान्वेति। तस्य स एवेत्यत्र हेतुत्वमपि न भवति। अतः व्यतिरेकव्याप्तिसत्त्वेऽपि अन्वयव्याप्त्यवगमाभावादिति पाठ्यम्। सति सपक्षे केवलव्यतिरेकव्याप्तेः अकिञ्चित्करत्वमेव सर्वेष्टमिति भावः। तथाचासाधारणहेत्वाभास उक्तः।

एवमनैकान्तिकस्य व्याप्त्यभावेऽन्तर्भाव उक्तः। अथ बाधितस्य मतभेदेन अन्यतरस्मिन् अन्तर्भावमाह यदापुनरिति। साधनवृत्त्येति। ह्रदो वह्निमान् धूमादिति बाधे तु पक्षधर्मत्वाभाव एव। तद्वत् सर्वत्र तमेवाऽऽहुः परे। ह्रदोऽग्निमान् जलादित्यत्र पक्षभूतह्रदवर्तित्वेऽपि पक्षताविशिष्टत्वरूपविशेषणाभावात्। बाधनिश्चयकाले पक्षता = साध्यसंशयो नास्तीति। पक्षताविशिष्टत्वं च निवेशनीयम्, अन्यथा सिद्धसाधनस्थले दोषान्तराभावेनानिर्वाहादिति भावः। प्रकरणसमे = सत्प्रतिपक्षे। कथं तर्हीति। साध्यसंदेहादनुमाने प्रवृत्तस्य साध्यव्याप्यवत्ताज्ञाने जाते तदैव प्रतिवादिमुखेन साध्याभावव्याप्यप्रतिहेतुमत्ताज्ञाने च जनिते साध्यतदभावोभयविषयकज्ञानं जायमानमर्थात् संशयरूपमेव भवति। एवञ्च निश्चयार्थप्रवृत्तस्य हेतोः प्रतिहेतुसमावेशतः संशयापादकत्वात् दुष्टत्वस्वीकारे, साध्यसंशयोऽनुमानाङ्गमिति संप्रदायभंग इति प्रश्नः। हेतुपरामर्शात् प्राक्तनः संशयः पक्षता, अनुमितौ कारणम्। तन्निवृत्त्यर्थप्रयुक्तहेतोरेव संदेहापादकत्वे अननुकूलत्वात् तस्य संदेहस्य दोषत्वमिति भावः। शेषमन्यत्र। अथासिद्धरूपहेत्वाभासस्यान्त-

मानाङ्गम्, पराचीनस्तु परिपन्थ्यनुमानमूलत्वादनुमानबाधकेष्वन्तर्भवतीति विभागः। अनुकूलतर्काभावो व्याप्तिमेवावसादयति; व्याप्तेस्तु तर्कमूलत्वात्। प्रतिकूलतर्कोऽप्येवमेव; अनुकूलतर्कसद्भाववत् प्रतिकूलतर्काभावस्यापि व्याप्त्यङ्गत्वात्। आत्माश्रयादिः स्वरूपासिद्धिमापादयति, केवलानिष्टप्रसङ्गः प्रतिकूलतया व्याप्तिमवसादयतीति विभागः। सोपाधिकत्वमपि व्याप्तिमेव व्यावर्तयति, निरुपाधिकसंबन्धत्वात् व्याप्तेः। यत् सोपाधिकम्, तदेवान्यथासिद्धमप्रयोजकमित्यादिशब्दैरभिलप्यते। यदा पुनर्हेतोः स्वरूपमसिद्धम्, विशेषणं वा, यद्वा पुनराश्रयः, अत्र सर्वत्रापि स्वरूपासिद्धिरेव। अतः सर्वो हेत्वाभासोऽप्यसिद्धावेव पर्यवस्यति, व्याप्यत्वासिद्धेरप्यसिद्धिव्यवहारविषयत्वात्। दृष्टान्तदोषाणां पुनः हेतुदोषपर्यन्तचिन्तायां हेत्वाभासेष्वन्तर्भावमाहुः। अज्ञानासिद्धिरप्यन्ततस्तत्रैव विश्राम्यति। अतः सर्वेषामपि हेत्वाभासानां व्याप्तिपक्षधर्मताभञ्जक(न)त्वेन दोषत्वात् तदुभयभञ्जनविततिरेव सर्वमनुमानदोषजातमित्याह **तदुभयविततिरि**ति।

एवंच व्याप्तिपक्षधर्मतयोरनुपप्लवे अन्वयव्यतिरेकिवत् केवलान्वयिनोऽप्यनुमानत्वमनङ्गीकृतम्। तर्हि वक्रानुमानस्यापि केवलान्वयित्वादनुमानत्वमङ्गीकर्तव्यमित्यत आह **तत्त्व**दिति। वक्रानुमानं सर्वमपि

---

वी— भवविचारः। तत्राप्रयोजकत्वेन हेतोर्ग्रहणं स्वरसतो भवेत्, कदाचिदुपाधेर्विशिष्य ग्रहणात् सोपाधित्वबुद्धिरपि। क्रमेण तदुभयस्य व्याप्तिविरहापादकत्वमाह अनुकूलेत्यादिना। हेतुरस्तु साध्यं माऽस्त्वित्यप्रयोजकशंका अनुकूलतर्कनिवर्त्या। प्रतिकूलतर्के तु व्याप्तिभंगः सुतरामिति। ननु तर्कः पञ्चविधः आत्माश्रयान्योन्याश्रयचक्रकानवस्था-केवलानिष्टप्रसङ्गभेदेन। तत्र कतमस्य प्रतिकूलतर्कस्य व्याप्तिविघटकत्वमित्यत्राह आत्माश्रयेति। केवलानिष्टप्रसंगरूपतर्कव्यतिरिक्तानां न व्याप्तिविघटकत्वम्, किंतु हेतुस्वरूपविघटकत्वमिति भेद इति भावः। विशेषणं वेति। पक्षता वा पक्षतावच्छेदकधर्मो वेत्यर्थः। आहुरिति। प्रयुक्तदृष्टान्तस्याभासत्वे नोदाहरणमादर्तव्यमिति न्यायेनान्यं दृष्टान्तमादाय सद्धेतुत्वनिर्वाहात् तत्र न हेतुदोषनियम इत्याशयेन आहुरित्युक्तम्। अज्ञानासिद्धिरपीति। असिद्धिर्नाम सत्त्वाभावः। व्याप्तिपक्षधर्मताविशिष्टहेत्वभावः व्याप्त्यभावपक्षधर्मत्वाभावहेतुस्वरूपाभावत्रितयात्मक इति कुसुमाञ्जलौ। तार्किकरक्षायां तु सिद्धिर्ज्ञानम् असिद्धिरज्ञानमिति, व्याप्त्याद्यभाववत् तद्विषयकज्ञानाभावरूपमज्ञानमप्यसिद्धिरित्युक्तम्। वस्तुतो दुष्टहेतौ व्याप्त्यादिविषयकप्रमित्यभावो व्याप्त्याद्यभावपर्यवसाय्येवेति न पृथगिति भावः।

वक्रानुमानं सर्वमपीति। विडम्बनखण्डितानि महाविद्याख्यानुमानानि वक्राणि। यथा, 'शब्दोऽनित्यः शब्दत्वात्' इत्यार्जवेनानित्यत्वे साधनीये तत्रान्वयव्याप्तेर्दुर्वचत्वात् केवलव्यतिरेक्यनुमानमनंगीकुर्वाणं प्रति केवलान्वय्यनुमानमुच्यते-'शब्दः शब्दतदितरोभयावृत्ति-अनित्यवृत्तिधर्मवान् मेयत्वात्' इति। अस्य शब्दे साक्षादनित्यत्वसाधकत्वाभावेऽपि तत्साधने पर्यवसानम्। अतः प्रयासबहुत्वात् वक्रता। शब्दतदितरपदतः सर्ववस्तुग्रहणम्। तदुभयवर्ती धर्मो मेयत्वादिः। तदन्यो धर्मः शब्दमात्रे तदितरमात्रे वा वर्तमानः शब्दत्वशब्देतरत्वादिः। तत्र योऽनित्यवृत्तिधर्मः, सोऽत्र साध्यते। स च मेयत्वरूपहेत्वधिकरणे घटगगनादौ घटत्वगगनत्वादिः। तद्वत् शब्दे किञ्चिद्धर्मवत्त्वे साध्यमाने शब्दमात्रवर्तिधर्मस्यैव ग्राह्यत्वात् तस्यानित्यवर्तित्वेनोपादानात् तदाश्रये शब्दे अनित्यत्वमर्थात्सिध्यतीति। धर्मवान्, अनित्यवृत्तिधर्मवानित्येतावन्मात्रोक्तौ शब्दत्वमेयत्वादिना सिद्धसाधनम्; शब्दावृत्तिधर्मवानित्युक्तौ शब्दे तदयोगात् बाधः। शब्देतरावृत्ति-अनित्यवृत्तिधर्मवान्

स्वसाध्यसिद्धेरनङ्गत्वादप्रयोजकमेव। कुत इत्यत आह **स्वव्याघातेति**। विषयनियमाभावादपि दुष्टत्वमाह **अविषयेति**। येनैवानुमानेनानित्यत्वं साध्यते, तेनैव यत्किंचित्पदव्यत्ययेन नित्यत्वमपि साधयितुं शक्यते। अत एव स्वव्याघातो व्यक्तः। वक्रानुमाने सामान्यसिद्धावपि न विशेषसिद्धिः। अतो वाञ्छितस्याप्यर्थविशेषस्य लाभो नास्ति। अतो वक्रानुमानं केवलान्वयिरूपमपि साधनजा**तिरेव,** स्वव्याघातात्। जातिर्द्विविधा, साधनजातिर्दूषणजातिश्च। तत्र साधनजातिर्महाविद्या; दूषणजातिः प्रतिधर्मसमाधि(दि?)रिति विचक्षणानां निर्णयः। एतत् सर्वं **विडम्बने** विस्तरेण द्रष्टव्यम्। अतो वक्रानुमानस्य नानुमानत्वप्रसङ्ग इति ॥ **इति हेतुतदाभासादिविभागः ॥ ४६ ॥**

**(272) साध्येन व्याप्तिमेके जगदुरिह सकृद्दर्शनेनैव गम्यां**
**शङ्कानिर्धूतिमात्रं फलमिति च परं भूयसां दर्शनानाम्।**
**धूतोपाधिस्तु योगः स्फुरति बहुविधैर्दर्शनैरेव पश्चात् (बहुतरं दर्शनेऽप्येष तर्कैः ?)**
**तज्जात्याधारभावात् युगपदखिलमप्यक्षसंबन्धि तत्र ॥ ४७ ॥**

---

वी– इत्युक्तौ शब्दे अनित्यत्वसंदेहदशायां शब्देतरस्यैवानित्यत्वेन निश्चितत्वात् शब्देतरावृत्त्यनित्यवृत्तिधर्मानिश्चयः। शब्दावृत्तिः शब्देतरावृत्तिश्च धर्म इत्युक्तौ तादृशधर्माप्रसिद्धिरेव। अत उभयावृत्तीति निवेशः। अनित्यत्वे पर्यवसानसंपादनाय अनित्यवृत्तीति दलमिति दलकृत्यम्। एवं विविधानि वक्राणि ग्राह्याणि। अनङ्गत्वात् = अनुकूलतर्करूपेतिकर्तव्यतारहितत्वात्। स्वव्याघातो व्यक्त इति। स्वव्याघातकवचनं जातिः। तत्र परोक्तदूषणार्थवचनानामिव स्वपक्षसाधकवचनानामपि स्वव्याघातकत्वे जातित्वमस्तीति ज्ञापनार्थं व्याघातपदप्रयोगः। तेन स्वसिद्धान्तप्लावकत्वात् स्वकीयसिद्धान्तपरः सर्ववचनव्याघातोऽपि दर्शितो भवति। तथाहि–यथा शब्दानित्यत्वसाधकप्रकृतानुमाने स्वस्वेतरोभयावृत्ति-अनित्यवृत्तिधर्मवत्त्वं साध्यते, तथा गगनादिकमपि पक्षीकृत्य साधनसंभवात् तार्किकसिद्धान्तहानिः। एवं यद्यत् यथा यथा नांगीकृतम्, तत्र तत्र सस प्रकारः साधयितुं शक्यते, साध्ये अनित्येति पदस्थाने तत्तत्प्रकारविशिष्टवाचकपदप्रयोगेण, वायुः स्वस्वेतरावृत्तिसरूपवृत्तिधर्माधिकरणम्, पृथिवीपरमाणुस्वस्वेतरावृत्ति-नित्यरूपादिमन्निष्ठधर्माधिकरणं जलादिपरमाणवः स्वस्वेतरावृत्ति-पाकजरूपादिमन्निष्ठाधिकरणं, गौः स्वस्वेतरावृत्ति-अश्ववृत्तिधर्माधिकरणं पृथिवी स्वस्वेतरावृत्तिजलवृत्तिधर्माधिकरणमित्येवं सर्वसिद्धान्तभंगसंभवात्। आदिना अप्रयोजकत्वं गृह्यते। उपाधिश्च भवति–इहाश्रावणत्वम्। शब्दतदितरावृत्ति-अनित्यनिष्ठधर्माधिकरणत्वरूपसाध्ये अनित्यत्वरूपविशेषणं निवेश्य अनित्यत्वविशिष्टतत्साध्यव्यापकत्वमश्रावणत्वे, मेयत्वस्य हेतोः शब्दादौ वर्तमानत्वात् तत्र अश्रावणत्वाभावात् साधनाव्यापकत्वम्। साध्ये अनित्यत्वविशेषणादाने तस्य शब्दत्वादिजातावपि सत्त्वात् तत्रोपाध्यभावात् साध्यव्यापकत्वभंगः स्यादिति तन्निवेशः। एवं नानाहेत्वाभासोपपादनं विडम्बने द्रष्टव्यम्। अविषयनियतिस्तु अभिमतविपरीतस्यापि साधनात्। साध्यकोटौ अनित्येत्यस्य स्थाने नित्येति निवेशे नित्यत्वसाधनायापीदमनुमानं स्यादिति। वाञ्छितालाभ इति। इदमनुमानमनित्यवृत्तिधर्मान्तरसाधनेनापि चरितार्थं नानित्यत्वमेव साधयेत्। शब्दे नानाधर्मसत्त्वात्। अथापि अनित्यत्वासिद्धौ अनुमानं न घटेनेति तत्सिद्धिर्यातीति चेत्—तर्हि तदप्यन्यथाऽनुपपत्त्यानुमेयम्—शब्दोऽनित्यः ईदृशसाध्यरूपधर्मवत्त्वादिति। एतदपेक्षया शब्दत्वादिति हेतुरेव लघुरिति किमनेन प्रयासेन। तदनुमानत्यागकारणस्यात्र जागरूकत्वात् घट्टकुट्यां प्रभातमित्यास्माकं विमर्शः ॥ ४६ ॥

पूर्वोक्तव्याप्तिग्रहणानुपपत्तिं पूर्वं परिहृतामपि सिंहावलोकितेन प्रकारान्तरेण परिहरति **साध्येनेति**। भूयोदर्शनेनैव व्याप्तिरवगम्यते इति न्यायविरसंप्रदायः। एकदेशिनस्तु[मते?] प्रथमदर्शनेनैव व्याप्तिर्गृह्यते। किमर्थं तर्हि भूयोदर्शनमित्यत्राह **शङ्केति**। आद्येनैव दर्शनेन व्याप्तिर्गृह्यते; भूयसां तु दर्शनानां व्यभिचारशङ्कानिराकरणमात्रं फलमित्यर्थः। तर्हि तर्कस्य किं फलमित्यत्राह **धूतोपाधिस्त्विति**। प्रथमदर्शने तावत् व्याप्तिग्रहणम्, भूयोदर्शनैर्व्यभिचारशङ्कानिराकरणम्, तर्केण पुनः व्यभिचारशङ्कानिदान-

---

श्री—एवं सद्धेतोः व्याप्तिपक्षधर्मत्वोभयमावश्यकमिति निरूपितम्। अथेदं व्याप्तिज्ञानं सर्वहेतुसाध्यव्यक्तिविषयकं वा कतिपयव्यक्तिविषयकं वा। सर्वव्यक्तिदर्शनं तु न सिद्धम्; कारणाभावात्। तथा चेत् अनुमित्यनपेक्षा च। कतिपयविषयकत्वं तु न प्रयोजकम्, अन्यव्यक्तिव्याप्तिज्ञानस्य तदन्यव्यक्त्यनुमित्यनुपयोगादिति शंकायां चत्वारिंशच्छ्लोकपृष्ठानामुपाधिव्यतिरिक्तविषयाणां प्राक् उक्तत्वोदस्पष्टत्वात् उपाधिविषयसमाप्तौ तत्र प्रत्याह साध्येनेति। हेतुसाध्ययोः सकृदेकत्र दर्शन एव हेतौ साध्यनिरूपितव्याप्तिं गम्याम्=ज्ञेयां जगदुः=ऊचुः केचित्। तावता भूयोदर्शनानां न वैयर्थ्यम्। परं=पश्चात् जातानां भूयसां साध्यहेतुसाहचर्यदर्शनानां व्यभिचारशंकापरिहारमात्रं फलम्; न व्याप्तिग्रहोत्पादनम्। तर्कहृत्यमाह धूतोपाधिरिति। योगः=व्याप्तिः धूतोपाधिस्तु= तर्केणोपाधिनिवर्तनं प्राप्यैव पश्चादेव स्फुरति=शमितशंकस्सन् प्रकाशते। एवपश्चादित्यत्र पश्चादेवेत्यन्वयः। अत्राऽऽवश्यकस्य तर्कपदस्याभावात् उक्तार्थविषयबहुविधदर्शनादिपदबाहुल्याच्च तृतीयपादपाठो विमृश्यः। सकृद्दर्शनत एव व्याप्तिज्ञाने, व्यभिचारशंकायां भूयोदर्शनात् तन्निवृत्तिः, तथाप्युपाध्युद्भावने तद्धूननमनुकूलतर्केणेति वृत्तावर्थ उक्तः। अतः, 'बहुतरे दर्शनेऽप्येष तर्कः' इति वा पाठः स्यात्। व्याप्तेः सर्वहेतुसाध्यव्यक्तिविषयकत्वं संपादयति तज्जातीति। तज्जात्याधारभानपदेन सामान्यलक्षणा प्रत्यासत्तिरुच्यते। किञ्चिद्व्यक्तिमात्रे इन्द्रियसंनिकर्षेऽपि संनिकृष्टतद्व्यक्तिनिष्ठधूमत्वादिसामान्याश्रयत्वरूपसंनिकर्षात् सर्वधूमादिग्रहणमिति ॥ प्रथमेन दर्शनेनेति। धूमोऽग्निसमानाधिकरण इति दर्शनेनेत्यर्थः। भूयसां त्विति। पश्चात् तत्रतत्र दूरात् धूमदर्शने, किमयमग्निना सह, उत विनेति शंका जायते। इयमेव व्यभिचारशंका। सा संनिधाय अग्निदर्शने सति तत्रतत्र परं निवर्तते। एतावदेव भूयोदर्शनफलम्। तत्तत्स्थलव्यभिचारशंकावैलक्षण्येन सामान्यव्यभिचारशंकानिवर्तकत्वेन तर्कसाफल्यपरं तृतीयपादमवतारयति तर्हीति। इयञ्च व्यभिचारशंका, हेतुरस्तु साध्यं माऽस्तु इति विपक्षजिज्ञासा। वक्ष्यति च पश्चिमश्लोके, 'विपक्षजिज्ञासाविच्छेदकस्तर्कः' इति। विपक्षजिज्ञासा नाम प्रकृतपक्षविरुद्धस्याग्न्यभावरूपपक्षस्य जिज्ञासा। धर्मिणि धूमवति अग्न्यभावं प्रमातुमिच्छा। एतदिच्छाबलात् अग्न्यभाववद्वृत्तित्वरूपव्यभिचारशंका जायते। इयमेवं स्वतोऽपि भवेत्; कस्यचिदुपाधित्वेन ग्रहणादपि भवेत्। उभयथाऽपि तर्कनाद्यत्वात् निदानभूतोपाधिनिराकरणमित्युक्तम्।

इदमत्र बोध्यम्—प्रथमतो धूमदर्शने पूर्वानुभूताग्निसाहचर्यबलादग्न्युपस्थितौ पर्वतेऽग्निसंदेहे, यद्ययं विपक्षः स्यात्, तर्हि तथा जानीयाम् इति विपक्षजिज्ञासायाम्, यद्ययमग्न्यभाववान् स्यात्, धूमाभाववानपि स्यात् इति विषयपरिशोधकतर्कप्रवृत्तौ, अस्तु विनैवाग्निं धूम इति व्यभिचरितत्वापादने, यद्यग्निं विनाऽपि धूमः स्यात् धूमोऽग्निजन्यो न स्यात्, धूमार्थिनोऽग्नौ प्रवृत्तिर्न स्यादित्यनिष्टापादनं क्रियते। अयं व्याप्तिग्राहकस्तर्कः। अनेन व्याघातदर्शिनः एतदापादनरूपव्यभिचरितत्वेच्छानिवृत्तौ पूर्वतर्कबलात् विपक्षेच्छा विच्छिद्यते। सर्वत्रेच्छारूपशंकैव तर्कनिवर्त्या। सुरापा-

मूलोपाधिनिराकरणमिति विभाग । अस्तु तावदयं क्रम. । अथापि व्याप्तिग्रहणं किं सर्वव्यक्त्युपसंहारेण ? उत कतिपयव्यक्त्युपसंहारेण ? द्वितीये व्याप्तिरेव न संभवति। प्रथमे सर्वव्यक्त्युपसंहारे, सर्वव्यक्तिसंबन्धाभावादिन्द्रियस्य, कथं ग्रहणमित्यत्राह **तज्जात्याधारभावादिति** । अयं भाव --इन्द्रियेण तावत् सन्निहिता व्यक्तिः सम्बद्धा , तत्समवेतत्वेन जातिः , तदाधारतया तद्विशेषणत्वेन सर्वा व्यक्तय । तथाचेन्द्रियेण सह सम्बद्धविशेषणत्वेन(णवत्त्वेन ?) सर्वव्यक्तीनां संबन्ध । अत सर्वव्यक्त्युपसंहारेण व्याप्तिग्रहणोपपत्तिरिति ॥

अस्मिन्नर्थे किं प्रमाणमिति चेत्, आबालगोपालमानुमानिकव्यवहारानुपपत्तिरेव ।(1) किमानुमानिक-

---

वी–नेच्छा हि तत्रानिष्टापादने निवर्तते ; तद्वत् । एवं व्यभिचरितत्वेच्छानिवृत्तौ व्याप्तिग्रहो निराबाधं प्रवर्तते । तेन व्यभिचारसंशयरूपशंकाया निवृत्तिः । अथ विपक्षेच्छाविच्छेदस्य प्रागुक्तत्वात् व्याप्तिग्रहबलादनुमितौ जातायां साध्याभावसंशयरूपशंकाऽपि निवर्तते । तदुक्तं न्यायकुसुमाञ्जलौ, "ततः शंकेन स्वरूपतः फलतश्च निवर्तनीया । तत्र फलमस्याः विपक्षस्यापि जिज्ञासा तर्कादाहत्य निवर्तते । ततोऽनुमानप्रवृत्तौ शंकास्वरूपमपि" इति । एतद्विषयविवेचनविस्तरः मणिकारादिनवीनगत्ययोगश्चास्मदीये कुसुमाञ्जलिविस्तरे द्रष्टव्यौ ।

तद्विशेषणत्वेनेति पाठे, इन्द्रियसंयुक्तसमवेतजात्याधारत्वरूपेण इन्द्रियसंयुक्तविशेषणत्वेनेत्यर्थः । उपरि संबद्धविशेषणत्वेनेत्यस्याप्ययमेवार्थः । व्याप्तिग्रहणोपपत्तिरिति । एवञ्च प्रथमदर्शनावसर एवोक्तसंनिकर्षविशेषेण सर्वहेतुव्यक्तीनां सर्वसाध्यव्यक्तीनां हेतुसाध्यसामानाधिकरण्यत्वेन सर्वसामानाधिकरण्यव्यक्तीनाञ्च गृहीतत्वात् नियतसामानाधिकरण्यरूपव्याप्तौ आसां व्यक्तीनामेव भानात् व्याप्तिग्रहणोपपत्तिरिति । नन्वीदृशसामानाधिकरण्यदर्शनमात्रेण धूमादिर्व्याप्यः, अग्न्यादिर्व्यापक इति वैलक्षण्यं कथमवगम्येत , तद्ग्रह एव हि व्याप्तिग्रह इति चेत्—भूयोदर्शनबलात् व्याप्तिग्रह इति वदता पक्षे कथम् । तत्र दर्शनेऽग्निमात्रदर्शनस्थलमपि निवेश्यमिति चेत्—तादृशसहकारिचिन्तनमत्रापि काममस्तु । यद्वा व्याप्तिग्रहानन्तरभावि विपक्षजिज्ञासादिविघातकस्तर्क एव सर्वं साधयिष्यति । तथाच साध्याभाववदवृत्तित्वादिरूपव्याप्यत्वस्य पश्चाद्ग्रहणेऽपि सर्वसामानाधिकरण्यग्रहणं प्रथमदर्शने अक्षतम् । सर्वमिदं श्लोके, 'एके जगदुः' इति एके इत्यनेन, वृत्तौ न्यायवित्संप्रदाय इत्यनेन च ज्ञाप्यते ॥ मीमांसकपार्थसारथिमिश्रादयस्तु—यत्र धूमस्तत्राग्निरिति ज्ञानमनुमित्यर्थं नापेक्षितम्, सर्वव्यक्तिग्रहणायोगात् । अनुमितस्ततः धूमवता सर्वेषामग्निमत्त्वावगमः अनग्नौ सर्वत्र धूमाभावावगमश्च नापेक्षितः । किंतु व्यभिचारादर्शनसहितं भूयोदर्शनमेव । यत्र धूमस्तत्राग्निरिति ज्ञानं तु अनुमितौ जातायां क्रमेण भावीति वदन्ति । एवं भूयोदर्शनमात्रजन्या चेदनुमितिः , नूनं पर्वतोऽप्यग्निमान् स्यादित्यूहमात्ररूपैव स्यात् । निश्चयरूपानुमितिस्तु विपक्षबाधकतर्काधीना यत्र धूम इति गृहीतव्याप्तिमूलिकैव । यदिदं ज्ञानमानुमानिकमिति , कस्तदाशय — किं प्रत्यक्षरूपं व्याप्तिज्ञानं तदिति । यद्वा तत्रापेक्षितमिति । नाद्यः ; इष्टत्वात् । हेतुव्यापकसाध्यसामानाधिकरण्यरूपव्याप्तौ विशेषणादस्य प्रत्यक्षत्वादेव व्याप्तिप्रत्यक्षत्वस्योक्तत्वात्.। न द्वितीयः ; अपेक्षितत्वस्योपपादितत्वात् । व्यभिचारशंकानिवर्तनं हि तर्ककृत्यम् । यदि अन्यानि धूमवन्त्यपि अग्निमन्ति धूमवत्त्वात् दृष्टस्थलवदित्यनुमानेन यत्र धूमस्तत्राग्निरिति ज्ञानोदय इत्युच्यते ; एतदनुमानोपयिकी व्याप्तिः का । अग्निधूमोभयभूयोदर्शनमेव चेत्—तत् प्रागेवास्तीति किमर्थमनुमानप्रयोगः । एवञ्च भूयोदर्शने सति असति बाधके इदं ज्ञानं स्वयमेवोदेतीत्येवोक्तं भवति । एवमादिकं वक्तव्यं मनसि निधाय बहुधा विकल्प्य दूषणेन व्याप्तिग्रहस्यावश्यकत्वं स्थापयति अस्मिन्नर्थे इत्यादिना ।

व्यवहारो नास्ति,(2)किं वा तद्व्या(सव्याप्ति?)प्तिमन्तरेण संभवति,(3)अथवा व्याप्तिरज्ञाताऽप्यनुमानाङ्गं भवति, (4) अथवा व्याप्तिज्ञानापेक्षया प्रकारान्तरेण व्याप्तिज्ञानं संभवति, (5) अथवा न प्रकारान्तरेण, नानेनापि प्रकारेण व्याप्तिज्ञानं संभवतीति ? नाद्य, लोकोपलम्भविरोधात्। न द्वितीय, अकारणकार्योत्पत्तिप्रसङ्गात्। अत एव न तृतीय, व्याप्तिज्ञानमन्तरेणानुमानादर्शनात्। न चतुर्थ, तस्याप्युपायस्य त्वदुक्तदोषग्रस्तत्वस्य वक्तुं शक्यत्वात्। न पञ्चमः, व्याप्तिज्ञानोपायाभावे व्याप्त्यभावेन सर्वानुमानोच्छेदप्रसङ्गात्। व्याप्तिभञ्जकानुमानतर्कयोरपि व्याप्त्यभावेन (प्तिबाधेन) विवक्षितासिद्धेः। तयोर्व्याप्तिज्ञानविधुरयोरपि बाधकत्वे साधकानामपि तद्विधुराणां साधकत्वं स्यात्। अस्मदुक्तप्रकारेण व्याप्तिज्ञानसाधने अस्माकमपि तथैव स्यादिति॥

तर्हि प्रमेयत्वाभिधेयत्वयोर्व्याप्तिग्रहणे सर्वोपसंहारात् भवत सार्वज्ञ्यं स्यादिति चेत्, भवतोऽपि तर्हि सार्वज्ञ्य स्यात्; अन्यथा कथं सर्वज्ञत्वापादानं करोषि॥ भवत· किंचिन्नाविदितं स्यादित्यापादयामीति चेत्—किं सर्वेष्वपि पदार्थेषु किंचिन्नाविदितं स्यादित्यापादयसि, यद्वा येषु केषुचिदर्थेषु ? उत्तरत्र न सार्वज्ञ्यापादनम्। पूर्वत्र सर्वेष्वपि पदार्थेषु किंचिन्नाविदित स्यादिति वदतो भवतोऽपि सार्वज्ञ्यं स्यात्॥ सामान्याकारेण सर्वं मम विदितम्, विशेषतो न विदितमिति चेत्—ममाप्येवमेवेति समस्समाधिः। अत सामान्याकारेण व्याप्तिग्रहणस्य वादिप्रतिवादिसाधारणत्वात्, 'नैकः पर्यनुयोक्तव्य' इति न्यायः। यदि कतिपयव्यक्तिग्रहणमात्रेऽपि व्याप्तिग्रहणमङ्गीकृत्य प्रतिकूलानुमान प्रतिकूलतर्कं च वदसि, तदस्माकमपि समानम्। तस्मात् सुस्थितमनुमानम्॥ इति व्याप्तिग्रहणप्रकारः ४७॥

(273) अस्मिन् सत्येतदस्तीत्यवितथनियतेरन्वयव्याप्तिरभिख्या :
तस्याभावे तु तन्नेत्ययमपि नियमः ; तौ पृथक् चापृथक् च।
तस्मात् त्रेधाऽनुमानं कतिचिदकथयन् ; एकहानात् द्विधैके ;
कश्चिच्चेत् व्याप्तियुग्मप्रिय इह भविता, वर्णयत्वैकविध्यम्॥ ४८।

---

वी— तद्व्याप्ति=व्यवहार्यसंबन्धिव्याप्तिम्। पाठान्तर वा। नैकः पर्यनुयोक्तव्य इति। तथाचाऽऽहुः, 'यश्चोभयोः समो दोषः परिहारोऽपि वा समः। नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे'' इति॥

अथ व्याप्तेर्द्वैविध्यं प्रदर्श्य तन्मुखेन हेतोः कतिविधत्वमिति विचारयति अस्मिन्निति। प्रथमेन पादेनान्वयव्याप्तिः द्वितीयेन व्यतिरेकव्याप्तिश्चोच्यते। नियतिः=नियमः। तस्या अवितथत्वमनुमितिनिर्वाहकत्वम्; सर्वैर्निर्विवादमिष्टत्वात्। तदाकार उच्यते अस्मिन्निति। अस्मिन्=हेतौ सति, एतत्=साध्यमस्ति इति वाक्यगम्यायाः यत्र हेतुस्तत्र साध्यमित्यस्याः स्वव्यापकसाध्यकत्वरूपायाः नियतेः अन्वयव्याप्तिरिति नाम। व्यतिरेकव्याप्तिः। अत्र प्रथमतत्पदेन साध्यं ग्राह्यम्। तस्याभावे, यत्र साध्यं नास्ति, तत्र तत्=हेतुर्नेति शब्दगम्योऽपि=साध्याभावव्यापकसाभावकत्वरूपोऽपि नियमः कश्चित् व्यतिरेकव्याप्त्यभिख्यः। इदं सर्वसंगतम्। एतन्मूलहेतुविभागे तार्किकाशयमाह तौ=नियतिनियमशब्दोक्तौ द्वावपि पृथक्=भिन्नभिन्नहेतुनिष्ठौ भवतः ; अपृथक् च=एकहेतुनिष्ठौ च भवतः। तस्मात् अनुमानं त्रेधा=केवलान्वयि-केवलव्यतिरेकि-अन्वयव्यतिरेकिभेदात् भेदत्रयवदिति कतिचित्=तार्किकाः अकथयन्। परंतु व्याप्तिद्वयस्थलेऽपि एकैकव्याप्तिज्ञानादेवानुमितिर्भवति। एकहानात् द्विधैके। एकस्य केवलव्यतिरेकिणो हानात्=त्यागात् द्विधा=केवलान्वय्यन्वयव्यति-

अथ व्याप्त्यादिविभागप्रकारं विशदयति **असिन्निति**। हेतुसद्भावे साध्यसद्भावोऽन्वयः। व्यतिरेकव्याप्तिमुदाहरति **तस्येति**। साध्याभावे साधनाभावो **व्यतिरेकः**; न पुन साधनाभावे साध्याभाव। यथाऽऽहु:—"व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते। तयोरभावयोस्तस्माद्विपरीत: प्रतीयते॥" इति। एतौ व्याप्तिप्रकारौ अन्वयव्यतिरेकिणि उभावेव (सहैव) वर्तेते, केवलान्वयिनि केवलव्यतिरेकिणि च पृथगेव वर्तेते इति न्यायसंप्रदाय इत्याह **ताविति**। अतोऽनुमानत्रैविध्यमिति च दर्शयति **तस्मादिति**। **कुमारिलादयो** व्यतिरेकिणं निरस्यन्ति; **वादीन्द्रादयो**ऽन्वयिनमिति विशेष दर्शयति **एकहानादिति**। एवमन्वयव्यतिरेकिमात्रसक्तो यदि कश्चित् भविष्यति, स त्वन्वयव्यतिरेकिण मेवाङ्गीकृत्य तद्द्वयमपि प्रतिक्षिपत्वित्याह **कश्चिदिति**। अयमत्र भाव —अन्वयव्यतिरेकिवत् केवलान्वयी न प्रतिक्षेप्य, अन्वयस्य निश्चलत्वात्। केवलव्यतिरेकिणं वयमेव प्रतिक्षेप्स्याम इति॥

**इति व्याप्त्याद्यादिविभागः ॥ ४८ ॥**

(274) **सर्वस्यः केवलान्वय्यघटितसरणिः स्यात् स्ववृत्तेर्विकल्पे,**
**साध्ये स्वस्मिन्निवृत्ते भवति च स तदा साध्यहानेर्विपक्षः।**
**हेतोस्तद्वृत्त्यवृत्त्योरभिमतविहतिस्तत्र चैव विकल्पात्**
**इत्युत्प्रेक्षा विभागं विघटयतु न वा सर्वथा व्याप्तिसिद्धिः ॥ ४९ ॥**

---

व्यतिरेकिभेदेन द्विविधमनुमानमकथयन् मीमांसकाः। इदमस्माकमपीष्टम्। अस्य द्वितीयोऽप्यर्थः। एकहानात् =केवलान्वयिहानात् द्विधा केवलव्यतिरेकि-अन्वयव्यतिरेकिभेदविशिष्टं वादीन्द्रादयोऽकथयन्। अतिनवीनमिदमिति ज्ञापनाय पक्षान्तरमपि पश्चात् भवेदित्युल्लिखति कश्चिदिति। यः कश्चित् व्याप्तियुग्मप्रियः =एकैकहेतोरपि अन्वयव्यतिरेकव्याप्तिद्वयमिच्छन् भविता चेत् =भविष्यति चेत्, ऐकविध्यम् अन्वयव्यतिरेकित्वमात्र वर्णयतु। तदिच्छामात्रेण तदेव तत्त्वं न भवति। अतो वादीन्द्रोक्तमप्यविश्वसनीयम्, कतिपयकेवलान्वय्यसंभवचिन्तया सर्वकेवलान्वयिनिरासायोगादिति भाव। मीमांसकैः केवलव्यतिरेकिखण्डनं तत्स्थाने अर्थापत्तिप्रमाणस्वीकारात्। अस्माभिस्तदस्वीकार उदाहरणायोगात् तयोरभावयोः =तयोर्भावयोः यौ अभावौ, तयोः॥ ४८॥

*महाविद्यानुमानस्याऽऽभासत्वस्थापनार्थं केवलान्वयिनिराकरणमित्येव न; केवलान्वयिनः* स्वयमनेकदोषदुष्टत्वादेवेति शङ्कया वादीन्द्रदर्शितदोषादिकं निरस्तुमुद्भावयति सर्वस्य इति। केवलान्वयी=केवलमन्वयवान्, व्यतिरेकरहितः। कुत ? सर्वस्य त्वात्। ईदृश केवलान्वयी धर्मः स्ववृत्तेः स्वस्मिन् स्वसद्भावविषये स्वस्यान्यस्मिन् केवलान्वयिनि तद्भावविषये च विकल्पे, अस्ति न वेति विमर्शे अघटितसरणिकः स्यात्। सरणिद्वयमप्यघटमान—गत्यनर्हं स्यात्। कथमिति चेत्—इदमभिधेयं प्रमेयत्वादित्यनुमाने साध्यस्य हेतोश्च सर्वस्यत्वात् अन्वयव्याप्तिः पुष्कलेति प्रयोक्तुराशयः। तदत्र विचार्यम्। अभिधेयत्वरूपं साध्य स्वस्मिन् अस्ति न वा। स्वस्य स्वाधिकरणत्वायोगात् स्वस्मिन्निवृत्तिरिति चेत्—तदा स =अभिधेयस्वरूपो धर्म निश्चितसाध्याभाववत्त्वात् विपक्षो भवेत्। तथा चाभिधेयत्वं न केवलान्वयि स्यात्। तत्र च विपक्षे हेतोः प्रमेयत्वस्य वृत्तिरवृत्तिर्वा। आद्ये विपक्षे हेतुसद्भावात् व्यभिचारः। हेतोरभावे च हेतो केवलान्वयित्वहानिः। साध्ये प्रमेयत्वास्वीकारे अनुमेयत्वमपि न स्यात्—अनुमेयत्वं हि प्रमेयत्वप्रकार एव। तत्र चैवमिति।

एवं केवलान्वय्यङ्गीकारे **महाविद्याऽप्यङ्गीकार्या**; तस्या अपि केवलान्वयित्वात् । तथाच पूर्वोक्तं तन्निराकरणं न युज्यते । किंच सकलसपक्षवर्तीति केवलान्वयी महाविद्येत्युच्यते । तच्च न संभवति, प्रमेयत्वाभिधेयत्वादीनां सर्वस्यरत्वे स्वात्मन्यपि वृत्तिप्रसङ्गात्, तदभावे केवलान्वयित्वाभावादिति चोद्यते(ति) **सर्वस्य** इति। तदेव विवृणोति **साध्य** इति। साध्यं स्वस्मान्निवर्तते न वा ? न निवर्तते चेत् आत्माश्रयः, निवर्तते चेत् तद्विपक्ष एव । तदिदमाह **साध्य** इति। विपक्षभूते तस्मिन् साध्ये हेतुर्वर्तते न वा? यदि वर्तते, विपक्षवृत्ति(र्त्ति)त्वेन हेतुत्वमेव भज्येत। यदि न वर्तते, प्रमेयत्वाभावात् साध्यस्य साध्यत्वं व्याहन्येत। तदेतदाह **हेतोरि**ति। एवं प्रमेयत्वादिहेतौ साध्यं वर्तते न वा ? न चेत्, हेतुरेव विपक्षः स्यात्। तस्मिन् विपक्षभूते हेतौ हेतुर्वर्तते चेत् आत्माश्रयः, विपक्षगामित्वात् व्यभिचारश्च । न वर्तते चेत् कथमिव केवलान्वयित्वं हेतोः; कचिद्व्यतिरेकस्यापि दर्शनात् । यदि हेतौ साध्यं वर्तते, स तु हेतुः सपक्षः स्यात् । तत्र हेतुवृत्तौ आत्माश्रयः, अवृत्तौ अप्रमेयत्वात् हेतोरेवासिद्धिः । किंच हेतुसाध्ययोर्द्वयोरपि सपक्षत्वात् अन्योन्यवृत्तावन्योन्याश्रयप्रसङ्गः । अवृत्तौ कथमिव केवलान्वयित्वम्? इत्थं बहुविधतर्ककर्कशं महाविद्यानुमानं न प्रतितिष्ठतीत्याह **तत्र चैवं विकल्पादि**ति । यथासंभवं विकल्पानां भूयस्त्वादित्यर्थः । इयमुत्प्रेक्षा केवलान्वयिरूपमहाविद्यादिविभागं विघटयतु न वा । सर्वथा अन्वयव्यतिरेकिहेतुसद्भावात् व्याप्तिरभङ्गुरेत्याह **इतीति** । न वेत्युक्त्या विभागविघटनं न सिध्यतीत्यभिप्रैति। अयमभिप्रायः — महाविद्या चेत्,

---

व्री- तत्र = हेतौ हेतुरस्ति न वेति, साध्यमस्ति न वेति च विकल्पो भवति। तथाचाभिधेयत्वस्य प्रमेयत्वे अभावे केवलान्वयित्वहानिः। सत्त्वे तत्र हेत्वभावे हेतोः सपक्षव्यावृत्तत्वात् असाधारण्यम्। हेतुरस्ति चेत्—स्वस्मिन् स्ववृत्तिकथनादात्माश्रयः । यद्वा तत्र चेति पृथक् । एवं विकल्पादित्यस्य पादद्वयोक्तरीत्या नानाविकल्पनात् केवलान्वयी अघटितसरणिः स्यादिति प्रथमपादेऽन्वयः। तत्र चेत्यत्र स्वस्माद्धिवृत्ते इत्यादिकमनुषञ्जनीयम्। तथा हेतुः स्वस्मान्निवर्तते न वा, हेतुः साध्यान्निवर्तते न वेत्यं विकल्प दोष उक्तो भवति । एवं वादीन्द्रविकल्पं निरस्यति इत्युत्प्रेक्षेति । इयं त्वदीयोत्प्रेक्षा प्रमेयत्वादेः केवलान्वयित्वनिरोधिनी महाविद्यारूपं केवलान्वय्यनुमानेऽवान्तर विभागं कामं विघटयतु । तावता प्रमेयत्वरूपतदुक्तहेतौ व्याप्तेर्नासिद्धिः। प्रमेयत्वस्य केवलान्वयितया व्यापकत्वेऽपि यदि साध्यव्याप्तिः स्यात्, हेतोर्न्यूनवृत्तित्वे कथं व्याप्तिभंग इति। यदि उत्प्रेक्षायामनौचित्यविमर्दोन प्रमेयत्वादेः केवलान्वयित्वं स्थाप्यते, तदा न विभागविघटनम्, तदाह न वेति । तदा च व्याप्तिसिद्धिः सुतरामिति ॥

सपक्षवर्तीतीति । तद्वर्तित्वाद्धेतोरित्यर्थः । तच्चेति । सकलसपक्षवर्तीत्येतच्चेत्यर्थः । इत्थं बहुविधेति । एतच्छ्लोकोक्तरीत्या, स्वव्याघातादिदोषादित्यादिपूर्वोक्तरीत्या च बहुविधेत्यर्थः। कर्कशम् = अर्थग्रहणपरिश्रममात्रफलकम् । न प्रतितिष्ठतीत्यनेन विकल्पादित्यस्य प्रथमपादेऽन्वयः सूच्यते । अन्वयव्यतिरेकिहेतुसद्भावादिति। ननु श्लोकोऽयं न सर्वथा व्याप्त्यभावमनुमानप्रमाणासंभवञ्च वदतां खण्डनार्थं प्रवृत्तः, किंतु महाविद्यानुमानखण्डकं प्रति किमपि वक्तुम् । तथाच केवलान्वयभावेऽपि अन्वयव्यतिरेकव्याप्तिद्वययुक्तहेतुसत्त्वादनुमानक्षतिरित्युपन्यासः कथं घटते इति चेत्— अयं भावः—केवलान्वयिखण्डकेनापि, अन्वयव्यतिरेकिसद्भावात् अन्वयव्याप्तिव्यतिरेकव्याप्त्योः स्वीकृतत्वात् तत्र केवलव्यतिरेकव्याप्तिमात्रसंभवे तथाविधानुमानस्येष्टत्वाच्च तद्वत् यत्रान्वयव्याप्तिरेव वक्तुं शक्यते न त्वन्या, यथा घटोऽभिधेयः द्रव्यत्वादित्यादौ तत्र केवलान्वयित्वमेष्टव्यम् ।

स्वव्याघातादिभि प्रागेव दूषिता। अभिधेयत्वादिसाधक प्रमेयत्वादिक तु सर्वस्थ(था)केवलान्वयि च भवति, तस्य च त्वदुक्तदूषणाभासैरपाकरणशङ्काऽपि नाङ्कुरतीति॥ **इति वादीन्द्रविकल्पवैयर्थ्यम्॥ ४९॥**

**(275) तत्तद्धीव्यक्तिभेदात् प्रमितिविषयता मानसिद्धा घटादौ;**
**प्रत्यक्षत्व च तद्वत्; तदिदमुभयमध्यक्षसिद्ध तथैव।**
**इत्थ तद्वृत्त्यवृत्तिव्यतिकरकलहैः केवलान्वय्यपोहे**
**दुर्वारः शून्यवादी न तमभिमनुपे स्थापयन् किञ्चिदिष्टम्॥ ५०॥**

केवलान्वयिविशेषमुदाहृत्य पूर्वोक्तदूषणाभाव दर्शयति तत्तदिति। धर्मादय कस्यचित् प्रत्यक्षा, प्रमेयत्वादिति केवलान्वयिनमुदाहरन्ति न्यायविद (वादिन)। तत्र मेयत्व स्वात्मनि वर्तते वा न वा, प्रत्यक्षत्व स्वात्मनि वर्तते वा न वा इति साध्यसाधनविषयविकल्प एव दूषणाङ्कुर। तत्र स्वात्मनि वृत्तौ न कश्चिदपि दोष, स्वपरनिर्वाहकसमाधे सर्ववादिसाधारणत्वात्। औपाधिकधर्माणा यावदुपाधि वृत्तिमेवाङ्गीकुर्वन्ति विपश्चित। एक हि वस्तु प्रमाणेन सिध्यति, अतस्तत्प्रमेयम्, तच्च प्रमाणान्तरेण, तच्च

---

*श्री*— न चाभिधेयत्वेऽभिधेयत्वाभावात् तत्र केवलान्वयित्व दुर्वचमित्युक्तमिति वाच्यम् साक्षाद्वा परम्परया वाऽभिधेयत्व साध्यमित्युक्तौ केवलान्वयित्वसभवात्। एव परम्परया प्रमेयत्व सत्ताविशिष्टत्वादीनामपि साध्यत्व भवितुमर्हतीति। एवमेव महाविद्यानुमाने हेतो प्रमेयत्वस्य सामानाधिकरण्यादिपरम्परासवन्धेन हेतुत्वाङ्गीकारे उक्तवृत्तिविकल्पप्रयुक्तव्याप्तिभङ्गो नास्तीत्यपि न वेत्युक्तवतामाशय। प्रकारान्तरेण महाविद्यानुमानखण्डन प्राक्कृतमिष्टम्। यद्वा अन्वयव्यतिरेकिहेतुसद्भावात्= व्यतिरेकि=प्रमेयत्वम् स्वस्मिन्नभावात्, महाविद्यायाम् अन्वयव्याप्तियुक्तस्य तस्य सत्त्वादित्यर्थ॥४९॥

अथ महाविद्यानुमानानामाभासतया तादृशकेवलान्वयिविभागाभावेऽपि अभिधेय प्रमेयत्वादित्यादिक सुस्थम् स्ववृत्तिविकल्पस्यैव निराकरणादित्याह तत्तदिति। प्रमेयत्व नाम प्रमाविषयत्वम्, न तु घटत्वादिवत् जाति। प्रमा चानेका। तन्निरूपितविषयता च विषयभेदेन भिन्ना। प्रमेये घटादौ अय घट इत्यादिप्रमाविषयता। प्रमेयत्वे तु इद प्रमेयमित्याकारकप्रमान्तरविषयता। घटश्च प्रमेयत्वञ्चेत्येकज्ञानग्रहणेऽपि विषयता विभिन्ना। अतो घटादौ सर्वत्र विभिन्नप्रमाविषयत्व प्रमाणसिद्धम्। न केवल प्रमासामान्यविषयत्वम्, प्रत्यक्षविषयत्वमपि सर्वत्र भवति। अत एव धर्मादीनामपि किञ्चित्पुरुषप्रत्यक्षविषयत्व तार्किकानुमितम्। घटादौ प्रत्यक्षविषयत्ववत् प्रत्यक्षविषयत्वेऽपि प्रत्यक्षविषयत्वमस्ति। अह घटविषयप्रत्यक्षवानित्यनुव्यवसायो हि विषयत्व विषयीकरोति। परतु परमतरीत्या न व्यवसायानुव्यवसायधीभेद। तस्मात् केवलान्वयिधर्म सत्येव। इत्थम्=इत्थ सति, इत्थम्=त्वदुक्तप्रकारेण तद्वृत्त्यवृत्त्यव्यतिकरकलहे=तत्रैव तस्य वृत्तिरवृत्तिर्वेति कलहे व्यतिकरे=प्रमेयत्वाभिधेयत्वादेर्मिथो वृत्त्यादिविषये च कलहे केवलान्वयिधर्माणामनुभवसिद्धानामपोहे=निराकरणे प्रमाविषयाणा प्रमाविषयत्वाभाववादिना त्वया तत्सामान्यात् सर्वेषैव तदपलाप सुकर इति एवमनुभवविरोधवादे इत्थ शून्यवाद एव स्यात्। अस्तु तथैवेति न त्व मन्तुमर्हसि। सर्वथाऽभावस्य त्वदसमतत्वात्=प्रत्यक्षानुमानशब्दादिस्वीकारात्॥

स्वपरनिर्वाहकेति। घटादिविषयकज्ञानविषयत्व घटस्य, तथा तस्य ज्ञानस्य ज्ञानान्तरविषयत्वम् सदिष्टमेव। तज्ज्ञानमात्रग्रहणेऽपि तदधीनव्यवहारानुगुण्यरूप विषयत्व घटतज्ज्ञानोभयसाधारणम्। पदप्रकाशकस्य रूपस्य स्वप्रकाशतया स्वपरनिर्वाहकत्व सर्वेषाम्। तथा सव्यवहारानुगुण्यापादकत्व

तदन्येन प्रमाणेनेति प्रमेयत्वं सर्वसाधारणमेव। एवं वाच्यत्वादिकमपि। अतो वृत्तिभेदेन प्रमेयत्ववाच्यत्वादीनां यावदुपाधि वृत्त्यङ्गीकारावश्यम्भावेन नात्माश्रयदोषः। नाप्यन्योन्याश्रयदोषः; प्रमेयत्वस्याभिधेयत्वात्; अभिधेयत्वस्यापि प्रमेयत्वात्। न हि दृष्टेऽनुपपन्नं नाम। प्रमेयत्वमेव ह्यभिधीयते; अभिधेयत्वमेव प्रमीयते। व्यक्तिभेदेन विरोध उपशाम्यतीत्युक्तम्। उक्तं च यावदुपाधिवृत्ति(र्ति)त्वं सर्वौपाधिकधर्मसाधारणम्। इत्थमनङ्गीकारे शून्यवाद एव प्रसज्येत। न च भवान् शून्यवादी; केवलान्वयिमात्रविडम्बनप्रवृत्तत्वात्। एतत् सर्वमभिप्रेत्याह **तत्तद्धीति**। अयमत्र शब्दार्थः—तत्तद्बुद्धिव्यक्तिभेदात् प्रमेयत्वस्यापि प्रमेयत्वे न दोषः। प्रत्यक्षत्वं च प्रत्यक्षान्तरेण प्रत्यक्षम्। तथाच प्रमेयत्वं प्रत्यक्षत्वं च प्रत्यक्षान्तरेण प्रत्यक्षमित्युक्तम्। इत्थं सति उपरञ्जकधर्माणां स्ववृत्त्यवृत्तिविकल्पेन दूषणे नित्यसमा; विषयिधर्माणां स्वविषयत्वाविषयत्वविकल्पेन दूषणे पुनरनुपलब्धिसमा। एतादृशजात्यन्तर्गतैर्विकल्पैर्दूषणकथने शून्यवादो दुर्वारः। भवान् पुनर्महाविद्यामेव विडम्बयन् न शून्यवादी, तत्तत्स्थापनप्रवणत्वात्। तदिदमाह **न तमभिमनुप इति**।

श्लो— नात्माश्रयप्रसक्तिर्वा नान्योन्याश्रयसंस्थितिः। प्रमेयत्वाभिधेयत्वप्रसङ्गे सर्ववादिनाम्॥
औपाधिकानां धर्माणां वृत्तिर्यावदुपाधि चेत्। प्रमेयत्वादिकं सुस्थमन्यथा व्याहतिस्तव॥
व्याघातो यदि दोषो न को वा दोष इतीर्यताम्। दोषादोषविभागश्चेन्न स्यात् त्वं दूषकः कथम्॥

**इति वादीन्द्रनिरासेन केवलान्वयिविशेषनिरूपणम्॥ ५०॥**

(276) **ख्यातत्वात् शब्दवाच्यो विमतिविषय इत्यादिरूपे तु साध्ये**
**व्यर्थोऽसौ हेतुरित्थं विमतिसमुदयासंभवादित्ययुक्तम्।**
**व्याघातव्यक्त्यभावात् श्रुतिशकलबलात् कूटयुक्त्यादिभिर्वा**
**पाका कश्चित् प्रमुह्यन् प्रमिति(त)गतिकथापक्तिमैर्हि प्रबोध्यः॥ ५१॥**

---

वी— स्वस्य भवितुमर्हतीति। यावदुपाधीति। जातेरेकत्वात् स्ववृत्तावात्माश्रयः स्यात्। उपाधिभूतास्तु धर्माः स्वस्वकारणरूपोपाध्यधीनाः विभिन्नाः। अतः प्रमाव्यक्तिरूपोपाधिभेदाधीनं प्रमेयत्वं भिन्नभिन्नमिति न दोषः। नन्वेवं प्रमेयत्वे प्रमेयत्वं तत्रान्यत् प्रमेयत्वमित्यनवस्था स्यादिति चेत्—यदि कश्चित् उपर्युपरि तच्चिन्तनमेवोद्दिश्य तत्परम्परोत्पादने यतेत, कथंकारं प्रमाणसिद्धस्य परित्यागः। यद्युपरमेत, कथमनवस्था। सत्यामपि तस्यां कार्यकारणानवस्थावत् प्रामाणिकात्याग एव युक्तो जगदनपलापिनाम्। नित्यसमेति। यथा शब्दस्यानित्यत्वे उपन्यस्ते तत् अनित्यत्वमनित्यं चेत् शब्दः नित्यस्स्यात्। अनित्यत्वं नित्यं चेत्, तदापि धर्मस्य नित्यत्वात् धर्मी शब्दोऽपि नित्य इति दूषणम्, तथेदम्, प्रमेयत्वे प्रमेयत्वसत्त्वे आत्माश्रयः, तदभावे प्रमेयत्वं तुच्छमिति दूषणम्। को हि भावाभावौ द्वावपि निषेधेदिति। अनुपलब्धिसमेति। आवरणं नास्ति अनुपलब्धेरित्युक्तौ अनुपलब्धिर्नास्ति तदनुपलब्धेरिति वादे अनुपलब्धिसमा। तद्वत् अविषयत्वं नास्ति अनुपलब्धेरित्यत्रानुपलब्धिवर्णने सैव जातिरिति। पूर्वमवतारिकोक्तमेव श्लोकार्थेऽपि दर्शयति भवान् पुनरिति॥

ननु साध्यस्य कतिपयमात्रवृत्तित्वे, हेतुः सर्वस्थस्सन् केवलान्वयी यदि, तर्हि साध्याभाववति हेतुवृत्त्या व्यभिचारः; यदि साध्यं सर्वत्रास्ति, तर्हि संदेहाभावान्न तदनुमानमित्यत्राह ख्यातत्वादिति। ख्यातत्वं प्रमितत्वं प्रमेयत्वमेव। शब्दवाच्यत्वमभिधेयत्वमेव। शब्दभेदमात्रम्। विमतिसमुदया-

(278) साध्याभावो विपक्षे कथमिव विदितस्तस्य साध्याप्रसिद्धेः ;
भावात्मन्यप्यमुष्मिन् प्रतिभटवपुषा ह्यत्र ते व्याप्तिसिद्धिः ।
इत्यज्ञातान्वयेऽस्मिन् कथमिव सुशकः स्यादभावो नियन्तु ;
हेतौ सारोऽन्वयोऽतः ; क्वचिदनुपधिकः केवलान्वय्यपीष्टः ॥ ५३ ॥

श्रुतार्थस्य विशदीकरणाय व्यतिरेकिणो विपक्षे व्यतिरेकव्याप्तिदर्शनासंभवमुक्तमप्यनुवदति **साध्याभाव** इति । साध्याप्रसिद्ध्या तद्व्यतिरेकोऽपि विपक्षे ज्ञातुं न शक्यत इत्यर्थः ।

अत्र केचिदाहुः --यस्मिन् व्यतिरेकिणि साध्यं भावरूपम्, तत्र व्यतिरेकग्रहणासंभवः ; व्यतिरेकस्याभावरूपत्वात् । अभावस्य प्रतियोगिग्रहणमन्तरेणासिद्धेः । प्रतियोगिनश्च पक्षादिषु न क्वापि सिद्धेः । यत्र अभावरूपं साध्यं तत्र भावरूपो व्यतिरेकः । स च भावो न प्रतियोगिग्रहणसापेक्षः, भावत्वादेव । तथाच व्यतिरेक्यनुमानसिद्धिः । उदाहरन्ति च, गौरितरेभ्यो भिद्यते सास्नादिमत्त्वादिति । अत्र इतरेभ्यो भेदो हि इतरप्रतियोगिकान्योन्याभावः । तस्य चाभावरूपत्वात् व्यतिरेकः इतरत्वादिकं भावरूपम् । तस्मादभावरूपसाध्यव्यतिरेकस्य निरपेक्षप्रतीतिकत्वात् तेनैव हेतुव्यतिरेकस्य व्याप्तिग्रहणं युज्यत इति । अयं च ग्राम्यजनविप्रलम्भ इत्याह **भावात्मनी**ति । अयं भावः — व्यतिरेकस्य भावात्मकत्वेऽपि व्यतिरेकव्याप्तिकथनावस्थाया साध्याभावरूपतया कथनमवश्यम्भावि । यत् इतरस्मान्न भिद्यते, तत् सास्नादिमन्न भवतीति

---

श्री- अभावसाध्यककेवलव्यतिरेकिस्थले, अभावाभावमादाय व्याप्तेर्ग्रहणायोगेऽपि अभावप्रतियोगिनं भावमादाय व्यतिरेकव्याप्तिः सुवचा । तस्य वस्तुतः साध्याभावरूपत्वात् । अभावाभावस्य प्रथमाभावप्रतियोगिस्वरूपत्वात् । तथा च गौरितरेभ्यो भिद्यते सास्नादिमत्त्वादित्यत्र गवेतरभेदस्याप्रसिद्ध्या यो गवेतरभेदाभाववान् स सास्नादिमत्त्वाभाववानिति व्याप्तिग्रहणासंभवेऽपि गवेतरभेदाभावस्य गवेतरत्वस्वरूपतया यत्र गवेतरत्वं तत्र सास्नाभाव इति ग्रहणं सुकरम् ; भेदाभावस्य भेदप्रतियोगितावच्छेदकस्वरूपत्वात् । अतो न केवलव्यतिरेकिसामान्यभंगः । अन्यथा लक्षणानां व्यावर्तकत्वाद्यभावे लक्षणवचनमेव व्यर्थं स्यादित्यत्राऽऽह साध्येति । तस्य=केवलव्यतिरेकिणः साध्यं तावत् इतरभेदः, तदभावः विपक्षे अश्वादौ कथं विदितः । इतरभेदप्रतियोगिकाभावत्वेन न विदित इत्यर्थः । साध्यस्येतरभेदस्याप्रसिद्धत्वात् । अमुष्मिन्=इतरभेदाभावे भावात्मन्यपि । यद्यपि तस्य भावरूपत्वमप्यस्ति, तथापि । अत्र अनुमाने ते तद्व्याप्तिग्रहणे प्रतिभटवपुषा=इतरभेदप्रतियोगिकाभावत्वेन रूपेणैव, न तु भावरूपेण । व्यतिरेकव्याप्त्या साध्यसाधनप्रवृत्तस्य हि व्यतिरेकत्वग्रहणमावश्यकम् । व्याप्तिग्रहात् पूर्वं गवेतरभेदाग्रहे च प्रतियोग्यज्ञानात् तद्व्यतिरेकत्वेन तस्य ग्रहो न भवति । इति=अतः, अभावः=साध्याभावः नियन्तु व्याप्यत्वेन ग्रहीतुं कथमिव सुशकः । युक्त्यन्तरमपि मनसिकृत्याऽऽह अज्ञातान्वयेऽस्मिन् इति । ययोः साध्यहेतुभावेन निर्देशः, तयोर्व्याप्तिं पूर्वं गृहीत्वा व्याप्यव्यापकभावं निश्चित्य पश्चादेव व्यापकाभावात् व्याप्याभाव इति न्यायेन साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिर्ग्राह्या भवति । अन्यथा कतरस्य हेतुत्वं साध्यत्वमिति न निश्चीयेतेति । यत्र तु अभावयोरेव हेतुसाध्यभावेन निर्देशः, तत्र तत्प्रतियोगिनोरन्वयः प्राक् ग्राह्यो भवति । अतः हेतौ अन्वयव्याप्तिरेव सारभूता । व्यतिरेकव्याप्तिः सहकारिमात्रम् । अत एव तदभावेऽपि केवलान्वय्यपीष्टः । योऽनुपधिकः=उपाधिरहितः, अप्रयोजकत्वरहितः । अनुकूलतर्कवानिति यावत् ॥ न क्वापि सिद्धेः=क्वाप्यसिद्धेः । इतरत्वादिकमिति । ननु अश्वादिभेदस्यैतदनुमानात् प्राक् गवि असिद्धत्वे अश्वादौ गवेतरत्वस्याप्यप्रसिद्धत्वात् कथमितर-

हि व्यतिरेकव्याप्तिकथनम्। अन्यथा साध्यप्रतिभटत्वाभावे व्यतिरेकव्यवहारानुपपत्तिः। तथाच भावरूपत्वे अभावरूपत्वे च व्यतिरेकस्य साध्यविरोधित्वेन ग्रहणावश्यम्भावात् साध्याप्रसिद्धौ न प्रसिद्धिः। साध्यं च पक्षादिषु न प्रसिद्धमित्युक्तं प्रागेवेति। अतोऽन्वयापरिज्ञाने व्यतिरेकपरिज्ञानं सर्वथा न शक्यमित्याह इतीति। अस्मिन्—व्यतिरेक्यनुमाने। इत्थं केवलव्यतिरेकिणं निरस्य सर्वानुमानसारभूतमन्वयव्यतिरेकिणं प्रमाणतया निगमयति हेताविति। अन्वयः—व्यतिरेकसहितोऽन्वयः। हेतौ सारः स्थिरांशः। अतोऽन्वयव्यतिरेकी सर्वप्रधानः; अन्वयव्यतिरेकाभ्यामर्थतत्त्वनिर्णयात्। केवलान्वय्यपि क्वचिदिष्टः, यत्र निरुपाधिकत्वादिनिर्णयः तर्कानुग्रहेण भवति; यथा प्रमेयत्वादभिधेयत्वमिति। स च हेतुरभीष्ट एवेति। अतः केवलव्यतिरेकी अभावविषयत्वे भावविषयत्वेऽपि न साधक एव। अयं गौरिति व्यवहर्तव्य इति भावविषयः, इतरेभ्यो भिद्यत इत्यभावविषय इति भेदः॥ इति केवलव्यतिरेकिभङ्गः॥५३॥

(279) संत्यक्तावीतहेतोरभिदुरमखिलं लक्षणाभावतः स्यात्;
मैवं लक्ष्मैव भेदस्तदवगमकमित्याप्तवाक्ये तदुक्तिः।
यद्वा गन्धादिरप्स्वप्रमृतिविरहितेष्वेव दृष्टो घटादि-
ष्वाज्यादावन्वयी स्यात्; अयमिव विमतेष्वेकलक्ष्मण्यपोहः॥ ५४॥

---

र्वी—त्वस्य व्याप्यतया निर्देश इति चेत्—उक्तिलाघवायैवं प्रयोगः। अश्वादिकं सर्वमपि ग्राह्यमिति ज्ञापनाय अश्वादित्वमित्येव विवक्षितम्। एतदर्थमेवाऽऽदिपदम्॥ ननु अश्वादिभेदो नाम नाश्वादि-समुदायत्वावच्छिन्नभेदः; एकं नोभयमिति न्यायेन अश्वादावपि प्रत्येकं तत्सत्त्वात्। किंतु अश्व-भेदमहिषभेदादिसमुदाय एव। ते च भेदाः प्रत्येकं प्रसिद्धा एव। तत्समुदायो गवि साध्यते, अतो न साध्याप्रसिद्धिरिति चेत्—अथाप्यन्वयव्याप्तिग्रहणं विना व्यतिरेकव्याप्तिग्रहणं न भवति। इदमपि सूचयितुं हेतौ सारोऽन्वय इत्युक्तम्। वस्तुत इह गोसामान्ये सास्नादिमत्त्वेन तावद्भेदसाधनेऽपि कतिपयेषु गोषु तावद्भेदग्रहणं प्रागेवास्ति। अतो लक्षणेन तत्रान्वयव्याप्तिव्यतिरेकव्याप्तिमत्तया गृहीतेन तावद्भेदकूटानुमानं सुशकमिति नेदं केवलव्यतिरेकि। अनन्तरश्लोके इदं ज्ञेयम्॥ ५३॥

केवलव्यतिरेक्यनंगीकारेऽपि *लक्षणकथनं न व्यर्थमित्याह संत्यक्तेति। येन वादिना अवीत-*हेतुः=केवलव्यतिरेकिहेतुः संत्यक्तः=असाधकत्वेनोक्तः, तस्य मते लक्षणकार्यस्येतरभेदज्ञानस्य व्यवहारस्य चाभावेन लक्षणस्याकथनीयत्वात् सर्वं वस्तु अभिदुरं=मिथो विलक्षणत्वेनागृहीतं स्यात्। इमां शंकां परिहरति मैवमिति। लक्ष्मैव भेद इति। अस्मन्मते भावातिरिक्ताभावानंगी-कारात् तावद्भेदकूटसमनियतं लक्षणमेव भेदशब्दार्थः। अतो लक्षणज्ञानकाल एव भेदो गृहीत इति अस्माकमेव विवेकग्रहणं शीघ्रम्। भावातिरिक्ताभाववादिनस्तु अनुमानेनान्वयव्यतिरेकव्याप्ति-प्रभृतिग्रहणापेक्षिणः कञ्चित्कालं व्यामोह इति भावः। ननु सास्नादिमत्त्वप्रतिपादकमाप्तवाक्यं लक्षणमिति तत्रतत्रोक्तमस्ति; कथं भेदो लक्षणमित्युच्यते इत्यत्राह तदिति। भेद एव लक्षण-शब्दमुख्यार्थः। आप्तवाक्यस्य तदवगमकत्वात् लक्षणया तदुक्तिः। लक्षयतीत्यादौ लक्षणप्रतिपादक-शब्दस्य धात्वर्थत्वात् भावे ल्युटि लक्षणं शब्दः। लक्ष्यते विशेष्यते अनेन व्यक्तिरिति लक्षणं भेदः। *लक्ष्यलक्षणभाव इत्यत्र लक्ष्यपदं तादृशधात्वर्थं मनसि निधाय।* भेदरूपस्य लक्षणस्य, प्रत्यक्षे विषयस्य कारणतया, भेदज्ञानहेतुत्वस्यापि सत्त्वात् लक्षणभावः भेदकत्वमित्यर्थस्वीकारेऽपि न

ननु केवलव्यतिरेक्यभावे सर्वमपि लक्षणं निष्प्रयोजनं स्यात् । "व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्" । तदुभयमपि केवलव्यतिरेक्यनुमानसाध्यमित्याशङ्कते **सत्यक्केति** । **अभिदुरं** भेदकानुमानाभावादभिन्नमित्यर्थः । निराकरोति **मैवमिति** । तत्र हेतुमाह **लक्ष्मैव भेद** इति । विरुद्धधर्माध्यासो हि **भेदः** ; लक्षणानि च विरुद्धधर्माः । अतो लक्षणप्रतीतिरेव भेदप्रतीतिः । अतोऽनुमानसाध्यं नावशिष्यते । लक्षणप्रतीतेरेव लक्षणप्रतीत्या साधने पुनरात्माश्रयः । भवन्तोऽप्याहुः, "अयमेव हि भेदो भेदहेतुर्वा यत् विरुद्धधर्माध्यासः" इति लक्षणस्यापि भेदत्वम् । लक्षणातिरिक्तो भेदस्तु भवद्भिरङ्गीकृतोऽपि नैरर्थक्यात् नास्माभिरङ्गीक्रियत इति भावः । कथं तर्हि लक्षणस्य भेदत्वम् ; लक्षणं हि वाक्यरूपम्, स पुनर्न भेद इत्याशङ्क्य परिहरति **तदवगमकमिति** । आप्तवाक्ये लक्षणत्वकथनमौपचारिकमित्यर्थः । अथवा लक्षणमनुमानम् ; अन्वय्येव तदित्याह **यद्वेति** । तथा हि— अबादिव्यतिरिक्ततया संप्रतिपन्नेषु घटादिषु गन्धादिर्दृष्टः । तमेव दृष्टान्तीकृत्य सन्दिग्धेष्वाज्यादिष्वबादिव्यतिरेकः साध्यः ; तथाचान्वयित्वमेव । अयमेव हि पक्षः साधीयान् । लोके हि व्यवहारानुसारिणा लक्षणेन पामराः, सुशिक्षिताः परीक्षकाश्च विप्रतिपन्नेषु विषयेषु लक्षणानुरोधेनार्थतत्त्वं निर्णयन्तीति (निर्धारयन्तीति) सार्वलौकिकमेतत् । अतो लक्षणात् व्यतिरेकसाधनमन्वय्यनुमानफलमेव । एवं क्वचिदनुमाने विनिश्चिते सर्वत्रापि लक्षणप्रयोगे केवलमन्वयित्वेनैव वैलक्षण्य(लक्षण)प्रसाधनं युक्तमिति दर्शयति-**अयमिवेति** ॥

**इति लक्षणसार्थक्यनिरूपणम् ॥ ५४ ॥**

---

श्री- दोषः । लक्ष्यलक्षणेत्यस्यान्ततः धर्मवत्त्वेनोद्दिष्टे धर्मश्चेत्यर्थपर्यवसानमपि भवति । भेदानुमापकत्वपक्षं स्वीकृत्य केवलव्यतिरेकित्वं विनैव निर्वहति यद्वेति । गन्धवत्त्वादिलक्षणं विनाऽपि घटादिषु अबादिभेदकूटग्रहणमस्ति । केवलमाज्यादौ द्रवीभावादिना जलादित्वसंशयः स्यात्—तदर्थं सर्वां पृथिवीं वा आज्यादिमात्रं वा पक्षीकृत्य गन्धवत्त्वेनेतरभेदः साध्यते घटाद्यन्वयदृष्टान्तीकरणेनेत्यर्थः। ननु अनेकव्यक्तिगतलक्षणस्थले क्वचित् भेदनिश्चये तन्मुखेनान्वयव्याप्त्या भेदानुमानं स्यान्नाम । एकव्यक्तिलक्षणस्थले कथम् । ब्रह्मणो जगत्कारणत्वं लक्षणम् । तत्र तस्य भेदानुमापकत्वं कुत्र भेदप्रसिद्ध्या सुनिरूपमित्यत्राह अयमिवेति । तत्र ब्रह्म पक्षीकृत्य जगत्कारणत्वेनेतरभेदानुमानायोगेऽपि भेदग्रहः सुकरः । एतदनुमानाभावे कीदृशी विमतिर्भवेत्—अस्मदपेक्षया ब्रह्मणो भिन्नत्वमस्माभिर्ज्ञातमेव । केवलं विधिशिवादिकृतिपथचेतनाचेतनविषये विमतिः स्यात् । अतस्तानेव विमतान् पक्षीकृत्य, इमे ब्रह्मादयोऽनीश्वराः सकलजगत्सृष्ट्याद्यकारणत्वात् अस्मद्वत् घटादिवच्चेति अन्वयव्याप्त्या तेष्वीश्वरभेदे सिद्धे ईश्वरे तद्भेदस्तुल्यवित्तिवेद्य इति । तथाच एकलक्ष्मणि=एकव्यक्तेर्यल्लक्षणं तत्र, अपोहः=तल्लक्षणाभावः विमतेषु विधिशिवादिवत् विवादास्पदेषु अयमिव नानाव्यक्तिस्थलीयलक्ष्मभूतगन्धादिरिव भेदको भवतीति वाक्यार्थः । सर्वमेतत् विस्तरेण प्रतिपादयतः एषां न्यायपरिशुद्धिग्रन्थादिदमप्यवगन्तव्यम् । इदमत्र गूढमेवोक्तं वृत्तौ, एवं क्वचिदिति वाक्येन । इदञ्च स्वरूपतो ज्ञातेन लक्षणेन तत्तत्प्रतियोगिकत्वविशिष्टभेदत्वेन रूपेण स्वानुमापकत्वमिति स्वीकारेण । वस्तुतः ईदृशभेदत्वेन ज्ञानाभावेऽपि स्वरूपतो लक्षणज्ञानेऽपि इतरतादात्म्यभ्रमनिवृत्त्या पृथक् भेदानुमानावश्यकतैव नास्तीति प्रागेवोक्तम् ॥ ५४ ॥

**(280) भेदोऽब्धादेर्घटादौ विदित ; इतरथा त्वप्रसिद्धिः पुरोक्ता ;**
**कृत्स्नक्षोण्यन्वितोऽसौ न विदित इति चेत्, पक्षसिद्धिः कथं स्यात् ।**
**व्याहारेऽप्येवमूह्यं ; न खलु न विदितं तन्निमित्तं घटादौ**
**नो चेत्, तत्तन्निमित्तव्यवहृतिनियमस्थापनं दुश्शकं ते ॥ ५५ ॥**

एवं परोक्तचोद्यमन्यथासिद्ध्या निराकृत्य परोक्तं लक्षणफलद्वयं विभज्य विशेषेण निराकरोति **भेद** इति । भवता खलु, "भेदो वा व्यवहारो वा लक्षणेन नियम्यते" इत्यभिधीयते ; उभयमप्यसंबद्धम् । भेदे तावत् वदामः—अयं घटोऽबादेर्भिद्यत इत्यनुमानं प्रयुज्यते । अयमर्थः प्रसिद्ध एव । अन्यथा पाषाणादेरबादिभेदव्यवहाराभावप्रसङ्गः । अन्यथा पक्षस्याप्रसिद्धविशेषणत्वं पूर्वमुक्तमित्याह **इतरथेति** । अस्तु प्रसिद्धो घटादेः प्रत्येकमबादिभ्यो भेदः ; तथाऽपि कृत्स्नक्षोण्यन्वितोऽबादिभ्यो भेदो (अप्रसिद्धः ।) तथा हि—घटपाषाणकाष्ठादिकं प्रत्येकं जलविलक्षणतया उपलभ्यते तथाऽपि यावन्ति पार्थिवानि वस्तूनि परमाणुद्व्यणुकत्रसरेणुपूर्वकाणि मेरुसर्षपादीनि च तेषां सर्वेषां यौगपद्येन जलविलक्षणत्वं न पूर्वप्रसिद्धम् । तत् गन्धवत्त्वानुमानेन साध्यत इत्यसत्पक्षः ; तथा च न सिद्धसाधनमिति । इदमनुवदति **कृत्स्नेति** । परिहरति **पक्षसिद्धिरिति** । अयं भावः—प्रसिद्ध एव पक्षे साध्यं साध्यते । प्रसिद्धिश्च पक्षस्य सपक्षविपक्षाभ्यां व्यावृत्तत्वेन ; तथाच कृत्स्नाऽपि क्षोणी विपक्षव्यावृत्तत्वेन (तया) प्रसिद्धा चेत्, अनुमेयं नावशिष्यते ; व्यावृत्तेरेवानुमेयत्वात् । अप्रसिद्धा चेत्, कथमनुमानस्य प्रवृत्तिः ? न हि पक्षप्रतीतिमन्तरेणानुमानं प्रवर्तत इति । व्यवहारेऽपि साध्ये दूषणमेतादृशं वाच्यमित्याह **व्याहारेऽपीति** । व्यवहारस्यापि पूर्वमप्रसिद्धौ(प्रसिद्धौ) अप्रसिद्धविशेषणत्वं पक्षस्य । इयं पृथिवीति व्यवहर्तव्या गन्धवत्त्वात् इति ह्यनुमानं प्रयुञ्जते । तच्च प्रसिद्धमेव घटादौ ; अन्यथा कुत्रापि पृथिवीव्यवहारनियमप्रसिद्ध्यभावात्, 'विप्रतिपन्नं जलमिति व्यवहर्तव्यं गन्धवत्त्वात्', एवं, 'विप्रतिपन्नं पृथिवीति व्यवहर्तव्यं स्नेहवत्त्वात्'

---

व्यी—उक्तरीत्याऽन्वयव्याप्त्या भेदानुमापकत्वं व्यवहारानुमापकत्वञ्च विहाय लक्ष्यसामान्ये तदनुमानं तार्किकोक्तं दुष्करमित्यप्याह **भेद** इति । जलादिभेदो घटादौ पृथिव्येकदेशे सुप्रसिद्धः । इतरथा—एवमनंगीकारे साध्याप्रसिद्धिः प्रागेवोक्तेति अनुमानासंभव एव । एकदेशे निश्चयेऽप्यवच्छेदकावच्छेदेन इतरभेदसाधनं क्रियते, तथा अज्ञातत्वादिति चेत्—केनानुगताकारेण पक्षतावच्छेदकेन पक्षनिर्देशः क्रियते ; पृथिवीत्वं तथाऽन्यूनानतिरिक्तवृत्तीति पूर्वमज्ञातत्वात् । पृथिवीति व्यवहर्तव्येत्यनुमानेऽप्येवं घटादिदृष्टान्तेनाऽऽज्यादिषु तद्व्यवहारं विहाय प्रकारान्तरायोग ऊह्यः । घटादौ पृथिवीति व्यवहारस्य सम्यगनुभूतत्वात् तद्व्यवहारनिमित्तं तत्रास्तीति सामान्यतो ज्ञातमेव । किं तन्निमित्तमिति विशेषपरिज्ञानं मा भून्नाम । तत एव कस्मात् घटादिः पृथिवीति व्यवह्रियत इति जिज्ञासते । गन्धवत्त्वादित्युक्तौ गन्धवत् यद्यत् पश्यति, तत्सर्वपदार्थानुगतं पृथिवीत्वं तन्निमित्तमिति निश्चिनुते; गोसादृश्यद्वारा गवयत्वमिव । नो चेत्= पृथिवीति व्यवहारमेवायं सर्वात्मना न ज्ञातवांश्चेत्, एवं स्नेहवत्तु क्वचित् जलमिति व्यवहारं न जानातीति चेत्, लक्षणानां व्यवहारः फलमित्येतावन्मात्रं जानन् गन्धवत्त्वज्ञाने जलमिति, स्नेहवत्त्वज्ञाने पृथिवीति च कस्मान्न व्यवहरेत् । अतो व्यवहारः कतिपयलक्ष्यव्यक्तिषु प्रागेव विदित इत्यन्वयव्याप्तित एवेतरभेदव्यवहारयोरनुमानमिति ॥

इति वैपरीत्येनानुमानं प्रवर्तेत ॥ एवं व्यवहारे लोकव्यवहारविरोध इति चेत् ; एवं तर्हि लोकव्यवहारादेव व्यवहारनियमे सिद्धे किमनेनानुमानेन ? असिद्धे वा किमनेनानुमानेन, स्वयमेव व्यवहारनियमस्थापकत्वाभावात् । तदिदं सर्वमभिप्रेत्याह **नो चेदि**ति । अतो व्यवहारनियमस्य लोकप्रसिद्धिसिद्धत्वादेवानुमानमनर्थकमिति ॥ कथं तर्हि लक्षणेन तत्तदर्थव्यव[हार]स्थापनं वादिभिः क्रियते ॥ अनादिप्रसिद्धव्यवहारस्य नियामकधर्ममात्रप्रदर्शनं शिष्याणामिति न कश्चिद्दोषः । न खलु सर्वमपि शब्दार्थव्युत्पादनं लक्षणोपदेशेन; लोकव्यवहारस्यैव प्रायेण नियामकत्वादिति ॥ **इति परोक्तलक्षणसाध्यद्वयभङ्गः ॥ ५५ ॥**

(281) **विद्यास्थानेषु धर्म्येष्विह यदगणयन् विस्तरं न्यायपूर्वं**
**तत्रापि ह्याक्षपादः स इति न नियतिर्न्यायतत्त्वेऽनुगम्ये ।**
**नार्षत्वादि प्रधानं क्वचिदपि यदि वा वार्तिकं क्वापि युक्तं (कोपयुक्तम् ?)**
**यद्वा नेयं कथंचिन्निखिलमपि न किं निर्वहन्त्येवगम्ये ॥ ५६ ॥**

यद्येवं न्यायशास्त्रविरुद्धमपि भवद्भिरभिधीयते, तर्हि न्यायशास्त्रस्य कथं धर्म्येषु विद्यास्थानेषु प्राधान्येनाभिधानं "पुराणन्याय" इति ? एतदनुवदति **विद्यास्थानेष्वि**ति । अस्तु न्यायस्य वेदाङ्गत्वम्; स पुनर्न्यायोऽ**क्षपाद**प्रणीत इति न नियमोऽस्तीत्याह **तत्रापी**ति । कस्तर्हि न्याय इत्यत्रोत्तरम् **न्यायतत्त्वे** इति । **अनुगम्ये** अनुसर्तव्ये वेदान्तानुकूले विद्वद्विशेषनिर्मिते ग्रन्थे सति किमनेन वेदविरुद्धेनाक्षपाद**-**कल्पितेन । उक्तं खलु **नाथमुनिभिः** वेदान्तानुकूलं न्यायशास्त्रं **न्यायतत्त्वाभिधानेन** । तच्च परिगृहीतं **यामुनाचार्यादिभिः** । नन्वार्षं परित्यज्य कथं मानुषं परिगृह्यते ॥ युक्त एव मानुषस्याप्युपपन्नस्य परिग्रहः, आर्षस्याप्यनुपपन्नस्य परित्यागः । अन्यथा लोकायतस्यापि परिग्रहः(हणं) स्यादित्याह **नार्षत्वे**ति । आर्षत्वमेव परिग्रहकारणं चेत् , ऋषिप्रणीतेषु ग्रन्थेषु वार्तिकारम्भो न स्यात् ; उक्तानुक्तदुरुक्तचिन्तारूपत्वात् वार्तिकस्य । तदिदमाह **यदि वे**ति । अत्रापि नेत्यनुषज्यते ।

---

वी— ननु उद्देशो लक्षणं परीक्षा चेति न्यायशास्त्रप्रवृत्तिः । वात्स्यायनभाष्ये, "उद्दिष्टस्यातरव्यवच्छेदको धर्मो लक्षणम्" इति तदितरभेदकत्वं लक्षणस्योक्तम् । अतो मीमांसोक्तन्यायानां विद्यास्थानोक्ततया स्वीकारवत् न्यायविस्तरस्यापि विद्यास्थानतया तदुक्तरीतिरादर्तव्येति कथं तदतिलंघनमित्यत आह विद्यास्थानेष्विति । धर्म्येषु= धर्मादनपेतेषु विद्यास्थानेषु चतुर्दशसु न्यायपूर्वं विस्तरं= न्यायशब्दपूर्वकविस्तरशब्दनामकं न्यायविस्तराख्यमेकमगणयन् महर्षय इति यत् , तत्रापि= तस्मिन् गणनेऽपि । अपिशब्देन, 'न्यायो मीमांसा धर्मशास्त्राणि' इति मुण्डकवाक्यादिग्रहणम् । न्यायतत्त्वे= न्यायतत्त्वाख्ये शास्त्रे श्रीभगवन्नाथमुनिविनिर्मिते अनुगम्ये =आदरेण सांतत्येन ग्राह्ये सति, सः= न्यायविस्तरः आक्षपादः= अक्षपादप्रणीत एव ग्राह्य इति न नियमः । गौतमोक्तन्यायदर्शनमेव गणितमित्यत्र प्रमाणाभावात् । आर्षत्वम् ऋषिकृतत्वं न्यायविस्तरनामकत्वं वा न प्रधानम्, किंतु वेदवेदान्ताविरोधित्वम् । क्वचिदपीत्यनेन निरुक्तव्याकरणादेरपि ग्रहणम् । यदि वेति । नेत्यनुषङ्गो वृत्तायुक्तः, यदि वा न, न यदि, अन्यथा= आर्षत्वादेः प्रधानत्वे इत्यर्थः । क्वापीत्यत्र अपीति पृथक्कार्यम् । वार्तिकमपि क= कुत्रांशे युक्तं स्यात् । अनृषेर्वार्तिककृतः असत्त्वात् उपेक्ष्यत्वं स्यात् । कोपयुक्तमिति पाठो युज्यते । अथवा अनुषक्तस्य नञः युक्तमित्यत्रान्वयः । यदि वेति च वाशब्द-

इत्थमक्षपादप्रणीतस्य न्यायशास्त्रस्य वेदान्तविरुद्धत्वमङ्गीकृत्यान्वारुह्य(रोह)वादेन त्याज्यत्वमभिहितम् । इदानीं विरोध एव नास्तीति पक्षान्तरमाह यद्वेति । अयं भाव.—अक्षपादप्रणीते सूत्रे न क्वापि वेदान्तविरोधः ; व्याख्यातार एव स्वयमप्रतिपत्तिविप्रतिपत्तिभ्यामन्यथा व्याचख्यु । तत् सम्यङ्न्यायविद्भिः परिशोधनीयमिति । अत्रोपपत्तिमाह **न किमिति** । सर्वेऽपि हि व्याख्यातारः सूत्रभाष्यवार्तिकादिषु विरुद्धवदवभासमानमित्थमेव समादधते इत्यर्थ ॥ **इति न्यायविस्तरविरोधनिस्तारः ॥ ५६ ॥**

**(282) अन्यस्मै स्वप्रतीतं प्रकटयति यया वाक्यवृत्त्याऽनुमानं**
**तत्रोदाहृत्युपेताऽप्यविकलमिह तत् बोधयेन्नोपनीतिः ।**
**युक्ता तूदाहृतिः सोपनयनिगमना, सप्रतिज्ञादिका वा**
**वक्तव्या वावदूकैस्तदधिकमपि वा संमतेः स्यात् यथेष्टम् ॥ ५७ ॥**

तर्हि न्यायानुसारे पञ्चावयवमनुमानमेव सर्वत्र प्रयुज्यताम् , त्र्यवयवमपि क्वापि क्वापि प्रयुज्यते भावकैरेव विद्वद्भि कथमित्याशङ्क्य अनुमानावयवपरिमाणं नियमयितुं परार्थानुमानस्वरूपमाह **अन्यस्मा** इति ॥ अयमर्थ —यावदपेक्षितम्, तावत् वक्तव्यम् ; यत् बौद्धपरिकल्पितमुदाहरणोपनयमात्रम् , तत् पक्षे साध्यव्यवस्थापनाभावादनादरणीयमेवेत्याह **तत्रेति** । कियत् तर्हि वक्तव्यमित्यत्राह **युक्तेति** । "त्रीनुदाह-

वी— बलात् यदि अन्यथेत्यर्थक्रम्, अन्यथा यदि, तर्हि वार्तिकं न क्वापि युक्तमित्यर्थः । अतो न पाठभेदः। भाष्यत्यागेन वार्तिकग्रहणं वात्स्यायनस्य भाष्यकृतोऽपि ऋषित्वात् । यद्वा भाष्यं सूत्राशयवर्णनपरम् । वार्तिकमेवाधिकविचारव्यग्रमिति भावः । व्याकरणातिरिक्तशास्त्रे वार्तिकं भाष्यादर्वाक्कालिकम् ; अथ न्यायतन्त्रानुसारेण न्यायविस्तरमाक्षपादमेव परिगृह्य ग्राह्यमित्याशयेनाऽऽह यद्वेति । कथञ्चिदिति । जैमिनीयमीमांसायां शारीरकविरुद्धं न किमपीति सुवचम्—अत्र यद्यपि न तथा, अथापि अत्यन्तमनपेक्षेति सूत्रविषयता न लक्ष्यते इति,युज्यते योजनमुचितार्थं इति भावः। न्यायपरिशुद्धिरेतत्परिष्काररीतिप्रदर्शिका । निखिलमपीति । कतिपयांशग्रहणं सांख्यादिसर्वसाधारणम् ; सर्वग्रहणार्थमेव कथञ्चिन्नेयमित्युच्यते । प्रथमसूत्रप्रतिज्ञातार्थाः प्रायेण वेदान्तानुरोधेनोपपाद्याः । तार्किकरीत्या तत्रतत्रोदाहरणेऽपि, 'नोदाहरणमादर्तव्यम्' इति न्यायेन कयाचित्प्रक्रियया प्रमाणरूपस्वाभिमतार्थकथन पर्यवेदम्पर्यमित्यपि सुवचम् ॥ समादधते =संघटयन्ति ॥ ५६ ॥

प्रकृतेऽनुमानप्रकरणे न्यायविस्तरप्रसंगात् परार्थानुमाने परं तल्लक्षणप्रकारमाह अन्यस्मै इति । 'दशावयवान् एके नैयायिका वाक्ये संचक्षते' इत्युक्तं न्यायभाष्ये । तत्र वाक्यान्तर्भावानर्हान् जिज्ञासादीन् विसृज्य वाक्यमात्रग्रहणाय पञ्चावयवोद्देशः ; न तु तन्नैयत्याशयेन । तावता यौद्धोक्तरीतिरपीष्टेति न ; किं तु यदुपपन्नमन्यत् तदपि ग्राह्यमित्येवेत्याकलय्याऽऽह अन्यस्मै इति । परार्थानुमानं नाम परस्मै अनुमिति-तत्करणप्रतिपादकवाक्यम् । स्वप्रतीतमनुमानम् = अनुमितिपरामर्शविषयं परस्मै यया वाचा प्रकटयति सा परार्थानुमानम् । नन्वत्र पादे परार्थेति पदमावश्यकम् । वृत्त्येति पदं व्यर्थम् । एवञ्च, 'यया वाक् परार्थानुमा सा' इति पाठः स्यात् । ययेत्यस्य प्रतिनिर्देशः सेति । एवञ्च परार्थानुमानस्वरूपमाहेति वृत्तिरपि श्लिष्टेति चेन्न—स्वप्रतीतार्थप्रतिपादकवाक्यसामान्यस्य परार्थानुमानत्वायोगात् यथाश्रुतपाठादरेण अनुमानमिति पदं स्वप्रतीतमित्यस्य विशेष्यम् । वृत्तिपदमपि न व्यर्थम्—आकांक्षाक्रमप्रवृत्तवाक्यकदम्बस्यैव तथात्वज्ञापनार्थत्वात् । वाक्यपदञ्च 'वाक्ये संचक्षते' इति न्यायभाष्योक्तस्फोरकम् । तथाच स्वप्रतीतमनुमानं

रणान्तान् वा यद्वोदाहरणादिकान्" इत्युक्तक्रमेण त्र्यवयवमेव प्रायेण परिपूर्णमिति भावः। ये तु, 'प्रतिज्ञामन्तरेण न हेतुप्रयोगः कर्तव्यः, साध्यस्यैव प्रमित्सितत्वात्। नापि हेतुप्रयोगमन्तरेण उदाहरणप्रसङ्गः; हेतुसाध्ययोर्व्याप्तिप्रदर्शनात्मकत्वादुदाहरणस्य। न चोदाहरणमन्तरेणोपनयप्रसिद्धिः; उदाहरणेन गृहीताविनाभावस्य हेतोस्तेनैवाकारेण पक्षधर्मताप्रदर्शनार्थत्वादुपनयस्य। न च हेतुना पौनरुक्त्यमुपनयस्य; पक्षधर्मतामात्रं हेतोरर्थः, व्याप्तस्य पक्षधर्मत्वमुपनयस्यार्थ इति विभागेनार्थनिर्णयात्। न च निगमनं निरर्थकम्; पक्षे बाधकप्रमाणाभावद्योतनार्थमग्निमानेवेति सावधारणसाध्यनिर्देशरूपत्वेन निगमनस्यापि सफलत्वात्। अतः पञ्चावयवयुक्तं वाक्यमेव परिपूर्णोपदेशः'—इति मन्यन्ते; तेषामपि पक्षमविरुद्धत्वादनुमन्यते तदधिकमिति। अयमर्थः—त्र्यवयवपञ्चावयवयोर्द्वयोरपि संमतत्वादस्मत्पक्षवादिना त्र्यवयवप्रयोगे पञ्चावयवप्रयोगे [वा?] न न्यूनाधिकभावप्रसङ्ग इति॥ **इत्यवयवगणना**॥५७॥

**(288) कार्यैर्वा कारणैर्वा स्वगुणत उत वा किञ्चिदस्तीति सिद्धं**
**पक्षीकारादियोग्यं, समयनियमितव्यक्तिभेदो न दोषः।**
**सिद्धान्तास्पृष्टचित्तैरिति खलु पशुभिः पामरैर्वाऽनुमेयं;**
**नो चेत्, रोचेत कस्मै विषमितमनसे वादसंग्रामकेलिः॥ ५८॥**

---

वृ—यया वाक्यवृत्त्या=यादृशवाक्यप्रयोगेणान्यस्मा आविष्करोति, तत्र=वाक्यवृत्तौ पञ्चावयवरूपायाम्, बौद्धसंमतस्यावयवद्वयालम्भावस्य संमतौ उदाहरणसहितोपनयमात्रमित्यायाति। तावन्मात्रं तदनुमानं न बोधयेत्। तावन्मात्रे उदाहरणे पक्षे साध्यनिर्देशस्य हेतुनिर्देशस्य चोभयोरभावात्। उदाहरणोपनयनिगमनत्रयग्रहणे तु क्रमेण व्याप्तिः पक्षधर्मता पक्षसाध्यसंबन्धश्च दर्शिता भवन्ति। अत उपनयनिगमनसहिता उदाहृतिर्युक्ता। अयं प्रथमः कल्पः। द्वितीयस्तु—सप्रतिज्ञादिका=प्रतिज्ञाहेतूभयसहिता उदाहृतिः वावदूकैः वादे प्रवृत्तैर्वक्तव्या। पञ्चावयवकथनमनपेक्षितम्। परंतु पञ्चावयवप्रयोगे मुख्यांशोपक्रमोपसंहाररूपौचित्यदर्शनात् तथा प्रयोगः कार्य इति समये कृते वा, प्रतिवादिना तदपेक्षायां वा संमतिबलात् स युज्यते। अतः पूर्वोक्तत्रयपक्षे न्यूनमुक्तमिति न निग्राह्यः; नापि पञ्चरूपप्रयोगे अधिकमिति। समयस्य=संकेतस्य कृतस्योल्लंघने तु निग्रहो भवेत्॥

तेनैवाकारेण=व्याप्तिविशिष्टत्वरूपेण। हेतुना=हेतुप्रतिपादकद्वितीयवाक्येन। निरर्थकमिति। प्रतिज्ञाहेतुवाक्यद्वयबोधितस्यैव बोधनात् शंका। बाधकप्रमाणेति। तद्व्याप्यवत्ताज्ञानकालेऽपि तदभाववत्ताबोधकप्रत्यक्षप्रमाणं प्रबलशाब्दप्रमाणं वा यदि भवेत्, तदाऽनुमितिर्न जायते। अतः अग्निमत्तानिगमनमबाधितत्वासत्प्रतिपक्षितत्वद्योतनेऽपरमिति भावः। न न्यूनाधिकभावेति। न्यूनमिति अधिकमिति निग्रहस्थानं न भवतीत्यर्थः॥ ५७॥

ननु परार्थानुमानं शिष्याय स्वमतस्यायोदासीनायोपदिष्टग्राहिणे प्रयोक्तुं शक्यते; न तु विमतिमते प्रतिवादिने। शब्दे द्रव्यत्वगुणत्वनित्यत्वानित्यत्वादिविवादसद्भावात् परेण साभिमतेति मनसि निधाय शब्दप्रयोगे अन्यस्तदनभिमत्या आश्रयासिद्ध्यादिदोषमुद्भावयेत्। तथाच कथं न्यायाभासत्वातिक्रमणमित्यत्राह कार्यैरिति। चक्षुरिति प्रयोगे गोलकस्य वा भौतिकस्यान्यस्य वा आहङ्कारिकस्य वेति विवादो न कार्यः। रूपदर्शनकरणमिति कार्यमुखेन विवक्षितत्वात्। काय इति प्रयोगे अवयवसंघातो वा, तद्विलक्षणोऽवयवी वेति विवादश्चेत्, भौतिकविशेष इति कारणमादाय निर्देशः। आत्मेति प्रयोगे देहादिरूपत्वतदन्यत्वनित्यत्वज्ञातृत्वस्वरूपत्वतदभावादिविकल्पः। अतः

नन्वनुमानप्रयोग एव कर्तुं न शक्यते ; परस्परविरुद्धाङ्गीकारप्रचुरत्वात् वादिनोः । तथा हि— शब्दो द्रव्यं नित्यमि(इ?)ति **कौमारिलाः**; गुणो नित्य इत्यन्ये, शब्दब्रह्मविवर्तो वृक्षादिशब्द इति **शाब्दिकाः**; पञ्चभूतगुण इति **पौराणिकादयः** ; आकाशगुण **इत्यौलूक्याः**, **आक्षपादाश्चैवमेव** । तथाच शब्दानित्यत्वाद्यनुमानं न संघटते ; एकेन परिगृहीतस्य पक्षस्य इतरेणाग्रहणात् । तथाच परस्परविसंवादात् अन्यतरासिद्धिः । एवंचानुमानवार्तैव सोत्पुयत इतीमामाशङ्कां परिहरति **कार्यैरिति** । अयमभिसन्धिः— पक्षस्य सामान्येन प्रसिद्धत्वमुपजीव्यं वादिप्रतिवादिनोः ; न पुनरन्योन्यं विशेषप्रसिद्ध्यभावेन सामान्यप्रसिद्धस्य पक्षस्य पक्षत्वहानिः । पक्षप्रसिद्धिश्च प्रत्यक्षेण चेत्, अविवादमेव । अनुमानेन चेत्, कार्येण वा कारणेन वा स्वगुणेन वा तद्व्यतिरिक्तेनापि व्याप्तिवैकल्यरहितेन किंचिदस्तीति प्रसिद्धं पक्षीकारार्हम् । एवं सपक्षो विपक्षश्च प्रमाणप्रसिद्धत्वेन तत्तत्कोटिनिवेशार्ह इति आदिशब्देनोच्यते **पक्षीकारादियोग्यमिति**। एतच्च हेत्वादिष्वपि समानम् । ततः तत्तत्सिद्धान्तप्रसिद्धव्यक्तिभेदो न दोष इत्याह **समयेति** । एतच्च न केवलं वादिनामेव, शास्त्रपरिज्ञानशून्यानामपि पश्वादीनां साधारणमित्याह **सिद्धान्तेति** । इत्थमनङ्गीकारे वादिनां प्रवृत्तिरेव न स्यादित्याह **नो चेदिति** । वादिनां वादप्रवृत्तिर्यथा न घटते, तथा पामराणां प्रतिनियतप्रवृत्तिरपि न भवेदिति भावः । सर्वस्या अपि प्रवृत्तेरनुमानमूलत्वा(त्तुमानाङ्गत्वा)दनुमानस्य चोक्तप्रकारेणावान्तरविभागानादरेण वस्तुस्वरूपप्रामाणिकत्वमात्रावलम्बि(लम्बन)त्वादिति ॥

**इति प्रतिज्ञादेर्लोकसिद्धानुसारित्वम् ॥ ५८ ॥**

(284) **आभासोद्धारवाक्ये स्वयमिह पठितेऽप्यक्षताऽन्यस्य शङ्का ;**
**साचेत्, व्यर्थोपनीतिर्निगमनमपि ; ते तत्तदर्थे यदात्थ ।**
**तस्मादुद्घाटितानां परिहृतिरुचिता जेतुमिच्छोर्विशेषात् ;**
**उक्ते माने विमर्शो यदि भवति, परं तत्र तर्कोऽपि वाच्यः ॥ ५९ ॥**

**इति आभासोद्धारादेः प्रयोजनाभावः ॥**

---

*वी—ज्ञानादिगुणाश्रय इति प्रयोगः। एवमुभयवादिसिद्धांशनिश्चयेन तदनुरूपं पक्षादिकं सर्वं प्रयोक्तव्यम्।* समये = तत्तत्सिद्धान्ते या नियमिता = अन्यान्यतया व्यवस्थां प्रापिता व्यक्तिः तद्भेदः एतद्बाधको न भवति। परीक्षककोलाहल आस्ताम्। पशवः पामराश्च यथा गृहीत्वा लोकयात्रां निर्वहन्ति, तथा कार्यम्। नो चेत्-एवमनंगीकारे, सर्वस्य विप्रमितमनस्कत्वात् मनसि मतवैषम्यात् वादरणाङ्गणप्रवेशस्यैव नावकाशः॥ गुणो नित्य इत्यन्ये इति । अन्ये प्राभाकराः; कौमारिलसहपाठात् । अत एव *नित्य इत्येव पदच्छेदः। अनित्यत्वपक्षस्य तार्किकीयस्य वक्ष्यमाणत्वाच्च । औलूक्याः= काणादाः ॥५८*

कथायां न्यायप्रयोगप्रकार उक्तः । तेन सह आभासोद्धारवाक्यप्रयोगोऽपि कार्यतया तार्किकैरिष्यत इति तन्निरासार्थः श्लोकः आभासेति । अस्य वृत्तिर्न दृश्यत इति प्राच्यैरपि लिखितम् । आभासोद्धारवाक्यं कण्टकोद्धारवाक्यमित्यपि व्यवह्रियते । इदञ्च कथायां पञ्चावयववाक्यप्रयोगानन्तरम्, "नायमाभासः तल्लक्षणरहितत्वात्" इत्यादिरूपेण प्रयोक्तव्यमिति । आभासलक्षणानि च हेत्वाभासविशेषादीनि । इदमनपेक्षितम् । *आभासोद्धारवाक्ये स्वयं = वादिना इह = पञ्चावयववाक्यप्रयोगकाले* पठिते सत्यपि ; तस्मिन् वाक्येऽप्यविश्वासात् अन्यस्य = प्रतिवादिनः आभासत्व-

(285) तर्को व्याप्याभ्युपेतावनभिमतिपदव्यापकस्य प्रसक्तिः ;
मानप्रत्यूहघाती द्विविषय उदितः ; पञ्चधाऽऽत्माश्रयादिः ।
विश्रान्तिर्वैपरीत्ये प्रतिहतिविरहोऽनिष्टताऽनानुकूल्यं
व्याप्तिश्चास्याङ्गम् ; एवं कतिचिदनुमितेस्तादृशं भेदमाहुः ॥ ६० ॥

एवमनुमानमुक्त्वा तदङ्गभूततर्क-तत्कर्तव्य-तदवान्तरभेद-तदङ्गान्याह **तर्क** इति। अयमत्र श्लोकार्थः- व्याप्याङ्गीकारेऽनिष्टव्यापकप्रसञ्जनं तर्क इति तर्कलक्षणम्। तत्फलमाह **मानप्रत्यूहघातीति**। विपक्षजिज्ञासाविच्छेदक इत्यर्थः। **द्विविषय उदित** इति तर्कावान्तरभेदकथनम्; प्रामाणिकपरित्यागाप्रामाणिक-

वी— शंका अक्षता =अनुवृत्तैव भविष्यति। अतः परेणोद्भावितो यो दोषः तत्परिहारस्तदा कार्यः, न तु प्रागेव स्वयमेवाभासोद्धारः । स्याच्चेत्—आभासोद्धारवाक्यपाठो नियमेन स्याच्चेत्, न्यायान्तर्गते उपनयनिगमने व्यर्थे। ननु साधनार्थं तत्प्रयोगः, इदञ्च दूषणार्थमिति चेन्न। यत्=यस्मात् ते =उपनयनिगमने तत्तदर्थे, तत्तदवयवपरिहार्याभासशंकापरिहारार्थे त्वमात्थ=ब्रवीषि । तदुक्तं न्यायपरिशुद्धौ, "ये तु प्रतिज्ञादित्रयानन्तरं हेतोरसिद्धयन्यथासिद्धिपरिहारार्थ उपनयः; निगमने हेत्वंशः सिद्धसाधनतापरिहाराय; साध्यांशस्तु बाधपरिहारायेति वर्णयन्ति" इत्यारभ्य, "आभासोद्धारनिर्बन्धतः पुनरुक्तिश्च" इत्यन्तम्। प्रतिवादिशंकितानां दोषाणां परं परिहृतिरुचिता। साऽपि जेतुमिच्छोः। तत्त्वनिर्णयार्थे वादे उद्भावितस्य दोषस्य सत्यत्वे स्वीकार एव न्याय्यः। जिगीषुणा क्रियमाणा परिहृतिरपि तत्तद्विशेषरूपेण स्यात्, न तु, 'नायमाभासः तल्लक्षणरहितत्वात्" इति सामान्यतः। नन्वेवं तर्कोऽपि न प्रयोक्तव्यः; तस्य प्रतिवादिगतविपक्षजिज्ञासाविच्छेदकतया, तेन तदाविष्कार एव कार्यत्वादित्यत्रेष्टापत्तिरित्याह उक्त इति। तर्कोऽपि उक्ते माने=हेतौ विमर्शः=व्याप्यत्वसंदेहः, व्यभिचारशंका यदि भवेत्, तत्र परं=तदैव वाच्य इति ॥ ५९ ॥

नृसिंहराजीयम्—मूले अवयवनिरूपणानन्तरं कण्टकोद्धारविषयकश्लोको दृश्यते। सर्वार्थसिद्धौ न दृश्यते तस्य टीका। पतिता वा, यद्वा मूले श्लोकः प्रक्षिप्त इति न जानीमः। अस्यार्थस्तु- पर्वतो वह्निमान्, धूमवत्त्वात्, यो धूमवान् सोऽग्निमान् यथा महानसः, तथा चायं तस्मात् तथा— इति पञ्चावयवप्रयोगानन्तरं "नायमत्राभासः तल्लक्षणरहितत्वात्" इति कण्टकोद्धारवाक्यमाक्षपादाः प्रयुञ्जते। तत्र किमिदं वाक्यं प्रयोजनरहितम्? प्रयोजनवद्वा? नाद्यः; प्रयोजनरहितस्य प्रयोगायोगात्। न द्वितीयः; तत्रापि किमाभासशङ्कानिरासः प्रयोजनम्, उत तदन्यत्? न द्वितीयः; तथाभूतस्यादर्शनात्। नाद्य इत्याह आभासोद्धार इति। शतवारं तत्प्रयोगेऽपि वादिवाक्यस्य तन्निरासकत्वायोगादित्यर्थः। यदि वाक्यादेव शङ्कानिवृत्तिः, तदा प्रतिज्ञाद्यवयवत्रयादेवेष्टसिद्धेः असिद्धिबाधादिनिरासकयोरुपनयनिगमनयोः प्रयोगो भवद्भिः क्रियमाणो व्यर्थः स्यात्। अपिशब्देन प्रतिज्ञावाक्यादेव साध्यसिद्धेर्हेत्वादिवैयर्थ्यं सूच्यते। किञ्च किमिदं वाक्यं प्रतिवादिशङ्कायाः प्राक् प्रयोज्यम्, उतानन्तरम्? नाद्य इत्याह तस्मादिति। उद्घाटिता शङ्का परिहर्तुमुचिता, नानुद्घाटिता, अनाकाङ्क्षितत्वात्; अन्यथा अनाकांक्षिताभिधानदोषस्य जल्पकथायामप्रसङ्गादिति भावः। द्वितीय आह विशेषादिति। उक्तहेतौ विशेषरूपेण शङ्कायां तर्कप्रयोगे निरूपयसंभवात् तर्कोऽपि प्रयोक्तव्य इत्यायद्यवक्तव्यदिव तन्निवृत्तेरुक्तवाक्यं व्यर्थमिति भावः। यद्वा विशेषादित्येतत् परिहृतिरुचितेत्यत्र संबध्यते। विशेषं प्राप्येति ल्यब्लोपे पञ्चमी। तथा च विशेषेणोचितेत्यर्थः। अनाकाङ्क्षिताभिधानदोषस्य विजिगीषोरवश्यं परिहर्तव्यत्वादिति भावः॥ ५९ ॥

स्वीकाररूपविषयद्वयोपेत इत्यर्थः। स च आत्माश्रयान्योन्याश्रयचक्रकानवस्थाकेवलानिष्टप्रसङ्गभेदेन पञ्चविधः। प्रतिबन्दीति तर्कान्तरमाचक्षते केचित्। तच्च केवलानिष्टप्रसङ्गावान्तरभेद इत्यपरे इत्याह **पञ्चधेति**। **वैपरीत्ये विश्रान्तिः** विपर्यये पर्यवसानम्। **प्रतिहतिविरहः** प्रतितर्कपराहत्यभावः। **अनिष्टता** प्रसञ्जनीयस्यानिष्टत्वम्। **अनानुकूल्यम्** विरुद्धहेत्वाभासवत् परपक्षसाधकत्वाभावः। स्वपक्षपरपक्षयोर्द्वयोरपि साधारणम् इष्टं परस्य; परपक्षस्यैवासाधारणं परस्यानुकूलम्; तदुभयरूपविधुर[त्व?]मित्यर्थः; यथा अनैकान्तिकः स्वपरपक्षसाधारणः, यथा च विरुद्धः परपक्षस्यैवासाधारणः। तदुभयरूपरहितस्तर्क इत्यर्थः। व्याप्तिः पूर्वोक्ता। एतत्परमङ्गं तर्कस्य। इमं च तर्कं केचिदनुमानभेदमाहुरित्याह **एनमिति**। नेदं निरात्मकं जीवच्छरीरं प्राणादिमत्त्वप्रसङ्गादित्यनुमानभेदमाचक्षते केचित् *न्यायवादिन* इति भावः॥

**इति तर्कलक्षणफलावान्तरभेदाङ्गादि ॥ ६० ॥**

---

*वी*—प्रस्तुतं निरूपयति तर्क इति। व्याप्यारोपेण व्यापकारोपस्तर्कः। यथा, वह्निर्मास्तु इत्यारोपे कृते, तस्य वह्न्यभावस्य धूमाभावं प्रति व्याप्यत्वात् तस्य अभ्युपेतौ=इष्टत्वे, व्यापकः धूमाभावोऽपि स्यादिति तस्य प्रष्टुरनिष्टस्य प्रसक्तिः=तं प्रत्यापादनम्। प्रष्टुर्धूम एवेष्टः; साक्षात् दृश्यमानत्वात्। न तु धूमाभावः। मानप्रत्यूहघातीति तर्कफलोक्तिः। मानस्य=व्याप्तिज्ञानस्य प्रत्यूहः विरोधिभूता विपक्षजिज्ञासा, तस्याः नाशकः। तदिदं प्रागेव विवृतम्। द्विविषयः। प्रामाणिकं त्यक्तं स्यादित्यापादनं भवति, अप्रामाणिकं स्वीकार्यं स्यादिति च। तर्कः पञ्चविधः—आत्माश्रय-अन्योन्याश्रय-चक्रक-अनवस्था-तदन्यानिष्टप्रसंगभेदात्। तर्कस्य, 'व्याप्तिस्तर्काप्रतिहतिरवसानं विपर्यये । अनिष्टानुकूलत्वे इति तर्काङ्गपञ्चकम्' इत्युक्तानि पञ्चाङ्गान्याह विश्रान्तिरिति। विपर्यये पर्यवसानमेव, 'विश्रान्तिर्वैपरीत्ये' इत्युक्तम्। यदि वह्न्यभावः स्यात् तर्हि धूमाभावः स्यादित्यापादनस्य हि पर्यवसानं, तद्विपर्यये, धूमसत्त्वात् वह्निरेव युक्त इत्येवंरूपे । प्रतिहतिविरहः=प्रतिकूलतर्काभावः । अनिष्टता आपाद्यस्य धूमाभावादिरूपस्य प्रष्टुरनिष्टत्वम्। अनानुकूल्यम्=प्रतिवादिपक्षसाधकत्वाभावः। व्याप्तिः=आपादकस्याग्न्यभावादेः आपाद्यस्य धूमाभावादेः व्याप्यव्यापकभावः। इति पञ्चधा भवत्यस्याङ्गमपि। पञ्चधेत्यनुषङ्गः। अयं तर्कः अनुमानरूपप्रमाणं वा प्रमाणेतिकर्तव्यतैव वेति विचारो विस्तरेण न्यायपरिशुद्धौ। तमंशं सूचयति एनमिति। एनं तर्कं कतिचित् अनुमितेः=अनुमानस्य तादृशं=प्रसङ्गरूपं भेदमाहुः। प्रसङ्गमुखेनानुमानमेवोच्यत इत्याशयः। अनुमितेरिति पञ्चमी वा। इतोऽनुमित्युत्पत्तेरेव हेतोः तादृशं=तद्धेत्वनुमानरूपं भेदमाहुरित्यर्थः। अत्र हि विपर्यये पर्यवसानमित्येकमङ्गमुक्तम्। धूमाभावविपर्ययो धूमसत्त्वम्। तत् प्रष्टुरपीष्टम्। तथाऽग्न्यभावविपर्ययोऽग्निमत्ता। तत्र पर्यवसानं नाम पर्वतोऽग्निमानित्यनुमितिरेवेति सुवचम्। अतस्तर्कः अंशतोऽनुमानम् अंशतोऽनुमितिश्चेति। न्यायभाष्ये तु, "अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः" इति सूत्राक्षरार्थविधानेन अनिष्टापादनादेरप्युपपत्तिकोटिनिवेशात् ततः पर्वतोऽग्निमानेव स्यादिति ऊहः अग्निमत्ताकोटिविषयकोत्कटसंशयरूपसंभावनात्मकः तर्कः। अग्निमानेवेति तु पश्चात् (व्याप्तिज्ञानतो) जायमाना त्वनुमितिरिति वैलक्षण्यमुक्तम्॥ प्रतिबन्दीमिति। वाद्यारोपितानिष्टसजातीयस्यानिष्टस्य वादिनं प्रति आपादनं प्रतिबन्दी। तच्च=प्रतिबन्दीत्येतच्च। इत्याहेति। इत्याशयेनाऽऽहेत्यर्थः। अनुमानभेदं विवृणोति नेदमिति, न जीवच्छरीरमिति भाष्यम्। हेतुस्तर्कमुखेनोच्यते प्राणेति। न्यायदर्शने हेतुरूपन्यायावयवकथनावसरे, "तथा वैधर्म्यात्" इति सूत्रम् ईदृशप्रसंगरूपहेतुपरत्व एव संगच्छत इति अस्माभिर्न्यायभाष्यप्रदीपे प्रादर्शि॥ ६०॥

(286) यस्सर्वं नाभ्युपेयात्? स्वपरमतविदा केन किं तस्य साध्यं
प्रश्नोऽसावुत्तरं नः कथमनधिकृते कल्पनीयाः कथाः स्युः।
मध्यस्थोऽप्येतदेव यदि न न मनुते, योजयेन्नात्र वादं;
नो चेत्, माध्यस्थ्यहानिः; परमनधिकृतिस्तत्र(स्व) शिष्याय वाच्या ॥६१॥

इत्थं तर्कस्वरूपमुक्त्वा दुस्तर्कावलम्बनेन सर्वापलापवादिनं कथानधिकारादिकमाह **यस्सर्वमिति**। अत्र कश्चित् पृच्छति, 'यस्सर्वमपि दूषणभूषणवादिप्रतिवादिस्वपक्षपरपक्षादिविभागं नाङ्गीकरोति, स्वपरमतविदा विदुषा केन किं तस्य साध्यम्' इति। नायं तावत् प्रतिक्षेपः, हेत्वाद्यनुपादानात्। उपादाने वा, यस्सर्वं नाभ्युपैतीति वचनस्य नायं विषयः, हेत्वादेरेवाभ्युपगमात्। अतः शिष्यप्रश्नोऽयमित्यवशिष्यते। तदिदमाह **प्रश्नोऽसाविति**। तत्रोत्तरमाह **उत्तरं न** इति। कथमुत्तरमित्यत्राह **कथमनधिकृत** इति। न हि बालमूकोन्मत्तादिभिर्वादं कुर्वते वादिनः। न च तदकरणात् सर्ववादिनां विदुषामतिशयस्य काचित् हानिः। एवमनधिकृतैः सर्वानङ्गीकारवादिभिः व्यवहारे न कश्चित् विपश्चितां दोष इति भावः। यदि भवतैवमुच्यते, तत् ते न गौरवाय, मध्यस्थवचनमेव सर्वनियामकमिति वदतामुत्तरमाह **मध्यस्थ** इति। मध्यस्थोऽपि, उन्मत्तवत् अयथार्थवादिना वादाधिकारो नास्तीति यदि **न न मनुते**। मनुत इत्यर्थः। द्वौ नञौ प्रकृतमर्थं सूचयत इति। यद्येवं जानाति मध्यस्थः, वादमेव तेन न प्रवर्तयेत्। न ह्युन्मत्तादिभिर्वादं मध्यस्थाः प्रवर्तयन्ति। यदि पक्षपातात् प्रवर्तयति, तर्हि मध्यस्थ एव न स्यादित्याह **नो चेदिति**। ननु सर्वानङ्गीकारवादिनो वादानधिकार इति यदि तं प्रति वदसि, तस्य वादाधिकारं स्वयमेवानुमन्यसे, अस्मिन्नेव वादेऽधिकारात्। यद्यन्यं प्रति, अन्यस्य प्रतिवादित्वाभावात् कथं व्याघातादिदोषोऽभिधीयेत? न हि दोषाभिधानमन्तरेण वादाधिकारनिराकरणं वक्तुं (कर्तुं?) शक्यते। अत्रोत्तरं **परमिति**। 'उन्मत्तवत् सर्वानिर्वचनीयत्ववादिनो दुर्वादिनो वादानधिकारिणः' इति शिष्याणामुपदिश्यते॥

**इति कथानधिकारादिः ॥ ६१ ॥**

---

श्री— परार्थानुमानरूपो न्यायः, वादिप्रतिवादिविवादेऽपि तत्प्रयोगः तदाभासोद्धारश्चान्यस्य स्वयं प्रयोगानौचित्यम्, तर्कस्याप्यपेक्षायामेव प्रयोगः प्रसङ्गात् तत्स्वरूपञ्च न्यरूपि। अथ वादतदधिकारिविभागं करिष्यन् केषाञ्चिदनधिकारं वदन्, तथा तस्यानधिकारित्वे तन्मतदूषणस्वमतभूषणादिकं कुतः क्रियत इत्यत्र समुचितमुत्तरमाह य इति। तेन सह वादाकरणात् प्रथमपादोऽयं न तेनास्मान् प्रति प्रयुक्तः। सर्वानभ्युपगमे एतन्मूलफलस्याप्यनभ्युपगमाच्च एतद्वाक्यप्रयोगो न युज्यते। अन्यप्रयुक्तमिदं वाक्यमिति चेत्—किमयं दोऽयं प्रतिक्षेपः प्रश्नो वा। प्रतिक्षेपश्चेत्, तत्र को हेतुः? कस्याप्यनभ्युपगमादिति हेतुरिति चेत्, ईदृशहेतोरभ्युपगमात् सर्वानभ्युपगमः कथम्। प्रश्नश्चेत्—तादृक्कथमनधिकृतेन सह कथा प्रवर्तयेरन्, न प्रवर्तयन्त इत्येवास्मदुत्तरम्। ननु मध्यस्थप्रेरणे प्रवर्तनीयैव कथेति चेत्—मध्यस्थोऽपि एतत्=कथाप्रवर्तनम्, एवम्—अनधिकृतेन सह कथाकार्यं यदि न न मनुते=मन्यत एव चेत्, कथं कथां योजयेत्? नो चेत्=योजयेच्चेत्, माध्यस्थ्याच्च्यवते। एवं तर्हि कथं दूषणादिकरणं भवद्भिः क्रियमाणं प्रत्यक्षसिद्धं घटत इति प्रश्नो नोत्तरित इति चेत्—तस्यानधिकारोऽस्माभिः शिष्यादीन् अन्तरङ्गान् प्रति उच्यते। तेषामपि तद्वादान्निवृत्तिः तन्मताग्रहेऽपि न भयम्। तत् सिद्धोऽधिकार्यनधिकारिविभागः ॥ ६१ ॥

(287) निर्दिष्टा व्युत्थितोक्तेर्विततिरिह कथा ; सा त्रिधा ; तत्र वादः
कर्तव्यो मानतर्कैरभिमतिनियतैस्तत्त्वसिद्ध्यै विरागैः ।
जल्पाख्याऽन्या जयार्था भवति कथकयोः साधनाक्षेपवत्त्वे ;
सैव प्रोक्ता वितण्डा त्यजति परमते साधनं ; तां द्विधैके ॥ ६२ ॥

अथ वादिप्रतिवादिनोर्विवादस्थानभूतां कथां तद्विशेषानप्याह **निर्दिष्टेति**। परस्परविरुद्धवादिनो र्व्यवहारः कथा। सा त्रिधा, वादजल्पवितण्डाभेदात्। वादे प्रमाणतर्कौ साधनम्। प्रामाणिकत्वाभिमान परिगृहीतौ प्रमाणतर्कावित्यर्थ । प्रयोजनं पुनस्तत्त्वसिद्धिः तत्त्वज्ञानम् । अधिकारी वीतरागः । वादात् जल्पस्य विशेषमाह जल्पेति। जयार्थी जल्पाधिकारी; अत एव न वीतरागः। उभयोरपि वादिनो साधनवत्त्वे जल्पः ; अन्यतरस्य स्वपक्षसाधनवत्त्वे परस्य दूषणमात्रशरणत्वे (त्रताश्रयणत्वे) वितण्डा। तत्रापि वैतण्डिकस्य दूषणसमर्थनं कर्तव्यम् । अन्यथा वैतण्डिकव्यवहारः प्रलापमात्रमेव स्यात् । एतमेव विभागमाह **सैवेति** । जल्परूपा(?)कथैव वितण्डा ; अपितु परमते साधनं त्यजतीत्यर्थ । **तां द्विधैक** इति। वितण्डायामपि द्वैविध्यमाहुरेके, वीतरागवितण्डा विजिगीषुवितण्डेति। अयं भावः— स्वपक्षसाधनं परपक्षदूषणं साधन-दूषण-समर्थनं शब्ददोषवर्जनमिति पञ्चाङ्गो वाद । एक(एकैक ?)स्मिन् (एतस्मिन् ?) वादे वादिप्रतिवादिनावधिकारिणौ। तत्र वीतरागकर्तृकवादद्वयसमुच्चयेन वीतरागकथारूपो

---

व्या— कथाविभागपूर्वकं कथाधिकारिद्वैविध्यमाह निर्दिष्टेति। कथासामान्यलक्षणं व्युत्थितोक्ते-र्विततिरिति । व्युत्थितयोः मिथोविरोधेनोत्थितयोर्वादिप्रतिवादिनोरुक्तिविस्तरः स्वपक्षसाधनपर-पक्षोपालम्भहेतुर्वाद इत्यर्थः। "वाक्यसंततिविशेषः" इति-न्या-प । सा त्रिधा =वादजल्पवितण्डेति भेदेन। वादशब्दः कथात्रयसाधारणः; तत्रैकविधाविशेषनाम च स भवति। तत्र =त्रिविधकथायाम-न्तर्गतो वादः विरागैः =वीतरागैः तत्त्वसिद्ध्यै= तत्त्वनिर्णयसंपत्तिरूपफलाय, जयाख्यफलमनुद्दिश्य, अभिमतिनियतैः= नियमेन प्रमाणत्वेन तर्कत्वेन चाभिमन्यमानैरेव मानतर्कैः प्रमाणैस्तत्सहकारिभि-स्तर्कैश्च कर्तव्यः । जल्पादौ अप्रमाणत्वेनातर्कत्वेन चाभिमतमपि प्रमाणतया तर्कतया च दर्श्यते, जयमात्रे दृष्टेः। वादे तु न तथा। परंतु वस्तुतो यत् प्रमाणं तर्कश्च, तत्प्रदर्शनमेव कार्यमिति न निबन्धः। वादे अन्यतरपुरुषदर्शितस्याप्रमाणादित्वावश्यम्भावात्। बुद्धिपूर्वकान्यथाकरण एव दोषा-दिति भावः। अन्या =द्वितीया कथा जल्पनाम्नी। तस्या अर्थः =फलं जयः। वितण्डा तृतीया। साऽपि जयार्थैव। ततो जल्पस्य विशेषमाह कथकयोः साधनाक्षेपवत्त्वे इति। वादिनोर्द्वयोरपि स्वस्वपक्षस्थापनपरपक्षोपालम्भनोभयकर्तृत्वे जल्पतेति। सैव= जयार्थैव कथा परमते =वैतण्डिकपक्षे साधनं त्यजति =साध्यमाजतां स्थाप्यमानतां त्यक्तवति सति वितण्डाख्यतया प्रोक्ता। 'अपि तु सा' इत्यध्याहारे त्यजतीति क्रियापदम्। अथ वितण्डायां विभागपक्षमाह। तां =वितण्डामेके =केचित् द्विधा विभजन्ति विजिगीषुवितण्डा वीतरागवितण्डा चेति। अत्रास्वरसं वृत्तौ दर्शयिष्यति ॥६१॥

पञ्चाङ्ग इति। न्यायपरिशुद्धौ तु, "स्वपक्षस्थापनं परपक्षदूषणमित्यवयवद्वयम्। केचित्तु साधन-समर्थनादिभिः पञ्चावयवमाहुः तदयुक्तम् ; स्वपक्षे दूषणोद्धारतत्समर्थनादेरप्यवयवान्तरत्वप्रसंगात्" इत्यादिना अवयवद्वय एव सर्वान्तर्भाव उक्तः। तत्र वाक्ये आदिपदेन शब्ददोषवर्जनरूपावयव-ग्रहणमिति एतद्ग्रन्थादवगम्यते। परपक्षोद्धारग्रहणमिति व्याख्यान्ति। तदे[illegible]

वादः प्रवर्तते । एवं विजिगीषुकर्तृकवादद्वयसमुच्चयेन विजिगीषुकथारूपो जल्पः । जल्पार्धेनैकेनैव वादेन यथा विजिगीषुवितण्डा, तथा वादार्धेनैकेनैव वादेन वीतरागवितण्डेति । अत्र वितण्डाशब्दोऽन्यतर साधनवत्त्वसाधर्म्यादिति मन्तव्यम् । दृश्यते चेयं वीतरागवितण्डा, [यत्र १] आदौ तावत् आचार्यो वदति, शिष्य सोपपत्तिकमेवानुयुङ्क्ते, आचार्योऽपि सोपपत्तिकमेव परिहरन् शिष्यचोद्यं विनिवर्तयति ॥

इति कथातदवान्तरविशेषादि ॥ ६२ ॥

(288) कर्तव्यत्वेन यत्तु प्रमितिपरवशैः कल्पितं स्वेच्छया वा,
यच्चाकर्तव्यमेवं, परिभवनपदं तत्प्रहाणग्रहौ स्तः ।
स्वाचार-द्यूत-संयत्प्रभृतिषु च तथा स्वीकृतेयं व्यवस्था ;
नैनामीषत् वितण्डाऽप्यलमतिपतितुं साधनांशोज्झिताऽपि ॥ ६३ ॥

वितण्डायामपि वादिप्रतिवादिव्यवस्थानुपालनं कर्तव्यमित्याह कर्तव्यत्वेनेति । कर्तव्यत्वेन

---

७१– प्रमाणत्वतर्कत्वाभिमतमूलकोभयपक्षोपन्यासतत्प्रतिक्षेपवती कथा वादः; अन्यथाऽप्युभयपक्षोपन्यासतत्प्रतिक्षेपवती कथा जल्पः; वादिपक्षोपन्यासतत्प्रतिक्षेपमात्रवती वितण्डा । वैतण्डिकेन न स्वपक्षस्थापनं क्रियते । उभयोर्वीतरागत्वे वादः; उभयोर्विजिगीषुत्वे स्वस्वमतस्थापकत्वे च जल्पः । उभयोर्वैतण्डिकत्वे कथैव न भवति । अन्यतरपक्षस्थापनमावश्यकम् । तथाच जिगीषुरेकः स्वमतस्थापनपूर्वं कथां प्रवर्तयति चेत्, तत्र वैतण्डिकोऽपि प्रतिवादी भवतीति सा वितण्डा । पक्षद्वयस्थापनविरहात् तत् जल्पार्धम् । तत्रोभयोरपि विजिगीषुत्वमेव । यत्र वीतरागः स्वपक्षस्थापनप्रवृत्तो वैतण्डिकेन प्रतिवादिना आस्कन्द्यते, सा वीतरागवितण्डेत्युच्येत । अत्रेदं वक्तव्यम्—उभयोर्विजिगीषुत्वं वा तत्त्वनिर्णयपरत्वं वा यदि, तदैव कथाप्रवृत्तेरौचित्यम् । यदा वीतरागोऽपि, "तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहणार्थं कण्टकशाखावरणवत्" (न्या द) इत्यनुमतत्वात् परदर्पप्रशमनाय जल्पवितण्डे परिगृह्णाति, तदा तस्य तत्र जिगीषयैव प्रवृत्त्या विजिगीषुवितण्डैव सा । यदि तु वीतरागः स्वपक्षस्थापनादि कुर्वन् तत्स्थापनाप्रवृत्तविजिगीषुप्रतिवादिको भवति, तादृशकथास्वीकारेऽपि विजिगीषुकथात्वस्य न क्षतिः । यदि तु द्वयोरपि वीतरागता, तत्त्वनिर्णयार्थमेव प्रवृत्तिः, तत्र कस्यापि विजिगीषुत्वाभावात् विजिगीषुवितण्डायामनन्तर्भावात् वीतरागवितण्डेति विभागो मन्येत । नैतत् युक्तम् । विजिगीषुकथात्वरूपसामान्यधर्माभावेन तदवान्तरभेदरूपवितण्डात्वायोगात् । अथापि तथाप्रयोगः औपचारिकः । उपचारमूलं तु वितण्डायामिव एकतरपक्षस्य मनसि निहितस्याप्यस्थापनम्, न तु जिगीषा । रीतिरियं गुरुशिष्यस्थले निदर्श्यते वृत्तौ । तत्र, "शिष्यः सोपपत्तिकमनुयुंक्ते" इत्यनेन गुरुपक्षविदलनमात्रं करोति, न तु स्वपक्षे उपपत्तिं प्रदर्शयतीति ज्ञाप्यते । चोद्यं विनिवर्तयतीत्यनेन तत्त्वनिर्णये पर्यवसानं प्रदर्शितम् । तेन वितण्डात्वायोग उक्तः । न्यायपरिशुद्धावप्ययमेवाऽऽशयो मन्तव्यः ॥ ६२ ॥

वैतण्डिकः स्वपक्षस्थापनानुद्युक्त इत्युक्तम् । तावता कस्याप्यस्थापक इति वा सर्वनियमातिलंघीति वा न मन्तव्यमित्याह कर्तव्यत्वेनेति । कथामर्यादा तावत् पारम्पर्यागताऽस्ति । तत्रैतत्कथाधिकारिणा एवं कर्तव्यम्, इदं न कर्तव्यमिति व्यवस्था कृताऽस्ति, साऽनुसर्तव्या । तद्वत् वादिप्रतिवादिभ्यां स्वस्वसामर्थ्यप्रचिकटयिषया नानयाऽपि व्यवस्था प्रारम्भे आविष्क्रियेत चेत्, सापि परिपाल्या वैतण्डिकेनापि । तथाच प्राचीनैर्वा स्वयं वा कर्तव्यत्वेन यत् कल्पितम्, तत्प्रहाणं परि-

प्रमितिपरवशैः कल्पितं स्वपक्षसाधनादि ; अकर्तव्यत्वेन कल्पितं छलजातिनिग्रहस्थानादि । स्वेच्छया कल्पितं--निरोष्ठव्यवहारः, अदन्त्यव्यवहारः, उक्तशब्दस्य पुनरनभिधानं, लुङ्प्रयोग, चङ्प्रयोगः, यङ्प्रयोगः, यङ्लुक्प्रयोगः इत्यादिकं शब्दविषयम्। अनुमानेनैव साधनम्, आगमेनैव साधनम्, वक्तानुमानेनैव साधनम्, वैदिकागमेनैव साधनमित्यादिकं प्रमाणविषयम्। एवमन्यदपि वादिप्रतिवादिप्रौढिप्रकाशनार्थं कल्पनं द्रष्टव्यम्। एतत्परित्यागे निग्रह इत्याह परिभवनपदमिति। नियमातिलङ्घने परिभवनं स्वकुलाचारद्यूतादिष्वपि दृष्टमित्याह स्वाचारेति। 'सर्वा चेयं व्यवस्था वादजल्पयोरेव ; वैतण्डिकस्य न काचित् व्यवस्था' इत्याशङ्क्य परिहरति नैनामिति। साधनांशोज्झिताऽपीति। वितण्डायां स्वपक्षसाधनाभावेऽपि दूषणसमर्थनसद्भावात् सर्वाऽपि व्यवस्था वैतण्डिकेनाप्यङ्गीकार्येत्यर्थः ॥

इति वितण्डायामपि व्यवस्थानुपालनम् ॥ ६३ ॥

(289) सद्दोषोक्त्या कथायां परपरिभवनं स्वोक्तहान्यादिनाम्ना
तत्त्वाबोधस्य लिङ्गं विविधमकथयन्निग्रहस्थानमाप्ताः ।
तत्राचोद्यानुयोगं द्विविधमशकनासिद्धिभेदादवोचन् ;
पूर्वो जातिः परस्तु च्छलमनृतवचः स्यादकालग्रहश्च ॥ ६४ ॥

इत्थं वैतण्डिकस्यापि दोषादोषव्यवस्थानुपालनमुक्त्वा निग्रहस्थानलक्षण-तद्विभागादिकं दर्शयति

---

श्री--भयावहम्। तथा प्राच्यैः स्वयं वा यत् अकर्तव्यत्वेनाऽऽदौ कल्पितम्, तद्ग्रहोऽपि परिभवनपदम्। तेन सभायां परिभूतो भवेत्; तदा निगृहीतः स्यात्। स्वकुलाचारे, द्यूते, संयति=युद्धे च, अन्यत्र चैवमेव हि। वितण्डाकथायामपीयं व्यवस्थाऽस्ति। तस्यां स्वपक्षस्थापनोपपत्तिर्नोच्यत इत्ययमेव विशेषः। स्वकृते यत् परपक्षदूषणम्, तद्दूषणे वादिना क्रियमाणे दूष्यार्थस्थापनं तु वैतण्डिकेनापि कार्यम्। अन्यथा कथं विजय इति ॥ ६३ ॥

कथायां सर्वत्र यत्तद्व्यवस्थानुपालनमावश्यकमित्युक्तम्। अथ विजिगीषुकथायामुद्भाव्यं निग्रहस्थानं निरूप्यते। न्यायग्रन्थेष्वप्यनुपलभ्यमानमत्रद्विस्तरो न्यायपरिशुद्धौ द्रष्टव्यः। निग्रहस्य= परपरिभवस्य निमित्तं यत्, यदुद्भावनेन परपरिभवः क्रियते, तत् निग्रहस्थानम्। उद्भावनश्च तद्धान्तरविभागप्राचीनि उक्तहान्यादीनि यानि नामानि, तन्निर्देशेन, सतः=स्थितस्य दोषस्य उक्तथा भवति। तदाह सदिति। तत् उक्तहान्यादिरूपं निग्रहस्थानं विविधं तत्त्वाबोधस्य वादिनिष्ठस्य लिङ्गं=सूचकमकथयन् आप्ताः। तत्त्वाबोधो नाम अप्रतिपत्तिर्विप्रतिपत्तिश्च। आद्यः ज्ञानाभावः; द्वितीयो विपरीतग्रहः। यैनिध्यश्च स्वोक्तहानिः उक्तविशेषणम्, उक्तापलापः, अपसिद्धान्तः इत्यादिना। उक्तहानिर्नाम स्वयं प्रयुक्तस्य हेतुसाध्यादेः प्रतिवाद्याक्षेपे स्वयमेव त्यागः। एवमन्यदपि। तत्र पर्यनुयोज्योपेक्षणमिव निरनुयोज्यानुयोगोऽप्यन्तर्भवति। वाद्यन्तरदोषस्य पर्यनुयोज्यस्य= प्रष्टव्यस्य उद्भाव्यस्यानुद्भावनमपि दोषः, तथा निरनुयोज्यस्य=अप्रष्टव्यस्यानुयोगोऽपि। तमनुयोगं विभजति तत्रेति। तत्र=निग्रहस्थाने अन्तर्गतं अचोद्यानुयोगं=निरनुयोज्यानुयोगम् अशकनासिद्धिभेदात्—अशकनं=दूषणासमर्थत्वम्। असिद्धिः=दूषणसामर्थ्येऽपि वस्तुतः अविद्यमानत्वमिति भेदात् द्विविधमाहुः। पूर्वः=असमर्थो निरनुयोज्यानुयोगः जातिः। परः=समर्थोऽप्यसिद्धस्तु निरनुयोज्यानुयोगस्त्रेधा भिद्यते छलमनृतवचः अकालग्रहणञ्चेति। जातिच्छले उत्तरश्लोके वक्ष्येते। अनृतवचः उक्तहान्यादौ अकृतेऽपि कृततया वचनम्। अकालग्रहः=दोषोद्घाटनार्हावसरे

सद्दोषेति। वादिप्रतिवादिभ्यां दोषत्वेनाङ्गीकृतानामभिधानेन कथायां परेषां परिभवनं--**निग्रहः** भवति ; [तत्स्थानं ?] प्रतिज्ञाहान्यादिनाम्ना वक्तव्यमित्याह **स्वोक्तेति**। निग्रहस्थानलक्षणमाह **तत्त्वेति** । "विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्" इति निग्रहस्थानलक्षणसूत्रम्। तस्याभिप्रायस्तत्त्वाप्रतिपत्तिसूचकं निग्रहस्थानमिति। अप्रतिपत्तिविप्रतिपत्त्योर्द्वयोरपि तत्त्वाप्रतिपत्तिसूचकत्वादिति। वादेऽपि कथावसानहेतुत्वेनात्यन्तानुपादेयस्य निरनुयोज्यानुयोगस्य विभागान् दर्शयति **तत्रेति**। जातिः, छलं, प्रतिज्ञाहान्याद्याभासः, अप्राप्तकाले ग्रहणमिति चतुर्विधो निरनुयोज्यानुयोगः। स च जातिरजातिरिति द्विविधः। अजातिरपि छलमछलमिति। अछलमपि हान्याद्याभासस्तदन्यच्चेति। तत्र छलजात्योः [अन्तर्भावं दर्शयन् ?] वैषम्यमाह **अचोद्यानुयोगं द्विविधमशक्तनासिद्धिभेदादवोचन्निति**। सिद्धमपि दूषणासमर्थं जातिः ; दूषणसमर्थमप्यसिद्धं छलमिति विभागः। तदिदमाह-**पूर्वो जातिः परस्तु च्छलमिति**। **अनृतवचः** अविद्यमानस्य वचनं हान्याद्याभासवचनम्। **अकालग्रहः** अप्राप्तकाले ग्रहणम् **इति निग्रहस्थानलक्षणविभागादि** ॥

(२९०) **जातिः स्वव्याहता वाक् ; उपधिनियतिभिर्भिद्यतेऽनेकधा सा ;**

**युक्तत्यागस्त्वयुक्तग्रहणमविषये वृत्तिरप्यत्र दोषाः ।**

**स्वव्याघातोऽनुवृत्तश्छलमपि वचसां कल्पितार्थे निषेधः**

**तत्तद्वृत्तिप्रभेदादिदमपि विविधं विस्तरेणालमत्र ॥ ६५ ॥**

अथ छलजात्योर्लक्षणविभागमाह **जातिरिति**। स्वव्याघातकमुत्तरं जातिः। 'दूषणाशक्तमुत्तरं

---

ळी— अनुद्घाट्य विषयान्तरविचारमध्ये स्वस्फूर्त्यनुसारेणासंबद्धप्रस्तावः ; वादिनाऽनुक्तेऽपि, स्वयमेव, 'एवं चेत् वदसि, तर्ह्ययं दोषः' इति कथनमपि। परस्तु च्छलमित्यत्र वाक्यसमाप्तिर्वृत्तीष्टतया प्रतीयते। छलमात्रस्यासिद्धरूपत्वमपि गम्यते। तत् नूनं तयोरन्तर्भावैदम्पर्येण, जातिच्छलयोरेवाशक्तत्वासिद्धत्वे व्यवस्थिते इत्याशयेन च स्यात् ॥ ६४ ॥

उत्तरार्धोक्तेषु आद्यद्वयं विशिष्याऽऽह जातिरिति। न्यायसूत्रे छलजातिनिग्रहस्थानानां विशिष्य निर्देशादेवम्। तत्र निग्रहस्थानात् पृथगुक्तिर्गोबलीवर्दन्यायेनेति स्वाशयः। जातेर्लक्षणं स्वव्याहता वागिति। परदूषणार्थप्रवृत्तया वाचा सा वागपि व्याहन्यते चेत्, तस्य वचसः स्वव्याघातकत्वमप्यस्ति, स्वयं व्याहतत्वमप्यस्तीत्युभयथा व्यवहारः। यथा तार्किकमत एव विशेषणानां लक्षणं स्वतो व्यावर्तकत्वमिति, स्वतो व्यावृत्तत्वमिति च। सा जातिः उपधिनियतिभिः= धर्मव्यवस्थाभिः= व्यवस्थितधर्मैः। विभाजकधर्मैरिति यावत्। अनेकधा भिद्यते। एतन्निरूपकं पञ्चमाध्यायप्रथमाह्निकम्। निग्रहस्थाननिरूपकञ्च तत्र द्वितीयमाह्निकम्। अस्यां जातौ दोषवैविध्यमूलकं विभागमप्याह युक्तेति। हेतुना कस्यचिदंशस्य साधने उपयुक्तव्याप्तिपक्षधर्मत्वाद्यंशैकदेशत्यागोऽपि युक्तांगत्यागः। अनुपयुक्तांशस्योपयुक्ततया ग्रहणमयुक्तग्रहणम्। साधयितुमयोग्ये प्रवृत्तत्वम् अविषयवृत्तित्वम्। अपिशब्दः व्याघातरूपसाधारणदोषसमुच्चयार्थः। जातिसामान्यानुवृत्तधर्मस्तु स्वव्याघातकत्वम्। छललक्षणमाह छलमपीति। वादिप्रयुक्ते वचसि तदनभिमतमर्थं स्वयं परिकल्प्य तस्मिन् कल्पितार्थविषये दूषणप्रयोगः। इदं छलं तत्तद्वृत्तिप्रभेदात्= वाद्यभिमतवाक्यार्थलक्ष्यार्थतात्पर्यार्थत्यागेनार्थान्तरकल्पनात् वाक्छलमुपचारच्छलं सामान्यच्छलमिति त्रिविधं भवति। विस्तरेणालमत्र= श्लोकद्वयोक्तनिग्रहस्थानानामेतच्छ्लोकोक्तजात्यादिविभागानां च विशेषरूपेण ज्ञानार्थो यो विस्तरः, सः अत्र= परिमितैः श्लोकैः तत्त्वार्थसंग्रहरूपे ग्रन्थे मा भूत्। आस्तिकानां तत्त्वनिर्णयार्थिनां वीत-

जातिः' इति मतभेदेन पूर्वमुक्तम्। सा जातिरवान्तरलक्षणनियतिभिः प्रतिधर्मसमादिभेदेनाऽनेकधा भिद्यत इति दर्शयति उपधीति। जातिषु विशेषदोषान् कथयति युक्तेति। युक्ताङ्गत्यागोऽयुक्ताङ्गस्वीकारोऽविषयवृत्तित्वं चेति हि जातिदोषविशेषाः; सर्वजात्यनुवृत्तस्तु दोषः स्वव्याघातः। छललक्षणमाह छलमपीति। कल्पितदूष्यदूषणाभिधानं छलमित्यर्थः। इदं च छलं तत्तच्छब्दप्रवृत्तिभेदात् मुख्योपचारतात्पर्यवृत्तिभेदेन त्रिविधम्। अस्यार्थस्य अनेकेषु ग्रन्थेषु प्रसिद्धत्वात् किमत्र विस्तरेणेति विस्तरानादरः॥

इति जात्यादिलक्षणविभागादि ॥ ६५ ॥

(291) यस्मिन् मानप्रवृत्तिस्तदिदमशरणैरभ्युपेत्यं हि सर्वैः;
व्याघातो यत्र दृष्टस्तदपि न शरणं साधने दूषणे वा।
इत्थं सिद्धे कथानां रहसि कथकयोस्सावधानत्वभूम्ने
षट्पक्ष्यन्तासदुक्तिः परिषदनुमता रुद्धरोधावकाशा ॥ ६६ ॥

उक्तदोषेष्वन्यतमस्यापि संभवे द्वितीयादिकक्ष्यायामेव वादविच्छेदः स्यात्, किमनया षट्पक्षीकल्पनयेत्याशङ्कमानस्योत्तरं वदति यस्मिन्निति। अयमर्थः—यत् प्रमाणेन प्रतीयते, तत् सर्वैरपि वादिभिरङ्गी-

---

श्री- रागकथारूपे वाद एव प्रवृत्त्या विजिगीषुकथायां निग्रहार्थमुपयुक्तानामर्थानां विशिष्य ज्ञानस्यानपेक्षितत्वादिति भावः। न्यायपरिशुद्धौ तद्विस्तरस्तु न्यायदर्शने मूलग्रन्थे तदर्थमेकस्याध्यायस्य क्लृप्ततया तत्र व्याख्यासु प्रायः सूक्ष्मविचारविरहात् स्वग्रन्थस्य पूर्णन्यायपरिशोधनरूपत्वात् विशेषापेक्षिणां तदर्थनिष्कर्षो भूयादित्याशयेनेति नास्य भागस्य सर्वावश्यग्राह्यत्वमिति ॥ ६५ ॥

हेतुहेत्वाभासरूपगुणदोषविमर्शनं सर्वकथासाधारणम्। विजिगीषुकथायामुद्भावनीयच्छलजातिनिग्रहस्थानरीतिश्च तत्र प्रवृत्तैर्विशिष्य ज्ञातव्या। तत्र वादिप्रतिवादिसमागममात्रेण वादकथा प्रवर्तेत। जल्पादौ तु वादिप्रतिवादिसभापतिप्राश्निकरूपाङ्गचतुष्टयसंपत्तिरपेक्षिता। वादे सभापतिरूपानुविधेयपुरुषः सर्वथा नापेक्षितः। प्राश्निकाः मध्यस्थाः कामं स्वयमागता न वार्यन्ते। तत्रार्जवेन कथाप्रवृत्तौ कक्ष्येयत्ता न भवति। तत्त्वनिर्णयावसानत्वात् तावत्पर्यन्तं वादोऽनुवर्तेत। निर्णयस्याशक्यत्वे यथामति प्रयस्योपरम्येत। विजिगीषुकथायां तु वादिना किञ्चिदुक्तौ प्रतिवादिनि तूष्णीके वा असंगताभिधायिनि वा तदैव विजयस्थापनेन कथोपरमे कर्तुं शक्येऽपि षट्पक्षीपर्यन्तकथाप्रवर्तनं प्रामाणिकेष्टम्। व्यवस्थान्तरवदिदमप्यनुसर्तव्यमित्याह यस्मिन्निति। प्रामाणिकं ग्राह्यमिति प्रथमपादार्थः; अनुपपन्नं त्याज्यमिति द्वितीयपादार्थः। प्रमाणलोकव्यवहारानुसारिणां वादानधिकारस्य प्रागुक्ततया मानत्यागे कथायां कस्यापि माननीयता न स्यादित्यगत्या तत्स्वीकार इति गमयितुम् अशरणैरिति पदम्। न शरणम्=न समर्थम्। एवं पादद्वयेनैतावत्पर्यन्तनिरूपणसिद्धांशमनूद्य वक्तव्यमाह इत्थमिति। कथारहस्ये एवं स्थिते, उपक्रममात्रेऽपि कथोपरमसंभवेऽपि कथकौ प्रथमतः किञ्चित्प्रमादिनावपि पश्चात् सावधानं प्रवर्तेतामित्याशयेन कतिपयकक्ष्याप्रवर्तनमनुमन्यते। तृतीयवारे वा कथकः किमृजुर्भवेदिति प्राश्निकैरवधीयत इव। त्रिवारप्रतीक्षणं हि लोके सर्वत्रानुभूयते। तत्र वादिनोऽसद्वादारम्भे उक्तिप्रत्युक्तिगतौ सत्यां पञ्चम्यां कक्ष्यायां तृतीयवारपूर्तिः। प्रतिवादिनोऽसद्वादारम्भे तु षष्ठ्यां तत्पूर्तिरिति षट्पक्षीरूपा भवति। तावत्प्रवृत्तिश्च तस्याः रुद्धरोधावकाशत्वात्। रोधस्य, मास्तु कथेति निरोधस्यावकाशः प्रथममेव सन्नपि रुद्धो भवति, कथकसावधानत्वदर्शनप्रत्याशया। तादृशत्वात् षाट्पर्यन्तोक्तिः परिषदाऽनुमता भवति। षट्पक्ष्यन्तेति असदुक्तिविशेषणम्। एकं पदम्। सदुक्तौ षट्सु विश्रम इति न नियमः। वादमध्ये यदैवा-

कार्यम् । यत्र पुन साधने दूषणे वा व्याघातो दृश्यते, तदपि न शरणमेव—स्वपक्षसाधने परपक्षदूषणे वाऽनुपाय इत्यर्थ । इत्थं कथानां तिसृणामपि सिद्धे रहस्ये यद्यपि द्वितीयादिकक्ष्यायामेव दूषणं मध्यस्थैरवलोक्यते, तथाऽपि कथकयोरसावधानत्वसिद्ध्यर्थं षट्पक्षीपर्यन्ता पुनः असदुक्तिर्मध्यस्थैरनुमता भवति । तत्र हेतुमाह रुद्धेति । षट्पक्षीपर्यन्तं मध्यस्थानां निवारणावकाशाभावादित्यर्थः । **तथाहि**— द्विविधा हि कथा । सत्साधनोपक्रमा तावदेका ; अपरा पुनरसत्साधनोपक्रमा । पर्यनुयोज्योपेक्षणं च मध्यस्थैर्नैकक्ष्यम् ; उभयोरपि वादिनोर्दुष्टत्वात् । अन्यतरदोषमात्रकथने माध्यस्थ्यमेव हीयेत । तथाच सत्साधनोपक्रमकथायां वादी न दुष्टः । असदुत्तरकथने द्वितीयकक्ष्यायां प्रतिवादी दुष्टः । तत्र वादिना तृतीयकक्ष्यायां दुष्टवचनपरिग्रहे वादिनः पर्यनुयोज्योपेक्षणम् । अयमेव मध्यस्थानां वक्तुमवसरः । अत्र मध्यस्थाः प्रतिवादिनो यथावस्थितवचनसंभवमपेक्षन्ते ; स पुनरयथैव भाषते ; तत्र चतुर्थकक्ष्याप्रवृत्तिः । ततो वादिनमपेक्षन्ते; सोऽप्ययथैव भाषते; अत्र पञ्चमकक्ष्या प्रवर्तते । अथ वादिप्रतिवादिनोः स्तम्भे सभापतिप्रश्नमपेक्षन्ते ; स पुनर्न पृच्छति । तस्मिन्नवसरे प्रलाप एव प्रतिपादित (प्रतिवादिनः?) इति षष्ठी कक्ष्या । एवं सत्साधनोपक्रमकथायां षट्पक्षी; असत्साधनोपक्रमकथायां पञ्चैव पक्षाः ; द्वितीयकक्ष्यायामेव पर्यनुयोज्योपेक्षणस्य प्रवृत्तेरिति विभागः । ततः षट्पक्षा(क्ष्या)दिकमनुसृत्य मध्यस्था निवारयन्तीति न्याय्यमेतत् ॥ **इति षट्पक्षीसंभवः ॥ ६६ ॥** **इत्यनुमितिप्रकरणम् ॥**

---

श्री-सद्वादोपक्रमः तत्प्रभृतिगणने पञ्चमत्वं स्यात्। एकस्यासद्वादे,अन्येन तदसद्वादानुद्घाटने मध्यस्थैः पर्यनुयोज्योपेक्षणे तदैव कार्येऽपि पुनरेकवारं वादिनः प्रतिवादिनश्चावकाशं परिकल्प्य, अथ सभापतिप्रश्नमपि प्रतीक्ष्य तस्याप्यभावे मध्यस्थाः वादं वारयन्तीति क्रमः॥ प्रलाप एव = पुनरसदुत्तरमेव ॥

अत्रार्थवैशद्याय न्यायपरिशुद्धिसूक्तिशकलानामनुवादः क्रियते = "एकपक्षा कथा…असत्साधनोपक्रमायां कथायां प्रतिवादी सदुत्तरेण निगृह्णाति, तदा द्विपक्षी कुकथा । तदुपरिवादिप्रतिवादिनोः सप्रतिभयोरसदुत्तरपरम्परायां पञ्चपक्षीपर्यन्ता कुकथाप्रवृत्तिः । सत्साधनोपक्रमायां तु कथायां षट्पक्षीपर्यन्ता । तत्र हि प्रथमः पक्षस्तावदनुपप्लुतः प्रादुःष्यात् । प्रतिवादिनस्तु निरनुयोज्यानुयोगभेदचतुष्कावतरणात् द्वितीयपक्षप्रवृत्तिः । तत्र सभ्याः वाद्यनुयोगमपेक्षमाणास्तूष्णीमासते । तदा वादी सदुत्तराप्रतिभानात् तत्प्रतिभानेऽपि वा जडीकरणदुरभिलापेण तज्जातीयमन्यद्वा किञ्चिदसदुत्तरं प्रयुञ्जीत । तथापि प्रतिवाद्यनुयोगमपेक्षमाणेषु…चतुर्थपक्षावतारः । तथाप्यवसरप्राप्ताय उभयस्तम्भरूपायानुविधेयप्रश्नाय दत्तक्षणेषु (सभ्येषु) वादिनः पञ्चमः पक्षः । अनुविधेयेऽपि देवानांप्रिये . कथाविच्छेदकांक्षिषु षष्ठः । ततःपरं स्वदोषपरिहारायोभौ निवार्य…द्वावपि निगृह्णन्ति" इति । अनेनोभयोरपि असदुत्तरत्व एव षष्ठपर्यन्तप्रतीक्षा । सदुत्तरे मध्ये प्राप्ते तु तदैव कथाविच्छेदोऽपीति ज्ञायते । यदा योऽसद्वादमारभते, तदा तदनन्तरेण तद्वादस्यासत्त्वमाविष्करणीयम् । तदेव सदुत्तरम् । तदा कथापूर्तिः । यद्यत्र पर्यनुयोज्यस्योपेक्षणम्, तदा प्रथमासद्वादमारभ्य पञ्चासदुत्तराणि सह्यन्ते इत्युक्तं भवति ॥ ६६ ॥

अनुमारूपबुद्धिनिरूपणमासीत् । अथ शाब्दबुद्धिः । परार्थानुमाननिरूपणान्ते तदन्तर्गतकथा सपरिकरा निरूपिता । तथाच शब्दस्यैव तदन्ते प्राप्तत्वात् अनुमानान्तिमभागेन साकमपि संगतिः वृत्तौ प्रदर्शिता । अथापि शाब्दपरिच्छेदारम्भ इत्यपि ज्ञेयम् । आदौ वाक्यजन्यबोधस्यानुमितिरिक्तत्वं न भवतीति वदतां बौद्धवैशेषिकादीनां निरासः क्रियते । बौद्धमते वैशेषिकमते च शब्द

(अथ शाब्दप्रमितिः)

(292) वाक्यार्थो यस्त्वपूर्वो न खलु किमपि तद्व्याप्यमस्मिन् पदादौ;
साङ्गत्यं बोधकत्वादधिकमनुमितौ ग्राह्यमत्रैतदेव।
वक्तृज्ञानानुमानादिकमपि न भवेत् अन्वतो व्याप्त्यभावात्;
तत्तल्लिङ्गाप्रतीतावपि धिनिजननात्; वक्त्रभावाच्च वेदे ॥ ६७ ॥

इत्थं प्रमाणाभासप्रवृत्तिरूपां षट्पक्षीमुक्त्वा सौगतसमयानुवर्तिना येनकेनापि परिकल्पितस्य वाक्यात् वाक्यार्थानुमानस्य प्राभाकरवैशेषिकपरिकल्पितयोश्च वक्तृज्ञानानुमानयोराभासत्वं वक्तुमारभते वाक्यार्थ इति। कृत्स्नस्यापि वाक्यस्यानुमानरूपतामाहुः सौगता वैशेषिकाश्च। प्राभाकरास्तु लौकिकवाक्यमात्रस्य। कथं तत्रानुमानप्रवृत्तिरिति पृच्छामः। विप्रतिपन्नानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि पदत्वादिति यदि वदसि, तदा न विशेषसिद्धिः। यदि संसर्गविशेषज्ञानपूर्वकाणि, संसर्गविशेषवन्तीति वा, तदा संसर्गविशेषो न प्रसिद्धः [इति?] कथं व्याप्तिग्रहः? अनेनैव वाक्येन प्रसिद्धश्चेत्–अन्योन्याश्रयः;

---

वी– स्यानुमानविधयैव प्रामाण्यम्। तन्निरासः प्रथमम्। प्राभाकराः शब्दप्रमाणं पृथक् स्वीकुर्वन्तोऽपि लौकिकवाक्यानामनुमानविधयैव प्रामाण्यमाशेरते इति तन्निरासोऽप्यत्र सिध्यत्युत्तरार्धे। शब्दस्यानुमानत्वे कथमनुमानप्रयोगः। शाब्दबोधविषयत्वेनाभिमतस्यार्थस्य शब्दगतधर्मेण साकं व्याप्यव्यापकभावे सत्येव शब्दादर्थानुमानं स्यात्। शाब्दबोधविषयस्तु गामानयेत्यादौ गवानयनानुकूलव्यापारस्त्वया कार्य इत्यर्थः। तद्रूपसाध्यव्याप्तिमत् गामानयेति शब्दजाले किमस्ति। तत्तद्वाक्यप्रमेयस्य विशिष्टार्थस्य पूर्वमगृहीततया अपूर्वत्वात् साध्यज्ञानस्यैव प्राक् अभावेन व्याप्तिः कथं ग्राह्या भवेत्। तदिदमाह वाक्येति। एवमेकैकवाक्यप्रतिपाद्यार्थस्यापूर्वत्वात् न कुत्रापि व्याप्तिग्रहसंभवः। शब्दस्यातिरिक्तप्रमाणत्वे तु नैष दोषः। अनुमानस्य बोधकत्वं व्याप्तिग्रहमन्तरा न भवतीति हेतुसाध्ययोः संगत्यं=संबन्धः व्याप्तिरूपमवश्यग्राह्यं भवति। अत्र तु शब्दे व्याप्तिग्रहं विना बोधकत्वरूपं साङ्गत्यमेव वर्तते। व्युत्पन्नानां गवानयनादिवाक्यश्रवणकाले विना व्याप्तिग्रहादिविलम्बं बोधकत्वस्यैव दर्शनात्। एवमर्थसाध्यकानुमितिर्न भवतीत्युक्तम्—तेन बौद्धैस्सह वैशेषिकाः निरस्ताः। पुनरेते वैशेषिकाः प्राभाकरैः सहापि निरस्यन्ते, उभयैरपि शब्दप्रयोक्तृपुरुषगतज्ञानानुमानद्वाराऽर्थग्रहणमिति कथ्यमानत्वात्। अयं शब्दसमुदायः ईदृशार्थज्ञानपूर्वकं वक्त्रा प्रयुक्तः ईदृशपदसमुदायत्वादिति तदनुमानम्। अस्य हेतोरस्य साध्यस्य चान्यत्र कुत्राप्यभावात् व्याप्तेरेवाभावः। किञ्च यत्र घटमानयेत्यादौ व्यवहारादिना प्रथममर्थग्रहो जातः, तत्र बहुकृत्वः तद्वाक्यश्रावणामपि तदनन्तरं जायमानं ज्ञानम्, इदं वाक्यमेतदर्थसंबद्धं घटमानयेति वाक्यत्वात् पूर्वश्रुततद्वाक्यवदिति अर्थानुमानजं न भवति। तत्तल्लिङ्गाप्रतीतावपि= तत्तद्वाक्यविशेषत्वस्य व्याप्तिविशिष्टत्वरूपलिङ्गत्वेन ज्ञानाभावेऽपि अर्थग्रहणात्। न चेदं स्मरणरूपम्। पूर्वगृहीतवाक्यतुल्यानुपूर्वीकवाक्यान्तरात् पूर्वगृहीतघटतुल्यघटान्तरानयनकार्यताया एव प्रतीयमानत्वात्। अतो न कुत्रापि शब्दादर्थानुमितिरिति। वक्तृज्ञानानुमानादीति आदिपदेन तदुचितहेत्वादिग्रहणम् ॥

न विशेषसिद्धिरिति। संसर्गस्य सामान्यतो ज्ञानेऽपि प्रकृतगवानयनादिरूपविशेषसंसर्गो नानुमितो भवति। शब्दजन्यज्ञाने च विशेष एव विषय इति कथमेतस्यानुमितत्वमिति भावः। अथ विशेषस्यापि घटनेनानुमानमिति यदि, तत्र पदत्वादिति अप्रयुज्य एतदानुपूर्वीकपदत्वादिति हेतुर्ग्राह्यः। संसर्गविशेषवन्तीति। ननु पदपक्षकानुमानमेवेहोक्तम्; उपरि च पदप्रस्ताव एव क्रियते। पदार्थ-

अव्युत्पन्नेषु च पदेषु व्यभिचारः । न हि अव्युत्पन्नानि पाठमात्रावगतानि पदानि स्मारितार्थसंसर्गज्ञान-पूर्वकाणि॥ व्युत्पन्नपदत्वादिति चेत्–केयं व्युत्पत्तिः ? अभिधानशक्तिग्रहणमिति चेत्, तर्हि पदसङ्घातेनैव वाक्यार्थसिद्धिः, किमनयाऽनुमानकुसृष्ट्या ? वाक्यात् वाक्यार्थप्रतिपत्तिरिति हि लौकिका मन्यन्ते॥ पूर्वमनुमानम्, पश्चात् वाक्यार्थप्रतिपत्तिरनुवादरूपतयेति चेन्न, अदर्शनात्। न हि प्रयुक्ते वाक्ये द्विवारमर्थ-प्रतिपत्तिर्दृश्यते । अतो वेदवत् लोकेऽपि वाक्यादेवार्थप्रतिपत्तिरिति **प्राभाकरस्योत्तरम्** । **वैशेषिक-**स्याप्युपलम्भविरोधः । सर्वे हि व्यवहर्तारः शब्दादेव साक्षादर्थप्रतीतिमुपलभन्ते । कल्पनागौरवं चोत्तरम् । शब्दादर्थप्रतीतिरिति कल्पने लाघवम्, वक्तृज्ञानानुमानपूर्वकत्ववाक्यार्थप्रतीतिकल्पने गौरवम् ।

सम्बन्धभेदादपि प्रमाणभेदमाह **साङ्गत्यमिति** । शब्दे केवलबोधकत्वमात्रं सम्बन्धः, अनुमाने व्याप्तिरिति विभागः । **एतदेव**=बोधकत्वम् । उक्तमर्थं सङ्कलय्य विशदयति **वक्तृज्ञानेति** । यदि वा— पूर्वं वाक्यादर्थानुमानं परास्तम्, अत्र वक्तृज्ञानानुमानपूर्वकमर्थसिद्धिर्निरस्यत इति न पौनरुक्त्यशङ्का । **बुद्धप्रभाकरवैशेषिकाणां** निराकरणे न्यायतौल्यात् साधारण्येनास्माभिर्व्याख्यातं पूर्वमिति न दोषः । तत्र हेतुमाह **व्याप्त्यभावादिति** । हेत्वन्तरमप्याह **तत्तदिति** । तत्तद्वाद्युक्तलिङ्गाप्रतीतावपि वाक्यार्थप्रतीति प्रसिद्धिप्राचुर्यादिति । वैशेषिकस्य विशेषदूषणं प्रदर्शयति **वक्त्रभावाच्च वेद इति** । ईश्वरानुमानं निरस्तमिति भावः ॥

**इति आगमस्यानुमानाद्बहिर्भावः ॥ ६७ ॥**

---

श्री–पक्षकानुमानं वैशेषिकोक्तमत्र न विवक्षितमिति कथं पदार्थमिथस्संसर्गस्य ग्रहणेन पदनिष्ठतया साधनमिति चेत्—संसर्गज्ञानपूर्वकत्वानुमाने काचित् शङ्का प्रसक्ता—संसर्गस्य ज्ञानविशेषणत्वात् विशेषणज्ञानाभावे विशिष्टज्ञानायोगात् विशिष्टज्ञानपूर्वकत्वसाधनात् प्रागेव संसर्गस्य ग्राह्यतया पुनरेतदनुमानं व्यर्थमिति । तदर्थं साक्षात् संसर्गस्यैव साध्यत्वं विवक्षितमिह । न चात्र बाधः, पदेषु साक्षात् तद्वत्त्वाविवक्षणात्—ज्ञानपूर्वकत्वं वा, ज्ञानजनकत्वं वा, समानकालिकत्वं वा य कश्चिदुचितः परम्परासम्बन्धोऽस्तु, सर्वथा संसर्गविशेषसाधनं न दुष्टमिति। व्युत्पन्नपदत्वादिति। पदत्वादिति न हेतुः । किंतु व्युत्पन्नपदत्वादितीति शङ्का । एतदेवेति व्याख्येयम् । बोधकत्वमिति तद्व्याख्यानम् । संसर्गज्ञानपूर्वकत्वरूपसाध्यसाधनपक्षस्यापि पूर्वं विवक्षिततया वृत्तौ प्रदर्शितत्वात् तदनुसारेणावतारयति उक्तमर्थमिति । उत्तरार्धं एव तत्पक्षविचार इति श्लोकस्वारस्यमनुसृत्य पक्षान्तरमाह यदिवेति । चतुर्थपादस्यार्थमाह हेत्वन्तरमिति । यदि शब्दस्यानुमानविधयाऽर्थ-प्रत्यायकत्वम्, तदा वादिभिः पक्षसाध्यहेत्वादिरूपेण प्रयोगः कार्यः स्यादिति भावः । यद्वा प्राभाकरवैशेषिकसमाहृतहेतुविशेषाज्ञानेऽपि अनुमितिर्भवतीत्यर्थः । पदपक्षकानुमाने आकाङ्क्षादिमत्पदकदम्बत्वात्, आप्तोक्तपदकदम्बत्वात्, पुरुषदोषशङ्कानास्पदपदकदम्बत्वादित्यादिर्हेतुः । पदार्थपक्षकानुमाने आकाङ्क्षादिमत्पदस्मारितत्वादित्यादिर्ग्राह्यः । वक्तुराप्तत्वादिकं ज्ञात्वाऽर्थानुमानमित्ययुक्तम् । अयोग्यतानिश्चयरूपप्रतिबन्धकाभावमात्रत एव सर्वत्र बोधसम्भवात्। बोधे जाते तत्र प्रामाण्ये विवादे आप्तोक्तत्वादिकं तत्स्थापकमित्यन्यदेतदित्यादिकमत्र हृद्गतम् । ननु वक्त्रभावाच्च वेदे इति वाक्यं न प्राभाकराभिप्रायेण । तेन वेदस्य शब्दविधया प्रमाणत्वस्वीकारात् । लौकिकवाक्य एव हि अनुमानविधा तदिष्टा । न च वैशेषिकाभिप्रायेण तैरीश्वरे वेदकर्तृतायाः स्वीकृतत्वादित्यत्राह ईश्वरेति । ईश्वरो न कर्तेति स्थापितत्वात् अन्यस्य वक्तुरनिष्टत्वाच्च साध्यसिद्धिरिति भावः ॥ तत्तत्पक्षोपन्यासो विस्तरेणान्यत्र द्रष्टव्यः । अस्मदीयवैशेषिकरसायनकुसुमाञ्जलिविस्तरादावपि ॥६७॥

(293) प्रत्येकं स्वानुभूताद् तदुभयमधिकं संस्कृतिद्वन्द्वयोगात्
स्मृत्यारूढं विजानन्त्यनुमितिवचसोर्वेद्यमप्येवमस्तु ।
पारोक्ष्यं तद् स्मृतित्वादनधिकमिति न, प्रागनिर्धारितांश-
ज्ञानस्य स्पष्टदृष्टेः परिहितहरितस्त्वेतदस्पष्टमाहुः ॥ ६८ ॥

अत्र कश्चिदाह—'आगमजन्यमनुमानजन्यं वा परोक्षज्ञानम्' इति किंचिन्नास्ति ; किंतु नाना-संस्कारजन्यस्मृतिसमुच्चयमात्रमेव । यथा प्रत्येकमनुभूतानां [रथादि ?]वृक्षादीनां समुच्चयेन सेनावनादि-स्मरणं स्मरणमेव, एवं प्रत्येकानुभूतपदार्थस्मरणमेवाऽऽगमजन्यं ज्ञानम् ; तथाऽनुमानज[न्य]मपीति, न स्मरणादतिरिच्यते परोक्षम् । तदिदमाशङ्कते **प्रत्येक**मित्यारभ्य **अनधिक**मित्यन्तेन । परिहरति **नेति** । तत्र हेतुमाह **प्रागनिर्धारितेति** । अयमत्र भाव.--वाक्यार्थे तावत् प्रागविदितः संसर्गविशेषः सिध्यति ; अतो न स्मृतित्वम् । एवमनुमानेऽपि पक्षनिष्ठं साध्यं सिध्यति । अतोऽपूर्वार्थप्रतीत्या न स्मृतित्वसिद्धिरिति । अयमत्र निर्णयः--संस्कारे सत्यपि अपूर्वार्थप्रतिपत्तौ न स्मृतित्वम् ; अन्यदा पुनः स्मृतित्वमिति । अनुभव एव परोक्षापरोक्षविभागं बाह्या अप्याहुरित्याह **परिहितेति** । क्षपणकाः खलु प्रत्यक्षपरोक्षविभागम्, स्पष्टमस्पष्टमिति विभज्य, आ(व्या)चक्षते ॥ **इति परोक्षानुभवासिद्धिपरिहारः ॥ ६८ ॥**

(294) प्रत्यक्षादीव मानं विमतिपदवचो हेतुदोषाद्यभावात् ;
वाक्यत्वादप्रमाणं विमतमिति यदि, स्वोक्तिबाधादयः स्युः ।
अव्युत्पन्नस्य बोधं न जनयति वचः संगतिज्ञानहानेः,
लिङ्गं व्याप्तिप्रतीतेः पुरत इव, न चावद्यमेतावताऽस्य ॥ ६९ ॥

---

68– अनुमानगतार्थत्वात् न शाब्दोऽतिरिक्तं प्रमाणमिति मते खण्ड्यमाने कश्चिदाह, 'अनुमानमित्यपि किञ्चिन्नास्ति ; स्मृतिप्रत्यक्षातिरिक्तज्ञानस्यैवाभावात् । यथा अवयवसमुदायातिरिक्तः अवयवी नास्ति, तथा तत्तत्पदार्थानां स्मृतानामेकस्मृत्यारूढत्वमेव । अनुमितिरपि पक्षसाध्ययोः परामर्शादि-गृहीतयोः स्मरणमेव' इति । तन्मतमनुवदति सार्धपादद्वयेन प्रत्येकमिति । संस्कृतिः = संस्कारः । यथा घट इति पट इति च प्रत्येकानुभवे तदधीनसंस्कारद्वयं मिथोयुक्तं स्मृतिं जनयति चेत्, तस्याः स्मृतेः प्रत्येकानुभवविषयाधिकविषयकत्वे सत्यपि न स्मृतित्वहानिः, तद्वत् अनुमितिशाब्दबोधयोरने-कार्थविषयकत्वेऽपि स्मृतित्वमेव । एवम् = उभयविषयकैकस्मृतिवत् अनुमितेः, वचसः = वाक्याधीन-ज्ञानस्य च यत् वेद्यम्, तत् एवं = स्मृत्यारूढमेवास्तु । यस्तु परोक्षापरोक्षविभागः, स न क्षतः ; स्मृतित्वेनैव परोक्षत्वसंभवात् ; अनुभवत्वे मानाभावात् परोक्षत्वं स्मृतित्वानतिरिक्तमेवेति । निरस्यति इति नेति । प्राङ्निर्णीतांशमात्रविषयकत्वे घटपटोभयविषयकज्ञानं स्मृतिरेव । अनुमितौ विशिष्य पर्वते वह्नेः संसर्गः प्रागनिर्धारितो विषयीभवति । शाब्दबोधे च तत्तत्पदस्मारितार्थापेक्षया गवान्वितमानयनम्, आनयनान्विता गौरित्यादयः संसर्गा अनेके भासन्तेऽधिकाः । एवं स्पष्ट-दृष्टत्वात् न स्मृतित्वम् । स्पष्टदृष्टेरिति पदप्रयोगबलोपस्थितत्वात् जैनसंमतमपीदं स्मृत्यतिरिक्तपरोक्ष-त्वमित्याह परिहितेति । हरितः = दिशो यैः परिधानीकृताः, ते ; दिगम्बरा इत्यर्थः । ते एतत् = अनु-मित्यादि, स्पष्टं विशदं यत् प्रत्यक्षं तद्विलक्षणतया अस्पष्टशब्देन व्यवहरन्ति ; न तु स्मृतित्वादिति ॥

अन्यस्त्वाह—'पदानामर्थे नियमाभावात् वाक्यानामपि तैस्तैरन्यथाऽन्यथाऽर्थवर्णनात् अत एव

सर्वं वाक्यमप्रमाणमिति वादिनं प्रतिक्षिपति **प्रत्यक्षादीति**। विप्रतिपन्नं वाक्यं प्रमाणम्। कारणदोषबाधकप्रत्यया[ष]भावादिति हेतुः। दृष्टान्तः प्रत्यक्षमनुमानं वा। अत्र प्रत्यनुमानमाशङ्क्य परिहरति **वाक्यत्वादिति**। **स्वोक्तिबाधः**, स्वाभ्युपगमबाधः, स्वप्रवृत्तिबाध इत्यादिकमूह्यम्। सर्ववाक्याप्रामाण्ये स्वाचार्य(स्वकीय ?)वचनस्यापि सर्वशब्दार्थत्वेन स्वमतपरमतविभागो न स्यादित्यर्थः। यदि शब्दः प्रमाणम्, अव्युत्पन्नस्याप्यर्थं बोधयेत् प्रदीपवत्; न हि दीपो व्युत्पन्नाव्युत्पन्नविभागेनार्थमवबोधयतीत्याशङ्क्य परिहरति **अव्युत्पन्नस्येति**। **सङ्गतिविज्ञानहानेरिति**। वाच्यवाचकभावसंबन्धप्रतिपत्तिरागमस्यैवार्थावबोधनाङ्गम्; न तु प्रत्यक्षस्य। अतः सहकार्यभावात् अव्युत्पन्नस्य शब्दोऽर्थं नावबोधयतीति न दोषः। तत्र दृष्टान्तमाह **लिङ्गमिति**। यथा व्याप्तिप्रतीतिशून्यस्य लिङ्गं साध्यप्रतीतिं न जनयति। नैतावता लिङ्गस्य दोषः; एवमागमस्येति ॥ **इति निर्दोषवाक्यप्रामाण्यम्** ॥ ६९ ॥

(295) **वक्ती व्युत्पत्तितः प्राक् यदि निजविषयं वाक् विभक्त्यन्वयाद्यैः,**
**किं व्युत्पत्त्या तिरश्चामपि न कथमितो बालकानां च बोधः।**
**स्वार्थे(र्थः)शब्दस्तथा चेत्, तदपि न, विषयैस्तस्य साम्यात् तदन्यैः;**
**अव्युत्पन्नत्वतो वा स्वमपि न गमयेदेष तद्वत्(यद्वत् ?)स्ववाच्यम् ॥ ७० ॥**

---

ण्ठी- मतभेदप्रादुर्भावात् शब्दोऽप्रमाणमेव' इति। तं व्युत्पादयति प्रत्यक्षेति। विमतिपदं= अप्रमाणत्वविवादास्पदं वचः= वाक्यमपि प्रत्यक्षानुमानोभयमिव मानं= प्रमाणमेव; हेतुदोषाद्यभावात्= कारणे दोषस्य, आदिपदग्राह्यस्य बाधकप्रत्ययस्य चाभावात्। ननु तस्मादेव वाक्यादन्यथार्थग्रहणे यथा तस्याप्रमाणता, तथा यथार्थग्रहणदशायामपीत्याशंस्याऽऽह वाक्यत्वादिति। विमतं=विवादास्पदं वाक्यमप्रमाणं वाक्यत्वात् अन्यथागृहीतार्थकवाक्यवदिति चेत्, तर्हि स्वोक्तेः= त्वदीयस्यैतद्वाक्यस्यापि बाधः स्यात्। एवं लोकव्यवहारादिकं सर्वमपि भज्येत। तर्हि पूर्वं पश्चात् वाक्याच्चान्यथाऽर्थग्रहणं कथमिति चेत्-तत्राह अव्युत्पन्नस्येति। अत्यन्तमव्युत्पन्नस्य कोऽप्यर्थो न भासते; विपरीतव्युत्पत्तिमतश्चान्यथा भासते। संगतिज्ञानस्य= शक्तिज्ञानस्य कारणत्वात्। नन्वव्युत्पन्नत्वं संगतिज्ञानहानिश्चैकमेव। अस्तु। किं तेन। यद्वा अव्युत्पन्नेति भूतकालनिर्देशात् अव्युत्पन्नत्वं पूर्वगृहीतशब्दार्थप्रतिसंधानाभावः। संगतिज्ञानहानिः= प्रथमग्रहणाभावः। यद्वा व्युत्पत्तिः प्रथमं संगतिग्रहणम्। संगतिज्ञानं पश्चात्तनस्मृतिः। तथाच तस्य यथाऽवस्थितस्य हानौ वचसो न यथावत् बोधजनकत्वम्। यथा धूमादिकमपि लिङ्गं व्याप्तिग्रहणात् पुरतः =प्राक् नानुमितिं जनयति; तद्वत्। तावता अस्य= शब्दस्य अवद्यं= दुष्टता अप्रमाणता नास्तीति ॥ ६९ ॥

अव्युत्पन्नस्य बोधं न जनयतीति प्रागुक्तमुपपादयति, तथाऽनङ्गीकारेऽनिष्टापादनेन वक्तीति। वाक् =शब्दः निजं विषयं= स्वार्थं व्युत्पत्तितः प्राक् =शक्तिग्रहं विनैव वक्ती यदि=[वक्ति चेत्, गौरित्युक्तिमात्रेण वक्तु। विभक्त्यन्वयः पदान्तरसंबन्धश्चापेक्षित इति चेत्, तदाऽपि व्युत्पत्त्यभावेऽपि गामानयेति सर्वप्रयोगे स्वविषयं वक्तु।] वक्ति चेत् तिरश्चां बालानाञ्च इतः= प्रयुक्तात् वाक्यात् बोधः कथं न। अर्थज्ञानानपेक्षायामपि प्रकृतिप्रत्ययादिशब्दस्वरूपज्ञानमपेक्षितं चेत्, तत् येषाम्, तेषां बालानामस्तु ॥ किं व्युत्पत्त्येत्यस्य तेषां व्युत्पत्तेरनपेक्षितत्वादित्यर्थः। ननु कदाचित् शब्दात् तत्स्वरूपमात्रं गृह्यते। तत्र व्युत्पत्त्यपेक्षा न दृश्यत इत्यत्राह स्वार्थे इति। शब्दः स्वार्थे स्वात्मकेऽर्थे स्वस्वरूपबोधनविषये तथा चेत् =व्युत्पत्तिनिरपेक्ष इति चेत्; स्वार्थश्शब्दस्तदेति पाठो वा; तदा= व्युत्पत्त्यभाव-

अत्र शब्दस्य बोधकत्वशक्तिसमर्थनेन संतुष्टः कश्चिदाह—'अव्युत्पन्नोऽपि शब्दोऽर्थप्रत्यायकः' इति । तं प्रतिब्रूते वक्तीति । अत्र वक्तीति किं शक्तिमात्रमभिधीयते, किं वा वचनक्रियासंबन्धः ? पूर्वस्मिन् पक्षे नास्माकमपि विप्रतिपत्तिः, शब्दशक्तेर्नित्यत्वात् । उत्तरं पक्षमनुवदति वक्त्री व्युत्पत्तितः प्रागिति । विभक्त्यन्वयाद्यैरिति वचनहेतुः। प्रकृतिप्रत्ययादिभेदेन व्युत्पन्नो हि शब्दोऽर्थं प्रत्याययतीति भावः । अनूदितमर्थं प्रतिक्षिपति किं व्युत्पत्त्येति । स्वयमेव शब्दोऽर्थं प्रत्याययति चेत्, व्युत्पत्तिः निरर्थिकैव स्यात् । अव्युत्पन्नात् शब्दात् तिरश्चां बालमूकानां च बोधः कथं न स्यात् ? ननु व्युत्पन्नानामपि शब्दः स्व(स्वं ?)रूपं प्रतिपादयति; अतः शब्दस्याव्युत्पन्नस्यापि बोधकत्वं स्वस्वरूपे दृष्ट(स्वरूप इवेष्ट?)मिति; तदिदमाह स्वार्थं इति । दूषयति तदपि नेति । तत्र हेतुमाह विपर्यैरिति । अयं भावः—यथा विषयेषु व्युत्पन्नः शब्दोऽर्थमवगमयति, एवं स्वबोधकत्वेनापि व्युत्पन्न. शब्दः स्वात्मानमवगमयति । अन्यथा स्वात्मनि व्युत्पत्त्यभावात् स्वात्मानमपि नावबोधयेत् । उक्तमर्थमनुमानेनाप्युपपादयति अव्युत्पन्नत्वत इति । स्वात्मनि अव्युत्पन्नः शब्दः स्वात्मानं नावगमयेत्, यथा स्वविषये अव्युत्पन्नः शब्दः स्वविषयं नावगमयति । अयमत्र भावः— शब्दस्य द्वयी शक्तिः ; अर्थप्रकाशकत्वं स्वस्वरूपप्रकाशकत्वं चेति । अर्थप्रकाशनशक्तिः स्वयमगृहीता नार्थप्रकाशनाङ्गं भवति । एवं शब्दप्रकाशनशक्तिः स्वयमगृहीता चेत्, न स्वप्रकाशनाङ्गं भवति । तस्मात् शब्दः स्वार्थवत् स्वस्मिन्नपि व्युत्पन्नः स्वप्रतीतिं जनयतीति । अतः शक्तस्यापि शब्दस्य तत्तदर्थप्रकाशनशक्तिप्रतिसन्धानमन्तरेण नार्थप्रतिपत्तिजनकत्वमिति ॥

इति अव्युत्पन्नशब्दबोधकत्ववादभङ्गः ॥ ७० ॥

(296) शब्दः संकेति(त)तोऽर्थं गमयति विमतोऽपीति शास्त्रप्रतीपम् ;
तत्कर्ताऽस्य ह्यसिद्धः, स च दुरधिगमः सृष्टिकालेऽनुमानैः ।

---

श्री— दशायां स्वात्मकार्थवान् शब्दो भवतीति चेदित्यर्थः । तदपि न । अत्र विकल्पनीयम्—स्वरूपबोधकत्वं नाम स्वरूपविषयकप्रत्यक्षजनकत्वं वा, अस्य शब्दस्यात्र स्वस्वरूपमेवार्थ इति स्वरूपग्रहजनकत्वं वेति । नाद्यः; तदन्यैर्विषयैः तस्य =स्वरूपप्रकाशकत्वस्य साम्यात् । घटादय इन्द्रियग्राह्याः सर्वेऽप्यर्थाः प्रत्यक्षे विषयस्य कारणत्वात् स्वरूपप्रकाशका एव । शब्दस्य को विशेष इति । न द्वितीयः; तदापि तस्य शब्दस्वरूपस्य विषयैः तदभिधेयैः साम्यात् । यथाऽभिधेयानां शब्दात् ग्रहणं व्युत्पत्तिं विना न भवति, तथा शब्दानां स्वस्वरूपबोधकत्वमपि, 'स्वं रूपं शब्दस्याशब्दसंज्ञा' इत्यादिवक्तृविवक्षाग्रहादेव भवति ; न तु श्रवणमात्रेण । तदेव तस्य शब्दस्वरूपस्य समभिव्याहृतविभक्त्याद्यन्वयो घटते । इमं तृतीयपादद्वितीयखण्डद्वितीयार्थं गूढत्वात् तुरीयपादेन विवृणोति अव्युत्पन्नत्वत इति । शब्दस्वरूपस्य पदार्थान्वयः व्युत्पत्त्यधीनः अन्वयत्वात् विषयान्वयवदिति । नन्वेवं तृतीयपादोत्तरभागवैयर्थ्यम् । न । अर्थान्तरस्य दर्शितत्वात् । तद्वदित्यत्र यद्वदिति पाठो ग्राह्यः अन्यथा वृत्त्युक्तार्थालाभात् । व्युत्पन्नशब्दो व्युत्पत्तिमत्पुरुषवाच्यपि, व्युत्पत्तिविषयशब्दवाच्यपि । यथायथं ग्राह्यम् ॥ ७० ॥

व्युत्पत्तिर्बोधेऽपेक्षितेत्युक्तम् । व्युत्पत्तिश्च बोधकत्वज्ञानम् । तदेव शक्तिग्रहणम् । अर्वाञ्चः संकेत एव शक्तिरिति मन्यन्ते । वेदे कथमिति विचिन्त्य, ईश्वरसंकेतः शक्तिरिति तार्किका निर्वहन्ति । तं संकेतपक्षं निरस्यति शब्द इति । विमतः शब्दः =संकेतविवादास्पदभूतः सर्वैर्वैदिकशब्दोऽपि संकेततोऽर्थं गमयति =संकेताधीनबोधजनकताकः शब्दत्वात् अर्वादिकानपभ्रंशशब्दवत् ।

**श्रुत्या चेत् प्रत्युतैतत् विभुरपि तनुते वेदतो नामरूपे**
**व्याकृत्यादेर्विरुद्धौ क्रमजनिविलयौ; क्षुद्रभाषासु नैवम् ॥ ७१ ॥**

सर्वस्यापि शब्दस्य संकेतपूर्वकत्वं कश्चिदाह, 'विप्रतिपन्नः शब्दः सांकेतिकः शब्दत्वात् भाषा शब्दवत्' इति । तदेतदनुवदति शब्द इति । परिहरति शास्त्रप्रतीपमिति । 'वाचा विरूपनित्यया' इत्यादिश्रुतिविरुद्धत्वात् कालात्ययापदिष्टमित्यर्थः । संकेतकर्ता किमाधुनिकः, किं विश्वजगत्सृष्टिकालस्थः? आधुनिकश्चेत्, न दृष्टः; ईश्वरश्चेत्, ईश्वरानुमाननिरासेन प्रागेव निरस्त इत्याह तत्कर्तेति । श्रुतिप्रसिद्धः संकेतकर्तेति चेत्, तत् विरुद्धमेव भवतः; 'धाता यथापूर्वमकल्पयत्', 'नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम् । वेदशब्देभ्य एवाऽऽदौ देवादीनां चकार सः ॥' इति नामरूपव्याकरणस्य वेदपूर्वकत्व-श्रवणात्॥ कथं तर्हि काठकादिसमाख्या, कथं व्याहृत्यादे. क्रमादुपदेशः, कथं वा ऋग्वेदादेरनुक्रमादु-पदेशः पुराणेषु व्यवह्रियते?॥ सर्वं चैतदभिव्यक्तिविशेषादित्याह व्याकृत्यादेरिति । [वेदमूलकव्याकृति?] प्रवर्तनविशेषादेरित्यर्थः । उत्पत्तिविलयौ, 'नामरूपं व्याकरोत्' इति श्रुतिविरुद्धौ । तर्हि भाषान्तरेऽप्य-सांकेतिकत्वं स्यादित्याशङ्क्य परिहरति क्षुद्रेति ॥ ॥ इति सर्वशब्दसांकेतिकत्वभङ्गः ॥ ७१ ॥

---

७१- अपभ्रंशानां साधुशब्दोपस्थापनेनार्थप्रत्यायकत्वात् तत्र न पृथक् संकेतः । चैत्रमैत्रादिनामतुल्यः शब्द उदाहरणम् । एवमनूद्य निरस्यति इति शास्त्रप्रतीपमिति । वेदादिबाधितमित्यर्थः। आधुनिकत्वे हि संकेतितत्वम् । सृष्ट्यारम्भे उत्पन्नत्वे च ईश्वरसंकेतितत्वम् । उभयमप्ययुक्तम्; नित्यत्वश्रुतेः । तार्किकेण नित्यत्वश्रुतेरन्यथा तात्पर्यं वर्ण्यते—सर्वस्मिन्नपि सृष्टिकाले धर्माधर्मव्यवस्थापकं किमपि भिन्नभिन्नमस्त्येवेति सामान्याकारेण नित्यत्वमिति । अतो युक्त्याऽपि संकेतितत्वसाधनं निरस्यति तत्कर्तेति । इमे शब्दा न संकेतिताः कर्तुरभावात् । नाऽऽधुनिकः कर्ता, उपलम्भविरोधात् । तदधीन-ज्ञानवत्त्वादस्य; अत एव न मध्यकालिकोऽपि ॥ मध्यकाले तदधीनज्ञानवत्त्वं कथमवगम्यत इति चेत्—दृष्टानुरोधादेव । 'वाचा विरूपनित्यया' इति श्रुत्या च । सृष्ट्यारम्भकालिकपुरुषकृतत्वे साध्ये त्वाह स चेति । सृष्ट्यारम्भकालः कश्चिदस्ति; तत्रेश्वरः सर्वकर्ताऽस्तीति कुसुमाञ्जलिद्वितीयपञ्चमस्तबका-द्युक्तैरनुमानैर्ग्रहणं दुष्करम्; एवमेव सर्वदा लोकसद्भावे बाधकाभावात् । अथ श्रुतिमादाय शंकते श्रुत्येति । श्रुत्या चेत् प्रत्युतैतदिति शंकाभागः । प्रत्युत = त्वदुक्तश्रुतिप्रतीपत्वादिप्रत्यनीकतया एतत् = शब्दः संकेतितोऽर्थं गमयतीत्येतत् श्रुत्या-काठकादिसमाख्या-वेदव्याहृत्याद्युत्पत्तिश्रुत्या सिध्यतीति चेदित्यर्थः । परिहरति विभुरपीति । विभुरपि वेदनिरपेक्षज्ञानसंपन्नोऽपि असदादिवत्, चतुर्मुखादिवच्च वेदतः = वेदेनैव नामरूपे व्याकुरुते; न तु वेदापुरस्कारेण । अतो नामरूपकरणान-न्तरं वेद इति न युक्तम् । अतः व्याकृत्यादेः = नामरूपव्याकरणवाङ्नित्यत्वादेः, प्रवर्तनविशेषे कठादि-कृतत्वादेश्च विरुद्धावेव वेदस्योत्पत्तिविलयौ त्वदभिमतौ । अतो भाषादृष्टान्तेन संकेतितत्वं न साध्यम् । भाषासु बोधकत्वं शक्तिरिति मा भूत् । तासामनित्यत्वेन संकेतसंभवात् ।

श्रुतिप्रसिद्ध इति । एतद्वाक्यपरामर्शी श्रुत्या चेदिति पूर्वपक्षखण्डः, प्रत्युतैतदित्यस्य, तत् विरुद्ध-मेव भवतः इत्यर्थः इति प्रतीयते । प्रत्युतेत्यस्य वाक्यारम्भ इव विधेयपरतयाऽपि प्रयोगो भवति चेत्, तथैवास्तु । एतदिति नपुंसकश्च वृत्ताविव श्लोकेऽपि निर्वाह्यम् । एवमुपरि व्याकृत्यादेरिति पृथग्वाक्यं पञ्चम्यन्तम्; न तु विरुद्धावित्यत्रान्वितम्; व्याकृतिशब्दार्थश्चेह कठादिकृतशाखाप्रवर्तनविशेष इति वृत्तितः प्रतीयते । तथैव युक्तं चेत्, अस्तु तथैव । अथ नामरूपे व्याकरोदिति वाक्यस्याप्युपरि उपास्त-

(297) व्युत्पत्तिः कार्य एव प्रथमसमुदिता वृद्धवाक्यात् प्रवृत्तौ
तत् सर्वास्तत्पराः स्युर्गिर इति यदि, न, क्वापि सिद्धेऽपि सिद्धेः ।
स्याद्वा कार्यैकलक्ष्या प्रथमम् ; इह कुतः शब्दशक्तिं नियच्छेत् ?
तात्पर्यं चान्यथाऽपि ह्यनितरशरणैर्लोकवेदप्रयोगैः ॥ ७२ ॥

एवं व्युत्पत्तिं प्रसाध्य सिद्धे व्युत्पत्तिं साधयितुमारभते । तत्र प्राभाकरमतमनुवदति व्युत्पत्तिरिति । पूर्वं सर्वशब्दानां सांकेतिकत्वं निरस्तम् । अत्र सर्वशब्दानां कार्ये व्युत्पत्तिं वदन् प्राभाकरो निरस्यते (व्युदस्यते)। स ह्येवं मनुते—व्युत्पत्त्यायत्तं शब्दस्य प्रामाण्यम् ; आद्या व्युत्पत्तिः कार्य एव।

---

७१— स्यात् व्याकृतिपदं तदर्थकमेव ; आदिपदेन प्रवर्तनविशेषादिग्रहणमिति युक्तं चेत्—वृत्तिरप्येतदाशयेनैव नेया । श्रुत्या चेदित्यत्र नामकरणमादायापि पूर्वपक्षो भवितुमर्हति । कथम् । इत्थम् । रूपकरणवत् नामकरणस्यापि परमात्मकर्तृकत्वावगमात् वैदिकशब्दानाञ्च प्रायस्तत्तन्नामत्वात् नाम्नां कर्तृसंकेताधीनार्थकत्वस्य सुप्रसिद्धत्वात् सर्वेश्वरेच्छारूपशक्तिरेव स्वीकार्येति। समाधिस्तु-"वेदेन नामरूपे व्याकरोत्" इति वेदानुसारिनामकरणस्यैव तत्रोक्ततया लौकिकडित्थादिनाम्नामिव एकैकव्यक्तिपरत्वं विना भूम्यन्तरिक्षनक्षत्रेन्द्रादिनाम्नामाकृतिपरत्वावगमात् पूर्वस्थितमेव तत्तन्नाम्नस्तत्तदर्थबोधकत्वं पुनरप्यनुमन्यते सृष्ट्यादावित्येव वक्तव्यतया नायं सृष्ट्यादिकालिकः संकेत इति॥७१

एवं संकेतातिरिक्ता बोधकत्वरूपा शक्तिरुक्ता ; अथ शक्यं विचार्यते । वृद्धव्यवहारस्यैव शक्तिग्राहकेषु प्रथमगण्यत्वं संप्रतिपन्नम्। स च प्रथमतः कार्यरूपार्थ एव भवति। अत उपक्रमानुरोधेन कार्य एव शक्तिग्रहः। तथाच सिद्धमात्रेऽवसितमिव यत् वाक्यम् , न तत् अर्थबोधकमिति प्राभाकराः। तन्निरासारम्भः व्युत्पत्तिरिति। अधीतशारीरकप्रथमाधिकरणरचनानां सुगममेवेति नात्र वक्तव्यमस्ति। प्रयोजकवृद्धवाक्याधीना या प्रयोज्यवृद्धस्य प्रवृत्तिः, तत्र व्युत्पित्सोस्तदुभयग्राहिणः प्रथमं कार्य एव व्युत्पत्तिः =शक्तिग्रहः उदेति। तत् = तस्मात् सर्वाः गिरः = पदानि तत्पराः = कार्यपरा एव स्युः इति चेन्न ; वृद्धव्यवहारादेव सिद्धेऽपि व्युत्पत्तेः क्वापि = स्थलान्तरे, भाष्योक्तरीत्या अत्र वक्ष्यमाणरीत्या च सिद्धेः = जायमानत्वात्। इममर्थमुपपादयिष्यति ॥ अथ कस्यचित् प्रथमं कार्य एव व्युत्पत्तिर्भवतीत्येव मन्यताम्—अथापि स कार्य एवेति नियमं न कल्पयिष्यतीत्याह स्याद्वेति। कार्यं हि लिङ्लोट्तव्यप्रत्ययादिमुख्यार्थः। सर्वस्यापि पदस्य कार्यमेवार्थश्चेत्, एकमेव पदं प्रयुज्येत ; किं बहुना। कार्यस्य बहुत्वतः प्रतीतावपि अनेकार्थसंसर्गरूपवाक्यार्थप्रतीतिः कथम्। अतः गवानयनमश्वनयनम् अग्निहोत्रकार्यं ज्योतिष्टोमकार्यमित्येवं विशेषपरत्वस्य कार्यातिरिक्तार्थपरपदसद्भावेनैवोपपाद्यतया कार्यमात्रे शक्तिं कथं व्युत्पित्सुः प्रतीयात्। एवं गवादिसिद्धार्थघटनस्यावश्यकतां मन्वानः तावतैव निर्वाहे कार्यान्वितेऽर्थ एव सर्वेषां शक्तिरिति धियमपि त्यक्ष्यति। लिङादेः कार्यान्वितपरत्वाभावाच्च। कार्यमात्रं हि तदर्थः। अथोच्येत—विशिष्टकार्यांशाभिधायीनि सर्वाणि पदानि। तत्र यथायथं विशेष्यांशो विशेषणांशो वा पदोपस्थाप्यो भवत्विति। तत्रेदं वक्तव्यम्—आवापोद्वापाभ्यां तत्रतत्र गोरूपद्रव्य-आनयनरूपक्रियादिविशेषप्रत्यायेन द्रव्यान्तरक्रियान्तरग्रहणवत् कार्यरूपार्थं विहाय अर्थान्तरमपि पश्चाद्ग्रहीष्यतीति। कार्यातिरिक्तस्थले प्रथमव्युत्पत्त्यसंभवात् अगत्या कार्यपरमेव प्रयोजकवाक्यं परिगृह्णाति। सर्वमिदं व्युत्पित्सुर्विवेकी विमृश्यत्येवेति विशिष्टकार्यांश एवार्थ इति नियममपि स त्यजेदेव। अतः इह = कार्ये शब्दशक्तिं कुतः संकोचयेत्। तात्पर्यञ्चेति। नरानयनार्थ-

वृद्धव्यवहारो हि व्युत्पत्तिबीजम्; प्रयोजकवृद्धो हि गामानयेति वाक्यं प्रयुङ्क्ते; प्रयोज्यश्चाऽऽनयति; व्युत्पित्सुरन्योऽनेन वाक्येनानुमानसध्रीचा व्युत्पाद्यते। इत्थं ह्यनुमिनोति व्युत्पित्सुः—'विप्रतिपन्ना प्रयोज्यप्रवृत्तिः कार्यताबुद्धिपूर्विका चेतनप्रवृत्तित्वात् अस्मत्प्रवृत्तिवत्। विप्रतिपन्ना कार्यताबुद्धिः प्रयोजकवाक्यजन्या तदन्वयव्यतिरेकानुविधायित्वात्। यत् यदन्वयव्यतिरेकानुविधायि, तत् तज्जन्यम्, यथा संप्रतिपन्नम्' इति। एवं सामान्यतः कार्यपरत्वे प्रयोजकवाक्यस्य निश्चिते, 'गामानय, गां बधान, अश्वमानय, अश्वं बधान' इत्यादिषु वाक्येषु आवापोद्वापवशात् विशेषव्युत्पत्तिरपि जायते। अतः कार्य एव शब्दानां व्युत्पत्तिः। तस्मान्न सिद्धरूपे ब्रह्मणि वेदान्तवाक्यानां प्रामाण्यमिति। एतदनुभाषते व्युत्पत्तिरिति। परिहरति नेति। तत्र हेतुमाह क्वापीति। सिद्धे व्युत्पत्तिप्रकार. उपरितनग्रन्थे विस्तरेण प्रतिपादयिष्यते। तत् तावत् तिष्ठतु; अन्वारुह्यापि वदामः। कार्य एव व्युत्पत्तिरस्तु; तथापि सिद्धेऽपि तात्पर्यं स्यादित्याह स्यादिति। अयं भावः—चत्वारो ह्यर्थाः शब्दस्य, मुख्य-गौण-लाक्षणिक-तात्पर्य-वृत्तिभेदेन। तत्र मुख्यवृत्तेरेकत्रावस्थानेऽपि तात्पर्यवृत्तिरन्यत्रापि संक्रमते। अन्यथा कथमृत्विक्पत्नी-यजमानादिभेदेन कर्तृविभागः? एककपालपुरोडाशादिभेदेन करणविभागः? स्वर्गस्वाराज्यपशु-पुत्रादिभेदेन फलविभागः? [अत.?] कार्यशेषतया सिद्धस्यापि कार्यवाक्येषु तात्पर्यभूमित्वात् व्युत्पत्ते. कार्यपरत्वनिर्बन्धो निर्निबन्धनः॥ इति सर्वशब्दानां कार्यपरत्वभङ्गः॥ ७२॥

(298) कोऽसौ, पाञ्चाल इत्याद्यनुभवतु वचो सिद्धतात्पर्ययोगम्;
शास्त्रं कार्यैकशेषं गमयति निखिलं सिद्धमित्यर्धरम्यम्।

---

व्यी— सिंहादिगौणलाक्षणिकपदघटितवृद्धव्यवहारात् व्युत्पत्तौ गौणत्वाद्यवधारणं व्युत्पित्सोः कथम्। विध्यर्थोऽपि क्वचिदप्रवृत्तप्रवर्तनम्, प्रवृत्तप्रवर्तनं क्वचिदित्यादिः ग्राह्यो भवति। तद्वदत्र किं विशिष्टकार्यांशत्वं मुख्यम्; उत लाघवात् विशिष्टपदार्थांशत्वम्, अथवा किञ्चिदर्थमात्रमित्यपि चिन्तयेदिति। अतः शब्दस्य कुत्रार्थे तात्पर्यमिति बह्वावापोद्वापग्राह्यमिति स्थिते प्रथमजातापातग्रह-मेवोपक्रमन्यायेन मुख्यं मन्यत इत्युक्तमिति। तात्पर्यं नाम वक्तृविवक्षा, सा शक्य इव गौणा-दिष्वपि। ननु कोऽयं तुरीयस्तात्पर्यार्थ इति चेत्—अस्तु व्यंग्यार्थः तत्तद्वाक्यभावार्थो वा।

ननु वृद्धानां व्यवहाराः बहवो लक्ष्यन्ते। न च ततो व्युत्पत्तिर्दृश्यते। अतो व्युत्पत्तिहेतुत्व-मस्यासिद्धम् इत्यत्र पुनः हिशब्दपूर्वकं विवक्षितं व्यवहारं प्रसिद्धमाह प्रयोजकवृद्धो हीति। सध्रीचा= सहितेन। कार्यशेषतया सिद्धस्यापीति। यथा कार्यमर्थं परित्यज्य कार्यशेषभूतसिद्धग्रहणम्, तथा शेषभूतसिद्धस्येवाशेषसिद्धस्यापि ग्रहणं युक्तमिति भावः॥ एवं चतुर्थपादेन कार्यघटितसिद्धपरत्व-मिव कार्याघटितसिद्धपरत्वमप्युपपादितम्॥ ७२॥

एवं कार्य एव प्रथमव्युत्पत्तिरिति पक्षमभ्युपगम्यैव शुद्धसिद्धपर्यवसानमपि वाक्यस्य सुविमर्श-मित्युपपादितत्वात् भाष्योपदिष्टयुक्तिपर्यन्तप्रतीक्षां विनैव शान्तः, समन्वयाधिकरणपूर्वपक्षमाद्रिय-माणः प्राभाकरः शंकते, सिद्धेऽपि व्युत्पत्तिसंभवेऽपि शास्त्रस्य प्रवृत्तिनिवृत्त्यन्यतरपरत्वात् कार्य-परत्वमेव स्वीकार्यमिति। तत्पक्षमनूद्य प्रतिक्षिपति कोऽसाविति। कोऽसौ इति कस्यचित् प्रश्नः। पाञ्चाल इति परस्योत्तरम्। तावतैव जिज्ञासाशान्त्या कार्यं किञ्चिन्नान्विष्यते। तत्र कार्यपर्यवसानं नास्ति। शब्दस्य बोधकत्वमानुभविकमनपलपनीयमिति सिद्धमात्रपरत्वमप्यस्तु लौकिके वाक्ये। शास्त्रं

**यत्र ज्ञानं पुमर्थस्तदवधि वचनं तत्र ; बाधोऽपि नास्मिन् ;**
**नातो नाट्यादिनीतिर्निधिवचननयात् ;** अन्यथा स्यात् विरोधः ॥ ७३ ॥

इत्थं कार्य एव व्युत्पत्तिरिति नियमाङ्गीकारेण कार्यशेषतया सिद्धेऽपि तात्पर्यमुक्तम् । इदानीं सिद्ध एव प्राधान्येन तात्पर्यं संभवति ; कोऽसौ पाञ्चाल इत्यादिषु तथा दृष्टेरिति वदन्तं सिद्धपरवादिनं तत्पक्षानुवादपूर्वकं **प्राभाकरं(रः ?)** प्रतिक्षिपति **कोऽसाविति** । अयमस्य भावः--लौकिकवाक्यं सिद्धपरमस्तु ; वैदिकवाक्यं सर्वमपि कार्यपरमेव ; सिद्धं तु कार्यशेषतया वदतीति । तत् दूषयति **अर्धरम्यमिति** । कानिचित् सिद्धपराणि कानिचित् कार्यपराणीति विभागस्य दर्शनादर्धरम्यत्वमुच्यते । पुरुषार्थपर्यवसायित्वं हि वाक्यस्य प्रामाण्ये तन्त्रम् ; तच्च, 'तव गृहे निधिरस्ति' इत्यादौ प्रतिपत्तिमात्रेण ; ज्योतिष्टोमादिवाक्येषु स्वर्गादिफलप्रतीत्या । अतो ब्रह्मज्ञाने, स्वरूपेण पुरुषार्थत्वात् न पुरुषार्थान्तरापेक्षा–तर्हि बालोपच्छन्दनादिवाक्यवत् अर्थनथार्थं न स्यादिति चेत्— न स्यात् ; बाधाभावेन स्वतःप्रामाण्यस्यैव न्यायप्राप्तत्वात् । अत एव न नाट्यादिनीतिः । नाट्यादावर्थानुकारमात्रेण प्रीतिः । नात्रानुकारप्रतीत्या प्रीतिः ; अपि तु स्वगृहे(ह ?)निहितनिधिसद्भावप्रतीत्या । इत्थं बाधविधुरेष्वर्थतत्त्वेषु प्रामाण्यानङ्गीकारे कार्यवाक्येऽपि प्रामाण्यं न स्यादिति कण्ठगतजीवितमेव वेदप्रामाण्यमिति भावः ॥

**इति विधिशेषत्वमन्तरेण शास्त्रस्यापि प्रामाण्यम् ॥७३॥**

**(299) कस्मैचित् ज्ञापयैतत् त्वमिति परकृतां वीक्ष्य चेष्टां तदन्यः**
**तस्मै ब्रूते ; ततस्तत् गमकमिह वचो वेत्ति चेष्टाविदन्यः ।**

---

७३—त्वखिलमपि सिद्धं वदन् गमयेत्, कार्यशेषतयैव तत् गमयेदिति। इदं निरस्यति इत्यर्धरम्यमिति। कुत्रापि सिद्धप्राधान्यं नास्तीति पूर्वमुक्तम् । तत् अरम्यम् । इदानीं शास्त्रमात्रे तदुक्तेरिदमर्धरम्यम् । हेतुमाह यत्रेति । प्रवृत्तिनिवृत्त्यन्यतरपरत्वमावश्यकमिति किमर्थमुच्यते ॥ अन्यथा निष्प्रयोजनं स्यात् तज्जन्यज्ञानमिति चेत्—तर्हि शास्त्रस्य प्रयोजनपर्यवसायिज्ञानजनकत्वमावश्यकमित्युच्यताम्, किमन्येन । यदि ज्ञानाधीनप्रवृत्त्यादिपरम्परया पुरुषार्थपर्यवसायित्वेऽपि सफलता, तर्हि ज्ञानस्यैव साक्षात् पुरुषार्थत्वे कथं नैष्फल्यम् । अतो ज्ञानस्यैव पुमर्थत्वे तदवध्येव वचनम्—तावत्येव विश्रमः । बाधोऽपि नास्मिन् । बालोपच्छन्दनवाक्यवत् बाधितार्थकत्वादर्शनात् । ज्ञाने गृहीतस्य प्रामाण्यस्याभंगात् । ननु नाट्यस्थलेऽर्थबोधं विनाऽपि प्रीतिरस्ति, तथाऽस्तु इति चेन्न ; वैषम्यात् । नाट्यं हि शब्दवत् नार्थबोधकम् । इह त्वर्थानुभव इति । अन्यथा सर्वं वेदवाक्यं संगीतमात्रं भवेत् ॥

प्राभाकरमिति द्वितीयान्तपाठोऽशुद्धः। नेदं सिद्धपरवादिनमित्यस्य विशेष्यम्। प्राभाकरस्यातथा-
त्वात्। पूर्वपक्षभागमात्रावतारितेयम्। दूषणभागमुपरि अवतारयिष्यति। प्राभाकरः सिद्धपरत्वाद्युक्त-
मर्थांशे स्वीकृत्य शास्त्ररूपार्थान्तरे तत् प्रतिक्षिपति पूर्वार्धे उत्तरार्धे तन्निरासः ॥ ७३ ॥
सिद्धपरवाक्यस्य कार्यं विना स्वार्थे पर्यवसानं कोऽसौ पाञ्चाल इत्यत्र दर्शितम् । अथ प्राथ-
मिकव्युत्पत्तिरपि सिद्धेऽपि भवतीति परमार्थप्रदर्शकभाष्यार्थमाह कस्मैचिदिति । पूर्वार्धे प्राभाकर-
दर्शितरीत्या प्रौढस्य वाक्यादर्थबोधः सिद्धमात्रे प्रदर्श्यते । उत्तरार्धे शैशवेऽपि प्रथमं भवन्ती पदे
व्युत्पत्तिः प्रदर्श्यते । कस्मैचिदिति पदं ज्ञापयेत्यत्रैव परकृतामित्यत्राप्यन्वयार्हम् । एकः कश्चिदर्थं

**तत्तद्वाच्येषु शब्दैर्हितविदभिहितैरङ्गुलीयोगपूर्वं**
**जानन्नन्यत्र तत्तत्सहितजनकृतिं शिक्षणार्थामवैति ॥ ७४ ॥**

इदानीम् आद्यव्युत्पत्तिः प्रकारत्रयेण सिद्धार्थेऽपि कर्तुं शक्येति वक्तुमारभते **कस्मैचिदिति** एषा किल काचित् प्रक्रिया, 'पुत्रस्ते जातः' इति देवदत्ताय ज्ञापयेति केनचिच्चेष्टया चोद्यमानः कश्चित् गत्वा तस्मै देवदत्ताय तं वक्ति(वदति) ; तेन सह गतः कश्चिदन्यो व्युत्पित्सुर्मूकवत् चेष्टाविशेषज्ञस्तद्वाक्यं श्रुत्वा व्युत्पद्यते, एतद्वाक्यं पुत्रजन्मरूपार्थप्रतिपादकमिति । तदिदमाह **ततस्तदिति** । प्रकारान्तरेण प्रतिपदव्युत्पत्तिनिरूपणेन, सिद्धे व्युत्पत्तिं दर्शयति **तदिति** ।(?) तत्तच्छब्दवाच्येषु शशिपशुपक्षिमृगादिषु अम्बातातमातुलादिभि**र्हितविद्भि**रभिहितैः शशिपश्वादिशब्दैरसाकमङ्गुलीनिर्देशपूर्वकं(?) **जानन्**— प्रतिपद्यमानस्तत्तत्सहितप्रवृत्तिम**न्यत्रापि शिक्षणार्थां**—व्युत्पादनार्थामवैति । अयमत्र क्रमः— शिक्षको जनः कञ्चित्कालमङ्गुलीनिर्देशपूर्वकं तेषुतेष्वर्थेषु तत्तच्छब्दान् प्रयुङ्क्ते ; पश्चादङ्गुलीनिर्देशमन्तरेण वदति । व्युत्पित्सुः तत् शृणोति । चेष्टापरिज्ञानवत्त्वात् व्युत्पादकानां प्रवृत्तिं व्युत्पादनार्थां जानाति ; ततश्चेष्टामन्तरेणापि शब्दमात्रादेव सम्प्रतिपत्तिं दृष्ट्वा शब्दस्य बोधकत्वशक्तिं जानाति । अयं शब्द इममर्थं बोधयति । शब्दार्थयोः संबन्धान्तरं न दृश्यते; संकेतयिता चान्यो न दृष्टः ; परिशेषात् बोध्यबोधकभावेनैवायं शब्द इममर्थं बोधयतीति व्युत्पद्यते ॥ **इति सिद्धे आद्यव्युत्पत्तिप्रकारद्वयम् ॥ ७४ ॥**

---

७१— चेष्टया ज्ञापयति । यस्मै ज्ञापयति, स इव कश्चिदन्यः इयं चेष्टा एतदर्थसूचिकेति चेष्टावित् तदा तां पश्यति; अथच मन्यते—कस्मैचिदीदृशार्थकथनार्थमयं प्रेर्यते, अतो यदि तमनुगच्छेयम्, तद्वाक्यं श्रुत्वा अस्यायमर्थ इति व्युत्पद्येयेति । ततस्तमनुगच्छति । तेन च तत्र गत्वा, पुत्रस्ते जातः इति वाक्ये प्रयुक्ते अस्य वाक्यस्यायमर्थं इति अयं तदर्थं निश्चिनुत इत्यनुभवसिद्धम् । अतः सिद्धपरवाक्यात् व्युत्पत्तिः सिद्धा । ततस्तदिति । ततस्तत् वचः इह=एतस्मिन्नर्थे गमकतया वेत्तीत्यर्थः । भाष्ये, 'पिता ते सुखमास्ते' इति सिद्धपरं वाक्यमुदाहृतम् । अत्र तु वक्ष्यमाणं पुत्रजन्मवाक्यमेव वृत्तावुक्तम् । पदव्युत्पत्तिः प्रदर्श्यते तत्तदिति । अयं शिशुरित्थं व्युत्पद्यतामिति हितैषिभिः हितं वक्तुं जानद्भिश्च बन्धुभिः मातापितृपशुपक्ष्यादिविषयेषु अङ्गुलीनिर्देशपूर्वकं बहुकृत्वः प्रयुक्तैः पश्चादंगुलीनिर्देशं विनाऽपि तत्तद्वस्त्वभावस्थलेऽपि च प्रयुक्तैः मात्रादिशब्दैः श्रुतैः तत्तदर्थं स शिशुः अङ्गुलिनिर्देशरहिते, तत्तद्वस्तुरहिते च स्थलेऽपि जानाति । अङ्गुलिप्रदर्शनादेः सर्वविधवस्तुशब्दसाधारणत्वात्, पश्चादंगुलिनिर्देशत्यागाच्च तत्यागेन अन्वयव्यतिरेकनियमवशात् शब्दतोऽर्थस्यैव ग्रहणानुभवात्, 'एवं शिक्षणमेवैभिः कृतम्' इति, 'अस्य शब्दस्यास्यार्थस्य च संबन्धविशेषोऽस्ति' इति च चिन्तयति। अथ विमर्शशक्तिसंपत्तिदशायां क्रमेण संकेतादेः संबन्धत्वमुपेक्ष्य बोधकत्वं संगतिरिति निश्चिनोतीति। यादृच्छिकव्युत्पत्त्यपेक्षया शिक्षणाधीनव्युत्पत्तिर्बलीयसी; तदेकपरत्वात्, मुख्यार्थदर्शित्वाच्च ॥

प्रकारत्रयेणेति उत्तरश्लोकस्यापि ग्रहणेन । अत्र वृत्तौ उत्तरार्धप्रतीकग्रहणानन्तरस्थितं वाक्यं तत्तत्पदविवक्षितप्रदर्शकमपि नान्वयक्रमानुसारि । अंगुलीनिर्देशपूर्वमित्यस्य अभिहितैरित्यत्रान्वयस्य वक्तव्यत्वात् । साकमित्यस्य मूले अभावात् । जानन् इत्यस्य कर्मनिर्देशात् । अन्यत्रापि शिक्षणार्थामित्येवान्वये उपरितनवृत्तिसूक्तिविरोधाच्च । अन्वयश्च श्लोकार्थे दर्शितः । अन्यत्रापि जानन्नित्यन्वयः । पाठो निरीक्ष्यः ॥ ७४ ॥

(800) कश्चित् कस्यापि पुंसः सुतजनिमिह तत्प्रीतिकृत्त्वं च जानन्
तज्जन्मोक्तिप्रहृष्टे पितरि सुतजनेर्वेत्ति तद्वाच्यभावम् ।
शक्यं तद्धर्षहेतुः स इति नियमनं सन्निधानादियुक्तैः
आसीदत्सुप्रसूत्याद्यनियतिकथनं कार्यवाक्येऽपि शक्यम् ॥ ७५ ॥

अयं चान्यः प्रकारः-देवदत्तस्य पुत्रे जाते कश्चित् गत्वा, 'पुत्रस्ते जातः' इति वदति। तत् पश्यन् बालकः तन्मुखविकासेन तस्यानुकूलबुद्धिं जानन् एतद्वाक्यं सन्निहितानुकूलरूपपुत्रजन्मप्रतिपादकमिति व्युत्पद्यते, तदिदमाह **कश्चिदिति**। अयमत्रान्वयः-कस्यापि पुंसः **सुतजनि**-पुत्रजननं तस्य च **प्रीतिकृत्त्वं**-प्रीतिहेतुत्वं च जानन् तज्जन्मवाक्यप्रहृष्टे पितरि **सुतजनेः** पुत्रजननस्य **तद्वाच्यभावं** शब्दवाच्यभावम् **वेत्ति**—जानाति । बहुष्वपि हर्षहेतुषु सत्सु पुत्रजननमेव हर्षहेतुरिति विशेषनियमनं सन्निधानादिलिङ्गैः शक्यम्। आसीदत्सु बहुषु प्रीतिहेतुषु सुखप्रसूत्याद्यनि(प्रसूत्यादिष्वनि)यतिकथनं कार्यव्युत्पत्तावपि शक्यते वक्तुम्-तत्राप्यवान्तरबहुव्यापारसंभवादनियतिर्वक्तुं शक्या॥ **इति सिद्धार्थेऽप्याद्यव्युत्पत्तितृतीयविधा॥**

---

श्री-अथ तृतीयःप्रकारः।प्राभाकरोक्तरीत्या वक्तृश्रोतृवृद्धद्वयसंनिधान एव व्युत्पित्सोः सिद्धेऽर्थे प्रतीतिसंभवं भाट्टोक्तोदाहरण एव प्रदर्श्य तत्र प्राभाकरदूषणं परिहरति कश्चिदिति। अव्युत्पन्नः कश्चित् चैत्रस्य पुत्रो जात इत्यजानात्। लोके पुत्रजन्म पितुर्मोदकरमित्यपि स प्रागेव ज्ञातवान्। स चैत्रसमीपं गच्छति। तदैव चैत्रीयः कश्चिदागत्य, 'चैत्र! पुत्रस्ते जातः' इति वदति। श्रवणमात्रेण चैत्रस्य मुखप्रसादो जायते। तं दृष्ट्वाऽयं व्युत्पित्सुः पुत्रजननं तद्वाक्यस्यार्थ इति निश्चिनोतीति। सुतजनिम् = पुत्रोत्पत्तिं जानन्। तस्य शिशोः इह = इहलोके सर्वेषां तत्प्रीतिकृत्त्वं सुतजन्मनः प्रहर्षोत्पादकत्वं च प्रागेव जानन्। पितरि तत्समयागतपुरुषमुखोद्गतया सुतजन्मोक्त्या प्रहृष्टे सति,सुतजनेः = पुत्रजन्मनः तदुक्तिवाच्यतां जानातीत्यर्थः। ननु हर्षहेतुषु धनागमादिषु लोके बहुषु सत्सु अयमेव वाच्य इति कथं निश्चय इत्यत्राह शक्यमिति। संनिधानं = लाभान्तरापेक्षया संनिहितत्वम्। आदिना शिशुसूचकचेष्टादिग्रहणम्। तद्बलात् नियमनं = लाभान्तरव्यावर्तनेन एतद्व्यवस्थापनं शक्यम्। ननु पुत्रविषयकत्वमस्तु-अथापि सुलग्नप्रसवसुखप्रसवादीनामपि संनिहितत्वात् अर्थनियतिर्नास्तीत्याशंकायामाह आसीददिति। सुप्रसूतिः-सुखप्रसवः। आसीदतां-संनिहितानां सुप्रसूत्यादीनां मध्ये किं स्यादित्यनियमस्त्वया कथ्यते। गामानयेति कार्यवाक्येऽपि, गवानयनं वा गोदोहनं वा क्षीरदोहनं वा क्षीरार्थयतनं चेत्येवमनियम इति कथनं भवितुमर्हति। यद्वा कार्यवाक्येऽपीत्यस्य, पुत्रो जातः पश्य गत्वेति कार्यवाक्येऽपीति प्रकृतविषयपरत्वं युक्तम्। तदैव पदान्तरान्वयात्। सुप्रसूत्यादिवदिति वतिप्रत्ययाभावात्। चतुर्थपादे आसीददिति सुप्रसूत्यादिविशेषणम्। वृत्तौ विगृह्य विवरणम्। अतस्तत्रैव आसीदत्सु इति पृथक् पदं न मन्तव्यम्। वृत्तौ सुखप्रसूत्याद्यनियतीत्यत्र सुखप्रसूत्यादिषु अनियतीति पाठः स्यात् ॥ ७५॥

एवं यादृच्छिकव्युत्पत्तिं कार्यविपर्यिणीं प्राभाकरदर्शितामनुसृत्य सिद्धपरवाक्यादपि यादृच्छिकव्युत्पत्तिं सर्वप्रथमां शिक्षणार्थहितजनमूलां पदव्युत्पत्तिश्च भाष्योक्ताम् अथ भाट्टदर्शितां प्राथमिकसिद्धव्युत्पत्तिश्च प्रदर्श्य द्वितीयादिव्युत्पत्तिमपि कार्यबोधकवाक्यात् दर्शयति। तथा च, "शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्यात् व्यवहारतश्च । वाक्यस्य शेषात् विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः" इत्यत्र व्यवहार एकः प्राभाकरदर्शितः। सोऽस्माकमप्यतिशयेनास्तीति प्रादर्शि। अन्यत् सर्वमपि कार्यान्वयं विनैव सिद्धार्थव्युत्पादकमिति अत्र दर्शितं भवति। शब्द-

**तत्तद्वाच्येषु शब्दैर्हितविदभिहितैरङ्गुलीयोगपूर्वं**
**जानन्नन्यत्र तत्तत्स्वहितजनकृतिं शिक्षणार्थामवैति ॥ ७४ ॥**

इदानीम् आद्यव्युत्पत्तिः प्रकारत्रयेण सिद्धार्थेऽपि कर्तुं शक्येति वक्तुमारभते **कस्मैचिदिति** एषा किल काचित् प्रक्रिया, 'पुत्रस्ते जातः' इति देवदत्ताय ज्ञापयेति केनचिच्चेष्टया चोद्यमानः कश्चित् गत्वा तस्मै देवदत्ताय तं वक्ति(वदति) ; तेन सह गतः कश्चिदन्यो व्युत्पित्सुर्मूकवत् चेष्टाविशेषज्ञस्तद्वाक्यं श्रुत्वा व्युत्पद्यते, एतद्वाक्यं पुत्रजन्मरूपार्थप्रतिपादकमिति । तदिदमाह **ततस्तदिति** । प्रकारान्तरेण प्रतिपद्व्युत्पत्तिनिरूपणेन, सिद्धे व्युत्पत्तिं दर्शयति **तदिति** ।(?) तत्तच्छब्दवाच्येषु शशिपशुपक्षिमृगादिषु अम्बातातमातुलादिभि**र्हितविद्भिरभिहितैः** शशिपश्वादिशब्दैस्साकमङ्गुलीनिर्देशपूर्वकं(!) **जानन्**— प्रतिपद्यमानस्तत्तत्स्वहितप्रवृत्तिम**न्यत्रापि शिक्षणार्थां**—व्युत्पादनार्थामवैति । अयमत्र क्रमः— शिक्षको जनः कश्चित्कालमङ्गुलीनिर्देशपूर्वकं तेषुतेष्वर्थेषु तत्तच्छब्दान् प्रयुङ्क्ते ; पश्चादङ्गुलीनिर्देशमन्तरेण वदति । व्युत्पित्सुः तत् शृणोति । चेष्टापरिज्ञानवत्त्वात् व्युत्पादकानां प्रवृत्तिं व्युत्पादनार्थां जानाति ; ततश्चेष्टामन्तरेणापि शब्दमात्रादेव स्वप्रतिपत्तिं दृष्ट्वा शब्दस्य बोधकत्वशक्तिं जानाति । अयं शब्द इममर्थं बोधयति । शब्दार्थयोः संबन्धान्तरं न दृश्यते; संकेतयिता चान्यो न दृष्टः ; परिशेषात् बोध्यबोधक भावेनैवायं शब्द इममर्थं बोधयतीति व्युत्पद्यते ॥ **इति सिद्धे आद्यव्युत्पत्तिप्रकारद्वयम् ॥ ७४ ॥**

---

टी— चेष्टया ज्ञापयति । यस्मै ज्ञापयति, स इव कश्चिदन्यः इयं चेष्टा एतदर्थसूचिकेति चेष्टावित् तदा तां पश्यति; अथच मन्यते—कस्मैचिदीदृशार्थकथनार्थमयं प्रेर्यते, अतो यदि तमनुगच्छेयम्, तद्वाक्यं श्रुत्वा अस्यायमर्थ इति व्युत्पद्येयेति । ततस्तमनुगच्छति । तेन च तत्र गत्वा, पुत्रस्ते जातः इति वाक्ये प्रयुक्ते अस्य वाक्यस्यायमर्थ इति अयं तदर्थं निश्चिनुत इत्यनुभवसिद्धम् । अतः सिद्धपरवाक्यात् व्युत्पत्तिः सिद्धा । ततस्तदिति । ततस्तत् वचः इह=एतस्मिन्नर्थे गमकतया वेत्तीत्यर्थः । भाष्ये, 'पिता ते सुखमास्ते' इति सिद्धपरं वाक्यमुदाहृतम् । अत्र तु वक्ष्यमाणं पुत्रजन्मवाक्यमेव वृत्तावुक्तम् । पदव्युत्पत्तिः प्रदर्श्यते तत्तदिति । अयं शिशुरित्थं व्युत्पद्यतामिति हितैषिभिः हितं कर्तुं जानद्भिश्च बन्धुभिः मातापितृपशुपक्ष्यादिविषयेषु अङ्गुलीनिर्देशपूर्वकं बहुकृत्वः प्रयुक्तैः पश्चादंगुलीनिर्देशं विनाऽपि तत्तद्वस्त्वभावस्थलेऽपि च प्रयुक्तैः मात्रादिशब्दैः श्रुतैः तत्तदर्थं स शिशुः अङ्गुलिनिर्देश-रहिते, तत्तद्वस्तुरहिते च स्थलेऽपि जानाति । अङ्गुलिप्रदर्शनादेः सर्वविधवस्तुशब्दसाधारणत्वात्, पश्चादंगुलिनिर्देशत्यागाच्च तत्यागेन अन्वयव्यतिरेकनियमवशात् शब्दतोऽर्थस्यैव ग्रहणानुभवात्, 'एवं शिक्षणमेवैभिः कृतम्' इति, 'अस्य शब्दस्यास्यार्थस्य च संबन्धविशेषोऽस्ति' इति च चिन्तयति । अथ विमर्शशक्तिसंपत्तिदशायां क्रमेण संकेतादेः संबन्धत्वमुपेक्ष्य बोधकत्वं संगतिरिति निश्चिनोतीति । यादृच्छिकव्युत्पत्त्यपेक्षया शिक्षणाधीनव्युत्पत्तिर्बलीयसी; तदेकपरत्वात्, मुख्यार्थदर्शित्वाच्च ॥

प्रकारत्रयेणेति उत्तरश्लोकस्यापि ग्रहणेन । अत्र वृत्तौ उत्तरार्धप्रतीकग्रहणानन्तरस्थितं वाक्यं तत्तत्पदविवक्षितप्रदर्शकमपि नान्वयक्रमानुसारि । अंगुलीनिर्देशपूर्वमित्यस्य अभिहितैरित्यत्रान्वयस्य वक्तव्यत्वात् । साकमित्यस्य मूले अभावात् । जानन् इत्यस्य कर्मानिर्देशात् । अन्यत्रापि शिक्षणार्था-मित्येवान्वये उपरितनवृत्तिसूक्तिविरोधाच्च । अन्वयश्च श्लोकार्धे दर्शितः । अन्यत्रापि जानन्नित्यन्वयः । पाठो निरीक्ष्यः ॥ ७४ ॥

(302) व्युत्पाद्यं नाप्रतीतं प्रसजति विदिते नैरपेक्ष्यं श्रुतीनाम्
इन्द्राद्यर्थे पदानामिति दुरधिगमा नामतेत्यप्ययुक्तम् ।
अप्रत्यक्षेषु सिंहप्रभृतिषु वचनैः कैश्चिदारण्यकोक्तैः
व्युत्पद्यन्ते हि पौराः ; स्वयमपि च वदन्त्येवमत्रापि वार्ता ॥ ७७ ॥

अस्तु प्रत्यक्षेषु पदार्थेषु एतादृशी व्युत्पत्तिः । अप्रत्यक्षेष्विन्द्रादिषु सिद्धेषु व्युत्पत्तिर्न युज्यत इत्याशङ्कते व्युत्पाद्यमिति । किमप्रतीते व्युत्पत्तिः, उत प्रतीते ? अप्रतीतं तावत् व्युत्पाद्यं न प्रसजति— न भवतीत्यर्थः । प्रतीते व्युत्पाद्ये, प्रतीतत्वादेवाप्राप्तार्थप्रत्यायकश्रुतिनैरपेक्ष्यप्रसङ्गः । इति—इत्थं सति, इन्द्राद्यर्थे पदानां नामता दुरधिगमेति । एतदयुक्तमित्याह इत्यपीति । अयुक्तिमेवोपपादयति अप्रत्यक्षेष्विति । 'सिंहादिष्वागमात् व्युत्पत्तिर्नास्ति ; अपितूपमानात् । अत एवोक्तमुपमानवादिभिः, "सादृश्यस्यानिमित्तत्वात् निमित्तस्याप्रतीतितः। समयो दुर्ग्रहः पूर्वं शब्देनानुमयाऽपि वा ॥" इति' [इति ?] चेत्—दुरुक्तं तु तत् ; तादृशस्योपमानस्यैवाभावात् ; अन्यथा वैदिकेन्द्रादिशब्दानां नित्याव्युत्पत्तिप्रसङ्गात्। नित्या-

७७-स्यापि अप्रत्यक्षत्वेऽनुवर्तमान एव वाक्यविशेषात् व्युत्पत्तिदर्शनात् तद्रीत्या व्युत्पत्तिरक्षतेत्याह व्युत्पाद्यमिति । अप्रतीतं=प्रमाणान्तराज्ञातं यत् तत् न व्युत्पाद्यं प्रसजति =अव्युत्पाद्यत्वमापद्यते । तस्य व्युत्पाद्यत्वानापत्तिरित्युक्तावपि व्युत्पाद्यत्वाभावापत्तावेव तात्पर्यम् । भवतीत्यर्थसिद्धत्वात् प्रसजतीत्यस्योत्तरत्रान्वयो वा । सोपि प्रसंग इति पदेन ज्ञापितः । ननु तर्हि स्वर्गेन्द्रादिशब्दानां लोकप्रसिद्धसुख-राजादिपरत्वमेवास्त्वित्यत्र दोषमाह विदिते इति । अप्राप्ते हि शास्त्रमर्थवदिति भावः । पदानामिन्द्राद्यर्थविषये नामता=वाचकता, इति =उक्तयुक्त्या दुरधिगमा =दुर्ग्रहेति । निरस्यति इत्यप्ययुक्तमिति । सिंहप्रभृतिष्विति प्रभृतिपदेन गवयादिग्रहणम् । तत्र हि, 'गोसदृशो गवयः' इति आरण्यकवचनं ग्रामीणस्य व्युत्पादकम् । ननु गोसादृश्यस्य गवयशब्दप्रवृत्तिनिमित्तत्वाभावात् प्रवृत्तिनिमित्तस्य च गवयत्वस्यारण्ये गवयदर्शनात्परमेव ज्ञेयत्वात् कथं व्युत्पद्यन्ते सर्वेऽपिवा-दृष्टे इति चेत्—तन्न; गवयत्वादिदर्शनात् प्रागेव स्वयमपि गवयादिव्यवहारं कुर्वन्ति हि । अतो जात्यदर्शनेऽपि गोसादृश्योपलक्ष्या काचिदस्तीति ज्ञानं भवेदेव । किञ्चाकृतिव्यतिरिक्तजात्यभावात् आकृतेश्च गोसादृश्यपदेनैव गृहीतत्वात् जातिग्रहणमप्यस्त्येव । किं बहुना । सर्वोऽपि हि वाक्यार्थः अपूर्व एव। तत्र प्रत्येकपदानामर्थस्य गृहीततया आकांक्षादिबलात् विशिष्टापूर्वार्थप्रतिपत्तिः। तथा, 'यन्न दुःखेन संभिन्नम्' इति वाक्येऽपि प्रतिपदमर्थज्ञानस्याक्षतत्वात् तदधीनबोधे विशिष्टार्थः स्वर्गशब्द-वाच्य इति ग्रहणम्; एवमिन्द्राद्यर्थनिर्वचनग्रहणञ्चोपपन्नमिति स्थितमिदं पूर्वमीमांसातर्कपादे ॥

"शक्तिग्रहं व्याकरणोपमान" इति श्लोके उपमानप्रमाणं शक्तिग्राहकं गणितम् । तार्किकैश्च संज्ञा-संज्ञिसंबन्धरूपशक्तिग्राहकमुपमानमतिरिक्तं प्रमाणं स्वीकृतम्। एवञ्चोपमानात् सिंहादिषु व्युत्पत्ति-रिति वक्तव्ये, 'वचनैः कैश्चित्' इति शब्दस्य प्रमाणत्वं कथमुच्यत इति शंकते सिंहादिष्विति । तत्रोदयनकारिकामाह सादृश्यस्येति । गोसादृश्यं गवयशब्दप्रवृत्तिनिमित्तं न भवति ; यत्तु प्रवृत्ति-निमित्तं गवयत्वम्, तत् वने दर्शनात् प्रागप्रतीतम् । अतः समयः=शक्तिः पूर्वं अतिदेशवाक्याद्वा अनुमानेन वा न गृह्यत इति उपमानमतिरिक्तं प्रमाणमिति कारिकार्थः । परिहरति दुरुक्तमिति । स्वयमुपमानप्रमाणानंगीकारादाह तादृशेति । नित्याव्युत्पत्तिप्रसंगादिति । ननु, 'इन्द्राद्यर्थे पदाना-मिति दुरधिगमा नामता' इति अव्युत्पत्तिरेवास्माभिरुच्यत इति इष्टापादनमेवेदमिति चेन्न—

(301) शब्दस्यैतस्य वाच्यस्त्वयमिति च तथा वाचकोऽयावमुष्ये-
त्येव शिक्ष्ये क्षे)व पश्चात् कतिपयवचसां पूर्वनिर्ज्ञातशक्तिः ।
इत्थं व्युत्पन्नतत्तत्सहपठितिवशात् वाचकान् वेत्ति कांश्चित् ;
ये लोके ते हि वेदे ; समधिकमिह यत्, तत्तु तत्रैव वेद्यम् ॥ ७६ ॥

इत्थं सिद्धार्थे प्रथमां व्युत्पत्तिमभिधाय द्वितीयामपि व्युत्पत्तिं तत्रैव वदति शब्दस्येति। 'अस्य शब्दस्यायमर्थो वाच्य,' 'अस्यार्थस्याय शब्दो वाचक ' इति हि का यादिशिक्षाप्रकार। लोक यव हारोऽप्येवमेव ज्ञापयति। इमा व्युत्पत्तिं पूर्वार्धेन दर्शयित्वा व्युत्पत्त्यन्तरमुत्तरार्धेन दर्शयति इत्थमिति। अयमर्थ —'प्रभिन्नकमलोदरे मधूनि मधुकर पिबति' इति वाक्य श्रुत्वा प्रभिन्नेत्यादिशब्दाना पूर्वं व्युत्पन्नत्वात् व्युत्पन्नपदसहपठनसामर्थ्यात् पूर्वम् युत्पन्न मधुकरपदमौचित्याग्निा भ्रमरपरतया व्युत्पद्यत इति। कांश्चित्—भ्रमरादिशब्दान्। तर्हि लौकिकशब्दानामेव व्युत्पत्तिरस्तु, न वैदिकानामित्याशङ्क्याह य इति। 'य एव लौकिकास्त एव वैदिका ' इति हि लोकवेदाधिकरणन्याय इति भाव। कथ तर्हि वैदिकप्रयोगेषु वैषम्यम्, अत आह समधिकमिति। यत् लौकिकशब्दात् वैदिकशब्देषु समधिक वैषम्यम्, तत् प्रातिशाख्यादिव्याकरणविशेषावगम्यमित्यर्थ। अत्र कार्ये व्युत्पत्तिसिद्धे व्युत्पत्त्यादिभि बहुभिर्लोकव्यवहारसहितै अभिधानपठितै व्याकरणप्रक्रियादिभि, प्रातिशाख्यादिभिरसाधारणहेतुभि सिद्धे वा कार्ये वा सर्वत्रापि व्युत्पत्ति समानस्वभावेति नैकत्र व्युत्पत्तिनियम कार्य इत्यर्थ ॥

इति सिद्धार्थे द्वितीयादिव्युत्पत्तिप्रकारः ॥ ७६ ॥

---

शब्दस्येति। अयमर्थ एतच्छब्दवाच्य (कोकिल पिकशब्दवाच्य) इति, तथा असौ शब्दो अमुष्यार्थस्य वाचक इति शिक्ष्येत। क । एवम् =पूर्वोक्तरीत्या येन पूर्वनिर्ज्ञाता कतिपयवचसा शक्ति, स । अत एव पश्चात्तनी इय शिक्षा, न तु प्रथमा। 'यत्र तु खेन समभिन्न तत् सुख स्व पदास्पदम्' इति वाक्यमपि शिक्षकम्। अन्यशिक्षानिरपेक्ष शक्तिग्रहमप्याह इत्थमिति। प्रसिद्धपदसांनिध्यात् व्युत्पत्तौ मधुकरशब्दार्थमजानन् अन्येषा पदाना व्युत्पन्नत्वात् कमलगतमधुपानकर्तु प्रत्यक्षदृष्टत्वाच्च भ्रमरवाचितया व्युत्पद्यते। एव वाक्यशेषेऽपि द्रष्टव्यम्। व्युत्पन्नाना गृहीतशक्तिकाना कमलादिपदाना सहपठिति =समभिव्याहार तद्बलात् कांश्चित् मधुकरादिरूपान् वाचकान् वेत्ति=अर्थविशेष वाचितया गृह्णाति॥ वृत्तौ प्रभिन्नेति। विकसितेत्यर्थ। कांश्चित् इत्यस्य मूलश्लोकस्थस्य व्याख्या भ्रमरादिशब्दानिति। अत पूर्वमुपपादितरीत्यनुसारे मधुकरादिशब्दानिति शोधनीयम्। भ्रमरादि शब्दानित्यस्य भ्रमरादिवाचकानित्यर्थो वा। सर्वाधिकारिकलौकिकशब्दविलक्षणा खलु नियताधिकारिकवैदिकशब्दा तत्र कथ व्युत्पत्तिरित्यत्र लौकिकाना संस्कृतशब्दाना वैदिकत्वमेवेत्याह ये इति। हिशब्द लोकवेदाधिकरणप्रसिद्धत्वद्योतक। लौकिका सर्व वैदिका न तु वैदिका सर्वे लौकिका। अतस्तत्रोपायान्तरमाह समधिकमिति। तत्रैवेति। तदर्थत्वलक्षणनिरुक्तादिग्रन्थत इत्यर्थ। व्युत्पत्त्यादिभिरिति। व्युत्पत्तिहेतुभिरित्यर्थ। लोकव्यवहारस्य प्राभाकरोक्तत्वात् लोकव्यवहार सहितैरिति अप्रधानतया निर्देश। अभिधानपठितै =अभिधानार्थतया प्राचीनपरिगणितै ॥ ७६ ॥

ननु प्रसिद्धपदसमभिव्याहारात् व्युत्पत्तिर्मधुकरादौ लोके प्राक् तदर्थदर्शनात् भवति। सर्वथैवादृष्टे पर्यायपदेन व्युत्पत्तेरपि न प्रसक्ति। अत कथमिन्द्रादिपदार्थग्रहणमिति शंकाया लोके प्रत्यक्ष

(302) व्युत्पाद्यं नाप्रतीतं प्रसजति विदिते नैरपेक्ष्यं श्रुतीनाम्
इन्द्राद्यर्थे पदानामिति दुरधिगमा नामतेत्यप्ययुक्तम् ।
अप्रत्यक्षेषु सिंहप्रभृतिषु वचनैः कैश्चिदारण्यकोक्तैः
व्युत्पद्यन्ते हि पौराः ; स्वयमपि च वदन्त्येवमत्रापि वार्ता ॥ ७७ ॥

अस्तु प्रत्यक्षेषु पदार्थेषु एतादृशी व्युत्पत्तिः । अप्रत्यक्षेष्विन्द्रादिषु सिद्धेषु व्युत्पत्तिर्न युज्यत इत्याशङ्कते व्युत्पाद्यमिति । किमप्रतीते व्युत्पत्तिः, उत प्रतीते ? अप्रतीतं तावत् व्युत्पाद्यं न प्रसजति—न भवतीत्यर्थः । प्रतीते व्युत्पाद्ये, प्रतीतत्वादेवाप्राप्तार्थप्रत्यायकश्रुतिनैरपेक्ष्यप्रसङ्गः । इति—इत्थं सति, इन्द्राद्यर्थे पदानां नामता दुरधिगमेति । एतदयुक्तमित्याह इत्यपीति । अयुक्तिमेवोपपादयति अप्रत्यक्षेष्विति । 'सिंहादिष्वागमात् व्युत्पत्तिर्नास्ति ; अपितूपमानात् । अत एवोक्तमुपमानवादिभिः, "सादृश्यस्यानिमित्तत्वात् निमित्तस्याप्रतीतितः । समयो दुर्ग्रहः पूर्वं शब्देनानुमयाऽपि वा ॥" इति' [इति ?] चेत्—दुरुक्तं तु तत् ; तादृशस्योपमानस्यैवाभावात् ; अन्यथा वैदिकेन्द्रादिशब्दानां नित्याव्युत्पत्तिप्रसङ्गात् । नित्या-

श्री-स्यापि अप्रत्यक्षत्वेऽनुवर्तमान एव वाक्यविशेषात् व्युत्पत्तिदर्शनात् तद्रीत्या व्युत्पत्तिरक्षतेत्याह व्युत्पाद्यमिति । अप्रतीतं=प्रमाणान्तराज्ञातं यत् तत् न व्युत्पाद्यं प्रसजति=अव्युत्पाद्यत्वमापद्यते । तस्य व्युत्पाद्यत्वानापत्तिरित्युक्तावपि व्युत्पाद्यत्वाभावापत्तावेव तात्पर्यम् । भवतीत्यर्थसिद्धत्वात् प्रसजतीत्यस्योत्तरत्रान्वयो वा । सोपि प्रसंग इति पदेन ज्ञापितः । ननु तर्हि स्वर्गेन्द्रादिशब्दानां लोकप्रसिद्धसुख-राजादिपरत्वमेवास्त्वित्यत्र दोषमाह विदिते इति । अज्ञाते हि शास्त्रमर्थवदिति भावः । पदानामिन्द्राद्यर्थविषये नामता=वाचकता, इति=उक्तयुक्त्या दुरधिगमा=दुर्ग्रहेति । निरस्यति इत्यप्ययुक्तमिति । सिंहप्रभृतिष्विति प्रभृतिपदेन गवयादिग्रहणम् । तत्र हि, 'गोसदृशो गवयः' इति आरण्यकवचनं ग्रामीणस्य व्युत्पादकम् । ननु गोसादृश्यस्य गवयशब्दप्रवृत्तिनिमित्तत्वाभावात् प्रवृत्तिनिमित्तस्य च गवयत्वस्यारण्ये गवयदर्शनात्परमेव ज्ञेयत्वात् कथं व्युत्पद्यन्ते सर्वथैवादृष्टे इति चेत्—तन्न, गवयत्वादिदर्शनात् प्रागेव स्वयमपि गवयादिव्यवहारं कुर्वन्ति हि । अतो जात्यदर्शनेऽपि गोसादृश्योपलक्ष्या काचिदस्तीति ज्ञानं भवेदेव । किञ्चाकृतिव्यतिरिक्तजात्यभावात् आकृतेश्च गोसादृश्यपदेनैव गृहीतत्वात् जातिग्रहणमप्यस्त्येव । किं बहुना । सर्वोपि हि वाक्यार्थः अपूर्व एव । तत्र प्रत्येकपदानामर्थस्य गृहीतया आकांक्षादिबलात् विशिष्टपूर्वार्थप्रतिपत्तिः । तथा, 'यन्न दुःखेन संभिन्नम्' इति वाक्येऽपि प्रतिपदमर्थज्ञानस्यापेक्षितत्वात् तदधीनबोधे विशिष्टार्थः स्वर्गशब्दवाच्य इति ग्रहणम् ; एवमिन्द्राद्यर्थनिर्वचनग्रहणञ्चोपपन्नमिति स्थितमिदं पूर्वमीमांसातर्कपादे ॥

"शक्तिग्रहं व्याकरणोपमान" इति श्लोके उपमानप्रमाणं शक्तिग्राहकं गणितम् । तार्किकैश्च संज्ञासंज्ञिसंबन्धरूपशक्तिग्राहकमुपमानमतिरिक्तं प्रमाणं स्वीकृतम् । एवञ्चोपमानात् सिंहादिषु व्युत्पत्तिरिति वक्तव्ये, 'वचनैः कैश्चित्' इति शब्दस्य प्रमाणत्वं कथमुच्यत इति शंकते सिंहादिष्विति । तत्रोदयनकारिकामाह सादृश्यस्येति । गोसादृश्यं गवयशब्दप्रवृत्तिनिमित्तं न भवति ; यत्तु प्रवृत्तिनिमित्तं गवयत्वम्, तत् वने दर्शनात् प्रागप्रतीतम् । अतः समयः=शक्तिः पूर्वं अतिदेशवाक्याद्वा अनुमानेन वा न गृह्यत इति उपमानमतिरिक्तं प्रमाणमिति कारिकार्थः । परिहरति दुरुक्तमिति । स्वयमुपमानप्रमाणानङ्गीकारादाह तादृशेति । नित्याव्युत्पत्तिप्रसंगादिति । ननु, 'इन्द्राद्यर्थे पदानामिति दुरधिगमा नामता' इति अव्युत्पत्तिरेवास्माभिरुच्यत इति इष्टापादनमेवेदमिति चेत्—

दृष्टत्वादिन्द्रादिजाते ॥ कथं तर्ह्यप्रत्यक्षे गवयत्वे गवयशब्दव्युत्पत्तिः ? ॥ कथं वा प्रत्यक्षत्वप्रसक्तिविधुरेन्द्रादि सामान्ये ? ॥ तत्र वक्त्रभिप्रायमाश्रित्य व्युत्पद्यते । अयं खलु वक्तुरभिप्रायः —सहस्राक्ष वाद्युपलक्षिता काचिज्जातिरिन्द्र(ादि)शब्दार्थ इति [यदि ?], तदन्यत्रापि समानम्, गोसादृश्योपलक्षिता काचिज्जातिर्गवय शब्दार्थ इति । किंच वक्त्रभिप्रायानङ्गीकारे प्रत्यक्षेऽपि घटादौ व्युत्पत्तिर्न स्यात् । तथा हि—कश्चित्, को घट इति पृच्छति । व्युत्पादकः पुनः, अयं घट इति व्यक्तिविशेषं दर्शयति, व्युत्पित्सुश्च तावता व्युत्पद्यते । तत्रैकस्यां व्यक्तौ व्युत्पन्नस्य व्यक्त्यन्तरे घटप्रतीतिर्न स्यात् । वक्त्रभिप्राय एव तत्र शरणम् । एतज्जातीयो घट इति वक्तुरभिप्रायः । तेन तज्जातीये व्युत्पद्यते तदभिप्रायाभिज्ञो व्युत्पित्सुरिति । एवं तर्कसहकृतेन वक्त्रभिप्रायपरिशोधनेन गवयत्वादौ गवयादिशब्दः व्युत्पद्यते व्युत्पित्सुः, किमिह निरर्थकोपमानकल्पनेनेति । न केवलं सिंहादिशब्दव्युत्पत्तिः, व्यवहारोऽपि दृश्यत इत्याह स्वयमिति । दृष्टान्तदृष्टमर्थं पक्षे योजयति एवमिति । वार्ता प्रवृत्तिः ॥ इति अप्रत्यक्षपदार्थव्युत्पत्तिप्रकारः ॥ ७७ ॥

(808) व्यक्तिः शब्दैर्न बोध्या यदि, न खलु भवेदन्वितज्ञप्तिसिद्धिः;
तच्छक्तिर्व्यक्तिमात्रे न च भवति, यतः स्वोपलम्भादिबाधः ।
धर्मो धर्मी च नैकं किमपि; न च तयोर्भिन्नयोरप्यभेदः;
तस्मात् तां तद्विशिष्टामभिदधति पदान्यन्यथा गत्यभावात् ॥ ७८ ॥

व्यी—एतद्वाक्यस्य पूर्वपक्षिणं प्रति अप्रवृत्तत्वात्—उपमानप्रमाणमूलकशक्तिग्रहवादिनं तार्किकं प्रति ह्यत्रोच्यते, उभयसंमता इन्द्रादिशब्दव्युत्पत्तिः कथमिति । तार्किकः पृच्छति कथमिति । तं सिद्धान्ती पृच्छति कथंवेति । तार्किकाशयमाह तत्रेति । प्रकृतेऽपि तमनुगमयति तद्वदिति । 'यदि' इति पदसत्त्वे स्वरसता । मा वा तत् । एवं तैरुपमानशब्दावगम्यसाधर्म्यवत् वैधर्म्यस्यापि प्रमाणत्वमिष्टम्, 'धिक्करभमतिलम्बौष्ठं दीर्घग्रीवं कठोरकण्टकाशिनम्' इति वस्त्वन्तरवैजात्यमूलमुष्ट्रूपार्थे करभ शब्दशक्तिग्रह इति । तेनोपमानप्रमाणपदेनोभयसाधारणं शक्तिग्राहकप्रमाणान्तरविलक्षणं किमपि रूपं विवक्षणीयम् । कुतोऽयं क्लेशः । तत्तद्वाक्यस्यैव तत्रतत्र शक्तिग्राहकत्वसंभवात् । तदेवोप पादयति अयं खल्वित्यादिना । अयमसौ गवयपदवाच्य इति इदम्पदाद् पदद्वयप्रयोगः अनुगत-गवयत्वजातिग्रहणार्थः । जातिदर्शने सत्येव शक्तिग्रह इति त्वनुभवविरुद्धमिति भावः । प्रवृत्तिरिति ; 'वार्ता प्रवृत्तिर्वृत्तान्तः' इति कोशः ॥ ७७ ॥

एवं शक्तिग्रहोपायनिरूपणेन कार्ये शक्तिरिति नियमो निरस्तः । अथ जातौ व्यक्तौ वा शक्तिरिति विचारो वर्त्यते व्यक्तिरित्यादिना । शाब्दबोधस्यान्वयविशिष्टपदार्थविषयकत्वात् तदर्थमेव पदप्रयोगात् अन्विते शक्तिरिति प्राभाकराः । अन्वयं विहायान्वयप्रतियोग्यनुयोगिभूतकिञ्चिद्वस्तु मात्रे शक्तिरिति भाट्टतार्किकादयः । तत्रान्विते शक्तिरिति वदन्तः पराः त्रयानर्हजातिमात्रे शक्तिरिति कथं वदन्तीति विस्मयमाविर्भावयति प्रथमपादेन । गामानयेत्यादौ आनयनं हि न गोत्वस्य, किंतु गोः । एवं प्रायो व्यक्तेरेव सम्बन्ध इति । तर्हि जातिं विहाय व्यक्तौ शक्तिः स्यादित्यत्रानुभव विरोधमाह तच्छक्तिरिति । एकव्यक्तौ शक्तिश्चेत्—अन्यत्राप्रयोगः स्यात् । विनिगमकञ्च दुर्वचम् । अनेकशक्तिकल्पना चायुक्तेति भावः । जातिव्यक्त्योरैक्यं वा भेदो वा नेष्यत इत्याह धर्म इति । मीमांसका भेदाभेदवादिन एव सन्तः जातिमात्रे शक्तिरिति वदन्तीति सिद्धान्तरमिति भावः । तस्मात् तां = व्यक्तिम्, तद्विशिष्टां = धर्मविशिष्टां पदानि अभिदधति = वदन्ति । ननु विशिष्टे शक्तिस्वीकारे

यदि जातिवाचकत्वं शब्दस्य तर्हि विशिष्टविषयत्वं न स्यात् इत्याशङ्कते **व्यक्तिरिति**। परिहरति **न खल्विति**। व्यक्तिविषयत्वाभावे कथमन्वितज्ञप्तिसिद्धिः, अन्वयस्य व्यक्तिनिष्ठत्वात्? यदि व्यक्तिमात्रे शक्तिः(क्तिरिति?), तच्च न भवति, उपलम्भादिबाधात्। व्यक्तिमात्रे शब्दशक्तावनुवृत्तव्यवहारादिबाध इत्यर्थः। तर्हि धर्मो धर्मी चैकम्, अथवा भिन्नाभिन्नमित्याशङ्क्य पक्षद्वयमपि क्रमेण प्रतिक्षिपति **धर्म इति, न चेति** च। अतो जातिविशिष्टा व्यक्तिरेव शब्दार्थ इति निगमयति **तस्मादिति**। तदेवोपपादयति **अन्यथा गत्यभावादिति**। अयमर्थः—केचिच्छब्दाः जातिमात्रवाचकाः जातिः सामान्यमित्यादयः। केचित् तत्र व्यक्तिवाचकाः व्यक्तिः स्वरूपमित्यादय.। अपरे पुनर्जातिविशिष्टव्यक्तिवाचका. गौः, अश्व इत्यादय.। तत्र पूर्वकोटिद्वयविलक्षणतृतीयकोटिवाचकाः शब्दा जातिविशिष्टव्यक्तिवाचिन इति ॥

**इति आकृतिशब्दानां विशिष्टवाचित्वम् ॥ ७८ ॥**

**(804) जातिं व्यक्त्या विहीनां स्पृशति न धिषणा; तेन जातौ प्रवृत्ता**
**शक्तिर्व्यक्तिं स्पृशेचेद्, स्थित इह वचसां तद्विशिष्टावगाहः।**

---

ली— गौरवम्, लाघवं जातिमात्रविषयकत्वे इत्यत्राह अन्यथा गत्यभावादिति। अनुभवमनुसृत्य हि कार्यकारणभावकल्पना। अत एव जातिमात्र व्यक्तिमात्र-जातिविशिष्टव्यक्तिबोधकपदपरस्पर-वैलक्षण्यम्। अन्यथा=विशिष्टविषयकत्वास्वीकारे गतिः=शब्दत्रैविध्यावगमो न स्यादिति ॥

इत्याशंकत इति। अस्य वाक्यस्य शब्दस्य जातिवाचित्वे अन्वितविषयकत्वं न स्यादिति नार्थः; तथा सति पूर्वपक्षिशंकारूपत्वायोगात्। परिहरतीत्युपर्युक्त्ययोगाच्च। अतः जातिवाचकत्वस्वीकारे इन्द्रत्वादिजातिमात्रविषयकत्वं शक्तेरस्तु, मा भूत् शक्तेर्विशिष्टव्यक्तिविषयकत्वमिति शंकते इत्यर्थः। एवञ्च श्लोके, 'शब्दैर्न बोध्या' इत्यस्य शब्दशक्त्या न भवतीत्यर्थः। उपरितनश्लोके शक्त्यभावेऽपि बोधविषयत्वं पुनः शंकिष्यते ॥ ७८ ॥

नन्वनन्यलभ्य एव शब्दार्थो भवति। व्यक्त्यानन्त्यप्रयुक्तशक्त्यानन्त्यरूपदोषपरिहाराय व्यभिचारग्रहाय च जातेः शक्तिविषयत्वस्याऽऽवश्यकत्वात् तन्मात्रमर्थोऽस्तु। व्यक्तिलाभस्तु व्यक्तिं विना जातिभानायोगात् आक्षेपादेव भवितुमर्हतीति शंकापरिहाराभिप्रायेणाह जातिमिति। अयमर्थः-आक्षेपो नाम कः, अन्यथानुपपत्तिरूपार्थापत्तिप्रमाणं वा, अनुमानं वा, जातिव्यक्त्योर्मिथः संबन्धात् स्मृतिमात्रं वा, शब्दतो लक्षणा वा। नाद्यः; अर्थापत्तिप्रमाणस्यानुमान एवान्तर्भावात्। न द्वितीयः; यदि व्यक्तिं विना जातिः पृथङ् न भासते, तर्हि कथं जात्या व्यक्त्यनुमानम्। न ह्यग्निं विहाय धूमस्य पृथग्ग्रहणाभावे धूमेनाग्न्यनुमानं स्यात्। न तृतीयः; संबन्धवशात् कथमपि स्मृतस्य सर्वस्य बोधे भानायोगात्। अन्यथा गवादिशब्दप्रयोगे शब्दाधाराकाशशब्दप्रयोक्तृपुरुषादेरपि बोधविषयत्वं स्यात्। धूमोस्तीति वाक्यस्य अग्निरस्तीत्यर्थ इत्यपि स्यात्। अत एव पूर्वोक्तपक्षद्वयमपि निरस्तम्। शब्दादनुपस्थितस्य बोधायोगात्। न च तुरीयः। अनुपपत्तिर्हि लक्षणाबीजम्। पृथग्जातिभानाभावाच्च नानुपपत्तिग्रहणप्रसक्तिः। तथाच यतो धिषणा=धीः व्यक्तिमविषयीकृत्य जातिं न स्पृशति=न विषयीकरोतीति त्वयैवोच्यते, तेनैव कारणेन जातिविषयिणी शक्तिर्व्यक्तिमपि गृह्णातीत्येवोक्तमिति वचसां=शब्दानां जातिविशिष्टव्यक्तिग्राहकत्वं स्थितमेव। किञ्च शक्तिविषयत्वं कियत इत्येतत्, तत्कार्यं ज्ञानं कियद्विषयकमिति विभाव्य कार्यानुरोधेन कल्पनीयम्। न च बोधकत्वातिरिक्ता शक्तिरावयोरुभयोः। ननु शक्तिर्द्विधा स्मारकशक्तिः अभिधानशक्तिश्चेति। तत्र पदात् स्मारकशक्त्या

**जातेर्बोधः स्वहेतोः ; स्थितिरपि हि भवेत् क्वापि गोत्वोक्तिनीत्या ;**
**शब्दात् तत्पारतन्त्र्यं स्फुरति यदि, पराबोधने तन्न शक्यम् ॥ ७९ ॥**

कौमारिलास्त्वेव प्राहुः, 'जातिवाचिनः शब्दा व्यक्तिं लक्षयन्ति' इति । तदयुक्तमित्याह **जाति-** मिति । व्यक्तिशून्यां जातिं कदाचिदपि न स्पृशति धिषणा । तेन जातौ प्रवृत्ता शब्दशक्तिर्व्यक्तिमपि स्पृशतीति वक्तव्यम् । तथा चेत्, वचसां जातिविशिष्टव्यक्त्यवगाहनं स्थिरमेव । तथाच शक्तिर्विशिष्टे इति भवतैवोक्तं भवति । तदेव विवृणोति **जातेर्बोध** इति । जातेः प्रतिपत्तिः स्वकारणात् । अवस्थानं च कुत्राप्याधारविशेषे । तत्र दृष्टान्तमाह **गोत्वेति** । यथा **गोत्वशब्दे**, गोर्भावो गोत्वमिति **गोशब्दप्रति-** पत्तिमन्तरेण, प्रतिपत्तिर्न भवति, **गोशब्दमन्तरेण** भावविषयस्य त्वप्रत्ययस्यानुत्पत्ति (तेः ?)—एवं गोत्वस्य प्रत्ययस्थिती तदाधारभूत[गो]स्वरूपसापेक्षे इत्यर्थः । अस्तु गोत्वस्य पारतन्त्र्यस्फुरणम्, ततः किं शब्द- शक्तेरित्यत आह **शब्दादिति** । शब्दात् गोत्वस्य व्यक्तिपारतन्त्र्यं यदि स्फुरति, तदा **परस्य** व्यक्ति- द्रव्यस्याबोधने जातेस्तत्पारतन्त्र्य शब्देन बोधयितुं न शक्यम् । अतो गवादिशब्दशक्तिर्व्यक्तिपर्यन्तेति ॥

**इति विशिष्टवाचिनां विशेषणमात्रे शक्तिनिष्कर्षानुपपत्तिः ॥ ७९ ॥**

(१०५) **जातौ शक्तिर्लघुत्वात्, भवति च वचसां भाषणं जातिमात्रे,**
**भेदो निष्कर्षकेभ्यस्त्विह परमजहल्लक्षणाया निरूढिः ।**

---

७९– जात्युपस्थितौ जातिविशिष्टव्यक्त्यभिधानं पश्चात् भवतीति चेत्—स्मरणस्यानुभूतविषयकत्वात् व्यवहारात् व्युत्पत्तिकाले व्यक्तीनामपि बोधिततया सति संस्कारे तदस्मरणे मानाभावात् । एकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति रीत्या हस्तिहस्तिपकस्मरणवदेव शब्दादर्थोपस्थित्युपपत्तौ स्मारकशक्तेरतिरिक्ताया अनपेक्षितत्वाच्च । अतो बोधस्य जातिविषयकस्य नियमेन व्यक्तिविषयकत्वे शक्तिरुभयगोचरेत्येव सिद्धम् । जातिः पृथङ् न भासत इत्यत्र कारणं प्रदर्श्य तद्भाननियमं दर्शयति जातेरिति । जातेर्बोधस्तावत् स्वकारणवशात् भवति । तत्र जातेः प्रत्यक्षरूपबोधे कारणं चक्षुरादीन्द्रिय- संयुक्तव्यक्त्याश्रितत्वरूपः संनिकर्षः । तस्य व्यक्तिद्वारैव निरूप्यत्वात् व्यक्तिप्रत्यक्षकारणस्यापि सत्त्वात् कथं व्यक्तेरग्रहः स्यात् । सन्निकर्षस्य व्यक्तिघटितत्वे कारणमप्याह स्थितिरपि हि भवेत् क्वापीति । न हि जातिराश्रयं विना स्थातुमर्हति । अन्ततः एकस्या अपि व्यक्तेरभावे जातिः कुत्र स्यात् । अतः तदपृथक्स्थित्या तत्प्रकारतयैव प्रत्यक्षे भानात् यथाभानमेव व्यवहारात् सर्वत्र व्यक्त्या सह भानमेव स्वरसम् । तत्र दृष्टान्त उच्यते गोत्वोक्तिनीत्येति । गोत्वोक्तिः =गोत्वशब्दः । यथा गोत्वेति शब्दो गृह्यमाणः गोशब्दघटित एव गृह्यते, तथा जातेर्व्यक्त्या सहैव भानम् । पृथग्भानाभावादेव तथा शब्दप्रयोगः । किञ्च गोशब्दश्रवणे गोत्वं भासमानं यदि गोपारतन्त्र्यं विना भासेत, तर्हि व्यक्त्या संबन्धस्याग्रहात् न व्यक्तिर्लक्ष्या स्यात् । अश्वत्वापेक्षया वैलक्षण्यमपि न गृह्येत । पारतन्त्र्य- भाने च तत् यन्निरूपितं तद्भानं सिद्धम्; तदाह शब्दादिति । पराबोधने=पारतन्त्र्यशब्दघटकपर- शब्दविवक्षणीयव्यक्त्यबोधने, तत्=पारतन्त्र्यस्फोरणं न शक्यमिति ॥ ७९ ॥

ननु जातेर्व्यक्तिपारतन्त्र्येऽपि यदि सर्वत्र बोधे जातेरप्राधान्येनैव भानं स्यात्, तदा विशिष्ट एव शक्तिरिष्येत । न तथा । वचसां=गवादिशब्दानां जातिमात्रविषये भाषणं=व्यवहारो लक्ष्यते । गौरस्ति, गां पश्य, गौर्न महिषः इत्येवम् । व्यक्तौ च गौर्गच्छतीत्यादौ । तत्रोभयविधशक्तिकल्पने

**इत्युक्तं कैश्चित्; एवं यदि भवति, तदोपाधिशब्देऽपि नीतिः,**
**मन्दं वैधर्म्यमात्रं भवतु च नियतिः प्रत्ययैर्लक्षणायाः ॥ ८० ॥**

उक्तमपि दूषणं सम्यगजानानः पूर्वपक्षी लघुत्वावलम्बनेन लक्षणापक्षं पुनर्द्रढयति **जाताविति**। अयमर्थः—जातावेव शक्त्यङ्गीकारे शब्दस्य शक्तिलाघवं भवति; अतो वचसां **भाषणम्** अभिधानं जातिमात्रे। तर्हि **गोत्वशब्दात्** **गोशब्दस्य** जातिवाचित्वे को भेदः? तत्राह **भेद इति**। **गोत्व**शब्दो गोत्वजातिमेव प्राधान्येनाऽऽह; **गो**शब्दस्त्वनिष्कर्षकत्वादजहल्लक्षणानिरूढ्या गोत्ववत् तदाधारभूतां गामपि प्रकाशयति। अयमेव निष्कर्षकानिष्कर्षकभेदः। इमं पक्षमनुवदति **इत्युक्तं कैश्चिदिति**। एतत् प्रतिबन्द्या दूषयति **एवमिति**। तर्हि **उपाधिशब्दे**ऽपीयं **नीति**रनुसन्धेया; त(था)त्राप्युपाधावेव शब्दशक्तिः, उपाधिमति निरूढलक्षणेति। तदेतदाह **तदेति**। गवादिशब्दस्तु जातिशब्दः, अन्यस्तूपाधिशब्द

---

श्री– गौरवादेकतरस्यैव शक्यत्वे लाघवात् जातौ शक्तिरिष्यते। अथ गौः, गोत्वमित्युभयोरपि जातिशक्तत्वे वैलक्षण्यं किमिति चेत्–निष्कर्षकेभ्यः=लक्षणयापि व्यक्तिष्वप्रयुज्यमानेभ्यः गोत्वादिशब्देभ्यः गवादिशब्देषु भेदश्च इह=गवादिशब्देषु निरूढाजहल्लक्षणावत्त्वमेव। वाच्यार्थं जातिमजहती लक्षणा व्यक्तिविषया निरूढा=अनादितया तत्रास्ति; न तु गोत्वजात्यादिशब्देषु। त्वप्रत्ययस्य निरूढलक्षणावारकत्वात्—इति यत् कैश्चित् उक्तम्; तत्रोच्यते। इदमपि पूर्वोक्त्यैव समाहितम्। तथाहि–अपृथक्सिद्धिबलात् व्यक्तेरपि नियमेन भासमानतया गौस्तिष्ठति, गां पश्येत्यादावपि जातिमात्रभाने हेतुर्नास्ति। गौर्गच्छतीत्यादाविव गोत्वे अस्ति वाधन्वयानुपपत्तिर्नास्तीत्येतावदेव वैधर्म्यम्। न तत् व्यक्तिभानप्रतिबन्धकम्। व्यक्तावपि अस्तित्वान्वयाबाधात् प्रतीतत्यागायोगात्। किञ्च यदि गोशब्दस्य गोत्वमात्रशक्तता, तर्हि लक्ष्यार्थत्यागेन शक्यार्थमात्रे प्रयोगस्याऽऽवश्यकतया तत एव गोत्वमुख्यविशेष्यकबोधलाभे गोत्वमिति त्वप्रत्ययघटनमेव न स्यात्। न हि जातिरिति वक्तव्ये जातित्वमिति प्रयुञ्जीत। अत एव वैलक्षण्यात् गंगादिशब्दाः प्रवाहमात्रशक्ताः। भूरिप्रयोगविषये शक्तिः, अन्यत्रान्यथा निर्वाहसंभवे लक्षणेति व्यवस्थाया एव सर्वैरनयाऽत्र व्यक्त्यर्थकत्वमवर्जनीयम्॥ कर्मकारकतया अधिकरणकारकतया च प्रयोगे व्यक्तिपर्यन्तता, अन्यकारकतया प्रयोगे जातिमात्रमर्थ इति मीमांसककल्पितो नियमोऽप्ययुक्तः; सर्वत्र प्रतीतव्यक्तित्यागे मानाभावात्। न हि पशुना यजेत, गवा क्रीणाति इत्यादौ अन्वयानुपपत्तिर्नास्ति; यागक्रयादेर्द्रव्यसाध्यत्वात्। ननु गौर्नित्या रूपं नित्यमित्यादिप्रयोगे व्यक्तौ नित्यत्वायोगात् जातिमात्रार्थकत्वमेष्टव्यमिति चेत्—तर्हि क्वाचित्कत्वात् तादृशप्रतीतेरेव लक्षणाधीनत्वम्। वस्तुतो गोत्वादिजातिर्नित्येति परेषां मते कल्पितोऽयं प्रयोगः। नित्यजातौ मानाभावात्। आकृत्यतिरिक्तजातेरभावात्। आकृतेश्च संस्थानरूपतया नित्यत्वाभावात्। प्रवाहानादितया गोत्वादेर्नित्यत्वमिति चेत्, गवादिव्यक्तिपरत्वेऽपि प्रवाहानादिता सुवचेति न व्यक्तित्यागः। अस्मन्मते च द्रव्यनित्यत्वात् अवस्थाया एवानित्यत्वात् गौर्नित्येत्यत्र न गोव्यक्तिपरत्वासंभव इति। सर्वमिदं प्रागेवार्थसिद्धम्। अपिचात्रोच्यते—एवं यदि भवति लाघवात् जातौ शक्तिरिति, तर्हि भूतत्वं भौतिकत्वं मूर्तत्वं शरीरत्वमिन्द्रियत्वं पाचकत्वमित्याद्युपाधिरूपधर्मस्थलेऽपि व्यक्तिं विहाय धर्मे शक्तिरिष्यताम्। जातेर्नित्यत्वादेकत्वम् उपाधीनां तु अनित्यत्वमिति वैधर्म्यमिति चेत्—तथापि धर्मधर्म्युभयविषयकशक्त्यकल्पनारूपलाघवयुक्तिसत्त्वात् किं नेष्यते। तन्न्यायं विना वैधर्म्यमात्रं मन्दम्=अकार्यकरम्। अत्र श्लोके पाठान्तरं नेति सूचितः स्पष्टम्। वृत्तौ, 'मन्दमेव प्रयोजकं न्यायसाम्ये' इति नव्यकोशपाठः। तत्र मन्दमेवेत्यस्य अप्रयोजक-

इति वैषम्य मन्दमेव (१) प्रयोजक(क) न्यायसाम्ये वैषम्यमात्रस्याप्रयोजकत्वात् । अत उपाधिशब्दवत् जातिशब्दस्यापि धर्मिपर्यन्ताभिधानमपरित्याज्यम् । कथ तर्हि, 'गङ्गाया घोष ' इत्यादिषु लोके लाक्षणिक व्यवहारनियम । तत्राह **भवत्विति** । प्रतीतिरेव हि सर्वत्र शरणम् । प्रतीतिश्च व्युत्पत्त्यधीना । व्युत्पत्तिश्च व्युत्पादकपारम्पर्यादेव नियता, व्युत्पादकाश्च **गोशब्द** गोत्वाधारद्रव्यविषयतया व्युत्पादयन्ति, गोत्वशब्द पुनर्भावविषयतया । अतो निष्कर्षकानिष्कर्षकनिर्णयसिद्धिरिति ॥ **इति व्यक्तिलक्षणापक्षभङ्गः ॥**

(३०३) **मत्वर्थीयानुशिष्टिर्गुणवचनगणे वैभवात् स्यादसौत्री ;**
**शक्तिस्तत्रापि तत्तद्गुणवति नियता जातिशब्दाविशेषात् ।**
**निष्कृष्यैषां प्रयोगे क्वचिदगतितया द्रव्यवृत्ति(शक्ति)र्निरुद्धा ;**
**शक्तिः साम्ये विभक्तेस्तदवधिररुणाधिक्रियायामपापि ॥ ८१ ॥**

---

र्थ— मिति व्याख्यानम्, मुद्रणे अकारभ्रश इति विमर्शका । मन्दमेव प्रयोजकम्—मन्द यथानर्थैव प्रयोजकमित्यपि कश्चिदूह । प्राच्यकोशे तु 'प्रयोजकन्यायसाम्ये' इति समस्तपद लक्ष्यते । मन्दपद-विवरणम् अप्रयोजकत्वादिति पदेनोपरि लभ्यत एव। जात्युपाधिविषये विभिन्नरीत्यवलम्बन न्यायाधीन चेत् इष्येत न्यायस्य प्रयोजकत्वात्, तस्य साम्ये सति धर्मगतवैषम्यमात्र तत्राशक्तमित्यर्थ स्यात्। जातेर्यावद्व्यक्तिसत्त्व वर्तमानत्वेऽपि आकृतिरूपतया एकत्वाभावात् तत्रोपाधिस्थल इव व्यक्ति शक्तिपक्ष इव च नानाशक्तिप्रसग तत्परिहारप्रकारश्च तुल्य । नन्वेव लक्षणया निर्वाह्यविषये अपि शक्तिस्वीकारे लक्षणैव लुप्येतेति चेत्—तन्न भवतु च नियति प्रत्ययैर्लक्षणाया । नियत-प्रतीतिविषये शक्ति कादाचित्कपाश्चात्यप्रतीतिविषये लक्षणा। अत प्रत्ययाना बोधाना न्यू-नाधिकभावमादाय लक्षणा क्वचिदिष्यते । अतो यथाप्रत्यक्ष शब्दाधीनबोधोऽपि धर्मप्रकारकधर्मि-विशेष्यक एव स्वरस इति तत्रैव शक्ति । गुणवचनाना मतुपो लुगिष्ट इतिवत् जातिवचनाना मतुपो लुगिष्ट इति कस्मान्नाऽऽहु, कस्माच्च गोजातिमानित्यर्थ गोमानिति न प्रयुञ्जते इत्यादि विभाव्य निष्कर्षकानिष्कर्षकशब्दनिष्कर्ष कर्तव्य ॥ ८० ॥

अथ न केवल जातिवचनानाम्, किन्तु गुणवचनानाम्, तथा जात्यादिवत् अपृथक्सिद्धद्रव्यवचनानाञ्चेति उपरितनश्लोकद्वयेन प्रतिपाद्य सर्वानुगतनियम दर्शयितु गुणवाचके वक्तव्यमाह मत्वर्थीयेति। यदि प्रकारैकस्वभावस्य शब्दात् प्रकारतयैव भानम्, तर्हि शुक्लादिशब्दा स्वयमेव द्रव्यपर्यन्तवाचिन इति तत्र मतुबनुशासन तस्य लुप्तत्वकल्पनञ्च किमर्थमिति चेत्—गुणवाचिशुक्लादिशब्दसमुदाये मत्वर्थीयप्रत्ययस्यानुशासनमसौत्रम् । न साक्षात् सूत्रकृतम् । अतो गुणैकपरत्ववासनावासितजन व्युत्पादनायोक्तम्। वैभव = प्रौढि । तत्रापि = मतुब्योग-तल्लोपवर्जाभिमतशुक्लादिशब्देऽपि तत्तद्गुण विशिष्टद्रव्यपर्यन्ते शक्तिर्नियमेनास्ति। कुत ? जातिशब्दात् विशेषाभावात्। परतन्त्रार्थप्रतिपादकत्वेन साम्यात्। वैभववादप्रवृत्ते कारण किमिति चेत्—शुक्लादिशब्दाना शुक्लादिगुणमात्रे निष्कृष्य गुण विशेष्यकतयाऽपि प्रयोगो भवतीति। तत्र स्थले द्रव्यवृत्ति = द्रव्यबोधनाशो निरुध्यते। ननु गुणमात्र वाचिनो गुणिनि लक्षणया प्रयोग इत्येवास्त्वित्यत्राह शक्तिरिति। विभक्ते साम्ये = समानविभक्ति निर्देशे शुक्ल पट इत्यादौ तदवधि = द्रव्यपर्यन्ता शक्ति अरुणाधिक्रियायाम् = अरुणाधिकरणार्थ विचारावसरे श्रमापि श्रीभाष्ये । अरुणयैकहायन्या पिङ्गाक्ष्या गवा सोम क्रीणातीति वाक्य विचारे पूर्वमीमासाव्याख्यातृभि अरुणाशब्दस्य आरुण्यगुणमात्रमर्थ इत्येव स्वीकृत्य पूर्वपक्ष-सिद्धान्तवर्णनमयुक्तम् । स्त्रीलिङ्गारुणापदस्य गवेत्येतत्समानाधिकरणतया = समानविभक्तिकतया

एवं (यद्येवं ?) जातिशब्दवत् गुणशब्दस्यापि द्रव्यपर्यन्ताभिधानम्, कथं तर्हि गुणवाचिशब्दे मत्वर्थीयप्रत्ययः, शुक्लवान् मधुरवानित्यादि (दौ?); तत्राह मत्वर्थीयेति। द्रव्यपर्यन्ताभिधानशक्तिमत्सु गुणवचनेषु मत्वर्थीयाभिधानं वैभवादेव; न पुनर्मत्वर्थीयप्रत्ययावश्यम्भावात्। असौत्री। तथा सूत्रकारोपदेशाभावादित्यर्थः। यत्र शुक्लवान् मधुरवानिति मत्वर्थीयव्यवहारः, तत्रापि शब्दशक्तिर्धर्मिपर्यन्ता। जातिशब्दाविशेषात्–जातिशब्दवत् गुणवाचिनोऽपि तस्य धर्मिपर्यन्ताभिधानशक्तेरपि विद्यमानत्वात्। द्वयी हि प्रवृत्तिः शुक्लादिशब्दानां लोकव्यवहारानुरोधेन, कदाचित् गुणमात्रपरत्वे शुक्लो गुण इति; कदाचित् गुणिपर्यन्ताभिधानं शुक्लः पट इति। एवां शुक्लादिशब्दानां निष्कृष्य प्रयोगे द्रव्यपर्यन्ताभिधानशक्तिर्निरुध्यते; तदा मत्वर्थीयप्र[त्यय]योगः स्यात्। विभक्तेः साम्ये=समानाधिकरणप्रयोगे पटः शुक्ल इत्यादौ द्रव्यपर्यन्ताभिधाने शारीरकशास्त्रनिर्णीतारुणाधिकरणन्यायेन भाष्यकारैरेवाभापीत्यर्थः। अत एव, "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति" इति असौ त्रिलिङ्गनियमोऽप्युपपद्यते॥

इति गुणवचनशब्दानां द्रव्यपर्यन्ताभिधायित्वम् ॥ ८१ ॥

(807) जीवं देवादिशब्दो वदति तदपृथक्सिद्धभावाभिधानात्
निष्कर्षाभावयुक्तात् बहुरिह च दृढो लोकवेदप्रयोगः।

---

०ी–प्रयोगात्। पटस्य शुक्ल इतिवत् विभक्तिवैषम्येऽन्वयबाधात् गुणमात्रे शक्तिसंकोचः स्यात्; न त्वत्र। आकृत्यधिकरणे अपृथक्सिद्धधर्मवाचिनां धर्मिपर्यन्तार्थकत्वस्य शिक्षिततया तद्विरोधेन गुणमात्रशक्तिस्वीकारस्य तदनुरूपाधिकरणरचनस्य चानुपपन्नत्वाच्चेति। आकृत्यधिकरणेऽपार्थवर्णनं तु अन्यत्र निरस्तम्॥ ननु गुणे शक्तिः कोशादवसीयते इत्यत्राह अत एवेति। गुणवत् गुणिन्यपि शक्तिसद्भावादेवेत्यर्थः। शक्तिग्राहकस्य कोशस्य लक्ष्यार्थव्युत्पादकत्वमयुक्तमिति भावः। अत्रेदं बोध्यम्—विभक्तिवैषम्येऽपि पटस्य शुक्लो भागः इत्यादौ गुणिपरत्वम्, तत्साम्येऽपि पटस्य शुक्लं रूपमित्यादौ गुणपरत्वञ्च दृश्यते। अतः समानाधिकरणशब्दान्तराविशेषणतया गुणमात्रविवक्षया प्रयोगे शुक्लादिशब्दः पुल्लिंग इत्येतावदेव कोशे विधेयम्। अन्यत्र विशेष्यनिघ्नत्वमर्थसिद्धम्। तत्र विशेष्यत्वं द्रव्यस्य गुणस्य चेति यथायथं द्रष्टव्यम्। समानाधिकरणविशेष्यानुरोधात् विशिष्टार्थकत्वमपि त्रिलिङ्गता चेति वा कोशार्थः॥

रूपरसादिशब्देषु मत्वर्थीयप्रत्ययस्य सर्वदैवेष्टत्वात् तद्वारणाय द्रव्येत्यादिविशेषणम्। मत्वर्थीयव्यवहार इति। मत्वर्थीयविधितल्लोपानुशासनमित्यर्थः। निरुध्यते इति। चित्राकर्षकशुक्लवान् इत्यादौ विशेषणान्वयाय गुणमात्रस्य ग्राह्यत्वादिति भावः। न्यायेनेति। अरुणाधिकरणं शिक्षयित्वा समानाधिकरणस्थले तन्न्यायानयनेनेत्यर्थः॥ ८१॥

जातिवाचिनां शब्दानां तद्विशिष्टार्थे शक्तत्वमित्येव नियमे गुणवाचिस्थलमगृहीतं भवतीत्युक्तम्। जातिगुणान्यतरवाचिशब्दानामित्युक्तौ अनुगतधर्मो नोक्तो भवति। अद्रव्यवाचिनां द्रव्यपर्यन्ततेत्युक्तौ शरीरात्मभावस्थलं क्रोडीकृतं न स्यादित्याह जीवमिति। देवादिशब्दः—देवो मनुष्यः पशुरित्यादिः शरीराकृतिभेदवाची, तेन=जीवेनापृथक्सिद्धो यो भावः=पदार्थः, तदभिधायकत्वात् तदपृथक्सिद्ध्यनुयोगिनं जीवमपि शक्त्या वक्ति। तर्हि देहः शरीरमित्यादिशब्दोऽपि जीववाची स्यादित्यत्राह निष्कर्षाभावयुक्तादिति। यथा जातिः सामान्यम्, गुणः रूपं रस इत्यादीनां निष्कर्षकत्वम्, तथा देहादिशब्दानां निष्कर्षकत्वात् तदभावविशिष्टं देहवाचित्वं यत्र तत्राऽऽत्मवाचित्वमिति नियम इति

—78

**आत्मासंबन्धकाले स्थितिरनवगता देवमर्त्यादिमूर्तेः**
**जीवात्मानुप्रवेशाज्जगति विभुरपि व्याकरोन्नामरूपे ॥ ८२ ॥**

एवं जातिगुणवाचिनोर्द्रव्यपर्यन्तत्वमुक्तम् । इदानीं द्रव्यवाचिनां **देवा**दिशब्दानामात्मपर्यन्तत्वमुच्यते **जीव**मिति । **दे**वादिशब्दो जीवं वदति ; जीवापृथक्सिद्धदेवादिशरीररूपभावाभिधानात् निष्कर्षकविवक्षाविधुरत्वात्(रत्वसहितात् ?) । अत्र किं प्रमाणमित्यत्राह **बहु**रिति । सर्वत्रापि शब्दार्थनिर्णये विशिष्टप्रयोग एव शरणम् । अस्ति च **देवा**दिशब्दानामात्मपर्यन्ताभिधाने लोकप्रयोगः ; देवो मनुष्यः पशुर्मृग इत्यादिः । तथा वेदप्रयोगोऽपि, "चत्वारः पञ्चदशरात्राः ।....देवत्वं गच्छन्ति" इति । 'वाचिकैः पक्षिमृगताम्' इत्यादि[च ?] । अत्रापृथक्सिद्धविशेषणत्वमेव व्यवहारनियमे तन्त्रम् । अस्ति चापृथक्सिद्धत्वं शरीरिणा शरीरस्य ; तदिदमाह **आत्मासंबन्धकाले देवमर्त्यादिमूर्तेः स्थितिरनवगते**ति । न हि मृतस्य शरीरं क्षणमपि तत्संस्थानसंस्थितमवतिष्ठते । न केवलं लोकप्रसिद्धिः ,

---

ळी— भावः। ननु मनुष्योऽहमित्यादिसामानाधिकरण्यस्य मनुष्यत्वारोपेणाप्युपपत्तेः विशिष्टवाचित्वं किमर्थमित्यत्राह बहुरिति । लोके, 'अयं ब्राह्मणः, अयं क्षत्रियः' इति प्रयोगोऽस्ति । वेदे च, 'यदि ब्राह्मणो यजेत', 'राजा राजसूयेन यजेत', 'यदि राजन्यं वैश्यं वा याजयेत्' इत्यादिप्रयोगः । तत्राऽऽत्मपर्यन्ततया प्रयोगे, अहं मनुष्य इत्यभ्रान्तप्रयोग इव ब्राह्मणत्वादिभ्रान्तिविषयत्वं दुर्वचम्। ब्राह्मणत्वाद्याहार्यारोपविषय इत्यर्थे क्षत्रियादावपि ब्राह्मणत्वाद्याहार्यज्ञानविषयत्वसत्त्वादतिप्रसंगात् । अतो ब्राह्मणादिशरीरावच्छिन्न इत्येवार्थ उचितः। तत्र लक्षणायां मानाभावात् शक्तिरेव । अनुयायी नियमस्तु--द्रव्यमद्रव्यं वा यत् अपृथक्सिद्धं तद्वाचिनां तदवच्छिन्नद्रव्यवाचित्वमिति । ननु शरीरं विनाऽऽत्मन इव, आत्मानं विनापि शरीरस्य सद्भावो मृतशरीरे दृष्ट इति न तयोरपृथक्सिद्धिरित्यत्राह आत्मेति । मूर्तेः स्थितिरनवगता=जीवाविभक्तमूर्त्यपेक्षया जीवात् विभक्तं पश्चात् दृश्यमानं भिन्नमित्यर्थः। वियोगक्षण एव विशीर्यमाणं तत् अवस्थान्तरापन्नत्वान्न शरीरमिति। तत्र मानमुच्यते जीवेति । रूपव्याकरणम्=अवस्थाविशेषापादनम् जीवानुप्रवेशानन्तरम् । अतो न पूर्वं तदवस्था। 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' इति भूतसंघातावस्थाहान्यनन्तरं जीवावस्थान्तरवचनात् निष्क्रमणानन्तरमवस्थायास्तस्या अभावश्च ज्ञायते । अनुप्रविष्टे सति नामकरणात् देहस्येव जीवस्यापि नामभाक्त्वसिद्धिः। अत्र जीवात्मेति पदेन, 'अनेन जीवेनात्मना' इत्यात्मपदप्रदर्शनात् तस्य च, 'आत्मना मया' इति परमात्मपरतया व्याख्यानात् जीवशरीरकपरमात्मानुप्रवेशपूर्वकनामरूपव्याकरणोक्त्या श्लोकोऽयं देहशरीरकजीवात्मवाचित्वस्येव तच्छरीरकपरमात्मवाचित्वस्यापि नामसु स्थापक इति मन्तव्यम्। जगतः शरीरत्वस्थापनानन्तरं पृथगपीदं व्यक्तं वक्ष्यति। न च-मयेति व्याख्यानम्, 'नामरूपे व्याकरोत्' इति वाक्येऽनन्वितमिति शंक्यम् ; व्याकरवाणीति संकल्पवाक्ये तथोक्तेः। तस्य परमात्मनेत्यत्रैव तात्पर्यात् व्याकरोदित्यत्र जीवशरीरकपरमात्मनेत्यर्थसंभवात् । तथाच जातिगुणाचेतनचेतनद्रव्यसाधारण्येन अपृथक्सिद्धवाचिनां तत्तद्धर्मिपर्यन्तवाचित्वसिद्धिराकृत्यधिकरणनिर्णयकाष्ठा । चत्वार इति । नात्र, 'पञ्चदशरात्रा' इत्यस्य गच्छन्तीत्यत्र कर्तृतयाऽन्वयः। चत्वारः पञ्चदशरात्राः इति चतुर्विधसत्रविधायकवाक्यारम्भः । तत्र प्रथमपञ्चदशरात्रनिरूपणान्ते वचनम्, "देवत्वं गच्छन्ति, य एता उपयन्ति" इति। ये एषु चतुर्षु एतत् पञ्चदशरात्रं सत्रमनुतिष्ठन्ति, ते देवा भवन्ति इति तदर्थः। देवशब्दस्य देहमात्रमुख्यत्वे ते देवं गच्छन्तीत्येव

जीवात्मानमनुप्रविश्य नामरूपे व्याकरोदीश्वर. इति हि वेदप्रसिद्धि । अतोऽचिच्छरीरको जीव, अचिज्जीवशरीरक ईश्वर इति चेतनाचेतनशब्दानां भगवत्पर्यन्ताभिधान युक्तमिति भाव ॥

**इति देवादिशब्दानां शरीरिपर्यन्तत्वम् ॥ ८२ ॥**

**(808) संस्थानैक्याद्यभावे वपुषु निरुपधिर्देहशब्दस्य रूढिः**

**लोकाम्नायप्रयोगानुगतमिह ततो लक्ष्म निष्कर्षणीयम् ।**

**अव्याप्त्यादिदुःस्थं परमतपठितं लक्षणं तत्र ; तस्मात्**

**यद्धीतुल्याश्रयं यत् वपुरिदमपृथक्सिद्धिमद् द्रव्यमस्य ॥ ८३ ॥**

अत्र देवादिशब्दाना सर्वशरीरत्वेनावस्थितपरमात्मपर्यन्तत्वमुक्त्वा [त्व उक्त्वा] भगवत सर्वशरीरित्व सिद्ध्यर्थं शरीरलक्षण लक्षयति (निष्कर्षति ?) संस्थानेति । अयमत्र भाव --संस्थानैक्यं जात्यैक्यं कारणैक्य कार्यैक्यमित्यादिनियामकविशेषाभावेऽपि देवमनुष्यपशु[मृग]पक्षिपरीसृपवृक्षगुल्मलतादिषु शरीरशब्दस्य रूढिरुपलभ्यते । अत्र च लोकाम्नायप्रसिद्ध्यनुगुण लक्षणमिह निष्कर्षणीयम् । इदं तु सर्वसाधारण-न्यायप्रदर्शनम् । अत्र, "चेष्टेन्द्रियार्थाश्रय शरीरम्" इति परमतपठित लक्षणमव्याप्त्यादिदोषदुष्टम् । तथा हि--प्रयत्नवदात्मसंयोगासमवायिकारणिका क्रिया चेष्टा । यदाहु, 'चेष्टा हिताहितप्राप्तिपरिहारार्थ स्पन्द.' इति । इदं च लक्षणमीश्वरशरीरतया श्रुतिप्रमितेषु कालादिषु नास्तीत्यव्याप्ति । तथा प्रतिक्षणपरिणामिषु

---

वी— हि प्रयोक्तव्यम्; न तथा कृतम् । अतो विशिष्टस्य मुख्यार्थतायाम् शरीरात्मविषयेऽप्युक्त-नियमप्रवृत्तौ वेद (साम.ब्रा २३-६) श्रुतिवाक्यं गमकमिति भाव. ॥ ८२ ॥

ननु जातिगुणशरीरवाचिना शब्दानां व्यक्तिगुण्यात्मपर्यन्तवाचित्वस्थापनेन परमात्मनो जगद्वाचिसर्वपदवाच्यत्वं भवतीति भवदिष्टं न सिध्यति, जगतस्तच्छरीरत्वायोगात् । आत्मनो विषयभोगापादककियावति तत्साधनेन्द्रियाश्रये वस्तुन्येव शरीरशब्दप्रयोगात् तदनुरोधेन लक्षणस्य न्यायसूत्रे निरूपितत्वादिति तार्किकशंकां परिहरति संस्थानेति । पशुपक्षिनरादिशरीरेष्वेकरूप-संस्थानाभावेऽपि विचित्रेष्वेव वस्तुषु देहशब्दस्य निरुपधि =अनौपाधिकी रूढि.= अनादिप्रयोगानु-वृत्तिरस्ति । अतो लोकप्रयोगानुसारादेतत्सर्वद्रव्यानुगतलक्षणान्वेषणवत् वेदप्रयोगमपि निरीक्ष्य *लोकवेदोभयप्रयोगानुगतधर्मनिष्कर्ष एव कार्यः । तत्र = निष्कर्षणीयविषये परमतपठितं = गौतम-*सूत्रोक्तं लक्षणत्रयमव्याप्त्यादिदोषग्रस्तत्वात् लक्षणतानर्हम् । तद्धि चेष्टाश्रयत्वमिन्द्रियाश्रयत्वमर्था-श्रयत्वञ्च । तस्मात् यद्धीतुल्याश्रयं यत्, यदीयचैतन्यनिष्ठाधेयतासमानाधेयताकं यद् द्रव्यम्, अस्य चेतनस्य इदम्= आधेयतावत् वपुर्भवति । आधेयता चेय न सामान्यभूता, किं तु अपृथक्सिद्धि-रूपेति ज्ञापनाय अपृथक्सिद्धिमदिति विशेषणम् । यच्छब्देन तेजोद्रव्यग्रहणेन तदीयप्रभायां शरीर-त्वापत्तिवारणाय यदीयचैतन्येत्युक्तम् । तेजसि च न चैतन्यम् । एतेन स्वधर्मभूतज्ञानस्य स्वशरीरत्व-वारणमपि सिद्धम्, स्वचैतन्ये स्वगतचैतन्यनिरूपिताधेयतासमानाधेयतोक्तययोगात् । आधेयताया अपृथक्सिद्धिरूपत्वोक्त्या चेतनधार्येन्द्रियघटपटादिव्यावृत्तिः । द्रव्यमिति गुणक्रियाव्यावृत्त्यै । इदञ्च भाष्यकारोक्तलक्षणत्रये प्रथमलक्षणं वा भवतु । न्यायसिद्धाञ्जनोक्तरीत्या फलितं लक्षणान्तरं वा । इदञ्चेश्वरं प्रति सर्वस्य चेतनाचेतनद्रव्यस्येति निरवद्यम् ॥

उक्त्वेत्यत्र उक्त्वमिति युक्तम् । निष्कर्षति श्लोक पद स्वयं वक्ष्यमाणत्वात् । भाषितस्येति नैयायिक प्रति कथनम् । स ह्यणुमात्रोपचयापचयतोऽपि घटादावपि भिन्न उत्पन्नादी अवश्यमेव प्रतिक्षणेषु

निद्राणकुम्भकर्णादिशरीरेष्वव्याप्ति सुप्रसिद्धा। कुम्भकर्णशरीरे जागरावस्थाया चेष्टाऽस्तीति चेत्, किमनेन? शरीरान्तरमेव तत्, अन्यथाऽऽहारपरिपाकविशेषेण प्रतिक्षणपरिणामकथनस्य भावत्कस्योद्भ्रान्तजल्पितत्वप्रसङ्गात्॥ चेष्टाश्रयसजातीयत्व शरीरत्वमिति चेन्, केय जाति ?। शरीरत्वमेवेति चेन्न, शरीरत्वजातेरभावात्, अन्यथा भवदुक्तजातिसङ्करप्रसङ्गात्। न हि शरीरत्वस्य पृथिवीत्व[पाषाणत्व?]वत् परापरभावो निरूपयितु शक्यते॥ शरीरत्वव्यतिरिक्ता काऽपि जातिरिति चेत्, साऽपि सङ्करदोषेण पराहते, तुल्यन्यायत्वात्॥ तर्हि जाति मुक्त्वा चेष्टाश्रयसालक्षण्य शरीरलक्षणमिति वदाम इति चेत्, किं तत् सालक्षण्यम्॥ शरीरलक्षणलक्षितत्वमिति चेन्न, शरीरलक्षणस्यैव निरूप्यमाणत्वात्। न ह्यद्यापि शरीरलक्षण निरूपितम्, येनैतत्परिग्रहान्निद्राणशरीरस्य शरीरत्वमुपपाद्येत॥ यदा कदाचिच्चेष्टाश्रयत्वं शरीरलक्षणमिति वचनमत्यन्तजघन्यमेव, निद्राणशरीरस्य कदाचिदपि चेष्टाश्रयत्वाभावात्॥ चेष्टाश्रयत्वार्हत्वमिति चेत्, तदपि न, नित्यानुपलब्धचेष्टस्य निद्राणशरीरस्य चेष्टाश्रयत्वार्हताया अभावात्॥ अथापि शरीरजातीयत्वादस्त्यर्हतेति चेन्न, जातेर्निरस्तत्वात्, अद्यापि शरीरशब्दार्थानिरूपणेन तज्जातीयत्वस्य वक्तुमेवाशक्यत्वात्। किंच शरीरावयवाना चेष्टाश्रयत्वेन शरीरत्वप्रसङ्ग॥ अत एव अन्त्यावयवीति विशेषयाम इति चेन्न, शरीरोपष्टम्भकेषु भूतान्तरेष्वपि प्रसङ्गात्॥ तेषामन्त्यावयवित्वं नास्तीति चेन्न, तैरारभ्यस्यावयव्यन्तरस्यादर्शनात्॥ कालान्तरे भविष्यतीति चेत्–तर्हि शरीरारभ्यमप्यवयव्यन्तर कालान्तरे भविष्यतीति तत्राप्यन्त्यावयवित्व न स्यात्॥ तदुपष्टम्भकाना चेष्टाश्रयत्वमेव नास्तीति चेत्, शरीरस्यापि तर्हि चेष्टाश्रयत्व न स्यात्। न ह्युपष्टम्भकमन्तरेण शरीरमपि चेष्टते। किंच प्रयत्नवदीश्वरसयोगासमवायिकारणेषु भूकम्पादिषु, पृथिव्यादीनामीश्वरशरीरत्व भवतैवाङ्गीकृत स्यात्॥ तत्राऽदृष्टवदात्मसयोगोऽसमवायिकारणम्, अदृष्टवाश्च जीव। अतो नेश्वरसयोगासमवायिकारणकत्वमिति चेत, को ब्रवीति नियमम्? ईश्वरसयोगस्यापि कारणत्वात्, असमवायिकारणलक्षणोपेतत्वात्। तल्लक्षणलक्षितत्वेऽपि तत्कारणत्वाभावे जीवसयोगोऽप्यसमवायिकारण न स्यात्।

इत्थ भोगाश्रयत्वमपि दुष्टम्, पूर्वोक्तदूषणकलापदूषितत्वात्।

---

व्री– विभिन्नदेहोत्पत्ति स्वीकरोति। सङ्करेति। पृथिवीत्वजलत्वादिनेति शेष। परापरभाव इति। सर्वस्यापि पाञ्चभौतिकत्वादिति भाव। अनेकत्वे चाजातित्वमेव। शरीरजातीयत्वादिति। पूर्वं चेष्टाश्रयसजातीयत्वमिति विशेषरूपेणोक्तम्। अत्र सामान्यरूपेणेति भेद। भूकम्पादिष्विति। सत्स्विति शेष। भूकम्पादीना परमात्मसयोगासमवायिकारणकत्वादित्यर्थ। भवतैवाङ्गीकृतमिति। न्यायकुसुमाञ्जलौ (५) शरीराजन्यत्वरूपोपाधिशोधनावसरे प्रयत्नवदीश्वरसयोगाधीना परमाणुक्रियेति परमाण्वादेश्शरीरत्वमिष्टम्। अत भवता अङ्गीकर्तव्यमित्यनुक्त्वा अङ्गीकृतमित्युक्तम्। तथा च यत् भवता विमृश्य विचारे अङ्गीकृत, तत् स्यात्=प्रतिष्ठित स्यादित्यर्थ। को ब्रवीति नियममिति। कार्येण सहैकस्मिन्नर्थ समवेत कारणमसमवायिकारणम्। तत्रश्च जीवादृष्टवदात्मसयोगस्येव केवलपरमात्मसयोगस्याप्यस्तीति उभयस्यासमवायित्वसभवे जीवस्यैवेति नियम कुत। आम्नायसिद्धशरीरभावाना शरीरत्वव्यावर्णनापेक्षेति चेत्, अद्भुतमिदमनुगतधर्मान्वेषणमिति भाव। एव चेष्टाश्रयत्वलक्षणेऽपि

इन्द्रियाश्रयत्वमपि शोधयामः। अत्राऽऽश्रयत्वं समवायिकारणत्वं चेत्, इन्द्रियावयवेषु व्यभिचारः। वस्त्वन्तरसमवायिकारणत्वे अन्त्यावयवित्वमपि व्याहन्येत। संयोगित्वमात्रं चेत्, पूर्वोक्तदूषणकलापात् न मुच्यते। किंच इन्द्रियान्तरसंबन्धनियते त्वगिन्द्रिये व्यभिचारः। तथा त्वगिन्द्रियसंबन्धि(न्ध)नियतेष्विन्द्रियान्तरेष्वपि व्यभिचारः ॥ उत्पाटितस्याक्ष्णस्त्वगिन्द्रियसंबन्धनियमो नास्तीति चेन्न; उत्पाटनावस्थायामेवाक्ष्णः स्वावयवसंक्षोभेण विनष्टत्वेन(त्वात्) अक्ष्णस्सद्भावाभावात्। केवलं गोलकमात्रमुपलभ्यते। एवं त्वगिन्द्रियोपष्टम्भकेष्वपि व्यभिचारो वाच्यः ॥ शरीरमेव त्वगिन्द्रियोपष्टम्भकमिति चेत्, तर्हि शरीरोपष्टम्भकेषु व्यभिचारस्तदवस्थ एव। ईश्वरशरीरतया श्रुतिशतप्रसिद्धेषु पृथिव्यादिष्वेतल्लक्षणमस्ति चेत्, अविवाद एव; प्रपञ्चवाचिनां शब्दानां परब्रह्मपरत्वेऽपि विरोधाभावात् ॥ नास्तीति चेत्, श्रुतिविरुद्धत्वात् अलक्षणमेव॥ श्रुतिरेव गौणीति चेत्, किममूलमेव, अथवा केनचित् प्रमाणेन? अमूलं चेत्, शब्दार्थसंबन्धनियमव्यवहारस्यासंबन्धत्वप्रसङ्गः॥ केनचित् प्रमाणेनेति चेत्, किं तत् प्रमाणम्? श्रुतिप्रयोग इति चेत्, स पुनरस्मदीय एव; विश्वशरीरत्वस्य श्रुतिशतसिद्धत्वात् ॥ अस्मत्कल्पितलक्षणविरोधात् श्रुतेर्गौणत्वं कल्पयाम इति चेन्न; परस्पराश्रयत्वात्—युष्मल्लक्षणस्य लक्षणत्वे श्रुतेर्गौणत्वम्; तद्गौणत्वे च भवदुक्तलक्षणस्य लक्षणत्वमिति।

एवमनेकविधदोषदुष्टत्वात् परकल्पितलक्षणप्रहाणेन सर्वप्रयोगानुगुणं शरीरलक्षणं वाच्यमित्याह **अव्याप्तेति**। किं तल्लक्षणमित्यत्राह **तस्मादिति**। तथा हि—"यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं च शक्यम्" इति लक्षणद्वयमुक्त्वा, "तच्छेषैतैकस्वरूपं च" इति तृतीयमपि लक्षणमाहुः **भाष्यकाराः**। अत्र **यस्येति** प्रतिसंबन्ध(न्धि)नियमनिर्देशादन्यशरीरस्यान्यं प्रति शरीरत्वं निरस्यते। **चेतनस्येति** चैतन्यविशिष्टतया प्रतिसंबन्धिनिर्देशात् धर्मभूतज्ञानस्य शरीरत्वं निरस्यते। न हि ज्ञानं ज्ञानविशिष्टस्याऽऽधेयविधेयशेषभूतम्। **द्रव्यमिति** गुणक्रिययोर्निरासः। **सर्वात्मनेति** दण्डकुण्डलादीनां गर्भदासादीनां च निरासः; तेषां कदाचिदेवाधेयत्वात् विधेयत्वात्। **शक्यमिति** योग्यतामात्रकथनेन रुग्णशरीरे अव्याप्तिपरिहारः। रुग्णस्यापि शरीरस्य धारणादियोग्यताऽस्ति; रोगानुबन्धात् धारणादिकं प्रतिबध्यते; रोगनिवृत्तौ तदेव योग्यत्वं निष्प्रतिद्वन्द्वमवतिष्ठत इति भावः। इत्येषा दिक् ॥ **इति शरीरलक्षणम्** ॥

---

श्री— जगतः परमात्मशरीरत्वमुपपादितम्। भाष्यकारैरेकस्मिन्नेव लक्षणे धारयितुञ्चेति तच्छेषतैकस्वरूपञ्चेति दलनिवेशः कृत इति न मन्तव्यमिति ज्ञापनाय, लक्षणद्वयमुक्त्वा...तृतीयमपीत्युक्तम्। तथाच तदुक्तस्य सर्वस्य प्रकृते लक्षणे निवेशाभावात् न्यूनतेति न मन्तव्यमित्याशयः। ननु भाष्ये स्वधर्मभूतज्ञानवारकं दलं न दर्शितं प्रथमलक्षणे इत्यत्राह चेतनस्येतीति। ज्ञानविशिष्टस्याधेयेति। ज्ञानावच्छिन्नाधारतानिरूपिताधेयतावदित्यर्थः। द्रव्यमितीति। ननु, 'यो वेदेषु तिष्ठन्', 'यस्य वेदाः शरीरम्', 'यस्य यज्ञाः शरीरम्', इत्यादिश्रुत्या, 'रसोऽहमप्सु कौन्तेय' इत्यादिस्मृत्या च गुणक्रिययोरपि शरीरत्वेऽपि को दोष इति चेत्—इतरच्चेतनाचेतनगतसुखदुःखशब्दादिगुणयज्ञादीनां परमात्मापृथक्सिद्धत्वाभावात् शरीरत्वमसंभवि। तदङ्गीकारे च इतरव्यपदेशादित्याद्यधिकरणविरोधः। प्रलये चेतनानां यत्किञ्चित्संयोगवत्त्वावश्यम्भावात् तस्य संयोगस्यापि शरीरत्वे अशरीरत्वं कदापि जीवस्य न स्यात्। अत आम्नायाबाधार्थमेव सगुणक्रिययोरपि शरीरत्वास्वीकारः। सर्वशरीरलक्षणानुबन्धि पत्रमादि सर्वमस्माभिर्नययुमणिभूमिकायां विस्तरेण न्यरूपि ॥ ८३ ॥

(१०१) शब्दैस्तन्वंशरूपप्रभृतिभिरखिलः स्थाप्यते विश्वमूर्ते-
रित्थभावः प्रपञ्च ; तदनवगमतस्तत्पृथक्सिद्धिमोहः ।
श्रोत्राद्यैराश्रयेभ्यः स्फुरति खलु पृथक् शब्दगन्धादिधर्मः ;
जीवात्मन्यप्यदृश्ये वपुरपि हि दृशा गृह्यतेऽनन्यनिष्ठम् ॥ ८४ ॥

इत्थं शरीरलक्षणमुक्त्वा विश्वस्येश्वरशरीरत्वेन तदपृथक्सिद्धस्य तच्छरीरत्वप्रतिष्ठापनार्थं तदपृथक्सिद्धिमाह **शब्दैरिति**। "तत् सर्वं वै हरेस्तनुः", "ममैवांशो जीवलोके", "रूपान्तरं तत् द्विज कालसंज्ञम्", 'विष्णुशक्तिः परा प्रोक्ता", "यदम्बु वैष्णवः कायः", 'यस्यात्मा शरीरम्' इत्यादिभिर्विश्वमूर्तेः विष्णोः **इत्थभावः**=अपृथक्सिद्धविशेषणं प्रपञ्च इति स्मृतिश्रुत्योरभिधीयते। यद्येवमित्थभावः प्रपञ्चः, कथं तर्हि पृथक्सिद्धिरिति? अत्रोत्तरम् **तदनवगमत** इति। ईश्वरस्य विशेष्यभूतस्यावगमाभावात् विशेषणभूतस्य प्रपञ्चस्य पृथक्सिद्धत्व(सिद्धि)व्यामोहमात्रं पामराणाम्। विदुषां तु परमर्षीणामपृथक्सिद्धत्वेनैव सर्वदा प्रतीतिव्यवहारौ। अमुष्मिन्(अस्मिन्) अर्थे लोकसिद्धं दृष्टान्तमाह **श्रोत्राद्यैरिति**। आश्रयग्रहणानर्हैः श्रोत्राद्यैः यथा शब्दादिकं पृथगेव गृह्यते, एवमीश्वरग्रहणानर्हैरल्पज्ञानां प्रमाणैरीश्वरात् प्रपञ्चस्य पृथक्त्वेन ग्रहणं युक्तमित्यर्थः। उक्तमर्थमुदाहरणान्तरेणापि द्रढयति **जीवात्मनीति**। मनोग्राह्ये जीवात्मनि सति चक्षुषा गृह्यमाणं शरीरं न जीवविशेषणत्वेन गृह्यते, जीवस्य चक्षुर्ग्राह्यत्वाभावात्। एवं प्रपञ्चोऽपि

---

टी— ननु प्रपञ्चस्य पृथक्सिद्धत्वेन प्रत्यक्षेण गृह्यमाणस्य, प्रत्यक्षविरुद्धमपृथक्सिद्धत्वं शब्दप्रमाणं न वक्तुमर्हति। अतस्तदनुरोधेन शरीरलक्षणवर्णनमयुक्तमित्यत्राह शब्दैरिति। श्रुतावन्तर्यामिब्राह्मणोक्तं शरीरत्वं पुराणगीतेतिहासादिषु तनु अंश रूप काय शरीर मूर्ति शक्ति इत्यादिपर्यायपदैः प्रतिष्ठाप्यते। इत्थभावः =एतत्प्रकारविशिष्टत्वम् प्रकार एव। प्रपञ्चः तत्प्रकारतया स्थाप्यते। न च प्रत्यक्षविरोधः तदनवगमतः =तस्य परमात्मनोऽप्रत्यक्षत्वात् तन्निरूपितशरीरत्वरूपप्रकारत्वस्य ग्रहणायोगात् प्रपञ्चे परमात्मापेक्षया पृथक्सिद्धत्वमिति मोहः प्रत्यक्षे वस्तुमात्रं विषयः तस्य परमात्मपृथक्सिद्धत्वमपृथक्सिद्धत्वं वा कथं प्रत्यक्षग्राह्यं स्यात्। अतो न प्रत्यक्षविरोधः। पृथक्सिद्धि-ग्रहणं तु अपृथक्सिद्ध्यदर्शनात् कल्पनामात्रम्। न पृथक्सिद्धत्वमपि हि तद्ग्रहणं विना दुर्ग्रहम्। ननु यदि तदपृथक्सिद्धं स्यादिदं जगत् तर्हि तथा कुतो न गृह्यत इति चेत्—तस्य =परमात्मनः प्रत्यक्षागोचरत्वादेवम्। यथा शब्दगन्धादिर्धर्मः श्रोत्रघ्राणादिग्राह्यः तेषामिन्द्रियाणां द्रव्यग्रहणासामर्थ्यात् स्वस्वाश्रयतः पृथगेव=स्वस्वाश्रयसाहित्यं विना श्रोत्राद्यैः प्रकाशते, तावता न स द्रव्यरहितः। यथा च जीवात्मनि दृशा =चक्षुषा अदृश्ये=द्रष्टुमशक्ये सति वपुरपि—मम वपुरिति कदाचित् सह भासमानमपि शरीरं दृशा अनन्यनिष्ठं गृह्यते=जीवनिष्ठत्वं विनैव गृह्यते, तावता न वपुः अनन्यनिष्ठम्, तथेति। अन्यनिष्ठत्वाग्रहणमात्रात् अन्यनिष्ठत्वाभावो दुर्वचः। योग्यानुपलब्धिर्हि अभावग्राहिका। न चेह सा तस्यतस्याऽऽश्रयस्य तत्तदिन्द्रियायोग्यत्वात्। एवं चाऽर्थोऽस्तु, यथा शब्दादिग्रहणकाले कस्यचिदविवेकिनः शब्दादावाश्रयरहितत्वग्रहणम्, यथा च चक्षुषा वपुषः दृश्ये, अनन्यनिष्ठत्वग्रहणं भ्रान्तिकृतम्, तद्वत् प्रपञ्चे परमात्मपृथक्सिद्धिमोह इति॥ कथं तर्हि पृथक्सिद्धिरिति। कथं स विहाय ग्रहणमित्यर्थः। कथं तत्पृथक्सिद्धतया ग्रहणमिति वा। ग्रहणानर्हैः प्रमाणैरिति। अल्पज्ञप्रमाणानामीश्वरग्रहणानर्हत्वादित्यर्थः ॥ ८४ ॥

पामरबुद्धिभिर्नेश्वरविशेषणत्वेन गृह्यते। नैतावता श्रुतिस्मृत्यादिप्रसिद्धमीश्वरापृथक्सिद्धत्वं न सिध्यतीति ॥

इति विश्वस्येश्वरापृथक्सिद्धत्वम् ॥ ८४ ॥

(810) निष्कर्षाकूतहानौ विमतिपदपदान्यन्तरात्मानमेक
तन्मूर्तेर्वाचकत्वादभिदधति, यथा रामकृष्णादिशब्दाः ।
सर्वेषामाप्तमुख्यैरगणि च वचसां शाश्वतेऽस्मिन् प्रतिष्ठा
पाकैस्तस्याप्रतीतेर्जगति तदितरैः स्याच्च भङ्ग्या प्रयोगः ॥ ८५ ॥

जगत परमात्मापृथक्सिद्धिमुक्त्वा तद्वाचिना पदाना निष्कर्षाभिप्रायाभावे परमात्मपर्यन्तत्वमाह निष्कर्षेति । विप्रतिपन्नानि प्रपञ्चवाचकानि पदानि परमात्मवाचकानि, निष्कर्षकेतरत्वे सति तन्मूर्तिवाचकत्वात् । ये निष्कर्षकेतरत्वे सति भगवन्मूर्ति(तन्मूर्ति)वाचका, ते भगवद्वाचका, यथा रामकृष्णादिशब्दा इति विशेषतो व्याप्ति । सामान्यतोऽपि, ये निष्कर्षकेतरत्वे सति यन्मूर्तिवाचका ते तद्वाचका, यथा देवमनुष्यादिशब्दा इति । इत्थमनुमानम् । आगमोऽप्यस्तीत्याह सर्वेषामिति ।

टी — यत्र जगति पृथक्सिद्धत्वस्य प्रत्यक्षेणाग्रहात् प्रत्यक्षविरोधाभावात् शास्त्रसिद्धस्यापृथक्सिद्धत्वस्य स्वीकार्यत्वात् तदेव शरीरत्वमिति सिद्ध शरीरात्मभावो जगद्ब्रह्मणो । अत आकृत्यधिकरणन्यायेन जगद्वाचिशब्दा परमात्मपर्यन्तवाचका, तन्मूर्तिवाचकत्वादित्यनुमीयत इति सिद्ध्यति । तत्र जातु जगन्मात्रविवक्षयाऽपि प्रयोगात् तत्र तन्मूर्तिवाचकत्वादिति हेतुसत्त्वादनैकान्त्यमिति शङ्काया तद्दोषपरिहारकविशेषणप्रदर्शनेन हेतु स्थापयति पूर्वार्धेन निष्कर्षेति । पृथिव्यादिशब्दव्यक्तिषु विशेषणमात्रविवक्षया प्रयुक्तशब्दभिन्नशब्दव्यक्तिमात्र पक्ष । तादृशशब्दभिन्नत्वे सति मूर्तिवाचकत्वमेव हेतु । अतो नानैकान्त्यम्, नाप्यंशे बाध इति । निष्कर्षाकूतहानौ इति पदस्य विशेषणमात्रविवक्षारहितत्वमर्थ । तस्य तन्मूर्तेर्वाचकत्वादिति हेतुविशेषणत्वम् । पदरूपपक्षेऽपि तदन्वय इष्ट । परन्तु तत् विमतिपदेत्यनेन ज्ञाप्यमेव । रामकृष्णादिशब्दा दृष्टान्ता । परमात्मन सर्वै शब्दै शक्त्या बोध्यत्वे शब्दोऽपि प्रमाणमित्याह सर्वेषामिति । आप्तमुख्यै =आप्ततमै पराशरादिभि सर्वेषा वचसा=शब्दाना शाश्वते =सर्वदा वर्तमाने अस्मिन् प्रतिष्ठा =पर्यवसानम् अगणि = श्रुत्यनुरोधेन स्मृतेत्यर्थ । *'सर्ववचसा प्रतिष्ठा यत्र शाश्वती'* इति श्लोके प्रतिष्ठायामेव शाश्वतत्वमुक्तम्, न तु परमात्मनि, अथापि परमात्मशाश्वतत्वप्रयुक्तमेव तदिति ज्ञापनाय शाश्वते इति सप्तम्यन्तनिर्देश । परमात्मपर्यन्तपर्यवसानस्य फलमपि तत्रैव दर्शितम्, नता स्मेति । सर्वमपि शब्द नमोऽन्त प्रयुज्य स नमस्कर्तु शक्यते सदेव । तदेवाग्निस्तद्वायुरिति तस्यैव सर्वाराध्यत्वादिकमपि तदेव । अन्यथा तथाऽनन्वयादिति भाव । अगणीत्यनेनेव श्रुतिसद्भावोऽपि सूच्यते । तर्हि कुतो लोके तथा न प्रयुज्यत इत्यत्राऽऽह पाकैरिति । लोके प्रयोक्तार पाका पक्वज्ञानाश्चेति द्विविधा । पाका =बालिशा । ते जगति =जगन्मात्रविषये प्रयोग तस्य= परमात्मन तस्य सर्वशब्दवाच्यत्वस्य चाप्रतीते =अज्ञानात् । तदितरैर्महद्भि जगन्मात्रविषये प्रयोग ज्ञाने सत्यपि भङ्ग्या= जहदजहल्लक्षणया । किमर्थं तथा प्रयोक्तव्यमिति चेत् पाके साक व्यवहारे तद्बोधानुगुणमेव प्रयोक्तव्यम् । किञ्च परमात्मनो ग्रहणमन्तरा तदितरैस्तद्विशेषणभूतैरेव लोकयात्राया निर्वह्यमाणतया विशेषण निर्देशस्यैवाऽऽवश्यकतया परमात्मन्यय सर्वत्र सम्प्रत्युपेक्ष्यते । तत्त्वविचारसदाचरणादिसमय एव तस्यावश्यकतेति ॥ सामान्यतोऽपीति । सामान्यमुखी व्याप्तिरपीत्यर्थ । इत्थमनुमानमिति । ईदृशमप्यदप्यनुमानमित्यर्थं । [रसोऽहमप्सु इत्यादिनिर्वाहाय तन्मूर्तिवाचकत्वादित्येत स्थाने

**आप्तमुख्यैः** महर्षिभिः सर्वेषां वचसां शाश्वते भगवति **प्रतिष्ठा** पर्यवसानमगणि । "वचसां वाच्यमुत्तमम्", "नताः स सर्ववचसां प्रतिष्ठा यत्र शाश्वती(ते)" इत्यादीनि प्रमाणानि सहस्रशः सन्ति ; "वेदैश्च सर्वैरहमेव वेद्यः" इति स्ववचनमपि । किमनेन स्मृत्युपदेशेन ; श्रुतिरेव तावच्छरणम्(?), "सर्वे वेदा यत्रैकं भवन्ति" इत्यादिका बहुश. प्रवर्तते ! कथं तर्हि बालिशानां भगवत्पर्यन्तप्रतीतिः सर्वेष्वपि शब्देषु न जायते ; अत्रोत्तरम् **प्राक्तैरि**ति । **तस्याप्रतीतेः** भगवत्पर्यन्तत्वाप्रतीतेः विशेषणमात्रे प्रयोगः । **तदितरैः**=विद्वद्भिरपि विशेषणमात्रे क्वचित्क्वचित् **भङ्क्त्वा प्रयोगः**-विशिष्टवाचिनः शब्दस्य विशेषणमात्रे विभज्य प्रयोग इत्यर्थ. ॥ **इति जगद्वाचिनां शब्दानां परमात्मपर्यन्तत्वम्** ॥ ८५ ॥

**(311) व्युत्पत्तिर्वाचकानां स्थिरचरविषये लोकतो नेश्वरादौ ;**
**अव्युत्पन्नार्थवृत्तिस्त्वधिपतिनयतः स्यादमुख्येति चेन्न ।**
**व्युत्पत्तेः पूरणं हि श्रुतिशिरसि कृतं ; नोपरोधः कथंचित् ;**
**देहित्वं चाऽऽधिपत्यात् समधिकमिह खल्वक्षपादप्रणी(गी?)तात्[1] ॥ ८६ ॥**

---

1. तदपृथक्सिद्धवाचित्वादिति गुणादिसाधारणहेतुरपि ग्राह्यः। अत्रापृथक्सिद्धत्वं साक्षात्परम्परा-साधारणम्। अतो न रसादिशब्दे हेत्वसिद्धिः। अत्र सामान्यमुखी व्याप्तिर्नेष्यते। अतो जीवं प्रत्यपि देहगतरसादेः परम्परयाऽपृथक्सिद्धत्वात् व्याप्तिभंग इति दोषो न प्रसज्यते। निष्कर्षकेतरत्वमपि न निवेश्यम्। शरीरादिशब्दैरपि परमात्मनो वाच्यत्वस्येष्टत्वात्। यथा गायत्रीविद्यायाम्। दृष्टान्तस्तु रामकृष्णादिशब्द एव। तावच्छरणमिति दृश्यते। स्मृत्यादिसर्वशरणभूता श्रुतिरेवास्तीत्यर्थः ॥८५॥

ननु सर्वेषां शब्दानां परमात्मवाचित्वसाधनमयुक्तम्, प्रत्यक्षविरोधात्। न हि प्रत्यक्षबाधितमनुमातुं, शब्देन बोधयितुं वा शक्यते। कथं प्रत्यक्षविरोध इति चेत्—लोके गामानयेत्यादौ गोकर्मकानयनमात्रप्रतीतेः परमात्मनो व्युत्पत्त्यप्रविष्टत्वात्। तस्मादव्युत्पन्नार्थग्रहणं लक्षणयैवेति शंकते व्युत्पत्तिरिति। घटमानय, गामानयेत्यादिषु स्थिरविषये चरविषये वा वाचकानां= शब्दानां लोकतो भवन्ती व्युत्पत्तिर्नेश्वरादौ भवति। आदिपदेन जीवग्रहणम्। देवमनुष्यादिशब्दानां जीव-पर्यन्तत्वमपि न लोकव्युत्पत्तिलभ्यम्, जीवस्यातीन्द्रियत्वादिति। अतः, सर्वं ब्रह्म, मनुष्यो जीवः, देवदत्तोऽहम् इत्यादिर्व्यवहारो लाक्षणिक एव स्यात्। अधिपतिनयतः= राजा राष्ट्रमिति राष्ट्र राजा-भेदप्रतिपादकशब्दवदिति शंकां परिहरति इति चेन्नेति। लोकव्युत्पत्तिर्हि गोघटादिशब्दवाच्यत्व-मचेतनांशेषु ज्ञापयति। न त्वन्यस्य तद्विषयत्वं वारयति। तर्हि गंगाशब्दस्य तीरार्थकत्वमपि शक्त्या स्यात्, प्रवाहविषयकत्वस्य व्युत्पत्तितो लाभेऽपि तीरविषयकत्वस्यावारणात्। केवल-तीरार्थकत्वा-योगेऽपि, व्युत्पत्तिगृहीतार्थानुपरोधेनात्र परमात्मग्रहणवत्, प्रवाहात्यागेन तत्संबन्धिनीरेत्युक्ति-संभवात्। तथा राजा राष्ट्रमित्यपि मुख्यं स्यात्; राष्ट्रपदस्य तदधिपतिरित्यर्थस्य वा राजशब्दस्य राजशास्यमित्यर्थस्य वा मुख्यतया ग्रहणसंभवादिति चेत्—न; तदपेक्षयाऽत्र वैषम्यात्। शरीरात्म-भावो ह्यत्राऽऽत्मना साकं संबन्धः। न तु केवलाधिपत्यादिः। तावता किमिति चेत्—अपृथक्-सिद्धधर्मवाचिनां शब्दानां धर्मिपर्यन्तत्वस्य जातिगुणादिस्थले आकृत्यधिकरणे अनुभवमूलक-युक्त्या शिक्षिततया विशिष्टव्युत्पत्तेर्लोकसिद्धत्वात्। अत एव मनुष्यादिशब्दानां जीवात्मपर्यन्तत्वं लोकसिद्धमेव। परं जीवस्य देहातिरिक्तत्वज्ञानवन्मात्रगोचरमेतत्। इतरेषां जीवविषयकज्ञाना-भावात्। अत एव कणादमहर्षिरपि देवदत्तो गच्छतीत्यादौ देवदत्तपदं देहमात्रे भाक्तम्, जीवपर-

यदि ब्रह्मणः सर्वशब्दवाच्यत्वम्, तर्हि लोकव्युत्पत्तिविरोधः स्यात्। घटपटादिशब्दानां घटपटादिष्वेव लोके व्युत्पत्तिः ; न पुनरीश्वरे। अतः कथं व्युत्पत्तिविरोधः सोढव्य इत्याक्षिपति **व्युत्पत्ति**रिति। कथं तर्हि ईश्वरे जगद्वाचिनां शब्दानां प्रयोग इत्यत्राह **अव्युत्पन्ने**ति। यथा, 'राजा राष्ट्रम्' इत्यत्र आधिपत्यनिबन्धनं सामानाधिकरण्यम्, एवं जगद्वाचिनामीश्वरे प्रयोगोऽप्याधिपत्यनिबन्धन इत्यर्थः। अत्रोत्तरम् **ने**ति। अयमत्र भावः—प्रथमव्युत्पत्तेरपूर्णायाः पूरणमेव वेदान्ते क्रियते ; न पुनः प्रथमव्युत्पत्तिबाधः। वेदान्तश्रवणेन हि व्युत्पत्तिः पूर्यते। कर्मकाण्डश्रवणेन देहमात्रपरतया पूर्वं व्युत्पन्नस्य देवादिशब्दस्य देहव्यतिरिक्तात्मपरतया व्युत्पत्तिः पूर्यते ; एवमत्रापि। तदिदमाह **नोपरोध इति**। नन्वीश्वरस्य जगत्कर्तृत्वम**क्षपादेना**प्यभिधीयते ; किमधिकं देहित्वं भवताऽभिधीयते इत्याशङ्कयाह **देहित्वमि**ति। अयमत्र भावः— **यद्यक्षपादो**ऽपीश्वरस्याऽऽधातृत्वविधातृत्वशेषित्वनियमेन शरीरवाचिशब्दानां शरीरिपर्यन्तत्वमाह, तदपि वयमनुमन्यामहे। यदि नाह, तमेवानेनोपपादनेन प्रतिक्षिपामः [इति ?]। स खलु केवलमाधिपत्यम**क्षपादः** प्राह ; वयं तु विश्वदेहित्वमीश्वरस्य विश्ववाचिशब्दवाच्यत्वं चेति विभागः॥ **इति वाच्यार्थविवेचनम्; ब्रह्मणः सर्वशब्दवाच्यत्वे व्युत्पत्तिविरोधपरिहारः॥**

(312) **न ह्यक्षैः केऽपि वर्णाभ्यधिकमिह विदुर्वाचकं सावधानाः ;**
**शब्दादर्थं प्रतीमस्त्विति च जनवचो नैकमन्यत् व्यनक्ति।**

---

टी— त्वमेव मुख्यमित्याह। वेदादेर्जीवसद्भावज्ञापनमात्रमेव कृत्यम्। देवादिशब्दवाच्यत्वस्य तत्र सिद्धिस्तु तदनन्तरं युक्त्यैव। एवमेव परमात्मनः, तं प्रति जगतः शरीरत्वस्य च बोधनमेव श्रुतिव्यापारः। तत्पर्यन्तवाचित्वं तु न्यायसिद्धम्। यथा गामानयेत्यादौ एकव्यक्तिमात्रे व्युत्पत्त्युदयेऽपि प्रयोगबाहुल्येन सामान्यपरत्वव्युत्पत्तिव्यवस्थापनम्, तथा क्रमेण परमात्मपर्यन्तत्वस्थापनमपि। एवं स्थितेऽपि परमात्मनो वाच्यत्वमेवाऽऽगमसिद्धमिति कृत्वा व्युत्पत्तिरागमेन पूर्यते इति कथनं न्यायसिद्ध्यभावेऽपि स्वीकार्यमिति ज्ञापनाय। एवं यदि गंगाशब्देन प्रवाहमात्रे व्युत्पन्ने तद्वत् तीरस्यापि सह बोध्यत्वग्राहकं प्रमाणं नियतं स्यात्, तर्हि तदर्थवाचकत्वं व्युत्पत्तेर्न भवेत्। प्रत्युत तीरादिर्नार्थः इति बाधज्ञानमेव लोके। यत्तु राजराष्ट्रनिदर्शनम्, तदयुक्तम्, तस्य त्वदुक्तार्थस्वीकारस्य वक्तृविवक्षाविरोधित्वात्। राष्ट्रे राजतुल्यत्वाद्यभिप्रायेण हि तथाप्रयोगः न त्वाधिपत्यादिविवक्षया। क्वचित् तद्विवक्षायामपि तस्य देहित्वरूपात्मत्वाद्वैलक्षण्यमुक्तमेव। देहित्वविवक्षा त्वशक्या; राज्ञो राष्ट्रदेहित्वाभावात्। यदि त्वक्षपादादिसंमतमाधिपत्यमात्रमीश्वरे इष्यते, न देहित्वम्, तदा गौणत्वमेव। तावन्मात्रं तु न श्रौतम्, किं त्वन्यादृशशरीरलक्षणप्रवृत्ताक्षपादकल्पितम्। अत्र अन्यमहर्षित्यागेनाक्षपादोक्तिः सांख्यस्य निरीश्वरत्वात् योगमते वास्तवाधिपत्याभावात् कणादेनेश्वरस्य कण्ठतोऽनुक्तेः अक्षपादेन, 'ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्', 'न पुरुषकर्माभावे फलानिष्पत्तेः', 'तत्कारितत्वादहेतुः' इति सर्वस्येश्वरकारितत्वस्य कण्ठोक्तेः। वेदान्तिनो महर्षयस्तु देहित्वस्वीकारिणः। यदि चेश्वरकारितत्वं गौतमोक्तमन्तर्यामितयेति सर्वत्राविशिष्टमिति विमृश्यते, तदा नियन्तृत्वनियमे सति अविशेषात् नियमेन धर्तृत्वं नियमेन शेषित्वमपि सुस्वीकरमिति गौतमोऽपि औपनिषदोद्दालकगौतमाविशिष्टो गण्यः॥ श्लोके प्रणीतादित्यशुद्धम्; प्रणीतादिति स्यात्। प्रकर्षेणोक्तादिति तदर्थः॥८६

एवं वाच्यं किमिति विचारितम्। अथ वाचकं किमिति विचार्यते। ननु जातिर्वा व्यक्तिर्वा

**सामग्र्यैक्यादिनीत्या भवति मतिरियं तादृशे वर्णसंघे**
**संभेदे वा पदानामिति न तदधिकः कोऽपि शब्दोऽपरोक्षः ॥ ८७ ॥**

एवं सर्वशब्दवाच्यत्वं ब्रह्मण उपपाद्य शब्दस्वरूपमेव शोधयति । तत्र स्फोटवादिन आहुः, "वर्णानां नानात्वात् ते न वाचकाः । शब्दादर्थं प्रतीम इति ह्येकत्वेनैव शब्दप्रतीतिः । अतो वर्णातिरिक्तः पदस्फोटः पदार्थप्रत्यायकः । एवं पदातिरिक्तो वाक्यस्फोटो वाक्यार्थप्रत्यायकः । न च वर्णसमुदायविवक्षया पदसमुदायविवक्षया वा वर्णानां पदानां च एकत्वं संभवति ; देशतः कालतो वा तेषामेकत्वासंभवात् । न तावत् ताल्वादिव्यापारोच्चारितानां देशत एकत्वं संभवति ॥ एककर्णशष्कुलीदेशसंबन्धादेकत्वमिति चेत्, तर्हि सर्ववर्णानामेकपदत्वप्रसङ्गः । न च शब्दानामेककालत्वम् ; वाचः क्रमवर्तित्वेन क्रमेणैव तदभिधानात् । अतः पदस्फोटो वाक्यस्फोटश्चैकत्वेनोपलभ्यमानः पदार्थं वाक्यार्थं च बोधयति" इति । अत्रोत्तरम्—एकार्थप्रतिपादकत्वेन व्याकरणादिव्युत्पन्ना एकबुद्ध्युपग्रहेण संघात

वी— जातिविशिष्टव्यक्तिर्वा, तद्विशिष्टजीवोऽपि वा तादृशजीवविशिष्टपरमात्माऽपि वा वाच्य इति विवादप्रसक्त्या ब्रह्मपर्यन्ते वाच्यत्वं स्थाप्यमासीत् । वाचकः शब्द इत्यत्र कः संदेहः । व्यवहाराद् व्युत्पत्तिग्रहकाले च अयं शब्द एतदर्थबोधक इत्येवानुमानात् शब्दस्य वाचकत्वं सुस्थमिति चेत्— सत्यम् । अथाप्येवमनुभवेऽप्यनुपपत्तिविमर्शेन शाब्दिकाः वर्णसमुदायात्मनः शब्दस्य वाचकत्वायोगात् तदन्यः शब्दो वाचको बोधकश्चेत्यातिष्ठन्ते । तन्निरासार्थोऽयं विचारः । घटपटादिशब्देषु एकवर्णमात्रस्य वाचकत्वायोगात् वर्णसमुदाये ग्राह्ये, तस्य समुदायस्य वा तत्तद्वर्णाभिव्यक्तिसमुदायस्य वा युगपदभावात् न तस्यापि वाचकत्वमिति तदतिरिक्त एकः शब्दो वाचक इति कल्प्यते । तस्यैव स्फोट इति नाम । पदस्थले कार्यकरः पदस्फोटः, वाक्यस्थले च वाक्यस्फोट इति तन्मतम् । तत्राह नेति । केऽपि देवा मनुष्या वा सावधानत्वेऽपि अक्षैः=श्रोत्रैः वर्णातिरिक्तं वाचकं हि न विदुः=न शृण्वन्ति । ननु शब्दादर्थं बुध्यामह इति लोकवाक्यात् शब्दो बोधे कारणम् । तत्रैकवचनान्तप्रयोगादेकत्वावगमात् अनेकवर्णातिरिक्तोऽयमित्यत्राह शब्दादिति । यदि वर्णव्यतिरिक्तः शब्दोऽपि अनुभूयमानोऽन्वयव्यतिरेकशाली च स्यात्, तदैवं शंक्येत । तदभावात् तदपि वाक्यं श्रूयमाणवर्णसमुदायातिरिक्तं न गमयति । अतो व्यवहारकालिकमतिर्वा शब्दादिति पञ्चम्यन्तशब्दविषयकमतिर्वा तादृशे=पूर्वोक्तवर्णसंघ एव भवति । संघस्य एकत्वं तु, सामग्र्यैक्यवत् । सामग्री हि कारणकलापः कारणान्येव । अथापि तत्रैकत्वव्यवहारो दृष्टः । न हि तत्रैकत्वबाधात् तन्निर्वाहाय कारणानि तानि विहाय किमप्यपूर्वं कारणमुन्नीयते । तद्वत् वर्णसंघातिरिक्तः पदस्फोटो न वक्तव्यः । तथा पदानां संभेदः संघ एव वाक्यार्थबोधकारणमिति तत्रैवैकत्वबुद्धिः, न तदतिरिक्ते वाक्यस्फोटे । यदि वर्णवत् ते स्फोटा अपि प्रत्यक्षाः स्युः, तर्हि न तदुपेक्षा शक्या । तदभावात् न ते स्वीकार्याः । नन्वेक एव स्फोट इष्यताम् ; तस्य तत्तद्वर्णसंघ-पदसंघाभिव्यज्यमानतया भेद औपाधिक इति चेत्— कोऽपि=एकोऽप्यपरोक्षो न स्वीकार्यः । यादृशानुपपत्त्या स्फोटं कल्पयन्ति, तादृशानुपपत्तिः स्फोटकल्पनेऽप्यस्तीति । अयमंशोऽपि वृत्तौ स्पष्टः ॥

वाचः क्रमवर्तित्वेनेति । ननु शाब्दिकमीमांसकयोर्वर्णनित्यत्वस्येष्टत्वात् सर्वेषामेककाल्यं कुतो नेति चेत्—तन्मते वर्णानां ताल्वादिव्यङ्ग्यत्वेनैव कारणत्वात् तत्तदभिव्यक्तिविशिष्टवेषेण वर्णानां यौगपद्यायोगात् । सरः रसः इत्यनयोर्भेदाय एकवर्णोत्तरेतरवर्णत्वरूपक्रमस्य एकत्वतया अभिव्यक्तिविशिष्टाकारेणैव तस्योपपादनात् । एकबुद्ध्युपग्रहेणेति । यद्यपि एकदेशावच्छिन्नरूपमेक-

भावमापन्ना वर्णा एव पदम् । एवमेकार्थप्रतिपादनरूपकार्यावच्छिन्नानि पदार्थप्रतिपादका(ना)नि पदान्येव वाक्यम् । अत्रैनयमेकबुद्ध्यवसितानां संघातभावविषयम्; अतो न विरोधः । पदतत्संघातव्यतिरिक्तस्फोटयोरनुपलम्भात् । ऐक्यप्रतीतेरन्यथासिद्धत्वात् । एवं बुद्धिसंगृहीतानां वर्णानां पदानां[च?]अर्थप्रत्यायकत्वानङ्गीकारे स्फोटाभिव्यञ्जकत्वमपि न स्यात्; तत्रापि किमेकैकस्याभिव्यञ्जकत्वम्, उत समुदायस्येति वक्तुं शक्यत्वात् । अस्मदुक्तप्रक्रियया समाधाय स्फोटाभिव्यञ्जकत्वाङ्गीकारे किमनेन स्फोटेनादृष्टचरेण; अर्थस्यैव तथा प्रतिपत्तिरस्त्विति । तदेतत् सर्वमभिप्रेत्याह **न हीति** । किं प्रत्यक्षात् स्फोट उपलभ्यते? तत् तावन्नास्ति; प्रत्यक्षाभावात् । नाप्यनुपपत्त्येत्याह **शब्दादिति** । एकत्वं संघातविषयमित्युक्तम् । तदेव दृष्टान्तेन विवृणोति **सामग्रीति** । न हि सामग्रीव्यतिरेकेण कार्यकारणमिति किंचित् कल्प्यते; तद्वदत्र वर्णपदसंघातव्यतिरेकेण पदवाक्यस्फोटाभिधानविषयत्वेन किंचिन्न कल्पनीयमित्यर्थः । अतो वर्णपदातिरिक्तस्फोटो न प्रत्यक्षगम्य इत्याह **नेति** ॥ **इति स्फोटप्रत्यक्षत्वभङ्गः ॥ ८७ ॥**

**(319) यादृग्भिः स्फोटधीस्ते भवति, भवतु तैरर्थधीरेव वर्णैः;**
**वर्णेषूक्तो विकल्पः समगतिरुभयोर्यौगपद्यक्रमादिः ।**

---

७१- कालवर्तित्वरूपं वा समुदायत्वं दुर्वचम्, तथापि तत्तद्वर्णश्रवणजन्यसंस्कारसंघादेकात्मनिष्ठात् अपेक्षितरीत्या पूर्वापरभावापन्नतया तावद्वर्णविषयकैकस्मृतिरूपज्ञानसंभवेन तावद्विषयकधीविषयत्वं, विषयतासंबन्धेन सा धीरेकैव वा समुदाय इति न क्लृप्तातिरिक्तस्फोटस्यावश्यकतेति भावः॥ द्वितीयपादे अन्यदिति सामान्ये नपुंसकम् । कल्पनकाल एव स्फोटशब्दवाच्यत्वेन कल्पनाविरहात् पुंल्लिङ्गप्रयोगस्यावश्यकताभावात् । युक्त्या तस्य प्रत्यक्षविषयत्वकल्पनमप्ययुक्तमित्याहोत्तरार्धेन॥८७॥

वर्णसमुदायस्यार्थज्ञानकारणत्वासंभवात् स्फोटस्यैव कारणत्वमित्यत्र हेत्वसिद्धिरपि प्रागुक्ता समुदायस्य कारणत्वोपपादनेन । अथ स्फोटस्यापि ज्ञातस्यैव कारणत्वात् तज्ज्ञानस्य वर्णसमुदायेनैवोत्पाद्यत्वात् तत्पक्षेऽपि तदुक्तो दोषस्तुल्य इत्यतोऽपि स्फोटासिद्धिमाह **यादृग्भिरिति** । अर्थधीः = अर्थज्ञानं पूर्वोत्तरभावापन्नवर्णविशेषसमुदायसाध्यमिति मतं प्रदूष्य स्फोटसाध्यत्वं वदता स्फोटधीः केन साध्येति वक्तव्यम् । तावद्वर्णग्रहणानन्तरमेवार्थज्ञानात् तथाविधक्रमविशिष्टसमुदायस्यैव तत्स्फोटज्ञानकारणत्वं वक्तव्यम् । एवञ्च यैर्यथाभूतैः स्फोटधीः, तैस्तथाभूतैरर्थधीरेव कुतो न भवेत् । त्वत्र हि त्वया दूषणमुक्तम्—किं वर्णाः युगपत्स्थिताः अर्थधियं जनयन्ति उत क्रमिकाः; क्रमिकत्वे किं वर्णज्ञानमपि क्रमिकम्, उत सर्ववर्णज्ञानं युगपत् । नाद्यः; क्रमेणोत्पद्य नश्यतां यौगपद्यायोगात् । अत एव न चतुर्थः । न द्वितीयतृतीयौ; अन्तिमवर्णतज्ज्ञानकाले तत्प्राक्तनस्याभावेन सामग्र्यभावात् कार्यासंभवादिति । यदि वर्णानां प्रत्येकं कारणत्वम्, तदा एकवर्णोच्चारणेऽप्यर्थबोधापत्तिः । अथ समुदायस्य कारणत्वम्, तत्र समुदायता कथम्? एकप्रदेशस्थत्वाद्वा, एककालस्थत्वाद्वा, एकज्ञानविषयत्वाद्वा? सर्वमसंभवि । तत्तद्वर्णोच्चारणकाल एव तत्तज्ज्ञानात् कथमेकज्ञानविषयत्वमपीति च । एवमर्थज्ञानकारणत्वनिषेधार्थं यो वर्णेषु क्रम-यौगपद्य-प्रत्येकस्थिति-समुदितत्वरूपो विकल्पः, सः तावद्वर्णानामेव स्फोटज्ञानकारणत्वोपपादनेऽपि समानप्रसरः इति उभयविषयेऽपि तुल्यः । उभयोरित्यस्य अर्थज्ञाने स्फोटज्ञाने चेत्यर्थः । वादिप्रतिवादिनोरिति वा । एवमेव वाक्यस्फोटज्ञानस्य पदसमुदायज्ञानोत्पाद्यत्वात् तत्रापि क्रमयौगपद्यादिविचारस्तुल्यः । एवञ्च तद्दोषपरिहाराय त्वया

**वाक्यस्फोटेऽपि तुल्यं तदिदम्; इह पदैरक्षरैर्वाऽवगम्ये**
**स्फोटे तद्बुद्धिबोध्ये सति च न घटते तत्तदध्यासक्लृप्तिः ॥ ८८ ॥**

स्फोटप्रत्यक्षत्वं निरस्य स्फोटक्लृप्तिवादं प्रतिबन्द्या विशदं निरस्यति **यादृग्भिरिति**। यादृग्भिर्वर्णैस्ते स्फोटधीर्भवति, तैरर्थधीरेव भवतु। वर्णेषूक्तो विकल्पः स्फोटाभिव्यक्तावपि समगतिः। **उभयोः**=वादिप्रतिवादिनोरित्यर्थः; यद्वा पक्षप्रतिपक्षयोः। पदस्फोटोक्तं दूषणं वाक्यस्फोटेऽपि तुल्यम् इत्याह **वाक्येति**। किंच पदैरक्षरैर्वा वाक्यस्फोटः पदस्फोटश्चाभिव्यज्यत इति भवदीया प्रक्रिया। एवंच वर्णपदाभिव्यङ्ग्ये स्फोटे, तस्मिंश्च स्फोटबुद्धिबोध्ये सति, स्फोटे विश्वस्यापि शब्दविशेषस्याध्यास इति भवदीया क्लृप्तिरसमञ्जसैव। तदिदमाह **न घटते** इति। स्फुटदृष्टे कथं वर्णाध्यासक्लृप्तिरित्यर्थः॥ स्फोटोऽपि क्लृप्तिमात्रमिति चेत्; कुत्र क्लृप्तिः? शब्दब्रह्मणीति चेत्, वर्णातिरेकेण किं तत् शब्दब्रह्म? वर्णानामेव श्रोत्रग्राह्यत्वेन शब्दत्वात् स्फोटस्य चानुपलम्भनिरस्तत्वादिति ॥ **इति स्फोटक्लृप्तिभङ्गः** ॥

(314) **शब्दो ब्रह्मेति यत्तन्मुनिभिरभिदधे, स ह्यचिद्वेद इष्टः;**
**सूक्ष्माकारस्तु सोऽर्थं न गमयति; यतः सत्तया नैष हेतुः।**
**स्फोटस्त्वं वर्णजुष्टस्त्विति यदभिहितं भारते, साऽपि शक्तिः**
**वर्णानां स्यात्; तयाऽर्थः स्फुट इति घटते स्फोटशब्दोऽपि तस्याम् ॥ ८९ ॥**

[आगमिकस्फोटादिशब्दनिर्वाहमाह शब्द इति।] तर्हि शब्दब्रह्मेति तत्तत्र मुनिभिरभिधीयते,

श्री–प्रागस्मदुक्तसरणिरेव स्वीकार्येति स्फोटाकल्पनेनैव निर्वाहे किं तेनाजागलस्तनेनेति भावः। अथ तत्पक्षेऽधिकं दोषमाह इहेत्यादिना। वर्णैः पदैश्च यथायथं व्यंग्यः स्फोट इति, स्फोटे तत्तद्वर्णाध्यास इति च स्वमतम्। यदि दीपेन घटादिरिव वर्णादिना स्फोटो यथावद् व्यञ्जितः, एवं पदाक्षरान्यतरव्यंग्ये स्फोटे तद्बुद्धिबोध्ये=स्फोटरूपेण विशिष्य बुद्धे च सति कथं वर्णाध्यासः इत्यर्थः। न हि दीपव्यंग्ये घटादौ दीपत्वाध्यासः। अतोऽध्यासवर्णनमप्ययुक्तम्। स्फोटत्वेन बुद्धत्वमपि दुर्वचम्। परीक्षकाणामपि तथा कुत्रापि प्रतीत्यभावात्। किमिदं स्फोटत्वम्। न च–तद्वृत्त्यसाधारणधर्मेण तद्ग्रहणं नेष्यते, किन्तु शब्दत्वरूपसामान्यधर्मेणैव; अत एव वर्णाध्यासः—इति वाच्यम्—वर्णातिरिक्तमेव शब्दत्वेन भानम्, न तु वर्णः; तत्र वर्णत्वाध्यास एवेत्यत्र प्रमाणादर्शनात्। अर्थज्ञानानुपपत्तिस्तु परिहृतेति। न च ध्वनिवैविध्येन तत्तद्व्यंग्यस्फोट एव वर्णत्वपदत्ववाक्यत्वाभ्युपगम इति वाच्यम्। श्रूयमाणेषु प्रसिद्धस्य वर्णत्वादेरपलापायोगात् ॥ ८८ ॥

आगमोऽपि न स्फोटे प्रमाणमित्याह शब्द इति। शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छतीत्यादिमुनिवाक्यं न स्फोटपरम्। ऋग्यजुरादिवेदपरत्वात्। स च वर्ण एव। ननु उपलभ्यमानवर्णीयस्यापूर्वभाविसूक्ष्मावस्था स्फोटशब्दप्रवृत्तिनिमित्तमस्त्वित्यत्राह सूक्ष्मेति। सः=स्फोटत्वाभिमतः, सूक्ष्मत्वादेवाग्राह्यत्वात् नार्थबोधहेतुः। न चाग्राह्यत्वेऽपि हेतुत्वम्। इन्द्रियातिरिक्तप्रमाणानां सत्तया हेतुत्वाभावात्। तथात्वे सर्वबोधापत्तेश्च। ननु, 'स्फोटस्त्वं वर्णसंश्रयः' इति वाक्यं प्रमाणमित्यत्राह स्फोट इति। ध्वन्यात्मकशब्दापेक्षया वर्णात्मकशब्दस्यार्थगमकत्वरूपा हि शक्तिरस्ति तद्रूपत्वं परमात्मनस्तत्रोच्यते। नातिरिक्तं द्रव्यम्। अन्यथा वर्णसंश्रय इत्यस्यायोगात्। स्फुटत्यनेनार्थोऽनेनेति स्फोटः॥ आगमिकेत्याद्यवतरणवाक्यं क्वचित्कम्। तर्हीत्यादिकं तु सर्वत्र। तत्र तर्हीत्यारभ्य श्लोका-

तत् किमित्यत्राह **स हीति**। **अचिद्भेदः** ऋग्वेदादिरूपं शब्दमात्रम्। यदि वा शब्दस्य सूक्ष्माकारः शब्दोत्पत्त्यवस्थाविशेषः; स चार्थावगमको न भवति; शब्दस्य सत्तयाऽर्थावबोधकत्वाभावात्; तादृशावस्थापन्नस्य शब्दस्यानुपलम्भविषयत्वात्; तदिदं सर्वमाह **सूक्ष्माकार** इति। तर्हि, "स्फोटस्त्वं वर्णजुष्ट. (संशयः ?)" इति **भारतोक्तं** कथमिति चेत्; इत्थम्। अर्थस्फोटकत्वात्=प्रकाशकत्वात् वर्णानां शक्तिरेव स्फोट इत्यभिधीयते। अतो वर्णानामुत्पत्त्यवस्थाग्रह(?)विशिष्टाचिद्द्रव्यविशेषव्यतिरेकेण शब्दब्रह्मेति किंचिन्नास्ति। अर्थावबोधकशब्दशक्तिव्यतिरेकेण **स्फोटशब्दवाच्योऽपि** नास्तीत्यर्थः॥

**इति आगमिक-स्फोटादिशब्दनिर्वाहः॥ ८९॥**

(315) **यत् प्रत्येकादिकल्पे गमकविषययोरप्रतीत्यादिदोषात्**
**बौद्धाः शाब्दाश्च बुद्धिं कतिचिदभिदधुर्वाक्यवाक्यार्थरूपाम्।**
**नैतत् बाह्येन बाह्यो विदित इति मतेः; बाधकोक्तेश्च साम्यात्**
**वाक्यपादावैक्यबुद्धेस्त्वनुकथितनयादन्यथासिद्धितश्च॥ ९०॥**

---

वी— वतारिकैव स्यात्। तथा च सहीति इत्येतत्स्थाने शब्द इतीति प्रतीकधरणं युक्तम्। यदि वेत्यारभ्य द्वितीयपादावतारिका। यदि तु इत्यर्थः। शब्दोत्पर्त्त्यवस्थेति। शब्दोत्पत्तिहेतुभूतावस्थेत्यर्थः। यद्वा वर्णावर्णोभयसाधारणशब्दसामान्योत्पत्तिरूपावस्थाविशेष इत्यर्थः। अनुपलम्भविषयत्वादिति। उपलम्भाविषयत्वादित्यर्थः। तर्हि तत्र शब्दब्रह्मेति ब्रह्मशब्दप्रयोगः कथमित्यत्राह अतो वर्णानामिति। परं ब्रह्माधिगच्छतीति मुख्यस्य ब्रह्मणोऽन्यस्य कथ्यमानत्वात् इदं सर्वमूलभूततया त्वदिष्टः स्फोटो न भवति। ब्रह्मणश्च भूतगुणभूतशब्दनिरूपितसाक्षादाश्रयत्वमयुक्तम्। अतः शब्दोत्पत्तिरूपावस्थया गृह्यमाणता यस्याचिद्द्रव्यस्य, तद्विशिष्टतया परंब्रह्मैव शब्दब्रह्मेति कथ्यते मुख्यवृत्त्या, 'रसोऽहमप्सु' इत्यादौ रसादिशब्दत इव। लक्ष्यार्थस्तु शब्दब्रह्म=ब्रह्मवत् बहुमान्यं दुर्ग्रहं दुरवगाहं वाङ्मयमिति।

जातिव्यक्त्यादिवाच्यविचारानन्तरं वाचकं किमिति विचारितम्। एकहेलया वाक्यस्फोटोऽपि व्युदस्तः। अथ वाक्यार्थबोधकत्वं कस्येति विचार्यम्। तत्र मीमांसकपक्षद्वयं स्वीकरिष्यति। ततः प्राक् वाक्यार्थोऽपि प्रतिभैवेति कृत्वा वाक्यस्यापि प्रतिभात्वं स्वीकृत्य तयोः प्रतिभयोः कार्यकारणभावातिरिक्तं वाक्यवाक्यार्थबोध्यबोधकभावमनभ्युपगच्छतो बौद्धादेर्मतमनूद्य निरस्यति यदिति श्लोकेन। कतिचिदभिदधुरिति यत्—नैतदित्यन्वयः इतिशब्दाध्याहारेण। गामनयेति वाक्यव्यक्तिषु कस्याश्चित् गमकत्वे अन्यत्र बोधानापत्तिः। सर्वैस्या इत्युक्तौ आनन्त्यात् दुर्ग्रहत्वम्। एवमेकवाक्यव्यक्तिविवक्षितार्थव्यक्तेर्बोध्यत्वे, अर्थव्यक्त्यन्तरस्याप्रतीतिः स्यात्। सर्वव्यक्तिबोध्यत्वं दुर्ग्रहम्। एकैकस्थलेऽपि सर्वार्थव्यक्तबन्धयापत्तिश्चेति प्रथमपादार्थः। गमके=वाक्ये, विषये=अर्थे च एवं प्रत्येकादिकल्पनादाय अप्रतीत्यादिदोषं हेतूकृत्य, बौद्धाः केचित्, शाब्दिकाश्च केचित् बुद्धिरेव वाक्यं वाक्यार्थश्चेत्याहुः। विज्ञानमात्रवादी बाह्यापलापी योगाचार एवमेव हि वक्तुमर्हति। शब्दाद्वैतिनश्च—स्फोटातिरिक्तस्य कल्पनामात्रत्वात् कल्पनाद्व्यतिरिक्तं किमस्ति वाक्यवाक्यार्थरूपम्; अनिर्वचनीयवस्तुनोऽप्यस्वीकारादिति मन्यन्ते। निरस्यति नैतदिति। बाह्यवस्त्वपलापायोगस्य प्रागेवोक्तत्वात् अस्त्येव बाह्यं वाक्यमर्थश्च। तत्र बाधकोपन्यासे विज्ञानमपि न भवेत्, तथा स्फोटोऽपीति शून्यवाद एव स्यात्। किञ्च यः प्रत्येकसमुदायविकल्पः कृतः, स प्रतिभापक्षेऽपि समानः। गामानयेति अनेकवाक्यप्रतिभानां तदर्थप्रतिभानाञ्च अश्वं बधानेत्यादिप्रतिभा-

चिन्मात्रविवर्तवत् शब्दब्रह्मविवर्तत्वेन विश्वमपि वदन्तं शाब्दिकं प्रतिक्षिप्य, 'प्रतिभैव वाक्यवाक्यार्थभावेन दृश्यते ; न प्रतिभातिरिक्तं किंचित्' इति वदन्तौ **बौद्धशाब्दिकाभासौ** प्रतिक्षिपति **यदिति** । तत्र पूर्वार्धेनानुवदति, उत्तरार्धेन परिहारं वदतीति विभागः । अयमत्र भावः—प्रत्येकं वा शब्दवाच्यमर्थः, सर्वो वा ? यदि प्रत्येकम् अर्थः, व्यभिचारः स्यात् । सर्वस्याप्यर्थत्वे पुनः, आनन्त्यम् । एवं प्रत्येकं वा वाचकत्वं शब्दस्य, सामस्त्येन वेति विकल्प्य दूषणं वाच्यम् । तथाच **गमकविषययोः** अप्रतीतिर्विरुद्धप्रतीतिर्वा भवेदिति दोषात् बौद्धाः शाब्दाश्च केचित् बुद्धिमेव वाक्यवाक्यार्थभावेनाऽऽरोपितामाहुः । एतत् दूषयति **नैतदिति** । कुत इत्यत आह **बाह्येनेति** । **बाह्येन शब्देन बाह्योऽर्थो विदित** इति प्रतीतेः ; प्रत्येकादिविकल्पेन दोषोक्तेश्च साम्यात् । वाक्यवाक्यार्थयोः प्रतिभारूपत्वेऽपि किं व्यवस्थितप्रतिभारूपत्वम् उताव्यवस्थितप्रतिभारूपत्वम् ? अव्यवस्थितरूपत्वे लोकव्यवहारविरोधः; व्यवस्थितरूपत्वे सैव व्यवस्था शब्दार्थयोरप्रतिभारूपत्वे[ऽपि ?] स्यादिति भावः । कथं तर्हि वाक्यपदवाक्यार्थपदार्थादिष्वैक्यबुद्धिरिति, चोद्यं पूर्वोक्तन्यायेन समुदायविषयत्वेन परिहृतमित्याह **वाक्यादाविति** ॥

**इति प्रतिभावाक्यवाक्यार्थत्वभङ्गः ॥ ९० ॥**

(316) **आचष्टे प्रत्ययश्च प्रकृतिरपि मिथः श्लिष्टमित्यम्युपेतं ;**
**स्पष्टं दण्डयादिशब्देष्वपि तत् ; इतरथा धीविरोधप्रसङ्गात् ।**

---

व्यावृत्तकीदृशाकारेण कार्यकारणभावः। सामान्यस्य तदनिष्टत्वात्। आनन्त्याच्च प्रत्येकं कार्यकारणभावो दुर्वचः । इतरप्रतिभाव्यावर्तनाभावे अश्वबन्धनप्रतिभाकारणत्वमप्यस्या अस्त्वित्यतिप्रसक्तिः । अतोऽनुभवापलापातिरिक्तं न फलम्। नन्वेकं वाक्यम् एको वाक्यार्थ इति कथम्, वर्णानां क्रियाकारकादिरूपार्थानाञ्चानेकत्वादिति चेत्–पूर्वोक्तन्यायेन तदैक्यबुद्धेरन्यथासिद्धिः। सामग्र्यैक्यादिनीत्येति ह्युक्तम् । अस्तु सर्ववर्णविषयकज्ञानगतं विशेष्यविशेषणसर्वार्थविषयकज्ञानगतञ्चैकत्वमादायैव एकं वाक्यमेकोऽर्थ इति व्यवहारः । तावता प्रतीतस्यापलापो न युज्यते । एवमिदं नैतदित्यत्र हेतुत्रयम् ॥

एवं प्रतिभामात्रत्वपक्षनिरासात् वाक्यवाक्यार्थयोर्वास्तवत्वं बोध्यबोधकत्वञ्च सिद्धम् । तत्र द्वयी मतिरत्र प्रदर्श्यते, अन्विताभिधानम्, अभिहितान्वय इति । तत्र प्रथमप्रदर्शनमत्र श्लोके । ननु वाक्यत्वं नाम पदानां पदार्थानां वाऽन्वयशक्तिरित्युदयनाचार्यः । पदार्थापेक्षया वाक्यार्थस्य वैलक्षण्यं पदार्थमिथोन्वयादेव । अतोऽन्वयस्यावश्यकत्वे सति वाक्यात् अर्थस्यान्वयस्य च नियमेन प्रतीतिरिति स्थिते किमिदं पक्षद्वयरूपेणोपन्यस्यत इति चेत्—उच्यते । उभयस्य वाक्याद् ग्रहणमित्युभयसंमतमेव । परंतु किं पदार्थाः प्रथममभिधीयमानाः अन्वितत्वेनैवाभिधीयन्ते, किं वा विशकलितेषु तेष्वभिहितेषु पश्चात् तदन्वयग्रहणमिति । उदयनाचार्यवाक्यमप्येतदुभयाभिप्रायमित्यन्यदेतत् । वाक्यस्यान्विताभिधायकत्वं पददृष्टान्तेन दर्शयति **आचष्ट इति** । "प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः ; तयोस्तु प्रत्ययः प्राधान्येन" इति स्मरणम् । सह ब्रूतः इत्यनेन, 'न विशकलितवचनम्, किं त्वन्विततया' इत्युक्तम् । प्रत्ययः प्राधान्येनेत्यनेन प्रत्ययार्थं प्रकृत्यर्थान्वय उक्तः। अर्थमित्यनुक्त्वा प्रत्ययार्थमित्युक्तिः प्रत्ययस्य तात्पर्यग्राहकत्वमात्रम्, प्रकृतेरेव तदर्थोऽप्यर्थ इति मतिम्, प्रत्ययार्थत्वाभिमतस्य कर्मत्वादेः क्रियायां संबन्धविधयैव भानम, न किञ्चित्पदार्थत्वमिति मतिञ्च व्युदसितुम् । आचष्ट इत्येकवचनप्रयोगः वचनार्थसंख्यादिविशिष्टस्यार्थं तादृशप्रकृतिराचष्टे, प्रकृत्यर्थविशिष्टं

अन्यो(न्या ?)न्यसारितार्थान्वितमभिदधति स्वार्थमेवं पदानि ;
स्वाद्वातथक्रकादिः, न च पुनरभिधा ; नापि वाक्यस्य भेदः ॥ ९१ ॥

वाक्यानामर्थवत्त्वे सिद्धे तेषामन्विताभिधायित्वं पदप्रक्रियया समर्थयते आचष्ट इति । द्विविधं हि वाक्यार्थप्रक्रियाभेदमाहुः तत्तत्तन्त्रनिष्ठाः, अन्विताभिधानमभिहितान्वय इति। तत्र पदैरभिहिताः पदार्थाः वाक्यार्थं बोधयन्तीत्यभिहितान्वयः । "पदजातं श्रुतं सर्वं सारितानन्वितार्थकम् । न्यायसंपादित-

र्थी— कर्मत्वादिकं प्रत्यय आचष्टे इति अंशभेदज्ञापनार्थः; एकैकपदस्याप्यन्विताभिधायकत्वमस्तीति ज्ञापनार्थश्च। एवं प्रकृतिविभक्त्युभयविषये उक्त्वा प्रकृत्यन्तर्गतभागद्वयेऽप्याह स्पष्टमिति । दण्डी-त्यत्र इनिप्रत्ययस्य विशिष्ट इत्यर्थः । इतरथा= शब्दानां विशकलितार्थस्मारणमात्रोपक्षीणत्वस्वीकारे धीविरोधप्रसंगात्= वक्तुरभिप्रायस्य श्रोत्रनुभवस्य च निरोधः स्यात् । ननिदमुदाहरणमयुक्तम् । यो हि प्रकृतेः प्रत्ययस्य च पृथक् पृथगर्थमनन्वितमंगीकृत्य तत्तदर्थोपस्थित्यनन्तरमुभयोरन्वयं वदेत्, तस्य प्रकृतिप्रत्ययौ विशिष्टार्थबोधकाविति वचनं कथञ्चित् युज्यते । भवतस्तु एकैकमपि अन्वितमेवाभिधत्ते इति मतम्। तत्र एकेन यदन्वितस्वार्थाभिधानं कार्यम्, तज्ज्ञानं पूर्वं कथं जातम्। पूर्वं गोपदात् गोज्ञानाभावे कथमानयपदं तदन्वितमभिदध्यात् । एवमानयनरूपार्थस्य प्रागनुपस्थितौ कथं गोपदं तदन्वितमभिदध्यात् । अतोऽन्योन्याश्रयः । मध्ये द्वारकल्पने चक्रकम् । एकैकेनापि पदेनेतरनिरपेक्षं सर्वबोधस्वीकारे पदान्तरवैयर्थ्यं वाक्यभेदश्च-इत्यत्राह अन्येति । एवं= प्रकृति-प्रत्ययस्थले परसंमतरीत्यैव, पदानि स्वार्थम्= एकैकपदसारितमर्थम् अन्यान्यपदसारितार्थेनान्वित-तयैवाभिदधति= वदन्ति । एकैकमपि पदमन्विताभिधायकमेवेत्यर्थः। अन्यान्येत्यनेन एकक्रियायाम-नेककारकान्वयः एकविशेष्येऽनेकविशेषणान्वयश्च ज्ञाप्यते । स्वार्थमिति पदश्रवणात् सारितेत्यत्र स्वस्मान्वयाच्च अन्यान्येति पाठस्तर्क्यते। अन्योन्येति पाठश्चैव ग्रन्थेषु। तस्य अन्वितेत्यत्रान्वयः। तदा सारितेत्यस्य पदान्तरसारितेत्यर्थः। अन्योन्यपदेन, गोपदसारितान्वितानयनाभिधानं यथा आनयेति पदेन, तथा गोपदेनापि आनयनान्वितस्वाभिधानमिति ज्ञाप्यते । तर्हि नानाविशेष्यकत्वापत्तिरिति चेन्न; मिथोऽन्वयोऽस्तीत्यत्रैव तात्पर्यात् विशेष्यविशेषणभेदाविवक्षणात् । न च पौनरुक्त्यम् । पौर्वापर्याभावात् । वस्तुतः सकृत्सर्वविषयक एव बोधो जायते । तत्रैकं विशेष्यम्, पराणि विशेष-णानीति रीतिरेकैव । तत्र विशेष्यपदं विशेषणान्वयानुयोगितया स्वार्थमभिदधाति ; विशेषणपदञ्च विशेष्यान्वयप्रतियोगितया स्वार्थमित्येतावदेव विवक्षितम् । अतः= पूर्वं स्मारकशक्त्या पृथक् गवाद्यर्थस्मरणस्वीकारात् ततः आकाङ्क्षायोग्यतादिपरामर्शेन सकृदेवान्वयाभिधानस्वीकारात् एकैकस्यापि पदस्य पृथक् पृथक् सर्वविशिष्टार्थबोधजनकत्वस्यानुक्तेः चक्रकान्योन्याश्रयपौनरुक्त्य-वाक्यभेदरूपाः दोषा न भवन्तीति । प्रकृतिप्रत्ययदृष्टान्तीकरणात् अस्माभिः, 'पूर्वं तत्तत्पदप्रकृति-प्रत्ययार्थान्वयमात्रविषयकबोध एकः, तदनन्तरं महाबोधः' इत्युभयविधान्विताभिधानं स्वीकृतं स्यादिति चेत्—तथाऽस्तु, मा वा। "पदाभिहिताः पदार्था एव ; अन्वयांशे पदस्य न व्यापृतिः ; अर्थाः स्वयं स्वसामर्थ्यादन्वयधियं जनयन्ति' 'इति योऽयमभिहितान्वयपक्षः, तस्य विभक्तिकृत्तद्धित समासाद्यनुशासनेनान्वयविशिष्टार्थपरतया पदत्वनिष्पादकशास्त्रं नानुकूलमिति ज्ञापनमात्रार्थं तदुक्तेः प्रकृतिमात्रस्य प्रत्ययमात्रस्य चार्थबोधकत्ववत्, परिपूर्णं पदं पदान्तरेणान्वेतीति न्यायात् प्रकृति-प्रत्ययसमुदायस्यापि बोधकत्वमेषितव्यम् । यौगिकपदे अंशद्वयेन विशिष्टबोधदर्शनाच्च । तथाच तत्रान्वितबोधकत्वं वाक्येऽपीत्याशयः । तत्तत्तन्त्रेति । तन्त्रेत्यलम्; मीमांसेत्यर्थः तत्तदिति सत्त्वे गुरुतन्त्रभट्टतन्त्रेत्यर्थः। सारितानन्वितार्थकम्= प्रथममनन्वितार्थस्मारकम् । न्यायसंपादितव्यक्ति= आकांक्षायोग्यतादिपरिशीलनेन संपादिता व्यक्तिः= अन्वयार्हक्रमेण शब्दानुपूर्व्यभिव्यक्तिः येस्य

व्यक्ति पश्चात् वाक्यार्थबोधकम् ॥" इत्यन्विताभिधानम्। अयमत्र श्लोकार्थः—पदानि तावच्छ्रूयन्ते। श्रुतानि च व्युत्पत्त्यनुसारेण पदार्थस्वरूपाणि परस्परानन्वितानि स्मारयन्ति। स्मृतेषु च पदार्थेष्वाकाङ्क्षादिपरामर्शः। तत्रैव न्यायप्रवृत्तिः। न्यायप्रवृत्त्या च वचनव्यक्तिविशेषाभिव्यक्तिः संपाद्यते। ततः सम्यङ्न्यायानुगृहीतानि पदानि नानापदार्थविशिष्टैकप्रधानपदार्थात्मकं वाक्यार्थमभिदधतीति। **अभिहितान्वयवादिनस्त्वेवमभ्यदधुः** —पदैः पदार्थाः पृथक्पृथगभिधीयन्ते। तच्चाभिधानं विशेषव्यक्त्यभावात् स्मारका(णा?)न्न विशिष्यते, "पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते" इति वचनात्। ते चाभिहिताः पदार्थाः योग्यत्वेन परामृश्यमानाः स्वयमेव विशेषसंसर्गात्मकं वाक्यार्थमवबोधयन्ति। न तत्र पदव्यापारः, अर्थैरेवार्थविशेषसिद्धेः। यथा कविभिरालोच्यमानाः पदार्था एव वाक्यार्थरूपमर्थविशेषं संसर्गात्मकमवबोधयन्ति, पश्चादेव शब्दरचना प्रतिपन्नार्थानुरोधेन–एवमत्राप्यर्था एवार्थविशेषमवबोधयन्तीति। **अत्रान्विताभिधानवाद्याह** — यथा पदे प्रकृतिप्रत्ययौ सहैवार्थं विशिष्टरूपमभिधत्तः, तथैव वाक्येऽपि सर्वे शब्दाः सहैवार्थं विशिष्टमभिदधति। तदिदमाह **आचष्ट** इति। तदिदं मत्वर्थीयप्रत्ययसहितेषु दण्ड्यादिशब्देष्वपि समानमिति दर्शयति **स्पष्टमिति**। उक्तार्थेऽनुग्राहकं तर्कमाह **इतरथेति**। उपलम्भविरोधप्रसङ्ग एव हि सर्वेष्वपि तर्केषु सारतमः; यथा पदानि प्रकृतिप्रत्ययविभागेन विभक्तान्यपि विशिष्टमेकं पदार्थं वदन्ति, एवं पदान्यपि **परस्पर**स्मारितार्थविशिष्टमेकमर्थं वदन्ति। अयमर्थः—कार्यपरं चेत् वाक्यम्, संहतान्येतानि पदानि कारकविशिष्टक्रियामभिदधति। सिद्धपरत्वेऽपि, समानाधिकरणवाक्यं नीलमुत्पलमितिवत् नानाविशेषणविशिष्टमेकं विशेष्यं सिद्धमेवाभिदधाति। वैयधिकरण्येऽपि व्यधिकरणविशेषणविशिष्टं सिद्धमसिद्धं वा विशेष्यमाचष्टे, 'काष्ठैः स्थाल्यामोदनं पचति' इति; 'काष्ठैः स्थाल्यामोदनः पक्वः' इति वा। अत्रायं सारतमोऽर्थः—योग्येतरान्वितस्वार्थाभिधायीनि सर्वाण्यपि पदानि। तत्र कारकपदानि क्रियान्वितस्वार्थाभिधायीनि, क्रियापदं तु कारकान्वितस्वार्थाभिधायकम्। एवं सिद्धपरत्वेऽपि विशेष्यपदं

---

*श्री-* पदजातस्य तत् पश्चात् = उक्तपदार्थस्मरणयोग्यतादिपरामर्शानन्तरं वाक्यार्थबोधकम् = अन्विताथाभिधायकं भवतीत्यर्थः। तत्रैव न्यायप्रवृत्तिरिति। प्रतिवाक्यं कीदृशोऽर्थो वक्तुमुचित इति या मीमांसा भवति, सा परामर्शावसरे उपयुज्यते। तस्याः अनुकूलतर्कतया प्रमाणेतिकर्तव्यतात्वादिति भावः। अभिधानं = शक्त्या बोधनम्। स्मारकादिति। स्मरणादित्यर्थः। तथैव पाठो वा। कारिकायां तु स्मारकादित्येव। पदस्य ह्यविशेषस्तत्रोच्यते; अत्र त्वभिधानस्य। सामान्यं पदार्थः, विशेषो वाक्यार्थ इति न्यायात् कर्तव्यानयनान्वयज्ञानात् पूर्वं गोशब्दात् गोसामान्यमेव गृह्येत; न तु गोविशेषः, सुतरां जातिशक्तिवादे इति भावः। यथेति। पदैरभिहिताः पदार्थाः इति भवदुक्तिः। सुप्तिङन्तं पदमिति प्रसिद्धिः। अतः प्रकृतिप्रत्ययसमुदायस्याभिधायकत्वं भवदिष्टं भवति। यदि प्रातिपदिकादिमात्रं पदम्, तर्हि दण्डी इत्यादिप्रातिपदिके तदिष्टं भवति। कृदन्तं समस्तपदादिकमप्यत्र विवक्षितम्॥ अथ प्राभाकरोक्तस्यान्विताभिधानस्य स्वीकारेऽपि कार्यमात्रपरत्वं तदिष्टं नेष्यत इति व्यक्तये अयमर्थ इत्यादि। पचतीति पक्व इति च कर्तरि कर्मणि च प्रयोगोदाहरणम्। कर्तृमुख्यविशेष्यकः कर्ममुख्यविशेष्यकश्च बोध इति च ज्ञाप्यते। सर्वत्र क्रियायामेव कारकाणामन्वयः ॥९१॥

विशेषणान्वितस्वार्थाभिधायकम्; विशेषणपदं च विशेष्यान्वितस्वार्थाभिधायकम्। सर्वमेतदन्विताभिधानान्न मुच्यते। गुणप्रधानभावेनैव पदार्थानां प्रतीतेरेकवाक्यत्वं न विरुध्यते इति॥ एवमभिधानाङ्गीकारे परवाद्युक्ताः सर्वे दोषा निरस्ता इत्याह स्यादिति। पदैरर्थप्रतीतिः, अनन्तरमाकाङ्क्षादिपरामर्शः, पश्चात् पदैरर्थाभिधानम्, ततोऽर्थप्रतीतिरिति चक्रकम्। आकाङ्क्षादिपरामर्शादर्थाभिधानम्, अर्थाभिधानानन्तरमाकाङ्क्षादिपरामर्श इत्यन्योन्याश्रयः। उभयमपि नास्ति; प्रथममर्थाभिधानाभावात्; स्मरणमात्रत्वात् प्रथमं प्रत्येकमर्थानाम्। अत एव न द्विरभिधानप्रसङ्गः। विशेषणानां नानात्वेऽपि सर्वेषामपि पदानां विशिष्टार्थैक्यपरत्वेन वाक्यभेदप्रसङ्गोऽपि नास्ति॥ इति अन्विताभिधानम्॥ ९१॥

(817) स्वार्थे शब्दः, स चासावपि मिलितमतौ व्यापृतावित्यनेकाः
कल्प्यास्ते शक्तयः स्युः; कथमपि न भवेत् तादृशी शक्तिरेका।
अर्थेषु स्मारितेषु प्रथममथ च तद्योग्यतादौ विमृष्टे
शब्दैरेवान्विते धीर्मम भवति, तत्र स्वार्थबोधव्यवे(पे)तैः॥ ९२॥

इत्थमन्विताभिधानं साधयित्वा स एवान्विताभिधानवादी परैरभिहितमभिहितान्वयवादं दूषयति स्वार्थ इति। पदानां स्वार्थबोधनशक्तिः, पदार्थानां संसर्गबोधनशक्तिः, पदानामेव पदार्थेषु संसर्गबोधन-

ळी— अयमन्विताभिधानवादी अभिहितान्वयपक्षे कल्पनागौरवं दर्शयति स्वार्थे इति। एकैकोऽपि शब्दः स्वार्थे गवादिरूपे व्यापृतः इति स्वार्थबोधनशक्तिरेका। व्यापृताविति पदस्य एकवचनान्ततया विपरिणतस्यापकर्षः। स च=शब्दश्च, असावपि=ततः प्रागुक्तोऽर्थश्चोभौ मिलितमतौ=अन्वितबोधे व्यापृतौ। इति=एवं शब्दस्यानन्वितार्थमात्रबोधनशक्तिवत् अर्थस्यान्वयबोधनशक्तिः, पुनः शब्दस्य अर्थनिष्ठां मिथोऽन्वयबोधनशक्तिमाधातुं शक्तिरिति अनेकाः=तिस्रः शक्तयः अभिहितान्वयवादिकल्प्या इति गौरवम्। ननु शब्दशक्तिरेकैवास्त्विति चेत्, नेत्याह कथमपीति। अन्वितएवार्थोऽभिधीयत इत्युक्तौ शक्तिरेका स्यात्। प्रथममनन्वितस्य बोधनं पश्चादेव परम्परयाऽन्वितबोधनमिति शक्तिद्वयं शब्दे इति। न च—अर्थसामर्थ्यादेव संसर्गबोधः; आकांक्षायोग्यतादेरर्थ एव परिशीलनात्; अतः शब्दे द्वितीयशक्तिर्मास्त्विति—शक्यम्; प्रत्यक्षादिना स्मृत्या वा गृहीतयो. लोके संबन्धप्रतीतिनियमाभावात्। आप्तोक्तशब्दोपस्थितयोस्तु संबन्धध्रौव्यात् शब्दस्वभावस्य स्वीकार्यत्वात्। एवं धूमात् वह्निमानित्यादौ पञ्चम्या हेतुत्वोक्तावपि धूमनिरूपितमग्निनिष्ठं कारकत्वरूपहेतुत्वं वा तत्, धूमनिष्ठमग्निनिरूपितं ज्ञापकत्वरूपहेतुत्वं वेति संदेहे प्रत्ययस्य प्रकृत्यर्थनिष्ठधर्मबोधकत्वमिति स्वभाव इत्येव वक्तव्यतया शब्दशक्तेरपेक्षणात्। तथा मल्लं गच्छतीति प्रयोगे द्वितीयया कर्मत्वे संयोगरूपे उक्ते तस्य गमने किं जन्यतासंबन्धेनान्वयः, उत जनकतयेति विवादे क्रियाकारकशब्दशक्तिपरिशीलनमेव कार्यमिति। अतः कथमप्येका शक्तिर्न भवति। स्वपक्षे न स दोष इत्याह अर्थेष्विति। प्रथममर्थेषु शब्दैः स्मारितेषु सत्सु। तथा च प्रथमं नार्थाभिधानम्, किंतु एकसंबन्धिज्ञानादपरसंबन्धिस्मरणमिति तत्रतत्र क्लृप्तरीत्या स्मरणमेवेति न तत्र शब्दशक्तिरिति भावः। अथ योग्यताकांक्षासंनिधिविषयकविमर्शः। तत्रार्थस्वभावचिन्तनमात्रम्। ततः शब्दः सकृदेवान्वयविशिष्टार्थबोधं जनयतीति शक्तिरेकैव। अर्थशक्तेः सहगणनेऽपि शक्तिद्वयमेव। अर्थेऽन्वयशक्त्याधायिका शब्दे शक्तिः पृथगिति अधिककल्पनमभिहितान्वयवादे। शब्दैरेवेत्येवकारेण शाब्दबोध इति लोकप्रयोगनिर्वाहस्वारस्यमस्माकमेवेत्युक्तम्। तस्य त्वाह तत्रेति। व्यपेतैरिति

शक्त्याधानशक्तिरिति शक्तित्रयं कल्प्यमभिहितान्वयवादिनः । **स चासाविति** । शब्दश्चार्थश्चेत्यर्थः । मिलितमतौ शब्दा अपि व्याप्रियन्त इति वक्तव्यमभिहितान्वयवादिना ; अर्थे संसर्गबोधनशक्त्याधान-शक्तेः शब्दनिष्ठत्वादिति भावः ॥ ननु एकैव शक्तिः अर्थप्रतिपादनं, संसर्गप्रतिपादनं च तद्द्वारा, करोति ॥ तत्र ; तत्तच्छक्तीनां नियतविषयत्वात् । तदिदमाह **कथमपीति** । अस्माकं पुनरेकैव शक्तिर्योग्येतरान्वितं स्वार्थमभिदधातीति लाघवम् । प्रथमं स्मरणम् । न तत्राभिधानव्यापारः । अथ च परामर्शः । तत्रापि न शब्दव्यापारः । केवल(लं ?)विशिष्ट एवार्थे शब्दव्यापारः । अत एव शाब्दत्वं वाक्यार्थज्ञानस्यास्मत्पक्षे । युष्मत्पक्षे तु पदार्थप्रतिपादनद्वारेण कथंचिदेव शाब्दत्वम् । अतो जघन्यस्त्वत्पक्ष इत्याह **शब्दैरेवेति** ॥

**इति अन्विताभिधानवादिविहितः अभिहितान्वयवादभङ्गः ॥ ९२ ॥**

**(818) संसर्गं वाक्यवेद्यं स्फुटमभिदधते कानिचित् भाष्यवाक्या-**
**न्याद्यव्युत्पत्तिरुक्ता प्रतिपदम्; इह च क्वापि नान्यस्य हानिः ।**
**इत्थं मत्वा सयूथ्याः कतिचिदभिहितान्योन्यसंसर्गमीषुः**
**तत्तत्स्वारस्यलोकप्रतिपदनुगमात् तच्च नाधिक्षिपामः ॥ ९३ ॥**

---

७१–शोध्यम् । व्यपेतैरिति अशुद्धम् । व्यवेतैरित्यस्य व्यवहितैरित्यर्थः । यथा, 'व्यवायान्नानुषज्येत' इति जैमिनिसूत्रे व्यवायः=व्यवधानम् । शब्दोऽर्थं बोधयति, अर्थ एव वाक्यार्थमिति मते शाब्दत्वं परम्परयैव वाच्यमिति क्लेश इति भावः । नियतविषयत्वादिति । प्रथमशक्तेरर्थबोधनोपक्षीणत्वात् । अन्यथा प्रागेवान्वयबोधापत्तेः । पश्चादेव कार्यकरत्वे प्रथममर्थबोधानुत्पत्तिरेव वाच्येति भावः ॥९२

सिद्धान्ते अन्विताभिधानवाद एव सर्वेषामादर इति प्रपञ्चितं न्यायपरिशुद्धौ । अभिहिता-न्वयवादपक्षसंमतिदर्शकभाष्यकारश्रीसूक्तिभागानां निर्वाहप्रकारश्च तत्रोक्तः । अथापि सर्वथा तत्खण्डनास्थया न किमपि नस्साध्यमिति तत्रौदासीन्यं दर्शयति संसर्गमिति । भाष्ये अन्विताभिधाने सम्यगुक्ते सत्यपि कानिचित् भाष्यवाक्यानि संसर्गविशिष्टार्थाभिधानं वाक्येनेत्यनुक्त्वा संसर्ग-मात्रं वाक्यवेद्यं दर्शयन्ति । तेनार्थाः पदवेद्या इति विभागो ज्ञायते । तथा प्रथममन्विते वाक्याद् व्युत्पत्तिरिवानन्वितार्थमात्रे प्रतिपदव्युत्पत्तिरप्याद्या शिशूनां जायमाना दर्शिता । इह च=एतदभि-हितान्वयपक्षस्वीकारे च क्वापि=क्वचिदपि समानाधिकरणवाक्ये व्यधिकरणवाक्ये वा अन्यस्य= स्वपक्षस्थापनस्य परपक्षनिराकरणस्य वा न हानिः=न भंगः । अन्वयो युगपद्वा बोध्यतां पश्चाद्वा । सर्वथाऽर्थाभिधानमात्रेणोपरतौ वाक्यत्वायोगात् पदमात्रस्य चाप्रमाणत्वात् अखण्डवाक्यार्थः पक्षद्वयेऽपि हि निरस्त एवेति । इत्थं विभाव्य अस्मदेकदेशिषु केचित् पदैरभिहितानामर्थानामेवा-न्योन्यसंसर्गशक्तिमपि ईषुः=अनुमेनिरे । तत्तत्सूक्तिशकलस्वारस्यस्य, लोकप्रतिपदः=लोकानुभवस्य काव्ये शब्दार्थव्युत्पादनप्रणाल्याश्चानुसारे तमेकदेश्यभिप्रायं न सर्वात्मना निषेधामः । अत्र भाष्य-वाक्यं तावत्—"तेषुतेष्वर्थेषु तेषां शब्दानां प्रयोगो बोधकत्वनियन्धन इति निश्चिन्वन्ति", "व्युत्पन्नेनरशब्देनास्य शब्दस्यायमर्थ इति पूर्ववृद्धैः शिक्षिताः" इति । वेदार्थसंग्रहे च, "प्रकृति-प्रत्यययोरर्थभेदेन पदस्यैव विशिष्टार्थप्रतिपादनमवर्जनीयम् । वाक्यस्यानेकपदार्थसंसर्गविशेषाभि-धायित्वेन", "अस्य शब्दस्यायमर्थ इति पूर्ववृद्धैः शिक्षिताः", "एवमेव पदानां स्वार्थाभिधायित्वं संघातविशेषाणाञ्च यथावस्थितसंसर्गविशेषवाचित्वञ्च जानाति" इति ॥

इत्थमन्विताभिधानमुक्तम् । (नमुक्त्वा) अभिहितान्वयपक्षेऽपि नास्माकं काचित् क्षतिरित्याह **संसर्गमिति** । संसर्गमेव वाक्यवेद्यं कानिचित् भाष्यवाक्यान्यभिदधति। तदनुकूलं च शम्यातातमातुलादिभिर्बालानां प्रतिपदव्युत्पत्त्यभिधानं **भाष्यकारस्य** । तदेतदाह **आद्येति** । एतत्पक्षस्वीकारे **नान्यस्य** प्रधानार्थस्य हानिः । तदिदमाह **इह चेति** । यत्तु शक्तिद्वयकल्पनागौरवमभिहितम्, तदपि नास्ति; पदानामेव पदार्थाभिधानशक्तेः स्वीकारात् । अर्थानां संसर्गबोधनसामर्थ्यं स्वाभाव्यमेव; शब्दाभिधानमन्तरेणापि प्रतीतानामर्थानां संसर्गबोधनसामर्थ्यस्य लोके दृष्टत्वात् । अन्यथा कथमिव कवयः परामृश्यमानैः पदार्थैर्वाक्यार्थं प्रतिपद्य स्वयमेव वाक्यं रचयेयुः ? शाब्दत्वं च शब्दान्वयव्यतिरेकाभ्यामेव युज्यते; वाक्यार्थस्यान्यवधाने त्वनादरः । अतोऽभिहितान्वय एव स्यादिति केचिदाचार्याः । तदेतदाह **इत्थमिति** । एतदङ्गीकरोति **तत्तदिति** । तदङ्गाभ्युपगमस्य त्वात्, लोके बालकानां व्युत्पत्तिसमये पदार्थप्रतिपत्तिपूर्वकं वाक्यार्थप्रतिपत्तिस्वारस्यानुगमादमुमपि पक्षं नाधिक्षिपाम इति । अयमत्र भावः—यद्यप्यन्विताभिधानम्, तथाऽपि निर्विशेषब्रह्मवादिनो न वेदवेद्यत्वं निर्विशेषस्य सिध्येत् । यद्यभिहितान्वयः, तथा(दा?)ऽपि तथा; अन्वितस्यान्वयस्य वा भेदगर्भत्वात् । अतो **गुरुकुमारिलपरिगृहीतं** पक्षद्वयमप्याश्रित्य परपक्षवादिनं प्रतिक्षिपामः; नास्माकं क्वापि निर्बन्ध इति । प्रधानार्थविरोधे हि प्रतिक्षेप्यत्वनिर्बन्धः ॥ **इति अभिहितान्वयपक्षः ॥ ९३ ॥**

---

७९— अभिहितान्वय एव स्यादिति केचिदाचार्या इत्युक्त्वा, अमुमपि पक्षं नाधिक्षिपामः इत्युक्त्वा अन्विताभिधान एवाऽऽदरः प्रादर्शि । अत्रेदं बोध्यम्—पदवृत्तिज्ञानजन्यपदार्थस्मरणात् आकांक्षादिज्ञानसहकृतात् शाब्दबोधः अनेकपदार्थसंसर्गविषयक इति तार्किकैरप्युक्तम् । स्मरणमेव तु प्रथमं प्राभाकरैरप्युक्तम् । अभिहितान्वयवादिनामपि पदात् पदार्थस्मरणे जायमाने तदुपेक्ष्य तदतिरिक्तः पदजन्योऽर्थबोधः किमर्थं स्वीकर्तव्य इति शंक्येत। तत्रेदं वक्तव्यम् । तार्किकैः शक्त्या पदार्थस्मरणमित्युच्यते । शक्तिर्नाम किमाकारा । अस्मात् पदात् अयमर्थो बोद्धव्य इत्याकारिकैव । तदाकारत एव पदस्यार्थबोधकत्वं संप्रतिपत्तव्यम् । तदेव बोधकत्वं शक्तिरिति तु मीमांसकाः। स च बोधो न स्मरणम्; व्युत्पित्सोः प्रथमं पदाज्जायमानस्य ज्ञानस्य स्मरणरूपत्वाभावात् । बोधकत्वरूपसंबन्धे गृहीते पश्चात् किल एकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति रीत्याऽर्थस्मरणम् । स बोधः अनन्वितार्थबोध एवेति भाट्टतार्किकमतम् । व्यवहारात् कार्ये व्युत्पत्तिं प्रदर्शयन् प्राभाकरस्तु वाक्यादन्वितबोध एव प्रथममिति अन्वितबोधकत्वमेव पदस्य मन्यते । प्रथमव्युत्पत्तेरन्वयविषयकत्वात् पश्चात् कोशादितो व्युत्पत्त्यवसरेऽपि सामान्यतो यत्किञ्चिदन्वितस्वार्थाभिधानमेव शब्दस्य गृह्णातीति तत्पक्ष इति वक्तव्यम्। यथा यजेतेत्यादौ फलेतिकर्तव्यतयोरश्रवणेऽपि यागकरणिका यत्किञ्चिद्भाव्यका यत्किञ्चिदितिकर्तव्यताका इति स्वभावतो बुध्यत इति । परंतु प्राभाकरैः अन्वितशक्तिग्रहबलात् सामान्यतो यत्किञ्चिदन्वितत्वेन रूपेणैवार्थस्मरणं पश्चात् योग्यतादिपरिशीलनमिति स्मरणेऽप्यन्वयसामान्यं विषयतया नेष्टम्। भाष्यकारदर्शितायां शशिपशुप्रभृतिपदार्थशिक्षायां प्राथमिक्यां च अन्वितव्युत्पत्त्यसंभवात् शब्दस्य बोधकत्वावधारणमनन्वितबोधविषयकमेव वक्तव्यम्। अतः शब्दस्यार्थबोधकत्वमवर्जनीयम् । एवमपि पश्चादभ्यासे तार्किकोक्तरीत्या अवश्यजायमानस्य स्मरणस्यैव व्यापारत्वे संभवति बोधस्य कस्यचिदावश्यकता नास्ति । अस्तु वा बोधस्मरणसाधारण्येन शब्दजन्यवृत्ति-

(319) द्वारे भिन्ने समानाधिकरणवचसामैक्यतात्पर्यसिद्धेः
भेदाभेदस्थितानामिदमनुगुणमित्यार्हतादेर्दुराशा ।
वस्तुस्थित्यैकरूप्ये वचनमितरथा बोधयत् स्यान्न मानं
तन्मानत्वात् द्विधैकं स्थितमिति च न सत्, भेद एवोपपत्तेः ॥ ९४ ॥

इत्थं वाक्यस्याभिधानप्रकारभेदमुक्त्वा समानाधिकरणवाक्यानां भेदाभेदपरत्वं प्रतिक्षिपति **द्वार** इति। इत्थं खल्वार्हतादीनामालापः-यत्र समवायमिच्छन्ति समवायवादिनः, तत्र भेदाभेदमेव वयमन्विच्छामः । स च भेदाभेदात्मा धर्मविशेषः सामानाधिकरण्येनैव सिद्धः, भेदे सति मत्वर्थीयदर्शनात् सामानाधिकरण्यस्य, दण्डी कुण्डली गोमान् अश्ववानिति । अतो मत्वर्थीयनिरपेक्षसामानाधिकरण्यं भेदाभेदमेवोपपादयति । अत्यन्तभेदे सामानाधिकरण्यानुपपत्तेः, (तिः?) घटः पट इतिवत् । अत्यन्ताभेदे च सामानाधिकरण्य न संभवति, घटो घट इतिवत् । यत्र भेदाभेदौ तत्रैव सामानाधिकरण्यम्,

---

वी-प्रयुक्तार्थज्ञानत्वेनैव कारणता। अत एव स्मरणसाधारण्येनैव पदस्यार्थज्ञानकारणत्वात् अर्थानुभवजनकत्वनैयत्याभावात् पदस्याप्रमाणत्वम् । एवमर्थबोधजनकत्वस्वीकारेऽपि भाष्यकारैः संसर्गबोधकत्वं पदसंघातस्येत्येवासकृदुक्तत्वात् पदार्थमात्रे संसर्गबोधकत्वं भाट्टोक्तं नेष्टमिति ज्ञायते। अन्ततः शब्दस्यातिरिक्तशक्त्यकल्पनेन तत्तद्वाक्यजन्यार्थज्ञानं=शब्दविशेषजन्यज्ञानविषयत्वावच्छिन्नार्थज्ञानं संसर्गविशेषबोधजनकमिति विशेषरूपेण कार्यकारणभावो भाट्टैर्वक्तुं शक्यः। तदा च पदार्थानां प्रमाणता स्यात्, न तु पदानामिति। नवीनैर्भाट्टैस्तदिष्टावपि लोकप्रसिद्धरीतित्याग एव। अतः परम्परया शब्दस्यैव प्रामाण्यमास्थेयम्। अत एवोक्तमत्र, "वाक्यार्थस्याव्यवधाने त्वनादरः" इति। अत्र तार्किकैः केवलपदार्थे शक्तिमिच्छद्भिः समभिव्याहारविशेषाणामेव अर्थसंसर्गविशेषनियामकतायाः स्वीकारात्, तदैव शब्दस्य प्रमाणता संगच्छत इति उदयनाद्यैर्भाट्टपक्षस्य दूषितत्वाच्च भाष्यकाराणामंशतस्तार्किकरीतिरेवेष्टेत्यपि सुवचम्। तात्पर्यज्ञानस्य बोधं प्रति कारणत्वे च इदं वाक्यमेवमभिप्रायेणोच्चरितमिति ग्रहणात् बोधस्य शाब्दत्वं स्पष्टम्। अतोऽभिहितान्वयवादोऽयं पदार्थकरणत्ववादिभाट्टरीतिविलक्षणयाऽपि तार्किकरीत्या भवितुमर्हति। व्युत्पत्तिकाले प्रथममर्थमात्रबोधेऽपि पश्चादन्वयांशे शब्दस्यापेक्षिततयाऽन्वितबोधहेतुत्वकल्पनामेव लाघवात् स्वीकृत्य, आवापोद्वापश्रमं विना व्युत्पत्तिसौकर्याय्याऽऽदौ अर्थमात्रशिक्षणमिति परिशील्य, प्रथमगृहीतस्यार्थमात्रबोधकत्वस्य पश्चात् त्यागेनान्वितबोधकत्वपक्षो वा समर्थनीयः स्यादिति ॥ ९३ ॥

वाक्यस्यान्वयबोधकत्वमुक्तम् । अन्वयश्च भेदाभेदरूपेण द्विविधः । भेदसंबन्धो व्यधिकरणवाक्येषु। समानाधिकरणवाक्ये अभेदमात्रं संबन्धश्चेत्, एकमेव पदं पर्याप्तमिति वाक्यवैयर्थ्यं स्यादिति तत्रापि भेदोऽपि संबन्ध एष्टव्यः। अतो भेदाभेदमते स्थितानां समानाधिकरणवाक्यमनुकूलमिति आर्हतादेः=जैनमीमांसकभास्करादेर्दुराशैव । न ह्येकत्र भेदोऽभेदश्च तत्रोच्यते; किंतु द्वारे=प्रवृत्तिनिमित्ते भेदः, धर्मिणि चैक्यमित्येव समानाधिकरणवाक्यतात्पर्यमानुभविकं शाब्दिकोक्तञ्च। द्वारस्य भिन्नत्वाच्च न पौनरुक्त्यादिदोषः। वस्तुतां पदार्थानां स्थितेरेकरूपत्वे सति=भिन्नत्वमभिन्नत्वं वैकमेवेति सति तद्विरोधेन उभयथा वाक्यं बोधकं सत् मानं न भवेत् । तन्मानत्वात्=समानाधिकरणवेदवाक्यानां मानत्वात् भिन्नाभिन्नरूपं स्वीकार्यमिति तु न सत्। भेदे सत्येव तद्वाक्योपपत्तेः=भावाभावयोर्विरोधस्य लोकसिद्धत्वात् धर्मधर्मिणोर्भेदस्यैव लोकसिद्धत्वात् धर्मगतभेदस्य धर्मिभेदत्वायोगात् धर्मयोर्भेदे सत्येव सामानाधिकरण्यं भवतीति ।

नीलमुत्पलमिति । अतो नीलत्वोत्पलत्वादीनां द्रव्यात्मना भवत्यैक्यम्, पर्यायात्मना भेदः । **पर्याय-** शब्देन धर्मा उच्यन्ते । अतः सामानाधिकरण्यं भेदाभेदानुगुणमिति । तदेतदनुभाष्य दूषयति **आर्हतादेर्दुराशेति।** "भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्" इति प्रवृत्तिनिमित्त-भेदेनैकार्थनिष्ठत्वलक्षणत्वात् सामानाधिकरण्यस्य, तेनैव सामानाधिकरण्येन भेदाभेदसिद्धिरिति वचनं विरुद्धभाषणत्वात् दुराशामूलमेव । यदि भेदाभेदं बोधयेत् सामानाधिकरण्यम्, प्रमाणविरुद्धार्थप्रतिपादकत्वात् प्रमाणमेव न स्यादित्याह **वस्त्विति।** न ह्यनीतम् अस्तीति बोधयितुमेव शक्नोति वचनम् ॥ वचनबलात् वस्तुस्थितिमप्यन्यथयाम इति चेत्, तन्नेत्याह **तन्मानत्वाद् द्विधैकं स्थितमिति च न सदिति ।** कुत इत्यत्र(त) आह **भेद इति ।** भेदपक्ष एव सामानाधिकरण्यस्योपपत्तेः भवत्पक्षविरुद्धं सामानाधिकरण्यमित्यर्थः । किंच सामानाधिकरण्यस्यानेकान्तपरत्वे भेदाभेदसिद्धिः, तत्सिद्धौ सामानाधिकरण्यस्यानेकान्तनिष्ठत्वमित्यन्योन्याश्रय इति भावः ॥

**इति सामानाधिकरण्ये भेदाभेदप्रसङ्गपरिहारः ॥ ९४ ॥**

**(320) ऐकाधार्यात् विगीतं तदिदमिति नयाल्लक्षयेन्निर्विशेषम् ;**
**मैवं, बाधातिचारस्ववचनहतिभिः स्वोक्तदृष्टान्तदौस्थ्यात् ।**
**तत्तेदन्ताविरोधो वचसि न हि भवेत् तादृशाप्यक्षनीत्या ;**
**नो चेत्, स्याद्वस्समस्तं क्षणिकम् ; इह पुनर्देशभेदः क्रमात् स्यात् ॥ ९५ ॥**

---

श्री- वस्तुतो भेदसंबन्धो नाम संयोगसमवायादिरेव। तत्र नीलो घट इत्यत्र नीलपदेन नैल्यविशिष्टग्रहणे तस्य समवायेनान्वयो न भवति। नैल्यं घट इत्यपि प्रयोगापत्तेः। अतो न भेदाभेदसंबन्धसंभव इति॥

ननु विशिष्टैक्येऽपि विशेषणयोर्नीलत्वोत्पलत्वयोरभेदाभावात् कथं विशिष्टे अभेदान्वय इत्यत्राह अतो नीलत्वेति। अतः भेदाभेदे सत्येव सामानाधिकरण्यात् धर्मयोरपि द्रव्यात्मना अभेद इष्यत इति भावः। एवमाशंकापरिहारपरत्वाभावे, अतो नीलत्वेत्यादिस्थाने, 'अत्र नीलोत्पलादीनाम्' इति पाठो युक्तः स्यात्। अतः स्थितमन्वितम्। पर्यायात्मनेति। स्वस्वरूपेणेत्यर्थः॥ ९४॥

समानाधिकरणवाक्यमखण्डवस्तुपरमित्यद्वैतिपक्षं क्षिपति ऐकाधार्यादिति । ऐकाधार्यं नाम एकार्थप्रतिपादकत्वम्, सामानाधिकरण्यमेव। विगीतं = विवादास्पदमिति तत्त्वमस्यादिपक्षनिर्देशः। निर्विशेषलक्षकत्वं साध्यम्। एकाधिकरणकत्वात् समानाधिकरणवाक्यत्वादिति हेतुः। 'तदिदं पुस्तकम्', 'सोऽयं देवदत्तः' इतिवदित्यनुमानं स्यादिति चेत्—मैवम्। बाधादिदोषात्। प्रत्येकं पदस्य विशिष्टार्थकत्वात् अन्वयानुपपत्त्यभावेन लक्षकत्वरूपसाध्याभावात्। नीलमुत्पलमित्यत्र हेतुसत्त्वेन साध्याभावेनातिचाररूपव्यभिचारदोषात्। स्ववचनहतिः = स्वोक्तिव्याघातः, बोध्यत्वरूपे विशेषे स्थिते कथं निर्विशेषबोधकत्वमिति। विशेषाबोधकत्वं साध्यं चेत्—तावता निर्विशेषत्वं न सिध्यति; स्थितस्यापि विशेषस्याबोधसंभवात्। दृष्टान्ते हि तथात्वमेव। अतः स्वोक्तदृष्टान्तो दुःस्थः। तत् इदमिति पदद्वयेन तत्तद्विशेषे प्रतीयमाने निर्विशेषपरत्वासंभवात्; विशेषबोधने दोषाभावाच्च। किञ्च तत्त्वमस्यादिवाक्यं निर्विशेषबोधकमित्यत्र निर्विशेषत्वेन तद्बोधकत्वं वा वस्तुतो यन्निर्विशेषं तद्बोधकत्वं वा साध्यम्। आद्ये दृष्टान्त इव तद्बोधस्याप्रमात्वमारोपरूपत्वं स्यात्। अन्त्ये दृष्टान्ते साध्यवैकल्यम्। तत्त्वमस्यादिवाक्यप्रतिपाद्यं निर्विशेषं समानाधिकरणवाक्यप्रतिपाद्यत्वात्

मा भूत् भेदाभेदपरं सामानाधिकरण्यम्; अन्यथाऽप्यनुमानबलात् निर्विशेषोपलक्षकमस्त्वित्याह, तथा हि तत्त्वमित्यादिसामानाधिकरण्यं निर्विशेषोपलक्षकम्, सामानाधिकरण्यात्मकत्वात्; सोऽयं देवदत्त इत्यादिसामानाधिकरण्यवदिति। तदेतदनुमापत्ते **ऐकाधार्यादिति**। दूषयति **मैवमिति**। कुत इत्यत्र आह **बाधेति**। तत्, त्वमिति विशेषणद्वयविशिष्टविषयतयोपलब्धस्य निर्विशेषपरत्वे स्फुट एव बाधः। **अतिचारोऽपि**; नीलमुत्पलं, दण्डी कुण्डलीत्यादौ सविशेषपरत्वात्। **स्ववचनहतिः** तत् इदमिति, सामानाधिकरण्यमिति च भेदव्यवहारं कुर्वाणस्य निर्विशेषपरत्वकथनं स्ववचनविरुद्धमेव। स्वोक्ते च सोऽयं देवदत्त इत्यत्र निर्विशेषपरत्वदृष्टान्तेऽपि दौःस्थ्यमेव; सोऽयमिति सामानाधिकरण्यस्य तत्तेदन्ता विशिष्टवस्तुपरत्वात्॥ ननु तत्तेदन्तावैशिष्ट्यमेकस्य कथमुच्यते? तत्तेदन्तयोः परस्परविरुद्धत्वादिति॥ तन्न; विरोधाभावात्। यदि तत्तेदन्तयोरेकत्र विरोधः, तर्हि सोऽयं देवदत्त इति प्रत्यक्षोपलम्भविरोधः स्यात्। तदिदमाह **तत्तेदन्तेति**। तर्हि प्रत्यक्षेऽपि वचनवत् विरुद्धमेव स्यादित्याशङ्क्याह **नो चेदिति**। एकस्य कालद्वयसंबन्धानङ्गीकारे क्षणभङ्गवाद एव प्रसज्येत। अतो न कालविरोधः। देशद्वयसंबन्धविरोधस्तु कालभेदेन परिहृत इत्याह **इहेति**। प्रत्यभिज्ञायां देशभेदः कालभेदादेव परिहृत इत्यर्थः। अयमत्र निर्णयः—कालद्वयमेकस्याविरुद्धम्; अक्षणिकत्वाङ्गीकारात्। स्वप्रागभावस्वप्रध्वंसकालौ स्वस्य विरुद्धौ। स्वकालस्तु सर्वोऽपि स्वकालत्वादेव स्वस्याविरुद्धः। स्वकालांशौ च तदेतत्कालौ स्वस्याविरुद्धावेव। तत्कालस्तत्काले वस्तुनि संबध्यते; एतत्कालोऽप्येतत्काले। कालस्य स्वपरनिर्वाहकत्वेन कालान्तरानपेक्षणात् नानवस्थादोषः, नाप्यात्माश्रयदोषः। अन्यथा स्थिरत्वादानङ्गीकारेण क्षणभङ्गप्रसङ्गादिति॥ **इति निर्विशेषोपलक्षणसामानाधिकरण्यभङ्गः॥ ९५॥**

(321) **सत्याद्युक्तिः प्रकृष्टद्युतिरुडुपतिरित्यादिवत् वस्तुमात्रं**
**ब्रूते लक्ष्मोक्तिभावादिति यदि, न तथा, स्वोक्तिबाधादिदोषात्।**

---

श्री–सोऽयमिति वाक्यप्रतिपाद्यवदिति प्रयोगेऽपि दृष्टान्ते साध्यवैकल्यमेव। ननु तत्त्वं तद्देशकालविशिष्टत्वम्; इदन्त्वम् एतद्देशकालविशिष्टत्वम्; उभयोर्विरोधात् त्याग इत्यत्राह तत्तेति। यदि तत्तेदन्ते मिथो विरुद्धे स्याताम्, ते प्रत्यभिज्ञाप्रत्यक्षे न भासेताम्। अतो युगपद्भासमानत्वात् अविरुद्धे इति। यदि प्रत्यक्षेऽपि न तद्भानम्, तर्हि प्रत्यभिज्ञायाः केवलदेवदत्तप्रथमप्रतीतितोऽपि निकृष्टता स्यात्। कस्यापि धर्मस्याभानात्। संशयविपर्ययनिवृत्तिश्च न स्यात्। नो चेत्=एकदेशकालविशिष्टं देशकालान्तरविशिष्टं न भवतीति चेत्, तर्हि लोके तत्तत् भिन्नमेव स्यात्। तथाच क्षणरूपकालभेदात् तत्तत्क्षणविशिष्टं भिन्नमिति सर्वक्षणिकत्वापत्तिः॥ अस्तु स्थिरत्वस्वीकारात् अनेककालसंबन्धः; अनेकदेशसंबन्धः परिच्छिन्नस्य कथमिति चेत्—इह=वचसि प्रत्यक्षे च विषयो देशभेदः क्रमात्=कालभेदात् स्यात् अविरुद्धः। तदर्थमेव तद्देशतत्कालविशिष्टेत्युच्यते॥ ९५॥

अथ हेत्वन्तरेण कतिपयसमानाधिकरणवाक्याखण्डार्थपरत्वशंकां परास्यति सत्येति। सत्याद्युक्तिः=सत्यं ज्ञानमिति वाक्यं वस्तुस्वरूपमात्रपरं लक्षणवाक्यत्वात् प्रकृष्टप्रकाशश्चन्द्र इति लक्षणवाक्यवत्। तत्र हि कश्चन्द्र इति स्वरूपस्यैव पृष्टत्वात् उत्तरमपि तावन्मात्रविषयकम् इति चेत्—न तथा—स्वरूपमात्रपरं न; लक्षणवाक्यत्वादिति हेतुना लक्षणरूपविशेषप्रतिपादकत्वस्योक्ततया तद्विरोधात्।

**रोधः सद्वाक्यभावात्; भवति च कथितोदाहृतिः साध्यहीना**
**प्रश्नोक्त्योश्चाविशिष्टं न विषय इति नापृष्टजल्पोपहासः ॥ ९६ ॥**

उक्तमर्थमसहमानो **मृषावादी** प्रत्यवतिष्ठते, 'सत्यादिवाक्यमखण्डपरम्, लक्षणवाक्यत्वात् प्रकृष्टप्रकाशश्चन्द्र इति वाक्यवत्। न चैतद्वाक्यं स्वरूपपरं न भवतीति वक्तुं शक्यते; स्वरूपस्यैव प्रकृष्टत्वात्। कश्चन्द्र इति यदेवं पृष्टं तदेव प्रतिवक्तव्यम्। अन्यथाऽत्र, "आम्रान् पृष्टः कोविदारान् आचष्टे" इति न्यायः स्यादिति। तदेतदनुवदति **सत्येत्यादिना यदीत्यन्तेन**। दूषयति **नेति**। तत्र हेतुमाह **स्वोक्तीति**। **लक्ष्मोक्तिभावादिति** वदति(सि), वस्तुमात्रं ब्रूत इति च। परस्परविरुद्धमेतत्। असाधारणधर्मो लक्षणम्; तद्वाचिनः कथं निर्विशेषवाचित्वमिति। एवं स्वाचार्यादिवचनबाधः श्रुतिबाध इत्यादिकम् आदिशब्दार्थः। सत्यादिवाक्यं सविशेषं वक्ति सद्वाक्यत्वादित्यादिभिः प्रतिरोधश्चानुमानस्य। बाधो वा; तेषामेवानुमानानां तर्कानुग्रहणेन प्राबल्यादिति भावः। तदिदमाह **रोध इति**। दृष्टान्तोऽपि साध्यविकल इत्याह **भवति चेति**। प्रकृष्टप्रकाशश्चन्द्र इति वाक्यस्य सविशेषपरत्वात्, अन्यथा लक्षणसंबन्धाभावे न चन्द्रप्रतीतिः सिध्येत्। अपृष्टोत्तरत्वचोद्यस्य किमुत्तरम्? अभाव एवोत्तरम्; न ह्यपृष्टस्यैवोत्तरं दीयते। प्रष्टा खलु सामान्यतश्चन्द्रशब्दार्थं प्रतिपद्य तद्विशेषप्रतिपत्त्यर्थं चन्द्रस्यासाधारणलक्षणमप्राक्षीत्; वक्ता च तदसाधारणलक्षणं प्राहेति न कश्चिद्विरोधः। अतः प्रश्नोऽपि सविशेषविषय एव, उत्तरमपि तथेति॥९६॥

(322) **एकत्रार्थे समानाधिकरणवचसां वृत्तिरुक्ता; ततोऽत्र**
**स्याप्ये तत्तन्निमित्ते प्रसजति हि भिदा धर्मिणोऽपीति चेन्न।**
**नेतव्यं लक्ष्मवाक्यं प्रतिपदनुगुणं; साऽत्र सिद्धा विशिष्टे**
**व्युत्पत्तेः तादृशत्वात्; भवति तु विहतेः क्वापि भिन्नं विशेष्यम् ॥ ९७ ॥**

---

औ—आदिना श्रुतिबाधितत्वादिग्रहणम्। रोध इति प्रतिरोध इत्यर्थः। सत्प्रतिपक्षितत्वमिति यावत्। तथा च प्रयोगः—सत्यादिवाक्यं सविशेषप्रतिपादकं सद्वाक्यत्वादिति। बाधो वा रोधः। साध्यवैकल्यमप्याह भवति चेति। नक्षत्रादिव्यावर्तकप्रकृष्टप्रकाशत्वरूपविशेषधर्मकथनादिति भावः। नन्वपृष्टं कथमुच्यत इत्यत्राह प्रश्नेति। स्वरूपप्रश्न इत्युक्तावपि स्वासाधारणधर्मविशिष्टप्रश्न एव; न तु व्यक्तिमात्रप्रश्नः। असाधारणधर्मश्च साक्षात् ज्ञापयितुं न शक्य इति, गवयत्वज्ञापनाय गोसादृश्यकथनवत् प्रकृष्टप्रकाशत्वकथनम्। अतः आम्रान् पृष्टः कोविदारान् आचष्ट इत्यपृष्टजल्पत्वेनोपहासो न युज्यते ॥९६॥

अथ ऐकाधिकरण्यम्, सामानाधिकरण्यमिति व्यवहारासामञ्जस्यं स्यात् विशिष्टार्थकत्वे इति शंकामुद्भाव्य परिहरति एकत्रेति। ऐकाधिकरण्यमिति प्रयोगात् एकत्वं प्रथमसंख्या। समानपदमप्यत्र एव तत्समानार्थकम्, अनयोः समाना मातेतिवत्। एवञ्चैकत्वसंख्याविशिष्टार्थवाचित्वं सामानाधिकरण्यमिति सिध्यति। तत्तत्पदे प्रवृत्तिनिमित्तभेदे स्याप्ये तु अनेकार्थकत्वापत्तिः। तथापि विशेष्यमेकमेवेत्यपि न; विशेषणभेदे विशिष्टभेदस्यावर्जनीयत्वात्। न हि नीलत्वविशिष्टविषयकज्ञानमुत्पलत्वविशिष्टविषयकज्ञानं भवितुमर्हति–इति शंका। तन्निरासे युक्तिमाह नेतव्यमिति। लक्षणवाक्यं हि लक्ष्यप्रतिपत्त्यनुसारेण प्रयोक्तव्यम्। न तु लक्षणशिक्षणानुसारेण लक्ष्यान्यथाकरणम्। सा=प्रतिपत्—(लक्ष्यज्ञानं) नीलमुत्पलमित्यादौ विशेषणविशिष्ट एव सर्वत्र सिद्धा।

अत्र चोदयति **एकत्वेति**। [यदि?] एकस्मिन्नर्थे समानाधिकरणपदानां प्रवृत्तिरुक्ता, तर्हि विशेषणभेदात् विशेष्यभेदोऽवर्जनीयः ; **तत्तन्निमित्ते** तत्तद्विशेषणे खण्डत्वादिवदिति भावः। [एवं] विशेषणभेदाद विशेष्यभेदमाशङ्क्य तदेव प्रतिक्षिपति **नेति**। तदुपपादयति **नेतव्यमिति**। प्रतीत्यनुगुणं हि सर्वं वाक्यं प्रतिपादयति। लक्षणवाक्येऽपि प्रतीतिर्विशिष्ट एव ; अन्यथा लक्षणानुपपत्तेः। व्युत्पत्तिरपि तथैव, "भिन्नप्रवृत्ति" इत्यादिना समानाधिकरणपदानां विशिष्टवाचित्व(पर)त्वस्यैव निर्णयात्। यथैव व्युत्पत्तिः, तथैवार्थं वाक्यं प्रतिपादयति ; तथैव श्रोतॄणां प्रतीत्युत्पत्तिः। व्युत्पत्तिश्च यथादर्शनम्। दर्शनं चानेकेषां विशेषणानामेकवस्तुनिष्ठत्वेन। अतो यत्र नीलमुत्पलमित्यादौ विशेषणमेकवस्तुनिष्ठत्वेन, तत्र तथैवाङ्गीकर्तव्यम्। यत्र पुनः खण्डो मुण्ड इत्यादौ विरुद्धानां विशेषणानां भिन्नवस्तुनिष्ठत्वेन, तत्र तथैवाङ्गीकर्तव्यमिति विभागः। तदिदमाह **भवतीति**। **क्वापि** खण्डो मुण्ड इत्यादौ ॥ ९७ ॥

(823) **नानाधर्मप्रणाड्या बहुभिरपि पदैर्धर्मिणोऽन्नैक्यसिद्धौ**
**नान्योन्याधारतैक्ये प्रसजत उचितज्ञापनैकप्रवृत्तेः।**

---

७१-प्रथमव्युत्पत्तेः तत्तत्पदे प्रत्येकं तादृशत्वात् विशिष्टविषयकत्वात् तद्बाधे मानाभावात्। तस्मात् धर्मभेदः सह्यः। अत एव लक्षणे भिन्नप्रवृत्तिनिमित्तानामिति विशेषणं शाब्दिकैः प्रयुक्तम्। एकत्वसंख्या तु विशेष्यमात्रे स्थास्यति। किञ्च खण्डो मुण्डः पूर्णशृंगो गौरित्यत्र सकृत्प्रयुक्तगोपदसामानाधिकरण्यं त्रिष्वपि वक्तव्यम्। न च गोपदावृत्तौ प्रमाणमस्ति। खण्डो मुण्डः पूर्णशृंगश्च गाव इत्यत्र तदयोगात्। अतो विशेष्यानेकत्वस्यापि वर्तमानत्वात् विशेष्यैकत्वमपि क्वचित् त्याज्यमेवे'त्याह भवति त्विति। तथाच अत्र एकत्वं संख्येति पराशयः परास्यते। क्वापि=नीलान्युत्पलानीति वचनान्तरप्रयोगेऽपि विशेष्यस्यैकत्वाभावात् सामानाधिकरण्यं भज्येत। अत एकत्वं न संख्या ; किं तु साधारणत्वम्-अभिन्नत्वम्। अतः समानपदप्रयोगः। न त्वद्वितीयादिपदप्रयोगः। नीलत्वविशिष्टार्थभिन्नार्थकत्वमुत्पलपदस्य नीलपदसामानाधिकरण्यम्। अतः संख्यैकत्वविवक्षणमयुक्तमिति। अन्यथा त इमे देवदत्तयज्ञदत्तविष्णुमित्रा इति प्रयोगे एकार्थबोधकत्वमद्वैतिनां कथमिति च भाव्यम्॥ वृत्तौ इत्यादाविति आदिपदेन नीलान्युत्पलानीत्यादेर्ग्रहणम् विशेषणानामिति। निर्देश इत्यध्याहार्यम्॥९७

एवम् ऐकाधिकरण्यमित्यत्र एकशब्दस्यैकत्वसंख्यार्थकत्वनिबन्धना शंका परिहृता। अथ धर्मविशिष्टाभिधानेऽन्वयानुपपत्तिरूपदोषोद्भावनेन निर्विशेषे समानाधिकरणवाक्यतात्पर्यमिति शंकां निरस्यति नानेति। श्यामो युवा लोहिताक्षो देवदत्त इति समानाधिकरणप्रयोगे सर्वस्य पदस्य धर्मविशिष्टधर्मिबोधकत्वे देवदत्तत्वादिविशेषणविशिष्टे श्यामत्वान्वये, रूपवान् घटो दृष्टः इत्यत्र घटे विशेष्ये रूपे विशेषणे च दृष्टत्वान्वयवत् श्यामत्वस्य देवदत्ते देवदत्तत्वे चान्वयः स्यात्। विनिगमनाविरहात् श्यामत्वविशिष्टेऽपि देवदत्तत्वान्वय इति श्यामत्वरूपविशेषणमपि देवदत्तः स्यात्। एवं प्रतिपदं वक्तव्यम्। यदि देवदत्तत्वविशिष्टे श्यामत्वविशिष्टाभेदान्वयः, तदा देवदत्तस्येव देवदत्तत्वस्यापि श्यामाभेदः स्यात्। उभयथापि एकधर्मस्यान्यधर्माश्रयत्वापत्तिः। यदि च किञ्चिद्विशिष्टे अन्यविशिष्टाभेदे विशेष्ययोरभेदवत् विशेषणयोरभेदोऽपि विभाव्यते, तर्हि श्यामत्वयुवत्वदेवदत्तत्वादीनामप्यैक्यापत्तिः।? न चैकपदार्थे अपरपदार्थान्वय इति मा भूत श्यामत्वयुवत्वदेवदत्तत्वविशिष्टधर्मी इति सर्वविशेषणविशिष्टधर्मिविषयकबोध इष्यत इति वाच्यम्; तथा सति उद्देश्यविधेयविभागाभावप्रसंगात्। तथा स्वीकारेऽपि दोष एव ; श्यामत्वयुवत्व-

**बोध्ये सर्वैर्विशिष्टे, न च वचनभिदा, तच्च सूत्रादिसिद्धं**
**तात्पर्यं च स्वरूपे क्वचिदपि न भवेन्निर्निमित्तेऽनुपाख्ये ॥ ९८ ॥**

नन्वनेकधर्मविशिष्टैकार्थाभिधाने किं क्रमेणाभिधानम्, युगपद्वा? क्रमेणाभिधाने पूर्वविशेषणविशिष्टे वस्तुनि उत्तरविशेषणाभावात् (पणभावात्?) विशेषणानां च पाठे क्रमनियमाभावादन्योन्यसमवायप्रसङ्गः। युगपदभिधाने पुनरन्योन्यैक्यप्रसङ्गः, विशेषणानामपि विशिष्टप्रतिपादक[प्रातिपदिक]समानविभक्तेः विशेष्यवत् विशेषणेऽप्यैक्यप्रतिपादनावश्यंभावात्। न हि विशेषणं मुक्त्वा विशिष्टमिति किंचित् प्रतिप[ा]द्यत इत्याशङ्क्य परिहरति **नानाधर्मे**त्यादिना प्रसजत इत्यन्तेन। अयमत्र भावः — अन्योन्यसमवायैक्ययोः प्रसञ्जनमव्युत्पन्नानां वादः। सामानाधिकरण्यलक्षणानवधारणेनैव ह्येवमुच्यते। भिन्नानामर्थानाम् एकत्र धर्मिणि वृत्तिरर्थसामानाधिकरण्यम्, भिन्नप्रवृत्तिनिमित्तानां शब्दानाम् एकस्मिन्नर्थे वृत्तिः = प्रवृत्ति[ ] पर्यवसानं शब्दसामानाधिकरण्यमित्युक्तम्। तथा च क्रमाभिधाने युगपदभिधाने च नान्योन्यसमवायप्रसङ्गः, नाप्यन्योन्यैक्यप्रसङ्गः। कुत इत्यत आह **उचिते**ति। आकाङ्क्षासन्निधियोग्यतापरामर्शपूर्वकमेव शब्दार्थं प्रतिपद्यन्ते श्रोतारः। तथा च योग्यमेव परामृश्यते नायोग्यम्। न ह्यग्निना सिञ्चेदिति अग्निसेकयोः कार्यकारणभावं परामृशन्ति। यथैव परामृश्यन्ते तथैव प्रतिपादयन्ति पदानि। न हि विशेषणानामन्योन्य-

---

*? देवदत्तत्वविशिष्टमित्युक्तावपि तत्रैकत्वस्य विभक्तिभिर्धेकत्र्यत्वात् विशेष्यैक्यवत् विशेषणानामप्यैक्यमप्युक्तं स्यादिति पूर्वपक्षः। तन्निरासः श्लोकेन। अयमर्थः — अत्र = समानाधिकरणवाक्ये द्वाभ्यां बहुभिर्वा पदैः धर्मिणः = विशेष्यस्य नानाधर्मप्रणाड्या भिन्नभिन्नधर्मपुरस्कारेणैव ऐक्यसिद्धौ ऐक्यज्ञाने सति विभिन्नधर्मबोधनेऽपि धर्मिमात्रैक्यस्यैव ज्ञाप्यत्वे सतीति यावत्। तावन्मात्रस्य ज्ञाप्यत्वात् धर्माणामन्योन्याधारकत्वम् एकधर्मे धर्मान्तरसमवायरूपं न भवति, तथा एकधर्मे धर्मान्तरैक्यमपि न भवति। वाक्यस्य तत्र तात्पर्याभावात्। कुतस्तात्पर्यं नास्तीति चेत् — उचितस्य = योग्यस्यार्थस्य ज्ञापन एव वाक्यप्रवृत्तेः। तर्हि विशेषणविशिष्टार्थे प्रवृत्त्या बोध्ये सति विशेष्यविशेषणयोर्भेदात् द्वित्वबहुत्वपरवचनमेव स्यात्, न त्वेकवचनमिति चेत् — तत्राह बोध्ये इति। वचनभिदा एकवचनातिरिक्तमेव न। ऐक्यस्य धर्मिमात्रेऽन्वयात्। तच्च = एवमेव बोधकत्वं सूत्रादिसिद्धम्। धर्मधर्मिद्वयं प्रातिपदिकार्थः, लिङ्गजातिद्रव्यत्रयं प्रातिपदिकार्थ इति स्वीकृत्य यस्मादेकवचनमप्यनुशिष्यते, तस्मात् धर्मिण्येवान्वय इति ज्ञायते किल। अतोऽखण्डविषयकबोधस्य न प्रसक्तिः। ननु तथा शब्दतो बोधायोगेऽपि अखण्डे तात्पर्यमस्तु इत्यत्राह तात्पर्यञ्चेति। तात्पर्यं हि तद्विषयकज्ञानजनकत्वेनाभिमतत्वम्। तात्पर्यज्ञानञ्च वृत्त्या किञ्चिदर्थबोध एवोपयुज्यते। इदमित्थमित्येव हि सर्वा प्रतीतिरुपजायते। स्मृतिप्रमोषतुल्यस्य धर्मिमात्रज्ञानस्य न संशयविपर्ययनिवृत्त्यादिकार्यकरत्वमिति न ततः संसारनिवृत्तिः। प्रवृत्तिनिमित्तरहिते वस्तुनि च न किञ्चित् प्रमाणम्। तस्यानुपाख्यत्वात्। अनुपाख्यं शशविषाणादि च न, अस्तीति प्रतीतौ विषय इति॥*

उत्तरविशेषणभावादिति पाठ्यम्, न तु विशेषणाभावादिति। क्रमेणाभिधाने पक्षद्वयमस्ति। एकविशिष्टे अपरविशिष्टाभेदान्वय इति अपरविशेषणान्वय इति च। अथापि भेदाभावस्य भेदप्रतियोगितावच्छेदकस्वरूपत्वात् विशेषणविशिष्टभेदाभावो नाम विशेषणमेवेति कृत्वा अन्योन्यसमवायरूपदोषमात्रोक्तिः। अर्थानामिति। धर्माणामित्यर्थः। प्रवृत्ति[ ]र्यवसानमिति। विशेष्यभूते एकस्मिन्नर्थे स्वप्रतिपाद्यविशेषणानामन्वयबोधनमिति यावत्। क्रमाभिधाने युगपदभिधाने चेत्येतयोर्यथा

समवायो योग्यकोटिमाटीकते । तथाऽन्योन्यैक्यमपि । तेनोचितज्ञापनैकप्रवृत्तं वाक्यमनेकविशेषण-विशिष्टमेकमाश्रयं प्रतिपादयति । तत्र च परामर्शदशायामेव प्राप्ताप्राप्तविभागसिद्ध्यर्थं पौर्वापर्यपरिकल्पनं विभागः। वाक्यार्थप्रतिपादनावस्थायामेकबुद्धिसमावेशेन सहितानि पदानि विशेषणविशेष्यभावेन युगपदेव विशिष्टमर्थं प्रतिपादयन्ति ; अन्यथा सामानाधिकरण्यलक्षणमेव संभज्येतेति भावः । तर्हि विशेषण-भेदाङ्गीकारे कथमेकवचनप्रवृत्तिरिति मन्दस्य चोद्यमाशङ्क्य परिहरति **बोध्य** इति । तदुपपादयति **तदिति।** सामानाधिकरण्यप्रतिपादकसूत्रभाष्यवाक्यादि(भाष्यादिवाक्य)सिद्धत्वादनवद्येयमस्माकी प्रक्रिया । शब्दादर्थप्रतिपत्तिर्मा भूत् ; तात्पर्यादेव निर्विशेषसिद्धिरित्याशङ्क्याह **तात्पर्यमिति।** तात्पर्यमपि शब्दानां वृत्तिरेव। तच्च प्रतिपत्त्यर्हे वस्तुनि ; न तु तदनर्हे। प्रतिपत्त्यर्हं च सविशेषमेव। अतो निर्विशेषे नाभिधा, नापि लक्षणा, न च गौणी वृत्तिः, नापि तात्पर्यमिति शब्दाविषयत्वमेव । **निर्विशेषशब्दस्तु** यदि प्रामाणिकः, तदा केनचिद्विशेषणेन विशिष्टस्य विशेषणान्तरनिवारणार्थः ; निर्विशेषं नगरमितिवत् । न हि नगरस्य यो गजरथतुरगादिसंबन्धः, सोऽपि निषिध्यते **निर्विशेषशब्देन**। अपितु अतिपात(?)गृहदाहाद्युपघात एव । एवं ब्रह्मणि **निर्विशेषशब्दः** । यद्यप्रामाणिकप्रयुक्तोऽयं **निर्विशेषशब्दः**, किमस्यार्थवत्त्वगवेषणेन, नैरर्थक्यस्यैव तादृशवचनदूषणत्वात् ? न ह्यप्रामाणिकवचनमनर्थकमित्यस्माकं काचिद्धानिरिति ॥

**इति विशिष्टपरत्वेऽन्वयानुपपत्तिभंगः ॥ ९८ ॥**

**(824) बोध्यं चेत् निर्विशेषं बहुभिरपि पदैरेकतोऽन्यत् वृथा स्यात्**
**अन्यव्यावृत्तिभेदात् फलमभिदधतः स्यादखण्डत्वहानिः ।**

---

98-संख्यं नन्वद्वयेऽन्वयः। युगपत्सर्वान्वये उद्देश्यविधेयविभागःकथमित्यत्राह तत्र चेति। सामानाधिकरण्यप्रतिपादकसूत्राणि, "तत्पुरुषः समानाधिकरणः कर्मधारयः", "लटः शतृशानचावप्रथमासमानाधिकरणे", 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः' इति। भाष्यवाक्यम्, 'भिन्नप्रवृत्तिनिमित्तानाम्' इत्यादि। तात्पर्यमपि शब्दानां वृत्तिरेवेति। अर्थवादवाक्येन शक्तिलक्षणादिवृत्त्यधीनबोधे उत्पादिते ततः प्राशस्त्यमिदं कर्मेति प्राशस्त्ये तात्पर्यमवगम्यते। तन्मूलकं ज्ञानमपि इदमित्थमित्येवेति भावः। निर्विशेषशब्दस्त्विति । निर्विशेषमिति किं विशेषाभावार्थकम्, बहुव्रीहिबलात् विशेषाभाववदर्थकम्। प्रथमे अभावे विशेषप्रतियोगिकत्वरूपविशेषसिद्धिः। अन्त्ये अन्यपदार्थे विशेषाभावरूपविशेषसिद्धिः अभावे विशेषप्रतियोगिकत्वरूपधर्मसिद्धिश्च। विशेषपदेन धर्ममात्रग्रहणे व्याहतोक्तिः स्यात्। विशेषपदस्वारस्यात् सर्वकालसाधारणधर्मान्यकिञ्चिदभावकथनमेव युक्तम्, न तु सर्वधर्माभावकथनम् बाधादिति ॥ ९८ ॥

विशिष्टविषयकत्वे स्वपक्षे, ऐकाधिकरण्यमित्यस्यानुपपत्तिरिति शंका परिहृता। निर्विशेषविषयकत्व एव तदनुपपत्तिश्च दर्शिता। अथ निर्विशेषविषयकत्वे तैः क्रियमाणस्यानुपपत्तिपरिहारस्यायोगमाह बोध्यमिति। एकेनापि पदेन निर्विशेषं बोध्यं न भवतीत्युक्तम् ; बोध्यत्वेऽपि बहुभिः पदैरपि समानाधिकरणवाक्यस्थैः तदेव बोध्यं चेत्-एकपदादधिकं सर्वं व्यर्थमेव स्यात्। यस्तु अत्र परिहारमभिदधाति, सत्यज्ञानादिपदम् अनृतजडादिव्यावृत्तमित्यर्थकम्। अनृतव्यावृत्त्यपेक्षया जडादिव्यावृत्तेर्भिन्नत्वात् तत्तज्ज्ञापनरूपफलसत्त्वान्न वैयर्थ्यम्। न च तर्हि व्यावृत्तिरूपविशेषवत्त्वेन

व्यावृत्तिश्चेत् स्वरूपं भ्रम इह न भवेत् भासमाने तु तस्मिन् ;
तस्मात् स्वार्थेषु मुक्तेष्वखिलपदगता लक्षणैवात्र लाभः ॥ ९९ ॥

इदानीं निर्विशेषबोध्यत्वं प्रकारान्तरेणापि [विकल्प्य] दूषयति बोध्यमिति । यदि बहुभिरपि सत्यज्ञानादिपदैरेकं निर्विशेषं बोध्यम्, एकमेव पदमर्थवत् ; अन्यत् सर्वं वृथैव स्यात् । ननु विधिरूपार्थपराणि सत्यज्ञानादिपदानि मा भूवन्, किंतु निषेधपराणीति यदि वदसि, तदाऽप्यखण्डवाक्यार्थभङ्गः ; व्यावृत्तिरूपैरेव विशेषणैर्ब्रह्मणस्सखण्डत्वात् ; तर्हि व्यावृत्तिर्ब्रह्मस्वरूपमेव । तथाच व्यावृत्तिभेदेनार्थवत्त्वं व्यावृत्तीनां स्वरूपत्वादैक्यं चोपपन्नमिति चेत्, तच्च न ; स्वरूपभूताया [हि?] व्यावृत्तेर्नित्यस्वयंप्रकाशत्वेन प्रपञ्चभ्रमो न स्यात् । तदिदमाह भ्रम इति । कथं तर्हि शौक्ल्यादीनां स्वरूपमेव भेदः? इत्थम् । शौक्ल्यादीनां स्वरूपप्रतिभासे कार्ष्ण्याद्यध्यासाभावात् । शौक्ल्यादयो हि स्वपरनिर्वाहकधर्माः । तेषां प्रतिभासे च न कार्ष्ण्याद्यध्यासः । अतो युक्तं स्वस्यैव भेदत्वं शौक्ल्यादिषु । ब्रह्म तु न धर्मः ; नापिच ब्रह्मप्रतिभासे प्रपञ्चाध्यासनिवृत्तिः । अतः कथं व्यावृत्तिरूपत्वं ब्रह्मणः ? तदयमर्थः—ब्रह्मस्वरूपस्यैव व्यावृत्तिरूपत्वे प्राभाकरस्यैव शिष्योऽसि । तथाच स्वरूपभेदखण्डनविभीषिकाभङ्गः ; धर्मस्य कस्यचित् व्यावृत्तिरूपत्वे कणभक्षाक्षपादादिमतमवलम्बसे ; तथाच धर्मभेदवादखण्डनगर्वो निर्वापित इति दुर्वैतण्डिकतां मुञ्चसीति कथमखण्डवाक्यार्थ इति । यान्यत्र वक्तव्यान्यन्यानि दूषणानि, [तानि?] भाष्य एव विस्तरेणानुसन्धेयानीत्यस्माभिरुपरम्यते ॥ इति व्यावृत्तिपक्षे अखण्डत्वानुपपत्तिः ॥९९॥

---

श्री— बोधनान्निर्विशेषपरत्वहानिरिति वाच्यम्—व्यावृत्तेरभावरूपतया, अभावस्याधिकरणात्मकतया धर्म्यैक्यात् धर्मधर्मिभेदनिबन्धनविशेषवत्त्वाभावादिति—तं प्रत्याह अन्येति । व्यावृत्तीनां भेदात् विभिन्नत्वात् तत्तद्बोधनात् पदानां साफल्यं योऽभिदधाति, तस्य पक्षे निर्विशेषत्वहानिरेव । व्यावृत्तीनां धर्मिस्वरूपत्वाभावात् । व्यावृत्तिः स्वरूपं स्याच्चेत्—तस्मिन्= स्वरूपे भासमाने—स्वरूपं सर्वदा भासत इति स्वीकारात्, तत्रानृतत्वभ्रमः जडत्वादिभ्रमश्च न स्यात् । न हि तद्व्यावृत्तिज्ञाने सति तद्भ्रमो भवितुमर्हति । यत्र स्वरूपज्ञानेऽन्यभ्रमो न भवति, तत्र तादृशान्यव्यावृत्तिरूपत्वमिष्यते । यथा शुक्लद्रव्यनिष्ठा कृष्णद्रव्यव्यावृत्तिः शुक्लत्वरूपा, तथा शुक्लत्वनिष्ठा कृष्णत्वव्यावृत्तिरपि शुक्लत्वस्वरूपैव, न तद्वृत्तिधर्मान्तररूपा, शुक्लत्वज्ञाने सति कृष्णत्वभ्रमानुदयात् । ब्रह्मणि तु नानाविवाददर्शनात् तत्तद्व्यावृत्तेर्धर्मितोऽतिरिक्तत्वमेवेति सत्यादिपदानां सत्यत्वादिरूपभावधर्मपरत्वं परित्यज्य अनृतव्यावृत्तत्वादिरूपाभावलक्षणायामपि आसां व्यावृत्तीनां ब्रह्मस्वरूपत्वायोगात् सविशेषत्वापत्तिर्न परिहृता भवति । अतो घट्टकुट्यां प्रभातम् । लक्षणयार्थवर्णनपरिश्रमोऽप्यधिक इति । स्वस्यैवेति । स्वरूपस्यैवेत्यर्थः । प्राभाकरस्यैवेति । अभावस्याधिकरणात्मकत्वस्वीकारादिति भावः। तदयमर्थ इति । खण्डनकारः, 'लोके भेदो नाम न कश्चित् पदार्थः। स हि स्वरूपं वा धर्मो वा' इति विकल्प्य दूषयति । तत्र प्रत्युच्यते अनृतादिव्यावृत्तेर्ब्रह्मस्वरूपत्वे अभावस्याधिकरणात्मत्ववादिप्राभाकरपक्षप्रवेशात् स्वरूपं भेद इति पक्षखण्डनेन भयोत्पादनं भग्नम् । व्यावृत्तेर्धर्मरूपत्वे अभावस्याधिकरणादतिरिक्तत्ववादिकणादादिपक्षे ते स्थित्या भेदधर्मपक्षखण्डनविभीषिका भग्नेति । यानीत्यादि । भेदस्य स्वरूपत्वे स्वरूपज्ञानमात्रेण भेदव्यवहारापत्तिः ; धर्मत्वे, तस्यापि भेदस्तद्धर्म इत्यनवस्थेत्यादिदूषणानि भाष्य एव परिहृतानि । भेदजात्याकृतिस्वरूपशोधनमपि कृतम् । तत्र

(325) बाधार्थं यत् समानाधिकरणवचनं नाविशिष्टं वदेत् तत्;
तत्रैकोऽध्यासयोग्याकृति वदति; परो भेदयुक्तं तु शब्दः।
निर्दिष्टे वस्तुमात्रे भवतु कथमिहारोपितं बाधनीयं
भ्रान्तिर्भेदाप्रतीतौ विरमतु च कथं हेतुपौष्कल्ययुक्ता ॥ १०० ॥

नन्वसत्पक्षे बाधार्थसामानाधिकरण्याङ्गीकारात् न विशिष्टविषयत्वसिद्धिः। यथा, "चोरः स्थाणुः" इति, तथैव, "पुरुष एवेदं सर्वम्", "तत्त्वमसि" इत्यादिकमिति; तदेतदप्ययमसमञ्जसमित्याह बाधार्थमिति। यदिदं बाधार्थं सामानाधिकरण्यमित्युच्येत, तत् विशिष्टमेव वदति। तत्कथमित्यत्राह तत्रेति। बाधार्थे सामानाधिकरण्येऽप्येकः शब्दोऽध्यासयोग्याकृति वस्तु वदति, यश्चोरत्वेन प्रतिपन्न इति। परस्तु शब्दो भेदयुक्तं वस्तु वदति स्थाणुरिति। तथाच य एतावन्तं कालं चोरत्वेन प्रतिपन्नः, स स्थाणुरिति चोरप्रतीतिविषयत्वं स्थाणुत्वं चैकवस्तुनिष्ठमेव प्रतीयते, तथाच सविशेषविषयत्वमेव। चोरत्वस्थाणुत्वयोः परस्परविरुद्ध-

---

७१— विस्तरेण=व्याख्यानतोऽन्यान्यपि अनुसंधेयानि—यदि सर्वथा भेदं न मन्यसे, कथं स्वरूपं वा भेदो वेति विकल्पयसि; यदि मन्यसे, दूषणे कथं संरम्भस इत्यादीनि। अत्र वाक्ये यानि इति पदं न स्यात्। तत्सत्त्वे तानि इति पदमपि स्यात् ॥९९॥

एवं सोऽयमित्यादाविव तत् त्वमसीत्यादौ तत्तादिविशेषणत्यागेनाखण्डपरतया निर्विशेषविषयकत्वं यत् अद्वैतीष्टं तन्निराकृतम्; अथ निर्विशेषे ब्रह्मणि सर्वबाधस्वीकारात् बाधार्थे सामानाधिकरण्ये विशिष्टविषयकत्वापत्तिर्नेति शंकां शमयति बाधार्थमिति। अत्रेदं बोध्यम्—सत्यं ज्ञानमित्यादौ बाधार्थसामानाधिकरण्यं न भवति; ब्रह्मणोऽसत्यत्वाज्ञानत्वप्रसंगात् अन्यस्यैव सत्यत्वाद्यापत्तेः। अतो जगद्ब्रह्मवाचिपदसामानाधिकरण्यस्थले एव बाधार्थसामानाधिकरण्यम्। एतदवगमनायैव 'बाधार्थं यत्' इति विभज्य निर्देशः॥ जीवस्य विशिष्टवेषेण मिथ्यात्वमिति जडभेदवत् जीवभेदोऽपि ब्रह्मणि; सुतरां प्रतिबिम्बवादे इति तत्त्वमसीत्यत्रापि बाधार्थसामानाधिकरण्यमिष्टमद्वैतिग्रन्थेष्वेव। लोके बाधार्थं समानाधिकरणतया प्रयुज्यमानं चोरः स्थाणुरित्यादिकं वचनं=वाक्यं यत्, तत् निर्विशेषं न वदेत्। किं तर्हि वदेदिति चेत्, तत्र एकः शब्दः चोर इत्यादिः लक्षणया चोरत्वप्रकारकाध्यासविषयभूतमिति वा चोरत्वाध्यासयोग्याकारवदिति वा वस्तु वक्ति। परः शब्दः स्थाणुरित्यादिः चोरभेदरूपं यत् स्थाणुत्वं तद्विशिष्टमेव यथावद्वदति। ननु स्थाणुशब्देन स्थाणुत्वधर्मं विना व्यक्तिमात्रमुच्यतामिति चेत्—एवं धर्मिमात्रे निर्दिष्टे तत्पदोक्ते सति चोरत्वं यत् आरोपितं, कथं तत् बाध्येत। स्थाणुत्वानुक्तौ शब्दात् स्थाणुत्वस्य तत्राप्रतीत्या पूर्वजाता भ्रान्तिः कथं विरमेत्। विशेषधर्मज्ञानरूपस्य पुष्कलस्य हेतोः पूर्वमिव चोरः स्थाणुरिति वाक्यप्रयोगानन्तरमपि अनुवर्तमानत्वात्। तत्र स्थाणुत्वरूपभेदकधर्मग्रहे सत्येव चोरत्वबुद्धिस्ततो निवर्तेत इति तद्वत् प्रकृतेऽपि ब्रह्म विशेषविशिष्टतया न गृह्यते चेत्, न बाधावकाशः। धर्माभावेऽपि धर्मिणो बाधकत्वमस्ति चेत्, पूर्वमेव तस्य स्फुरणाद् भ्रान्तेरेव नावकाशः स्यादिति। यदि त्वेवमर्थमविवक्षित्वा चोरः स्थाणुरित्यत्र अयमित्यध्याहारेण, चोरशब्दस्य न चोर इत्यर्थविवक्षणेन च अयं स्थाणुः, न चोरः इत्यर्थो वर्ण्यते। तदा वाक्यभेदः स्थाणुचोरशब्दयोः सामानाधिकरण्यत्याग इत्यनिष्टद्वयमधिकम्। विशिष्टविषयकत्वमेवेत्यनिष्टं त्वविशिष्टम्। यदिदमिति। इदं बाधार्थं सामानाधिकरण्यमिति कृत्वा यत् वाक्यम् उच्येत=प्रयुज्येत, तत् इत्यन्वयार्थः ॥ १०० ॥

त्वात्, चोरत्वबाधेन बाधार्थमित्युच्यते; यदि स्थाणुत्वमपि मिथ्या कथं चोरत्वं बाध्येत? अतो विरुद्धधर्मसद्भावः तद्विरोधिधर्मबाधाङ्गम्। न हि शुक्तित्वसद्भावमन्तरेण रजतत्वं बाध्यते। तदिदमाह **पर** इति। ननु वस्तुमात्रप्रतीतिरेव बाधकमस्तु, किमनेन तदतिरिक्तेन धर्मेणेति मा चोचः; वस्तुप्रतीतेः अध्यासावस्थायामपि सद्भावादित्याह **निर्दिष्ट** इति। बाधाभावे भ्रान्तिर्नित्यमेवानुवर्तेत; बाधश्च भेदग्रहणमन्तरेण नोपपद्यत इत्याह **भ्रान्तिरिति। हेतुपौष्कल्ययुक्ता**। भेदाप्रतीतिरेव भ्रान्तेर्हेतुपौष्कल्यम्; तथाच कथं भ्रान्तिर्विरमेत्? अयमर्थः—यथा चोरत्वस्य स्थाणुत्वं बाधकम्, एवं तत्तत्पदार्थगतासाधारणधर्मदर्शनमेव प्रपञ्चबाधहेतुः। अन्यथा बाध्यबाधकभाव एव न स्यादिति॥

**इति बाधार्थसामानाधिकरण्येऽपि विशिष्टार्थत्वम्॥ १००॥**

(326) **मानं बाधाद्यभावान्निगम इतरवत्; वक्तृदोषस्तु नास्मिन्**
**बाधोऽप्यस्यानुमाद्यैरपि न हि सुवचस्तद्बलेनैव बाध्यैः।**
**सन्दिग्धा नात्र बुद्धिः; न च न समुदिता; तेन विज्ञानसिद्धौ**
**उत्सर्गान्मानमेतत्; मतिकलुषजयः स्याच्च मीमांसयैव॥ १०१॥**

अत्र कश्चिदाह, "मा भूत्निर्विशेषपरत्वं वाक्यस्य; अथापि वेदप्रामाण्यमेव नास्ति" इति। तं प्रतिब्रूते **मान**मिति। वेदः प्रमाणं कारणदोषबाधकप्रत्ययविधुरत्वे सति वाक्यत्वात् संप्रतिपन्नवाक्यवत्। न चायं विशेषणासिद्धो हेतुरित्याह **वक्तृदोष** इति। वक्त्रभावादेव वक्तृदोषो नास्ति; बाधकप्रत्ययोऽपि न तावदनुमानेन, अनुमानस्यैवाऽऽगमबाधितत्वेनाप्रमाणत्वादित्याह **बाधोऽ**पीति। आगमेन चेत् बाधः, स चागमो वेदश्चेत्, वेदप्रामाण्याङ्गीकारः। स्मृत्यादिकं चेत् वेदमूलत्वान्न वेदबाधकम्। वेदविरुद्धस्मृतिः

श्री– वाक्यानां निर्विशेषबोधकत्वायोगात् न निर्विशेषब्रह्मणि वेदः प्रमाणमित्याक्षेपे अद्वैती प्रत्याह किमनेन वस्तुतोऽप्रमाणभूतेन; निर्विशेषस्य स्वतस्सिद्धत्वादिति। तदिदं तदिष्टमप्रमाणत्वं निरस्यति मानमिति। किमिदमप्रमाणत्वम्, किं भ्रमजनकत्वम्, किं वा संदेहजनकत्वम्, आहो ज्ञानाजनकत्वमिति विकल्पमभिप्रेत्य क्रमेण दूषणम्। तत्र न प्रथमः; निगमः मानं=प्रमितिजनकमेव, न भ्रमजनकम्। विषयस्याबाधितत्वात्, दोषरूपकारणाभावाच्च। शब्दस्य दुष्टत्वं हि वक्तृदोषात् भ्रम-प्रमाद-विप्रलिप्सा-करणापाटवरूपात्; स नास्मिन्=वेदे। अपौरुषेयत्वस्योभयसंमतत्वात्। ननु बाधाभावोऽसिद्ध इत्यत्राह बाधोऽपीति। अनुमाद्यैः=अनुमानैर्वा स्मृत्याभासैर्वाऽस्य बाधो न सुवचः। आप्तशब्दापेक्षयाऽनुमानानामेव दौर्बल्यात् बाध्यत्वात्। वेदविरुद्धत्वे मन्वादिस्मृतिवाक्यानामेव बाध्यत्वे, स्मृत्याभासे तु किं पुनः। न द्वितीयः, वेदजन्यज्ञानस्य विरुद्धकोटिद्वयानवगाहित्वेन संदेहत्वायोगात्। न च तृतीयः। न हि बुद्धिर्नैव समुदिता; ज्ञानोदयस्य सर्वगानुभवसिद्धत्वात्। तेन=तस्मात् ज्ञाने सिद्धे स्वतःप्रामाण्यस्योत्सर्गसिद्धत्वात् तत् ज्ञानं प्रमैव। ननु वाक्यार्थे विवाददर्शनात् तत्र कस्य ज्ञानस्य मानत्वमिति चेत्—कुतर्कादिजनितमतिकालुष्यनिवृत्तिः पूर्वोत्तरमीमांसादर्शितदिशा भवत्येव। तदर्थमेव तच्छास्त्रप्रवृत्तेः। तत्र सिद्धान्तनीत्यार्थनिर्णयः प्रमैव। तस्य निर्विशेषविषयत्वायोगः प्रागुक्तः। किं भवान् वेद एव नास्तीति मन्यते, उत स्थितोऽपि न मानमिति। द्वितीयं खण्डितम्। आद्ये जगन्मिथ्यात्वमेव हेतूकर्तव्यम्। तथासति

पुनर्वेदानुकूलस्मृतिविरोधादप्रमाणमिति **शारीरकस्मृत्यधिकरणे** स्थापितम् । लौकिकं चेद्वाक्यं बाधकं तस्यालौकिकविषये प्रवृत्त्यभावादबाधकत्वमेवेति भावः । तर्हि वेदवाक्यजनितस्य ज्ञानस्य बाधितत्वाभावेऽपि संदिग्धत्वादप्रमाणत्वमुपवर्णयाम इति चेत्, तत्र ; असंदेहरूपत्वात् ज्ञानस्येत्याह **संदिग्धेति** । [न च] ज्ञानमेव वेदवाक्यान्न जायत इत्यनुत्पत्तिलक्षणाप्रामाण्यमपि नेत्याह **न चेति** । अतो विज्ञानस्य सद्भावे सति प्रामाण्यस्य स्वतस्त्वात् वेदवाक्यमुत्सर्गात् सामान्यात् प्रमाणमेव । अप्रामाण्यशङ्कानिराकरणं मीमांसया सिध्यती(द्धमि)त्याह **मतिकलुषेति** ॥ **इति वेदप्रामाण्यम् ॥ १०१ ॥**

**(३२७) मानं वेदोऽपि वक्तुर्गुणत इति परं न्यायवित् साधयिष्यन्**
**सामान्यात् बुद्धिहेतोः प्रमितिमधिकतः साधयत्यन्यनीत्या ।**
**कार्यत्वं भेदकं स त्विह वदतु कथं धीविशेषत्वहेतौ ;**
**सिद्धेऽसिद्धेऽपि नित्यप्रमितिमति विभौ निष्फलत्वादमुष्य ॥ १०२ ॥**

इत्थं किल **परतःप्रामाण्यवादिनो** वदन्ति, "वक्तुर्गुणत एव मानं वेद" इति । तस्यायमनुमानाभिप्रायः प्रमा ज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वे सति तद्विशेषत्वादप्रमावदिति **सामान्यात् बुद्धिहेतोः** । **अधिकतः** अधिकेनाप्तोक्तत्वेन हेतुना । **अन्यनीत्या** अप्रमादृष्टान्तेन ; यथा अप्रामाण्य-

---

ब्री—ब्रह्म स्वतस्सिद्धमिति भवदुक्तिरपि मिथ्यैव स्यात् ॥ ननु वेदविरुद्धेयं स्मृतिरिति कथं निश्चयः, स्मृत्यैव वेदार्थस्याल्पज्ञैर्निर्णेयत्वादित्यत्राह वेदानुकूलस्मृतिविरोधादिति । स्मृत्यनवकाशेत्यधिकरणसिद्धमिदम् ॥ १०१ ॥

स्वतःप्रामाण्यं ज्ञानानामित्याशयेन, 'उत्सर्गान्मानमेतत्' इत्युक्तम् । तदेतदसहमानस्य परतः=निर्दोषत्वातिरिक्तात् गुणादेव प्रामाण्यमिति वादिनस्तार्किकस्याशयं निरसितुं तत्रोदयनाचार्योक्तमनुमानमनूद्य दूषयति मानमिति । ज्ञानस्य प्रमात्वरूपं प्रामाण्यं गुणाधीनम् । गुणश्च प्रत्यक्षानुमित्यादिभेदेन यथावस्थितेन्द्रियसंनिकर्षादिरूपो भिन्नभिन्नः । शाब्दबोधे च शब्दस्वतन्त्रवक्तृपुरुषगुण एव प्रामाण्यहेतुः । आप्तोक्तत्वे हि शब्दः प्रमाणम् । वेदे च वक्तुरभावे गुणाधीनस्य प्रामाण्यस्यासिद्धिः स्यादिति ईश्वरस्यैव वेदस्वतन्त्रवक्तृत्वमास्थीयते । प्रणेतृगुणस्यैव प्रबन्धप्रामाण्यप्रयोजकत्वात् । एवञ्च वेदजन्यप्रमा वक्तृगुणाधीना शाब्दप्रमात्वादित्याद्यनुमानेनेश्वरसिद्धिः । तथा च वेदोऽपि भारतादिवत् वक्तुर्गुणत एव मानं भवतीति युक्त्या परं=परमात्मानं साधयिष्यन् न्यायवित्=तार्किकः, सामान्यात् बुद्धिहेतोः=ज्ञानं प्रति साधारणकारणभूतं यत् तदपेक्षया, अधिकतः=अन्यस्मात् विशेषकारणादपि कस्माच्चित् जन्यतया साधयति ; अन्यनीत्या=अप्रमादृष्टान्तीकरणेन । तदुक्तः साधनप्रयोगश्चैवम्—प्रमा ज्ञानसामान्यहेत्वन्यहेतुजन्या ज्ञानविशेषत्वात् अप्रमावदिति । ज्ञानसामान्यकारणादन्यो विशेषहेतुः अप्रमां प्रति दोषः, इह तु प्रमायां गुण इति विशेषः । यद्यपि ज्ञानविशेषत्वरूपहेतुरीश्वरज्ञानेऽप्यस्ति, तस्य नित्यत्वात् न जन्यत्वरूपसाध्यवत्त्वमिति व्यभिचारः—तथापि हेतुकोटौ कार्यत्वे सतीति विशेषणदानेन तद्वारणमिति च तदुक्तम् । इमं प्रयोगं दूषयति कार्यत्वमिति । भेदकमिति । विशेषणमित्यर्थः । धीविशेषत्वरूपहेतुं प्रति कार्यत्वे सतीति विशेषणं न्यायवित् कथं वदतु=वक्तुं नार्हति । अनेनानुमानेन गुणसिद्धौ तदाश्रयतया हीश्वरः साधनीयः । ततः प्राक् कार्यत्वदलस्य कथं तद्वारकतया सार्थक्यम् । प्रागेवानुमानान्तरेण तत्सिद्धौ एतदनुमानं व्यर्थम् । ननु नेदमनुमानमीश्वरसाधनार्थम् । प्रकारान्तरेण नित्यज्ञान ईश्वरः

मनाप्तोत्कर्षेणाधिकेन हेतुना जायते, एवं प्रामाण्यमप्याप्तोत्कर्षेणाधिकेन हेतुना भवतीत्यर्थः । अतोत्तरम् कार्यत्वमिति । धीविशेषत्वहेतौ तद्विशेषत्वादित्यस्मिन् हेतौ । कार्यत्वम् भेदकं विशेषणम् । स तु स वादी ; कथं वदतु वक्तुमशक्यमित्यर्थः । तदेवोपपादयति सिद्धेऽसिद्धेऽपीति । यदि नित्यप्रमितिमानीश्वरः सिद्धः, तदा स्वतः प्रामाण्यमेव सिद्धं भवति, ईश्वरप्रमितेर्नित्यत्वेन प्रामाण्यकारणाभावात् । तथा चेश्वरप्रमितेः पक्षकोटिनिवेशे कार्यत्वे सतीति विशेषणमसिद्धम् । पक्षकोटिनिवेशाभावे क्वचित् स्वतःप्रामाण्यमेव सिध्यति । नित्यप्रमितिमत ईश्वरस्यासिद्धावपि कार्यत्वे सतीति विशेषणं व्यर्थं व्यवच्छेद्याभावादित्यर्थः ॥ **इति परतःप्रामाण्योत्पत्त्यनुमानभङ्गः ॥ १०२ ॥**

(328) **संवित्तीनां यथावस्थितनिजविषयोल्लेख औत्सर्गिकः स्यात् ;**
**वह्न्यादेर्दाहकत्वप्रभृतिवदुपधेरन्यथात्वं भ्रमांशे ।**
**नित्यज्ञानप्रमात्वं वदसि च निरुपाध्येव निर्हेतुकत्वात्**
**दोषाभावात् प्रमा चेत्, श्रुतिरपि जयिनी दोषदूरोज्झिता नः ॥ १०३ ॥**

इत्थं वेदप्रामाण्यमुपपाद्य तत्प्रसङ्गागतं बुद्धीनां स्वतःप्रामाण्यमाह **संवित्तीनामिति** । अयमर्थः -- ज्ञानानां यथावस्थितार्थप्रकाशकत्वं सामान्यमेव, भ्रान्तस्यापि ज्ञानस्य धर्मिण्यभ्रान्तत्वात् । अतो वह्न्यादेर्दाहकत्ववत् ज्ञानानां प्रामाण्यं स्वाभाविकमेव । **उपधेः** मणिमन्त्रवत् दोषोपाधिवशादप्रमाणत्वं भ्रमांशे ॥ किंच भवानपि नित्यस्येश्वरज्ञानस्य कारणाभावेन निरुपाधिकमेव प्रमात्व(प्रामाण्य)माचष्ट इत्याह **नित्येति** । ईश्वरज्ञाने दोषाभाव एव प्रमात्वनियामक इति चेत्, तच्छ्रुतावपि तुल्यमित्याह **श्रुतिरपीति** । यथा नित्यमीश्वरज्ञानं कारणदोषाभावात् प्रमाणम्, एवं वेदवाक्यमपि कारणदोषाभावात् प्रमाणम्, तद्वाक्यजनितं ज्ञानमपि निर्दोषवाक्यजनितत्वात् प्रमैवेति । इत्थं च स्वतःप्रामाण्यं निर्व्यूहति । घटोऽस्तीति ज्ञान

---

७१- सिद्धः। वेदस्य गुणाधीनत्वेऽनेन साधिते स गुणः कः इत्यत्र अन्यत्रानाश्वासात् पूर्वसिद्धस्येश्वरज्ञानस्यैव गुणत्वावधारणमिति चेत्—एवमपि तज्ज्ञानस्य नित्यतया तत्प्रामाण्यमन्याधीनं न भवतीति तत्र स्वतःप्रामाण्यमेव स्वीकार्यम्। अन्यथा प्रामाण्यमप्रामाण्यं वा स्वाश्रयभूतज्ञानकारणसापेक्षमेवेति स्वीकारे ईश्वरज्ञानस्य प्रामाण्यमप्रामाण्यञ्च न स्यात्। नित्यज्ञाने प्रामाण्यं प्रति न कारणापेक्षेति चेत्-अप्रामाण्यमेव कारणमनपेक्ष्य कथं न स्यादिति। तथा च उत्सर्गानुमानमेतदित्यसदुक्तं नायुक्तम् ॥१०२॥

प्रसक्तं स्वतःप्रामाण्यमेव समर्थयते संवित्तीनामिति। अत्र बुद्धिपरिच्छेदे तत्स्वरूपस्वप्रकाशत्वादिविचार्य भ्रान्तिस्वरूपं सर्वमतालोडनेन संशोध्य प्रमानिरूपणे प्रवृत्य प्रत्यक्षानुमानागमरूपेण त्रैविध्यात् तत् सर्वं विवेचितम्। तत्र प्रत्यक्षादिप्रमासु स्थितं प्रमात्वं किं स्वतः उत परतः इति चिन्त्यते इति प्रघट्टविभागोऽपि ज्ञेयः। यथा वस्तु वर्तते, तथा तद्ग्राहकत्वं ज्ञानानां स्वभावः यथा अग्नेर्दाहकत्वं स्वभावात्। यथा च चक्षुषः अगुलत्वप्रभादिदोषाभावे ऋजुप्रभाप्रसरहेतुत्वम्। क्वचित् ज्ञानस्यान्यथात्वम् = अविद्यमानार्थग्राहित्वम् उपधेः= उपाधिभूतात् दोषात्। तदप्यन्यथात्वं न धर्म्यंशे, किंतु भ्रमांशे =यदंशे भ्रम उच्यते, तदंशे। ईश्वरज्ञानस्य निर्हेतुकत्वादेवोपाध्यभावात् अप्रामाण्याभावः। यदि गुणाभावेऽपि दोषाभावमात्रेणेश्वरज्ञाने प्रामाण्यमिष्यते, वेदेऽपि तत एव प्रामाण्यलंभनात्, किमीश्वरगुणापेक्षयेति ॥ १०३ ॥

मुत्पद्यते । तत्र विषयास्तित्वमेव प्रामाण्यम् । तत्तु तेनैव ज्ञानेन प्रतीयते । अतः स्वतःप्रामाण्यं प्रतीयते । यत्र पुनः शुक्तौ रजतज्ञानमुत्पद्यते, तत्रापि रजतमस्तीति रजतास्तित्वमेव प्रतीयते ; न पुनर्नास्तित्वं तेनैव ज्ञानेन प्रतीयते । अतो विषयास्तित्वं स्वेन, नास्तित्वं बाधकेन प्रतीयत इति स्वतः प्रामाण्यप्रतीतिः ; अप्रामाण्यप्रतीतिः परत इति विभागः । शेषं विस्तरभयात् न लिख्यते ॥ १०३ ॥

(३२७) **सर्वं साक्षात्करोति स्वत उपधिगणैरुज्झितः संप्रसादः ;**

**प्रामाण्यं तत्र नोपाध्युपनतमिति तत्तुल्यताऽन्यत्र युक्ता ।**

**आत्मस्वात्मांशयोश्च क्वचिदपि न भवेत् भ्रान्तिरंशान्तरेऽपि ;**

**स्वादेषा न स्वरूपे क्वचन ; परमसौ द्विप्रकारे प्रकारे ॥ १०४ ॥**

किंच स्वतःप्रामाण्यं श्रुत्यर्थानुधाविना दुस्त्यजमिति दर्शयति **सर्वमिति** । 'सर्वं ह पश्यः पश्यति' इत्यादिश्रुतिः **उपधिगणैरुज्झितः** मुक्तः **संप्रसादः** जीवः सर्वं साक्षात्करोतीति वदति । तत्र प्रामाण्यमुपाधिकृतं परप्रयुक्तमिति वक्तुं न शक्यते ; स्वाभाविकत्वात् तद्द्ज्ञानस्य । अतोऽन्यत्रापि **तत्तुल्यता युक्ता** । स्वाभाविकत्वमेव युक्तमिति भावः । किंच भ्रान्त्यभ्रान्तिविभागाभावेन सर्वेष्वपि ज्ञानेषु आत्म

टी—ईश्वरज्ञानप्रमात्वं स्वत इति साधितम् । एवं शास्त्रसिद्धनित्यमुक्तज्ञानानामपि प्रामाण्यं न गुणायत्तम्, किंतु ज्ञानस्वभावसिद्धमेवेति वदन् सर्वज्ञानप्रामाण्ये स्वतस्त्वमाह सर्वमिति । संप्रसादशब्दो जीवपरत्वेन श्रुतौ प्रसिद्धः । कर्मतज्जन्यरागद्वेषादिरूपमलराहित्यात् निर्मलः संप्रसादशब्दस्वरसार्थः । तत्त्वं नित्यानां नित्यम् । मुक्तानां प्रकृतिसंबन्धविमोकानन्तरम् ; 'पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति श्रुतेः । तच्च परसाम्यम्, 'सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः' इत्युक्तभगवत्तुल्यज्ञानानन्दप्राप्तिरूपम् । तदत्राह । संप्रसादः उपधिगणैः=पुण्यापुण्यरागद्वेषादिरूपोपाधिव्रातैः उज्झितः=त्यक्तस्सन् स्वतः स्वभावत एव सर्वं साक्षात्करोति । यस्मात् धर्मधर्मिसर्वांशसाक्षात्कारः, तस्मात् तद्गतं यथावस्थिताकारग्राहित्वरूपं प्रामाण्यं स्वत एव हि भवति । न तत् गुणरूपेण उपधिना=कारणेन उपनतं भवति । सामग्रीनिरपेक्षत्वात् । तथा च अन्यत्र बद्धज्ञानेष्वपि प्रामाण्ये तत्तुल्यता=गुणनिरपेक्षता युक्ता । किञ्च बद्धगतेषु ज्ञानेषु सर्वेष्वंशत्रयमस्ति, स्वस्वरूप-स्वाश्रयजीव-स्वविषयवस्तुभेदेन ; घटमहं जानामि, पटमहं संवेद्मीति त्रयभानात् । तत्र आत्मस्वात्मांशयोः=स्वस्वरूपरूपांशे स्वाश्रयजीवात्मस्वरूपांशे च कुत्रापि ज्ञाने कदापि भ्रान्तेरभावात् दोषायत्ताप्रामाण्याप्रसक्त्या गुणनिरपेक्षं स्वत एव प्रामाण्यमिति युक्तम् । अथ अंशान्तरे=तृतीये विषयरूपेऽपि, स्वरूपे=धर्मिस्वरूपांशे क्वचिदपि एषा=भ्रान्तिर्न भवति । अतस्तद्ग्राहित्वमपि स्वतः । तदत्र प्रामाण्याप्रामाण्ये ज्ञानतृतीयांशरूपविषयगतधर्मांशमात्रे भवतः । स च धर्मांशः प्रकारो द्विविधः, स्वरूपनिरूपकधर्मः, निरूपितस्वरूपविशेषणश्चेति । "अधर्मं धर्ममिति या मन्यते तमसा वृता । सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी" इति धर्म्यंशे भ्रान्तिवचनमपि, स्वनिरूपकधर्मस्य निरूपितस्वरूपविशेषणग्रहणकाले धर्मिरूपोद्देश्यकोटौ निवेशात् धर्म्येकदेशत्वमित्यभिप्रायेण । अतः स्वरूपनिरूपकधर्मांशभ्रम एव तामसभ्रमः । शेषमस्मदीयतात्पर्यचन्द्रिकाटिप्पणे तत्रानुसंधेयम् । एवं द्विविधे प्रकारे असौ भ्रान्तिः दोषात् भवति । तदभावे च स्वत एव यथावद्ग्रहणात् प्रामाण्यं स्वत एवेति ।

इदमत्र बोध्यम्—ज्ञानप्रामाण्यं स्वतः परत इत्यत्रार्थद्वयम् । स्वतो भवति=स्वाभाविकम् ; उत गुणाधीनमिति । एवं प्रामाण्यं स्वतो गृह्यत उत परत इत्यपि विचारः । तत्र ज्ञानग्राहकसामग्रीव्यतिरिक्तेनानुमानेन सफलप्रवृत्तिजनकत्वादिहेतुना प्रामाण्यग्रहणमिति परतस्त्वमपि तार्किकेष्टम्,

स्वात्मांशयोः क्वचिदपि भ्रान्तिर्न भवति । अतः स्वाभाव्यमेव प्रामाण्यस्य समुचितम् । **अंशान्तरेऽपि**= विषयांशेऽपि । **एषा** भ्रान्तिः । **स्वरूपे क्वचन न स्यात्**, "सर्वं ज्ञानं धर्मिण्यभ्रान्तम्" इति वचनात् । तथाच विषयेऽपि स्वरूपांशे सर्वज्ञानसाधारण्यात् प्रामाण्यस्य स्वाभाविकत्वमेव युक्तमित्यर्थः । तर्हि कुत्र भ्रान्तिरित्यत आह **परमिति** । **असौ** भ्रान्तिः । **द्विप्रकारे प्रकारे**—[द्विप्रकारे] स्वरूपनिरूपकधर्मे निरूपितस्वरूपविशेषकधर्मे चेत्यर्थ. । इदं रजतमित्यत्र स्वरूपनिरूपकधर्मवैपरीत्यम्, पीतश्शङ्ख इत्यत्र निरूपित स्वरूपविशेषकधर्मवैपरीत्यमिति विभागः ॥ **इति सर्वबुद्धीनां स्वतःप्रामाण्यम्** ॥ १०४ ॥

(330) **भ्रान्तिज्ञानेऽपि सत्यं किमपि तव मतेऽप्यस्त्यधिष्ठानपूर्वं ;**
**सत्यैकालम्बि चैकं समयिभिरखिलैर्दुस्त्यजं स्वार्थसिद्ध्यै ।**
**बुद्धेस्तत्पक्षपातः स्वयमपि कथितः सौगतैरेव कैश्चित् ;**
**स्वात्मांशे सत्यता च स्वत इति तदसौ वैदिकोक्ते वृथेर्ष्या** ॥ १०५ ॥

अत्र **सौगतः** पुनरप्रामाण्यमेव स्वाभाविकमित्याह ; तत्र युज्यत इति वदति **भ्रान्तिज्ञानेऽपीति**। अप्रामाण्यस्वाभाविकत्ववादिनोऽपि तव मते भ्रान्तिज्ञानेऽप्यधिष्ठानांशे प्रामाण्यस्य स्वाभाविकत्वं वाच्यम् ; अन्यथा निरधिष्ठानभ्रमप्रसङ्गात्। किंच, "प्रमाणात् प्रमेयसिद्धिः", "युक्तियुक्तं वचो ग्राह्यम्" इत्यादिकं वचनं सर्वैरपि वादिभिः स्वसिद्धान्तसिद्ध्यै सत्यैकालम्बि भवतीति दुस्त्यजम् ; अन्यथा व्याघातात् । **सत्यैकालम्बि** सत्यमात्रावलम्बि । अत स्वतःप्रामाण्यं सिद्धमिति भावः । किंच **कैश्चित्=सौगतैरेव बुद्धेः** प्रामाण्यपक्षपातः स्वयमेवोक्तः ; निर्विकल्पकस्य वासनोपप्लवाभावेन स्वभावत एव प्रामाण्यात् । सविकल्पकस्यापि स्वयंप्रकाशस्य स्वात्मांशे प्रामाण्यस्यावर्जनीयत्वात् विषयांश एव हि विकल्पस्यावस्तुनिर्भासत्वम्, असंवादः, वासनोपप्लवदूषितत्वं च(?)इति भावः । तदिदमाह **स्वात्मांशे सत्यता चेति** । एवं प्रामाण्यस्वाभाविकत्वे स्वस्याप्यवर्जनीये सति, वैदिकोक्ते स्वतःप्रामाण्ये वृथैवेर्ष्या अवैदिकस्येति ॥ १०५ ॥

---

वी— तदपि न ज्ञाने गृह्यमाणे सहैव प्रामाण्यमपि अनुमानादिनिरपेक्षमेव गृह्यत इति सिद्धान्तः । तत्रोत्पत्तौ स्वतस्त्वमेवं विचार्य स्थापितम् । अन्यत्तु स्वप्रकाशत्वोक्तिसिद्धमत्रापि वक्ष्यत एव ॥१०४॥

अथाप्रामाण्यस्वतस्त्वनिरासः। तद्वादी च बौद्धः। तं प्रति स्वतःप्रामाण्यदूषणायोगमाह भ्रान्तीति। तव मते भ्रान्तिज्ञाने सर्वस्मिन्नपि अधिष्ठानपूर्वम् =अधिष्ठानादिकम्—विषयभूतमधिष्ठानम्, विषयिज्ञानञ्च सत्यमस्ति। किञ्च समयिभिः =सर्वैरपि सिद्धान्तिभिः स्वार्थसिद्ध्यै =स्वस्याभीष्टार्थसिद्ध्यै तत्साधकत्वाभिमतमेकं सत्यैकालम्बित्वेन =अबाधितार्थैकविषयकत्वेन स्वीकर्तव्यं दुस्त्यजम् = त्यक्तुमशक्यम्। किञ्च कैश्चित्, "अनुपप्लवभूतार्थस्वभावस्य विपर्ययैः। न बाधो यत्नवत्वेऽपि बुद्धेस्तत्पक्षपाततः" इति विकल्पविषयैरनुपप्लवस्य स्वलक्षणशब्दवाच्यव्यक्तिमात्रस्य कथमपि बाधो न भवतीत्युक्त्वा तत्र हेतुरुच्यते, 'बुद्धेस्तत्पक्षपाततः' इति। बहुषु विषयेषु सत्सु ज्ञानस्यैकत्र पक्षपातो नाम, वस्तुसत्तद्ग्राहकत्वमेवेति तद्विषये स्वतःप्रामाण्यं सिद्धमिति भावः। इति तत् =इत्यस्मात् वैदिकैः त्रयीविद्भिर्यदुक्तम्, ज्ञानानां स्वतःप्रामाण्यमेव, न त्वप्रामाण्यं न वा परत इति, तत्रेर्ष्या वृथा =न वैदिकपक्षवारिका भवतीति। इति दुस्त्यजम्= इति हेतोः तत्तत् वचनम् अंशतोऽप्यप्रमाणत्वेनोपेक्ष्यं न भवति। सविकल्पकस्यापीति। एतदर्थश्च चतुर्थपादावतारिका। अतो भाष्ये, 'इति भावः' इति न स्यात् ॥१०५

(331) अप्रामाण्यं स्वभावो गुणत इतरदित्यत्र न ह्यस्ति हेतुः ;
नाभावो हेत्वपेक्षस्त्विति च न, नियमात् ; अन्यथाऽतिप्रसङ्गात् ।
किंचाभावोऽपि भावान्तरमिति(रम् ; अति?)मथने स्वेष्टभङ्गश्च भावी ;
शुक्तौ शुद्धां हि बुद्धिं वदसि ; न यदि, सा विभ्रमः स्यात् ; न वा स्यात् ॥१०६॥

यदि प्रामाण्यं स्वभावः, अप्रामाण्यमपि स्वभाव एव किं न स्यात् । अथवा स्यादप्रामाण्यमेव स्वभावः ; प्रामाण्यं तु गुणतः । अतः प्रामाण्यमेवौपाधिकम्-इत्येतदनूद्य परिहरति **अप्रामाण्यमिति** । **न ह्यस्ति हेतुः** । प्रामाण्य[स्य?]स्वभावत्वे सार्वत्रिकत्वं हेतुः; अप्रामाण्यस्य[ण्यं!] पुनरसार्वत्रिकत्वात् किंशुकाद्युपाधिकारुण्यन्यायेनौपाधिकत्वमेवाश्रयते ; अतोऽप्रामाण्यस्य स्वाभाविकत्वे हेतुर्नास्तीत्यर्थः । नन्वभावः शून्यात्मकत्वात् हेतुनिरपेक्षः। अप्रामाण्यं चाभावत्वात् हेतुं नापेक्षते। तदेतदनुभाष्य परिहरति(प्रतिक्षिपति) **नाभाव** इति। कुत इत्यत्राह **नियमादि**ति। मुद्गरादिप्रहार-घटादिध्वंसयोः पौर्वापर्यनियमेनाभावस्य हेतुनैरपेक्ष्यं न घटत इत्यर्थः । विपर्यये बाधमाह **अन्यथे**ति। अन्वयव्यतिरेके सत्यप्यभावस्य कारणानपेक्षत्वे भावस्यापि कारणानपेक्षत्वं स्यादित्यर्थः । इत्थमभावस्य भावादतिरिक्तत्वपक्षाङ्गीकारेण दूषणमभिधाय भावान्तराभाववादेनापि दूषणमाह **किंचे**ति । गोत्वाभावोऽश्वत्वादिः, शौक्ल्याभावो नैल्यादिरिति हि

व्यी- अथाप्रामाण्यं स्वत इति तत्पक्षस्यानुपपन्नतामाह अप्रामाण्यमिति। ज्ञानानामप्रामाण्यं स्वभावः= स्वतस्सिद्धधर्मः; इतरत्=प्रामाण्यं तु परतः=गुणात्, तार्किकोक्तात् इति बौद्धव्यवस्थायाः साधको हेतुर्नास्ति। यत्तु तैरुक्तम्—अप्रामाण्यं हि प्रामाण्याभावः । अभावश्च हेतुनिरपेक्ष इति—तन्न ; नियमात्=अभावस्यापि किञ्चिदानन्तर्यनियमात् । तदभावेऽप्यभावो भवतीत्यस्य दुर्वचत्वात् । अन्यथा घटादेर्जातस्य मुद्गरप्रहारादिकारणाभावेऽप्यनन्तरक्षण एव ध्वंसप्रसंगात् । अपिच भावस्यैव हेत्वपेक्षा, नाभावस्येत्ययुक्तम् ; भावातिरिक्ताभावानंगीकारात् सर्वस्याप्यभावस्य भावविशेषत्वात्। तथा अप्रामाण्यस्यापि प्रामाण्याभावातिरिक्तभ्रमत्वरूपभावात्मकत्वात् । भ्रमत्वं हि तदभाववति तत्प्रकारकत्वम् । अतो मथने=शोधने त्वदिष्टभंगः भावी=भवत्येव । प्रामाण्याभावो हि घटपटादेरप्यस्ति । न हि तत्तत् अप्रमाणत्वेन व्यवह्रियते । अत्र अभावस्य भावरूपत्वमेकं बाधकम् । तस्य भावरूपत्वाभावेऽपि प्रकृते अप्रामाण्यं भ्रमत्वरूपमेव सम्यक्शोधने वक्तव्यमिति तदुपर्युच्यते इति युक्तम् । अतोऽत्र अतिमथन इति पाठः विमर्शकेष्टः स्यात् । जडद्रव्यसरेऽपि एतत्पद(श्लो. ९) विमर्शो द्रष्टव्यः । किञ्च बौद्धस्य ते निरुपप्लवचित्संततिरेव मुक्तिरिति पक्षः । तथाच चित्संततेः प्रामाण्यमपि सिद्धम्, तत्र गुणाद्यभावात् तस्य स्वतस्त्वमपि सिद्धम्। न यदि= तत्र प्रामाण्यास्वीकारे, सा=शुद्धबुद्धिर्विभ्रमः स्यात् । कथञ्चान्यधर्मप्रकारकत्वरूपशुद्धत्ववत्यां भ्रमत्वम् ? प्रमात्वभ्रमत्वोभयाभावे च बुद्धिरेव न स्यादिति योगाचारादिसंमतं मुक्तिस्वरूपं न सिध्येत् । न च शून्यवादे ज्ञानाभाव इष्ट एवेति वाच्यम् ; तन्मते ज्ञानस्यैवाभावात् प्रामाण्याप्रामाण्यविचाराप्रसक्तेः ॥

प्रामाण्यस्येति षष्ठ्यन्तं युक्तम् । उपरि अतोऽप्रामाण्यस्येति एतदनुरूपषष्ठीप्रयोगः । सार्वत्रिकत्वं हेतुरिति। सर्वत्र ज्ञाने अंशतः प्रामाण्यमवर्जनीयमिति प्रागेवोपपादितम् । किंशुकेति। प्रसिद्धं हि जपाकुसुमादिसांनिध्यमूलकं स्फटिकादौ आरुण्यादिभानम् । अत्र आश्रयते इत्यस्य कर्तृसापेक्षत्वात् अप्रामाण्यस्येत्येतत्स्थाने अप्रामाण्यमिति प्रथमान्तं पठनीयमिति विमर्शकोक्तं साधु । अन्वयव्यतिरेके इति समाहारैकवचनम् । ननु स्वाभाविकत्वास्वाभाविकत्वयोर्यदि न भावत्वाभावत्वे

भावान्तरा(रम?)भावः ; तथाचाभावस्य भावान्तररूपत्वे तस्याभावत्वाभावात्, 'अप्रामाण्यमभावत्वात् स्वाभाविकम्' इत्यसिद्धो हेतुः। तदयमर्थः -यत् अभावो भावो वा यस्य स्वरूपानुबन्धि, तत् स्वाभाविकम्; यत् उपाध्यन्तरसापेक्षम्, तत् औपाधिकम्, प्रामाण्यं च ज्ञानस्य स्वभावानुबन्धि; धर्मिस्वरूपे संशयविपर्यययोरप्यभ्रान्तत्वात्। तथाऽस्तित्वभास्वरो(रत्वो?)र्ध्वत्वादिसाधर्म्येऽपि प्रामाण्यं दुरपह्नवम्। केवलं धर्ममात्रे वैपरीत्यं सन्देहो वा। अतः प्रामाण्यं स्वतः, अप्रामाण्यं परत इति सिद्धम्॥ इति अप्रामाण्यस्वाभाविकत्वभङ्गः॥

**(832) मानत्वामानते द्वे स्वत इति वदतः सांख्यसिद्धान्तिनस्ते**
**व्यक्तिद्वैतं तयोश्चेत्, प्रतिनियततयोपाधिभेदोऽभ्युपेत्यः।**
**व्यक्त्यैक्ये व्याहतिः स्यात्; अथ निजविषयेऽप्यंशतस्ते, तथाऽपि (तदाऽपि?)**
**स्यात् धीः सर्वा तथेति स्वपरसमययोर्द्वेषरागौ जुषस्व ॥ १०७ ॥**

प्रामाण्यमप्रामाण्यं च स्वत इति सांख्याः। तन्मतमनूद्य दूषयति मानत्वामानते इति। मानत्वामानत्वे द्वे अपि स्वत एव भवत इति वदतस्ते सांख्यस्य तयोर्मानत्वामानत्वयोर्व्यक्तिद्वैतं चेत्-भिन्नाधिकरणवृत्तित्वं चेत्, उपाधिभेदोऽङ्गीकार्यः, कारणदोषात् क्वचिदप्रामाण्यम्, कारणगुणात् क्वचित्प्रामाण्यमिति। तथाच नैयायिकानामयं सिद्धान्त ॥ एकस्यामेव व्यक्तौ प्रामाण्यमप्रामाण्यं [च?] चेत् स्वाभाविकमभ्युपैषि, तदा व्याघात.। न ह्येकमेव विज्ञानमेकविषये स्वत एव प्रमाणमप्रमाणं चेत्यनुन्मत्तो ब्रवीति। तर्हि स्वविषयेष्वंशभेदेन प्रामाण्यमप्रामाण्य [चेति?] चेत्-ते प्रामाण्याप्रामाण्ये।

---

① निमित्तम्, तर्हि के निमित्ते इत्यत्राह तदयमर्थ इति। यदिति पृथक्पदम्। यत् यस्य स्वरूपानुबन्धि, तत् तस्य स्वाभाविकमित्यन्वयः। अभावो भावो वेति यदित्युक्तस्य विवरणम्। अस्तित्वेत्यादि। सन्= सत्तावानयं शब्दो द्रव्यं वा गुणो वा; भास्वरमिदं शुक्तिर्वा रजतं वा; ऊर्ध्वोऽयं स्थाणुर्वा पुरुषो वा—इति संशयेषु साधर्म्यांशे प्रामाण्यमनपलप्यम्। इदं रजतं भातीति विपर्यये इदमिति धर्मिस्वरूपे भू सत्तायामिति तदस्तित्वे च तथेति॥ १०६॥

वैदिकसंमतं प्रामाण्यस्य स्वतस्त्वं साधितम्। अप्रामाण्यस्य स्वतस्त्वं बौद्धमतं निरस्तम्। अथोभयोरपि स्वतस्त्वं सांख्यसंमतं निरस्यते मानत्वेति। प्रामाण्यमप्रामाण्यञ्चेति द्वयमपि स्वत इति वदन्तं सांख्यानां सिद्धान्ते स्थितं पृच्छामः-किं कतिपयज्ञानव्यक्तौ मानत्वमस्ति, अन्यत्र चामानत्वम्; तत्रतत्र तत् तत् स्वत इति पक्षः, उत सर्वत्र मानत्वामानत्वे मिलिते स्वतः स्त इति। आद्ये ज्ञानसामान्यकारणातिरिक्तविशेषकारणानपेक्षायां मानत्वामानत्वव्यवस्था न घटते; अतः प्रतिनियततया = व्यवस्थितत्वात् उपाधिभेदः= तत्प्रयोजको हेतुभेदः स्वीकार्यः। तथाच गुणाधीनं प्रामाण्यं दोषाधीनमप्रामाण्यमिति तार्किकमतमेवाऽऽदृतं स्यात्। न द्वितीयः। एकैकव्यक्तौ विरुद्धद्वयसमावेशायोगात्। ननु ज्ञानस्य सविषयकत्वात् विषये क्वचिदंशे प्रामाण्यमन्यांशे अप्रामाण्यमिति व्याहतिः परिहियत इति चेत्—तत्राह अथेति। विषयेष्वंशभेदेन ते=मानत्वामानत्वे चेत्, तर्हि सर्वाऽपि धीः प्रमाऽपि स्यात्, अप्रमा च। तत्र विषयभूतयोर्धर्मधर्मिणोर्मध्ये धर्म्यंशे प्रमात्वं धर्मांशे चाप्रमात्वमित्युक्तौ त्वदुक्तधर्मस्याप्रामाणिकत्वे परेष्टो धर्म एव प्रामाणिकः स्यादिति परमते रागः स्वमते द्वेषश्च ते युक्तौ स्याताम्। परेष्टधर्मस्याप्येवमप्रामाणिकत्वे स्वलक्षणरूपव्यक्तिमात्रसत्त्वं धर्माणां विकल्पमात्रत्वं च वदता बौद्धेन सौभ्रात्रं स्यात्॥ उपाधिभेदोऽङ्गीकार्य इति। कारणभेदोऽङ्गीकार्य

ते इति द्विवचनम्—, एव तर्हि स्वसिद्धान्तजन्यज्ञानमपि प्रमाणाप्रमाणात्मकम् , परसिद्धान्तजन्यज्ञानमपि प्रमाणाप्रमाणात्मक कृत्वा स्वसिद्धान्तेऽपि द्वेषम , परसिद्धान्तेऽपि रागं भजस्वेति परिहासेनोत्तरम् ॥

इति उभयस्वतस्त्वरूपसांख्यपक्षनिरासः ॥ १०७ ॥

(११४) ज्ञान मान स्वतश्चेत् , कथमिव विशयः कस्यचित् क्वापि भावी
मीमांसा चानपेक्ष्येत्यसदुपधिकृताकारशङ्कोपपत्तेः ।
नेत्रालोकादिनीतेर्भवति च निगमोऽप्यत्र मीमांसयाऽर्थी ;
हेतूनां साध्यसिद्धौ सहकृदनुविधिर्हेतुभाव न हन्ति ॥ १०८ ॥

अत्र चोदयति **ज्ञानमिति**। ज्ञानं स्वत एव पमाणं चेत् , तर्हि कस्यचित् कुत्रचित् प्रमाणमप्रमाण वेति सशयो न स्यात् । तथाच मीमासा अनपेक्ष्या स्यादिति। इमामाशङ्का निराकरोति **असदिति**। अत्र हेतुमाह **उपधीति**। प्रामाण्यस्य स्वाभाविकत्वेऽप्युपाधिकृताप्रामाण्यशङ्काया सद्भावात् तन्निराकरणार्थं मीमासा अपेक्षणीया स्यादिति भाव। दृष्ट चैतत्। स्वत एव रूपादिविषये प्रमाणभूतस्यापि[हि?]नेत्रस्याऽऽलोकादिसहकारिसाहित्यापेक्षणम् । तदिदमाह **नेत्रेति** । यथा नेत्रमालोकमपेक्षते, एवं निगमोऽप्यर्थतत्त्वावधारणे **मीमांसयाऽर्थी**। मीमासासापेक्ष इत्यर्थ । न केवल प्रमाणानामेव सहकारिसापेक्षत्वम् , अपितु सर्वेषामपि कारणानाम्। इद च सापेक्षत्व कारणाना कारणत्व न व्याहन्तीत्याह **हेतूनामिति** ॥

इति स्वत प्रामाण्यविरोधितर्कनिरासः ॥ १०८ ॥

---

र्वौ इत्यर्थ । सिद्धान्त इति, तथा च तद्वैलक्षण्य त्वत्सिद्धान्तस्य न स्यादिति भाव। कृत्वेति। ननूभयमपि प्रमाणाप्रमाणात्मक यदि मन्येत, कथ तत्र परमते रागस्य स्वमते द्वेषस्य च व्यवस्थायाऽऽपादनमिति चेत्—अपिशब्दस्यापि प्रयोगात् एकैकत्रापि रागद्वेषोभयापादने तात्पर्यम , । प्रामाण्याप्रामाण्ययो. एकत्राविरोधे, रागद्वेषावप्यविरोधेन सर्वत्र स्यातामिति। भावान्तर तु प्रागेवान्वयार्थे उक्तम् ॥१०७॥

एव प्रामाण्यमात्र स्वत इति साधितम्। अथ शंकते, यदीद प्रामाण्य स्वतो जायते ज्ञायते च, कथ तर्हि ज्ञानमिद प्रमाणमप्रमाण वेति सशय । सशय प्रति निश्चयस्य विरोधित्वादिति । तदाह ज्ञानमिति । ननु प्रामाण्यस्योत्पत्ति स्वत इत्येव प्रागुक्तम् , न तु ज्ञप्ति स्वत इति। स्थितस्यापि प्रामाण्यस्याज्ञाने सशय कुतो न भवेदिति चेत्—उच्यते । ज्ञानस्य स्वप्रकाशत्वस्येष्टत्वात् स्थित चेत् प्रामाण्य ज्ञायेतैवेति । अत एव सविच्छीनामिति(१०३)श्लोकवृत्तौ प्रामाण्यप्रतीतेरप्युल्लेख । विशय.= सशय । तत्सद्भावश्च निर्विवाद । अत एव विषयो विशयश्चेति पञ्चाङ्गकाधिकरणात्मकमीमासाप्रवृत्ति । सा चानपेक्षिता स्यादिति । प्रत्युत्तरयति इत्यसदिति । गृहीतेऽप्याकारे उपधिना= उपाधिना कारणान्तरेण तच्छका भवितुमर्हति। प्रमाणज्ञानवत् अप्रमाणज्ञानेऽपि प्रामाण्य ग्रहणात् किमनारोपित प्रामाण्य गृहीतम् उताऽऽरोपितमिति विशयो मीमासा च भवितुमर्हति। मीमासा हि प्रमाकरणस्य शब्दस्य सहकारिकारणम्। यथा चक्षुरात्मक करणमालोकरूपसहकारि सापेक्षमेव प्रमात्मक ज्ञान जनयति, तथा मीमासारूपतर्कसहकृत शब्द प्रमाम्। ननु कारणत्व कार्योपधायकत्वम्। तत्र यदि मृदादि सहकारिकारणसमावेशाभावात् कार्यं जातु न जनयति, तर्हि तस्य नैव कारणत्वमिति क्षणिकत्व सहकारिनिरपेक्षकारणत्वादिबौद्धमतवासितपुरुषप्रश्ने प्रत्याह हेतूनामिति । कारण चेत् , प्रतिक्षण कार्योत्पादकमेवेति न। सहकारिसंनिधौ कुर्वत्स्वभावत्व

(381) सर्वज्ञस्य प्रमाया न खलु न विषयः स्यात् स्वकीयं प्रमात्वं ;
निर्बाधा धीः प्रमेति प्रमितिरपि निजं गाहते मानभावम् ।
मानेऽर्थः स्वात्मनैव स्फुरति ; न च परं भाति शङ्कानिरासे
भ्रान्त्या स्वार्थान्यथात्वं स्वयमनवगतं बाधकैर्बोध्यतेऽतः ॥ १०९ ॥

उभयवादिसंमतिपन्नदृष्टान्तोपादानेन स्वतःप्रामाण्यज्ञप्तिमुपपादयति **सर्वज्ञस्येति**। पूर्वं प्रामाण्यस्वरूपस्य ज्ञानेषु स्वतस्त्वमुक्तम् ; इदानीं प्रमा[त्व?]ज्ञप्तेरपि स्वतस्त्वमुच्यत इति विभागः। ज्ञानस्य स्वप्रामाण्यं स्वत एव गृह्यत इति दृष्टमित्याह **सर्वज्ञस्येति**। ईश्वरज्ञानं सर्वविषयत्वात् स्वगतमपि प्रामाण्यं गृह्णाति ; अन्यथा सर्वविषयत्वमेव न स्यात्। न केवलमीश्वरज्ञानमीदृशम्, अस्मदीयमपि ज्ञानं तथेत्याह **निर्बाधेति**। **प्रमितिः**—लक्षणप्रमितिः स्वकीयमपि प्रमितित्वं गृह्णाति। अन्यथा सर्वानुवृत्तलक्षणग्रहणमेव न स्यादिति भावः। अस्त्वेवम् ; तथाऽपि कथं प्रामाण्यं स्वतो गृह्यते, कथं वा अप्रामाण्यं परतो गृह्यते इत्याशङ्क्य क्रमादुभयत्रोपपत्तिमाह **मान** इति। प्रमाणज्ञाने घटोऽस्तीति सद्भावविशिष्ट एव घटः प्रतीयते। स एवार्थसद्भावो घटज्ञानस्य प्रामाण्यम्। अतः स्वतो गृह्यते प्रामाण्यम्। नन्वप्रामाण्यशङ्कानिरासकैः संवाद–कारणगुण–अर्थक्रियाज्ञानैः किं क्रियते॥ तदेव पूर्वप्रतिपन्नं प्रामाण्यं प्रतिष्ठाप्यते। न हि संवादादिज्ञानेषु घटस(त्?)द्भावातिरेकेण ज्ञाप्यमस्ति। अतः स्वतःप्रतिपन्नमेवार्थतथात्वं तैरपि पुनर्गृह्यत इति प्रामाण्यग्रहणस्य स्वतस्त्वमेव। तदिदमाह **न चेति**। भ्रान्तिज्ञानेष्वप्रामाण्यं परत एव ज्ञाप्यत(ज्ञायते?) इत्याह **भ्रान्त्येति**। अर्थान्यथात्वमेव ज्ञानस्याप्रामाण्यम् ; तदन्यैरेव बाधकैरवबुध्यते। न हि रजतज्ञानं रजतस्यान्यथात्वमावेदयति। अपितु कारणदोषादिज्ञानं ज्ञानविषयस्यान्यथात्वं प्रतिबोधयति। अत [प्रामाण्यस्य स्वतस्त्वम् ?] अप्रामाण्यस्य परतस्त्वमिति विभागः। अत्र वक्तव्यं सर्वमवशिष्टं स्वयमेव भाव्यमन्तेवासिभिः॥

इति स्वतःप्रामाण्यज्ञप्तिप्रकारः ॥ १०९ ॥

---

णी– कारणत्वम्, सहकारिवैकल्यप्रयुक्तकार्याभावकत्वं वा कारणत्वमित्येव स्वीकारात्। सोऽयमिति प्रत्यभिज्ञादिना सहकारिनिरपेक्षक्षणिककारणत्वमतं हि निरस्तमेवेति भावः ॥ १०८ ॥

प्रामाण्यमेव स्वतो ग्राह्यम् ; न त्वप्रामाण्यमिति विशदयति सर्वेति। ईश्वरज्ञानस्य सर्वविषयकतया तज्ज्ञानगतप्रामाण्यस्यापि तेन ग्राह्यतया तत्र स्वतो ग्राह्यत्वमेष्टव्यम्। तथा, 'अबाध्यं = तद्वति तत्प्रकारकं ज्ञानं प्रमा' इति प्रमालक्षणज्ञानं सर्वप्रमागतं लक्षणमिव स्वगतं लक्षणमपि गृह्णाति ; स्वस्यापि प्रमात्वात्। तस्मात् प्रमात्वं स्वतो ग्राह्यम्। प्रामाण्याप्रामाण्यस्वरूपशोधने च प्रामाण्यस्य स्वतो ग्राह्यत्वम्, प्रामाण्यस्य परतो ग्राह्यत्वञ्च सुग्रहमित्याह मान इति। घटविषयकप्रमायां घटः स्वात्मना = घटत्वेन रूपेण भासते। अप्रामाण्यशङ्कायां जातायां तन्निरासे यस्य भानमुपयुज्यते, तदपि घटे घटत्वमेव हि। अतः प्रामाण्यं स्वत एव। अरजते शुक्तौ रजतभ्रमे च शुक्तौ रजतत्वमिव रजतत्वाभावोऽपि यदि गृह्येत, तदा रजतत्वतदभावोभयग्रहणादप्रामाण्यमपि स्वत इति स्यात्। न चाभावो गृह्यते। तदाह भ्रान्त्येति। बाधकं च कारणदोषज्ञानादिकमभावग्राहकम्॥ अन्तेवासिभिरित्यनेन सेश्वरमीमांसादिस्वग्रन्थाध्ययनं ज्ञाप्यते। तत्रास्मदीयं टिप्पणमपि द्रष्टव्यम् ॥ १०९ ॥

प्रमाणविभागे शब्दप्रमाणनिरूपणं स्मृतिनिरूपणारम्भात् प्राक् १२२ श्लोकपर्यन्तं भवति।

(885) दृष्ट मान्थालभोगिप्रभृतिषु करणस्थानभेदादि चित्र ;
तादृक् द्वीपान्तरादौ श्रुतमपि न मृषा ; वेदसिद्धे ह ?) तथा नः।
यत्रानाप्तोक्तधीर्न भवति, विहतिर्नापि सम्भावनायाः
किं व्याप्त्याऽत्रोपचारो विहतिमति भवेत् ; नैव तद्व्याप्तिदौःस्थ्ये ॥ ११० ॥

अस्तु स्वत प्रामाण्य प्रमाणस्य, अथापि वेदेष्वद्भुतोक्तीना न याथार्थ्यमित्याशङ्क्य परिहरति दृष्टमिति। न हि वेद एवाद्भुतदृष्टि, लोकेऽपि। अद्भुत नाम अन्यत्रादृष्टस्यापि कस्यचित्कदर्शनम्। दृश्यते हि मान्थालव्यालादीनामन्धकारेऽपि रूपदर्शनम्, मान्थालानामाहारनिर्हारकरणयोरेकस्थानवर्तित्वम्, व्यालाना चक्षुश्श्रवस्त्वम्, पक्षिषु च केषुचिदङ्गाराहारत्वम्, ईक्षणध्यानसस्पर्शैर्म त्स्यकूर्मविहङ्गमाना पुत्रपोषणम्। नालिकेरद्वीपवासिनामपक्वान्नैर देहधारणम्। तदिदमाह तादृगिति। दृष्टान्तदृष्ट दार्ष्टान्तिके योजयति वेदसिद्ध[म् ?] इति। लोकेऽप्यद्भुतार्थ प्रमाणसिद्धत्वादङ्गीक्रियते, किं पुनर्वेद इत्यर्थ। तर्हि सर्वमप्यघटित वेद(आगम?)सिद्धमित्यङ्गीकार्यम्, नेत्याह यत्रेति। अयमत्र नियम —यत्रा-

---

1 तन्मध्ये तस्य स्वत प्रामाण्यस्थापनप्रसङ्गे प्रामाण्यस्योत्पत्तौ ज्ञप्तौ च स्वतस्त्वमेव, न परतस्त्वमिति न्यरूपि। अथेद प्रामाण्यमत्यन्तापूर्वार्थविषये कथम्? लोके भूयोदर्शनेन यत् यद्व्याप्यतया अवधारितम्, तत् तथैव स्वीकार्यम्, तद्विलक्षण तु वेदोक्तमपि न ग्राह्यमित्याशङ्कायाम्, लोके चक्षुरादिकमेक करणमन्यकरणस्थानभिन्नस्थानकमिति भूयोदर्शनरूपव्याप्तावपि यथा मान्थालादौ तद्भङ्ग इष्यते, तथा स्यादित्यनेकव्याप्तिभङ्ग इह दर्श्यते दृष्टमिति। पूर्वमेवोक्त मान्थाले पक्षिविशेषे, भोगिनि=सर्पे करणानाम्=इन्द्रियाणा स्थानभेद =मनुष्यादिकरणस्थानवैलक्षण्यम्। प्रभृतिशब्देन आदिशब्देन च मत्स्यादीना विलक्षणतत्कार्याणाञ्च क्रमेण ग्रहणम्। एव द्वीपान्तरादौ= भूमौ द्वीपान्तरे भूलोकभिन्नलोके च तादृक=पूर्वोक्तवत् विचित्र यद्वा तादृक्=इतरविलक्षणस्य तस्य तदेव तुल्यमिति वक्तुमर्हं विचित्र वस्तु ततो गतागतसमर्थपुरुषमुखात् श्रुतमाश्चर्यभूतमपि न मृषा=सत्यमेव। गच्छन्ति हि केचिदद्य चन्द्रमण्डलमपि लौकिकसाधनेनैव। तथा=तद्वत् न = अपक्षपातिनामनसूयूना वेदसिद्धम्='सोऽरोदीत्। यदरोदीत्, तत् रुद्रस्य रुद्रत्वम्। यदश्रु अशीर्यत, तत् रजत हिरण्यमभवत्' इति नेत्रजलस्य रजतरूपेण परिणाम एवमादिकमन्यच्च न मृषा। सिद्धमिति प्रथमान्तपाठ शोभन। तर्हि मृषात्वाभावस्य कियती सीमा, न हि सर्वं सत्यत्वेनेष्यते इत्यत्राह यत्रेति। इदमनाप्तोक्तमिति धीर्भवति चेत्, तत् मृषेति प्रतिपत्तव्यम्, एव सम्भावनाया विहति =सर्वथैवासम्भावितत्वमस्ति चेत्, मृषैव। यत्र न तथात्वम्, तत्र व्याप्त्या=भूयोदर्शनेन किं भविष्यति। दृष्टश्रुतविरोधेन व्याप्तिरेव भञ्जनीयेति भाव। नन्वेव वेदे औपचारिकोऽर्थ एव न स्यात्। यत् यथोक्तम्, तत् तथैव स्वीकार्यं स्यादित्यत्राह उपचारो विहतिमतीति। यत् वस्तु यथा दृष्टम्, तथैव तथात्वाभाव दृश्यते चेत्, तत्रोपचार, यथा आदित्यो यूपः यजमान प्रस्तर इत्यादौ। यत्र वस्त्वन्तरे दृष्टशक्तिमिति किञ्चिद्रूपेण दृष्टसजातीयेऽपि दृष्टत्वाद्यभावस्वभावान्तरमुच्यते, तत्रास्फलत्सामर्थ्य प्रबला दृष्टोपचारकल्पनमयुक्तम्, व्याप्तेरेव दौःस्थ्यं युक्तमिति तत्र तत्तदपूर्वस्य स्वभावस्य स्वीकर्तव्यतेति विवेक। श्रुतेस्तु इति सप्तम्यन्तपाठ[illegible]। ननु तच्छब्दस्य यदि उपचरणमित्यर्थ, तर्हि पूर्वेषु चारद्वयप्रयोगानुरोधेन स्यातीति पुलिङ्गप्रयोग एव युक्तः स्यादिति चेत्, तद्वार्तानि नमस्कारकरणेन उपविधानेस्मृत्यव्यातीत्यपि न भाव तथा प्रयोगात्॥

नाप्तोक्तत्वज्ञानं नास्ति, प्रतीतेश्च न व्याघातः, तत्र दृष्टान्ताभावेऽपि सोऽर्थोऽङ्गीकार्यः । तदेतदाह किं व्याप्त्येति । किं दृष्टान्तदर्शनेनेत्यर्थः । उपचारस्तर्हि स्यादित्याशङ्क्याह उपचार इति । व्याघाते सत्युपचारः ; नैव तत् उपचरणम् व्याप्तिदौःस्थ्ये — दृष्टान्तदौःस्थ्ये । अपूर्वार्थस्य प्रमाणेन दर्शने पूर्वदर्शनविरूपता न दोषायेत्यर्थः । "देवकीजठरे वासः स्वोदरे विश्वदर्शनम्" इत्यादिकं विश्वरूपस्य भगवतो योयुज्यत इत्यर्थः ॥ इति वेदेष्वद्भुतोक्तियाथार्थ्यम् ॥ ११० ॥

(336) वाक्यत्वात् कर्तृमत्यः श्रुतय इति यदि, ब्रूहि बाधं विपक्षे ;
श्रुत्या स्मृत्या च बाध्या त्वदनुमितिरियं कर्तुरस्मृतेश्च ।
त्वं तावत् तिष्ठ ; लोकैर्नहि पुरुषगुणप्रत्ययात् तद्गृहीतिः ;
सन्तश्चापह्नुवीरंस्तमिह न मुनयः सत्यनिष्ठाः कृतज्ञाः ॥ १११ ॥

एवं वेदानां स्वाभाविकं प्रामाण्यमुपपाद्य तेषामाप्तोक्तत्वेन प्रामाण्यमुपपादयतां पक्षप्रतिक्षेपार्थं 'वाक्यत्वात् कर्तृमत्त्वं वेदानाम्' इत्यादिकमनुमानं दूषयितुमारभते वाक्यत्वादिति । तथा हि— वेदवाक्यानि सकर्तृकाणि वाक्यत्वादित्य[त्र]नुमाने यदि विपक्षे बाधकतर्कोऽस्ति, स वक्तव्यः । न चेत्, अनुग्राहकतर्काभावादप्रयोजकोऽयं हेतुः ॥ वक्तृ(कर्त्र)भावे वाक्यत्वं हीयत इति चेत्, तन्न, स्वतन्त्रवक्त्रभावेऽपि प्रवक्तृपारम्पर्यमात्रेण वाक्यत्वस्यान्यथासिद्धत्वात् । यथा सकर्तृकाणामपि वाक्यानाम् । उच्चारयितृ पूर्व[तत्तुल्य]पुरुषताल्वोष्ठादिव्यापारपूर्वकत्वमेव हि वाक्यत्वे तन्त्रम् ॥ आदौ कस्यचित् पुरुषस्य स्वातन्त्र्य

ऽर्थे-ईक्षणेति । संकल्पसूर्योदये 7-12 इति श्लोकः तन्मूलस्मृतिवाक्यञ्च तत्र व्याख्याने द्रष्टव्ये ॥ ११० ॥

'मानं वेदोऽपि वक्तुर्गुणतः' इति गुणाधीनं प्रामाण्यं प्राक् दूषितम् । तत्र वक्तुरेवाभावे कथं तदधीनं प्रामाण्यमित्यसिद्धिशंकायां वाक्यत्वहेतुना वेदस्य सकर्तृकत्वं स्थाप्यते तैः । तदनुमानं दूषयति वाक्यत्वादिति । श्रुतयः कर्तृमत्यः वाक्यत्वादित्यनुमाने, हेतुरस्तु साध्यं मास्तु इति विपक्षशंकायां त्वया बाधकं प्रदर्शनीयम् । केनचित् बाधकेन तद्बाधं ब्रूहि । बाधकं नास्तीत्यर्थः । अनुकूलतर्काभावादप्रयोजको हेतुरिति यावत् । किञ्च श्रुत्या 'वाचा विरूपनित्यया' इत्यादिकया, स्मृत्या 'अनादिनिधना ह्येषा' इत्यादिकया कर्तृमत्त्वानुमानस्य बाधः। एवम् अत्र = वेदविषये कर्तुः कस्यचिदस्मरणात् स्मर्यमाणकर्तृकत्वरूपोपाधिसद्भावात् सोपाधिको हेतुरिति अस्मर्यमाणकर्तृकत्वरूपेणोपाध्यभावेन साध्याभावानुमानादपि साध्यबाधः । नन्वस्माभिः परमात्मनि कर्तृतया कथ्यमाने कथं कर्तुरस्मरणमित्यत्राह त्वं तावत् तिष्ठेति । गौतमादारभ्य तार्किकस्त्वं तं कर्तारं मन्यसे, त्वदीयज्ञानमूलभूतं गौतमज्ञानञ्च न स्मृत्यात्मकम्, किंतु गुणाभावे प्रामाण्यलोप इति भिया तर्केण कर्तुरभ्यूहमात्रम्। यदि वेदे भगवतः कर्तृत्वमुक्तमिति तदनुसंधीयेत, तदा किल तज्ज्ञानं स्मृतिः स्यात्॥ एवं तर्हि वेदस्य परिग्रह एव न स्यादिति चेन्न ; न हि मन्वादिभिर्वेदस्य गृहीतिः = परिग्रहः पुरुषगुणप्रत्ययात् = वक्ता पुरुषः गुणवान्-आप्त इति प्रत्ययेन न हि। तथा तैरनुक्तेः; प्रत्युत वेदा अपौरुषेयाः अत एव निर्दोषा इत्येवोक्तेः । ननु ते कर्तारं स्थितमप्यपलपन्तीति चेत्-अमी त्वयाऽपि सत्पुरुषत्वेन स्वीकृताः कथमपह्नुवीरन्।ते हि सत्ये निष्ठां भजन्तः कथमसत्यं ब्रूयुः। अंगभूतग्रन्थेष्वपि कर्तॄन् कृतज्ञतातिशयेनानुसंधायैवाध्ययनप्रवचनादि कुर्वन्तः कारयन्तश्च कथमङ्गिभूतस्य वेदस्य कर्तारं स्थितमपलपेयुरिति ॥ वक्तृपदस्थाने कर्तृपदमेव श्लोक इव युक्तम्; स्वतन्त्रवक्तृग्रहणसौकर्यात् । अन्यदा तु 'वक्ता पञ्च-

मन्त्रमिति चेन्न ; तस्य कादाचित्कसन्दर्भसाजात्य एव नियामकता (स्यात् ?)। यथा भवता ज्ञानानामनित्यत्वेन कारणगुणपूर्वकत्वेनैव प्रमात्वे सत्यपि ईश्वरज्ञानस्य नित्यत्वेन तादृशगुणपूर्वकत्वाभाव:, एवमागन्तुकसंदर्भस्य स्वतन्त्रपुरुषपूर्वकत्वेऽपि नित्यसन्दर्भसाजात्यस्य स्वतन्त्रपुरुषपूर्वकत्वं न स्यात्। तथाच वाक्यत्वमन्यथासिद्धत्वात् न स्वतन्त्रपुरुषपूर्वकत्वं साधयति॥ सर्वं वाक्यमनित्यमेव, वाक्यत्वादिति चेत्, तन्न; सिद्धसाधनत्वात्। तत्र चोच्चार्यमाणवाक्यस्यानित्यत्वात् । तादृशवाक्यपारम्पर्यस्य च नित्यत्वे बाधकाभावात् तावन्मात्रेणैव अस्माकं वेदनित्यत्वसिद्धेः । न ह्येकरूपवाक्यप्रवाहानादित्वातिरेकेण वेदवाक्यानामनादित्वं प्रतिपद्यामहे । न ह्येकरूपब्रह्माण्डप्रवाहस्यानादित्वे को नाम (कोऽपि?) विप्रतिपद्यते । [यथा?] सावयवत्वात् ब्रह्माण्डस्य सादित्वे साध्यमाने तज्जातीयब्रह्माण्डस्य पूर्वं सद्भावो न निषिध्यते, एवं प्रत्येकं वाक्यस्य सकर्तृकत्वेऽपि प्रवाहस्यानादित्वे न कश्चिद्विरोधः । किंचेदमनुमानम्, "वाचा विरूपनित्यया", "नाम रूपं च भूतानाम्" इत्यादिश्रुतिस्मृतिविरोधात् कालात्ययापदिष्टम् ; तदिदमाह श्रुत्येति। सम्प्रदायत्वे सति कर्तृस्मरणाभावाच्च कर्तृशून्यो वेदः । न च जीर्णकूपारामादिषु व्यभिचारः, उपदेशपारम्पर्ये सम्प्रदायत्वे च सति अस्मरणस्य कर्त्रभावनियतत्वात् ॥ मया स्मृतः कर्ता ; तत्प्रत्ययात् वेदप्रामाण्यमिति चेत्—तन्न, आग्रहगृहीतस्य भवतो वाक्ये प्रामाण्याभावादित्याह त्वं तावदिति। न हि मन्वादीनां वेदपरिग्रहः पुरुषगुणप्रत्ययेनेत्याह न हीति । प्रत्युत वेदस्याकर्तृकत्वमेव परमर्षयः प्रवदन्ति । ननु सर्वत्र वेदकर्तरि भगवति विद्यमानेऽपि मन्वादयः तदनुविधायिनश्च वेदवक्तारमपलपन्तीति चेत् ; तन्न ; तेषां तदपलापे प्रयोजनाभावात्। न हि सत्यनिष्ठास्तादृशा महात्मानस्तमपि भगवन्तमपलपन्तीति संभवनीत्याह सन्तश्चेति ॥ १११ ॥

(387) आदौ वेदैकभावादस्त्वविभजनवशात्; तावता नान्यसृष्टिः ;
सर्वेषामेकवेदान्वयमपि जगदुः कालभेदप्रतिष्ठम् ।
तद्वच्छाखाविभागः ; प्रवचननियता काठकाद्या समाख्या ;
द्रष्टा मन्त्रादिकर्ता ; परिहृत इह चानित्ययोगः प्रवाहे ॥ ११२ ॥

टी— राजस्य यः स्वयम्' इतिवत् स्वयम्पदप्रयोगोऽपि कार्यः स्यात्। स्वतन्त्रयक्तृ इतिवत्। उच्चारयितृ-पूर्वेत्यत्र कतिपयपदभ्रंशो भाव्यः । न चेत्, पूर्वेति पदं निष्कास्यम्। कादाचित्केति । पूर्वमस्थित एव सन् कदाचिज्जातो यस्संदर्भः तत्साजात्यं=तत्समत्वम् ; तत्र । सादिशब्दसमुदाय समानानुपूर्वीकत्व इति यावत् । नित्यसंदर्भसाजात्यस्येति। संदर्भस्य=आनुपूर्व्याः साजात्यम्=ऐकरूप्यम्, तत् नित्यम्=अनादि यस्य तस्य शब्दसमुदायस्येत्यर्थः। को नामेत्यनन्वितम्, नहीत्यारम्भात्। नञोऽभावे तथा स्यात्। अतः कोपि इति स्यात् ॥ १११ ॥

नन्वादौ वेद एक एवासीत्। अथ, "प्रतिमन्वन्तरञ्चैषा श्रुतिरन्या विधीयते" इति श्रुतयोऽन्याः प्रादुर्भूताः । अतः कल्पाद्यानन्त्यात् अनन्ता वै वेदाः इत्यसंख्येयवेदसिद्धिरिति पौरुषेयत्वमेवेत्यत्राह आदाविति। एको वेद इति वचनं न पश्चादनेकवेदोत्पत्त्यभिप्रायेण । किंतु वेदवृक्ष एक इति शाखानन्त्य तदास्थितमपि पृथगनाकलय्य समुदायतो वृक्षत्वेनैकत्वभावनया । तावता अन्ये वेदाः पश्चात् सृष्टा इति न । "चतुर्धा व्यभजत्ताश्च" इति एकस्यैव वेदस्य ऋग्वेदादिवेदचतुष्टयरूपेण विभाग: स्मर्यते । तद्वत् एकैकस्मिन्नपि काण्वमाध्यन्दिनतैत्तिरीयादिशाखाविभागश्च स्मर्यते। यत्तु

मन्वादिकाले वेदैक्यं श्रुतम्। अतस्तदा तदा नानावेदसृष्टिरित्याशङ्क्य परिहरति आदाविति। तत्र हेतुमाह **अविभजनेति**। तस्मिन् काले सर्वेषां वेदानामेकवेदान्वयकथनं कथम्? तदपि युज्यते कालभेद नियतत्वात्। तदिदमाह **कालेति** (सर्वेषामिति?)। अत एव पश्चात् शाखाविभागकथनमपि कालभेदा देवेत्याह **तद्वदिति**। एवं काठकादिसमाख्याऽपि प्रवचनानुबन्धित्वात् न वेदसृष्टिहेतुरित्याह **प्रवचनेति**। एवं वेदद्रष्टृत्वात् मन्त्रादिकर्तृत्वं च व्याख्येयमित्याह **द्रष्टेति**। कथं तर्हि नित्यस्य वेदस्यानित्यैर्योग इत्यत्राह **अनित्येति**। अयमर्थः—वेदवाक्यसन्दर्भसाजात्यमनादित्वेन नियतम्; सर्वमप्यनित्यं पदार्थजातं साजात्येन नित्येन वेदेन संबध्यते, स्फ्यकपालपुरोडाशादीनामपि साजात्येनानादित्वात् ॥११२

(888) **भेदो मन्वन्तरादौ भवति च नियतोऽनादिसिद्धे तदंशे;**
**पुंसूक्तादौ श्रुतीनां जनिवचनमपि प्राग्वदाविष्कृतौ स्यात्।**
**आज्ञारूपत्वमासां न च गलति विभोरैक्यरूप्या(रेकरूपा)भिमन्धेः;**
**योऽसौ देवः प्रमाणं, स च न शिथिलयेत् शक्तिमन्तं क्रमं तम् ॥ ११३ ॥**

कथं तर्हि "प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते" इतीत्याशङ्क्य परिहरति **भेद** इति। अनादिसिद्धानां वेदांशानामनन्तत्वात् कस्मिंश्चित् मन्वन्तरे कश्चित् वेदांशः प्रवर्तत इत्यर्थः। कथं तर्हि **पुंसूक्तादौ**, "ऋचस्सामानि जज्ञिरे" इत्यादिवचनम्? तच्च प्रादुर्भावमात्रपरमित्याह **पुंसूक्तेति**। अन्यथा, "यो वै वेदांश्च प्रहिणोति तस्मै" इत्यादिवचनशतविरोधात्। कथं तर्हि नित्यानां वेदाना-

ऋ– कठादीनां कर्तृत्वाभावे कथं काठकादिसमाख्येति–तत्र; कठादीनां कर्तृत्वाश्रुतेः। विभक्तशाखाप्रवक्तृत्वमात्रमेव हि तेषाम्। मन्त्रकृतो वृणीते इति यो यः कर्तृत्वेनोक्तः, स स मन्त्रद्रष्टैव भवति; न कर्ता। ननु वेदे अनित्याः ब्रह्मरुद्रेन्द्रवरुणादयः विश्वामित्रयाज्ञवल्क्यादयो महर्षयः जानश्रुतिप्रतर्दनादयः क्षत्रियादयश्च कथ्यन्ते। तेषामुत्पत्त्यनन्तरमेव तत्तद्वेदभागोत्पत्तिर्भवेदिति कथं तन्नित्यतेत्यत्राह इह चेति। इह = वेदे अनित्ययोगश्च तत्तन्नामकैकैकपुरुषापक्रमेऽपि तदेकनामकपुरुषान्तराणां प्रवाहतो नित्यत्वात् आकृतिनित्यतया वेदे गवाश्वादिव्यवहारवत् तद्व्यवहार इति प्रादुर्भावात् ॥११२

वेदादिवाक्यैरेव वेदानामुत्पत्तिरवगम्यत इत्यत्राह भेद इति। 'प्रतिमन्वन्तरञ्चैषा श्रुतिरन्या विधीयते' इति वाक्यं नापूर्ववेदोत्पत्तिपरम्; किंतु अनादिषु वेदेषु कतिपयापूर्वप्रकाशनपरम्। "ऋचस्सामानि जज्ञिरे', 'छन्दांसि यजुः' इत्यादिकमपि 'जनि प्रादुर्भावे' इति स्थितादाविष्कारपरमेव। ननु वेदस्येश्वरकृतत्वाभावे ईश्वराज्ञारूपत्वं कथमिति चेत्—आसां = श्रुतीनामाज्ञारूपत्वं तावता न गलति = नापैति। अपौरुषेयत्वेऽपि तदभिप्रायाविष्कारकत्वसंभवात्। कालभेदेनाज्ञाभेदोऽप्यावश्यक इत्यपि न। स्थिरबुद्धित्वादीश्वरस्य लोकक्षोभाभावायैकरूपाज्ञाया एव सर्वदाऽनुवर्तनात्। पूर्वस्या आज्ञायाः कार्यकरत्वाभावे हि आज्ञान्तरकरणप्रसक्तिरिति। एतत्त्यागेन आज्ञान्तरप्रयोगे हि आसां गलनम्। त्यागस्तु न; विभोः परमात्मनः एतदैकरूप्ये = एकानुपूर्वीकत्वे, एवम् एतदैकरूप्ये = आज्ञाविषयभूतानां धर्माधर्मिणां सर्वदा एकरूपत्वे चाभिसंधिसत्त्वात्। हेतुमाहेति वृत्तावतरणात् ऐकरूप्येति पाठः स्वरसः। एकरूपेति पाठे तु एकरूपाभिसंधिकस्य विभोराज्ञारूपत्वमित्यन्वयः; अभिसंधेर्हेतुत्वमर्थसिद्धमिति कल्प्यम्। क्रमम् = शब्दानुपूर्वीम्, देशकालदशानुसारिधर्माधर्मव्यवस्थापकञ्च नान्यथयेत्। अस्य प्राक्तनस्य शक्तिमत्त्वात् तत्त्यागे कारणाभावात्। प्रमाणमित्यस्य सर्वविषयकनित्ययथार्थज्ञान इत्यर्थः। "तद्योगव्यवच्छेदः प्रामाण्यं गौतमे मते" (न्या. कु) इतिवत्॥

मीश्वराज्ञारूपत्वम्, आज्ञावाक्यस्य तदातदाऽन्यथाकरणसंभवादित्याशङ्कय परिहरति आज्ञेति। हेतुमाह **विरोधेरिति**। प्रतिकल्पमेकरूपाभिसन्धिरीश्वर एकरूपमेवाज्ञावाक्यं वदति। एतदेव वेदस्य नित्यत्वम्, यत् ऐकरूप्येण सर्वेष्वपि कल्पेषूच्चार्यमाणत्वम, ईश्वराभिसन्धि(प्राय)विशेषद्योतनत्वादाज्ञारूपत्वमपि न विहन्यत इत्यर्थः। नन्वीश्वरः स्वतन्त्रत्वाद्वेदान् प्रतिकल्पमन्यथयतु? नान्यथयति; अन्यथाकरणे प्रमाणाभावात्। "यथापूर्वमकल्पयत्" इति यथापूर्वकल्पने प्रमाणसम्भवाच्च(सद्भावाच्च?)। अत तत्तत्क्रमविशेषविशिष्टतया तत्तत्कार्यकारणशक्तं मन्त्रार्थवादनिधिरूपं वेदराशिं नेश्वरः शिथिलयेदिति॥ **इति वेदनित्यत्वम्॥**

**(339) प्रेक्षावन्तो महान्तः परिजगृहुरिम मार्ध(र्थं)मङ्गैरनन्तं;**
**नेत्थं बाह्यागमानां प्रसृतिरनुपधेः तद्गृहीतेरभावात्।**
**दृश्यन्ते गत्यभावो नियतिषु लघिमा वञ्चनं तर्कमोहो**
**वृत्तिस्वास्थ्यादि चैषामुपधिरधिगमे; वैपरीत्यं तु वेदे॥ ११४॥**

ननु महाजनपरिग्रहात् वेदप्रामाण्यं प्रतिपद्यन्ते वेदवादिनः। स च परिग्रहो बाह्यागमेष्वपि तुल्य इत्याशङ्कय वैषम्यमाह **प्रेक्षावन्त इति**। अयमर्थः—बहुजनपरिगृहीतत्वं न महाजनपरिग्रहः, अपितु उत्कृष्टजनपरिग्रहः। स तु वेदेष्वेवेति भावः। कथमन्येषामागमानामनुत्कृष्टजनपरिग्रह इत्यत्राह **नेति**। **प्रसृतिः** मर्यादा। तत्परिग्रहप्रकारपरिशोधने वैषम्यमवगम्यत इत्यर्थः। कथमित्यत्राह **अनुपधेरिति**। द्विविधो हि परिग्रहः। आस्तिक्यनिबन्धनः कश्चित्, अल्पाल्पप्रयोजनाभिलाषादपरः। तत्र वेदपरिग्रहः पूर्वकोटौ निविशते, बाह्यागमपरिग्रहः सोपाधिक इत्यर्थः। उपाधिस्तु दृष्टमेव प्रयोजनम्। उपाधीनेव परिगणयति **दृश्यन्त इति**। अनन्यगतिकत्वम्, कर्तव्याकर्तव्यनियमेषु (कर्तव्येषु) लाघवम्, परैर्वञ्चनम् कुतर्काभ्यासव्यामोहः, **वृत्तिस्वास्थ्यम्**=अशनाच्छादनादिसौकर्यम्, एतादृशमन्यदपि बाह्यागमपरिग्रहे निदानम्। एतद्वैपरीत्यं वेदपरिग्रहे दृष्टमिति न बाह्यपरिग्रहस्य वेदपरिग्रहेण तुल्यत्वमिति भावः (इत्यर्थः)। इदमेव **न्यायविद्भिरपि**, "हेतुदर्शनादर्शनाभ्यां विवेकात् (विशेषात्?)" (न्या.कु २) इत्युच्यते॥ ११४

श्री–नन्वग्निहोत्रादीनां स्वर्गादीनाञ्च साध्यसाधनभावो न प्रत्यक्षगम्यः। बौद्धादिदेशितधर्मविषयेऽपि फलसंबन्धाप्रत्यक्षमिदं तुल्यम्। तत्र वेद एव ग्राह्यः, नान्य आगम इत्यत्र किं विनिगमकमित्यत्राह प्रेक्षावन्त इति। महाजनपरिग्रहात् वेदस्यैव प्रामाण्यम्। जनानां महत्त्वञ्च न संख्यादिना। तदा चार्वाकलोकायतमतस्यैवाऽऽदर्तव्यता स्यात्, न बौद्धादेरपि। प्रकृष्टज्ञानवत्त्वं महत्त्वम्। इमं= वेदमङ्गैः सार्धं परिजगृहुः। सार्थमिति पाठे अर्थव्युत्पादनायाङ्गानि विधाय परिजगृहुरित्यर्थः। अङ्गोपाङ्गप्रवर्तकानन्तमहापुरुषादृतत्वात् अत्रैव महाजनपरिग्रह इति सुनिश्चितम्। बाह्यग्रन्थानामियती प्रसृतिः = मर्यादा प्रचारश्च कस्मान्न भवतीति विमृशत। नूतनमर्वाचीनत्वात् अनादरात् अल्पज्ञमात्रस्वीकृतत्वाच्च। कतिपयैस्तेषां गृहीतिः =ग्रहणमपि नानुपधि =न क्षुद्रव्याजराहित्येन। के ते उपधय इति चेत्—गत्यभावः =आस्तिकैर्बहिष्कृततयाऽत्र प्रवेशासम्भवनिश्चयेन तत्र प्रवेशः। नियतिषु =कर्तव्यादिविषयकनियमेषु लघिमा =आधिक्याभावः। वञ्चनम्= परप्रलोभनोपायलाभः परैर्वा द्वैर्वञ्चितत्वं वा। तद्युक्तिषु मोहः =याथार्थ्यभ्रमः। वृत्तिस्वास्थ्यम्= सप्तघटिकाभोजनादि। सर्वमिदं बाह्यागमस्वीकारे उपधिभूतम्। वेदे तु ईदृशानामभावः। न्यायकुसुमाञ्जलौ (२) इदं द्रष्टव्यम्॥ ११४॥

(340) नित्यैरस्पृष्टदोषैर्भवति च निगमैः पौरुषेयेषु बाधः
पाषण्डत्वप्रथैषां जगति न च मृषा पक्षपातप्रहाणे ।
अन्योन्यं चैषु बाधः प्रसजति कृतकेष्वाप्ति-मोहादिसाम्यात्
संवादोंऽशेषु तुल्यः ; परमिह कुहनासिद्धयेऽन्यप्रवेशः ॥ ११५ ॥

किंचैवं प्रमाणत्वेन प्रतिपन्नवेदवाक्यात् बाह्यानां बाधस्थापनमप्रामाण्यहेतुरित्याह नित्यैरिति। अतस्तेषां पाषण्डत्वप्रसिद्धिरप्यप्रामाण्यनिमित्तं भवतीत्याह पाषण्डत्वेति । न चैतावदेव, बौद्धचार्वाकार्हतसांख्यादीनां परस्परबाधोऽप्यप्रामाण्यहेतुरित्याह अन्योन्यमिति। तत्रैकश्चेदाप्तः, अपरोऽप्याप्तः; मूढश्चेत्, मूढ इत्याह आप्तीति । क्वचिद्वेदसंवादात् कुत्रचित् प्रामाण्यमिति चेत्-तुल्यमित्याह संवाद इति । अतस्सिद्धान्तान्तरप्रवेशः कुहनासिद्धये परवञ्चनादिसिद्धय इति न बाह्यसिद्धान्तैः वेदागमस्य तुल्यत्वप्रसङ्ग इत्यर्थः ॥ इति वेदस्य बाह्यागमेभ्यो वैषम्यम् ॥ ११५ ॥

(341) संवादे मानवादेः श्रुतिभिरविरले, संग्रहे तत्समाने,
ताभिश्चाप्तत्वसिद्धौ, स्वकथित उचितस्तस्य तन्मूलभावः ।

---

वी— इतरागमाप्रामाण्यं विवेकिनां सुगममेवेत्याह नित्यैरिति । निगमाः=वेदाः नित्याः=अनादयः, अत एव पुरुषदोषरहिता इति वैदिकाः। तार्किका अपि ईश्वरकृतत्वेनास्पृष्टदोषत्वमंगीकुर्वन्ति । बौद्धाद्यागमाश्च तत्तत्प्रवर्तकपुरुषकृताः पौरुषेया इति तेषामपीष्टम्। तेन भ्रमप्रमादविप्रलम्भकरणापाटवरूपदोषाः संभाव्यन्त एव। नित्यवेदविरुद्धवादत्वादेव भ्रमादिमूलत्वं सुज्ञानम्। किञ्च ते लोके पाषण्डत्वेन प्रथिताः। पाषण्डत्वं पाखण्डत्वम् प्रमाणेन खण्डितत्वमित्युदयनः। पापपण्डत्वं वाऽस्तु । सर्वथा पाषण्डावलोकनादिकमप्यनर्थायेति विवृतं विष्णुपुराणादौ। अतः पक्षपातं प्रहाय पश्यतां प्रथेयं न मृषा। ते च बाह्यसिद्धान्ता अनेके मिथो विरुद्धाः। तत्रैकस्य प्रवर्तकस्य आप्तिः=आप्तत्वं चेत्, अन्यत्रापि सा एवं मोहः=भ्रमोऽपि। आदिना वञ्चनादिग्रहणम्। अतस्तेषु विनिगमनाविरहात् सर्वग्रहणे अन्योन्यबाधात् सर्वाग्रहणमेव संपद्यते। वेदप्रतिपादितसत्याहिंसादिकतिपयार्थसंवादश्च सर्वत्र तुल्यः। जनवञ्चनाय तावन्मात्रस्य सर्वादृतत्वात्। ननु किमर्थमीदृशानामतप्रादुर्भावः, वैदिकार्थस्य प्रामाणिकत्वे किमिति तदुपरोधः क्रियेतेति चेत्— तत्राह कुहनासिद्धयेऽन्यप्रवेशः इति। वैदिकैरपथप्रवृत्तेष्वनेकेषु बहिष्कृतेषु ते संघे शक्तिरित्यनुचिन्त्य संघीभूय वैदिकविरोधे प्रवृत्ताः आस्तिकानपि स्ववशे कर्तुमन्विष्टोपायाः वञ्चनार्थमेव विविधानि वर्त्मानि विदधिरे। युगस्य कौटिल्यात् नास्तिक्ये प्रतायमाने वैदिकधर्मानुष्ठानलोपे विजृम्भमाणे मतान्तराणि प्रवेशमधिकं लभन्त इति प्रत्यक्षमेतत्। क्वचित् = एकदेशे। कुत्रचित् = कस्मिंश्चिदागमे ॥११५

तर्हि पौरुषेयत्वाविशेषात् मन्वादिवचनान्यपि नाद्रियेरन्नित्यत्र तत्प्रामाण्यमुपपादयति संवाद इति। मन्वादिभिरुक्तानां धर्माणां श्रुतिसंवादो बहुलः, न तु बाह्यागम इवात्यन्तविरलः। महाजनैरनादिकालात् संगृहीतत्वञ्च श्रुतिभिः समानम्। ताभिः श्रुतिभिरेव मन्वादीनां बहूनामाप्तत्वं सिद्धम्, 'यद्वै किञ्च मनुरवदत्', 'सहोवाच व्यासः पाराशर्यः' इत्यादिश्रवणात्। तन्मूलभावः-श्रुतीनां स्वग्रन्थमूलत्वञ्च तैरेव कथ्यते, वेदोऽखिलो धर्ममूलमित्येवम्। न तु बाह्यैरिव वेदो निन्द्यते। स च मूलभाव उचितः संवाददर्शनात्। यत्र संवादालाभः, तत्र कर्तृसामान्यात् स्मृतिशब्देन व्यवहाराच्च श्रुत्यनुमानं तत्र एवोचितम्। एवं प्रामाणिकत्वबाधादर्शनात् प्रमाणान्तरादर्शनाच्च

**नाक्षं लिङ्गं नरोक्तिर्भ्रम इह घटते विप्रलिप्साऽपि मूलं;**
**नाज्ञाते भावनाऽपि; श्रुतिविषयतया भाति योगे तु धर्मः ॥ ११६ ॥**

इत्थं वेदस्य प्रामाण्यमुपपाद्य स्मृतीतिहासादेर्वेदमूलत्वेन प्रामाण्यमुपपादयति **संवाद** इति । अयमर्थः—**मानवादेः** मन्वादिग्रन्थस्य **श्रुतिभिस्संवादे अविरले**=सार्वत्रिके, **संग्रहे** परिग्रहे **तत्समाने** श्रुतिभिस्समाने, सर्वेषां मन्वादीनां **ताभिः**—"यद्वै किंच मनुरवदत्" इत्यादिभिः श्रुतिभिरेव **आप्तत्वसिद्धौ**, **स्वकथितः** स्मृतिभिरेव कथितः **तस्य मानवादेः तन्मूलभावः उचितः प्राप्तः** । स्मर्तार एव वेदमूलत्वं स्मृतीनामाहुरित्यर्थः । श्रुतेरेव स्मृतिमूलत्वमुक्त्वा तदन्येषां तन्मूलत्वं निषेधति **नेति** । न तावदिन्द्रियं स्मृत्यादिमूलं संभवति; तस्यालौकिकार्थत्वात् तद्विषये लौकिकस्य प्रत्यक्षस्याप्रवृत्तेः । न चानुमानं तत्र प्रवर्तते; अन्वयव्यतिरेकस्य प्रत्यक्षमूलत्वेन प्रत्यक्षस्य निवृत्तावनुमानस्यापि निवृत्तेः । न च लौकिकं वाक्यं तन्मूलम्; तस्य प्रत्यक्षानुमानमूलत्वेन तन्निवृत्त्या-वसंभवात् । न च भ्रम एव मूलम्; महाजनपरिग्रहासंभवात् । तत एव न विप्रलिप्साऽपि मूलम् ॥ तर्हि भावनैव मूलमिति चेत्—तदपि नेत्याह **नाज्ञात** इति । तथाच चक्रकमित्यर्थः, ज्ञाते भावना, भावनया च स्मृतिः, स्मृत्या ज्ञानमिति । श्रुत्या ज्ञाने पुनरस्मत्पक्षः । प्रत्यक्षादिभिः स्मृतिविषयज्ञानमत्रैव प्रतिक्षिप्तम् ॥ कथं तर्हि महर्षीणां प्रत्यक्षेण धर्मदर्शनम्? इत्थम्—श्रुत्या धर्मं प्रतिपद्य स्वयमनुष्ठातारो धर्मप्रभावात् प्रभावविशेषमासाद्य पश्चात्, 'चोदनालक्षणोऽर्थो धर्मः' इति **श्रुतिविषयत्वेन** धर्मान् साक्षात्कुर्वन्ति । नैतावता स्मृतीनां श्रुतिमूलत्वभङ्गः; तैरपि योगिभिर्योगदशायां श्रुतिप्रमाणगम्यत्वेनैव धर्माणामुपलम्भात् । अतो वेदमूलत्वं स्मृत्यादेरुपपन्नमिति ॥ **इति स्मृतीतिहासादेर्वेदमूलत्वम् ॥ ११६**

(342) **या मूलं त्वष्टकादेरियमपि मनुजैः क्वाप्यधीता श्रुतिस्त्वात्;**
**सा चेन्नित्यानुमेया, प्रसजति न कथं तादृशाप्यक्षक्लृप्तिः ।**

---

व्री- तत्स्वीकारः । न हि तत्तद्वचनविषये अक्षम्=प्रत्यक्षं मूलम्, न च लिङ्गम्=अनुमानं मूलम् न च पौरुषेयवाक्यान्तरम् । एवमबाधादेव न भ्रमोऽपि मूलम् । यत्र वेदविरोधो लक्ष्यते, तत्र कामं भ्रमो मूलं भवतु; न तत्राभिनिवेशः । अत एवाबाधात् विप्रलिप्सा=वञ्चनेच्छा न मूलं भवति । ननु योगरूपभावनाधीनं तद्वचनं स्यात्, न तु श्रुतिरिति चेत्—भावना हि स्मृतिसंततिरेव । अनुभूतस्य हि स्मृतिर्भवति । अनुभवस्य मूलमेव संप्रति विचार्यते । ननु योगशास्त्रोक्तविधया योगमनुष्ठाय योगजधर्मेण स्वयं साक्षात्कृत्य श्रुत्यनुक्तानपि धर्मान् उपदिदिशुस्ते इत्यस्तु ॥ नैवम् ॥ तेषां योगेऽपि धर्मः श्रुतिविषयतया तु भाति, न तु स्वातन्त्र्येण; वेदोऽखिलो धर्ममूलम्, वेदशास्त्राविरोधिना यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः, इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् इत्यादिभिः श्रुति-तदर्थापत्तितद्व्याख्यानविज्ञानसाहित्यस्य सर्वैरवगमात् । अतो बाह्यागमवैषम्यात् वेदाङ्गत्वात् मन्वादिस्मृतीनामादरणमिति ॥ ११६ ॥

ननु केषांचित् स्मार्तधर्माणामनधीयमानश्रुतिमूलत्वं यदुच्यते, तत् किं सर्वैरेवानधीत-प्रत्यक्षश्रुतिमूलकत्वम्, किं वा यत्र क्वचित् यदाकदाचिदधीतश्रुतिमूलकत्वमिति शंकायां प्राभाकर-परिगृहीतं प्रथमपक्षं परास्यति येति । अष्टकाख्यश्राद्धविषये प्रत्यक्षश्रुतिर्नास्तीति कृत्वा तदुदाहरणम् ।

सर्वस्मिन् पूर्वपूर्वस्मृतिरपि निगमोपज्ञमित्याचरिष्णौ
निल्यादृश्ये च मूले नियतमिह भवेदन्धसन्तानतीतिः ॥ ११७ ॥

इत्थं वेदमूलत्वं स्मृतीनामुपपाद्य अष्टकाद्याचारादेः प्राभाकरोक्तं नित्यानुमेयवेदमूलत्वं प्रतिक्षिपति **या मूलमिति**। इदमत्रानुमानम्— अष्टकाद्याचारमूलभूता श्रुतिरन्यत्र कचिदधीता, श्रुतित्वात्, प्रत्यक्षश्रुतिवदिति ॥ नित्यानुमेया सा श्रुतिरिति चेन्न, श्रुतित्वे नित्यानुमेयत्वव्याघातात्। ताल्वादिव्यापारैः कचिदुच्चार्यमाणो वर्णसंघातविशेष एव हि श्रुतिः। तस्य कथं नित्यानुमेयत्वम्, उच्चारणदशायां वक्तृश्रोतोरुपलम्भात्। यदि च नित्यानुमेया श्रुतिर्मूलभूता स्मृतीनाम्, तर्हि तादृशं नित्यानुमेयप्रत्यक्षमपि तन्मूलतया किं न कल्प्यते ॥ प्रमाणाभावादिति चेत्, तुल्यम् ॥ स्मृतिरेव मूलसद्भावे प्रमाणमिति चेत्–सत्यम्। सा हि स्मृतिर्मूलमेवानुमापयति, न पुनर्नित्यानुमेयत्वमपि मूलभूतस्य वेदस्य ॥ मूलान्तराभावादिति चेन्न। विप्रकीर्णैव श्रुतिरस्तु मूलम्, किमनया नित्यानुमेयया श्रुत्या? किंच, 'सर्वेऽपि पूर्वपूर्वस्मृतिमेव प्रमाणीकृत्याऽऽचरन्ति, न कश्चिदपि वेदं दृष्टवान्' इति हि नित्यानुमेयत्वं वेदस्य। तथा(दा?) च सर्वेषामेव(षामपि) परप्रत्ययमात्रशरणत्वात् सकल(सर्व)स्यापि मूलभूतप्रमाणादृष्टेरन्धपारम्पर्यवत् अप्रमाणमूल एव स्मृतिपरिग्रह इति प्रसज्येत। अतो नित्यानुमेयवेदमूलत्वं स्मृतीनामप्रामाण्यकारणमिति ॥

इति अष्टकादेर्नित्यानुमेयश्रुतिमूलत्वभङ्गः ॥ ११७ ॥

(३१३) शाखोच्छेदस्त्विदानीमिह यदि, स मतः; सर्वतश्चेत्, असिद्धिः;
व्याख्यागस्त्यप्रधानैर्भवति च मुनिभिर्भूषिताऽद्यापि भूमिः।

व्या— स्मृतिविहितस्य अधीयमानश्रुतावनुपलभ्यमानस्याष्टकाश्राद्धादेर्मूलतया कल्प्यमाना श्रुतिरपि क्वापि मनुजाधीतैव, श्रुतित्वात्। देवाद्यधीयमानतामादाय सिद्धसाधनवारणाय मनुजेति। ननु केनाप्यनधीतैव सा श्रुतिरस्तु यथाऽस्माभिः, तथा पूर्वपूर्वैरप्यनुमेयैवेति नित्यानुमेयत्वमेवेति चेत्– प्रमाणं विना स्मृत्यनुदयात् प्रमाणमेव ह्यनुमेयम्। तत् अष्टकादिकर्तव्यत्वविषयकप्रत्यक्षमेवास्तु। श्रुत्यपेक्षया प्रत्यक्षस्य प्राबल्यात् तदेव ग्राह्यतरम्। कदा किमिष्टं प्रत्यक्षमिति चेत्—श्रुतिः कदा केनोच्चारिता। न केनचिदुच्चारिता, किं तु नित्यानुमेयेति चेत्—तथैव प्रत्यक्षमप्यस्तु। किञ्च श्रुतिर्नित्यानुमेयेति वदतः प्राभाकरस्य कः आशयः। यथेदानीं तथा पूर्वं सर्वेऽपि पूर्वपूर्वस्मृतिदर्शनेनानुतिष्ठन्निति सर्वस्मिन्नप्याचरितरि पूर्वपूर्वस्मृतिरेव मूलमिति वेदस्यानुमेयत्वात् नित्यानुमेयत्वमिति चेत्—तर्हि मूलप्रमाणदर्शनस्यैवाभावादन्धपरम्परैव स्यात्। वृत्तौ मूलभूतस्य वेदस्येति पदद्वयं पूर्वान्वयि। मूलान्तराभावादिति। अनधीयमानतया प्रत्यक्षवेदाभावात्, वेदातिरिक्तप्रमाणस्य च लौकिकविषये अभावात् नित्यानुमेयवेद एवेति भावः। विप्रकीर्णैव—यत्रकचिदधीयमानैव मूलं भवितुमर्हतीति भावः। उक्तञ्च श्रीभाष्ये तदुपर्यपीत्यत्र—'संकीर्णब्राह्मणमन्त्रार्थवादमूलेषु धर्मशास्त्रेतिहासपुराणेषु' इति। आपस्तम्बेन, 'तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते' इत्युक्त्या पठितोत्सन्नशाखामूलकत्वं ज्ञायते। तद्विवेच उपरिष्टात्। अतो न नित्यानुमेयत्वमिति ॥ ११७ ॥

नित्यानुमेयवेदमूलकत्वं निरस्तम्। उच्छिन्नशाखामूलकत्वमपि विकल्प्य अंशतो निरस्यति। इदानीमत्र शाखोच्छेदेऽपि अन्यत्रैव शाखा स्यात्, इहापि पुनः स्यात्, अन्यत्रापि अन्यदोच्छेदः स्यादिति यदुच्यते, सः = तादृशः शाखोच्छेदः मतः = सम्मतः ॥ 'स्थितपूर्वा काश्चन शाखा उच्छिन्ना

उच्छिन्ना सा यथैवाऽऽचरितुरविदिता तत्तदाचारमूलं
तद्वत् सा विप्रकीर्णा क्रमसमधिगमः कालवत् देशतोऽपि ॥ ११८ ॥

मा भूव्नित्यानुमेयवेदमूलत्वम् , उच्छिन्नशाखामूलत्व स्मृतीनामिति तार्किकाः । तान् प्रत्याह शाखोच्छेद इति । अयमर्थ - किं शाखोच्छेदं प्रत्यक्षेण साधयति ? तत्र प्रत्यक्षमभावादेव निरस्तम् ॥ काव्याद्युच्छेददर्शनात् वेदोच्छेदमपि वदाम इति चेत्—तन्न , न ह्यन्योच्छेद एवान्योच्छेदः। अस्तु वा अन्योच्छेदादन्योच्छेद , अथापि केनापि हेतुना वेदोच्छेदमनुमिमीषे । स पुनरुच्छेद. किमिदानीं एतस्मिन्नेव देशे उत देशान्तरेऽपि ? पूर्वत्र सिद्धसाधनम् , एतद्देशे तत्प्रवृत्त्यभावात् । उत्तरत्र कालात्ययापदेश , व्यासागस्त्यादेरद्यापि तत्रतत्र विद्यमानत्वात् । असिद्धिः—बाध इत्यर्थ ॥ तर्हि विप्रकीर्णा श्रुति कथमत्रत्याचारमूलमिति चेत् , कथं वोच्छिन्नश्रुति अत्रत्याधुनिकाचारमूलमिति भवानेव पश्यतु ॥ आचरितुरविदिताऽपि तत्पूर्वविदितत्वात् तदाचारमूलमितिचेत् , तुल्यमत्रत्यैरविदिताऽपि देशान्तरस्थै विदिता श्रुति तदुपदेशपारम्पर्यादत्रत्याचारमूलमिति । तदिदमाह क्रमेति । यथा कालक्रमागत प्रवक्तृपारम्पर्यादधिगम , एव देशक्रमागतप्रवक्तृपारम्पर्यादस्माकमप्यधिगम इति ॥

इति शिष्टाचारादेरत्यन्तोच्छिन्नशाखामूलत्वभङ्गः ॥ ११८ ॥

(344) दृष्टे वेदैर्विरोधे स्मृतिपरिहरण सूत्रभाष्यादिसिद्धः
तद्वन्नीतिः पुराणप्रभृतिषु भविनां सम्भवाद्विभ्रमादेः ।
स्यादन्योन्य विरोधे त्विह बलनियतिस्सात्त्विकत्वादिभेदात् ;
मात्स्यादौ दर्शित तत् श्रुतिहतिरहितैस्तत्परैरेव वाक्यैः ॥ ११९ ॥

स्मृतेर्वेदमूलत्वेन श्रुतिविरोधे सत्यप्रामाण्यमुक्तम् । तत्पुराणादीनामपि समानमित्याह दृष्ट इति । तत्र हेतुमाह भविनामिति । पुरुषाणा भ्रमविप्रलम्भादिसम्भवो हि वेदात् स्मृतीना दौर्बल्ये हेतु । स च हेतु पुराणादिष्वपि समान इत्यर्थ । अस्तु श्रुत्या विरोधे पुराणादीना दौर्बल्यम् , अन्योन्यविरोधे

श्री- उच्छिन्ना एव । न कुत्रापि तासामित पर स्थिति ' इति चेत्—नवनवश्रुत्युत्पत्तिवादी नून तार्किकोऽसि । तस्योच्छेदस्यासिद्धि = बाध , व्यासादिभिरन्यत्रानुसंधीयमानत्वात् । अतो विप्रकीर्णा= देशान्तरस्था मूलम् । कथ देशान्तरस्थाया मूलत्वमिति चेत्—अत्यन्तोच्छिन्नाया कथम् । इदानीन्तनेनाऽऽचरित्रा तदनधिगमेऽपि तत्पूर्वपुरुषविदितत्वादिति चेत्—विप्रकीर्णशाखार्थज्ञानिगतागतमूलमिदानीन्तनेतद्देशीयानुष्ठान घटते । 'धन्वन्निव प्रपा असि' इत्यादौ प्रत्यक्षश्रुत्या साक्षादविहिता अपि धर्मा. सूच्यन्त इत्यप्युक्तमादरणीयम् ॥ ११८ ॥

एव स्मृतीनामनुपलभ्यमानमूलश्रुतीनामपि प्रामाण्यमुक्तम्। एव निर्वाहो यत्र न भवति, स्पष्टविरोधात्, तत्र धर्मशास्त्राणामप्रामाण्य धर्ममीमासायामुक्तमेव । तद्वत् नयन—तदुपरस्मृतिभूतानाम् इतिहासपुराणवचनानामप्रामाण्यकथनं तन्न्यायातिदेशात् सिध्यत्येव ॥ व्याख्यासापेक्षाल्पज्ञपुरुषकृतश्रुत्यर्थनिर्धारणानुरोधेन कथमृषिकृतस्मृतिबाध इति चेत्—अत्राप्युत्तरम्, "स्मृत्यनवकाशदोष प्रसंग." इत्यादावेव शारीरके उक्तमेव । तदेतत् पूर्वार्धेनाऽऽह दृष्टे इति । सूत्रभाष्यादीति जैमिनिसूत्रशावरभाष्यकुमारिलवार्तिकादिग्रहणम् । तुल्यन्यायता दर्शयति भविना विभ्रमादे संभवादिति।

कथमित्यत्राह **स्यादिति** । सात्त्विकत्वादिभेदस्य बलाबलहेतुत्वे प्रमाणमाह **मात्स्याद्याविति** । उक्तं हि **मात्स्ये**, '*अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते । राजसेषु च (तु) माहात्म्यमधिकं ब्रह्मणो विदुः॥ संकीर्णेषु सरस्वत्याः पितॄणां च निगद्यते । सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः ॥ तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम् ॥*'' इति । श्रुतिविरोधरहितैः तात्पर्यवद्भिः वाक्यैः प्रतिपन्नत्वादय-मर्थः सर्वैरपि वादिभिरनतिलङ्घनीय इत्यर्थः । *अतः श्रुत्यविरोधिनां सात्त्विकानामेव पुराणानामुपादेयत्वम्* ; न पुनः श्रुतिविरोधिनां राजसानां तामसानां च पुराणानामुपादेयत्वम् । तेषां संसारवर्धनाय भगवत्प्रवर्तितैः पितामहादिभिः प्रवर्तितत्वात् न सात्त्विकपरिग्राह्यत्वमिति भावः ॥

इति पुराणादिबलाबलविभागः ॥ ११९ ॥

(३४५) भागे वेदाविरुद्धे पशुपतिकपिलाद्यागमाः स्युः प्रमाणं ;
मोहाद्यर्थं तु शेषं मुनिभिरभिहितं यत्र मज्जन्ति डिम्भाः ।
भूयस्यर्थे प्रधाने विहतिमति सतां संशयश्च क्वचित् स्यात्
श्रुत्या बाधं न रुन्धे श्रुतिसहपठितिर्हेत्ववहन्तव्यता च ॥ १२० ॥

तर्हि पुराणादिवत् वेदाविरुद्धांशे **पशुपतिकपिला**द्युक्तीनां प्रामाण्यमस्तु ; कथं तर्कपादे तेषां प्रतिक्षेप इत्याशङ्कते **भाग** इति । वेदविरुद्धांशस्योपयोगं पूर्वपक्ष्यभिप्रायेणाह **मोहाद्यर्थमिति** । असुरमोह-नार्थं तत्र वेदविरुद्धांशाभिधानम् । *अतः पुराणादिवत्* **कापिला**दिकमपि *परिग्राह्यमिति* । **यत्र मज्जन्ति डिम्भाः**—येष्वभिधानेषु बालिशा मुह्यन्तीत्यर्थः । परिहरति **भूयसीति** । न हि पुराणादिषु प्रधानार्थविरोधो भूयान् । श्रुत्युक्तमेवानुसरन्ति सत्त्वोत्तराणि पुराणादीनि । तामसानि पुनरप्रमाणान्येव ।

७१- ननु कापिलादिस्मृतिः काममुपेक्ष्यताम् । व्यासस्मृतिरूपेषु पुराणेषु सात्त्विकराजसादिभेदभिन्नेषु कतमोपस्कृतत्वेन श्रुत्यन्तस्यार्थनिश्चायकत्वम् । विनिगमकाभावे च तत्त्वानिर्धारणमेवेत्यत्राह स्याद-न्योन्यमिति । यत्र मिथो विरोधदर्शनात् विनिगमनाय बलाबलनिश्चयापेक्षा, तत्र सात्त्विकादरणेन तदन्योपेक्षणमिति सामान्यतो ज्ञातमेव । किं सात्त्विकम्, किमन्यदिति विभागस्तु मात्स्यपाद्मादि-पुराणावगम्यम् । पुराणशोधनाभावेऽपि श्रुत्यन्तानां तदर्थपरत्व एव स्वारस्यमिति च शारीरक-प्रथमाध्याये प्रायेण प्रादर्शि ॥ ११९ ॥

उक्तं पुराणविषये यद् वक्तव्यम् । अथाऽऽगमविषय आवेद्यते भागे ,इति । तत्र कापि-लाद्यागमाप्रामाण्यमभिप्रेतमसहमानः प्रत्यवतिष्ठते पूर्वार्धेन । उत्तरेणोत्तरम् । शारीरकद्वितीय-द्वितीये तर्कपादे कापिलपाशुपताद्यागमानामप्रामाण्यमेव प्रत्यपादि । इदमयुक्तम् । अविरुद्धांशे तेऽपि हि प्रमाणं स्युः । "सांख्यं योगः" इत्यारभ्य "न हन्तव्यानि हेतुभिः" इति वचनेन तदादर्त-व्यतायामुच्यमानायां तद्विरुद्धशारीरकमीमांसारूपतर्कस्यैव हेयत्वात् । तावता न सर्वांशप्रामाण्यं शंक्यते, अज्ञानिनां डिम्भानां = बालानां बालिशानामासुरादीनां मज्जनमुद्दिश्य तेषां कृतत्वस्यापि पाद्मभारतादिवचनसिद्धतया तद्विरोधेन न्यायावतारणायोगादिति । अत्र प्रतिब्रूते भूयसीति । विष्णुपारम्यादिप्रधानार्थेषु बहुषु विरोधस्थितेर्भवताऽपि स्वीकृतत्वात् इतरभागेऽपि श्रोतुः संशय

कापिलपाशुपतादिषु श्रुतिविरोधभूयस्त्वात् सत्त्वोत्तरस्मृतिपुराणादितुल्यत्वं नाङ्गीकुर्महे ; विरुद्धस्मृतिपुराणादितुल्यत्वे का नो हानिरिति, वेदविरुद्धांशस्य भूयस्त्वात् क्वचित् सत्त्वोत्तरांशसद्भावेऽपि न सार्वत्रिकविश्वासास्पदत्वमित्यर्थः (इति भावः)। **संशयश्च क्वचित्स्यात्**। वेदार्थविरोधे सति संशय एव स्यादित्यर्थः ॥ कथं तर्हि, 'सांख्यं योगः पञ्चरात्रम्' इति वेदैस्सह कथनम् ? कथं वा हेतुबाध्यत्वम् 'पञ्चाना नास्ति' इति? अत आह— श्रुत्येति। श्रुतिविरोधे पुनर्बाध्यत्वमेव ; न हि साधर्म्यमात्रेण वैधर्म्यं निवार्यत इति भावः ॥

**इति पाशुपतादेर्वेदविरुद्धत्वामिश्रत्वम् ॥ १२० ॥**

**(316) निर्दोषाम्नायमौलिश्रुतनिखिलजगन्मूलसर्वज्ञमूले**
**हेतुर्व्यूढे चतुर्धा क्वचिदपि न भवेत् विभ्रमः पञ्चरात्रे ।**
**पृक्ता भक्तानुकम्पागरिमसमुदिते विप्रलिप्साऽपि नास्मिन्**
**वेदाच्छ्रैष्ठ्योक्तिरर्थस्थितिविशदतया भूमविद्यादिवच्च ॥ १२१ ॥**

अस्तु तर्हि **श्रीपाञ्चरात्रस्यापि पाशुपतादितुल्यत्वमित्याशङ्कमानं प्रतिक्षिपति निर्दोषेति**। तत्र कर्तृवैषम्यं प्रामाण्ये हेतुमाह **निर्दोषेति**। अयमर्थः—सांख्यं योगः पञ्चरात्रमिति सहपठितिनिमित्तसाम्यभ्रमं मन्दानां निवारयितुं भगवता **बादरायणेनैव**, "सांख्यस्य वक्ता कपिलः" इत्यादिना सांख्यादीनां संभावितभ्रमकपिलादिकर्तृकत्वेनाप्रामाण्यमभिधाय, "पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्" इति भगवदभिहितत्वेन प्रामाण्यमेव प्रतिष्ठापितमिति । अथापि तन्त्रमन्त्रादिसिद्धान्तभेदेन वा

---

वीः-एव संभवतीति किमेतैः कापिलादिभिरित्युपेक्षितं शारीरके। सांख्यं योग इति श्लोके वेदसहपाठमात्रेण वेदतुल्यता तु कस्यापि न सुवचा। अतः श्रुत्या कापिलादिबाधस्य श्रुतिसहपाठो न वारकः, "न हन्तव्यानि हेतुभिः" इति वाक्यं हेतुजालैर्हननं निषेधति, न तु श्रुत्या बाधम्। तावता केवलतर्कापेक्षयैव कापिलादिप्राबल्यं स्यात्। किञ्च तत्र, "आत्मप्रमाणानि" इत्यनेन तात्पर्यगत्या तत्तदागमप्रतिपाद्यसारभूतं यत्, तदेव तत्तदात्मभूतमिति, तदंश एव तत्तत्प्रामाण्यं ज्ञापितम्। यथा पाशुपतस्य पशुपतिस्वरूपे, कापिलस्य प्रकृतिस्वरूपे, पातञ्जलस्य योगस्वरूपे इत्येवम् ॥ १२० ॥

पौरुषेयागमत्वाविशेषात् पाञ्चरात्रस्यापि क्वचिदंशे प्रामाण्याभावप्राप्तौ आगमान्तरवैषम्यं दर्शयति निर्दोषेति। आम्नायस्य कार्त्स्न्येन प्रामाण्यं कस्मात्? निर्दोषत्वात्। तन्मौलौ वेदान्ते निखिलजगन्मूलत्वेन सर्वज्ञत्वेन च श्रुतो नारायणः। तन्मूलके तत्कर्तृके पञ्चरात्रे चतुर्धा व्यूढे= विभक्ते आम्नायस्येव निर्दोषत्वस्यैव सत्त्वात् क्वचिदपि=किञ्चिदंशेऽपि विभ्रमः भ्रान्तिः हेतुः= कारणं न भवेत्। कर्तृभ्रमाधीनं वाक्यमेकमपि न भवेत्; कर्तुः सर्वज्ञत्वात्। तर्हि वञ्चनेच्छा हेतुरस्तु ; तत्राऽऽह पृक्तेति। भक्तपौष्करादिविषये अनुकम्पायाः दयायाः गरिम्णा=आधिक्येन समुदिते=समुत्पन्ने अस्मिन्=पञ्चरात्रे विप्रलिप्साऽपि न भवेत्। नन्वस्ति बाधितार्थप्रतिपादनम्; अतो विप्रलिप्सादिकमेष्टव्यम्, वेदात् पाञ्चरात्रस्य श्रैष्ठ्यस्य अत्यन्तोत्कर्षस्य वचनादित्यत्राह वेदादिति। न वेदोक्तार्थबाधाभिप्रायेण तत् श्रैष्ठ्यवचनम् ; किन्तु वेदप्रतिपिपादयिषितस्यैवार्थस्य वेदापेक्षया सुखेनावबोधकत्वात्। वेदार्थोपबृंहणस्य भारतादेर्विशदप्रतिपादकतया श्रैष्ठ्यवचनात् न हि वेदो बाधित उपेक्षितो वा भवति। अथवा मा भूत् श्रुतिपाञ्चरात्रयोर्व्याख्येयव्याख्यानभावमूलकाङ्क्षाभावः, अथापि पाञ्चरात्रोक्तसमाराधनपद्धतेः प्रस्थानान्तरत्वेऽपि तत्र शुद्धयाजिनः

ज्ञानादिकाण्डभेदेन वा वासुदेवादिचातुरात्म्यप्रतिपादनभेदेन वा विभक्ते तस्मिन् शास्त्रे सार्वत्रिकाप्रामाण्याभावेऽपि काचित्कम(का)प्रामाण्यं स्यादित्याशङ्कयाह हेतुर्व्यूढ इति। अत्र कुत्रापि वेदविरोधाभावात् कर्तृसामान्याच्चाप्रामाण्यशङ्का न जायत इत्यर्थः ॥ मा भूत् विभ्रमः ; विप्रलिप्सा भगवतः स्यात्। दृष्टा हि भगवतोऽपि विप्रलिप्सा, 'त्वं हि रुद्र महाबाहो मोहशास्त्राणि कारय' इत्यादौ, 'क्षिपाम्यजस्रमशुभान्' इत्यादौ च ; अत्राह युक्तेति। द्विविधा खलु भगवतः प्रवृत्तिः, असुरमोहनार्थम् आश्रितसंरक्षणार्थं च। पञ्चरात्रे सत्त्वोत्तरजनसंरक्षणार्थमेव प्रवृत्तिः। अत एव सत्त्वोत्तराः शाण्डिल्यादय एव तच्छास्त्रप्रवक्तारः। अतो नास्मिन् शास्त्रे विप्रलिप्साऽपि कारणम्। तर्हि, "साङ्गेषु वेदेषु निष्ठामलभमानः शाण्डिल्यः पञ्चरात्रतन्त्रमधीतवान्" इति वेदाच्छैथिल्यवचनं पञ्चरात्रस्य वेदविरोधख्यापकं न(?) कथमित्यत्राह वेदादिति। द्विधा ह्यत्र गतिः—इतिहासपुराणवत् अर्थवैशद्यादित्येका; शाण्डिल्यस्य पञ्चरात्रशास्त्राभ्यासपर्यन्तं वेदवाक्यार्थप्रतिपत्तिर्विशदा नाभूदित्यपरा। तदेव दृष्टान्तेनाह भूमविद्येति। यथा भूमविद्योपक्रमे भूमविद्याप्रशंसार्थम्, 'ऋग्वेदं भगवोऽध्येमि' इत्यादिना कृत्स्नस्यापि वेदस्य अनादरेण ज्ञानहेतुत्वाभावमुक्त्वा भूमविद्याया एव ज्ञानहेतुत्वं स्वीक्रियते (अभिधीयते)। नैतावता भूमव्यतिरिक्तविद्यानिन्दा ; अपितु भूमविद्याप्रशंसैव—तद्वदत्रापीति ॥ इति दोषाभावात् पूर्णपाञ्चरात्रप्रामाण्यम् ॥ १२१ ॥

(347) जीवोत्पत्त्यादिवादो निगमवदिह, तन्नित्यतोक्तेश्च साम्यात्
जीवाद्याख्यानिरूढिस्त्वभिमतिभिदया स्याच्च संकर्षणादौ।

---

श्री–शाण्डिल्यादेः प्रवृत्तिं स्तोतुं नहिनिन्दान्यायेन भूमविद्यायामिव विद्यान्तरनिन्देति। यदुच्यते—नारदोऽनवगतपरमात्मस्वरूपोऽधीतानां सर्वासां वेदादिविद्यानामर्थं पूर्वं यथावन्न बुबुधे। यदा च भूमविद्यां प्राप, तदा परमात्मनः सर्वकारणत्वानवधिकसुखत्वादिसर्वांशविज्ञानलाभात्, सर्वासामपि तत्र यथावत्समन्वयमप्यप्रदीदिति—तर्हि तथा शाण्डिल्यादयोऽपि परव्यूहविभवहार्दार्चारूपपाञ्चविध्यतत्समाराधनचर्यावैशद्यं पञ्चरात्रतोऽवगम्य, 'ब्रह्मविदाप्नोति परम्', 'यो वेद निहितं गुहायाम्', 'अजायमानो बहुधा विजायते', 'तं यथायथोपासते तदेव भवति', 'अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव' इत्यादिवाक्यानां यथावदर्थमधिजग्मुरिति इतो वैशद्यसिद्धिरप्यस्तु। तथा च पाञ्चरात्रस्य श्रुतिशेषत्वं श्रुत्यर्थवैशद्यकरत्वेऽपि स्वतन्त्रत्वमिति पक्षद्वयम्। युक्तश्च त्रयीविद्विषये शेषत्वम्, चतुर्विध तत्तत्सिद्धान्तनिष्ठविषये स्वतन्त्रत्वञ्च ॥ कर्तृसामान्यात् परमात्मरूपकर्तैक्यात्। न कथमित्यत्र नेति पदं न स्यात्। अथवा नेत्यत्र वाक्यसमाप्तिः। कथमित्यत्राहेति वाक्यान्तरम्। तदेव = द्वितीयमेव। भूमविद्याप्रशंसैवेति। नारदस्य सर्वविद्योपेक्षयाऽत्रैव प्रवृत्तेरिति भावः॥१२१

ननु श्रुतिविरुद्धार्थप्रतिपादकत्वे स्पष्टं प्रतीयमाने कथं कार्त्स्न्येन प्रामाण्यमित्याशंक्य, तत् किं तत्त्वविषये क्रियाविषये वा। आद्यमसिद्धम्; द्वितीये विकल्पः, निर्दोषत्वाविशेषात् इत्यभिप्रेत्याह जीवेति। 'जीवो जायते', 'जीवात्मनो जायते' इत्यादिवचनं जीवजन्मप्रतिपादकनिगमवाक्यवत् अर्थान्तरपरम्। अर्थान्तरं तु प्रकरणानुगुणं किमपि भविष्यति॥ श्रुतौ जीवनित्यत्वश्रवणात् तत्रार्थान्तरवर्णनमिति चेत्, पाञ्चरात्रेऽपि तन्नित्यत्वं पठ्यत एवेति तद्विषये साम्यमेव। तत्रायं विशेषः–श्रुतौ जीवजन्मवचनं जीवस्य देहसंयोगाभिप्रायम्, इह प्रकृतवाक्ये संकर्षणव्यूहस्याप्राकृतदेहसंबन्धरूपजन्मोक्तिः। अतो जीवशब्दस्य तद्विशेषणत्वात् जीवाभिमानीत्यर्थः। एवं मनआद्याख्यायामपि द्रष्टव्यम्। अभिमतिभिदा = अभिमानित्वविशेषः। यस्तु क्रियाविरोधः, तत्रोच्यते। द्वितम-

**मन्वादेश्चोपजीव्य हिततममिदमित्यादिकं भारतोक्तं ;**

**तत् क्वाप्यैक्य विकल्पः क्वचित् अभिमतवत् तादृशाम्नायभेदात् ॥ १२२ ॥**

तर्हि,(ननु¹) 'वासुदेवात् सङ्कर्षणो नाम जीवो जायते' इत्यादिना पञ्चरात्रे जीवोत्पत्त्यादिकं वेद-विरुद्धमभिधीयत इत्याशङ्क्य परिहरति जीवेति। **निगमवत्** । यथा निगम एव, "इमानि भूतानि जायन्ते" इत्यादिना जीवोत्पत्त्यादिकमभिधीयते, तद्वत्॥ 'नित्यो नित्यानाम्' इत्यादिना जीवनित्यत्वादिकमपि निगमे निगद्यत इति चेत्, तुल्यम् । अत्रापि, 'अचेतना परार्था च नित्या सततविक्रिया' इत्यादिना प्रकृतेरपि नित्यत्वमभिधीयते , किंपुनर्जीवस्य नित्यत्वम् । अनित्यत्व च प्रकारभेदेन घटत इत्यर्थ । द्रव्यस्वरूपनित्यत्वान्नित्यत्वमचेतनस्य , स्वरूपे नामान्तरभजनार्हावस्थान्तरयोगादनित्यत्वम् , जीवस्यापि स्वरूपनित्यत्वेऽपि नानादेहपरिग्रहात् , ज्ञानसङ्कोचविकासयोगमात्राच्चानित्यत्वमिति । किंच, 'वासुदेवात् सङ्कर्षणो नाम जीवो जायते' इत्यादिवचन जीवाद्यभिमानिसङ्कर्षणाद्याविर्भावपरम् , अतो न विरोध इत्याह **जीवाद्याख्येति** । **मन्वादेरिति** । 'इद श्रेय' इत्यादिना ऋग्यजुस्सामभिर्जुष्टमिद पञ्चरात्र मन्वादेरप्युपजीव्यमित्युक्त **महाभारते** । "सात्त्वत विधिमास्थाय गीतस्सङ्कर्षणेन य" इत्यादिना च ब्राह्मणादीना सर्वेषामुपजीव्यत्वं च तत्रतत्रोक्तम् । **तत्** क्वाप्यैक्यम्—अविरुद्धतयैव सप्रतिपन्नस्थले । आपाततो विरुद्धतया प्रतिपन्ने स्थले ग्रहणाग्रहणवद्विकल्प एव , तदिदमाह **अभिमतवदिति** ॥ तत्रोभयत्रापि, 'गृह्णाति न गृह्णाति च' इति वेदवाक्यमस्तीति चेत्— अत्राप्यस्ति , अत्रापि पञ्चरात्रमूलभूताया मूलश्रुतेरधीयमानत्वादिति तुल्यम् ॥ सा मूलश्रुति प्रचुर नाधीयत इति चेत्— अध्येतॄणामेव परिमितत्वे नाय दोष , यथोपनिषदामिति । एतच्चाऽऽगमप्रामाण्ये भाष्यादौ च विस्तरेणानुसन्धेयम् ॥

**इति अबाधात् श्रीपाञ्चरात्रप्रामाण्यम् ॥ १२२ ॥**

(348) **सर्वे सर्वज्ञबुद्धेर्ननु विषयतया नित्यसिद्धाः कृतान्ताः ;**

**तस्मात् तेन प्रवर्त्ये सति समयगणे कस्यचित् को विशेषः ।**

**मैव ; तत्त्वे विकल्पत्यजि विहतिमतामेकशेषत्वमानात्**

**तन्निष्ठा स्यात् कनिष्ठा ; नयति न विदुषोऽनामिकादिः परस्मै ॥ १२३ ॥**

---

श्री—धर्मप्रवर्तकमन्वादिभि क्रियाविषये एतदुपजीवनम् , "अस्मात् प्रवक्ष्यते धर्मान् मनु स्वायम्भुव " इति भारतोक्तम् । अतो धर्मविषयेऽप्युपजीव्यत्वादैक्यमस्ति । अत एवाऽऽदृतत्वात् विरुद्धविषयेऽपि विकल्प एव न बाध्यत्वम् । उक्तमिद शाङ्करभाष्येऽपि उत्पत्त्यसम्भवाधिकरणे । अभिमतवत्= यथा श्रुत्या प्रत्यक्षयैव मिथो विरुद्धेऽर्थे कथ्यमाने विकल्प । ननु तत्र द्वावपि आम्नायौ, नात्रैवमिति चेत् न , अत्राप्याम्नायभेदात् । अङ्गीक्रियते हि पाञ्चरात्रमूलभूतोऽप्येकायनशाखाख्यो निगम ॥

कि पुनरिति । कैमुत्येनेत्यर्थ । गृह्णातीति । अतिरात्रे षोडशिन गृह्णातीति एक वाक्यम्, अन्यत्र, नातिरात्रे षोडशिन गृह्णातीति वाक्यान्तरम् । अत्र भावाभावयोरपि विकल्प ॥ २२ ॥

नन्वीश्वरस्य सर्वज्ञत्वात् पाञ्चरात्रप्रतिपादितसर्वार्थज्ञानमिव तत्तदागमाद्यर्थज्ञानमपि तस्य सर्वदाऽस्त्येव । एवमनादीश्वरज्ञानविषयत्वाविशेषात् तस्यैव प्रधानप्रवर्तकत्वाच्च सर्वेषा नित्यत्वमविचार्यत्वञ्चेति शङ्कते सर्व इति । कृतान्ता = सिद्धान्ता । परिहरति मैवमिति । तत्त्वे = वस्तुनि

अत्र सिद्धान्तान्तरप्रतिबन्दिमाह सर्वे इति । सिद्धान्तान्तरमीश्वरबुद्धेर्नित्यमेव विषयः । तस्मादीश्वरप्रवर्त्ये सर्वस्मिन्नपि सिद्धान्ते सति, कस्यचित् पञ्चरात्रस्य को विशेषः ? अत्रोत्तरम् मैवमिति । परस्परविरुद्धतत्त्वप्रतिपादकेषु ग्रन्थेषु सर्वत्र प्रामाण्यं दुरुपपादम् । अतः क्वचित् प्रामाण्ये पञ्चरात्रस्यैव प्रामाण्यं भगवत्प्रोक्तत्वात्, शाण्डिल्यादिसत्त्वोत्तराधिकारिपरिग्रहात्, वेदविरोधाभावात्, अन्यस्मादपि शतशः प्रतिपादितात् वैषम्यात् सिध्यति । ईश्वरस्य सर्वज्ञत्वेन तद्बुद्धिस्थत्वं वेदानां बुद्धागमादीनामपि समानम् । नैतावता तत्र साम्यम्; तद्वदत्रापीति भावः। अयमर्थः—अप्रमाणत्वेन तन्त्रान्तराणीश्वरबुद्धिस्थानि, प्रमाणत्वेन पञ्चरात्रमिति । अयं च न्यायो वेदबाह्यागमयोरपि समान इति ॥

इति परसिद्धान्तप्रतिबन्दिनिस्तारः ॥ १२३ ॥

(३४९) अर्थे पूर्वानुभूते सहमित-सदृशख्यात्यदृष्टप्रभेदैः
संस्कारानुग्रहे या परिणमति मतिः, सा स्मृतिस्त्रिप्रकारा ।

र्थी-विकल्पायोगात् विहतिमतां-विरुद्धानां मध्ये एकमेव शिष्येत। एवञ्च भ्रमविषयाणां सर्वेषामीश्वरज्ञानविषयत्वं कथम्। तथा सति तस्य भ्रान्तत्वापत्तेः। न हि शुक्तौ रजततया जीवो भ्राम्यतीत्येतावता ईश्वरस्य सर्वज्ञत्वात् शुक्तिरजतभ्रमोऽप्यस्तीति सुवचम्। अतस्तत्र ईश्वरस्य, इदं रजतमिति न ज्ञानम्; किं तु भ्रान्तः इदं रजतं जानातीति ज्ञानमेव। तद्वत् भ्रान्ताः तत्तत्काले एवमेवं कृतान्तान् कल्पयन्तु इति ज्ञानम्, पश्चात् तथा तत्तत्कल्पितत्वज्ञानञ्च; न तु तत्तत्कल्पकवत् तस्यापि भ्रमात्मककल्पनाश्रयत्वम्। अतस्सार्वज्ञ्यमभ्रान्तत्वञ्च। इदमेव, 'अप्रमाणत्वेन तन्त्रान्तराणि' इत्यादिना वृत्तावुच्यते। अतः तत्त्वे विकल्परहिते सति आगमेषु पाञ्चरात्रस्य एकस्यैव शिष्टत्वमिति प्रमाणभूततन्त्रनिष्ठा भवति कनिष्ठांगुलिः सिद्धान्तगणनकाले। अन्येषामप्रमाणत्वेनागणनीयत्वात् अनामिका अनमन्त्येव वर्तते॥

बुद्धेश्चातुर्विध्यम्, "प्रत्यक्षादित्रयञ्च स्मृतिरिति च मतिः श्रुत्यभीष्टा चतुर्धा"(३१) इति प्रागुक्तम्। तासु विधासु तिस्रः परीक्षिताः। अवसरप्राप्तां स्मृतिं परीक्षितुमारभते अर्थे इति। धारावाहिकज्ञानवत् प्रथमज्ञानकारणत एव द्वितीयादिज्ञानस्यापि संभवात् तद्वदेव प्रत्यक्षादियत्किञ्चिदनुभवरूपत्वसंभवे स्मृतिरिति कुतो ज्ञानमन्यदित्यत्र उक्तानुभवकारणातिरिक्तकारणजन्यत्वमुपपाद्यते। अनुभूतपूर्वार्थविषयकं ज्ञानं स्मृतिरित्यस्तु। तावता प्रथमानुभवस्य स्मृतित्वं नेति सिध्येत्; न त्वन्येषामिति न; तेषां कारणान्तरजन्यत्वात्; अस्याश्चानुभवजन्यत्वात्। न च—द्वित्रिक्षणमात्रस्थायित्वादनुभवस्य तज्जन्यत्वे यत्र, तत्र प्रत्यासत्तिबलात् तदनुभवकारणजन्यत्वमेव किं न स्यात्। तथाच निर्विकल्पानन्तरसविकल्पवत् अनुभवत्वमेव सर्वस्यापि स्यादिति शंक्यम्; तत्प्रत्यासत्त्यसंभवस्थले अनुभवसंनिहितकालातिरिक्तकाले जायमानत्वात्। न च तदाऽनुभवस्य नष्टस्य कथं कारणत्वमिति वाच्यम्; कारणान्तराभावात्, अनुभवसमानविषयकतया, कदाचित्, इदमहमन्वभवमिति अनुभवविषयीकरणेन जायमानतया चानुभवकारणकत्वे चिन्तिते, नष्टस्य कारणत्वोपपत्तये संस्कारद्वारकल्पनात्, अनुभवकरणत्वसिद्धेः। ननु संस्कारस्यानुभवसमनन्तरमेव जाततया कथं तदैव न स्मृतिरिति चेत्—स्थितस्यापि संस्कारस्योद्बोधः प्राङ् नासीदिति फलबलात् कल्प्यम्। अत उद्बुद्धसंस्कार एव स्मृतिकारणम्॥ उद्बोध एव कुतः प्राङ्नेति चेत्-ख्यातिः=दर्शनम्। यद्वस्तुस्मरणमिष्टम्, तद्वस्तुना सहपूर्वानुभूतवस्तुदर्शनं वा तत्सदृशवस्तुदर्शनं वा तत्संस्कारोद्बोधकम्। क्वचित् तदभावेऽपि भवेत्। तत्र केवलमदृष्टमेवागत्या कारणं कल्प्यम्। न च प्रतिभादितुल्यस्यादृष्टजन्यस्य स्मृतित्वे किं मानमिति वाच्यम्; पूर्वमनुभूतमिति, स्मरामीति चानुसंधानस्यैव नियामकत्वात्। वस्तु-

**याथार्थ्येऽपि स्वपूर्वानुभवमनुसरेत् ; बाह्यशून्या न चैषा ;**
**हेतुश्चार्थक्रियादेः ; स्मृतिवदनुभवोऽप्यस्ति नष्टादिकेषु ॥ १२४ ॥**

एवं प्रामाण्यप्रक्रियामुपपाद्य स्मृतेरयाथार्थ्यवादिनं प्रतिक्षेप्तुं स्मृत्युत्पत्तिप्रकारान् आह अर्थ इति। पूर्वानुभूतेऽर्थे सहदृष्टदृष्टि-सदृशदृष्टचदृष्टभेदैः संस्कारानुग्रहे संस्कारोद्बोधे या परिणमति मतिः, सा स्मृतिः। सा च स्वकारणत्रै(वै)विध्यात् त्रिप्रकारा। अथवा स्वकारणभूतप्रमितिभ्रान्तिसंशयानुरोधेन स्वयमपि तादृग्रूपा सती त्रिप्रकारा। अत्र कश्चिदाह, 'सर्वाऽपि स्मृतिरयाथार्था' इति। तमुत्तरश्लोके निराकर्तुं स्मृतेः पूर्वानुभवानुसरणमाह **याथार्थ्येऽपीति**। यथा स्मृतिरयाथार्थ्येऽपि पूर्वानुभवमनुसरेत्, तथा याथार्थ्येऽपीति अपिशब्दार्थः। अर्थशून्या स्मृतिः कथं यथार्थेत्याशङ्क्य परिहरति **बाह्यशून्येति**। सर्वस्यापि स्वकाले सत्त्वादित्यर्थः। अर्थक्रियादिहेतुत्वाच्च स्मृतिर्यथार्थेत्याह **हेतुश्चेति**। ननु स्मृतिः नष्टविषया ; नष्टं चासदेव ; कथं याथार्थ्यं स्मृतेरित्याशङ्क्य प्रतिबन्द्या परिहरति **स्मृतिवदिति**। अतीतानागतानुमानागम योगिप्रत्यक्षेषु नष्टविषयत्वेपि याथार्थ्यं भवानेवाङ्गीकरोतीत्यर्थः॥ **इति स्मृतिहेतुविभागादि** ॥ १२४ ॥

**(350) पूर्वं श्यामत्वमात्रात् भवति न हि मितिः पाकरक्तेऽपि तद्धीः;**
**तत्ताभानं तथा चेत्, प्रसजति तदिदं प्रत्यभिज्ञादिकेऽपि।**
**याथार्थ्यं पारतन्त्र्यात् न च गलति, न चेत्, अभ्युपेताविभूतिः ;**
**वेदे मानैस्सहोक्ता स्मृतिरपि ; विफला त्वक्षपादाद्युक्तिः ॥ १२५ ॥**

---

श्री-स्थितौ संस्कारजन्यं ज्ञानं स्मृतिरित्येव लक्षणम्। अदृष्टस्यापि संस्कारोद्बोधद्वारैव कारणत्वमिति। एवं स्मृतिस्थापकं पूर्वार्धम्। या परिणमति मतिरिति। मतिः= धर्मभूतज्ञानं यद्रूपा परिणमतीत्यर्थः। सा त्रिप्रकारा। त्रिविधसंस्कारोद्बोधजन्यत्वात्। ननु स्मृतेः प्रमितित्वम् अज्ञातार्थग्राहकत्वं वा यथार्थत्वमात्रं वा। नाद्यः; अनुभवजन्यत्वोक्त्या अज्ञातार्थग्राहकत्वायोगात्। नान्त्यः ; नष्टेऽप्यर्थे स्मृतिदर्शनात् यथावत्तदर्थविषयकत्वायोगादित्यत्र अन्त्यपक्षमंगीकृत्य प्रत्याह याथार्थ्येऽपीति। अर्थाभावे जायमानायाः कथमर्थाव्यभिचारित्वमिति न शंक्यम्, यत्कालस्थतया तद्ग्रहणम्, तत्काले तदभावाभावेन याथार्थ्यस्याक्षतेः। नष्टविषयकस्मृतेः कार्यकरत्वं न भवति विषयाभावादिति शंकां परिहरति हेतुश्चेति। कार्यं प्रति ज्ञानमेव कारणम्, न नष्टवस्तु। अत एवातीतविषयकानुमिति-योगिप्रत्यक्षादीनामर्थक्रियाकरत्वम्। अर्थक्रिया नाम फलनिष्पत्तिः। कार्यमिति यावत्। आदिपदेन संस्कारादिग्रहणम्॥ श्लोके सहमितशब्दसदृशशब्दयोर्द्वन्द्वः। व्यातावन्वयः। अतो वृत्तावपि सहदृष्ट-सदृशयोः दृष्टिरित्यर्थस्य ग्राह्यत्वात् सहदृष्टीति पाठो मा भूत्। सहदृष्टदृष्टीति पाठे स्पष्टता ॥ १२४ ॥

स्मृतेरयाथार्थ्यशंकां परिहरति पूर्वमिति। यो मृद्घटः पूर्वं श्यामः स एव पाके कृते रक्तो भवति। रक्ततादशायाम्, अयं श्याम इति धीः मितिः =प्रमितिः—यथार्था न हि भवति। तद्वत् स्मृतौ स घट इति तत्ता भासमाना न स्मृतिकालेऽस्तीति अयथार्थैवेति चेत्–तदिदं स्मृतौ तत्ताभानस्य यथात्वम्, तथात्वं प्रमाणत्वेन संप्रतिपन्ने सोऽयं घट इत्यादिप्रत्यभिज्ञानेऽपि स्यात्। न हि तत्र कश्चिद्याथार्थ्यं स्वीकरोति। कथञ्च तत्ताभानस्यायथार्थत्वम् ; तद्देशे तत्काले च स्थितत्वस्याबाधात्। वर्तमानकालावच्छेदेन तत्कालादिसंबन्धग्रहणे हि भ्रमत्वप्रसक्तिः। तथा ग्रहणं तु नास्ति। नन्वथापि स्मृतेर्न स्वतो याथार्थ्यम्; अनुभवस्य पूर्वस्य यथार्थत्वे याथार्थ्यम्, तस्य भ्रमत्वे भ्रमत्वमिति पूर्वानुभवानुविधानात् तद्गतयाथार्थ्यादेरत्राऽऽरोप एवेति॥ नैवं मंतव्यम्। न ह्यनुभवपारतन्त्र्यमात्रेण याथा-

उक्तमपि स्मृतियाथार्थ्यं प्रतिवाद्युक्तहेतुप्रतिक्षेपेण स्वाभिमतप्रमाणविशेषेण चोपपादयति **पूर्वमिति**। इत्थं किल परवादी स्वमतमाह, 'न हि पाकरक्ते श्यामतामतिर्यथार्था । इत्थं निवृत्तपूर्वावस्थे वस्तुनि तत्ता मुल्लिखन्ती स्मृतिरयथार्था' इति॥ अयं पुनरपरामर्शवादः। न हि स्मृतिर्निवृत्तामपि पूर्वावस्थां वर्तमानत्वेनोल्लिखति । तथा चेत् , इदमित्येवोल्लिखेत् । अपितु निवृत्तत्वेनैव ; अन्यथा तत्तोल्लेखाभावप्रसङ्गात् । पाकरक्ते तु श्यामताप्रत्ययो निवृत्तस्यैव (स्यापि) श्यामत्वस्य वर्तमानत्वेनोल्लिखति (लिखतीति?) । अतो विषमो दृष्टान्तः । उक्तमर्थं प्रतिबन्द्योपपादयति तत्तेति । **तथा चेत्**—वर्तमानत्वेन तत्तायाः स्मृतौ भानं चेत् , प्रत्यभिज्ञायामपि तादृगेव भानमिति तत्राप्ययाथार्थ्यप्रसङ्गः । **आदिशब्देनानुवादो गृह्यते** ; तत्रापि यत्तच्छब्दप्रयोगभूयस्त्वात्॥ तर्हि पारतन्त्र्यात् स्मृतेरयाथार्थ्यं वदाम इति चेत् , तच्च नेत्याह **याथार्थ्यमिति** । उक्तार्थानङ्गीकारे दोषमाह **न चेदिति** । **अभ्युपेतातिवृत्तिः**—स्वाभ्युपेतव्याघात इत्यर्थ. । न हि प्रत्यक्षपारतन्त्र्यादनुमानमयथार्थम् ; नाप्यनुमानपारतन्त्र्यादागमः ; न च संस्कारपारतन्त्र्यात् प्रत्यभिज्ञानम् । अन्यदप्येतादृशमुदाहर्तव्यम् । इत्थं स्मृतेर्याथार्थ्यं युक्तिभिरुपपाद्य तत्र प्रमाणमपि वक्ति **वेद** इति । "स्मृतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्" इति वाक्ये स्मृति. प्रथममेव प्रमाणत्वेनोपादीयते । कथं तर्हि स्मृतेरक्षपादो न प्रामाण्यमाचष्टे? तत्राह **विफलेति** । न ह्यक्षपादः **कणादः कपिल** इत्यादयः प्रामाणिकत्वेन परिग्राह्या. । युक्तियुक्तं तु गृह्णीमः ; न पुनः (न तु?) तद्वाक्यगौरवादित्यर्थः ॥

**इति स्मृतियाथार्थ्योपपत्तिः ॥ १२५ ॥**

(351) **जातः पूर्वानुभूत्या स्मृतिमुपजनयेत् क्वापि संस्कार एव(एषा?)**
**प्राग्दृष्टव्यक्तिमात्रप्रतिनियतिमती कीदृशादन्वयात् स्यात् ।**

---

ॐ–र्थस्य प्रतीयमानस्य बाधो युक्तः। न चेत्—पारतन्त्र्यमात्रेण यथार्थत्वस्य त्यागे, अभ्युपेतस्यानुमानादेः यथार्थ्यस्यापि अतिवृत्तिः = अतिक्रमः स्यात् । अनुमानादेः प्रत्यक्षोपजीवित्वात् याथार्थ्यभंगः स्यात्। अत एव वेदे, "स्मृतिः प्रत्यक्षमैतिह्यमनुमानम्" इति स्मृतेरपि मानत्वेन गणना । तर्हि प्रमाणविभागे अक्षपादेन प्रत्यक्षानुमानोपमानशब्दा इति स्मृतित्यागेन प्रमाणविभागः कथं कृत इत्यत्राह विफला त्विति । यथा तदुक्तमुपमानपार्थक्यमुपेक्ष्यम् , तथा तत्कृतस्मृतित्यागोऽप्युपेक्ष्य एव। वस्तुतो याथार्थ्यस्य स्मृतिसाधारण्येऽपि प्रमाशब्दवाच्यत्वं स्मृतेर्नास्ति, यथार्थत्वविशिष्टानुभवत्वमेव प्रमात्वमित्येतावदेव तदिष्टमिति स्पष्टं कुसुमाञ्जलौ । अस्माभिस्तु प्रमाशब्दव्यवहारसदसद्भावचिन्ताया अनुपयुक्तत्वात् अनुभवस्येव स्मृतेरपि अबाधितव्यवहारोपयोगितया याथार्थ्यमात्रमेव प्रधानीकृत्य स्मृतिरपि यथाश्रुति परिगण्यते ॥ १२५ ॥

नन्वस्तु अनुभवजात् संस्कारात् स्मृतिरिति । अनुभवविषयसमानविषयकत्वमिति न नियमः ; प्रत्यभिज्ञारूपप्रत्यक्षे तत्ताव्यतिरिक्तेदन्त्वादिविषयकत्वस्य दर्शनात्। अन्यत्रापि इदमहं पूर्वमन्वभवमिति पूर्वानुभवाविषयस्यानुभवस्यापि स्मृतौ भानात्। क्वचिदनुभूतेष्वेकांशास्मरणेन किञ्चिन्मात्रस्मरणात्। तथा घटमात्रानुभवजसंस्कारादपि घटपटौ ताविति द्वयोरपि स्मरणाच्चेत्यत्राह जात इति । पूर्वार्धं पूर्वपक्षिवाक्यम् । संस्कार एव स्मृतिं जनयेत्, न तु पूर्वानुभवस्य यत् कारणं तदित्यस्तु । अथापि प्रागनुभूतव्यक्तिमात्रविषयिणी इयं स्मृतिरिति कल्पनाप्रयोजक. अन्वयः

**मैवं ; कार्ये त्वबाध्ये ननु तदनुगुणः कल्प्यते हेतुयोगः ;**
**तज्ज्ञानोत्पाद्यभावः स इति च विदितः किं तदन्येन नाम्ना ॥ १२६ ॥**

अस्तु स्मृतिः, भवतु च यथार्था । तथाऽपि पूर्वानुभूतविषयमात्रत्वे किं नियामकमित्याशङ्कते जात इति। पूर्वानुभूत्या जातः संस्कारः कापि स्मृतिं जनयेदेव । अथापि सैषा स्मृतिर्दृष्टव्यक्तिमात्रविषयेति **कीदृशादन्वयात्**=संबन्धात् स्यादिति ।- अत्रोत्तरम् **मैवमिति** । उक्तं हि बहुशः कार्ये निर्बाधेनैव प्रमाणेन स्फुटदृष्टे तदनुगुणो हेतुयोगः कल्प्यत इति अस्माभिरवगन्तव्यो हेतुरिति । अत्राह **तज्ज्ञानोत्पाद्यभावस्स इति च विदित** इति । या स्मृतिर्येन ज्ञानेनोत्पद्यते तद्विषयमेव सा गृह्णातीति नियमः । **किं तदन्येनेति** । हेतुहेतुमद्भावनाम्नि जाग्रति किमन्येन विशेषणनाम्नेत्यर्थः ॥

**इति स्मृतेरनुभूतव्यक्तिनियतविषयत्वम् ॥ १२६ ॥**

(352) **तुल्यात् तुल्यान्तरे धीः स्मृतिः ; इयमिव गौः सेति बोधोऽनुमानं ;**
**यत्तुल्यो यः स चैतत्सम इति निजयोर्हस्तयोर्व्याप्तिसिद्धेः ।**
**चिह्नोन्नीते निमित्ते पदमपि विदितं शक्तमाप्तातिदेशे ;**
**व्युत्पत्तिर्लक्षणैः स्वैः क्वचिदपि न भवेदन्यथाऽतीन्द्रियेषु ॥ १२७ ॥**

इत्थं स्मृतेः प्रामाण्यमुपपाद्य परोक्तोपमानानां स्मृत्याद्यव्यतिरेकमाह **तुल्यादिति** । अत्रैवमाहु-रुपमानप्रक्रियां केचित्, 'तुल्यं दृष्ट्वा तत्तुल्यस्य देशान्तरस्थस्य प्रतीतिरुपमानम्' इति । तत्र विकल्पयामः किं स्वरूपप्रतीतिः उत सादृश्यप्रतीतिरिति । पूर्वत्र सा धीः स्मृतिरित्याह **स्मृतिरिति**। उत्तरत्र सादृश्य-

---

संबन्धः कः इति । परिहरति मैवमिति । सर्वत्र कार्यात् कारणकल्पनं हि कार्यस्याबाध्यत्वात् तदनु-गुणकारणाभावे तदयोगाच्च । यदि यत्किञ्चिद्विषयकानुभवजन्यसंस्कारस्यान्यविषयकस्मृतिहेतुत्वमपि स्यात्, तदा कुत्र कस्य विषयतेति कथं व्यवस्था । अतः स्वविषयकस्मृतिं प्रत्येव संस्कारोद्बोधः कारणम्। अधिकांशग्रहणमतिरिक्तांशग्राहिसामग्र्यन्तरसाहित्यात् ; किञ्चिदंशाग्रहणं तद्विषये उद्बोधाभावा-दित्येवं विमृश्यम् ॥ प्रथमपादे एषेति पाठो युक्तः । द्वितीयपादस्थविशेषणस्य विशेष्यापेक्षत्वात्। वृत्तौ एवकारो न तत्साधकः, 'सैषा' इति एतच्छब्दस्यापि श्रवणात्। तज्ज्ञानेति। स्मृतेः तत्कारणस्य चोत्पाद्योत्पादकभाव एवान्वयो विदितः । तदन्येन नाम्ना संबन्धस्य व्यवहार्यताचिन्तनं वृथेत्यर्थः । , उत्पाद्यभावः-उत्पादनार्हत्वम्। स्मृतेस्तदेकोत्पाद्यस्यानुगुणं समानविषयकत्वमेव नियामकमिति भावः॥

एवं मितिचतुष्टयं निरूपितम् । परेषां प्रमाणविभागो विविधो लक्ष्यते । यथा पूर्वोक्तरीत्या अक्षपादः उपमानमेकं पृथक् प्रमाणं मन्यते । मीमांसकास्तु अर्थापत्तिमनुपलब्धिञ्च घटयन्तः षोढा विभजन्ति । सांख्यादयः ऐतिह्यं संभवञ्च स्त इति अष्टविधताम्। तत् सर्वं निषेद्धुमारभते । तत्रोपमान-पार्थक्यं पूर्वं प्रतिषेधति । ननु उपमानमिति पदेन गौतमेन स्मृतिप्रमाणमेवोक्तं स्यात्—सदृशवस्तु-ज्ञानस्य संस्कारोद्बोधकत्वात् तादृशनिदर्शनं मनसिकृत्योपमानशब्दप्रयोगसंभवादिति चेन्न—तत्र सूत्रे वा भाष्यादौ वा तथोपपादनाप्रतीतेः तत्कल्पनस्यानावश्यकत्वात् । उपमानप्रमाणनिरूपणविधा विविधा दृश्यते। सर्वाऽप्यत्र निरस्यते। तत्र—स्मृत्यन्तर्भावादुपमानस्यानतिरेक इत्येतत्खण्डन-विषयस्य पक्षस्य प्रथमतो ग्रहणं कृतस्मृतिनिरूपणसांगत्यातिशयात् । मीमांसका आहुः अनुभूत-

प्रतिपत्तिरनुमानमित्याह **इयमिवेति**। अनेन सदृशी मदीया गौरिति बोधोऽनुमानमेव। **इयमिव**-इयं गवयव्यक्तिरिवेत्यर्थः। अत्र कथं व्याप्तिग्रह इत्यत आह **यत्तुल्य** इति। अयमत्रानुमानक्रमः—गौर्गवय-सदृशः गवयस्थसादृश्यप्रतियोगित्वात्; यो यद्गतसादृश्यप्रतियोगी, स तत्सदृशः; यथा वामहस्तो दक्षिण-हस्तेनेति ॥ अस्तु तर्ह्यन्यदेवोपमानलक्षणम्; श्रुतातिदेशवाक्यस्य संज्ञिनि प्रत्यक्षप्रत्यभिज्ञानमुपमानम्; संज्ञासंज्ञिसंबन्धप्रमितिरुपमितिरिति। स च संबन्ध एव उपमानप्रमाणावगम्यः(गन्तव्यः)। अतिदेशवाक्यं च त्रिप्रकारम्; गोसदृशो गवय इति साधर्म्योपमाने; गवादिवत् द्विशफो न भवत्यश्व इति वैधर्म्योपमाने; दीर्घग्रीवः प्रलम्बौष्ठः कठोरकण्टकाशी पशुः क्रमेलक इति धर्ममात्रोपमाने इति ॥ तदिदमुपमान-माप्तोपदेशान्नातिरिच्यत इत्याह **चिह्नोन्नीत** इति। यथा अयं गौरिति व्यक्तिविशेषे **गो**शब्दव्युत्पादनेऽपि वक्तुरभिप्रायमालोच्य न्यायानुसारात् सार्वत्रिकीं **गो**शब्दव्युत्पत्तिं प्रतिपद्यन्ते बालाः—न हि यावदुक्त-मेव गृह्णन्ति निरूपणधुरन्धराः प्रेक्षावन्तः—एवमेवातिदेशवाक्येऽपि प्रेक्षावन्तो न्यायपर्यालोचनेन

---

७६— गोव्यक्तेः पुंसो गवयदर्शनकाले गोसदृशोऽयमिति प्रत्यक्षं जायते। ततः एतत्सदृशो गौरिति गोज्ञानं भवति। सेयमुपमितिरिति। तत्र विकल्प्यते-किं गवयव्यक्तिदर्शनानन्तरं गोमात्रज्ञानं वा एतत्सादृश्यविशिष्टगोव्यक्तिज्ञानं वेति। आद्ये तुल्यात्। गवयात्=गवयदर्शनादिति यावत्। तुल्यान्तरे गोव्यक्तिमात्रे धीश्चेत्, गोः प्रागेवानुभूतत्वात् सा धीः स्मृतिरेव। यदि इयं=गवयव्यक्तिरिव सा गौरिति पूर्वाननुभूतं गवयसादृश्यमपि गवि गृह्यते इत्युच्यते, तर्हि इति बोधोऽनुमानम्=सा धीः अनुमितिरेव। *गौर्गवयसादृश्यवती स्वसदृशतत्कत्वादिति*। तत्र व्याप्तिं दर्शयति *यत्तुल्य* इति। *यो यत्तुल्यः स तत्सम इति*। *यथा वामतुल्ये दक्षिणे हस्ते दक्षिणतुल्योऽपि वाम इति*। नैयायिकपक्षं निरस्यति चिह्नेति। गोसदृशो गवय इत्यतिदेशवाक्यं श्रुतवता पूर्वं गवयत्वजातेरदृष्टत्वात् गवयशब्दस्य च गवयशब्दवाच्य इत्येवार्थात् गोसादृश्यस्य च श्रुतस्य गौरवादिना प्रवृत्तिनिमित्तत्वायोगात् गवयदर्शनकाल एव गवयत्वजातेर्ग्रहणात् गोसदृशनिष्ठैतज्जात्यवच्छिन्नो गवयशब्दवाच्य इति वाच्य-वाचकभावं संज्ञासंज्ञिसंबन्धापरपर्यायं बुद्ध्यते। इयमेव बुद्धिरुपमितिरिति तत्पक्षः। तत्राह— गवयत्वरूपे प्रवृत्तिनिमित्ते पूर्वमदृष्टेऽपि गोसादृश्यस्य गुरुत्वादिना प्रवृत्तिनिमित्तत्वाभावस्य गृहीतत्वात्, जातिं साक्षाद्दर्शयितुमशक्नुवन् आप्तो गोसादृश्यं तदुपलक्षकमाहेति च ज्ञातुं शक्यत्वात् आप्तातिदेशे-आप्तवर्तकातिदेशकाल एव गोसादृश्यरूपचिह्नोन्नीतां कांचिज्जातिं निमित्तीकृत्य पदमिदं शक्तमिति निश्चिनोति। तथा च गवय इत्यस्य गवयपदवाच्य इत्यर्थवत् गोसदृश इत्यस्य गोसादृश्योपलक्ष्यधर्मवान् इत्यर्थो बुध्यत एवेति शब्दजन्य एव संज्ञासंज्ञिसंबन्धबोध इति नेद-मुपमानं शब्दादतिरिच्यत इति। गवयत्वप्रत्यक्षाभावे गवयत्वावच्छिन्ने व्युत्पत्तिर्दुर्लभेति पक्षे अनिष्ट-मप्याह व्युत्पत्तिरिति। अन्यथा=दर्शनाभावे शक्तिग्रहो नेति पक्षेऽतीन्द्रियेषु व्युत्पत्तिर्न स्यात्। लोके लक्षणवाक्यानि व्यवहारप्रयोजनसाधनायैव प्रयुज्यन्ते। अतीन्द्रिया इन्द्रोपेन्द्रस्वर्गनरका-दयोऽपि व्युत्पाद्यन्ते लक्षणैः। तत्र तत्र कथं व्युत्पत्तिरिति। तदिदं प्रागेवोपपादितं व्युत्पाद्य(७७)मिति बुद्धिसरश्लोके ॥ त्रिप्रकारमिति। साधर्म्योपमानमिव वैधर्म्योपमानमप्यस्तीत्युक्तं न्यायकुसुमाञ्जलौ। तदुभयस्थल इव केवलधर्मप्रतीतावपि शक्तिग्रहः दीर्घग्रीव इत्यादिवाक्यश्रवणे भवतीति तार्किक-रक्षायाम्। दर्शितमिदमस्माभिः कुसुमाञ्जलिविस्तरे। तदिष्टमनुगतमुपमानलक्षणं तु अज्ञातशक्तिक-पदसमभिव्याहृत-तदर्थजिज्ञासाशमनार्थवाक्यान्तर्गतपदार्थस्य [साधर्म्यस्य वैधर्म्यस्य धर्ममात्रस्य वा]

गोसादृश्यादिचिह्नोन्नीते गवयत्वादौ श्रोतारो व्युत्पद्यन्ते। अतिदेशवाक्यश्रवणकाले गवयत्वादेरप्रत्यक्षत्वात् यदि शब्दतो व्युत्पत्तिं प्रतिक्षिपति कश्चित्, पश्चादुपमानं चापेक्षते—स कथं तैस्तैर्लक्षणैरिन्द्रोपेन्द्रादिशब्दानां व्युत्पत्तिकोटिमाटीकेत? अव्युत्पन्नो वा कथं वैदिकवाक्यार्थान् प्रतिपद्येत? अप्रतिपन्नवाक्यार्थः कथंतरामनुतिष्ठेत्? अननुष्ठानः कथंतमां पुरुषार्थमाप्नुयात्–इति सर्वमपि दुर्वचम्' अतस्तत्तल्लक्षणोपदेशादेव प्रजापतिपशुपतिसुरपतिप्रभृतीनां स्वरूपेषु तत्तदनुबन्धे(न्धे?)ष्वर्थान्तरेष्वपि व्युत्पत्तिरिति सर्वमवदातम् ॥

**इति शब्दे उपमानान्तर्भावः ॥ १२७ ॥**

**(३५४) अर्थापत्तिः परोक्ता न पृथगनुमितेर्व्याप्तिबोधादिसाम्यात्;**
**अव्याप्यानामयुक्तिर्न हि भवति; न चाव्यापकाः स्थापकाः स्युः।**
**जीवन् क्वापीति बोधो न गृह इति मतिं निश्चितां नोपरुन्धे;**
**नातस्तच्छान्तये सा; न यदि, सममिदं सम्मते चानुमाने ॥ १२८ ॥**

एवमुपमानस्यागमान्तर्भावमुक्त्वा तद्वदेवार्थापत्तेरनुमानान्तर्भावमाह **अर्थापत्तिरिति**। व्याप्तिज्ञानादिसाम्यात् परोक्तार्थापत्तिर्नानुमानात् पृथक् भवति। आदिशब्दात् पक्षधर्मत्वमप्याह। जीवन् देवदत्तो बहिरस्ति, विद्यमानत्वे सति गृहे असत्त्वादिति देवदत्तनिष्ठतया हि हेतुरभिधीयते। अत्र व्याप्तिम्, "अनियम्यस्य नायुक्तिः" इत्युक्तप्रकारेण विशदयति **अव्याप्यानामिति**। जीवनवत्त्वे (जीवत्वे) सति यो यत्र नास्ति स ततोऽन्यत्रास्तीति हि व्याप्तिप्रकारः। तमेवानुस्मृत्यानुपपद्यमानदर्शनादुपपादकभूतार्थान्तरकल्पनमर्थापत्तिरित्यभिधीयते, अनुपपद्यमानं व्याप्यम्। व्यापकमन्तरेण व्याप्यस्यानवस्थानात्। तदिदमाह **अव्याप्यानामयुक्तिर्न हि भवतीति**। उपपादकाश्च नाव्यापकाः। तदप्याह **न चाव्यापकाः स्थापकाः स्युरिति**। अनेन 'अनियम्यस्य' इत्यादि श्लोके पूर्वार्धं विवृतम्। **अनियम्यस्य(अनियाम्यस्य)** अव्याप्यस्य **नायुक्तिः**— नानुपपद्यमानता ; नानियन्तोपपादकः—नाव्यापक उपपादक इत्यर्थः। तथाच व्याप्तिरेव

र्थी—वाच्ये ऽर्थेऽनुसंधानमुपमितिकरणम्। तदधीनं संज्ञासंज्ञिसंबन्धज्ञानमुपमितिरिति। उपमितिरियं शाब्दबोध एवेति सिद्धान्तः॥ श्रोतारो व्युत्पद्यन्त इति। श्रोतृत्वदशायामेव व्युत्पद्यन्त इत्यर्थः॥

अर्थापत्तेरनुमानेऽन्तर्भावः कथ्यते, "अनियम्यस्य नायुक्तिर्नानियन्तोपपादकः। न मानयोः विरोधोऽस्ति प्रसिद्धे वा(चा)ऽप्यसौ समः" इति (न्या.कु.३.) उदयनकारिकामनुसृत्य। अत्र नियम्यशब्द एव पठितः। अस्मत्सम्प्रदायवासनयाऽत्र नियाम्येति शोधनमयुक्तम्। अर्थापत्तिरिति। एतत्प्रमाणस्थलेऽपि व्याप्तिबोधस्य, आदिपदग्राह्यस्य पक्षधर्मताज्ञानस्य च साम्यात्–अविशेषेण स्थितत्वात् अर्थापत्तिरनुमितिरेव। कथं व्याप्त्यादिसद्भावज्ञानमित्यत्राह अव्याप्येति। देवदत्तस्य जीवतः गृहे असत्त्वं तस्य बहिस्सत्त्वमन्तरा नोपपद्यत इति बहिस्सत्त्वं कल्प्यते। तत्र [बहिस्सत्त्वाभावे] अनुपपद्यमानमिति यदुच्यते, तत् व्याप्यमेव। तथाच अनियम्यस्य=अव्याप्यस्य, अयुक्तिः=अनुपपन्नता नास्ति। अनुपपद्यमानस्योपपादनं=समर्थनं बहिस्सत्त्वेन क्रियते। तत् उपपादकं व्यापकमेव। व्यापकाभावे व्याप्याभाव इति हि प्रसिद्धमेव। केचित्तु व्यतिरेकव्याप्त्यस्वीकारेणार्थापत्तेरनुमानानन्तर्भावमाहुः। तत्र-अतिरिक्तप्रमाणकल्पनापेक्षया फलतप्रमाणताप्रयोजकव्याप्तिभेदस्वीकारस्यैव युक्तत्वात्। बहिरन्वयानुमाने, यथाऽहं गृहे संप्रति अविद्यमानो बहिरस्मि, तथा देवदत्त इत्यन्वयव्याप्तेरपि संभवाच्च।

नामान्तरेणानुपपत्तिरित्युच्यते अर्थापत्तिवादिभिः। ननु प्रमाणद्वयविरोधपरिहारोऽर्थापत्तिकार्यम्, तदर्थमर्थापत्तिरिति किमपि प्रमाणमन्वेषणीयम्। जीवनप्रमाणं तावत् देशसामान्यसंबन्धात् गृहेऽपि देवदत्त(स्य)-सद्भावम् आवेदयति(अवगमयति) प्रतिक्षिपति च प्रत्यक्षमिति प्रमाणद्वयविरोधः॥ मैवम्; द्वयोरपि प्रमाणत्वे कथं विरोधः? विरोधे वा कथं प्रामाण्यम्? तदिदमुक्तम्, 'न मानयोर्विरोधोऽस्ति' इति। तदेवाऽऽचष्टे **जीवन् क्वापीति घोषो न गृह इति मतिं निश्चितां नोपरुन्धे** इति। अतः परस्परविरोधाभावात् विरोधशान्तये असावर्थापत्तिर्नाङ्गीकरणीयेत्याह **नात** इति। इत्थमनङ्गीकारे धूमानुमानेऽप्यर्थापत्तित्वं कल्पयितुं शक्यत इत्याह **न यदी**ति। अयमर्थः पूर्वोक्तसंवादश्लोकान्तिमपादेनोच्यते, "प्रसिद्धे चाप्यसौ समः" इति॥

**इति अनुमाने अर्थापत्त्यन्तर्भावः॥ १२८॥**

**(354) तत्तद्भावैरभावव्यवहृतिनियतौ मानमन्यत् किमर्थं?**
**स्मर्तव्यस्मृत्यभावात् परमनुमिमते प्रातरश्वाद्यभावम्।**

---

श्री-शास्त्रदीपिकायां तु, 'मानयोर्विरुद्धवत्प्रतीनयोरविरोधसंपादनमर्थापत्तिकृत्यम्' इत्युक्तम्। तत् तत्र कारिकायामुत्तरार्धेन खण्डितम्। तदप्याह श्लोत्तरार्धेन जीवन्निति। देवदत्तो जीवतीति वा क्वाप्यस्तीति चोच्यते चेत्, सामान्यतो देशवर्तित्वं प्रतिपन्नम्। देवदत्तो न गृहे इति मतिर्गृहे तदभावविषयिणी। सामान्यतो देशवर्तित्वे हि गृहवर्तित्वमपि निविष्टम्। अतस्तत् गेहावृत्तित्वमतिविरोधि इति शंकायां क्वापीत्यस्य गृहातिरिक्तदेशविषयकत्वोक्त्या विरोधशमनमिति वर्णनमयुक्तम्। गेहावर्तित्वमतिं प्रति गेहत्वेन गेहग्रहणेन तद्वृत्तित्वमतिरेव हि विरोधिनी। देशसामान्यवर्तित्वज्ञानस्य विरोधित्वप्रसक्तिरेव नास्तीति तद्विरोधशान्तये सा=अर्थापत्तिर्न भवितुमर्हति। यद्यर्थापत्तिरवश्यमिष्यते, तर्हि अनुमानप्रमाणं वा त्यज्यतामित्याह न यदीति। न यदि=अर्थापत्त्यतिरस्कारे अग्निमान् धूमादिति प्रसिद्धस्थलेऽपि अग्निं विना धूमोऽनुपपद्यमानोऽग्निमाक्षिपतीत्यर्थापत्तिरेव कथ्यतामिति। संमते अनुमाने=अनुमानत्वेन संमतस्थले अनुपपत्त्युपपादनं सममिति॥ १२८॥

पप्रत्वेन मीमांसकमतमभावाख्यं प्रमाणं निराकरोति तत्तदिति। भावग्राहकं प्रत्यक्षादि। अभावग्राहकं प्रमाणमन्यत् अभावाख्यम्। न च ग्राह्यस्य ग्राहकस्य चैक्यं कथमिति शंक्यम्; ग्राह्यो ह्यभावः घटाभावादिः। ग्राहकश्चाभावः अनुपलब्धिः उपलब्ध्यभावः=योऽभावो ग्राह्यः, तत्प्रतियोगिघटादिविषयकोपलब्ध्यभावः। यद्यत्र घटः स्यात्, तर्हि उपलभ्येतेत्यापाद्यमानाया उपलब्धेरभावः प्रमाणमिति ते वदन्ति। तन्न; भावाभावरूपेण पदार्थद्वैविध्याभावात्। भावान्तराभाववादिनां मते हि गोत्वमेवाश्वत्वमहिषत्वाद्यभावः। एवञ्च गोत्वग्राहकप्रमाणमेवाश्वत्वाभावादिग्राहकमिति न पृथक् प्रमाणमस्ति। अनुपलब्धिरपि उपलब्ध्यभावः। अश्वत्वाद्युपलब्ध्यभावो नाम गोत्वाद्युपलब्धिरूपो धर्मभूतज्ञानपरिणामविशेष एव। तस्य प्रत्यक्षज्ञानस्य करणं चक्षुरादीन्द्रियमेव। ज्ञानरूपस्याभावस्य तु स्वयमेव प्रकाशः, स्वप्रकाशत्वेष्टेः। अतोऽभावव्यवहारः सर्वोऽपि भावैरेवेति। मीमांसकैरनुपलब्धिप्रमाणं द्वेधा ज्ञानजनकम्। अनुपलब्धिरज्ञायमाना स्वरूपसतो अभावप्रत्यक्षजनिका; सैव ज्ञायमाना सती अभावविषयकपरोक्षजनिकेति कथितम्। तत्र द्वितीयविषये नातिरिक्तप्रमाणता; तत्र घटो नोपलभ्यते इति धान्यादनुपलब्धौ ज्ञातायाम्; स देशो घटाभाववान् ग्राहकसामग्रीकालेऽपि घटवत्त्वेनानुपलभ्यत्वात् इत्यनुमापकहेतुविधयैवानुपलब्धेः प्रमाणत्वात्। प्रातश्चत्वरे गजो नासीदिति यत् गजाभावज्ञानम्, तत्रापि अनुपलब्धिर्लिङ्गमेव। परंतु तज्ज्ञानं हेत्वन्तरेणेत्याह स्मर्तव्येति। यदा पुरुषः प्रातश्चत्वरे स्थितः, तदा तस्य चत्वरदर्शिनः गजोपस्थितिरेव नासीत्। अत

**स्यादक्षात् भावधीवत् विमतिविषयधीरन्वयादेस्समत्वात् ;**
**भावग्राहीण्यभावं तदुचितसहकार्यागमे बोधयन्ति ॥ १२९ ॥**

मा भूदर्थापत्तिः ; अभाव इति किमपि प्रमाणमन्यदेव परिगृह्यतामित्याशङ्क्य परिहरति **तत्त्व-दिति**। भावान्तराभावस्य प्रसाधितत्वात्, भावेषु च भावस्यैव प्रमाणत्वात् अभावप्रमाणापेक्षा नास्तीति। यत्तु प्रातर्गजाद्यभावप्रतिपत्त्यर्थं प्रमाणान्तरमपेक्षन्ते, तदनुभाष्य परिहरति **स्मर्तव्येति**। प्रातर्गजाद्यभावः स्मर्तव्यस्य स्मरणाभावादनुमीयते। इदमिहानुमानं—विप्रतिपन्नः प्रदेशः प्रातर्गजवत्तया मयाऽननुभूतः (नानुभूतः), स्मर्तव्यत्वे सति तद्वत्तया(तद्वत्त्वेन) इदानीमस्मर्यमाणत्वादिति। तथा च स्मरणाभावादनुभवा-भावः अनुभवाभावाच्च विषयाभावं(व) इति प्रातर्गजाद्यभावसिद्ध्यर्थं न प्रमाणान्तरमन्वेषणीयम्। अभावस्य प्रत्यक्षगम्यत्वे सर्वाविगीतमनुमानमप्याह **स्यादक्षादिति**। अभावज्ञानमिन्द्रियजन्यम्, इन्द्रियान्वयव्यतिरे-कानुविधायित्वादित्यनुमानम्। ननु भावग्राहिप्रमाणस्य कथमभावग्राहित्वमित्याशङ्क्य परिहरति **भावग्राहीणीति**। एकस्यापि कारणस्य सहकारिभेदेन नानाकारणत्ववत् बोधकस्यापि सहकारिभेदेन नानार्थबोधकत्वं योयुज्यत इति भावः ॥ **इति अभावप्रमाणान्तर्भावः** ॥ १२९ ॥

(355) **ऐतिह्यं वृद्धवाक्यं बहुदिवसगतेर्यत्त्वनिर्धार्यमूलं**
**मानं चेत् आगमस्तत् तदितरदपि च स्यात् तदाभास एव ।**

---

७१–एव प्रतियोग्यस्मरणात् गजाभावत्वेन गजाभावो न गृहीतः। एवमपि मध्याह्ने केनचित् किं तत्र प्रातर्गज आसीदिति पृष्टः परिशीलयति गजस्य स्थूलकायस्याद्भुतस्य स्मर्तव्यस्यास्मरणात् पूर्वं मे गजोपलब्धिर्नासीदिति। प्रातश्चत्वरे गजो नोपलब्धः तथा स्मर्यमाणत्वाभावात् एवमनुमितेनानुप-लब्धत्वेन चत्वरं प्रातर्गजाभाववदित्यनुमानम्। अथवा अनुपलब्धिं विहाय, चत्वरं प्रातर्गजाभाववत् स्मर्तव्यत्वे सति गजवत्त्वेनास्मर्यमाणत्वादिति साक्षादेवेति स्मृत्यभावादिति द्वितीयपाद-स्वारस्यादवगम्यते। नन्वयं गौरिति गोत्वेन रूपेण प्रत्यक्षे चक्षुष एव करणत्वेऽपि, अश्वो नेति अश्वभेदत्वेन ग्रहणकालेऽनुपलब्धिः प्रमाणं स्यादित्यत्राह स्यादक्षादिति। तार्किकोऽभावप्रत्यक्षार्थं विशेषणतारूपं संनिकर्षं कल्पयति। अस्माकं तु गोत्वाश्वभेदयोरेकत्वात् गोत्वविषये यः संनिकर्षः, स एवाभावत्वेनाभावग्रहणेऽपि हेतुः। तर्हि कदाचित् गोत्वेन, कदाचिदश्वादिभेदत्वेनेति ग्रहणे वैलक्षण्यं कथमिति चेत्—अश्वनादात्म्यग्राहकसामग्रीसत्त्वेऽपि अश्व इत्यनुपलब्ध्या सहितं चक्षुरेवाश्वभेदत्वेन तद्ग्रहे कारणम्, अन्यदा गोत्वेनेति। शब्दार्थस्तु-भावधीवत् गोत्वादिधीवत् विमतिविषयधीः इन्द्रियकरणिका न वेति विमतिविषयभूता अश्वभेदादिधीरपि अन्वयादेः समत्वात् चक्षुराद्यन्वयव्यतिरेकानुविधानस्य तुल्यत्वात् साक्षात् स्यात् = प्रत्यक्षमेव स्यात्। भावग्राहीणि इति प्रथमाबहुवचनं पाठ्यम्। चक्षुरादीन्येव तार्किकोक्तरीत्याऽनुपलब्धिं सहकारीकृत्य अभावग्राहीणीति॥

सांख्याद्यादृतानामैतिह्यादीनामपि प्रत्यक्षप्रमाणान्तर्भावमाह ऐतिह्यमिति। 'इति ह' इति यत्र भवति, तत् ऐतिह्यम्। एवमिदमिति प्रसिद्धमिति तदर्थः। यथा, 'इह वटे यक्षस्तिष्ठति' इत्यादि। नेदमपौरुषेयम्, किं तु पूर्ववृद्धकल्पितं वाक्यं पारम्पर्यागतम्; तदुत्पत्तेः पश्चात् बहूनां दिवसानां गतत्वात् कः कर्ता कुत एवमुक्तवानिति मूलमस्या निर्धार्यं न भवति। तादृशमैतिह्यं किञ्चित् प्रमाण-मपि भवति, किञ्चिदन्यथापि। यदि मानं तर्हि तत् = ऐतिह्यमागमः। आप्तोपदेशरूपशब्द एवेत्यर्थः।

**लक्षादिभ्यः शतादिप्रमितिरनुमितिर्व्याप्यतादेरबाधात्**
**चेष्टालिप्यादि लिङ्गं शितमतिभिरतः शिष्टमप्येवमूह्यम् ॥ १३० ॥**

एवमैतिह्यस्याप्यागमेऽन्तर्भावः प्रामाण्ये ; प्रामाण्याभावे तु प्रमाणाभासत्वमित्याह **ऐतिह्यमिति**। माने चेदागमः ; **तदितरत्** अप्रमाणं चेदाभास एवेत्यर्थः । तदिदमाहुः, "जगति बहु न तथ्यं नित्यमैतिह्ययुक्तं । भवति तु यदि सत्यं नागमात् भिद्यते तत् ॥" इति । लक्षादिभ्यश्शतादिज्ञानं पुनरनुमानमेवेत्याह **लक्षादिभ्य** इति । तत्र हेतुमाह **व्याप्यतादे**रिति । विप्रतिपन्नं लक्षं शतवत् लक्षत्वादित्यनुमानम् । एतदप्याहुः पूर्वपठितस्यार्धस्य पूर्वार्धेन, "इह भवति शतादौ संभवात् या सहस्रे । मतिरवियुतिभावात् साऽनुमानादभिन्ना ॥" इति । एवं चेष्टया पुरुषाभिप्रायविशेषानुमानम् । सङ्केतविशेषयुक्तया लिप्या लिङ्गभूतया वर्णविशेषबोधनम् । अन्यच्चैतादृशं सर्वं साङ्केतिकं **शितमतिभिः**=बुद्धिमद्भिः अनुमानविशेषतया भाव्यम् ॥ इति ऐतिह्यसंभवाद्यन्तर्भावः ॥ १३० ॥

(356) **मानत्रित्वे तु मन्वाद्यनुमतिविषये तत्र यत् कैश्चिदाप्तै-**
**राधिक्यं क्वाप्यधीतं, तदपि सुघटितं गोबलीवर्दनीत्या ।**

---

वी-न पुनर्वेद इति। तदितरदपि = आगमत्वेन स्वीकृतैतिह्यभिन्नमपि तदाभास एव आगमाभास एव, यद्वा प्रमाणाभास एव। ननु, 'तदितरदपि च स्यात् तदाभास एव' इति वाक्यं किमर्थम्। मानत्वाभावे मानाभासत्वस्य सिद्धत्वात्, प्रामाण्याभावे तु प्रमाणाभासत्वमिति वृत्तिरपि वृथा। अत एव तदितरदित्यस्य अमानमित्यर्थवर्णनमपि उद्देश्यविधेयैक्यप्रतीत्या न स्वरसमिति चेत्—उच्यते। ऐतिह्यं द्विविधम्, तत्रैकमागम इत्युक्तौ अन्यस्यातिरिक्तप्रमाणता स्यादिति कश्चिन्मन्येत। तदा तस्य मानाभासत्वात् प्रमाणत्वरूपसामान्यधर्मस्यैवाभावे, अन्तर्भूतत्वाधिकत्वान्यतरशंकैव नेति ज्ञाप्यते। तथा च, 'प्रामाण्याभावे', 'अमानं चेत्' इत्यनयोः आगमरूपप्रमाणत्वाभावे इत्यर्थः। संभवमनुमाने अन्तर्भावयति लक्षेति। संभवः= मिलितत्वम्-अन्तर्भावः। लक्षं शतवत् लक्षत्वात्, लक्षं न्यूनसंख्यघटितम् अधिकसंख्यत्वादित्यनुमानम्। न्यूनसंख्यानिरूपितव्याप्तेरधिकसंख्यायाम्, एतद्व्यापकतायास्तत्र च सत्त्वात्। चेष्टा=हस्तादीङ्गितविशेषः. तया, इह त्वयाऽऽगम्यतामिति संकेतवानयमित्यादिकमनुमीयते। लिपीनां वर्णादीनां च संकेतसत्त्वात् लिपिभिर्वर्णसंकेतानुमानम्। आदिना अन्यदपि सांकेतिकं ग्राह्यम्। यथा सदसद्विवेचनार्थपुष्पादिन्यासे, एतत्प्रत्यर्पणे एवं भगवदाशयोल्लेख इत्यादिव्यवस्थायामित्येवम्। शिष्टं चेष्टालिप्यादिकमपि लिङ्गत्वेन-अनुमानान्तर्भूतत्वेन सूक्ष्ममतिभिरूह्यमित्यर्थः। नन्वेवं शब्देऽपि अनुमानता स्यादिति चेत्—सोऽयं कणादपक्ष इति वैशेषिकरसायनेऽस्माभिरुक्तम्। तदन्ये तु नाद्रियन्ते। शब्दे संकेताभावस्य प्रागेवोक्तत्वात्। अपौरुषेयस्यापि शब्दस्य सत्त्वेन चेष्टादिवैलक्षण्यात्। चेष्टा हि शारीरो व्यापारः पौरुषेय्येव। किञ्च चेष्टायां विशिष्टार्थविषये संकेतः। शब्दे तु विशकलितार्थशक्तिग्रहमात्रम्। पश्चादन्वितार्थबोधकत्वे तु न संकेतः; किंतु शब्दस्वभाव इत्येव मन्तव्यम् ॥ १३० ॥

ननु, "प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम्" इत्यादितः प्रमाणत्रित्वमेव चेदिष्टम्, अधिकप्रमाणपरिगणनस्य तत्तत्कृतस्य निर्वाहः क इत्यत्राह मानेति। प्रमाणत्रित्वमेव मन्वाद्यनुमतम्। एवं सति अधिकपरिगणनमेतत्प्रमाणादर्शिकृतं चेत्, अनाप्तोक्तमित्यविश्वसनीयम्। आप्तैरेव प्रमाणाधिक्यं क्वचित् गृहीतमस्ति। तस्य गोबलीवर्दन्यायेन निर्वाहः। गोष्वन्तर्भूतस्यैव बलीवर्दस्य पृथगुक्ति-

उक्तार्थोदाहृतिर्वा भवतु बहुमुखी शिष्यमेधामहिम्ने
सर्वे च स्वेष्टतन्त्रेष्वनुकथनशतं निर्वहन्त्येवमूहैः ॥ १३१ ॥

ननु, 'आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥' ("प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम्। त्रयं सुविदितं कार्यं धर्मसिद्धिमभीप्सता"?) इति प्रत्यक्षादिभेदेन प्रमाणत्रित्वे मन्वादीनामभिमते, कैश्चिदाधिक्यमप्यभिधीयते; तत् कथमिति चोद्यमनुभाषते मानत्रित्व इति । तत् परिहरति तदपीति । अधिककथनं तात्पर्यविशेषेण गोबलीवर्दन्यायेनाविरुद्धमित्यर्थः । अथवा उक्तस्यैवार्थस्य शिष्यमेधामहिम्ने बहुमुखमुदाहरणं तद्भवत्वित्याह उक्तेति । अयं निर्वाहः सर्वेष्वपि शास्त्रेषु पौनरुक्त्यपरिहारे साधारण इत्याचष्टे सर्वे चेति ॥ इति अधिकप्रमाणगणनानिर्वाहः ॥ १३१ ॥

(857) प्रत्यक्षादित्रिकं यत् पृथगभिदधता भाष्यकारेण शेषं
नैव क्षिप्तं ; न चोपस्कृतमिह ; न ततः स्यात् तदाधिक्यसिद्धिः ।
रीतिः सर्वोदितानामियमिति हि तथोदासि सङ्ख्याविवादे
तेनान्वास्थ्य तत्तत्समधिकगणना स्वीकृता नस्स्वयूथ्यैः ॥ १३२ ॥

कथं तर्हि भाष्यकारैः प्रमाणत्रयमभिधाय शिष्टं प्रमाणं न प्रतिक्षिप्तम् ; तस्मादाधिक्यमिति कश्चित् मनुते । तस्योत्तरम् प्रत्यक्षादीति । न चोपस्कृतमिहेति । क्षेपाभाववत् उपस्काराभावादाधिक्यं न सिध्यतीत्यर्थः । अत एव सगुणविषयत्वेन प्रमाणत्रयमुपन्यस्य सर्वोदितानां प्रमाणा-

---

व्वी- मात्रेण न हि तस्य गोत्वमपैति । अथवा अनुमानेषु बहुषु उदाहरणतया अन्वयव्यतिरेकिकेवलान्वय्यादिवत् उपमानार्थापत्तिनिर्देशः, शब्दप्रमाणेषु बहुषु ऐतिह्यनिर्देश इति । सर्वमिदं शिष्यबुद्धिवैशद्यार्थम्। नन्वियं क्लिष्टकल्पनेति चेत्-सत्तर्कोपस्कृतप्रमाणभूतमन्वादिवाक्ये क्लेशकल्पनात् वरमेतदुक्तिक्लेशनम् । जैमिन्यादिसूत्रव्याख्यातारोऽपि बहुषु सूत्रेषु क्लिष्टार्थं कल्पयन्ति । "गुणे त्वन्याय्यकल्पना" इति दर्शयन्तः। दर्शितमिदं सेश्वरमीमांसायामपि । अनुकथनपदेनानुवादत्वोक्त्या पुरोवादरूपप्रमाणाविरोधेन पश्चात्तनवाक्यनिर्वाहो युक्त इति ज्ञाप्यते। आर्षमिति वाक्यस्य प्रमाणत्रित्वे प्रमाणतयाऽत्रोदाहरणात् आर्षपदं प्रत्यक्षपरमिति विवक्षितं वक्तव्यम् । आरात् पश्यतीति ऋषिरित्यर्थान्वयात् । धर्मोपदेशपदेन शब्दस्य, तर्केणेत्यनुमानस्य चोक्तत्वात् । वस्तुतः प्रत्यक्षमनुमानञ्चेति प्रमाणवाक्यस्थाने इदं लेखकप्रमादपतितम् ॥ १३१ ॥

ननु भाष्यकारसिद्धान्तस्था एव केचित् प्रमाणत्रितयाधिकमपि भाष्यकारसंमतं मत्वा अधिकं गणयन्ति । तत् स्वयूथ्यविरोधो न युक्त इत्यत्र भाष्यकाराणामाधिक्येऽभिमतिर्दुर्वचेत्याह प्रत्यक्षेति । प्रत्यक्षानुमानशब्दरूपप्रमाणत्रिकं विशिष्य निर्दिश्य सर्वस्य विशिष्टविषयकत्वादि स्थापितम्। प्रमाणसंख्याविवादेऽपि सर्वाभ्युपगतप्रमाणानामेव बोधकत्वमेवेत्युक्तया, अधिकप्रमाणानादर एव लक्ष्यते। यद्यपि अधिकप्रमाणकल्पना न कण्ठरवेण क्षिप्ता, तथापि न तत्सिद्धिः । क्वचिदर्थापत्तिप्रमाणोपन्यासेऽपि परोक्तरीत्यनुवादमात्रत्वात् प्रमाणान्तरत्वं न सिद्ध्येत् । अन्यथा अनुपलब्धिं विहाय प्रमाणपञ्चकं भाष्यकारेष्टमिति नयद्युमणिकल्पना न युज्यते । "योग्यानुपलब्ध्यैवाभावः समर्थित इत्युपशाम्यतु भवान्" इति भाष्ये पुरस्कृत्यानुपलब्धिप्रमाणमपि हि षष्ठं स्वीक्रियेत। नेदं पृथक्त्वेनोपस्कृतमिति चेत्-अन्यदपि नोपस्कृतमित्यविशेष एव। सर्वमिदमस्मदीयायां नयद्युमणिभूमिकायां द्रष्टव्यम् ।

नामियमेव हि रीतिरिति भाष्यकारैरुदासि । अतोऽस्मत्सयूथ्यानामाधिकृत्यकथनमन्वारुह्य वादः, न पुनः स्वपक्ष इति संप्रदायनिर्णयः ॥ इति प्रमाणसंख्यानियमसंप्रदायः ॥ १३२ ॥

(856) मानं सर्वोपजीव्या प्रथममिह भवेदक्षजन्या मनीषा
तन्मूला चानुमा स्यात् तदुभयजनितस्त्वागमो द्विप्रकारः ।
मूलं न क्वापि बाध्यं ; क्वचिदधिकबलैर्मूलजातीयबाधः
स्यादेतैः कर्ममालाघटितभवघटीयन्त्रजभ्रान्तिशान्तिः ॥ १३३ ॥

इत्थं प्रमाणत्रयं विविच्य तद्विवेकप्रयोजनमाह **मानमिति** । अनुमानागमयोरपि मूलत्वात् सर्वोपजीव्यं प्रत्यक्षमेव प्रथमम् । तन्मूलमनुमानं ततः । तदुभयनियतस्त्वागमः पश्चान्निश्चीयते । स चागमो द्विप्रकारः दृष्टार्थोऽदृष्टार्थश्चेति । दृष्टार्थं कारीर्यादिप्रतिपादकः ; अदृष्टार्थः स्वर्गादिसाधनप्रतिपादकः । अथवा द्विप्रकारः प्रवृत्तिधर्मप्रतिपादको भागः, निवृत्तिधर्मप्रतिपादको भाग इति ।

अत्राहुर्मृषावादिनः—'उपजीव्यमपि प्रत्यक्षमुपजीवकेन बाध्यते, एवमनुमानेनापि' ; तत् प्रतिक्षिपति **मूलं न क्वापि बाध्यमिति** । स्वमूलबाधे स्वस्यैव बाधेन व्याघातादित्यर्थः । कथं तर्हि प्रत्यक्षोपजीविना ज्वालाभेदानुमानेन प्रत्यक्षोपमर्द इत्याशङ्क्याह **क्वचिदिति** । अयमर्थः—अधिकबलैर्विजातीयैः प्रमाणैर्मूलजातीयस्यैव बाधः क्रियते ; न पुनः स्वमूलस्यैव । न हि ज्वालाभेदानुमानं ज्वालैक्यप्रत्यक्षमुपजीवति ; अपितु वर्तितैलादिसामग्र्यप्रत्यक्षम् । इयं खलु तत्रानुमानप्रक्रिया—विप्रतिपन्ना प्रदीपसामग्री स्थानन्तरभाविप्रदीपवती, प्रदीपसामग्रीत्वात्, प्रथमप्रदीपसामग्रीवत् । विप्रतिपन्नः प्रदीपसामग्रीनाशः स्थानन्तरभाविप्रदीपनाशवान्, प्रदीपसामग्रीनाशत्वात्, चरमप्रदीपसामग्रीनाशवदिति। तत्र यत् प्रत्यक्षमनुमानेनोपजीव्यते, न तत् बाध्यते ; यत्तु बाध्यते, न तदुपजीव्यत इति विवेकः ।

---

*श्लोके नैवक्षिप्तमित्यन्तः पूर्वपक्षः ; नचेति प्रत्युत्तरमित्यपि स्यात् । संख्याविवादे कृते भाष्यकारैः, मा भूद्विस्तर इति कृतमौदासीन्यमनादरमेव दर्शयेत् । अतः सयूथ्यस्वीकारे न सूक्तिः प्रमाणमिति ॥

एवं प्रमाणानि न्यरूपयत । अथ तत्र श्रुतिलिङ्गादिस्थल इव बलाबलमाह मानमिति । प्रत्यक्षानुमितिशाब्दबोधानां निरूपणक्रमः पूर्वपूर्वप्राबल्यात् । प्राबल्यञ्चोपजीव्यत्वादित्याह । आगमो द्विप्रकार इत्यनेन आगमजन्यशाब्दबुद्धिग्रहणम् । अपौरुषेयस्यान्यमूलकत्वायोगात् । द्विप्रकारत्वं वृत्तौ द्वेधा दर्शितम् । अपौरुषेयवाक्यजन्यबोधः पौरुषेयजन्यबोध इति द्विप्रकारताऽपि स्यात् । मूलम् उपजीव्यं न क्वापि बाध्यते । अतो यां प्रत्यक्षव्यक्तिमनुमानव्यक्तिञ्चोपजीव्य शाब्दबोधो जातः, तत्तद्बाधस्तेन कर्तुं न शक्यते ; स्वस्यैवानुत्पत्तिप्रसंगात् । यत्तु ज्वालाभेदानुमित्या ज्वालैक्यप्रत्यक्षबाधनम्, तन्नायुक्तम् ; भेदानुमितेर्भेदसाधकहेतुपरामर्शाधीनत्वेऽपि ज्वालैक्यप्रत्यक्षजन्यत्वाभावात्। उपजीव्यविरोधो न युक्त इत्येव ब्रूमः, उपजीव्यजातीयविरोधस्त्वावश्यकश्चेत् सह्यः। अद्वैतश्रुत्या द्वैतबाधस्तु न भवति, प्रत्यक्षादिसिद्धस्य द्वैतस्यैव ग्रहणेन निषेधात् उपजीव्यविरोधसत्त्वात्। प्रमाणनिरूपणस्य परमं प्रयोजनमाह स्यादिति। मानाधीना मेयसिद्धिः। मेयविशेषतत्त्वज्ञानात् निःश्रेयसाधिगम इति न्यायदर्शनेऽप्युक्तम् । अतः संसारमूलसर्वभ्रान्तिशमनाय तत्त्वस्य यथावदवगन्तव्यतया तत्र प्रत्यक्षादिप्रमाणतद्बलाबलयाथात्म्याधिगम उपयुज्यत इत्यर्थः । उपजीवकेन बाध्यत इति । नेह नानेत्याद्यागमेन बाध्यत इत्यर्थः। तत्र दृष्टान्तप्रदर्शनाय एवमनुमानेनापीत्युक्तम् ॥

अतस्तैः(एतैः) प्रमाणैर्निपुणं निरूपितैः कर्ममालाघटितभवघटीयन्त्रजभ्रान्तेः=अज्ञानस्य शान्तिरित्यर्थः। अयमत्र बाध्यबाधकभावनिर्णयः—द्वयोः प्रमाणयोर्विरोधे यत् संभाव्यमानान्यथासिद्धि, तत् बाध्यम्; अनन्यथासिद्धमितरत् बाधकमिति। सावकाशत्वनिरवकाशत्वाभ्याम् अन्यथासिद्ध्यनन्यथासिद्धिविवेकः। सावकाशत्वं च क्वचित्, अप्रमाणकोटिनिवेशात्, 'इदं रजतम्' इत्यादौ। क्वचित्, विषयान्तरलाभात्, 'न हिंस्यात् सर्वाभूतानि' इत्यादौ। निरवकाशत्वं तु तदुभयाभावेन सिध्यति, 'नेदं रजतं', 'पशुमालभेत' इत्यत्र। *अप्रमाणकोटिनिवेशश्च कारणदोषात् बाधकप्रत्ययाच्च भवति। उभयं च यत्र नास्ति, तत्* प्रमाणमेव। अतः प्रपञ्चग्राहिणः प्रत्यक्षस्य काचकामलादिकारणदोषाभावात् काल्पनिकबाधस्य बुद्ध्या(द्धा?)दिकल्पितबाधेन मृषावादिपक्षस्याप्युन्मूलनहेतुत्वात् निर्दोषमेव प्रत्यक्षादिकमवतिष्ठत इति निर्मूलोऽयं मृषावादिवादः॥ इति प्रमाणबलाबलस्थितिः॥ १३३॥

(359) सर्वं संदिग्धसत्त्वं क्षणिकमगुणकं नित्यमाकस्मिकं वा
बुद्धिः कृत्स्ना न मानं निखिलमपि ततः स्यान्मृषा धीरद्वा।
प्रख्योपाख्यादवीयः किमपि नियतिमन्नामरूपं च नेत्या-
द्युद्वेलापार्थजल्पान् अपहसितुमसौ वर्णितो मानभेदः॥ १३४॥

न केवलं मृषावादिवादस्यैकस्यैवोन्मूलनार्थं प्रत्यक्षादिप्रमाणत्रयपरिशोधनम्; सर्वेषामपि तद्वोत्तनिष्ठानां दुर्वादिनामुन्मूलनायेत्याह **सर्वमिति। सर्वं सन्दिग्धसत्त्वमिति विश्वखण्डकाः; क्षणिकमिति वैभाषिकसौत्रान्तिकयोगाचाराः। अगुणकमित्यपि** त एव; अथवा **मृषावाद्यपि। नित्यमिति सांख्याः;** अवस्थानामप्यनागन्तुकत्वात्। **आकस्मिकमिति** चार्वाकाः(काः)। **बुद्धिः कृत्स्ना न मानमिति** स एव **खण्डकः। निखिलमपि ततः स्यान्मृषेति** तद्गुरुर्माध्यमिकः। **धीरद्वे** त्यद्वैतवादी(नि चैतनावादी)। **प्रख्योपाख्यादवीयः किमपीति** स एव **माध्यमिकः। प्रख्या** बुद्धिः **उपाख्या** व्यवहारः। तच्छिष्यसंप्रदायपातिनोऽन्येऽपि। **नियतिमन्नामरूप च नेत्यनेकान्तवादिनः।** इत्याद्युद्वेलसप्तभङ्गयादिनानाजल्पान् अपहसितुमसौ प्रमाणभेदो वर्णितः॥

*इति प्रमाणविवेकप्रयोजनम्॥ १३४॥*

---

सावकाशत्वमिति। शुक्तिस्वरूपविशेषादर्शनं रजतसदृशांशमात्रदर्शनञ्च रजतभ्रमावकाशः। अतो रजतज्ञानम् अन्यथासिद्धम्=प्रामाण्याभावेऽप्युत्पत्त्यर्हमिति। अतः प्रपञ्चग्राहिण इति। तथाच, 'यत् संभाव्यमानान्यथासिद्धि तत् बाध्यम्, इतरत् बाधकम्' इत्यादिकं मृषावाद्युक्तं तन्मतनिरसनायैवोपयुज्यत इत्यभिप्रायेण मृषावादिमार्गोल्लेख इह वृत्तौ॥ बुद्ध्यादिकल्पितेत्यत्र बुद्धादिकल्पितेति शोधनीयम्॥ १३३॥

एवं न्यायादिशास्त्र इव बुद्धिनिरूपणप्रकरणे सर्वविधप्रमितिविवेचनम्। अनेन निःश्रेयसोपयोगितत्त्वज्ञानेन संसारप्रवृत्तिहेतुभ्रान्तिनिवारणवत् सर्वसिद्धान्तिप्रस्थानमूलकभ्रान्तिशमनमर्थादित्याह सर्वमिति। एतदर्थो वृत्तौ व्यक्तः। विश्वखण्डकः=खण्डनग्रन्थकारः। अगुणकमित्यपि त एवेति। रूपादिसमुदायो द्रव्यमित्युक्त्या गुणगुणिभावानङ्गीकारात्। मृषावाद्यपीति। निर्गुणं निर्विशेषं ब्रह्मेति स्वीकारात्॥ १३४॥

(360) प्रज्ञाव्युत्पत्तिपाकव्यवहरणफलश्रेणिनिःश्रेणिकायाम्
आरूढा निष्प्रकम्पा प्रमितिगुणकरालम्बनात् सत्परीक्षा ।
मिथ्यालीकादिशापैरपि न न भवति प्राप्तविस्रम्भसौधा
तत्साह्यात् बाह्यपाटच्चरमुषितमिदं सद्धनं प्रत्यनैष्म ॥ १३५ ॥

इत्थं प्रमाणैरर्थपरीक्षणं कृत्वा प्रकृतमर्थं निगमयति प्रज्ञेति । अत्र प्रज्ञाव्युत्पत्त्यादिर्निश्रेणिका, तस्यामारूढा परीक्षा कथं निष्प्रकम्पा ? प्रमितिगुणकरालम्बनात् । इयं परीक्षा फलप्राप्तिविस्रम्भसौधमधिरुह्य मृषावादिप्रभृतिभिरभिहितैः मिथ्यालीकादिशापैर्न न भवति । तेषां व्यवहारः शापमात्रमेव, न युक्तियुक्तमित्यर्थः । सुरक्षितस्थलेऽवस्थिता तेषां वचनैरनर्थकैर्न भवति । सुरक्षितपरीक्षासाह्यात् वेदबाह्यपाटच्चरापहृतं तत्त्वज्ञानरूपं सद्धनं प्रत्यनैष्मेत्यर्थः ॥ इति परीक्षाफलविशेषः ॥ १३५ ॥

॥ इति श्रीकवितार्किकसिंह-सर्वतन्त्रस्वतन्त्र-श्रीमद्वेदान्तदेशिकविरचिते
सर्वार्थसिद्धिसमेते तत्त्वमुक्ताकलापे बुद्धिसरश्चतुर्थः ॥ ४ ॥

---

७१- ननु यानि मतानि निरस्तानीति मन्यसे, तन्मतस्थैरेवास्याः त्वत्परीक्षाया हानिरापाद्यते चेत्, कथमनया परापहाम इत्यत्र परीक्षाया अभञ्जनीयत्वमाह प्रज्ञेति । प्रज्ञा= यथावस्थितप्रमेयज्ञानम् ; व्युत्पत्तिः =शब्दप्रमाणस्य तत्परत्वज्ञानम् ; पाकः= मननेन तन्निष्कर्षः । व्यवहरणं= तदधीनमनुष्ठानमुपायपरिग्रहादि । तत्फलं= भ्रान्तिशान्त्यादि एषां श्रेणिरेव निश्श्रेणिका यस्याः सेति परीक्षाविशेषणम् । यामिति पृथक्पदम् ; आरूढेति पदस्य द्वितीयान्तापेक्षत्वात् । प्रमितिगुणरूपस्य करस्यालम्बनात् । यद्वा प्रमितिरूपस्य गुणस्य करेणाऽऽलम्बनात् यामारूढा अत एव निष्प्रकम्पा प्राप्तो विस्रम्भात्मकः सौधो यया सा, तादृशश्रेणिनिश्श्रेणिकेत्यन्वयः सिद्धः । निश्श्रेणिकायामिति सप्तम्यन्तमेव वा । "तस्यामारूढा" इत्युक्तेः । अस्याः परीक्षायाः सत्त्वात्= समीचीनत्वात् परकीयैर्वादिभिरभवनं न भवति । तैर्यथावत्प्रमाणोपन्यासाशक्त्या शापा एव कार्याः, नश्यत्वियं परीक्षेति । तेषामशक्तत्वात् ते शापा निष्फलाः । अतो मिथ्याभूतैः अस्मत्परीक्षायामलीकत्वानेकदोषदुष्टत्वादिविषयकैः शापैरियं न न भवति= नाभावमियं प्राप्स्यति । अस्याः परीक्षायाः साह्यात्= सहायभावात् बाह्यैः पाटच्चरैः= तन्मतचोरैः कुदृष्टिभिश्च मुषितं= चोरितं गुप्तमन्यथाकृतं पुनर्यथावस्थितरूपपरिकल्पनेन प्रत्यनैष्म= पुनरानीतवन्तः स्मः ॥ १३५ ॥

स्वतोभान्तीं नित्यां धियमिह वदन् द्रव्यमथ त-
द्विभागे भ्रान्त्याख्ये विविधमतरीतीर्विशदयन् ।
अयाक्षं लिङ्गं वाक् स्मरणमिति बुद्ध्यान्तरभिदा-
परीक्षां विस्तार्य व्यधित पर-प्राज्ञव्युदसनम् ॥ (१)
अभिनवदेशिकविहिते त्वलभ्यलाभाभिधे क्रमप्राप्तः ।
मुक्ताकलापटिप्पण एष बुधानां मुदेऽस्तु बुद्धिसरः ॥ (२)
इति अभिनवदेशिकवात्स्यवीरराघवाचार्यकृतौ
अलभ्यलाभाख्ये व्याख्याने बुद्धिसरश्चतुर्थः ॥

——*——

## ॥ अथ अद्रव्यसरः पञ्चमः ॥ ५ ॥

(361) तत्तद्द्रव्येषु दृष्टं नियतिमदपृथक्सिद्धमद्रव्यजातं
तद्वत् विश्वं परस्य ; व्यवधिनियमनान्न स्वरूपेऽस्य दोषः ।
इत्थं निर्धार्य भाव्ये भगवति विविधोदाहृतिव्यक्तिसिद्ध्यै
निर्बाधान् द्रव्यधर्मान् निरनुगतिगलद्दुर्नयान् निर्णयामः ॥ १ ॥

इत्थं द्रव्यवर्गं विचार्य अद्रव्यं विचारयिष्यन् तद्विचारस्य प्रधानप्रयोजनमाह **तत्तदिति** । तेषुतेषु द्रव्येषु **दृष्टं नियतिमत्** । यस्य द्रव्यस्य यदुचितं तत् तत्रैव नियतमित्यर्थः । तच्च तत्रतत्रापृथक्सिद्धम्-द्रव्यजातम् । तद्वदेव विश्वमपि परस्यापृथक्सिद्धम् । एवं च सति विशेषणगतानां विकारादीनां **व्यवधिनियमनात्**=तत्तद्द्रव्यव्यवधानेन भगवद्विशेषणत्वात् **न स्वरूपे** भगवतो **दोषः**—न विकारादिसंबन्ध इत्यर्थः । **इत्थं निर्धार्य भाव्ये** ध्यातव्ये भगवति **विविधोदाहरणव्यक्तिसिद्ध्यै निर्बाधान्** प्रामाणिकान् बाधकप्रमाणविधुरांश्च द्रव्यधर्मान् । **निरनुगतिगलद्दुर्नयान्** । **अनुगतिः** व्याप्तिः, **निरनुगति[ः]** अव्याप्तिः, व्याप्त्यभावेन स्वयमेव गलद्दुर्नयान् निर्णयाम ॥

इति अद्रव्यविचारप्रधानप्रयोजनम् ॥ १ ॥

---

श्री

### अलभ्यलाभाख्य व्याख्यानम्

वी— अद्रव्यबुद्ध्यास्पद-बुद्धिरूपद्रव्यार्थमेकं सरमारचय्य ।
अद्रव्यमन्यत् प्रथितं समस्तं परीक्षतेऽन्तेऽवमरक्रमेण ॥ (१)

ननु अद्रव्याणि पृथङ्न स्वीकार्याणि, तथासति परमात्मनः सर्वाधारत्वभङ्गप्रसङ्गात् । रूपरसादिसर्वाधारत्वञ्च तस्य दूषणम् 'अरूपमस्पर्शम् निर्गुणं निरञ्जनं निर्विकारम्' इत्यादिवचनविरोधात् । सेयमुभयतस्पाशा रज्जुः । तत्राह तत्तदिति । अस्ति अद्रव्यजातम् । अनुभवापलापायोगात् । अत एव तत्तदपृथक्सिद्धं तत्तद्द्रव्ये नियतिमत्—व्यवस्थितम् विहायावर्तमानमेव दृष्टम् । तद्वत्—तेन तुल्यम्—तद् यथा तत्रतत्रापृथक्सिद्धम्, तथा विश्वं द्रव्यं परमात्मन्यपृथक्सिद्धम् । यद्वा तद्वत्-उक्ताद्रव्यविशिष्टमेव विश्वं परमात्मापृथक्सिद्धम् । अतश्च व्यवधिना =द्रव्यव्यवधानेनैव परमात्मा तत्तद्द्रव्यनियमनात् अस्य =परमात्मनः स्वरूपे तत्तदद्रव्यसंबन्धरूपदोषो नास्ति । एवं साक्षात् परम्परया वा सर्वाधारत्वमेवास्मिन् विवक्षितमिति निर्धार्य द्रव्यधर्मान् निर्णयाम — एते एवम्भूता इति निर्धारयाम । किमर्थम्? भाव्ये =ध्येये भगवति= अखिलहेयप्रत्यनीक-कल्याणैकताने तत्तद्विधोपात्तहेयप्रत्यनीकत्व-गुणाकरत्वयोः स्थितिप्रकारविषयस्पष्टज्ञानाय । द्रव्यधर्मांश्चेमे निर्बाधा =बाधितुमशक्याः तथा निरनुगतिगलद्दुर्नयाश्च= निरनुगतिः =व्याप्त्यभावः । व्याप्त्यभावात् विपरीतसाधको दुर्नयः गलति =असमर्थो भवति । निरनुगतिः —व्याप्तिरहित इति बहुव्रीहिर्वा, दुर्नयविशेषणम् । निर्मक्षिकमितिवत् निरनुगतीत्यव्ययीभावो वा । तदभावसाधकहेतुर्नास्तीति यावत् । अतो बाधाभावात् तदभावव्याप्यवत्त्वाद्यभावाच्च नाद्रव्याणि निरस्यन्ते इति । बहून्यद्रव्याणि तार्किकादिभिः परिगण्यन्ते । तत्र तत्र ये धर्मा अबाधिता बाधकहेतुरहिताश्च, तानेव गणयाम इति च भावः ॥ १ ॥

(362) व्याख्यातं द्रव्यषट्कं व्यतिभिदुरमथाद्रव्यचिन्ताऽस्य सत्ता
धीभेदादेः पुरोक्ता निजगदुरनुपादानतां तस्य लक्ष्म ।
द्रव्यादत्यन्तभिन्नं त्विदमनुपधिक तत् विशिष्यात् स्वभावात्
दृष्टे न ह्यस्त्ययुक्तं ; न कथमितरथा विश्वतत्त्वापलापः ॥ २ ॥

इत्थं द्रव्यषट्के व्याख्याते तदनन्तरमद्रव्यप्रमाणादिकमुच्यत इत्याह व्याख्यातमिति । द्रव्यषट्कं चिदचिदीश्वरधर्मभूतज्ञानकालनित्यविभूतिरूपम् व्यतिभिदुर परस्परलक्षणासङ्करेण भिन्नस्वभावम् । अथाद्रव्यचिन्ता प्रवर्तते । अस्य अद्रव्यस्य सत्ता बुद्धिभेदादे प्रागेवोक्ता । तस्य चाद्रव्यस्यानुपादानत्व लक्षणं निजगदुः। अवस्थावत् द्रव्यम्, तद्व्यतिरिक्तमद्रव्यम्। आगन्तुरपृथक्सिद्धधर्मोऽवस्थेति प्रागेवोक्तम्। इदं चाद्रव्यं द्रव्यादत्यन्तभिन्नम्, न पुन कौमारिलजैनादिवत् भिन्नाभिन्नम् । इदं चानुपधिक समवायादिसंबन्धाभावेन स्वभावादेव तत् द्रव्य विशिष्यात् । यथा समवाय स्वय सबन्धान्तराभावेऽपि स्वभावादेव तावेव संबन्धिनौ संघटयति, नान्यौ, नापि स्वय संबद्ध । एवमेव द्रव्याद्रव्ये स्वभावादेव विशिष्टव्यवहारमातन्वाते , अपर्यनुयोज्यत्वात् वस्तुस्वभावानाम् , स्वभावो नाम प्रामाणिकं रूपम् । अपृथक्सिद्धविशेषणत्वेनोपलभ्यन्ते द्रव्यं प्रत्यद्रव्याणि । अन्यथा भवताऽपि कथम्, 'अवश्यमेकमपराश्रितमेवावतिष्ठते' इत्यादिकमुद्घुष्यते । अयमर्थ —भवता ययोरयुतसिद्धचा समवाय कल्प्यते, तयोरयुतसिद्धिरेव संबन्धः, न पुनस्तत्कल्पनीय समवाय , कल्पनागौरवात् । स्वाभाविकापृथक्सिद्धिव्यतिरेकेण समवायस्यानुपलम्भात् । अत स्वभावादेव द्रव्याद्रव्ययोरुपश्लेष । न हि दृष्टेऽनुपपन्न नाम । दृष्टापलापे विश्वमपि लोलुप्येत । दृष्टमित्येव दृष्ट तावत् गृह्यते । अनुमेयमपि दृष्टसजातीयत्वेन । तत्रापि

श्री— ननु द्रव्यापृथक्सिद्धत्वस्य विश्वस्मिन्नपि सत्त्वात् नाद्रव्यलक्षणत्वम् । तथा सर्वेषा द्रव्यधर्मत्वकथनमप्ययुक्तम् । समवायरूपसंबन्धस्यावश्यकत्वात् तत्र धर्मत्वासंमतेरित्यत्राह व्याख्यातमिति । व्यतिभिदुरं=मिथो विभिन्न द्रव्याणां षट्कं चतुर्भि. सरैर्व्याख्यातम् । प्रथमसरे प्रकृतिकालोभयनिरूपणात्, नायकसरमध्ये नित्यविभूतेर्निरूपणाच्च । अस्य=अद्रव्यस्य सामान्यत सत्ता=द्रव्यातिरिक्तत्वं धीभेदादे.-विभिन्नेन्द्रियग्राह्यत्वकार्यभेदादिना प्रागुक्तैव । तस्य-अद्रव्यस्य लक्ष्म=लक्षण तु अनुपादानता=अवस्थानाश्रयत्वमात्रम्, लाघवात् । अवस्थावत्त्वं हि द्रव्यत्वम्, अद्रव्यत्वं तदनाश्रयत्वमिति। विश्वस्मिन् जीवप्रधानादौ अवस्थाश्रयत्वसत्त्वात् नातिव्याप्ति. । द्रव्यधर्मत्वमप्येषा नियतम्, भेदाभेदास्वीकारात् । न च समवायरूपसंबन्धकल्पना , इदम्=अद्रव्यजात तत्=द्रव्यम् । अनुपधिकं=समवायनिरपेक्षं स्वभावत एव विशिष्यात्-स्वं प्रति विशेष्यं कुर्यात् । स्वयंप्रकारो भवेत् । ननु कथ वैशिष्ट्य संबन्धमन्तरेत्यत्राह दृष्टे इति । उभयोर्विशेष्यविशेषणभावोऽनुभूयते, संबन्ध स्त्वन्यो नोपलभ्यते । न च समवायानिष्टौ एषां द्रव्यात् पार्थक्यमपि मा भूदिति युक्तम्, न च द्रव्ययोर्घटपटयोः पृथग्भूतसंयोगाख्यसंबन्धदर्शनादिहापि संबन्ध्यतिरिक्तसंबन्धानुमानम्, संबन्ध विनैव प्रकारप्रकारिभावदर्शनेन तदसंभवतर्कणायोगात् । अनुभूयमानप्रकारपरित्यागे त्वखिलमपि अपलप्येतेति । अवश्यमेकमपराश्रितमेवावतिष्ठत इति । तर्कसंग्रहेऽपीद वाक्यमस्ति । तत्रास्य सुखप्रवेशिन्यामेतदर्थो विशद । अयुतसिद्धिरिति । यु-मिश्रणामिश्रणयोरिति युतम्=अमिश्रितम् ।

विशेषतोदृष्टं दृष्टमेव । सामान्यतोदृष्टमपि सामान्याकारेण दृष्टमेव । अतो दृष्टानुरोधित्वमनुमानस्यापि । आगमोऽपि व्युत्पत्त्यादिसमये दृष्टमपेक्षते । इत्थं साधनसमये दृष्टानतिलङ्घनमुक्तम् । एवं दूषणसमयेऽपि दूषणमप्यभिधीयमानं, दृष्टानुरोधि चेत्, भवत्येव दूषणम् । न चेत्, दूषणमेव न भवति । व्याघातो हि सर्वदूषणाना सीमाभूमि । स च दृष्टविरुद्धाभिधानेन रूयाप्यते । 'अतीतमस्ति', 'सर्वं मिथ्या', 'माता मे वन्ध्या', 'यावज्जीवमहं मौनी' इत्यादिषु व्याघातवचन दृष्टविरोधोद्घाटनमेव । अतो दर्शनानुरोधानङ्गीकारे सर्वापलापप्रसङ्ग इति ॥ इति अद्रव्यप्रमाणादि ॥ २ ॥

(868) अद्रव्य द्रव्यसिद्धौ, तदुपहिततया तच्च लक्ष्येत ; तस्मात्
एकासिद्धौ द्वयं नेत्यपि न सत् ; उभयान्योन्यवैशिष्ट्यदृष्टेः ।
आधारे द्रव्यशब्दस्तदधिकरणकेऽनाश्रये त्वन्य इत्थं
व्युत्पत्तिर्विश्वदृष्टया ; न तदपलपति स्वर्गकर्णीसुतोऽपि ॥ ३ ॥

अत्र कश्चित् विश्वापलापवादी द्रव्याद्रव्यविभागमप्यपलपति अद्रव्यमिति। द्रव्यसिद्धावेव अद्रव्य सिद्धि , अद्रव्यस्य द्रव्यप्रतियोगिकत्वेन तदसिद्धावसिद्धे । तथा द्रव्यमप्यद्रव्यसिद्धिपूर्वकमेव । अवस्थावद्द्रव्यमिति हि द्रव्य लक्ष्यते । अवस्था चाद्रव्यमेव । तथाच अन्योन्यसापेक्षत्वात् द्रव्यमद्रव्य च द्वयमपि न सिध्यतीति ॥ तदेतदनुभाषितं सर्वापलापहेतुत्वादसदिति दूषयति **न सदिति** । अयमभिसन्धि -किं द्रव्याद्रव्ययोरुपलम्भानुपपत्तिरन्योन्यापेक्षयोच्यते, उत व्यवहारानुपपत्ति ' उभयमपि नास्ति; एकस्मिन्नेव क्षणे विशेषणविशेष्ययोरेकज्ञानग्रहणयोग्ययोर्विशेषणविशेष्यभावेनोपलम्भात् । तदिदमाह **उभायान्योन्यवैशिष्ट्यदृष्टेरिति** । एवं, व्यवहारेऽपि नान्योन्याश्रय । व्युत्पत्त्यायत्तो हि व्यवहार', व्युत्पत्तिश्च द्रव्याद्रव्यशब्दयोर्विशेषणविशेष्यविषययोर्युगपदेव, उपलभ्यमानयोराधाराधेययोरनयोरनुक्रमात् द्रव्याद्रव्यशब्दौ वाचकाविति । आधाराधेयौ च युगपदुपलभ्येते, तच्छब्दौ च युगपदेव व्युत्पद्येते । अतो द्रव्याद्रव्यशब्दयोर्व्युत्पत्तौ व्यवहारे तत्प्रतिपत्तौ च परस्परपौर्वापर्याभावात् न विरोध। तदिदमाह **आधार इति** । **अनाश्रये**-स्वयमाश्रयव्यतिरिक्त इत्यर्थ । इयमेव हि व्युत्पत्ति पामराणामपि व्यवहारे निदानम् । बाला खलु विशेषणविशेष्यभावेन वस्तुस्वरूप युगपदुपलभन्ते । अनादौ च

टी— अभिधितयोः सिद्धि. पृथक्सिद्धि· । अयुतसिद्धिरपृथक्सिद्धिः । विशेषतोदृष्टमिति । अनुमानं द्विविध विशेषतोदृष्टम्, सामान्यतोदृष्टञ्चेति तार्किकोक्तं शास्त्रयोनित्वाधिकरणभाष्ये द्रष्टव्यम् ॥२॥

एकग्रहणस्यान्यापेक्षतयाऽन्योन्याश्रयात् उभयमपि मा भूदिति वादिनं प्रत्याह । स एवमाह- अद्रव्यं द्रव्यसिद्धौ लक्ष्येत । अद्रव्यमित्यस्य द्रव्यभिन्नमित्यर्थ । अतो द्रव्यग्रहणमन्तरा न तद्ग्रहणम्। तच्च=द्रव्यञ्च तदुपहिततया रूपरसादिगुणवत्तयैव गृह्यत इति तदप्यद्रव्यापेक्षमिति । निरस्यति इत्यपि न सदिति । उभयस्य मिथस्संश्लिष्टतया प्रकारप्रकारिभावेनानुभूयमानत्वात् । तत्राधारतया प्रतीतवाची द्रव्यशब्द.=द्रव्यवाची शब्द । तदधिकरणक· अत एवानाश्रय·=आधारभिन्नः, आधेय इति यावत्। तत्र अन्य.=अद्रव्यवाचिशब्द इति युगपदुभयविषयव्युत्पत्तिरपि सर्वसंमता प्रथते । निमिभि· क्षुद्रैर्युद्धादिभि. । इतो विलक्षणः स्वर्गवासी महाचोरोऽस्ति चेत्, सोऽपि नैतदपलपितुं

ससारे पूर्वपूर्वव्यवहारैर्युगपदेव शिक्ष्यन्ते । अन्यथा कथमिव तेषा व्यवहारनियम प्रवृत्तिनियमो वा ? न चान्योन्याश्रयादिविभीषिकेयं लोकव्यवहारनियम निरोद्धुं शक्नोति । एव व्यवहारादेव व्युत्पन्ना पश्चात् वाक्येनापि व्युत्पाद्यन्ते । अतो लोकदृष्टेय व्युत्पत्तिरित्याह व्युत्पत्तिरिति । न चात्यन्ताव्युत्पन्ना शास्त्रैर्व्युत्पाद्यन्ते । अपि तु लोकेनैव व्युत्पन्ना व्युत्पत्तिविशेषपरिपूरणाय शास्त्रेष्वधि कुर्वते । अतो लोकदृष्टविशेषणविशेष्यादिविभागानुसारेण द्रव्याद्रव्यादिविभागपरिकल्पन न्याय्यम् । अन्यथा सर्वापलापवादिन स्वव्याघातादिदोषोपघातेन वादित्वमेव भज्येतेति । न हि वादिन प्रमाणप्रमेयविभागं वाच्यवाचकविभाग वा वादिप्रतिवादिविभाग वा परिहृत्य वादिनो भवन्ति, न च प्रमाणनिरूपणे प्रमेयनिरूपण प्रमेयनिरूपणे प्रमाणनिरूपणमित्यादिक प्रलप्य वा प्रतिपद्य वा तूष्णीमासते । अत सर्वेऽपि भेदा सेना-वन-तारामण्डलादिविभागदर्शनन्यायेन युगपदुपलभ्यन्ते, युगपच्च व्यवह्रियन्ते। केवल वाच क्रमवृत्तित्वात् भावाभावाधाराधेयवाच्यवाचकादिव्यवहारेषु क्रमोपलम्भ । अभावो हि क्वचित् भावपूर्वकोपलम्भेऽपि योग्यदशाया युगपदेवोपलभ्यते , यथा घटसद्भावासद्भाव विशिष्टभूतलयोर्युगपदिन्द्रियसन्निकर्षे केवल घटाभावोल्लेखन घटोल्लेखननान्तरीयकमित्यविनाभावात् प्रति योगिग्रहणसध्रीची प्रतीति । न पुन प्रतियोगिग्रहणस्य पूर्वभावित्वनिर्बन्ध । एव चौपाधिकसम्बन्धाना विशेषणविशेष्यभाव प्रमाणप्रमेयभाव वाच्यवाचकभावादीना निर्वाहाभावेऽप्यन्ततो दूष्यदूषण(क)भावमपि निरोद्धु न शक्नोति दुर्वैतण्डिकः । अतो लक्ष्यलक्षणादिखण्डनचण्डचण्डमारुतो व्याघातशेषफणिमुख सहस्रेण परिपीतो जाठरदहनेन भस्मीभवतीति सर्वमवदातम् । स्वर्गकर्णीसुतोऽपीति । अत्रत्या लुण्टाका शून्यवादिप्रभृतय । अतोऽपि विशिष्टो यद्यस्ति स्वर्गवासी, सोऽपीति भाव ॥ ३ ॥

(१64) सामान्यात्मा विशेषाकृतिरपि यदि न स्वीकृतो धर्मवर्गः,
स्यातां न भ्रान्तिबाधौ; न किमपि कथकाः साधयेयुः स्वसाध्यम् ।

---

सर्वार्थसिद्धितात्पर्यप्रकाशिकायामद्रव्यसरः

नियामक

ॐ

नास्तीत्याशङ्क्याह नचात्यन्ताव्युत्पन्ना इति । व्युत्पन्नाना पुनर्व्युत्पत्ति किमर्थस्यत्राह विशेष परिपूरणायेति । व्युत्पत्तेर्विशेषपूरण नाम अनुगतप्रवृत्तिनिमित्तज्ञानात् वाचकत्वप्रतीतिदार्ढ्यम् ॥ ३ ॥

त्ती— पारयति । कर्णी = चौर्यशास्त्रप्रवर्तकमूलदेवमाता । अत चोरा सव कर्णीसुता । व्युत्पत्ति-विशेषपरिपूरणायेति । दृष्टद्रव्यमात्रे विश्रममनवाप्य परमात्मनि पर्यवसानाय । शरीरादिशब्दाना सर्वजगत्साधारण-नियताधेयत्वविधेयत्वशेषत्वाद्यनुगतधर्मरूपप्रवृत्तिनिमित्तावधारणाय चेत्यर्थ । प्रति क्वचिदिति । क्रमेण व्यवहारकाले इत्यर्थ । योग्यदशायाम् = आधाराधेययोरेकेन्द्रियग्राह्यत्वे । प्रति योगिग्रहणसध्रीची = प्रतियोगिप्रत्यक्षसहिता । सर्वापलापिना वैतण्डिकेन दूष्यदूषणभावस्यापलापा-योगात् तत्रान्योन्याश्रयादिदोष एवमेव परिहार्य इत्याह एवञ्चेति ॥ ३ ॥

एकैकोऽपि धर्म कति-पयसाधर्म्यरूप अन्यवैधर्म्यरूपश्चेति सामान्यविशेषरूप यथा पृथिवीत्वघटत्वादि । एव सामान्य-अनपलपनीयत्वेनोक्तेषु धर्मेषु सामान्यविशेषभावमप्याह सामान्येति ।

**यस्मिन् बाधानवस्थे क्वचन, न खलु तन्नीतिरन्यत्र दृष्टे ;**
**नो चेत्, निश्शेषकुक्षिम्भरिरुपनिपतन् दुस्तरः शून्यपक्षः ॥ ४ ॥**

धर्मधर्मिभावानङ्गीकारे सकललोकव्यवहारविरोध इत्यद्रव्यवर्गस्य सर्वैर्दुरपह्नवत्वं द्रढयति **सामान्यात्मेति** । यदि सामान्यात्मा विशेषाकृतिश्च न स्वीकृतो धर्मवर्गः, सामान्याभावात् भ्रान्त्यभाव ; विशेषाभावात् बाधाभाव । तदुभयाभावे कथकाः वादिनः स्वसाध्यमपि न साधयेयु । एक एव धूमवत्त्वादिको हेतु पक्षसपक्षयोः सामान्यम्, विपक्षाच्च विशेष । इत्थं साधर्म्यवैधर्म्यात्मान सर्वे धर्मा, तानेवावलम्ब्य साध्यसाधनभावो बाध्यबाधकभावश्च प्रवर्तते । अन्यथा मौनमेव शरणं वादिनामिति भाव । ननु यथा द्वितीयसत्तामेदादिपरिकल्पत्यभावेऽपि व्यवहारनिर्वाह, एवं प्रथमसत्तामेदादिपरित्यागेऽपि व्यवहारनिर्वाह स्यात्, तथा च सर्वधर्मोच्छेद इति कश्चिदाह । तं प्रतिक्षिपति **यस्मिन्निति** । अयमर्थ — द्वितीयसत्तामेदादिकल्पने अनुपलम्भस्तावत् बाधकः ; अनवस्था च । **तन्नीतिरन्यत्र दृष्टे** प्रत्यक्षदृष्टे प्रथमसत्तामेदादौ न भवति, अनुपलम्भबाधाभावात्, अनवस्थाप्रसञ्जकत्वाभावाच्च । सजातीयापेक्षायामेवानवस्था, न तूपलब्धस्य प्रथमस्यापि स्वीकारे । अत प्रथमधर्मापलाप कर्तुं न शक्यत इत्यर्थ । यस्मिन् क्वचन द्वितीयसत्तादौ बाधानवस्थे भवत, न तन्नीतिरन्यत्र दृष्टे प्रमाणप्रतिपन्ने प्रथमसत्तादावपीति शब्दयोजना । इत्थ प्रथमस्यापि धर्मस्यानङ्गीकारेण सर्वधर्माणा सावृतत्वकल्पने धर्म्यपलापोऽपि तेनैव सावृतत्वेन कल्पयितु शक्यत इति शून्यवाद एव परिशिष्येतेत्याह **नो चेदिति**॥४

(865) **चादीनां वृत्तियोग्य यदुत पदविदोऽसत्त्वमद्रव्यमाहुः**
**नैतावत् तन्मृषात्व गमयति ; न च तद्बाधक किंचिदस्ति ।**

---

ल०टी॰ तदुभयाभाव इति । सामान्यविशेषधर्माभाव इत्यर्थः । यथा द्वितीयसत्तामेदेति । सत्तायां सत्तान्तराभावे, मेदेन(?)मेदान्तराभावेऽपि सत्तायां सदिति व्यवहारो मेदेन(?)भिन्न इति व्यवहार इत्यर्थः । ॥ ४ ॥

वी– धर्मः कश्चित्, प्रतिनियतो धर्मश्चान्य इति धर्ममेदोऽपि वाच्यः । एतदनिष्टौ, 'सामान्यमात्रज्ञानात् अन्यदीयविशेषमादाय भ्रान्तिः, स्वकीयविशेषग्रहेण तद्बाध.' इति कथं स्यात् । कतिपयधर्मास्वीकारे कारणमाह यस्मिन्निति । यस्मिन् क्वचन= किञ्चिद्धर्मे स्वीकृते बाधदोषः अनवस्थादोषश्च स धर्मो नेष्यते । तावता तन्नीति.=तस्य न्यायः अन्यत्र तद्भिन्ने दृष्टे= अनुभूयमाने धर्मे न खलु= न हि भवितुमर्हति । यथा सत्ता अस्तीति प्रयोगेऽपि सत्तायां सत्ता नेष्यते । पृथगदर्शनात् । स्वपरनिर्वाहकतयोपपत्तेश्च । अन्यथा अनवस्थापाताच्च। एवं घटमेदे पटमेद इत्युक्तौ न मेदाधिकरणकमेदान्तरस्वीकारः। तावता दृष्टे अनुभूयमानस्य प्रथमस्य सत्त्वस्य मेदस्य च कथं बाध । एवं गोत्वातिरिक्तो भावरूपो मेदः, संस्थानातिरिक्ता गोत्वादिरूपा जातिरित्यादि मा भूत्। एकेनैव सर्वव्यवहारनिर्वाहात् । तावता संस्थानस्याप्यपलापः कथम् । अन्यथा स्वलक्षणरूपधर्मिसिद्धिरपि न स्यादित्याह नो चेदिति ॥ ४ ॥

अद्रव्यस्य मिथ्यात्वं शाब्दिकसंमतमिति शंका परिहरति चादीनामिति । "चादयोऽसत्त्वे" इति असत्त्वार्थकत्व चादीनामुक्तम् । सत्त्वं द्रव्यमिति तदिष्टम् । अद्रव्यमसत्त्वमिति तत्र सिध्यति ।

**तात्पर्यं चान्यदत्र स्फुटविदितम्; अतस्तत्र सत्त्वे(त्ये?)तरत्वात्**
**अन्यः कश्चिन्नञर्थः; परमिह निपुणैर्द्योतकत्वादि चिन्त्यम् ॥ ५ ॥**

ननु, 'सत्त्वं द्रव्यमसत्त्वमद्रव्यम्' इति पदविद्भिरभिहितत्वात् अद्रव्याणां मृषात्वमिति यदि कश्चिन्मनुते, तदनूद्य प्रतिक्षिपति **चादीनामिति**। कुत इत्यत आह **न च तदिति**। बाध एव ह्यसत्त्वे कारणम्, न च चाद्यर्थानां समुच्चयादीनां बाधोऽस्ति। तदभावेऽपि तन्मिथ्यात्वे सर्वपदार्थानां मिथ्यात्वं स्यादिति भावः। कस्तर्हि पदविदां वाक्याभिप्राय इत्यत्राह **तात्पर्यमिति**। किं तत्तात्पर्यमित्यत्र सामान्येन तात्पर्यार्थमाह **अत इति**। प्रमाणबलात् सत्त्वे(त्ये)तरत्वादन्यत्रैव तात्पर्यमिति सामान्यतो निर्णीतमित्यर्थः। तात्पर्यविशेषं प्रकाशयति **परमिहेति**। **द्योतकत्वादि चिन्त्यम्**—चादीनां द्योतकत्वम् अन्येषां वाचकत्वम्, यत् द्योत्यं तस्य विशेषणसम्बन्धानर्हत्वम्, यत् वाच्यं तस्य विशेषणसम्बन्धार्हत्वमित्यादिविभागो यथाप्रमाणं चिन्तनीयः। अतोऽसत्त्वशब्दकथनमात्रादद्रव्याणां मिथ्यात्वप्रसङ्गाभाव इत्यर्थः ॥ ५ ॥

**(366) आहुर्द्रव्येषु धर्मान् कतिचन गुणपर्यायवैषम्यभिन्नान्;**
**पर्यायाणां गुणत्वे स्थितवति सहजागन्तुतामात्रमेतत्।**

---

पृ— सत्त्वेतरत्वादन्यत्र= प्रमाणसम्बन्धार्हत्वेतरत्वादन्यत्रेत्यर्थः। द्योतकत्वादीत्यत्र आदि-शब्देन द्योत्यस्य विशेषणसम्बन्धानर्हत्वं गृह्यत इत्यभिप्रायेणाह चादीनां द्योतकत्वमित्यादि ॥ ५ ॥
श्री असत्त्वं मिथ्यैवेति शङ्का। सत्तियोग्य-वाच्यम्। पदविदः वैयाकरणाः। यत् अद्रव्यमसत्त्वपदेनाऽऽह्लु, तावन्मात्रं तस्य मृषात्वसाधकं न भवति। लोके बाधितं हि मिथ्या भवति, न चाद्रव्याणां प्रागुक्तानां धर्माणां बाधकं किञ्चिदस्ति। वस्तुतः अत्र= व्याकरणे अन्यत् तात्पर्यं स्फुटम्। लिंगसंख्यान्वयि यत् तत् सत्त्वमिति द्रव्यमिति तैः परिभावितम्। चकारस्य समुच्चयोऽर्थः। चकारेण तदुक्तौ लिङ्गसंख्यारूपविशेषणान्वयाभावात् तस्यासत्त्वता। समुच्चय इति शब्देनोक्तौ तस्यैव सत्त्वता। लिंगसंख्यान्वयात्। अतस्तत्र सद्भिन्नत्वं सत्यभिन्नत्वमितीदमसत्त्वनञर्थः। तथा असत्त्वं न सत्त्वम्। सत्त्वं लिंगसंख्यान्वयि तदितरत्वमित्यपि नार्थः। कदाचित् लिंगसंख्यान्वयात् भिन्नत्वायोगात्। अतः असत्त्वे= लिंगसंख्यानन्वयदशायां समुच्चयादिश्चार्यर्थ इति वक्तव्यम्। अतो नञर्थो नेतरत्वम्, किं तु संसर्गाभावः। तदनुगुणतया च सत्त्वशब्दार्थोऽपि न द्रव्यम् किं तु लिंगसंख्यान्वयरूपधर्मः। श्लोके सत्त्वेतरत्वादित्यत्र सत्येतरत्वादिति पाठश्चेत्, मिथ्यात्वखण्डनं स्पष्टं कृतं स्यात्। स्थितोऽपि पाठः समन्वितः कृतः। समुच्चयादिः चकाराद्यर्थो वा चकारादिद्योत्यो वेति प्रकृतोपयोगितया शङ्कायामाह परमिति। लिंगसंख्यानन्वयोक्तिः द्योतकत्वाभिप्रायेणेति केचित्। वाच्यत्वात् तत्र तदन्वयप्रसक्तौ तन्निषेध इति परे। उपसर्गाणां द्योतकत्वम्। तच्च लक्षणातात्पर्यग्राहकत्वम्। अन्वादिरुपसर्गः भूप्रभृतिधातोः भोगादि-रूपार्थलक्षणां गमयतीति। चादयस्तु वाचका एव। चकाराद्यप्रयोगे तु तदर्थलाभोऽन्यत्र पदे लक्षणयेत्यादिकमन्यत् ॥ विशेषणसम्बन्धानर्हत्वमिति। समुच्चयः शोभन इत्यत्र, 'चः शोभनः' इत्यप्रयोगात्। विशेषणसम्बन्धानर्हत्वप्रतीत्या द्योत्यत्वमेव युक्तमिति कश्चित् पक्षः। अग्नये च प्रजापतये चेत्यादौ चकारार्थस्य प्रातिपदिकार्थ एवान्वयात् चकारोपरि विभक्तिविशेषानवगमात् विशेषणे विभक्त्यनिर्धारणात् शोभनादिपदाप्रयोगः अथापि वाच्य एवेति पक्षान्तरम् ॥ ५ ॥
जैनबौद्धपक्षयोरपि शोधने एवं धर्मत्वसिद्धिरित्याह आहुरिति। जैना आहुः—धर्मा द्विधा, गुणाः पर्यायाश्चेति। पर्यायाः= अवस्थाः। कादाचित्कतद्विलक्षणाः स्वभावसिद्धा गुणा इति। वस्तुतः

**मिथ्याभूतान् विकारान् अभिदधति परे सत्यरूपान् स्वभावान्**
**तान् एकद्व्यादिरूपान्; अभिदधतु कथं निर्गुणानां क्षणानाम् ॥ ६ ॥**

अत्र क्षपणका गुणपर्यायभेदेन गुणानेव विभजन्ते; तत् न युक्तमित्याह **आहुरिति** । **सहजागन्तुतामात्रमेतदिति** । सहजा धर्मा **गुणा** इत्युच्यन्ते, **आगन्तवः** पर्याया इति क्षपणकपरिभाषा । गुणत्वे तुल्ये किमनेन विशेषकथनेनेत्यर्थः । **बौद्धास्तु** केचित् सर्वानव्यवस्थाभेदान् गुणशब्दाभिधेयान् मिथ्याभूतान् अभिदधति । तेष्वेवापरे सत्यभूतान् स्वभावांस्तान् [च] **एकद्व्यादिरूपान्** रूपरसगन्धस्पर्शस्वभावा पृथिवी, रूपरसस्पर्शस्वभावं जलम्, रूपस्पर्शस्वभावं तेजः, स्पर्शस्वभावो वायुरिति । एतत् सर्वं निर्गुणानां न घटत इत्याह **अभिदधत्विति** । आरोपो हि सगुणेष्वेव; तिरोहितातिरोहितस्वरूपसापेक्षत्वात् । रूपरसादीनां स्वभावमात्रत्वे धर्मधर्मिणोर्भिन्नेन्द्रियग्राह्यत्वविरोधात्, भिन्नेन्द्रियग्राह्याणां रूपरसादीनां बहूनां स्वभावानामेकवस्त्वात्मकत्वे बहुविरोधसंकलनाच्च सगुणत्वमेव न्याय्यमिति द्रव्याद्रव्यविभागोऽनतिलङ्घनीय इत्यर्थः ॥ ६ ॥

(867) **बाह्यार्थे बौद्धलोकाः किल जननजराभङ्गरूपान् विकारान्**
**आद्यन्तौ चित्तचैत्तेष्वपि जगदुरमी(रिमे) तत्स्वरूपं न वा स्युः ।**
**पूर्वस्मिन् न क्रमः स्यात्; उपरि तु न कथं तस्य धर्मास्त एते?**
**तन्मिथ्यात्वे तु नित्यं निखिलमपि भवेत्; तुच्छमेवान्यदा (थवा?) स्यात्॥७॥**

**बाह्यार्थ** इति । अत्र केचित् बौद्धाभासा बाह्यार्थेषु जननजराभङ्गरूपान् विकारान् आहुः। चित्तचैत्तेषु जननभङ्गावेव द्वौ विकारौ । तत्र विकल्पनीयम्—एतद्विकारजातं वस्तुनः स्वरूपं वा धर्मो वा ? तत्र **पूर्वस्मिन्** पक्षे जननादीनां क्रम एव न स्यात् । न हि स्वरूपं क्रमेण भवति; स्वरूपत्वव्याघातात् । उत्तरत्र धर्मधर्मिभावं स्वयमेव वदसीत्याह **उपरीति**। तर्हि जननादयो मिथ्येति चेत्, नेत्याह **तन्मिथ्यात्व**

---

ग्र— अन्येषां वाच्यत्वादिप्रतिकोटितया दर्शितं बाह्यार्थ इति। जननादिमिथ्यात्वे नित्यत्वतुच्छत्वान्यतरप्रसङ्गस्य संवादतया उदाहृते, 'नित्यं सत्त्वम्' इत्यादिश्लोके अहेतुत्वे नित्यत्वादिप्रसञ्जित[त्व?]-

वी— पर्यायाणामपि द्रव्याश्रितत्वरूपगुणत्वमस्ति । सहजगुणत्वाभावमात्रेण आगन्तुकत्वेन तथा पृथक्करणम् । बौद्धपक्षमाह मिथ्येति । परे इति पदे, परे च परे च परे इत्येकशेषो ग्राह्यः । एके परे रूपादीनां विकारत्वं मिथ्यात्वञ्चाभिदधति । अन्ये तु परे तान् स्वभावभूतान् सत्यान् अभिदधति । तत्र पृथिवी रूपरसस्पर्शगन्धस्वभावा, जलं त्रिस्वभावमित्यादिना विभिन्नानेकस्वभावत्वकथनं धर्माणां भेदे सत्येव घटते । निर्गुणत्वे क्षणरूपेषु द्रव्येषु नानास्वभावत्वं कालभेदेनापि दुर्वचम्, किमुत एकदेति। श्लोके तानेकद्व्यादिरूपानित्यस्य अभिदधतीत्यत्रेव अभिदधतु इत्युपरितनवाक्येऽप्यन्वयः॥६

कतिपयधर्मविषये बौद्धाभासोक्तप्रक्रियापरामर्शेऽपि धर्मत्वसिद्धिरित्याह बाह्ये इति । लोकाः=बालाः। जन्म-जरा-नाश इति विकारत्रयं बाह्ये। आन्तरे निरवयवतया जराप्रसक्त्यभावात् शिष्टद्वयम्। अमी (इमे) विकाराः धर्मिस्वरूपमेव वा स्वरूपातिरिक्ता वा। पूर्वस्मिन् पक्षे स्वरूपस्य सर्वदा सत्त्वात् एषाञ्च क्रमिकत्वात् कथमन्वयम्। उपरि तु =उत्तरस्मिन् पक्षे तु। ते एते तस्य धर्मा एव भवन्ति। ननु धर्माणां मिथ्यात्वमित्यत्राह तदिति। अविशेषात् धर्मधर्मिरूपं वस्तुमिथ्यात्वमेव, न चेत्, सर्व-

इति । जननादीनां मिथ्यात्वे तस्य वस्तुनो नित्यत्वमेव स्यात्; यदि वा तुच्छत्वमिति । यथाऽऽहुः—
"नित्यं सत्त्वमसत्त्वं वाऽहेतोरन्यानपेक्षणात् । अपेक्षातो हि भावानां कादाचित्कत्वसंभवः ॥" इति ।
अत्र अहेतोरित्युपलक्षणम्, अजननस्येत्यर्थः; हेतोरपि जनन एवोपयोगात् । अन्यथा जननादीनां
मिथ्यात्वे सति एकदा नित्यत्वम्; अन्यदा तुच्छत्वमेवेत्यर्थः । "स्यादेव न स्यादेव वा नतु कदाचित्
स्यात्"(न्या.कु.१) इति ह्याहुः ॥ इति अद्रव्यवर्गस्य सर्वैर्दुरपह्नवत्वम् ॥ ७ ॥

(368) आदावैक्येन बुद्धिर्द्वयमपि मिलितं गृह्णती व्यक्तिजात्योः
भेदाभेदाविरोधं दिशति यदि, न तत्; तद्विशिष्टैक्यबुद्धेः ।
इत्थंत्वेदंत्वशून्यं न हि किमपि कदाऽप्यर्भकोऽपि प्रतीयात्
तद्वैशिष्ट्यप्रतीतिर्निरुपधिरपृथक्सिद्धिमात्रेण सिध्येत् ॥ ८ ॥

एवमद्रव्यं साधयित्वा द्रव्याद्रव्ययोर्भेदाभेदवादस्याप्रामाणिकत्वमाह आदाविति । प्रथमपिण्ड-
ग्रहणेषु भेदेनाप्रत्ययात्, मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यात्, सहोपलम्भनियमात्, एकशब्दानु-
विद्धप्रत्ययाच्च भेदाभेदं समर्थयन्ते । तत्र भेदाभेदयोः किं प्रत्यक्षगम्यत्वम्, उतानुमानगम्यत्वमिति विकल्प्य
प्रत्यक्षगम्यत्वपक्षमनुवदति । गौरयमित्यैक्येन बुद्धिरुत्पद्यमाना मिलितामेव जातिं व्यक्तिं च गृह्णती
भेदाभेदयोर्विरोधमुपशमयतीति । तन्निराचष्टे न तदिति । तत्र हेतुमाह तद्विशिष्टेति । तत् विवृणोति
इत्थंत्वेति । इदमित्थमिति हि सर्वा प्रतीतिरुपजायते । तत्रेदमंशो धर्मी; इत्थमंशो धर्मः । अर्भकोऽपीति ।

---

लघु— प्रतीतेः कथं संवादत्वमित्यत्राह अत्राहेतोरिति । कथमहेतुकत्वेन जननरहितस्य उपलक्षण-
मित्यत्राह हेतोरपीति । अन्यदा इत्यनेन एकदा इत्यस्य आक्षेपमभिप्रेत्य एकदा नित्यत्वमित्युक्तम् ॥७

व्याँ— सत्त्वमेवेति । तुच्छमेवेति । शून्यवाद एवेत्यर्थः । यथाऽऽहुरिति । अहेतोः—निर्हेतुकस्य नित्यं
सत्त्वमसत्त्वं वा । कारणानपेक्षं यत् सत्, तत् नित्यं सत्, कारणानपेक्षं यदसत् तत् नित्यासदिति ।
नन्वत्र जननादिमिथ्यात्वे इति नोक्तमित्यत्राह उपलक्षणमिति । अकस्मात् भवतीति चार्वाकः । तत्र
किं हेतुनिषेधः, उत भूतिनिषेध इति द्वेधा विकल्प्य हेतुभूतिनिषेधो नेत्युक्तं कुसुमाञ्जलौ । तथा
भूतिनिषेधस्यापि संग्रहार्थमिदम् । अथापि अजननस्यापीति अपिशब्दाप्रयोगः कुत इत्यत्राह हेतो-
रपि जनन एवोपयोगादिति । एकदा= सत्त्वपक्षे । अन्यदा= असत्त्वपक्षे ॥ ७ ॥

धर्मधर्मिणोर्भेदाभेदस्य प्रत्यक्षसिद्धत्वं निराकरोति आदाविति । आदौ= प्रथमपिण्डग्रहणे
ऐक्येन बुद्धिः= इयं गौरिति समानाधिकरणव्यवहारप्रयोजकप्रतीतिः । दिशति यदीत्याक्षेपं प्रदर्श्य
निरस्यति नेति । गोत्वविशिष्टप्रतीतिरेवानुभवसिद्धा, इदं गोत्वमिति वा व्यक्तिरियमिति वा
गौर्गोत्वमिति वा न हि प्रतीतिः । प्रतीतिमूलको व्यवहारः प्रतीतिविषयं वैशिष्ट्यं विहाय जाति-
व्यक्त्योरैक्यं कथं गमयेदिति भावः । इदमेवोपपादयति इत्थंत्वेति । ननु वैशिष्ट्यमिति यदि किञ्चित्
प्रतीयते, कथं तर्हि संबन्धापलाप इत्यत्राह तद्वैशिष्ट्येति । समवायं संबन्धं प्रत्यक्षविषयं मन्यन्ते
नैयायिकाः; न तु वैशेषिकाः । अत एव समवायस्यानुमानात् सिद्धिरेव सर्वोक्ता । संबन्धाप्रत्यक्षत्वेऽपि
विशिष्टप्रत्ययो भवितुमर्हतीति तदिष्टम् । एतद्विस्तरेऽस्मदीये वैशेषिकरसायने(7-2-27)द्रष्टव्यम् । अतः
इदमित्थमिति प्रतीतिः प्रकारप्रकारिद्वयविषयकप्रत्यक्षरूपा निरुपधिः= समवायरूपोपाध्यग्राहिणी ।

बालिशादपि बालिशो भवानित्यर्थः । कथं तर्ह्यत्यन्तभिन्नयोर्धर्मधर्मिणोर्वैशिष्ट्यप्रतीतिः ; समवायाङ्गीकारे चापसिद्धान्तप्रसङ्गादित्याशङ्क्याह तदिति । तत् तस्मात् । **निरुपधिः** उपाधित्वेन स्वीकृतसमवायाभावेऽपि स्वाभाविकापृथक्सिद्धिमात्रेण वैशिष्ट्यप्रतीतिः सिध्येदिति ॥ **इति प्रत्यक्षभेदाभेदभङ्गः** ॥८॥

(369) **व्यक्त्या जातेरभेदं यदि वदसि पृथक्सिद्ध्यभावादिलिङ्गैः**

**भेदाभावोऽक्षबाध्यः ; तव च न हि मतो, नान्यथाऽत्रास्य युक्तिः ।**

**धर्म्यैक्यादेकवाक् स्यात् ; न तु भवति ततो धर्मधर्म्यैक्यबुद्धिः ;**

**तद्बोधश्चाप्युपाधिः ; न स इह भवता दृश्य इत्यभ्युपेते ॥ ९ ॥**

लिङ्गादपि भेदाभेदवादो न सिध्यतीति वक्तुं परोक्तानुमानान्यनुवदति **व्यक्त्येति** । **पृथक्सिद्ध्यभावादिलिङ्गैः**—सहोपलम्भनियमादिलिङ्गैः । धर्मधर्मिणोरभेदः कालात्ययापदिष्ट इत्याह **भेदाभाव** इति । तवाप्ययं दोषोऽभिमत इत्याह **तव चेति** । अन्यथा सहोपलब्धिनियमयुक्तिरेव न स्यादित्याह **नान्यथेति** । साहित्यं भेद एव नियतम्, अभेदगन्धमपि न सहत इति भावः । कथं तर्हि मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यमित्याशङ्क्य सामानाधिकरण्यलक्षणानुरोधेनैव परिहरति **धर्म्यैक्यादिति** । न पुनः सामानाधिकरण्यात् धर्मधर्मिणोरैक्यबुद्धिरित्याह **न तु भवतीति** । यत्र पुनरैक्यं तत्र तद्बुद्धिरेव उपाधिः । **न स इह**=बुद्धिरूपोपाधिर्नास्तीत्यर्थः। नन्वदृश्यविषये बुद्धिमन्तरेणाप्यर्थोऽस्ति, तत् कथं बुद्ध्यभावादर्थाभाव इत्याशङ्क्याह **भवता दृश्य इत्यभ्युपेत** इति। दृश्यत्वेनैव हि भवता धर्मधर्मिणावुभावपि परिगृह्येते । तथाच धर्मधर्मिणोरैक्यमपि यद्यस्ति, योग्यत्वादुपलभ्येत ; न चोपलभ्यते, तस्मान्नास्ति ॥ एतेनैवैकशब्दानुविद्धप्रत्ययोऽपि निरस्तः ; एको दण्डीतिवत् एकशब्दस्य विशिष्टविषयत्वादिति ॥ **इति अनुमेयभेदाभेदभङ्गः** ॥ ९ ॥

(370) **सत्त्वाद्यैकान्तमाहुर्विमतमितरवत् केऽपि तत् धीविरुद्धं ;**

**न ह्यताऽऽकारभेदात् परिहृतिरनवस्थानदोषप्रसङ्गात् ।**

**स्व्याशरोक्तिचर्यासमयनियतयोऽप्येवमेवाऽऽकुलाः स्युः ;**

**दृष्टान्तेऽपि ह्युपाधिद्वयवति नियतः स्थौल्यसौक्ष्म्यादियोगः ॥ १० ॥**

---

श्री— अपृथक्सिद्धिमात्रेण–धर्मधर्मिणोरनाश्रितत्वानाधारत्वपरिहारेण स्वरूपमात्रेण सिध्येदिति ॥८॥

अथ भेदाभेदानुमानं दूषयति व्यक्त्येति । पृथक्सिद्ध्यभावोऽपृथक्सिद्धिः आदिना पूर्वश्लोकवृत्तिदर्शितानां ग्रहणम् । सर्वमिदं प्रथमसर एव विस्तृतम् । नान्यथेति । अन्यथा भेदस्याभावे सहोपलम्भनियमरूपयुक्तिर्न भवति । या तु एकवाक्=एकविषयकवाक्यं समानाधिकरणवाक्यं सा गवादिपदानां गोत्वविशिष्टव्यक्तिपरतया व्यक्त्यैक्यमादाय निर्वाहेन। ऐक्यसद्भावे उपाधिः=नियामकः ऐक्यविषयकबोध एव । सः=ऐक्यबोधः इह=गोगोत्वादिधर्मिधर्मविषये नास्ति । दृश्य इत्यभ्युपेते धर्मे धर्मिणि चैक्यमपि हि दृश्यमेव भवेत्। यतो न बोधः, अतो नैक्यमित्येव मन्तव्यम् ॥९॥

भेदाभेदविषये जैनोक्तं निरस्यति सत्त्वादिति । विमतं=विवादास्पदं जातिव्यक्त्यादि सर्वमनेकान्तं=भेदाभेदवत् सत्त्वात् घटाकाशादिपदार्थवदित्याहुः । तत् धीविरुद्धम् । भेदाभेदयोः

अत्रानेकान्तवादी प्रत्यवतिष्ठते सत्त्वादिति । सर्वमनेकान्त सत्त्वात् घटाकाशमहाकाशवदिति । तत् प्रतीतिविरुद्धमित्याह **तद्धीविरुद्धमिति** । 'सामान्याकारेणाभेद , व्यक्त्याकारेण भेद ' इति विरोध परिहाराम इत्याशङ्क्य निराकरोति **नहीति** । कुत इत्यत आह **अनवस्थानेति** । व्यक्तीनामभेदनिर्वाहार्थं जाति परिगृह्यते । जातिव्यक्त्योरत्यन्तविरुद्धस्वभावयोरभेदनिर्वाहार्थं धर्मान्तरस्वीकारेऽनवस्था । अस्वीकारे विरुद्धाकारेण प्रतिभासमानयो कथमभेद ? । उक्तार्थबाधकान् अनिष्टप्रसङ्गान् आह **स्वव्यापा रेति** । सर्वत्रानेकान्तवादे व्यापारनियमो व्यवहारनियमस्सिद्धान्तनियम इत्यादयस्सर्वे नियमा व्याकुली भवेयु । आकाशेऽपि घटकरकाद्यवच्छेदकभेदेनैव स्थूलसूक्ष्मादिव्यवहार । तत्रोपाधीना भिन्नत्वमेव, उपाधि मत पुनरभिन्नत्वमेव , केवलमुपाधिगतो भेद उपाधिमत्पर्यन्तमुपाधिद्वारेण व्यवह्रियत इति न विरोध ॥

**इति अनेकान्तानुमानभङ्गः ॥ १० ॥**

**(371) सिद्धे वस्तुन्यशेषैः स्वमतमुभयथा(था) वर्ण्यते तत्रतत्र ;**
**स्यादर्थस्यैकरूप्ये कथमिदमिति चेत्, तत्र भिन्नाशयोक्तिः ।**
**मन्तव्या वैभवोक्तिः क्वचिदनभिमते ; संशयोक्तिः क्वचिद्वा**
**भागद्वैतान्नृसिंहप्रभृतिषु घटते चित्रसंस्थानयोगः ॥ ११ ॥**

कथ तर्ह्यनेकान्ताभावे सर्वैरपि वादिभिरेकस्मिन् सिद्धान्ते पक्षद्वयोपवर्णन क्रियते ? यथा स्मृतेर्याथार्थ्यमयाथार्थ्यं चेति न्यायवादिन । एव तेषुतेषु सिद्धान्तेषु मतभेदोपवर्णन दृष्टम् । यथा भवन्त एवान्विताभिधानमभिहितान्वय चाभिदधते इत्याशङ्कते **सिद्ध** इत्यादिना । परिहरति **तत्रेति** । तत्र हेतुमाह **भिन्नाशयोक्तेरिति** । तत्तच्छास्त्रप्रवक्तृणामाशयभेदेन पक्षभेदोपवर्णन न्याय्यमित्यर्थ । अस्मिन्नर्थे परिहारान्तरमप्याह **मन्तव्येति** । एकस्यैव वक्तु क्वचिद्वैभवोक्ति , क्वचित् परमार्थोक्तिरिति । तृतीयमपि परिहारमाह **संशयोक्तिरिति** । अर्थानवधारणेन वादिभिस्सभावितकोटिद्वयोपादानमिति ।

---

र्थ— विरोधात् । आकारभेदादेवाविरोधो जैनैरप्यभीष्ट । जात्यात्मनाऽभेद व्यक्त्यात्मना च भेद इति ह्युक्तम् । जातिव्यक्त्योर्भेदाभेदावपि आकारभेदादेव वक्तव्यौ । तत्तदाकारस्य जात्यादेश्च भेदा-भेदनिर्वाहायाकारान्तरग्रहणादनवस्था । किञ्च सर्वाभेदे स्वव्यापारभूता ये वाक्कायमनोव्यापारा उक्ति चर्या समया पठनगमनचिन्तनादय ,तद्विषयव्यवस्था भज्येरन्। घटाकाशादिदृष्टान्तोऽप्ययुक्त , तत्रापि घटाकाशे सौक्ष्म्ययोग महाकाशे स्थौल्ययोगश्चोपाधिवैलक्षण्यात् नियतोऽस्ति। तथा च महत्त्वमेवाऽऽकाशे । सौक्ष्म्य तु घटादाविति भाव्यम्। अत साध्यविकलो दृष्टान्त ॥ १० ॥

क्वचिदुभयस्वीकारो न विरुद्धद्वयसाधक इत्याह सिद्धे इति । क्रियाया विकल्पस्तु युज्यते। न सिद्धे वस्तुनि । स्मृति प्रमितिरिति वदद्भिरेव स्मृतिर्न प्रमितिरित्यप्युच्यते । तत् कथमिति चेत्— तत्र भिन्नाशयोक्ति । यथार्थत्वरूपप्रमितित्वमस्ति अज्ञातार्थग्राहित्वरूपप्रमितित्व नास्तीति । तत्र सर्वत्राकाशे नीरूप नभ इति क्वचिदुक्ति , नील नभ इति चान्यत्र त्रिवृत्करणमादायोक्ति । तत्र सर्वत्राकाशे नेत्यायोगात् वैभववाद । क्वचिदन्विताभिधानमिति, क्वचिदभिहितान्वय इति । तत्रानिर्धारणात्। अन्यद्वा, कृत्स्नप्रमाणानुपलम्भात् 'यतोदासि द्विधा वा समगणि' इत्यत्र विवक्षित ग्राह्यम्॥ ननु विरुद्धसमावेशो लक्ष्यते नरत्वसिंहत्वयोरेकत्र दर्शनात्। तत्राह भागेति। नरावयवभाग सिंहावयव-

अतो नानेकान्तवादप्रसङ्गः ॥ कथं तर्हि नृसिंहादिरूपेषु विरुद्धाकार इति चेत्, अंशभेदादविरोध इत्याह भागद्वैतादिति ॥ **इति आप्तोक्तानेकान्तनिर्वाहः ॥ ११ ॥**

**(372) स्यादस्ति; स्याच्च नास्ति; द्वितयम्; अनुभयं; स्यात्त्रिमिश्रान्तिमं त्रिः;**
**सैषोक्ता सप्तभङ्गी जिनसमय(यि?)जडैर्द्रव्यपर्यायवर्गे ।**
**इष्टां सार्वत्रिकीं तां स्वपरमतकथातत्फलादौ विवक्षन्**
**कक्षीकुर्वीत धूतः कथकपरिषदा कां दिशं कान्दिशीकः ॥ १२ ॥**

इत्थमनेकान्तवादप्रतिक्षेपमसहमानोऽनेकान्तवादी **सप्तभङ्गीं** पुरस्कुरुते । 'स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादस्तिनास्तिविलक्षणम्, अस्ति स्यादस्तिनास्तिविलक्षणम्, नास्ति स्यादस्तिनास्तिविलक्षणम्, अस्ति च नास्ति च स्यादस्तिनास्तिविलक्षणम्' इति सप्तभङ्ग्या संवलितमेव विश्वमिति । **द्रव्यं** हि वस्तुस्वरूपम् । **पर्याय**श्चागन्तुकधर्मः । द्रव्यपर्यायात्मना सदसद्रूपे च जगति सर्वमपि रूपमन्वयव्यतिरेकाभ्यां संघटत इति । तदिदमनुभाषते **स्यादस्तीति** । **स्यात्त्रिमिश्रान्तिमं त्रिरिति** । **अन्तिमम्** अनुभयं **त्रिभिः** स्यादस्तीत्यादिभिस्त्रिभिः प्रत्येकमन्वितमित्यर्थः । अस्तिनास्तिविलक्षणं प्रत्येकं स्यादस्तीत्यादिभिस्त्रिभिरन्वितमिति पक्षत्रयम्। पूर्वं चत्वारः पक्षाः। अतः सप्तभङ्गी। **सैषा** सप्तभङ्गी द्रव्यपर्यायवर्गेऽनेकान्तवादिभिरुक्ता। **जिनसमय(यि?)जडैरिति** । अस्यार्थस्य उपक्षेप एव वक्तॄणां जाड्यं प्रकटयतीत्यर्थः। अत्रोत्तरमाह **इष्टामिति** । अनियतार्थोपपादनस्वभावामेनां सप्तभङ्गीं विवक्षन् परस्परविरुद्धभाषणेन विद्वद्भिर्निष्कासितः शुष्कतर्कवादी **कान्दिशीकः** भयद्रुतः **कां दिशं कक्षीकुर्वीत** । न कांचिदपि दिशं प्राप्नुयादित्यर्थः। अनियत(ति?)वादिनां हि, स्वपक्ष एव परपक्षः, दूषणमेव भूषणम्, विजय एव पराजयः,

---

ळी— भागश्च तत्र विभिन्न एवेति न तयोः सामानाधिकरण्यमिति ॥ ११ ॥

भेदाभेदमात्रं भाट्टभास्करादिभिः कण्ठोक्तम्। सत्त्वासत्त्व-नित्यत्वानित्यत्वादिद्वन्द्वान्यप्यादायानैकान्त्यमाहुर्जैनाः। न केवलं धर्मद्वयम्; सप्त भंगास्तैः परिकल्पिताः। सप्तभंगीं सर्वत्र ते समनुगमयन्ति । तामाह स्यादिति । अत्र अस्तीत्यादिस्थाने, स्यान्नित्यम्, स्यादनित्यम् इति नित्यानित्यपदं तथा स्याद्भिन्नम्, स्यादभिन्नम्, स्यादेकं स्यादनेकमित्येवं प्रयोक्तव्यम्। स्यादस्ति इति सत्त्वं प्रथमम्। स्यान्नास्तीति असत्त्वं द्वितीयम्; द्वितयम् = स्यादस्ति च नास्ति चेति सत्त्वासत्त्वं तृतीयम् । अनुभयम् सदसद्विलक्षणं सदसदनिर्वचनीयम् अवक्तव्यमित्येवमुच्यमानम् अवक्तव्यत्वं चतुर्थम्। अन्तिमम् = अवक्तव्यमित्येतत् त्रिः-वारत्रयं स्यात्;त्रिमिश्र-स्यादस्ति नास्ति अस्तिचनास्तिच इति पूर्वोक्तैः स्यात्पद-तदन्यपदरूपैस्त्रिभिः महितश्च । स्यादस्ति चानुभयश्च । स्यान्नास्ति चानुभयश्च। स्यादस्ति च नास्ति चानुभयश्चेति तत्क्रमः। एवं सप्तभंगी जिनसमये जिनसिद्धान्ते प्रविष्टैर्जडैः। जिनसमयिजडैरिति पाठो वा। द्रव्यपर्यायवर्गे = द्रव्यात्मना भिन्नत्वम्, पर्यायात्मना चाभिन्नत्वमिति रीत्या उक्ता। एवमंगीकारे तेषामापतितमनर्थमाह इष्टामिति । सर्वमनेकान्तमिति सर्वत्र विरुद्धद्वयसमावेशवर्णनात् सर्वेष्टामिमां सप्तभंगीं वादावसरे स्वमते, परमते, तत्तत्कथारूपवादे, तत्फले च सोऽपस्यं वक्तुमिच्छेत्, सर्वमनेकान्तमित्युक्तत्वात्। एवञ्च सर्वस्यापि मतस्य सर्वाकारत्वात् वैलक्षण्याभावात् स्वपरविवेकाभावे किमिति वादे प्रवृत्तोऽसीति कथकानां परिषदा धूतः-निरस्तो धुरि स्थातुमशक्नुवन्

व्यवहार एव मौनमिति सर्वो व्याघातस्संपनीपद्येतेति भावः ॥ इति सप्तभङ्गीभङ्गः ॥ १२ ॥

(378) **भेदे वस्तुस्वरूपे भ्रम इह न भवेत्; धर्मपक्षेऽनवस्था;**
**स्याद्वाऽन्योन्याश्रयादिः; तदयमनृत इत्युक्तिबाधादिदुःस्थम् ।**
**धर्मः क्वापि, स्वरूपं क्वचिदिति च यथादृष्टि नोक्तप्रसङ्गो;**
**यद्दृष्ट्या यत्र यस्याध्यसनपरिहृतिः, सोऽस्य तस्मात्तु भेदः ॥ १३ ॥**

इत्थं भेदाभेदवादे निरस्ते भेदोऽपि तद्वदेव निरस्यतामिति वदतः परपक्षवादिनः पक्षमनुवदति **भेद** इति । तन्निराकरोति **उक्तीति** । अयमत्र पूर्वपक्षसिद्धान्तयोरनुक्रमः—किं भेदो वस्तुनः स्वरूपम्, अथवा धर्मः ? यदि स्वरूपम्, स्वरूपभूते भेदे गृहीते सति अध्यासो न स्यात् । अथ न गृह्यते, तथाऽप्यध्यासो न स्यात्; धर्मिग्रहणमन्तरेणाध्यासाभावात् । तथाच स्वरूपभूतभेदस्य ग्रहणाग्रहणयोरध्यासाभाव इति स्वरूपभेदवादनिरासः । किंच स्वरूपस्यैव भेदत्वे स्वरूपं भेद इति व्यवह्रियेत; न पुनः, भिन्नमिति । स्वरूपस्य प्रतियोगिनिरपेक्षत्वात्, भेदस्य तत्सापेक्षत्वाच्च विरुद्धधर्माध्यासोऽपि स्वरूपभेदवादमपाकरोति ॥ नापि धर्मो भेदः; तस्य धर्मिप्रतियोगिभ्यामभेदे व्याघातः; धर्मधर्मि-

---

*वी*— कां दिशं कक्षीकुर्वीत = अनुकूलां मन्येत । सर्वत्र विरोधिस्थितेः कुत्रापि शरणं न लभेत ॥१२॥

एवं भेदाभेदनिरासः कृतः । तथा चैकत्र विरुद्धमुभयं न भवति । जैनैरप्यत एव हि द्रव्यात्मना भिन्नम् अवस्थात्मना भिन्नमिति मुखभेदेन विरोधपरिहारः क्रियते । तथा च द्रव्ये अभेदः, अवस्थायां भेदः, द्रव्यञ्चावस्था च विभिन्ने एवेत्युक्तं भवति । तत्र भेदः स्वरूपं वा धर्मो वेति विकल्प्य परोक्तं दोषमनूद्य परिहरति भेद इति । शंका तावत्—भेदे वस्तुस्वरूपे = वस्तुस्वरूपमेव भेदश्चेत्, शुक्तिरूपधर्मिज्ञानस्यैव रजतभेदज्ञानरूपतया इदं रजतमिति भ्रम एव न स्यात्। अतो भेदः स्वरूपादतिरिक्तो धर्म एवेति पक्षे, तस्मिन् धर्मे धर्म्यपेक्षया वर्तमानो भेदोऽपि तदन्यः, तत्र च तदन्य इत्यनवस्था स्यात्। अन्योन्याश्रयश्च = शुक्तिः पृथग्गृहीता चेत्, रजतं पृथग्गृह्येत । तस्मिन् गृहीत एव तद्ग्रह इति । चक्रकञ्च—शुक्तिग्रहणम्, तद्गतभेदग्रहणं ततस्तत्प्रतियोगिग्रहणम्, तथा प्रतियोगिनि गृहीते तद्भेदे गृहीते शुक्तेर्यथावद्ग्रहणमिति । तत् = तस्मात् । अयम् = भेदः अनृतः = मिथ्या इति शंकाः स्वोक्तिबाधादिदोषदुष्टत्वात् स्थातुं नार्हन्ति । स्वरूपं वा भेदो वेति भवता कृतो विकल्पो हि भेदे स्वीकृते एव स्यात्। अतो भेदाभावो बाधितः। किञ्चान्योन्याश्रयादग्रहणं चेत्, कथं भवता सर्वमिदं गृहीत्वा व्यवह्रियते इति। ननु त्वदुक्तदूषणं स्वीकरोमि; सुहृद्भूत्वा पृच्छामि; कथमाशंका शमयितव्येति चेत्—श्रूयताम्—सर्वो भेदः स्वरूपमिति वा, सर्वोऽपि स्वरूपाद्भिन्न इति वा व्यवस्था मा भूत् । यथायथं स्वरूपमपि, अतिरिक्तोऽपि । कुत्र कथमिति व्यवस्थापकं वक्तव्यमिति चेत्—उच्यते । भेदज्ञानस्य किं कार्यम्? अध्यासस्य = भ्रमस्य परिहारः। यद्ग्रहणे यदध्यासो न भवति स तद्भेदः । यत्र स्वरूपज्ञानादेवाध्यासाभावः तत्र स्वरूपमेव भेदः । स्वरूपे ज्ञातेऽपि यत्र भ्रमः, तद्गतविशेषधर्मेऽन्यस्मिन् गृहीते सत्येव स भ्रमो निवर्तते । तत्र स्वरूपातिरिक्तो धर्म एव भावरूपः अध्यस्यमानवस्तुभेदरूपोऽपीष्यते । तथा च सर्वत्र सः = तदध्यासपरिहारको धर्मो धर्मी वा तस्मात् भेद इत्यवदातम् । प्रथमसर एवाऽऽदौ सर्वमिदं दर्शितम् ॥

विरुद्धधर्मेति । प्रतियोगिनिरपेक्षत्व-तत्सापेक्षत्वरूपधर्मेत्यर्थः । धर्मिप्रतियोगिभ्यां = शुक्तिरज-

भावादेर्भेदनिष्ठत्वात्। भेदे पुन -आत्मनैव भेदाङ्गीकारे तावत् आत्माश्रय , द्वितीयभेदमङ्गीकृत्य परस्पर-भेदकत्वकथने परस्पराश्रय , तृतीयादिभेदमङ्गीकृत्य परिवर्तने चक्रकम् , उत्तरोत्तरमपि धावनेऽनवस्था। उत्तरोत्तरभेदाना पूर्वपूर्वभेदेभ्यो भेदानङ्गीकारे द्वितीयादीना भेदाना प्रथमभेदात् व्यतिरेकाभावेन तदङ्गीकारानङ्गीकारयोरविशेष —इति धर्मभेदोऽपि दुर्वच। किंच किं धर्मिप्रतियोगिग्रहणपूर्वको भेदग्रह , उत स्वतन्त्र ? यदि स्वतन्त्र , भेदग्रहणमेव तन्न स्यात् , कस्य कस्मात् भेद इति । यदि धर्मिप्रति योगिग्रहणपूर्वक , तत्रापि विकल्पयाम , किं धर्मिप्रतियोगिनौ परस्परविलक्षणत्वेन गृह्यमाणौ तथा भवत , उताविलक्षणत्वेन,? यद्यविलक्षणत्वेन, घटात् घटो भिन्न इत्येव स्यात्। न च तत् युक्तम्॥ विलक्षण त्वेन चेत् , अन्योन्याश्रयकुक्षिनिक्षेपणेन निर्दह्यते भेदवाद , भेदे गृहीते सति धर्म्यादिग्रहणम् , तद्ग्रहणे सति भेदग्रहणमिति॥ अत्रोत्तरम् **उक्तिबाधादिदुःस्थमिति** । अयमत्र भाव —यस्तु भेद स्वरूप धर्मो वेति विकल्पयति, स पुन तृतीयकोटयङ्गीकारेण विकल्पयति, किं वा तदनङ्गीकारेण विकल्पयति ? यद्यङ्गीकारेण, अयावत्सम्भवी तावदय विकल्पयतीति(त्य इति ?) न्यून नाम निग्रहस्थानम् । सम्भवन्ति च स्वरूपधर्मव्यतिरिक्ता सहस्रमप्यर्था । न हि घटस्य स्वरूप नापि धर्म पटकुड्यकुसूलादय । तृतीय कोटितयाऽपि भेद वदन्ति भेदवादिन , ज्ञानाभावसम्बन्धाना विषय-प्रतियोगि-सम्बन्धिभिरेव व्यावृत्तव्यव हारात् तेषामपि भेदलक्षणलक्षितत्वस्य भवद्भिरप्यङ्गीकार्यत्वात् । यदि तृतीयकोटयनङ्गीकारेण वैयर्थ्यात् विकल्पयति, तथाऽपि तर्काभासोऽय प्रसङ्ग 'स्वरूप चेत्, एव स्यात् , न चैवम् , तस्मान्न स्वरूपम्', 'धर्मश्चेत्, एव स्यात , न चैवम् , तस्मान्न धर्म ' इति परस्परविरुद्धयोस्तर्कयोर्विपर्यये पर्यवसान यद्यस्ति, तदा मिथो विरोधात्, तर्काभासत्वम्। यदि नास्ति, तदा(था)ऽपि तर्काभासत्वम् , विपर्यये पर्यवसानाभावेनाङ्गशून्यत्वात ॥ उभयोरपि तृतीयकोटौ पर्यवसानमस्त्विति चेत्, अहो नु भवान् आत्मोक्तमेव प्रसरति ! तृतीयकोटयसद्भावेन हि भवान् आलपति। यदि कोटयन्तरमस्ति, अस्माकमपि तद्रूपेणोपतिष्ठता भेद । अतो न भेदतत्त्वापलाप । तथाच न विवक्षितार्थसिद्धि ।

स्वरूप चेत् , अध्यासानुपपत्ति स्यादिति भवता मूलशैथिल्यम् , अनृतजडपरिच्छिन्नव्यावृत्तीना ब्रह्मस्वरूपत्वेऽपि भवद्भिरेव प्रपञ्चाध्यासाङ्गीकारात् । व्यावृत्तीना धर्मत्वे, भवतैव धर्मभेदवादोऽङ्गीकृत इति धर्मभेदवादप्रतिक्षेपकाणा तर्काभासानामङ्गान्यतमवैकल्य भवतैव प्रतिपादित स्यात् ।

---

ताभ्याम्। भेदनिष्ठत्वात् = भेदाधीनत्वात्। भेदस्य धर्मितो भेदाभावे तद्धर्मत्वायोगादिति भाव । आत्मनैव भेदाङ्गीकारे = शुक्तिगतस्य रजतभेदस्य शुक्त्यपेक्षया भेदत्वभेदकत्वस्वीकारे आत्माश्रय , रजतभेदे शुक्तिभेदमन्य स्वीकृत्य मिथो भेदकत्वस्वीकारेऽन्योन्याश्रयमाह द्वितीयभेदमिति । घटात् घटो भिन्न इत्येवेति । अविलक्षणत्वेन ग्रहणेऽपि भेदग्रहण चेत्-घटे घटाविलक्षणत्व सुगृहीतमिति तत्र तद्भेदव्यवहारोऽपि स्यादित्यर्थ । अयावत्सम्भवी = सम्भावितसर्वपक्षपोल्लेखरहित । ज्ञानेति । यथासङ्ख्यमन्वय । ज्ञाने विषयस्य, अभावे प्रतियोगिन , सम्बन्धे सम्बन्धिनश्च व्यावर्तकतयाऽन्वय । उभयोरपीति । तर्कयोरपि आपाद्यमानतद्विपर्ययोभयातिरिक्ते पर्यवसानेऽपी उक्तविसरणमित्यर्थः ।

भेदस्य स्वरूपत्वे अद्वैत्युक्तं दूषणं तन्मतानिगमनमित्याह स्वरूप चेदित्यादिना । पूर्वं मयक्तिगिनि

आस्तामयं तर्काभासप्रसङ्गः; प्रतिबन्द्याऽपि दूषयामः—अभेदः स्वरूपं, धर्मो वा? धर्मश्चेदनवस्था, स्वरूपातिरिक्तस्य धर्मस्याभेदत्वव्याघातश्च। आत्माश्रयान्योन्याश्रयचक्रकाश्रयाद्यभिधानमस्माभिरप्यत्राभिधातुं शक्येत। स्वरूपं चेदभेदः, अभेदो ब्रह्मेति स्यात्; न पुनः, अभिन्नं ब्रह्मेति। किंचाभेदस्वरूपस्य नित्यस्वप्रकाशत्वेन(स्वभावत्वेन) भेदप्रपञ्चाध्यासो न स्यात्॥ स्वरूपान्तरमभेद इति चेत्, भेदवादमेवोद्गिरसि। किंच स्वस्य रूपं स्वरूपमिति यदि वदसि, सोऽपि च भेद एवावसीयते। स्वमेव रूपमिति वचने स्वरूपातिरिक्ताभेदानभिधानात् अध्यासानुपपत्तिस्तदवस्थैव। अतो भेदवत् अभेदस्यापि त्वदुक्तेनैव दूषणकलापेन दुर्निरूपत्वात् स्वरूपधर्मयोर्भेदत्वानुपपत्तिरिति रिक्तं वचः। कस्तर्हि भेदः? अनृतजडपरिच्छिन्नव्यावृत्तीनां स्वरूपत्वे स्वरूपभेदवादमङ्गीकृत्य मूकीभव; धर्मत्वे पुनर्धर्मभेदवादमङ्गीकुर्वन् निर्वैरमेव संचर॥

अथापि कथं भेदस्य भेदाभावे स्वरूपसिद्धिरिति चेत्, स्वस्य स्वयमेव भेदः, स्वपरनिर्वाहकत्वात्। यो हि यत्र यदध्यासविरोधी, स तस्माद्भेदः। तथाच स्वाश्रये पटादावध्यासविरोधी शौक्ल्यादिधर्म एव स्वस्मिन्नपि कार्ष्ण्याद्यध्यासविरोधित्वात् स्वस्यापि स्वयमेव भेदः। तथाच धर्मिप्रतियोगिभ्यामपि शौक्ल्यादेः स्वरूपमेव भेदः; स्वरूपस्यैव स्वात्मनि तत्तदध्यासविरोधित्वात्।

यत्पुनरुक्तम् भेदग्रहणस्य धर्मिप्रतियोगिग्रहणपूर्वकत्वात् परस्पराश्रय इति, तदपि चानिरूपकाणामाघोषणम्। घटपटौ हि गृह्यमाणौ युगपदेव घटत्वपटत्वाश्रयावेव गृह्येते। तावेव धर्मौ भेदौ, इतरेतराध्यासविरोधित्वात्। स्वस्मिन्नपि तत्तदध्यासविरोधित्वात् स्वात्मनोऽपि भेदस्तावेव। अतो नान्योन्याश्रयणशङ्काऽप्यङ्कुरति॥ कथं तर्हि प्रतियोगिनिरपेक्षाणां धर्माणां भेदत्वमिति चेत्; इत्थम्। यदा शुक्लत्वकृष्णत्वादयः स्वरूपेण प्रतीतिविषयाः परस्पराध्यासं व्यावर्तयन्ति, तदा शुक्लत्वकृष्णत्वादय इति व्यवह्रियन्ते, कुर्वन्ति चाध्यासनिवृत्तिं तेनैव स्वरूपेण। यदा पुनरध्यासनिवर्तकत्वरूपधर्मान्तरवैशिष्ट्येन व्यवह्रियन्ते, तदा भेदा इत्युच्यन्ते। तेन तेषामेव धर्माणां स्वरूपेण व्यवह्रियमाणानां न प्रतियोगिसापेक्षत्वम्; अध्यासनिवर्तकत्वरूपधर्मान्तरवैशिष्ट्येन व्यवह्रियमाणानां प्रतियोगिसापेक्षत्वमिति न कश्चिद्विरोधः। यथा घटे दण्डादीनां व्याप्रियमाणानां दण्डादिव्यवहारे न प्रतियोग्यपेक्षा; घटकारणत्वव्यवहारे प्रतियोग्यपेक्षेति।

एतेन ग्राहकानुपपत्तिप्रलापोऽपि दूरोत्सारितः; जात्यादीनामेव भेदत्वात्, तेषां वस्तुना सह युगपदेव ग्रहणेन स्वरूपभेदयोर्ग्रहणपौर्वापर्याभावात्। अतः प्रत्यक्षमेव युगपदुभयं गृह्णाति।

अतो भेदस्य न विकल्पग्राह्यत्वम्। तदिदं सर्वमभिप्रेत्याह **धर्मः क्वापीति**। घटादीनां धर्मो

---

वा— बहुवचनं सर्वाद्वैतिग्रहणेन। भवतैवेति तु प्रकृतप्रतिवादिमात्रविवक्षया। एवं भेदनिरासिना अद्वैतमभेद एव हि वक्तव्यः। तत्राप्ययं विकल्प इत्याह प्रतिबन्द्याऽपीति।

शंकामुखेनोत्तरार्धं विवरितुमारभते अथापीति। अध्यासनिवर्तकत्वेति। किञ्चिन्निरूपितभेदत्वेत्यर्थः। दण्डस्य दण्डत्वेन व्यवहारवत् घटकारणत्वेनापि व्यवहारः। तत्र द्वितीये घटरूपस्य प्रतियोगिनः=प्रतिसंबन्धिनोऽपेक्षा। तथा शुक्तौ रजतभेदत्वेन भेदव्यवहारे भेदप्रतिसंबन्धिनो रजतस्यापेक्षेत्यर्थः। इयान् विशेषः—दण्डः इति ज्ञानमात्रेण घटकारणं न भवतीति भ्रमो न निवर्तते। अत्र तु शुक्तिरिति ग्रहणे सत्येव रजतभ्रमो निवर्तते। अतः शुक्तित्वरजतभेदयोरैक्यम्। अङ्गपञ्च-

भेद । **स्वरूप क्वचित्**=भेदे पुन स्वरूपमेव भेद । **यदादृष्टि**—यथादर्शनमित्यर्थ । तेन **नोक्तप्रसङ्गौ**—न स्वरूपभेददूषणम्, नापि धर्मभेददूषणम् । उक्तस्यार्थस्योपपत्त्यर्थं भेदलक्षणमेव परिशोधयति—यस्य दृष्ट्या यत्र यदध्यासनिवृत्ति, स तस्य तस्मात् भेद इति । अत शौक्ल्यादिरसाधारणो धर्म एव भेद । अतस्तदतिरिक्तभेदकल्पनम् अल्पबुद्धीना कल्पनागौरवहेतुत्वादनादरणीयमेवेति भाव ।

तदत्र सक्षेप —भेदप्रतीत्यपलापे तवापसिद्धान्त, प्रतीत्यभावे कथ बाधार्थं प्रयतसे ? तत्कारणापलापे भेदप्रतीते कार्यत्वमेव परिपन्थि, न ह्यकारण कार्यमुत्पद्यते । कारणनिरूपणापलापे कार्यविशेष एव कारणविशेष निरूपयति, तत्तत्कार्यविशेषसमुचितत्वेनैव कारणविशेषस्य प्रतीते । भेदप्रतीते विषयापलापे भेदप्रतीतिर्निर्विषयेति व्याघात, प्रतीतेस्सविषयत्वनियमात् । न हि निर्विषयं ज्ञानमिति जाघटीति । विपरीतज्ञानमपि सविषयमेव, अपितु बाधितविषयमिति विशेष । अतो भेदज्ञानस्य विषयबाधोपपादनमेव तवावशिष्यते । तत्र प्रत्यक्षेण बाधोपपादने सर्वस्यापि प्रत्यक्षस्य सविशेषविषयत्वान्न बाधकत्वम् । अनुमान चेत्, सुतरा सविशेषविषयमेव, पक्षहेतुदृष्टान्तसाध्यतज्ज्ञानादिबहुभेदसवलितत्वात् । आगमोऽपि पदपदार्थवाक्यवाक्यार्थादिभेदगर्भ । एवं तर्कोऽपि व्याप्याङ्गीकारे व्यापकानिष्टप्रसञ्जनम्, व्याप्यव्यापकभावश्च भेदात्मक एव । अङ्गपञ्चकोपेतत्वाच्च । अतो भेदखण्डनप्रसङ्ग एव भेदमुपपादयति । एतेन प्रत्यक्ष धर्मिग्राहि, उत भेदग्राहि, उतोभयग्राहि ? स्वरूपग्राहित्वेऽसत्पक्ष एव । भेदग्राहित्वे धर्मिप्रतियोगिसापेक्षस्य भेदग्रहणस्य तद्ग्रहणमन्तरेण ग्रहण न स्यात् । उभयग्राहित्वेऽपि युगपदुभयग्राहि वा, क्रमेण वा ? युगपद्ग्रहण न सम्भवति, सापेक्षनिरपेक्षयोर्यौगपद्यायोगात् । क्रमेणोभयग्राहित्वेऽपि भेदपूर्वक धर्मिग्रहण न सम्भवति, सापेक्षस्य पूर्वभावित्वायोगात् । धर्मिग्राहणस्य पूर्वभावित्वे तस्मिन्नेव क्षणे प्रत्यक्षस्य नष्टत्वात् न तत् भेदग्राहकम् । न च प्रत्यक्षान्तर भेदग्राहकम्, परस्परवार्तानभिज्ञत्वात् । अतो भ्रान्तिरेवाप्रत्यक्षं चापि भेद गृह्णातीति दत्तोत्तरम् ॥

**इति भेददूषणनिस्तारः ॥ १२ ॥**

**(374) भेदो गृह्येत बुद्ध्वाऽधिकरणमवधिं चेति न ह्यक्रमोऽस्मिन्**
**प्रत्यक्षस्य क्रमोऽपि क्षणभिदुरतया नेति तुल्य भ्रमेऽपि ।**

---

त्वा—कोपेतत्वाच्चेति। तर्कस्याङ्गपञ्चक हि बुद्धिसरे उक्तम्। मिथो भेदाभावे पञ्चकमिति कथ गणनेति॥

भेदग्रहो विकल्परूप =भ्रान्तिरूप, न तु प्रमेति वदन् पूर्वपक्षी तत्र कारण किञ्चिदाह तद्दर्शयति भेद इति । शुक्तौ रजतभेदस्य शुक्तिरधिकरणम् रजतमवधि =प्रतियोगि । तदुभयं गृहीत्वैव भेदो ग्राह्य । अस्मिन् अक्रम =यौगपद्यमयुक्तम्, विशेषणज्ञानस्य पूर्वभावित्वात् । अस्तु तर्ह्येवेति चेत्, तत्राह प्रत्यक्षस्येति । प्रत्यक्षज्ञानस्य क्षणभिदुरतया क्षणमात्रेण नश्यत्तया प्रथमक्षणे अधिकरणादि गृहीत्वा द्वितीयक्षणे भेद गृह्णातीत्यस्य वक्तुमशक्यत्वात् । अतो न भेदे प्रत्यक्षप्रमेति । इद दूषयति तुल्य भ्रमेऽपीति । प्रमात्वमनिच्छता भ्रमत्व वर्णयताऽपि ज्ञानस्य स्वीकर्तव्यम् । तत्रापि क्षणिकत्वात् कथ ग्रहणमिति त्वद्विकल्पस्तदवस्थ । दर्शनान्न दोष इति समाधिरुभयोस्तुल्य । किञ्च त्वन्मते भेदग्रहणाभावे रूपादिग्रहणेऽपि तत्र रसादिभेदाग्रहणात्, चक्षुर्ग्रहणे त्वगादिभेदाग्रहणाच्च

**अक्षान्धादिव्यवस्थाक्षतिरपि ; युगपत् योग्यधर्मिग्रहो(धर्मग्रहो)ऽत्र**
**तद्युक्ते भिन्नशब्दः कथिततदुपधिज्ञप्त्यपेक्षः क्रमात् स्यात् ॥ १४ ॥**

भेदग्रहणे पूर्वोक्तां ग्राहकानुपपत्तिं प्रतिबन्द्या दूषयति **भेद** इति । 'धर्मिभेदयोस्सापेक्षत्वनिरपेक्षत्वाभ्यां युगपद्ग्रहणमनुपपन्नम् । प्रत्यक्षज्ञानस्य क्षणिकत्वात् क्रमग्रहणं च न जाघटीति ; परस्परवार्तानभिज्ञत्वात् । प्रत्यक्षान्तरेण ग्रहणमपि न स्यात्' इति ह्युक्तम् । एतत् काल्पनिकभेदपक्षेऽपि तुल्यम् ; कल्पनायामप्यधिकरणप्रतियोगिसापेक्षत्वस्यावश्यम्भावित्वात्, धर्मिज्ञानक्षणिकत्वस्य तुल्यत्वात्, कल्पनारूपभेदग्रहणेऽपि परस्परवार्तानभिज्ञत्वस्यानिवारणात् । न हि कल्पनाऽपि धर्मिप्रतियोगिनावन्तरेण भेदं गृह्णाति । नापि धर्मिज्ञानवार्तामभिजानाति ; तस्य तस्मात् भिन्नत्वात् । अतः काल्पनिकभेदज्ञानस्य संघटने पारमार्थिकमपि भेदज्ञानं तेनैव न्यायेन संघटेत । तस्यासंघटने काल्पनिकमपि भेदज्ञानं न संघटेतेति वीवधघटन्यायः । तर्हि काल्पनिकमपि भेदज्ञानं मा भूदिति चेत्, तर्हि लोकव्यवहारोच्छेदप्रसङ्गः ; कृत्स्नवेदान्तानारम्भप्रसङ्गश्च । भेदप्रतिभासनिरासायैव हि सर्वे वेदान्ता आरभ्यन्त इति ब्रूषे । तदिदमाह **तुल्यं भ्रमेऽपीति** ।

किंच भेदस्य प्रत्यक्षत्वाभावे सति इन्द्रियव्यवस्था न स्यात् । रूपादिग्रहणमिन्द्रियकृत्यम् ; विषयभेदव्यवस्थयैव हि चक्षुरादिव्यवस्थामाहुः । एवमन्धादिव्यवस्थाऽपि न स्यात् । तत्तद्विषयभेदग्राहकेन्द्रियभेदविनाशादेव ह्यन्धादिव्यवस्था । तदिदमाह **अक्षान्धादीति** । अतो युगपदेव तत्तद्विशेषणभेदविशिष्टवस्तुग्रहणमिन्द्रियकृत्यम् । ते च विशिष्टाः युगपदेव सन्निधाने युगपदेव गृह्यन्ते, यथा सेनावनतारामण्डलादिज्ञान इत्युक्तम् । तथाच परस्परासंकीर्णनानाधर्मविशिष्टाः पदार्था युगपदेव गृह्यन्ते । घटः पटः शुक्लं कृष्णं चलं निश्चलमित्यादि । तत्र घटत्वपटत्वशुक्लत्वकृष्णत्वादयः स्वरूपेण गृह्यमाणाः परस्पराध्यासं व्यावर्तयन्ति । तच्च व्यावर्तनं तत्तद्धर्मस्वरूपग्रहणकृत्यम् । तेनैव कृत्येन विशेष्यमाणास्त एव धर्माः प्रतियोग्यपेक्षया भेदा इति व्यवह्रियन्ते इति प्रागुक्तमेवार्थं प्रतिपत्तॄणां बुद्धिसौकर्याय प्रकटयति **तद्युक्त** इति । भेदव्यवहारेऽपि युगपत् व्यवहारे च पौर्वापर्यापेक्षा ; यथा पञ्चाप्यङ्गुलयः परस्परं भिन्ना इति । यत्र पुनः क्रमव्यवहारः, तत्र वाचः क्रमवृत्तित्वादस्तु वाच्यान्ते पौर्वापर्यम्, अङ्गुष्ठात् कनिष्ठा भिन्नेति । अत्रापि प्रतिपत्तिपौर्वापर्यं न निर्बन्धनीमः । अतो न भेदप्रत्यक्षत्वानुपपत्तिः ॥ **इति भेदप्रत्यक्षत्वायुक्तिभंगः ॥१४॥**

---

ळी— रूपग्राहकं चक्षुः, रसग्राहकं रसनेन्द्रियम्, चक्षुरभावादन्धः श्रोत्राभावात् बधिरः इत्येवं व्यवस्थाया अपि क्षतिरेव । ननु कथं प्रतियोग्याद्यग्रहणे भेदग्रहणमिति शंकापरिहारः कथमिति चेत्, उक्तमेवेदम् । भेदस्यासाधारणधर्मातिरिक्तत्वाभावात् युगपदेवासाधारणधर्मस्य धर्मिणश्च ग्रहणात् ज्ञानस्य क्षणिकत्वपक्षेऽपि दोषाभावात् । ज्ञानं यद्युक्षणस्थाय्यपि प्रथमं किञ्चिद्गृह्णाति, पश्चादन्यदिति विरस्य व्यापारो नेष्यते । तर्हि शुक्तिग्रहणमात्रेण इदं रजतभिन्नमिति कुतो न व्यवहरतीति चेत्—शुक्तित्वस्य भेदत्वेऽपि भेदशब्देन भिन्न इति व्यवहारे प्रतियोगिज्ञानमपेक्षितमिति ब्रूमः । अतो भिन्नशब्दप्रयोगः क्रमादेव स्यात् । रजतभेदस्य शुक्तित्वस्य चैकत्वादेव शुक्तित्वज्ञाने सत्येव रजतसंशयो निवर्तत इति ॥ वीवधघटन्याय इति । अंसन्यस्तदीर्घदण्डाग्रद्वयलम्बिघटद्वयस्थले एकत्र घटाभावेऽन्यत्र घटो न लम्बेतेत्येतत्, उभयोरपि घटयोस्तुल्यं हीति भावः ॥१४॥

(375) अद्रव्ये नैकरूपे ह्यगणिषत गुणाः सत्त्वमुख्याः ; द्विधाऽऽद्यं ;
शुद्धं तन्नित्यभूतौ ; त्रितयमिह चतुर्विंशतौ व्यापितः स्यात् ।
पञ्चान्ये शब्दपूर्वा अपि परिगणिता भूतवर्गेष्वथान्यः
संख्यानादिश्च भेदः परिणमति यथासंभवं द्रव्यवर्गे ॥ १५ ॥

एवं भेदतत्त्वं प्रसाध्य प्रामाणिकत्वेनाभिमतान् गुणभेदान् यथाप्रमाणं विभज्य दर्शयति **अद्रव्य** इति । तस्मिन् अद्रव्यवर्गे सत्त्वं रजस्तम इति प्रधानभूता गुणाः। सत्त्वं च द्विविधम्—शुद्धसत्त्वं मिश्रसत्त्वं चेति । शुद्धसत्त्वं नित्यविभूतौ । तदिदमाह **शुद्धं तन्नित्यभूताविति** । **त्रितयमिति** । मिश्रसत्त्वं रजस्तमसी चेति त्रितयम् । इदं चतुर्विंशतितत्त्वे सर्वत्रापि स्यादित्याह **व्यापितः स्यादिति** । एवं शब्दादयः पञ्च गुणाः आकाशादि[षु]पञ्च[सु]भूतेषु उत्तरोत्तरमाधिक्येन दृश्यन्त इत्याह **पञ्चेति** । संख्यादिरन्यो गुणवर्गो यथाप्रमाणमुपलभ्यमानो न्यूनाधिकभावेन तत्रतत्रावतिष्ठत इति दर्शयति **अथान्य** इति । **यथासंभवमिति** । प्रमाणगतिरेव पदार्थपरिकल्पनायां शरणम् ; न पुनर्वैशेषिकादीनां सांकेतिकः संव्यवहार इत्यर्थः ॥ **इति अद्रव्यावान्तरविभागादि ॥ १५ ॥**

(376) स्थित्युत्पत्त्यन्तलीलाविधिषु भगवताऽधिष्ठिताः शास्त्रवेद्याः
सत्त्वाद्याः स्थूलसूक्ष्मप्रकृतिगतगुणा हेतुभूतास्सुखादेः ।
साम्ये तेषां त्रयाणां सदृशपरिणतिः स्यादिहान्याऽन्यथात्वे ;
क्लृप्ताऽन्यैर्द्रव्यतैषां श्रुतिपथविहता ; कुत्रचित्तूपचारः ॥ १६ ॥

---

श्री- एवं निरूपितमद्रव्यं विभजते अद्रव्यइति। अत्र न्यायसिद्धाञ्जनोक्तमर्थतः संगृह्यते–'संयोगरहितम् अद्रव्यम् । त्रिगुणकालशुद्धसत्त्वद्रव्यधर्मभूतज्ञानरूपद्रव्यगता अवस्थाविशेषाः अनन्ता अद्रव्यभूताः तत्तद्द्रव्यनिरूपणेनैव निरूपितप्रायाः । अन्यानि स्फुटपरिगणनीयानि त्वद्रव्याणि दशैव ; सत्त्वा दयस्त्रयः, शब्दादयः पञ्च, संयोगः शक्तिरिति । गुरुत्वद्रवत्वादीनां तार्किकगणितानां यथायथं क्लृप्तेष्वन्तर्भावः। सयूथ्यास्तत्र कांश्चित् पृथक् गणयन्ति । तदंगीकृतैः कैश्चित् सह एकत्वादयोऽप्य-द्रव्यभेदाः तत्त्वमुक्ताकलापे उक्ताः' इति। अनेन तत्त्वमुक्ताकलापेऽत्र स्वोक्तमपि किञ्चित् पुनरनन्वा-रोहेण यथावत् परिशीलितं तत्रेति ज्ञायते। सप्तदश(१७)श्लोकादौ चेह किञ्चित् वक्ष्यति। श्लोकार्थस्तु अद्रव्ये नैकरूपे दशविधे तदधिके वा सत्त्वादयस्त्रयो गुणाः । सत्त्वं परं द्विविधं शुद्धं मिश्रञ्चेति । शुद्धं तत् = सत्त्वं नित्यविभूतितत्कार्यमात्रस्थम् । मिश्रसत्त्वादिगुणत्रयं प्रकृतितद्विकारेषु चतुर्विंशतौ व्यापितः = सर्वत्र वर्तते । पञ्चसु भूतेषु च पञ्च विशेषगुणा यथासंभवम् । संख्यानादिः = संख्यानम् संख्या आदिः यस्य सः तादृशो गुणभेदश्च द्रव्यवर्गे जायमानः अद्रव्यत्वेन गणनीय इत्यर्थः ॥ १५ ॥

एवं विभक्तान् क्रमेण निरूपयति स्थितीत्यादिभिः श्लोकैः। प्रथमं सत्त्वरजस्तमोगुणनिरूपणम्। सत्त्वं रजस्तम इति गुणगणनक्रममनुसृत्य स्थित्यादिकार्यनिर्देशक्रमः। सृष्ट्यै रजोधिष्ठानं स्थितये सत्त्वा-धिष्ठानम्, अन्तः = संहारः तदर्थं तमोधिष्ठानम्, तत एव त्रिमूर्तिरूपता च भगवतः । एषां त्रयाणां सुखदुःखमोहार्थतया स्थूलेषु प्राकृतवस्तुष्विव सूक्ष्मेषु प्रकृतिप्राकृतेषु च परम्परया तदुपयोगितया स्थितिरपि शास्त्रवेद्या। तथैवैषां त्रयाणां साम्यम्-उच्चनीचत्वाभावः प्रलयकाले। तदा प्रकृतेः सततपरि-णामशीलत्वात् सदृशी परिणतिर्निरन्तरा भवति। अन्या = विसदृशी परिणतिस्तु अन्यथात्वे सत्त्वादीनां

स्थितीति । पूर्वोक्तानां सत्त्वरजस्तमसां स्थित्युत्पत्तिलयेषु विशेषेण भगवताऽधिष्ठितत्वं तेषुतेषु शास्त्रेषूच्यते । ते च स्थूलसूक्ष्मप्रकृतिगताः; सुखदुःखमोहानां हेतवो भवन्तीति च शास्त्रसिद्धम् । तेषां च साम्ये प्रलयावस्थायां सदृशपरिणतिः, वैषम्ये सृष्ट्यवस्थायां विसदृशपरिणतिश्च शास्त्रैकसमधिगम्या । अन्या विसदृशपरिणतिः । अन्यथात्वे वैषम्ये । सांख्याः पुनरेषां द्रव्याभेदेन द्रव्यत्वमाहुः । तत् गुणत्वप्रतिपादकश्रुतिस्मृतीतिहासादिविरुद्धम् । प्रमाणेषु च क्वचित् यदस्ति द्रव्याभेदव्यवहारः, स पुनः औपचारिकः । व्यक्तमन्यत् ॥ **इति सत्त्वरजस्तमसामुपयोगाद्रव्यत्वादि ॥ १६ ॥**

**(877) बुद्धित्वादिः प्रधाने समपरिणतिरित्येवमागन्तुधर्माः,**
**द्रव्येष्वन्येषु चान्ये, कतिचन कथिताः केचिदध्यक्षसिद्धाः ।**
**आनन्त्यादर्थमान्द्यात् दुरवगमतया सूक्ष्मवैषम्यभेदै-**
**रैकैकश्येन चिन्तामिह जहति बुधा निश्चितापेक्षितार्थाः ॥ १७ ॥**

प्रधाने बुद्धित्वादीन् कतिचन प्रकारान् उक्त्वा, 'प्रकारान्तराण्यपि अनन्तत्वात् न परिगण्यन्ते ; अथापि प्रामाणिकत्वात् प्रधाने कार्यकारणरूपे परिगृह्यन्ते' इति दर्शयति बुद्धीति। प्रधाने बुद्धित्वादयो धर्माः सृष्ट्यवस्थाया विषमरूपाः ; प्रलयावस्थायां समपरिणतयः । एवमन्येष्वपि द्रव्येषु कतिचित् धर्माः शास्त्रसिद्धाः, कतिचिच प्रत्यक्षसिद्धाः । अतोऽनुमानशरणानां साधनबाधनयोरत्रानवकाशः । न हि नरशिरःपवित्रत्वाद्यनुमानं शास्त्रप्रवृत्ति(प्रतिपत्ति)शैलीमुल्लिलङ्घयिषति । तर्हि सर्वेऽपि धर्माः प्रत्येकं प्रतिपाद्या इत्याशङ्क्य परिहरति आनन्त्यादिति । अद्रव्यावान्तरभेदानामानन्त्यात् विविच्य प्रतिपादने पुनरर्थमान्द्यात् सूक्ष्मवैषम्यभेदैर्दुरवगमत्वाच्च, निश्चितापेक्षितार्थाः मनीषिणः, ऐकैकश्येन चिन्तामिह जहति । न तावता तेषां प्रकारभेदानामप्रामाणिकत्वमित्यर्थः ॥ **इति विचित्रावस्थानन्त्यम् ॥ १७ ॥**

---

पू° — प्रधाने बुद्धित्वादयो धर्मा इति। महत्त्वाहङ्कारत्वादयोऽवस्थाः, प्रकृतावसमाः = विषमाः सृष्टिकाल इत्यर्थः । अनेन पूर्वश्लोके 'अन्याऽन्यथात्वे' इति या गुणवैषम्ये विषमावस्थोक्ता सा महत्त्वादिपरिणतिरित्यर्थः [उक्तः ?] । प्रलयावस्थायाम् इत्यर्थसिद्धकथनम् । एवमन्येष्वपि द्रव्येष्विति । कालात्मनित्यविभूतिबुद्धिष्वपीत्यर्थः । सूक्ष्मवैषम्यभेदैर्दुरवगमत्वाच्चेति । सूक्ष्मेण कारणावस्थातो वैषम्येण सूक्ष्मैरन्योन्यभेदैश्च धर्माणां दुरवगमत्वादित्यर्थः ॥ १७ ॥

वी° — वैषम्ये स्यात्। एषां-त्रयाणां गुणानाम् अन्यैः = सांख्यैः द्रव्यता क्लृप्ता-कल्पिता; न तु प्रामाणिकी श्रुतिपथविहता । मिथो विरुद्धानां त्रयाणां द्रव्यत्वे चतुर्विंशतिसंख्याविरोधः, 'सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः', 'प्रकृतेस्तेन चाऽऽत्मनः', 'गुणान्वयः', 'निर्गुणम्' इत्यादिपरश्शतवचनविरोधश्च । क्वाचित्कः स्वत्वाद्यधिष्ठातृत्वयादः द्रव्यद्वारा वक्तव्य इति तत्र सत्त्वादिविशिष्टे उपचारः॥

एवं नित्यान् गुणान् त्रीन् उक्त्वा आगन्तुकान् धर्मानप्याह बुद्धीति । प्रधाने = मूलप्रकृतौ बुद्धित्वं-महत्त्वम् । आदिना अहंकारत्वादिपरिग्रहः। एतदादिः क्रमेण कार्यभूते स्थितः विषमपरिणामः; समपरिणामश्चान्यः प्रतिक्षणभावी प्रलये प्रकृतौ । अन्येषु द्रव्येषु काले नित्यविभूतौ धर्मभूतज्ञाने प्रकृतिकार्येषु च भूतभौतिकादिषु । तत्र शास्त्रैकवेद्याः कतिचन केचित् प्रत्यक्षसिद्धा अनुमेयाश्च सन्त्येवानन्ताः। आनन्त्यात् सर्वपरिगणनमशक्यम्। अर्थमान्द्यात्-प्रयोजनस्य विशेषेणाभावात् ज्ञान-

(378) शब्दाद्याः तत्तदक्षप्रतिनियतिजुषः सर्वतन्त्रप्रसिद्धाः
तैरेकद्व्यादिसंख्यैर्युपवनहुतभुग्वारिभूम्यस्समेताः ।
पञ्चीकारादिनैषां विनिमितगुणता व्योमनैल्यादिबोधे
तद्योगात् तत्र तत्तद्गुणजनिरिति चेत्, नान्यथाऽत्रोपपत्तेः ॥ १८ ॥

अनन्तरं शब्दादीनां ग्राहकनियममाधारनियमं चोक्त्वा भूतान्तरे तत्तद्गुणप्रतिभासस्योपाधिनियमं चाह शब्दाद्या इति। शब्दादीनां श्रोत्रादिग्राह्यत्वनियमः सर्वतन्त्रसिद्धः । शब्दादीनामाकाशादिषु उत्तरोत्तरगुणाधिक्यं शास्त्रप्रसिद्धमुपलम्भसिद्धं च । गुणविनिमयस्तु पञ्चीकरणा(कारा)दिभिरेव स्यात् । तत्रोदाहरणमाह व्योमेति । गगनतले नैल्यादिप्रतिभासः पञ्चीकृतपृथिव्यादिसंबन्धेनैव स्यात् । 'एवमुष्णं जलम्, सुरभिस्समीरः' इत्यादिषु संसर्गविशेषात् गुणान्तरप्रतिभासः स्वयमेवोहनीयः । भूतान्तरसंसर्गात् भूतान्तरे तत्तद्गुणोत्पत्तिकल्पनं कल्पनागौरवात् न योयुज्यते । अतः, 'रक्तं नभः, धूम्रा दिशः' इत्यादयो व्यवहारा औपाधिका इति ॥ [पटमलिनिमवत् यथा पटस्य मालिन्याभावेऽपि शंखस्य पीतिमाभावेऽपि मलिनः पटः, पीतश्शंखः, उष्णं जलमित्यादि] इति शब्दादिगुणभेदग्राहकाधारनियमः॥१८

(379) कस्तूरीचम्पकादौ समविषमतया सम्मतः सौरभादिः ;
तद्वच्छन्दादयोऽमी त्रिगुणतदधिकद्रव्यनिष्ठा गुणाः स्युः ।

---

व्यी- मनपेक्षितञ्च । सूक्ष्माणां वैषम्याणां विभिन्नत्वात् दुर्ग्रहता च । अतः प्रतिस्विकविज्ञाने प्रयासं प्राज्ञास्त्यजन्ति तावता अवश्यज्ञेयापेक्षितार्थज्ञानविधुरा न भवन्ति। तस्मात् यावदपेक्षितज्ञानं पर्याप्तम्॥

एवं शास्त्रैकसिद्धप्रकृतिमहदादिद्रव्यधर्माः विवेचिताः । अथ भूतधर्मान् विचारयति शब्देति। शब्दस्पर्शरूपरसगन्धाः क्रमेण श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणमात्रग्राह्याः पूर्वोक्तसत्त्वादिविलक्षणाः सर्वशास्त्रप्रसिद्धत्वात्। परंतु तेषामधिकरणानि कानीत्यत्र किञ्चिद्विषये मतभेदोऽस्ति। सिद्धान्ते तु तेषाम् एकेन द्वाभ्यां त्रिभिश्चतुर्भिः समुदायेन च समेता भवन्ति क्रमेण व्योमवायुतेजोजलभूमयः। पूर्वपूर्वस्मादुत्तरोत्तरोत्पत्तिकाले एकैकगुणोऽधिक उत्पद्यत इति । यत्र तु उत्तरमात्रवर्तिनो गुणस्य पूर्वस्मिन्नप्युपलम्भः, स भूतानां पञ्चीकरणस्य शास्त्रसंमततयोपपद्यते । अन्यत्र पञ्चीकृतस्यैकस्य भूतस्यान्येन भूतेन संसर्गादपि ; यथा व्यष्टौ एलाजलयोः, वह्निजलयोः, पुष्पपयःपावकैर्योरिति भाव्यम्, एवं भूतानां विनिमितगुणता =गुणविनिमयः। 'डुमिञ् प्रक्षेपणे' इति धातोर्मितेति रूपम्। प्रक्षिप्तेत्यर्थः। इदं विनिमयपदेन वृत्तौ दर्शितम् । गुणविनिमयो नाम गुणवद्द्रव्यगाढघटनमेव । इयमस्तीति कथं ज्ञायत इत्यत्राह व्योमनैल्यादिबोधे इति । अनीले नभसि नीलं नभ इति प्रतीतिर्हि पञ्चीकरणेन पृथिवीसंबन्धात्। भौतिकसंसर्गापेक्षया साक्षात् भूतसंसर्गस्यैव पञ्चीकरणदर्शकत्वात् इदमुदाहरणं दत्तम्। व्योमनैल्यादिबोधात् विनिमितगुणता लोकतोऽपि लक्ष्यत इति। अत्र पञ्चम्यर्थः सप्तम्याऽपि लभ्य एव । बोधः इति प्रथमान्तपाठकल्पनेऽप्यन्वयक्लेशात् स्थितमेव ज्यायः। ननु भूतान्तरसंसर्गात् अथम् अन्यत्र गुणोपलम्भ इति किम् ? तद्योगात्=भूतान्तरयोगात् अन्यत्रापि गुणस्योत्पत्तिरेवास्तु, लाक्षारसावसिक्तबीजोत्पन्नदाडिमकुसुमादौ रक्तिमादेरिवेत्यत्राह तदिति । गुणजनिः=गुणोत्पत्तिर्न, अत्र अन्यथा =उत्पत्तिं विनैव पटमलिनिमवदेव निर्वाहसंभवात्। उक्तमिदं प्रागेव, 'पञ्चीकारेण नैल्यं पटमलिनिमवत् भावितं चोपकुर्यात्' (१-४३) इति । वृत्तौ पटमलिनिमवदित्यादिकं लेखकनाक्यं पूर्वोक्तस्मरणाय; न स वृत्तिग्रन्थः ॥ १८ ॥

निष्कृष्टे शास्त्रदृष्ट्या न कथमपि मिथस्संकरः शङ्कनीयः
स्वाच्छन्द्याच्छङ्कमानः स्वमिव सुरगुरुं किं न शङ्केत मुग्धम् ॥ १९ ॥

लीलाविभूतिवत् नित्यविभूतावपि शब्दादिसंभवं तस्य च सर्वातिशाय्युत्कर्षशालित्वं चोपपादयति कस्तूरीति। यथा कस्तूरीचम्पकप्रभृतिषु गन्धसाम्ये सत्यपि सौरभविशेषः तत्तत्रोपलभ्यते, एवं त्रिगुणे शुद्धसत्त्वे च शब्दादिसद्भावेऽपि धर्मिग्राहकप्रमाणसिद्धं वैषम्यमनतिलङ्घनीयमेव। न हि वीणावेणुप्रभृतीनामैकरूप्येण स्वरनियमः, सुखविशेषहेतुत्वं चान्यथाऽन्यथोपलभ्यते। एतत् सर्वं प्राकृतेष्वेव। अप्राकृते पुनर्विभूत्यन्तरे श्रुतिस्मृतीतिहासपुराणप्रसिद्धाः प्रकारविशेषाः तत्तदनुभवाधीनानन्दविशेषाश्चापलपितु न शक्यन्त इति भावः। तदधिकद्रव्यं=त्रिगुणद्रव्याधिकं नित्यविभूतिद्रव्यम्। **निष्कृष्ट** इत्यादि। शास्त्रदृष्ट्या निर्णीते वैषम्ये सामान्यधर्ममात्रात् संकरो न शङ्कनीयः। अन्यथा सर्वत्रातिशङ्कायां निर्मूलशङ्कायाः सुलभत्वात् स्वमिव(?) सुरगुरुरपि मूढ इत्येव शङ्क्येत। अतो विलक्षणस्वरूपे शुद्धसत्त्वद्रव्ये विलक्षणाः शब्दादय इति न संकटं किंचित् ॥ इति **विभूतिद्वयेऽपि शब्दादिसंभवः॥**

(380) शब्दो नैकेषु युक्त्याऽप्युचितः इह पुनः पारिशेष्यं तु मन्दं
वायुः शब्दस्वभावः श्रुतिशिरसि यतः (मितः ?) सर्यते च स्वरात्मा।

---

वी— अद्रव्यत्वेन परिगणिताः शब्दादयो गुणाः न प्राकृता एव; किं त्वप्राकृता अपि। तावता
तेषामपि प्रतिकूलत्व-प्रतिनियतेन्द्रियग्राह्यत्वादिकमपि स्यादिति न मन्तव्यमित्याह कस्तूरीति।
कस्तूर्यादौ सामान्यतः सौरभत्वाकारः समः। अवान्तरभेदे विषमत्वं तु विस्पष्टम्। अत इह त्रिगुणे
प्रधाने, तदधिके =तद्विलक्षणे द्रव्ये च नित्यविभूतौ वर्तमाना इमे गुणाः। अतः शब्दत्वादिना साम्ये
अपि एतद्गुणगतानां तद्गुणगतानाञ्च धर्माणां न सांकर्यप्रसक्तिः। शास्त्रदृष्ट्या वैलक्षण्ये निष्कृष्टे
सति न संकरः शंक्य इति। नन्वेकत्र देशे उत्पन्नः शब्दो यथा क्रमेण सर्वदेशमिह व्याप्नोति, तथा
प्राकृतो नित्यविभूतिम् अप्राकृतः प्राकृतलोकांश्च व्याप्नुयादिति तादृशसांकर्यं स्यादिति चेत्—न वयं
तर्केण तत्त्वं स्थापयामः; किंतु प्रमाणमुखेन। ततः प्रतिनियतस्वभावत्वावगमात् न सर्वविभूति-
व्यापित्वादि शंकनीयम्। प्राकृतशब्दस्य नित्यविभूतिव्यापनमनपेक्षितम्, तेषां सर्वज्ञत्वात्।
तत्रत्याः शब्दा नात्राऽऽयान्ति। कदापि केनापि कस्याप्यनुपलब्धेः। इहावतारपुरुषसञ्चारात् तत्र
वैदिकपुत्रादिगमनश्रवणाच्च तन्मूलकः शब्दो व्याप्नुयात्। तावता परमपदस्थस्य नात्र व्याप्तिः
किमेवं शंकया। स्वर्गादिगतः शब्दोऽपि नात्राऽऽयाति अश्रवणात्। नूनमुपनायकत्वात्वाद्यभावोऽपि
तत्र हेतुः। अतः प्रामाणिकानामपलाप एवं शंकित्वा न शक्यः कर्तुम् ॥ १९ ॥

शब्दस्य सर्वभूतनिष्ठत्वं साधयति शब्द इति। नैकेषु= अनेकेषु सर्वेष्वपि भूतेषु युक्त्याऽपि, श्रुत्येव
युक्तिप्रमाणेनापि उचितः=वर्तमानत्वेन ज्ञातुमर्हः; तत्तद्भूतान्वयव्यतिरेकानुविधानात्। साक्षात्
तेषामाश्रयत्वप्रतीतेः स्वारसिक्याः बाधे मानाभावात्। नन्वस्ति बाधकमिति शंकायामाह इहेति।
पुनश्शब्दः शंकाद्योतकः। शब्दो न पृथिव्यादिगुणः श्रोत्रदेशप्राप्त्ययोगादिति रीत्या परिशेषानु-
मानं तु मन्दम्। शब्दो न विभुगुणः बाह्येन्द्रियग्राह्यगुणत्वादिति विपरीतपरिशेषस्यापि सुकरत्वात्।
विस्तरः १-४४ श्लोकवृत्तौ। शब्दप्रमाणमप्याह, वायुरिति। 'त्वमेव प्रत्यक्षं ब्रह्मासि', 'निश्श्वसितमेतत्
यदृग्वेदः' इत्याद्युपनिषदि वायुः शब्दगुणको मतः। विष्णुपुराणे च, वायुः, 'षड्जादिसंश्रितः। अमेद-

गन्धालोकादिनीतिं यदिह निजगदुर्यामुनाद्याः, ततोऽपि
स्पष्टो भेर्यादिनिष्ठोऽयमिति ; गतिवचो गन्धवत्तद्वि(शेषे)शिष्टे ॥ २० ॥

अत्र केचित्, 'शब्दस्याकाशमात्राश्रितत्व आहु'। तत्रेति प्रतिपादयति शब्द इति। युक्त्याऽप्यु चित इति । युक्तिरन्वयव्यतिरेकोपलम्भ । पृथिवीजलादावपि शब्दान्वयव्यतिरेकोपलम्भो हि दृश्यते । तेन शब्द क्वचिदाश्रित इति सामान्येनाधिकरणोपलम्भेऽपि स्वविवक्षिताकाशमात्रपरिशेषो न स्यात् ; तादृशस्य परिशेषस्यानियतत्वात् , यथा युक्त्याभासेन द्रव्यान्तरनिषेध , एवमाकाशनिषेधस्यापि केनापि तादृशेन युक्त्याभासेन कर्तुं शक्यत्वात् । तदिदमाह इहेति । युक्त्यापीत्यऽपिशब्देन प्रत्यक्षादिकमपि प्रमाणयति , 'मेघो गर्जति, शङ्खो नदति, भेरी ध्वनति' इत्यादिलोकोपलम्भात् । अस्तु वाऽयमानु- मानिकोपलम्भ । अथापि भेर्यादिनिष्ठ एवायमुपलभ्यत इति न केवलमाकाशैकनिष्ठत्वम् । अपि च श्रुतिरेव शब्दस्य भूतान्तरनिष्ठत्वमुपपादयति । अध्ययनोपक्रमपरिपाठ्ये, 'शन्नो मित्र' इत्यस्मिन् मन्त्रे, 'नमस्ते वायो त्वमेव प्रत्यक्ष ब्रह्मासि त्वामेव प्रत्यक्ष ब्रह्म वदिष्यामि' इति वायोरेव वेदात्मना परिणति रुपलभ्यते । तत्तु वायो शब्दाधारत्वमन्तरेण न सजाघटीति । एव, 'तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतद्यत् ऋग्वेद ' इत्यादिकमपि भाव्यम् । स्मर्यते च स्वरात्मा स्वररूपेण वायुरेव स्मर्यते, 'वेणुरन्ध्रविभेदेन भेद षड्जादिसञ्ज्ञित । अभेदव्यापिनो वायो तथाऽसौ परमात्मन ॥' इति । एव नाभिदेशादेव निर्गतस्य वायोः ताल्वादिस्थानसम्बन्धेन तत्तच्छब्दपरिणतिहेतुत्व स्मृत्यादिप्रसिद्धं स्वयमेवानुसन्धेयम् । उपलम्भस्तु पञ्चभूतसाधारणत्वान्नाकाशस्यैव शब्दाश्रयत्वमुपपादयितुं शक्नोति । तर्कोऽपि तादृश । अनुमानमप्यव्यवस्थितमिति (सर्व)प्रागेवोक्तम् । शब्दस्यापि गन्धवदालोकवच्च स्वाश्रयानु- वर्तित्वमशेषदेशव्यापित्व च लोकदृष्ट्या श्रीयामुनाचार्यादिभिरुपपादितम् । तत शब्दस्य भेर्यादि- निष्ठत्वमुपपादित भवति । कथं तर्हि शब्दस्य गतिव्यवहार 'भेरीध्वनिरुज्जृम्भते', 'अध्ययनशब्दश्च

---

वी– व्यापिनो वायो' इति षड्जादिस्वररूपशब्दात्मकत्वेन स्मर्यते । ननु आत्मसिद्धौ श्रीमद्यामुनार्यैः, "शब्दगन्धसूर्यालोकरत्नप्रभादयो गतिमन्तो धर्मितिवर्तिनश्च। अतिसूक्ष्मो सुरगमनधर्मा भौतिको हि शब्द ", "स खलु शङ्खमुखादेर्दवीयसोऽपि देशात् नोदनविशेषेण लोष्टादिरिव यावद्वेगमभिप्रतिष्ठते स्वाधारहितोऽपि" इति नभोगुणत्वप्रतिक्षेपेण वायवीयत्वञ्च शब्दस्योक्तम् । ततो आलोकादिवत् द्रव्यत्वमेवावसीयत इति अद्रव्ये तद्गणनमपसिद्धान्त इति शंका परिहरति गन्धेति । एवमवतरणात् तार्किकादिमतनिरासे संप्रदायसूक्ते प्रमाणीकरण कथमिति शङ्का निरस्ता । पञ्चमहङ्कारपरिणामत्व शब्दस्य श्रीभाष्योक्तमपि शब्दस्य द्रव्यत्वसाधक शङ्किना मन्यते । शंकेयं स्पष्टा न्यायसिद्धाञ्जने । अत्र समाधत्ते ततोऽपीति । तत्र वाक्ये गुणपदप्रयोगात् गन्धोदाहरणात् भेर्यादिधर्मितिवर्तित्व कथनाच्च सर्वभूतनिष्ठत्वं गुणत्वञ्चावसीयत एवेति भाव । गतिमन्त इति पद निर्वहति गतिवचो गन्धवदिति । 'वायुर्गन्धानिवाऽऽशयात्", 'व्यतिरेको गन्धवत्' इति गन्धस्य गुणत्वेऽपि गति व्यवहारोऽस्ति, धर्म्यंशमादित्वेन गमन निश्चित्य, तथैवेहापि । अहङ्कारपरिणामत्वोक्तिश्च सर्वभूत- मूलस्य शब्दतन्मात्रस्य तत उत्पत्ते । द्रव्ये शब्दत्वञ्च गन्धादिवत् तद्गुणमात्त्वादिति भाव ॥२०॥

सर्वत· प्रवर्तते' इति ? अयमपि पूर्वोक्तेनैव दृष्टान्तेन संघटते ; गन्धाद्याश्रयद्रव्यप्रसरणवत् शब्दाश्रयद्रव्यस्यापि सर्वत प्रसरणात् । यथा परपक्षे निमित्तकारणभूतवायोः प्रसरणेन सर्वत· शब्दोपलम्भ, एव तत्तद्द्रव्यप्रसरणेन तत्तद्द्रव्यनिष्ठशब्दोपलम्भस्यापि संभव इति । आकाशनिष्ठत्वं तु शब्दस्य भूतान्तर्गतत्वेनास्माभिरप्यनुमन्यते ॥

इति शब्दस्य सर्वभूताश्रितत्वम् ॥ २० ॥

(४81) सत्यान् सत्यापयन्तः कतिचन चतुरः स्पर्शरूपादिधातून्
शब्दं स्वार्हाक्षसिद्धं चतुरधिकरण प्राहुरेभ्यो न भिन्नम् ।
किं तत् भेदाप्रतीतेः, प्रबलविहतितः, संमतैक्यप्रमातः,
स्वाच्छन्द्यात्, देशनाया विभवत इति वा वीक्ष्य शिष्टा विजह्युः ॥ २१ ॥

अत्र केचित्, 'रूपादिकं चतु(रूपादि चतुः)ष्टयमस्ति । शब्दस्तु तच्चतुष्टय एव वर्तते, स च श्रोत्रगम्य., त(अ)थाऽपि तेभ्यो न भिद्यत' इत्याहु । तदिदमनुभाषते सत्यानिति । अत्र धातुशब्द परसिद्धान्तप्रयोगप्रसिद्धमनुवदति । अतिरोहितमन्यत् । अनुभाषितमर्थं विकल्प्य दूषयति किं तदिति । किं चतुर्भ्यो धातुभ्यो व्यतिरिक्तपदार्थभेदाप्रतीते, किं वा प्रबलव्याघातदर्शनात्, यद्वा चतुर्भिरुपरितनानामैक्यप्रतीते, यदि वा स्वाच्छन्द्यात, केवल(लं)सुगतगुरूपदेशाद्वा तादृश मतं स्वीक्रियते ? तत् सर्व[था शिष्टैस्त्याज्य ?]म्, असिद्ध्याद्याद्युदोषदूषितत्वात् । चतुर्भ्यो व्यतिरिक्तार्थप्रहाणे हेतुर्न भवतीत्यर्थ ॥

इति सौगतोक्तशब्दवल्लसिभङ्गः ॥ २१ ॥

(४82) शब्दोऽवस्थाविशेषः श्रुतिभिरभिहितस्तेन नैव स्वनिष्ठो
व्योमादेश्चाविभुत्वात् क्वचिदपि न तु तत्सन्निधिस्तद्विदूरे ।
साक्षादक्षाप्तिसाक्षात्कृत इति घटवद् द्रव्यमित्यप्यसारं
साध्यात् प्राग्घेत्वसिद्धेः ; न हि परमतवत्साभस श्रोत्रमत्र ॥ २२ ॥

---

४१– अर्वाञ्चस्तु शब्दो रूपादिचतुष्टयातिरिक्तो न भवति । केवलं भिन्नेन्द्रियग्राह्यत्वात् पृथक्त्वे न कल्पनेति मन्यन्ते, तन्निषेधति सत्यानिति। धातुशब्दो नानाविकारमूलभूतप्रधानांशपरः। स्पर्शादीन् चतुरो धातून् सत्यान्=अबाधितान् सत्यापयन्तः=स्वयमप्यस्तित्वेन ज्ञापयन्तः, कतिचन=बौद्धविशेषाः चतुरन्तर्गतमेव स्वार्हश्रोत्रग्राह्यतया शब्द इति व्यवह्रियमाणमाचक्षते । निरस्यति किमिति । तत् भेदनिरसनं, किं भेदप्रतीत्यभावात्, किं वा प्रबलात् बाधकात्, किं वा सर्वसंमतरूपाद्यैक्यप्रमाणसत्त्वात्, किं वा स्वेच्छया, किं वा देशनायाः=शास्त्रस्य विभवतः=प्राबल्यादिति वीक्ष्य=विमृश्य शिष्टाः=शब्दप्रमाणनिष्ठा. विजह्युः=उपेक्षेरन् । विधिलिङ् । शिष्टैस्त्याज्यमिति यावत् । वृत्तौ रूपस्य प्रथमग्रहणं बुद्धपरिपाट्या । 'तत् श्लोके स्पर्शस्य प्रथमप्रयोगः स्वसिद्धान्तानुसारेण । वृत्तौ रूपस्य प्रथमग्रहणं बुद्धपरिपाट्या । 'तत् सर्वमसिद्ध्यादि' इति वाक्ये तत्सर्वमित्यस्यानन्वयात् श्लोकानुसाराच्च, 'तत् सर्वथैव शिष्टैस्त्याज्यमसिद्ध्यादिदोषदूषितत्वात्' इति पाठस्तर्क्यते ॥ २१ ॥

शब्दो द्रव्यमिति भाट्टाः शाब्दिकाश्च । तन्निरस्यति शब्द इति । अवस्थाविशेषः द्रव्यस्याऽऽगन्तुको धर्मः । न स्वनिष्ठः=नाऽऽश्रयनिरपेक्षः, न द्रव्यमिति यावत् । ननु वेदान्तिमते आकाशस्य परिच्छिन्नत्वात् आकाशगुणत्वे आकाशरहितस्थले स न स्यादित्यत्र इष्टापत्तिरित्याह । तद्विदूरे=

अत्र केचिदाहुः, 'शब्दस्य गुणत्वमेव नास्ति, अपि तु द्रव्यत्वमेव ; यथाऽऽहुः, "वर्णात्मकाश्च ये शब्दा नित्याः सर्वगतास्तथा । पृथग्द्रव्यतया ते तु न गुणाः कस्यचिन्मताः" ॥' इति । एतच्च वाय्वाद्यवस्थाविशेषरूपशब्दप्रतिपादकश्रुतीतिहासपुराणादिविरुद्धत्वादनादर्तव्यमित्याह **शब्द** इति । **नैष स्वनिष्ठः** । स्वतन्त्रं द्रव्यं न भवतीत्यर्थः । अस्य च शब्दस्य स्वाधारभूतव्योमादेरविभुत्वात् व्योमादिरहिते देशे पुनरसन्निधानं न दोषायेत्याह **व्योमादे**रिति । परमाकाशे तु प्राकृताकाशाभावेऽपि शब्दसद्भावो युज्यत इति प्रागेवोक्तम् । तर्हि शब्दो द्रव्यं साक्षादिन्द्रियसंबन्धेन गृह्यमाणत्वात् घटवदित्यनुमानं प्रयुञ्ज्महे इति चेत्, तदप्यसारमित्याह **साक्षा**दिति । कुत इत्यत्राह **साध्या**दिति । अयमर्थः— शब्दस्य द्रव्यत्वे सिद्धे साक्षादिन्द्रियसंबन्धेन साक्षात्कारसिद्धिः ; तत्सिद्धौ तत्सिद्धिरितीतरेतराश्रयत्वम् ॥ अथापि द्रव्यत्वसिद्धिमन्तरेण साक्षादिन्द्रियसंबन्धस्सिध्यति, श्रोत्रस्याकाशत्वात् शब्दस्याकाशगुणत्वादिति चेत्-अत्र केचिदाहुः, 'हेतुसिद्धया साध्यसिद्धिर्व्याहन्यते' इति । तथा हि शब्दस्याकाशगुणत्वाङ्गीकारेण साक्षादिन्द्रियसंबन्धः सिध्यति । तथाच हेतुरेवायं साध्यं व्याहन्तीति । तदिदं सर्वमभिप्रेत्याह **साध्या**दिति । हेत्वसिद्धिमुपपादयति **न ही**ति । अस्मत्पक्षे श्रोत्रस्याकाशत्वायोगात् **नैयायिकादि**-मतवत् साक्षादिन्द्रियसंबन्धप्रसङ्गोऽपि नास्तीत्यर्थः ॥ **इति शब्दद्रव्यत्वभङ्गः ॥ २२ ॥**

(388) **वर्णानां सध्वनीनामभिदधति हरिद्वाससः पुद्गलत्वं ;**
**नाक्षादेस्सिद्धमेतत् ; न च तदभिमते शब्दितः शब्दशब्दः ।**
**सूक्ष्मद्रव्ये हि धर्मा श्रुतिविषयदशालक्षणो दुस्त्यजस्तैः ;**
**तस्मान्नास्तसमीक्षामतिपतितुममी शक्नुयुः ; तद्वदन्ये ॥ २३ ॥**

टी— आकाशरहितस्थले न शब्दसंनिधिरिति । परमपदे शब्दस्तु इतोः विलक्षणः=पृथग्भवति । मीमांसका आहुः शब्दो द्रव्यं साक्षात् संबन्धेन [संयुक्तसमवायादिपरम्परासंनिकर्षं विहायैव] इन्द्रियग्राह्यत्वात् घटादिवदिति । तत्राऽऽह साक्षादिति । साक्षादक्षाप्तिः=इन्द्रियसाक्षात्संनिकर्षः । खण्डितमिदं कुसुमाञ्जलौ; तदाह साध्यादिति । साध्यसिद्धेः प्रागित्यर्थः । ननु तार्किकेण नभोगुणत्व-स्वीकारात् अस्माभिश्च द्रव्यत्वस्वीकारात् श्रोत्रस्य च नभस्त्वात् तार्किकमते केवलसमवायेन, अस्मन्मते च संयोगेन ग्राह्यतया साक्षात्संबन्ध उभयेष्ट इत्यत्राह नहीति । वेदान्तिमते श्रोत्रस्याऽऽ-हंकारिकत्वात् भूतगुणे शब्दे संयुक्ताश्रितत्वमेव संनिकर्ष इति साक्षात्संबन्धासिद्धिरिति भावः॥२२

शब्दविषये जैनोक्तं निरस्यति । यद्यपि श्रीभाष्यशांकरादौ जैनाभिमतरीतिः शब्दतत्त्वे नोक्ता, अथापि तद्ग्रन्थारूढमतानूद्य निरस्यते। कोऽयं शब्द इति विमर्शे पुद्गलः शब्द इति (१-४१.) तेषामुत्तरम्। शब्दो द्विविधः वर्णो ध्वनिश्चेति। उभयस्य पुद्गलत्वं हरिद्वाससः=दिगम्बराः अभिदधति =वदन्ति। पुद्गलत्वमिति किञ्चित् प्रत्यक्षादिप्रमाणसिद्धं न भवति। तदभिमते =पुद्गलत्वेन जैनाभिमते-परमाणौ तत्संघाते च शब्दे इति शब्दो लोकैर्न प्रयुज्यत इति कथं तत्पुद्गलत्वं शब्दानाम्। अन्ततस्तेषामाशयं व्यनक्ति सूक्ष्मेति। रूपरसगन्धस्पर्शातिरिक्तं शब्दमनंगीकृत्य तत्रैव श्रोत्रग्राह्यतायां शब्दत्वमिति यो वादः स एभिर्दुस्त्यजः, पृथक्शब्दस्यागणनात्। अत एव यद्स्माभिः पुद्गलशब्दवाच्यमिष्टं, तदन्यः शब्दो नास्तीति ज्ञापयितुमेव, शब्दः पुद्गल इति तदुक्तमिति हि तैर्वक्तव्यम्। तत्र सूक्ष्मद्रव्यस्य परमाणोः श्रोत्रविषयभावदशा दुर्वचा। तस्यैव संघातनादशायां तथाभाव इति वक्तव्यम्। अत्र एवोच्यते,

सध्वनीनां वर्णानां पुद्गलरूपत्वमाहुः **क्षपणकाः**, तदिदमनुवदति **वर्णानामिति** । शब्दिद्वासमः नमाटाः । दूषयति **नाक्षादेरिति** । अयमर्थः— न तावत् प्रत्यक्षादिप्रमाणसिद्धत्वादयमर्थोऽवगम्यते । नापि लोकव्यवहारानुरोधेन । उभयमपि नास्ति । तदाह **न न्वेति** । तदभिमते पुद्गले न **शब्दशब्दः शब्दितः न व्युत्पन्नः** ; पुद्गलेषु शब्दशब्दस्य व्याकरणाभिधानपाठलोकव्यवहारशिष्टप्रयोगेष्वन्यतमस्याप्यभावात् , उपजीव्यानुमानाभावात् , तदनुग्राहकतर्काभावाच्चेत्यर्थः ॥ इति **शब्दपुद्गलत्वभङ्गः** ॥२३॥

(384) **वर्णे स्थैर्यं विरुद्धान्वयविरहवति प्रत्यभिज्ञा नियच्छेत् ;**
**तैव्रयादि व्यञ्जकस्थं भ्रमवशघटितं तत्र कल्प्येत दिग्वत् ।**
**एकाक्षग्राह्यसंवित्प्रतिनियतिरपि ह्यञ्जनादाविव स्यात् ;**
**व्यक्त्या स्यात् कार्यताधीः, यदि न निगदितो नैगमैरस्य नाशः ॥ २४ ॥**

वर्णात्मकशब्दस्वरूपनित्यत्वमाहुः **कौमारिलाः** । तदिदमाह **वर्ण इति** । पूर्वं द्रव्यत्वं निरा-

---

ळी- तादृशद्रव्येषु शब्दशब्दप्रयोगो न लक्ष्यत इति। तृतीयपादे स्थूलद्रव्ये इति पाठो वा, दुस्त्यज इत्यत्र दुर्वच इति पाठो वा युक्तः। अन्यथा उक्तरीत्या संघातदशायामिति पूरणीयम्। तस्मात् द्रव्ये दृश्यमाने शब्दशब्दप्रयोगाभावात् वीणा वाद्यते, वेणुः पूर्यते इत्येवं द्रव्यावस्थायामेव तत्प्रयोगात् अस्य-समीक्षित एव स्वाशयस्तैः प्रकटनीयः ॥ तदभिमते पुद्गल इति । पृथिव्यादौ भूते इत्यर्थः । पुद्गलेषु शब्दशब्दस्येति । यथा तत्परिकल्पितायाः पुद्गलेति परिभाषायाः पोषणगलनापरपर्यायोपचयापचयरूपावस्थाद्वयवदिति कथञ्चिदर्थोहनेऽपि न व्याकरणादिसौष्ठवम् । तथा पृथिव्यादौ शब्दशब्दशब्दपरवर्णध्वन्यादिविविधशब्दप्रयोगेऽपि न प्रमाणमित्यर्थः ॥ २३ ॥

शब्दस्य द्रव्यत्वं निराकृतम्। अथ वर्णानां नित्यत्वमपि निराक्रियते वर्णे इति। द्रव्यत्वे नित्यत्वं कौमारिलोक्तम्। गुणत्वे नित्यत्वं गुरुमतम्। श्लोकस्यार्थसार एवम्— वर्णानां स्थैर्यं तीव्रत्वादीनां व्यञ्जकमात्रगतत्वम् एकप्रदेशवर्तिनामपि विभिन्नव्यञ्जकव्यंग्यत्वं, वर्णानामकार्यत्वेन तदभिव्यक्तेरेव कार्यत्वमिति वर्णनित्यत्ववादिभिरुच्यमानं सर्वमिष्येत, यदि वर्णनाशो वेदादिप्रमाणसिद्धो न स्यात्, स्पष्टमनित्यत्वश्रवणात्तु तादृशनिर्वाहाणामनादर इति। पदार्थस्तु—सोऽयं गकार इत्यादिप्रत्यभिज्ञा वर्णस्य सर्वस्य स्थैर्यं व्यवस्थापयेत् । अतो नित्यता । ननु तीव्रगकारेण मन्दगकारस्यापि ऐक्यप्रतिभिज्ञा लक्ष्यते ; तीव्रत्वादिधर्माणां विरुद्धत्वात् कथं धर्म्यैक्यमिति चेत्—वर्णो विरुद्धधर्मान्वयविरहित एव । तीव्रत्वादेरन्यनिष्ठत्वात् । किंनिष्ठमिति चेत्—तैव्रयादि= तीव्रत्वादिकं वर्णव्यञ्जकत्वाभिमतताल्वादिव्यापारप्रयत्नादिगतं तत्र= वर्णे भ्रमवशघटितम् आरोपितमिति कल्प्यते= अनुमीयते ; यथा दिक्संबन्धो वर्णे= आरोप्यते तद्वत्। वर्णो विभुरिति नित्यवर्णपक्षे वा, भूतमात्रनिष्ठ इति पक्षे वा तत्तद्दिङ्मात्रसंबन्धो हि साक्षात् दुर्वच एव । विभुत्वे परिच्छिन्नत्वाभावात्। अन्यनिष्ठेऽन्यसंबन्धाभावात् । अतो दिक्संबन्ध आरोपित एव । ननु एकेन्द्रियग्राह्याणामेकप्रदेशस्थितानामेकव्यञ्जकव्यंग्यत्वमेव दृष्टम् । यथा प्रदीपे प्रकाशमाने तद्व्यंग्यं घटपटादिकमेकचक्षुर्व्यंग्यमविशेषेण प्रकाश्यते । तथा ताल्वादिव्यापारे कस्मिंश्चित् व्यञ्जके सति सर्वे वर्णाः व्यङ्ग्या भवेयुरिति चेत्— इयमेकेन्द्रियग्राह्याणां सर्वेषां युगपद्ग्राह्यत्वमिति नियमत्यागेन तादृशसंविद्विषये प्रतिनियतिः= व्यवस्था-एकत्र समाविष्टानामेकेन्द्रियग्राह्याणां केनापि कस्यापि ग्रहणं, न सर्वेषामिति प्रतिनियतिरपि स्यात् , यथा अञ्जनवशात् । तर्हि वर्णराशिरूपस्य ग्रन्थादेः दृश्यं कथमिति चेत्—वर्णाभिव्यक्ति-

कृतम्, इदानीं नित्यत्वमिति विभागात् न पौनरुक्त्यम्। ननु तीव्रमन्दादिभेदेन विरुद्धधर्मग्रस्तत्वात् कथमस्मिन्नित्यत्वमित्याशङ्कयाह **विरुद्धान्वयेति**। तीव्रमन्दादिभावो व्यञ्जकस्य एव; न पुनः शब्दस्य इत्याह **तैव्रयादीति**। कथं तर्हि शब्दे तैव्रयादिप्रत्यय इत्यत्राह **भ्रमवशघटितमिति**। तत्र दृष्टान्तं दर्शयति **दिग्वदिति**। यथा नित्यविभुशब्दवादिनां पूर्वशब्द, अपरशब्द इति दिक्प्रत्ययः काल्पनिकः, एवं तीव्रादिप्रत्ययोऽपीति। अनेनैव दृष्टान्तोपादानेन दिक्प्रत्ययस्यापि शब्दे काल्पनिकत्वं स्थापितं भवति। अथवा अनित्याविभुशब्दवादिनामपि शब्दे दिक्प्रत्ययः काल्पनिक एव। भेर्याद्युपाधीनामेव तत्तद्दिक्संबन्ध.। उपाधिसंबद्धाकाशनिष्ठतामात्रेण शब्दे दिक्संबन्धव्यवहारः। ननु कथं, "समानेन्द्रियग्राह्याणा समानदेशस्थानाम्" इत्यादिना प्रतिनियतव्यञ्जकाभिव्यङ्ग्यत्वं प्रतिषिद्धं शब्दानाम्? अतस्ताल्वादिव्यापारोत्पाद्यत्वं शब्दस्येति॥ तत्र; अञ्जनादिभिर्व्यभिचारात्। दृष्टं खलु प्रतिनियताञ्जनाभिव्यङ्ग्यत्वं पिशाचादौ, निहितनिध्यादौ च; तद्वदिहापि ताल्वादिव्यापाराणामकारणत्वेऽपि न दोषः। तदिदमाह **अञ्जनादाविवेति**। कथं तर्हि, 'कवि. काव्य निर्ममे', 'प्रोवाच....ब्रह्मविद्याम्' इति शब्दे कार्यत्वप्रतिपत्तिरित्यत्र आह **व्यक्त्येति**। इत्थमङ्गीकारे श्रुतिविरोधमाह **यदि नेति**। श्रुतिस्मृतीतिहासपुराणेषु शब्दस्य विनाश एव सर्वत्र प्रतिपाद्यत इत्यर्थ। **नैगमैः** निगमसंश्रयैर्वचनैः शब्दनाशो निगदितः॥

**इति वर्णनित्यत्वे श्रुत्यादिप्रमाणविरोधः॥ २४॥**

(३८५) ध्वन्यात्मा वायुभेदः श्रुतिविषयतयाऽपाठि तौतातिताद्यैः;
तद्वत् पञ्चाशदेते समकरणतया वर्णिताः किं न वर्णाः।

---

प्र॰— विभुषु वर्णेषु पूर्वापरादिदिक्प्रत्ययस्यापि काल्पनिकतया निर्वाहद्योतनार्थं स्वमतमात्रसिद्धदिक्प्रत्ययकाल्पनिकत्वदृष्टान्तपरतया व्याचष्टे—यथा नित्येति। परमतमात्रसंमतस्यापि प्रतिबन्ध्यभिप्रायेण दृष्टान्ततया दर्शने औचित्यातिशयोऽस्तीति तत्परतया व्याचष्टे—अथवाऽनित्येति॥२४॥

श्री– कार्यत्वादेव। एतावत् पूर्वपक्ष्याशयवर्णनं श्लोके। स्वपक्षमाह यदि नेत्यादिना। नैगमैः वेदसंबन्धिभिः, वेदगतैर्वा वेदोपजीविस्मृत्यादिभिर्वा वर्णनाशो नोक्तश्चेत्, सर्वमिदं स्वीक्रियेत। नाशस्योक्तत्वात् नैतदिष्यत इत्याशयः। अत्र श्लोके कार्यताधीरित्यन्तं पूर्वपक्षिवाक्यमेव कृत्वा, तदुपरि साक्षात् तत्खण्डनेन, "इति न; निगदितो नैगमैर्ह्यस्य नाशः" इति सर्वश्लोकशैलीमनुसृत्य रचनायां संभवन्त्याम्, भंग्यन्तरादरणेन स्थैर्यादिपक्षे किञ्चिदादरप्रदर्शनम्, सिद्धान्ते संभवत्पक्षान्तरव्यञ्जनार्थम्। तच्च—श्रुतिबलात् वर्णानामुत्पत्तिनाशौ स्त एव। अथापि सृष्ट्यारम्भे वर्णाः सकृदुत्पादिताः आप्रलयमविनश्य तिष्ठन्ति। तत्तत्पुरुषोच्चारणकालेषु न नवनवोत्पत्तिः; किन्त्वभिव्यक्तिमात्रम्। अतोऽभिव्यक्तिवादा आपातता एतद्विषयाः उपपन्नाः। अत एवाहंकारपरिणतयो [illegible]र्णाः इति श्रीभाष्यम्—इत्येवंरूपम्। इदं नयद्युमणिमतमिष्टमनिष्टं वा व्यज्यत इह। ननु कथमिति। [illegible]त्यादिना प्रतिषिद्धं शब्दानां प्रतिनियतव्यञ्जकाभिव्यंग्यत्वं कथमुच्यते इत्यर्थः॥ २४॥

ध्वनिवर्णयोर्वैषम्यं कौमारिलाभिमतमयुक्तमित्याह ध्वनीति। यथा ध्वनिर्वायुविकारः श्रोत्र[illegible]ग्राह्यः इति, तथा सर्वे वर्णा अपि स्युः। तौतातिताः=कौमारिलाः। तुतातः=कुमारिलः। "अत्र [illegible]नोक्तम्" इति वाक्ये तु इति पृथक्कृत्य नोक्तमिति विभज्यार्थानन्वयात् चिन्त्यमाने आचार्य,

'तैव्रयादिर्वर्णधर्मो नियत इति यथादर्शनं स्थापनीयम् ;
स्पर्शादौ चैवमिष्टं ; तदिह न सुलभा द्रव्यता नित्यता च ॥ २५ ॥

किञ्च ये शब्दस्य द्रव्यत्वं नित्यत्वं च वर्णयन्ति, तैरेव तौतातिताद्यैः कौमारिलाद्यैः ध्वन्यात्मा वायुभेद एव श्रुतिविषयतयाऽपाठि। एवमेव पञ्चाशदेते वर्णाः किं न वर्णिताः? समकरणतया समानेन्द्रियग्राह्यतया; समानताल्वादिव्यापारजन्यतया च। तेषामेव वर्णानां वायुभेदानां स्वाभाविक एव तीव्रादिभावः; न पुनरौपाधिकः। (धिक इति?) यथादर्शनं व्यवस्थापनीयम्; यथा दुरालभास्पर्शस्य दुःखहेतुत्वम्, दहनस्पर्शस्य दाहहेतुत्वम्। तस्मात् ध्वन्यात्मकशब्दवत् वर्णात्मकोऽपि शब्दो वाय्ववस्थाभेद इति [तथैवा?]ङ्गीकारे को विशेषः? अवस्था च आगन्तुरपृथक्सिद्धो धर्म इत्युक्तम्। अतो द्रव्यत्वं नित्यत्वं च वर्णानामिति वर्णितमेतदप्रामाणिकमिति वर्णयामः। विस्तरस्त्वन्यत्रानुसन्धेयः॥ इति वर्णानित्यत्वम् ॥

(४४६) शब्दानित्यत्वतोऽपि श्रुतिषु न विलयः स्यात् क्रमव्यक्तिनीत्या ;
तन्नित्यत्वे च काव्यादिक्रमपि न कथं नित्यमित्यभ्युपैषि।
तस्मान्नित्यैकरूपक्रमनियमवशान्नित्यभावः श्रुतीनाम् ;
ईशोऽप्यस्यापको नः ; परमतिचकितैर्वर्णनित्यत्वमुक्तम् ॥ २६ ॥

---

इन्द्रियग्राह्यतयेत्यादिना ॥ २५ ॥
पू॰– समकरणतयेति करणशब्दं ग्राहकोत्पादकपरतया व्याचष्टे— तन्नामा। कौमा-
श्री॰–तुना इति तृतीयान्तं स्यादित्युक्तं कुमारिलेनेति तुनात इति तेन प्रशंसितोऽयमिति
रिलपदे प्रयोक्तुं शक्येऽपि एतत्कथनं तादृशस्याप्यत्र स्खालित्यज्ञापनाय। पञ्चाशदिति संस्कृतवर्णानां तावत्त्वात्। अन्येऽपि ये केचित्, ते न निवार्यन्ते। एकस्यैव वर्णस्य व्यञ्जकतारतम्यात् कत्वगत्वा-
दीति यथा न स्वीकृतम्, किं तु वर्णभेदः, तथा कत्वादिर्जातिः तज्जातीया वर्णा अनेके इत्यपी-
ष्यतामिति ज्ञापनार्थं तदुक्तिः। एवञ्च तीव्रत्वादिः साक्षात् वर्णगत एव भविष्यति। ननु तीव्रत्वादे-
रवस्थारूपत्वात् तदाश्रयस्य वर्णस्य द्रव्यत्वमेव स्यादित्यत्राह स्पर्शादौ चेति। दुरालभारूपौषधि-
पत्रादिस्पर्शे कण्डूतिर्वेदना अनुभवसिद्धा, तथा अग्निस्पर्शे दाहश्च। एतत्करत्वमेव तीव्रत्वम्।
तत्र तस्य यथा नावस्थारूपत्वम्, कारणताविशेषरूपत्वात्, तद्वत् वर्णगततीव्रत्वादिकमपीति।
नातो द्रव्यत्वापत्तिः, नतरां नित्यत्वापत्तिः। स्पर्शादिवत् सर्वथैवानित्यत्वेऽनुभवसिद्धे सृष्ट्यादा-
वुत्पत्तिः मध्येऽभिव्यक्तिः प्रलय एव नाश इत्यर्धजरतीयमप्ययुक्तमित्याशय उन्नेयः। व्यवस्थाप-
नीयम् =वर्णभेदेन स्थापनीयम्। स्वीकारे इति वाक्यं न स्वरसान्वयम् ॥ २५ ॥
ननु वर्णानित्यत्वे वेदानित्यत्वं स्यादित्यस्यानभीतिमपाकरोति शब्देति। वर्णनित्यत्वं न वेद-
नित्यत्वसाधकम्; नापि वर्णानित्यत्वं तद्बाधकमित्याशयः। अयमर्थः–शब्दानां वर्णानामनित्यत्वेऽपि
श्रुतिषु =वेदेषु विलयः= अनित्यता नास्ति। कथम्? क्रमाभिव्यक्तिनीत्या। नात्र क्रमस्याभिव्यक्ति-
रिति विग्रहः; वर्णानां नित्यत्वे पौर्वापर्यरूपक्रमस्य दुर्वचत्वात्। अतः क्रमेण व्यक्तिः= अभिव्यक्तिः
क्रमव्यक्तिः। व्यक्तिक्रम इति यावत्। तदिदम्, तदनुक्रमोऽपि इति उपलम्भानुक्रमोक्त्या व्यक्तम्।
वर्णनित्यत्ववादिना वर्णाभिव्यक्तिक्रममादाय वेदनित्यत्वं वक्तव्यम्, अनित्यत्ववादिना चोत्पत्तिक्रम-
मादायेत्यविशेष इत्यर्थः। न हि केवलवर्णराशिर्वेदः; किंतु नियतपौर्वापर्यापन्नवर्णसमुदायः।
पौर्वापर्यञ्च वर्णाभिव्यक्तिनिष्ठम्। तादृशानित्याभिव्यक्तिविशिष्टवर्णराशेः कथं नित्यत्वम्; विशेषणा-

कथ तर्हि वर्णानित्यत्वे वेदनित्यत्व सिध्यतीत्यत्यन्तर्भीतस्यात्याल्लिकृयनिमित्तचोद्य परिहरति शब्देति। शब्दानित्यत्वेऽपि श्रुतिषु न विलय स्यात् यथा शब्दाना नित्यत्वेऽपि नित्यविभूना तेषा देशत कालतो वा कश्चित् क्रमो नास्ति, क्रमविशेषविशिष्टस्यैव शब्दस्य पदत्व वाक्यत्व चानुवर्ण्यते, स पुन क्रम कीदृग्रूप इति चिन्तने शब्दाना क्रमाभिव्यक्तिमात्रमेव अभिव्यक्तिश्चोपलम्भसामग्रीसान्निध्य वा, तदधीनोपलम्भो वा, तदनुक्रमोऽपि तत्कालपरम्परासपात, सर्वमेतदनित्यमेव, एव च यथाक्रमाभिव्यक्त्या वेदनित्यत्व भवद्भिरभिव्यक्तिनियममात्रेणाङ्गीक्रियते— एव क्रमविशेषविशिष्टशब्दोत्पत्तिपारम्पर्यमेवोच्चारणक्रमनियम, तेनैव वेदनित्यत्वमस्माक सिध्यति। वर्णनित्यत्वमप्रयोजकमेव, वर्णानामवेदत्वात्। वाक्यसङ्घातविशेषो हि वेद, पदसङ्घातविशेषो वाक्यम्, पद च वर्णसङ्घातविशेष, सर्वमेतदनित्यमेव। वाक्याना सजातीयत्व(साजात्य)मात्र त्ववशिष्यते। तदेव नित्यत्वमिति।

अन्यथा वर्णाना नित्यत्वमात्रेण काव्यादिक(दीना)मपि नित्य[त्व]मिति कथ नाभ्युपैषीत्याह **तन्नित्यत्वे** चेति। कथ तर्हि वेदनित्यत्वमित्यत्र नित्यत्वे प्रयोजक निगमयति **तस्मा**दिति। इद खलु वेदाना नित्यत्वम्, यत् नित्यैकरूपक्रमविशेषोच्चार्यमाणत्वम्। स पुन क्रमो निपुण निरूप्यतामुच्चारणमात्रनिष्ठ एवेति। एतेनाध्यापकाना पूर्वपूर्वाध्यापकाध्ययनानुक्रमानुसरणमेव वेदनित्यत्वमिति सिद्धे सति, ईश्वरोऽपि पूर्वकल्पानुसरण स्वसकल्पसिद्ध स्वयमप्यनुसरतीति, वेदेऽपि पूर्वकल्पोच्चारणानुसरणमनुवर्तयतीति वेदनित्यत्वसिद्धि। वर्णनित्यत्ववादिभिस्तु तदनित्यत्वे वेदानित्यत्वभ्रान्त्या तद्भ्रान्तिनिबन्धनभीत्या वा वर्णनित्यत्वमुक्तमिति न तानप्यधिक्षिपाम ॥ **इति वर्णानित्यत्वेऽपि वेदनित्यत्वप्रकार:** ॥ २६ ॥

(387) **नैवोष्णौ नापि शीतौ क्षितिसततगती तत्र तोयादियोगात्**
**शीतत्वादिप्रतीतिस्तदुपधिकतया तत्र तत्रैव दृष्टे:।**
**आयुर्वेदे तुषारो मरुदिति कथन त्वद्भिराप्यायिकाभि:;**
**वृद्धिह्रासौ समाद्यैर्भवत इति पर तच्चिकित्सानियत्यै ॥ २७ ॥**

---

टी— नित्यत्वे विशिष्टानित्यत्वस्य ध्रुवत्वात्। यदि विशेष्यस्योत्पत्तिविनाशाभावमात्रेण नित्यता, तर्हि तन्नित्यत्वे च काव्यादिकमपि न कथ नित्यम्? सर्वेषा ग्रन्थाना तत् नित्यत्व कुतो नाभ्युपैषि। अत वेदवर्णाभिव्यक्तिपौर्वापर्यनियम अनादिरनन्तश्च। इतरग्रन्थवर्णाभिव्यक्तिक्रम स्वतन्त्रपुरुषोत्पादितत्वात् सादि, पठनपारम्पर्यलोपात् प्रलयानन्तरमुन्मेषे प्रमाणाभावाच्च सान्तश्चेति श्रुतीना नित्यत्व त्वया मीमासकेन वक्तव्यम्। अस्माभिस्तु अभिव्यक्तिस्थाने उत्पत्तिघटनेन क्रमनियमस्यानादिनिधनत्व मुच्यते। ननु सृष्ट्यादावीश्वर तत्स्मरण कथ न करोतीति चेत्—तदिद तार्किकमतम्, न तु नस्समतम्। तथाऽऽदौ पूर्वकल्पस्थितवेदराश्यध्यापकत्वात्। एव स्थिते मीमासकैर्वर्णनित्यत्वम् अतिचकितै परमुक्तम्। नित्यत्वभङ्गभयातिशयादेव अयुक्तेर्युक्तित्वभ्रान्त्यैवोक्तमिति। पूर्वकल्पानुसरणमिति। सर्वपृथिविषयेऽपि चतुर्मुखादिकार्यमिति विशेषणीयम् ॥ २६ ॥

पञ्चभूतगत शब्दो न्यरूपि, भूतचतुष्टयगत स्पर्शो निरूप्यत नेति। क्षितौ =भूमावचलाया सततगतौ = सदागतौ वायौ चानुष्णाशीत एव स्पर्श। तत्र क्वाचित् शीतोष्णस्पर्शप्रतीति

एव शब्दं निरूप्य स्पर्शे विशेषान्(पं) निरूपयति नैवेति। यथोपलम्भमनुष्णाशीतस्पर्शौ पृथिवीवायू। तत्र तोयादियोगात् शीतत्वादिप्रतीति, शीतं स्थलं शीतो वायुरित्यादि। तत्र हेतुमाह तदुपधिकत्वयेति। दर्शन हि सर्वत्र व्यवस्थापकम्, उष्णा भू, उष्ण जलमित्यादिष्वातपाद्युपाधिवशादेव तत्रतत्रौष्ण्यादे दर्शनात्॥ कथं तर्हि आयुर्वेदे, 'तुषारो मरुत्' इत्युच्यते, तुषार शीत[ल] इत्यर्थ। तत्तु आप्यायिकाभिरद्भिरेव। कथ वा तर्हि, "वृद्धिह्रासौ समाद्यैर्भवत" इति तुल्यगुणयोगेन विरूपाणामपि तत्रैवाऽऽयुर्वेदे साम्यादिकमुच्यते? तत् पुन चिकित्सानियमार्थम्। अयमत्र भाव -अस्य धातोरनेन हेतुना अभिवृद्धि, अनेन च परिक्षय इत्यादि शास्त्रसिद्धं दृष्ट च। सर्वेषा धातूना यथोचित चिकित्सा अनादिसिद्धा। शास्त्रेण तत्र[तत्र] चिकित्साविशेषनियमसिद्ध्यर्थं तानितानि रूपाणि कल्पितान्यकल्पितानि [वा?] व्यवह्रियन्त इति नैतावता पदार्थतत्त्वनियमसिद्धिरिति॥ **इति अनुष्णाशीतस्पर्शाधारनियमः ॥२७॥**

**(388) स्यादुष्णः कृष्णवर्त्मा, सलिलमपि तथा शीतमस्तु प्रकृत्या;**
**स्पर्शोऽन्योऽप्यत्र दृष्टः; स तु भवतु रुमाक्षिप्तलावण्यवच्चेत्।**
**मैव संसृष्टवस्तूपधिनियततया तद्विवेकस्य युक्तेः;**
**प्रायः शीतो भवेति प्रभृतिकमपि तद्दाहकत्वादिरोधात्॥ २८॥**

एव शीतोष्णभूतनियमोऽपि यथोपलम्भं द्रष्टव्य इति दर्शयति स्यादिति। उष्ण कृष्णवर्त्मा, तथैव जलमपि शीतमित्युपलभ्यते प्रकृत्या। अत्र कश्चिदाह, 'अन्योऽपि स्पर्शो दहने सलिले च कदाचिदुपलभ्यते, स तु रुमाक्षिप्तकाष्ठादिलवणत्वन्यायेन तस्यैव परिणतिविशेष' इति। तदिदमाह स्पर्श इति। तन्निराकरोति मैवमिति। रुमाक्षिप्तकाष्ठादेर्लवणत्वपरिणति प्रत्यक्षसिद्धगुणवैषम्यनियमेन युक्ता। अत्र त्वग्न्यादिसंसर्ग एव जलादेरौष्ण्य तथा सलिलसंसर्ग एव भूतान्तरे शैत्यमित्युपाधिसंसर्गो दृश्यत इति विशेष। इदमेव स्फोरयति संसृष्टेति। कथ तर्हि, "शीतो भव हनूमत" इति वह्नेरपि शीतत्वमित्याशङ्क्याह प्राय इति। अयमत्र भाव — न पुनर्वह्नेः शीतत्व जायते, अपितु सीतासङ्कल्पविशेषेण दाहकत्वमेवोपरुध्यत इति॥ **इति शीतोष्णभ्रम(भूत?)नियमः ॥ २८॥**

**(389) पीता भूः, श्वेतमम्भो, हुतवहपवनौ रक्तधूम्रौ, तथा द्यौः**
**नीलेति क्वापि शिष्ट तदिह न नियतां वर्णचर्चां ब्रवीति।**

---

1 (3)–'वृद्धिह्रासौ' इत्यादि व्याचष्टे—कथ तर्हीत्यादिना। जलविकारस्य श्लेष्मण समेन वायुना वृद्धिर्भवति, विषमेण वह्निना ह्रासो भवतीति वायोर्जलसाम्यमुच्यत इत्यर्थ। कल्पिता यकल्पिता-

(4)— जलतेजस्संपर्कोपाधिका। तत्रैव = सपक सत्येव तत्र = क्षित्यादौ दृष्टे। आयुर्वेदे मरुत् = वायु तुषार = शीत इत्युक्ति वायु शीतेन जलेनाऽऽप्यायित = वर्धितो भवतीत्याशयेन। 'वृद्धि समानैः सर्वेषा विपरीतैर्विपर्यय ' इति वचनादनुभवाच्च समानवस्तुसंबन्धाधीनत्वात् वृद्धे वायोश्च तोयाप्यायनदर्शनात् तोयस्य वातसाजात्यमनुचिन्त्यैव तुषारो मरुदित्युक्तिरिति चेत्—नावता शीतस्पर्शवत्त्वेन साजात्य न विवक्षितम्—किन्तु एकरूपचिकित्सया परिहार्यत्व शीतस्य वायोश्चेति भाव्यम्॥ अनुष्णाशीतस्पर्शविषये वक्तव्यमुक्तम्। शीतोष्णविषये आह स्यादिति। कृष्णवर्त्मा = अग्नि प्रकृत्या

**ध्यानार्थं मन्त्रवर्णेष्विव कथितमिदं ; व्योमवातौ ह्यरूपौ ;**

**पीतैकान्त्यं भुवोऽक्षश्रुतिहतम् ; अथ तत्प्राचुरी, माऽस्तु ; मा वा ॥ २९ ॥**

एवं रूपमपि परिशोधयति **पीतेति**। अत्र कश्चिदचूचुदत्। पीता भू [भूमि·] श्वेतमम्भ·, वह्निपवनौ, रक्तधूम्रौ, द्यौर्नीलेति **मन्त्रशास्त्रे** वर्णविशेषो विविच्यते ; तच्च शास्त्रं नाप्रहनिबन्धनम् ; अतः तदनुसारेण नियता वर्णसिद्धिरनुसरणीयेति । तदिदं निराचष्टे **तदिहेति** । कथमित्यत आह **ध्यानार्थमिति** । केवलं ध्यानार्थमेव तत्तद्वर्णकथनं तेषुतेषु भूतेषु । तत्र दृष्टान्तमाह **मन्त्रवर्णेष्विवेति** । अत्रैव हेतुमाह **व्योमेति**। अरूपावेव ह्याकाशवायू रूपवत्तयाऽत्र निर्दिश्येते। किंच अनेकरूपयुक्ताया भुवः पीतैकान्त्यवचनं प्रत्यक्षविहतं श्रुतिविहतं च ; श्रूयते हि, 'यदग्ने रोहितं रूपं तेजसः तद् यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' इति ॥ तर्हि प्राचुर्यविशेषात् तत्तद्वर्णवत्त्वसिद्धिरिति चेत् ; साऽप्यस्तु वा मा वा , नास्माकं काचित् हानि(क्षति)रित्याह **अथ तत्प्राचुरीति** ॥ **इति भूतपञ्चकवर्णोक्तिनिर्वाहः ॥ २९ ॥**

---

**पू— नीति । वायौ जलं(ल?) साम्यं कल्पितरूपम्, वह्नौ वैषम्यं तु अकल्पितमित्यर्थः ॥ २७ ॥**

**वी— स्वभावतः उष्णः स्यात्। सलिलं = जलञ्च प्रकृत्या शीतम्। अथापि अत्र = अग्नौ जले चान्योऽपि स्पर्शो दृष्टः = अनुभूतः कचित् । अग्नेः शैत्यम् 'शीतो भव हनूमतः' इत्यत्र, जलस्यौष्ण्यञ्च बहुलमग्निसंयोगे । स स्पर्शः संयुक्तोपाधिगत एव, न तु साक्षात् अग्नौ जले चेति कुतः, यथा रुमायां = लवणभूमौ क्षिप्तं काष्ठं स्वयमेव साक्षाल्लवणं भवति [लावण्यं = लवणत्वम्], तथा सोऽग्निः साक्षात् शीतः, जलञ्च साक्षादुष्णं भवत्विति। इमां शंकां निरस्यति मैवमिति। रुमाक्षिप्तं काष्ठं लवणं जातं सर्वदा लवणमेव, न तत्रान्यथाभावः, अग्निसंपर्काधीनजलौष्ण्यादिकं तु न तत्र स्थायि। संसृष्टवस्तुरूप उपाधिर्यावत् संसृष्टो भवति, तावदेव तदुपलम्भः। अतोऽन्वयव्यतिरेकवशात् तद्विवेकस्य = रुमाकाष्ठवैलक्षण्यस्य युक्तेः = योगात् न साक्षात् स गुण इति । नन्वस्तु सलिलौष्ण्यमन्यथा । हनूमतोऽग्निशैत्यमौपाधिकमिति न सुवचम्, तत्र जलसंबन्धानुक्तेः। अतोऽनौपाधिकः सीतासंकल्पजः साक्षादयं गुण इत्यत्राह प्राय इति । वस्तुतस्तत्र न शीतस्पर्शः, उष्णबाधावत् शीतबाधाया अपि विशेषेण वानरे वर्ज्यत्वात् । अत्र उष्णस्पर्शकार्यं यत् दाहकत्वमुष्णस्पर्शवेदनञ्च तदभावमात्रविवक्षैव । अन्यथा स्पर्शस्यैव नष्टत्वे लंकाऽपि न दह्येत । प्रभृतिशब्देन सीताकृताग्निप्रवेशोक्त्यादिकं ग्राह्यम् । प्राय इत्यनेन चन्द्रप्रभादौ परम्परया शैत्यमपि संभवत्यमिति सूच्यते ॥ २८ ॥**

मन्त्रशास्त्रे पञ्चानां भूतानां प्रसिद्धातिरिक्तवर्णनियमोक्तिः कथमित्याशंक्य, तथा ध्यानार्थं तदुपदेश इति समाधत्ते पीतेति। धूम्रवर्णः = शुद्धधवलविलक्षणः। द्यौः = आकाश.। आरोपितस्यापि ध्यानमित्यत्र दृष्टान्तमाह मन्त्रवर्णेष्विवेति । मन्त्राणां शब्दरूपाणां रूपप्रसक्त्यभावेऽपि 'शुक्लो वर्णः उदात्तादिः स्वरः' इति स्वराद्यविशेषं तत्रतत्र मन्त्रे प्रतिनियतो वर्णोऽपि (रूपमपि) कथ्यते । तत्र ध्यानार्थमविद्यमानोक्तिरेव हि। तथेति भावः। किं दृष्टान्तान्वेषणेन, नीरूपे भूतेऽपि रूपकथनादपि तथेत्याह व्योमेति। गगने नैल्यं विवादास्पदम्। पृथिव्यां पीतरूपं न सार्वत्रिकम्। प्रत्यक्षविरुद्धत्वात्। श्रुतिविरुद्धत्वाच्च, 'यत् कृष्णं तदन्नस्य' इति स्वतः कृष्णरूपोक्तेः अन्यत् सर्वं पाकजम्। अथ तत्र पीतरूपप्राचुर्यमस्तु इति चेत्–सा प्राचुरी स्यान्नाम ; अथवा मा भूत्। अत्र श्वेतमम्भः, हुतवहो रक्तः इत्यत्र नानुपपत्तिः। व्योमनैल्यं क्वचिद्देशे गृह्यतेऽपि। पीतत्वं च कान्त्यैकतयाऽप्युपपन्नमिति ध्येयम् ॥२९॥

(390) कृष्णामाम्नासिषुः क्ष्मां ; तदिह न विरहं वक्ति रूपान्तराणां
प्रत्यक्षादेर्विरोधात् ; पचनविषमितं स्पर्शगन्धादि चास्याः ।
पाथस्तेजोविशेषे स्फुरति वसुमतीभागतो वर्णभेदः ;
न ह्यम्भः क्वापि दृष्टं विपरिणतगुणं पाकसंस्कारतोऽपि ॥ ३० ॥

तर्हि कथं श्रुत्या पृथिव्याः कृष्णत्वनियम इत्याशङ्क्य परिहरति कृष्णामिति । 'यत् कृष्णं तत्
अन्नस्य' इति श्रुतिर्न पृथिव्या रूपान्तरविरहं वक्ति, प्रत्यक्षादिविरोधात् ; उपलभ्यते हि रूपान्तरमपि
पृथिव्याम् । एवं पाकभेदविषमितः स्पर्शगन्धादिनियमोऽप्यङ्गीकार्य इति दर्शयति पचनविषमित-
मिति । क्वचित्तु कलुषजलादौ पलालवह्न्यादौ च पृथिवीसंसर्गविशेषात् वर्णभेदो दृश्यते ; सोऽपि संसर्ग-
विशेषकृत इति यथोपलम्भमङ्गीकार्यं इत्याह पाथ इति । अम्भसि पुनः पाके सत्यपि गुणविपरिणतिर्न
क्वाप्युपलभ्यत इति युक्तमैकरूप्यमेव तत्राभिधातुमिति । दृष्टप्रक्रियामात्रानुसरणेन सर्वमेतदुपपादितमिति
दर्शयति न ह्यम्भ इति ॥

इति पाकजापाकजरूपादिविभागः ॥ ३० ॥

(391) आरब्धं रूपभेदैरवयवनियतैश्चित्रमन्यत्तु रूपं
काणादाः कल्पयन्तः क्व तदिति कथयन्त्वंशतस्तद्विकल्पे ।
नांशेष्वेतत् तदिष्टं ; न च तदभिहितः कश्चिदंशीति तूक्तं ;
स्वाधारव्यापकत्वं सुगममिह ; तथा स्पर्शगन्धादिचैत्र्यम् ॥ ३१ ॥

एवमुक्तेषु शुक्लकृष्णादिषु [रूपादिषु] चित्र[मिति कि]मपि रूपान्तरमस्तीति केचित् मन्यन्ते ;
तदनुभाषते आरब्धमिति । तत् विकल्पयति क्वेति । अवयवरूपादिभिरारब्धं चित्ररूपं क्व
वर्तते, अंशेषु वा, अंशवति वा ? विकल्पितमर्थं दूषयति नांशेष्विति । अंशेषु चित्ररूपं वर्तत इति

---

श्री— (यत् कृष्णम्) इत्युक्तश्रुतिविरोधात् पीतादिरूपं न भूमौ इति शंकां क्षिपति कृष्णा-
मिति । तत् =कृष्णत्वाम्नानं नेतररूपविरहमभिप्रैति । प्रत्यक्षादेर्विरोधादिति । श्रुतिर्हि प्रत्यक्षादि-
सिद्धपरैव प्रत्यक्षबाधितपराऽपि न भवति । यथोक्तम्, "द्वयमत्र जिहासितम् । ताद्रूप्येण परि-
च्छित्तिस्तद्विपर्ययतोऽपि वा" इति । भूतान्तरे पीताद्यभावाच्च न तदारोप इह सुवचः । पृथिव्यां
पाकांगीकारात् तद्वशाद्भिन्नो वर्ण उपपद्यते च, स्पर्शगन्धादेरन्यस्य पाकादुत्पत्तिदर्शनात् । क्वचित्
जले तेजसि च नैल्यपीताद्युपलम्भः वसुमतीभागतः =भूम्यंशमेलनात् । यथा नूतननदीप्रवाहादौ ।
पाकजगुणोत्पत्तिर्जलादौ नेत्याह नहीति । पृथिव्यामेव रूपादयः पाकात् = विजातीयतेजस्संयोगरूपात्
संस्कारात् परावर्तन्ते । जलप्रभृतौ पाकजरूपादिकं न भवतीति ॥ ३० ॥
शुक्लपीतादिवत् चित्रमपि रूपमिच्छन्ति तार्किकाः । तन्निरस्यति आरब्धमिति । नानावर्णतन्त्वा-
रब्धपटादौ चित्रं रूपमिष्यमाणं कणादमतानुयायिभिः किमवयवेषु कल्प्यते, अवयविनि वा । अवयवानां
पृथक् पृथग्वर्णवत्त्वात् न तत्र तत्प्रसक्तिः । अतः अंशेषु =अवयवेषु तदिष्टं =काणादेष्टमपि तत् =
चित्ररूपं न भवति । यस्तु तैरभिहितः =उक्तः अवयवातिरिक्तोऽवयवी, स आरम्भणाधिकरणे
निराकृतः इति प्रागेवोक्तम् । रूपरसस्पर्शादीनां व्याप्यवृत्तित्वं =स्वाधारे कार्त्स्न्येन व्यापित्वं यदिष्टम् ·
न तद्भंग· · तत्तदवयवेषु तत्तद्रूपस्य व्यापित्वात् । एतत्समशीलमेव गन्धस्पर्शादौ अवयवभेदेन

काणादानामेव नेष्टम्; तेषां प्रागेव रूपवत्त्वात्, तस्य च रूपस्यानिवृत्तेः। तस्मादवयविनि चित्रं रूपादि(१) वर्तत इति वक्तव्यम्। तदपि नेत्याह न चेति। अवयविभङ्गस्य प्रागेव कृतत्वादित्यर्थः॥ कथं तर्ह्यंशनिष्ठानां रूपभेदानां स्वाधारभूतपटव्यापकत्वमिति चेत्—तदस्माकमेव सुगमम्; पटस्याभावात्; अंशनिष्ठानां रूपभेदानां तत्तदंशव्यापकत्वाच्च। उक्तमर्थं स्पर्शादावपि तुल्यमिति निगमयति तथेति। यथा चित्रं रूपं तथैव चित्रः स्पर्शः चित्रो रसः चित्रो गन्ध इति व्यवहारोऽपीति। तत्तदंशे वैचित्री भेदात्; नापूर्वरूपादिक्लृप्तिः—इति सर्वमप्यर्थं समुच्चित्य निगमितवान्॥ **इति अतिरिक्तचित्ररूपादिभङ्गः॥**

**(३९८) स्नेहः प्रत्यक्षसिद्धो यदुपधिरुदके स्निग्धधीः; स द्रवत्वात्**
**तोयत्वाच्चातिरिक्तः, क्वचिदिह यदसौ भाति ताभ्यां विनाऽपि।**
**सौवर्णादिद्रवाणां न च भवति यतः पांसुसंग्राहकत्वं**
**पर्यायानुक्तिरस्मिन्; भवति विषमता चेति केचिद् गृणन्ति॥ ३२॥**

अत्र केचित्, 'स्नेहाख्यगुणान्तरमस्ति' इत्याहुः। अपरे पुनः तद्रूपादावन्तर्भावयन्ति। उभयमपि पक्षमनुक्रमादुपपादयति; उभयोरपि पक्षयोरेकदेशिमतत्वेन स्वीकारात्। तत्र प्रथमपक्षे प्रत्यक्षं प्रमाणयति **स्नेह** इति। **यदुपधिरुदके स्निग्धधीरिति**—उदके स्निग्धधीर्यद्गुणोपाधिकेत्यर्थः। नन्वसौ स्नेहो द्रवत्वात् तोयत्वाच्च नातिरिक्त इति कश्चित्; तन्नेत्याह **अतिरिक्त** इति। तत्र हेतुमाह **क्वचिदिति**। **असौ** स्नेहः। **क्वचित्** पृथिव्याम्। **ताभ्यां** द्रवत्वतोयत्वाभ्यां विनाऽपि प्रतिभातीति यतः, अतः द्रवत्वतोयत्वाभ्यामतिरिच्यते स्नेह इत्यर्थः। अयं चात्र हेतुः—द्रवत्वमेव स्नेहश्चेत्, सौवर्णादिद्रवाणां पांसुसंग्राहकत्वं स्यात्। न च तत् दृश्यते। अतो द्रवत्वादतिरिक्तः स्नेहः। तदिदमाह, **सौवर्णादीति**। अपि च पर्यायानुक्तिरपि द्रवत्वस्नेहयोर्भेदं साधयति; यत्रयत्र स्निग्धत्वं तत्र सर्वत्र द्रवत्वमिति व्यवहाराभावात्। यथा मणिकृपाणदर्पणादौ। सुवर्णे च स्नेहाभावस्य द्रवत्वस्य च भवतैवोक्तत्वात्। **विषमता चेति**। द्रवत्ववैषम्ये स्नेहवैषम्यं नास्ति; स्नेहवैषम्ये द्रवत्ववैषम्यं चास्तीति केषांचित् पक्षः॥

**इति स्नेहो गुणान्तरमिति मतम्॥ ३२॥**

---

ळी—चैत्रयं = चैजात्यम्। न त्वन्यदिति। तार्किकैः प्रत्यक्षे रूपस्य कारणत्वात् चित्ररूपेऽवयविनि रूपाभावे द्रव्यप्रत्यक्षायोगात् चित्रगन्धाद्यभावेऽपि तदस्तीत्युक्तम्। तत्—एवमवयविद्रव्यस्यैवाभावे प्रत्यक्षोपपादकान्वेषणप्रसक्त्यभावात् अवयवेषु रूपसत्त्वेन तत्प्रत्यक्षसंभवाच्च निरस्तमेव॥ ३१॥

स्नेहं द्वाभ्यामाह स्नेह इति। उदके स्निग्धधीः = स्निग्धं सलिलमिति बुद्धिः। यदुपधिः = यद्गुणाधीना, स स्नेहः प्रत्यक्षसिद्धः न द्रवत्वं वा तोयत्वजातिर्वा भवितुमर्हति, कुतः? ताभ्यां = द्रवत्वतोयत्वाभ्यां विनाऽपि—तदभावस्थले पृथिवीविशेषेऽपि यत् = यस्मात् असौ = स्नेहो भाति = अनुभूयते, तस्मात्। किञ्च स्नेहकार्यं संग्रहविशेषः; चूर्णादिपिण्डीभावहेतुर्गुण इत्युक्तेः। इदं संग्राहकत्वं यदि द्रवत्वस्य स्यात्, सुवर्णादिद्रवत्वस्यापि स्यात्। अपि च अस्मिन् = द्रवत्वे पर्यायतयोक्तिर्नास्ति। अयं स्नेह इत्येतत्पर्यायतया इदं द्रवत्वमिति न कश्चित् व्यवहरति। अतो भेदः। अपर्यायत्वं च मण्यादौ स्निग्धतामात्रम्, सुवर्णादौ द्रवत्वमात्रमिति दर्शनात्। केचित् स्नेह-

(३९३) अन्ये स्नेहं तु रूपं किमपि निजगदुः स्निग्धवर्णोक्त्यबाधात् ;
दृष्टत्वात् दुस्त्यजं तत् ; भवति खलु भिदा काऽपि गन्धादिकेऽपि ।
अप्त्वादेः पांसुसङ्गः ; सुगममिदमयस्कान्तजात्यादिनीत्या
न ह्यन्यत् तत्र क्लृप्तं ; न च न दृढमितं पार्थिवे पिच्छिलत्वम् ॥ ३३ ॥

अन्ये पुनरन्यथा आहुरित्याह अन्य इति। इत्थं किल ते मन्यन्ते, 'स्निग्धवर्णोक्त्यबाधात् स्नेहाख्यं रूपं किमप्यधिगच्छामः' इति । तदेवोपपादयति दृष्टत्वादिति । अथापि रूपसामान्यात् स्नेहाख्यरूपविशेषे वैधर्म्यं दृश्यत इत्याशङ्क्य तत् प्रतिबन्द्या निराकरोति भवतीति । दृष्टं खलु गन्धादिष्वपि तत्तद्धर्मिग्राहकप्रमाणसिद्धं वैधर्म्यम् । न हि कस्तूरीकरीषादिष्वेकरूपो गन्धः ; न च दुरालभा शतपत्रादिष्वेकरूपः स्पर्शः । एवं रसादिष्वपि द्रष्टव्यम् । कथं तर्हि स्नेहमन्तरेण पांसुसंग्रह इत्यत्राह अप्त्वादेरिति । अप्त्वं स्नेहश्च समानाधिकरणमिति हि भवता प्रतिपाद्यते । तथाच सति अप्त्वमेव स्नेहकार्यपांसुसंग्रहे नियामकमस्तु । कथं जातिरेव गुणविशेषमन्तरेण कार्यविशेषनियामिकेत्यत्र दृष्टान्तमाह अयस्कान्तजात्यादिनीत्येति । अयस्कान्तजातिविशेष एवायस्संग्रहणे निमित्तम् ; न ह्यन्या तत्र कारणक्लृप्तिः । एवमत्रापि तोयत्वजात्यतिरिक्तस्नेहरूपगुणक्लृप्तिर्न युक्तेत्यर्थः । किंच स्नेहो जलैकनियत इति स्नेहवादिभिरभिधीयते । अथापि पार्थिवे पिच्छिलत्वं दृश्यते । अतस्तद्वस्तुनियतरूपविशेषव्यतिरेकेण स्नेहो नाम कश्चिन्नास्तीत्यपरेषां पक्षः ॥ इति स्नेहस्य रूपविशेषान्तर्भावपक्षः ॥ ३३ ॥

(३९४) मासृण्यादिप्रभेदोपहितगुरुतयाऽब्रादिनिम्नाभिमुख्यम् ;
माषव्रीह्यादिराशौ भवति च पतने तादृशं तारतम्यम् ।
किंचादृष्टान्यक्लृप्तिर्ज्वलनपवनयोर्न क्रियायां ; तथाऽस्मिन्
इत्येकेऽन्ये तु दृष्ट्वा गुणमधिकमुशन्त्यादिमस्यन्दहेतुम् ॥ ३४ ॥

एवं द्रवत्वेऽपि पक्षभेदावाह मासृण्यादीनि । मासृण्यादिप्रभेदावच्छिन्नगुरुत्वमेवाबादीनां निम्नाभिमुख्ये कारणम्, न पुनर्द्रवत्वं नाम कश्चिद्गुणः । इदं च पतने तारतम्य माषव्रीह्यादिराशौ उभयं भिन्नमाहुः ॥

टी— द्रवत्वयोर्मध्ये एकस्य वैधर्म्येऽपि अन्यस्मिन् वैधर्म्यादर्शनादपि उभयं भिन्नमाहुः ॥ ३२ ॥ अनुक्रमादिति। श्लोकद्वयेनेति शेषः। कथं विरुद्धोभयस्वीकार इत्यत्राह उभयोरपीति ॥ ३२ ॥ स्निग्धो क्लृप्तेऽन्तर्भावरूपं पक्षमाह अन्ये इति। स्निग्धं सलिलमिति व्यवहारस्तु न स्पष्टः। स्निग्धो वर्ण इति व्यवहारस्तु लक्ष्यत इति रूपविशेष एव स्नेह इत्यन्ये। गन्धादौ अवान्तरभेदवत् स्नेहस्यापि रूपावान्तरभेदता स्यात् । अस्तु च अप्त्वादेरेव संग्राहकत्वम् ; अयस्कान्तजातेः अयआकर्षकत्ववत्। अतो वर्णत्वे स्नेहस्य कथं संग्राहकत्वमिति न शंक्यम्। तत्र = अयस्कान्ते अन्यत् = तज्जातितोऽन्यत् न हि कारणत्वेन क्लृप्तम्। तद्वत्। अप्त्वादेरिति आदिपदेन स्पर्शादिसंग्रहः। स्पर्शविशेषोऽपि संग्राहकः स्यात् । दुष्करवियोगसमानसंयोगस्पर्शत्वं पिच्छिलत्वमिति न्यायतत्त्वग्रन्थोदाहरणं न्यायसिद्धाञ्जने । पार्थिवे पिच्छिलत्वस्य दृढप्रमितत्वात् तत्रापि स्नेहस्य वक्तव्यतया स्पर्शविशेष एव भवितुमर्हतीति ॥ ३३ ॥ पतनकारणतया स्वीकृतं गुरुत्वमेव मसृणत्वावच्छिन्नं द्रवत्वशब्दद्रवत्वं विचारयति मासृण्येति।

दृष्टमिति यथादर्शनमेवानुसरामः । न हि माषादिराशौ पतनाद्यर्थं गुणान्तरं परिकल्प्यते भवद्भिः । किंचाग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवन(गमन)मित्यत्राद्दष्टातिरेकेण गुणान्तरं भवद्भिर्न कल्प्यते । एवं सलिलस्यापि निम्नाभिमुख्येन सरणमित्यत्रादृष्टव्यतिरेकेण न गुणान्तरं कल्पनीयम् । तदिदमाह **किंचेति** । दृष्टान्तदृष्ट पक्षे योजयति **तथेति** । एवमेकदेशिनां पक्षं परिसमाप्यान्येषां पक्षमनुवदति **अन्ये त्विति** ॥

**इति द्रवत्वान्तर्भावबहिर्भावपक्षौ ॥ ३४ ॥**

(895) **तोये दृष्टं स्वभावात्; घृतकनकमुखे पाकजन्यं द्रवत्वं;**
**तैलादौ नैव पाकानुगम इति भवेत् तादृशांशव्लृप्तिः ।**
**भस्मीभावाद्यनर्हे यदुत कणभुजा सूत्रितं तैजसत्वं**
**हैमा(हेमा?)दिश्लिष्टभौमावयव(माविलय?)नयविदामित्थमेतन्न हृद्यम् ॥ ३५॥**

उक्तस्य द्रवत्वस्य स्वाभाविकास्वाभाविकादिविभागं दर्शयति **तोय इति** । स्वभावादेव तोये द्रवत्वं दृष्टम्; घृतकनकमुखे पाकजन्यं द्रवत्वं दृष्टम्; उभयमपि तथैवाङ्गीकर्तव्यम् । तैलादौ पाकानुगमो न दृष्ट इति तादृशांशक्लृप्ति । एवं दृष्टप्रक्रियामुक्त्वा कणभुगभिमतमर्थान्तरमनूद्य दूषयति **भस्मीभावादीति**। अत्यन्तानलसंयोगेऽनुच्छिद्यमानद्रवत्वेन हेमादीनां तैजसत्वमुक्तं **कणभुजा** । तत् हेमादिश्लिष्टभौमावयवे व्यभिचारात् दुःस्थमेव । तुल्यं खलु हेम्ना तच्छिलष्टभौमावयवानामत्यन्ताग्निसंयोगेऽपि भस्मीभावानर्हत्वम्, अथापि यथा तेषां भौमत्वं तद्वत् हेम्नोऽपि । तैजसत्वमेव साधयितुं न शक्यत इत्यर्थः । अन्यत् सर्वं **न्यायपरिशुद्धौ** विस्तरेणोक्तमस्माभिरिति नेह प्रतन्यते । **इति सांसिद्धिकपाकजद्रवत्वाधारादिः ।** ३५

---

बो— वाच्यम्। मखुणत्वं दुष्करवियोगस्वभावसंयोगहेतुस्पर्शविशेषः। तेन गुरुत्वेनैव अबादीनां निम्नदेशाभिमुख्यं भवेत्। अधोनिम्नदेशगमनविशेष एव हि पतनम्। पतने तारतम्यं न गुरुत्वातिरिक्तताख्यापकं न भवति। गुरुत्वमेव पतनविशेषात्मकनिम्नदेशगमनहेतुः। तस्यैव व्रीहिमाषपातादौ कारणत्वक्लृप्तेः। तत्र पतने तारतम्यवदिदमपि वैषम्यं भवेदिति न गुरुत्वातिरिक्तं कल्प्यम्। किञ्च ज्वलनपवनयोः क्रियायामूर्ध्वतिर्यग्गतिरूपायां हेतुर्गुणः अदृष्टादन्यः न कल्पितः। तद्वदत्राप्यदृष्टमेव किं न भवेत्। तत्र वा अदृष्टान्यत् किं न स्यात्। एवमेकेषां पक्षः। अन्यस्तु तार्किकपक्षः आद्यस्यन्दनासमवायिकारणमन्य एव गुणो द्रवत्वमिति ॥ ३४ ॥

तोय इति। द्रवत्वं द्विविधं सांसिद्धिकं नैमित्तिकञ्च। निमित्तञ्च तेजस्संयोगरूपः पाकः। आद्यं तोये; अन्यं घृतादौ स्वर्णादौ च। तैलादौ तु पाकापेक्षाविरहात् तादृशस्य = स्वाभाविकद्रवत्वकस्य अर्थंशस्य मिश्रणं कल्प्यम्। घृतादिकनकाद्योर्मध्ये कनकादौ तीव्रपाकानुवृत्तावपि भस्मीभावानर्हत्वदर्शनेन पार्थिवघृतादिवैलक्षण्येन तैजसत्वं यत् कणादेष्टम्, तत् न हृद्यम्। कनकादेः पीतिमादिपार्थिवरूपाश्रयत्वात् गुरुत्वाश्रयत्वाच्च पार्थिवांशभूयस्त्वमनपलप्यम्। सोऽपि भागो द्रवीभवति। स कथं भस्मीभावानर्हस्सन् भौमः। तद्विलयने नयं विमृशतां कणादसूत्रितं तैजसत्वं न हृद्यम्। ननु पार्थिवभागो न द्रवीभवति, मषीक्षोदवत् विशीर्णोऽस्तीति चेत् प्रत्यक्षानुरोधेन स द्रवीभवत्येव। तद्भस्मीभावप्रतिबन्धकमद्रवभूतं किञ्चित् सूक्ष्मं विशीर्णमन्यदस्तीत्येव कुतो न। इत्थमित्यस्य घृतवदित्यर्थः। हेमादिश्लिष्टेति पदेऽन्वयः। सर्वार्थसिद्धावत्रानुक्तमधिकं प्रागेव न्यायपरिशुद्धावुक्तं द्रष्टव्यमिति चात्र सूक्तिवाक्यं पुस्तिसरे अनुमानखण्डादौस्यानुमर्हमत्र लेखकदोषात्पतितमिव ॥ ३५ ॥

(३९६) पातस्तुल्योऽम्बुभूम्योः पवनदहनयोस्तिर्यगूर्ध्वप्रवृत्त्या ;
पाते भेदात् पलादिप्रतिनियतिरपि ह्यंशवैषम्यतः स्यात् ।
भागानां तारतम्याज्जलशिखिमरुतां स्पन्दनादेर्विशेषः ;
तस्मात् सर्वोऽप्यदृष्टादिह भवतु ; न चेत् स्याद् गुणोऽन्योऽनलादौ ॥ ३६ ॥

गुरुत्वाख्यस्य गुणस्यानुमानगम्यत्वं प्रतिबन्द्या प्रतिक्षिपति पात इति । "अग्नेरूर्ध्वज्वलनम्"
इत्यादिना पवनदहनयोस्तिर्यक्प्रवृत्तिरूर्ध्वप्रवृत्तिश्च यथा केवलमदृष्टात् परिकल्प्यते ; एवमम्बुभूम्योरपि
पातः केवलमदृष्टादेवास्तु, किमनेन कल्पितेन गुरुत्वेन ; तत्कल्पने गौरवात् ? कथं तर्हि गुरुत्वाभावे
मानवेलायां द्विपलादिव्यवहार. ॥ पातभेदात् परिकल्प्येत[तदपि] । तदपि चांशवैषम्यात् योयुज्यत इत्याह
पाते भेदादिति । पञ्चपणनिक्षेपात् दशपणनिक्षेपे हि पातवैषम्यं दृश्यते ; तत् तदाधिक्यमन्तरेण न भवति।
निष्कनिक्षेपेऽप्यंशाधिक्यमस्त्येव निष्कार्धनिक्षेपात् । अन्यथा गुरुत्वाधिक्यस्याप्ययोगात् । तथाच
तेनैवांशवैषम्येण पातभेद । तथा च किमजागलस्तनवत् अप्रयोजकेन गुरुत्वाधिक्येन ? दृष्टा च भूतान्तरेषु
गुणान्तरकल्पनामन्तरेणांशाधिक्यादेव कार्यभिदा ; यथा अग्नेरूर्ध्वज्वलनादौ । जाज्वल्यते हि वह्निरं-
शाधिक्ये ; तदभावे केवलं ज्वलति । एवं पोपवीति च मरुत् अंशाधिक्ये, तदभावे केवलं पवते ।
एवं जलमप्यंशाधिक्ये क्रियासमभिहारेण स्पन्दते, तदभावे स्पन्दत एव । तस्मात् सर्वोऽप्यदृष्टादेव
भवतु । अन्यथा अग्न्यादावपि गुणान्तरं कल्प्यं स्यादित्याह न चेदिति । न ह्यग्न्यादावूर्ध्वज्वलनादि-
कारणं भवद्भिः कल्प्यते ; अतो गुरुत्वस्यानुमानिकत्वमनुमानवार्तानभिज्ञतानिबन्धनमिति ॥

इति गुरुत्वाख्यगुणानुमानभङ्गः ॥ ३६ ॥

(३९७) त्वक्संवेद्यं गुरुत्वं कतिचिदभिदधुः ; तत्तु तेषां गुरुत्वम् ;
नोर्ध्वे स्पृष्ट्वा प्रतीमस्तदिह, परधृते नाप्यधस्तात् स्पृशन्तः ।
न ह्यन्यालम्बितोऽर्थो भवति लघुतरः ; स्पर्शनं नोपरुद्धं ;
तेनाक्रान्तौ प्रणुत्तिक्रम इति गुरुणा तर्कितस्तोलनाद्यैः ॥ ३७ ॥

टी – अथ गुरुत्वम् । पवनस्य तिर्यग्गतिः दहनस्योर्ध्वगतिः ; जलभूम्योरेव पातः । अत्र क्वचिददृष्टं
कारणम्, क्वचिद् दृष्टमिति वैषम्यं कुतः ? ननु पलाद्युन्माननियामकतया गुरुत्वस्य प्रमाणसिद्धत्वात्
प्रमाणसिद्धत्वरूपदृष्टत्वबलात् गुरुत्वमत्र कारणम् ; अन्यत्र तथा फलस्याभावात् अदृष्टं कारणमुच्यत
इति चेत्—न ; उन्मानार्थमपि गुरुत्वस्यानपेक्षितत्वात् । पलादिव्यवस्थाऽपि पतनगततारतम्यगम्या ।
द्विपलादिरूपवैषम्योत्पत्तिः कुत इति चेत्—भागतारतम्यात् = पतनातिरिक्तस्पन्दनतिर्यग्गमनोर्ध्वग-
मनक्रियास्वपि तारतम्यं जलादिद्रव्यभागतारतम्यात् दृष्टमिति तथैव पातेऽप्यस्तु । इहैव तत्रापि
गुणान्तरं वा स्यात् । भूत्वं पतनहेतुः यद्वा रसवत्त्वं पतनहेतुः, भूमिष्ठजलत्वं स्पन्दनहेतुः, अग्नित्व-
मूर्ध्वगतिहेतुः, पवनत्वं तिर्यग्गतिहेतुरित्यादि वा किं न स्यात् ॥ तदपि च = द्विपलादि च ॥ ३६ ॥
नन्वनुमेयत्वे गुरुत्वमपलप्येत । प्रत्यक्षत्वात्तु नोपेक्ष्येतेत्यत्र प्रत्यक्षत्वपक्षं प्रतिक्षिपति त्वगिति।
गुरुत्वं त्वगिन्द्रियप्रत्यक्षमिति केचिदवोचन् । तत्तु वचनं तेषां गुरुत्वम् = स्थूलबुद्धिकृतमिति

तर्हि गुरुत्वस्य प्रत्यक्षत्वमस्त्विति वदन्तमपि प्रतिक्षिपति **त्वक्प्रवेद्यमिति** । त्वचा गुरुत्व संवेद्यम इति ये ह्यभिदधु , तत्तु तेषां गुरुत्वमित्यधिक्षेपवाद । तत्र हेतुमाह **नोर्ध्वमिति**। यदि गुरुत्वं त्वचा गृह्येत, रुचकादिष्विव स्पर्शवत् ऊर्ध्वस्पर्शेऽपि गुरुत्व प्रतीयेत। न च तथा प्रतीम । किंचाधस्तादपि स्पर्शे (स्पर्शनेन) कश्चित् गुरुत्व न प्रतीयते । न हि परधृते वस्तुन्यधस्तादपि स्पृशन्तो गुरुत्व प्रतियन्ति । 'नन्वन्यालम्बिते लघुत्वमेव तदा जातम्' इति वक्तु न शक्यते, अन्यस्य प्रयासेन धारणाभावप्रसङ्गात् । 'अस्तु गुरुत्वमनुवर्तत इति, अथाऽप्यन्यालम्बिते स्पष्टु स्पर्शनमुपरुद्धम्' इति च वक्तु न शक्यम् (शक्यत) इत्याह **स्पर्शनमिति** । स्पर्शनेन्द्रियोपरोधे गुणान्तरोपलम्भस्याप्यभावप्रसङ्गादित्यर्थ । कथं तर्हि लोके गौरवतारतम्यं हस्तेन परीक्ष्यत इत्यत्राह **तेनेति** । गुरुणा द्रव्येण हस्ताद्याक्रान्तौ प्रणोदनक्रमविशेषस्य उपलब्धत्वात् हस्तनोलनाद्यै प्रणोदनक्रमस्तर्कित इत्यर्थ । यदि गुरुत्वमस्ति, तदा गुरुत्वनिमित्तक प्रणोदनक्रम , यदि वा गुरुत्व नास्ति, तदा गुरुत्वाश्रयत्वेन परिकल्पितद्रव्याधिवयनिबन्धन प्रणोदन क्रम , सर्वथा गुरुत्वप्रत्यक्षत्व नास्तीति भाव ॥ **इति गुरुत्वप्रत्यक्षभङ्गः ॥ ३७ ॥**

**(398) क्षित्यादौ सांख्यदृष्ट्या यदि किमपि तमःकार्यमिष्टं गुरुत्वं**
**तद्वत् कल्प्येत वह्निप्रभृतिषु न कथं सत्त्वकार्यं लघुत्वम् ।**
**यादृग्भूताद् गुणात् तद् वदसि च पतनं, तादृशादस्तु तस्मात्**
**वल्लिप्तिस्त्वन्यस्य गुर्वी ; भवतु तदधिकं काममाप्तोपदेशात् ॥ ३८ ॥**

इत्थमनुमानगम्यत्व प्रत्यक्षगम्यत्व च गुरुत्वस्य प्रतिक्षिप्तम् । एवं तर्हि गुरुत्वमेव प्रतिक्षिप्त भवति , तथा चागमविरोध। सांख्यास्तु, "गुरु वरणकमेव तम " इति तम कार्यत्वेन गुरुत्वमुपपादयन्ति । यत्

---

र्थ-यावत् । तत्र हेतुमाह नेति । त्वगिन्द्रियवेद्यत्वे सति, गुरुद्रव्ये ऊर्ध्वभागे स्पृष्टाऽपि, एवं गुरुत्वमिति प्रतीयात्। न चैवं प्रतीम· । अथ प्रदेशावच्छिन्नस्पर्शो गुरुत्वप्रत्यक्षहेतुरित्युच्यति चेत्—तदपि न, इह=गुरुद्रव्ये घटादौ परेण हस्तेनाग्रावच्छेदेन ध्रियमाणे सति अधोऽवच्छेदेन स्पृशन्तोऽपि तत् न प्रतीम । न च अन्येनाऽऽलम्बितत्वदशाया तस्मिन् गुरुत्वमपैति , तेन प्रयासेन ध्रियमाणत्वात्। न च तदा स्पर्शनमेव न जातम्। इममर्थं स्पृशामीत्युपलम्भात्। अतो न प्रत्यक्षम्। तर्ह्यस्तु अनुमानमेवेति चेत्, तत्राऽऽह तेनेति। तेन=तस्मात् कारणात्, प्रत्यक्षाभावात् गुरुणा= गुरुत्वाश्रयत्वाभिमतेन द्रव्येण हस्तस्याऽऽक्रान्तौ, हस्ते आक्रम्यमाणे , गुरुद्रव्ये हस्तेन ध्रियमाणे इति यावत्। प्रणुत्तिक्रम =हस्तस्याधो नोदनरीतितारतम्यं लोके भवतीति तेन प्रत्यक्षेण नोदन विशेषेण, पूर्व तोलन-तन्मूलोन्मानेयत्ताज्ञान तदनन्तरकालिकहस्तधारणेऽनुभूत हस्ते य प्रणुत्ति- विशेष , स एतत्समत्वेन चिन्तितो भवति। ईदृशपातविशेषतुलाप्रमाणानुमानमेव गुरुत्वानुमान- मिति गुरुत्वापलापिना सुवचम्। गुरुत्वस्य प्रामाणिकत्वे काममस्तु तदनुमानम् ॥ ३७ ॥

तर्हि आगमो मूलमित्यत्र सांख्यागमो न श्रद्धेय., अन्यस्याप्तागमस्यानन्यथासिद्धस्य सत्त्वे गुरुत्वमन्यथ क्षिप्यत इत्याह क्षितीति। सत्त्वरजस्तमोगुणेषु तमसो गुरुत्वावरणादिहेतुत्वं सांख्येष्टम्। सांख्यदर्शनमनुसृत्य तत्स्वीकारे, 'सत्त्व लघु' इति तद्वचनात् लघुत्वरूपगुणोऽपि स्वीकार्यः स्यात्। यदि लघुत्वकार्यमूर्ध्वगमनादि लघुत्व विना तद्धेतुना सत्त्वेनैव साक्षादुत्पाद्येत, तर्हि तत्-गुरुत्वं यादृशात्- कारणकलापनिधेरूपपदाकारसंपन्नात् तमसो जातत्वेन वदसि, तदाकारसंपन्नात् ततस्तमस

सांख्योक्तं न तत् सर्वमपि प्रतिक्षिप्यते ; अनुकूलमविरुद्धं चाङ्गीक्रियते वेदवादिभि(वेदान्तिभि)रिति। एतत्
प्रतिबन्द्या निराकर्तुमनुवदति **क्षित्यादाविति**। तदेव प्रतिबन्द्या प्रतिक्षिपति **तद्वदिति**। यदि सांख्योक्तमिति
गुरुत्वं स्वीक्रियेत, तर्हि, "सत्त्वं लघु प्रकाशकम्" इति तैरेवोक्तं सत्त्वकार्ये लघुत्वमपि वह्न्यादौ
स्वीक्रियेत। न च तथा स्वीकृतमिति भावः। किंच पतनानुपपत्त्या हि गुरुत्वं कल्प्यते प्रकृति-
परिणामविशेषे पृथिव्यादौ। तच्च गुरुत्वं यादृग्भूतात् तमसो भवतीति वदसि, तादृशादेव तस्मात्
तमसः पतनमस्तु, किमनेन मध्ये परिकल्पितेन गुरुत्वेनेत्याह **यादृग्भूतादिति**। अन्यथा लघुत्वमपि
परिकल्प्येतेति प्रतिबन्द्यनुवर्तते ; तस्मादधिकस्य गुरुत्वस्य परिक्लृप्तिर्लघुत्वक्लृप्तिवत् गुर्वी। अथापि
तेषुतेषु शास्त्रेषु मापसर्षपादीनाम्, अन्येषामपि पर्वतपरमाण्वादीनां गौरवतारतम्यव्यवहारो दृश्यत इति
चेत्, तर्हि आगमिकमेव गुरुत्वमङ्गीकुर्महे। अतो नास्माकं कश्चिद्विरोधः। अविरोधमेवाह **काममिति**।
आगमप्रामाण्यावलम्बनेन अतिरिक्तगुरुत्वाङ्गीकारे[ऽपि] नास्माकं काचित् क्षतिः। तस्याप्यागमस्य
पूर्वोक्तप्रक्रियया विषयभेदाङ्गीकारेऽपि नास्माकं प्रधानार्थविरोधः॥ **इत्यागमिकगुरुत्वनिर्वाहः ॥३८॥**

**(399) एकद्व्यादिप्रतीतिव्यवहृतिविषयो यो गुणः, सा तु संख्या ;**
**क्वाप्यैक्यं नित्यसिद्धं ; क्वचिदवयवगैर्जन्यते तत्तदैक्यैः।**
**द्वित्रित्वाद्यं त्वनेकावगतिसहकृतैकैकनिष्ठैक्यजन्यं**
**तत्तत्पुंमात्रदृश्यं क्षणिकमिति कथा काऽपि कौतस्कुतानाम् ॥ ३९ ॥**

अथ संख्यायाः परिशोधनार्थं प्रागेव संख्याविषयां प्रक्रियामनुवदति **एकेति**। एकद्व्यादिप्रतीति-
व्यवहारविषयो यो गुणः, सा संख्या। सा पुनः क्वापि परमाण्वादौ नित्यसिद्धा, क्वचित् द्व्यणुकत्र्यणु-
कादौ तत्तत्कारणगतैरैक्यैर्जन्यते। द्वित्वत्रित्वादिकं तु अनेकावगतिसहकृतैकैकनिष्ठैक्यजन्यम्। तादृशी
चावगतिरपेक्षाबुद्धिरित्यभिधीयते। सा चापेक्षाबुद्धिः तत्तत्पुरुषमात्रनिष्ठेति तज्जन्यं द्वित्वत्रित्वादिकं
तत्तत्पुरुषैरेव दृश्यते। तत्कालमात्रभावित्वात् तच्च क्षणिकम्-इति **कौतस्कुतानां**-तार्किकाणां **कथा**
**काऽपि**। श्रूयत इति शेषः॥ **इति कणादोक्तसंख्याप्रक्रिया ॥ ३९ ॥**

---

श्री-एव पतनमेव जायमानमस्तु। अतो गुरुत्वकल्पनगुरुत्वमेवास्ति, न गुरुत्वम्। आप्तोपदेशाच्चेत्,
अस्तु कामं तादृशतमोऽतिरिक्तं तज्जन्यं पातहेतुर्गुरुत्वम्। यदि सोऽनन्यथासिद्धः॥ ३८॥

अथ संख्याविचारः। तत्र तार्किकमतमाह एकेति। एकादिसंख्याशब्दव्यवहारविषयत्वं संख्या-
लक्षणम्। एकत्वं नित्ये नित्यम्। अनित्येषु अवयविषु तत्कारणभूतसर्वावयवगतसर्वैक्यजन्यम्।
द्वित्वादिकं तु नावयवसंख्याजन्यम्। तेषामेकत्वानां विरुद्धानेकसंख्योत्पादकत्वायोगात्। घटादेः
पटादिना सह द्वित्वादेर्वैकव्यतया घटावयवसंख्यायास्तत्रानुपयोगात्। द्रव्यवत् द्वित्वादेः सर्वदा
सर्वप्रत्यक्षत्वप्रसंगाच्च। अयमेकः अयमेकः इत्येवं तत्तत्पुरुषगतापेक्षाबुद्धिकार्यतया तादृशबुद्ध्य-
भावे तदुत्पत्त्ययोगाच्च। अतः पुरुषबुद्धिर्निमित्तकारणम्, तत्सहकृतं द्वित्वाद्याश्रयवस्तुनिष्ठमैक्यम्=
एकत्वसंख्यैवासमवायिकारणम्। न त्ववयवगतम्। तद्द्वित्वादि तत्तत्पुरुषमात्रवेद्यम्। अपेक्षा-
बुद्धिनाशाच्च तन्नाश इति काणादकथेत्यर्थः॥ ३९॥

(400) तत्र द्वित्वा(त्रा ?)(त्या ?)द्यपेक्षामतिविषयमिदामात्रमेवास्त्वभीष्टं ;
द्वित्वाद्युत्पत्तिमूलं यदभिलपसि, तत् व्याहृतेरस्तु मूलम् ।
द्वित्वादिप्रागभावैर्ध्रुवमिह हि विना धीविशेषोऽभ्युपेयः ;
तन्मूलं निर्गुणानां विगणनमपि च स्थापनीयं गुणानाम् ॥ ४० ॥

अनूदितेऽर्थे द्वित्वादिकं निराकरोति तत्रेति । यादृशादपेक्षाबुद्धिविषयात् द्वित्वाद्युत्पत्तिं वदसि, तादृशापेक्षाबुद्धिविषयवस्तुविशेषोपलम्भ एव द्वित्वादिव्यवहारमातनोतु ; किमनेन द्वित्वादिकल्पनेन ? तदिदमाह द्वित्वाद्युत्पत्तिमूलमिति । अयं भावः—न ह्यपेक्षाबुद्धिर्निर्विषया ; अज्ञानत्वप्रसङ्गात् । नापि प्रकृतानुपयोगिवस्तुविषया, प्रकृतासंगतिप्रसङ्गात् । तथा सविषयत्वे प्रकृतसंगतविषयत्वे च सिद्धे कोऽयं विषयविशेष इति निरूपणीयमित्यवशिष्यते । स पुनः विषयविशेष एव द्वित्वादिस्थाने निविश्य द्वित्वादिव्यवहारमातनोत्विति ॥ तर्हि द्वित्वादिप्रागभाव एव विशेषः, स एव द्वित्वाद्युत्पत्तौ मूलम् ; स चाभावत्वादेव भावमपेक्षते । न हि द्वित्वादिकमन्तरेण द्वित्वादिप्रागभावो वक्तुं(क्तुमपि) शक्यत इति चेत्— तदपि मन्दम् ; प्रागभावस्यानादित्वेन द्वित्वादेरनादित्वप्रसङ्गात् ॥ तर्ह्यनेकावगतिसहकृतैकैकनिष्ठैक्यप्रतीतिरपेक्षाबुद्धिरिति विशेषयाम इति चेत्–तर्हि प्रागभावातिरिक्तो विषयविशेषो भवद्भिरेवाभ्युपेय इति, तदेव द्वित्वादिकमस्त्विति पुनरायातम् । तदिदमाह धीविशेषोऽभ्युपेय इति । अभ्युपगम्यते च भवद्भिरप्ययमर्थो गुणादीनां गणनाविशेष इति प्रतिबन्दीं पुरस्कुरुते तन्मूलमिति । न हि गुणादीनां द्वित्वादिकं भवद्भिरभ्युपगम्यते; गुणानां गुणाभावात् । न च द्रव्यगतेन संख्याविशेषेण गुणानां संख्यैकार्थसमवायेन द्वित्वत्रित्वादिव्यवहार इति वाच्यम् ; विरुद्धत्वात् संख्यायाः । नव द्रव्याणि, चतुर्विंशतिर्गुणाः, पञ्च कर्माणि, द्वे सामान्ये इत्यादिर्हि भवद्व्यवहारः । ते च परस्परविरुद्धाः कथं गुणेषु संघटेरन् ? ॥ अथापि द्रव्यावान्तरेषु घटपटादिषु चतुर्विंशतित्वमप्यस्ति ; तदेव गुणेषु व्यवह्रियते । पञ्चत्वमपि कुत्रचिदङ्गुलिप्रभृतिषु ; तत् कर्मस्विति नियमोऽस्त्विति चेत्–न, अनियमात् । न हि चतुर्विंशतित्वमेव गुणेषु व्यवहर्तव्यम् पञ्चत्वमेव कर्मस्विति नियामकमस्ति, संख्याया अभावात् ॥ अथापि बहुलक्षणविशेषपरिगृहीतेषु गुणेषु चतुर्विंशतित्वव्यवहार, कतिपयलक्षणपरिगृहीतेषु पञ्चत्वव्यवहारः—इति चेन्न ;

---

श्री— अपेक्षाबुद्धिविशेषविषयत्वमेव द्वित्वादि ; न तद्व्यतिरिक्तः संख्याख्यो गुण इत्याह तत्रेति । इदमेकमिदमेकमित्यपेक्षाबुद्धिविषयत्वं द्वित्वम्, इदमेकमिदमेकमिदमेकमित्येतद्बुद्धिविषयत्वमेव त्रित्वमिति रीत्या द्वित्वा द्विप्रभृतिवस्तुविषयकापेक्षाबुद्धिविषयत्वमेव द्वित्वादित्वेनाभीष्टमस्तु । यत् तत् द्वे वर्णीत्यादिव्याहृतिमूलद्वित्वादिमूलत्वेनाभिलपसि, तदेव द्वित्वादिव्यवहारमूलमस्तु। किं मध्ये द्वित्वादिना तदन्येन । अत्र प्रथमपादेऽपि द्वित्वादीत्येव पाठात् द्वित्वादित्वेनाभीष्टमस्त्वित्यन्वयः । अपेक्षामतिमिथोवैलक्षण्यज्ञापनाय द्वित्वादीति पाठोऽपि स्यात् । अभीष्टद्वित्वादीति समस्तपाठमपि रोचयन्ते ; तथा सति अभीष्टद्वित्वेति प्रतीकधारणं स्यात् । न च द्वित्वादिप्रागभावो वा, अपेक्षाबुद्धिविषयत्वं वा व्यवहारनियामकमिति विनिगमकाभावः शंक्यः । द्वित्वादेरेवाप्रसिद्धौ तत्प्राग-

(मा वोच); लक्षणबहुत्वस्य लक्षणाल्पत्वस्य च तत्तदपेक्षाबुद्धिविषयत्वव्यतिरेकेण निरूपयितुमशक्यत्वात्;
अन्यथा मुख्यसंख्याङ्गीकारप्रसङ्गात्। एवंच सति तत्तदपेक्षाबुद्धिविषयतारतम्यमात्रेण त्रिचतुरादिव्यवहारो
गुणादिष्विव द्रव्येष्वपीत्यभ्युपेतव्य इति निर्णयः॥ इति परोक्तद्वित्वादिनिरासः ॥ ४० ॥

(101) कैवल्यं नैकसंख्या परविरहतया; नापि मुख्यान्यभावौ;
सङ्घातैक्यं तु राशिक्रमम्; अवयवि तु प्राङ्निरस्तं ततोऽन्यत्।
तेनासङ्घातरूपे क्वचन निरुपधिः स्यादसावेकसंख्या;
स्वाधारैकायुरेषा; परमुपचरिता सेयमद्रव्यवर्गे ॥ ४१ ॥

एवं द्वित्वादिसंख्यां निरस्य एकत्वसंख्या स्वरूपतः परिशोधयति कैवल्यमिति। 'मुख्यान्य-
केवलेष्वेकम्' इति बहुषु विषयेषु एकशब्दं प्रयुञ्जते प्रयोक्तारः। तत्र कैवल्यं नैकत्वसंख्या; परविरह-
रूपत्वात् कैवल्यस्य। न ह्येकत्वसंख्या वस्त्वन्तरवैधुर्यरूपतया प्रतीयते; एकमिति भावत्वेनैव प्रतीय-
मानत्वात्। नापि मुख्यत्वमेकत्वसंख्या; अमुख्येष्वप्येकव्यवहारदर्शनात्। नाप्यन्यभावः एकत्वम्;
स्वस्मिन्नप्येकव्यवहारात्। अतो मुख्यत्वमन्यत्वमसहायत्वं च विहायान्यदेव किंचिदेकत्वम् [वाच्यम् ?]।
तच्च नावयविनि वर्तते, अवयविन एवाभावात्। सघातैक्य तु राशिवदौपचारिकमेव। तदिदमाह
संघातैक्यमित्यादिना, ततोऽन्यदित्यन्तेन। असंघातरूपे परमाण्वादौ निरुपाधिरसावेकत्वसंख्या
स्वीक्रियते। एषा चैकत्वसंख्या स्वाधारैकायुः। यावद्द्रव्यभाविनीत्यर्थः। अद्रव्येषु कथमेकत्वसंख्येति
चेत्, तत्राह परमिति। द्विविधो ह्येकत्वव्यवहारः, मुख्य औपचारिक इति। परमाण्वादौ मुख्यः; संघात-

---

पूर्व—कैवल्याद्व्यतिरिक्ततया उक्ताया एकत्वसंख्याया आश्रयनिरूपणपरं संघातैक्यम् इत्यादिकं
व्याचष्टे तच्च नावयविनीत्यादिना। 'ततोऽन्यत्' इत्यस्य एकत्वस्य कैवल्याद्व्यतिरिक्तस्य निगमनपरत्व-
भ्रान्तिनिवारणाय 'ततोऽन्यत्' इत्यन्तेनेत्युक्तम्। एकत्वस्य क्वचिन्मुख्यत्वं क्वचिदमुख्यत्वं च किमित्यङ्गी-
क्रियते? सर्वत्र मुख्यत्वं वा द्वित्वादिवत् किमिति न स्यादित्यत आह अयमत्र निर्णय इति। एकत्व-
संख्या विद्यत एवेति द्रव्येषु (?) द्रव्येषु एकत्वप्रतीतेरन्यथासिद्ध्ययोगात् बाधकाभावाच्चेति भावः॥

श्री— भावायोगात्। प्रागभावानामनादितया प्रागेव द्वित्वव्यवहारापत्तेश्च। अतस्सामग्रीनिविष्ट-
श्चरमकारणभूतः तत्तदपेक्षाबुद्धिविशेषः स्वीकार्यः। तद्विषयत्वमेव द्वित्वादि। इदमेव फलितमित्यप्याह
तन्मूलमिति। गुणादौ गुणानंगीकारात् गुणादिषु संख्या अपेक्षाबुद्धिविषयत्वरूपैव वक्तव्या; द्रव्ये-
ष्वपि तदेवास्त्विति। गुणादावित्थमेव च तार्किकैरुक्तम् ॥ ४० ॥ तन्मुख्यत्वमेव किम्? गुणादौ च
नन्विदमेकमिदमेकमित्यपेक्षामतिविषयत्वं द्वित्वादीत्युच्यते। तत्रैकत्वं शोधयति कैवल्यमिति। एके मुख्यान्यकेवलाः' इत्य-
प्रत्येकमेकत्वाभावे कथं द्वित्वादीत्यत्र अमुख्येऽपि प्रयोगात्। कैवल्यमपि
नुशासनादर्थत्रयं सिद्धम्। तत्र मुख्यत्वं न भवत्येकत्वसंख्या; इतरेषु बहुषु सत्स्वेव पृथक्पृथगेकत्वसत्त्वात्। अत एव
न। तद्धि इतराभावः। न ह्यभावः संख्या। नन्वसंहन्यमानत्वमेवैकत्वमित्यत्राह संघातेति।
नाद्वितीयत्वम्। नाप्यन्यत्वम्। बहुष्वप्यन्यत्वसत्त्वात्। तत् कथमेकत्वं भवेत्; प्रत्येक-
व्रीह्यादिराशौ अनेकसमुदाये इवावयवसंघाते हि तत् स्थितम्। किञ्च ततः=अवयवसमुदायादन्यत्
मेकत्वस्य निरूपणीयत्वात्। निरवयवे च समुदायत्वायोगात्। असंघाते प्रत्येकं तदस्ति। नित्ये नित्यम्,
अवयवि प्रागेव निरस्तम्। तस्मात् एकत्वं संख्यैव गुणः।

रूपे पुन अवयव्यादौ औपचारिक , औपाधिकत्वात् तद्व्यवहारस्य । एवमद्रव्येष्वेकव्यवहार औपचारिकः; अन्यथा अनवस्थादिदोषप्रसङ्गादिति । अयमत्र निर्णय –द्वित्वादिकं नास्त्येव ; अपेक्षाबुद्धिविषयतामात्रेण प्रतीतिव्यवहारयोरन्यथासिद्धत्वात् । एकत्वं तु विद्यते[एव द्रव्येषु ?]। तत् (तस्य?) पुनर्यत्र बाधोऽस्ति गुणादौ, तत्र त्वौपचारिकः [व्यवहारः?] इति ॥ इति **एकत्वसंख्यास्वरूपाश्रयादिनिरूपणम् ॥**

**(402) ऐक्यं स्वाभेदमाहुः कतिचन, न भिदाऽस्त्येकमेवेति दृष्टेः ;**
**भेदादृष्ट्यैक्यमोहस्तदिति(स्त इति ?) च वचन तत्रतत्राभ्युपेतम् ।**
**अन्ये त्वेतत् स्वसत्त्वं विदुरितरसमुच्चित्यवस्थानुवृत्त ;**
**तत्पक्षेऽपि स्वरूपादधिकमिदमिह द्वित्वमोहादिसिद्धेः ॥ ४२ ॥**

इत्थमेकत्वं प्रसाध्य तस्य मतभेदेन स्वरूपमेव विविच्य दर्शयति **ऐक्यमिति** । आचार्या केचित् स्वाभेदमेवैक्यमाहुः । तत्र हेतुमाह **न भिदाऽस्त्येकमेवेति दृष्टेरिति** । अयं भावः—ऐक्यविवरणे प्रवृत्ता निर्णेतारो भेदाभावरूपतयैव ह्यैक्यं विवृण्वन्तीति । व्यवहारान्तरमप्यत्रानुकूलमित्याह **भेदेति** । ऐक्यभ्रमो भेदादर्शनादभूदिति भ्रान्तिविषये व्यवहरन्ति व्यवहर्तारः ; तच्चैक्यस्य भेदाभावरूपत्वानुकूलं तत्रतत्राभ्युपेतमितीदृशो व्यवहारो भूयान् । स च व्यवहारः सर्वैरप्यभ्युपेयः । अतो भेदाभाव एवैक्यमिति केचिदाचार्या निरणैषु । अन्ये तु स्वसत्त्वमेवैक्यम् , इतरसद्भावेऽपि तत् वर्तते , तच्च स्वसत्त्वं स्वरूपा दधिकमेव, अन्यथा स्वरूपे प्रकाशमाने द्वित्वादिमोहानुपपत्ते । एकत्वे तिरोहिते हि द्वित्वादिव्यामोह ; द्वौ चन्द्रमसावित्यत्र [हि?] स्वरूप प्रकाशते, एकत्व तिरोहितमिति वाच्यम् । तथाचैक्यस्य भेदाभाव रूपत्वे[ऽपि] स्वसत्त्वरूपत्वेऽपि स्वरूपादतिरेक स्वीकार्य , अन्यथा द्वित्वादिव्यामोहायोगादिति ॥

**इति एकत्वविषयमतभेदः ॥ ४२ ॥**

---

व्यै— अनित्ये अनित्यमिति स्वाधारसमानायुष्कं तत् । अद्रव्ये एकत्वं कथमिति चेत्—तत्र प्रयोगो लाक्षणिकः द्रव्यगतसंख्याग्रहणादिना ॥ ४१ ॥

अस्यैकत्वस्य धर्मि-तद्साधारणधर्मोभयातिरिक्तत्वमाह ऐक्यमिति । केचन तदैक्यं नाम तद्भेदाभाव इत्याहुः । तदपेक्षया भेदो नास्ति, तदैक्यमेवेत्युपपादनात्, तद्भेदाज्ञानात् ऐक्य-मोहो जात इति वचनाच्च भेदाभाव ऐक्यमिति सिध्यतीति। 'ऐक्यमोहस्तदिति' इति क्लीबत्वच्छन्द-घटितपाठोऽनन्वित । अतः 'त इति' इति शोधनीयम्। भेदादृष्ट्या ते=तत्र ऐक्यमोह इति भ्रमनि-वर्तकपुरुषवचनम्। अन्ये तु भेदाभाव ऐक्यमित्युक्तौ घटभेदाभावो बहुषु घटेष्वस्ति। न हि तत्रैकमेक-त्वमिति मत्वा तत्तद्वस्तुसत्त्वमेवैकत्वमित्याहुः। अनेकवस्तुसमुच्चयेऽपि प्रत्येकं स्वरूपसत्त्वादेकत्व-मिदमक्षतमिति च । तस्मिन् पक्षद्वयेऽपि अभावस्य भावरूपत्वात् सत्त्वस्य च स्वरूपत्वात् स्वरूप-मेवैकत्वमिति न युक्तम्। स्वरूपज्ञानेऽपि, एकत्वसंदेहात् स्वरूपातिरिक्तत्वात् । अत एव भाष्ये 'एकत्वमेकसंख्यावच्छेदः' इति ब्रह्मस्वरूपातिरिक्तत्वं तस्य भाषितम्। शेषं न्यायसिद्धाञ्जने द्रष्टव्यम्। आत्मन एकत्वेन भानमिष्टम्। अहमेको न वेति संशयानुदयस्तत्र मानम्। अतस्तदेकत्वमद्वितीय-त्वमेव भवेत्। अद्वैतमित्यत्रापि तथैव वक्तव्यम् ॥ ४२ ॥

408) अन्यद् गृह्णात्यभिज्ञा ; तदिदमिति पुनः प्रत्यभिज्ञाऽन्यदैक्यं
कालक्षेत्रादिभेदग्रहजनितभिदाभ्रान्तिशान्तिस्ततः स्यात् ।
मोहस्तत्रैकबाधीर्ज्वलन इव भवेत् प्रत्यभिज्ञात्वतश्चेत्
स्वव्याघातोऽनुमायाः ; भ्रम इह निखिला स्यादभिज्ञाऽपि तद्वत् ॥ ४३ ॥

अत.परम् अभिज्ञाप्रत्यभिज्ञाविषययोरेकत्वयोर्वैषम्यमाह अन्यदिति । इदमिति ग्रहणं
तावदभिज्ञा ; सा खल्वेकदेशकालवर्तिनः स्वस्मिन्नैक्यं गृह्णाति ; तदिदमिति पुनः प्रत्यभिज्ञा देशकाल-
भेदप्रसक्तभेदविरोधि[अन्यत्]ऐक्यं गृह्णाति । अतो विषयभेदाद् भेदभ्रान्तिशान्तिः स्यात् । ननु
विप्रतिपन्ना प्रत्यभिज्ञा भ्रान्तिः प्रत्यभिज्ञात्वात् प्रदीपप्रत्यभिज्ञावदिति प्रत्यभिज्ञायास्सार्वत्रिकं भ्रान्तित्व-
माशङ्कते मोह इति । परिहरति स्वव्याघात इति । 'तथा चायम्' इति ह्यनुमाने प्रवर्तते । तत्रापि
प्रतिसन्धानरूपत्वेन स्वव्याघातः प्रसज्यत इति भाव. । बाधाबाधविवेकाभावेन प्रत्यभिज्ञामात्रतया सर्वत्रापि
भ्रान्तित्वसाधने शुक्तिरजताभिज्ञावत् स्वलक्षणाभिज्ञायामपि भ्रान्तित्वं साधयितुं शक्यत इत्याह
भ्रम इहेति ॥ इति अभिज्ञाप्रत्यभिज्ञाविषयैकत्वविशेषसत्यत्वम् ॥ ४३ ॥

(404) अद्रव्येऽप्यस्ति संख्या व्यवहृतिबलतः, सा ततोऽन्या गुणादेः ;
मैवं ; संख्यासु संख्याव्यवहृतिवदियं स्यान्निरुपाधिसाम्यात् ।
नो चेत्, प्राप्ताऽनवस्था ; व्यवहृतिनियतिस्थापनं तुल्यचर्चं ;
तस्मात् काणादकॢप्तिर्गुरुमतकथकैर्युक्तमत्रापि गोढुम् ॥ ४४ ॥

पु॰-अभिज्ञाप्रत्यभिज्ञयोरैक्यविषयत्वाविशेषे कस्याश्चित् भेदभ्रमाविरोधित्वं कस्याश्चित् तद्विरोधित्वं
कथमिति शङ्कापरिहाराय द्वयोर्भिन्नैक्यविषयत्वप्रतिपादकं श्लोकं व्याचष्टे अतःपरमिति ॥ ४३ ॥
अद्रव्येष्वपि संख्याव्यवहारदर्शनात् तत्रापि संख्यावृत्तेः, अद्रव्यवृत्तेर्गुणत्वानुपपत्तेः संख्या न
गुण इति चोद्यपरिहारपरत्वं श्लोकस्य प्रतीयते । तच्चायुक्तम् । द्रव्येषु संख्याव्यवहारस्य औप-
वी— एकत्वं नानाविधमित्याह अन्यदिति । इदं रजतमित्यादिरूपा अभिज्ञा किञ्चिदेकत्वं विषयी-
करोति । तदिदं रजतमिति प्रत्यभिज्ञा तु पूर्वदेशकालावच्छिन्नवस्तुभेदाभावरूपमैक्यम् । तेन काल-
भेदसंबन्धप्रयुक्ता, क्षेत्रं =देशः—देशभेदसंबन्धप्रयुक्ता, अभूषणरूपं रजतं भूषणरूपमिति दशाभेद
प्रयुक्ता च भेदभ्रान्तिः शाम्यति । बौद्धः शंकते मोह इति । ज्वलने = अग्नौ सोऽयं दीप इति एकता-
धीर्यथा भ्रान्तिः, तथा तदिदमिति प्रत्यभिज्ञाऽप्यस्तु प्रत्यभिज्ञात्वादिति हेतोरिति । इदमनूद्य
निरस्यति चेदित्यादिना । प्रत्यभिज्ञासामान्यं भ्रमश्चेत्—त्वदीयानुमाने स्वव्याघातः । त्वया कथायां
तथा चायमित्युपनयः प्रयुज्यते । तच्च पूर्वगृहीतप्रतिसंधानमेवेति तदैक्यभ्रमत्वे अनुमायाः उपनय-
प्रयोगान् स्वव्याघातो भवति । अनुमानकार्यभंग इति । किञ्च इह= प्रत्यभिज्ञासामान्ये भ्रमे सति ज्ञान-
त्वाविशेषात् अभिज्ञाऽपि भ्रमः स्यात् । विकल्परूपाभिज्ञाया भ्रमत्वमिष्टमिति चेत्—क्षणिकत्वरूप-
विकल्पोऽपि न सिध्येत् । तथा स्वलक्षणबुद्धेः प्रमात्वेनेष्टाया अपि भ्रमत्वं स्यात् ॥ ४३ ॥
प्राभाकरैः संख्येति पदार्थान्तरम् ; द्रव्यगुणकर्मादिसर्वपदार्थनिष्ठत्वादित्युच्यते । तदनुवदति
अद्रव्य इति । संख्या द्रव्य इवाद्रव्येऽप्यस्ति । 'एकं रूपम् ; एक समवायः' इत्यादिव्यवहारात् । अत

**वैशेषिकोक्तसंख्यातो** व्यतिरिक्तसंख्यावादिनं **प्राभाकरं** प्रतिबन्द्या प्रतिक्षेप्तुमारभते **अद्रव्य** इति। इत्थं किल तेषामाशयः, 'संख्याव्यवहृतिरद्रव्येऽप्यस्ति। अतो व्यवहारबलात् सा संख्या पुनः अद्रव्यात् गुणादेरन्या' इति। तत् दूषयति **मैवमिति**। तत्र प्रतिबन्दीमाह **संख्यास्विति**। अद्रव्यत्वे समानेऽपि संख्यासु संख्याव्यवहारो भवद्भिरप्यङ्गीकार्यः। द्रव्यत्ववैधुर्यं ह्यद्रव्यत्वम्; तत्तु संख्यायामपि समानम्। तथाच संख्यायां संख्याव्यवहारवत् अन्येष्वप्यद्रव्येषु संख्याव्यवहार औपाधिकः स्यादेवेति। तत्र हेतुमाह **उपाधिसाम्यादिति**। स्वाभाविकसंख्याङ्गीकारे पुनरनवस्थेत्याह **नो चेदिति**। *गुणा-दाविव* संख्यायामपि संख्याव्यवहारो मुख्यः स्यादिति भावः। संख्यायाममुख्यसंख्याव्यवहृतिनियम-स्थापनं चेत्, तत् गुणादावपि तुल्यचर्चमित्याह **व्यवहृतिनियतिस्थापनमिति**। उक्तमर्थं निगमयति **तस्मादिति**। काणादक्लृप्तिमङ्गीकुर्वाणस्य **प्राभाकरस्य** संख्यायामपि तत्क्लृप्तिरङ्गीकार्येत्यर्थः॥

**इति प्राभाकरोक्तसंख्यानिरासः ॥ ४४ ॥**

(405) **देशाधिक्यादिसिद्धावुपधिभिरिह तद्युक्तसंयोगभेदात्**
**देशव्याप्तिप्रभेदः परिमितिरिति चेन्नोपधीनां मितत्वात्।**
**देशैस्तन्न्यूनतादौ प्रसजति हि मिथस्संश्रयः; तत् स्वतस्सा**
**मन्तव्या क्वापि; राशिप्रभृतिषु परं देशसंबन्धभेदः ॥ ४५ ॥**

अत्र कश्चिदाह, 'गुणेषु संख्याव्यवहारवत् द्रव्येष्वपि परिमाणव्यवहारोऽप्युपाधिभेदादेव स्यात्; न पुनः स्वाभाविकं परिमाणम्' इति। तदाह **देशाधिक्यादीति**। उपाधिभिर्मणिकघटकरका-दिभिराकाशदेशाधिक्यादिसिद्धौ तत्तदुपाधियुक्ताकाशदेशसंयोगतारतम्यात् तत्तदन्तर्गतानां द्रव्याणां तत्तद्देशव्याप्तिप्रभेद एव परिमाणम्, न पुनः परिमाणमिति गुणान्तरमिति चेत्—तन्न; उपाधीनामेव

---

(ग)— चारित्रत्वस्योक्तत्वात् इत्याशङ्क्य, 'नास्मिन् श्लोके चोद्यपरिहारः क्रियते, किन्तु प्रभाकरमत-तद्दूषणं क्रियते; उपक्रमे प्रभाकरमतदूषणत्वाप्रतीतावपि, उपसंहारे 'गुरुमतकथकैः' इत्युक्तेः' इत्यभिप्रायेणोक्तम् प्रतिक्षेप्तुमारभत इति॥ ४४॥

(वी)– एव गुणाद्यतिरिक्ततेति। निरस्यति मैवमिति। एकमेकत्वम्, एकं द्वित्वमित्येवं संख्यायामपि संख्याव्यवहारः कथम्? स्वस्मिन् स्वाभावात्। औपाधिको व्यवहार इति चेत्—गुणादावपि तथा भविष्यति। परम्परासंबन्धेन संख्यायास्तत्रापि सुवचत्वात्। साक्षात् संख्यायां संख्यान्तर-स्वीकारे च संख्यागतसंख्यायामपि संख्या अन्या स्यादित्यनवस्था। औपाधिकत्वे सर्वाऽपि संख्या गुणादौ आरोप्येतेति चेत्—संख्यायामप्येषा चर्चा समा। अतः परिहारसाम्यात् काणादोक्तरीत्या गुणादौ गौणः संख्याव्यवहार इति युक्तं स्वीकर्तुम्। युक्तमिति सामान्ये नपुंसकम्। क्लृप्तिमिति द्वितीयान्तपाठो वा॥ ४४॥

अथ परिमाणम्। देशेति। परिमाणं नाम गुणो नेति पूर्वपक्षः। घटमठाद्यवच्छिन्ने आकाशे घटावच्छिन्नदेशात् मठावच्छिन्नदेशस्याऽऽधिक्यं ततोऽस्य न्यूनत्वञ्चाऽऽनुभविकम्। तथाच उपाधिभिः=घटादिभिः संयुक्ते आकाशदेशे आधिक्यादौ सिद्धे तादृशन्यूनाधिकदेशसंयोगतारतम्यं यत् घटादौ, तदेव परिमाणभेदत्वेनोच्यते। देशव्याप्तिप्रभेदः=आकाशप्रदेशसंयोगवैचित्र्यमेव

मणिकादीनां स्वभावतः परिमितत्वात् । अतः स्वाभाविकं परिमाणम् उपाधिष्विवान्यत्राप्यङ्गीकरणीय-
मित्यर्थः । 'ननु देशैरेवोपाधीनां परिमाणमस्तु' इति यदि वदसि, तर्हि परस्पराश्रयः—आकाशादिदेशै-
रुपाधिद्रव्यपरिमाणम्, उपाधिभिश्चाकाशादिदेशपरिमाणमिति । उक्तमर्थं निगमयति तदिति । स्वतः
कापि सा परिमितिर्मन्तव्या । कार्पात्यसंघातरूपद्रव्यमुच्यते । संघातरूपेषु राशिप्रभृतिषु देशसंबन्ध-
विशेषमात्रमेव परिमाणव्यवहारकारणमित्याह राशीति । न हि कचिदौपचारिकत्वे सर्वत्राप्यौपचारि-
कत्वमित्यर्थः ॥

इति परिमाणसिद्धिः ॥ ४५ ॥

(406) बौद्धास्तुच्छामणूनामभिदधति परिच्छित्तिमाकाशधातुं
वस्तुस्थित्या(त्यां?) परिच्छित्त्यभवनवशतः स्यादमीषां विभुत्वम् ।
'अन्यत्रासत्त्वरूपा परिमितिः' इति हि स्थापितं; सा मृषा चेत्,
प्राप्तं सर्वत्र सत्त्वं ; प्रथमसरगता सर्वतो व्योम्नि युक्तिः ॥ ४६ ॥

अत्र बौद्धपरिकल्पितां तुच्छरूपां परिमितिं दूषयति बौद्धा इति । बौद्धाः खल्वाकाशधातुरूपत्वात्
आकाशस्य च तुच्छत्वादणूनां परिमितिं तुच्छरूपामभिदधति । आकाशपरिवृतत्वमेवाणूनां परिमितिः ।
आकाशं चाभावरूपतया तुच्छमेव[इति?]। अत्रोत्तरम् वस्तुस्थित्येति। [एवं] तर्ह्यणूनां परमार्थतः परिच्छित्त्य-
भाववशात् विभुत्वमेव स्यादित्यर्थः । न हि परस्परविरोधे कोट्यन्तरमस्ति ; द्रव्यस्य सतः परिमाणावश्य-
म्भावात् । उक्तमर्थं विवृणोति अन्यत्रेति। बौद्धपक्षे हि 'एकत्र देशेऽवस्थितस्य देशान्तरासत्त्वमेव' हि(?)
परिमाणम् ॥ सा चेन्मृषा परिमितिः, तर्हि देशान्तरेऽपि सत्त्वं स्यात् ॥ तर्हि कथमाकाशादी परिमितत्वं
अपरिमितत्वं चे(वे)त्यादिचोद्यं प्रथमसर एव परिहृतमुपाधिभेदादिति , तदत्रापि स्मर्यतामित्यर्थः ॥

इति तुच्छपरिमितिनिरासः ॥ ४६ ॥

---

वी- परिमाणमिति। निरस्यति इति चेन्नेति। हेतुमाह उपधीनां=उपाधिभूतानां घटादीनां स्वभावत एव
मितत्वात् =परिमाणवत्त्वादिति। अन्यथा दोषमाह देशैरिति। आकाशदेशभेदकृतं चेत् न्यूनतादिकं =
परिमाणतारतम्यम्, विभोराकाशस्य देशे न्यूनाधिक्यं किं कृतम्? घटादिकृतमिति चेत्, मिथः
संश्रयः=अन्योन्याश्रयः स्यात् । तत्=तस्मात् सा=परिमितिर्घटादौ स्वतः=स्वाभाविकत्वेन
मन्तव्या । परंतु परिमितिरियं स्वाभाविकी कापि =असाशिभूते वस्तुनि। राशौ तु नैकं परिमाणम्;
राशेरनेकसमुदायरूपत्वेनानेकत्वात् । तत्र तु व्यवह्रियमाणं परिमाणं देशसंबन्धविशेष एव। एवञ्च
घटादावप्यवयवसमुदाये मुख्यपरिमाणाभावः अणुष्वेव परिमाणमित्युक्तं भवति ॥ ४५ ॥

परिमाणं तुच्छमिति बौद्धवादं परास्यति बौद्धा इति । अणूनां परिमाणमस्तीति प्रागुक्तम् ।
अणुसंघात एव सर्वं इति सौगताः संगिरमाणा एव तत्परिमाणं तुच्छम् आकाशधातुरूपं वदन्ति।
भूतचतुष्कमात्रवादिनः आकाशमभावरूपमेव मन्यन्ते। निरस्यति वस्तुस्थित्येति। सप्तम्यन्तपाठो वा।
वस्तुतः इत्यर्थः। यद्वा वस्तुनः धर्मिणो वर्तमानतायां धर्मस्य परिच्छेदस्याभावस्येष्टत्वात् अमीषाम्—
अणूनां विभूनामिव परममहत्त्वमेव मतं स्यात् । परितो मितत्वं हि परिमितिः; स्वानाक्रान्तदेशो
स्वाभावः। तस्याभावस्य मिथ्यात्वे स्वस्य सर्वत्र सत्त्वमेवोक्तं स्यात्। तथा चाकाशधातुरियं परिमिति-
रित्युक्तिः परिमाणातिशयमेव स्थापयेत्। शेषं वृत्तौ। आकाशे किं मानमिति चेत्—आकाशास्तित्वं
प्रथमसरे(४२-४३)श्लोकयोरुक्तमेव। आकाशपरिवृतत्वं=परित आकाशवत्त्वम्। तच्चाकाश एव॥४६॥

(407) **स्थूलाणुह्रस्वदीर्घेतरदुपनिषदि स्थापितं ब्रह्म ; तस्मिन्**
**सर्वोत्कृष्टं महत्त्व श्रुतमपि ; तदिह स्थूलताऽन्या निषिद्धा ।**
**अन्ये त्वाहुर्विभूनामपरिमितवचःप्रत्ययान्मित्यभावम् ;**
**भावैकात्मन्यभावे परिमितिविरहोऽप्यत्र भावान्तरं स्यात् ॥ ४७ ॥**

ननु सर्वपरिमाणनिषेधो ब्रह्मणि दृश्यते, 'अस्थूलमनण्वह्रस्वमदीर्घम्' इति। तत् कथं विरुद्धपरिमाणनिषेधसमुच्चय इति कश्चिच्चोदयति **स्थूलेति** । तत्र परिहारमाह **तस्मिन्निति** । सर्वोत्कृष्टमहत्त्वं ब्रह्मणि श्रुतम् । विहितव्यतिरिक्तविषयो निषेध इति न्यायसिद्धम् । तेन ब्रह्मणि अस्थूलत्वा पर्वतादितुल्यपरिमाणराहित्यमेव ; न पुनः सर्वव्यापित्वरूपपरिमाणराहित्यम्, विषयभेदेन व्यवस्थासिद्धौ विरुद्धार्थकल्पनायोगादिति **विभुत्वरूपं** परिमाणं भावरूपमेवाङ्गीकृत्य **केचिदाचार्याः** प्राहुः । अन्ये पुनः विभूनामपरिमितवचोविषयत्वात् परिमाणाभावमेव विभुत्वं प्रतिपादयन्ति, सर्वव्यापिन परस्य ब्रह्मणः परिमितौ (परितो मितौ) मानाभावादिति । अभावरूपपदार्थाङ्गीकारेणायं निर्वाहः । भावान्तराभाववादे तु परितो मानविरहो(अभावो)ऽपि भावात्मक एवेत्याह **भावेति। भावैकात्मन्यभावे**-अभावेऽपि भावरूपतया स्वीकृते सतीत्यर्थः ॥

**इति ब्रह्मणः परममहत्त्वम् ॥ ४७ ॥**

(408) **नात्यन्ताणोर्महत्ताऽस्त्यवयविनि हते मध्यमं क्वास्तु मानं ;**
**तद्धेतुष्वेव तद्धीरपि तव घटते लाघवोत्कण्ठितस्य ।**
**एवं त्यक्ते महत्त्वे परममहदपि त्याज्यमेवेति चेन्न ;**
**त्यागाभावात् ; तदिष्टादधिकमनधिकं वाऽस्तु न क्वापि दोषः ॥ ४८ ॥**

ननु तव [मते] महत्त्वमेव न सञ्जाघटीतीति [कश्चित्] चोदयति **नात्यन्तेति** । अत्यन्ताणोर्जीवस्य न तावत् महत्ताऽस्ति, अवयविवादानङ्गीकारात्, त्र्यणुकाद्यभावेन मध्यमपरिमाणरूपं महत्त्वमपि भवता नास्ति । तदिदमाह **अवयविनीति** । घटादिषु महत्त्वप्रतीतिश्च लाघवोत्कण्ठितस्य तव पक्षे पटघटादिहेतुषु तन्तुकपालादिसङ्घातेष्वेव घटते । एवं मध्यममहत्त्वे त्यक्ते परममहत्त्वमपि भवता परित्याज्यं

श्री- अथ द्वाभ्यां परममहत्त्वस्थितिमाह स्थूलेति । अस्थूलमनणु अह्रस्वमदीर्घमिति प्रसिद्धपरिमाणचतुष्टयमपि परमात्मनि निषिद्धम् । 'स वा एष महानज आत्मा', 'महतो महीयान्', 'यस्मात् परं नापरमस्ति किञ्चित्' इति परमं महत्त्वमपि श्रुत्युक्तम् । निषेधस्य विहितव्यतिरिक्तविषयत्वात् परममहत्त्वातिरिक्तस्थूलतामात्रनिषेध एव शास्त्रतात्पर्यम् । अन्ये तु सर्वमाननिषेधात् मानाभाव एव परममहत्त्वमस्तीत्याहुः । सिद्धान्ते भावातिरिक्ताभावाभावात् अयमप्यभावो भावैकस्वरूप इति स भावः परिमाणविशेष एव । तस्य मानस्य परिमाणशब्दवाच्यता तु एकैकवस्तुपर्यन्तदेशव्यापिगतमानत्वात् । वृत्तौ अन्तिमवाक्ये अभावे इति पदं सकृत् कृतमस्ति । द्विः प्रयोक्तव्यम् ॥ ४७ ॥

नात्यन्तेति। ननु परममहत्त्वमिति महत्त्वे पारम्यं महत्त्वे सिद्धे किल स्यात् । महत्त्वमेव नास्ति; अवयविनामस्वीकारात्। अनवयवकाष्ठायाश्च परमाणुत्वात् मध्यमपरिमाणरूपमहत्त्वायोगात्। पूर्वं गुरुत्वं प्रति यत् कारणं तेनैव गुरुत्वकार्ये पतने निरुद्धे किं गुरुत्वेनेत्युक्तम्। एवं द्रवत्वादावपि। एवञ्च, तेन, 'तद्धेतोरेवास्य तद्धेतुत्वे मध्ये किं तेन' इति न्यायेन महत्त्वरूपमध्यमपरिमाणकारणं यत् तेनैव

स्यात्। परमशब्दव्यवच्छेद्याभावेन विशेषप्रतीतेरभावादिति चेत्-(चेदित्यर्थः?)।अनूदितमर्थं दूषयति नेति।
तत्र हेतुमाह त्यागाभावादिति। तदेवोपपादयति तदिति। तत् महत्त्वं परेणात् महत्त्वपरिमाणादधिकं वाऽस्तु;
अनधिकम्=तदेव वा परिमाणम्; सर्वथा तावत् न परित्यज्यते परिमाणरूपं वस्तुतत्त्वमिति न क्वाप्यस्माकं
दोष इत्यर्थः ॥

इति परममहत्त्वनिरूपणम् ॥ ४८ ॥

(409) 'द्रव्यं कृत्स्नं स्वभावात् परिमितिरहितं व्यापकैकत्वयुक्तेः;
औपाधिक्यंशवॢप्तिर्घटगगननयात् स्यात्; अवस्था ह्युपाधिः।
स्वाभावैर्वेष्टितत्वं घटत इह घटाद्याकृतौ द्रव्यधर्मे
पार्श्वोक्तिस्तावता स्यात्' इति न सत्; अवधेरन्यथाऽप्यत्र सिद्धेः ॥ ४९ ॥

अत्र कश्चिदाह— न द्रव्येष्वणुमहदादिप्रक्रियाभेदेन परिमाणं स्वाभाविकमस्ति, अपि त्ववस्थाभेद एव तत् सर्वमिति। तदेतदनुवदति द्रव्यमिति। तत्र हेतुमाह व्यापकैकत्वयुक्तेरिति। एकैव सर्वव्यापिका प्रकृतिरिति ह्युच्यते, 'अचेतना परार्था च' इत्यादिभिर्वचनैः। युक्तियुक्तं चैतत्; एकस्यैव नानावस्थायोगेन नानात्वे लाघवात्। अंशवॢप्तिस्तु कथमिति चेत् तत्राह औपाधिकीति। तत्र दृष्टान्तं कथयति घटेति। यथाऽऽकाशे घटाद्युपाधिभेदादंशवॢप्तिरित्यर्थः ॥ तत्र घटादिरेवोपाधिः; इह पुनः कोऽयमुपाधिरिति चेत्—तत्राह अवस्था ह्युपाधिरिति। सैवावस्था तत्रतत्र परिणता नानात्वव्यवहारे निदानमित्यर्थः। तर्हि परिमितद्रव्याभावे घटादिषु स्वाभाववेष्टितत्वं कथमित्याशङ्क्य परिहरति स्वाभावैरिति। घटादीति। स्वाभाववेष्टितं किमपि द्रव्यान्तरं न पश्यामः। अपितु प्रकृतौ परिणता घटाद्याकृतिरेव स्वाभाववेष्टिना प्रतिभाति। अनेनैव न्यायेन घटादौ पार्श्वोक्तिरपि संघटत इति वदति पार्श्वोक्तिरिति। घटाद्याकृतावेव परितः पार्श्वोक्ति(पार्श्व)व्यवहारः। अत. परिमाण नाम किमपि द्रव्ये न परिकल्प्यमिति ॥

---

अतो महत्त्वव्यवहारनिर्वाह इति लाघवे उत्कण्ठितः=सञ्जातोत्कण्ठः सिद्धान्ती वक्तुमर्हति। अतो न हि वयं परिमाणं न महत्त्वम्; नतरां परममहत्त्वमिति चेत्—तन्न; महत्त्वस्यास्माभिरत्यागात्। न हि वयं परिमाणं तुच्छम् आकाशमात्रमिति वदन्तो बौद्धा इव महत्त्वं तुच्छं वस्तुमात्रं मदिति ब्रूमः। सत्यमेव महत्त्वं शोध्यमानं तार्किकोक्तरूपमन्यादृशं वाऽस्त्येव। तथैव परममहत्त्वमपीत्यर्थः ॥ ४८ ॥

ननु द्रव्योत्पत्तिवादे तार्किकादीष्टे द्रव्ये परिमाणवादः स्यात्। एकं द्रव्यं नानावस्थाभाजनमिति पक्षे प्रपञ्चस्य सर्वस्यैकप्रकृतिद्रव्यत्वात् अणुत्वमहत्त्वादिपरिमाणं कस्येति शंकामनूद्य परिहरति द्रव्यमिति। व्यापकम् उपादानतया सर्वत्र निविष्टं प्रकृतिद्रव्यमेकमेव हि। अतो न स्वाभाविकमिदं परिमाणम्। घटाकाश इव अशकल्पनाया औपाधिकत्वात्। आकाशे घटादिरुपाधिः। अत्र तु तत्तदवस्थैवोपाधिः। परिमितत्वं नाम परितो मितत्वं पार्श्वचतुष्टयेऽपि स्वाभावे सति मध्ये स्थितत्वम्। एकस्यैव द्रव्यस्य व्यापित्वात् तदभावः कथम्। ननु सांख्यमते प्रकृतेर्व्यापकत्वेऽपि सिद्धान्ते तस्याः नित्यविभूतिदेशावच्छेदेनाभावात् तत्र परिमाणमस्त्येवेति चेन्न—तस्य परिमाणस्वाभावात्। परितो माने हि परिमाणता। प्रकृतिर्नित्यविभूतिश्चैकभागे मिथोऽवच्छिन्नत्वेऽपि ऊर्ध्वाधोदिग्भिन्नस्थले व्यापिन्येव। अतो द्रव्ये तद्योगात् घटत्वाद्याकृतीनामेव परितोऽसत्त्वात् परिमितत्वम्। पार्श्वशब्दोऽपि अभावप्रदेशवाची आकृत्यभावमादायैव व्युत्पाद्यः इति पूर्वपक्षः।

तन्निषेधति न सदिति। तत्र हेतुमाह अवधेरिति। उपलब्धिरेव हि सर्वत्र प्रमाणम्। परिमितत्वरूपेण उपलभ्यमानेषु घटपटादिषु न ह्यवधिसापेक्षं तत्तत्परिमाणमुपलभ्यते। तत्सापेक्षत्वे पुनः अवधेरपि निरपेक्षपरिमाणशालित्वमकामेनापि स्वीकर्तव्यमिति भाव ॥ इति अवस्थागतपरिमाणवादभङ्गः॥४९॥

(410) 'अव्यक्ते स्यादणुत्वप्रभृतिपरिणतिः स्तम्भकुम्भादिनीत्या;
नाणुत्वं पूर्वसिद्धं; नरमृगरचनाद्यप्यवस्थाक्रमेण।'
इत्युक्तं सांख्यशैवप्रभृतिसमयिभिः; तत् तथैवास्तु, मा वा;
नित्याणौ जीवतत्त्वे न कथमपि भवेत् अव्यवस्थाप्रवृत्तिः ॥ ५० ॥

इत्थं सामान्येन परिमाणं प्रसाध्य स्वाभाविकमात्मनोऽणुत्वं प्रसाधयितुं विशेषतोऽप्यणुपरिमाणं शोधयति अव्यक्त इति। अणुत्वप्रभृतयो हि धर्मा. प्रकृतिद्रव्य एव परिणामभेदात् युज्यन्ते, यथा स्तम्भत्वकुम्भत्वादयः; अतोऽनादिसिद्धमणुत्वं नाम किंचिन्नास्ति। यथा एकस्यैव प्रदेशभेदेन नरमृगादिविरुद्धधर्मरचना। अथवा एकस्यैव क्रमेण पूर्वं नररूपेणावस्थितस्य पश्चान्मृगरूपेणावस्थानम्। एवं कालभेदेन अणुत्वेनावस्थितस्यैव महत्त्वम्, महत्त्वेनावस्थितस्याणुत्वम्। इत्थं सांख्यशैवप्रभृतिभिरुक्तम्। एतत् युक्तमयुक्तं वाऽस्तु; उभयथाऽपि नास्माकं क्षतिः। यदि कारणावस्थायां महती प्रकृतिः कार्यावस्थायां कालभेदेन परिणतिवशादणुत्वं भजति; यदि वा कारणावस्थायां त्रसरेणुसंघातरूपेणावस्थिता प्रकृतिरनुपलभ्यमानस्वरूपभेदा—कार्यावस्थायां कालभेदाधीनभागोपलम्भेन त्रसरेण्वादिरूपेणोप-

श्रुत — तन्निषेधतीति। प्रकृतो घटाद्यवस्थानामवध्यवयवप्रदेशवृत्तित्वात् तन्निबन्धन एव घटादिषु परमितत्वव्यवहारः। स्वाभावचेष्टितत्वम्, पार्थोक्तिश्चावस्थानामेव; अतः स्वाभाविकं घटादिषु परिमाणं नास्तीत्येतत् प्रतिक्षिपतीत्यर्थः। 'अवधेरन्यथाऽप्यत्र सिद्धेः' इत्येतत्—अवधेरन्यथा = उपाधितयोक्तामवस्थामनपेक्ष्य। अत्र = घटादिषु परिणामोपलब्धेरित्येवंपरतया व्याचष्टे—परिमितस्वरूपेणेत्यादिना ॥ ४९ ॥

'नरमृगरचनाद्य(व्य)वस्था' इत्यत्र नरमृगशब्दं नरसिंहपरमङ्गीकृत्य अव्यवस्था पदं युगपदेकाश्रयनिष्ठत्वपरतया व्याचष्टे प्रदेशभेदेन नरमृगादिविरुद्धधर्मरचनेति। मृगेन्द्रपरत्वं क्लिष्टमिति नरत्वमृगत्वयोः कालभेदेन एकद्रव्यनिष्ठतामङ्गीकृत्य अव्यवस्थापदं व्याचष्टे अथवा एकस्यैवेति ॥५०

श्री — निरस्यति इति न सदिति। अन्यथा—द्रव्यग्रहणेनापि अवधे.—परिमितत्वस्य सिद्धेः। यथा व्यवहारबलात् कार्यत्वकारणत्वादिकमवस्थामात्रे नेष्यते, किन्तु विशिष्टे द्रव्ये, तथा तत्तदभावव्यवहारोऽपि अवस्थाविशिष्टप्रतियोगिक एवेष्यते। अतः स्वाभावचेष्टितत्वमनुभवानुसारेण घटादेरक्षतम्। न हि भूतले घटो नास्तीत्यस्य भूतलत्वरूपावस्थायां घटत्वरूपावस्था नास्तीत्यर्थः स्यात्। भूतले घटकालेऽपि तथा व्यवहारप्रसंगात्। अर्थान्तरं व्याख्यान्तरे। अतः प्रत्यक्षसिद्धं द्रव्येषु परिमाणमिति ॥ ४९ ॥

अणुत्वं विचारयति अव्यक्ते इति। निरवयवैकप्रकृतिद्रव्यकार्यं सर्वमिति पक्षे महतां यथा महत्त्वं तत्तदवस्थापेक्षं, तथाऽणुत्वमपि विकृतौ वाच्यमिति तदपि सादि सान्तम्। नरमृगेति दृष्टान्तकथनम्—यथा एकत्रैव द्रव्ये अंशभेदेन नरत्वं मृगत्वञ्च, यथा चैकस्मिन्नेवांशे कालभेदेन नरत्वं मृगत्वञ्च, तथा अणुत्वमप्येकत्रैव नानाविधाणुषु एकस्मिन् जलपरमाणौ च पश्चात् पृथिवीपरमाणुतापीति ज्ञातये। तदाह इत्युक्तमिति। अस्तु तथैव। तावता किम्। सर्वं नणुत्वमनित्यमिति न भवति।

विरोधाभावात् उच्यमानस्य च अर्थस्यानुपपत्ति-
ऽभ्यन इति—उभयथा(था)ऽपीश्वरकारणत्वादिरूपप्रधानार्थ
विशेषस्फौट्याभावात् तत्र न विप्रतिपद्यामहे । अयमत्र विशेष –प्राकृतपरमाणौ यथातथा वाऽस्त्वणुपरि-
माणम्, जीवतत्त्वे न कथमपि भवेदण्ववस्थाया उत्पत्ति, जीवस्यानाद्यनन्तत्वेनैव प्रमाणसिद्धत्वादि-
त्याह न कथमपीति (नित्याणाविति?) ॥ इति अणुत्वस्यावस्थान्यत्वम् ॥ ५० ॥

(411) चर्चा तुल्यैव भिन्नं पृथगितरदिति प्रत्यये ; तत् पृथक्त्वं
मेदाख्यो(मेदो यो?) नीलपीतप्रभृतिरभिमतः ; किं मुधाऽन्यस्य क्लृप्तिः ।
नाप्यज्ञातावधीनां पृथगिदमिति धीः ; नापि भिन्नादिवाचां
साकं क्वापि प्रयोगो ; न च पृथगिति धीर्द्रव्य एवेति सिद्धम् ॥ ५१ ॥

इत्थं परिमाणं संशोध्य पृथक्त्वमपि शोधयति चर्चेति। व्यवहार एव खल्वर्थतत्त्वविभागे निदानम्,
यत् भिन्नमिति व्यवह्रियते, तदेव पृथगिति, यत् पृथगिति, तदेवेतरदिति च व्यवह्रियते । अत एषां
शब्दानां पर्यायत्वात् मेदातिरेकेण पृथक्त्वं नाम न कश्चिद्धर्मः कल्पनीयः । किंच मेदश्च नीलपी-
तादि असाधारणो धर्म एवाभिमतः । तथाच पृथग्व्यवहारस्यान्यथासिद्धत्वे किं मुधाऽन्यस्य पृथक्त्वस्य
परिक्लृप्त्या? 'ननु पृथक्त्वं भावरूपं प्रतियोगिनिरपेक्षम्, भेदस्तु प्रतियोगिसापेक्षः' इति वैषम्यमाशङ्क्य
परिहरति नापीति । न ह्यवधिपरिज्ञानाभावे सति इदमस्मात् पृथगिति व्यवहरन्ति । यदि पृथक्त्वम-
साधारणधर्मरूपात् मेदादन्यत्, तर्हि तद्वाचकशब्दस्य मेदवाचकशब्देन सामानाधिकरण्यं प्रसज्येत ।
न च तथोपलभ्यते, न हि पृथगित्युक्त्वा भिन्नमिति वदन्ति, भिन्नमिति चोक्त्वा पृथगिति वा ।

कचिदनाद्य-
नन्तत्वात्। यद्दिवेत्यस्य रूपमेदेत्यत्र समाप्ति, यद्वेति पूर्वं वाक्यविषयसरूपार्थस्य तत्रेन पर्यवसानात्।
यदि वा अनुपलभ्याणुसंघातरूपा भवतीत्यर्थः । अत्र पक्षे प्रकृत्यन्तर्गताणुपरिमाणमपि नित्यम् ।
तस्योपपादनार्थं कार्यावस्थायामित्यारभ्य इतीत्यन्तम्। उपपादकत्वद्योतनाय तत्र इति शब्दः । अथवा
इतीत्यन्तेन तृतीयपादव्याख्यासमाप्तिः ॥ ५० ॥

ध्वी— प्रकृतिविकारतानापन्ननानाजीवरूपनित्याणुमद्भावात् अणुत्वं नावस्थामात्रम् ।
अथ पृथक्त्वं न पृथग्गुण इत्याह चर्चेति । भिन्नमिति पृथगिति इतरदिति च प्रत्यये = ज्ञाने
पृथक्त्वचर्चा भिन्नचेतरत्वचर्चातुल्यैव। द्वयमिदं त्रयमप्येकमिति यावत्। तत् = तस्मात् एककार्यकर-
त्वात् पृथक्त्वं भेद एव। कोऽसौ भेद इत्यत्राह य इति। नीलपीतादिरूपरसादिगोत्वाश्वत्वादिरूपस्तत्त-
द्धर्मो य एतत्र स सर्वोऽपीत्यर्थः । भिदिर् विदारण इति धातोः अन्यत्वप्रयोजकव्यापारो भेदनमर्थः ।
भिन्नम् विदारणरूपव्यापारजन्यफलभागित्यर्थः । भेद इतत्फलमन्यत्वमेव इतरदिति पृथगिति च विशद-
मुच्यते। अतो मुधा = वृथा अतिरिक्तधर्मत्वकल्पनं किमर्थम्। भेदाख्यमित्यादिद्वितीयपाठाभावात् भेदो
य इति पाठो युक्तः । किमिति पदं किमर्थमिति चेत्—अन्यस्य क्लृप्तिः किं = कुत इत्येकं वाक्यम् ।
वैयर्थ्यदृढीकरणाय मुधेति तद्विवरणम्। ननु 'इदमस्मात् भिन्नम्, इदमस्मात् इतरत्' इति प्रतियोगि
सापेक्षो व्यवहारः इति चेत्-पृथगिति धीरपि 'कस्मात्' इति प्रतियोगिसापेक्षैव । 'इदमस्माद्भिन्नं
पृथक् च' इति सामानाधिकरण्येन सहप्रयोगो यदि स्यात्, धर्मो विभिन्नः स्यात्। न च सहप्रयोगोऽस्ति।
किञ्च पृथगिति ज्ञानं द्रव्यविषय इव गुणादावपि, रूपं रसात् पृथक्, उत्क्षेपणमवक्षेपणात् पृथगि-
त्यादिव्यवहारादिति नास्य गुणरूपत्वमिति ॥ ५१ ॥

तदिदमाह नापीति । न च पृथगिति धीर्द्वय एव नियता, गुणादीनामपि पृथक्त्वेनोपलम्भात् । अतः परस्परव्यावर्तकासाधारणधर्म एव सर्ववस्तूनां पृथक्त्वम्; तदेव लक्षणम्; स एव भेद इति सर्वमवदातम् ॥ **इति पृथक्त्वाख्यगुणान्तरक्लृप्तिभङ्गः ॥ ५१ ॥**

**(412) तन्त्वादीनां पटादिव्यवहृतिनियता दृश्यते काऽप्यवस्था;**
**सा चेद् द्रव्यस्वरूपं, भवति विफलता कारकव्यापृतीनाम् ।**
**तत्रासंयुक्तबुद्धिः कथमिव च भवेत् स्थैर्यवादस्थितानां;**
**नैरन्तर्यं च भावो मम, तदघटितं मध्यमेवान्तरं च ॥ ५२ ॥**

संयोगस्यान्तरालाभावत्ववादिनं बौद्धं निराकर्तुं तस्यानन्यथासिद्धप्रमाणप्रतिपन्नत्वेन स्वीकर्तव्यत्वमाह **तन्त्वादीनामिति । पटादिव्यवहृतिनियता** तन्त्वादीनामवस्थैव पट इति **वेदान्तिनः** । येऽपि चावस्थाव्यतिरेकेण द्रव्यान्तरं स्वीकुर्वन्ति, तेषामप्यसमवायिकारणावस्थाविशेषत्वेन स पुनः स्वीकार्यः । तथाच संयोगः सिद्धः ॥ साऽवस्था द्रव्यस्वरूपमेवेति चेत्, [तर्हि] कारकव्यापाराणां विफलता च स्यात्। किंचापूर्वं संयुक्तावस्थास्वीकाराभावे सति(संयुक्तत्वरूपावस्थानङ्गीकारे) विभक्तेषु तन्तुषु असंयुक्तत्वबुद्धि (मति) कथं स्यात्; स्थिरवादिना संयुक्ततन्तुस्वरूपस्यानपायात्॥ प्रतिक्षणं तन्तव उत्पद्यन्त इति चेत्, निरस्त एव क्षणभङ्गवाद —इत्यभिप्रायेणाह **स्थैर्यवादस्थितानामिति** । ननु नैरन्तर्यं संयोगः, स चान्तरालाभावः । अभावश्च शून्यमेवेति चेत्—नन्न; अभावस्यापि भाववत् अशून्यत्वात् । निषेधकप्रमाणगोचरो ह्यभावः, स कथं शून्यतामनुभवति? किंच भावान्तराभाववादिनामस्माकं पक्षे नैरन्तर्यमपि भाव एव ॥ किं तर्ह्यन्तरम् ॥ तदपि भाव एव । द्वयोरपि पदार्थयोर्मध्यमेव ह्यन्तरमित्युच्यते । अतोऽन्तरालम् अन्तरालाभावरूपतया भवत्परिकल्पितसंयोगोऽपि भाव[रूप] एवेति न शून्यगन्धावकाशः ॥

**इति संयोगसिद्धिः ॥ ५२ ॥**

---

टी— अथ संयोगरूपो गुणोऽवश्यं स्वीकार्य इत्याह तन्त्विति । तन्तव एव व्यतिषङ्गविशेषभाजः पट इत्युच्यन्ते । स च व्यतिषंगः संयोग एव । स नेष्यते चेत्—पूर्वमपि पटव्यवहारः स्यात् । ननु पटो नाम द्रव्यम् । तदभावात् पटव्यवहारः प्राङ् नासीदिति चेत्—किं तत् द्रव्यम्? तन्तुकार्पासादिकमेवेति चेत्—किं पूर्वस्थिते कारकव्यापारेण । तथा च पूर्वमेव पटव्यवहारः स्यात्॥ तर्ह्य तार्किकोक्तं द्रव्यमिति चेत्—तदपि कुतः प्राङ् नासीत्? तन्तुषु सत्सु कार्यविरहस्याभावात् । तन्तुद्वयसंयोगविशेषरूपासमवायिकारणाभावात् पटः पूर्वं न जात इति चेत्—तर्हि तत्संयोगार्थमेव सकलकारकव्यापार इति किं द्रव्यान्तरेण । सिद्धश्चासंदिग्धः संयोगः । नन्वसंयुक्ततादशाया स्थितास्तन्तवोऽन्ये, पटव्यवहारकाले च तेऽन्ये, क्षणिकत्वात् सर्वस्येति चेत्—तदिदं बौद्धमतं निरस्तम्; स्थैर्यवादः स्थापितः । एवञ्च संयोगस्वीकारे संयुक्तासंयुक्तभेद एव न स्यात् । यत्तु बौद्धोक्तम्—नैरन्तर्यमेव संयोगः; एकस्य यो देशः, अन्यस्य च योऽन्यो देशः तयोर्मध्ये अन्तरम्=अवकाशो नास्तीति । अतोऽयमभावस्तुच्छ एव संयोग इति—तन्न । अभावस्यान्यत्वेऽप्यतुच्छत्वात् । शशविषाणादिवत् अप्रतीयमानं हि तुच्छम् । अभावस्याप्यस्मन्मते भावत्वाच्च । अन्तरशब्देनावकाशवाचिना अभावग्रहणे अभावाभावो भाव एव भवेत्। तदघटितं=तद्द्रव्यद्वयासंयुक्तं मध्यमेव हि अन्तरमित्युच्यते । तत्रापि संयोगो घटक एवेति ॥ ५२ ॥

(418) सर्वं द्रव्यं सभागं ; न यदि, कथमुपाध्यन्वयो भागतः स्यात् ;
कात्स्न्र्येनोपाधियोगे कथमणुविभुनोः सूक्ष्मतादीति जैनाः ।
सामग्रीशक्तिभेदप्रजनितविविधोपाधियोगस्वभावात्
औपाधिक्यंशक्लृप्तिः कथमिव न भवेत् द्विष्ठसंबन्धदृष्टेः ॥ ५३ ॥

एवं संयोगस्य सिद्धिमुपत्वा तस्य संयोगस्य वस्तुनि एकदेशवर्तित्वसामर्थ्यात् सर्वस्यापि द्रव्यस्य
सांशत्वं वदतो जैनस्य पक्षमनूद्य प्रमाणानुरोधेन परिहरति सर्वमिति । इत्थं किल ते मन्यन्ते,
'परमाण्वादि सर्वमपि द्रव्यं सभागमेव; पदार्थान्तरसंयोगस्य पार्श्वषट्कमन्तरेणानुपपत्तेः । यदि पार्श्व[परि]-
क्लृप्तिरुपाधितः इति वदन्ति, तच्च न ; निरवयवद्रव्यस्य उपाधिसंयोगेऽप्यनधिकारात् । मध्यस्थस्य हि
परमाणोः परितःस्थितषडुपाधिसंसर्गोऽपि षड्भिरेव पार्श्वैरुपपद्यते । अन्यथा कथम् , उपाधिसंसर्गस्तत्तले-
ष्वौपाधिकोऽपि पार्श्वनियमः सिध्येत ? तर्हि निरवयवस्य कात्स्न्र्येनोपाधिसंसर्गं वदाम इति चेत् , तर्हि
परमाण्वाकाशयोः परस्परसंसर्गे परमाणुरपि विभुः स्यात् ; आकाशो वा परमाणुः स्यात्(दिति?)। तदिदमाह–
कात्स्न्र्येनेति । इत्थमनूदितं पक्षं प्रमाणानुरोधेन परिहरति सामग्रीति । अयमर्थः –दृश्यते तावत् संयोगः;
स च काचित्कतया उपलभ्यते । स यदि संसर्गः प्रदेश एव, न वस्तुनीत्यभिधीयेत, तथा सति तस्यापि
प्रदेशस्य प्रदेशान्तरपरिक्लृप्त्या कस्मिंश्चिदपि वस्तुनि संबन्धो न स्यादेव । दृश्यमानस्य च संबन्धस्याऽऽ
धारतया परिदृष्टमेव वस्तु परिग्राह्यम् । तत्तु निरवयव चेत , औपाधिकांशभेदक्लृप्त्या निर्वाह्यम् । ननु
'तादृशस्योपाधिसंबन्धेऽप्यनधिकारः' इत्युक्तमिति चेत् , द्विष्ठसंबन्धदृष्टिबलादुपाधिसंबन्धस्य स्वपरनिर्वाहक-
त्वेन निर्वाहः कल्प्यः । तदिदमाह औपाधिकीति । एवं च सति अणुरपि स्वधर्मिग्राहकबलादणुत्वेनैव

---

श्री— यथाऽनुभवसिद्धस्य संयोगस्यानपलप्यत्वम् , तथा परिमितपदार्थानां संयोगस्याव्याप्यवृत्ति-
त्वमपि स्वाभाविकं नापलप्यम् । तावता सर्वं द्रव्यं सांशमिति निरवयवद्रव्यनिरासो जैनेष्टो न
संमन्यते । किंतु "न हि दृष्टेऽनुपपन्नं नाम" इति न्यायेन निरवयवेऽपि संयोगबलादेवौपा-
धिकप्रदेशसिद्धिः । उपाध्यन्तरेण प्रदेशे कल्पिते संयोग उदेतीति स्वीकारे तादृशोपाधिसंबन्धोऽपि
उपाध्यन्तरमपेक्ष इत्यनवस्था स्यात् । अतः स्वपरनिर्वाहकतया स्वत एव संयोगादौपाधिकदेश-
सिद्धिरिति । पूर्वार्धेन तन्मतमाह सर्वमिति । जैना भणन्ति, द्रव्यसामान्यं सावयवम् । न चेत्=स्वतो
भागाभावेऽपि औपाधिकभागवत्त्वमिति स्वीकारे, तादृशोपाधिसंबन्धस्यैकदेशस्थता कथम् ।
उपाधेः पूर्णसंबन्धे चोपाधिकप्रदेशासिद्धिरिति किंचिदंशे उपाधिसंयोग इत्येव वक्तव्यम् । किञ्च
उपाधेः कात्स्न्र्येन=पूर्णत्वेव संबन्धस्वीकारे निरवयवस्य परमाणोः निरवयवेन विभुना संयोगः
कात्स्न्र्येनैवेति परमाणुर्वा विभुः स्यात् विभुर्वा परमाणुः स्यादिति अणोः सूक्ष्मत्वमन्यस्य महत्त्वमिति
भेदो न स्यात् । तथा अणौ कात्स्न्र्येनाणवन्तरसंयोगे अणुपरिमाणाधिकः प्रथिमा न सिध्येदिति ।
तन्निराकरणेन स्वपक्षमाह सामग्रीति । प्रत्यक्षयोर्निरवयवयोः त्रसरेण्वोः संयोगोऽपि प्रत्यक्षः । स
च द्विष्ठः संयोगः एकस्यान्येनैकदिगवच्छेदेनैव दृष्टः । एतत्संयोगबलादेवावच्छिन्नानवच्छिन्नदेश-
द्वयव्यवहारो भवति । अतो वस्तुनि उपाधिसंयोगः=वस्त्वन्तरसंयोगः सहकारिकलापरूप-
सामग्र्यधीनशक्तिभेदेन उपाध्यन्तरनिरपेक्षं तथोत्पाद्यत इत्येव स्वीकर्तव्यम् । एतदुपाधियोगादेव
तत्रांशव्यवहार इति न तत्र स्वाभाविको भागोऽस्तीति ॥ ५३ ॥

सिद्ध, विभुरपि विभुत्वेन, [उभयमपि निरवयवम्। अथापि तद्धर्मिग्राहकप्रमाणबलात् विभुत्वाणुत्वयो प्रतिनियति ।] द्वयोरपि निरवयवत्वम्, औपाधिकांशवत्त्वसिद्धेति सङ्गतमेतत् ॥

इति निरवयवेऽनेकदेशसंयोगप्रकारः ॥ ५३ ॥

(414) नैरन्तर्यं विभूनामपि भवति ततोऽन्योन्ययोगोऽपि योग्यः ;
केचित् तु हेत्वभावाज्जहति ; विहतिकृन्नित्यधीकल्पने तत् ।
स्याद्वा तत्सिद्ध्यसिद्ध्योरनुमितिरपटुर्बाधहानेर्विपक्षे;
शास्त्रैरन्यत् विभु स्यात् परधृतम्; अपृथक्सिद्धिरेव ततोऽस्य ॥ ५४ ॥

अस्तु संयोग, अ(त)थापि विभूना परस्परसंयोगो नास्तीति काणादादयः। त[ा]न्निषेधति— **नैरन्तर्यमिति**। निरन्तराणां हि पदार्थानामन्योन्यसंयोग(र्गः) उपलभ्यते, विभूनामपि नैरन्तर्यमस्ति, अ(त)तोऽन्य(न्योन्य)संयोगयोग्यताऽस्ति। तदेतदाह— **तत इति**। केचित्तु हेत्वभावात् संयोगं जहति, अन्यतरकर्म, उभयकर्म वा संयोगो वा संयोगस्य हेतु, त्रितयमपि विभुषु न घटत इति। तत्र दूषणमाह — **विहतिकृदिति**। ईश्वरज्ञानादीनां कारणाभावादभाव इति परवादिभिरुक्ते कार्यभूतस्य ज्ञानादे कारणापेक्षा, न नित्यज्ञानादेरिति काणादादयः परिहरन्ति। तुल्यमेतदजसंयोगकल्पनेऽपि। अनित्यसंयोगस्यैव कारणाभावादभावो वक्तु शक्यते। नित्यस्य तु कारणसापेक्षत्वा(कारणापेताया अ)भावेन तदभावात् अभावो वक्तु न शक्यत इति। इमामेव प्रतिबन्दीमभिप्रेत्याह-**नित्यधीति**॥ तर्ह्यजसंयोगसाधने किं मानम्? (किमनुमानम्) ॥ उक्तमेव नैरन्तर्यम् ॥ परोक्तमन्वारुह्यापि परिहरति—**स्याद्वेति**। अजसंयोगसाधने तावदनुमान शक्तमशक्त वा भवतु, विपक्षे बाधकाभावात्। शास्त्र पुन, "सर्वाधार धाम विष्णुमज्ञम्" इत्यादिक परस्य ब्रह्मण कृत्स्नप्रपञ्चाधारत्वमावेदयति। तदाधारत्व च तदपृथगवस्थानमेव। अतो

---

श्री— विभुद्वयसंयोग साधयति नैरन्तर्यमिति। यस्मात् मिथो नैरन्तर्यमस्ति, अतस्तेषामन्योन्यसंयोगो अपि योग्य = स्यातुमर्हति। विभवो मिथस्संयोगिन निरन्तरत्वादित्यनुमानम्। तार्किकेषु केचित् विभुद्वयसंयोग जहति = दूषयन्ति, संयोगस्य त्रिविधो हेतु पक्षत्र तत्रैकोऽप्यत्र नास्तीति। तत् = तथावचन विहतिकृत् = स्वपक्ष व्याघातकरम्। हेत्वभावात् संयोगो नास्तीति हेतुसापेक्षसंयोगस्यैव निषेध स्यात्। नित्यस्याजसंयोगस्येष्टौ को दोष। यदि संयोगसामान्य सहेतुकमिति नियम, तर्हि ज्ञानसामान्य सहेतुकमिति नियमात् नित्यज्ञानमपि न सिध्येत्। तथाच नित्यधीकल्पने बाधक तैरेवोपक्षिप्तमिति। किञ्च विभू संयुक्तौ निरन्तरत्वादित्यनुमाने संयोगकारणसपन्नत्वमुपाधिरित्युक्त्वा अविभुषु नैरन्तर्येण सह संयोगस्थिति तत्कारणसमावेशात्, विभौ कारणसमावेशाभावादिह उपाध्यभावात् संयोगाभाव इत्युक्तौ हेतौ संयोगसाधने अपटुत्व भवति। अतो हेतुजन्यानुमितिरयथार्थी सती न संयोगसाधिका। यदा च कारणासपत्ते कार्यभूतसंयोगबाधकत्वेऽपि अजसंयोगबाधकत्व नास्ति, तथा च संयोगसामान्य हेतुसापेक्षमिति नियमो न विपक्षे बाधकाभावादिति उपाधेराभासत्वकल्पनाया हेतौ साधुत्वमेव—तदा अनुमितिरजसंयोगसाधने अपटुर्भवति। तस्मादिदमनुमानमुपेक्ष्यतकामम्। शास्त्रै परेण = परमात्मना विभुना तदन्यत् कालादिक विभुद्रव्य धृतं

विभूनामपि परमात्मसंबन्धस्य शास्त्रप्रमितत्वात् बाधकाभावाच्च युक्त एवायमजसंयोगः इति ॥

इति अजसंयोगनिरूपणम् ॥ ५४ ॥

(415) संयोगाद् विश्वसृष्टिः प्रकृतिपुरुषयोः; तादृशैस्तद्विशेषैः
ब्रह्मादिस्तम्बनिष्ठा जगति विषमता; यन्त्रभेदादयश्च ।
अक्षाणामर्थयोगाद् विविधमतिः; अब्राद्यन्वयादङ्कुरादिः ;
शुद्धाशुद्धादियोगान्नियतमपि फलं; न्यायतत्त्वेऽस्य घोषः ॥ ५५ ॥

संयोगस्य सार्वलिकोपजीवनेन सर्वंरनपोद्यत्वं दर्शयति संयोगादिति । प्रकृतिपुरुषयोस्संयोगात् विश्वसृष्टिः, तादृशैरेव संयोगविशेषैर्ब्रह्मादिस्तम्बपर्यन्तं जगद्वैषम्यम् । आलानयन्त्रादयः सुप्रसिद्धाः संयोगरूपाः। अक्षाणामर्थसंयोगात विविधा मतिर्दृश्यते । अब्राद्यन्वयात बीजादिकमङ्कुरति। शुद्धाशुद्धात्मकाभ्यां कपिला-नरास्थिसस्पर्शाभ्यां नियतमपि फलमनुशोश्रूयामहे । अतः संयोगविशेषाः सर्वत्रोपलभ्यन्ते इति न्यायतत्त्वे संयोगस्य घोष इति ॥

इति संयोगवैचित्र्यप्रदर्शनम् ॥ ५५ ॥

(416) संयुक्ते द्रव्ययुग्मे सति समुपनतो यस्तु संयोगनाशः
सङ्ग्रह्योऽयं विभागव्यवहृतिविषयः ; सोऽपि तद्धेतुतस्स्यात् ।
त्वन्निर्दिष्टे विभागे गतवति च सतोः स्यात् विभक्तप्रतीतिः
भूयस्संयोगसिद्धौ ; कथमिति तु यथा त्वद्विभागान्तरादौ ॥ ५६ ॥

व्री— सर्वदेति कथ्यते । अत एव तदपृथक्सिद्धतेति अस्त्येवाजः संयोगः ॥ ५४ ॥

नानागुणनिराकरणपर एव न्यायतत्त्वाख्ये असत्कूटस्थकृते शास्त्रे संयोगाख्यो गुण एवं घोषित इत्याह संयोगादिति। प्रकृतेः पुरुषाणाञ्च व्यापित्वं वदन्त एव सांख्याः, "पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य । पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः" इति प्रकृतिपुरुषसंयोगादेव विश्वसृष्टिमाहुः । तथा प्रकृतिपरिणामविशेषैर्भौतिकैः पुरुषव्यष्टिविशेषैः देवतिर्यङ्मनुष्यस्थावरपर्यन्तवैचित्र्यं जगतीति चिदचिद्विशेषसंयोगा अपि प्रसिद्धाः । गजादिबन्धनार्थालानयन्त्रादिकमचिद्द्वारा चेतनसंयोगकरमप्यनेकम् । इन्द्रियाणां विषयैः संयोगः, भौतिकानां भौतिकैश्चैवम् । तीर्थादिशुद्धवस्तुसंयोगस्य शुद्धिहेतुत्वं कपालादिसंयोगस्याशुद्धिहेतुत्वम् अविहिताप्रतिषिद्धसंयोगस्य द्विविधवैलक्षण्यञ्चेत्यपि प्रामाणिकम् । अतः संयोगो नापलप्य इति न्यायतत्त्वे न्यरूपि ॥ ५५ ॥

अथ विभागभङ्गः । द्वयोर्द्रव्ययोः संयोगे पश्चात् कारणभूतक्रियावशात् संयोगनाशो जायत इति सर्वेष्टम् । अयं = संयोगनाश एव विभागव्यवहारविषयत्वेन संग्राह्यः । ननु विभागात् हि संयोगनाशः । अतो विभागः स्वीकार्य इति चेत्, विभागः कुतो जायते । क्रिया, क्रियातो विभागः, विभागात् पूर्वसंयोगनाश इति चेत्, सः = संयोगनाशोऽपि, तद्धेतुतः = विभागं प्रति हेतुत्वेन त्वदभिमतक्रियात एव साक्षादेव जायताम् । ननु संयोगनाशस्य जातस्य आनन्त्यात् = नाशाभावात् नित्यत्वात् पश्चात् सर्वदा, इमौ विभक्ताविति प्रतीतिः स्यादिति चेत्—विभागस्वीकारेऽपि तन्नाशेऽपि विभक्ताविति प्रतीतिः प्रसज्यत एव । ननु भूयस्संयोगे जाते विभागप्रसक्त्यभावात् मन्मते कथं विभक्तप्रत्ययः; संयोगनाश एव विभाग इति मते, संयोगकालेऽपि पूर्वसंयोगनाशसत्त्वात् तथाप्रतीत्यापत्तिरिति चेन्न—संयुक्तप्रत्ययहेतुः संयोगः विभक्तप्रत्ययहेतुर्विभाग इति भवद्ग्रन्थप्रयोगेषु

विभागस्य संयोगनाशादर्थान्तरत्व प्रतिक्षिपति **संयुक्त** इति। पूर्वं परस्परसंयुक्ते द्रव्यद्वये विद्यमाने सति समुत्पन्नो यः संयोगनाशः, स एव विभागव्यवहारविषय इति संग्राह्य ॥ तर्हि संयोगविनाशकत्वेन विभागं स्वीकुर्म इति चेत्, तन्न, संयोगविनाशस्य विभागकारणत्वेन कल्पितात् कर्मण एव सिद्धिः स्यात्। तदिदमाह **सोऽपि तद्धेतुन** इति। ननु विभागस्य संयोगनाशरूपत्वे संयोगनाशस्याऽऽनन्त्यात् भूयस्संयोगसिद्धावपि विभक्तप्रतीति स्यादेवेति चेत्, तर्हि त्वन्निर्दिष्टे विभागे तस्मिन्नेव क्षणे गतवति विभागप्रध्वंसमात्रमेव सर्वोर्द्रव्ययोरनुवर्तते, तेनैव तत्र विभक्तव्यवहारानुवृत्तौ भूयस्संयोगेऽपि तथापि विभक्तव्यवहार स्यादिति प्रतिबन्दीमाह **त्वन्निर्दिष्ट** इति। पृच्छति **कथमिति**। उत्तरम् **यथेति**। यथा त्वद्विभागान्तरे सति पूर्वविभागप्रध्वंसानुवृत्त्या विभक्तप्रतीतिः, एवं मध्ये संयोगकालेऽपि विभक्तप्रतीतिः स्यात् ॥ ननु तत्र उत्तरविभागात् विभक्तप्रतीति, मध्ये संयोगकाले तत्प्रागभावात् विभक्तप्रतीतिर्नास्तीति चेत्, एवं तर्हि मध्यगतसंयोगस्य विभक्तप्रतीतिपरिपन्थित्वात् तस्मिन् काले विभक्तप्रतीतिर्नास्ति। भूय संयोगप्रध्वंसकाले तस्यैव संयोगस्य प्रध्वंसेन तस्मिन्नेव काले विभक्तप्रतीतिरस्तीति ममापि समानमिति भाव ॥ **इति परोक्तविभागभङ्गः ॥ ५६ ॥**

---

पू०— पृच्छति कथमितीति। पूर्वं संयुज्य विभक्तयोः पुनः संयोगे सति, तद्विरुद्धविभागप्रत्ययः कथमित्यर्थः। यथा त्वद्विभागान्तर इति। अयमर्थः—पूर्वं संयुज्य विभक्तयोः पुनः संयोगे विभागे च सति विभक्तप्रत्ययं पूर्वविभागनाशो जनयति? न वा? जनयतीति चेत्—मध्ये संयोगकालेऽपि जनयेत्। न जनयतीति चेत्—पश्चाद्विभक्तप्रत्यये किं कारणम्? यद्युच्येत—विभागद्वयमध्यसंयोगेन पूर्वविभागनाशस्य विभक्तधीजननशक्तिप्रतिबन्धात् पाश्चात्त्यविभाग एव विभक्तप्रत्ययजनक इति—तर्हि ममापि मध्यसंयोगकाले संयोगेन संयोगनाशशक्तिप्रतिबन्धात् न तदा विभक्तप्रत्ययः, पश्चात् तु द्वितीयसंयोगनाश एव विभक्तप्रत्ययं जनयतीति तुल्यमिति ॥ ५६ ॥

श्री- संयुक्तपदस्य वर्तमानसंयोगेत्यर्थवत् विभक्तपदस्यापि वर्तमानविभागेत्यर्थस्तवेष्टो यद्यपि, तथापि विभागस्योत्तरसंयोगनाश्यतया त्रिक्षणमात्रस्थायित्वात् विभागजनन-विभागनिर्विकल्पक-विभागसविकल्पक विभागविशिष्टद्रव्यदर्शनानां क्रमेण जायमानतया विभक्तद्रव्यदर्शनकाले विभागस्य नष्टत्वात् विभागध्वंसवत् द्रव्यमित्येव प्रतीत्यर्थो वक्तव्यः। तथा कतिपयनाडिकापर्यन्तमपि विभक्ताविति प्रत्ययानुवृत्त्या विभागध्वंसप्रत्यक्षमेव वक्तव्यम्। एवञ्च पुनस्संयोगे सत्यपि तस्य ध्वंसस्यानुवृत्त्या तदापत्तिरस्त्येवेति। एव स्यादित्यादि सिद्धावित्यन्तं व्याख्यातम्। ननु विभक्ताविमौ इति प्रत्ययस्य वर्तमानकालिकविभागविषयकत्वमेव। यावत् विभक्तप्रत्ययः, तावत् विभागो न नष्ट इति स्वीक्रियते। पुनस्संयोगकाले तु विभागो नष्ट इति कथं तदापत्तिरिति पृच्छति कथमिति। प्रत्याह इति त्विति। इति तु = इति प्रश्ने तु यथा त्वद्विभागान्तरादावित्युत्तरम्। यत्र तद्द्रव्यपुनस्संयोगवदिष्टपुनर्विभागौ, तत्र पश्चात् विभागप्रत्यये संयोगकाले विभक्तप्रत्ययोऽऽस्तु, असंयुक्ताविति प्रत्ययश्चास्तु इति शङ्काया संयोगप्रतीतिरेव प्रतिबन्धिकेति वक्तव्यम्, तथा संयोगनाशप्रतीति प्रत्यपि संयोगवत्ताप्रतीतिरेव प्रतिबन्धिका, पुनस्संयोगप्रागभावावच्छिन्नः संयोगनाश एव वा विभाग इति स्वीकारेऽप्येव प्रतिबन्धात् न तत्प्रतीत्यापत्तिः। वस्तुतो यावत् विभक्तप्रतीति, तावत्क्षणावच्छिन्न. संयोगनाश एव विभाग इति न कश्चित् दोषः। अपि च यत्र संयोगो नानुभूतः विभागानन्तरञ्च पुनर्वस्तुदर्शनम्,

(417) कोऽसौ संयोगनाशस्तव मत इति चेत्, सोऽयमन्यत्र योगः
तस्य प्राचा विरोधात् स तु मिपति तथाऽऽलोचितस्तद्(द्वि)नाशः ।
अज्ञातप्राच्ययोगः परमभिमनुते स्वेन रूपेण चैनं
सर्वोऽप्येवं ह्यभावः ; स्फुटमिह न पुनः कश्चिदन्योऽस्ति दृष्टः ॥ ५७ ॥

सर्वोऽप्येवं ह्यभावः ; स्फुटमिह न पुनः कश्चिदन्योऽस्ति दृष्टः ॥ ५७ ॥ संयोगनाशस्य स्वरूपं चोद्यपूर्वकं शोधयति कोऽसाविति ।
एवं संयोगनाशस्य विभागत्वं समर्थ्य संयोगनाशस्य स्वरूपं चोद्यपूर्वकं शोधयति कोऽसाविति। अयमर्थः—
**सोऽयमन्यत्र योगः** उत्तरदेशसंयोग एव पूर्वदेशसंयोगस्य विनाशः। तत्र हेतुमाह **तस्येति**। अयमर्थः—
उत्तरदेशसंयोगस्य पूर्वदेशसंयोगेन विरोधात्=**स तु** स एव उत्तरदेशसंयोग एव **तथाऽऽलोचितः** पूर्व-
देशसंयोगविरुद्धत्वेनाऽऽलोचितः **तद्विनाशो मिपति** पूर्वदेशसंयोगविनाश इति परिस्फुरति ॥ कथं तर्हि उ-
त्तरदेशसंयोग इति भावरूपेण प्रतिपत्तिरित्यत्राह **अज्ञातेति**। द्विविधा हि उत्तरदेशसंयोगस्य प्रतीतिः ;
ज्ञातपूर्वदेशसंयोगस्य तद्विरुद्धत्वेन काचित्, स्वरूपेण चापरा । तत्र ये स्वरूपेण प्रतिपद्यन्ते, ते भाव-
रूपेणाभिमन्यन्ते ; ये पुनः पूर्वदेशसंयोगविरुद्धत्वेन प्रतिपद्यन्ते, ते त्वभावरूपेणेति विभागः । उक्तमर्थं
सार्वत्रिकत्वेनोपपादयति **सर्वं** इति । भावान्तराभाववादिनां सर्वोऽप्यभावो न भावान्तरादतिरिच्यत इति
भावः । एवं सर्वत्रापि भावस्यापलापे कुत्रापि भावो न स्यादित्याशङ्क्याह **स्फुटमिति** । यत्र स्फुटदृष्टो
भवति भावरूपः पदार्थः, तत्र तथैव स्वीकार्यम् (यं: ?)। यत्र पुनरितराभावतया निर्वोढुं शक्यते, तत्र तथैव
निर्वाह्यः । सर्वेऽपि वादिन इत्थमेव खलु भावाभावविवेकं परिकल्पयन्तीति भावः ॥

**इति संयोगनाशस्वरूपशोधनम् ॥ ५७ ॥**

---

एवं सर्वत्रापि भावस्यापलाप इति । संयोगनाशावलम्बनेन भावरूपविभागापलाप इत्यर्थः ॥
एवं सर्वत्रापि भावस्यापलाप इति । संयोगनाशावलम्बनेन भावरूपविभागापलाप इत्यर्थः ॥ संयोगनाशस्यैव विभाग-
त्री–तत्रापि इमौ विभक्ताविति प्रतीत्यापत्तिः विभागसत्त्वात् । अस्माकं तु संयोगनाशस्यैव विभाग-
त्वात् संयोगरूपप्रतियोग्यज्ञानात् विभागाग्रहणमित्युपपन्नम् ॥ ५६ ॥
ननु भावान्तराभाववादिना भवता विभागमङ्गीकृत्य संयोगनाशे निराकार्ये, तत्स्वीकारेण
एतन्निराकरणं कथमिति शंकायाम्, फलतभावपदार्थेनैव तदुपपत्तौ नाशस्य भावत्वसिद्धये भावान्तर-
कल्पनं न भवतीत्याशयेनाऽऽह क इति । सिद्धान्तिनो भावान्तरमभाव इति वादिनस्तत्र मतः कोऽसौ
संयोगनाश इति चेत्, विभज्यमानस्य वस्तुनो देशान्तरसंयोग एव । तस्य प्राचा = पूर्वदेशसंयोगेन
विरोधात् तत्संयोगाभावरूपता । अनेन वृक्षात् फले पतति वृक्षात् विभक्तमित्यस्य वृक्षसंयोग-
विरोधिसंयोगवत् फलमित्यर्थः, वृक्षफले विभक्ते इत्यस्य च स्वसंयोगविरोधिसंयोगवत्त्वरूपधर्मवत्
वृक्षं फलञ्चेत्यर्थं इति ज्ञापितं भवति । सः = उत्तरदेशसंयोग एव तथाऽऽलोचितः पूर्वदेशसंयोग-
वैशिष्ट्येन विमृष्टः तद्विनाशो मिपति = तत्प्रतियोगिकनाशत्वेन स्फुरति । येन पुरुषेण प्राच्ययोगः =
पूर्वदेशयोगः प्राक् स्थितो नाज्ञातः, तस्य प्रतियोगिज्ञानाभावात् न तन्नाशत्वेन ज्ञानम्, किं तु
प्रकृतदेशसंयोगत्वमात्रेण । किं प्रकृते विशिष्ये तदुक्त्या, सर्वत्राप्यभावस्य भावरूपत्वेऽपि अभाव-
रूपेण स्फुरणं प्रतियोगिग्रहण एव । ननु विभागः पूर्वसंयोगनाशो वा वृक्षफलोभयसंबन्धित्वात्
उभयगतकिञ्चिद्धर्मरूप एव युक्तः, न तु देशान्तरसंयोगरूप इति चेत्–तत्राह स्फुटमिति । इह = वृक्षे
फले चान्यो भावः कश्चित् स्फुटं दृष्टो नास्तीति एवमुच्यते । यदि दृश्येत तर्हि तादृशः कश्चिदस्तु;
न तु विभागोऽन्य इति ॥ ५७ ॥

**(418) स्पन्दावृत्त्यादिभेदात् परमपरमिति प्रत्ययौ तत्तदर्थे**
**कालाधिक्यादिमात्रात् न खलु समधिक शक्नुयातां विधातुम् ।**
**दृष्टिर्नान्यस्य ; कॢप्तिर्भवति गुरुतराऽतिप्रसङ्गोऽन्यथा स्यात् ;**
**किं न स्यातां गुणाद्यैः परतदितरते ; पूर्वभावादि चान्यत् ॥ ५८ ॥**

अत्र परत्वापरत्वे प्रमाणाभावात् दूषयति स्पन्देति। न तावत् परत्वापरत्वे वस्तुन स्वरूपकृते, परापरव्यतिरेका(व्यतिकरा?)भावप्रसङ्गात् । अतो बुद्धिकृते इत्येव हि भवद्भि सिद्धान्तितम् । (भवत्सिद्धान्त) सा च बुद्धिरपेक्षाबुद्धिरित्यभिधीयते । सा बुद्धि न निर्विषया, बुद्धेर्निर्विषयत्वायोगात् (त्व वरोधात्) नापि सामान्येन यत्किंचिद्विषया, सर्वासामपि बुद्धीनामपेक्षाबुद्धित्वप्रसङ्गात् , परत्वापरत्वयोरन्योन्यवैषम्याभाव प्रसङ्गाच्च । अतो विषयविशेषविशेषितेय बुद्धि परत्वापरत्वहेतुरिति स्वीकर्तव्यम । तथैव च भवद्भिरपि स्वीक्रियते। तथाचापेक्षाबुद्धिविषयरूपत्वमन्तरेणाधिकपरत्वापरत्वयोरदर्शनात् , अनपेक्षितकल्पने गौरवाच्च, अपेक्षाबुद्धिविषयभाव एव परत्वापरत्वे स्त इति तात्पर्यार्थ । पदार्थस्तु—**स्पन्दावृत्त्यादिभेदात्** कालकृत परत्वापरत्वे सूर्यपरिवृत्त्यादिभेदेन कालाधिक्यादिमात्रात् परमपरमिति प्रत्ययौ स्त । दिक्कृतपरत्वापरत्वे सयुक्तसयोगाल्पीयस्त्वभूयस्त्वमात्रात् परत्वापरत्वबुद्धी भवत । इत्थमन्यथासिद्धौ बुद्धिव्यवहारौ समधिक परत्वापरत्वे विधातु न शक्नुयाताम् । तदिदमाह **न खल्विति** । दृष्टत्वादधिक परिगृह्णीम इति चेत्, नेत्याह **दृष्टिर्नान्यस्येति** । न हि किंचित् परत्वमपरत्व वा पूर्वोक्तादन्यदुपलभामहे , कल्पन तु गुरुत्व हतम् । अनपक्षितकल्पनायामतिप्रसङ्गदु स्थ च । किच गुणादिभिरपि(ष्वपि) परत्वापरत्वव्यवहारो दृश्यते, यथा आभिजात्येन पर , विद्यया पर , वृत्तेन पर इत्यादि । नैतावता तत्र परत्वादि कल्प्यते । किंच कालेन पूर्व , पश्चाद्भावी, वर्तत इति, देशेनापि प्राग्भावी पश्चाद्भावीत्यादिव्यवह रा (रभेदा ) सहस्रशोऽपि दृश्यन्ते । न च तत्र गुणभेदा भवद्भिरपि कल्प्यन्ते । केवल देशकालविशेषसबन्धमात्रेण [तत्र?] व्यवहार

ल्ली— अथ परत्वापरत्वगुणनिषेध स्पन्देति । तत्तदर्थ ज्येष्ठकनिष्ठरूपे दूरस्यान्तिकस्थरूपे च वस्तुनि कालाधिक्यादिमात्रात् = कालाधिक्यतन्न्यूनत्व देशाधिक्यतन्न्यूनत्वमात्रात् परत्वापरत्वरूपगुणान्तराभाव एव जायमानो परमिति अपरमिति च प्रत्ययौ स्पन्दावृत्त्यादिभेदात् = सूर्यस्पन्दसततिगताधिक्यन्यूनभावरूपविशेष सयुक्तसयोगपरम्परागतसयोगाधिक्यन्यूनभावरूपविशेषश्च विषयीकृत्य भवत । एव वृत्त्यनुसारी अन्वय । कालाधिक्यादिमात्रादित्यस्य समधिकमिति पदेनान्वयेऽपि न क्षति । तथाच पादद्वयस्यैकवाक्यत्वेऽपि न दोष । क्रियापदेनाध्याहारात् लाघवात् । प्रत्ययौ स्पन्दादिभेदप्रयुक्तकालाधिक्यादिविषयकौ तदन्यत् परत्वमपरत्वञ्च साधयितु न पारयेतामित्यर्थ । दृष्टिर्नान्यस्य, गुणान्तरविषये प्रत्यक्ष न मानम् । क्लृप्ति = कल्पना तु गुरुतरा । गौरवेऽपि तत्स्वीकारे कुत्रापि लाघवयुक्तिरेव न स्यात । किञ्च कालाधिक्यदेशाधिक्यकृतपरत्वापरत्वगुणवत्, आभिजात्यकृत विद्याकृत वृत्तकृत बलकृत आलस्यकृत रागद्वेषादिकृतमिति नानाविध परत्वमपरत्व च स्यात्। परतदितरते = परता अपरता च। एव पूर्वभावादि चान्यत् परत्वादि स्यात्। अय पूर्व गणित , पूर्व भोजित पूर्वमुद्योजित , पूर्व दृष्ट इत्यादिचिन्तायामसख्येय परत्वादीति ॥ परापरव्यतिरेकेति । अत्र व्यतिकरेति शोधनीयम् । परस्मिन्नप्यपरत्वस्यापरस्मिन्नपि परत्वस्य दर्शनादिति भाव. ।

विशेषाः प्रतीयन्त इति हि भवन्तोऽपि वदन्ति। तदन्यत्रापि न दण्डवारितम्। किंच दिक्कालावुपाधीकृत्य
अपेक्षाबुद्धिः प्रवर्तते इति हि भवत्सिद्धान्तः। तदपि न जाघटीति; दिक्कालयोः परत्वापरत्वपरिणतेः
प्रागेवोपलब्धत्वे पश्चादनुमानवैयर्थ्यात्, अनुपलब्धत्वे तु अपेक्षाबुद्धेरेव सुषुप्तिप्रसङ्गात्। इत्येषा दिक्॥

**इति बुद्धिजन्यपरत्वापरत्वाख्यगुणान्तरक्लृप्तिभङ्गः ॥ ५८ ॥**

**(419) द्रव्यं प्राक् बुद्धिरुक्ता; परमिह विषयैस्सङ्गमादिर्निरूप्यः**
**संयोगं भाष्यकाराः प्रथममकथयन् न्यायतत्त्वानुसारात्।**
**तत्संयोगे समेऽपि स्फुरति न निखिलं; तेन योग्यत्वमन्यत्**
**ग्राह्यं; संबन्धसाम्ये नियतविषयता दृश्यते हीन्द्रियेषु ॥ ५९ ॥**

अथ बुद्धिविषयचिन्ता प्रवर्तते। बुद्धेर्गुणत्ववादिनं प्रत्याह **द्रव्यमिति**। बुद्धिमरे बुद्धेर्द्रव्यत्व-
मुक्तम्; परमिह विषयैस्संबन्धादिर्निरूप्यते(प्यः)। तत्र **भाष्यकारा न्यायतत्त्वानुसारात्** बुद्धेर्विषयैस्सह
संबन्धं संयोगमकथयन्। तर्हि सर्वैरपि संयोगात् सर्वं भासेतेति न वाच्यम्; बुद्धेस्संयोगे समेऽपि
निखिलं न स्फुरति। तत्र हेतुमाह **योग्यत्वमन्यत् ग्राह्यमिति**। संबद्धमपि योग्यमेव बुद्ध्या गृह्यत
इत्यर्थः। तत्र दृष्टान्तमाह **संबन्धेति**। संबन्धसाम्ये सत्यपि [इन्द्रियाणां?] नियतविषयता दृश्यते; तद्वदिहेति।
इन्द्रियार्थसन्निकर्षे तुल्येऽपि चक्षुषा रूपमेव गृह्यते, न पुनः स्पर्शः; स्पर्शनेन स्पर्शः, न रूपम्। कुत एतत्?
योग्यत्वस्य नियतत्वात्। एवं सर्वेषां बुद्धिसंबन्धे सत्यपि सहकारियोग्यतादिनियमादेकमेव गृह्यते,
नान्यदिति नियमो नानुपपन्न इति॥

**इति विषयविषयिभावनिरूपणम् ॥ ५९ ॥**

**(420) नित्यं नित्यादिबुद्धिर्निखिलविषयिणी; तद्वदेव स्वभावः**
**शास्त्रैः क्षेत्रज्ञबुद्धेरपि समधिगतः; कर्मभिस्तन्निरोधः।**

---

श्री— पश्चादनुमानेति। काणादैः कालिकदैशिकपरत्वापरत्वकारणभूतयोः स्पन्दपरम्परासंयोग-
परम्परयोः परत्वापरत्वाधारेषु संबन्धे वक्तव्ये तद्घटकतया कालस्य दिशश्च सिद्धिरित्युच्यते। एवं
परत्वापरत्वप्रत्यक्षमुखेन दिक्कालानुमानवर्णनमयुक्तम्। पूर्वं दिक्कालज्ञानाभावे स्पन्दसंयोगसंतति-
मत्त्वज्ञानरूपापेक्षाधिय एवायोगादित्यर्थ इत्यलम्॥ ५८॥

अथ बुद्धिः। बुद्धिपरिच्छेदे सा द्रव्यत्वेनोक्ता। तस्मात् अद्रव्यपरिच्छेदे तन्निरूपणमसंगतमन-
पेक्षितञ्च। तस्या अर्थेन यः संबन्धः, स तु अद्रव्यत्वादत्र विचार्यते, किं स संयोग एव गुणः,
उतान्यो वेत्यादि। बुद्धेः तद्विषयैः द्रव्याद्रव्यप्रभृतिभिः संगमादिः= संबन्धादिः निरूप्यः। आदिपदेन
संकोचग्रहणम्। तत्र भाष्यकाराः धियो विषयैः संबन्धः संयोग इत्यभाषन्त न्यायतत्त्वं मूलग्रन्थ-
मनुसृत्य। तर्हि बहिर्निर्गच्छतो ज्ञानद्रव्यस्यानेकद्रव्यैस्सह संयोगे समानेऽपि किञ्चिदेव प्रकाशते,
नान्यदिति कुत इति चेत्—योग्यनिष्ठज्ञानसंयोग एव संबन्धः इति योग्यत्वमपि ग्राह्यम्। योग्यत्वं
हि ज्ञानविषयत्वमेवेति चेत्—तन्न; अन्यदेव तत् ग्राह्यम्। यथा इन्द्रियसंबन्धे सर्वत्र स्थितेऽपि
आकाशादिकं गुरुत्वादिकमयोग्यत्वान्न दृश्यत इति परे वदन्ति तथेति। प्रत्यक्षानुमित्यादियत्किञ्चिद्
ज्ञानसामग्रीमत्त्वमिव योग्यत्वमन्यत्। अतो ज्ञानसंयोगादिः संबन्धो योग्यतायां सत्यां व्यवहार-
प्रयोजकः। तत्र द्रव्येषु संयोगः संबन्धः। द्रव्यगतधर्मेषु संयुक्ताश्रितत्वमिति परम्पराऽनुसंधेया॥५९॥

सङ्कोचोल्लासयोश्च प्रतिनियतिरिह स्यादुपाधिप्रभेदात् ;
निश्शेषोपाधिमोक्षे निखिलविषयतामश्नुवीत स्वभावात् ॥ ६० ॥

इत्थं विषयविषयिभावं निरूप्य तद्वैषम्ये निदानमाह नित्यमिति । नित्यादिबुद्धिर्निखिलविषयिणी । तद्वदेव स्वभावः, 'यथा न क्रियते ज्योत्स्ना' इत्यादिशास्त्रैः क्षेत्रज्ञबुद्धेरपि समधिगतः । अपि तु कर्मभिः तन्निरोधः ; तेन सङ्कोचोल्लासयोः प्रतिनियतिरिहोपाधिभेदात् स्यात् । निश्शेषोपाधिमोक्षे सैव बुद्धिर्निखिलविषयतामश्नुवीत । अत्रोपाधिः कर्म ; स च निरूपणे भगवन्निग्रह एव । अतो भगवानेव निग्रहानुग्रहाभ्यां बुद्धेः संकोचविकासौ करोति ॥ इति विषयविषयिभाववैषम्यम् ॥ ६० ॥

(421) मुक्तानां धीः क्रमाच्चेत् प्रसरति, न कदाऽप्यन्तमेषाऽधिगच्छेत् ;
संक्षिप्तायाश्च दूरान्तिकपरिपतने यौगपद्यं न शक्यम् ।
संयोगो भूतभावि(ष्ये)ष्वपि न हि घटते तद् धियः सांप्रतिक्याः
इत्याद्यैर्न क्षतिः स्यात् श्रुतिमुखविदिते योग्यतावैभवेऽस्याः ॥ ६१ ॥

मुक्तानां धीविकासानुपपत्तिं विकल्पाभासेन वदता श्रुतिविरोधं वक्तुं तदुक्तिमनुवदति मुक्तानामिति । इत्थं किल तेषामाशयः—मुक्तानां धीः क्रमाच्चेत् प्रसरति, न कदाऽपि देशस्यान्तमेषाऽधिगच्छेत् ; आनन्त्यात् देशस्य । नापि युगपद् गच्छेत् ; न हि संक्षिप्ताया धियो युगपद् दूरान्तिकपरिपतनं युक्तं वक्तुम् । अयमेको दोषः ; अन्योऽपि सांप्रतिक्या भूतभाविधियो भूतभाविभ्यां संयोगो न घटते ; संबन्धान्तरं

ली— नन्विन्द्रियसंनिकर्षानुमानादिरूपा ज्ञानसामग्री ज्ञानविषययोः संबन्धसंपादनार्थं स्वीकृता । स चेत् संबन्धः सामग्रीं विनाऽपि भवेत्—तर्हि विषयेण ज्ञातेनैव भाव्यम् । अत एव नित्यमुक्तानां सामग्र्यभावेऽपि सर्वग्राहिज्ञानवत्त्वमित्यत्राह नित्यमिति । आदिपदं मुक्तपरम् । नित्यानां मुक्तानाञ्च बुद्धिः सर्वदा सर्वं विषयीकुरुते । व्यवहारानुगुण्यं सर्वदाऽऽपादयति । क्षेत्रज्ञानां=बद्धानां बुद्धेः स्वभावोऽपि तद्वदेव=नित्यादिबुद्धितौल्येन सर्वविषयकत्वार्हत्वेनैव शास्त्रैः समधिगतः । परं तु कर्मभिः=तत्तज्जीवप्राचीनपापादिना तन्निरोधः, तस्य—स्वभावस्य निरोधः—प्रतिबन्धः व्यवहारानुपधायकत्वम् । अत एव बाह्येषु पदार्थेषु आत्मनि च गृह्यमाणेष्वपि तन्निष्ठेषु धर्मेषु सर्वेषु ज्ञानसंयुक्ताश्रितत्वरूपे संबन्धे सत्यपि न सर्वस्य व्यवहार्यता, प्रतिबन्धकसद्भावात् । तावता बद्धज्ञानमपि सर्वदा सर्वत्र प्रसृतमेवेति न । संकोचविकासयोरपि प्रमाणसिद्धतया संकोचस्यापि कर्मजन्यताया वक्तव्यत्वात् । यत्र संबन्धसत्त्वेऽपि न ज्ञातता, तत्रैव योग्यत्वाभावः, कर्मनिरोधश्च मुख्यतयोच्यते । तौ च संकोचविकासौ निग्रहानुग्रहरूपोपाध्यधीनौ । 'सर्वं ह पश्यः पश्यति' इति सर्वस्य साक्षात्कारतापत्तिप्रसरणकर्मत्वञ्चोपाध्यपगमे स्वाभाविकम् ॥ ६० ॥

नन्वसंयुक्तानन्तवस्तुसंयोगस्य ज्ञानक्रियासंतानाधीनस्य क्रमिकत्वात् वस्तूनामनन्ततया एतावति काले सर्वसंबन्ध इति निर्णयायोगात् मुक्तस्य कदा सर्वज्ञत्वमिति शंकामुद्भाव्य परिहरति मुक्तानामिति । प्रसरणस्य क्रमिकत्वे, एषा=धीः अन्तं=गन्तव्यं चरमदेशं कदापि नाप्नुयात् ; वस्त्वानन्त्यात् । संक्षिप्तायाः=संकोचं प्राप्तायाः धियः प्रवाहादेरिव समीपस्थेन शीघ्रसंबन्धः, दूरस्थेन तु चिरात् स्यादिति न यौगपद्यम् । एवं वर्तमानसर्ववस्तुसंबन्धस्यैवासंभवे सति भूतभविष्यद्वस्तुसंबन्धः सर्वथा दुर्वच एव । अत्र परिहारमाह इत्याद्यैरिति । योग्यतावैभवम्=शक्तिविशेषः ॥ भूतभाविधिय इति । भूतभाविवस्तुविषयकधिय इत्यर्थः ॥ ६१ ॥

नाऽऽलप्यते (नोपलभ्यते)। अतो मुक्तानां सार्वज्ञ्यं न स्यादिति। तन्निराचष्टे श्रुतीनि। श्रुतिमुखविदिते योग्यतावैभवे अस्याः धियः तत्कर्मसु न क्षतिः स्यादित्यर्थः। अयमर्थः —मुख्यासम्भवे गौणग्रहः साधारण। तथाच मयोगसम्भवे स एव ग्राह्यः, तदभावे[ऽपि] विषयविषयिभावः तत्स्थानापन्नः स्वीकार्य इति। धर्मभूतज्ञानस्य क्रमयौगपद्याभ्यां प्रसरणानुपपत्तिः उदयगिरिशिखरस्थदिवाकरकरप्रसरणवत्, उन्मीलित चक्षुषो ब्रह्माण्डोदरवर्तिसकलवस्तुग्रहणवदित्यादिभिः प्रागेव परिहृता। भगवतः प्रभावातिशयेन युगपदेव धर्मभूतज्ञानस्य विश्वविषयत्वप्राप्तौ को विरोधः ?॥ इति विषयविषयिमयोगचोद्यपरिहारः॥ ६१॥

(422) वेगस्याचिन्त्यरूपो रविशशिनयनाद्यंशुवर्गेषु भूमा
भागानन्त्येऽप्यणूनामतिपतनमतो ह्याहु(ब्रूयु)रन्योन्यमेके।
इत्थं सर्वैरबाध्या गतिमनुवदतां (मरतां) मुक्तबुद्धेर्विकासे
युज्यन्ते यौगपद्यप्रभृतय इति तु श्रद्दधीध्वं श्रुतार्थाः॥ ६२॥

किंच त्वदङ्गीकृतदृष्टान्तेन[ापि] मुक्तबुद्धेर्व्याप्तिरुपपद्यते इत्याह वेगस्येति। उक्तं हि भवता 'रविशशिनयनाद्यंशुवर्गेषु वेगस्याचिन्त्यरूपो भूमा' इति। अत एव काकबाणादि क्रमेण देशान्तरं गच्छति, रविकरोऽह्नायैव, तद्युगपदतिलङ्घनमन्तरेण नोपपद्यते। इत्थमेव जैनैरप्यङ्गीकृतमित्याह भागानन्त्य इति। परमाणवोऽनेकावयवास्तत्पक्षे, अ(त)थाप्यन्योन्यमतिक्रामन्ति परमाणवः। तदेतदनन्तानामंशानां युगपदति लङ्घनमन्तरेण नोपपद्यते। इत्थं सर्वैरबाध्या गतिमनुसरता(वदता)मस्माकं मुक्तबुद्धेर्विकासे यौगपद्यप्रभृतयो युज्यन्त इति। श्रुतार्थाः श्रुत्यर्थपर्यालोचनवन्तो मनीषिणः श्रद्दधीध्वम्॥ इति मुक्तबुद्धिव्याप्त्युपपत्तिः॥

(423) यत् सूक्ष्मं विप्रकृष्टं व्यवहितमपि, तद् गृह्णती योगिबुद्धिः
भूयिष्ठादृष्टलब्धातिशयकरणवृत्त्यानुगुण्येन सिद्धा।

---

ए०- 'प्रत्यभिज्ञादि' इत्यादिशब्देन व्याप्तिग्रहणं विवक्षितम्। तत्र हि सामान्यलक्षणप्रत्यासत्त्या अतीतानागतव्यक्तिनिष्ठा व्याप्तिर्गृह्यते॥ ६३॥

ओ०- श्रद्धोत्पादनाय शक्तिविशेषस्य सम्भावितत्वं तदुक्तं येनोपपादयति वेगस्येति। सूर्यचन्द्रदर्शनेन दीपविद्युदादेर्वेगस्याचिन्त्यमचिन्त्यमेव लक्ष्यते। इदं युष्मत्सम्मतम्। अत —एतत् हेतूकृत्य, परे=जैना एकस्याणोरन्तरातिलघनमपि भवितुमर्हतीत्याहुः। तत्रासम्भावना कुत इति चेत्—ते एकेनाप्यणुमनन्तभागमाहुः। एकमवयवानामनन्तत्वे लघनक्रियया तदन्तप्राप्तिः कथमणुना लघमानेन क्रियत इति शङ्कायां वेगातिशयं हेतुमाहुः। अस्माभिस्तु अणोः सभागत्वमेव न स्वीक्रियते। अनुवदतां=परोक्ष अनुमेयस्थलेऽप्येवमुक्तौ, श्रुतिप्रमाणे सति अयुक्तिः कापि नेत्याह इत्थमिति। अनुवदतां=परोक्ष रीत्यैव वदताम्। अनुसरत मिति वा। यौगपद्य—युगपत् सर्ववस्तुसम्बन्धः। आदिना अतीताना गतग्रहणं तदनाश इच्छाप्रयत्ननियमनसुखानुभवनादिपरिणामादिग्रहणम्। श्रुतार्थाः=श्रुतिप्रमाण प्राप्तार्थनिश्चयाः सन्तः। यूयमित्यर्थसिद्धम्॥ काकेति। काको मन्दं याति, बाणश्च॥ ६२॥

इतरजनबुद्धेर्विलक्षण्येन योगिबुद्धेरधिकवस्तुग्राहित्वे हेतुमाह यदिति। सूक्ष्मं=समीपेऽपि दुर्ग्रहम्; विप्रकृष्टं=दूरस्थम्। व्यवहितं=कुड्यादिच्छादितम्। योगिबुद्धिः भूयिष्ठेन=अतिशयिततमेन अदृष्टेनातिशयं शक्त्याधिक्यं प्राप्तायाः करणवृत्तेः=इन्द्रियस्तनिर्गमस्य साहाय्येन ग्रहणं करोतीति

**नष्टादिष्वक्षतो धीः कथमिति यदि, न ; प्रत्यभिज्ञादिनीतेः**
**चित्राः संबन्धभेदाः करणविषययोः तत्रतत्राभ्युपेताः ॥ ६३ ॥**

'अस्त्वेवम् , तथाऽपि योगिबुद्धेर्नष्टादिविषयत्वं नोपपद्यते' इति वदतः पक्षं दूषयितुं तन्मतमनुवदति **यत्सूक्ष्ममिति**। "सूक्ष्मव्यवहितविप्रकृष्टान् अर्थान् गृह्णती योगिबुद्धिः भूयिष्ठादृष्टलब्धातिशयकरणवृत्त्यानुगुण्येन सिध्यतु; सूक्ष्मादीनां वर्तमानत्वात्। संबन्धोऽपि यथाकथंचिदुपपद्यते। **नष्टादिष्वक्षतः**=इन्द्रियात् धीः कथं भवति ?" इति चेत् तन्निराकरोति **नेति**। हेतुमाह **प्रत्यभिज्ञादिनीतेरिति**। यथा प्रत्यभिज्ञा नष्टामपि प्रागवस्थां गृह्णाति ॥ ननु संस्कार एव तत्र कथंचिन् संबन्धत्वेन कल्प्यत इति चेत्—एवं तर्हि योगिनामप्यतीतादिग्रहणे अदृष्टमेव संबन्धत्वेन कल्प्यतामित्याह **चित्रा इति**। ईदृशसंबन्धभेदास्त्वयाऽप्यङ्गीकार्या इत्याभिप्रायिकोऽर्थः। तदिदमाह **तत्रतत्राभ्युपेता इति** ॥

**इति योगिबुद्धेरतीतादिविषयत्वोपपत्तिः ॥ ६३ ॥**

(424) **नित्याया एव बुद्धेः स्वयमभिदधतः केचिदद्रव्यभावं ;**
**संबन्धं धर्मतोऽस्याः कृतकमकथयन् भूषणन्यायसक्ताः।**
**स्वाभीष्टद्रव्यलक्ष्मस्मृतिविरहकृतं नूनमेषां तदेतत् ;**
**सौत्रं तल्लक्षणं तैरनुमतमिह च स्याद्धि कार्याश्रयत्वम् ॥ ६४ ॥**

**नित्याया इति**। **भूषणमतानुसारिणो** नित्याया एव बुद्धेरद्रव्यत्वमभिदधत एव विषयविषयिभावमस्याः कृतकमकथयन् , मुक्तावस्थायां नित्यानन्दाविर्भाववचनात्। आविर्भावो हि नित्येन ज्ञानेन तस्मिन् काले तस्यैवाऽऽनन्दस्य संबन्धः। स च संबन्धः प्राक् अभावात् तस्मिन् काले सत्त्वाच्च कार्य एव, तथा च सति, स्वाभीष्टद्रव्यलक्षणप्रस्मरणमेषामेतादृश(दृग्)व्यवहारनिदानम्। तदिदमाह **स्वाभीष्टेति**।

ळी— सिद्धम्। अक्षम्=इन्द्रियम्। एवम् अतीतादिष्वपि हि अक्षवृत्तिरुपपाद्या। सा कथमिति चेत्—कथं प्रत्यभिज्ञायामतीतदेशकालसंबन्धः। तत्र पूर्वानुभवजनितसंस्कारविषयत्वं सहकारीति चेत्—योगजनितभगवदनुग्रहाधीनेन्द्रियसंबन्धो भवितुमर्हति। इदं प्रत्यक्षं युक्तावस्थायां मनोमात्रजन्यम्, वियुक्तावस्थायां बाह्येन्द्रियजन्यमपीति न्यायपरिशुद्धौ। चित्राः संबन्धभेदा इति। श्रोत्रस्य शब्दादिविषये समवायादिः। सामान्यलक्षणाज्ञानलक्षणा योगजधर्मलक्षणा च प्रत्यासत्तिरिति तार्किकैरप्युच्यते। सामान्यलक्षणा च व्याप्तिग्रहणायास्माभिरप्युक्ता। एवमावश्यका इष्टा इति ॥

बुद्धेर्नित्यत्वं कदाचिद्विषयसंबन्धश्च वदद्भिस्तस्या अद्रव्यत्वोक्तिरयुक्तेत्याह नित्याया इति। केचित् नित्यत्वे सत्येव बुद्धेरद्रव्यत्वं वदन्तः तस्याः विषयैः संबन्धो धर्मविशेषजन्यत्वात् कृतक इत्याहुः। इमे च, 'नित्यं सुखं मोक्षे अभिव्यज्यते' इति भूषणाख्यतार्किकैकदेशिमतानुसारिणः। कार्याधारत्वमिति। तेषामभीष्टं द्रव्यलक्षणम्, तत्र एवं सति बुद्धेरप्यस्ति। नूनं तल्लक्षणविस्मरणादेव तेषां तदद्रव्यत्ववचनम्। "क्रियावत् गुणवत् समवायिकारणमिति द्रव्यलक्षणम्" इति कणादसूत्रम्। समवायिकारणत्वञ्चोत्पद्यमानकार्याधारत्वम्। विषयविषयिभावरूपकार्याधारत्वात् बुद्धिर्द्रव्यमेव स्यात्। न च तस्य तत्रोत्पत्तावपि समवायेनोत्पत्त्यभावान्न दोष इति वाच्यम्, द्रव्यत्वमापादयता समवायेन तदुत्पत्त्यापादन एव तात्पर्यात्। न च विषयविषयिभावस्य सामान्यविशेषसमवायाभाव-

समवायिकारणं द्रव्यमिति द्रव्यलक्षणं तैरनुमतम्। 'समवायिकारणत्वं च कार्याश्रयत्वम्' इति चानुमतम्।
इह च विषयविषयिभावस्य कार्यत्वे तदाश्रयत्वात् विज्ञानानन्दयोर्द्रव्यत्वमेव स्यादिति भावः ॥

**इति अद्रव्यपक्षे नित्यधीविषयत्वस्य कार्यत्वानुपपत्तिः ॥ ६४ ॥**

**(425) प्राकट्यं नाम धर्मं कतिचन विषये बुद्धिसंबन्धजन्यं(रूपं)**
**मन्यन्ते; तन्न दृष्टं; व्यवहरणविधावानुगुण्यं तु भानम्।**
**क्वापि स्वाभाविकं स्यात् क्वचन भवति धीगोचरत्वात्मकं तत्;**
**भातीत्यादिप्रयोगः स्वदत इति नयात् तत्र कर्मत्वगर्भः ॥ ६५ ॥**

बुद्धिरूपप्रकाशातिरेकेण विषयगतं प्राकट्यं नाम धर्मं केचिदूचिरे। तदनुवदति प्राकट्यं नामेति। तन्निराकरोति तन्नेति। कथं तर्हि विषयभानमित्यत्राह व्यवहरणविधाविति। व्यवहारयोग्यत्वमेव भानमित्यर्थः। तच्च व्यवहारयोग्यत्वं क्वापि स्वयंप्रकाशे वस्तुनि स्वाभाविकं स्यात्। क्वचन परप्रकाशे वस्तुनि धीगोचरत्वात्मकं तद्भवति। ननु धीरेव भानं चेत्, कथं तर्हि भाति इत्यादिरर्थसामानाधिकरण्येन व्यवहार इत्यत्र प्रतिबन्द्या उत्तरमाह स्वदत इति। यथा देवदत्तास्वादकर्मभूतस्यापि मोदकस्य, देवदत्ताय स्वदते मोदक इति कर्मत्वगर्भः कर्तृ[त्व]व्यवहारः, एवमत्रापि भातीति व्यवहारः ॥ ६५ ॥

---

सर्व— भानशब्दस्य प्रसिद्धार्थस्वीकारे, तस्य ज्ञान एव प्रसिद्धेः, 'घटो भाति' इति घटाश्रयतया निर्देशायोगात् भानशब्दस्य घटनिष्ठभानक्रियाजन्यधर्मपरत्वमङ्गीकार्यमित्यभिप्रायेण शङ्कते—ननु धीरेवेति। एतत्परिहारपरतया 'स्वदते' इत्याद्यवतारयति अत्र प्रतिबन्द्येति ॥ ६५ ॥
श्री-,रूपपदार्थान्तरेष्वपि सत्त्वात् तेषाञ्च समवायेन किञ्चिदाधारत्वायोगात् न विषयविषयिभावस्य समवायसंबन्धार्हत्वमिति वाच्यम्—सामान्यादीनां पृथक्पदार्थत्वानभ्युपगमात्। द्रव्यादेर्ज्ञानस्य च यो विषयविषयिभावः तस्य समवायस्वीकारे बाधकाभावेन तावताऽपि ज्ञानस्य द्रव्यत्वापादनसंभवाच्च। समवायस्य वस्तुतोऽनिष्टत्वाच्च। विषयविषयिभावान्तर्गतस्य विषयत्वस्य समवायानर्हत्वेऽपि विषयित्वस्य तद्वत्त्वं च घटते। न च विषयविषयिभाव-प्रतियोग्यनुयोगिभाव-जन्यजनकभावादीनां तत्तद्वस्तुस्वरूपानतिरिक्ततया न तत्र पृथग्जन्यत्वमिति वाच्यम्; एवं तर्हि बुद्धिस्वरूपस्य विषयविषयिभावस्य बुद्धिकाले सर्वदा सत्त्वापत्त्या कादाचित्कत्वोक्त्ययोगात् ॥ ६४ ॥

बुद्धेर्विषयस्य च संयोगादिः संबन्ध इति स्वपक्ष उक्तः। आगन्तुकविषयविषयिभावशालि ज्ञानम् अद्रव्यभूतमिति पक्षश्च निरस्तः। ज्ञानजन्यज्ञातताश्रयत्वमेव ज्ञानविषयसंबन्ध इति भाट्टपक्षं क्षिपति प्राकट्यमिति। कतिचन = भाट्टाः विषये बुद्धेः = ज्ञानस्य संबन्धः, न संयोगादिः, न वा विषयविषयिभावः किं तु प्राकट्यं नाम—घटो मया ज्ञातः इत्येवं प्रसिद्धा ज्ञाततैव भान-भासमानतादिशब्दवाच्येति मन्यन्ते। तत् न दृष्टम्, नहि घटादौ रूपादिवत् चक्षुरादिना प्राकट्यं गृहीतमस्ति। तर्हि भाति, भासते प्रकाशने इत्यादिधात्वर्थरूपं किमिति चेत्—उभयवाद्यभ्युपेतं विषयघटादिनिष्ठं तत्, ज्ञानेन ज्ञातता घट एवोत्पाद्यते, न तु निष्ठं व्यवहारानुगुणत्वमेव। तदपि किमिति चेत्—भाट्टमते ज्ञानेन ज्ञातता घट एवोत्पाद्यते, न तु पटे इत्यत्र नियामकतया घटे ज्ञानसंबन्धः कश्चिदेष्टव्यः; स एवास्तु। तत्र स्वयंप्रकाशत्वाभिमते वस्तुनि तत्—व्यवहारानुगुण्यं स्वाभाविकम् = अन्यानपेक्षम्, तद्वस्तुमत्त्वैव, स्वरूपमेव। अन्यत्र ज्ञानसंयोगादिरूपम्। ननु यदि ज्ञानस्वरूपमेव भानं प्रकाशः इति, तर्हि घटो ज्ञायते, घटो भातीति

(426) इष्टद्विष्टप्रनष्टादिषु च परगतैः कथ्यतेऽन्यत् विशिष्टं ;
ज्ञातत्वोक्तावपीत्थं ; व्यवहृतिनियमाः तावतैवोपपन्नाः ।
प्राकट्येऽस्मिन्, गुणादिष्वपि, कथमधिकं भूतभव्येषु च स्यात्?
कर्मत्वं तु क्रियार्थे सति फल इति च प्रायिकं व्याप्तिहानेः ॥ ६६ ॥

इष्टेति । किंच इष्टद्विष्टप्रनष्टादिषु व्यवहारेषु पुरुषादिनिष्ठैरेव इच्छादिभिर्विशिष्टो विषयः कथ्यते । इत्थं, ज्ञातो घटः, प्रकटो घट इत्याद्युक्तावपि व्यवहारनियमाः तावतैव आत्मनिष्ठज्ञानेनैव उपपन्नाः । अन्यथा प्राकट्ये, गुणादिष्वपि, भूतभव्येषु च ज्ञातत्वादिव्यवहारसिद्ध्यर्थं प्राकट्यं कल्प्यं स्यात् । न च तत् युज्यते । ननु क्रियाफलशालित्वं कर्मत्वम् ; तत् प्राकट्याभावे कथं स्यादित्याशङ्क्य निराकरोति कर्मत्वमिति । प्रायिकमिदं लक्षणम् ; न तु व्याप्तम् । गमनक्रियायाः फलं ग्रामप्राप्तिः ; न च प्राप्तेरपि प्राप्त्यन्तरमुपलभ्यते ॥ ६६ ॥

---

पृ०— ननु 'ज्ञातो घटः' इति ज्ञानकर्मत्वप्रतीतेः परसमवेतक्रियाजन्यफलाधारस्यैव कर्मत्वात् ज्ञातताऽङ्गीकार्येत्याशङ्क्य निराकरणार्थं 'इष्टद्विष्ट' इत्यादिश्लोकं व्याचष्टे—किञ्च इष्टेत्यादिना। अयमर्थः—'इष्टो घटः' इत्यादौ इच्छादिजन्यफलाधारत्वाभावेऽपि इच्छादिकमेव घटविशेषणतया यथा व्यवह्रियते, तथैव ज्ञात इत्यत्र ज्ञानमिति ॥ ६६ ॥

श्री- घटादेः क्वचित् कर्मत्वं क्वचित् कर्तृत्वं च कथम्। अतो ज्ञानक्रियाजन्यफलभूता ज्ञाततैव भानमिति चेन्न ; अतिरिक्तां ज्ञाततामस्वीकृत्यैव कर्मत्वोपपादनसंभवात् तदेव कर्मत्वं भानशब्दार्थे विशेष्यतया घटकमित्यदोषात्। ज्ञाधातोः ज्ञानमात्रमर्थः । तत्कर्मत्वबोधनार्थं कर्मणि यक्प्रत्ययः ; घटं जानातीत्यादौ द्वितीया च । भातीत्यादौ धात्वर्थश्च ज्ञानकर्मत्वपर्यन्तः । तदाश्रयत्वं साक्षात् विषय इति घटो भातीति प्रयोगवैलक्षण्यम् । यथा मोदको रस्यत इति कर्मणि प्रयोगः मोदकः स्वदत इति कर्तरिप्रयोगश्च तुल्यार्थः । स्वदतेः रसानुभवकर्मत्वपर्यन्तार्थकता, रसयतेस्तु रसानुभवमात्रमर्थ इति भेदात् प्रयोगवैलक्षण्यम्—तद्वत् । ज्ञानकर्मत्वमित्यस्य व्यवहारानुगुण्यमित्यर्थस्वीकारे तु अर्थभेदः स्पष्ट एव ॥ श्लोके संबन्धरूपमिति पाठो युक्तः । भाट्टैस्तथोक्तेः ; संबन्धान्तरानुक्तेः ॥ ६५ ॥

ननु क्रियाजन्यफलशालित्वमेव कर्मत्वम्। अतो ज्ञाततारूपफलाभावे कर्मत्वमेव दुर्घटमित्यत्राह इष्टेति । क्रियाजन्यफलशालित्वरूपकर्मत्वाभावेऽपि कर्मप्रत्ययः, कृतिमत्त्वाश्रयत्वयोरभावेऽपि कर्तृप्रत्ययश्च दृष्टः इष्टं द्विष्टमित्यादौ । न हि इच्छाद्वेषजन्यं फलं किञ्चित् कर्मणि कथ्यते । एवं नष्टो घट इत्यादौ नाशानुकूलकृतिमत्त्वं वा नाशाश्रयत्वं वा घटस्य नास्ति । ध्वंसस्य स्वप्रतियोगिसमवायिदेशवर्तितया, घटस्य तदानीमविद्यमानतया चाऽऽश्रयत्वायोगात्। एवं चात्मगतेच्छाद्वेषावादाय असंबद्धे वस्तुनि इष्टादिपदप्रयोगः, ध्वंसानाश्रये च घटे ध्वस्त इति नष्ट इति च कथम्। अतः संभावितं कमपि संबन्धमादाय प्रयोग उपपद्यते । नष्ट इत्यादौ प्रतियोगित्वमेव प्रत्ययार्थः । इष्टः ज्ञात इत्यादौ मुख्यगौणकर्मत्वसाधारण्येन कर्मप्रत्ययप्रयोगः । एवमन्यगतधात्वर्थविशिष्टत्वं तदन्यस्मिन्, ज्ञात इत्यत्राप्युच्यत इति मन्तव्यम्। अतः तावतैव प्राकट्याभावेऽपि प्रयोगोपपत्तिः। अन्यथा ज्ञाततां जानातीत्यादौ प्रकाट्ये प्राकट्यं कथमन्यत् ; अनवस्थाप्रसंगात्। एवं जानातीत्यादौ गुणादौ प्राकट्यं कथम्-गुणे गुणानंगीकारात्। अतीते भविष्यति च कथं तत्—आधाराभावात् । क्रियारूपार्थे कर्मत्वं= धात्वर्थनिरूपितं कर्मत्वं फले सत्येवेति नास्ति। किंतु

(427) आधत्ते धीः क्रियात्वात् किमपि गमनवत् कर्मणीत्यप्ययुक्तं ;
दत्तानेकोत्तरत्वात् ; न च फलमधिकं भाति हानादिमात्रात् ।
हेतुर्धात्वर्थता चेत् , अतिचरणम् ; अथ स्पन्दता स्यादसिद्धिः ;
धीस्वारस्यानृशंस्यादनुमवमधिकं कैश्चिदस्तत्सपृथ्यैः ॥ ६७ ॥

तदनुमानात् प्राकट्यं साधयाम इति वदतः पक्षमनुवदति आधत्त इति । ज्ञानं सकर्मणि किंचित् करोति, क्रियात्वात् ; गमनक्रियावत् इत्यप्ययुक्तम् । दत्तेति । इष्टद्विष्टादिषु व्यभिचारादेरित्यर्थः । तत् विवृणोति न चेति । हानोपादानादिबुद्धिव्यतिरेकेण विषयगतं फलं नोपलभ्यत इत्यर्थः । किंच क्रियात्वादिति हेतुर्धात्वर्थतामात्रं चेत् , अतिचारः। न हि सर्वेषामपि धात्वर्थानामुत्तरोत्तरधात्वर्थाः फलम् ; अनवस्थानात् ॥ परिस्पन्दनरूपत्वाङ्गीकारे असिद्धिरेव स्यात् । तदिदमाह असिद्धिरिति । इत्थं प्राकट्यं स्वमतेन निराकृत्य एकदेशिमतेन तदङ्गीकारमप्यनुवदति धीस्वारस्येति । कैश्चिदित्युक्तिस्तदनङ्गीकारं द्योतयति ॥

इति प्राकट्याख्यधर्मान्तरकल्पिमभङ्गः ॥ ६७ ॥

(428) इच्छाद्वेषप्रयत्नाः सुखमितरदपि ज्ञानतो नातिरिक्ताः ;
या धीस्तद्धेतुरिष्टा, न तदधिकतया कल्पने कोऽपि लाभः ।
पर्यायत्वं विशेषे न तु भवति, यथा प्रत्यभिज्ञादिभेदे ;
नो चेत् , ईर्ष्यास्यसूयाभयधृतिकरुणाद्यन्यदन्यच्च कल्प्यम् ॥ ६८ ॥

इच्छाद्वेषादीनां ज्ञानादतिरिक्तत्वमाहुरन्ये ; तद्दूषयति इच्छेति । तत्र कल्पनालाघवं प्रमाणमाह या धीरिति । इच्छादिहेतुभूता अनुकूलादिविषया बुद्धिरेव इच्छादिव्यवहारमातनोति ; तदतिरिक्त-

---

श्री- प्राथिकम् । प्राप्तौ व्याप्तिभंगात् । ग्रामं गच्छतीत्यत्र गमनफलं ग्रामप्राप्तिः । ग्रामं प्राप्नोतीत्यत्र प्राप्तिक्रियाफलमन्यत् किमस्ति । प्राप्तिर्हि संयोगः ॥ ६६ ॥

एवं कर्मत्वबलात् फलकल्पना निरस्ता, क्रियात्वहेतुकानुमानमपि परोक्तं निरस्यति आधत्ते इति । ज्ञानं कर्मणि किञ्चिज्जनकं क्रियात्वात् गमनवदित्यनुमानमयुक्तम् । इच्छाद्वेषसत्तानाशप्राप्त्यादिक्रियासु व्यभिचारात् । बाधमप्याह न चेति । किञ्चिज्जनकत्वे साध्ये हानोपादानविषयत्वापादकत्वात् सिद्धसाधनम् । हानाद्यतिरिक्तफलहेतुत्वोक्तौ बाध इत्यर्थः । हेतुस्वरूपं विकल्प्यापि दूषयति हेतुरिति । क्रियात्वं नाम किम्? धात्वर्थत्वं वा स्पन्दत्वं वा । अतिचरणम्= अनैकान्तिकत्वम् । असिद्धिः= पक्षे हेत्वभावः । 'अनुभूतिरनन्याधीनस्वधर्मव्यवहारा' इति भाष्ये प्राकट्यान्वारोहेणानुमानप्रयोगात् प्राकट्यमेकदेशिभिरप्यन्वारुह्योक्तमित्याह धीति । स्वारस्यानृशंस्यादिति । स्वारस्यभंगो मा भूदितीत्यर्थः । कर्मकारके प्रायः फलदर्शनमनुरुध्येति यावत् ॥ ६७ ॥

परत्वापरत्वपर्यन्तद्रव्यशोधनानन्तरं बुद्धिरूपपरमतगुणविषये वक्तव्यमुक्तम् । अथ इच्छाद्वेषादिकतिपयगुणविषये पार्थक्यं परिहरन् सर्वस्य ज्ञान एवान्तर्भावमाह इच्छेति । इतरत्= दुःखम् । नातिरिक्ता इति । गुणा इति पूरणीयम् । ननु सर्वस्य ज्ञानरूपत्वे ज्ञानमिच्छा, इच्छा द्वेषः, द्वेषः सुखम् इत्येवं सर्वं घटकलशादिवत् पर्यायतया ग्राह्यं स्यादित्यत्राह पर्यायत्वमिति । नहि पृथिवी द्रव्यमेवेत्येतावता पृथिवीशब्दस्य द्रव्यत्वेन द्रव्यमर्थः स्यात्, पृथिवीवत् जलतेजआदीनां द्रव्य-

कल्पने न कोऽपि लाभः; गौरवदोष एव लभ्यते। तर्हि ज्ञानेच्छादीनां पर्यायत्वं स्यादित्याशङ्क्य परिहरति **पर्यायत्वमिति**। यथा ज्ञानत्वाविशेषेऽपि प्रत्यभिज्ञास्मृत्यनुमित्यनुभवादिभेदे न पर्यायत्वम्, तद्वदिहापीति। नो चेत्, ईर्ष्याभ्यसूयाभयधृतिकरुणाशान्तितुष्ट्यादिव्यवहाराणामपि विषयलाभार्थमर्थान्तरं कल्प्यमित्यनियतिरेव स्यात्॥ **इति इच्छादीनां बुद्धिविशेषातिरिक्तत्वभङ्गः॥ ६८॥**

(429) **चेतःस्रोतस्स्रुतीनां चिदवधिकतया चैत्तसङ्केतभाजां**
**रागद्वेषादिकानामभिदधतु कथं भावमस्थेमभावाः।**
**एतेषां हेतुसाध्यक्रमनियतिमतां सर्वचित्साक्षिकाणां**
**कथ्येतातथ्यभावे कथमिव कथकद्वन्द्वयुद्धावतारः॥ ६९॥**

अत्र **बौद्धास्तु** चित्तचैत्तरूपेण द्वेधा विभागं वर्णयन्ति। तत्र **चित्तमिति** विज्ञानसन्ततिरुच्यते; **चैत्तमिति** चित्तानुबन्धिकं रागद्वेषादिकम्। तदेषां न संघटत इत्याह **चेत इति**। विज्ञानस्रोतोविशेषाणां **चिदवधिकतया** विज्ञानमात्रवर्तित्वेन चैत्तादिव्यवहारभाजां रागद्वेषादिकानाम् **अस्थेमभावाः** क्षणिकत्ववादिन. कथं सद्भावमभिदधतु? विज्ञानस्योत्पन्नापवर्ग(र्गि?)त्वेन चैत्तरूपावस्थान्तरभाक्त्वं न संघटत इत्यर्थः। तर्हि चैत्तानां सद्भाव एव नास्तीति वदाम इति चेत्, तच्च नोपपद्यत इत्याह **एतेषामिति**। **हेतुसाध्यक्रमनियतिमताम्**। कार्यकारणभावो हि बौद्धानां सत्त्वे नियामकम्। अतः चैत्तानामपि कार्यकारणभावदर्शनादङ्गीकार्यं सत्त्वम्। **सर्वचित्साक्षिकाणां**—प्रत्यक्षेण सर्वैरुपलभ्यमानानामित्यर्थः। न हि सर्वज्ञेनाप्युपलब्धानां चैत्तानामबाधितानां कथमपि च मिथ्यात्वं वक्तुं शक्यते। एतेषां रागादीनाम् अतथ्यभावे **कथमिव कथकद्वन्द्वयुद्धावतारः कथ्येत**—वादाधिकार एव न स्यादिति स्वप्रवृत्तिविरोधः॥

**इति रागद्वेषादिमिथ्यात्वमतभङ्गः॥ ६९॥**

---

वी— त्वमित्येतावता पृथिवीजलादिविशेषशब्दानां न हि पर्यायता स्यात्। नो चेत्=विशेषाणां सामान्यानन्तर्भावे, चतुर्विंशतेर्गुणेभ्योऽन्ये ईर्ष्यासूयादयोऽपि गणनीयाः स्युरिति॥ अन्यदन्यच्च=दयाक्षान्तिनिग्रहानुग्रहादि॥ ६८॥

इच्छाद्वेषयोर्ज्ञानान्तर्भाव उक्तः। इदं बौद्धस्यापीष्टमित्येतावता मतद्वयैक्यं न भवतीति ज्ञापनाय तन्मतं दूषयति **चेत इति**। चेतः=चित्तं चित् ज्ञानमिति पर्यायाः। आलयविज्ञानमिति आत्मेति चेदमेवोच्यते। इदं स्रोतस्तुल्यम्। एतस्य स्रुतिः=प्रसरणम्। तद्विशेषाः रागद्वेषादयः एतदवधिकत्वात्=एतत्कारणकत्वात् एतन्निष्ठत्वाच्च चैत्तशब्दवाच्या इति ते वदन्ति। एते अस्थेमभावाः। सर्वो भावः पदार्थः अस्थेमा। स्थितिरहितः उत्तरक्षणानुवृत्तिहीनो येषां [मते] ते। यद्वा अस्थेम्नि क्षणिकत्वे भावः=आशयो येषां ते। अथवा अस्थेमा सर्वक्षणिकत्वं येषां भावे=आशये विषयः, ते इति। उत्तरोत्पादे च पूर्वनिरोधात् कार्योत्पत्तिरेव न भवतीति कथं ते तेषां भावम्=उत्पत्तिं सत्ताञ्च वक्तुमर्हन्ति। अतो न तन्मतैकरस्यम्। तर्हि भावासंभवे अभाव एवास्तु इत्यत्राह **एतेषामिति**। इदमेतस्मात् भवतीति कार्यकारणभावव्यवस्थायाः सर्वसाक्षिकत्वात् कथमपलापः। अत एव सत्त्वमर्थक्रियाकारित्वमिति नैरप्युक्तम्। तन्मिथ्यात्वे च वादिप्रतिवादितद्वाक्यादीनां सर्वेषां मिथ्यात्वे वादकथैव न भवति। अतो न बौद्धैकरस्यमिह॥ ६९॥

(480) तत्रेच्छैव द्विधोक्ता विषयनियमतो रागविद्वेषनाम्ना
पूर्वस्तीव्रस्तु कामः ; पर इह भजते तादृशः क्रोधसंज्ञाम् ।
एकैवेच्छा सिसृक्षा भगवत उदिता संजिहीर्षेति चान्यैः ;
तद्वल्लोके न किं स्यात् ; अधिकमिह तु चेत् कल्प्यतेऽतिप्रसक्तिः ॥ ७० ॥

रागद्वेषयोरिच्छाभेदत्वमाह तत्रेति । अनुकूलविषयोपादानेच्छा रागः ; प्रतिकूलविषयजिहासा द्वेषः । अतो विषयभेदेनैव नियतिसिद्धौ गुणभेदो न कल्प्य. । तावेव रागद्वेषौ तीव्रभावमासाद्य कामक्रोधाविति व्यपदिश्येते । अत्र (तत्र) प्रतिबन्दीमाह एकेति । यथा न्यायदर्शने ज्ञानचिकीर्षाप्रयत्नवत ईश्वरस्येच्छैव चिकीर्षा संजिहीर्षा रिरक्षिषेत्यादिव्यपदेशभागिनी विषयभेदेन, एवं लोकेऽपीच्छाया एव विषयभेदेन व्यवहारो भवतु ; अन्यथाऽतिप्रसक्तिरित्याह अधिकमिति । बुभुक्षापिपासाचिजिहीर्षेत्यादिकं सहस्रमपि कल्पनीयं स्यादित्यर्थः ॥ इति द्वेषकार्येच्छाविशेषत्वम् ॥ ७० ॥

(481) इच्छातः कार्यसिद्धौ किमिह यतनमित्यन्तरा कल्प्यतेऽन्यत् (न्यः) ;
तन्मोघत्वोपलब्धेरिति यदि, यतने कल्पितेऽप्येतदेवम् ।
मैवं ; व्यावर्तमानादनुगतमधिकं वर्ण्यते मानविद्भिः ;
वाञ्छन्तोऽपि ह्ययत्ना वयमिह पवनस्पन्दनेन्दूदयादौ ॥ ७१ ॥

अत्र कश्चिदाह, 'यदि इच्छातिरिक्तद्वेषपरित्यागः, तर्हीच्छैव प्रयत्नोऽपि भवतु ; किमनेन (मन्येनः) प्रयत्नेन' इति । तदिदमाह इच्छात इति । इच्छायाः कदाचित् व्याघातोपलब्धेर्यत्न कल्प्यत इति चेत्, यत्ने (यतने) कल्पितेऽपि व्याघातोपलब्धिस्तुल्या ; नैतावता गुणान्तरं कल्प्यत इति भाव । तदेतत् निराकरोति मैवमिति । 'व्यावर्तमानादनुवर्तमानमधिकम्' इति हि विद्वद्भि वर्ण्यते न्याय. । तथा चात्र वाञ्छन्तोऽपि

---

७०—इच्छाद्वेषेति तार्किककृतं विभजनमयुक्तम्, द्वेषस्यापि इच्छाविशेषत्वादित्याशयेन रागद्वेषयोर्मिथो विरुद्धेच्छात्वमाह तत्रेति । उपादानेच्छा रागः, हानेच्छा द्वेषः। तत्रोत्कटेच्छा कामः, यस्यां जातायामनुभवं विना न स्थातुमर्हति । उत्कटद्वेषः क्रोधः ; यस्मिन् जाते सद्य एवापकर्तुमुद्युङ्क्ते। तार्किकमतनिदर्शनेनैव तदैक्यं स्थापयति एकैवेति । नित्यं ज्ञानं सर्वविषयकम्, नित्यैकैवेच्छा सर्वविषयिणी, तथा प्रयत्नश्चेश्वरस्येति तन्मतम् । तथा चैकैवेच्छा कालभेदेन सर्गेच्छा, संहारेच्छा रक्षणेच्छेति च अन्यैः-तार्किकैः कथ्यते। व्यवस्थैवन्येऽपि तत्र विरोधाभावे व्यक्तिभेदेनैवेच्छाजातीयत्वस्वीकारे को दोषः। अन्यथा तत्तज्ज्ञात्वर्थभेदेनेच्छाभेदात् गुणानन्त्यं स्यादित्याह अधिकमिति ॥७०॥

इच्छाप्रयत्नयोर्वैलक्षण्यमुपपाद्य भेदं दर्शयितुं भेदमाक्षिपति पूर्वार्धेन । अन्तरा = इच्छाकार्ययोर्मध्ये यत्नो नाम गुणोऽन्यो न कल्प्यः । सिद्धान्तिनः शंका तदिति । तस्याः इच्छायाः जातायाः मोघत्वस्य = नैष्फल्यस्य दर्शनात् यत्नोऽन्य इष्ट इति चेदित्यर्थः । दूषयति यतन इति । यत्नोऽपि निष्फलो दृष्ट इति तदन्योऽपि गुणः कल्प्यः स्यात् । साक्षात् सिद्धान्ती प्रत्याह मैवमिति । यत् व्यावर्तते, यदनुवर्तते, तदुभयं कथमेकम्। पवनस्पन्दनं चन्द्रोदय इत्यादिकमस्माभिरिष्यते, न तत्र नः प्रयत्नः । इच्छां विना यत्नाभावेऽपि यत्नं विनाऽपि इच्छासद्भावोभयैक्यम् । इच्छन्नपि, यदि स्वप्रयत्नात् ऋते तत्र सिध्यतीति मन्यते, तर्हैव प्रवर्तेत । न चोत्कटेच्छैव यत्न इति शंक्यम् ;

केचिदयत्ना एव वर्तन्ते । यथा चन्द्रोदयमभिवाञ्छन्ति ; न पुनस्तत्र यतन्ते । तस्मादनुवर्तमानाया इच्छाया व्यावर्तमानो यत्नो बुद्ध्यवस्थाभेदत्वेऽपि विजातीयावस्थान्तरमिति भावः ॥

**इति इच्छामात्रातिरिक्तप्रयत्नावस्थासिद्धिः ॥ ७१ ॥**

(482) **प्राणस्पन्दः सुषुप्तिप्रभृतिषु घटते तादृशादृष्टमात्रात् ;**
**यत् त्वं यत्ने निदानं वदसि, भवतु तल्लाघवात् प्राणवृत्तौ ।**
**धीवृत्तिश्चैव यत्नः स्थित इति स कथं काष्ठकल्पे सुषुप्ते ;**
**नो चेत् ; वाय्वानलादेर्ज्वलनमपि ततः कल्प्यतां ; न त्वदृष्टात् ॥ ७२ ॥**[1]

अत्र केचित् बुद्धिपूर्वकप्रयत्नातिरेकेण जीवनपूर्वकं प्रयत्नान्तरं कल्पयन्ति ; तत्र संघटत इत्याह **प्राणेति**। *सुषुप्त्याद्यवस्थासु प्राणस्पन्दहेतुत्वेन स प्रयत्नः परिकल्प्यते । स एव प्राणस्पन्दः तावद(तादृशा?)-* दृष्टमात्रादेव भवतु। भवताऽपि चैतन्न परिहार्यम् ; प्रयत्नस्यैव निदानतया तत्रादृष्टमेव हि भवान् वदति ; तदेवादृष्टं लाघवात् प्राणप्रवृत्तौ **निदानं भवतु** कारणं भवेत्। ततो (अतो) गौरवभिया तत्र प्रयत्नो न कल्प्यः । किंच प्रयत्नोऽपि बुद्धिविशेषतया निर्णीतः। तथाच काष्ठकल्पे सुषुप्ते प्रयत्नो व्याहन्यते । इत्थमनङ्गीकारे तव, अग्नेरूर्ध्वज्वलनमित्यादिकमपि प्रयत्नादेव कल्प्यं स्यात् ; न पुनरदृष्टादित्याह **नो चेदिति** ॥

**इति जीवनपूर्वकप्रयत्ननिरासः ॥ ७२ ॥**

---

७१— एतदर्थमेव पवनस्पन्दनाद्युदाहरणात् । तत्रोत्कटेच्छायां सत्यामप्यात्मप्रयत्नासाध्यत्वज्ञानस्यापि सत्वात् । न च फलेच्छाजन्या तदर्थस्वकीयमनोवाक्कायव्यापारविषयकेच्छैव प्रयत्न इति शंक्यम्— हस्तादिव्यापारो मे जायतामिति मया संकल्पे कृतेऽपि मत्प्रयत्नाभावे स व्यापारो न भवतीति तत्तदनुभवसिद्धत्वेनेच्छाप्रयत्नयोर्भेदावश्यम्भावात् ॥ ७१ ॥

उक्ते यत्ने जीवनयोनियत्नाख्यं तार्किकेष्टं विभागं व्युदस्यति प्राणेति । अनुभवसिद्धस्यापलापायोगात् यत्न इष्टः । जीवनयोनियत्नस्तु कल्पनीयः कल्पकस्यान्यथासिद्धत्वादुपेक्ष्यते । सुषुप्तौ मूर्च्छायां योगनिद्रावसरे च जीवच्छरीरे या प्राणक्रिया, सा समयान्तरप्राणक्रियावत् प्रयत्नाधीनेति हि प्रयत्नः कल्प्यते । सा क्रिया, विना यत्नमदृष्टवशादेव जायताम् । यत्नो हि इच्छयोत्पादनीयः । न च तत्रेच्छाऽनुभवसिद्धाऽस्ति । अत एव तस्य यत्नस्यापरोक्षत्वम् । इच्छाविरहेऽप्यदृष्टवशात् यत्न इति चेत्, यत्नं प्रति निदानं=कारणं यत् अदृष्टं वदसि, तत् यत्नमद्वारीकृत्य साक्षात् प्रवृत्तौ=प्राणस्पन्द एव कारणं भवतु । तद्धेतोरेवास्य तद्धेतुत्वे मध्ये किं तेनेति न्यायात् । किञ्च यत्नो धर्मभूतज्ञानपरिणामतया प्रागुक्तः। सुषुप्तश्च ज्ञानविकासरहितः । तत्र कथं स स्यात् । यदि अदृष्टस्य किञ्चिद्द्वारैव कार्यहेतुत्वम्, न तु साक्षादिति यत्न आस्थीयेत, तर्हि अग्न्यूर्ध्वज्वलन-वायु तिर्यक्पवनादावपि यदजीवादृष्टजन्यत्वमिष्यते तत्तज्जीवातीन्द्रिययत्नजन्यत्वमिष्यताम् । एवञ्च सर्वं जगत् जीवनयोनियत्नतुल्ययोगक्षेमजैवयत्नजन्यमेव भवेदिति ज्ञानेच्छाप्रयत्नवदीश्वरानुमानमेव न भविष्यति। जीवनयोनियत्नवत् ज्ञानेच्छयोरप्यतीन्द्रिययोः कल्पनमपि स्यादित्यादि भाव्यम् ॥७२

इच्छाद्वेषप्रयत्नसुखदुःखानां ज्ञानपरिणामत्वं प्रागुक्तम् । तत्र यत्नपर्यन्तशोधनमासीत् । सुखादिकं शोध्यते । संसारस्य दुःखमयत्वात् दुःखनिवृत्तेरेव मोक्षत्वात् भोजनादितः सुखस्य च

(483) स्याद् दुःखाभावमात्रं सुखमभिदधतो वैपरीत्यप्रसक्तिः ;
स्वापादौ दुःखसिद्धिर्न यदि, सुखमपि तत्र नैवास्ति तादृक् ।
शीतोष्णातीतनीतेर्द्वितयसमधिकावस्थितिर्दुस्त्यजाऽतः ;
तत्तच्छब्दप्रयोगेष्वनियतिरुचितैः संघटेतोपचारैः ॥ ७३ ॥

अत्र कश्चिच्चोदयति, 'एवं यत्नापलापे सुखमप्यलपितुं शक्यते' इति दुःखाभावमात्रमेव सुखं स्यादिति वदन्तं प्रतिबन्द्या निराकरोति स्यादिति । दुःखाभावमात्रस्यैव सुखत्वे सुखाभावमात्रस्यापि दुःखत्वं स्यादित्यर्थः । स्वापादौ सुखाभावेऽपि दुःखसिद्धिर्नास्तीति चेत्—तर्हि तत्र दुःखाभावेऽपि सुखसिद्धिर्नास्तीति तुल्यम् । अतः स्वापे सुखदुःखाभावावुभावपि वर्तेते ; अतस्तदतिरिक्तं सुखमपि दुःखवत्(मपि) कल्पनीयमिति भावः । दृष्टं च लोके शीतोष्णातिरिक्तानुष्णाशीतकल्पनम् ; एवं सुखदुःखरूपद्वितयावस्थाविरहितसुषुप्त्यवस्था दुस्त्यजेत्याह शीतेति । तर्हि भाराववरणादिषु सुखशब्दः कथम्, सुखोपभोगाभावमात्रे दुःखशब्दो वा कथं प्रयुज्यते इत्यत आह तत्तदिति । औपचारिकाः प्रयोगाः सहस्रशोऽपि सन्तु, न हि शब्दप्रयोगमात्रादुपचारसहादर्थतत्त्वं निश्चाययितुं शक्यत इति भावः ॥

इति सुखदुःखोदासीनरूपावस्थात्रयसिद्धिः ॥ ७३ ॥

(484) भेदस्त्रेधा मतीनां ह्युपधिनियमितैरानुकूल्यादिधर्मैः ;
तस्यैवात्यन्तहानेर्निरुपधिकसुखस्तादृशो धीविकासः ।
निस्सीमब्रह्मतत्त्वानुभवमयमहाह्लाददुग्धार्णवेऽस्मिन्
निश्शेषैश्वर्यजीवानुभवरसभरो बिन्दुभावोपलभ्यः ॥ ७४ ॥

एवमौपाधिकानां दुःखमिश्राणाम(प्रतिकूलोदासीनदुःखमिश्रा)नुकूलविज्ञानानामत्यन्तहानेर्निरुपाधिकसुखरूपो मुक्त्यवस्थाया यो बुद्धिविकासः, तस्मिंस्तादृशानन्दरूपावस्थाविशेषे चतुर्मुखैश्वर्यपर्यन्त

---

वी— क्षुत्तृष्णोपशममात्रतायाः अनुभवात् दुःखाभावमात्रं सुखमिति योऽभिदधाति, तं प्रति वैपरीत्यापत्तिः = सुखाभावमात्रं दुःखं स्यादित्यापद्येत । सुषुप्त्यादौ दुःखं नास्ति यथा, तथा सुखमपि नास्तीति सा सुखदुःखोभयाभावरूपोदासीनावस्था ; अनुष्णाशीतस्पर्शवत् । प्रातिकूल्यानुभवस्येवानुकूल्यानुभवस्यापि सत्त्वात् उभयमपि स्वीकार्यम् । सुखे दुःखत्वभावनं दुःखेऽपि सुखत्वभ्रान्तिश्च तत्रतत्र स्याताम् । तावता न कस्यचिदपलापः ॥ ७३ ॥

सर्वेषामात्मनां सुखरूपत्वात् अन्यत्रापि सर्वत्र निरन्तरानुकूल्यभानस्य मुक्तौ इष्टत्वात् सुखं स्वाभाविकम्, दुःखं कर्मोपाधिकमिति स्थिते, दुःखस्वीकारेण सुखापलापो न युक्त इति ज्ञापनमाशय्य मुक्तिमहानन्दार्णवे ऐश्वर्यं कैवल्यशोधनं कुरुते भेद इति । पूर्वकर्मरूपोपाधिवशात् आनुकूल्यं प्रातिकूल्यमुदासीनत्वमित्यवस्थात्रयात् सुखरूपदुःखरूपोपेक्षारूपाः बुद्धयो भवन्ति । तस्य = कर्मरूपस्योपाधेरत्यन्तहान्या तादृशः = भगवदादिधीविकासतुल्यः श्रुतिप्रसिद्धः ज्ञानविकासः ज्ञानत्वसुखत्वरूपोभयाश्रयतया स्वाभाविकसुखरूप एवावतिष्ठते । स च न केवलं जीवस्वरूपानुभवमात्रम्, किन्तु उभयविभूतिविशिष्टाखिलहेयप्रत्यनीकानन्तकल्याणगुणगणब्रह्मानुभवः। तत्र ब्रह्मतत्त्वं परमानन्दरूपम् । तदनुभवक्षीरसमुद्रे तदीयैश्वर्यरूपविभूतेः स्वात्मकशब्दजीवस्वरूपस्य चानुभवसाम्यमत्यन्त-

स्यैश्वर्यस्य जीवानुभवस्य चात्यन्ताल्पीयस्त्वमेवेति दुग्धार्णवतद्बिन्दुदृष्टान्तेनोपवर्णयति भेद इति। अक्षरार्थः स्वयमेव भाव्यः ॥ इति निरुपाधिकानन्दरूपबुद्ध्यवस्थाविशेषः ॥ ७४ ॥

(485) संसारे नास्ति किञ्चित् सुखमिति कतिचित्; तद् घटेतोपचारात्;
नो चेत्, व्युत्पत्तिहीनं सुखपदमधिकं तत्सुखं नाभिदध्यात्।
तस्मात् दुःखोत्तरत्वप्रभृतिभिरिह तद्दुःखमित्युक्तमाप्तैः;
क्ष्वेलोपश्लेषदुष्टे मधुनि विषमिति व्याहृतिः किं न दृष्टा ॥ ७५ ॥

केचित्तु, 'संसारेषु सुखमेव नास्ति' इत्याहुः; तदौपचारिकमित्याह संसार इति। अन्यथा सुखपदव्युत्पत्तिरेव न स्यात्। तथाचालौकिकमपि सुखं सुखशब्दो नाभिदध्यादित्याह नो चेदिति। कथं तर्ह्याप्तैः संसारस्य दुःखरूपत्वमुच्यत इत्याशङ्क्य परिहरति तस्मादिति। दुःखोत्तरत्वात् दुःखत्वमभिधीयत इति परिहारः। तत्र दृष्टान्तमाह क्ष्वेलेति ॥

इति सांसारिकसुखस्य दुःखत्वोक्तिनिर्वाहः ॥ ७५ ॥

(486) धर्मोऽधर्मश्च तत्तत्फलकरणतया शास्त्रसिद्धं क्रियादि;
द्वारं त्वेतस्य कालान्तरनियतफले स्यादिहादृष्टमन्यत्।
आहुस्तत् केचिदन्तःकरणपरिणतिं; वासनां चेतसोऽन्ये;
पुंधर्मं केचिदूचुः; विभु किमपि परे; पुद्गलांस्तत्सयूथ्याः ॥ ७६ ॥

अथ धर्माधर्मलक्षणं तत्साध्यादृष्टस्वरूपं च विभज्य दर्शयति धर्म इति। "चोदनालक्षणोऽर्थो धर्मः" इति शास्त्रैकसमधिगम्यं श्रेयस्साधनं धर्म इत्युच्यते; स तु क्रियादिरेव; "द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते" इत्याद्यभिधानात्। चिरध्वस्तस्यापि कर्मणः कालान्तरभाविफलानुगुणं किमपि

---

र्थी— भवति। तावदानन्दरूपमोक्षातिरिक्तं यत् क्षुद्रमैश्वर्यं जैवं कैवल्यञ्च तयोर्वेद्धानुभाव्ययोस्तद्बिन्दुत्वमिति सर्वत्र सुखत्वमस्तीति। सर्वथा सुखं नैवापलप्यम् ॥ ७४ ॥

अस्तु मोक्षो महानन्दः। संसारे तु नेषदपि। यदि संसारे सुखं स्यात्, कथं तर्हि सर्वस्य दुःखत्वेन न्यायदर्शनादौ निर्देश इत्यत्र, प्रत्यक्षविरोधात् अनुपपत्तेश्च तद्वचनमन्यतात्पर्यकमित्याह संसार इति। तत्=सुखाभाववचनम् उपचारात्=अधिकसुखाभावाभिप्रायेण। नो चेत्=सर्वथैव सुखास्वीकारे, सुखपदस्य संगतिग्रह एव न स्यात्। एवञ्च "तत् सुखं स्वःपदास्पदम्" इत्यादेर्बोधकत्वमेव न स्यात्। अतो दुःखमित्याप्तवचनस्य दुःखभूयिष्ठमित्यर्थः। ईषद्विषसंपर्केऽपि मधुनि विषमिति औपचारिकप्रयोगे वर्तमाने, दुःखभूयिष्ठे दुःखशब्दप्रयोगः सुतरां घटत इति॥७५॥

चतुर्विंशतौ गुणेषु धर्माधर्मसंस्काराः शिष्टाः। तत्र द्वयं विस्तरेण निरूपयति धर्म इत्यादिना। धर्माधर्मशब्दाभ्यां क्रियाजन्यादृष्टवचनं तार्किकेष्टम्। जैमिनिस्तु क्रियामेव तदर्थतया स्वीकरोति। 'धर्मस्त्वनुष्ठितः पुंसाम्' इत्यादिवैदिकव्यवहारात्, धार्मिक इत्यादिलोकव्यवहाराच्च क्रियापरत्वमेव युक्तम्। विवादास्पदञ्च तदुक्तम् अदृष्टम्। अत इष्टानिष्टफलकरणत्वेन शास्त्रोक्तं क्रियादिकमेव धर्माधर्मपदवाच्यम्। 'द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते' इति वार्तिकानुसारेण फलसाधनत्वेनावगतं द्रव्याद्यपि, 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यादौ धर्मो भवति। इह=धर्मादौ

द्वारमन्यददृष्टमुपादेयम् ; तच्चान्तःकरणपरिणतिरिति साङ्ख्याः प्राहुः । चेतसो वासनेति सौगताः । पुंधर्म इति न्यायवादिनः । विभुरूपं किमपि तत्त्वान्तरमिति जैनैकदेशिनः । पुद्गलरूपमिति तत्सयूथ्याः । एतस्य सर्वस्य कल्पनामात्रसिद्धत्वात् तत्तत्कर्माचरणपरिणतेश्वरबुद्धिविशेष एवादृष्टमिति तत्त्वविदां संप्रदाय इति हृदयम् ॥ इति धर्माधर्मलक्षणतत्साध्यादृष्टस्वरूपमतभेदाः ॥ ७६ ॥

(437) तुल्ये सेवादिहेतौ फलभिदुरतया साध्यते चेददृष्टं,

हेतोः सूक्ष्मोऽस्तु भेदो, न खलु समुचिता धर्मिणोऽन्यस्य क्लृप्तिः ।

व्याख्यातं यत्तु बाह्यैर्विषयसमफलप्रापकत्वं क्रियाणां

तत् सूतेऽतिप्रसक्तिं ; तदिह न निगमादन्यतोऽदृष्टसिद्धिः ॥ ७७ ॥

अस्त्वदृष्टं यत्किंचिदेव ; तत् "सेवाध्ययनतुल्यत्वे दृष्टा हि फलभिन्नता" इत्युक्तप्रकारेण फलभेदात् परिकल्प्यते; न पुनरागमैकसमधिगम्यम् इति केचिदाहुः । तदिदमनुवदति तुल्य इति । तत्रान्यथासिद्धिमाह हेतोरिति । दृष्टेष्वपि कारणेषु यत्किंचिद्वैषम्यात् फलभेदोऽस्तु ; किमनेनादृष्टेन ॥ अन्यथा कल्पनागौरवादनौचित्यमेवेत्याह न खल्विति । अतिरिक्तादृष्टकल्पनायाम्—अदृष्टं कल्प्यम् , तस्य च भेदः कल्प्यः । तथाच गौरवम् । अस्माकं तु दृष्टेष्वेव कारणेषु भेद एव कल्प्यः ; अतो लाघवमिति भावः । तस्मादागमैकसमधिगम्यमदृष्टमित्याकूतम् । अत्र केचित्—यादृशो विषयः सुखरूपो दुःखरूपो वा, तादृशमेव फलं क्रियाया जायत इति [वदन्ति] । तद(दिदम)तिप्रसक्तिमेव सूते । विषयस्य सुखात्मकत्वे सुखात्मकं फलमिति न नियमः ; पापरूपसुखेन दुःखरूपफलस्य प्राप्तेः । एवं दुःखात्मकत्वे दुःखं फलमिति न नियमः ; दुःखरूपपुत्रशिष्यादिशिक्षणादिना सुखस्यैव सिद्धेः । अतः शास्त्रादेवादृष्टसिद्धिः, न पुनः स्वकपोलकल्पितादनुमानादित्याह तदिहेति ॥ इति अदृष्टस्यागमैकसिद्धत्वम् ॥ ७७ ॥

---

श्री— कालान्तरे = चिरकालानन्तरे नियतं फलं यस्य तादृशे सति, एतस्य = फलस्य द्वारं = मध्यगतं साधनं किञ्चिदस्माभिरदृश्यमानमप्यस्त्येव । धर्माधर्मशब्दवाच्यत्वं तु तत्र नापेक्षितम् । किं तत् द्वारमित्यत्र वादिनो विप्रतिपन्नाः । अन्तःकरणस्य = बुद्धितत्त्वस्यैव धर्माधर्मकर्तृत्वात् तत्परिणाम एवेति सांख्याः । करणस्य मनसो वासनाविशेष इति बौद्धाः । संस्कारः पुंस एवेष्ट इति आत्मधर्मत्वं तार्किकेष्टम् । परे तु जैनाः धर्मोऽधर्मश्च व्यापी इत्याहुः । तदेकदेशिनः पञ्चभूतधर्मत्वमेवाहुः । इदं भूतधर्मत्वं तन्मतं न्यायभाष्येऽप्यनूदितम् । पुद्गलानिति बहुवचनपाठः विभुपक्ष इवैकत्वं नेति ज्ञापनाय । अस्माकमतं तु भगवन्निग्रहानुग्रहरूपमिति प्रागेवोक्तम् ॥ ७६ ॥

शास्त्रसिद्धमित्युक्तिममृष्यमाणस्य वचनवैखरीं निरस्यति तुल्य इति । राजादिसेवायामेकरूपायां क्रियमाणायामेव पुरुषभेदेनार्थलाभे तारतम्यं दृश्यते । अध्ययनपरिश्रमे तुल्यरूपे क्रियमाणेऽपि कस्यचित् शब्दप्राप्तिर्यथावत् , अन्यस्य तदभावश्च दृश्यते । अत्र नियामकमदृष्टमिति लोकतोऽप्यदृष्टसिद्धिः इति चेत्—उच्यते । कारणे सेवादौ सूक्ष्मवैलक्षण्यादेव तदुपपत्तौ तदतिरिक्तधर्मकल्पनं व्यर्थम् । बाह्यास्तु क्रियायां फलसाम्यमाहुः—सुखमयक्रियातः सुखम् , दुःखमयक्रियातो दुःखम् । विषयसमफलप्रापकत्वं = कृतिविषयभूतक्रियागतसुखत्वदुःखत्वतुल्यतद्धर्मवत्फलहेतुत्वमिति । तन्न—सुखरूपात् निषिद्धकर्मणो महानरकोत्पत्तेः, दुःखरूपात् यागादितोऽतिशयितसुखस्वर्गोत्पत्तेः । तस्मात् निगमो वेद एव धर्माधर्मयोः प्रमाणमिति ॥

(488) निस्संकोचान्निषेधात् क्वचन फलतयाऽनूदिताऽस्तु हिंसा ;
रुन्धे सामान्यमङ्गे विधिः ; अनुमितिरप्यत्र बाधादिदुःस्था ।
'स्वल्पो दोषो विमृष्टे सुपरिहर इह क्रत्वनुग्राहके स्यात्'
इत्युक्तं सांख्यसक्तैः ; पशुहितवचनाच्चेति शारीरकोक्तम् ॥ ७८ ॥

एवमदृष्टस्यागमैकसमधिगम्यत्वे सिद्धे विधिनिषेधव्यापारपरिशोधनेन श्येनाग्नीषोमीयवैषम्यमाह निस्सङ्कोचादिति। अयमर्थः—श्येनेऽपि हिंसा दृश्यते, अग्नीषोमीयपश्वालम्भनेऽपि। प्राणवियोजनफलो

---

भा—श्येनाग्नीषोमीययोर्विहितत्वाविशेषे, कथं श्येनस्य निषिद्धत्वम्, अग्नीषोमीयस्यानिषिद्धत्वादि इति शङ्कायाम्, श्येनहिंसायां अनूद्यमानतया विधिविषयत्वाभावात् निषेधविषयत्वम्, अग्नीषोमीयस्य तु विहितत्वात् निषेधाविषयत्वं इति प्रतिपादनार्थं 'निस्सङ्कोचात्' इत्यादिकं व्याचष्टे-अयमर्थ इत्यादिना। श्येनविधौ-यदि हिंसा स्यात् तत् श्येनेन इति फलभूता हिंसाऽनूद्यते। श्येनस्तु तत्साधनतया विधीयते। अतः फलभूताया हिंसाया विध्यविषयत्वात् निषेधविषयत्वं युक्तम्। अग्नीषोमीये तु हिंसैव साक्षाद् विधीयते इति न तस्या निषेधविषयत्वमित्यर्थः ॥ ७८ ॥

श्री—नैगमात् विधेरनुग्रहरूपमदृष्टं नैगमात् निषेधात् निग्रहरूपमदृष्टञ्च भवतीति पूर्वश्लोकेऽभिप्रेतम्। यत्रैकस्मिन्नेव विषये विधिसंबन्धो निषेधसंबन्धश्च, तत्र कीदृशमदृष्टं भवतीति विमर्शे वक्तव्यमाह निस्संकोचादिति। अत्रोदाहरणं हिंसा। सा विधिसंबद्धा निषेधसंबद्धा च दृश्यते। तत्राऽऽद्या, 'श्येनेनाभिचरन् यजेत', 'अग्नीषोमीयं पशुमालभेत' इत्युभयरूपा। अन्त्या, 'न हिंस्यात् सर्वा भूतानि' इत्यादिः। अत्र राशित्रये मध्यमवर्जं सर्वत्र निग्रहाख्यमदृष्टम्, मध्यमे अनुग्रहरूपमिति सिद्धान्तः। विधिसंबद्धायाः हिंसायाः दुरदृष्टकरत्वं नेति आपाततो वदेयुः। तन्न युक्तम्। विधिसंबन्धो हि द्विविधः, विधेयतया संबन्धः, अनूद्यमानतयाऽन्यादृशश्चेति। श्येनेनेति वाक्ये श्येनाख्यो यागो विधीयते। अभिचरन्नित्यस्य अभिचारकाम इत्यर्थकत्वात् अभिचारः फलतया, उद्देश्यतयाऽनूद्यते। अभिचारो नाम वैरिमरणानुकूलव्यापारः। स एव हिंसा; न तु श्येनयागः, तस्य हिंसानुकूलव्यापारत्वमेव, न तु हिंसात्वम्। एवञ्च न हिंस्यादिति वाक्येन निषिद्धो व्यापारः न श्येनः, किं त्वभिचारः। स च विधौ विधेयो न भवति ; किं तूद्देश्य एव। विहितस्यैव साध्वदृष्टजनकत्वम्, न तु उद्देश्यस्य। अतोऽभिचारस्यानेन वाक्येन सुकृतजनकताया अनुक्तत्वात् 'न हिंस्यात्' इति निषेधावगतं दुरदृष्टजनकत्वं न वार्यते। तदिदमाह प्रथमेन पादेन। क्वचन 'श्येनेनाभिचरन् यजेत' इत्यादिविधौ अभिचारांशे न हिंस्यादिति निषेधस्य निस्संकोचं प्रवृत्त्या तु अभिचाराख्या अनूदिता = अविहिता हिंसा अंहः एव = पापमेव = अधर्म एव। मध्यमे त्वाह रुन्धे इति। 'अग्नीषोमीयं पशुमालभेत' इत्यत्र आलम्भो हिंसा साक्षात् विधीयते ज्योतिष्टोमाङ्गतया। आलम्भेनैव ज्योतिष्टोमाङ्गस्य पशुयागस्य कर्तव्यत्वात्। तथाचाङ्गविषयो विधिरेवेति इतः साध्वदृष्टं भवति। तस्मात् विधिरयं सामान्यस्य 'न हिंस्यात्' इति निषेधस्य रोधकः। तस्य लौकिकहिंसाविषये चरितार्थत्वात्। ननु तत्रापि 'अग्नीषोमीयहिंसा दुरदृष्टहेतुः हिंसात्वात् लौकिकहिंसावत्' इत्यनुमानात् पापत्वमस्तु इत्यत्राह अनुमितिरिति। 'न हि कल्याणकृत् कश्चित् दुर्गतिं तात गच्छति' इति पापाजनकत्वोक्त्या तत्र बाधः; तथा प्रकृतानुमाने निषिद्धत्वमुपाधिरिति सोपाधिकता च। इदम् आदिपदोक्तम्। अत्र मध्यमेऽपि पापप्रसक्तिं सांख्योक्तां दर्शयति स्वल्प इति। 'स्वल्पः संकरः सप्रत्यवमर्शः(र्षः) सुपरिहरः' इति सांख्यवाक्यम्। सर्वमिदं प्रागुक्तमेव। न हिंस्यादिति निषेधः पुरुषस्य पापमस्तीति बोधयति ; अग्नीषोमीयमिति विधिस्तु क्रत्वर्थः पशुहिंसायां

व्यापारो हिंसाशब्देनाभिलप्यते । [1]तदुभयत्रापि समानम् । अथापि श्येने हिंसा न विहिता, अपितु रागप्राप्ता । यदि हिंस्यात्, श्येनेन हिंस्यादिति हि तत्र विधिक्रम, न पुन हिंस्यादेवेति । तथाच तत्र हिंसाया रागप्राप्तत्वात्, "न हिंस्यात्" इति निषेधवचन तत्र निस्सङ्कोचम् । तेन फलतयाऽनूदिता हिंसा तत्र निषिध्यते, न पुन श्येन, "श्येनस्तत्रासिवत् पृथक्" इति पृथङ्निर्देशात् विहितत्वाच्च । तदिदमाह अहस्तु हिंसेति । [सा] रागप्राप्ता हिंसा शास्त्रनिषिद्धत्वात् पापमित्यर्थ । अग्नीषोमीयपश्वालम्भने तु प्राणवियोजनफलव्यापाररूपत्वेन हिंसात्वे सत्यपि, "न हिंस्यात्" इति सामान्यम् "आलभेत" इति विशेषविधिरुपलभ्ये । विशेषविधिप्राप्ते सामान्यनिषेधस्य रागप्राप्तमात्रविषयतया सावकाशस्य दुर्बलत्वात् ॥ अथापि[2] अग्नीषोमीयहिंसा अधर्म्या(मि ?) हिंसात्वात् ब्राह्मणहिंसावदित्यनुमिति आगमबाधसोपाधिकत्वाभ्या दुस्स्थेत्याह अनुमितिरिति। अत्र साङ्ख्या एव मन्यन्ते-अग्नीषोमीयपश्वालम्भनविधिरालम्भनस्य क्रतूपकारमाह । "न हिंस्यात्" इति तु वाक्य हिंसाशब्दस्यासङ्कुचित[निर्णय]वृत्तित्वेन अग्नीषोमीयहिंसामपि गृह्णाति । तथाच अ(त)स्या अपि हिंसाया किञ्चित्पापहेतुत्वमस्ति, तच्च वैदिकत्वात् सुपरिहरमिति । तत्रैव शारीरकशास्त्रे परिहार उक्त — अग्नीषोमीयपश्वालम्भनस्य परदु खोत्पादक(न)त्वे सत्यपि हिंसाशब्दवाच्यत्व नास्ति इति । न हि व्रणादिशान्त्यर्थं दाहच्छेदादिकारिषु वैद्याम्बष्ठादिषु हिंसकत्वमस्ति । न च पुत्रशिक्षादिकारिषु पित्रादिषु तर्जनादिभि हिंसकत्वमुच्यते । अशास्त्रीयकर्मणा परदु खाधानकारिणामेव हिंसकत्वम् । अत्र पुन शास्त्रीयकर्मानुरोधेन प्राणवियोजनेऽपि न [3]हिंसकत्वम्, अपितु रक्षकत्वमेव, पापफलपरिणतिरूपपशुशरीरविच्छेदेन पशोरेव निरतिशयसुखभोगानुरूपविशिष्टशरीरग्रहणहेतुत्वात । तदिद सर्वमभिप्रेत्याह पशुहितवचनादिति । "न वा उ एतन्म्रियसे न रिष्यसि देवाँ इदेषि पथिभिस्सुगेभि" इति मन्त्रवर्णेन पशोर्विशिष्टदेशप्राप्तिरुच्यते । अयमत्र विभाग —अग्नीषोमीयपश्वालम्भनस्य हिंसात्वमभ्युपगम्य, "आलभेत"

---

धी- स्ताया क्रतो साद्गुण्य—अङ्गसम्पन्नत्व चोधयति। क्रतुफल भुञ्जान पुरुष पूर्वं पश्चाद्वा हिंसाफलमपि किञ्चिद् भुङ्क्ताम्। तस्मादविरोधात् अत्रापि निषेधसङ्कोचो नास्ति। यदि पापफलानुभवात् भीति, तर्हि तत्स्वरूपे विमृष्टे=विचारिते सति स दोष प्रायश्चित्तेन सुपरिहर एव। अत क्रतुफलसाधनात् न विरन्तव्यम्। एव साङ्ख्यमतानुयायिभिरुक्तम्। शारीरके तु, "अशुद्धमिति चेन्न शब्दात्" इति सूत्रेण यागोपयुक्ताना पशूना यजमानस्येव स्वर्गप्राप्तिश्रवणात् अशुद्धत्वस्य पापहेतुत्वस्याभाव एवोक्त । तात्कालिकक्लेशकरत्वेऽपि भूरिसुखोदर्कत्वात् विहितमालम्भन हि हितमेव । अत्र सामान्यतो मीमांसकपक्ष श्रीभाष्यकारपक्षञ्च विभज्य दर्शयति वृत्तौ अयमत्र विभाग इति। हिंसाशब्दस्यार्थान्तरमुक्त्वा विहितालम्भस्याहिंसात्वसमर्थनेऽपि सौत्रामणीसुरापानादौ सुरापानत्वाद्यभावस्य दुर्वचत्वात् उत्सर्गापवादन्यायेनैव दोषपरिहार कार्य इति मीमांसकमतम्। साङ्ख्योक्तरीत्या क्रत्वर्थत्वपुरुषार्थत्वरूपवैलक्षण्यात् उत्सर्गशास्त्रस्य सर्वसुरापानादौ प्रवृत्तिसम्भवेऽपि तत्र तत्र दोषाभावप्रतिपादकशब्दबलादेवाशुद्धत्ववारणमिति सर्वथा साङ्ख्यनिराकरण सुकरमिति श्रीभाष्यानुयायिगमनिकेति। शेषमन्यत्र। अस्मदीये भाष्यार्थदर्पणेऽपि—तत् = तादृशव्यापाराभिलापकत्वम्। 2 अथापीत्यस्य अनुमितिरित्यत्रान्वय। 3 प्राणवियोजन न हिंसाशब्दार्थ इति भाव ॥७८॥

इति विधिबलात्, "न हिंस्यात्" इति निषेधस्य सङ्कोचमाहुः केचित्। अपरे पुन. श्रुतिस्मृतिबलात् हिंसात्वमेव नाभ्युपगच्छन्ति, अल्पीयसा दुःखेन अधिकसुखप्राप्तिहेतोरहिंसात्वात्, "न म्रियसे न रिष्यसि" इति तथैव श्रुतत्वाच्चेति ॥

इति श्येनाग्नीषोमीयादिवैषम्यम् ॥ ७८ ॥

(439) सिध्येद्वा विश्ववृत्तेरनितरफलतास्थापनाद्यैरदृष्टं ;

तत्सत्त्व(त्ता)ज्ञप्तिमात्रात् तदुचितनियतानुष्ठितिर्नैव सिध्येत् ।

तस्मात् चर्याविशेषे श्रुतिरिह शरणं स्वर्गमोक्षादिहेतौ

संवादष्टस्वरूपं प्रथयतु बहुधा तत्तदुक्ताद्विविक्तम् ॥ ७९ ॥

इत्थं श्रुतिरेवादृष्टनियमे शरणमिति निर्णीतम्। अन्वारुह्याप्याह सिध्येदिति। "विफला विश्ववृत्तिर्न" इत्यादिना हेतुकलापेन अदृष्टसामान्यं सिध्यतु, तथाऽपि तत्सद्भावज्ञानमात्रात् नियतानुष्ठानं न सिध्येत्। तदिदमाह तत्सत्त्वे(त्ते)ति। स्वर्गस्वाराज्याद्यनन्तफलविशेषहेतुकर्मानुष्ठानविशेषसिद्धिर्नानुमानादिति। तस्मात् अनुष्ठानविशेषे स्वर्गमोक्षादिहेतौ तदङ्गकलापप्रकारविशेषे च श्रुतिरेव शरणम्। सैव श्रुतिरदृष्टस्वरूपमपि प्रथयतु तत्तदुक्ताद्विविक्तम्, "अन्तःकरणवृत्तिर्वा" इत्याद्युक्ताद्विविक्तम् ईश्वरसङ्कल्परूपमदृष्टं श्रुतिरेव प्रथयत्वित्यर्थः ॥

इति अदृष्टमात्रस्यान्यतस्सिद्धावपि श्रुत्यैव तद्विशेषनिष्कर्षः ॥ ७९ ॥

(440) शक्तिर्यागादिकस्य स्वफलवितरणे, संभवे वा फलस्य,

स्थाप्या मध्ये तयोरित्यबहुमतिपदं सत्सु तौताततिती वाक् ।

---

७९– मिथो विरोधात् निगमस्यार्थनिश्चायकत्वाभावशंका परिहृता। तद्वेद्यत्वेऽपि निगमैकवेद्यत्वाभावं पुनश्शङ्कित्वा परिहरति सिध्येद्वेति। "विफला विश्ववृत्तिर्नः" इति कारिकया उदयनाचार्यैः महाजनप्रवृत्तेः सनातन्याः अदृष्टमन्तरा फलान्तरेण निर्वाहाभावस्योपपादनात् शास्त्रं विनाऽपि अदृष्टमस्तीति सुज्ञानम्। अत एव बाह्या अपि धर्माधर्मौ स्वीचक्रुः इति चेत्—सिध्येद्वा=कामं सिध्यतु। तथाऽपि सामान्यतः अदृष्टसत्ताज्ञानेऽपि, अस्य कर्मण इयदंगकस्य एतावत्फलभूतेदृशादृष्टजनकत्वमिति तत्तदर्हस्य नियतस्य=व्यवस्थितस्यानुष्ठितिः=अनुष्ठानं निगमं विना न सिध्यति। [निगमादवगम्यैव च महाजनैस्तैरनुष्ठीयते। अतोऽन्वारुह्यवादोऽयम्।] बाह्योक्तेर्मूलजिज्ञासायां भ्रमातिरिक्तमूलालाभेनाविश्वसनीयत्वमेव। एवञ्चायं चर्याविशेष एतत्फलसाधनमित्यस्य वेदैकवेद्यत्वात् तदर्थं वेदे विमृष्टे तत एव द्वारस्यादृष्टस्य स्वरूपमपि विशिष्य देवताप्रीत्यादिरूपमवगम्यत इति सिद्धेऽर्थेऽनुमानस्य नावसर इति। अत· बहुप्रकारेण तत्तद्धातुकर्तृकरणधर्मादिरूपात् विविक्त=विभक्तमेवादृष्टतत्त्वमिति ॥ ७९ ॥

ननु निगमनिष्णातव्यतिरिक्तवादिव्याहारमात्र चेत्, काममुपेक्ष्येत। निगममीमांसनप्रवृत्तैः कौमारिलादिभिर्निगमार्थत्वेन निरूपितस्यादृष्टस्य कथमुपेक्षेति शंकायामाह शक्तिरिति। चिरध्वस्त यागादिकं स्वतः फलाय नालमिति मध्ये किमपि मन्तव्यमिति सर्वेष्टम्। तत्र कौमारिलाः यागस्य स्वफलजननशक्तिरेवादृष्टमिति यद्वा फलभूतस्वर्गादिनिष्ठा स्वोत्पत्तिशक्तिरेव तदिति कथयन्ति। इयं तौताततिती=कौमारिली कथा शक्तेर्यागफलयोर्मध्ये स्थाप्यत्वविषयिणी सता न बहुमानार्हा। धर्मिणि

शक्ताभावे हि शक्तिर्न भवति ; शमितो धर्मधर्म्यैक्यजल्पः

तदुद्वारे शक्तिशब्दो यदि, भवतु ; परं क्लृप्तिमस्य क्षिपामः ॥ ८० ॥

अथ, "अन्तःकरणवृत्तिर्वा" इत्यादिभिः परमतमनूद्य फले प्रवृत्तयागशक्तिः स्योत्पत्तौ प्रवृत्तफलशक्तिर्वा [अपूर्वम्?] अदृष्टपदवाच्यमिति युक्तं कौमारिलैः, तदयुक्तमित्याह शक्तिरित्यादिना वागित्यन्तेन पूर्वार्धेन। तस्मिन् पक्षे व्याघातमाह शक्ताभाव इति। यागो नष्टः, तस्य शक्तिरनुवर्तत इति व्याहतम् ; फलं भावि ; तस्यापि शक्तिः प्रागेवास्तीति च व्याहतम्। ननु धर्मधर्मिणोरैक्यात् शक्तिसद्भावे शक्तस्यापि सद्भावोऽस्तीत्यतो न व्याघात इत्याशङ्क्य परिहरति शमित इति। धर्मधर्मिणोरैक्यं भेदाभेदनिराकरणादेव निरस्तम्। तर्हि द्वारमात्रे शक्तिशब्दं प्रयुञ्ज्महे इति चेत्, भवत्वयमौपचारिकः प्रयोगः ; नैतावताऽस्माकं कश्चिद्विरोधः। अपितु भाट्टोक्तामदृष्टक्लृप्तिं प्राभाकरोक्तामदृष्टवाच्यत्वक्लृप्तिं च प्रतिक्षिपामः। तदिदमाह परमिति ॥ इति क्रियादिशक्तिमात्ररूपादृष्टक्लृप्तिनिरासः ॥ ८० ॥

(441) द्वारं तत्तत्फलाप्तेः श्रुतिभिरवधृतौ देवताप्रीतिकोपौ ;

व्याचक्रे देवपूजा यजनमिति ; न तत्र श्रुतं वाक्यभिन्निः।

आम्नातेऽपेक्षितेऽर्थे न च नयनिपुणैरश्रुतं कल्पनीयं ;

नो चेत्, स्यात् दत्ततोयाञ्जलिरिह भवतां रात्रिसत्रादिनीतिः ॥ ८१ ॥

---

सर्वा— शक्ताभावपदं प्रध्वंस-प्रागभावपरतया व्याचष्टे—यागो नष्ट इत्यादिना ॥ ८० ॥

आनी— यागे नष्टे धर्मः शक्तिः कथं स्थास्यति। धर्मिणि फलेऽनुत्पन्ने च तच्छक्तिः पूर्वं कथमुदेष्यतीति। ननु शक्तिशक्तिमतोरैक्यात् धर्म्यप्यस्त्येवेति चेत्—तर्हि धर्मकल्पनमेव व्यर्थम्। प्रागेव धर्मधर्मिभेदाभेदवादः परास्तश्च। "चोदना पुनरारम्भः" इति सूत्रे शाबरेऽपीदं विशदम्। अतो जैनरीत्या स्वर्गादिफलरूपेण परिणंस्यद्भौतिकगतत्वेन वा यागकर्तरि पुरुषे वा शक्तिः शास्त्रदीपिकादौ एति यागशक्तित्वोपचारे स्थिते तदपेक्षया शास्त्रसंमते द्वारे शक्तिशब्दस्तैरुपचारेण प्रयुक्तः, देवतेश्वरस्थापनायां वैयग्र्यस्य स्वयमवहनात् ; देवताद्यभावेऽपि न यागवैफल्यमिति निगमार्थस्थापननैर्भर्यादिति युक्तं स्वीकर्तुम्। एवञ्च पूर्वमीमांसायां, 'आत्मास्तितां भाष्यकृदत्र युक्त्या स्थापयति। एतद्बोधश्च दृढत्वं प्रयाति वेदान्तनिषेवणेन' इति आत्मविषये कुमारिलोक्तया रीत्या अदृष्टविषये युक्त्या तदुक्तमपि वैशद्यं प्रयातु, "फलमत उपपत्तेः" इति वेदान्तार्थनिषेवणेनेति भाव्यम्।

ननु तौतातितीति पदं कथम्। यद्यपि तुतातशब्दनिष्पन्नमिति प्रागुक्तम्, तथापि तान्त्रिकनैयायिकादिशब्दवत् तौतातिकेति प्रयोक्तुमुचितम्। प्रयुज्यते च तथाऽन्यत्र। अतः कस्मात् तः कथमिति ॥ उच्यते। यथा तौतातिकेति प्रयोगः, तथा तौतातितेति अन्ते तकारप्रयोगोऽपि लक्ष्यते, तौतातितमततिलकनाम्ना हि ग्रन्थ एको गण्यते। कथं तन्निष्पत्तिरिति चेत्—तातः कृतः तातितः। तुना तातितः = तुतातितः कुमारिलः। तुतातितपुरुषानुयायिनः तौतातितानाः। तद्वाक् च तौतातितीति अहेशेन वर्ण्यताम्। श्लोके क्लृप्तिपदेन भाट्टक्लृप्तिवत् प्राभाकरक्लृप्तिरपि गृह्यत इत्याशयेनाह प्राभाकरेति। तैरदृष्टस्य लिङादिवाच्यत्वमपि कल्पितम्। एतदर्थश्च श्रीभाष्येऽपि विशदः ॥ ८० ॥

श्रुतिप्रतिपन्नमदृष्टं विशदं दर्शयति द्वारमिति। साधुकर्मणः फलद्वारं देवताप्रीतिः, असाधुकर्मणः तत्कोप इति, 'एष एव साधु कर्म कारयति, यमुन्निनीषति', 'एष एवासाधु कर्म कारयति यमधो निनी-

अदृष्टस्य देवताप्रीत्यादिरूपत्वं पूर्वोपक्षिप्तं समर्थयते द्वारमिति। "स एवैनं भूतिं गमयति", "स एनं प्रीतः प्रीणाति", "एष एव साधु कर्म कारयति तम्", "क्षिपाम्यजस्रमशुभान्" इत्यादिभिः प्रमाणशतैः ईश्वरप्रीतिकोपाभ्यां धर्माधर्मफलप्राप्तिरवगम्यते। किंच, "यज देवपूजायाम्" इति यजतेः देवतापूजनवाचित्वं(१) विद्वद्भिरवगम्यते। पूजनं च प्रीतिहेतुभूतः सेवाविशेष इति सुप्रसिद्धम्। अतो यज्ञाद्याराधितो भगवान् फलं ददातीति **वैदिकसिद्धान्तः**। न चात्रापेक्षितेऽर्थे साक्षादीश्वरसङ्कल्पात्मनि द्वारे श्रुत्यैव प्रतिपन्ने निरर्थकमेवादृष्टरूपं किञ्चित् कल्पनीयम्। विध्यपेक्षितस्यार्थवादादिप्रतिपन्नस्यार्थस्य स्वीकार एव न्याय्य इति हि **मीमांसकमर्यादा**। तदिदमाह **आम्नात** इति। एवमनङ्गीकारे दोषमाह **नो चेदिति**। रात्रिसत्रन्याये हि, "प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्ति" इत्यर्थवादप्रतिपन्ना प्रतिष्ठा फलतयाऽङ्गीक्रियते। "स्वर्गकामो यजेत" इत्यादौ स्वर्गस्वरूपे विधिवाक्यप्रतिपन्नेऽपि स्वरूपविशेषपरिशोधनं "यन्न दुःखेन संभिन्नम्" इति अर्थवादवाक्येन क्रियते। तच्च विध्यपेक्षितत्वात् अनुमन्यते विधिनाऽपि। एवं तेषुतेष्वधिकरणेषु विध्यपेक्षितार्थप्रतिपत्तिरर्थवादादिभिरिति **मीमांसकनिर्णयः**। अतः श्रुता देवताप्रीतिरेव द्वारभूतमदृष्टमिति शिष्टालापः ॥ **इति अदृष्टस्य देवताप्रीत्यादिरूपत्वम्** ॥८१॥

**(442) आराध्यादिप्रकाशः स्फुटमुपकुरुते मन्त्रसाध्यो विधीनां ;**
**प्राशस्त्यादिप्रतीतिर्न च भवति मृषावर्णनैरर्थवादैः ।**
**सत्येऽप्याकाङ्क्षितेऽर्थे तदुभयगमिते वाक्यभेदादि न स्यात् ;**
**लोकेऽप्येवं हि दृष्टं ; तदनुगतिमुचां सर्वशास्त्रप्रकोपः ॥ ८२ ॥**

मन्त्रार्थवादयोराराध्यादिप्रकाशपरत्वेऽपि न वाक्यभेद इत्याह **आराध्यादीति**। आराध्यादिप्रकाशो मन्त्रसाध्यो विधीनामुपकुरुते, तेन विध्युपकारकत्वात् नैकवाक्यताभङ्गः। एवमर्थवादसाध्या

---

वी-पति' इत्यादिश्रुत्यवगमितम्। यजनं देवपूजेति च व्याचक्षे=व्याकरणाद्युक्तम्, 'यज देवपूजायाम्' इति। वाक्यविद्भिः=मीमांसकैः पदशास्त्राद्युक्तं नाविदितम्॥ नन्वप्राप्ते शास्त्रमर्थवत्। अतो युक्तिगम्ये अदृष्टे किं शास्त्रेणेति चेत्—युक्तेरनियतत्वात् ७६ श्लोकोक्तरीत्या स्यादव्यवस्थेति विवक्षितार्थस्य यथावदप्राप्तत्वादत्र शास्त्रमेव मतम्। नो चेत्=यद्यत्र शास्त्रमुपेक्ष्यम्, तर्हि "तिस्रो रात्रीरुपयन्ति" इति रात्रिसत्रे, "प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति" इत्यर्थवादावगमिता प्रतिष्ठैव फलमिति भवन्निर्णयस्त्याज्यः स्यात्। श्रुतमिदं परित्यज्य विश्वजिन्न्यायेन, "स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्" इति भवदीयन्यायेन स्वर्गस्यैव फलत्वकल्पना स्यात्॥ ८१॥

ननु मन्त्राणामनुष्ठेयार्थप्रकाशकानां देवतागुणविग्रहादिपरत्वस्याप्याश्रयणे, अर्थवादानां विधेयप्राशस्त्यपराणां देवताप्रीत्यादिपरत्वस्याप्याश्रयणे अर्थद्वयपरत्वात् वाक्यभेद इति दोष इति शंकायाम्, देवतागुणविग्रहादिकथनस्य प्रीत्यादिकथनस्य च तत्तत्प्रतिपाद्यत्वाभिमतार्थनिरूपणप्रणालीरूपत्वान्न वाक्यभेद इत्याह आराध्येति। मन्त्रकार्यमाराध्यदेवतादिप्रकाशनं विधिकार्यानुष्ठानात्यन्तोपयुक्तम्। मिथ्याभूतार्थप्रतिपादने अर्थवादकार्यत्वेनेष्टं प्राशस्त्यं वा निन्दितत्वं वा प्रतिपाद्यत्वाभिमतं न प्रतीयेत। अतो मन्त्रार्थवादोभयप्रतिपाद्यस्याकांक्षितत्वान्न वाक्यभेदः। लोकेऽपि बहुक्षीरा गौरित्याद्यर्थवादे अर्थवास्तवत्व एव प्राशस्त्यप्रतीतिः। एवं लोकानुसारे कार्ये तदनुसारं त्यजतां सर्ववेदवेदाङ्गादित्याग इति दोषः स्यात्॥ ८२॥

प्राशस्त्यादिप्रतीतिरप्यर्थस्य मिथ्यात्वे विध्युपकाराय न कल्पते । अतोऽर्थवादप्रतिपन्नार्थयाथात्वं प्राशस्त्य मेव दृढीकरोति । तदिदमाह प्राशस्त्यादीति । न हि, 'असौ चतुर्वेदाभिज्ञ , यदोच्यमानं मिथ्या' इत्युक्तौ प्राशस्त्यं प्रतीयते । अतो विध्यपेक्षितार्थद्वये मन्त्रार्थवादाभ्यां याथात्म्येन प्रतिपन्ने न वाक्यभेदशङ्का स्यात् । तदेतदाह सत्येऽपीति । न चैतत् वेदमात्रनियतम् ; लोकेऽपीयमेव गतिरित्याह लोकेऽपीति । सप्तद्वीपाधिपतिर्महीपति , चतुर्दशविद्यास्थानवित् ब्राह्मण इत्यादिलोकव्यवहार स्वार्थ[प्रामाण्य]मेव पुर स्कुरुते । अन्यथा तत्तदाधिक्यप्रतिपादकानां श्रुतिस्मृतीतिहासपुराणानां साकल्येनाप्रामाण्यप्रसङ्ग इत्याह तदनुगविद्युचामिति ॥ इति मन्त्रादेर्विवक्षितार्थत्वविरोधपरिहारः ॥ ८२ ॥

(448) बुद्धिर्मन्त्रार्थवादैर्भवति दृढतरा देवतातद्गुणादौ ;<br>
बाधश्चातीन्द्रियेऽक्षैर्न हि भवति ; धियां मानता च स्वतो नः ।<br>
दुःखासंभिन्नदेशादिकमिव फलदा देवता तत्रतत्र<br>
प्राप्या च श्रूयतेऽतः कथय कथमियं शब्दमात्रादिरूपा ॥ ८३ ॥

इत्थं प्रमाणप्रतिपन्ने देवतास्वरूपे सति किमिति तत्तच्छब्दमात्रात्मिका देवताऽभिधीयते किम्पचानैरित्याह बुद्धिरिति । अयमत्र विकल्प —किं मन्त्रादिभि प्रतीतिरेव नोत्पद्यते, उत सा संशयात्मिका, किं वा अवधारणात्मिकाऽपि बाध्यते, अबाधिताऽपि बौद्ध[बाध्य]वत् स्वतोऽप्रमाण रूपिणीति स्वीक्रियते । तत्राऽऽद्यं परिहरति बुद्धिर्मन्त्रार्थवादैर्भवतीति । द्वितीयमप्यपाकरोति दृढतरा देवतातद्गुणादाविति । तृतीयं च निराचष्टे बाधश्चातीन्द्रियेऽक्षैर्न हि भवति धियामिति । अयं निष्कर्ष — मन्त्रार्थवादप्रतिपन्नानामलौकिकानामर्थानां किमिन्द्रियैर्बाध , किं वा अनुमानेन (नेति ?) न तावत् इन्द्रियेण , अलौकिकेऽर्थे खल्विन्द्रियाणां विधिनिषेधयो सामर्थ्यमेव नास्ति । नाप्यनुमानेन , आगमविरुद्धस्यानुमानस्य दु[स्साद्]ष्टत्वात् ॥ अबाधितस्यापि स्वत एवाप्रामाण्यमिति चतुर्थ पक्षोऽवशिष्यते, स बौद्धानामेव । तदिदमाह धियां मानता च स्वतो नः इति । तर्हि देवताप्रीत्यादौ श्रुतिरेव नास्तीति पञ्चम पक्षं परिकल्पयाम इति चेत् , तत् दृष्टापलापरूपत्वादनुपपन्नमित्याह दु खेति । यथा स्वर्गादिश्रुति प्रत्यक्षा, एवं देवतादिश्रुतिरपि प्रत्यक्षैव श्रूयते । अत कथमियं शब्दमात्रात्मिका देवतेति कथयसि त्वमिति परपक्षवादिनमाक्षिपति कथयेति ॥ इति देवतानां तत्तच्छब्दमात्रादिव्यतिरेकः ॥

श्री— तत्तदर्थग्राह्यतायां तदिष्टान्येव कारणान्याह बुद्धिरिति । अनवगताबाधितार्थविगमो निर्दोषशास्त्रजन्यो नोपेक्ष्यः, ज्ञानानां स्वतःप्रामाण्याच्चेति भवदुक्तं विध्यर्थ इवात्रापि तुल्यम् । अन्यचोक्तम् , 'यजेत स्वर्गकामः' इत्यत्र फलस्य स्वर्गस्योक्तत्वात् फलस्य यथावदनवगमे प्रवृत्तेरेवासंभवात् 'यन्न दु खेन संभिन्नम्' इत्याद्युक्तमत्यन्तापेक्षितम् । न देवतातद्गुणादिविवेचनमपेक्षितम् ; अग्न्यादिशब्दप्रयोगेण हविस्त्यागेनैव कार्यपूर्तेरिति, तत्र-देवताप्रातिरूप्यस्यापि फलस्य तत्रतत्रोक्तत्वात् तद्विवेचनाभावे तत्कर्मविषयप्रवृत्त्ययोगस्य तुल्यत्वात् ॥ दु खासंभिन्नेति । दुःखामिश्रेत्यर्थः । शब्दमात्रादीति । अग्न्यादिशब्दमात्रं देवतेति कश्चित्पक्षः । पचनाद्युपयोगिमहाभूतादिरूपमचेतनमेव तदर्थः सैव देवतेति पक्षान्तरम् । सिद्धान्ते विग्रहविशेषवत्तच्चेतनविशेषा देवताः ॥ ८३ ॥

(414) प्राचीनेन्द्राद्यपाये दिशतु कृतफलं को नु कल्पान्तरादौ ?
अन्ये तत्तत्पदस्था न तदुपजनकाः प्रागनाराधितत्वात् ।
मैवं ; यस्य श्रुतिश्च स्मृतिरपि नियतादेशरूपे, स एकः
सर्वाराध्यान्तरात्मा न हि गलितपदो नापि सुप्तस्तदाऽपि ॥ ८४ ॥

ननु कर्मणां देवताराधनरूपत्वे कल्पान्ते पूर्वकल्पाराधिता देवता भ्रष्टाधिकाराः । कल्पान्तरे पुनरन्ये तत्तत्पदस्था देवताविशेषाः पूर्वकल्पे अनाराधितत्वात् पूर्वकल्पकृतकर्मफलजनका न भवन्ति । अतः कथमुत्तरकल्पे पूर्वकल्पकृतकर्मफलप्राप्तिरिति चोदयति प्राचीनेति । उक्तमिदं निराकरोति मैवमिति । "श्रुतिः स्मृतिर्ममैवाज्ञा" इति यस्य श्रुतिश्च स्मृतिश्च नियतादेशरूपे प्रमाणसिद्धे, स एकः सर्वकर्मसमाराध्यः पूर्वोत्तरकल्पवर्तिसकलदेवतान्तर्यामी न हि गलितपदो भवति ; नापि सुप्तवत् किमपि न जानाति । तेन पूर्वोत्तरकल्पवर्तिनोरधिकारिणोरधिपतिरन्तर्यामी च भगवानेव सर्वं फलं प्रदापयति । यथा पूर्वोत्तराधिकारिणोरधिपतिर्महाराजः तत्तद्देशवर्तिनां तत्तत्फलप्रदानेन परिपोषक इति लोकदृष्टमेतत् ॥

इति कर्मणां कल्पान्तरेष्वपि फलसिद्धिद्वारविशेषसिद्धिः ॥ ८४ ॥

(445) अस्त्वेवं कर्मवर्गे स्वयमिह फलदो हव्यकव्यैकभोक्ता ?
तन्निघ्नैस्तैः किमन्तर्गडुभिरिति च नः स्वोक्तिबाधप्रसक्तेः ।
कर्माराध्यत्वमेषां दिशति फलमसौ पूर्वमाराधितस्तैः ;
श्रद्धेयाः श्राद्धभोक्तृद्विजवत् अत इमे निर्जरास्तस्य देहाः ॥ ८५ ॥

---

८४– ननु आत्मगतस्यादृष्टस्य द्वारत्वे यावत्फलोत्पत्ति तदनुवर्तनात् फलसिद्धेरवश्यम्भावः । देवताप्रीतेर्द्वारत्वे तु तत्तद्देवतानां पदभ्रंशस्य जननमरणयोश्च शास्त्रतोऽवगमात् तदपायानन्तरं दातुरभावात् कर्मफलानामप्राप्तिः स्यादिति शंकामुद्भाव्य परिहरति प्राचीनेति । नूतनस्येन्द्रादेः फलप्रदत्वशंकामपि पूर्वपक्षी क्षिपति अन्ये इति । श्रुतिस्मृतिरूपोभयाज्ञाप्रवर्तकस्येश्वरप्रीतिकोपरूपत्वमेव सर्वेषामदृष्टानाम् । अवान्तरेन्द्राद्याराधनेऽपि तद्द्वारा सर्वयज्ञानां भोक्ता च फलप्रदश्च स एव । एवं प्रतिबोध्य स्वाज्ञाप्रवर्तकः स न कदापि स्थानात् भ्रश्यति, नाप्यजागरूक इति । लौकिकदृष्टान्तो वृत्तौ द्रष्टव्यः ॥

ननु अवान्तरदेवताप्रीति–परमात्मप्रीतिरूपोभयविधादृष्टकल्पनापेक्षया लाघवात् आवश्यकत्वाच्च परमात्मप्रीतिरेवादृष्टमस्तु । देवतान्तरप्रीतेरपेक्षणं कुतः । "हव्यकव्यभुगेकस्त्वं पितृदेवस्वरूपधृक्" इति वचने च एक इति पदेन इतरे व्यावर्त्यन्ते इति शंकते अस्त्विति । एवं कर्मवर्गे =इन्द्रादिशब्दघटितमन्त्राङ्केष्वपि कर्मसु साक्षात् तदर्थकर्मस्विव तस्यैवाराध्यत्वमस्तु । तस्य स्वापाद्यभावेन सर्वदा व्यापृतत्वादन्यापेक्षणप्रसक्त्यभावात् किं तदधीनैरन्यैरिति । निरस्यति इति च नेति । स्वोक्तिबाधेति । हव्यकव्यशब्दयोर्हि देवोद्देशेन देयं, पित्रुद्देशेन देयञ्च द्रव्यमित्यर्थः । तद्बाधेन कथं कर्मानुष्ठानम् । यथाऽस्मभ्यमस्मत्कृतकर्मप्रीतोऽस्मदपेक्षितं फलं स प्रयच्छति, तथा देवताभ्योऽपि तत्कृतकर्मप्रीतस्तदपेक्षितं फलं प्रयच्छति । तदपेक्षितञ्च फलमस्मादृशजनसमाराध्यत्वम् । यथा राजत्वाद्यधिकारकामनया धर्ममाचरद्भ्यः तत्तद् दीयते, तद्वत् । अत एव क्षुद्रफलक्षिप्रलिप्सायां तेषामाराध्यत्वं तन्मुखेन स्वयं प्रीतत्वञ्च तेनोपदिश्यते । अन्यमुखेनान्यप्रीतिसंपादने च दृष्टान्तोऽप्यत्रैव सुलभः । श्राद्धे विश्वदेवपितृपितामहादिप्रीतिकामैर्ब्राह्मणाः भोज्यन्ते । एतत्प्रीतौ तत्प्रीतिरित्यवगम्य

तर्हि सर्वाधिपतिः स एव भगवान् सकलफलप्रदो भवतु; हव्यकव्यैकभोक्तृत्वात्; मध्ये तत्तिद्भिन्नैस्तैः किमन्तर्गडुभिरिति। एतत् स्वोक्तिबाधदुःस्थमित्याह अस्त्वेवमिति। देवतामुखेन भगवत्समाराधनं हव्यभोक्तृत्वम्; तदेव पितृमुखेन चेत्, कव्यभोक्तृत्वमिति हि स्वपसिद्धिः। अतो देवपितृ-प्रहाणवचनमसङ्गतम्। किंच कर्मभिराराधितो भगवान् सकलमपि फलं ददातीति शास्त्रनिर्णयः। तथाच पूर्वस्मिन् कल्पे तैस्तैरधिकारिभिः कर्मविशेषसमाराधितो भगवान् उत्तरस्मिन् कल्पे तेषामेव(मपि) कर्माराध्यत्वेन देवतात्वं पितृत्वं च ददाति। तथाच तत्तद्देवतामुखेन भगवत एवाऽऽराधनीयत्वम्, तेषामपि च भगवद्विशेषणभूतानां कर्माराध्यत्वमिति न विरोधः। तदिदमाह कर्माराध्यत्वमिति। ननु देवतानामाराध्यत्वे कथं भगवदाराधनत्वम्; तदाराधने वा कथं देवताराधनत्वमिति। तदेतत् दृष्टान्तेनोपपादयति श्रद्धेया इति। यथा श्राद्धे निमन्त्रितब्राह्मणभोजने पितृदेवतयोः प्रीतिः; सैव प्रीतिः फलदायिनी—एवमाराध्यदेवतान्तर्यामी भगवान् प्रीतः फलं प्रयच्छति। अत इमे निर्जरास्तस्य देहा इति श्रुतिसिद्धमित्यर्थः॥ इति देवतान्तरप्रीतेरपि भगवत्प्रीत्यर्थत्वम्॥ ८५॥

(416) विश्वेशाकूतभेदव्यवहितफलदे वैधघण्टापथेऽस्मिन्
संस्काराणां गतार्थां सरणिरपि तथा मन्त्रणप्रोक्षणाद्यैः।
राजेच्छोपात्तभोग्यप्रभृतिनियमवत् तत्र कार्यान्तरादिः;
सत्त्वादीनां गुणानां विपरिणतिभिदां तत्फलं केचिदूचुः॥ ८६॥

---

श्री— ते श्रद्धया एवमाराध्यन्ते। तन्मुखेन पितृदेवप्रीतिलाभवत् पितृदेवमुखेन सर्वेश्वरप्रीतिलाभ इति मन्तव्यम्। अयं विशेषः—ब्राह्मणानां पितृदेवात्मकत्वं तथाऽऽवाहनावसर एव। पित्रादीनां सर्वेश्वरात्मकत्वं तु सर्वदेति॥ ८५॥

प्रधानकर्मणां फलसाधनत्वं देवताप्रीतिद्वारेति न तदतिरिक्तमदृष्टं कल्पनीयमित्युक्तम्। अङ्गभूतकर्मजन्यादृष्टविषये तार्किकमीमांसकमतभेदोऽस्ति। व्रीहीनवहन्तीत्यादौ अवघातादिकं दृष्टार्थं कर्म यथा व्रीह्यादौ कर्मकारके वैतुष्यादिरूपं फलमुत्पादयति, तथा व्रीहीन् प्रोक्षतीत्यादौ अदृष्टार्थेऽपि कर्मजन्यमदृष्टं कर्मकारक एव युक्तम्; तदुद्देशेन विहितत्वात्। अत एव प्रोक्षण-जन्यातिशयाश्रयत्वरूपविशेषात् प्रोक्षितव्रीहीणामेव यागे उपयोगः, नान्येषामिति मीमांसकाः। तार्किकास्तु, "संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः" (न्या. कु) इति प्रधानकर्मजन्यमदृष्टमिव संस्कारकर्मजन्यमदृष्टमप्यात्मसमवेतम्। अनित्येषु व्रीहिषु तत्स्वीकारे व्रीहिनाशे तस्यापि नाश इति यागनिष्पत्तिपर्यन्तं तदनुवृत्त्यसंभवात्। पुरोडाशादिद्वारा यागसाधनभूतव्रीहिष्वेव प्रोक्षणादि-विधानात् नान्यव्रीहिग्रहणप्रसक्तिरित्याहुः। तत्र स्वपक्षमाह विश्वेशेति। फलंदातृपूर्वस्थाने देवताप्रीतेः स्वीकृतत्वात् प्रोक्षणादिनाऽपि देवताप्रीतिरेव संमन्तव्या। न व्रीह्यादौ किञ्चित्। विश्वेशस्य= सर्वेश्वरस्य आकूतभेदेन= अभिप्रायविशेषेण व्यवहितं–तद्द्वारकं फलं ददति अस्मिन्= प्रधानयागादौ वैधघण्टापथे= शास्त्रविस्पष्टनिराबाधगतिमार्गे सति तथा वैधैः प्रोक्षणाभिमन्त्रणादिभिः कर्म-भिरुत्पाद्यानां संस्काराणां दृष्टातिरिक्तातिशयविशेषाणां सरणिरपि= गमनिकाऽपि, तथा गतार्था= ईदृश्येवेति निश्चिततत्त्वा। तेषामपि तदभिप्रायविशेषत्वमेव। ननु प्रोक्षितव्रीहिष्वेव कार्यान्तरं=

एवं प्रधानकर्मसु द्वारभूतां देवताप्रीतिं प्रसाध्य संस्कारकर्मस्वपि स एव देवतासंकल्पविशेषो द्वारत्वेन(द्वारमिति) स्वीकार्य इति वदति विश्वेशेति। यथा यज्ञाद्याराधितः स्वसङ्कल्पेनैव फलं प्रयच्छति भगवान्, एव मन्त्रणप्रोक्षणादिभिरपि संस्कारकर्मभिराराधितः तत्तत्संस्कार्यानुबन्धिफलकरणेन तानितानि कर्माणि सगुणयतीति । कथं तर्हि तत्तत्संस्कार्यवस्तुनियमेनोत्तरकर्मानुष्ठा(नं) स्यात् ? न ह्यप्रोक्षितात् प्रोक्षिते कश्चिदतिशयो भवत्पक्षेऽस्ति ; ईश्वरबुद्धिविशेषमन्तरेण व्रीह्यादिषु(व्रीह्यादिगत) विशेषास्वीकारादित्याशङ्क्याह राजेच्छेति। यथा राजेच्छया अस्येदं वाहनमायुधं वस्त्रमाभरणमित्यादिनियमकारिण्या परिगृहीतानां तेषां पदार्थानां तन्नियमानुरोधेनैव उत्तरोत्तरमारोहणादिकर्मसूपयोगनियमः, एवं तत्तत्प्रोक्षणादिकर्मविषयीकृतानामेव तेषामुपयोगो भगवदायत्त इति न विरोधः। सहकारिवशादेव सर्वं संपत्स्यते-इति हि न्यायविसंप्रदायः । इत्थं स्वपक्षमभिधाय सयूथ्यानां पक्षमप्याह सत्त्वादीनामिति । प्रोक्षणादिकर्मभिः व्रीह्यादिषु सत्त्वादिगुणपरिणतिभेदं केचिदूचुरिति, गुणपरिणतिभेदातिरेकेण प्रोक्षणादिना आधेयशक्तिर्न कल्प्येत्यर्थः । वैभवादयं पक्ष उक्तः ; प्राक्तन एव पक्षः प्रामाणिक इति भावः ॥

इति शास्त्रीयसंस्काराणां देवताप्रीत्यर्थत्वम् ॥ ८६ ॥

(447) कृष्यादौ मर्दनादावपिच न हि परप्रीतिमूला फलाप्तिः ;
तद्वत् स्याच्छास्त्रसिद्धेष्विति न सत् ; अफलं ह्यत्र दृष्टान्तमात्रम् ।
दृष्टौ चाऽऽज्ञानुवृत्तिप्रभृतिषु फलदौ शासितुः प्रीतिकोपौ
शिष्टौ (दृष्टौ ?) चातस्समीची तदुपगतिरिह ; त्यक्तिरिष्टेऽपि (?) वांशे ॥८७॥

प्र— 'न ,सत् अफलं ह्यत्र दृष्टान्तमात्रम्' इति पूर्वार्धान्तिमप्रतीकस्य—कथं दृष्टान्तादर्थसिद्धिः ? श्री–लौकिककार्यविलक्षणं यागादि, न त्वप्रोक्षितेऽप्य इति कथं विशेषसिद्धिः; व्रीहिष्वतिशयाभावादिति चेत्—राज्ञा भोग्यानि विभज्य, अस्येदं तस्य तदिति दीयन्ते। तत्र लौकिकविभागमात्रेण वस्तुषु न किञ्चिददृष्टं भवति । तत्र कस्मात् व्यत्यासो न भवति । राजाभिप्रायस्यानुरोद्धव्यत्वादिति चेत्— तुल्यमत्रापि । केचित्तु तार्किकैः, "स्वगुणाः परमाणूनां विशेषाः पाकजादयः" इति तच्छ्लोकोत्तरार्धेन कृषिचिकित्सादिस्थलेषु पाकजगुणविशेषैरेव अदृष्टं विनैव निर्वाहस्य दर्शितत्वात् प्रोक्षणादिस्थले पाकजगुणायोगेऽपि सत्त्वरजस्तमोगुणानामसदिष्टत्वात् तत्रैव तारतम्यं प्रोक्षणादिकृतमस्तु इति वदन्ति । पाकजगुणानां दृश्यत्वात् सत्त्वादितारतम्यस्य चादृश्यत्वात् प्रोक्षणादिना वस्तुषु परिणामविशेषाद्यदर्शनात् कतिपयविधिषु फलतया श्रुतया रीत्यैव निर्वाहे तस्यावश्यकत्वाभावात् । तदिष्टावपि तदुत्पत्तये सर्वेश्वराभिप्रायस्य स्वीकर्तव्यतया तत एव गतार्थत्वाच्च तत्र द्वयम्॥ केचिदूचुरितीति । एवं केचिदूचुरित्यस्येत्यर्थः । अस्य, उपरि अर्थ इत्यत्रान्वयः ॥ ८६ ॥

कृषिचिकित्सान्याय एव सर्वत्रास्त्विति शंकां परिहरति कृषीति । कृष्यां बीजावापे अङ्कुराद्युत्पत्तिविवृद्धिद्वारा फलमुत्पद्यमानं दृष्टम् । न तत्र फलतत्कार्यकारणभावातिरिक्तं पुरुषसंकल्पकार्यत्वम् । तथा शरीरे तैलेन मर्दिते सर्वत्र तैलबिन्दुप्रसरणाद् क्रमेणारोग्यं दृष्टम् । तत्रापि न संकल्पापेक्षा । तथैव यागादावपि स्यात् । इदमप्यवगम्यते, "अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः" इति सर्वत्र लौकिककार्यकारणभावस्यैव ज्ञापनादिति शंका । निरस्यति न सदिति । दृष्टान्तमात्रेण वस्तुसिद्धिर्न भवति । उभयस्थलानुगतो

ननु कृष्यादौ मर्दनादौ च परप्रीत्या फलावाप्तिर्न दृश्यते; तद्वत् शास्त्रसिद्धेष्वपि स्वशक्त्यैव फलप्राप्तिरुचितेत्याशङ्क्य निराकरोति **कृष्यादावित्यादिना न सदित्यन्तेन**। केवलं हि दृष्टान्तमात्रं प्रामाणिकार्थप्रतिक्षेपकं न भवति; अन्यथाऽतिप्रसङ्गादित्याह **अफलमिति**। अत्र प्रतिदृष्टान्तोऽप्यस्तीत्याह **दृष्टाविति**। लोके च राज्ञामाज्ञानुवृत्तिप्रभृतिषु प्रीतिकोपौ दृष्टौ; दृष्टौ च तौ फलदाविति सर्वेषाम्। एवं शास्त्रदृष्ट(शिष्ट)त्वात् तावेव प्रीतिकोपौ फलदौ भवतः। अतः तदुपगतिरेव भवतोऽपि समीची। एवं प्रमाणदृष्टान्ताभ्यां प्रतिपन्नस्यार्थस्य परित्यागे सर्वस्यापि प्रामाणिकत्वेन दृष्टस्यार्थस्य परित्यागः स्यादित्याह **त्यक्तिरिति** ॥

**इति कर्मणां स्वयंफलदत्वौचित्यभङ्गः ॥ ८७ ॥**

**(448) प्रध्वस्तं कर्म कालान्तरभवितृफलासाधकं; तल्लिङादेः**
**वाच्योऽर्थः स्थायि कार्यं; न यदि, कथमिवान्वेतु कामी नियोज्यः।**
**तच्चापूर्वं प्रधानं; फलजनकमपि स्यान्नियोज्य(ज्ये?) प्रसिद्ध्यै;**
**नित्ये नैष्फल्यमस्येत्यभिदधुरपरे; तेऽपि निर्धूतकल्पाः ॥ ८८ ॥**

---

पूर्वं— इत्याशङ्कायां, सद्दृष्टान्तमात्रं न ह्यफलमिति वा असद्दृष्टान्तमात्रं ह्यफलमिति वा... ... ... समीचीनस्य दृष्टान्तस्य अर्थसाधकत्वमस्ति, दृष्टान्ताभासस्यैव ह्यसाधकत्वम् इत्येवमर्थतया शंकाविशेषत्व(शंकाशेषत्व?) प्रतीतिं वारयितुं—न सदित्यन्तेनेत्युक्तम् ॥ ८७ ॥

श्री— निर्दुष्टो हेतुरप्यपेक्षित इति। स्वानुकूलदृष्टान्तमाह दृष्टौ चेति। प्रीतिकोपद्वारा फलजननेऽपि दृष्टान्ताः लोके दृश्यन्ते। तत् कतरपक्षस्वीकारः श्रेयानिति विमर्शे विधिनिषेधस्थलयोः प्रीतिकोपयोरपि शास्त्रे दृष्टत्वान्न तत्त्यागप्रसक्तिः। आहुतेरादित्यगमनादिवर्णनं काचित्कं वचनबलसिद्धं न सर्वत्र कल्पयितुं शक्यम्। पशुपुत्रराज्यादिक्षिप्रलाभस्थले तस्य दुरुपपादत्वात्। तुरीयपादारम्भे शिष्टो चेत्यत्र दृष्टौ चेति पाठविमर्शनमपि रुचिरम्; अस्य तृतीयपादोक्तलौकिकप्रीतिकोपविषयकत्वात्। पश्चादेव अत इति दार्ष्टान्तिकारम्भात्। त्यक्तिरिति। एवमिष्टे सत्यपि, दृष्टे संभवति अदृष्टकल्पनाया अन्याय्यत्वात् यत्र विधीनां तावन्मात्रनिर्वाह्यत्वम्, तत्रांशे परं समीची एतत्त्यक्तिरस्तु चेत्यर्थः। वाकारेण दृष्टार्थेषु अङ्गविधिष्वपि नियमादृष्टं नियतमिति शाप्यते। अत्र अन्यथेति, स्यादिति च पूरयित्वा वृत्त्यनुसारेण अर्थान्तरमपि सुवचम्—एवं श्रुतयोः प्रीतिकोपयोरप्यनुपगतौ त्वदिष्टप्रामाणिकार्थान्तरत्यक्तिरपि स्यादिति। अतः 'अपियांशे' इत्यत्र अन्यथा स्यादिति पाठो वा पाठान्तरं वा स्यादपि ॥

एवं देवताप्रीतेर्द्वारत्वं साधितम्। अस्तु तर्ह्यस्या एव लिङर्थत्वमिति प्राभाकरच्छायया स्वतः शंकोन्मेषे ८९ श्लोकेन तत्परिजिहीर्षया अदृष्टवाच्यत्ववादिप्राभाकरपक्षं बहुभिः श्लोकैः प्रत्याख्याति प्रध्वस्तमिति। ८० श्लोके एतत्प्रस्तावमात्रम्। अत्रैव सर्वं विशदम्। एवं प्राभाकरा आहुः—कालान्तरे भवितुः=जायमानस्य फलस्य, प्रागेव प्रध्वस्तत्वात् तत्काले कर्माविद्यमानं साधकं न भवति। फलासाधने च कर्मणि फलकामो नियोक्तुं न शक्यते इति नियोज्यान्वययोग्यमपूर्वं लिङर्थः। तस्य फलपर्यन्तस्थायित्वात् साधनत्वं नियोज्यान्वययोग्यत्वञ्च। अस्यापूर्वस्य कृतिपरमोद्देश्यत्वं प्राधान्यमपि तदिष्टम्। अत एव नित्यादिस्थले फलाभावेऽपि नापूर्वसिद्धिः। तर्हि कामाधिकारेऽपि फलं मा भूदिति चेत्, तत्राह फलेति। स्वर्गकाम इत्यादिश्रवणात् फलजनकत्वमपि तस्येष्यते। स्वार्थमेव गृहीतस्य भृत्यस्य राज्ञा प्रीत्या यथा पोषणं क्रियते तथा स्वसक्तो नियोज्यः स्वयमेवापूर्वेण स्वर्गादि-

**अर्थापत्त्या मिते चेत्, न गुरुमतमिदं ; मन्यसे तत् तथा चेत्,**
**कल्प्येत द्वारमात्रं तदिति न खलु तद्वाच्यभावादि कल्प्यम् ॥ ९० ॥**

एवं प्राधान्यं निरस्य, अपूर्वे लिङादेर्व्युत्पत्तिमपि निराकरोति **व्युत्पत्तिरिति।** अयमत्र विकल्पः—किमज्ञातेऽपूर्वे लिङादेर्व्युत्पत्तिः, उत ज्ञाते ? न तावत् अज्ञाते ; व्याघातात्। ज्ञाते चेत्, किं लिङैव ज्ञाते उतान्यज्ञाते ? नाद्यः, अन्योन्याश्रयात्। तदिदमाह **मिथःसंश्रयादिरिति।** ज्ञाते च व्युत्पत्तिः, व्युत्पन्ने चाभिधानम्, अभिधानाच्च ज्ञानमिति चक्रकम् **आदिपदार्थः।** अन्यैर्ज्ञातत्वे, किमन्यत्? अनुभूतिः, स्मृतिर्वा। न तावत् अनुभूतिः ; प्रमाणान्तरागोचरत्वादपूर्वस्येत्याह **नान्यैरत्रानुभूतिरिति।** अनुभूतिपरतन्त्रत्वात् स्मृतिरपि नास्तीत्याह **स्मृतिरपीति।** तर्हि विमर्शज्ञानेन सिध्यतीति चेत्, तच्च नेत्याह **न चेति।** अनुभूतिस्मृतिव्यतिरेकेण विमर्शस्य उपपादयितुमशक्यत्वादित्यर्थः। तर्हि अर्थापत्त्या प्रमितमिति पक्षान्तरमनुवदति **अर्थापत्त्येति।** तन्निराकरोति **न गुरुमतमिदमिति।** कल्प्यापूर्ववादिनः **कौमारिला** एव ॥ तर्हि तन्मतमेवानुसराम इति पराभिप्रायमनुवदति **मन्यस इति।** निराचष्टे **कल्प्येतेति। कुमारिलमतानुसारे** कल्प्यापूर्वमेव स्वीकृतं स्यात्। तथाच वाच्यापूर्वसमर्थनाहङ्कारवादो भज्येतेति भावः ॥

**इति अपूर्वविषयलिङादिव्युत्पत्त्यनुपपत्तिः ॥ ९० ॥**

(451) **देवप्रीत्यादिकं वा विदितमिह विधिप्रत्ययस्यास्तु वाच्यं ;**
**नात्रान्योन्याश्रयो, न श्रुतपरिहरणं, नापि क्लृप्तिर्गरिष्ठा।**
**प्राधान्यं स्याच्च किञ्चित् नृपभजननयात् ; सिद्धमेतच्च शास्त्रैः ;**
**इत्थं त्वर्थाविरोधेऽप्यतिगरिमभयान्नेष्यते शब्दशक्तिः ॥ ९१ ॥**

यागादिगतं कार्यत्वमेव लिङ्वाच्यम् ; तच्च इष्टस्य कृत्यधीनात्मलाभत्वमित्यादिकं **वेदार्थसंग्रहादौ** विस्तरेण व्याख्यातम्। तदतिरिक्तार्थवाच्यत्वकल्पनायामपि देवताप्रीत्यादिव्यतिरेकेण नान्यस्य कस्यचिदप्रामाणिकस्यापूर्वादिपदवाच्यस्य लिङ्वाच्यत्वं कल्पनीयमित्याह **देवेति।** अस्त्वित्यति अन्वाख्यवादत्वं

---

ळी. चेत्—लिङ् शक्तिज्ञानमुखेनापूर्वं ज्ञापयति, अपूर्वं ज्ञापयित्वा शक्तिं ग्राहयति इत्यन्योन्याश्रयः। स्वयमिति पक्षो निरस्तः; अन्येनेति पक्षं दूषयति नान्यैरिति। अन्यमुखाज्जन्यमपूर्वज्ञानमिदम् अनुभवो वा स्मृतिर्वा विमर्शो वा। कारणाभावात् किमपि न भवति। व इत्यस्य वोऽपीत्यर्थः। नः इति पाठो वा। विमर्शो ज्ञानं चेत्, सर्वपक्षेऽपि नातिरिक्त इति। ननु प्रत्यक्षानुमानलौकिकवैदिकशब्दा मा भूवन् ; यागे श्रुतस्वर्गसाधनत्वान्यथानुपपत्त्याऽपूर्वकल्पनात् कथमपूर्वानवगम इत्यत्राह अर्थापत्त्येति। एवं कल्पना हि भट्टोक्ता ; न तु गुरूक्ता ; तन्मते यागे फलसाधनत्वास्वीकारात्। स्वीक्रियते चेत्—काममपूर्वं कल्प्यताम्। एतावता किमिति, अपूर्वस्यैव वाच्यत्वम्, लोके तदभावात् गामानयेत्यादौ लिङां लाक्षणिकत्वम्, प्रथमगृहीतक्रियाकार्यार्थकत्वस्य वेदार्थवर्णनावसरे त्याग इत्यादिकं कल्प्यत इति॥ श्लोके सत्यपि वृत्तिविरोधे, 'स्मृतिरपि न, न वः' इति पाठं विमृशन्ति॥९०॥

देवेति। नियोगोऽपूर्वमिति प्राभाकरोक्तं मा भूत्। भवदुक्तदेवताप्रीतिरेव सोऽस्तु। यजेत स्वर्गकाम

द्योतयति । अतिरिक्तार्थवाच्यत्वेऽपि देव[ता]प्रीत्यादिकमेव वाच्यमस्त्वित्यर्थः । अस्मिन् पक्षे प्रागुक्ता दोषा न सन्तीत्याह **नास्मिन्निति** । तान् गणयति अन्योन्याश्रयः श्रुतहानम् अश्रुतकल्पनेति । किंच राज- सेवान्यायेन (राजप्रीतिप्राधान्यवत्) ईश्वरप्रीतिप्राधान्यं चास्मिन् पक्षे वक्तुं शक्यत इत्याह **प्राधान्यमिति** । न चैतत् केवलयुक्तिसिद्धम् ; शास्त्रेणापि सिद्धमिति निय(ग?)मयति **सिद्धमेतच्च शास्त्रैरिति** । अतः, "आप्तस्य हितकामस्य नियोगं केचिदूचिरे" इत्युक्तप्रकारेण ईश्वरनियोगादिकस्य (नियोगादिकस्यैव प्रीत्यादिकस्य ?) विधित्वे तस्य च लिङ्वाच्यत्वेऽपि नास्माकं कश्चिद्विरोधः । अथापि लिङ्वाच्यत्वे गौरवभयादिष्टस्य कृत्यधीनात्मलाभत्वातिरेकेणार्थान्तरे शब्दशक्तिर्नेष्यत इति निगमयति **इत्थमिति** ॥

**इति अपूर्वस्य वाच्यत्वेऽपि देवताप्रीत्याद्यनतिरेकः ॥ ९१ ॥**

**(152) स्वव्यापारं विशेष्ये(विशिष्य ?) स्वयमभिदधते नैव शब्दाः कदाचित् ;**
**श्रुत्वा लिङ्व्यापृतिं वा कुत इह यतनं स्वोपयोगाद्यबोधे ।**
**तस्मात्, 'आप्ताकूतत्वद्यतनवद् अभिधा स्वस्य वाच्या लिङादेः'**
**इत्युक्तिं वह्न्यधाममनिपत बुधास्तत्तरीमात्ररूपाम् ॥ ९२ ॥**

उक्तार्थस्थेम्ने **कौमारिलोक्तां** शब्दभावनाया लिङ्वाच्यतामुन्मूलयति **स्वव्यापारमिति** । लिङ्व्यापारः शब्दभावना । तामेवाभिदधाति लिङ्प्रत्ययः, लिङ्व्यापारप्रतिपत्तिरेव पुरुषं प्रवर्तयतीति भावना-

---

९१–इत्यत्र यजिना यागः प्रत्ययेनेयं प्रीतिः स्वर्गशब्देन फलञ्च क्रमेणोच्यन्ताम् । प्रीतेर्न प्रत्ययादेव प्रथमं ग्रहणम् ; किंतु अर्थवादादितः । वाच्यत्वं परं कल्पनीयमिति न दोषः । प्राधान्यमपूर्वस्योक्तमप्रसिद्धम् । प्रीतेः प्राधान्यं लोके राजादिविषये सेवकादिभिर्भाव्यत इति प्रसिद्धमेवेति पादत्रयार्थः । प्रीत्यादिक- मिति आदिपदेन निषेधस्थले निग्रहरूपाप्रीतिग्रहणम् । एवमप्येतदस्वीकारे कारणमाह इत्थन्त्विति । अर्थेऽनुपपत्त्यभावेऽपीत्थं नेष्यते । प्रीतेः लिङ्वाच्यत्वकल्पनेऽतीव गौरवापत्तेः । तथाहि—लोके गामानयेत्यादौ हितोपदेशे नोपदेष्टृप्रीतेः प्राधान्यम् । तत्र धात्वर्थः प्रीतिमद्वारीकृत्यैव फलं साधयतीति लौकिकलिङ्वाच्यं तावदन्यदेव ; प्रेरकस्याभिप्रायो वा, कर्तव्यत्वेन सामान्यरूपेण कार्यं वा लिङर्थ इति । वेदे कार्यस्य यागस्य साक्षात् साधनत्वायोगात् राजनियोगस्थल इव प्रीतेर्द्वारत्व- कल्पनेऽपि व्युत्पत्तिसिद्धार्थत्यागेन तस्याः विध्यर्थत्वे मानाभावात् । अनेकार्थकल्पने च गौरवात् । नियोज्याद्यनन्वयादिरूपदोषाभावाच्च । एवञ्च प्रीतेः वेदे परं पदवाच्यत्वं परिकल्प्य लौकिकतादृश- लिङादिस्थले कार्ये लक्षणेति स्वीकारे च गृहीतत्याग-अतिरिक्तस्वीकार-लक्षणादयो नाना दोषा इति ॥ कर्मशक्तिरेवापूर्वमिति कौमारिलपक्षः प्राङ्निरस्तः । इदानीं लिङर्थविषये तत्पक्षो व्युदस्यते स्येति । लिङर्थज्ञानात् प्रवृत्तिरित्यस्यानुभवसिद्धत्वात् यज्ज्ञानात् प्रवर्तते स लिङर्थ इति निश्चितम् । लोके प्रेरकपुरुषाशयविशेषः स इति संभवति; न वेदे; तस्यापौरुषेयत्वात् । तस्मात् स प्रवर्तको धर्मः कः किंनिष्ठ इति विमर्शे, लिङ् मां प्रवर्तयतीति व्यवहारात् लिङ्निष्ठ एव व्यापारोऽस्तु प्रवृत्ति- रूपार्थभावनाभिधायकत्वरूपः । इयमभिधैव स्वस्य = अभिधाश्रयस्य लिङादेरर्थ इति वार्तिकादेव ज्ञायते, "अभिधाभावनामाहुरन्यामेव लिङादयः" इति । प्रवृत्त्यभिधानरूपस्य व्यापारस्य लिङ्निष्ठत्वं प्रागेव सिद्धम् । वाच्यत्वं परं कल्प्यते । लिङ्गताभिधारूपशक्तिज्ञानात् प्रवृत्तिबोधः, ततः प्रवृत्तिरिति अभिधायाः प्रवर्तकत्वमप्यस्तीति अभिधाया आप्ताकूतत्वद्यतनत्वात् वाच्यत्वं परं कल्प्यतामिति

एवं कल्प्यापूर्वपक्षं निराकृत्य वाच्यापूर्वपक्षेऽपि **प्राभाकरोक्ते** दूषणं तुल्यमित्यतिदिशति **प्रध्वस्त**मिति। इत्थं किल वाच्यापूर्ववादिनामाशयः—चिरध्वस्तं किल कर्म कालान्तरभावि फलसाधनं न भवति। तत् लिङादेर्वाच्योऽर्थः कालान्तरभाविफलसाधकं स्थायिकार्यमपूर्वं भवितुमर्हति। इत्थं न यदि, स्वर्गकामी नियोज्यः कथमस्मिन् वाक्येऽन्वयमर्हति? अन्विताभिधानं हि वाक्यकृत्यम्; न खल्वनन्वितमर्थं कदाचिदपि वाक्यमभिधत्ते। तच्चापूर्वं स्वप्रधानम्; न पुनः **कौमारिलकल्पनायामिव द्वारमात्रम्**। तच्च भृत्यपोषणन्यायेन नियोज्य(ज्ये?)प्रसिद्ध्यै फलजनकमपि स्यात्। राजा हि स्वकार्यनिर्वाहाय भृत्यान् पोषयति; एवमपूर्वमपि स्वप्रसिद्ध्यै स्वर्गादिकं नियोज्यफलं प्रयच्छति। न च वाच्यं कामाधिकारे अपूर्वमस्तु, नित्ये फलाभावादपूर्वं मा भूदिति; एकत्र निर्णीतस्य शास्त्रार्थस्यान्यत्राप्यविशेषात्। कामाधिकारे लिङ्वाच्यतया स्वप्राधान्येनापूर्वे निर्णीते, नित्ये फलाभावेऽपि तदेवापूर्वं लिङ्वाच्यं स्यात्। अन्यथा लिङो वैयर्थ्यं स्यात्; अर्थान्तरकल्पनेना(ने वाऽ?)नुभूतार्था[न्तरा]भावेन वैरूप्यं स्यादिति। अस्मिन्मते विशेषेण दूष्याभावादेतेऽपि पूर्वोक्तेन कल्पेन निर्धूता इत्याह त इति। तुल्यं खल्वेतेषां श्रुतदेवताप्रीत्यादिहानम्। कल्पनागौरवं च तुल्यमिति (वश्चेति) भावः॥ **इति वाच्यापूर्वपक्षेऽपि उक्तदूषणातिदेशः॥८८**

**(449) क्ल्प्युद्देश्यं सुखादि स्वत इह; न परं स्यादनन्यार्थवेद्यं;**
**फलमिश्वास्यान्य(श्चान्यस्य) हेतोः; अपिच परिहृतं तत्परत्वं श्रुतीनाम्।**

---

पु°- 'फलमिश्चास्यान्यहेतोः' इत्येतत् अस्य अपूर्वस्य क्लृप्तिः कल्पनम्, अन्यस्य स्वर्गादेः हेतोः
टी- संपन्नः क्रियते तस्य प्रसिद्ध्यै-प्रकर्षेण संपन्नत्वाय। यद्वा वृत्तौ स्वप्रसिद्ध्यै इति प्रयोगात् नियोज्ये इति सप्तम्यन्तं स्यात्। स्वप्रसिद्ध्यै नियोज्ये पुंसि फलजनकमित्यन्वयः। तदिदमपूर्वानुग्रहकार्यम्। अत एव फलं साध्यभूतापूर्वविवृद्धिमात्रमिति तदाशयः। तर्हि नित्येऽपि फलं जनयत्विति चेत्—वचनाभावान्न तत्र तदिष्टिरिति। ते प्राभाकरा अपरे मीमांसकाः। तेऽपि निर्धूतकल्पाः=प्रायो निर्धूताः पूर्वकल्पनिरसनेनैव। अथवा निर्धूतः कल्पः=पक्षो येषां ते निर्धूतकल्पाः। किञ्च ते स्वयमेव स्ववाक्येन निर्धूता इति। तथा हि यागस्य फलसाधनत्वायोगात् तत्साधनत्वेनापूर्वं साधयन्त एव, अपूर्वस्य तस्य प्राधान्यं परमोद्देश्यत्वमेवेति किं फलेन; अथापि फलसिद्धिरपूर्वकृतोऽनुग्रह एवेति व्याहतमनन्वितञ्चोपन्यस्यन्ति। व्यापारेण व्यापारिणो नान्यथासिद्धिरिति स्थिते यागस्य फलसाधनत्वं नैवेति तदुक्तिरप्ययुक्ता। कर्मणां साधनत्वपरश्रुतिविरोधश्च। स्वर्गमेव कामयमानस्य तदतिरिक्ते अपूर्वरूपोद्देश्यान्तरेऽन्वयायोगश्च। अपूर्वस्य स्वत एवोद्देश्यत्वम् अनुग्रहबुद्ध्या स्वर्गसाधकत्वमित्यादिकमपूर्वमेव चेतनसार्वभौममुद्दिश्य ते एव वक्तुमर्हन्ति। अतस्ते निर्धूताः। इदमत्र विमृश्यते-कर्मणां फलसाधनत्वं पुरुषप्ररोचनायाधिकारिविशेषे भगवता स्वीकृतम्। सात्त्विकत्यागपुरस्सरं केवलभगवत्प्रीतये तदनुष्ठानमेव भगवदिष्टम्। अतः प्रीतिरेव परमोद्देश्येति मुख्यशास्त्रार्थं श्रुतमयथावद् धृत्वा तत् परमोद्देश्यत्वं, प्रीतिपक्षं परित्यज्य निरीश्वरवादिन एते स्वाभिमतेऽपूर्वे आरोपयामासुः। भगवत्प्रीतिः कर्तुरपेक्षाविरहेऽपि योगक्षेमं वक्ष्यतीतीदमपि च स्वकल्पितेऽपूर्वे समघटयन्निति। अस्तु तावत्। विशिष्य चानन्तरश्लोकाभ्यामयं खण्ड्यत एव पक्षः॥ ८८॥

अपूर्वकल्पनस्य भट्टप्रभाकरोभयसंमतत्वात् एकनिर्धूननेनापरनिर्धूननं सिद्धमित्युक्तम्। अथ प्राभाकरोक्तमपूर्वस्य प्राधान्यं वाच्यत्वञ्च श्लोकद्वयेन निरस्यति क्लृप्तीति। प्राधान्यनिरासे नित्यकर्म-

**निरये चापूर्वतोऽन्यत् फलमनघगिरः ससरुः ; दुस्त्यजं तत् ;**
**नो चेत् , स्व(अ?)स्मिन् नियोगायुतमपि निपुणान्नैव शक्तं नियोक्तुम् ॥८९॥**

एवं परोक्तं वाच्यापूर्वं निरस्य तत्प्राधान्यवचनमपि निराचष्टे कृत्युद्देश्यमिति । "कृतिसाध्यं प्रधानं यत् तत् कार्यमभिधीयते" इति यत् प्राधान्यमुच्यते प्राभाकरमतानुवर्तिभिः, तत् सुखादेरिति दर्शयति सुखादि स्वत इति । अतोऽपूर्वस्यानन्यार्थवेद्यत्वं न स्यादित्याह **न परं स्यादनन्यार्थवेद्यमिति** । तदेवोपपादयति फलसिद्धेति । कालान्तरभाविस्वर्गानुकूलतयैव ह्यपूर्वं परिकल्प्यते वाच्यापूर्ववादिभिरपि ॥ ननु कार्य एव वाक्यानां प्रामाण्यमुक्तम् ॥ अस्माभिरपि तत् परिहृतमित्याह अपिचेति । किंच नित्ये कर्मणि निष्फलत्वं त्वयाऽभिधीयते ; तच्चायुक्तम् , अपूर्वव्यतिरेकेण अकरणे प्रत्यवायपरिहार-उत्तरकर्माधिकारादिकं **फलमनघगिरः** मुनयः खलु ससरुः ; तच्च भवताऽपि दुस्त्यजमित्याह **दुस्त्यजं तदिति** । एवमनङ्गीकारे नित्ये कर्मणि नियोगस्य नियोगत्वमेव बंभज्येत, स्वयं प्रवर्तकत्वाभावादिति दर्शयति **नो चेदिति** । स्वयमसुखात्मकस्य नियोगस्य सुखादिहेतुभावेनैव प्रवर्तकत्वं संघटते । तद्धेतुत्वाभावे सहस्रमपि नियोगाः प्रवर्तयितुं न शक्नुवन्तीत्यर्थः ॥ **इति अपूर्वप्राधान्यभङ्गः** ॥ ८९ ॥

**स्वान्मिथस्संश्रयादेः ;**
**(450) व्युत्पत्तिश्चेल्लिङादेः स्वयमवगमिते (मनवगते), स्वान्मिथस्संश्रयादेः ;**
**नान्यैस्तानुभूतिः स्मृतिरपि ; न च व(न?)स्तद्गुणान्यो विमर्शः ।**

---

प्रभा— स्वर्गाद्यर्थम्—इत्येवमर्थतया व्याचष्टे—कालान्तरभावीति ॥ ८९ ॥ कृतिं प्रति उद्देश्यत्वमिति चेत्—यागोद्देशेन तदङ्गविधाने कृत्युद्देश्यत्वं यागेऽप्यस्ति । कृतिं प्रति स्वत एवोद्देश्यत्वं प्राधान्यम्, सुखादेरेव । परं= तदन्यत् अपूर्वादिकम् अन्यार्थत्वात् अनन्यार्थतया ज्ञेयं न भवतीति न तस्य परमोद्देश्यत्वम् । स्वदुक्तिव्याघातश्च ; अस्य =अपूर्वस्य फलसिद्धिः त्वया क्रियमाणा अन्यहेतोः= क्षणिकस्य यागस्य स्वर्गादिसुखसाधनत्वायोगात् तत्साधनत्वसंपत्तये । तथा च कथमनन्यार्थत्वम् । अयं पाठः प्राच्यः। ननु श्रुतिषु विधिवाक्यानामेव प्राधान्यम्। विधिवाक्यार्थे चापूर्वस्यैव प्राधान्यम्। न च तत् स्वर्गस्यैवेति वाच्यम् ; नित्यनैमित्तिकस्थले फलाभावेन सर्वविध्यनुगतस्यैव प्रधानतया वक्तव्यत्वादित्यत्राह अपि चेति । अपूर्वस्यैव दूषितत्वात् तत्र तात्पर्यं न संभवतीति भावः । न च नित्यकर्मणां नैष्फल्यम् ; यतः अनघगिरः= निर्दुष्टवाचः पराशरादयः प्राजापत्यं गृहस्थानामित्यादिना नित्यवर्णाश्रमधर्माणां पृथक् पृथक् फलं विष्णुपुराणादौ स्मृतवन्तः । तथा भवदिष्टं प्रत्यवायपरिहारादिकमपि ससरुः। तच्च दुस्त्यजम्। अपूर्वकल्पकेनापि फलसाधनत्वमुखेनैव तस्य कल्प्यत्वात् । प्रत्यवायपरिहारमात्रफलकत्वेऽपि फलापलापासंभवात् । पापक्षयरूपफलस्य, 'धर्मेण पापमपनुदति' इति श्रुतिप्रतिपन्नतया त्यागायोगाच्च । नो चेत्—अन्यथा, स्वस्मिन्= नित्यकर्मणि । अस्मिन्नित्येव वा पाठः। दशसहस्राण्यपि नियोगानाम्= अपूर्वाणाम्, निपुणनियोजने =प्रेक्षावतां प्रवर्तने न प्रभवन्ति । अनिपुणास्तु नियोगज्ञानाभावेऽपि परप्रेरणामात्रेणापि लोकवत् प्रवर्तन्ते ॥ ८९ ॥

अपूर्वस्य लिङादिवाच्यत्वं निरस्यति व्युत्पत्तिरिति । अपूर्वरूपार्थे व्युत्पत्तिः =शक्तिग्रहः तस्मिन् पूर्वं ज्ञात एव सुवचः । प्रथमतोऽपूर्वावगमः कथम् ? स्वयं= लिङादिनाऽवगमितेऽपूर्वे इति

वाक्यार्थवादिनः । अन्नोभयमपि न संघटते । न खलु शब्दाः कदाचिदपि स्वव्यापारं स्वयमेवाभिदधते । अभिधेयानुबन्धिनी खल्वभिधा ; अभिधेयाश्च घटादयः । एवं लिङभिधानमप्यभिप्रेतार्थानुबन्धित्वान्न स्वात्मानं विषयीकरोति । इत्थं लिङ्व्यापारस्वरूपप्रतीतिः प्रवृत्तिं न करोति । न हि लिङ्व्यापार इति बुद्ध्वा कश्चित् प्रयतते; स्वोपयोगादिबोध एव हि सर्वत्र प्रवर्तकः । इत्थमर्थतत्त्वं निष्कृष्य परोक्तप्रक्रिया परिहासमात्रपदमित्याह **तस्मा**दिति । 'आस्माकतत्तद्यतनकृत् अस्मदीयतत्तद्यागादिप्रयत्नरूपार्थभावनामुत्पादयति केवलं लिङभिधा **शब्दभावना**शब्दाभिधेया सस्य लिङादेर्वाच्या' इत्युक्तिं **बह्वर्यां** श्रुतहानाश्रुतकल्पनानैरर्थक्यादिबहुदोषदुष्टां बुधास्तरीमात्ररूपाममनिषत । अस्तरी परिहासः ॥

**इति शब्दभावनाया लिङादिवाच्यत्वभङ्गः ॥ ९२ ॥**

(458) **न स्यात् पुंसः प्रवृत्त्यै विदितमपि गिरा स्वेष्टहेतुत्वमात्रं**
**दुस्साधादावयोगात् ; अथ सहकुरुते साध्यतैकार्थयोगः ।**
**इत्थं शक्तिर्द्वये स्यात् ; गरिमहतमिदं ; किञ्चिदत्रार्थतश्चेत् ,**
**इष्टोपायत्वमर्थादुचितमिह ; ततः खण्डिता मण्डनोक्तिः ॥ ९३ ॥**

तर्हि मा भूत् शब्दभावना लिङर्थः, इष्टसाधनत्वमेवास्त्विति **मण्डनः** । तत्पक्षमपि प्रतिक्षिपति **न स्या**दिति । गिरा विदितमपि हीष्टसाधनत्वं पुरुषाणां प्रवृत्त्यै न भवत्येव । तत्र हेतुमाह **दुस्साधादावयोगा**दिति । न हि दुस्साधादाविष्टसाधनत्वं प्रतिपन्नमपि पुरुषं प्रवर्तयति ॥ तर्हि न केवलमिष्ट-

---

टी— पार्थसारथिमिश्रादयः । तन्निरस्यति स्वव्यापारमिति । यथा घटादिशब्दानां घटादिरेव वाच्यः; तदभिधायकत्वं तु शब्दधर्मः, न तु घटादिशब्दवाच्यम् । तथा प्रवृत्त्यभिधायकत्वं लिङादिप्रत्ययनिष्ठो धर्मः, प्रवृत्तिरेव वाच्या । अतः अभिधा न विशिष्य लिङादिवाच्या तन्निष्ठाभिधात्वात् । या यन्निष्ठाभिधा सा न तद्वाच्या यथा घटशब्दादिनिष्ठा घटादिविषयकाभिधा । अभिधाशब्दः अभिधारूपार्थाभिधायकः घटाद्यभिधावत् अभिधाविषयकाभिधारूपस्वनिष्ठधर्मवाचकोऽप्यस्तीति शंकापरिहाराय विशिष्येत्युक्तम् । श्लोके विशिष्येति पठनीयम् । विशेष्ये इति पदस्य तु कृत्यं न लक्ष्यते । इदमयुक्तम् । न हि अभिधादिलिङ्व्यापारज्ञानस्य प्रवृत्तेश्च कार्यकारणभावः लौकिकलिङ्प्रयोगे फलतोऽस्ति । प्रवृत्तिरपि न दृष्टा ॥ अतो यत्नं लिङ्व्यापारश्रवणसमानकर्तृकं तज्जमिति कुतः । किंतु स्वोपयोगादिज्ञानादेव । स्वोपयोगो नाम स्वेष्टसाधनत्वम् । आदिना कृतिसाध्यत्वग्रहणम् । अतोऽभिधापक्षापेक्षया इष्टसाधनत्वं विध्यर्थ इति कौमारिलेष्टमिति मतं मनोरमम् । अत एवोदयनाचार्य आह स्वाभिधापक्षं दूषयन्, "इष्टसाधनता तु स्यात्" इति । अमनिषतेति । मनु अवबोधने । तनादिगतः । लुङ् । उभयमपीति । अभिधायाः वाच्यत्वम् अभिधाज्ञानस्य प्रवर्तकत्वञ्चेत्यर्थः ॥ ९२ ॥

ननु तर्हि स्वोपयोगरूपमिष्टसाधनत्वमेव लिङाद्यर्थोऽस्तु इत्यत्राह न स्यादिति । गिरा = इदं ते इष्टसाधनमिति वाचा स्वेष्टसाधनत्वमात्रं यत्र वेद्यते, तत्र तावन्मात्रात् पुंसः प्रवृत्तिर्न स्यात् = न भवितुमर्हति । दुःसाधे = कृत्या साधयितुमशक्ये सुमेरुग्रहणादौ, सुसाधेऽपि सुरापानादौ तात्कालिकेष्टसाधनेऽपि प्रवृत्तेः अयोगात् = अभावात् । अथ चेत्—साध्यतया = कृतिसाध्यतया सह एकस्मिन्नर्थे योगः = सामानाधिकरण्यं सहकुरुते = इष्टसाधनत्वविशेषणीभवतीत्युच्यते, इत्थं सति कृतिसाध्यत्वमिष्टसाधनत्वञ्चेति धर्मद्वये वाच्यता भवतीति इदं गरिम्णा = गौरवाख्यदोषेण हतम्;

साधनत्वमस्तु प्रवृत्तिकारणम् , तस्य सहकुरुतां साध्यत्वमित्याशङ्कते अथेति । अत्रोत्तरम् इत्थमिति ।
इष्टसाधनत्वं साध्यत्वं चोभयमपि शब्दार्थ इति परिकल्पने गौरवं स्यादित्यर्थः। अत्र शङ्कते किंचिदिति ।
तर्हीष्टसाधनत्वमेवाऽस्त्वर्थम् , गौरवपरिहारार्थमिष्टसाधनत्वसाध्यत्वयोरन्यतरस्याऽऽर्थत्वं स्यादिति भावः ।
अन्तरङ्गं इष्टोपायत्वमिति । नेष्टसाधनत्वस्य शाब्दत्वसिद्धिरित्याह कार्यत्वं पुनरशाब्दमेव स्यादिति
खलु प्रवृत्तेरिष्टोपायत्वात् कार्यत्वम् ; अयमिष्टोपायः; अतः कार्यमिति कार्यबुद्ध्यैव प्रवर्तन्ते पुरुषा इति
लोकसिद्धमेतत् । अत्र खण्डिता मण्डनोक्तिः ॥ इति लिङादेरिष्टसाधनतार्थकत्वभङ्गः ॥९३॥

(451) धात्वर्थस्यैव रूपं किमपि हि कथयन्त्यत्र सर्वे लकारा
कर्तृव्यापारसाध्यं त्वभिदधति विधिप्रत्ययास्तु लिङाद्याः ।
वैघट्यं द्वारसिद्धिः प्रशमयति ; तथा सन्ति लोकोक्तिभेदाः
सिद्धं शब्दानुशिष्ट्या त्विदमुचितमिति स्थापितं भाष्यकारैः ॥ ९४ ॥

स्वपक्षे लिङाद्यर्थं निष्कृष्याऽऽचष्टे धात्वर्थस्येति । इयं खलु शब्दार्थनिर्णयकारणं विशिष्टप्रयोगो
व्याकरणं चेति । उभयमप्यस्मत्पक्षानुकूलम् । लडादयो लकारास्सर्वेऽपि धात्वर्थस्यैव वर्तमानत्वभूत
त्वादिकं किमपि रूपमभिदधति । एवं लिङादयोऽपि धात्वर्थस्यैव यागादेः कर्तृव्यापारसाध्यत्वमभि-
दधतीति समुचितमेतत् । ननु कथं कालान्तरभाविस्वर्गकामस्य चिरध्वस्तो यागः काम्यफलसाधनमिति
शङ्काऽवशिष्यते । तदपि [वैघट्य ?]देवताप्रीत्यादिद्वारसिद्धि प्रशमयतीत्याह वैघट्यमिति । अत्र चार्थो

---

ऽर्थी— निरस्तम् । उभयत्रैका शक्तिः, पृथक् शक्तिरिति पक्षद्वयमपि गौरवहतम् । शक्तिद्वये इति समस्त-
पाठो वृत्तिसंमत इव । नन्वेकमेव वाच्यम् ; अन्यत्तु अर्थात्सिद्धमिति चेत् तत्र विचारे क्रियमाणे
इष्टोपायत्वज्ञानवताऽपि मया यदि कृत्या न साध्यते, तर्हि-नेष्टसिद्धिरिति कृतिसाध्यत्वं ज्ञात्वैव प्रवर्तते।
इष्टोपायत्वज्ञानात् पूर्वं तु कृतिसाध्यं न वेति विचार एव न भवतीति कृतिसाध्यत्वज्ञानं प्रवृत्त्यव्यवहित-
पूर्वं भवत् अन्तरङ्गमिति इष्टसाधनत्वस्यैवार्थात् सिद्धिः । अतो मण्डनमतमपि खण्डनं प्रापदिति ॥९३॥

एवं कृतिसाध्यत्वार्थकत्वपरिशोधनं कृतम् । साम्प्रदायिकमपीदमेवेत्याह धात्विति । लडादयो
लकाराः वर्तमानत्वं भूतत्वं भविष्यत्त्वमिति धात्वर्थगतधर्मवाचका एव दृष्टा इति, लिङादेरपि अभिधा,
आत्ताभिप्राय इत्याद्यर्थापेक्षया धात्वर्थगतधर्मपरत्वमेव युक्तम् । प्रथमपादेन सर्वो धूमवान् अग्नि-
मानितिवत् सर्वो लकारः धात्वर्थगतधर्मवाचीति व्याप्तिप्रदर्शनम् । सर्वपदमाशीर्लिङोऽपि संग्रहाय
धूमवाक्ये सर्वपदस्य पक्षातिरिक्तपरत्ववत् अत्रापि सर्वपदं विधिप्रत्ययातिरिक्तपरं स्वरसत
एव भवति । लकारा इत्यनेन लकारत्वं हेतुरिति ज्ञाप्यते । तत्रोक्तयुक्त्या कर्तृव्यापारसाध्यत्व-
मेवाभिधेयं भवति । श्लोके साध्यस्य भावः साध्यमिति साध्यत्वरूपार्थलाभः । आशीर्लिङ्वारणाय
विधीति । एवं कृतिसाध्यत्वबोधनादिष्टसाधनत्वं धात्वर्थे आक्षिप्तम् । तत्र कालान्तरभावि-
स्वर्गसाधनत्वायोगरूपस्य वैघट्यस्य देवप्रीतिरूपद्वारसिद्ध्या परिहारः । इदं ते इष्टसाधनम्,
तस्मात् कुरु इत्येवं इष्टसाधनत्वोक्त्या सहप्रयोगादपि इष्टसाधनत्वातिरिक्त एव विध्यर्थः ।
प्रीतिद्वारके राजसेवादावप्येवं प्रयोगो लोके अस्ति, चिरकालसाध्यलौकिकफलविषयेऽपि ।
तथा "विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्" इति अनेकार्थप्रदर्शिना सूत्रकारेण सर्वानु-
गतैकार्थवाचित्वज्ञापनात् तत् कृतिसाध्यत्वमेवेति अर्थतः सिध्यति । अत एव नित्यकर्मादौ इष्ट-

राजसेवादौ लोकोक्तिसंवादवानित्याह तथेति । अयमर्थो न लोकप्रसिद्धिमात्रपरिग्राह्यः, व्याकरणानुकूलत्वाद्विशेषेण परिग्राह्य इति भाष्यसंमतिमाचष्टे सिद्धमिति ॥ ९४ ॥

(455) इष्टस्वर्गादिकस्य त्वितरदपि यदा साध्यमुक्तं तदाऽर्थात्
सिद्धं तत्साधनत्वं ; सुगममिह तदा(था ?)ऽनर्थकृत्त्वं निषेध्ये ।
नित्यत्वेनोपदिष्टेष्वकरणमपि तत्तुल्यमेवार्थलब्धं ;
सामान्यात् प्राप्तमेतत् ; फलनियतिरपि व्यज्यते तत्तदुक्त्या ॥ ९५ ॥

ननु स्वर्गकामस्य यागादिः साध्यतया विधीयत इति हि भवतोच्यते । [तर्हि ?] यागादेरिष्टसाधनत्वं साक्षान्नोच्यते । कथं तर्हि यागादेरिष्टसाधनत्वसिद्धिः ; कथं वा [पुन ]अपगोरणादेरनिष्टसाधनत्वसिद्धिः इत्याशङ्क्य परिहरति इष्टेति । अर्थात्सिद्धं तत्साधनत्वम्, शाब्दं कार्यत्वम्, आर्थमिष्टसाधनत्वम् । एवमपगोरणादावपि शाब्दमकार्यत्वम्, आर्थं निषिध्यमानस्यानिष्टसाधनत्वमिति विभागः । एवमकृत्यकरणेऽनर्थकृत्त्वमुक्तम् । तथा कृत्याकरणेऽप्यनर्थकृत्त्वप्रतिपत्तिरार्थतुल्येत्याह नित्यत्वेनेति । नित्यस्य कर्तव्यत्वं शाब्दम् ; नित्याकरणस्यानर्थकृत्त्वमार्थमिति अत्रापि विभागः । एतत् सर्वं सामान्येनार्थान्तरवर्णनम् ।

---

आ- कथं वाऽपगोरणादेरिति । 'नापगुरेत' इति निषेधविधेः नञ्युक्तलिङ्प्रत्ययेन धात्वर्थस्याकार्यत्वकथने तस्यानिष्टसाधनत्वं कथं लभ्यत इत्यर्थः । आर्थमिष्टसाधनत्वमिति । यथा, 'आरोग्यकामो हरीतकीभक्षणं कुर्यात्' इत्युक्ते हरीतकीभक्षणस्यारोग्यकामकार्यतयाऽभिहितस्यारोग्यहेतुत्वमर्थात् सिद्ध्यति, तथा स्वर्गादिकामकार्यतया यागादेरिष्टस्वर्गादिसाधनत्वमर्थात् सिद्ध्यतीत्यर्थः ॥

श्री- साधनत्वमस्ति न चेति विचारोऽपि । इष्टसाधनत्वस्यैव शब्दवाच्यत्वे इष्टाभावपक्षोत्थित्ययोगात् । एवं विमृश्य श्रीभाष्ये प्रभाकरसूचितं कृतिसाध्यत्वमेवं समादृतमिति ॥ विशिष्टेति विशिष्टाः अतिशयितवैदुष्याः ॥ ९४ ॥

इष्टसाधनत्वं न विध्यर्थश्चेत्, स्वर्गसाधनं याग इत्यत्र शास्त्रं प्रमाणं न भवेदिति शंकायाम्— श्रुतार्थापत्तिलभ्यस्यापि श्रौतत्वान्न दोषः । इष्टसाधनत्वस्य साक्षादर्थत्वे पूर्वोक्तदोषवत् निषेधस्थले अनिष्टसाधनत्वे लक्षणा स्वीकर्तव्या ; इष्टसाधनत्वाभावरूपार्थस्य बाधितत्वात् । कर्तव्यत्वस्य विध्यर्थत्वे तु, कर्तव्यत्वाभावः सुरापानादावुच्येत इति निषेधवाक्यार्थसामञ्जस्यमित्याशयेनाह इष्टेति । स्वर्गादिविषयककामनावान् यागादि कुर्यात् इति स्वर्गादिकामनायां स्वर्गादौ कार्ये सति तत् विहाय तदितरस्य कार्यत्वश्रावणं तत्र यागादेः स्वर्गादिसाधनत्वादेव । यद्विषयककामनाप्रयोज्यकृतिविषयत्वं यस्य तदितरस्य, तत्साधनत्वं तस्येति व्याप्तिदर्शनात् । अत इष्टसाधनत्वं सुगमम् । एवञ्च निषेधस्थलेऽपि न लक्षणा । कर्तव्यत्वाभाव एवार्थः । अनर्थकृत्त्वमनिष्टसाधनत्वं ततोऽनुमीयते । यत् कर्तुमहं नाकर्तव्यमुच्यते, तदनिष्टसाधनमिति व्याप्तिदर्शनात् । अन्यदप्यौचित्यमाह नित्यत्वेनेति । 'यावज्जीवं जुहोति' इत्यादिविधिस्थले इष्टसाधनत्वं नास्ति ; अकरणे प्रत्यवायमात्रमिति प्राभाकराः । इष्टसाधनत्वमस्तीति भाट्टाः सिद्धान्तिनश्च । इष्टञ्च नत् पापक्षयमार्गं वा अन्यदपि वेत्यन्यदेतत् । एवं सत्यपि इष्टे, तदपेक्षां विनैवाकरणे प्रत्यवायभियैव प्रवृत्तिः स्वेष्टा । अतः प्रवृत्तिनिर्वाहार्थमिष्टस्य तस्य एतावुद्देश्यत्वेनान्वय इति निर्बन्धनमयुक्तम् । प्रत्यवायपरिहारस्यैव फलत्वमिति कश्चित् पक्षः । तत्परिहारो नाम प्रत्यवायानुत्पादनं प्रत्यवायप्रागभावपरिरक्षणमिति । प्रकारान्तरे तु नित्यस्थले अनुष्ठानविधानं नाम अननुष्ठानवर्जनम् । यावज्जीवं न न जुहोति, जुहुयादेवेति

इदमेतत्फलं ददाति ; एतस्य चानुष्ठाने सति अयमर्थः इत्यादिविशेषः तत्तच्छास्त्रोक्त्याऽवगन्तव्य इति
इति लिङाद्यर्थनिष्कर्षः ॥ ९५ ॥
दर्शयति फलनियतिरिति ॥

(456) सन्ति ह्यन्ये लिङर्था। कथयितृपुरुषाकूतभेदास्तथाऽऽप्ता-
स्याप्तस्याऽऽहुर्नियोगं हितमभिलषितं (षता ?) केऽपि भाष्याशयस्थम् ।
शास्त्राज्ञाचोदनात्वं श्रुतिषु विधिपदैरन्वितत्वं नञोऽपि
स्वादेशे चावधूते भवति समुचितः प्रत्यवायः स्वतन्त्रात् ॥ ९६ ॥

इष्टस्य कृत्यधीनात्मलाभत्वमिति स्वपक्षे लिङ्वाच्यत्वं दर्शयित्वा स्वपक्षनिष्ठानामेव केषांचिदीश्वर-
नियोगरूपविधिपक्षं विविच्य दर्शयति सन्ति हीति। "विधिनिमन्त्रण" इत्यादौ विधिः(?) प्रेषणमित्यादयः
कथयितृपुरुषाभिप्रायभेदा। लिङर्थत्वेन प्रतिपादिताः। तथाऽऽप्तस्याप्तस्य हितकामस्य नियोग एव विधि-
रिति भाष्यकाराभिप्राय इति केचित् मन्यन्ते । तच्च वयं न प्रतिक्षिपामः ; 'श्रुतिस्मृती ममैवाज्ञा'
इति, 'शास्ता विष्णुरशेषस्य' इति भगवदाज्ञारूपत्वं चोदनाया युज्यते । अतः(ल) श्रुतिषु विधिपदै-
रन्वितत्वं शासितुराज्ञाचोदनारूपत्वमेव। नञोऽपि=नञ्प्रयोगाच्च[।] भगवदाज्ञायामवधूतायां स्वतन्त्रात्

वी–अवधारणात्। अननुष्ठानाकर्तव्यत्वं शास्त्रार्थः। अननुष्ठानस्यानर्थकृत्त्वं ततोऽनुमेयं सुरापानादि
निषेधस्थल इवेति। तथाच अकरणमपि तत्तुल्यं=निषेधान्तरवत् अनर्थकृत्त्वेनार्थाल्लिब्धमिति तृतीय-
पादार्थः। एवञ्च तत्तन्निषेधविषयकं तत्तदनिष्टफलविशेषप्रदर्शि श्रुतिस्मृत्यादिशास्त्रं नात्यन्ता-
ज्ञातार्थसमर्पकम्। किंत्वेवं सामान्यतः सिद्धे अनर्थे, अस्यास्येदमिदं फलमिति विशेषावगम एव
तत्तद्वाक्यात्। विधिस्थले फलविशेषस्य प्रवृत्तिं प्रति ज्ञेयत्वेऽपि निषेधस्थले निवृत्तिं प्रति बलव-
दनर्थविषयकसामान्यज्ञानमप्यलमित्याशयेन सर्वत्र विशेषानिर्देशः। अवगोरणादिस्थले शतवर्षयात-
नानुभवादिफलनिर्देशस्तु काचित्कः सर्वथानर्थस्य बलवत्त्वज्ञापनार्थ इति ॥ ९५ ॥

एवं भाष्यकण्ठोक्तं कर्तव्यत्वपक्षमुपपाद्य, आप्ताशयो लिङर्थ इति भाष्याशयदर्शिनां मतमप्याह
सन्तीति। विधिनिमन्त्रणेति पाणिनिसूत्रे शाब्दिकैरुक्तम्—विधिः प्रवर्तना निमन्त्रणम्, आवश्यक-
श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम्, आमन्त्रणं कामचारानुज्ञा, अधीष्टः सत्कारपूर्वकव्यापारः,
संप्रश्नः=विचार्य निर्धारणीयविषयक आशयः, प्रार्थना याच्ञा इति। उदयनाचार्यैश्च, 'यदनु-
विधाने क्षोभात् बिभेति, सा वक्तुरिच्छा विधिः, श्रोतुः पूजासंमानव्यञ्जिका अध्येषणा, वारणाभाव-
व्यञ्जिका अनुज्ञा, अभिधानप्रयोजना संप्रश्नः, लाभेच्छा प्रार्थना, शुभाशंसनम् आशीः' इति सर्व-
स्येच्छारूपत्वमुक्तम्। अतः प्रथमे विधिरूपार्थे विवादेऽपि अन्येषामाशयरूपत्वं सर्वसंमतमिति
साहचर्यात् विधिरप्याशय एव। द्वितीयपादे हितमभिलपितमित्यशुद्धम्। हितमभिलषत इति
शोध्यम्। "आप्तस्य हितकामस्य नियोगम्" इति वचनगतं हि हितकामस्येति पदमत्रानूद्यते। अस्य
नियोगमित्यत्रान्वयः। अन्यथा अनन्वयाच्च। आप्तेच्छारूपार्थसाधकानि हेत्वन्तराणि त्रीण्याह
शास्त्रेति। प्रथमपादस्थं हीत्येतत् अत्र त्रिष्वनुषज्यते। श्रुतिषु शास्त्राज्ञाचोदनारूपत्वं ह्यस्ति।
शास्त्रत्वमाज्ञात्वं चोदनात्वञ्चेत्यर्थः। चोदनेति क्रियायाः प्रवर्तकं वाक्यमाहुरिति शाबरं चोदनासूत्रे
सेश्वरमीमांसायां प्रेरकपुरुषस्थापकत्वेनाऽऽचार्यैरुपपादितम्। अन्यत् स्पष्टम्। विधिशब्दैर्लिङादि-
भिर्नञः निषेधस्थले अन्वितत्वं हि आप्तेच्छापक्ष एव, न तु पक्षान्तरे इत्युपपादितमुदयनाचार्यैः।

भगवन्तमसमुचि प्रत्यवायो भवतीत्युच्यते । तदिदमाह नञोऽपीति ॥

इति वक्तृनियोगस्य लिङादिवाच्यत्वपक्षः ॥ इति लिङर्थविचारसमाप्तिः ॥ ९६ ॥

---

श्री — तृतीयस्तु—स्वादेशे=स्वतन्त्रकर्तृकनिर्देशे विधिरूपे निषेधरूपे च नास्तिकैस्तिरस्कृते सति स्वतन्त्रात्=आज्ञापयितृपुरुषात् शिक्षा भवतीति हि स्वपक्षमवगम्येनाऽऽप्तेच्छारूपार्थकत्वपक्षे । अतो नियोगमेव भाष्याशयस्थमाहुरिति श्लोकार्थः । वृत्तिदर्शितोऽर्थोऽपि भाव्यः । तत्रापि नञोऽपि= नञ्प्रयोगाच्चेति वाक्यसमाप्तिरेवास्तु । तदोदयनोक्तार्थविवक्षा । उपरि विधिनिषेधोभयसाधारणम् । 'अत्रावसरे आचार्यवृत्तिस्तत्रतत्र नष्टा स्यात्; पश्चात्तनैः पूरिता ततो बहुत्र व्याख्यान्यथाभावादिकमित्यस्मदाशयः । अत एव वृत्तिसमाप्तौ एकोऽपि श्लोको नास्ति । आस्तामेतत् ॥

अत्रेदं बोध्यम्—प्रवर्तना नाम यद्विषयकज्ञानं प्रवृत्तिहेतुस्तदिति तार्किकशाब्दिकमीमांसकनिष्कृष्टम् । तत्रेष्टसाधनत्वं प्रागेव निरस्तम् । अतः कृतिसाध्यत्वमवशिष्यते । "विधिनिमन्त्रण" इत्यादिना प्रैषाशयवर्णनं तु अनेकोपाधिकथनमिति प्रकरणपञ्चिकायामेवोक्तम् । तथाच तेऽर्थाः कृतिसाध्यताप्रयोजकाः कृतिसाध्यतायास्तत्प्रयोज्यायाः परिचायकतयोक्ताः । यथा हि लकारान्तरेषु धात्वर्थगतवर्तमानत्वातीतत्वादेव उच्यते—तथाऽत्रापि लिङादौ धात्वर्थगतकृतिसाध्यत्वकथनमेव हि न्याय्यम् । न तु आशयान्यार्थवर्णनमिति । आप्ताभिप्राय एव विध्यर्थ इति पक्षे तु—एवं भाष्यार्थः—ननु कृतिसाध्यत्वं कथमर्थः ? विधिनिमन्त्रणादिसाधारण आशयविशेषो हि शब्दानुशासनसिद्ध इति, तत्राह—शब्दानुशासनसिद्धमेवेति । यत् शब्दानुशासनसिद्धमाशयरूपं वाच्यम्, तदेवेदमिति । अयं च अभेदनिर्देश औपचारिकः । आशयविशेषप्रयोज्यः कृतिसाध्यत्वविशेषः लिङर्थ इत्याशयेनैव कृतिसाध्यत्वविषयक आशयविशेषो लिङर्थ इत्यभिप्रायेणापि स्यादिदमिति पक्षद्वयमुक्तं न्यायपरिशुद्धौ, 'अतो मूलस्कन्धीकृतनियोगम्' इत्यादिना । मूलस्कन्धीकृत इत्यनेन नियोगस्यार्थत्वं नास्ति, किन्तु तत्प्रयोज्यं यत् कृतिसाध्यत्वम्-तादृशविशेषोऽर्थ इति प्रथमपक्ष उच्यते । द्वितीयपक्षः कृतिसाध्यत्वविषयकप्रेषणमिति । तृतीयपक्षोऽप्युक्तः, 'अन्यथाऽपि प्रेषणमन्तर्गतमेवेत्यपरे" इति । तस्यायमाशयः—यावल्लिङर्थो न ज्ञायते, तावत् तत्पर्यायशब्दप्रत्ययघटितवाक्यस्यार्थो न ज्ञायत इति, कृतिसाध्यत्वमर्थ इति दुर्वचम् । तद्घटकशब्दार्थस्य निरूप्यत्वात् । न चात्र प्रत्ययार्थो न विवक्षितः, अतः कृतिभावभावित्वमेव तदिति वाच्यम् ; कृतिसद्भावभावित्वज्ञानमात्रेणाप्रवृत्तेः । भाषितं हि—"यदि स्वप्रयत्नात् ऋते तत्सिद्धिः प्रतीता, ततः प्रयत्नेच्छुः प्रवर्तते' इति । न च कृतिभाव एव भावीत्यवधारणगर्भत्वात् कृतिजन्यत्वं भाष्याभिमतमेवेदमिति वाच्यम्—अस्य पचति-पाकं करोति' इति विवरणानुसारात् आख्यातार्थकर्तृविशेषणभूतकृत्यन्वयबलात् सर्वाख्यातत एव लाभात् लिङादौ विशेषाभावात् । न च आख्यातसामान्यात् कृतिविषयत्वस्य लाभः, न तु कृतिसाध्यत्वस्येति वाच्यम्-साध्यपदघटकशब्दार्थविशेषविवक्षान्तराभेदस्य दुर्वचत्वात् । न च कृत्यभावकालिकासिद्धिमत्त्वं कृतिसाध्यत्वम्, तस्यापि सर्वाख्यातलभ्यजन्यत्वरूपार्थैकदेशत्वात् । न च आख्यातस्य कर्त्रर्थकत्वस्य कृतिं विना धर्मिमात्रार्थकत्वम्, न्यायपरिशुद्धौ स्वरसतस्तद्विरोधदर्शनात् । किंच न्यायकुसुमाञ्जलौ (५-९६) कर्तव्यत्वं बहुधा विकल्प्य, कर्तारं प्रत्युपकारकत्वमिति पक्षं परिशेष्य, तस्य इष्टसाधनत्वपर्यवसानमभिप्रेत्य, इष्टसाधनपक्षदूषणेन दूषणं कृतम् । तदर्थतत्त्वं तु तद्व्याख्यानेऽस्मदीये कुसुमाञ्जलिविस्तरे द्रष्टव्यम् । अत्र इष्टसाधनत्वं पूर्वपक्षिभिर्भाष्यकारैः कृतिसाध्यत्वं तादृशं नेष्टम् ; अन्यादृशं च दुर्वचमित्युक्तम् । किञ्च आप्ताभिप्रायातिरिक्तसर्वविध्यर्थपक्षेऽपि निषेधवाक्यार्थवर्णनानुपपत्तिः न्यायकुसुमाञ्जलावुक्ता । कृतिसाध्यत्वपक्षे स दोषः नायातीति न्यायपरिशुद्धौ, 'यद्यपि पक्षे उद-

तत्रात्पक्षमवगाहते । कर्तव्यताया विध्यर्थत्वे न कर्तव्य
वी– यत्नोक्ता निषेधानुपपत्तिः, तथापि न साऽस्मत्पक्षमवगाहते । कर्तव्यताया विध्यर्थत्वे न कर्तव्यमिति
इति तदन्वयाविरोधात्'' इति कण्ठोक्तम् । एतदर्थो विचार्यः—सत्यं कलञ्जभक्षणं न कर्तव्यमिति
वाक्यं समञ्जसम्, परं तु कर्तव्यपदस्य कीदृगर्थविवक्षायामिति पृच्छ्यते । न तावत् कृतिसाध्यत्व-
रूपार्थविवक्षायाम्; तस्य कृतिजन्यत्वरूपतायां भक्षणे अजन्यत्वस्य बाधात्। यथा इष्टसाधनत्वं लिङर्थ
इति पक्षे कलञ्जभक्षणमिष्टसाधनं नेत्युक्तौ बाध एव । तात्कालिकेष्टसाधनत्वात्; तद्वत् । एवं कर्तुं
शक्यत्वाभावोऽपि न निषेधार्थः; शक्यत्वात् । एवं कर्त्रनुपकारकत्वमपि न—तात्कालिकेष्टहेतुतयोप-
कारकत्वात् । अथ कर्तुमनर्हत्वमिति चेत्—अर्हत्वमेव किंरूपम्? कलञ्जभक्षणस्यापि जन्यपदार्थत्वात्
सामग्रीमत्त्वात् फलवत्त्वाच्चार्हत्वं सामान्यतोऽस्त्येव ॥ अनिष्टाननुबन्धित्वमर्हत्वमिति चेत्—
तादृशमर्हत्वं विशिष्य लिङर्थो वा? अर्हतात्वेन रूपेण वा? नान्त्यः; कृतिसामग्रीमत्त्वरूपैकविधार्हत्वे
वर्तमाने अर्हत्वसामान्याभावस्य निषिद्धे दुर्वचत्वात् । नाद्यः; विशिष्य कृतिसाध्यत्वमर्थ इत्यस्य
त्यागापत्तेः । तस्यैव एवमुक्तिरिति चेत्—एवमपि, "श्येनेनाभिचरन् यजेत" इत्यादौ तादृशार्हत्व-
बाधात् उक्तकृतिसाध्यत्वरूपभङ्गः । अतः कृतिसाध्यत्वमित्यस्य कृत्प्रत्ययार्थविवरणेन कृतिजन्यत्व-
प्रकारकाप्तेच्छाविषयत्वमर्थः अयं विधिगतलिङर्थः । एतदभावो निषेधे बोध्यते । तथा च न कर्तव्य
इत्युपपन्नमिति । तत् सिद्धं इच्छाघटितं कृतिसाध्यत्वं लिङर्थ इति तृतीयः पक्ष इति ।

आन्तरस्त्वाचार्यनिर्भर. कृतिजन्यत्वमिति प्रथमपक्ष एव स्यात्। न च तस्य सर्वत्रयागसाधारण-
तया निषेधानुपपत्त्यादिदूषणप्रसक्तिः, न हि सामान्यतः कृतिजन्यत्वमर्थ इत्युच्यते। किन्तु वस्तुतो य
आप्तेच्छाधीनः, "मूलस्कन्धीकृतनियोगम्'' इति दर्शितः कृतिसाध्यत्वविशेषः, स एवार्थ इत्युच्यते।
तथाच परप्रेरणाधीनप्रवृत्तिमाते तज्जन्यतावच्छेदकवैजात्यमङ्गीकुर्वद्भिः मीमांसकैरीदृशकृतिविशेष-
साध्यत्वरूपार्थविवक्षायामानुकूल्यमाधीयते । तदलाप्तेच्छाधीनकृतिमात्रे किञ्चिद्वैलक्षण्यमेष्टव्यमिति।
माऽस्तु वा तद्वैजात्यम्; अथापि कृतिसाध्यतात्वेन रूपेण तादृशकृतिसाध्यताव्यक्तिमात्रभानमेव
लिङ्स्थले आनुभविकमिति तादृशव्यक्तिविशेषाभाव एव निषेधस्थले प्रतीयते इति सुवचम् । एवञ्च
कृतिसाध्यत्वविशेषो लिङर्थ इति पक्षः भाष्यस्वारस्यसिद्धो न त्याज्य इति ।

ननु स्वतन्त्रपरतन्त्रप्रवृत्तिसाधारणं यत् कृत्यधीनसिद्धित्वरूपं कृतिसाध्यत्वं, तज्ज्ञानमेव
प्रवर्तकमिति तस्य लिङर्थत्वं भाष्ये प्रतीतम् । अथापि विशेषो विध्यर्थ इति वदता किमाप्तेच्छाधीन-
कृतिसाध्यत्वं तदर्थ उच्यते ? उत परप्रेरणाधीनकृतिसाध्यत्वम ? नाद्यः; अनाप्तेन, 'कलञ्जं भक्षयेत्'
इत्युक्तौ अनुभवसिद्धस्य बोधस्यापलापापत्तेः । नान्त्यः; 'न कलञ्जं भक्षयेत्' इति बोधानापत्तेः।
अज्ञातरूपपरप्रेरणाधीनकृत्यधीनसिद्धित्वसम्भवेन सामान्यतोऽभावबोधायोगात् । उच्यते—बलवद-
निष्टाननुबन्धित्वं लिङर्थ इति वदद्भिः तार्किकैरिवानाप्तवाक्ये बोधो नेष्यते । आप्तवभ्रमदशायां तु
भवतीति। एतम् इष्टसाधनत्व-कृतिसाध्यत्वरूपार्थविवक्षायां भाट्टरहस्ये यत् आपादितम्—पाकवर्त-
मानतादशायां, 'चेत्रःपचेत्' इत्यपि प्रयोगापत्तिरित्यादि—तत्रेदं समाधानम्—कृतिसाध्यत्वादेः न
केवलं स्वरूपसम्बन्धेन धात्वर्थान्वय इष्यते । किन्तु सविषयकज्ञानविशेषजन्यत्वसम्बन्धेन कृतावपि।
विशेषशब्दार्थश्च भाट्टरहस्योक्त एव ग्राह्यः । तथा च न कश्चिद्दोषः । अत एव आख्यातार्थकृतो
धात्वर्थयागाद्यन्वयादेव तत्र कृतिसाध्यत्वस्य ज्ञाततया किमिति तस्य पुनर्लिङर्थत्वमिति शङ्काऽपि
निरस्ता । संबन्धविशेषेण कृतौ वा धात्वर्थे वाऽन्वयार्थं तदावश्यकत्वात् । अथ कृतिसाध्यत्वमेव
चेत् प्रवर्तना—तर्हि—आचार्यप्रेरितोऽहं गामानयामि इति कथं? न हि आचार्यनिष्ठा सा प्रेरणेति
चेत्—उच्यते । आप्तेच्छाधीनकृतिसाध्यत्वविशेषस्यैव शाब्दबोधे भानस्य प्रागुक्ततया, आचार्य-
प्रेरित इत्यस्य आचार्यसमवेतेच्छाधीनकृतिसाध्यताज्ञानवान् इत्यर्थकत्वात् न दोषः । निषेधस्थले

(457) षाड्गुण्यस्यैव कुक्षौ गुणगण इतरः श्रीनखस्येव विश्वं
षट्स्वन्ये ज्ञानशक्त्योर्विततय इति च व्यक्तमुक्तं हि तज्ज्ञैः ।
निस्सीमानन्दभाव-स्थिरचरचिदचिच्छासन-प्रेरणाद्याः
ऐशानज्ञानधर्माः कतिचन नियताः, केचिदागन्तवश्च ॥ ९७ ॥

---

र्थी-च यथा प्रेरणालिङर्थवादिमते निवारणायां लक्षणा—इष्टसाधनत्वपक्षे चानिष्टसाधनत्वे, तथा आप्तेच्छाधीनकृतिसाध्यत्वव्यक्तेर्विशिष्य तत्त्वेन लक्षणयाऽर्थत्वं काममस्तु। तदभावो नञर्थः। विशिष्य आप्तेच्छाया एव लिङर्थत्वे तु इयं लक्षणा नास्ति। परंतु आप्तत्वादिनिर्वचनेन विशिष्य लिङर्थकल्पने शक्यतावच्छेदकगौरवात् विधिस्थले सामान्यतः कृतिसाध्यत्वमर्थः, निषेधस्थले विशेषे लक्षणेति तदभावबोधो नायुक्तः ।

एवं वा किमुपपन्नमिति विमृश्यम्। कृतिसाध्यत्वं नाम कृत्यधीनोत्पत्तिकत्वार्हत्वम्। अर्हत्वं च अपेक्षितयावदाकारसमुदायः। आकाराश्च आप्तेच्छाविषयत्वम्, इष्टसाधनत्वम्, बलवदनिष्टाननुबन्धित्वम्, तत्र तत्र नियोज्यान्वयबलसिद्धं, स्वर्गकामादितत्तन्नियोज्यसमवेतकृतिमत्त्वपतत्तन्नियोज्यार्थतया निष्पत्तिरहितत्वं च यथायथम्। समुदायघटनं आवश्यकम्। अन्यथा, 'न कलञ्जं भक्षयेत्' इत्यादौ इष्टसाधनत्वरूपकिञ्चिदाकारसत्त्वात् लिङर्थप्रतियोगिकाभावबोधानापत्तेः। नन्वेवं कृतिजन्यत्वरूपकिञ्चिदाकाराभावेन समुदायाभावात्, 'पर्वतं न चालयेत्' इत्यादिप्रयोगापत्तिः—न—समभिव्याहृतविशिष्टधात्वर्थनिष्ठा या कृत्यधीनोत्पत्तिः; तदर्हत्वतदभावयोरेव नञ्सत्त्वेऽसत्त्वे च बोधात् तादृशोत्पत्त्यप्रसिद्ध्यैव तत्प्रयोगविरहात्। अत एवोक्तसमुदाये इष्टसाधनत्वादिवत् सामान्यतः कृतिजन्यत्वस्य निवेशो नोक्तः। एवञ्च शोधने अर्हत्वं लिङर्थः, 'यजेत' इत्यादौ यागस्य कृतावन्वयः, कृतेरर्हत्वे। तस्य पुनर्यागे। यद्वा, कर्ता आख्यातार्थः, कृतिसाध्यत्वमेव लिङर्थः। कृतिसाध्ययागकर्ता, कृतिसाध्यकलञ्जभक्षणकर्ता इति बोधः। इदञ्च बलवदनिष्टाननुबन्धित्वं लोके नान्तरीयकदुःखाधिकदुःखाजनकत्वरूपम्। न च एतज्ज्ञानेऽपि केषाञ्चित् द्वेषसत्त्वात् कथमिदं अद्वेषप्रयोजकमिति वाच्यम्; द्वेषहेतुभूतादृष्टमात्ररूपसामग्र्यन्तराभावे एतज्ज्ञाने द्वेषाभावस्यानुभविकत्वात्। एवञ्च, 'यजेत' इत्यादौ पापाजनकत्वमपि फलितम्। पापसत्त्वे अतिरिक्तदुःखापत्तेः। अत एव विहितहिंसास्थलेऽपि दुःखविशेषाजनकत्वपापाजनकत्वयोः शब्दतो लब्धत्वात्, 'न हिंस्यात्' इति निषेधः तद्व्यतिरिक्तविषयः। "न सुरां पिबेत्" इति च सौत्रामणीसुरापानव्यतिरिक्तविषयः। एवञ्च, 'अशुद्धमिति चेन्न शब्दात्' इत्यत्र पापाजनकत्वबोधकलिङ्शब्दात् इत्येवार्थः सुवचः। सौत्रामणीसुरापानादिजन्यपापानुभवशंकापरिहाराय चकारश्च। अथापि हिंसात्वे प्रामाणिके तथाऽर्थवर्णनं युक्तम्। तस्याप्रामाणिकत्वात् प्रकृतपूर्वपक्षिकण्ठोक्तविषये हिंसात्वाभावस्यैव बोधनीयत्वात् तत्परतयाऽपि सूत्रमिदं भाष्ये योजितम्। पापाभावप्रतिपादकशब्दात् इत्येव तु सर्वानुगतार्थं इत्यलमधिकेन ॥ ९६ ॥

एवं धर्माधर्माख्यगुणस्वरूपशोधनेन तयोरीश्वरगुणरूपत्वमुक्तम्। तर्हि, 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति तदीयगुणादीनां स्वाभाविकत्वावगमात् कर्मोपाधिकत्वं कथम्। तथाच कर्मानाचरणेऽपि स्वाभाविकसंकल्पतः फलप्रदत्वस्यास्थानवर्णनमप्यशक्यम्। षाड्गुण्यमात्रनिधानेनाषड्गुणदर्शनमयुक्तमित्यत्र तदेव व्युत्पादयति षाड्गुण्यस्येति। अनन्तगुणत्वेऽपि तस्य षड्गुणत्वेन व्यवहारः सर्वेषामपि गुणानामस्मिन् गुणषट्केऽन्तर्भावात्। उक्तं हि भगवन्मूर्तावुदरे सर्वं जगत् यथा तेनान्तर्भावितम्, तथा षाड्गुण्ये गुणसामान्यमन्तर्भा-

एवं विश्वनियन्तुरीश्वरस्य, "तथानन्तगुणस्यापि षडेव प्रथमे गुणाः । यैरत्राथेव जगत् कुक्षावन्येऽ प्यन्तर्निवेशिताः ॥" इत्युक्तक्रमेण षाड्गुण्यस्यैवावान्तरभेदाः सर्वे गुणा इत्याह षाड्गुण्यस्येति । तस्य चेश्वरस्य केचित् गुणा निस्सीमानन्दादयो ज्ञानावस्थाभेदा नियताः नित्यसिद्धाः , केचित् तदातदा संकल्पविशेषादयश्च आगन्तवः [इतरैरागन्तुत्वेनावधृताः] इति विभागोऽस्तीत्याह निस्सीमेति ॥

इति षाड्गुण्यनिरूपणम् ॥ ९७ ॥

(468) हेतोः कार्योपयुक्तं यदिह भवति तच्छक्तिशब्दाभिलप्यं ;
तच्चामुष्य स्वधर्मस्तदितरदपि वाऽपेक्षितत्वाविशेषात् ।
विश्वं तद्विष्णुशक्तिर्मुनिभिरभिदधे तत्र तत्रोपयोगात् ;
अन्या सर्वाद्भुतैकोदधिरगणि ; न सा तत्स्वरूपादिमात्रम् ॥ ९८ ॥

एवं गुणानां विभागमुक्त्वा शक्तेः स्वरूपं शोधयति हेतोरिति । कारणस्य कार्योपयोगी सहकारिकलापः (विशेषः ?) शक्तिरित्युच्यते । तच्च (स च ?), स्वधर्मो वा भवतु, अन्यद्वा यत्किञ्चित्, अपेक्षितत्वाविशेषात् शक्तिरित्यभिधीयते । तदिदमाह हेतोरिति । इत्थं सामान्येन शक्तिशब्दार्थं समाध्य, 'विष्णुशक्तिः परा प्रोक्ता" इत्यादिभिर्मुनिवचनैरभिहितामपि शक्तिमेव तल्लक्षणानुरोधेन व्यनक्ति विश्व

---

मिति । अतः श्रीसत्त्वकुक्षौ विश्वमिव तदीयषाड्गुण्यकुक्षौ इतरो गुणगणो निविष्टः । वस्तुतः तेषु षट्स्वपि ज्ञानशक्तिबलैश्वर्यवीर्यतेजस्सु ज्ञानशक्तिरूपगुणद्वये अन्ये बलैश्वर्यवीर्यतेजोरूपा अपि निविष्टा इति तेऽपि तदुभयविस्तारभूता एव । एवमपि षाड्गुण्येति विभजनं व्यूहत्रयगतगुण-विभागपरिशीलनाय । सर्वमिदं श्रीपाञ्चरात्रपुराणेतिहाससाम्प्रदायिकार्थवेदिभिर्व्यक्तमुक्तम् । अत्र शक्तिसामान्यस्य नित्यत्वेऽपि एतावतां गुणानामन्येषां तदीयधर्मभूतज्ञानपरिणामरूपत्वावगमात् सादित्वमप्यस्त्येव । नित्यानन्दानुभव शासन प्रेरणादयो नित्या अपि स्वन्यायाराः, तथा कारणविशेष-व्यवस्थाधीनाः सादयश्च केचित् परिणामाः, न कश्चित् गुणस्तस्यानिष्टः अवर्जनीयतदीयकर्माय[illegible]चा भवति । अतो जीवगुणस्येव नौपाधिकत्वम् । जीवस्यापि हि मुक्तिदशायां प्राप्तायामनौपाधिकता । एवमेकस्यापि तत्र सर्वोऽपि गुण इति ॥ ९७ ॥

एवं शक्तेः प्रस्तुतत्वात् अद्रव्यतया तन्निरूपणावसराच्च तां परीक्षते हेतोरिति । एवं कारणापृथक्सिद्धविशेषणं शक्तिरित्युच्यते । इदञ्च कारणत्वापादिका शक्तिरस्ति । कार्योपयोगि कारणापृथक्सिद्धविशेषणं शक्तिशब्देन व्यपदिश्यते । तत्तत्कारणधर्मभूतमद्रव्यम् । एवं मुख्यशक्तौ सत्याम्, इतरदपि तत्र तत्र शक्तिशब्देन व्यपदिश्यते । किं तदिति चेत्—द्रव्यमद्रव्यं च रूपादि । जगत्कारणस्य परमात्मनः कारणत्वं हि चिदचिद्विशिष्टतया । तत्र चिदचितो कार्योपयोगितया तदपृथक्सिद्धविशेषणतया च शक्तिरिति भाक्तो व्यवहारः । जीवेष्वपि प्रकृतिसंबन्धरहितः तत्सहितश्चेति भेदः । श्रीविष्णुपुराणे अस्त्रभूषणाध्याये उक्तया रीत्या नित्यसूरीणामपि भगवद्भूषणायुधभूतानां जगत्सृष्ट्यादौ उपयुक्तत्वमस्ति । मुक्तानामपि प्रसिद्धो दिव्यशरीरपरिग्रहः । सर्वमिदं विमृश्य तत्रैवोक्तम्, विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा" इति प्रकृतिविनिर्मुक्ताविमुक्तरूपविष्णुशक्तिद्वयम् । 'अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते' इति कर्मरूपकारणाभावे संसाराप्रसक्तेः तस्यापि प्रीतिकोपात्मनस्य शक्तित्वमुक्तम् । तस्मादद्रव्यान्तरे-ऽपि शक्तिपदप्रयोगः । एवं विष्णोः शरीरभूतं विश्वं शक्तिपदव्यपदेश्यं यथा, तथा [illegible]लक्षणा

तदिति "समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः। तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥" इति या मूर्तिः सर्वाद्भुतैकोदधिरगणि, साऽपि स्वरूपविशेषणत्वात् शक्तिशब्दवाच्यतामर्हति ; न पुनः सा स्वरूपमात्रम्। तस्मिन्नेव विग्रहे अस्त्रभूषणादिरूपेण समस्ताः शक्तयः समाश्रिताः; तद्विग्रहविशिष्टो भगवान् सर्वाधार —इत्यर्थः ॥ **इति शक्तिशब्दार्थनिष्कर्षः ॥ ९८ ॥**

**(459) यद्भ्रंशान्मन्त्ररुद्धो न दहति दहनः, शक्तिरेषाऽस्तु ; सोऽयं**
**हेतुर्मन्त्राद्यभावः ; स च गत इति तद्धेत्वभावाददाहः ।**
**शक्तेर्नाशे किमस्याः पुनरिह जनकं ? वृत्तिरोधस्तु युक्तो**
**वह्नेरित्यादिघोषो विरमति विदिते शब्दतः शक्तितत्त्वे ॥ ९९ ॥**

स्वरूप-सहकारिव्यतिरिक्तशक्तेर्यत् घोषितं दूषणं न्यायवादिभिः, तत् आनुमानिकशक्तिकल्पने भवतु, "शक्तयः सर्वभावानाम्" इत्याद्यागमसिद्धे शक्तितत्त्वे न दूषणमित्याह **यद्भ्रंशादिति**। इत्थं किल शक्तिदूषणप्रक्रिया—यस्य प्रतिबन्धाभावस्य भ्रंशात् मन्त्ररुद्धो दहनो न दहति, स एव प्रतिबन्धाभावः शक्तिरस्तु। स च प्रतिबन्धाभावो हेतुरेव ; प्रतिबन्धाभावविशिष्टस्य वह्नेर्दाहकत्वात् । तथाच मणिमन्त्रादिप्रतिबन्धे सति सामग्रीवैकल्यात् कार्याभावः ; न तु तदतिरिक्तशक्त्युपरोधात् ; तत्कल्पनायां गौरवात् । तदिदमाह **तद्धेत्वभावाददाह** इति। किंचातिरिक्तशक्तिकल्पनायां प्रतिबन्धकेन तन्नाशे

---

*ग्रं*— शक्तित्वाश्रयस्य रूपस्य भगवत्स्वरूपातिरिक्तत्वे कथं भगवतः सर्वाधारत्वमित्यत आह— तस्मिन्नेवेति ॥ ९८ ॥

*वी*- अस्त्रभूषणाध्यायोक्तसमस्तशक्तिरूपसर्वाद्भुतनिधिरूपा वासुदेवाख्या मूर्तिरपि तदपृथक्सिद्धा नानाविधशुद्धसृष्टिकारणभूता शक्तिशब्दव्यपदेशार्हा। ननु सा मूर्तिः परमात्मस्वरूपमेव, अथवा तदीयषाड्गुण्यपरिणामविशेष एवेति चेत्, न सा तत्स्वरूपादिगात्रम्। स्वरूपस्य निर्विकारतया रूपादिरहितत्वाच्च मूर्तित्वायोगात्। षाड्गुण्यस्य च रूपरसादिसौन्दर्यादिमत्त्वायोगात्। अप्राकृतं ज्ञानानन्दमयं शुद्धसत्त्वमचेतनद्रव्यमेव तदिति। एवं मुख्यभूतकारणस्य यावत्सहकारिविशिष्टतया कार्योपधायकत्वम्, तावति तच्छक्तित्वव्यवहारः। एवं सत्यपि, शक्तिशब्दमुख्यार्थः कार्योपयोग्य-पृथक्सिद्धविशेषणं तावद्विलक्षणमन्यदेव, 'शक्तयः सर्वभावानाम्' इत्यादिशास्त्रस्वरसार्थविधाय संमन्तव्यमिति॥ समस्ताः शक्तयः = अस्त्रभूषणाध्यायोक्ताः॥ विश्वरूपवैरूप्यं = विश्वात्मकभगवद्रूप-विलक्षणम्। अन्यत् = परवासुदेवरूपम्॥ ९८ ॥

प्रतिबन्धाभाव एव शक्तिरित्युदयनाचार्यः। तत्पक्षमुपन्यस्य युक्तिवादं विहाय शास्त्र-प्रामाण्यात् तद्दिशमाह यदिति। दहनः—अग्निर्न दहति मन्त्रेण प्रतिबन्धे। कस्मात्। न दहना-भवात्। तस्य प्रत्यक्षप्रमाणत्वात्। अतो यस्य भ्रंशात् मन्त्रेण रुद्धत्वादशायां न दहति, एषा शक्ति-रिति वक्तव्यम्। इष्यत एवैवम्। परंतु एवं कल्प्यमानोऽर्थः मन्त्राभाव एवास्तु। स एव अयं = शक्तिपदार्थः। मन्त्रकाले च मन्त्राभावरूपकारणाभावादेव अदाहः = दाहाभावः। ननु भावान्तरा-भाववादे मन्त्राभावस्य किञ्चिद्भावरूपत्वं वक्तव्यमिति सा शक्तिरिति चेत्—तत्राऽऽह शक्तेरिति। मन्त्रेण शक्तौ नाशितायां पुनर्मन्त्रे सत्येव दाहोत्पादनार्थमुत्तेजके संनिधापिते दाहो भवति। तदा शक्तिं विनैव दाहभावात् न शक्तिरपेक्ष्या॥ पुनः शक्तिस्तत्रोत्पन्नेति चेत्—अस्याः दहने पुनर्जनकं

पुनरुत्तम्भकावस्थायां किं तस्या जनकमिति वाच्यम् ॥ उत्तम्भकमिति चेत्, अनियतहेतुकत्वप्रसङ्गः ॥ उत्तम्भकसत्त्वेऽपि शक्तिर्न जन्यते चेत्, पुनर्दहन(दाह)कार्यं न स्यात्। तदिदं सर्वमभिप्रेत्याह शक्तेर्नाश इति। तर्हि प्रतिबन्धकेन शक्तिर्न नश्यति; किंतूपरुध्यत इति चेत्, तर्हि वह्निरेवोपरुध्यताम्; किमनेन शक्तिकल्पनेन गुरुतरेणेत्याह वृत्तिरोधस्तु युक्तो वह्नेरिति। अयं दूषणवादः शब्देतर-प्रमाणगम्यायां शक्तौ युक्तः; शक्तितत्त्वे शब्दगम्ये सति न युक्त इत्याह इत्यादिघोष इति ॥

इति शक्तिदूषणपरिहारः ॥ ९९ ॥

(100) 'शब्दादिष्वस्ति शक्तिर्यदि, कथमिव न द्रव्यतैषां गुणित्वे?
मा चेन्नास्त्येषु, कार्यं किमपि कथमितः स्यात्' इतीदं न युक्तम्।
शक्तिः शक्ता न वेति स्वयमवमृशतः स्वोक्तदोषप्रसङ्गे
निस्तारश्चेत् स्वभावात्, फणिभरणमिह प्रस्तुते किं प्रवृत्तम् ॥ १०० ॥

अत्र शक्तिमद्द्रव्येषु स्वरूपरूपामुपपादयति शब्दादिष्विति। इयमत्र पूर्वपक्षप्रक्रिया—शब्दादिषु शक्तिर्यद्यस्ति, कथमिव तेषामद्रव्यता, शक्त्याश्रयत्वेन तेषां गुणित्वात्? यदि शब्दादीनां शक्त्याश्रयता नास्ति, तर्हि शब्दादिभिः कार्यं किमपि कथं स्यात् इति। तदयुक्तमित्याह इदं नेति। तदेतत् विवृणोति शक्तिरिति। अयमत्र विकल्पः—किं शक्तितत्त्वमेव द्रव्येष्व[प्य]पलपसि? अथवा शब्दादीना-मद्रव्याणां शक्तिर्नास्तीति? पूर्वत्र क्वचिदपि कार्यसिद्धिर्न स्यादिति व्याघातः। तथाच भवताऽप्यङ्गी-

---

ञी- किम्। दहन एवेति चेत्—स मन्त्रोच्चारणकालेऽपि स्थित एव। मन्त्राभावविशिष्टदहनो जनक इति चेत्—उत्तेजककाले मन्त्रसत्त्वात् स न स्यात्। अथ आदौ दहन एव जनकः। अथ तु उत्तेजक इति चेत्—शक्तिकल्पनागौरववत् तदनियतकारणकल्पनागौरवमपि। ननु शक्तिर्न नश्यति, अस्त्येव; अथापि मन्त्रस्य विरोधित्वान्न दाह इति चेत्—एष वृत्तिरोधः साक्षात् दहनस्यैव सुवचः शक्तिमस्वीकृत्यैव। इत्यादिघोषः= अतः शक्तिर्नाम कारणता—कार्यजननस्वरूपयोग्यत्वं दहनादि-स्वरूपमेव। सहकारिष्वपि शक्तिपदप्रयोगात् प्रतिबन्धाभावादिरपि शक्तिः; न तु स्वरूपसहकारि-व्यतिरिक्ता काचिदिति घोषः। अयं घोषो न्यायकुलिशे पद्मनाभाचार्यैः श्रीवादिहंसाम्बुवाहैः प्रति-युक्तिपुरस्करणेन प्रशमितः। तत्र हेतुः शब्दप्रमाणेन शक्तेरवगमितत्वम्। तदाह विरमतीति॥ स एव प्रतिबन्धाभाव इति॥ प्रतिबन्धकाभावः कारणमिति नव्यपरिपाटी। उदयनाचार्यस्तु, "प्रति-बन्धो विसामग्री तद्धेतुः प्रतिबन्धकः" इति मन्त्रप्रयोक्तृपुरुषादीनां प्रतिबन्धकत्वम्। मन्त्रादिस्तु प्रतिबन्धः; सामग्र्यभावरूपत्वात्। मन्त्राभावरूपकारणस्याभावरूपत्वात् मन्त्रः प्रतिबन्ध इति निरूपयन्तीति तदनुसारेणैवम् ॥ ९९ ॥

ननु दहनादिद्रव्याणामिव शब्दादिगुणानामपि, 'स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत्' इत्येवं कार्यक्षमत्वदर्शनात् शक्तिरेष्टव्या। एवं शक्तिरूपगुणाश्रयत्वे शब्दादेर्द्रव्यत्वापत्तिरिति शङ्का-मुद्भाव्य परिहरति शब्देति। गुणित्वे इति शक्तिमादाय गुणित्वस्य प्राप्तत्वादित्यर्थः। एषु= शब्दादिषु सा= शक्तिर्नास्ति चेत्, कथं शब्दादितः कार्यं स्यात् =उत्पद्येत। परिहरति इदं न युक्तमिति। यथा शास्त्रेण शक्तिपदार्थे गमितेऽपि शक्तौ शक्तिर्न वक्तुं शक्यते; अनवस्थाप्रसंगात्, अतस्तस्याः स्वरूपत एव निर्वाहकत्वम्—तथा शब्दादिगुणा अपि स्युः। अतः स्वभावत एवेति वादस्य न गुणविषये

कार्या शक्ति । तथाच सा शक्तिर्यथा शक्त्यन्तरमन्तरेणापि कार्योपयोगिनी, एव शब्दादयोऽपि स्वगतशक्तिमन्तरेणापि स्वरूपसहकारिभ्यामेव कार्य कुर्वते, अन्यथाऽनवस्थाप्रसङ्गादिति । **फणिमरण-मिहेत्यादि** । यथा(य ?) शक्ते शक्त्यन्तरा[भावेऽपि कार्यजननस्य ?]भाव , स तु (**स प्रस्तुते ?**) शब्दादावपि तुल्य इत्यर्थ ॥ **इति अद्रव्याणां स्वरूपशक्तिमत्त्वम्** ॥ १०० ॥ **अथ संस्कारः—**

(461) **बाह्याक्षादेरवृत्तौ चिरविदितमपि स्मर्यते येन, सोऽय**
**संस्कारस्तुल्यदृष्टिप्रभृतिसहकृतश्चेतसः साह्यकारी ।**
**नासौ पूर्वाऽनुभूतिः ; कथमुपकुरुतां सा पुरैव प्रनष्टा ?**
**तुल्यादेर्नापि दृष्टिः ; कथमनवगते सा स्मृतिं नैव कुर्यात् ? ॥ १०१ ॥**

इत्थमद्रव्येषु स्वरूपातिरिक्ता शक्ति निराकृत्य स्मृतिहेतुसंस्कार स्वरूपाद्यतिरिक्त साधयितुमुपक्रमते बाह्येति। स्मृतिज्ञानस्य तावत इन्द्रियार्थसन्निकर्षादिक न साधनम् , तदभावेऽपि चिरविदितमपि येन स्मर्यते, स एव हि संस्कार इत्युच्यते। स च तुल्यदर्शनादिसहकृतश्चित्तस्य सहकारी भवति, यथाऽऽहु , "सदृशादृष्टचिन्ताद्या स्मृतिबीजस्य बोधका" इति । अथ चाऽऽगन्तुकधर्म पूर्वानुभूतिरेवेति न वक्तु शक्यते , तस्या पुरैव नष्टत्वेनोत्तरकालानुपकारकत्वात् । तदिदमाह **कथमुपकुरुतामिति** । तर्हि तुल्यदर्शनादिकमेवाधुनिक(क?)संस्कारोऽस्त्विति च वक्तु न शक्यते , अनवगतेऽप्यर्थे स्मृतिप्रसङ्गात् । न हि पूर्वानुभवजनितसंस्कारमन्तरेण सदृशदर्शनादिक कदाचिदपि स्मृतिं कुरुते ॥ १०१ ॥

ली— सर्पमार त वादसर्प शकाघातिनमायान्तमत्र मारयितु न कश्चित् प्रभवति। अत शास्त्रस्य द्रव्यमात्रे शक्तिस्वीकार एव तात्पर्यम् । ननु शक्तिमनिच्छन्त पूर्वपक्षिण प्रति, शक्ति शक्ता न वेति विकल्पन कथमिति शङ्का मा भूदिति आशय दर्शयति अथमत्रेति ॥ १०० ॥

एव धर्माधर्मादिगुणस्वरूपशोधने शक्तिप्रस्तावात् सा पृथग्गुणो द्रव्यमात्रे इति स्थापितम् । अथ तार्किकगुणेष्वन्तिम संस्कारास्य शोधयति बाह्येति । चिरविदितमपि =बहुकालात्प्रागनुभूतमपि बाह्याक्षादेरवृत्तौ–बाहरिन्द्रियरूपप्रत्यक्षानुमानशब्दरूपप्रमाणानामप्रवृत्तिसमयेऽपि ज्ञायते किञ्चित्। तत् ज्ञान स्मरणम् । तत् येन भवति, स संस्कार । स मनसा स्मरणे जननीये सहकारिकारणम् । तस्य संस्कारस्य चिरानुवृत्तावपि कदाचिदेव स्मरणमिति कुत इति स्यात् । अतस्तदुद्बोधकमप्यपेक्षितम्। तच्च तुल्यदृष्टिप्रभृतिकम्–सदृशवस्तुदर्शनादिकम्। तत्सदृशवस्तुदर्शनम् , तच्चिन्तनानुवृत्तिः, पथमपि तत्सम्बन्धिज्ञानमित्यादिकमुद्बोधक स्मृतिबीजस्य संस्कारस्य । ननु स्मृतित्वेनाभिमत ज्ञानमिद पूर्वानुभव एवास्तु इति चेन्न तद्विचारस्य प्राक्स्मृतिनिरूपणावसर एव कृतत्वात् । अथ संस्कारत्वेनाभिमत यत् , तत् पूर्वानुभूतिरेवास्तु, संस्कारशब्दस्य अतीतोऽनुभव इत्येवार्थोऽस्तु इति चेन्न तस्या प्रागेव नष्टत्वात् । तद्विषयकप्रत्याह्यादिवृत्त्यभावेन प्रत्यक्षानुभूतेरपि दुर्वचत्वात् । न चातीन्द्रियत्वात् संस्कारसद्भाव एव प्रमाणाभाव तद्रूपव्यापाराभावे नष्टयाऽनुभूत्या स्मरणोत्पादनायोगात् । न च संस्कारोऽय तुल्यवस्तुदर्शनादिरेवेति शक्यम् । पूर्वानुभवराहित्ये तुल्यवस्तुदर्शनस्य स्मृत्यहेतुत्वात् । पूर्वानुभवेऽपि तस्य नष्टतया तदुपकारकत्वस्य तुल्यवस्तुदर्शनादौ दुर्वचत्वात् । संस्कारास्वीकारे तदुपकारकताया पूर्वानुभवोपकारकताया वा असम्भवेन साक्षादेव तुल्यदर्शनादेः कारणत्व स्यात् । तथा चाननुभूतविषये कथ स्मरण न कुर्यादिति ॥ १०१ ॥

(462) 'यज्जन्या संस्क्रिया यत् किमपि नियमतो बोधयिष्यत्यदृष्टं (येदित्यभीष्टम् ?)
तत् तद्वेद्यावलम्बिस्मृतिमुपजनयेत्; संमतं च द्वयोस्तत्।
न ह्यन्यद् दृश्यतेऽत्र क्वचन; तदधिके कल्पिते गौरवं स्यात्
इत्युत्प्रेक्षा न युक्ता; न हि परजनिते क्वापि तत्संस्क्रियोक्तिः ॥ १०२ ॥

तर्हि यज्जन्या संस्क्रिया युष्मत्पक्षे येन सदृशदर्शनादिना नियमेनानुबोध्यते, तदेव सदृशदर्श-
नादिकं तद्वेद्यालम्बिनीमेव स्मृतिमुपजनयेदित्याह **यज्जन्यामिति**। तथा चाननुभूते स्मृतिप्रसङ्गो नास्ति।
संमतं च द्वयोरपि वादिनोः सदृशदर्शनादि। तदिदमाह **संमतं च द्वयोस्तदिति**। न च दृष्टत्वादधिकः
संस्कारोऽङ्गीक्रियत इत्याह **न हीति**। अधिककल्पनायां गौरवमपि प्रसञ्जयति **तदधिक इति**।
तदेतत् दूषयति **उत्प्रेक्षा न युक्तेति**। तदुपपादयति **न हीति**। लोक एव हि व्यवहारे निदानम्।
लोके हि तत्तत्क्रियाजन्यातिशयविशेष एव संस्कारव्यवहारः प्रवर्तते; न पुनर्यस्मिन् कस्मिंश्चित् सह-
कारिमात्रे। तेन सदृशदर्शनादिमात्रं संस्कार इत्ययं [वादः?] लोकव्यवहारविरुद्ध इत्यर्थः। न च पूर्वानुभव-
प्रध्वंसमात्रमेव संस्कार इति वाच्यम्; तस्य परपक्षे नित्यत्वेन संस्कारप्रमोषाभावप्रसङ्गात्; अस्मत्पक्षे
ध्वंसस्य भावरूपत्वेन पर्यायेण भावस्यैवाभिधानाच्चेति ॥ **इति स्मृतिहेतुसंस्कारनिरूपणम्** ॥१०२॥

(463) बुद्धेरर्थेषु पूर्वप्रसरणजनितस्तेषु भूयोऽवगाहे
संस्कारः कारणं तन्मतिगत उचितः सोऽत्र धीद्रव्यपक्षे।

---

सर्व— यज्जन्या संस्क्रियेति। (तद्वेद्येति?) पूर्वानुभूतसदृशदर्शनादिकं तदनुभववेद्यविषयां स्मृति
जनयति, नान्यविषयामित्यर्थः ॥ १०२ ॥

भा— ननु प्रत्यक्षसिद्धेऽर्थे कल्पनागौरवं नास्ति। अन्यथा तत्कल्पनां विना तत्सामग्र्यैव कार्यनिर्वा-
हात् तत्स्वीकार एव व्यर्थ इति गुरुत्वादिविचारावसरे तत्रतत्र प्रागुक्तम्। अतोऽतीन्द्रियं संस्कारम-
स्वीकृत्य तज्जनकत्वाभिमतेनैव स्मृत्युत्पादनमिष्यतामिति शंकते यदिति। संस्क्रिया = संस्कारः। तदं-
गीकारेऽपि तदुद्बोधकं सदृशवस्तुदर्शनादिकं स्वीकर्तव्यम्। एवञ्च यादृशानुभवजन्यसंस्कारोद्बोध-
कत्वेनाभीष्टम् = अभिमतं यत्, तादृशानुभवग्राह्यविषयकस्मृतिं प्रति साक्षात् तदेव जनकं भवतु।
द्वयोरावयोर्हि तत् संमतम्। ननु 'तद्धेतोरेवास्य तद्धेतुत्वे मध्ये किं तेन' इति न्यायेन किञ्चिदपलापे
बहुवस्त्वपलापः प्रसज्यत इति चेत्—न। न ह्यन्यत् दृश्यते। प्रत्यक्षसिद्धस्यापलापः सर्वथा न
भवति। अत एव ज्ञानसामग्र्यैव प्रवृत्त्यादिनिर्वाहे ज्ञानं किमर्थमिति शंका नाङ्कुरति। ज्ञानस्य
स्वयम्प्रकाशत्वात्। भाट्टानां मते तु स आक्षेपः स्यात्। इह च संस्कारो नोपलभ्य इति तन्निषेधो
युक्त इति। बोधयिष्यत्यदृष्टमिति पाठे विशिष्य अदृष्टपदप्रयोगस्य प्रयोजनं नास्ति। वृत्तौ न तत्
प्रथमं गण्यते। अतः, युष्मत्पक्षे इति वृत्तिपदौचित्याच्च पाठान्तरोहः। अत्र समाधिमाह चतुर्थपादेन,
अनुभवस्य वासना, संस्कार इत्येवं प्रयोगो लोकशास्त्रप्रसिद्धः। स्मृतिकालाव्यवहितप्राक्कालस्थितस्य
सदृशवस्तुदर्शनादेः संस्कारपदवाच्यत्वमयुक्तम्। तत्क्रियाजन्योऽतिशय एव हि तत्संस्कारपदे-
नोच्यते। यथा प्रोक्षणादिजन्यः संस्कार इत्यादौ। न च पूर्वानुभवजन्यत्वं तेषां तुल्यवस्तुदर्शना-
दीनाम्। अतः स्मृतिं प्रति अनुभवः कारणमित्यस्यान्वयव्यतिरेकसिद्धत्वात् अव्यवहितपूर्वक्षणा-
वर्तिनश्च व्यापारद्वारैव कारणत्वस्योपपाद्यत्वात् तदवश्यम्भाव इति भावः ॥ १०२ ॥

आत्माधारत्वं तद्धीप्रसरजनकताक्लृप्तिरौचित्यहीना ;
धीनिष्ठेनैव तेन ह्युचितमविकृतेरात्मनः कुण्ठतादि ॥ १०३ ॥

इत्थं संस्कारसद्भावमुपपाद्य तस्य बुद्धिनिष्ठत्वमुपपादयति बुद्धेरिति । द्रव्यं हि बुद्धिः स्वार्थेषु प्रसरतीत्यस्मत्सिद्धान्तः । तेन बुद्धेः पूर्वप्रसरणजनितो भूयो ग्रहणकारणं संस्कार इति सिद्धम् । तथाच तस्य बुद्धिनिष्ठत्वमेव समुचितम् । तदिदमाह [तत् ?] मतिगत उचितरसोऽत्र धीद्रव्यपक्ष इति। आत्माधारत्वं संस्कारस्य किं न स्यादिति परिचोद्य, आत्मनिष्ठस्य संस्कारस्य धीविकासहेतुत्वेऽनौचित्यमाह आत्मेति । धीनिष्ठेनैव तेन संस्कारेण आत्मनः कुण्ठत्वमकुण्ठत्वं च वक्तुमुचितम्, अविकारत्वादात्मन इत्याह धीनिष्ठेनेवेति । अयमर्थः—आत्मा निर्विकारः; सविकारं च धर्मभूतज्ञानम्; तच्चात्मनो नित्या साधारणधर्मः । तेन धर्मभूतज्ञानगताः सर्वे विकाराः ज्ञानद्वारा ज्ञानाश्रयात्मपर्यन्तं व्यवह्रियन्त इति ॥

इति अनुभवजन्यसंस्कारस्य बुद्धिनिष्ठत्वम् ॥ १०३ ॥

(461) शीघ्रं यातीति कर्मातिशयसमधिको दृश्यते कुत्र वेगः ?
तद्भेदैर्वेगभेदं कथयसि च समस्तीव्रमन्दक्रमादिः ।

---

श्री— संस्कारोऽनुभवजन्यो भावपदार्थोऽस्तीत्युक्तम् । तस्य पार्थक्यं वा क्लृप्तान्तर्भावो वेति विचार्यते । स सर्वविलक्षण आत्मनिष्ठो धर्म इति तार्किकाः। धर्मभूतज्ञानावस्थाविशेष इति सिद्धान्तः। सर्वमिदमाह बुद्धेरिति । अर्थेषु बुद्धेः = धर्मभूतज्ञानस्य यत् पूर्वप्रसरणं = पूर्वानुभवः तेन जनितः तेषामेवार्थानां भूयोवगाहरूपस्मृत्यवस्थायाः कारणभूतश्च संस्कारः तयोरनुभवस्मरणयोरिव धर्मभूतज्ञानगतावस्थारूप एवोचितः । ज्ञानं हि द्रव्यम् । अद्रव्यत्वे त्ववस्थाभाक्त्वायोगात् धर्मान्तरत्वेन अनित्यज्ञानाश्रितत्वायोगात् आत्मनिष्ठत्वेन च स्वीकर्तव्यः स्यात् । तदद्रव्यत्वपक्षे आत्मगतज्ञानीयप्रसरणांशे आत्मीयस्य संस्कारस्य साक्षात् सामानाधिकरण्यं नास्ति । ज्ञानगतत्वे तु संस्कारस्य सामानाधिकरण्यमिति लाघवम् । एवं सति आत्मनि संस्कारशून्यत्वेन कुण्ठत्वं तद्वत्त्वेनाकुण्ठत्वमिति च कथम् । कदापि तद्वत्त्वाभावादिति चेत्—संस्काराश्रयज्ञानवत्त्वमेव संस्कारवत्त्वमित्यर्थः । यद्यपि अनुभवेच्छाद्वेषप्रयत्नसुखदुःखस्मरणादिशब्दानां नावस्थामात्रमर्थः, किंतु अवस्थाविशिष्टज्ञानपर्यन्त एव । अतो विशिष्टज्ञानस्य विशिष्टज्ञानं कारणमिति प्राकृतपदार्थ इव द्रव्यपर्यन्त एव कार्यकारणभावः । अन्यथा घटपटादिशब्दानामपि तत्तदवस्थामात्रार्थकत्वे संयोगादेरप्युपपादनायोगात् लोकव्यवहारगतेरेव भंगात् । अथापि अनुभवादेरिव संस्कारस्य धर्मभूतज्ञानत्वोपपत्तौ धर्मान्तरमागन्तुकमनन्तं संस्कारात्मकं न साक्षादात्मनि कल्पनीयमिति । अनुभवादिवत् संस्कारस्यापि सविषयकत्वाविशेषात् ज्ञानत्वमेव युक्तम् । तथाऽनित्या वियदादेः शब्दादिवत् । संस्कारः आगन्तुकधर्मः ज्ञाननिष्ठ इत्येव स्वीकारे तु अवस्थामात्रे कार्यकारणभावः कथनीयः स्यात् । ज्ञानं संस्कारवत् इति प्रयोगापत्तिश्च । संस्कारस्य ज्ञानरूपत्वे तु न तदापत्तिः। अत एवात्मनः संस्कारवत्त्वादिकमप्युपपन्नम् । अतो ज्ञानातिरिक्ततार्किकोक्तात्मधर्मत्वनिषेध एव ग्रन्थतात्पर्यमिति ॥ १०३ ॥

तार्किकैः वेगो भावना स्थितस्थापकश्चेति संस्कारत्रैविध्यमुक्तम् । तत्र भावना अनुभववासना विचारिता । वेगं व्युदस्यति शीघ्रमिति । वेगो नाम कर्मगतोऽतिशय एव मन्दत्ववत् । अत्र कर्मातिशयेत्यस्य अतिशयितकर्मेत्यर्थः । कर्मगतस्यातिशयस्य वेगत्वे, इदं कर्म वेगवदिति प्रतीतिः स्यात् । इत्यादिकमेव हि वेगवत्त्वेन प्रतीयते । अत एवोक्तरि पूर्वपक्षिवाक्ये कर्मातिरिक्तत्वमिति प्रयोगः । शीघ्रं याति

'तत्कर्मत्वात् विगीते प्रथमवदुचिता तद्गुणोत्पन्नता' चेत्,
'तत्कर्मत्वात् विगीते प्रथमवदुचिता तद्गुणोत्पन्नता' चेत्,

**'तत्कर्मत्वात् विगीते प्रथमवदुचिता तद्गुणोत्पन्नता' चेत्, बाधो नास्मिन् विपक्षे ; गुणपरिषदि वा कर्म सत् तत्त्वतः स्यात् ॥ १०४ ॥**

ये तु वेगस्य कर्मातिरिक्तत्वं साधयन्ति, तन्मतं प्रतिक्षिपति शीघ्रमिति । शीघ्रं यातीति कर्मातिशयविशेषादितरो वेगः कुत्रापि न दृश्यते । भवानपि कर्मभेदं वेगभेदं कथयति । तथाच यादृशकर्मभेदात् वेगभेदः परिकल्प्यते, स एव कर्मभेदो वेग इत्युच्यताम्, तीव्रमन्दादिभेदस्य कर्मण्यपि समानत्वादित्याह **समस्तीव्रमन्दक्रमादिरिति** । तदधिकं वेगमनुमानेन साधयामः—शरादिगतं द्वितीयादिकर्म शरगुणोत्पन्नम् तत्कर्मत्वात् तन्निष्ठप्रथमकर्मवदिति । कर्म हि प्राथमिकं यथा संयोगा दुत्पद्यते, एवं द्वितीयादिकर्मणां शरगुणोत्पन्नत्वे तद्गुणो वेगः सिध्यतीति चेत्, तदिदं निराकरोति **बाधो नास्मिन् विपक्ष** इति । कर्मणः कारणमात्रमेवापेक्षितम् ; तत्तु कारणं गुण एवेति न निर्बन्धे कारणमस्ति ; शब्दाच्छब्दान्तरवत् पूर्वकर्मणोऽप्युत्तरकर्मोत्पत्तौ विरोधाभावात् । कल्पनालाघवमत्रानु- ग्राहकम । अथवा द्रव्यान्यत्वेन कर्मापि गुणपरिषदि निक्षिप्यताम् । तथा च कर्म तद्गुणोत्पन्नमिति साध्यनिर्देशे सिद्धसाध्यता च वक्तुं शक्येतेत्याह **गुणपरिषदि वेति** । ॥ १०४ ॥

**इति कर्मातिशयातिरिक्तवेगकल्पिभङ्गः ॥**

**(465) शाखा-कोदण्ड-चर्मप्रभृतिषु सति चाऽऽकर्षणादौ कुतश्चिद्
भूयः स्वस्थानयानं भवति ; स तु गुणः स्यात् स्थितस्थापकश्चेत् ।**

वी– मन्दं यातीति यानक्रियाविशेषणतयैव वेगादिप्रतीतेः । तदतिरिक्तो वेगस्तु नोपलभ्यते । त्वञ्च कर्मभेदैरेव वेगभेदं कथयसि, 'नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारात् तथोत्तरमुत्तरञ्च' इति । एवं तत्रतत्रकर्मवेगोभयस्वीकारमपेक्ष्य कर्ममात्रग्रहणं युक्तम् । वेग एव तीव्रमन्दक्रमः=तीव्रो मन्द इति भेद इति चेत्=कर्मण्यपि स सुवच एव । एवमदर्शनात् वेगे निरस्ते अनुमानेन स वेगं साधयति, तन्निरस्यति तदिति । विगीते=विवादास्पदे; पक्षभूते इत्यर्थः । द्वितीयादिकर्मणि इषुगते इषुगतगुणोत्पन्नता साध्यते, तत्कर्मत्वात्=इषुगतकर्मत्वात् इषुप्रथमकर्मवदिति इति चेत्–उच्यते । अस्मिन्ननुमाने विपक्षे बाधकं किमस्ति । हेतुरप्रयोजक इति यावत् । ननु कर्मतो वेगः वेगात् कर्मेति प्रतिकर्म मध्ये वेगः स्वीकार्यः । अन्यथा कर्मानुत्पत्तेः । न च कर्मैव कर्मणः साक्षात् कारणम् ; "कर्म कर्मसाध्यं न विद्यते" इति सूत्रेण तन्निषेधादिति चेत्–तत् सूत्रमेव निषेध्यम् । शब्दात् शब्दान्तरोत्पत्तिवत् कर्मणः कर्मोत्पत्तौ बाधकाभावात् । अतः तदीयगुणोत्पन्नत्वं न साधनीयम् । किञ्चित्कारणोत्पन्नत्वमेव साध्यम् । तत्तु स्वीकृतमेव कर्मेति । अन्यथाऽपि दूषयति गुणेति । द्रव्यग- तत्वमेव गुणत्वम् । तत् कर्मणोऽप्यस्त्येवेति गुणवृन्दे कर्म सत्=निविष्टम् । अतः त्वदुक्तसाध्ये सिद्धसाधनम् । अतो न वेगसिद्धिरिति ॥ कर्मभेदैर्वेगभेदमिति । एककर्मनाशसमये पुनरन्यत् कर्म पूर्वकर्मजनकेन तेनैव वेगेन क्रियते इति आलब्धयवधमेक एवैषो वेगः इत्यपि काणादेष्टम् । न्यायवार्तिके (2-2-39) तु वेगभेद एवोक्तः । "मीमांसकास्तु गतिसंतानातिरिक्तं वेगं न मन्यन्ते" इति किरणावली (41) सर्वमस्माभिरुक्तं रसायने ॥ १०४ ॥

वेगो व्युदस्तः । स्थितस्थापकः क्षिप्यते । वृक्षगतशाखा, कोदण्डाग्रं, वेष्टितप्रसारितं चर्मकटादि च आकर्षणप्रसारणाद्यवसरे स्वस्थानादन्यत् स्थानं प्राप्य पुनर्विसर्जने सति स्वस्थानं यान्ति । अत्र

मैव संस्थानभेदः स भवतु नियतो यद्विशिष्टे तवासौ ;
तेन द्रौत्यं विलम्बो विरतिरपि परावर्तने जाघटीति ॥ १०५ ॥

वेगातिरिक्तं स्थितस्थापकाभिधानं संस्कारमपि कल्पयन्त्यल्पबुद्धयः, तत्रेति वक्तुमनुवदति **शाखेति**। 'शाखा-कोदण्ड-चर्मप्रभृतिष्वाकर्षणादौ सति कुतश्चित् कारणविशेषात् भूयः स्वस्थानावस्थानं भवति। स तु कारणविशेष स्थितस्थापक, इति चेत्—**मैवम्** ; नियतसंस्थानविशेष एव **स भवतु**= स्थितस्थापको भवतु, यत्संस्थानविशिष्टे वस्तुन्यसौ स्थितस्थापको भवद्भिः कल्प्यते ॥ स्थितस्थापकविशेषाभावे परावर्तने द्रौत्यविलम्बादिकं कथमिति चेत्, तत्तत्स्थितस्थापकविशेषनियामकेन तत्तत्संस्थानविशेषेणैव तज्जाघटीतीत्याह **तेनेति** ॥ **इति संस्थानविशेषातिरिक्तस्थितस्थापकभङ्गः** ॥ १०५ ॥

(466) *प्राग्देशप्रापकोऽसौ किमिति नियमितो मेदिनीमात्रनिष्ठः ?
तोयाग्न्यादावदृष्टेरिति यदि, न ; पृथिव्येकदेशेऽप्यदृष्टेः ।
भूम्यंशे दृश्यते तत्फलमिति यदि, नावादिभेदेऽपि साम्यात् ;
भूपष्टम्भादिभेदादिदमिति च (न ?) विपर्यासकल्पे(पक्षे)ऽप्यपायात् ॥ १०६॥

? ... ... ... ... इति स्थितस्थापकस्यातिरिक्तत्वेऽपि भूमात्रनिष्ठत्वनिरासः ॥ १०६ ॥

---

श्री–पूर्वस्थितरीतिस्थापनहेतुस्तत्रतत्र संस्कारोऽस्तीति सः= स्वस्थानयानहेतुर्गुणः इष्ट इति चेत्— मा भूत्। तादृशसंस्कारो यादृशाकारविशिष्टे तवेष्टः, तादृशाकारभेद एव स्वस्थानयानहेतुर्भवतु। आकृष्य विसृष्टे वस्तुनि परावर्तनकाले क्वचिद् द्रौत्यं=द्रुतत्वम् याने अधिकक्षणानन्तरितत्वम्, क्वचित् विलम्बः=अन्तरितत्वं, क्वचिदधिकाभ्यासादिवशात् यानोपरतिरेवेत्यादि च कालानुसारिसंस्थानैकरूप्याभावप्रयुक्तमेव भवितुमर्हति ॥ १०५ ॥

अयं स्थितस्थापकः पृथिवीमात्रवृत्तिरिति तार्किकाः। तद्दूषयति **प्रागिति**। अत्र सर्वार्थसिद्धिर्न लभ्यते। प्राग्देशप्रापकः पूर्वस्थितदेशयानहेतुः असौ गुणः पृथिवीमात्रस्थित इति कुतः॥ तोये अग्नौ वायौ वा न दृश्यत इति चेत्, किं सर्वत्र, उत क्वचित्। नान्त्यः; पृथिव्यामपि शाखादिव्यतिरिक्तस्थले तदभावात्। शाखादिस्थितिरलं पृथिव्यां तत्स्थापनायेति चेत्, तोयादावपि क्वचिद्दर्शने तत्राप्यस्तु। अधस्स्थितं तोयमुपरितनभूमौ उत्क्षिप्यते चेत् पुनः पतति; अग्निज्वाला कथञ्चिदुपायेनाधोनीयमाना पुनरुपरि गच्छति। पवनोऽपि ऊर्ध्वमधो वा निवर्त्यमानः तदुपलविरहे तिर्यगेव प्रसर्पति। तत्रतत्रापि कश्चित् संस्कार इष्यताम्। तत्तद्वस्तुस्वभाव इति तु सर्वत्र तुल्यम्॥ **भूपष्टम्भेति**। उपष्टम्भकभूम्यंशवशादेव तोयादौ स्थितस्थापनं यथा शाखादिनिक्षिप्तजलाग्न्यादाविति च न; तदभावेऽपि भूम्युपष्टम्भाभावेऽपि देशान्तरं प्रापितस्य ततोऽपायो भवतीत्यर्थः। इदञ्च विवृतमेव चतुर्थपादे चेति पाठे नेत्यनुषंगः ॥ १०६ ॥

*अत्र नृसिंहराजीयम्—एवकश्लोको व्याख्यायते। वैशेषिका ऊचुः—स्थितस्थापकसंस्कारः पृथ्वीमात्रगत इति। तत्र नियामकाभावान्न नियम इति दूषयति प्राग्देशेति ॥ प्राग्देशप्रापकः— स्थितस्थापको मेदिनीमात्रनिष्ठ इति किमिति नियमितः? तन्यदर्शनान्नियमनमिति शङ्कते—तोयाग्न्यादाविति। तर्हि दर्शनाभावः पृथिव्यामपीति चोदयति पृथिव्येकदेश इति। पाषाणादावदर्शनादिति भावः। ननु कोदण्डादौ क्वचिद्दर्शनात् [.. . ...?] पृथिव्यामेवेति न व्यवस्थासिद्धिः॥ इति अतिरिक्तस्थितस्थापकसद्भावेऽपि पृथिवीमात्रनिष्ठत्वनिरासः ॥ १०६ ॥*

कर्मेति, प्रयुञ्जते चैवदनुमानं—विप्रतिपन्नं कर्म अप्रत्यक्षम् कर्मत्वात् परमाणुकर्मवदिति। तत्रोत्तरं व्याप्तिशून्यमिति। कर्मणो नित्याप्रत्यक्षत्वे न कुत्राप्यनुमानस्य व्याप्तिः सिध्येदिति भावः। तर्हि सूर्यगमनादेरपि प्रत्यक्षत्व स्यादित्यत्राह **योग्यत्वेऽपि हीति**। न हि योग्याः सर्वेऽपि सहकार्यभावेऽपि गृह्यन्ते, व्यवहितविप्रकृष्टादीनामपि ग्रहणप्रसङ्गात्। सूर्यगमनादिकं तु दूरत्वान्न गृह्यत इति लोक प्रसिद्धमेतत्। कर्मण. प्रत्यक्षत्वं विपक्षे बाधकेनोपपादयति **नो चेदिति**। यदि कर्म न प्रत्यक्षम्, तर्हि कर्म स्वरूपमेव न स्यात्; कर्मफलभूताया देशान्तरप्राप्तेरेव कर्मव्यवहारसिद्धेः। देशान्तरप्राप्तिरेव कथमिति चेत्-तत्राह **फलमपि हि भवेत् कर्महेतोरिति** स्वदिष्टात् कर्मकारणादेव देशान्तरप्राप्तिरस्तु; किमन्त र्गडुना कर्मणेति भाव। किंच मल्लयोर्मेषयोर्वा परस्परसंयोगस्य उभयकर्मजत्वात् तद्दृष्टान्तेन स्थाणुश्येन-संयोगस्याप्युभयकर्मजन्यत्वं स्यात्॥ प्रत्यक्षविरोधस्तत्रेति चेत्, हन्त! तर्हि कर्मण. प्रत्यक्षत्वं भवतैवाभिहित मिति व्याघातमजानानस्य किमुत्तरं देयम्*॥ **इति सर्वकर्मणां नित्यानुमेयत्वभङ्गः ॥ १०८ ॥**

(469) **केचित् कर्मादिरूपं जगदुरसमवाय्याह्वयं हेतुभेदं**
**किं तैरेवं निमित्ताश्रयमिह जनकं नानिमित्तं विभक्तम्?।**
**तत्प्रत्यासत्तिमात्रं व्यभिचरति यदि, स्यादक्लृप्तेऽपि तुल्य;**
**युक्त्या नैयत्यमत्रेत्यपि समम्; अथवा स्वस्ति वः स्वैरवाग्भ्यः ॥ १०९ ॥**

एवं कर्मप्रत्यक्षत्वमुक्त्वा कर्मादिष्वसमवायित्वेन व्यवहारभेदं प्रतिक्षिपति **केचिदिति**। इत्थं किल वैशेषिकाणां साङ्केतिको व्यवहार.—समवायिकारणं किंचित्, असमवायिकारण चान्यत्; तच्च समवायिकारणप्रत्यासन्नम्, अपरं पुनरीश्वरकालादिकं निमित्तमिति। तत् प्रतिबन्द्या निराकरोति **किं तैरिति**। यदि समवायिकारणप्रत्यासन्नमसमवायिकारणमिति कल्प्यते, तर्हि निमित्तकारण

---

*— सूर्यगत्यादेरिव, तन्मते कर्मैव पृथक् न सिध्येदित्याह कर्मत्वादिति। आदित्यो व्रज्यावान् पूर्वदृष्टस्थलभिन्नस्थलस्थत्वेन दृश्यमानत्वादिति सूर्यस्पन्दानुमानं यथा, तथेति। इदं निरस्यति व्याप्तीति। अप्रयोजको हेतुः। योग्यानामपि सहकारिकारणाभावाददर्शनं दृष्टम्। सौक्ष्म्यादिति सारावलिश्लोकोऽत्रानुसंधेयः। अत एव अर्यमादेः=सूर्यादेः स्पन्दाः न दृश्यन्ते। नो चेत्—योग्यत्वमेव नास्तीति स्वीकारे, कर्मैव न सिध्येत्। कर्मणः फलभूतं संयोगादिकं कर्मोत्पादकसामग्रीत एव साक्षाज्जायताम्। किमनेन मध्ये कल्प्येन। किञ्च संयोगो द्विष्ठः, कर्म तु एकमात्रेऽपि। कथमुभयं स्यम्॥१०८॥

ननु कार्याणां समवायिकारणासमवायिकारणनिमित्तकारणरूपत्रिविधकारणजन्यत्वं प्रसिद्धम्। कर्मानंगीकारे च संयोगविभागरूपकार्यानुत्पत्तिः स्यात्। तस्यैव तयोर्निरपेक्षकारणत्वस्य सूत्रोक्तत्वात् इत्यत्राह केचिदिति। कर्म क्वचिदसमवायिकारणम्। अवयवसंयोगोऽवयविनोऽसमवायिकारणम् अवयवगतरूपादिश्चावयविरूपादेरिति जगदुः। किमिदमसमवायित्वमिति चेत्—समवायिकारणप्रत्यासन्नत्वं तत्समवेतत्वमेवेति। अत्र प्रतिब्रूते किं तैरिति। दण्डादिरूपे घटादिकारणे प्रत्यासन्नतया कारणभूतानां भ्रमणादीनां निमित्तप्रत्यासन्नतया कारणत्वात् निमित्तकारणम् निमित्तकारणमिति द्वैविध्यं स्वीकृत्य निमित्ताश्रितस्य अनिमित्तत्वेन विभागः किमिति न। निमित्तकारणप्रत्यासन्नं सर्वं न कारणमिति चेत्—समवायिकारणप्रत्यासन्नमपि सर्वं न कारणं भवति-यथा

प्रत्यासन्नमनिमित्तकारणमिति चतुर्थं कारणं किमिति न कल्प्यते ? अथ निमित्तकारणप्रत्यासत्तिमात्रम् अकारणेष्वपि विद्यमानत्वात् व्यभिचारदुःस्थमिति चेत्, समवायिकारणप्रत्यासत्तिमात्रमपि व्यभिचारदुःस्थम् इत्याह **स्वावक्लृप्तेऽपि तुल्यमिति** । न हि समवायिकारणप्रत्यासन्नानां सर्वेषामपि धर्माणाम् असमवायिकारणत्वं भवद्भिरुच्यते । **युक्त्या नैयत्यमत्रेत्यपि सममिति** । न वयमनवधृतसामर्थ्यानाम् असमवायित्वं वदामः, अपितु अवधृतसामर्थ्यानामिति युक्त्या विशेषयाम इति चेत् ; तर्हि वयमप्यनवधृतसामर्थ्यानामनिमित्तकारणत्वं न वदामः, अपि त्ववधृतसामर्थ्यानामिति समः समाधिः । अतोऽसमवायिकारणवदनिमित्तकारणमिति चतुर्थोऽपि कल्पः कल्प्यताम् । तथा च भवतां **स्वैरवाग्भ्यः स्वस्तीति** साधिक्षेपमाक्षिपति अथवेति ॥ इति असमवायिकारणविभागक्लृप्त्यनौचित्यम् ॥ १०९ ॥

(470) कर्मोत्क्षेपादिभेदात् कतिचिदकथयन् पञ्चधा ; तच्च मन्दं
दिग्भेदात् तस्य भेदे दशविधमिति(मपि) तत्कल्पनं सांप्रतं स्यात् ।
यत्किञ्चिद्भेदकाचेत्, अनवधिकभिदा ; कर्महेतु(तो ?)र्ध्रुवाचेत्,
अव्याप्तिः ; बुद्धितश्चेत्, इयमितरसमा ; संकरस्त्वत्र सह्यः ॥ ११० ॥

वी— तन्तुत्वं न कारणम् । तुरीतन्तुसंयोगो नासमवायिकारणम् । ज्ञानेच्छाकृतीनां समवायिप्रत्यासन्नत्वेऽपि असमवायिकारणत्वं नेष्यते, किं तु आत्ममनस्संयोगस्यैव । अतः स्वावक्लृप्तस्थलेऽपि दोषस्तुल्यः । एवमपि युक्तिविशेषेण व्यवस्था यदीष्यते, तदन्यत्रापि तुल्यम् । अथवा महर्षेर्नियोगपर्यनुयोगानर्हत्वात् सर्वं सह्यमिति भवदुक्तमेव बहुत्र समाधानम् । श्रुतियुक्त्युभयत्यागेन भवतां स्वैरित्वमेवेति । स्वैरवाग्भ्य इति कर्मधारयः । वः= भवतां वाग्भ्यः स्वस्तीति ॥ १०९ ॥

अस्त्वतिरिक्तमनतिरिक्तं वा कर्म । द्रव्यगुणस्थल इवात्र विभागसामञ्जस्यमपि नास्तीत्याह कर्मेति। उत्क्षेपणावक्षेपणाऽऽकुञ्चनप्रसारणगमनानीति पाञ्चविध्यमुक्तम् । तत्रोर्ध्वदेशसंयोगानुकूलपाषाणादिक्रियानुकूल-पुरुषप्रयत्नादेरुत्क्षेपणशब्दार्थत्वे कर्मत्वमेव न भवति । अतः पाषाणादिक्रियैवात्र विवक्षणीया । तत्र उत्, अवेति ऊर्ध्वाधोदिग्भेदग्रहणवत् दिशां दशत्वात् इतरदिश आदायापि भेदः सुवच इति विभजनमिदं न सम्यक् ॥ नात्र दिग्भेदो विवक्षितः, किंतु यत्किञ्चिदन्यदेवेति चेत्—किं यत्किञ्चिदिति यत् यत् भेदकं भवति, तस्य सर्वस्य ग्रहणम्, उत व्यवस्थितस्य । आद्ये, अनन्तत्वात् भेदकस्य विभागेयत्ता न सिध्येत् । अन्त्ये, किं तत् ? ननु हेतुः= प्रयत्नविशेषः उत्क्षेपणादौ ध्रुवः, अत एवोद्गमनादिपदत्यागेन उत्क्षेपणादिपदप्रयोगः । तत्र प्रयत्ने अवान्तरवैषम्यात् उत्क्षेपणादिचातुर्विध्यम् । गमने तु न प्रयत्ननैयत्यमिति चेत्—अव्याप्तिः ; उलूखलमभिहन्यमानं पुरुषप्रयत्नाभावेऽपि मुसलमुत्क्षिपति, स्रोतस्संघट्टो जलमुत्क्षिपति, दावाग्निर्वेणुदण्डम्, वायुस्तूलमिति बहुषु स्थलेषु प्रयत्नाभावात् ॥ तत्र तत्प्रयोगो न मुख्य इति चेत्—तत्र न किञ्चिन्मानम् । [अस्मदीयं वैशेषिकरसायनं (१-१-७) द्रष्टव्यम् ।] श्लोके हेतोरिति पञ्चम्यन्ततया शोधनीयम् ; वृत्त्यनुसारात् ॥ मा भूत् हेतुध्रौव्यम् ; बुद्धिभेदो विभाजक इति चेत्—स भ्रमणरेचनादिष्वप्यस्ति। उत्क्षेपणादावपि गमनत्वमस्त्येव । गमनत्वसांकर्येऽपि पृथक्करणे भेदेषु गमनत्वसद्भावादुपेक्षेति चेत्, एवैव क्रिया पुरुषभेदेन गमनत्वेन आगमनत्वेन निष्क्रमणत्वेन प्रवेशत्वेन च गृह्यत इति सांकर्येऽपि बुद्धिवैलक्षण्यसद्भावात् । किञ्च गमनागमननिष्क्रमणप्रवेशनादिकमपि गणयितव्यं स्यात् । यदि चक्रमूर्ध्वाधोगतिकतया भ्राम्यते, तदा भ्रमणत्वम्, अंशात उत्क्षेपत्वमवक्षेसंकरोऽत्र सह्यः ।

एवमसमवायिकारणत्वेनावस्थितकर्मप्रसङ्गे परेषां कर्मभेदक्लृप्तिरप्यसमञ्जसेत्याह **कर्मेति** ॥ उत्क्षेपणादिभेदात् पञ्चविधत्वे तत्तद्दिग्भेदात् दशविधत्वमपि किं न स्यात्? यत्किञ्चिद्भेदकात् पञ्चविधत्वं वदाम इति चेत्, यत्किंचिच्छब्दस्यानेकार्थत्वादनवधिकभेदः प्रसज्येत ॥ कर्महेतुभौग्यात् भेद इति चेत्, तत्राप्यन्यथासिद्धिरेव दूषणम्। न ह्येकत्र हेतु सर्वत्रान्वेति ॥ केवलमुत्क्षेपणादिबुद्धिमात्रेण भेदश्चेत्, तर्हि इतरेष्वपि भ्रमणरेचनादिषु बुद्धिभेदोऽस्तीति तत्रापि नानात्वं प्रसज्येत। किंच बुद्धिभेदोऽपि न नियतः, गमनागमननिष्क्रमणप्रवेशनादिषु सङ्करस्यापि दृष्टत्वात्। अतस्तत्तदुपाधिभेदात् आनन्त्यमेव कर्मणः, न तु पञ्चत्वम् (त्वनियम) इति ॥ **इति कर्मावान्तरभेदनिरूपणम्** ॥११०॥

**(471) मृत्स्वर्णादिप्रसूते भवति हि घटधीः; नान्यदन्यद् घटत्वम्;**
**नैकं बाध्यं समत्वात्; तदिह परिहृतिः कुत्रचित्; क्वापि योगः।**
**पारापर्यं विरोधः परिहरणसमावेशनं चास्त्युपाधौ;**
**तुल्यं चातिप्रसङ्गादिकमिति, न यथादृष्टभङ्गः क्वचित् स्यात् ॥ १११ ॥**

पूर्वस्मिन् ग्रन्थे सङ्करस्त्वत्र सह्य इति [जाति]सङ्करप्रसङ्गे न विरोध इत्युक्तम्। तदेव समर्थयते—**मृत्स्वर्णादीति**। समाविष्टाना जातीना परापरभाव, परस्परपरिहारेण वर्तमानाना विरुद्धानां जातीना

---

[गु]— बुद्धिभेदोऽप्यनियत इति। कर्मभेदोऽनियत इत्यर्थः। पश्चिमग्रामात् पूर्वग्रामं गच्छतो देवदत्तस्य गमनक्रियायां पश्चिमग्रामवासिनां गमनबुद्धिः, प्राग्ग्रामवासिनामागमनबुद्धिः, तथा मध्यस्थैकद्वारकगृहयोरेकगृहान्निष्क्रमण एवान्यगृहप्रवेशबुद्धिश्च दृश्यते; न च तत्र बुद्धिभेदेऽपि कर्मभेद इति भावः। संकरस्यापि दृष्टत्वादिति। गमनत्वागमनत्वादीनां एकत्र समावेशदर्शनादित्यर्थः ॥११०

[श्री]— पञ्चमित्यादि। अतो न पाञ्चविध्यमिति। इयं=बुद्धिः, इतरसमा=भ्रमणादावपीति ॥११०॥

तार्किकोक्तपदार्थविभागपरिशीलने कर्मपर्यन्तं विचारितमासीत्, अथ सामान्यं विचार्यते द्वादशभिः श्लोकैः यज्जातीयमित्यतः प्राक्। पूर्वश्लोके संकरस्य प्रसक्तत्वात्, 'सांकर्यं जातिबाधकम्' इति तार्किकोक्तिशीलनेनोपक्रमः। जातिरुपाधिरिति द्विविधो धर्मः अनुगतव्यवहारनिर्वाहकः। आद्यः सांकर्याभावे भवति, सांकर्ये तु उपाधिरेव। यत्र जातेर्न प्रसक्तिः द्रव्यगुणकर्मभिन्ने, तत्राप्युपाधिरेवेति तार्किकगमनिका। सूत्रकारप्रभृतिघटपटव्यवहारस्तेषामनुवर्तते। घटत्वमपरजातिः, सत्ता परजातिः पृथ्वीत्वद्रव्यत्वादिः परापरजातिरिति परिभाषा। अपरत्वमत्यन्तव्याप्यत्वं स्वव्याप्यजातिराहित्यम्। परत्वमत्यन्तव्यापकत्वं स्वव्यापकजातिराहित्यम्। परापरत्वं किञ्चिज्जातिव्याप्यत्वे सति किञ्चिज्जातिव्यापकत्वम्। सर्वमिदं सामान्यम्, अनेकवस्तुसमानत्वात्। तत्र सत्ता सर्वपरत्वात् सामान्यमेव, अन्यासां जातीनां सामान्यत्ववत् किञ्चिज्जातिमद्व्यावृत्तेरपि सत्त्वात् विशेषत्वमपि। अतः सामान्यविशेषसंज्ञत्वम्। तदुक्तं सूत्रे, "भावोऽनुवृत्तेरेव हेतुत्वात् सामान्यमेव" इत्यादि। भावः=सत्ता। तत्र सांकर्ये सति न जातित्वमिति तदुक्तत्वात् घटत्वे सांकर्यदर्शनात् कथं जातित्वमिति पृच्छति मृदिति। सांकर्यं नाम पृथक् पृथगपि स्थितयोरेकत्र समावेशः। घटत्वमेवम्भूतम्; मृद्घटे पृथिवीत्वेन सह स्थितं हि घटत्वं इदं विना पटादौ विद्यमानं पृथिवीत्वं विना सुवर्णघटेऽप्यस्ति। न च सुवर्णं पार्थिवम्, तार्किकैस्तस्य तैजसत्वोक्तेः। किञ्च मृत्त्वेन सह स्थितं घटत्वं मृत्त्वं विहाय सुवर्णघटेऽस्ति, घटत्वं विहाय च मृत्त्वं लोष्टादाविति च भाव्यम्। तथाच मृज्जन्ये स्वर्णरजतादिजन्ये च, अयं घटः अयं घट इत्यनुवृत्तधीरस्ति; अथापि सांकर्यात् सा कथं

न समावेश इति केषांचित् सङ्केतो न्यायवादिनाम्। तेन सुवर्णादिघटादौ घटत्वमेव नास्तीति तेषा
माशय । तन्नोपपद्यते , अनुवृत्तधीरेव हि सर्वत्र जातिसद्भावे प्रमाणम् । तथा च यथा मृद्घटे घटधी
रस्ति, एव सुवर्णघटेऽपि घटधीरस्ति , तथाच मृत्त्वघटत्वयो परापरभावानुपपत्ति । सुवर्णस्य तैजसत्वेन
भवद्भिः स्वीकारात् । ननु मृद्घटेऽन्यत् घटत्व, सुवर्णघटेऽन्यत् घटत्वमिति ॥ तत् भवदङ्गीकृतानु
वृत्तप्रतीतिविरुद्धमित्याह नान्यदन्यद्घटत्वमिति । अस्तु ।(अथ ?) तर्ह्येक घटत्व बाध्यताम् ॥ तच्च न
सङ्घटत इत्याह नैकमिति । तत्र हेतुमाह समत्वादिति। यदि पार्थिवघटत्व बाध्यम् , भवतामपसिद्धान्त.।
यदि सुवर्णघटत्वम् , तच्च न , समत्वात् –यथा पार्थिवघटे घटत्वबुद्धिव्यवहारौ, एव इति चेत् ,
सुवर्णघटेऽपि[इति ?] घटत्वबुद्धि यवहारयो समत्वादित्यर्थ ॥ पार्थिवघटस्य प्रचुरत्वात् तत्र घटत्वं मुख्यं
भारतवर्षव्यतिरिक्ते वर्षान्तरे सुवर्णघटस्यैव प्रचुरत्वात् तत्रैव मुख्यत्वं स्यादिति समः समाधि. । तथाच
पार्थिवत्वघटत्वयोः कुत्रचिन् सुवर्णघटादौ परस्परपरिहृति , कुत्रचित् मृद्घटादौ योग इति यथोपलम्भं
स्वीकारान्न काचिदनुपपत्ति ॥ तर्हि गोत्वाश्वत्वयोरपि समावेशप्रसङ्ग इति चेन्न , उपलम्भस्यैव नियामक
स्यात् । इयं खलु मर्यादा—केषांचित् पारार्थ्यं, सत्त्वघटत्वादीनाम् , केषांचिद्विरोध , गोत्वाश्वत्वा
दीनाम्; केषांचित् परिहरण समावेशन च, पृथिवीत्वघटत्वादीनाम् [इति ?] । यद्येवमप्यतिप्रसङ्गादि
व्यवहार (र्यम् ?), तत् उपाधावपि तुल्यमिति प्रतिबन्द्या निराचष्टे उपाधाविति । दृष्टत्वादुपाधौ न दोष
इति चेत , तज्जातावपि तुल्यमित्याह न यथादृष्टभङ्गः क्वचित् स्यादिति । यथोपाधौ दृष्टत्वात् सकरः
स्वीक्रियते, तथा जातावपि सकर स्वीकार्य इत्यर्थ ॥ इति [अ?]परापरजातिसमावेशसभवः॥१११॥

अनेन परस्परव्यभिचारिजातिद्वयसमावेशो नानुपपन्न इत्युक्तम् ॥ १११ ॥

---

पू०— दृष्टत्वादिति । ननु पृथिवीत्वव्याप्या घटत्वजातिरन्या, सुवर्णत्वरजतत्वादितत्तद्धर्मव्याप्यानि घटत्वानि
अन्यानि । एवञ्च सुवर्णघटत्वस्य मृद्घटे अभावान्न साङ्कर्यमिति चेत्-तत्राह नान्यदिति । अनुगत-
प्रतीतेरेकत्वसाधकतया कथ भेदोक्तिः। अभिन्नेऽप्यनुगतप्रतीतिरिष्टा चेत्—जातिरेव न सिध्येत्।
नानाघटत्वस्वीकारे घटत्वं घटत्वमित्यनुगतप्रतीत्या घटत्वत्वमपि जाति. स्यात् । तथाच जातेरपि
जातिमत्त्व त्वदनिष्टमापतति । ननु एक घटत्वमेव जाति , अन्यत् न जातिरिति चेत् , समत्वात् =
विनिगमकाभावात् । न च मार्तिकघटा बहव इति मृद्घटत्वजातौ बहुत्वमेव विनिगमकमिति
वाच्यम्। एतावत्संख्याकत्व एव जातित्वम् , नान्यत्रेति संख्यानियमाभावात् । तस्मात् कतिपयजातिषु
परिहृतिः= साङ्कर्यं विना स्थिति· । कुत्रचित् =जात्यन्तरेषु योग =साङ्कर्यञ्च यथादर्शनमिष्टमित्येव
वक्तव्यम्। यथोपाधिषु। युष्मन्मते हि भूतत्व मूर्तत्व शरीरत्वमिन्द्रियत्वमित्यादीनामुपाधित्वमेव। तत्र
भूतत्वमिन्द्रियत्वापेक्षया परम् , इन्द्रियत्वञ्चापरम् , भूतातिरिक्तावृत्तित्वात् । इन्द्रियत्व शरीरत्वञ्च
मिथोविरुद्धम् । भूतत्व मूर्तत्वञ्च पृथक् पृथक् वियति मनसि च स्थित्व चतुर्षु भूतेषु संकीर्णमपीति
तत्र परिहरणसमावेशनसमाहार· । ननु घटत्वादे साङ्कर्ये स्वीकृते गोत्वाश्वत्वब्रह्मत्वक्षत्रत्वादेरपि
साङ्कर्यं स्यादिति चेत् , प्रश्न एष उपाधिविषयेऽप्यवतरति । यथाप्रत्यक्ष यथाशास्त्रञ्च तत्तद्वैलक्षण्य-
मित्येव समाधानम् । तदुभयत्र तुल्यम् । अतो न दृष्टरीतिभङ्ग कुत्रापि ॥ १११ ॥

श्री– जाति.? अस्मन्मते घटत्व कम्बुग्रीवादिसंस्थानविशेष अवयवसंयोगविशेष इति यावत् । एवं

(472) 'जातिः ; प्राणप्रदात्री ; गुण इह तदनुप्राणिते भेदक(का) स्यात्
इत्याहुः केऽपि ; नेत्थं नियतिः ; उभयथाऽप्यर्थदृष्टेर्निशादौ ।
तेनान्वेष्टव्यभेदप्रतिनियतिमता केनचिन्नित्यरूप्यं(प्या ?)
प्राप्ता यादृच्छिकीषु प्रमितिषु तु (च) यथादर्शनं तद्व्यवस्था ॥ ११२ ॥

अत्र केचित् जातिगुणयोरेवं वैषम्यमाहु — या वस्तुनः प्राणप्रदात्री=प्रथमं प्रतीयते, सा जाति । गुणस्तु तदनुप्राणिते वस्तुनि भेदकं(कः)—विशेषको धर्म इति, पश्चात् प्रतीयत इति । तदेतदनुपपन्नमित्याह नेत्थं नियतिरिति । तत्र हेतुमाह निशादावुभयथाऽप्यर्थदृष्टेरिति । कदाचित् प्रथममेव जाति प्रतीयते, पश्चात् तद्गुणा. । कदाचित् पुन अन्धकारादौ सामान्यत एव शौक्ल्यादिगुणविशिष्टं वस्तु प्रतीयते, पश्चात् तद्विशेषो जातिरिति । तेनान्वेष्टव्यस्य पदार्थस्य पृथिव्यादेः प्रतिनियतिमता केनचिदसाधारणेन धर्मेण गन्धवत्त्वादिना निरूप्य, यत् पृथिवीत्वादिकम् , तत् सामान्यम्। ततश्च यादृच्छिकीषु प्रमितिषु विशेषविषयासु सामान्यविषयासु च यथादर्शनं पौर्वापर्यव्यवस्था भवति , तेन गवादिशब्दवाच्येषु प्रवृत्तिनिमित्तत्वेनोपादीयमाने गोत्वादिकं सामान्यमिति भाव ॥

इति स्वरूपनिरूपकादिविमर्शः ॥ ११२ ॥

(473) भिन्नेष्वेकावमर्शो न तु निरुपधिकः ; तेषु चैक्यं विरुद्धम् ;
ज्ञानाकारोऽपि बाह्यो न हि भवति ; न चासिद्धमारोपणीयम् ।

---

श्री- जातेर्यथायथं गुणादिरूपत्वे स्थिते, जातिगुणयोर्वैषम्यं कैश्चिदुक्तमप्युपेक्ष्यं भवतीत्याशयानः तदपि प्रस्तौति जातिरिति । जातिः प्राणप्रदात्री = प्रथमं स्वसहितवस्तुप्रतीतिकरी ; स्वरूपनिरूपकधर्मः । तदनुप्राणिते = तत्सहितप्रतीतिविषयभूते वस्तुनि भेदकः— निरूपितस्वरूपविशेषणभूतः गुणः इत्युच्यते इति जातिगुणवैलक्षण्यमाहुः केचित् इति। भेदकमित्येव श्लोके वृत्तौ च पाठे उद्देश्यवाचित्वात् सामान्ये नपुंसकमिति ध्येयम् । निरस्यति नेत्थमिति । इत्थं व्यवस्था नास्ति । निशादौ = अन्धकारे आलोके च यथायथं गुणस्यापि पूर्वं दृष्टेः । अक्षसंनिकर्षविशेषात् गोग्रहणकाले गोत्वं रूपादि च सह गृह्यत एव । कदाचित् तमसि रूपग्रहणं पूर्वं, जातिग्रहणं च पश्चात् । आहुश्च, "पश्यतः श्वेतमारूपं हेषाशब्दश्च शृण्वतः । खुरविक्षेपशब्दश्च श्वेतोऽश्वो धावतीति धीः" इति । गोत्वस्य जातित्वेन ग्रहण द्वितीयपिण्डग्रहण एवेति, गुणग्रहणप्राथम्यं सुतराम्। किञ्चान्वेष्टव्यभेदे = कोऽयमिति विवेचनीयव्यक्तिविशेषे प्रतिनियतिजुषा = व्यवस्थां प्राप्तेन केनचित् तेन = गन्धादिना गुणेन पृथिवीत्वादिजातिर्निरूप्या भवति । गोत्वादिजातिरपि, 'आकृतिव्यंग्या जातिः' इति वदता तार्किकेण गुणनिरूप्यैव स्वीकृता । अतो न जातेः प्राग्भेव ज्ञेयत्वम् । नित्यरूप्यमिति क्लीबपाठः, तदनुसारितया वृत्तौ सामान्यमिति पाठश्च दृश्यते । पूर्वं जातिपदेनैव ग्रहणात् स्त्रीलिङ्गत्वमुचितम् । एवञ्च प्राप्तेति पदमेतद्विशेषणं स्यात् । यादृच्छिकीष्विति । जातिरहितवस्तुमात्रवाचिशब्दस्य यदृच्छाशब्द इति नाम । देवदत्तादिशब्दः सः । तथा सर्वव्यावृत्ताकारूपविशेषविषयकप्रतीतिः यादृच्छिकप्रतीतिः यद्वा यादृच्छिकीषु = पूर्वज्ञाननिरपेक्षं जायमानासु । आपातप्रामाण्येष्वर्थो वा । तत पौर्वापर्यव्यवस्था यथादर्शनमस्तु ॥ ११२ ॥

अथ स्वमते जातिस्वरूपं शोधयिष्यन् वैशेषिकप्रक्रियामाह भिन्नेष्विति । वस्तुतो घटेषु भासितो भिन्नेषु अनेकेष्वेव वस्तु अयं घट, अयं घट इत्येवमाकारा बुद्धिर्जायते । तदेकत्वं

**तस्माद् गोत्वादिबुद्धिव्यवहृतिविषयः कोऽपि सत्योऽनुवृत्तः ;**
**तस्य त्यागेऽनुमादेः क्षतिरिति कणभुक्तन्त्रभक्ता गृणन्ति ॥ ११३ ॥**

तस्य त्यागेऽनुमादेः क्षतिरिति कणभुक्तन्त्रभक्ता गृणन्ति **भिन्नेष्विति** । इत्थं वैशेषिकोक्तजातिपरिक्लृप्तिप्रक्रियां तन्मतपरिज्ञानाय शिष्याणामनुवदति **भिन्नेष्विति** । इत्थं किल जातिं साधयन्ति— भिन्नेषु घटादिषु एकाकारावमर्शो न निष्कारण । तेन सामान्यमङ्गीकार्यम् ॥ न च तेषु स्वरूपैक्यमस्ति, विरुद्धत्वादित्याह **तेषु चैक्यं विरुद्धमिति** । ज्ञानाकार एव सामान्यमिति चेत्, तन्न युज्यत इत्याह **ज्ञानाकारोऽपि बाह्यो न हि भवतीति** । बाह्य समा-बाह्यत्वेन प्रतिभासनात् । अन्यत्र सिद्धं रोपितं सामान्यमिति चेत्, तदपि न युज्यत इत्याह **न चासिद्धमारोपणीयमिति** । सामान्यस्य क्वचिदप्यसिद्धत्वात् आरोपणमपि न युज्यत इति भावः । तस्मात् ह्यन्यत्रारोप्यम् ; **कोऽपि सत्योऽर्थो** गवादिष्वनुवृत्तः । तस्य त्यागे **अनुमादेः क्षतिः**— गोत्वादिबुद्धिव्यवहृतिविषयः **कोऽपि सत्योऽर्थो** गवादिष्वनुवृत्तः । तस्य त्यागे अनुमादेः क्षतिः— व्याप्तिग्रहणाभावादनुमानं न स्यात् । आदिशब्देन सङ्केतग्रहणाभावादागमोऽपि न स्यादिति भाव·(व्यते?) । **इति परोक्तजात्यनुवादः ॥**

**कणभुक्तन्त्रभक्ता गृणन्तीति** परमत(पक्ष,प्रस्थानोपन्यासतां द्योतयति ॥

**(471) 'मध्ये यद्यस्ति जातिर्मतिविहतम(तिर ?)थो नास्ति, भिन्ना भवेद्वा**
**तस्मादन्यत्र वृत्तिर्न च सकलमतिः क्वापि कृत्स्नांशवृत्त्योः ।**
**धर्मिध्वंसे तु धर्मस्थितिरपि न भवेत् ; नात्र गत्यादि च स्याद्'**
**इत्याद्यैर्बाह्यजल्पैरनितरगतिका सविदक्षोभणीया ॥ ११४ ॥**

अत्र **सौगताः** जातिं खण्डयन्तीत्यनूद्य तत्पक्षं प्रतिक्षिपति **मध्य इति** । इत्थं किल तेषां जाति-खण्डनपरिपाटी— व्यक्तिद्वयमध्ये जातिर्यद्यस्ति, (?) **मतिविहतम्** उपलम्भविरुद्धमित्यर्थः। अथ मध्ये नास्ति, भिन्ना सा जातिर्भवेत् । किंच कार्त्स्न्येन वा जातिर्वर्तते, एकदेशेन वा ? आद्ये, अन्यत्र व्यवस्थ्न्तरे वृत्तिरेव न स्यात् । अंशेनोभयत्र वर्तते चेत्, तत्रतत्रोभयत्रापि **सकलमतिर्न स्यात्**—कार्त्स्न्येन

---

धी- किंनिष्ठम् ? न घटेषु ; नानात्वेन विरोधात् । न च ज्ञानगतं घटत्वमिति विज्ञानमात्रवादिबौद्ध-च्छायया वक्तव्यम् ; वहिरवभास्यमानस्याऽऽन्तरत्वायोगात् । नापि आरोपितं तत् ; क्वचित्प्रसिद्ध-स्यैवान्यत्राऽऽरोपात् । अतो गोषु गोत्वमेकमनुवृत्तं सत्यमस्तीति जातिसिद्धिः । विषयशब्दस्य पुल्लिङ्गत्वात् सत्य इत्यादेः पुंस्त्वेन निर्देशः। अस्य सामान्यस्यास्वीकारे धूमत्वेनाग्नित्वेन सर्वधूमाग्नि-ग्रहणाभावात् व्याप्तिग्रहाभावादनुमितेरसिद्धिः । तदुपजीविशब्दप्रमाणस्याप्यसिद्धिः इति कणादमत-भक्ताः कथयन्ति ॥ ११३ ॥

एतन्निरासकबौद्धमतं निरस्यति मध्य इति । एका गोत्वजातिर्गोषु सर्वत्र स्थिता द्वयोर्गवोर्मध्ये= अन्तराले-गगनभूतलादौ यद्यस्ति, तदा मतिविहतिः= धीविरोधः । इदं गोभिन्नमित्येव तत्र प्रतीतेः। विहतिरिति पाठः स्यात् । यदि मध्ये नास्ति, तर्हि विहतमित्येव पाठे भावे क्तो वा, अन्यथैव वा । किञ्च कृत्स्नांशवृत्त्योः-एकत्र गोत्वादेः कार्त्स्न्येन वृत्तिपक्षे गोत्वजातिर्व्यक्तिभेदेन भिन्ना स्यात् । तस्मात्= एकस्मात् अन्यत्र वृत्तिः सकलमतिश्च न स्यात् । कार्त्स्न्येन गोत्वस्यैकत्रैव स्थितत्वात् । अंशतः अंशतो वृत्तिरिति पक्षान्तरे च क्रमेण अन्यत्र= गोद्वये गौरिति मतिर्न स्यात् । न त्वयं गोरिति । न हि अयं द्वौ इति गोद्वयात् अन्यत्र= गोद्वये गौरिति मतिर्न स्यात् ; न त्वयं गोरिति । न हि अयं द्वौ इति भिन्नौ च इमे गोगिनि वा इमे गाव इति वा स्यात् ;

जातिप्रत्ययो न स्यादित्यर्थः। किंच धर्मिरूपव्यक्तिध्वंसे धर्मरूपजातिस्थितिर्न संघटते। ननु(तथा?) पूर्वगोव्यक्तिस्थाया जातेरुत्तरगोव्यक्तौ अद्रव्यत्वेन गमनेन संगतिर्न स्यात्। न च तत्रोत्पत्तिः संभवति; नित्यत्वेन जातेरङ्गीकारादित्याद्यैर्बाह्यजल्पैरनितरगतिका स्वारसिकबाधविधुरा जातिसंविद्क्षोभणीयेत्यर्थः। 'न याति न च तत्रासीत्' इत्याद्युक्तिः प्रत्यक्षविरुद्धत्वाददूषणमिति भावः॥ **इति सौगतोक्तजातिखण्डनपरिहारः॥**

(475) **अन्यापोहस्तु गोत्वप्रभृतिरिति तु नेदंतया तत्प्रतीतेः;**
**अन्योन्यापोहबुद्धया नियतिरिति मिथस्संश्रयस्तत्प्रतीतौ।**
**विध्याक्षेपक्षमत्वात् विषमसमतया बुद्धिनैयत्यसिद्धेः;**
**शब्दार्थत्वादपोहो विमतिपदमिति व्याप्तिभङ्गादिदुःस्थम् ॥ ११५ ॥**

---

व्यी-प्रतीतिर्भवति। अपि च धर्मिणो गोः ध्वंसे तद्धर्मः कथं न नश्येत्। न चान्यत्र गता गोत्वजातिरिति युक्तम्; द्रव्यस्यैव क्रियावत्त्वात्। उक्तञ्च तैः, 'न याति न च तत्राऽऽसीत् न चोत्पन्नं न चांशवत्। जहाति पूर्वं नाऽऽधारमहो व्यसनसंततिः' इति। अयमर्थः—अद्रव्यं गोत्वं नान्यत्र यायात्। गोत्पत्तेः प्राक् भूतले गोत्वमविद्यमानं कथं गवि संसृष्टम्। पूर्वं हि गोत्वं न तत्र गवि, तस्यानुत्पन्नत्वात्, न भूतले, तस्यागोत्वात्। न च तदेवोत्पन्नमिति। अनादित्वेष्टेः। गोत्वस्य निरवयवत्वात् अनंशत्वात् एकांशेनैकत्र स्थितिः; अन्यांशेनान्यत्र च गवीति दुर्वचम्। गवि जीवत्येव गोत्वं चेत् तं जह्यात्, गौरपि कदाचिदगोः स्यात्। तस्मात् कस्याप्यंशस्य समाधेयत्वाभावात् व्यसनसंततिरेव वैशेषिकाणामिति। समाधत्ते इत्याद्यैरिति। एवं नानाविकल्पमूलव्यसनसंततिस्तत्रैव। यथादर्शनं सर्ववस्तुस्वीकारिणां प्रत्यक्षविरुद्धविकल्पताण्डवविगर्हणायोगात् विन्ध्यहिमवतोर्द्वित्वमेकं तत्रोभयत्र वर्तमानं मध्येऽस्ति न वा। अस्ति चेत्, कथं तद्द्वित्वम्? मध्ये नास्ति चेत्, कथमेकम्। तस्याऽऽनुभविकत्वे, इदमप्येवमेव। कृत्स्नांशविकल्पश्च नावतरति; निरंशे कार्त्स्न्यस्य त्वदिष्टस्य दुर्वचत्वात् अविद्यमानधर्ममादाय विकल्पायोगात्। द्वित्वादिकं व्यासज्यवृत्ति; एकाभावेऽन्यत्रापि नश्येदिति। गोत्वादिकं तु न तथेति अयं गौरित्येकग्रहणेनापि प्रतीतिरुपपद्यते। तत्तज्जातिव्यञ्जकस्थल एव तदभिव्यक्तिः। तत्रैव तद्वत्ताव्यवहारश्च। अतो न जातिसंविद्क्षोभणीयेति तार्किकैः प्रत्युच्यते। अस्मन्मते तु आकृत्यतिरिक्तनित्यजात्यभावस्य वक्ष्यमाणत्वात् प्राय एतद्दूषणानवकाश एवेत्यलम्॥ ११४॥

जातिविषये न तार्किकोक्तं दुष्टम्; किंतु तद्दूषकसौगतोक्तप्रक्रियैवेत्याह अन्येति। जातिर्नाम न भावपदार्थः, किंतु तदाश्रयत्वाभिमतवस्त्वपेक्षया यानि अन्यानि तद्व्यावृत्तिरेव। तथाच गोत्वं गवेतरव्यावृत्तिः, अश्वत्वम् अश्वेतरव्यावृत्तिरिति रीत्या भाव्यमिति सौगतोक्तं न; इदन्तया = अयं गौरिति स्वरूपेण प्रतीतेः; तदन्यव्यावृत्तित्वरूपेणाप्रतीतेः। अन्यापोहो नाम तदन्यप्रतियोगिकभेदः। वृत्तौ अगोव्यावृत्तिरित्यस्य गोत्वाभावात्यन्ताभाव इत्यर्थः। इदं फलितकथनम्। व्यावृत्तित्वेन प्रतीतिरेवेयमिति पक्षे दोषमाह अन्योन्येति। तथा स्वीकारे तत्प्रतीतौ गौरित्यत्राश्वादिव्यावृत्तित्वेन, अश्व इत्यत्र च गवादिव्यावृत्तित्वेन विषयत्वाभ्युपगमे गोबुद्धौ अश्वापोहबुद्ध्याः पूर्वभावनियमः, तत्र अश्वबुद्धौ गवापोहबुद्ध्याः पूर्वभावनियतिरिति मिथस्संश्रयः—अन्योन्याश्रयः। गोपदार्थान्तर्गताश्वपदार्थान्तर्गतत्वं गोरेवेति आत्माश्रयश्च। सौगताः, गौरेव गौरिति व्यवहारात् एवकारेण गवेतरभेदप्रतीतिरित्याहुः। तावता न गोत्वस्य विधिरूपत्वभंग इति तन्निषेधकेनाह विधीति। विधिपदं निषेधाद्यप्रतिद्वन्द्वि मा गार्थकम्। गोत्वस्य प्रतीतस्य भावरूपस्य विधिभूता-

इत्थं न्यायविदां जातिसमर्थनप्रकारमुक्त्वा सौगतोक्तमपोहरूपसामान्यं दूषयति— अन्यापोह
इति। अगोत्वव्यावृत्तिर्गोत्वम्, अनश्वत्वव्यावृत्तिरश्वत्वमिति नेदं युज्यते ; इदंतया विधिरूपेणैव सामान्य-
प्रतीतेः । अन्योन्यापोहबुद्धिप्रतीतौ (बुद्धिनियतौ ?) त्वन्योन्याश्रयप्रसङ्ग इत्याह अन्योन्येति । गोत्व-
प्रतीतिसापेक्षमगोत्वमगोत्वप्रतीतिसापेक्षं [च ?]गोत्वमित्यर्थः । कथं तर्हि गौरेव गौरिति बुद्धिनैयत्यम् ?
इत्यम्—गोत्वविरुद्धमश्वत्वं विधिरूपमेव गोत्वमाक्षिपति ; एवं गोव्यतिरिक्तभावत्वमगोत्वमाक्षिपति ।
तत्र पूर्वं न्यूनत्वाद्विषमतया, उत्तरं सर्वभाववर्तित्वात् समतया ; तेन गोत्वविरुद्धधर्म(र्म ?)योगादेव गौरेव
गौरिति बुद्धिनियमसिद्धिरित्यर्थः। तेन भावरूपविरुद्धधर्मसिद्धौ व्यवहारनियमार्थमपोहो न कल्प्य इत्यर्थः ।
'ननु सर्वः शब्दार्थोऽपोहात्मकः शब्दार्थत्वात् अघटशब्दार्थवत्' ॥ इत्यनुमानं व्याप्तिशून्यत्वादिदुःस्थमित्याह
शब्दार्थत्वादिति । न हि स्वलक्षणशब्दोऽपोहपर इति प्रतिबन्द्यभिप्रायेण परिहारः ॥

इति अपोहरूपसामान्यवादभङ्गः ॥ ११५ ॥

(476) युज्येतोपाधितश्चेदनुगतधिषणा तत्र, नेष्टाऽन्यवत्क्लृप्तिः ;
तस्मात् संघातवर्गेष्ववयवरचनाभेदतोऽन्यत्र सिध्येत् ।

---

सर्व— 'विध्याक्षेप' इत्याद्यवतारयति कथं तर्हीति । अपोहानङ्गीकारे, 'गौरयम्, अथ च अगौः'
इति व्यवहारनियतिः कथमित्यर्थः । अपोहं विनाऽपि गोत्वादेः विरोधिभावरूपधर्माक्षेपकतया
व्यवहारनियतिरिति परिहारपरं 'विध्याक्षेप' इत्यादि व्याचष्टे इत्थमित्यादिना । गोत्वविरोधिभाव-
रूपमगोत्वमाक्षिपति । अगोत्वं च विरोधिभावरूपं गोत्वम् । तत्र पूर्वं गोत्वं अल्पव्यक्तिनिष्ठतया
विषममसाधारणम् । अबाधनार्थं च पुनस्तत् निराकरोति (?) मैवमितीत्युक्तम् (?) ॥ ११५ ॥
सामान्यधर्मोपस्थापकत्व-

श्री— श्वत्वाक्षेपकत्वं तदुपस्थापकत्वमस्ति, तथा गोव्यतिरिक्तभावत्वमिति सामान्यधर्मोपस्थापकत्व-
मपि । तत्र प्रथमं गोभिन्नसर्ववस्तुगतत्वाभावात् विषमम्, व्यावृत्तिप्रतियोगितान्यूनवृत्ति । द्वितीयं तु
सर्वत्र सत्त्वात् समम्=व्यावृत्तिप्रतियोगितासमदेशवर्ति । तदुभयोपस्थितिश्च विरुद्धत्वरूपसंबन्ध-
वशात् भवति । अतः अश्वादिव्यावृत्तिः गवेतरव्यावृत्तिश्च युज्यते । तदा गौरेव गौरिति प्रतीतिः ।
एवञ्च गोत्वमगोव्यावृत्तिरिति ततः सिद्धिः व्यावृत्तेर्गोत्वानतिरेकं साधयेत् ; न तु गोत्वस्याभावम् ।
भावातिरिक्ताभावपक्षे तु गौरगौः=गवेतरव्यावृत्त इत्येतस्मात् गोत्वनैयत्यमेव गवेतरव्यावृत्ती
सिध्येत् ः नाभेद इति व्याप्त्यज्ञानात् व्यापकबुद्धेर्नैयत्यमिति । अथ सर्वमपोहात्मकं शब्दार्थत्वात्
असंशयादिशब्दार्थवदित्यनुमानं दूषयति शब्देति । अप्रयोजको हेतुः, सर्वं विधिरूपं शब्दार्थत्वात्
स्वलक्षणशब्दार्थवदिति सुसाधश्चेति । सिद्धान्ते गोत्वादौ अपोहात्मकत्वसाधने इष्टापत्तिश्च ।
प्रमेयत्वादौ केवलान्वयितया प्रमेयभिन्नभेदरूपत्वस्य दुर्वचतया व्याप्तिभंगश्चेति ध्येयम् । बुद्धि-
प्रतीतौ इत्यत्र बुद्धिनियताविति युक्तम् । विधिरूपं गोत्वमिति पर्द ; अश्वत्वं भावत्वमगोत्वमिति
कर्म । स्वलक्षणेति । तत्तद्व्यक्तिरूपं स्वलक्षणमपोहवत् अभावरूपं तेषां नेष्टम् ॥ ११५ ॥

सिद्धान्तिसंमतं सामान्यस्वरूपं शिक्षयति युज्येतेति । भूतत्वमूर्तत्वागुणाधीनां सर्वसंमत-
त्वात् तेषामनुगतप्रतीतिनिर्वाहकत्वस्य च इष्टत्वात् अवयवपरपर्यायसंघातरूपवस्तुनिष्ठाः जातयः
तत्तदवयवरचनाभेदतः=संस्थानविशेषतोऽन्यतया न सिध्यन्ति । घटत्वरूपसंस्थानस्य पटत्वरूप-
संस्थानस्य च विलक्षणत्वात् नैकत्वान्यव्यवहारप्रसक्तिः । यत्र तु गोगवयादौ प्रायः संस्थानैक्यम्,

**सौसादृश्यात्तु जातिव्यवहृतिनियमः ; तेन नातिप्रसक्तिः ;**
**नो चेन्मूर्तत्वमुख्यैस्त्वदभिमतिनयात् व्यज्यतां जातिरन्या ॥ ११६ ॥**

एवमपोहसामान्य निरस्यासाधारणधर्मातिरिक्तं **वैशेषिका**द्युक्तं सामान्यं निराकरोति **युज्येते**ति । अनुवृत्तप्रत्ययनिर्वाहार्थं खलु सामान्यम् । सा अनुगतधिषणा उपाधितश्चेत्, तत्रान्यस्य सामान्यस्य क्लृप्ति र्नेष्टा । तस्मात् **संघातवर्गेषु अवयवरचनाभेदतोऽन्यत्** सामान्यं न सिध्येत् । **संघातः**=अवयविद्रव्यम् । सादृश्याज्जातिव्यवहारे न पुनरतिप्रसक्तिः, सौसादृश्यस्य विवक्षितत्वादित्याह **सौसादृश्या**दिति । **सौसादृश्यम्**=अत्यन्तसादृश्यम् । एवमनङ्गीकारे सर्वत्रापि जातिसिद्धिरित्यतिप्रसङ्गलक्षणं दूषणमाह **नो चे**दिति । सौसादृश्यातिरिक्तजातिस्वीकारे गवादिशब्द(व्यः?)वत् मूर्तादिशब्दे(व्ये?)ष्वपि मूर्तत्वाद्यभिव्यञ्जकजातिस्वीकारः स्यादिति भावः॥ **इति संस्थानविशेषातिरिक्तगोत्वादिजातिभङ्गः ॥**

**(477) जातेर्यत् व्यञ्जकं ते, तदपि यदि मतं जातितस्संगृहीतम्,**
**साऽपि व्यङ्ग्याऽन्यतः स्यात्, तदुपरि च, भवेज्जातिसंस्थानमाला ।**
**स्वेनैव व्यञ्जकस्याप्यनुगतिरिति चेत्, तर्हि जातिः किमर्था ?**
**व्यावृत्तानां स्वभावात् यदि तदनुगतव्यञ्जकत्वं, जितस्त्वम् । ११७ ॥**

अस्तु वा परिकल्पिता जातिः, तस्या व्यञ्जकत्वेन परिगृहीतं (कल्पितं) नोपपद्यत इत्याह **जाते**रिति । जातेर्व्यञ्जकं यत्, तदपि यदि **जातितस्संगृहीतं** जात्यन्तरेण परिगृहीतम्, यदि वा न परिगृहीतम् ? अपरिगृहीतत्वे तस्यानुवृत्त्यभावात् परिगृहीतत्वमेव वाच्यम् । तथाच साऽपि जातिर्व्यञ्जकान्तरेण व्यङ्ग्या स्यात्; तच्च व्यञ्जकं जातिपरिगृहीतं भवेत्; साऽपि व्यञ्जकान्तरमपेक्षत इति

---

श्री– तत्रापि न सादृश्यमात्रेण गवि गवयत्वजातिव्यवहारप्रसक्तिः; गौसादृश्यस्य संस्थाने विवक्षितत्वात्। सास्नाघटितसंस्थानमेव गोत्वम्, तदघटितगोतुल्यसंस्थानं गवयत्वमिति नियामकसत्त्वान्नातिप्रसक्तिः । अत उपाधिभिरेव व्यवहारे निरूढे किं पृथक् जात्या । नो चेत्=जात्यैव नियम इति स्वीकारे मूर्तत्वभूतत्वादिभिरपि व्यंग्यतया जातयः स्वीक्रियन्ताम् ॥ ११६ ॥

आकृतिव्यंग्या जातिरित्युक्तम् । सिद्धान्ते आकृत्यतिरिक्तजात्यनुपलम्भ एव । व्यञ्जकत्वे दोषमाह **जाते**रिति । आकृत्यपरपर्यायं संस्थानं हि व्यक्तिभेदेन भिन्नमेव । तेषां बहूनामेकजातिव्यञ्जकत्वं स्वयमेकजात्याक्रान्ततयाऽनुगतीभूयैवेति वक्तव्यम् । एवञ्च तत् व्यञ्जकं जातितः संगृहीतम्–अनुगतीकृतमिति मन्यते चेत्—सा संग्राहकजातिः केन व्यङ्ग्या ; व्यञ्जकान्तरस्वीकारे तस्यानुगतीकरणं कया जात्या ; पुनस्तस्याः किं व्यञ्जकमिति जातिसंस्थानमाला= जातिपरम्परा, संस्थानपरम्परा च भवतीत्यनवस्था । यदि प्रथमस्य संस्थानस्य गोव्यक्तिभेदेन भिन्नस्यापि जातिमन्तरा स्वयमेवानुगतत्वमिष्यते, तदा एतद्व्यंग्या गोत्वजातिरपि मा भूत् । स्वयमनुगतत्वादेवानुगतव्यवहारनिर्वाहकत्वसंभवात् । **व्यावृत्ताना**मिति । कथञ्च व्यावृत्तानां सतामनुगतधर्मवत्त्वं विना स्वगतजात्यभिव्यक्तिकरत्वम्? स्वभावादिति चेत्—तर्हि स स्वभावः अनुगतजात्यभिव्यक्तिकर इति स्वीकृत्य ततोऽनुगतव्यवहारनिर्वाहापेक्षया तस्य स्वभावस्यानुगतव्यवहारनिर्वाहकत्वमेवेष्यताम् । लाघवात् । अतो जात्यसिद्धिरेव । श्लोके यदीत्यस्य चेदित्येवार्थः । वृत्तौ तु यदीति यदिवेति किं क्विचेत्यर्थ न्नम् । तत्र द्वितीयं परिहृत्य प्रथमं दोषयति अपरीति ॥ ११७ ॥

जातिसंस्थानमाला स्यात्—जातिव्यञ्जकानवस्था स्यादित्यर्थः ॥ अनवस्थापरिहारार्थं स्वेनैव व्यञ्जकस्य धर्मस्यानुगतिरिति चेत्, तर्हि जातिः किमर्था ? तेनैव स्वतोऽनुगतेन धर्मेण जातिकार्यनिर्वाहात् ॥ तर्हि व्यावृत्ता एव धर्मा अनुगतां जातिं व्यञ्जयन्तीति चेत्, एवं तर्हि त एव व्यावृत्ता धर्मा अनुगतबुद्धिव्यवहारयोर्निर्वाहका भवन्तु, वस्तुस्वाभाव्यात्। तथाच निरर्थिकां जातिं कल्पयंस्त्वं विजितो भवसि। अयमत्र निर्णयः—यत्र जातिः, तत्र साक्षात् सामान्यमनुवृत्तव्यवहारहेतुः। यत्र पुनरुपाधिः, तत्र गुणक्रियादिनिष्ठं व्यवहितं सामान्यमनुवृत्तप्रतीतिहेतुरिति हि न्यायविद्रहस्यम्। तथा च सति यत् सामान्य(न्यं ?)व्यवहितं तत् उपाधिरूपगुणक्रियानिष्ठं स्वयमप्रतिपन्नं जातिप्रतिपत्तिहेतुर्न भवति। प्रतिपन्नं चेत्, तत्प्रतिपत्तौ उपाध्यन्तरप्रतिपत्तिरवश्यम्भाविनी। स चोपाधिर्जातिपरिगृहीतः, सा च जातिरुपाध्यन्तरप्रतिपत्तिमूलस्वप्रतिपत्तिरिति व्यवस्थितैवानवस्थितिः ॥ इति जातिव्यञ्जका(कत्वा)नुपपत्तिः ॥११७॥

(478) व्यावृत्तैर्व्यक्तिवन्न व्यवहृतिनियमः; साध्यता नानुवृत्तौ;

तद्धर्मस्यानुवृत्तौ मदभिमतमिह स्वीक्रियेतेति चेन्न।

केचित् संस्थानभेदाः क्वचन खलु मिथो भान्ति सादृश्यरूपाः;

तस्मादन्योन्यजैकस्मृतिविषयतया तत्तदेकावमर्शः ॥ ११८ ॥

व्यावृत्तैरिति। अत्र कश्चिच्चोदयति—किं व्यावृत्तैः, अनुवृत्तैर्वा गवाद्यनुवृत्तव्यवहारनियमः ? न तावत् व्यावृत्तैः; व्यक्तिवत्। न हि व्यक्तयोऽनुवृत्तव्यवहारं कुर्वन्ति; एवं व्यावृत्ता धर्मा नानुवृत्तव्यवहारनियमं कर्तुमर्हन्ति ॥ अनुवृत्तैर्धर्मैर्व्यवहारनियमश्चेत्, तदानीं साध्यत्वमेव नास्ति; अनुवृत्तनियामकधर्मस्वीकारात्। तदिदमाह साध्यता नानुवृत्ताविति। ननु व्यावृत्ता एव धर्माः स्वयमनुवृत्तधर्मान्तरेण परिगृहीताः गवादिव्यवहारमनुवृत्तं निर्वहन्तु ॥ तत्र। प्रथममेव मदभिमतोऽनुवृत्तधर्मः स्वीक्रियेत, मध्ये किमेभिर्व्यावृत्तैः परिकल्पितैरिति [इति?] चेत्— तन्न; केचिद्धि संस्थानभेदाः क्वचन खलु मिथस्सादृश्यरूपा भान्ति; यैर्भवदीयं सामान्यमभिव्यज्यते। त एव सौसादृश्यव्यवहारविषयभूताः सामान्यव्यवहारं

---

टी—पूर्वं ११३ श्लोके 'तस्य स्यादगोऽनुमादेः क्षतिः' इति सामान्यस्याऽऽवश्यकता प्रोक्ता। तत्रोचितं समाधानं स्फोरयितुकामः मुखान्तरेण प्राप्तां शङ्कां परिहरति व्यावृत्तैरिति। संस्थानं प्रतिगवं भिन्नम्। तानि नैकरूपव्यवहारनियामकानि, व्यावृत्तत्वात् व्यक्तिवत्। यदि अनुवृत्तत्वमेव तस्येष्यते, तर्हि त्वां प्रति जातेः साध्यता नास्ति। मदभिमतानुवृत्तधर्मस्वीकारस्याऽऽविष्कृतत्वात्। इमां शङ्कां निरस्यति नेति। संस्थानानि व्यावृत्तान्येव। न तेषामनुगतत्वम्, नाप्यनुगतधर्मवत्त्वम्। अथापि सादृश्यं तत्र तेषां भवति। तादृशसादृश्यबलादेकसंस्थानग्रहणे क्रमेण सदृशानि संस्थानान्तराण्यपि गृह्यन्ते। एवमन्योन्यसहकृतसंस्कारजन्यैकस्मृतिविषयसंस्थानाश्रयत्वमेवैकजात्याश्रयत्वमित्युच्यते। इदं च सौसादृश्यमुभयेष्टम्; अन्यथा ईषत्सादृश्यात् संस्थानान्तरेण जात्यन्तरस्यापि व्याप्यत्वापत्तेरिति। एवञ्च यथा जातिस्वीकारे संनिकृष्टधूमगतधूमत्वाश्रयत्वरूपसामान्यलक्षणप्रत्यासत्त्या सर्वधूमग्रहणम्, तथा संनिकृष्टधूमसंस्थानगतसादृश्यविशिष्टाश्रयत्वबलात् सर्वग्रहणमिति न व्याप्तिग्रहणानुपपत्तिः ॥ परिकल्पितैरित्यन्तं चोदकवाक्यम्। 'इति चेत्—तन्न' इत्यन्तेन पादद्वयविवरणम्। केचिदित्यादि उपरितनपादद्वयस्य ॥ ११८ ॥

निर्वहन्तु । तस्मात् तेषां सर्वेषामन्योन्यसापेक्षैकस्मृतिविषयतया **तत्तदेकावमर्शः** तत्तज्जातीयत्वावमर्श इत्यर्थः । अन्यथा भवतामपि जात्यभिव्यञ्जकोपाधिरूपसौसादृश्यनिरूपणाशक्तेर्जातिरप्युत्सीदेदिति हृदयम् ॥

**इति सस्थानजात्यनुपपत्तिपरिहारः ॥ ११८ ॥**

**(479) सादृश्यस्यानुवृत्तौ भवति परमता जातिरेव ; अन्यथा चेत्,**
**तन्मूला नानुवृत्तव्यवहृतिरुचितेत्येतदप्यात्तसारम् ।**
**एकैकस्य तु तैस्तैर्निरुपधिनियतैः सप्रतिद्वन्द्विकं स्यात्**
**धर्माभावप्रतीतिप्रमृतिनियमवद्दुस्त्यजैव व्यवस्था ॥ ११९ ॥**

ननु कथं व्यावृत्तानां संस्थानानां नियतसादृश्यरूपत्वमित्यादिचोद्यमनूद्य परिहरति **सादृश्यस्येति**। इयमत्र चोद्यप्रक्रिया–किं सादृश्यमनुवृत्तं भवति ? तदा सैव पराभिप्रेता जातिः स्यात् । **अन्यथा**=अननुवृत्तं चेत्, **तन्मूला** अननुवृत्तसादृश्यमूला, अनुवृत्तव्यवहृतिर्नोचिता स्यात्। एतन्निराकरोति **एतदिति**। तत् कथमित्यत्राह **एकैकस्येति**। यद्यप्येकैकस्य सास्नादिधर्मस्वरूपम्, तथाऽपि तत् **निरुपधिनियतैः** स्वभावतो नियतैः तैस्तैः सास्नादिभिरन्यनिष्ठैः सप्रतिद्वन्द्विकं स्यात् । इदमेवान्योन्य[स]प्रतिद्वन्द्विकं रूपं सादृश्यशब्दवाच्यमभिधीयते ॥ ननु कथं नियामकाभावे, 'तेनैव धर्मेण स धर्मः सप्रतिद्वन्द्विकः' इति नियमः स्यात्॥ स्वभावादेवेति ब्रूमः । **स्वभावो** हि नाम प्रामाणिकस्वरूपमेव। यत् यथा प्रतीयते, तत् तथैव स्वीक्रियत इति **न्यायसंप्रदायः**। तथाच सास्नादीनामेवान्योन्यसप्रतिद्वन्द्विकत्वम्, न पुनः केसरादीनाम् । केसरादीनां चाश्वादिषु अन्योन्यप्रतिद्वन्द्विकत्वमुपलब्धिनियमादेव स्वीकार्यम् । इत्थमुपलब्धिनियमानङ्गीकारेऽतिप्रसङ्गः ॥ भवद्भिरप्ययं नियमोऽङ्गीकार्य इत्याह **धर्माभावप्रतीतिप्रमृतिनियमवद् दुस्त्यजैव व्यवस्थेति** । अग्नेरेवौष्ण्यं, जलस्यैव शैत्यमित्यादिकमुपलम्भनियममन्तरेण नोपाध्यन्तरमपेक्षते । एवं घटाभावोऽपि घटप्रतियोगिक एव, पटाभावस्तु पटप्रतियोगिक इति उपलम्भादेव निषेध्यनिषेधकनियमः स्वीक्रियते। किंच घटव्यक्तीनामेव घटत्वजात्यभिव्यञ्जकत्वम्, न पुनर्घटपटव्यक्तीनाम्,

---

479—ननु जातिस्थाने सादृश्योक्तेः केवलं नाम्न्येव विवादपर्यवसानमिति शङ्कां परिहरति सादृश्यस्येति। सादृश्यमनुवृत्तमेकं वा व्यावृत्तं वा। आद्ये परेण मया मता जातिः त्वयाऽपि परेण मता भवति। अन्यथा चेदिति। चेत्पदप्रयोगात् सादृश्यमन्यथा चेदिति अवान्तरवाक्यं कार्यम्। अत्र सादृश्यमिति विपरिणतानुषङ्गः । सादृश्यमननुवृत्तं चेदित्यर्थः । निरस्यति तन्मूलेति । आत्तसारम्=ऋजीषप्रायम्, सिद्धान्तोपमर्दकबलहीनम् ॥ व्यावृत्तत्वे सत्येव निर्वाहमाह एकेति। एकैकव्यक्तिगतमेव संस्थानं तत्तत्। एवं गोसंस्थानमन्यैः गोसंस्थानैः स्वभावतः सप्रतिद्वन्द्विकम्। ननु कथं सदृशस्य प्रतिद्वन्द्वित्वम् ? कथं पुरःसदृशस्य प्रतिद्वन्द्वित्वम् ? सप्रतियोगिकमित्यर्थः । तेषां संस्थानानां प्रतियोग्यनुयोगिभावोऽस्ति। स च स्वरूपान्नातिरिच्यते । अत्र तार्किकैरप्युदाहरति धर्मेति । धर्मप्रतीतिनियमवत् अभावप्रतीतिनियमवच्चैव प्रतीतिनियमोऽपि । मूर्तत्वशरीरत्वेन्द्रियत्वाद्युपाधिरूपधर्मस्थले, इयमपि जातिः साऽपि जातिरिति अनुगतजातिरूपधर्मप्रत्ययस्थले च कथं नियतिः । घटस्याभाव इत्यत्राभावं प्रति घटस्य कः सम्बन्धः ? घटाभाववद् भूतलमित्यत्राभावस्याधिकरणस्थितिरिति पुनः ? न हि तत्तत्र धर्मिणश्च नियामकं स्वरूपातिरिक्तं स्वीक्रियत इति ॥ ११९ ॥

नापि पटव्यक्तीनामिति नियतमेव दृष्टम्। एवमेकैकस्य सास्नादिधर्मा परस्परसप्रतिद्वन्द्विकभावनियमेन सौसादृश्यशब्दार्थेना भजन्त इति निरवद्यम्॥ इति व्यावृत्तानां सस्थानानां सादृश्यरूपत्वम्॥ ११९॥

(480) **सादृश्य शक्तिसख्याप्रभृति च कतिचित् भिन्नमूचुर्गुणादेः ;**
**स्यादत्रातिप्रसक्तिः प्रतिगुणमगुणीकारलिङ्गोपलब्धेः ।**
**साधर्म्यात् सग्रहश्चेत्, सममिदमुभयोर्येनकेनापि ; यद्वा**
**किं दन्तादन्ति कृत्वा फलमिह बलिभुग्दन्तचिन्तान्तरेऽस्मिन् ॥ १२० ॥**

अत्र केचित् शक्तिसंख्यासादृश्यादिक गुणादेर्विभक्तमाहु, तन्मतमनूद्य दूषयति **सादृश्यमिति** तत्र हेतुमाह **स्यादत्रातिप्रसक्तिरिति** । अतिप्रसक्तिं विवृणोति **प्रतिगुणमिति** । यत्किंचिद्वैषम्यात् सादृश्यादीना गुणादेर्विभागाङ्गीकारे सर्वेषामपि गुणाना प्रतिगुणमाकारभेदोपलब्धेर्गुणव्यतिरेककल्पनप्रसङ्ग इत्यर्थ । उक्तप्रतिबन्द्या परिहारमाशङ्कते **साधर्म्यादिति** । गुणत्वनियामकसाधर्म्यात् गुणत्वेन सग्रहश्चेत्। तदन्यत्रापि सममित्याह **सममिदमुभयोरिति**। **येनकेनापी**त्यनादर, भवत्कल्पितेनैव धर्मेणान्यत्रापि गुणत्व वक्तु शक्यत इत्यर्थ । अथवा सादृश्यादीना पृथक्त्वापृथक्त्वचिन्तन जीवपरमात्मयाथात्म्यज्ञानपरे त्रय्यन्तसिद्धान्ते काकदन्तपरीक्षावदनपेक्षणीयमित्याह **यद्वेति** ॥

**इति सादृश्यादिपदार्थान्तरक्लृप्तिभङ्गः ॥ १२० ॥**

(481) **गन्धादौ सनिवेशो न हि भवति ; न च द्रव्यभेदे निरशे**
**तस्माज्जात्याऽनुवृत्तव्यवहृतिरिति चेत्, उक्ततुल्योत्तर तत् ।**

---

ब्री — येनाऽऽकारेण द्वयो सादृश्यमुच्यते, तस्याकारस्य द्रव्यगुणक्रियास्वेवान्तर्भावात् तदतिरिक्तसादृश्य नास्ति, रूपादिवत् शक्तिरपि गुणेऽन्तर्भवतीत्येव स्थिते शक्तिसादृश्यादीना पृथक्पदार्थत्वमीमासका आहु । तन्निरस्यति सादृश्यमिति । प्रकृतत्वात् सादृश्यस्य प्रथम निर्देश । गुणाद्यपेक्षया भिन्नत्वेनाहु । अतिप्रसक्तिरिति । रूपादिवैलक्षण्यात् रसादिरपि गुणो मा भूदित्यर्थ । अगुणीकारस्य=नाय गुण इति कल्पनस्य साधक रूपादिभिन्नत्व तत्राप्युपलभ्यत इति । द्रव्याश्रितत्वात् कर्मभिन्नत्वाच्च साधर्म्यात् रूपरसादेर्गुणत्वे, सादृश्यादेरपीदमस्तु । येनकेनापीति । सादृश्यादिव्यावृत्ततया गुणत्वस्वरूपशोधनचिन्तनापेक्षया द्रव्याश्रितत्वेन रसादेरिव सादृश्यादेरपि फलतान्तर्भावो युक्त इति भाव । ननु अस्तु गुणे अन्तर्भाव । अथापि फलसगुणातिरिक्तमेव भवेदिति चेन्न, अनन्तर्भावे मानाभावात्। अत सौसादृश्यमाकृत्यादिकमेव ॥ एतद्विस्तरे उदास्ते यद्वेति । विस्तर क्रियते चेत्—इयमन्या काकदन्तचिन्तेवेत्यर्थ ॥ १२० ॥

ननु साकृतिकद्रव्यस्थले आकृत्यैवानुगतप्रतीतिनिर्वाहेऽपि गुणेषु तथा निर्वाहायोगात् तत्र जातिरेष्टव्येत्याशंक्य परिहरति गन्धेति। सनिवेश =आकृति । एन्न निरशे द्रव्यभेदे=निरवयवद्रव्यविशेषे आत्मनि काले च न सनिवेश इति॥ प्रत्याह उक्तेति। 'केचित् सस्थानभेदा क्व तन खलु मिथो भान्ति सादृश्यरूपा' इत्युक्त यत्, तद्रीतिरेव गन्धादावपि। तथा हि चन्द्र इव मुखमित्यादौ आह्लादकत्वं सादृश्यम्। तत्तु चन्द्रे विद्यमानमन्यत्, मुखे चान्यत्। कथमैक्यम्। आह्लादकत्वेनेति चेत्—आह्लादजनकत्व हि आह्लादपूर्वकालमगन्य। स च स्वरूपानतिरिक्त। तत्र जनकत्व

तत्तद्वस्तुस्वभावाद् घटत इह मिथस्सप्रतिद्वन्द्विकत्वं ;
तज्जात्याधारतादेरपि तव नियतिस्तत्र न ह्यन्यतः स्यात् ॥ १२१ ॥

अत्र कश्चिच्चोदयति गन्धेति । सौसादृश्यं जातिरिति भवद्भिरुक्तम् ; स पुनः संस्थानभेद इति चाभ्यधायि । तन्नोपपद्यते, गन्धादौ संस्थानभेदाभावात् । न चास्मादौ निरंशे संस्थानभेदोऽस्ति । अवयवरचनाविशेषो हि संस्थानम् । तस्मात् जात्यैवानुवृत्तव्यवहारः सर्वत्र संघटत इति । चोद्यमनूद्योत्तरं वदति उक्ततुल्योत्तरं तदिति । कथमुक्ततुल्योत्तरत्वमित्यत्राह तत्तदिति । तत्तद्वस्तुस्वभावनियम एव सर्वत्र नियामकः । तेन स्वभावतः सप्रतिद्वन्द्विकत्वेन प्रमाणसिद्धं तत्तद्वस्त्वेव तत्तदनुवृत्तव्यवहारहेतुभावमनुभवति । एवं वस्तुस्वभावनियमानङ्गीकारे, तत्तज्जात्याधारभावो भवन्मते तेषामेव गुणानां कथं स्यादिति चोद्ये, स्वभावनियम एव भवताऽपि वाच्यः ; अन्यतश्चेदनवस्थादिदोषदुष्टत्वात् । तेन ससंस्थानेषु वस्तुषु संस्थानभेद एव व्यवहारनियामकः, गुणादिषु तत्तदसाधारणलक्षणमेव व्यवहारनियामकम् । तच्च भवताऽपि स्वीक्रियते । अन्यथा तत्तल्लक्षणाभावे तत्तज्जातिनियमो न स्यात् । तथाच तत्तल्लक्षणं भवता यथा कल्प्यते, तथैवास्माभिरप्यङ्गीक्रियत इति न कश्चिद्दोषः ॥

इति निरवयवेष्वनुवृत्तव्यवहारनिर्वाहः ॥ १२१ ॥

(482) सत्तासामान्यमेके त्रिषु परिजगृहुः ; केऽपि जातावपीदं
प्रख्यादीनां समत्वात् कथय न किमिदं सर्वनिष्ठं गृहीतम् ।
किञ्च प्रामाणिकत्वप्रभृतिसमधिकं सत्त्वमन्यत्र दृष्टं ;
तद् ब्रह्मेत्याश्रितं यैः, ध्रुवमपलपितं तत्तु तैर्धर्मतोक्तेः ॥ १२२ ॥

---

ळी- मित्यनुगतधर्मः कुत्र स्थास्यति । ये जनकत्वप्रतियोगित्वाधारत्वादीन् धर्मान् कलसपदार्थातिरिक्तान् उपाधीनेवाहुः, तन्मते जनकतात्वादिकमप्यतिरिक्तं भवेत् । तेषां धर्माणां धर्मिस्वरूपानतिरेकवादिन एव प्रायस्तार्किकाः । तैस्तादृशव्यवहारः अन्योन्यप्रतिद्वन्द्विकत्वमादायैव निर्वहणीय इति । सर्वत्रानुगतधर्मान्वेषणे अनवस्थादिकमप्याह तज्जातीति । गोत्वेन गवां गुणाद्याधारता ; गोत्वरूपजात्याधारता केन रूपेण । तदर्थधर्मान्तरस्वीकारे तदधारता केन रूपेणेत्यनवस्थेति ॥ १२१ ॥

सत्तायां सर्वानुगतायां सत्यामपि क्वचिदेव सत्तां ते ते स्वीकुर्वन्ति । तैरन्यत्र तद्व्यवहारः कथं निरुह्यते । तद्वदेव सर्वत्र निर्वाहे किमर्थं सा जातिरित्याह सत्चेति । "सदिति यतो द्रव्यगुणकर्मसु सा सत्ता" इति कणादसूत्रम् । केऽपि =मीमांसकाः जातावपि सत्तां स्वीकुर्वन्ति । प्रख्यादीनां=प्रतीतीनां व्यवहाराणाञ्च सर्वत्राविशेषात् जातिनिष्ठाऽपि सेति तदुपपादनं कृत्स्नेन द्वितीयपादेन । यद्वा कथयेत्यादिना तत्पक्षद्वयदूषणम् । अथवा तदुभयदूषणं प्रख्येत्यादिना । अस्तीति प्रतीतेः सर्वत्र साम्यात् केवलान्वयित्वमेव सत्ताया युक्तमिति । एवमपि न सा जातिः। तत्रतत्र स्थितो धर्मविशेष एवेत्याह किञ्चेति । प्रभृतिशब्देन अबाधितत्व-तत्तद्वस्तुस्वरूपादिग्रहणम् । यैः अद्वैतिभिः 'सत्तामात्रमगोचरं वचसाम्' इत्यादेरपार्थवर्णनेन सत्तैव ब्रह्मेत्युच्यते, तैर्ब्रह्म अपलपितमेव= नास्तीत्युक्तमेव स्यात्। सत्ताया धर्मत्वोक्त्या, ब्रह्मणो धर्मत्वे धर्मिणोऽन्यस्याभावेन धर्म्यपलाप एव कृतः स्यादिति । घटः सन्, पटः सन् इति सति घटादिकल्पनेति वक्तव्ये, सत्तायां तत्कल्पनेति चायुक्तम् । सत्तामात्रमिति च सत्तातिरिक्तधर्मिनिषेधकं न भ[illegible] ॥ १२२ ॥

एवं सामान्येन सामान्य विचार्य सत्तासामान्य विशेषतो निरूपयति सत्तेति । द्रव्यगुणकर्मसु सत्तेति प्रसिद्धमिदम् । अपरे पुनरेवं मन्यन्ते जातावपीति । तत्र हेतुमाह प्रख्यादीनामिति । प्रतीतिव्यवहारौ हि सर्वत्र जातिकल्पने प्रमाणम् । जातावपि सत्प्रतीति समाना चेत्, किमिति तत्रापि सत्ता न कल्प्यत इति भाव । तदिदमाह न किमिद सर्वनिष्ठ गृहीतमिति । सत्त्व सर्वनिष्ठ किं न गृह्यत इत्यर्थ । गोत्व सत्, अश्वत्वं सदिति हि ग्रहण प्रवृत्ति । किंच(किञ्चेति । ?) परमर्यादया सत्त्वमन्यदङ्गीकृत्योक्तम् । तत्त्वतो निरूपणे प्रामाणिकत्वव्यतिरेकेण सत्त्वमन्यन्नास्ति । तच्च प्रामाणिकत्वादिक प्रामाणिकमेव, स्वपरनिर्वाहकसमाधेरात्माश्रयादिदोषाप्रसङ्गात् । तस्मात् [सत्त्वे सत्त्व?]सत्त्वेऽपि न कश्चिद्दोष, सत्त्वमस्तीति, औपाधिकधर्माणा यावदुपाधिवृत्तेस्सर्वन्यायवित्सम्मतत्वात् । ब्रह्माद्वैतवादिनस्सत्त्व ब्रह्मैवेति संगिरन्ते, तद परामर्शवचनमेव । सत्त्वं हि धर्म एव, न पुनर्धर्मि । तथाच ब्रह्मणोऽपि धर्मत्वाङ्गीकारे धर्म्यन्तर कल्प्यम् । एवं च सति वस्त्वन्तरारोपितत्वेन ब्रह्मणोऽपि मिथ्यात्व प्रसज्यत इति भाव । ध्रुवमपलपित तत्तु तैरिति । तैः मृषावादिभिर्नैवापलपित, सत्त्वस्य ब्रह्मत्वोक्ते ॥ इति सत्तानिरूपणम् ॥ १२२ ॥

(488) यज्जातीय, यदा, यत् यदवधिगुणक, यत्र ; न ह्यन्यदीदृक् ;
दृष्टैरित्थं विशेषैर्जगति विषमतां वक्ति वैशेषिकोऽपि ;
नित्येष्वत्यन्ततुल्येष्वपि नियतदशाभेदयोगोऽस्ति शास्त्रात् ;
प्राच्योपाध्यादयो वा ; विदुरतिभिदुरान् योगिवर्यादयस्तान् ॥ १२३ ॥

---

श्री— तार्किकगणितेषु पदार्थेषु सामान्य निराकृत्य तदनन्तरोक्तं विशेष व्युदस्यति यदिति । लोके वस्तूना मिथोव्यावृत्तिर्विविधा लक्ष्यते । एक यज्जातीयं, न तज्जातीयमन्यत्, यत्कालिक, न तत्कालिक, यत्स्वरूप, न तत्स्वरूपम्, यावद्गुणक, न तावद्गुणक, यद्देशवर्ति, न तद्देशवर्ति इत्येवं मिथो जातिकालस्वरूपगुणदेशभेदेन व्यावृत्तिदर्शनात् । तथा च जात्यादय एव भेदकत्वात् विशेषा । इदञ्च वस्तुवैषम्य वैशेषिकोऽपि—काणादमतस्थोऽपि स्वीकरोति । तस्मादविशेषे सति का तस्य विशिष्य वैशेषिकता । ननु नित्येषु परस्परमैकरूप्येण सत्सु मिथोव्यावृत्तिग्रहण प्रतिनियतविशेषरूपधर्मं विना न घटत इत्येव विवक्षितम् । तत्रापि तदन्य नियतदशायोग =व्यवस्थितावस्थासंबन्ध शास्त्रतोऽवगत । तथाहि—के ते नित्यपदार्था.? आत्माकाशादयो वा, परमाणवो वा । आत्मस्वपि बद्धा वा मुक्ता वा नित्या वा । आत्मना मध्ये कस्यचित् दुःख कस्यचित्सुखमित्यादिवैषम्यदर्शनात् न भेदकान्तरापेक्षा । आकाशकालदिशा शब्द व्यवहारविशेषनिर्वाहकतया वैषम्य स्पष्टम् । मनसा तत्तदात्मोपयोगितयैव भेदसिद्धि. । परमाणूनामपि गन्धस्नेहादिभेदात् व्यावृत्ति । एकजातीयपरमाणुषु प्रलयकालिकात्मसु च व्यावृत्तिग्रहण कथमिति चेत्—अय परमाणु पूर्वं सृष्टिकाले ईदृशकार्यान्वय्यासीत्, अयमात्मा एवमेव लब्धशरीरकम इति अतीतमुपाधिमादाय, तथा पुनस्सृष्ट्यारम्भे एवमेव भविष्यतीति तत्तत्कार्यरूपभविष्यदुपाधिमादाय च सुग्रह एव भेद । भवद्भिर्हि योगिना परमाणुसाक्षात्कारशालिना मिथो भेदग्रहणाय विशेषापेक्षेति वर्णितम् । तेषा भूतभविष्यदर्थदर्शिना तत्संबन्धमादायैव व्यावृत्तिग्रहसिद्धिरिति । अथास्मन्मतसिद्धात्मभेदग्रहणेऽपि मुक्ताना मिथो भेद मोक्षपूर्वस्थितबन्धस्वरूपवैलक्षण्योपलक्षितत्वेनैव सुवचः । वर्तमान-वर्तिष्यमाणव्यापारभेदेन च । नित्यसूरीणा तु प्रतिनियतपरदशतकार्यवशात व्यावृत्यसिद्धि । परमुक्त-

एवं सामान्यं निरूप्य **वैशेषिकोक्तं** विशेषमनर्थकत्वेन दूषयति **यज्जातीयमिति**। लोके हि देशकालादिविशेषात् वस्तूनां विशेषो दृश्यते। **यज्जातीयमिति** जातिः; यदेति कालः; **यदिति** स्वाभाविको वस्तुविशेषः; **यदवधिगुणकमिति** गुणविशेषः; **यत्रेति** देशविशेषः। यद्वस्तु एतादृशगुणविशिष्टं, तद्व्यतिरिक्तवस्तु न हीदृक्। अन्यद्वस्तु अन्यदेशकालादिविशिष्टम्, अन्यच्चान्यदेशकालादिविशिष्टमिति परस्परविभागः। इत्थं **दृष्टैरेव** विशेषैर्जगति **वैशेषिकोऽपि** विषमतां वक्ति। तथाच नित्येष्वत्यन्ततुल्येष्वपि नियतावस्थायोग.शास्त्रप्रमाणकानामध्यात्मविदामस्ति; ईश्वरपरतन्त्रस्य जगत्स्रष्ट्यादिकृत्यस्य नित्यानुवृत्तत्वात्; मुक्तानामपि, 'जक्षत् क्रीडन् रममाणः' इत्यादिव्यापारपारम्पर्यस्यानुवृत्तेः। किञ्च अमुक्तदशाभाविभिः प्राच्यैरेव धर्मविशेषैरुपलक्षणतयाऽवस्थितैर्मुक्तानामपि भेदो ज्ञातुं शक्यते। तदिदमाह **प्राच्योपाध्यादयो** वेति। अस्तूपाधिभेदः; कैरयं भेदो ज्ञायत इत्याशङ्क्याह **विदुरतिभिदुरान् योगिवर्यादयस्तानिति**। तान् उपाधीन् परस्परभिदुरान् योगिप्रभृतयो **विदुः** जानन्तीति न दृष्टत्वानुपपत्तिः॥

**इति वैशेषिकविशेषानपेक्षा॥ १२३॥**

(484) **मुक्तास्त्वत्पक्षक्लृप्ता न हि निगमदृशां (विदां) तादृशाण्वादयो वा,**

**येषामन्योन्यभेदी गजतुरगनयात् कल्प्यतेऽन्यो विशेषः।**

**जात्यैक्याद्वः पृथक्त्वैरिह न यदि फलं, स्यात् विशेषैः कथं तत्?**

**तेषामप्यस्त्युपाधिः सम इति न भिदाऽस्त्यत्र (ऽन्यत्र?)संरम्भमात्रात्॥१२४॥**

**मुक्ता** इति। किंच समानजातीयत्वादिविशेषणविशिष्टाः परमाणवो मुक्तात्मानश्च परस्परव्यावर्तकधर्मवन्तः द्रव्यत्वात् घटादिवदिति हि विशेषं साधयन्ति **वैशेषिकादयः**। तत्तद्वस्तुनिष्ठैरेव

---

ळी—रार्धमुभयपक्षनित्यवस्तुस्वरूपशोधकं मन्तव्यम्॥ प्राच्योपाध्यादय इति। सन्तीति विपरिणम्यानुषंगः। तत्काले वैषम्याभावेऽपि तत्पूर्वकालस्थितकार्यभेदः भविष्यन् कार्यभेदश्च बहुरस्तीत्यर्थः। कथं तद्ग्रहणमिति चेत्—योगित्वादेव। योगिनः तान् दशाभेदयोग-प्राच्योपाधिप्रभृतीन् व्यावर्तकान् आकारान् योगित्वादेव विदुः=पश्यन्ति। अतो न कुत्रापि विशेषाख्यवस्त्वन्तरापेक्षेति भावः॥ तथा चेत्यादिवृत्तिग्रन्थः एतत्सर्वोपलक्षकः॥ १२३॥

तार्किकसंमतकेवलात्मपरमाणूनामपि पूर्वकालिकोपाधिमूलो भेदग्रहो योगिनां सुलभ इत्युक्तम्। अथ तादृशद्रव्याण्येव न सन्ति। सन्त्यपि पूर्वोत्तरकालिकोपाधिनिरपेक्षमपि पृथक्त्वगुणत एव व्यावृत्ततया बुध्येरन्नित्याह मुक्ता इति। त्वत्पक्षक्लृप्ताः ये पाषाणकल्पा मुक्ताः, ये वा नित्याः पृथिव्यादिपरमाणवः आदिपदेन दिक्कालाकाशा गृह्यन्ते, ते निगमविदां न सन्ति। निगमार्थवेदिमहाजनासंमता इत्यर्थः। गजतुरगयोरिव इव एषां मिथोभेदकत्वेन हि विशेषास्त्वदिष्टाः। येषां भेदकत्वेन विशेष इष्टः, त एव न सन्ति। नतरां विशेषाः। तत्तद्वस्तुसद्भाववादिना त्वयाऽपि पृथक्त्वे प्रत्येकं भेदके वर्तमाने विशेषकल्पनं न युक्तम्। अथ पृथक्त्वत्वजात्या सर्वपृथक्त्वक्रोडीकारात् पृथक्त्वमपि व्यावृत्तं न प्रतीयत इति चेत्—विशेषेष्वपि तुल्यम्। ननु पृथक्त्वं गुणत्वाज्जातिमत्। विशेषे तु न जातिसंभव इति चेत्—जात्यभावेऽपि विशेषत्वरूपानुगतोपाधिसत्त्वात् तद्वत्त्वेनैक्यात् न तस्यापि भेदकत्वं स्यात्। जातिनिरसनञ्च प्रागेव कृतम्। अतः संरम्भमात्रादन्यत्र=संरम्भं विना न भिदाऽस्ति। अविमृश्य विशेषस्थापने प्रवृत्तिरियं संरम्भमात्रम्॥ १२४॥

पृथक्त्वैस्सिद्धसाधनम् । ननु पृथक्त्वानि पृथक्त्वजात्या क्रोडीकृतत्वेन परस्परमैक्यमापन्नानि इतरेतर-
व्यावर्तनं वस्तूनां न कुर्वन्तीति चेत्, तदिदमनुवदति जात्यैक्यादिति । तदेतत् प्रतिबन्द्या दूषयति
स्याद्विशेषैः कथं तदिति । पृथक्त्वे यावन्तेनाभावे वस्तूनां विशेषैरपि व्यावर्तनं न स्यात्, तेषामप्ये-
कोपाधिक्रोडीकृतत्वेन व्यावर्तनशक्तेर्भग्नत्वात् । तदिदमाह तेषामिति । विशेषस्य विशेषलक्षणरूपै-
कोपाधिक्रोडीकृतत्वेऽपि विशेषकत्वं यदि न भज्येत, पृथक्त्वस्यापि पृथक्त्वजातिक्रोडीकृतत्वेऽपि
विशेषकत्वं न भज्येदिति प्रतिबन्दीपर्यवसानम् ॥ **इति विशेषाख्यतत्त्वतत्त्वाभावः ॥ १२४ ॥**

**(485) नास्मद्दृश्या विशेषाः ; प्रणिहितमनसां तद्धियां क्वोपयोगः ?**
**तत्तद्वस्तुप्रकाशस्सुलभ इह ; पुनर्भिन्नधीरस्तु मा वा ।**
**विश्वस्रष्टुर्विशिष्टप्रमितिमिह न ते कुर्वते नित्यसिद्धाम् ;**
**तस्मात् तत्सिद्ध्यसिद्ध्योर्न फलमनुमया ; नागमोऽप्यत्र तादृक् ॥ १२५ ॥**

किंच कल्प्यमानस्य विशेषस्य न कुत्राप्युपयोग इत्याह **नास्मदिति** । न तावत् अस्माकं विशेषाः
उपकुर्वते, तेषामस्मद्दृश्यत्वाभावात् ॥ प्रणिहितमनसामुपकुर्वत इति चेत्, **तेषामपि क्वोपयोगः ?** न
क्वाप्युपयोग इत्यर्थः । तदेव विवृणोति **तत्तदिति** । योगिनां सर्वज्ञत्वेन सर्ववस्तुप्रकाशोऽस्त्येव ।
तथाच सति तेषु पदार्थेषु **भिन्नधीरस्तु** वा, **मा वा** । अयं भावः—तेषां पदार्थानामन्योन्याभावविशिष्ट-
त्वेन भवत्कल्पितेनैव भिन्नधीसद्भावे किं विशेषकल्पनेन ? अथवा भवत्कल्पितैरेव पृथक्त्वैर्भेदधीरस्तु ।
अतो विशेषकल्पनं प्रणिहितमनसां कुत्रोपयुज्यते ? मा वेत्यनादरव्यवहारो विशेषतिरस्कारायैव , न पुनः
पृथक्त्वनिमित्तभेदधीतिरस्काराय । तर्हि विश्वस्रष्टुरीश्वरस्य विशेषैस्तत्तद्वस्तुषु विशिष्टधीरित्याशङ्क्य, तदपि
न युज्यत इत्याह **विश्वस्रष्टुरिति** । ईश्वरस्य तत्तद्विशिष्टबुद्धेर्नित्यत्वेन न तामपि बुद्धिं विशेषाः कुर्वत इत्यर्थः ।

ऋ— विशेषवत्त्वमभिमतं यादृशद्रव्येषु तादृशद्रव्याण्येव न सन्ति । तत्सत्त्वेऽपि विशेषोऽनपेक्षित
इत्युक्तम्। अथ विशेषे स्थितेऽपि तज्ज्ञानमनपेक्षितमित्याह नेति। किं तेषां द्रव्याणां मिथोव्यावृत्तत्वेन
ग्रहणमस्मादृशामपेक्षितमिति विशेषानुमानम्, उत प्रणिहितमनसाम्= योगिनाम् । नाद्यः
अस्माभिर्धर्मिणामेवादर्शनात्, व्यावृत्त्यपेक्षाविरहात्। भवद्भिरपि तथाऽनुक्तेश्च। नान्त्यः व्यावृत्तत्व-
ज्ञानसाध्यस्य कार्यस्याभावात् । द्रव्याणि तावत् योगजधर्मबलात् प्रकाशन्ते । सर्वासु
व्यक्तिषु प्रकाशमानासु भेदो न प्रकाशत इत्येव कथम्। कथं सति पृथक्त्वे भिन्नधीर्न स्यात्।
व्यक्तिद्वये युगपद् गृह्यमाणे इदमिदं नेति ग्रहणं भवत्येव । विशेषाधीनभेदधीर्नास्तीति चेत्, सा
मा भूत्। नन्वीश्वरस्य सर्वस्रष्टृत्वात् अयं परमाणुरत्रोपयोक्तव्य इति निर्णयाय व्यावृत्तधीरपेक्षितेति
चेत्—तस्य या विशिष्टप्रमितिः व्यावृत्तत्वज्ञानम्, न तत् विशेषजन्यम्, तज्ज्ञानस्यानादित्वात्।
नन्वथापि तज्ज्ञानं विशिष्टविषयकं विशेषाभावे कथं यथार्थं स्यात्। अतो विशेषः स्वीकार्य इति
चेत्—तदीयविशिष्टबुद्धौ पृथक्त्वं भेद इतीदृशधर्म एव विषयीभवतु, किमनेन विशेषेण । अत
परमाणवो विशिष्टाः विशिष्टज्ञानविषयत्वादित्याद्यनुमानं न वस्त्वन्तरस्थापकम्। तस्मादिति ।
ननु विशेषसाध्यस्य कस्यचिदभावात् नानुमानेन सिद्धिरिति हि वक्तव्यमिति चेत्, तदेव
विवक्षितम् । अनुमानेन सिद्ध्या न किञ्चित् फलम् । तदसिद्धा न काचित् हानिरिति ॥ १२५ ॥

तस्मादनुमानेन विशेषसिद्ध्यसिद्ध्योर्न किंचित्फलम् ॥ मा भूदनुमानम्, आगमोऽस्त्विति चेत्, तन्नेत्याह (चेत्-नेत्याह?)नेति। न हि विशेषसिद्धौ कश्चिदागमो दृश्यते, यदि दृश्यते, स पुनर्जातिगुणादिभेदमेव दर्शयतीति न भवदभिमतविशेषसिद्धौ मानमित्याह **तादृगिति**॥ **इति वैशेषिकक्लृप्तविशेषवैयर्थ्यम्**॥१२५

(486) **बन्धं नाध्यक्षयामः समधिकमपृथक्सिद्धयोस्तत्स्वरूपात् ;**

**कल्प्ये तस्यातिरेके तदुपरि च तथेत्यप्रकम्प्याऽनवस्था ।**

**ताभ्यामेष स्वभावाद्घटित इति कृता भक्तिरस्त्वेतयोस्ते ;**

**नो चेत्, ज्ञानादिकानां विषयविषयिताद्यापतेदन्यदेवम् ॥ १२६ ॥**

एवं विशेषं दूषयित्वा समवायमपि दूषयति **बन्धमिति**। अपृथक्सिद्धयोस्समवायाख्यं स्वरूपादधिकं कल्प्यमानं संबन्धं न प्रत्यक्षयामः। अतः प्रत्यक्षात्समवायसिद्धिरिति दूरापास्तम्। विशिष्टव्यवहारानुपपत्त्या समवायस्य स्वरूपात् व्यतिरेके कल्प्ये, समवायविशिष्टव्यवहारानुपपत्त्या पुनरपि समवायान्तरं कल्प्यमित्यनवस्था स्यात्। अनवस्थापरिहारार्थम्, ताभ्यां गुणगुण्यादिभ्यामेव एषः समवायः स्वभावात् घटित, इति यदि भक्तिर्भवता क्रियते, कृता सा भक्तिर्गुणगुणिनोरेवास्तु। अयमर्थः—गुणगुणिनौ, अवयवावयविनौ, जातिव्यक्ती, परस्परं स्वभावादेव संबध्येते इति। तदिदमाह **ताभ्यामित्यादिना त** इत्यन्तेन। **नो चेत्**—एवमनङ्गीकारे, ज्ञानार्थयोरपि विषयविषयिभावादिकं स्वभावातिरेकेण समवायवत् अन्यदेव संबन्धान्तरं स्यात्। तदिदमाह **आपतेदन्यदेवेति** ॥ **इति समवायातिरेकभंगः**॥१२६॥

(487) **संबन्धे सर्वतुल्ये प्रसजति गुणजात्यादिसङ्कीर्णभावः ;**

**तत्तद्द्वन्द्वस्वभावादनियतिशमने निष्फलाऽन्यस्य क्लृप्तिः ।**

---

टी— अथ क्रमात् समवायं निराकरोति बन्धमिति। गुणगुणिनोः क्रियाक्रियावतोः जातिजातिमतोः विशेषनित्यद्रव्ययोः अवयवावयविनोश्चापृथक्सिद्धयोः संबन्धः कश्चिदस्ति, स समवाय इति तार्किकैरुक्तम्। आधाराधेयद्वयस्वरूपातिरिक्तं बन्धं=संबन्धं न वयं पश्यामः। काणादाश्च समवायमप्रत्यक्षमेवाऽऽहुः। विशिष्टबुद्धिर्विशेष्यविशेषणसंबन्धविषया विशिष्टबुद्धित्वात् दण्डी पुरुष इति संयुक्तबुद्धिवदित्यनुमानं मानमिति-चेत् कालविशिष्टबुद्धौ अभावविशिष्टबुद्धौ चानैकान्त्यम्; तत्र स्वरूपातिरिक्तसंबन्धाभावात्। सर्वत्र तद्दृष्टौ च अयं रूपसमवायवानिति विशिष्टबुद्धित्वनिर्वाहाय समवायातिरिक्तः संबन्धः कल्प्यः, तद्विशिष्टप्रतीतिविषयतया च तदन्य इत्यनवस्था, "समवायाभ्युपगमाच्च साम्यादनवस्थितेः" इति सूत्रोक्ता। अथायं समवायः संबन्धान्तरं विना प्रतियोगिघटितः, अनुयोगिघटितश्च भवति। अतः प्रतियोगिनि समवायवत्त्वार्थम्, अनुयोगिनि समवायवत्त्वार्थञ्च एकस्य समवायस्य संबन्धद्वयं कल्पनीयं स्यादिति नापत्तिरित्युच्येत, तर्हि इयं भक्तिः=विश्वासः संबन्धं विनैव निरूप्येतेति प्रत्ययः रूपरूपिविषय एवास्तु, मध्ये समवायं विना। यद्वा भक्तिः भंगः अयं-संबन्ध-भंगः समवायविषयेऽपि स्यात्। किञ्च घटं जानाति, भूतले घटो नास्ति इत्यादौ विषयविषयिभाव-प्रतियोग्यनुयोगिभावादिकमपि अन्यदापतेत् =पदार्थान्तरं स्यात्। पृथक् ते संबन्धा अपि वक्तव्या इति किं समवायमात्रेण। तत्र स्वभावतो निर्वाहे अत्रापि तथा। अत एव विषयत्वादिकं न स्वरूपातिरिक्तम्; महर्षिणा पृथगपरिगणनादित्येव तार्किकैरप्युक्तम् ॥ १२६ ॥

संबन्धस्य कल्पनेऽपि घटपुटयोः प्रमानमिति तदसिद्धिरेवेत्याह संबन्धे इति। समवाय एको नित्यः

**त्यक्ते तत्तद्विशेषे स्वपरगुणपसमे चात्र संबन्धरूपे**

**नानासंबन्धपक्षेऽप्ययमधिकरणाधेयभेदः कथं स्यात् ॥ १२७ ॥**

किंच संबन्धे गुणगुण्यादिसर्वपदार्थसाधारणे सति गोरेव गोत्वेन संबन्ध, अश्वस्यैवाश्वत्वेन संबन्ध इति नियमो न स्यात्, अपितु गुणजात्यादिसङ्कर स्यात्। तदिदमाह संबन्ध इति। गोत्वमेव गवा संबध्यते, पृथिव्यैव गन्ध इति तत्तत्प्रतियोगिरूपवस्तुद्वयस्वभावादनियति शाम्यनीत्याशङ्क्य परिहरति **तत्तदिति**। **निष्फलाऽन्यस्य क्लृप्तिः** गोत्वादितद्वस्तुस्वभावादेवान्योन्यनियमे मध्ये समवायक्लृप्तिर्निष्फलेत्यर्थ। तत्र च **तत्तद्विशेषे त्यक्ते**—तत्तद्वस्तुगतस्वभावविशेषे परित्यक्ते, **संबन्धस्वरूपे** अधिकरणाधिकर्तव्ययोरपि समाने [च] सति, इदमधिकरणमिदमाधेयमिति भेद कथं स्यादित्याह **त्यक्त** इति। अयं भाव —संबन्ध साधारण, तत्रैकमधिकरणम्, इतरस्त्वाधेयम्, तत्राधिकरणाधिकर्तव्ययो स्वभावादेव इदमधिकरणमिदमधिकर्तव्यमिति नियम। स्वभावविशेषपरित्यागे अधिकरणमेवाधेयं स्यात्, आधेयमेवाधिकरण स्यात्, संबन्धस्योभयतुल्यत्वात्। तस्मात् समवायाङ्गीकार(कार्यत्व ?)वादिनाऽपि संबन्धिनो स्वभावविशेष स्वीकार्य। तथाच मध्ये समवायक्लृप्तिर्निरर्थिका। एतद्दूषण नानासंबन्धपक्षेऽपि तुल्यमित्याह **नाने**ति। अत स्वभावादेव गुणगुण्यादिसंबन्ध, समवायस्तु(वायोऽतो?) निरर्थक इत्यर्थ ॥ इति समवायस्याभीष्टविशिष्टबुद्ध्यनिर्वाहकत्वम् ॥ १२७ ॥

(488) **धर्मो धर्मी द्वय वा कृतकमभिमत यत्र, संबन्धमत्र**

**प्राहु' कार्यं, स्वभावात् तदुभयघटितं केऽपि; दत्तोत्तरं तत्।**

**सिद्धेऽसिद्धे सम वा तदुदय इति तु प्रेक्ष्य पक्षत्रयेऽपि**

**प्रागुक्तेभ्योऽतिरिक्तान् प्रणिहितमनसः पश्यत प्रत्यवायान् ॥ १२८ ॥**

---

ठी–इति तार्किका। तर्हि रूपसमवायस्य स्पर्शसमवायस्य चैकत्वात् स्पर्शसमवायी वायु स्पर्शवानितिवत् रूपवानित्यपि व्यवहर्तव्य स्यादित्याक्षेप प्रसजति। एवं घटत्वादिजातिमान् स्यात् पटादिरपि। संबन्धकल्पन हि संबन्धस्यासंभवात् कश्चित् कस्यचिद्भाव इति निरूपणार्थम्। इदानीं संबन्धस्यैव वस्तुसत्तापादकत्वमायातम्। अथ वस्तु स्वतो व्यावृत्त न संबन्धेनाऽऽनेतु शक्यत इति चेत्—स्वभावत एव धर्मधर्मिरूपद्वन्द्वस्य तथा व्यवस्थाया संबन्धस्य व्यर्थत्वमेव। प्राभाकरास्तु समवायो नानेति वदन्ति। तत्पक्षेऽपि रूपघटयो समवायो वैशिष्ट्यनिर्वाहक इत्येतावता रूपस्याऽऽधारता, घटस्याऽऽधेयता च किं न स्यादिति शङ्का भवत्येव। तत्परिहार स्वभावादेवेति चेत्, वैशिष्ट्यप्रतीतिरपि तत एवास्तु। अतो न समवाय ॥ १२७ ॥

ययोर्धर्मधर्मिणो संबन्ध, स तयोर्नित्यत्वे नित्य तयोरन्यतरानित्यत्वेऽप्यनित्य इति प्राभाकरा। अत एव नाना। तदुभयघटित=तदुभयमन्तरा अलब्धस्वरूपश्च तु। तदपि पूर्वं रक्षतयैव ग्राह्यमित्याह दत्तोत्तर तदिति। सिद्धे=सिद्धे पश्चाद्वा, असिद्धे=सिद्धे प्रागेव वा, समं वा=धर्मधर्मिसमकाल वा तदुदय =समवायस्योत्पत्तिरिति विकल्प विमृश्य पक्षत्रयेऽपि प्रत्यवायान् प्रणिहितमनस सावधानास्सन्त पश्यत प्रागुक्तेभ्योऽतिरिक्तान् नित्यसमवायपक्षोक्तदोषाधिकान्। समवायोत्पत्ते प्राक् घटे स्थित्यनर्हं रूपादिक कुत्र सिद्धम्। रूपस्यासिद्धौ च संबन्ध्यभावे संबन्ध कथम्। उत्पन्नं द्रव्य क्षणमगुण तिष्ठति, अथ गुण, अथ समवाय इत्युक्तौ सममुत्पत्तिरिति पक्षोऽपि न संभवतीति ॥

समवायस्य कचिदनित्यत्ववादिनं प्राभाकरं प्रतिक्षिपति **धर्म** इति । यत्र धर्मो वा धर्मी वा उभयं वा कृतकमभिमतम्, तत्र समवायं कार्यं प्राहुः **प्राभाकराः** । तं स्वभावादेवतदुभयघटितं च प्राहुः । तच्च दत्तोत्तरमित्याह **दत्तोत्तरं तदिति** । कथं दत्तोत्तरमित्युत्तरं(मित्यत्रोत्तरं?) विवृणोति **सिद्ध** इति । सिद्धे वा वस्तुनि घटते समवायोत्पत्तिः, असिद्धे वा, समं वा ? । न तावत् सिद्धे, समवायमन्तरेण घटसिद्धेरभावात् । नाप्यसिद्धे, असिद्धमाश्रित्य समवायोत्पत्तेरयोगात् । नापि समम् ; समवायतदाश्रययोर्युगपदुत्पत्त्ययोगात् । पूर्वसिद्धे हि घटादौ रूपादेरुत्पत्तिः । इत्थं प्रागुक्तेभ्यो दूषणेभ्योऽतिरिक्तान् एतान् **प्रत्यवायान्** दूषणभेदान्, **प्रणिहितमनसः** अवहितमनसः पश्यतेति पदानामन्वयः ॥

**इति अनित्यसमवायपक्षविशेषदूषणम् ॥ १२८ ॥**

**(489) सोऽभावो, यः स्वभावं नियमयति दशादेशकालादिभेदो ;**
**नैवं सर्वाश्रितानां त्यजनमनितरस्थाप्यधीप्रापितत्वात् ।**
**तत्तत्प्रत्यर्थिभावस्फुरणसहकृतो नञ्प्रयोगक्षमोऽसौ ;**
**नाभावानामभावं त्वमपि कलयसे भावभेदादितोऽन्यम् ॥ १२९ ॥**

एवं भावनिरूपणानन्तरमभावमपि निरूपयति **स** इति । परे खलु भावातिरिक्तमभावं कल्पयन्ति ; तत्रेत्याह **य** इति । यः स्वभावं नियमयति देशकालादिभेदो भवत्पक्षे, स एवाभावव्यवहारं नियमयतु ; अतिरिक्ताभावकल्पने गौरवम्, अनुपलब्धत्वादनपेक्षितत्वाच्च ॥ एवं तर्हि सर्वाश्रितानां रूपादीनामपि त्यजनं प्रसज्यत इति चेत्, तत्रेत्याह **नैवमिति** । तत्र हेतुमाह **अनितरेति** । अनन्यथासिद्धबुद्धिसिद्धत्वेन रूपादीनां त्यागप्रसङ्गो नास्ति । अभावस्य तु भावविशेषैरेवान्यथासिद्धत्वेन त्यागः समुचित

---

वी– समवायपर्यन्तास्तावत्क्रमतः भावपदार्थाः परिशीलिताः । तथैवाभावमपि सप्तमत्वेन तदिष्टं निरसितुं परिशीलयति **स** इति । अभावो हि अस्यां दशायां अस्मिन् देशे अस्मिन् काले, एतद्धर्मविच्छिन्ने इदं नास्तीति = अयमभावोऽस्तीति दशादिपुरस्कारेणैव निरूपणीयः । तथाच दशादिरूपो यो विशेषो भावरूपः स्वभावम् अभावस्य सद्भावं नियमयति, दशादियादशभावपदार्थनियतो भवत्यभावः; स दशादिरेवाऽभावोऽस्तु, किमन्येनेत्यर्थः। नैवमिति। एवं सति सर्वाश्रितानां = सर्वसंमतानां रूपरसादीनामपि यत्किञ्चिन्नियतत्ववर्णनेन त्यजनं = अपलापो न भवति, तेषामनितरस्थाप्यया = वस्त्वन्तरग्रहणेनानिर्वाह्यया अनन्यथासिद्धया धिया प्रापितत्वात् । यद्वा अनितरस्थाप्यया प्रतियोगिभूतवस्त्वन्तरनिरपेक्षया धिया स्वरूपत एव प्रापितत्वात् । अभावस्तु भावप्रतियोगिक एव भासते । अत एव अभावस्वीकारेण भावापलापो न भवति । नन्वन एव किञ्चित्प्रतियोगिकत्वरूपविशेषवत्त्वात् तद्रहितभावविलक्षणः, अस्तीति नास्तीति च धीवैलक्षण्यादित्यत्राह तत्तदिति । यथा कलञ्जभक्षणादयो भावा एव धर्मविरोधित्वाकारेण वक्तुमिष्टाः अधर्मशब्देनोच्यन्ते, यथा मृग एवामनुष्यशब्देन, कर्मैव चाविद्याशब्देन नञ्मुखेन, तथा सर्वोपि भावप्रतियोगिकत्ववेषेण कथनावसरे नञा निर्दिश्यत इति भाव एव सर्वोऽप्यभावः । तार्किकसंमतमेवेदमित्याह नाभावानामिति । घटाभावाभावः, नास्तीति प्रतीतिविषयोऽपि घटरूपभावविशेषादन्यत्वेन त्वयापि नेष्यत इति । भावभेदादितः = भावविशेषादेः । यद्वा भावभेदात् इत इति पदच्छेदः । एतस्मात् भावविशेषादित्यर्थः । अन्योन्याभावरूपतरम् = अन्योन्यमभावरूपत्वम् ।

इति भावः । तर्ह्यभावाभावे कथं नञ्प्रयोग इत्यत्राह तत्तदिति । तत्तत्प्रतियोगिभावस्फुरणसहकृतो देशकालादिभेद एव स्वभावात् नञ्प्रयोगमपि सहते। अभावस्यापि नञ्प्रयोगसहत्वे स्वभाव एव नियामकः । एवं देशकालादिनियमेऽपि विभाव्यम् । ननु भावस्य कथमभावत्वमित्याशङ्क्य, अभावानामगारं त्वमपि भावमेवाङ्गीकरोषीत्याह नाभावानामिति । अयं भावः— यथा भावाभावयोः परस्परप्रतिक्षेपात्मकत्वेना न्योन्याभावरूपत्वमपि भवान् वदति, एवं भावानामेव परस्परप्रतिक्षेपात्मकत्वेनान्योन्याभावरूपत्वं वयमपि वदाम । अतिरिक्ताभाववादिना त्वया तदुपष्टम्भकत्वेन देशकालादिनियतोऽभावो विरुद्धस्वभाव एव स्वीक्रियते, स एव भावोऽस्तु अभावव्यवहारविषयः, किमतिरिक्तेनाभावेन कल्पनागौरवपराहतेनेति ॥

इति अभावस्य भावत्वम् ॥ १२९ ॥

(490) प्रध्वंसप्रागभावौ द्वितनुरभिमतः प्रागभावात्ययश्च ;
प्रागूर्ध्वानाद्यनन्तप्रतिनियतदशासन्ततिः स्यात् तथा(दा) नः ।
क्लृप्तेऽन्यस्मिन् अभावे परमपि च पुराऽभावपारम्परीतः
संपद्येतानवस्था ; स्वत उपरमण दृष्ट एवास्त्वभीष्टे ॥ १३० ॥

एवमभावसामान्यं निरूप्य प्राक्प्रध्वंसाभावयोर्विशेषमाह प्रध्वंसेति । भवत्सिद्धान्ते प्रध्वंसप्रागभावो नाम घटतत्प्रागभावरूपो द्वितनुरभिमतः । एवं घटप्रागभावप्रध्वंसश्च घटतत्प्रध्वंसरूपो द्वितनुः । एवमेवास्मत्सिद्धान्तेऽप्यनादिप्रागवस्थापरम्परा प्रागभावो घटस्य, अनन्त उत्तरावस्थासन्तान प्रध्वंसः स्यात् । तथाच पूर्वोत्तरावस्थासन्ततिव्यतिरेकेण न प्राक्प्रध्वंसाभावौ कल्प्यौ । एवमनङ्गीकारेण प्रध्वंसप्रागभावे क्लृप्ते प्रागभावप्रध्वंसे च क्लृप्ते सति उत्तरोत्तराभावपारम्पर्यादनवस्था संपद्येत । यदि कुत्रचित् स्वत एवोपरमणमनवस्थायाः, तर्हि आदित एवोपरमण भवत्वित्याह दृष्ट एवास्त्वभीष्ट इति । पूर्वोत्तरा

---

श्री— घटाभावस्य घटप्रतियोगिकत्ववत् घटस्य घटाभावप्रतियोगिकत्वम् ॥ १२९ ॥

ननु प्रागभावोऽनादिः, प्रध्वंसोऽनन्त इति प्रसिद्धम् । इदञ्च घटप्रागभावादेः घटध्वंसादेश्चाभावरूपत्वे घटते । यदि घटपूर्वावस्था घटप्रागभावः घटोत्तरावस्था च घटध्वंस इत्युच्येते, तदा तत्तदवस्थाया अनित्यत्वात् नानादित्वानन्तत्वे इत्यत्राह प्रध्वंसेति । भवद्भिरपि ध्वंसप्रागभावस्य प्रागभावध्वंसस्य च विचारावसरे, अभावाभावस्य भावरूपत्वादनयोः कीदृशभावरूपत्वमिति प्रश्ने घटप्रागभावध्वंसः तत्प्रतियोगिघट-तद्ध्वंसोभयरूप । अतो घटात्मकभावरूपत्वम्, घटध्वंसप्रागभावश्च तद्ध्वंसप्रतियोगिघट-तत्प्रागभावोभयरूपत्वात् घटात्मकश्चेत्युक्तम्। घटमात्रस्याभावरूपत्वास्वीकारः प्रागभावस्य पूर्वं सर्वदा, ध्वंसस्य च पश्चात् सर्वदा स्थित्युपपादनाय। एवं पदार्थद्वयमादाय ध्वंसत्वप्रागभावत्वोपपादनवत् घटप्रागभावो नाम घटावस्थापूर्वभाव्यवस्थापरम्परा सर्वा, घटध्वंसो नाम घटावस्थापश्चाद्भाविसर्वावस्थापरम्परा इति अस्माकमुपपादनम् । अतः पूर्वं पश्चाच्च प्रागभावस्य ध्वंसस्य च सर्वदा सत्त्वात् न घटोन्मज्जनप्रसंग इति ॥ यद्येवमनुक्त्वा घटध्वंसप्रागभावो घटप्रागभावध्वंसश्चाभावाभावोऽप्यतिरिक्त इत्येवेष्येत, तर्हि तस्याभावस्याभाव इति परम्परानिविष्टाः सर्वेऽतिरिक्ता एव स्युरित्यनवस्था । यदि बहुदूरं गत्वा कचित् विश्रान्तिः, तर्हि प्रथमोऽपि भावरूप एवेष्यताम् । न कस्याप्यतिरिक्ततेति लाघवमिति । परमपि च पुरेति । पश्चात् प्राक्चेत्यर्थः । ध्वंसविषये प्रागभावविषये चेति यावत् ॥ १३० ॥

वस्थाद्वयं दृष्टम् ; भवतश्चाभीष्टम् ; तत्रैवोपरमणमस्त्वनवस्थायाः। अयमर्थः—पूर्वावस्थापरम्परा प्रागभावः, उत्तरावस्थापरम्परा प्रध्वंस इति दृष्टानुसारपरिकल्पने न कश्चिद्दोषः । पूर्वभावव्यतिरेकेण प्रध्वंसस्य प्रागभावपरिकल्पने तथोत्तरभावव्यतिरेकेण प्रागभावस्य प्रध्वंसकल्पने सति अनवस्थादौःस्थ्यमिति ॥

इति ध्वंसादेर्भावत्वस्येष्टत्वमयुक्त्यभावश्च ॥ १३० ॥

(491) 'द्रव्येष्वेव ह्यवस्था क्रमत उपनता जन्मभङ्गादिरूपा ;
नावस्थानामवस्थान्वय इति न भवेत् कार्यतादी'ति चेन्न ।
ता एवान्योन्यवैरव्यतिभिदुरतयाऽन्योन्यनाशादिरूपाः;
चिन्त्यो जन्मादिषट्कव्यवहृतिविषयस्तत्तदर्थे यथार्हम् ॥ १३१ ॥

अत्र चोदयति द्रव्येष्विति । द्रव्याणामवस्थान्तरप्राप्त्या जन्मादिरुपपद्यते, अवस्थानां पुनरवस्थान्तरप्राप्त्यभावान्न भवेत् कार्यत्वादीति चेत्, तन्निराकरोति नेति । तदेव विवृणोति ता इति । **अन्योन्यवैरव्यतिभिदुरतया** — अन्योन्यविरोधयुक्ततया, ता एवावस्था अन्योन्यनाशादिरूपा भवन्ति । अयमर्थः—द्रव्यस्यावस्थान्तरप्राप्तिर्विनाशः । अवस्थायाश्च तदेवावस्थान्तरं विनाशशब्दवाच्यतां प्राप्नोति, पूर्वावस्थापेक्षया विरुद्धस्वभावत्वात् । एवं षड्विधविकारेष्वपि परस्परविरोधस्वाभाव्याज्जन्मादिव्यवहारविषयः संचिन्त्य इत्याह **चिन्त्य** इति । **यथार्हमिति**— यथोचितं कल्प्यमित्यर्थः ॥

इति अद्रव्यगताभावस्वरूपविमर्शः ॥ १३१ ॥

(492) नाभावः कारणानां कथमपि विषयो निःस्वभावत्वयुक्तेः ;
नाशोऽप्यस्यानपेक्ष्यः स्वयमसत इति प्रागभावादि नित्यम् ।
स्वाभावग्रस्तमेतन्निखिलमपि जगन्निःस्वमात्रं ततः स्यात् ;
मैवं ; भावान्तरात्मन्यधिकवपुषि वा तत्स्वभावत्वदृष्टेः ॥ १३२ ॥

---

ळी— ननु घटो जायत इत्यत्र जन्म तात्कालिकघटत्वावस्थारूपम् ; घटो नश्यतीति भंगः उत्तरकालिककपालत्वावस्थारूपः । घटत्वावस्था जायते, नश्यतीत्यादौ अवस्थानिष्ठावस्थाविरहात् तत्र कार्यत्वम् अभावरूपप्रागभावप्रतियोगित्वरूपमेव वाच्यम्, नश्वरत्वञ्च अभावरूपध्वंसप्रतियोगित्वमेवेति चेन्न ; यथा घटनाशः तदुत्तरकपालत्वावस्था, तथा घटत्वावस्थानाशोऽपि तद्वैरव्यतिभिदुरतया=तद्विरोधवत्तया कपालत्वावस्थैव । एवमेव जन्मादिषट्के, जायतेऽस्ति विपरिणमते वर्धते अपक्षीयते नश्यतीत्युक्तेषु द्रव्यधर्मेषु एकस्यान्यस्य सद्भावः कथ्यमानः अतिरिक्तामवस्थामतिरिक्ताभावं विना यथायथं स्वरूपं वा विरोध्याकारं वा गृहीत्वोपपादनीयः । 'जन्म जायते' इत्युक्तौ न जननि जन्मान्तरं स्वन्मतेऽपि, किं तु स्वरूपमेव । जन्म नश्यतीति तद्विरोधिद्रव्यगतावस्थारूपमेवेति ॥ १३१ ॥

एवं भावातिरिक्ताभावभंगः कृतः । कश्चिदाह—अभावातिरिक्तभावभंगमेव कुर्म इति । कथम् । तदुच्यते नाभाव इति । अभावः कारणानां विषयः=कार्यः न भवति । उत्तरकालसत्त्वं हि कार्यत्वम् । तत् कथं कथमभावे । एवमभावस्य नाशोऽपि दुर्वचः । सतो न हि नाशः स्यात्, न ह्यसत इति । यद्यसतो नाशः स्यात्, सत्त्वं तस्योक्तं स्यात् । तथाच कार्यत्वनाश्यत्वयोरभावे सिद्धमभावस्य नित्यत्वम् । एवमेकैकवस्तुनोऽप्यभावो यदि नित्यः सर्वस्य स्वाभावग्रस्तता=अभाव-

अत्र कश्चिद्बौद्धमतानुसारेणाभावानां निःस्वभावत्वमाह । तन्मतमनूद्य दूषयति नाभाव इत्यादिना
मैवमित्यन्तेन। अयमत्र पूर्वपक्षिणो भावः— अभावः कारणानां विषयो न भवति, निःस्वभावत्वात्। अतः
कार्यमेवाभावो न भवति अत एव चाभावस्य नाशोऽप्यनपेक्ष्यः--असाध्यः; स्वयमसत्त्वात्, नह्यसतः पुनर-
सत्त्वमपेक्ष्यते । तस्मादकार्यत्वादनाश्यत्वाच्च प्रागभावादि नित्यमेव । एवं चाभावस्य नित्यत्वे विश्वस्य
स्वाभावग्रस्तत्वात् विश्वमपि जगन्निस्स्वभावमेव स्यात्; ततश्च शून्यमेव विश्वमिति । तन्निराकरोति
मैवमिति । तत्र हेतुमाह भावान्तरात्मनीति । भावान्तरात्मनि [वा ?] अधिकवपुषि वा अधिकरूपे
वाऽभावे तत्स्वभावत्वस्य प्रामाणिकत्वात्=कार्यकारणभावादिसर्वस्वभावनियमेन भवदुक्तदोषशङ्काऽपि
इति अभावस्य निःस्वभावत्वभङ्गः ॥ १३२ ॥
नाङ्कुरतीति भावः ॥

(१९४) एतावन्तः पदार्था न तु पर इति तत्सिद्ध्यसिद्ध्योरयुक्तम् ;
'योऽस्त्येष सिद्धश्च पर' इति वचस्येष दोषो न तु स्यात् ।
मैवं ; सत्येव स्यात् तथापि ह्यधिकमनधिकं वेति शङ्कावकाशः ;
नैवं चेत् नैव शङ्का ; न च परिहरणं ; भित्तिलाभे हि चित्रम् ॥ १३३ ॥

---

बाधनार्थं च पुनस्तन्निराकरोति—मैवमितीत्युक्तम् (?) ॥ १३२ ॥
प्रतियोगिता, तर्हि वस्तु कदा स्यास्यतीति। सर्वं निस्स्वभावं भावत्वरहितम्; न कश्चिद् भाव इति।
निरस्यति मैवमिति । अस्माभिर्भावातिरिक्ताभावानंगीकारात् अभावस्य प्रामाणिकत्वे भावप्रामाणि-
कत्वमेव सिध्यति । अभावे अधिकवपुषि=तार्किकपक्ष इवातिरिक्तेऽपि, भावानंगीकारे प्रतियोग्य-
प्रसिद्धावभावः कथं प्रसिद्ध्येत्, अत्रेदानीमिदं नास्तीति ह्येकोऽभावो भावद्वयसापेक्षः । अतो
विश्वं स्वस्वभावेन सदेवेति ॥ १३२ ॥

एवं 'द्रव्याद्रव्यप्रभेदान्मितमुभयविधम्' इत्यारभ्य द्रव्यावान्तरभेदान् अद्रव्यावान्तरभेदांश्च
परिगणय्य तदन्येषामत्रयविरूपद्रव्याणाम् अद्रव्याणाञ्च भावान्तानां तार्किकोक्तानां निरासः कृतः ।
तत एतावन्तः पदार्था इति सिद्धम्। एतावन्त इत्यस्य च एत एव, नान्य इत्यर्थः। तत्रान्यो न
प्रसिद्ध्यति चेत्, कथं नान्य इति निषेधः? प्रतियोग्यप्रसिद्धौ अभावाप्रसिद्धेः समन्तरमेवोक्त-
त्वात्। यदि अन्यः प्रसिद्ध्यति, तदाऽपि निषेधः कथमिति सिद्ध्यसिद्ध्योर्व्याघात इति चेत्—
मैवम्, न पर इत्यस्य यः परः स नेति नार्थः, परस्य सिद्धत्वे निषेधायोगात्। अत एतावन्तः पदार्था
इत्यस्य पदार्थत्वव्यापकमेतावत्त्वम्, उक्तद्रव्याद्रव्यविभाजकधर्मान्यतमवत्त्वमित्यर्थः। यदि परः
स्यात्, अयं व्याप्यव्यापकभावो न स्यादिति तर्के; न पर इति अर्थात् सिद्धिः । इदमेव 'योऽस्त्येष-
सिद्धश्च पर' इत्युच्यते। यत्रास्तित्वं=वस्तुत्वम्, तत्र तत्तद्विभाजकधर्मवत्तया सिद्धवस्तुभेदकूटाभाव
इति विवक्षितम्। धर्मान्यतमधर्मवानिति यावत्। एवमर्थवर्णनात् वचसि स दोषो न स्यादिति।
त्वयाऽपि शंकमानेन शंकावाक्यार्थोऽपीदृशसरण्यैव वाच्य इत्याह सतीति। न हि त्वयाऽपि अन्यत्
किञ्चित् गृहीत्वा इदमधिकं वाऽनधिकं वेति शंक्येत, विचार्येत, अप्रसिद्धेः । किंतु यत् सत्=
प्रसिद्धम्, तत्र सत्येव=तद्विषयैव अधिकत्वानधिकत्वशंका। किञ्च परं प्रसिद्धं न वेति सिद्ध्य-
सिद्धिभ्यां व्याघातशंकाऽपि परमप्रसिद्धं गृहीत्वा कथमित्याह नैवं चेदिति। एवं न चेत्, कुतः
शंका. कुतस्तरां परिहारः। शंकाचित्रस्य वस्तुभित्तिसापेक्षत्वादित्यर्थः॥ सामान्यत इति। वस्तुत्व-

एवमर्थतत्त्वं सर्वमुपपाद्य पदार्थेयत्तावचनं न युज्यत इति वदतः परवादिनो मतं दूषणायानुवदति **एतावन्त** इति । 'एतावन्त एव पदार्था न परे' इति परेषां सिद्धावसिद्धौ च न युक्तम् ; सिद्धौ तावत् व्याघातादेव न युक्तम् ; सिद्धस्य निषेद्धुमशक्यत्वात् । असिद्धौ च प्रतियोग्यभावात् न युक्तमिति भावः । अनूदितमेतन्निराकरोति **मैवमिति** । निराकरणप्रकारं विवृणोति **य** इति । यः प्रमाणेन लोके सिध्यति, स एतस्मान्न पर इति सामान्यतः प्रमाणसिद्धे वस्तुनि भेदे निषिध्यमाने सति, तन्निषेधकवचसि **एष** भवदुक्तो दोषो न स्यात् । अयमर्थः—सामान्यतः प्रतिपन्ने वस्तुनि प्राङ्निरूपितादर्थादर्थान्तरत्वं प्रतिषिध्यत इति । एवमनङ्गीकारे तवापि ह्यधिकशङ्काया नावकाश इत्याह **सत्येवेति** । प्रतिपन्ने वस्तुनि खलु भवताऽपि पूर्वोक्तादधिकमनधिकं वेति शङ्काऽपि कर्तुं शक्यते । **नैवं चेत्**=एवमनङ्गीकारे **नैव शङ्का**=भवताऽधिकत्वं नाशङ्क्यते ; **न च परिहरणं**=नास्माभिराशङ्कितोऽर्थः परिह्रियते । तत्र दृष्टान्तमाह **भित्तिलाभ** इति । अयमर्थः—शङ्कायां सत्यामेवोत्तरं दातुमुचितमिति । अतेदं तात्पर्यम्—अधिकमर्थं केनाप्यवगम्याधिकत्वमाशङ्कनीयम् । भवता आशङ्कितं चेत्, तत्रोत्तरं दास्यामः ; नाशङ्कितं चेत्, अस्माभिरपि सुखेनास्थीयत इति ॥ इति **पदार्थेयत्तावधारणोपपत्तिः** ॥ १३३ ॥

(494) **इत्थं श्रीवेङ्कटेशः श्रुतममत जगन्मूलकन्दं मुकुन्दं**
**विस्तारो यस्य विश्वं मुनिभिरभिदधे विस्तरो वाङ्मयं च ।**
**यन्नास्मिन्, क्वापि नैतत्, क्षममिह कुहकैरिन्द्रजालं न तैस्तैः,**
**एकं तत् सर्वसिद्धयै कलयत हृदये तत्त्वमुक्ताकलापम् ॥ १३४ ॥**

ग्रं— 'भेदं योऽस्ति' इत्यत्र यः पदार्थोऽस्ति स सिद्धेभ्यो नातिरिक्त इति वचस्येवं(ष?) दोषो नास्तीत्यन्वय(?)भ्रान्तिं वारयितुमाह 'एतन्निराकरोति मैवमिति' इति । 'वचसि' इत्यस्य 'दोषो न स्यात्' इत्यनेन नान्वय (?) इति भावः ॥ १३३ ॥

वी— पदार्थत्वादिनेत्यर्थः । अर्थान्तरत्वमिति । प्रकृतार्थभिन्नार्थत्वं प्रकृतैतावत्पदार्थभेदः पदार्थप्रत्येकभेदसमुदाय इत्यर्थः ॥ १३३ ॥

वैलक्षण्यप्रदर्शनेन ग्रन्थमुपसंहर्तुमारभते इत्थमिति । इत्थं-सरपञ्चकोक्तप्रकारेण । श्रीवेंकटेश इति । उक्तं हि, 'वेंकटेशावतारोऽयम्' इति । अत एवैवं नामधेयम् ; श्रुतं =श्रीवादिहंसाम्बुवाहस्य श्रीरामानुजार्यस्य स्वाचार्यस्य साम्प्रदायिकार्थनिधेर्मुखात् 'श्रोतव्यः' इति शास्त्रानुसारेण गृहीतं मुकुन्दं अमत =मन्तव्यः इति शास्त्रार्थमनुसृत्य हेतुभिः प्रतिष्ठापयामास । ननु द्रव्याद्रव्यसकलवस्तुनिरूपणे कृत्वा, मुकुन्दमात्रमतत्वोक्तिः कथमिति चेत्—तत्राह जगन्मूलकन्दमिति । 'आत्मा वा अरे द्रष्टव्यः' इति श्रुतिर्हि स्थूलचिदचिद्विशिष्टब्रह्मकार्यकारणभूतसूक्ष्मचिदचिद्विशिष्टब्रह्मश्रवणमनननिध्यासनानि धारयति । अतः सर्वप्रकारविशिष्टं ब्रह्मैकमेव तत्त्वं विशेष्यविशेषणविवेचनेनैवं परिशीलितमिति भावः । "तस्यैतस्य महतो भूतस्य निश्वसितमेतत् यदृग्वेदो यजुर्वेदः" इत्याद्युक्तप्रमाणभूतशब्द-प्रमेयभूतजगदुभयरूपं विश्वं यस्य =यदीयम्, तत् सर्वमतादर्शित्वात् विस्तार इति । विस्तरणमर्थविषयकं विस्तारशब्दार्थः, शब्दविषयकं विस्तरशब्दार्थः । विस्तारविस्तरोभयं यदीयत्वेन मुनिभिरप्युक्तमित्यनेन श्रुतिप्रतिपादितोऽर्थः इतिहासपुराणब्रह्मसूत्राद्युपस्करणेनाप्त मत इति ज्ञापितम् । श्रीभाष्यकाराभिमतप्रमाणप्रमेयनिरूपणीय

इत्थं निर्मितस्य प्रबन्धस्य वक्तृवैलक्षण्यं संप्रदायवैलक्षण्यं विषयवैलक्षण्यं च तावदाह इत्थमिति । **श्रीवेङ्कटेश** इति वक्तृवैलक्षण्यम् । **श्रुतममतेति** सत्संप्रदायसिद्धत्वम् । **जगन्मूलकन्दं मुकुन्दमिति** विषयवैलक्षण्यम् । एतदभिधानं प्रबन्धस्योपादेयतमत्वप्रतिष्ठापनाय । **यस्य** भगवतः । **विस्तारो विश्वं विस्तरो वाङ्मयं चेति** सर्वमपि वक्तव्यं संगृहीतमिति द्योतयति । तदेव वदति **यन्नास्मिन्, क्वापि नैवदिति** । अनेन, "यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्" इति वचनं स्मारयति । **इह**—अस्मिन् प्रबन्धे । **तैस्तैः कुहकैर्वादिभिरिन्द्रजालं न क्षममिति** प्रबन्धस्याधृष्यत्वमाह । **इत्थम्भूतं तत्त्वमुक्ताकलापं** मङ्गलतमत्वात् **हृदये कलयतेति** शिष्याणां पुरुषार्थसाधनोपदेशः ॥

**इति प्रबन्धवैलक्षण्यम् ॥ १३४ ॥**

(495) **निद्दोषां वस्तुवृत्तिं निपुणमिह मया न्यस्यता क्वापि कोणे**
**यत्रोदासि, द्विधा वा समगणि गहने सम्मते सन्मतीनां**
**निष्कृष्टुं कश्चिदन्यः प्रभुरिह भगवल्लक्ष्मणार्यमुद्राम्**
**अक्षुद्राचार्यशिक्षाशतगुणितमतेरप्रमत्तान्न मत्तः ॥ १३५ ॥**

---

[illegible]— विश्वस्य वाङ्मयस्य च भगवद्विभूतित्वेन कीर्तनस्याभिधेयविषये शब्दविषये च वक्तव्यं सकलं संगृहीतमिति सूचनं फलमित्यभिप्रायेण आह—यस्य भगवत इति ॥ १३४ ॥

श्री— प्रवृत्तेषु प्राचीनेषु ग्रन्थेषु एतदनुक्तं तत्त्वं न किञ्चिदित्याह यदिति । 'यन्नेहास्ति न तत् क्वचित्' इत्युक्तमहाभारतवत् सर्वमत्रान्तर्भावितमिति भावः । 'यदिहास्ति तदन्यत्र' इति वाक्यस्य अन्यत्राप्येतदर्थसत्तास्थापकस्य भारतप्रशंसापरत्वं कथमिति चेत्—यदन्यत्र, तदिहास्तीति योजना क्रियताम्, यदिहास्ति तदेवान्यत्रेति वा । 'यदिहास्ति, तदन्यत्र किमस्ति' इति अन्यत्रेति शब्दे काकुर्वा । इतरग्रन्थोक्तानां केषाञ्चित् उपेक्ष्यत्ववत् अत्रापि दूष्यमुपेक्ष्यं किञ्चिदस्तीति न मन्तव्यमित्याह क्षममिति । यदि केचित् किमपि निरसनीयं ब्रूयुः, ते कुहकाः=वञ्चकाः । तत्प्रयुक्तश्चेन्द्रजालमेवेति भावः । *अस्मत्सिद्धान्तप्रमाणप्रमेयशोधनार्थप्रवृत्तप्राच्यग्रन्थानां ग्रहणे किञ्चिन्न ज्ञायेत, अन्यथा वा गृह्येत,* ग्रन्थान्तरापेक्षा च स्यात् । अयमेक एवालं सर्वप्रमेयनिश्चयायेति निगमयति एकमिति । सर्वग्राहकत्वमेकस्मिन् इति विवक्षितत्वात् एकमित्येव पाठः ; न तु एतमिति । एतमित्यनुक्त्वा मुक्ताकलापत्वनिर्देशः हृदये कलयतेत्येतदौचित्यातिशयाय । श्रमतेति श्रमुधातोर्लुङ्प्रथमैकवचनम् ॥ १३४ ॥

ननु ग्रन्थेऽस्मिन्नपि क्वचिदर्थशोधने औदासीन्यमाश्रितम्, क्वचित् पक्षद्वयोपन्यासः कृतः । तत्र निर्धारणमन्यसापेक्षमेवेत्याशङ्कायां तत्रापि त्विष्वग्भेदविद्यास्थितिपदविषयस्थेयभूतसदाचार्यशिक्षालब्धनिर्णयसामर्थ्यातिशयात्मदधीन एव निर्णय इत्याह निद्दोषामिति । वस्तुवृत्तिं—सर्वप्रमेययाथात्म्यं निपुणं—पराधृष्यतया न्यस्यता—निक्षिपता निष्कम्पतयोपन्यस्यता मया यत्रोदासीनतया स्थितम्, यत्र च एवं वा तथा वेत्युक्तम्, तत्र निष्कर्षाय प्राचीनग्रन्थग्रहणं न कार्यकरम् । अक्षुद्रस्याचार्यस्याक्षुद्रया शिक्षया निरूपणवैखरीं तदर्थिनामपि विसृज्य निर्धारणे विशेषतो लब्धशक्तिमतेः अप्रमत्तात्—अत्यन्तावधानवतः मत्तः—मत्—मच्छब्दात् तसिल्—अन्यः कश्चिदपि भगवल्लक्ष्मणाचार्यमुद्राम्=इदमीदृशमिति व्यवस्थापनक्षमयतिराजवर्णरेखाधेश्वरीं तत्र निष्क्रष्टुं=एतावदर्थगर्भमिति निर्धारयितुं न प्रभवति । मया मदन्तेवासिना वा सम्प्रदायलब्धार्थेन निष्कर्षः कार्य इति

एवमर्थतत्त्वं सर्वमुपपाद्य पदार्थेयत्तावचनं न युज्यत इति वदन् परवादिनो मतं दूषणायानुवदति **एतावन्त** इति। 'एतावन्त एव पदार्था न परे' इति परेषां सिद्धावसिद्धौ च न युक्तम्; सिद्धौ तावत् व्याघातादेव न युक्तम्; सिद्धस्य निषेद्धुमशक्यत्वात्। असिद्धौ च प्रतियोग्यभावात् न युक्तमिति भाव। अनूदितमेतन्निराकरोति **मैवमिति**। निराकरणप्रकारं विवृणोति **य** इति। यः प्रमाणेन लोके सिध्यति, स एतस्मान्न पर **इति** सामान्यत. प्रमाणसिद्धे वस्तुनि भेदे निषिध्यमाने सति, तन्निषेधकवचसि **एव** भवदुक्तो दोषो न स्यात्। अयमर्थ —सामान्यतः प्रतिपन्ने वस्तुनि प्राङ्निरूपितादर्थादर्थान्तरत्वं प्रतिषिध्यत इति। एवमनङ्गीकारे तवापि ह्यधिकशङ्काया नावकाश इत्याह **सत्येवेति**। प्रतिपन्ने वस्तुनि खलु भवताऽपि पूर्वोक्तादधिकमनधिकं वेति शङ्काऽपि कर्तुं शक्यते। **नैवं चेत्**=एवमनङ्गीकारे **नैव शङ्का**=भवताऽधिकत्वं नाशङ्क्यते; **न च परिहरणं**=नास्माभिराशङ्कितोऽर्थः परिह्रियते। तत्र दृष्टान्तमाह **भित्तिलाभ** इति। अयमर्थ —शङ्काया सत्यामेवोत्तरं दातुमुचितमिति। अत्रेदं तात्पर्यम्—अधिकमर्थं केनाप्यवगम्याधिकत्वमाशङ्कनीयम्। भवता आशङ्कितं चेत्, तत्रोत्तरं दास्यामः; नाशङ्कितं चेत्, अस्माभिरपि सुखेनास्थीयत इति॥ **इति पदार्थेयत्तावधारणोपपत्तिः ॥ १३३ ॥**

(494) इत्थं श्रीवेङ्कटेशः श्रुतममत जगन्मूलकन्दं मुकुन्दं
विस्तारो यस्य विश्वं मुनिभिरभिदधे विस्तरो वाङ्मयं च।
यत्रास्मिन्, क्वापि नैतद्, क्षममिह कुहकैरिन्द्रजालं न तैस्तैः,
एक तत् सर्वसिद्ध्यै कलयत हृदये तत्त्वमुक्ताकलापम् ॥ १३४ ॥

---

*प्र॰*— 'भेदे योऽस्ति' इत्यत्र यः पदार्थोऽस्ति स सिद्धेभ्यो नातिरिक्त इति वचस्येवं(व?) दोषो नास्तीत्यन्वय(?)भ्रान्ति वारयितुमाह 'एतन्निराकरोति मैवमिति' इति। 'वचसि' इत्यस्य 'दोषो न स्यात्' इत्यनेन नान्वय (?) इति भावः॥ १३३॥

*श्री*— पदार्थत्वादिनेत्यर्थः। अर्थान्तरत्वमिति। प्रकृतार्थभिन्नार्थत्वं प्रकृतैतावत्पदार्थभेदः पदार्थप्रत्येकभेदसमुदाय इत्यर्थः॥ १३३॥

वैलक्षण्यप्रदर्शनेन ग्रन्थमुपसंहर्तुमारभते इत्थमिति। इत्थं-स्रग्धराश्लोकप्रकारेण। श्रीवेंकटेश इति। उक्तं हि, 'वेंकटेशावतारोऽयम्' इति। अत एवैवं नामधेयम्; श्रुतं =श्रीवादिहंसाम्बुवाहस्य श्रीरामानुजार्यस्य स्वाचार्यस्य साम्प्रदायिकार्थनिधेर्मुखात् 'श्रोत यः' इति शास्त्रानुसारेण गृहीतं मुकुन्दं अमत =मन्तव्यः इति शास्त्रार्थमनुसृत्य हेतुभिः प्रतिष्ठापयामास। ननु द्रव्याद्रव्यसकलवस्तुनिरूपणे कृत्वा, मुकुन्दमात्रमतवोक्तिः कथमिति चेत्—तत्राह जगन्मूलकन्दमिति। 'आत्मा वा अरे द्रष्टव्यः' इति श्रुतिर्हि स्थूलचिदचिद्विशिष्टब्रह्मकार्यकारणभूतसूक्ष्मचिदचिद्विशिष्टब्रह्मश्रवणमनननिध्यासनानि श्रावयति। अतः सर्वप्रकारविशिष्टं ब्रह्मैवमेव तत्त्वं विशेष्यविशेषणविवेचनेनैवं परिशीलितमिति भाव। "तस्यैतस्य महतो भूतस्य निश्वसितमेतद् यदृग्वेदो यजुर्वेदः" इत्यारभ्योक्तप्रमाणभूतशब्द-प्रमेयभूतजगदुभयरूपं विश्वं यस्य =यदीयम्, तत् सर्वमतादर्शित्वाद विस्तार इति। विस्तरणमर्थविषयकं विस्तारशब्दार्थं, शब्दविषयकं विस्तरशब्दार्थः। विस्तरविस्तारोभय यदीयत्वेन मुनिभिरप्युक्तमित्यनेन श्रुतिप्रतिपादितोऽर्थः इतिहासपुराणब्रह्मसूत्राद्युपबृंहणेनापि मत इति ज्ञापितम्। श्रीभाष्यकाराभिमतप्रमाणप्रमेयनिरूपणपि

इत्थं निर्मितस्य ग्रन्थस्य वक्तृवैलक्षण्यं सम्प्रदायवैलक्षण्यं विषयवैलक्षण्यं च तावदाह इत्थमिति । श्रीवेङ्कटेश इति वक्तृवैलक्षण्यम् । श्रुतममतेति सत्सम्प्रदायसिद्धत्वम् । जगन्मूलकन्दं मुकुन्दमिति विषयवैलक्षण्यम् । एतदभिधानं प्रबन्धस्योपादेयतमत्वप्रतिष्ठापनाय । यस्य भगवत । विस्तारो विश्व विस्तरो वाङ्मयं चेति सर्वमपि वक्तव्यं सगृहीतमिति द्योतयति । तदेव वदति यन्नास्मिन्, क्वापि नैवदिति । अनेन, "यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्" इति वचनं स्मारयति । इह—अस्मिन् प्रबन्धे । तैस्तैः कुहकैर्गादिभिरिन्द्रजालं न क्षममिति प्रबन्धस्याधृष्यत्वमाह । इत्थ म्भूतं तत्त्वमुक्ताकलापं मङ्गलपरत्वात् हृदये कलयतेति शिष्याणां पुरुषार्थसाधनोपदेशः ॥

**इति प्रबन्धवैलक्षण्यम् ॥ १३४ ॥**

**(495) निश्शेषां वस्तुवृत्तिं निपुणमिह मया न्यस्यता क्वापि कोणे**
**यत्रोदासि, द्विधा वा समगणि गहने सम्मते सन्मतीनां**
**निष्कष्टुं कश्चिदन्यः प्रभुरिह भगवल्लक्ष्मणाचार्यमुद्राम्**
**अक्षुद्राचार्यशिक्षाशतगुणितमतेरप्रमत्तान्न मत्तः ॥ १३५ ॥**

---

प्र०— विश्वस्य वाङ्मयस्य च भगवद्विभूतित्वेन कीर्तनस्याभिधेयविषये शब्दविषये च वक्तव्यं सकलं संगृहीतमिति सूचनं फलमित्यभिप्रायेण आह—यस्य भगवन इति ॥ १३४ ॥

व्या— प्रवृत्तेषु प्राचीनेषु ग्रन्थेषु एतदनुक्तं तत्त्वं न किञ्चिदित्याह यदिति । 'यन्नेहास्ति न तत् क्वचित्' इत्युक्तमहाभारतवत् सर्वमत्रान्तर्भावितमिति भाव । 'यदिहास्ति तदन्यत्र' इति वाक्यस्य अन्यत्रास्येतदर्थसत्तास्यापकस्य भारतप्रशंसापरत्वं कथमिति चेत्—यदन्यत्र, तदिहास्तीति योजना क्रियताम्, यदिहास्ति तदेवान्यत्रेति वा । 'यदिहास्ति, तदन्यत्र किमस्ति' इति अन्यत्रेति शब्दे काकुर्वा । इतरग्रन्थोक्तानां केषाञ्चित् उपेक्षणवत् अत्रापि दूष्यमुपेक्ष्यं किञ्चिदस्तीति न मन्तव्यमित्याह क्षममिति । यदि केचित् किमपि निरसनीयं ब्रूयुः, ते कुहका = वञ्चकाः । तत्प्रयुक्तश्चेन्द्रजालमेवेति भावः । अस्मत्सिद्धान्तप्रमाणप्रमेयशोधनार्थप्रवृत्तप्राच्यग्रन्थानां ग्रहणे किञ्चिन्न हीयेत अन्यथा वा गृह्येत, ग्रन्थान्तरापेक्षा च स्यात् । अयमेक एवाल सर्वप्रमेयनिश्चयायेति निगमयति एवमिति । सर्वग्राहकत्वमेतस्मिन् इति विवक्षितत्वात् एकमित्येव पाठ , न तु एतमिति । एतमित्यनुक्त्वा मुक्ताकलापत्वनिर्देशः हृदये कलयतेत्येतदौचित्यातिशयाय । अमतेति मनुधातोर्लुङ्प्रथमैकवचनम् ॥ १३४ ॥

ननु ग्रन्थेऽस्मिन्नपि क्वचिदर्थशोधने औदासीन्यमाश्रितम्, क्वचित् पक्षद्वयोपन्यासः कृतः । तत्र निर्धारणमन्यसापेक्षमेवेत्याशङ्कायां तत्रापि त्रिदण्डभेदविद्यास्थितिपदविषयस्थेयभूतसदाचार्यशिक्षालब्धनिर्णयसामर्थ्यातिशयात्मदधीन एव निर्णय इत्याह निश्शेषामिति । वस्तुवृत्ति—सर्वप्रमेययाथात्म्यं निपुण—पराधृष्यतया न्यस्यता—निक्षिपता निष्कम्पतयोपन्यस्यता मया यत्रोदासीनतया स्थितम्, यत्र च पक्षद्वयं वा तथा चेदुक्तम्, तत्र निष्कर्षाय प्राचीनग्रन्थग्रहणं न कार्यकरम् । अक्षुद्रस्याचार्यस्याक्षुद्रया शिक्षया निरूपणवैखर्या तदनुचिन्तितार्थानामपि विमृश्य निर्धारणे विशेषतो लब्धशक्तिमतेः अप्रमत्तात्—अत्यन्तावधानवत । मत्त.—मत्—मच्छब्दात् तसिल्—अन्य कश्चिदपि भगवल्लक्ष्मणाचार्यमुद्राम् = इदमीदृशमिति व्यवस्थापनक्षमयतिराजवर्णरेखावैश्वरीं तत्र निष्कष्टुं = एतावदर्थगर्भमिति निर्धारयितुं न प्रभवति । मया मदन्तेवासिना वा सम्प्रदायलब्धार्थेन निष्कर्षः कार्य इति

निःशेषामिति । अस्मिन् प्रबन्धे निःशेषां वस्तुवृत्तिं निपुणं व्यवस्यता स्थापयता मया क्वापि-कोणे आभासेऽर्थे यत्नोदासि, गहनेऽर्थे यत्र द्विधा वा समगाणि विकल्पेनाभाणि; तत्र च (तच्च?) सन्मतीनां विदुषां सम्मत एव न पुनः स्वकपोलकल्पित[त्व]मात्रेण । तत्र **भगवल्लक्ष्मणाचार्यमुद्रां निष्कृष्टुमक्षुद्राचार्यशिक्षाशतगुणितमतेरप्रमत्तान्मत्तो अन्यः कश्चिन्न प्रभुरित्यन्वयः।** अनेन मदुक्तानुसारेणैवान्तेवासिभिरवशिष्टं निष्कृष्टव्यम्; न पुनस्तद्विरोधेनेति भावः ॥

**इति-स्वकृतनिष्कर्षस्याऽऽदरणीयत्वम् ॥ स्वैकनिष्कर्षणीयत्वम् ॥ १३५ ॥**

**(496) दृष्टेऽपह्नुत्यभावात् अनुमितिविषये लाघवस्यानुरोधात्,**
**शास्त्रेणैवावसेये विहतिविरहिते नास्तिकत्वप्रहाणात् ।**
**नाथोपज्ञं प्रवृत्तं बहुभिरुपचितं यामुनेयप्रबन्धैः,**
**त्रातं सम्यग्यतीन्द्रैरिदमखिलतमःकर्शनं दर्शनं नः ॥ १३६ ॥**

---

पुरी— अस्मिन् प्रबन्धे स्वोत्प्रेक्षया कुत्रचिदाभासत्वबुद्ध्या उपेक्षणम्, कुत्रचिद् द्वेधा वर्णनं च कृतम्; अतोऽनुपादेयत्वं प्रबन्धस्येति शङ्कापरिहारार्थं उभयस्यापि साम्प्रदायिकत्वप्रतिपादनपरं पूर्वार्धं व्याचष्टे—अस्मिन् प्रबन्ध इति । त्वया निष्कृष्टुमशक्यतया द्वेधा वर्णितः, अन्येन प्रज्ञावता निष्कृष्येत इति शङ्कापरिहारार्थमुत्तरार्धं व्याचष्टे—तत्र भगवल्लक्ष्मणाचार्येति ॥ १३५ ॥

श्री-भावः। 'सन्मतीनां संमते द्विधा वा समगाणि' इत्यनेन पूर्वाचार्यग्रन्थप्रदर्शनेन एवं वा तथावेत्युक्तम्। न तु स्वयं कल्पद्वयपरामर्शेनेति दर्शितम् पूर्वार्धे यत्रेत्यस्य प्रतिसंबन्धि तत्रेति पदमुत्तरार्धे अध्याहर्तव्यमिति दर्शयति तत्र भगवदिति । कतिपयाद्रव्यविषये दृश्यमाना ईदृशाव्यवस्थाऽपि एतदनन्तरविरचिते न्यायसिद्धाञ्जने निष्कर्षविधानात् परिहृता । अतो मत्तोऽन्यो न प्रभवतीत्यनेन स्वेन करिष्यमाणस्य निष्कर्षस्य स्फोरणमित्यपि मन्तव्यम् । ततोऽप्यलब्धे निष्कर्षस्त्वन्तेवासिकार्यः । तैरस्मद्लिखितानामर्थानामप्यस्मदुपदेशसंप्रदायमुखेन ज्ञातत्वात् । अवश्यज्ञेयत्वाभावे प्राच्यैरप्यौदासीन्यमवलम्ब्यत इति जडद्रव्यसरे उक्तम, तत्त्वेष्विति (१५) श्लोके 'चिन्तासाफल्यमान्द्यात् श्रमबहुलतयाऽप्यत्र तत्रैवोदासि' इति । अत्राप्यद्रव्यसरे (४७९) सादृश्यमिति श्लोके 'किं दन्ताद्दन्ति कृत्वा फलमिह बलिभुग्दन्तचिन्तान्तरेऽस्मिन्' इति सादृश्यादितत्त्वशोधने औदासीन्यमदर्शि । शक्ति मात्रत्वं वा लिङ्गार्थः, आप्ताभिप्रायो वेति पक्षद्वयमदर्शि । अद्रव्याणि दशैवेति निर्धारणं न्यायसिद्धाञ्जने ; अत्र तु प्राचां मतिभेदमनुरुध्यान्यगणनाऽप्यकारि इत्यादिकं बोध्यम् ॥ १३५ ॥

एवं निष्कृष्टप्रमेयदर्शिनः स्वदर्शनस्य विशिष्टाद्वैतस्य सूर्यवत् सर्वान्धकारनिवारकत्वं तत एवेतरेषां दर्शनानां प्रदीप-नक्षत्र-निशाकरतुल्यत्वञ्च व्यञ्जयन् भगवल्लक्ष्मणाचार्यैरियं मुद्रा कीदृशप्रमाण-सम्प्रदायानुरोधेन समादृता ; कश्चास्य संप्रदायस्यातिशयः इति प्रश्नमपि प्रतिवक्ति दृष्ट इति । प्रत्यक्षमनुमानमागम इति मानत्रयं मेयनिर्णायकम् । तत्र प्रत्यक्षं बलिष्ठम् । तद्दर्शितं तद्बाधितञ्च यत् तदेवान्यतोऽवसेयम् । प्रत्यक्षोपजीवि चानुमानमागमप्रमाणोपजीव्यमपि आगमविरुद्धार्थस्थापने स्वयनक्षममिति वक्ष्यते। यथा प्रत्यक्षं दर्शयति, प्रत्यक्षाविरोधे च यथाऽऽगमो ब्रवीति, तथैव प्रमेयमेष्टव्यम्। तत्र गौरवादिदमुपेक्ष्यमिति न भवति । प्रत्यक्षागमविरोधे चानुमानेन कस्यचिदभ्युपगन्तव्यत्वे गुरुपक्षत्यागेन लघुपक्ष आदर्तव्य इति व्यवस्था पूर्वमवगन्तव्या । तत्र दृष्टं सर्वमपलपन्ति शून्यवादिनः । गुणसमुदायो द्रव्यमिति द्रव्यापलापिनः केचन बौद्धाः । अहं जानामीति ज्ञानज्ञात्रोर्भेदेऽनुभूयमाने एकत्वापलापिनः केचित् वैदिका अवैदिकाश्च । इमौ संयुक्तावित्यनुभूयमानं

एतस्य सिद्धान्तस्य दृष्टेऽपह्नुत्यभावात् प्रत्यक्षसिद्धेऽर्थे सुपायादिप्रभृतिवत् अपह्नवाभावात्, अनुमितिविषये लाघवस्यानुरोधात् वैशेषिकादिवत् अनपेक्षितकल्पनाभावात्, शास्त्रैणैवावसेये प्रमाणबाधविरहिते नास्तिकत्वप्रहाणात् [illegible] नाथोपज्ञं प्रवृत्तं नाथमुनिमारभ्य प्रवृत्त.. [illegible] भाष्यादिप्रबन्धपञ्चकनिर्माणेन परित्रातमिदमेव दर्शनमखिलतमःकर्शनमिति स्वदर्शनस्य सूर्योदयवत् अशेषार्थप्रकाशकत्वं दर्शयति दृष्ट इत्यादिना ॥ इति दर्शनस्यास्याखिलतमःकर्शनत्वम्॥१३६॥

(497) हृद्या हृत्पद्मसिंहासनरसिकहयग्रीवहेषोर्मिघोष-

क्षिप्तप्रत्यर्थिदृप्तिर्जयति बहुगुणा पङ्क्तिरस्मद्गुरूणाम् ।

---

[illegible]— स्वप्रबन्धस्योपादेयताख्यापनाय प्रबन्धप्रतिपाद्यदर्शनोत्कर्षप्रतिपादकं 'दृष्टे' इत्यादिश्लोकं व्याचष्टे—एतस्येति । पञ्चम्यन्तपदान्वयार्थं एतस्य इत्यध्याहार्यमित्यर्थः ॥ १३६ ॥

[illegible]—संसर्गं निषेधति बौद्धः । चलतीति प्रतीतं सर्वं केचिन्नेच्छन्ति । नीलं तमश्चलतीत्येवमध्यक्ष्यमाणं तमो द्रव्यमन्ये न मन्यन्ते । नास्मद्दर्शने ईदृशापह्नवोऽस्ति । अयं गौरिति बुद्धौ सत्यां व्यक्त्यतिरिक्तं तत्र प्रतीतं संस्थानं जातिरित्युभयमिति केचित् । तदा अश्वव्यावृत्तिग्रहः कथमिति प्रश्ने गोत्वेनाश्वभेदानुमानादिति वर्णयन्ति । अस्माभिस्तु गोत्वमेव संस्थानं जातिरश्वादिभेदश्चेति लाघवमवलम्ब्य स्थाप्यते । असद्द्रव्यसृष्टिप्रभृत्यर्थेनत्यस्येति संकल्पसूर्योदयश्लोकश्चानुसंधेयः । घटं जानामीति ज्ञानघटयोः संसर्गे विचार्यमाणे अन्तःकरणमिन्द्रियद्वारा बहिः प्रसृत्य, जलमिव केदारं विषयं तं तमभिव्याप्नोति । एवं विषयपरिमाणानुरूपपरिमाणभाजि अन्तःकरणे स्वच्छे ज्ञानद्रव्यमात्मापरपर्यायं प्रतिफलति । एवं चैतन्यारोपात् ज्ञानव्यवहार इति कल्पयन्ति सांख्या अद्वैतिनश्च । वयं तु अनुमानस्य लघुरक्षमतित्वात् ज्ञानस्यैव विषयेण संबन्धं ब्रूमः । स संबन्धो विषयविषयिभावः संयोगो वाऽन्य एव वेति विमर्शे आगमाविरोधाय ज्ञाततादिरुपेक्ष्यते इत्यादिकं भाव्यम् ।

शास्त्रैणैवेति । न वयमपूर्वं परिकल्प्य देवताप्रीतिं त्यजामः । 'प्रथमं प्रत्यङ्गभङ्गिरा चादृष्टम्, अन्न एव देवताप्रीतिः इत्यपि न कल्पयामः । परिदृश्यमानभूलोकातिरिक्तस्वर्गनरकादिभेद-तत्प्रापकपुण्यपापादिबाधे नास्तिकत्वमेव स्यादिति यथा विहतिविरहात् तत् रूपमिष्यते, तथा सगुणब्रह्म-तल्लोक-तत्सायुज्यादिकमप्युपनिषद्वेद्यमुपेक्ष्यं न भवतीति सर्वेसं तम् । एवं सत्यपि निर्विशेषश्रद्धया निखिलापलापे तस्य सच्चिदानन्दरूपताऽपि न सेत्स्यति । प्रमाणप्रतीतत्वात् तदिष्टौ तदविशेषात् सर्वज्ञत्व-सर्वशक्तित्व-सर्वफलप्रदत्वादयोऽपि संमन्तव्याः । निषेधश्रुतितात्पर्यं च विधिश्रुत्यविरोधेन विधिश्रुत्यगतार्थप्रतिप्रापकसरण्या संशीलनीयमिति ब्रूमः ।

एवं प्रमाणगतिं परिशीलयन्तो भगवद्रामानुजस्वामिपादाः प्रमाणप्रमेयसंग्रह इति कमपि निबन्धं कुतो नानुजगृहुः । तदा हि शिष्याणां मिथः कलहो न पदं प्राप्तः स्यादिति चेत्—सर्वप्रमाणप्रमेयनिष्कर्षस्य श्रीमन्नाथमुनिभिर्न्यायतत्त्वे कृतत्वात् तदुपपादनाय श्रीमद्यामुनमुनिभिर्बहूनां ग्रन्थानां प्रणीतत्वाच्च तदनुसारेणास्य सिद्धान्तस्यौपनिषदत्वं परं शारीरकमीमांसाभाष्यादिभिः प्रपञ्चितमेभिः । कालक्रमेण तत्तद्ग्रन्थप्रचारलोपप्रसक्तौ क्षोभोऽपि प्राप्त इति पुनर्नवीकर्तव्यमासीत् । तत्तद्बाह्यकुदृष्टिमतदौर्बल्यप्रदर्शनाभावे तमःकर्शनं न स्यादिति तेषां सर्वेषां निरसनेन प्राच्योऽप्येव परिष्कृत इति ॥

यन्मूल एवं साम्प्रदायिकार्थलाभः, तां स्वगुरुपंक्तिं मत्स्यादिविभवमहत्त्वानेकांशावतारापेक्षया विलक्षणकार्यकारिणीमनुसंधाय भक्तस्तमतिशयं विभज्याऽऽह हृद्येति । महती गुरुपंक्ति-

दिक्सौधाबद्धजैत्रध्वजपटपवनस्फातिनिर्धूततत्त-
त्सिद्धान्तस्तोमतूलस्तबकविगमनव्यक्तसद्वर्तनीका ॥ १३७ ॥

एतद्दर्शनप्रवर्तकाचार्यप्रशंसया स्वभक्तिमेवोत्तम्भयन् परपक्षप्रवर्तकानां परागपटलवदाभासत्वमेवाह हृद्येति । अक्षरार्थो व्यक्तः ॥ १३७ ॥

(498) अध्यक्षं यच्छ्रुतं वा लघु भवति तदित्यादिमो वादिमोहः ;
तत्त्वोदर्का न तर्कास्तदिह जगति किं मेधया साधयामः ।
तिष्ठत्वेतत् ; लघिष्ठाः कतिचन दधतो मानसे मानसेतुं ;
हंहो सभ्यान् असभ्यस्फुटमुखपुटा दुर्जना निर्जयन्ति ॥ १३८ ॥

अध्यक्षमिति । इत्थं सर्वोत्तरे दर्शने विद्यमानेऽप्याभासवादिनः प्रत्यक्षागमप्रमितयोरर्थयोः लघुत्वमेव प्रतिपद्यन्ते ; अयमादिमो वादिमोहः ; प्रत्यक्षागमयोरेव प्राबल्यात्, तद्विरुद्धस्य चानुमानस्यात्यन्तदौर्बल्यात् । यदि वा तर्कमेव परिशोधयामः, तत्त्वोदर्कास्तर्काः ; केवलं दन्तादन्तिप्रयासमात्रशेषाः ; तर्काणामप्रतिष्ठितत्वात् । अत्र तर्कशब्दोऽनुमानं तदनुग्राहकं तर्कमपि संगृह्णाति । एवंभूते जगति किं मेधया साधयाम इति निर्वेदवचनम् ; अथवाऽधिक्षेपवादः । इममेवाधिक्षेपवादमुत्तरोत्तरमुद्दीपयति

४९८—गुरुपंक्तिप्राशस्त्यप्रतिपादकस्य 'हृद्या' इत्यादिश्लोकस्यासाङ्गत्यशङ्कां निवर्तयन् व्याचष्टे एतदिति ॥
'अध्यक्षम्' इत्यादिश्लोकसंगतिं दर्शयन् व्याचष्टे इत्थमित्यादिना । स्वनिर्वेदपरत्वादपि पराधिक्षेपपरत्वे प्रयोजनाधिक्यमस्तीति तत्परतया व्याचष्टे अथवाऽधिक्षेपेति । दुर्गर्वातिशयेनासभ्यं प्रल[पतो ?]दुर्जनान् प्रति न मेधया किञ्चित् साध्यमित्या[त्यधि?]क्षेपः ॥ १३८ ॥

४९७— हारयष्टिरिति अन्यत्रोक्तम् । तरलमुक्ताकलाप इव हृदयंगमेयं गुरुपंक्तिः । हृत्पद्मेत्यादिविशेषणेन साक्षाद्वादेन तदातनानां विजयो वेद्यते । जयः । ग्रन्थमुखेन प्रवृत्तानां तदातनानां प्राचाञ्च प्रतिवादानां ग्रन्थतो निरास उत्तरार्धे । तत्त्वटीका हि जयध्वजपट्टिकात्वेन रूपिता । अतोऽत्र ध्वजपटपदेन परनिरासकग्रन्था भाव्यन्ते । सर्वत्र हार्दरूपेण स्थितो भगवान् आचार्याणां हृदयेषु वादावसरे हयग्रीवतां प्रतिपद्य हेषा आविर्भावयति । ताः गुरुमुखयन्त्रद्वारा बहिः सर्वत्र प्रसरन्ति । तस्य हयग्रीवस्याऽऽचार्यजिह्वाऽप्यास्थानीभवति । पवनाः = प्रमाणतर्काः । तेषां स्फातिः वृद्धिः वेगः । सिद्धान्तसमुदायरूपाः तूलस्तबकाः कालक्रमेण विशीर्य सर्वत्र तूलविकिरणेन वर्तनीमाभासयन्ति । पवनेन क्षिप्रसुदूरनिरसनीयत्वव्यक्तये तूलत्वरूपणम् । वर्तनी = मार्गः । शेषं सारास्वादिन्यादौ द्रष्टव्यम् ॥ १३७ ॥

केवलतर्केण सिद्धान्तस्थापकाः बाह्याः सन्तु नाम ; शब्दमपौरुषेयमीश्वरप्रणीतं वा प्रमाणतममातिष्ठमाना अपि समये तदुपेक्षया तर्कं प्रधानीकृत्य प्रामाणिकमुपेक्षन्त इति साहसमेतदित्याह अध्यक्षमिति । 'प्रत्यक्षप्रमाणं शब्दप्रमाणञ्चानुमानरूपतर्कप्रमाणापेक्षया लघु' इति ये अनुमानेनैव स्वमतं स्थापयितुं प्रवर्तन्ते बौद्धादयः, तेषामयं मोह एव । न हि तर्कमात्रस्य तत्त्वसिद्धिफलकत्वम् ; तस्याप्रतिष्ठत्वात् । अतो मेधामात्रेण मतसिद्धिर्न भवति । सन्तु नाम बाह्या इमे लघिष्ठाः । अन्ये केचन कुदृष्टयः मानं = श्रुतिप्रमाणं सेतुं = साधकं प्रापकं मन्याना अपि, वयमेव प्रवीणा इत्यहंकाराख्ये माने स्थिताः समानदर्शामाणिकाभासवाक्यकदम्बावरुद्धतया स्फुटेन = दन्तुरेण मुखेन च सभ्यान् सत्त्वगुणाधीनयथावस्थितज्ञानशालिनः पुरुषानपि जेतुं व्यवस्यन्ति । हंहो इति कष्टस्याधिक्षेपस्य चाऽऽविष्कारः ।

विद्वत्स्वेतदिति । लघिष्ठाः कतिचन मानसे मनसि अभिमानस्य सेतुं परां काष्ठां वहन्तो दुर्जनाः स्वयमसम्पस्पुटमुखपुटाः सभ्यान्निर्जयन्ति । किमुक्तं भवति ? स्वयं भषणमात्रेणैव भाषमाणा इव [भवन्ति !?] जल्पन्तीत्यर्थः। हंहो इति विषादपूर्वाधिक्षेपे ॥ इति वक्तृवैलक्षण्यादिनिरूपणम् ॥१३८॥

(499) स्यादित्थं शिक्षितार्थो य इह यतिपतिच्छात्रहस्ताग्रनृत्य-
नाराचन्यासरेखासहचरितमतिः सर्वतन्त्रस्वतन्त्रः ।
शुष्कोपन्यासशिक्षापटिमकटुरटद्वैरि(ब्रह्माण्ड)विद्वत्करोटी-
कुट्टाकक्रीडमष्टापदकटकमसौ वामपादे बिभर्तु ॥ १३९ ॥

इत्थमनेन प्रबन्धेन शिक्षितार्थः सर्वेष्वपि तन्त्रेषु स्वातन्त्र्यं तन्वयन् प्रतिभटविद्वत्करोटीकुट्टाकक्रीडाक्षममष्टापदकटकं वामपादे बिभर्त्विति प्रकृतस्य प्रबन्धस्य वैतण्डिकविजयहेतुत्वेनातिशयमाह— स्यादित्थमिति । पदार्थः स्पष्टः ॥ इति एतत्प्रबन्धाध्ययनफलनिरूपणम् ॥ १३९ ॥

(500) गाथा ताथागतानां गलति गमनिका कापिली क्वापि लीना
क्षीणा काणादवाणी द्रुहिणहरगिरस्सौरभं नारभन्ते ।

---

अ०— 'स्यादित्थम्' इत्यादिश्लोकं संघटयति—इत्थमनेन प्रबन्धेन इत्यादिना ॥ १३९ ॥

श्री— दुर्जनाः = दुष्टजन्मानः ॥ पद्यमिदं संकल्पसूर्योदयेऽपि ॥ ३८ ॥

एतद्ग्रन्थाध्यायिनां मतिमतां सर्वतन्त्रस्वातन्त्र्यं सर्वपरमतविजयश्रीश्च नियते इत्याह स्यादिति । 'स्यादित्थं शिक्षितार्थः' इत्यादिरीत्या पूर्वार्धपाठ एव सर्वार्थसिद्धिसंमतः । पाठान्तरं तु संकल्पसूर्योदयस्थैतच्छ्लोकानुसंधानेन लेखकैस्तत्स्मारणायाच घटितम्। तत्र त्वयन्तस्यापकोऽयमित्युपक्रमः। अत्र पाठान्तरे 'स्यादित्थं विश्वतत्त्वम्' इति भेदः कृतः। 'दृढतरममुना तरस्वदृष्टिश्च दृष्टा (दिष्टा)दिष्ट्या चाऽऽदिष्टमेतत् दिशिदिशि लडहो डिण्डिमस्ताडनीयः' इति भाग उभयत्राविशिष्टः । नाराचन्यासरेखासहचरितेत्यनेनातिसूक्ष्मतया सर्वावगाहनक्षमत्वं मतेर्दर्शितम् । वैरिणां = प्रतिवादिनां करोटीषु = शिरोस्थिषु कुट्टाका = कुट्टनकरी क्रीडा यस्य तत् । अष्टापदं = सुवर्णम् । तन्मयं वीरकटकम् असौ = पूर्वपादोक्तविशेषशाली। बिभर्तु वामपादे। 'शिरस्सु निहितं मया पदमदक्षिणम्' इति ह्युक्तम् । अन्यत् संकल्पसूर्योदयेऽस्मद्व्याख्याने द्रष्टव्यम् ॥ १३९ ॥

बाह्य-वेदकुदृष्टि-वेदान्तकुदृष्टिसर्वमतनिरासः प्रमाणशरणभगवद्रामानुजचरणशरणानां सुकर इति स्वपादकोटीरसंबन्धसमिध्यमानविभवगुरुपंक्तिहारयष्टिनायकमणिभूतं तमाचार्यसार्वभौममन्ते मंगलायानुसंधत्ते गाथेति । तथागतः = बुद्धः । तदीयास्ताथागताः । जैनाद्युपलक्षणमेतत् । कर्तृशब्दस्वरूपो विभिन्नः क्रियाशब्दः । गमनिका कापिली = सांख्यगतिः। काणादवाणी = वैशेषिकवाक् । द्रुहिणस्य = हिरण्यगर्भस्य गीः योगशास्त्रम् । हरगिरः = शैवमतानि चत्वारि । कापिलप्रभृतीनि कुदृष्टिमतानि । एतत्प्रवर्तकाः वेदप्रामाण्यमंगीकृतवन्तोऽपि तद्घटकवाक्यार्थपरिशीलनप्रवृत्तिं विहाय तर्कं प्रधानीकृत्य प्रचारितस्वमताः। वेदवाक्यानामर्थमीमांसन एव प्रवृत्ता अपि कुत्सितां दृष्टिं कृतवन्तः कौमारिलाः गुर्वेपरपर्यायप्रभाकरपक्षस्थाश्चाप्राचीनाः पूर्वमीमांसकाः । गुरुमतं गुरुभूतत्वात् पाषाणादिकमिव उत्क्षिप्तं बहुदूरं प्रयातम् । अत्र ग्रन्थे प्रथमतो बौद्धदूषणमारभ्य एतच्छ्लोकोक्तक्रमेणैव प्रायः परमतभञ्जनमिति ध्येयम् ॥ शंकरादिपदेन शंकरभास्करयादवप्रकाशादिग्रहणम् ।

क्षामा कौमारिलोक्तिर्जगति गुरुमतं गौरवाद् दूरवान्तं
का शङ्का शङ्करादेर्भजति यतिपतौ भद्रवेदीं त्रिवेदीम् ॥ १४० ॥

सर्वमङ्गलसिद्ध्यर्थं प्रबन्धसमाप्तौ सकलाचार्यदेशिकं श्रीमद्रामानुजाचार्यं प्रतिभटसकलसिद्धान्तध्वान्तनिरासकत्वेन प्रस्तौति, स्तौति च—गाथेति ॥ इति आचार्यस्तुतिः ॥ १४० ॥

॥ इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु सर्वार्थसिद्धिसमेते तत्त्वमुक्ताकलापे
अद्रव्यसरः पञ्चमः, ग्रन्थश्च संपूर्णः ॥

---

(आ)—श्रीभाष्यकारस्तुतिरूपस्य 'गाथा ताथागतानां' इति श्लोकस्य प्रयोजनमाह सर्वमङ्गलसिद्ध्यर्थमित्यादिना। "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते" इति हि स्मरन्ति। तस्मात् अन्तेऽपि मङ्गलाचरणं समञ्जसमिति भावः ॥ १४० ॥

इति श्रीमद्वाधूलकुलतिलकसमरपुङ्गवाचार्यपादसेवासमधिगतशारीरकभाष्यहृदयेन महाचार्यपरनामधेयेन वाधूलश्रीनिवासेन विरचितायां सर्वार्थसिद्धितात्पर्यप्रकाशिकायां अद्रव्यसरः पञ्चमः॥

(वी)— कदाप्रभृति एवमित्यत्राह भजतीति। यतिपतौ भगवद्रामानुजपादे त्रिवेदीं= वेदत्रयीम्, भेदाभेदघटकश्रुतिरूपभागत्रयमयीं वा, भद्रवेदीं भजति =प्राप्नुवति सति। इदं गलति, लीनेत्यादिसर्वक्रियान्वयि। त्रिवेद्यर्थोपन्यासः भद्रवेदीभजनत्वेन भाव्यते। एतावन्मतनिरसनेन यथावस्थितार्थप्रतिपादनमिह ग्रन्थे कृतमिति भावः ॥ १४० ॥

द्रव्याद्रव्यविधात्मना प्रथमतस्तत्त्वं विभक्तं द्विधा तत्राऽऽद्यञ्च जडाजडात्मकमिहाप्येकैकमेवं द्विधा।
माया काल इति द्वयं जडमथ प्रत्यक्पराग्भेदतो द्वैविध्यं त्वजडे, द्विधा पुनरिहाप्येकैकमाख्यायत ॥१
व्याख्यातं प्रथमे सरे जडयुगं जीवेशरूपं पुनः प्रत्यग्युग्ममनन्तरे सरयुगे तत्रेशरूपोक्तये।
नित्या भूतिरपि न्यरूप्यथ परा बुद्धिश्चतुर्थे पराक् अद्रव्यं निखिलं ततोऽन्तिमसरेऽप्येषोऽत्र तत्त्वक्रमः॥
एतद्भूषणमुत्तरोत्तरबहुश्लोकात्ममुक्तामयं व्याकुर्वन् सरसं स्फुटं स्वयमसौ सर्वार्थसिद्धिप्रदः।
बाह्यानां कुदृशाञ्च कल्पनविधा उन्मूल्य नैजैः कृतान् व्याहारांश्च तथा विलोड्य निखिलं निष्कृष्टमत्र न्यधात् ॥ ३ ॥

अर्थयत्ताराहितीतो ह्यनघं धर्तुं ये स्युस्तत्त्वमुक्ताकलापम्।
हृद्येतेषामस्तु सर्वार्थसिद्धिः संमोदायालभ्यलाभेन जुष्टा ॥ ४ ॥
प्रज्ञा-भक्ति-विरक्ति-वृत्तलतिकासंश्लिष्टकल्पद्रुम-
श्रीयोगीश्वररङ्गलक्ष्मणगुरुश्रीपादसेवाधनः।
प्रख्यातो नवदेशिकादिबिरुदैर्ग्रन्थैर्महद्भिश्च यः
प्राणैषीदिति वीरराघवसुधीः सोऽलभ्यलाभं कृतिम् ॥ ५ ॥
प्राच्ये नव्ये च लक्ष्मीहयमुख! भगवन्! न्यायशास्त्रेऽथ तन्त्रे
निर्माणेऽध्यापने च प्रथितमनघया मां स्वदृष्ट्या वितन्वन्।
वेदान्ताचार्यरूपस्वकृतनिरुपमानेकसद्ग्रन्थरत्न-
व्याख्याने च प्रवारे प्रगुणयसि; ततः प्रीयसे चेत्, किमन्यत् ॥ ६ ॥

इत्यभिनवदेशिक वात्स्य वीरराघवाचार्यकृतिषु तत्त्वमुक्ताकलापसर्वार्थसिद्धिव्याख्यारूपः अलभ्यलाभः ॥ श्रीरस्तु। शुभमस्तु ॥

—o—o—

श्रीरस्तु

# श्रीतत्त्वमुक्ताकलापश्लोकानां अकारादिक्रमेण सूची

शुभमस्तु

# सर्वार्थसिद्धिगतश्लोकपुटनिर्देशः

सर्वार्थसिद्धिश्लोकपुटनिर्देशः

# सव्याख्यतत्त्वमुक्ताकलापशोधनिका

| पु. | पं. | | पु | पं | | पु. | प | |
|---|---|---|---|---|---|---|---|---|
| 8 | 18 | रनसूयुभिरभ्यु | 41 | 21 | रचनानुपप | ,, | 34 | विभोः |
| 9 | 28 | ध्यवसाय. | ,, | 28 | पश्यति....तथाभि | 67 | 13 | मैवं |
| 18 | 31 | ईश्वरत्वम् | ,, | 32 | तदवधिः | 68 | 3 | न्यूनाधिक |
| ,, | 33 | न तु | 42 | 14 | प्रणाल्या | 72 | 5 | लम्बमानो |
| 15 | 24 | बाधस्य....बौद्धैः | ,, | 18 | अध्यवसायः | 73 | 32 | अवयव्यारम्भो |
| ,, | 27 | स्पर्शना....तत्तस्य | 44 | 18 | मृत्पिण्डेन | 74 | 21 | कथमित्येवं |
| ,, | 33 | ग्रहणकाल | ,, | 26 | अनेके | ,, | 22 | भावादवयवि |
| 16 | 7 | स्वाङ्गीकारात् | 45 | 2 | कारणान्तर | 75 | 22 | किरणा |
| ,, | 21 | प्रत्ययान्तस्य | ,, | 24 | देनागमेनेत्युक्त | 76 | 33 | परिहारयो. |
| ,, | 30 | संसर्गो....ख्यधर्म- | ,, | 31 | निर्वाह्यम् | 77 | 1 | नैरन्तर्य |
| 22 | 3 | पर्याप्तश्चेति | 46 | 13 | सामग्री | 80 | 8 | रुपपद्यत ; भिन्नानामे |
| 23 | 25 | सत्यत्व | 47 | 8 | इत्यनुमीयेत | ,, | 10 | गतत्वा |
| ,, | 31 | एकस्यैवेति | ,, | 24 | बुद्धि | ,, | 17 | देशाद्यैक्य |
| 24 | 24 | कर्मवशात् | 48 | 11 | पुष्पाद्यवयव | ,, | 21 | श्यामतादीना |
| 25 | 21 | हेतवो | ,, | 30 | एकैक | ,, | 23 | शब्देनाधि |
| 30 | 21 | तन्निष्ठत्व | 53 | 21 | आकाशम् | ,, | 29 | निर्देशात् |
| ,, | 26 | इत्यादि | 56 | 29 | वाक्यानु | 81 | 29, 33 | संश्लेष |
| 35 | 13 | संबद्धत्वात् | ,, | 34 | पृथिव्यप्सु | 82 | 25 | कारिकया |
| ,, | 17 | वाग्मित्वे | 58 | 7 | तदानीं | 84 | 6 | धीरुपपद्यते |
| ,, | 19 | देशाभावे | ,, | 27 | धनुरेव चा | ,, | 20 | माणुकमवयवि |
| 36 | 1 | निषेध | ,, | 29 | त्वोपयोगि | ,, | 21 | द्रव्यारब्धे |
| ,, | 31 | शंकिता | 59 | 12 | इत्याद्यारभ्य | 85 | 33 | इह |
| 37 | 14 | चत्वारो | ,, | 15 | प्रदर्शनमिति | 87 | 22 | उत्कर्षः |
| ,, | 18 | इत्यभिप्रेत्य | 60 | 18 | अतो | ,, | 32 | स्यैव |
| ,, | 23 | कदाचिद् | ,, | 25 | निरवयवे | ,, | 33 | दृष्टान्ततयो |
| ,, | 25 | गृह्यत | 62 | 6 | भेदकाः | 90 | 16 | उत्तरकालीन |
| ,, | 26 | बुद्ध्वा | ,, | 32 | अणौ अण्व | ,, | 21 | चतुरणु |
| 38 | 21 | प्रत्यक्ष | 64 | 10 | पौर्वापर्येण | ,, | 34 | विशिष्टप्रतीति |
| 39 | 28 | मूलशंका | ,, | 12 | साध्यावयव | 92 | 27 | मूर्तत्वादौ |
| 40 | 16 | सार्वत्रिक | ,, | 13 | विषयित्ववदिति | 138 | 8 | भावान्तर |

| पृ. | पं. | |
|---|---|---|
| 140 | 6 | स्वगुण |
| 141 | 17 | दर्शनादौ |
| 142 | 33 | कारिकात्वमपि |
| 145 | 27 | निगमानुकूल |
| ,, | 32 | न्यायात् |
| 150 | 15 | सत्त्वाद्यैः |
| 152 | 3 | पनिषदानाम् |
| 155 | 23 | दीपमन्थो....दीप |
| 157 | 1 | उदयत्येव |
| 162 | 10 | माकाशे |
| ,, | 24 | ड्यत |
| 164 | 23 | चाक्षुषत्वमेव |
| 165 | 30 | मतीतेर्ज्ञाय |
| ,, | 31 | प्रतीयमान |
| ,, | 33 | व्योम |
| 166 | 26 | रूपविषय |
| ,, | 31 | स्पर्शो ; रूपेन्द्रिय |
| ,, | 33 | निष्क्रमणं ; मुपक्षिप्य |
| 171 | 22 | आवरण |
| 172 | 16 | नन्वसदिति |
| 173 | 1 | परिहार्यो |
| ,, | 27 | भवत्यभावात् |
| 175 | 4 | निस्पन्दत्वे |
| 179 | 1 | रज्जयेयुः |
| ,, | 5 | ग्राहकेण |
| ,, | 31 | सामान्य |
| 180 | 13 | शब्दाः |
| 183 | 28 | भवतीत्यर्थ. |
| 184 | 13 | विकारान्तर |

| पृ. | पं. | |
|---|---|---|
| 184 | 24 | गर्भनाडी |
| 185 | 13 | (चेतनो) |
| 187 | 11 | कूरनारायण |
| 190 | 20 | साध्यम् |
| 191 | 14 | सामग्री |
| ,, | 15 | प्रत्यक्षस्य |
| ,, | 22 | निरवयवत्वे |
| | 29 | आशुतर |
| 192 | 11 | भागैः |
| 196 | 25 | अत्रैव |
| 198 | 9 | आलोके |
| 199 | 28 | आलोका |
| 201 | 32 | श्यमाना |
| 202 | 32 | धार्यते |
| 204 | 23 | युच |
| 211 | 28 | पत्यासीदतः |
| 214 | 21 | मुहूर्तादिष्वपि |
| 216 | 1 | कारणत्वमेव |
| 217 | 18 | दाघवीती |
| 220 | 7 | स चेत् राग |
| 223 | 3 | शरीरस्या |
| 224 | 2 | मन्वाह |
| ,, | 26 | देहे |
| 225 | 30 | श्रोत्रादावपि |
| 227 | 17 | कर्तारं |
| 232 | 10 | निर्वृतिपरः |
| 237 | 22 | द्रव्यमात्रे |
| ,, | 23 | द्व्यणुकादि |
| ,, | 29 | पादनीयत्व |

| पृ. | पं. | |
|---|---|---|
| 238 | 21 | णोपपादि |
| 241 | 15 | प्रभृति |
| 252 | 28 | तज्जन्म |
| 256 | 3 | णतिर्निर्वि |
| ,, | 20 | रूपावस्था |
| 258 | 5 | स्याघात |
| 261 | 12 | प्रपरम् |
| 271 | 19 | उपबृंहण |
| ,, | 23 | समुचि |
| 274 | 25 | त्यास्ता |
| 281 | 21 | वदनादय |
| ,, | 24 | रूपवि |
| 282 | 1 | धर्मयोगो |
| 283 | 18 | वृत्तावेव |
| 286 | 21 | निरन्तर |
| 295 | 26 | ज्ञानस्थिति |
| 309 | 29 | यदीत्ये |
| 314 | 10 | साभिव्यक्ति |
| 338 | 28 | विपरिवर्तन |
| 347 | 19 | व्याहृतस्य |
| 352 | 2 | उपज्ञाय |
| 355 | 4 | नादपात्तः |
| 361 | 35 | पुरुषयत्नं |
| 363 | 8 | व्यवच्छेद |
| 366 | 13 | उपादानो |
| ,, | 32 | सार्वज्ञ्य |
| 370 | 26 | मतिप्रसंगो |
| 372 | 7 | निवृत्त्या |
| 373 | 13 | शास्त्रानुकूलत्व । |

1 अनत्केति पाठस्यापि समर्थितत्वेऽपि अनूक्तेति पाठ एव श्रेयान्

| पृ. | पं. | | पृ. | पं. | | पृ. | पं. | |
|---|---|---|---|---|---|---|---|---|
| 374 | 24 | स्थापितम् ? | 488 | 26 | वृत्तिश्च | 649 | 30 | प्रामाण्यमेव |
| 375 | 25 | प्रणीतत्वा | 497 | 23 | अतो | 651 | 27 | प्रामाण्यमिति |
| 376 | 13 | परिहृतय | 505 | 30 | मन्यथाख्याति | 654 | 28 | विहतिमतीति |
| 386 | 14 | सर्वज्ञतया | | 32 | प्रातिभासि | 656 | 25 | नामेत्य |
| 387 | 4 | विदारिता | 510 | 11 | ध्यत्वोपपा | ,, | 32 | दिशाखावि |
| 388 | 20 | स्थगिता | 514 | 31 | यथेत्यस्य | 657 | 20 | पुरुषान्तराणां |
| 392 | 22 | सत्यत्वं | 523 | 32 | यत्तु | 657 | 24 | जनी |
| 396 | 23 | तदयुक्तम् | 542 | 16 | आलोचनं | 662 | 19 | भवितामिति |
| 398 | 1 | ऽस्यैक | 546 | 5 | हेतुगर्भम् | 664 | 33 | मूलकाङ्क्षि |
| 403 | 29 | बोधयेयु | | 10 | यद्रूपमा | 710 | 31 | अपर्यायता |
| 408 | 2 | मिथ.कर | 552 | 31 | मन्यथायीति | 716 | 25 | द्वित्वादिप्रभृ |
| ,, | 24 | वाचारम्भण | 555 | 8 | एतदाश | 720 | 27 | सामान्ये |
| ,, | 31 | किञ्चिदपेक्ष | 556 | 7 | प्रत्यक्षत्व | 723 | 28 | एकस्यैव |
| 410 | 19 | विगीतं | | 27 | अथास्मात् | 724 | 23 | मङ्गीकृत्य |
| 420 | 23 | तव-त्वद्बुद्ध्या | 558 | 24 | व्यवस्थापन | 725 | 30 | व्यवहारः |
| 423 | 26 | मिथ्यात्व | 560 | 16 | जायते | 728 | 31 | मुपेक्ष्ये |
| 429 | 21 | व्याप्तिप्रदर्शक | 561 | 17 | ह्याशंक्यते | 765 | 28 | दशायां |
| 433 | 29 | त्परमन्ति | 562 | 14 | वादीन्द्रो | 766 | 16 | व्याहृत |
| 436 | 31 | त्याद्वैत | 566 | 30 | व्यभिचारः | 769 | 23 | लिङ्गव्यापार |
| 438 | 7 | प्रमाणत्वा | 571 | 28 | प्रयासाव | 778 | 2 | पक्ष |
| 439 | 26 | आन्यपर्यम् | 585 | 21 | जलादि | 779 | 7 | एवं सुवर्ण |
| 440 | 15 | च्छेदन्याय | 591 | 18 | वैपरीत्ये | ,, | 8 | सुवर्णं इति चेत् |
| 441 | 18 | स्यप्यापलाप | 604 | 17 | साकेतिकत्व | 785 | 8 | व्याकृता |
| 444 | 14 | तर्काणाममोघत्वं | 619 | 11 | लक्षणमिद | 788 | 22 | दाधार |
| 453 | 20 | ऽऽगुपमिमि | 622 | 12 | रीश्वरात्...प्रपञ्च | 790 | 07 | जगत्सृष्ट्या |
| 456 | 27 | मजिर्गार्ग | 624 | 34 | देवदत्तो | 792 | 7 | न्यदेव[म्] ॥ |
| 466 | 31 | व्यापारवृत्तिधी | 628 | 33 | काचित्कग | 793 | 10 | तत्रैकम |
| 474 | 4 | प्रमाणान्तर | 638 | 32 | स्वरूप | 798 | 28 | शुभं |
| 475 | 29 | व्यापारत | 647 | 24 | बुद्धिर्गते | 799 | 32 | वैपरी |

शुभमस्तु